॥ ॥ श्रीगणेशाय नमः ॥ ॥ ॐ नमो भगवते वासुदेवाय ॥ ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥ जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः ॥ यस्यास्यकमलगलितं वाङ्मयममृतं जगत्पिबति ॥ २ ॥ मूकं करोति वाचालं पंगुं लंघयते गिरिम् ॥ यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ ३ ॥ पाराशर्यवचःसरोजममलं गीतार्थगन्धोत्कटं नानाख्यानककेसरं हरिकथासंबोधनाबोधितम् ॥ लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा भूयाद्भारतपंकजं कलिमलप्रध्वंसि नः श्रेयसे ॥ ४ ॥ यो गोशतं कनकशृंगमयं ददाति विप्राय वेदविदुषे च बहुश्रुताय ॥ पुण्यां भविष्यसुकथां शृणुयात्समग्रां पुण्यं समं भवति तस्य च तस्य चैव ॥ ५ ॥ कृत्वा पुराणानि पराशरात्मजः सर्वाण्यनेकानि सुखावहानि ॥ तत्रात्मसौख्याय भविष्यधर्मान्कलौ युगे भावि लिलेख सर्वम् ॥ ६ ॥ तत्रापि सर्वार्षिवरप्रमुख्यैः पराशराद्यैर्मुनिभिः प्रणीतान् ॥ स्मृत्युक्तधर्मागमसंहितार्थान्व्यासः समासादवदद्भविष्यम् ॥ ७ ॥ अल्पायुषो लोकजनान्समीक्ष्य विद्याविहीनान्पशुवत्सुचेष्टान् ॥ तेषां सुखार्थं प्रतिबोधनाय व्यासः पुराणं प्रथितं चकार ॥ ८ ॥ ❋ जयति भुवनदीपो भास्करो लोककर्त्ता जयति च शितिदेहः शार्ङ्गधन्वा मुरारिः ॥ जयति च शशिमौली रुद्रनामाभिधेयो जयति च स तु देवो भानुमांश्चित्रभानुः ॥ १ ॥ श्रियावृतं तु राजानं शतानीकं महाबलम् ॥ अभिजग्मुर्महात्मानः सर्वे द्रष्टुं महर्षयः ॥ २ ॥ भृगुरत्रिर्वसिष्ठश्च पुलस्त्यः पुलहः क्रतुः ॥ पराशरस्तथा व्यासः सुमन्तुर्जैमिनिस्तथा ॥ ३ ॥ मुनिः पैलो याज्ञवल्क्यो गौतमस्तु महातपाः ॥ भारद्वाजो मुनिर्धीमांस्तथा नारदपर्वतौ ॥ ४ ॥ वैशंपायनो महात्मा शौनकश्च महातपाः ॥ दक्षोंगिरास्तथा गर्गो गालवश्च महातपाः ॥ ५ ॥ तानागतानृपीन्दृष्ट्वा शतानीको महीपतिः ॥ विधिवत्पूजयामास अभिगम्य महामतिः ॥ ६ ॥ पुरोहितं पुरस्कृत्य अर्घं गां स्वागतेन च ॥ पूजयित्वा ततः सर्वान्प्रणम्य शिरसा भृशम् ॥ ७ ॥ सुखासीनांस्ततो राजा निरातंकान्गतक्लमान् ॥ उवाच प्रणतो भूत्वा बाहुमुद्धृत्य दक्षिणम् ॥ ८ ॥ इदानीं सफलं जन्म मन्येऽहं भुवि सत्तमाः ॥ आत्मनो द्विजशार्दूलास्तथा कीर्तिर्यशो बलम् ॥ ९ ॥ धन्योऽहं पुण्यकर्मा च यतो मां द्रष्टुमागताः ॥ येषां स्मरणमात्रेण युष्माकं पूयते नरः ॥ १० ॥ श्रोतुमिच्छाम्यहं किंचिद्धर्मशास्त्रमनुत्तमम् ॥ आनृशंस्यं समाश्रित्य कथयध्वं महाबलाः ॥ ११ ॥ येनाहं धर्मशास्त्रं तु श्रुत्वा गच्छे परां गतिम् ॥ यथा गतो मम पिता श्रुत्वा वै भारतं पुरा ॥ १२ ॥ तथोक्तास्तेन राज्ञा वै ब्राह्मणास्ते समन्ततः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समागम्य मिथस्ते तु विमृश्य च भृशं तदा ॥ १३ ॥ पूजयित्वा ततो व्यासमिदं वचनमब्रुवन् ॥ व्यासं प्रसादय विभो एष ते कथयिष्यति ॥ १४ ॥ तिष्ठत्यस्मिन्महाबाहो वयं वक्तुं न शक्नुमः ॥ तिष्ठमाने गुरौ शिष्यः कथं वक्ति महामते ॥ १५ ॥ अयं गुरुः सदास्माकं साक्षान्नारायणस्तथा ॥ कृपालुश्च तथा चायं तथा दिव्यविधानवित् ॥ १६ ॥ चतुर्णामपि वर्णानां पावनाय महात्मनाम् ॥ धर्मशास्त्रमनेनोक्तं धर्माद्यैः सुसमन्वितम् ॥ १७ ॥ बिभेति गहनाच्छास्त्राल्लोको व्याधिरिवौषधात् ॥ भारतस्य च विस्तारो मुनिना व्याहृतः स्वयम् ॥ १८ ॥ यथा स्वादु च पथ्यं च दद्यात्स्वं भिषगौषधम् ॥ तथा रम्यं च शास्त्रं च भारतं कृतवान्मुनिः ॥ १९ ॥ आस्तिक्यारोहसोपानमेतद्भारतमुच्यते ॥ तच्छ्रुत्वा स्वर्गनरकौ लोकः साक्षादवेक्षते ॥ २० ॥ देवतातीर्थतपसां भारतादेव निश्चयः ॥ न [illegible]न्यते नास्तिकता तस्य मीमांसकैरपि ॥ २१ ॥ विष्णौ देवेषु वेदेषु गुरुषु ब्राह्मणेषु च ॥ भक्तिर्भवति कल्याणी भारतादेव धीमताम् [illegible] धर्मार्थकाममोक्षाणां भारतात्सिद्धिरेव हि ॥ अजिह्मो भारतः पंथा निर्वाणपदगामिनाम् ॥ २३ ॥ मोक्षधर्मार्थकामानां प्रपञ्चो भारते कृतः ॥ अनित्यतापसंतप्ता भवंति तस्य मुक्तये ॥ २४ ॥ विपत्तिं भारताच्छ्रुत्वा वृष्णिपांडवसंपदाम् ॥ दुःखावसानाद्राजेन्द्र पुण्यं च संश्रयेद्बुधः ॥२५॥ एवंविधं भारतं वै प्रोक्तं येन महात्मना ॥ सोऽयं नारायणः साक्षाद्व्यासरूपी महाँमुनिः ॥ २६ ॥ स तेषां वचनं श्रुत्वा प्रतापी यो महीपतिः ॥ प्रसादयामास मुनिं व्यासं शास्त्रविशारदम् ॥२७॥ ॥ ॥ शतानीक उवाच ॥ ॥ अंजलिः शिरसा ब्रह्मन्कृतोऽयं पादयोस्तव ॥ ब्रूहि मे धर्मशास्त्रं तु येनाहं पूततां व्रजे ॥ २८ ॥ समुद्भव भवादस्मात्कीर्तयित्वा कथां शुभाम् ॥ यथा मम पिता पूर्वं कीर्तयित्वा तु भारतम् ॥ २९ ॥ तस्यैतद्वचनं श्रुत्वा व्यासो वचनमब्रवीत् ॥ एष शिष्यः सुमंतुर्मे कथयिष्यति ते प्रभो ॥ ३० ॥ यदिच्छसि महाबाहो प्रीतिदं चाद्भुतं शुभम् ॥ श्रव्यं भरतशार्दूल सर्वपापभयापहम् ॥३१॥ यथा वैशंपायनेन पुरा प्रोक्तं पितुस्तव ॥ महाभारतव्याख्यानं ब्रह्महत्याव्यपोहनम् ॥ ३२ ॥ अथ तमृषयः सर्वे राजानमिदमब्रुवन् ॥ साधु प्रोक्तं महाबाहो व्यासेनामितबुद्धिना ॥ ३३ ॥ सुमंतुं पृच्छ राजर्षे सर्वशास्त्रविशारदम् ॥ अस्माकमपि राजेंद्र श्रवणे जायते मतिः ॥३४॥ अथ व्यासो महातेजा सुमंतुमृषिमब्रवीत् ॥ कथयास्मै कथास्तात याः श्रुत्वा मोदते नृपः ॥ भारतादिकथानां तु यत्रास्य रमते मनः ॥ ३५ ॥ असावपि महा

१ भृगुम्–इति पाठः । २ स्वयं गुरुः सदाध्यक्षो यया नारायणस्तथा–इ० पा० । ३ भारतशास्त्रसारोऽयमतः काव्यात्मना कृतः–इ० पा० । ४ विद्वत्सु–इ० पा० । ५ सिद्धसंशयः–इ० पा० । ६ भारतं वै पञ्चविधम्–इ० पा० । ७ महामतिः–इ० पा० । ८ सर्वशास्त्रं च–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेजाः श्रुत्वा भावं महामतेः ॥ व्यासस्य द्विजशार्दूल ऋषीणां चापि सर्वशः ॥ ३६ ॥ चकार वक्तुं स मनस्तस्मै राज्ञे महामतिः ॥ व्यासस्य शासनाद्विप्र ऋषीणां चैव सर्वशः ॥ ३७ ॥ अथ राजा महातेजा आजमीढो द्विजोत्तमम् ॥ प्रणम्य शिरसात्यर्थं प्रवक्तुमुपचक्रमे ॥ ३८ ॥ ॥ शतानीक उवाच ॥ ॥ पुण्याख्यानं मम ब्रह्मन्पावनाय प्रकीर्तय ॥ श्रुत्वा यद्ब्राह्मणश्रेष्ठ मुच्येऽहं सर्वपातकात् ॥ ३९ ॥ ॥ सुमंतुरुवाच ॥ ॥ नानाविधानि शास्त्राणि संति पुण्यानि भारत ॥ यानि श्रुत्वा नरो राजन्मुच्यते सर्वकिल्बिषैः ॥ ४० ॥ किमिच्छसि महाबाहो श्रोतुं यत्त्वां ब्रवीमि वै ॥ भारतादिकथानां तु यासु धर्मादयः स्थिताः ॥ ४१ ॥ ॥ शतानीक उवाच ॥ ॥ मतानि कानि विप्रेंद्र धर्मशास्त्राणि सुव्रत ॥ यानि श्रुत्वा नरो विप्र मुच्यते सर्वकिल्बिषैः ॥४२॥ ॥ सुमंतुरुवाच ॥ ॥ श्रूयंतां धर्मशास्त्राणि मनुर्विष्णुर्यमोंगिराः ॥ वशिष्ठदक्षसंवर्तशातातपपराशराः ॥ ४३ ॥ आपस्तंबोऽथ उशना कात्यायनबृहस्पती ॥ गौतमः शंखलिखितौ हारीतोऽत्रिरथापि वा ॥ ४४ ॥ एतानि धर्मशास्त्राणि श्रुत्वा ज्ञात्वा च भारत ॥ वृंदारकपुरं गत्वा मोदते नात्र संशयः ॥४५॥ ॥ शतानीक उवाच ॥ ॥ यान्येतानि त्वयोक्तानि धर्मशास्त्राणि सुव्रत ॥ नेच्छामि श्रोतुं विप्रेंद्र श्रुतान्येतानि हि द्विज ॥ ४६ ॥ त्रयाणामपि वर्णानां प्रोक्तानामपि पंडितैः ॥ श्रेयसे न तु शूद्राणां तत्र मे वचनं शृणु ॥ ४७ ॥ चतुर्णामिह वर्णानां श्रेयसे यानि सुव्रत ॥ भवंति द्विजशार्दूल श्रुतानि भुवनत्रये ॥ ४८ ॥ विशेषतश्चतुर्थस्य वर्णस्य द्विजसत्तम ॥४९॥ ब्राह्मणादिषु वर्णेषु त्रिषु वेदाः प्रकल्पिताः ॥ मन्वादीनि च शास्त्राणि तथांगानि समंततः ॥ ५० ॥ शूद्राश्चैव भृशं दीनाः प्रतिभांति द्विजप्रभो ॥ धर्मार्थकाममोक्षस्य शक्ताः स्युरवने कथम् ॥ ५१ ॥ आगमेन विहीना हि अहो कष्टं मतं मम ॥ कश्चैषामागमः प्रोक्तः पुरा द्विजमनीषिभिः ॥ त्रिवर्गप्राप्तये ब्रह्मञ्छ्रेयसे च तथोभयोः ॥ ५२ ॥ ॥ सुमंतुरुवाच ॥ ॥ साधुसाधु महाबाहो शृणु मे परमं वचः ॥ चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे ॥ ५३ ॥ धर्मशास्त्राणि राजेंद्र शृणु तानि नृपोत्तम ॥ विशेषतश्च शूद्राणां पावनानि मनीषिभिः ॥ ५४ ॥ अष्टादश पुराणानि चरितं राघवस्य च ॥ रामस्य कुरुशार्दूल धर्मकामार्थसिद्धये ॥ ५५ ॥ तथोक्तं भारतं वीर पाराशर्येण धीमता ॥ वेदार्थं सकलं योज्य धर्मशास्त्राणि च प्रभो ॥ ॥ ५६ ॥ कृपालुना कृतं शास्त्रं चतुर्णामिह श्रेयसे ॥ वर्णानां भवमग्नानां कृतं पोतो ह्यनुत्तमम् ॥ ५७ ॥ अष्टादशपुराणानि अष्टौ व्याकरणानि च ॥

१ ते विप्र-इ० पा० । २ आपस्तंबोशना व्यासः-इ० पा० । ३ गुह्यानि-इ०पा० । ४ सर्वदा-इ० पा० । ५ इहलोकपरलोकयोः । ६ कर्मशास्त्राणि-इ०पा० । ७ कथितानीति शेषः । ८ त्वयार्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञात्वा सत्यवतीसूनुश्चक्रे भारतसंहिताम् ॥ ५८ ॥ यां श्रुत्वा पुरुषो राजन्मुच्यते ब्रह्महत्यया ॥ प्रथमं प्रोच्यते ब्राह्मं द्वितीयं चैंद्रमुच्यते ॥ ५९ ॥
याम्यं प्रोक्तं ततो रौद्रं वायव्यं वारुणं तथा ॥ सावित्रं च तथा प्रोक्तमष्टमं वैष्णवं तथा ॥ ६० ॥ एतानि व्याकरणानि पुराणानि निबोध मे ॥
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥ ६१ ॥ तथान्यन्नारदीयं च मार्कंडेयं च सप्तमम् ॥ आग्नेयमष्टमं वीर भविष्यं नवमं स्मृतम् ॥ ६२ ॥
दशमं ब्रह्मवैवर्तं लैंगमेकादशं स्मृतम् ॥ वाराहं द्वादशं प्रोक्तं स्कांदं चैव त्रयोदशम् ॥ ६३ ॥ चतुर्दशं वामनं च कौर्मं पंचदशं स्मृतम् ॥ मात्स्यं च
गारुडं चैव ब्रह्मांडं च ततः परम् ॥ ६४ ॥ एतानि कुरुशार्दूल धर्मशास्त्राणि पंडितैः ॥ साधारणानि प्रोक्तानि वर्णानां श्रेयसे सदा ॥ ६५ ॥
चतुर्णामिह राजेंद्र श्रोतुमर्हाणि सुव्रत ॥ किमिच्छसि महाबाहो श्रोतुमेषां नृपोत्तम ॥ ६६ ॥ ॥ शतानीक उवाच ॥ ॥ भारतं तु श्रुतं
विप्र तातस्यांकगतेन तु ॥ रामस्य चरितं चापि श्रुतं ब्रह्मन्समंततः ॥ ६७ ॥ पुराणानि च विप्रेंद्र भविष्यं न तु सुव्रत ॥ पुराणं वद विप्रेंद्र भवि
ष्यं कौतुकं हि मे ॥ ६८ ॥ ॥ सुमंतुरुवाच ॥ ॥ साधुसाधु महाबाहो साधु पृष्टोऽस्मि मानद ॥ शृणु मे वदतो राजन्पुराणं नवमं महत् ॥
॥ ६९ ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते मानवो नृप ॥ अश्वमेधफलं प्राप्य गच्छेद्भानौ न संशयः ॥ ७० ॥ इदं तु ब्रह्मणा प्रोक्तं धर्मशास्त्रम
नुत्तमम् ॥ विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः ॥ ७१ ॥ शिष्येभ्यश्चैव वक्तव्यं चातुर्वर्ण्येभ्य एव हि ॥ अध्येतव्यं न चान्येन ब्राह्मणं
क्षत्रियं विना ॥ श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन ॥ ७२ ॥ देवार्चां पुरतः कृत्वा ब्राह्मणैश्च नृपोत्तम ॥ श्रोत
व्यमेव शूद्रैश्च तथान्यैश्च द्विजातिभिः ॥ ७३ ॥ श्रौतं स्मार्तं हि वै धर्मं प्रोक्तमस्मिन्नृपोत्तम ॥ तस्माच्छूद्रैर्विना विप्रान्न श्रो
तव्यं कथंचन ॥७४॥ इदं शास्त्रमधीयानो ब्राह्मणः संशितव्रतः ॥ मनोवाग्देहजैर्नित्यं कर्मदोषैर्न लिप्यते ॥ ७५ ॥ शृण्वंति चापि ये राजन्भक्त्या
वै ब्राह्मणादयः ॥ मुच्यंते पातकैः सर्वैर्गच्छंति च दिवं प्रभो ॥ ७६ ॥ श्रावयेच्चापि यो विप्रः सर्वान्वर्णान्नृपोत्तम ॥ स गुरुः प्रोच्यते तात वर्णाना
मिह सर्वशः ॥ ७७ ॥ स पूज्यः सर्वकालेषु सर्वैर्वर्णैर्नराधिप ॥ पृथिवीं च तथैवेमां कृत्स्नामेकोपि सोऽर्हति ॥ ७८ ॥ इदं स्वस्त्ययनं श्रेष्ठमिदं बुद्धि
विवर्धनम् ॥ इदं यशस्यं सततमिदं निःश्रेयसं परम् ॥ ७९ ॥ अस्मिन्धर्मोऽखिलेनोक्तो गुणदोषौ च कर्मणाम् ॥ चतुर्णामपि वर्णानामाचारश्चा
पि शाश्वतः ॥ ८० ॥ आचारः प्रथमो धर्मः श्रुत्युक्तश्च नरोत्तम ॥ तस्मादस्मिन्समायुक्तो नित्यं स्यादात्मवान्द्विजः ॥ ८१ ॥ आचाराद्विच्युतो

१ वायुरेव च–इ० पा० । २ तदा–इ० पा० । ३ आशागतेन मे–इ० पा० । ४ पूज्योऽसि सुव्रत–इ० पा० । ५ विशेषतः–इ० पा० । ६ कथंचन–इ० पा० । ७ अग्रतः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विप्रो न वेदफलमश्नुते ॥ आचारेण च संयुक्तः संपूर्णफलभाक्स्मृतः ॥८२॥ एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् ॥ सर्वस्य तपसो मूलमाचारं जगृहुः परम् ॥ ८३ ॥ अन्ये च मानवा राजन्नाचरं संश्रिताः सदा ॥ एवमस्मिन्पुराणे तु आचारस्य तु कीर्तनम् ॥८४॥ वृत्तांतानि च राजेन्द्र तथा चोक्तानि पंडितैः ॥ त्रिलोक्यास्तु समुत्पत्तिः संस्कारविधिरुत्तमः ॥ श्रवणं चेतिहासस्य विधानं कथ्यते नृप ॥ ८५ ॥ तथास्मिन्कथ्यते राजन्माहात्म्यं वाचकस्य तु ॥ व्रतचर्याश्रमाचाराः स्नातकस्य परो विधिः ॥ ८६ ॥ दारादिगमनं चैव विवाहानां च लक्षणम् ॥ पुंसां च लक्षणं राजन्योपितां चात्र कथ्यते ॥ ८७ ॥ महायज्ञविधानं च शास्त्रकल्पं च शाश्वतम् ॥ पृथिव्या लक्षणं तात देवार्चायाः सुलक्षणम् ॥८८॥ वृत्तीनां:लक्षणं चैव स्नातकस्य व्रतानि च ॥ भक्ष्याभक्ष्यं च शौचं च द्रव्याणां शुद्धिरेव च ॥८९॥ स्त्रीधर्मयोगस्तापस्यं मोक्षः संन्यास एव च ॥ राज्ञश्च धर्मो ह्यखिलः कार्याणां च विनिर्णयः ॥ ९० ॥ माहात्म्यं सवितुश्चात्र तीर्थानां च विशाम्पते ॥ नारायणस्य माहात्म्यं तथा रुद्रस्य कथ्यते ॥ ९१ ॥ महाभाग्यं च विप्राणां माहात्म्यं पुस्तकस्य च ॥ दुर्गादेव्यास्तथा चोक्तं सत्यस्य च महामते ॥९२॥ संक्षिप्तं संविधानं च धर्मं स्त्रीपुंसयोरपि ॥ विभागं धर्मद्यूतं च कथकानां च शोधनम् ॥ ९३ ॥ वैश्यशूद्रोपचारं च संकीर्णानां च संभवम् ॥ आपद्धर्मं च वर्णानां प्रायश्चित्तविधिं तथा ॥ ९४ ॥ संध्याविधिं प्रेतशुद्धिं स्नानतर्पणयोर्विधिम् ॥ वैश्वदेवविधिं चापि तथा भोज्यविधिं नृप ॥ ९५ ॥ लक्षणं दंतकाष्ठस्य चरणव्यूहमुत्तमम् ॥ संसारगमनं चैव त्रिविधं कर्मसंभवम् ॥ ९६ ॥ नैःश्रेयसं कर्मणां च गुणदोषपरीक्षणम् ॥ दाराणां लक्षणं प्रोक्तं तथा पात्रपरीक्षणम् ॥ ९७ ॥ प्रसूतिं चापि गर्भस्य तथा कर्मफलं नृप ॥ जातिधर्मान्कुलधर्मान्वेदधर्मांश्च पार्थिव ॥९८॥ वैतानव्रतिकानां च तथासौ प्रोक्तवान्विभुः ॥ ब्रह्मा कुरुकुलश्रेष्ठ शंकराय महात्मने ॥ ९९ ॥ शंकरेण तथा विष्णोः कथितं कुरुनंदन ॥ विष्णुनापि पुनः प्रोक्तं नारदाय महीपते ॥१००॥ नारदात्प्राप्तवाञ्छक्रः शक्रादपि पराशरः ॥ पराशरात्ततो व्यासो व्यासादपि मया विभो ॥ १०१ ॥ एवं परंपराप्राप्त पुराणमिदमुत्तमम् ॥ शृणु त्वमपि राजेन्द्र मत्सकाशात्परं हितम् ॥१०२॥ सर्वाण्येव पुराणानि संज्ञेयानि नरर्षभ ॥ द्वादशैव सहस्राणि प्रोक्तानिह मनीषिभिः॥१०३॥ पुनर्वृद्धिं गतानीह आख्यानैर्विविधैर्नृप ॥ यथा स्कांदं तथा चेदं भविष्यं कुरुनंदन ॥१०४॥ स्कांदं शतसहस्रं तु लोकानां ज्ञातमेव हि ॥ भविष्यमेतदृषिणा लक्षार्द्धं संख्यया कृतम् ॥ १०५ ॥

---

१ आचारं फलमाश्रिताः—इ०पा० । २ इत आरभ्य यानि कर्माण्युक्तानि तानि 'तथासौ प्रोक्तवान्विभुः' इत्युत्तरेणानुयन्ति । ३ देशधर्मान्कुलधर्मांश्च वै नृप इ० पा० । ४ गतम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तच्छ्रुत्वा पुरुषो भक्त्या इदं फलमवाप्नुयात् ॥ ऋद्धिर्वृद्धिस्तथा श्रीश्च भवंति तस्य निश्चितम् ॥ १०६ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाह
स्र्यां संहितायां ब्राह्मे पर्वणि कथाप्रस्तावने प्रथमोऽध्यायः ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ शृणुष्वेदं महाबाहो पुराणं पंचलक्षणम् ॥ यच्छ्रुत्वा मुच्यते
राजन्पुरुषो ब्रह्महत्यया ॥ १ ॥ पर्वाणि चात्र वै पंच कीर्तितानि स्वयंभुवा ॥ प्रथमं कथ्यते ब्राह्मं द्वितीयं वैष्णवं स्मृतम् ॥ २ ॥ तृतीयं शैवमाख्यातं
चतुर्थं त्वाष्ट्रमुच्यते ॥ पंचमं प्रतिसर्गाख्यं सर्वलोकैः सुपूजितम् ॥३॥ एतानि तात पर्वाणि लक्षणानि निबोध मे ॥ सर्गश्च प्रतिसर्गश्च वंशो मन्वंत
राणि च ॥ ४ ॥ वंशानुचरितं चैव पुराणं पंचलक्षणम् ॥ चतुर्दशभिर्विद्याभिर्भूषितं कुरुनंदन ॥ ५ ॥ अंगानि चतुरो वेदा मीमांसा न्यायविस्तरः ॥
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ ६ ॥ आयुर्वेदो धनुर्वेदो गांधर्वश्चैव ते त्रयः ॥ अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः ॥७ ॥ प्रथमं
कथ्यते सर्गो भूतानामिह सर्वशः ॥ यच्छ्रुत्वा पापनिर्मुक्तो याति शांतिमनुत्तमाम्॥८॥ जगदासीत्पुरा तात तमोभूतमलक्षणम् ॥ अविज्ञेयमतर्क्यं च
प्रसुप्तमिव सर्वशः ॥ ९ ॥ ततः स भगवानीशो ह्यव्यक्तो व्यंजयन्निदम् ॥ महाभूतानि वृत्तौजाः प्रोत्थितस्तमनाशनः ॥१०॥ योसावतींद्रियोऽग्राह्यः
सूक्ष्मोऽव्यक्तः सनातनः ॥ सर्वभूतमयोऽचिंत्यः स एष स्वयमुत्थितः ॥ ११ ॥ योसौ षड्विंशको लोके तथा यः पुरुषोत्तमः ॥ भास्करश्च महा
बाहो परं ब्रह्म च कथ्यते ॥ १२ ॥ सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ॥ अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥ १३ ॥ यस्मादु
त्पद्यते सर्वं सदेवासुरमानुषम् ॥ बीजं शुक्रं तथा रेत उग्रं वीर्यं च कथ्यते ॥ १४ ॥ वीर्यस्यैतानि नामानि कथितानि स्वयंभुवा ॥ तदंडमभव
द्धैमं ज्वालामालाकुलं विभो ॥ १५ ॥ यस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ सुरज्येष्ठश्चतुर्वक्त्रः परमेष्ठी पितामहः ॥ १६ ॥ क्षेत्रज्ञः
पुरुषो वेधाः शंभुर्नारायणस्तथा ॥ पर्यायवाचकैः शब्दैरेवं ब्रह्मा प्रकीर्त्यते ॥ १७ ॥ सदा मनीषिभिस्तात विरंचिः कंजजस्तथा ॥ आपो नारा इति
प्रोक्ता आपो वै नरसूनवः ॥ १८ ॥ ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ अरमित्येव शीघ्राय नियताः कविभिः कृताः ॥ १९ ॥ आपं
एवार्णवीभूत्वा सुशीघ्रास्तेन ता नराः ॥ यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ॥ २० ॥ तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥ एवं स
भगवानंडे तत्त्वमेव निरूप्य वै ॥ २१ ॥ ध्यानमास्थाय राजेंद्र तदंडमकरोद्द्विधा ॥ शकलाभ्यां च राजेंद्र दिवं भूमिं च निर्ममे ॥ २२ ॥ अंतर्व्योम

१ तस्य देहं स्तुवंति वै–इ०पा० । २ शतसाहस्रार्धसंहितायाम्–इ० पा० । ३ 'चतुरनडुहोः'–इत्यामभाव आर्षः । ४ सर्वतः–इ०पा० । ५ तमोनाशनः । ६ कर्दमस्तथा–इ० पा० । ७ आप एकार्णवीभूता अधिप्राप्ते न ता नराः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिशश्चाष्टौ वारुणं स्थानमेव हि ॥ ऊर्द्ध्वं महान्गतो राजन्समंताल्लोकभूतये ॥२३॥ महतश्चाप्यहंकारस्तस्माच्च त्रिगुणा अपि ॥ त्रिगुणा अतिसूक्ष्मा स्तु बुद्धिगम्या हि भारत ॥ २४ ॥ उत्पत्तिहेतुभूता वै भूतानां महतां नृप ॥ तेषामेव गृहीतानि शनैः पंचेंद्रियाणि तु ॥ २५ ॥ तथैवावयवाः सूक्ष्माः षण्णामप्यमितौजसाम् ॥ २६ ॥ संनिवेश्यात्ममात्रासु स राजन्भगवान्विभुः ॥ भूतानि निर्ममे तात सर्वाणि विधिपूर्वकम् ॥ २७ ॥ यन्मूर्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयाणि षट् ॥ तस्माच्छरीरमित्याहुस्तस्य मूर्तिं मनीषिणः ॥ २८ ॥ महांति तानि भूतानि आविशंति ततो विभुम् ॥ कर्मणा सह राजेंद्र सगुणाश्चापि वै गुणाः ॥ २९ ॥ तेषामिदं तु सप्तानां पुरुषाणां महौजसाम् ॥ सूक्ष्माभ्यो मूर्तिमात्राभ्यः संभवत्यव्ययाद्व्ययम्[1] ॥ ३० ॥ भूतादिमहतस्तात येन व्याप्तमिदं जगत् ॥ तस्मादपि महाबाहो पुरुषाः पंच एव हि ॥ ३१ ॥ केचिदेवं परां तात सृष्टिमिच्छंति पंडिताः ॥ अन्येऽप्येवं महाबाहो प्रवदंति मनीषिणः ॥ ३२ ॥ योऽसावात्मा परस्तात कल्पादौ सृजते तनुम् ॥ प्रजनश्च महाबाहो सिसृक्षुर्विविधाः प्रजाः ॥ ३३ ॥ तेन सृष्टः पुद्गलस्तु प्रधानं विशते नृप ॥ प्रधानं क्षोभितं तेन विकारान्सृजते बहून् ॥ ३४ ॥ उत्पद्यते महांस्तस्मात्ततो भूतादिरेव हि ॥ उत्पद्यते विशालं च भूतादेः कुरुनंदन ॥ ३५ ॥ विशालाच्च हरिस्तात हरेश्चापि वृकास्तथा ॥ वृकैर्मुष्णंति च बुधास्तस्मात्सर्वं भवेन्नृप ॥ ३६ ॥ तथैषामेव राजेंद्र प्रादुर्भवति वेगतः ॥ मात्राणां कुरुशार्दूल विबोधस्तदनंतरम्[2] ॥ ३७ ॥ तस्मादपि हृषीकाणि विविधानि नृपोत्तम ॥ तथेयं सृष्टिराख्याताऽऽराध्यतः कुरुनंदन ॥ ३८ ॥ भूयो निबोध राजेन्द्र भूतानामिह विस्तरम् ॥ गुणाधिकानि सर्वाणि भूतानि पृथिवीपते ॥ ३९ ॥ आकाशमादितः कृत्वा उत्तरोत्तरमेव हि ॥ एकं द्वौ च तथा त्रीणि चत्वारश्चापि पंच च ॥ ४० ॥ ततः स भगवान्ब्रह्मा पद्मासनगतः प्रभुः ॥ सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् ॥४१॥ वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥ कर्मोद्भवानां देवानां सोऽसृजद्देहिनां प्रभुः ॥ ४२ ॥ तुषितानां गणं राजन्यज्ञं चैव सनातनम् ॥ दत्त्वा[3] वीर समानेभ्यो गुह्यं ब्रह्म सनातनम् ॥४३॥ दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥ कालं कालविभक्तीश्च[4] ग्रहानृतूंस्तथा नृप ॥ ४४ ॥ सरितः सागराञ्छैलान्समानि विषमाणि च ॥ कामं क्रोधं तथा वाचं रतिं चापि कुरूद्वह ॥ ४५ ॥ सृष्टिं ससर्ज राजेंद्र सिसृक्षुर्विविधाः प्रजाः ॥ धर्माधर्मौ विवेकाय कर्मणां च तथासृजत् ॥ ४६ ॥ सुखदुःखादिभिर्द्वंद्वैः प्रजाश्चेमा न्ययोजयत् ॥ अण्व्यो मात्राविनाशिन्यो दशार्धानां तु याः स्मृताः ॥ ४७ ॥ ताभिः सर्वमिदं वीर संभवत्यनुपूर्वशः ॥ यत्कृतं

१ द्वयम्–इ० पा० । २ द्वव्ध्यस्तदनंतरम्–इ० पा० । ३ दत्तवान्सर्वमानेभ्यः–इ० पा० । ४ कालविभूतिं च नक्षत्राणि ग्रहांस्तथा–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तु पुरा कर्म संनियुक्तेन वै नृप ॥ ४८ ॥ स तदेव स्वयं भेजे सृज्यमानं पुनःपुनः ॥ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मे ऋतानृते ॥ ४९ ॥ यद्यथास्याभवत्सर्गे तत्तस्य स्वयमाविशत् ॥ यथा च लिंगान्यृतवः स्वयमेवानुपर्यये ॥५०॥ स्वानिस्वान्यभिपद्यंते तथा कर्माणि देहिनः॥ लोकस्येह विवृद्ध्यर्थं मुखबाहूरुपादतः ॥५१॥ ब्रह्म क्षत्रं तथा चोभौ वैश्यशूद्रौ नृपोत्तम॥ मुखानि यानि चत्वारि तेभ्यो वेदा विनिःसृताः ॥५२॥ ऋग्वेदसंहिता तात वसिष्ठेन महात्मना॥ पूर्वान्मुखान्महाबाहो दक्षिणाच्चापि वै शृणु ॥ ५३ ॥ यजुर्वेदो महाराज याज्ञवल्क्येन वै सह ॥ सामानि पश्चिमात्तात गौतमश्च महानृपिः ॥ ५४ ॥ अथर्ववेदो राजेंद्र मुखाच्चाप्युत्तरान्नृप ॥ ऋषिश्चापि तथा राजञ्छौनको लोकपूजितः ॥ ५५ ॥ यत्तन्मुखं महाबाहो पञ्चमं लोकविश्रुतम् ॥ अष्टादश पुराणानि सेतिहासानि भारत ॥ ५६ ॥ निर्गतानि ततस्तस्मान्मुखात्कुरुकुलोद्वह ॥ तथान्याः स्मृतयश्चापि यमाद्या लोकपूजिताः ॥ ५७ ॥ ततः स भगवान्देवो द्विधा देहमकारयत् ॥ द्विधा कृत्वात्मनो देहमर्धेन पुरुषोभवत् ॥ ५८ ॥ अर्धेन नारी तस्यां च विराजमसृजत्प्रभुः ॥ तपस्तप्त्वासृजद्यं तु स स्वयं पुरुषो विराट् ॥ ५९ ॥ स चकार तपो राजन्सिसृक्षुर्विविधाः प्रजाः ॥ पतीन्प्रजानामसृजन्महर्षीनादितो दश ॥ ६० ॥ नारदं च भृगुं तात कं प्रचेतसमेव हि ॥ पुलहं क्रतुं पुलस्त्यं च अत्रिमंगिरसं तथा ॥ ६१ ॥ मरीचिं चापि राजेन्द्र योसावाद्यः प्रजापतिः ॥ एतांश्चान्यांश्च राजेन्द्र असृजद्भूरितेजसः ॥ ६२ ॥ अथ देवानृषीन्दैत्यान्सोऽसृजत्कुरुनन्दन ॥ यक्षरक्षःपिशाचांश्च गन्धर्वाप्सरसोऽसुरान् ॥ ६३ ॥ मनुष्याणां पितॄणां च सर्पाणां चैव भारत ॥ नागानां च महाबाहो ससर्ज विविधान्गणान् ॥ ६४ ॥ क्षणरुचोऽशनिगणान्रोहितेन्द्रधनूंषि च ॥ धूमकेतूंस्तथा चोल्का निर्घाताञ्ज्योतिषां गणान् ॥ ६५ ॥ मनुष्यान्किन्नरान्मत्स्यान्वराहांश्च विहंगमान् ॥ गजानश्वानथ पशून्मृगान्व्यालांश्च भारत ॥ ६६ ॥ कृमिकीटपतंगांश्च यूकालिक्षकमत्कुणान् ॥ सर्वं च दंशमशकं स्थावरं च पृथग्विधम् ॥ ६७ ॥ एवं स भास्करो देवः ससर्ज भुवनत्रयम् ॥ येषां तु यादृशं कर्म भूतानामिह कीर्तितम् ॥ ६८ ॥ कथयिष्यामि तत्सर्वं क्रमयोगं च जन्मनि ॥ गजा व्याला मृगास्तात पशवश्च पृथग्विधाः ॥ ६९ ॥ पिशाचा मानुषास्तात रक्षांसि च जरायुजाः ॥ द्विजास्तु अडंजाः सर्पा नक्रा मत्स्याः सकच्छपाः ॥ ७० ॥ एवंविधानि यानीह स्थलजान्यौदकानि च ॥ स्वेदजं दंशमशकं यूकालिक्षकमत्कुणाः ॥ ७१ ॥ ऊष्मणा चोपजायन्ते यच्चान्यत्किंचिदीदृशम् ॥ उद्भिज्जाः स्थावराः सर्वे बीजकांडप्ररोहिणः ॥ ७२ ॥ ओषध्यः फलपाकांता नानाविधफलोपगाः ॥

१ स्वयिष्ठं च नराधिप–इ० पा० । २ कर्माणि–इ० पा० । ३ औषधीनि च–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः ॥ ७३ ॥ पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः ॥ गुच्छगुल्मं तु विविधं तथैव तृणजातयः ॥ ॥ ७४ ॥ बीजकांडरुहाण्येव प्रताना वल्ल्यः एव च ॥ तमसा बहुरूपेण वेष्टिताः कर्महेतुना ॥ ७५ ॥ अन्तःसंज्ञा भवंत्येते सुखदुःखसमन्विताः ॥ एतावत्यस्तु गतयः प्रोद्भूताः कुरुनन्दन ॥७६॥ तस्माद्देवाद्दीप्तिमन्तो भास्कराच्च महात्मनः ॥ घोरेऽस्मिंस्तात संसारे नित्यं सततयायिनि ॥७७॥ एवं सर्वं स सृष्ट्वेदं राजँल्लोकगुरुं परम् ॥ तिरोभूतः स भूतात्मा कालं कालेन पीडयन् ॥ ७८ ॥ यदा स देवो जागर्ति तदेदं चेष्टते जगत् ॥ यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥ ७९ ॥ तस्मिन्स्वपिति राजेन्द्र जन्तवः कर्मबन्धनाः ॥ स्वकर्मभ्यो निवर्तन्ते मनश्च ग्लानिमृच्छति ॥ ८० ॥ युगपत्तु प्रलीयंते यदा तस्मिन्महात्मनि ॥ तदायं सर्वभूतात्मा सुखं स्वपिति भारत ॥ ८१ ॥ तमो यदा समाश्रित्य चिरं तिष्ठति सेन्द्रियः ॥ न नवं कुरुते कर्म तदोत्क्रामति मूर्तितः ॥ ८२ ॥ यदाहंमात्रिको भूत्वा बीजं स्थाणु चरिष्णु च ॥ समाविशति संसृष्टस्तदा मूर्तिं विमुञ्चति ॥ ८३ ॥ एवं स जाग्रत्स्वप्नाभ्यामिदं सर्वं जगत्प्रभुः ॥ संजीवयति चाजस्रं प्रमापयति चाव्ययः ॥ ८४ ॥ कल्पादौ सृजते तात अन्ते कल्पस्य संहरेत् ॥ दिनं तस्येह यत्तात कल्पांतमिति कथ्यते ॥ ८५ ॥ कालसंख्यां ततस्तस्य कल्पस्य शृणु भारत ॥ निमेषा दश चाष्टौ च अक्ष्णः काष्ठा निगद्यते ॥ ८६ ॥ त्रिंशत्काष्ठाः कलामाहुः क्षणस्त्रिंशत्कलाः स्मृताः ॥ मुहूर्तमथ मौहूर्ता वदन्ति द्वादश क्षणम् ॥ ८७ ॥ त्रिंशन्मुहूर्तमुद्दिष्टमहोरात्रं मनीषिभिः ॥ मासस्त्रिंशदहोरात्रं द्वौद्वौ मासावृतुः स्मृतः ॥ ८८ ॥ ऋतुत्रयमप्ययनमयने द्वे तु वत्सरः ॥ अहोरात्रे विभजते सूर्यो मानुषदैविके ॥ ८९ ॥ रात्रिः स्वप्नाय भूतानां चेष्टायै कर्मणामहः ॥ पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः ॥ ९० ॥ कर्म चेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी ॥ दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ॥ ९१ ॥ अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥ ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं महीपते ॥ ९२ ॥ एकैकशो युगानां तु क्रमशस्तन्निबोध मे ॥ चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ॥ ९३ ॥ तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ त्रेता त्रीणि सहस्राणि वर्षाणि च विदुर्बुधाः ॥ ९४ ॥ शतानि षट् च राजेन्द्र सन्ध्यासन्ध्यांशयोः पृथक् ॥ वर्षाणां द्वे सहस्रे तु द्वापरे परिकीर्तिते ॥ ९५ ॥ चत्वारि च शतान्याहुः सन्ध्यासन्ध्यांशयोर्बुधः ॥ सहस्रं कथितं तिष्ये शतद्वयसमन्वितम् ॥ ९६ ॥ एषा चतुर्युगस्यापि संख्या प्रोक्ता नृपोत्तम ॥ यदेतत्परिसंख्या

१ मतस्यः–इ० पा० । २ पूतात्मा–इ० पा० । ३ सः–इ० पा० । ४ तात–इ० पा० । ५ त्रिंशत्कलो मुहूर्तस्तु अहोरात्रं मनीषिभिः–इ० पा० । ६ महाबाहो–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तमादावेव चतुर्युगम् ॥ ९७ ॥ एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥ दैविकानां युगानां तु सहस्रपरिसंख्यया ॥ ९८ ॥ ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरुच्यते ॥ एतद्युगसहस्रांतं ब्राह्मं पुण्यमहर्विदुः ॥ ९९ ॥ रात्रिं च तावतीमेव तेहोरात्रविदो जनाः ॥ ततोऽसौ युगपर्यंते प्रसुप्तः प्रतिबुध्यते ॥ १०० ॥ प्रतिबुद्धस्तु सृजति मनः सदसदात्मकम् ॥ मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया ॥ १०१ ॥ विपुलं जायते तस्मात्तस्य शब्दं गुणं विदुः ॥ विपुलात्तु विकुर्वाणात्सर्वगंधवहः शुचिः ॥ १०२ ॥ बलवाञ्जायते वायुः स वै स्पर्शगुणो मतः ॥ वायोरपि विकुर्वाणाद्विरोचिष्णु तमोनुदम् ॥ १०३ ॥ उत्पद्यते विचित्रांशुस्तस्य रूपं गुणं विदुः ॥ तस्मादपि विकुर्वाणादापो जाताः स्मृता बुधैः ॥ १०४ ॥ तासां गुणो रसो ज्ञेयः सर्वलोकस्य भावनः ॥ अद्भ्यो गंधगुणा भूमिरित्येषा सृष्टिरादितः ॥ १०५ ॥ यत्प्राग्द्वादशसाहस्रमुक्तं सौमनसं युगम् ॥ तदेकसप्ततिगुणं मन्वंतरमिहोच्यते ॥ १०६ ॥ मन्वंतराण्यसंख्यानि सर्गः संहार एव च ॥ तथाप्यहे सदा ब्राह्मे मनवस्तु चतुर्दश ॥ १०७ ॥ कथ्यंते कुरुशार्दूल संख्यया पंडितैः सदा ॥ मनोः स्वायंभुवस्येह षड्वंश्या मनवोऽपरे ॥ १०८ ॥ सृष्टवंतः प्रजाः स्वाःस्वाः महात्मानो महौजसः ॥ सावर्णेयस्तथा पंचभौत्यो रौच्यस्तथापरः ॥ १०९ ॥ एते भविष्या मनवः सप्त प्रोक्ता नृपोत्तम ॥ स्वेस्वेंतरे सर्वमिदं पालयंति चराचरम् ॥ ११० ॥ एवंविधं दिनं तस्य विरिंचेस्तु महात्मनः ॥ तस्यांते कुरुते सर्गं यथेदं कथितं तव ॥ १११ ॥ क्रीडन्निवैतत्कुरुते परमेष्ठी नराधिप ॥ चतुष्पात्सकलो धर्मः सत्यं चैव कृते युगे ॥ ११२ ॥ नाधर्मेणागमः कश्चिन्मनुष्याणां प्रवर्तते ॥ इतरेष्वागमास्तात धर्मश्च कुरुनंदन ॥ ११३ ॥ यादृशाः परिहीयंते यथाह भगवान्मनुः ॥ चौर्याचाप्यनृताद्राजन्मायाभिरमितद्युते ॥ ११४ ॥ पादेन हीयते धर्मस्त्रेतादिषु युगेषु वै ॥ अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ॥ ११५ ॥ कृतत्रेतादिषु त्वेषां वयो ह्रसति पादशः ॥ वेदोक्तमायुराशीश्च मर्त्यानां कुरुनंदन ॥ ११६ ॥ कर्मणां तु फलं तात फलत्यनुयुगं सदा ॥ प्रभावश्च तदा लोके फलत्येव शरीरिणाम् ॥ ११७ ॥ अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ॥ अन्ये कलियुगे नृणां युगधर्मानुरूपतः ॥ ११८ ॥ तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ॥ द्वापरे यज्ञमित्याहुर्दानमेकं कलौ युगे ॥ ११९ ॥ सर्वस्य राजन्सर्गस्य गुप्त्यर्थं च महाद्युते ॥ मुखबाहूरुपादानां पृथक्कर्माण्यकल्पयत् ॥ १२० ॥ अध्यापनमध्ययनं यजनं याजनं तथा ॥ दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥ १२१ ॥ प्रजानां पालनं राजन्दानमध्ययनं तथा ॥ विषयेषु प्रसक्तिं च तथेज्यां क्षत्रियस्य तु ॥ १२२ ॥ पशूनां रक्षणं

१ बोध्यमानम्–इ० पा० । २ पावनः–इ० पा० । ३ मुनिशार्दूल–इत्यपिपाठः । ४ एवं स्युर्मनवः परे–इ० पा० । ५ मुनिः–इ० पा० । ६ एव–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दानमिज्याध्ययनमेव च ॥ वंणिक्पथं कुसीदं च वैश्यस्य कृषिरेव च ॥ १२३ ॥ एकमेव तु शूद्रस्य कर्म लोके प्रंकीर्तितम् ॥ एतेषामेव वर्णानां शुश्रूषामनुपूर्वशः ॥ १२४ ॥ पुरुषस्य सदा श्रेष्ठं नाभेरूर्ध्वं नृपोत्तम ॥ तस्मादपि शुचितरं मुखं तात स्वयंभुवः ॥ १२५ ॥ तस्मान्मुखाद्द्विजो जात इतीयं वैदिकी श्रुतिः ॥ सर्वस्यैवास्य धर्मस्य धर्मतो ब्राह्मणः प्रभुः ॥ १२६ ॥ सं सृष्टो ब्रह्मणा पूर्वं तपस्तप्त्वा कुरूद्वह ॥ हव्यानामिव कव्यानां सर्वस्यापि च गुप्तये ॥ १२७ ॥ अश्नंति च मुखेनास्य हव्यानि त्रिदिवौकसः ॥ कव्यानि चैव पितरः किंभूतमधिकं ततः ॥ १२८ ॥ भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ॥ बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ १२९ ॥ ब्राह्मणेषु च विद्वांसो विद्वत्सु कृत बुद्धयः ॥ कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ॥ १३० ॥ जन्म विप्रस्य राजेंद्र धर्मार्थमिह कथ्यते ॥ उत्पन्नः सर्वसिद्ध्यर्थं याति ब्रह्मसदो नृप ॥ १३१ ॥ स चांपि जायमानस्तु पृथिव्यामिह जायते ॥ भूतानां प्रभवायैव धर्मकोशस्य गुप्तये ॥ १३२ ॥ सर्वं हि ब्राह्मणस्येदं यत्किंचित्पृथिवीगतम् ॥ जन्मना चोत्तमेनेदं सर्वं वै ब्राह्मणोऽर्हति ॥ १३३ ॥ स्वकीयं ब्राह्मणो भुंक्ते विदधाति च सुव्रत ॥ करुणां कुर्वतस्तस्य भुंजंतीहेतरे जनाः ॥ १३४ ॥ त्रयाणामिह वर्णानां भावाभावाय वै द्विजः ॥ भवेद्राजन्न संदेहस्तुष्टो भावाय वै द्विजः ॥ १३५ ॥ अभावाय भवेत्क्रुद्धस्तस्मात्पूज्यतमो हि सः ॥ ब्राह्मणे सति नान्यस्य प्रभुत्वं विद्यते नृप ॥ १३६ ॥ कामात्करोत्यसौ कर्म कामगश्च नृपोत्तम ॥ तस्माद्वृंदारकपुरी तस्मादपि महः पुनः ॥ १३७ ॥ महर्लोकाज्जनोलोकं ब्रह्मलोकं च गच्छति ॥ ब्रह्मत्वं च महाबाहो याति विप्रो न संशयः ॥ १३८ ॥ ॥ शतानीक उवाच ॥ ॥ ब्रह्मत्वं नाम दुष्प्रापं ब्रह्मलोकेषु सुव्रत ॥ १३९ ॥ ब्रह्मत्वं कीदृशं विप्रो ब्रह्मलोकं च गच्छति ॥ नाममात्रोऽथ किं विप्रो ब्रह्मत्वं ब्रह्मणः सदा ॥ याति ब्रह्मन्गुणाः के स्युर्ब्रह्मप्राप्तौ ममोच्यताम् ॥ १४० ॥ सुमंतुरुवाच ॥ ॥ साधुसाधु महाबाहो शृणु मे परमं वचः ॥ १४१ ॥ ये प्रोक्ता वेदशास्त्रेषु संस्कारा ब्राह्मणस्य तु ॥ गर्भाधानादयो ये चं संस्कारा यस्य पार्थिव ॥ १४२ ॥ चत्वारिंशत्तथाष्टौ च निर्वृत्ताः शाश्वतो नृप ॥ स याति ब्रह्मणः स्थानं ब्राह्मणत्वं च मानद ॥ संस्काराः सर्वथा हेतुर्ब्रह्मत्वे नात्र संशयः ॥ १४३ ॥ ॥ शतानीक उवाच ॥ ॥ संस्काराः के मता ब्रह्मन्ब्रह्मत्वे ब्राह्मणस्य तु ॥ शंस मे द्विजशार्दूल कौतुकं हि महन्मम ॥ १४४ ॥ ॥ सुमंतुरुवाच ॥ ॥ साधुसाधु महाबाहो शृणु मे परमं वचः ॥ ये प्रोक्ता वेदशास्त्रेषु संस्कारा ब्राह्मणस्य तु ॥ मनीषिभिर्महाबाहो शृणु सर्वानशेषतः ॥ १४५ ॥ गर्भाधानं पुंसवनं सीमंतोन्नयनं तथा ॥ जातकर्मान्नप्राशनं

१ वाणिज्यं तु–इ० पा० । २ प्रतिष्ठितम्–इ०पा० । ३ भुंजं–इ०पा० । ४ सर्वधर्मार्थम्–इ०पा० । ५ चेद्–इ०पा० । ६ मानवः–इ० पा० । ७ अयं श्लोकः पुनरुक्तोऽपि प्राक्[illegible] युक्त एव प्रतिभाति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च चूडोपनयनं नृप ॥ १४६ ॥ ब्रह्मव्रतानि चत्वारि स्नानं च तदनंतरम् ॥ सधर्मचारिणीयोगो यज्ञानां कर्म मानद ॥ १४७ ॥ पंचानां कार्यमित्या हुरात्मनः श्रेयसे नृप ॥ देवपितृमनुष्याणां भूतानां ब्रह्मणस्तथा ॥ १४८ ॥ एतेषां चाष्टकाकर्म पार्वणश्राद्धमेव हि ॥ श्रावणी चाग्रहायणी चैत्री चाश्वयुजी तथा ॥ १४९ ॥ पाकयज्ञास्तथा सप्त अभ्याधानं च सत्क्रियाः ॥ अग्निहोत्रं तथा राजन्दर्शं च विधुसंक्षये ॥ १५० ॥ पौर्णमासं च राजेंद्र चातुर्मास्यानि चापि हि ॥ निरूपणं पशुवधं तथा सौत्रामणीति च ॥ १५१ ॥ हविर्यज्ञास्तथा सप्त तेषां चापि हि सत्क्रियाः ॥ अग्निष्टोमो त्यग्निष्टोमस्तथोक्थ्यः षोडशीं विदुः ॥ १५२ ॥ वाजपेयोतिरात्रश्च आप्तोर्यामेति वै स्मृतः ॥ संस्कारेषु स्थिताः सप्त सोमाः कुरुकुलोद्वह ॥ ॥ १५३ ॥ इत्येते द्विजसंस्काराश्चत्वारिंशन्नृपोत्तम ॥ अष्टौ चात्मगुणास्तात शृणु तानपि भारत ॥ १५४ ॥ अनसूया दया क्षांतिरनायासं च मंगलम् ॥ अकार्पण्यं तथा शौचमस्पृहा च कुरूद्वह ॥ १५५ ॥ य एतेष्टगुणास्तात कीर्त्यंते वै मनीषिभिः ॥ एतेषां लक्षणं वीर शृणु सर्वमशे षतः ॥ १५६ ॥ न गुणान्गुणिनो हंति न स्तौत्यात्मगुणानपि ॥ प्रहृष्यते नान्यदोषैरनसूया प्रकीर्तिता ॥ १५७ ॥ अपरे बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ॥ आत्मवद्वर्तनं यत्स्यात्सा दया परिकीर्तिता ॥ १५८ ॥ वाचा मनसि काये च दुःखेनोत्पादितेन च ॥ न कुप्यति न चाप्रीतिः सा क्षमा परिकीर्तिता ॥ १५९ ॥ अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिंदितैः ॥ आचारे च व्यवस्थानं शौचमेतत्प्रकीर्तितम् ॥ १६० ॥ शरीरं पीड्यते येन शुभेनापि च कर्मणा ॥ अत्यंतं तन्न कुर्वीत अनायासः स उच्यते ॥ १६१ ॥ प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ॥ एतद्धि मंगलं प्रोक्तं मुनिभिर्ब्रह्मवादिभिः ॥ १६२ ॥ स्तोकादपि प्रदातव्यमदीनेनांतरात्मना ॥ अहन्यहनि यत्किंचिदकार्पण्यं तदुच्यते ॥ १६३ ॥ यथोत्पन्नेन संतुष्टः स्वल्पेनाप्यथ वस्तुना ॥ अहिंसया परस्वेषु साऽस्पृहा परिकीर्तिता ॥ १६४ ॥ वपुर्यस्य तु इत्येतैः संस्कारैः संस्कृतं द्विजः ॥ ब्रह्मत्वमिह संप्राप्य ब्रह्मलोकं च गच्छति ॥ १६५ ॥ वैदिकैः कर्मभिः पुण्यैर्निषेकाद्यैर्द्विजन्मनाम् ॥ कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ १६६ ॥ गर्भशुद्धिं ततः प्राप्य धर्मं चाश्रमलक्षणम् ॥ याति मुक्तिं न संदेहः पुराणेस्मिन्नृपोत्तम ॥ १६७ ॥ उशंति कुरुशार्दूल ब्राह्मणा नात्र संशयः ॥ ( आश्रितानां

१ चूडाकरणमेखलाः–इ० पा० । २ जंतूनां कर्म मानद–इ० पा० । ३ अग्न्याधेयम्–इ० पा० । ४ निरूढपशुबंधं च–इ० पा० । ५ ज्योतिष्टोमो ह्यग्निष्टोमः–इ० पा० । ६ नृप–इ० पा० । ७ मासाः–इ० संस्थाः–इ० च पा० । ८ परार्थेषु–इ० पा० । ९ यस्येत्युक्त्या स इत्याध्याह्रियते । १० आदादिकवशेरिच्छार्थस्य संप्रसारणे रूपम् । ११ एत ( ) चिह्नान्तर्गतोयं पाठः कस्मिंश्चिदेकस्मिन्पुस्तके दृश्यते । स च किंचित्प्रकरणादूरवर्तीति हेतोश्चिह्नं प्रवेशितम्–इति बोध्यम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेषेण ये नित्यं स्वस्तिवादिनः ॥ १६८ ॥ निकटस्थान्द्विजान्हित्वा योऽन्यान्पूजयति द्विजान् ॥ सिद्धं पापं तदपमानात्तद्वक्तुं नैव शक्यते ॥
॥ १६९ ॥ तस्मात्सदा समीपस्थः संपूज्यो विधिवन्नृप ॥ पूजयेदतिथींस्तद्वदन्नपानादिदानतः ॥ १७० ॥ ब्राह्मणः सर्ववर्णानां ज्येष्ठः श्रेष्ठस्तथो
त्तमः ॥ ) एवमस्मिन्पुराणे तु संस्कारान्ब्राह्मणस्य तु ॥ १७१ ॥ शृणोति यश्च जानाति यश्चापि पठते सदा ॥ ऋद्धिं वृद्धिं तथा कीर्तिं प्राप्येह
श्रियमुत्तमाम् ॥ १७२ ॥ धनं धान्यं यशश्चापि पुत्रान्बन्धून्सुरूपताम् ॥ सावित्रं लोकमासाद्य ब्रह्मलोकमवाप्नुयात् ॥ १७३ ॥ इति श्रीभविष्ये
महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥ जातकर्मादिसंस्कारा
न्वर्णानामनुपूर्वशः ॥ आश्रमाणां च मे धर्मं कथयस्व द्विजोत्तम ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ गर्भाधानं पुंसवनं सीमंतोन्नयनं
तथा ॥ जातकर्मान्नप्राशश्च चूडा मौंजीनिबंधनम् ॥ २ ॥ बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया
श्रुतैः ॥ ३ ॥ महायज्ञैश्च ब्राह्मीयं यज्ञैश्च क्रियते तनुः ॥ शृणुष्वैकमना राजन्यथा सा क्रियते तनुः ॥ ४ ॥ प्राङ्नाभिकर्तनात्पुंसो जातकर्म
विधीयते ॥ मंत्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम् ॥ ५ ॥ नामधेयं दशम्यां तु केचिदिच्छंति पार्थिव ॥ द्वादश्यामपरे राजन्मासि पूर्णे तथा
परे ॥ ६ ॥ अष्टादशेऽहनि तथाऽन्ये वदंति मनीषिणः ॥ पुण्ये तिथौ मुहूर्ते च नक्षत्रे च गुणान्विते ॥ ७ ॥ मंगल्यं तात विप्रस्य शिवशर्मे
तिपार्थिव ॥ राजन्यस्य विशिष्टं[1] तु इन्दुवर्मेति कथ्यते ॥ ८ ॥ वैश्यस्य धनसंयुक्तं शूद्रस्य च जुगुप्सितम् ॥ धनवर्धनेति वैश्यस्य सर्वदासेति
हीनजे ॥ ९ ॥ मनुना च तथा प्रोक्तं नाम्नो लक्षणमुत्तमम् ॥ शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ॥ १० ॥ वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य
प्रेष्यसंयुतम् ॥ स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थमनोरमम् ॥ ११ ॥ मंगल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥ द्वादशेऽहनि राजेन्द्र शिशोर्नि
ष्क्रमणं गृहात् ॥ १२ ॥ चतुर्थे मासि कर्तव्यं तथान्येषां मतं विभो ॥ षष्ठेऽन्नप्राशनं मासि यथेष्टं मंगलं कुले ॥१३॥ चूडाकर्म द्विजातीनां सर्वे
षामनुपूर्वशः ॥ प्रथमेऽब्दे तृतीये वा कर्तव्यं कुरुनन्दन ॥ १४ ॥ गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ॥ गर्भादेकादशे राजन्क्षत्रियस्य
विनिर्दिशेत् ॥१५॥ द्वादशेऽब्देपि गर्भात्तु वैश्यस्य व्रतमादिशेत् ॥ ब्रह्मवर्चसकामेन कार्यं विप्रस्य पञ्चमे ॥ १६ ॥ बलार्थिना तथा राज्ञः षष्ठेऽब्दे
कार्यमेव हि ॥ अर्थकामेन वैश्यस्य अष्टमे कुरुनन्दन ॥ १७ ॥ आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ॥ द्वाविंशतेः क्षत्रबन्धोराचतुर्विंशते

१ वशिष्ठं तु–इ० पा० । २ कीर्त्यते–इ० पा० । ३ द्वितीये वा–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशः ॥ १८ ॥ अत ऊर्ध्वं तु ये राजन्यथाकालमसंस्कृताः ॥ सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ १९ ॥ न चाप्येभिरपूतैस्तु आपद्यपि हि कर्हिचित् ॥ व्राह्मं यौनं च संबन्धमाचरेद्ब्राह्मणः सह ॥ २० ॥ भवन्ति राजंश्चर्माणि व्रतिनां त्रिविधानि च ॥ कार्ष्णरौरवबास्तानि ब्रह्मक्षत्रविशां नृप ॥ २१ ॥ वसीरंश्चानुपूर्व्येण वस्त्राणि विविधानि तु ॥ ब्रह्मक्षत्रविशो राजञ्छाणक्षौमादिकानि च ॥ २२ ॥ मौंजी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ॥ क्षत्रियस्य च मौर्वीज्या वैश्यस्य शणतांतवी ॥ २३ ॥ मुञ्जालाभे तु कर्तव्या कुशाश्मन्तकबल्वजैः ॥ त्रिवृता ग्रंथिनैकेन त्रिभिः पञ्चभिरेव च ॥ २४ ॥ कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ॥ शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥ २५ ॥ पुष्कराणि तथा चैषां भवंति त्रिविधानि तु ॥ ब्रह्मणो बैल्वपालाशौ तृतीयं प्लक्षजं नृप ॥ २६ ॥ वाटखादिरौ क्षत्रियस्तु तथान्यं वेतसोद्भवम् ॥ पैलवोदुंबरौ वैश्यस्तथाश्वत्थजमेव हि ॥ २७ ॥ दंडानेतान्महाबाहो धर्मतोऽर्हति धारितुम् ॥ केशांतिको ब्राह्मणस्य दंडः कार्यः प्रमाणतः ॥ २८ ॥ ललाटसंमितो राज्ञः स्यात्तु नासांतिको विशः ॥ ऋजवस्ते तु सर्वे स्युर्ब्राह्मणाः सौम्यदर्शनाः ॥ २९ ॥ अनुद्वेगकरा नृणां सत्त्वचो नाग्निदूषिताः ॥ प्रगृह्य चेप्सितं दंडमुपस्थाय च भास्करम् ॥ ३० ॥ सम्यग्गुरुं तथापूज्य चरेद्भैक्ष्यं यथाविधि ॥ भवत्पूर्वं चरेद्भैक्ष्यमुपनीतो द्विजोत्तमः ॥ ३१ ॥ भवन्मध्यं तु राजन्यो वैश्यस्य भवदुत्तरम् ॥ मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ॥ ३२ ॥ भिक्षेत भैक्ष्यं प्रथमं या चैनं नावमानयेत् ॥ सुवर्णं रजतं चान्नं सा पात्रेऽस्य विनिर्दिशेत् ॥ ३३ ॥ समाहृत्य ततो भैक्ष्यं यावदर्थममायया ॥ निवेद्य गुरुवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥ ३४ ॥ आयुष्यं प्राङ्मुखो भुंक्ते यशस्यं दक्षिणामुखः ॥ श्रियं प्रत्यङ्मुखो भुंक्ते ऋतं भुंक्ते उदङ्मुखः ॥ ३५ ॥ उपस्पृश्य द्विजो राजन्नन्नमद्यात्समाहितः ॥ भुक्त्वा चोपस्पृशेत्सम्यगद्भिः खानि च संस्पृशेत् ॥ ३६ ॥ तथान्नं पूजयेन्नित्यमद्याचैतदकुत्सयन् ॥ दर्शनात्तस्य हृष्येद्वै प्रसीदेच्चापि भारत ॥ ३७ ॥ अभिनन्द्य ततोऽश्नीयादित्येवं मनुरब्रवीत् ॥ पूजितं त्वशनं नित्यं बलमोजश्च यच्छति ॥ ३८ ॥ अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम् ॥ नोच्छिष्टं कस्यचिद्दद्यान्नाद्याचैतत्तथांतरा ॥ ३९ ॥ यस्त्वन्नमन्तरा कृत्वा लोभादत्ति नृपोत्तम ॥ विनाशं यति स नर इह लोके परत्र च ॥ यथाभवत्पुरा वैश्यो धनवर्द्धनसंज्ञितः ॥ ४० ॥ ॥ शतानीक उवाच ॥ ॥ स कथमंतरं पूर्वमन्नस्य द्विजसत्तम ॥ किमन्तरं तथान्नस्य कथं वा तत्कृतं भवेत् ॥ ४१ ॥ ॥ सुमंतुरुवाच ॥ ॥ पुरा कृतयुगे राजन्वैश्यो वसति पुष्करे ॥ धनवर्धननामावै



१ त्रयोऽप्येते-इ० पा० । २ न ते संस्कारभागिनः-इ० पा० । ३ ब्राह्मं वेदाध्ययनमित्यर्थः । ४ धारयितुमित्यर्थः । ५ सत्यम्-इ० पा० । ६ नृप-इ० पा० । ७ अभूत्पुण्यकर्मकृत्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समृद्धो धनधान्यतः ॥ ४२ ॥ निदाघकाले राजेन्द्र स कृत्वा वैश्वदेविकम् ॥ सपुत्रभ्रातृभिः सार्धं तथा वै मित्रबन्धुभिः ॥ आहारं कुरुते राजन्भक्ष्यभोज्यसमन्वितम् ॥ ४३ ॥ अथ तद्भुञ्जतस्तस्य अन्नं शब्दो महानभूत् ॥ करुणः कुरुशार्दूल अथ तं स प्रधावितः ॥ ४४ ॥ त्यक्त्वा स भोजनं यावन्निष्क्रान्तो गृहवाह्यतः ॥ अथ शब्दस्तिरोभूतः स भूयो गृहमागतः ॥ ४५ ॥ तमेव भाजनं गृह्य आहारं कृतवान्नृप ॥ भुक्तशेषं महाबाहो आहारं स तु भुक्तवान् ॥ ४६ ॥ भुक्त्वा स शतधा जातस्तस्मिन्नेव क्षणे नृप ॥ तस्मादन्नं न राजेन्द्र अश्नीयादंतरा क्वचित् ॥ ४७ ॥ न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद्व्रजेत् ॥ रसो भवत्यत्यशनाद्रसाद्रोगः प्रवर्तते ॥४८॥ स्नानं दानं जपो होमः पितृदेवाभिपूजनम् ॥ न भवंति रसे जाते नराणां भरतर्षभ ॥ ४९ ॥ अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ॥ अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥ ५० ॥ यक्षभूतपिशाचानां रक्षसां च नृपोत्तम ॥ गम्यो भवति वै विप्र उच्छिष्टो नात्र संशयः ॥५१॥ शुचित्वमाश्रयेत्तस्माच्छुचित्वान्मोदते दिवि ॥ सुखेन चेह रमते इतीयं वैदिकी श्रुतिः ॥५२॥ ॥ शतानीक उवाच ॥ ॥ शुचितामियात्कथं विप्रः कथं चाशुचितामियात् ॥ एतन्मे ब्रूहि विप्रेंद्र कौतुकं परमं मम ॥५३॥ सुमंतुरुवाच ॥ ॥ उपस्पृश्य शुचिर्विप्रो भवते भरतर्षभ ॥ विधिवत्कुरुशार्दूल भवेद्विधिपरो ह्यतः ॥५४॥ ॥ शतानीक उवाच ॥ ॥ उपस्पर्शविधिं विप्र कथय त्वं ममाखिलम् ॥ शुचित्वमाप्नुयाद्येन आचांतो ब्राह्मणो द्विज ॥ ५५ ॥ ॥ सुमंतुरुवाच ॥ ॥ साधु पृष्टोऽस्मि राजेंद्र शृणु विप्रो यथा भवेत् ॥ शुचिर्भरतशार्दूल विधिना येन वा विभो ॥ ५६ ॥ प्रक्षाल्य हस्तौ पादौ च प्राङ्मुखोदङ्मुखोऽपि वा ॥ उपविश्य शुचौ देशे बाहुं कृत्वा च दक्षिणम् ॥५७॥ जान्वंतरे महाबाहो ब्रह्मसूत्रसमन्वितः ॥ सुसमौ चरणौ कृत्वा तथा बद्धशिखो नृप ॥५८॥ न तिष्ठन्न च संजल्पंस्तथा चानवलोकयन् ॥ न त्वरन्कुपितो वापि त्यक्त्वा राजन्सुदूरतः ॥ ५९ ॥ प्रसन्नाभिस्तथाद्भिस्तु आचांतः शुचितामियात् ॥ नोष्णाभिर्न सफेनाभिर्युक्ताभिः कलुषेण च ॥६०॥ वर्णेन रसगंधाभ्यां हीनाभिर्न च भारत ॥ सबुद्बुदाभिश्च तथा नाचामेत्पंडितो नृप ॥६१॥ पंचतीर्थानि विप्रस्य श्रूयंते दक्षिणे करे ॥ देवतीर्थं पितृतीर्थं ब्रह्मतीर्थं च मानद ॥६२॥ प्राजापत्यं तथा चान्यत्तथान्यत्सौम्यमुच्यते ॥ अंगुष्ठमूलोत्तरतो येयं रेखा महीपते ॥६३॥ ब्राह्मं तीर्थं वदंत्येतद्वसिष्ठाद्या द्विजोत्तमाः ॥ कायं कनिष्ठिकामूले अंगुल्यग्रे तु दैवतम् ॥६४॥ तर्जन्यंगुष्ठयोरंतः पित्र्यं तीर्थमुदाहृतम् ॥ करमध्ये स्थितं सौम्यं प्रशस्तं देवकर्मणि ॥ ६५ ॥ देवार्चाबलिहरणं प्रविक्षपणमेव च ॥ एतानि देवतीर्थेन कुर्यात्कुरुकुलोद्वह ॥६६॥ अन्ननिर्वपणं राजंस्त

१ भक्ष्यपेयसमन्वितम्–इ० पा० । २ भुञ्जानस्य । ३ गृहीत्वा । ४ भक्ष्यः–इ० पा० । ५ यज्ञसूत्रसमन्वितः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

था संपवनं नृप ॥ लाजाहोमं तथा सौम्यं प्राजापत्येन कारयेत् ॥ ६७ ॥ कमंडलूपस्पर्शनं दधिप्राशनमेव च ॥ सौम्यतीर्थेन राजेंद्र सदा कुर्याद्विच क्षणः ॥ ६८ ॥ पितॄणां तर्पणं कार्यं पितृतीर्थेन धीमता ॥ ब्राह्मेण चापि तीर्थेन सदोपस्पर्शनं परम् ॥ ६९ ॥ घंनांगुलिकरं कृत्वा एकाग्रः सुमना द्विजः ॥ त्रिः कृत्वा यः पिबेदापो मुखशब्दविवर्जितः ॥ ७० ॥ शृणु यत्फलमाप्नोति प्रीणाति च यथा सुरान् ॥ प्रथमं यत्पिबेदाप ऋग्वेदस्तेन तृप्यति ॥ ७१ ॥ यद्द्वितीयं यजुर्वेदस्तेन प्रीणाति भारत ॥ यत्तृतीयं सामवेदस्तेन प्रीणाति भारत ॥ ७२ ॥ प्रथमं यन्मृजेदास्यं दक्षिणांगुष्ठमूलतः॥ अथर्ववेदः प्रीणाति तेन राजन्नसंशयः ॥ ७३ ॥ इतिहासपुराणानि यद्द्वितायं प्रमार्जति ॥ यन्मूर्धानं हि राजेंद्र अभिषिंचति वै द्विजः ॥ ७४ ॥ तेन प्रीणाति वै रुद्रं शिखामालभ्य वै ऋषीन् ॥ यदक्षिणी चालभते रविः प्रीणाति तेन वै ॥ ७५ ॥ नासिकालंभनाद्वायुं प्रीणात्येव न संशयः ॥ यच्छ्रो त्रमालभेद्विप्रो दिशः प्रीणाति तेन वै ॥ ७६ ॥ यमं कुबेरं वरुणं वासवं चाग्निमेव च ॥ यद्बाहुमन्वालभते एतान्प्रीणाति तेन वै ॥ ७७ ॥ यन्नाभिम न्वालभते प्राणानां ग्रंथिमेव च ॥ तेन प्रीणाति राजेंद्र इतीयं वैदिकी श्रुतिः ॥ ७८ ॥ अभिषिंचति यत्पादौ विष्णुं प्रीणाति तेन वै ॥ यद्भूम्याच्छा दकं वारि विसर्जयति मानद ॥ ७९ ॥ वासुकिप्रमुखान्नागांस्तेन प्रीणाति भारत ॥ यद्विंदवोंऽतरे भूमौ पतंतीह नराधिप ॥ ८० ॥ भूतग्रामं ततस्त स्तु प्रीणंतीह चतुर्विधम् ॥ अंगुष्ठेन प्रदेशिन्या लभेत चाक्षिणी नृप ॥ ८१ ॥ अनामिकांगुष्ठिकाभ्यां नासिकामालभेन्नृप ॥ मध्यमांगुष्ठाभ्यां मुखं संस्पृशेद्भरतर्षभ ॥ ८२ ॥ कनिष्ठिकांगुष्ठकाभ्यां कर्णमालभते नृप ॥ अंगुलीभिस्तथा बाहुमंगुष्ठेन तु मंडलम् ॥ ८३ ॥ नाभिं कुरुकुलश्रेष्ठ शिरः सर्वाभिरेव च ॥ अंगुष्ठोऽग्निर्महाबाहो प्रोक्तो वायुः प्रदेशिनी ॥ ८४ ॥ अनामिका तथा सूर्यः कनिष्ठा मघवा विभो ॥ प्रजापतिर्मध्यमा ज्ञेया तस्मा द्भरतसत्तम ॥ ८५ ॥ एवमाचम्य विप्रस्तु प्रीणाति सततं जगत् ॥ सर्वांश्च देवतास्तात लोकांश्चापि न संशयः ॥ ८६ ॥ तस्मात्पूज्यः सदा विप्रः सर्वदेवमयो हि सः ॥ ब्राह्मेण विप्रतीर्थेन नित्यकालमुपस्पृशेत् ॥ ८७ ॥ कायत्रैदेशिकाभ्यां वा न पित्र्येण कदाचन ॥ हृद्गाभिः पूयते विप्रः कंठ गाभिस्तु भूमिपः॥८८॥वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरंततः॥ उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधः॥८९॥सव्येन प्राचीनावीती निवीती कंठसंज्ञिते॥ मेखलामजिनं दंडमुपवीतं कमंडलुम् ॥९०॥ अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मंत्रवित् ॥ उपवीत्याचमेन्नित्यमंतर्जानु महीपते॥ ॥९१॥ एवं तु विप्रो ह्याचान्तः शुचितां याति भारत॥ यास्त्वेताः करमध्ये तु रेखा विप्रस्य भारत॥९२॥ गंगाद्याः सरितः सर्वा ज्ञेया भारतसत्तम॥

१ संन्वयनम्–इ० पा० । २ युतांगुलिकरम्–इ० पा० । ३ अपः । ४ स सम्यक्फलमाप्नोति–इ० पा० । ५ भारत–इ० पा० । ६ नरः–इ० पा० ७ सर्ववेदमयः–इ० पा० ।





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यान्यंगुलिषु पर्वाणि गिरयस्तानि विद्धि वै ॥९३॥ सर्वदेवमयो राजन्करो विप्रस्य दक्षिणः॥ हस्तोपस्पर्शनविधिस्तवाख्यातो महीपते ॥९४॥ एषु सर्वेषु लोकेषु येनाचांतो दिवं व्रजेत् ॥ ९५ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वण्युपस्पर्शनविधिवर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ सुमंतुरुवाच ॥ ॥ केशांतः षोडशे वर्षे ब्राह्मणस्य विधीयते ॥ राजन्यबंधोर्द्वाविंशे वैश्यस्य त्र्यधिके ततः ॥१॥ अमंत्रिका सदा कार्या स्त्रीणां चूडा महीपते ॥ संस्कारहेतोः कायस्य यथाकालं विभागशः ॥ २ ॥ वैवाहिको विधिः स्त्रीणां संस्कारो नैगमः स्मृतः ॥ निवसेद्वा गुरोर्वापि गृहे वाग्निपरिक्रिया ॥ ३ ॥ एष ते कथितो राजन्नौपनायनिको विधिः ॥ द्विजातीनां महाबाहो उत्पत्तिव्यंजकः परः ॥ ४ ॥ कर्मयोगमिदानीं ते कथयामि महाबल ॥ उपनीय गुरुः शिष्यं प्रथमं शौचमादिशेत् ॥ ५ ॥ आचारमाग्निकार्यं च संध्योपासनमेव च ॥ अध्यापयेत्तु सच्छिष्यान्सदाचांत उदङ्मुखः ॥६॥ ब्रह्मांजलिकरो नित्यमध्याप्यो विजितेंद्रियः ॥ लघुवासास्तथैकाग्रः सुमनाः सुप्रतिष्ठितः ॥ ७ ॥ ब्रह्मारंभेऽवसाने च पादौ पूज्यौ गुरोः सदा ॥ संहत्य हस्तावध्येयं स हि ब्रह्मांजलिः स्मृतः ॥ ८ ॥ व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ॥ सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥ ९ ॥ अध्येष्यमाणं तु गुरुर्नित्यकालमतंद्रितः ॥ अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति वारयेत् ॥ १० ॥ ब्रह्मणः प्रणवं कुर्यादादावंते च सर्वदा ॥ स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते ॥ ११ ॥ श्रूयतां चापि राजेंद्र यथोंकारं द्विजोऽर्हति ॥ प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः ॥ १२ ॥ प्राणायामैस्त्रिभिः पूतस्ततस्त्वोंकारमर्हति ॥ ॐकारलक्षणं चापि शृणुष्व कुरुनंदन ॥ १३ ॥ अकारं चाप्युकारं च मकारं च प्रजापतिः ॥ वेदत्रयात्तु निर्गृह्य भूर्भुवःस्वरितीति च ॥ १४ ॥ त्रिभ्य एव तु वेदेभ्यः पादंपादमदूदुहत् ॥ तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥ १५ ॥ एतदक्षरमेतां च जपन्व्याहृतिपूर्विकाम् ॥ संध्ययोरुभयोर्विप्रो वेद पुण्येन युज्यते ॥ १६ ॥ सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः ॥ महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते ॥ १७ ॥ एतयर्चा विसंयुक्तः काले च क्रियया स्वया ॥ विप्रक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥ १८ ॥ शृणुष्वैकमनाराजन्परमं ब्रह्मणो मुखम् ॥ ॐकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ॥ १९ ॥ त्रिपदा चैव सावित्री विज्ञेया ब्रह्मणो मुखम् ॥ योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतंद्रितः ॥ २० ॥ स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥ एकाक्षरं परं ब्रह्म प्राणायामः परंतपः ॥ २१ ॥ सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते ॥ तपः क्रिया होमक्रिया तथा दानक्रिया नृप ॥ २२ ॥ अक्षयांताः सदा राजन्यथाह भगवान्मनुः ॥ अवरं त्वक्षरं ज्ञेयं ब्रह्मा चैव प्रजापतिः ॥ २३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधियज्ञात्सदा राजञ्जपयज्ञो विशिष्यते ॥ नानाविधैर्गुणोद्देशैः सूक्ष्माख्यातैर्नृपोत्तम ॥ २४ ॥ उपांशुः स्याल्लक्षगुणः साहस्रो मानसः स्मृतः ॥
ये पाकयज्ञाश्चत्वारो विधियज्ञेन चान्विताः ॥ २५ ॥ सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ जपादेव तु संसिध्येद्ब्राह्मणो नात्र संशयः
॥ २६ ॥ कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ पूर्वां संध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ॥ २७ ॥ पश्चिमां तु समासीनः सम्यगृक्षवि
भावनात् ॥ दिनस्यादौ भवेत्पूर्वा शर्वर्यादौ तथा परा ॥ २८ ॥ सनक्षत्रा परा ज्ञेया अपरा सदिवाकरा ॥ जपंस्तिष्ठन्परां संध्यां नैशमेनो व्य
पोहति ॥ २९ ॥ अपरां तु समासीनो मलं हंति दिवाकृतम् ॥ नोपतिष्ठति यः पूर्वां नोपास्ते पश्चिमां नृप ॥ ३० ॥ स शूद्रवद्बहिष्कार्यः सर्व
स्माद्द्विजकर्मणः ॥ अपां समीपे नियतो नैत्यकं विधिमास्थितः ॥ ३१ ॥ सावित्रीमप्यधीयीत गत्वाऽरण्यं समाहितः ॥ वेदोपकरणे राजन्स्वा
ध्याये चैव नैत्यके ॥ ३२ ॥ नात्र दोषोस्त्यनध्याये होममंत्रेषु वा विभो ॥ नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम् ॥ ३३ ॥ ब्रह्माहुति
हुतं पुण्यमनध्यायवषट्कृतम् ॥ ऋगेकां यस्त्वधीयीत विधिना नियतो द्विजः ॥ ३४ ॥ तस्य नित्यं क्षरत्येषा पयो मेध्यं घृतं मधु ॥ अग्निशु
श्रूषणं भैक्षमधः शय्यां गुरोर्हितम् ॥ ३५ ॥ आसमावर्तनात्कुर्यात्कृतोपनयनो द्विजः ॥ आचार्यपुत्रशुश्रूषां ज्ञानदो धार्मिकः शुचिः ॥ ३६ ॥
आप्तः शक्तोन्नदः साधुः स्वाध्याप्या दश धर्मतः ॥ नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ॥ ३७ ॥ जानन्नपि हि मेधावी जडवल्लोक
आचरेत् ॥ अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति ॥ ३८ ॥ तयोरन्यतरः प्रैति विद्वेषं वा निगच्छति ॥ धर्मार्थौ यत्र न स्यातां शुश्रूषा चापि
तद्विधा ॥ न तत्र विद्या वक्तव्या शुभं बीजमिवोषरे ॥ ३९ ॥ विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ॥ आपद्यपि हि घोरायां न त्वेनामीरिणे
वपेत् ॥ ४० ॥ विद्या ब्राह्मणमित्याह शेवधिस्तेऽस्मि रक्ष माम् ॥ असूयकाय मा प्रादास्तथा स्यां वीर्यवत्तमा ॥ ४१ ॥
शेवं सुखमुशन्तीह केचिज्ज्ञानं प्रचक्षते ॥ तौ धारयति वै यस्माच्छेवधिस्तेन सोच्यते ॥४२॥ यमेव तु शुचिं विद्यान्नियतं ब्रह्मचारिणम् ॥
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥ ४३ ॥ ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात् ॥ ४४ ॥ लौकिकं वैदिकं वापि तथाध्यत्मिकमेव च ॥
स याति नरकं घोरं रौरवं भीमदर्शनम् ॥ ४५ ॥ अणुमात्रात्मकं देहं षोडशार्धमिति स्मृतम् ॥ आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ॥४६॥
सावित्रीसारमात्रोपि वरो विप्रः सुयंत्रितः ॥ नायंत्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ॥४७॥ शय्यासनेध्याचरिते श्रेयसा न समाविशेत् ॥ शय्या
सनस्थश्चैवेनं प्रत्युत्थायाभिवादयेत् ॥ ४८ ॥ ऊर्ध्वं प्राणा ह्युत्क्रामंति यूनः स्थविर आगते ॥ प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥४९॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ॥ चत्वारि सम्यग्वर्धंते आयुः प्रज्ञा यशो बलम् ॥ ५० ॥ अभिवादपरो विप्रो ज्यायांसमभिवादयेत् ॥ असौ नामाहमस्मीति स्वनाम परिकीर्तयेत् ॥ ५१ ॥ नामधेयस्य ये केचिदभिवादं न जानते ॥ तान्प्राज्ञोऽहमिति ब्रूयात्स्त्रियः सर्वास्तथैव च ॥ ५२ ॥ भोः शब्दं कीर्तयेदंते स्वस्य नाम्नोभिवादने ॥ नाम्नः स्वरूपभावो हि भो भाव ऋषिभिः स्मृतः ॥ ५३ ॥[1]आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने ॥ अकारश्चास्य नाम्नोंऽते वाच्यः पूर्वाक्षरः प्लुतः ॥ ५४ ॥ यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम ॥ नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ ५५ ॥ अभिवादे कृते यस्तु न करोत्यभिवादनम् ॥ आशीर्वा कुरुशार्दूल स याति नरकं ध्रुवम् ॥ ५६ ॥ अभीति भगवान्विष्णुर्वंदयामीति शंकरः ॥ द्वावेव पूजितौ तेन यः करोत्यभिवादनम् ॥ ५७ ॥ ब्राह्मणं कुशलं पृच्छेत्क्षत्रबंधुमनामयम् ॥ वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव तु ॥ ५८ ॥ न वाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ॥ भो भवत्पूर्वकत्वेन इति स्वायंभुवोऽब्रवीत् ॥ ॥ ५९ ॥ परपत्नी तु या राजन्नसंबद्धा तु योनितः ॥ वक्तव्या भवतीत्येवं सुभगे भगिनीति च ॥ ६० ॥ पितृव्यान्मातुलान्राजञ्छ्वशुरानृत्विजो गुरून् ॥ असावहमिति ब्रूयात्प्रत्युत्थाय जघन्यजः ॥ ६१ ॥ मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा ॥ संपूज्या गुरुपत्नी च समास्ता गुरुभार्यया ॥६२॥ ज्येष्ठस्य भ्रातुर्या भार्या सवर्णाहन्यहन्यपि ॥ पूजयन्प्रयतो विप्रो याति विष्णुसदो नृप॥६३॥प्रवासादेत्य संपूज्या ज्ञातिसंबंधियोषितः ॥ पितुर्या भगिनी राजन्मातुश्चापि विशांपते ॥ ६४ ॥ आत्मनो भगिनी या च ज्येष्ठा कुरुकुलोद्वह ॥ सदा स्वमातृवद्वृत्तिमातिष्ठेद्[2]भारतोत्तम ॥ ६५ ॥ गरीयसी ततस्ताभ्यो माता ज्ञेया नराधिप ॥ पुत्रमित्रभागिनेया द्रष्टव्या ह्यात्मना समाः ॥ ६६ ॥ दशाब्दाख्यं पौरसंख्यं पंचाब्दाख्यं कलाभृताम् ॥ अब्दपूर्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु ॥ ६७ ॥ ब्राह्मणं दशवर्षं च शतवर्षं च भूमिपम् ॥ पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ॥ ६८ ॥ इत्येवं क्षत्रियपिता वैश्यस्यापि पितामहः ॥ प्रपितामहश्च शूद्रस्य प्रोक्तो विप्रो मनीषिभिः ॥ ६९ ॥ वित्तं बंधुर्वयः कर्म विद्या भवति पंचमी॥ एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥ ७० ॥ पंचानां त्रिषु वर्गेषु भूयांसि गुणवंति च ॥[3]यस्य स्युः सोऽत्र मानार्हः शूद्रोपि दशमीं गतः ॥ ७१ ॥ चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः ॥ स्नातकस्य तु राज्ञश्च पंथा देयो वरस्य च ॥ ७२ ॥ एषां समागमे तात पूज्यौ स्नातकपार्थिवौ ॥ आभ्यां समागमे राजन्स्नातको नृपमानभाक् ॥ ७३ ॥ अध्यापयेद्यस्तु शिष्यं कृत्वोपनयनं द्विजः ॥

१ माता मातृष्वसा चैव–इ० पा० । २ पुरुषोत्तम–इ० पा० । ३ भाविनः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सरहस्यं सकल्पं च वेदं भरतसत्तम ॥ तमाचार्यं महाबाहो प्रवदंति मनीषिणः ॥७४॥ एकदेशं तु वेदस्य वेदांगान्यपि वा पुनः ॥ योध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥ ७५ ॥ निषेकादीनि कार्याणि यः करोति नृपोत्तम ॥ अध्यापयति चान्येन स विप्रो गुरुरुच्यते ॥ ७६ ॥ अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ॥ यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥ ७७ ॥ य आवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ ॥ स माता स पिता ज्ञेयस्तं न द्रुह्येत्कथंचन ॥ ७८ ॥ उपाध्याया दशाचार्य आचार्याणां शतं पिता ॥ सहस्रेण पितुर्माता गौरवेणातिरिच्यते ॥ ॥ ७९ ॥ उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदः पिता ॥ ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ ८० ॥ कामान्माता पिता चैनं यदुत्पादयतो मिथः ॥ संभूतिं तस्य तां विद्याद्योनावभिजायते ॥ ८१ ॥ आचार्यस्तस्य तां जातिं विधिवद्वेदपारगः ॥ उत्पादयति सावित्र्या सा सत्या साऽजरामरा ॥ ८२ ॥ उपाध्यायमादितः कृत्वा ये पूज्याः कथितास्तव ॥ महागुरुर्महाबाहो सर्वेषामधिकः स्मृतः ॥ ८३ ॥ सहस्रशतसंख्योऽसावाचार्याणामिदं मतम् ॥ चतुर्णामपि वर्णानां स महागुरुरुच्यते ॥ ८४ ॥ ॥ शतानीक उवाच ॥ ॥ य एते भवता प्रोक्ता उपाध्यायमुखा द्विजाः ॥ विदिता एव मे सर्वे न महागुरुरेव हि ॥ ८५ ॥ ॥ सुमंतुरुवाच ॥ ॥ जयोपजीवी यो विप्रः स महागुरुरुच्यते ॥ अष्टादशपुराणानि रामस्य चरितं तथा ॥ ८६ ॥ विष्णुधर्मादयो धर्माः शिवधर्माश्च भारत ॥ कार्ष्णं वेदं पंचमं तु यन्महाभारतं स्मृतम् ॥ ८७ ॥ श्रौताः धर्माश्च राजेन्द्र नारदोक्ता महीपते ॥ जयेति नाम एतेषां प्रवदंति मनीषिणः ॥ ८८ ॥ एवं विप्रकदंबस्य धारकः प्रवरः स्मृतः ॥ यस्त्वेतानि समस्तानि पुराणानीह विंदति ॥८९॥ भारतं च महाबाहो स सर्वज्ञो मतो नृणाम् ॥ तस्मात्स पूज्यो राजेंद्र वर्णैर्विप्रादिभिः सदा ॥ ९० ॥ किं त्वया न श्रुतं वाक्यं यदाह भगवान्विभुः ॥ अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ॥ तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥ ९१ ॥ ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता ॥ बालोऽपि विप्रो वृद्धस्य पिता भवति धर्मतः ॥ ९२ ॥ अध्यापयामास पितॄञ्छिशुरांगिरसः कविः ॥ पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥ ९३ ॥ ते तमर्थमपृच्छंत देवानागतमन्यवः ॥ देवाश्चैतान्समेत्योचुर्न्याय्यंवै शिशुरुक्तवान् ॥ ९४ ॥ अज्ञो भवति वै बालः पिता भवति मंत्रदः ॥ अज्ञं हि बालमित्याहुः पितेत्येव तु मंत्रदम् ॥ ९५ ॥ पितामहेति जयदमित्यूचुस्ते दिवौकसः ॥ जयो मंत्रास्तथा वेदा देहमेकं त्रिधा कृतम् ॥ ९६ ॥ नहायनैर्न पलितैर्न मित्रेण न बंधुभिः ॥ ऋषयश्चक्रिरे धर्मं योऽ

१ कदाचन–इ० पा० । २ सौरा:–इ० पा० । ३ याचकः–इ० पा० । ४ मिथः–इ० पा० । ५ धार्मिकः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नूचानः स नो महान् ॥९७॥ ब्राह्मणक्षत्रियविशां शूद्राणां च विशांपते ॥ ज्येष्ठं वदंति राजेंद्र संदेहं शृणु वै यथा ॥९८॥ ज्ञानतो वीर्यतो राजन्धन तो जन्मतस्तथा ॥ शीलतस्तु प्रधाना ये ते प्रधाना मता मम ॥ ९९ ॥ न तेन स्थविरो भवति येनास्य पलितं शिरः ॥ यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥ १०० ॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ॥ यश्च विप्रोनधीयानस्त्रयस्ते नाम बिभ्रति ॥१०१॥ यथा योषाऽफला स्त्रीषु यथा गौर्गवि चाफला ॥ यथा चाज्ञेऽफलं दानं यथा विप्रोऽनृचोऽफलः ॥ १०२ ॥ वैश्वदेवेन ये हीना आतिथ्येन विवर्जिताः ॥ सर्वे तु वृप ला ज्ञेयाः प्राप्तवेदा अपि द्विजाः ॥ १०३ ॥ नानृग्ब्राह्मणो भवति न वणिङ्न कुशीलवः ॥ न शूद्रः प्रेषणं कुर्वन्नस्तेनो न चिकित्सकः ॥ १०४ ॥ अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः ॥ तं ग्रामं दंडयेद्राजा चोरभक्तप्रदो हि सः ॥ १०५ ॥ संतुष्टो यत्र वै विप्रः साग्निकः कुरुनन्दन ॥ याति साफल्यतां वेदैर्देवैरेवं हि भाषितम् ॥१०६॥ वेदैरुक्तं यथा वीर सुरज्येष्ठमुपेत्य वै ॥ वेपंते ब्राह्मणा भूमावभ्यस्यंति ह्यनग्निकाः ॥ क्लिश्यंते ते किमर्थं हि मूढा वै फलकांक्षया ॥१०७॥ अनुष्ठानविहीनानामस्मानभ्यसतां भुवि ॥ क्लेशो हि केवलं देव नास्मदभ्यसने फलम् ॥१०८॥ अनुष्ठानं परं देव मस्मत्स्वभ्यसनात्सदा ॥ इत्येवं राजशार्दूल वेदा ऊचुर्हि वेधसम् ॥ तस्माच्च वेदाभ्यसनादनुष्ठानं परं मतम् ॥ १०९ ॥ चत्वारो वा त्रयो वापि यद्ब्रूयु र्वेदपारगाः ॥ स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥११०॥ यद्वदंति तमोमूढा मूर्खा धर्ममजानतः ॥ तत्पापं शतधा भूत्वा वक्तृनेवानुगच्छ ति ॥ १११ ॥ शौचहीने व्रतभ्रष्टे विप्रे वेदविवर्जिते ॥ दीयमानं रुदत्यन्नं किं मया दुष्कृतं कृतम् ॥ ११२ ॥ जपोपजीविने दत्तं यदात्मानं प्रपश्य ति ॥ नृत्यति स्म तदाराजन्करावुद्धृत्य भारत ॥११३॥ विद्यातपोभ्यां संपन्ने ब्राह्मणे गृहमागते ॥ क्रीडंत्यौषधयः सर्वा यास्यामः परमां गतिम् ॥ ॥ ११४ ॥ अव्रतानाममंत्राणामजपानां च भारत ॥ प्रतिग्रहो न दातव्यो न शिलातारयेच्छिलाम् ॥ ११५ ॥ श्रोत्रियायैव देयानि हव्यकव्यानि नित्यशः ॥ अश्रोत्रियाय दत्तानि न पितॄंन्नापि देवताः ॥ ११६ ॥ यस्य चैव गृहे मूर्खो दूरे चापि बहुश्रुतः ॥ बहुश्रुताय दातव्यं नास्ति मूर्खव्यति क्रमः ॥ ११७ ॥ ब्राह्मणातिक्रमो नास्ति मूर्खे जपविवर्जिते ॥ ज्वलंतमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ ११८ ॥ न चैतदेव मन्यंते पितरो देव तास्तथा ॥ सगुणं निर्गुणं वापि ब्राह्मणं दैवतं परम् ॥ ११९ ॥ नातिक्रमेद्गृहासीनं ब्राह्मणं विप्रकर्मणि ॥ अतिक्रमन्महाबाहो रौरवं याति भारत ॥ ॥ १२० ॥ गायत्रीमात्रसारोपि ब्राह्मणः पूज्यतां गतः ॥ गृहासन्नो विशेषेण न भवेत्पतितस्तु सः ॥ १२१ ॥ धान्यशून्यो यथा ग्रामो यथा कूपश्च

१ नामधारकाः–इ० पा० । २ अजानानाः । ३ अव्रमानाम–इ०पा० । ४ तर्पयन्तीति शेषः । ५ हि विकर्मणि–इ०–पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निर्जलः ॥ ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ॥ १२२ ॥ यस्त्वेकपंक्त्यां विषमं ददाति स्नेहाद्भयाद्वा यदि वार्थहेतोः ॥ वेदेषु दृष्टमृषिभिश्च
गीतं तां ब्रह्महत्यां मुनयो वदंति ॥ १२३ ॥ अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम् ॥ वाक्चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममीप्सता ॥ १२४ ॥
यस्य वाङ्मनसी शुद्धे सत्यगुप्ते च भारत ॥ स वै सर्वमवाप्नोति वेदांतोपगतं फलम् ॥१२५॥ नारुंतुदः स्यादार्तोपि न परद्रोहकर्मधीः ॥ ययास्यो
द्विजते लोको न तां वाचमुदीरयेत् ॥१२६॥ यत्करोति शुभं वाचा प्रोच्यमाना मनीषिभिः ॥ श्रूयतां कुरुशार्दूल सदा चापि तथोच्यताम् ॥१२७॥
न तथा शशी न सलिलं न चंदनरसो न शीतलच्छाया ॥ प्रह्लादयति च पुरुषं यथा मधुरभाषिणी वाणी ॥१२८॥ अर्हणाद्ब्राह्मणो नित्यमुद्विजेत
विषादिव॥अमृतस्येव चाकांक्षेदपमानस्य सर्वदा॥१२९॥सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते॥ सुखं चरति लोकेस्मिन्नवमंता विनश्यति॥१३०॥
अनेन विधिना राजन्संस्कृतात्मा द्विजः शनैः ॥ गुरौ वसन्सेचिनुयाद्ब्रह्माधिगमिदं तपः॥१३१॥तपोविशेषैर्विविधैर्व्रतैश्चविविधोदितैः ॥ वेदः कृत्स्नो
धिगंतव्यः सरहस्यो द्विजन्मना ॥१३२॥ वेदमेवाभ्यसेन्नित्यं तपस्तप्यंद्विजोत्तमः ॥ वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥ १३३ ॥ आहैव
स नखाग्रेभ्यः परमं तप्यते तपः ॥ यः सुप्तोपि द्विजोधीते स्वाध्यायं शक्तितोन्वहम् ॥ १३४ ॥ योनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ॥ स
जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥१३५॥ न यस्य वेदो न जपो न विद्याश्च विशांपते ॥ स शूद्र एव मंतव्य इत्याह भगवान्विभुः ॥१३६॥
मातुरग्रे च जननं द्वितीयो मौंजिबन्धनम् ॥ तृतीयो यज्ञदीक्षायां द्विजस्य विधिरीरितः ॥ १३७ ॥ तत्र यद्ब्रह्म जन्मास्य मौंजीबन्धनाचिह्नि
तम् ॥१३८॥ तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ वेदप्रदानात्त्वाचार्यं पितरं मनुरब्रवीत् ॥ १३९ ॥ न ह्यस्य विद्यते कर्म किंचिदा
मौंजिबन्धनात् ॥ नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ॥ १४० ॥ शूद्रेण तु समं तावद्यावद्वेदे न जायते ॥ कृतोपनयनस्यास्य व्रतादेशन
मिष्यते ॥ ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम् ॥ १४१ ॥ यत्सूत्रं चापि यच्चर्म याया चास्य च मेखला ॥ वसनं चापि यो दंडस्तद्वै तस्य
व्रतेष्वपि ॥ १४२ ॥ सेवेतेमांस्तु नियमान्ब्रह्मचारी गुरौ वसन् ॥ सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥ १४३ ॥ वृन्दारकर्षिपितॄणां
कुर्यात्तर्पणमेव हि ॥ नराणां च महाबाहो नित्यं स्नात्वा प्रयत्नतः ॥ १४४ ॥ पुष्पं तोयं फलं चापि समिदाधानमेव च ॥ नानाविधानि
काष्ठानि मृत्तिकां च तथा कुशान् ॥ १४५ ॥ वर्जयेन्मधु मांसं च गन्धमाल्यरथान्स्त्रियः ॥ शुक्तानि चैव सर्वाणि प्राणिनां चैव हिंस

१ भागुरिमते टाप्, अजादित्वाद्वा । २ कर्मणः सम्बन्धविवक्षया षष्ठी । ३ विलयनादृते–इ० पा० । ४ गुरावधिवसन्सदा–इ० पा० । ५ संचिनुयादितिशेषः । ६ वंचनाम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नम् ॥१४६॥ अभ्यंगमंजनं चाक्ष्णोरुपानच्छत्रधारणम् ॥ संकल्पं कामजं क्रोधं लोभं गीतं च वादनम् ॥ १४७ ॥ नर्तनं च तथा द्यूतं जनवादं तथानृतम् ॥ परिवादं चापि विभो दूरतः परिवर्जयेत् ॥ १४८ ॥ स्त्रीणां च प्रेक्षणालंबो स्पर्शीतं परस्य च ॥ पुंश्चलीभिस्तथा संगं न कुर्यात्कुरुनन्दन ॥ १४९ ॥ एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित् ॥ कामाद्धि स्कन्दयन्रेतो हिनस्ति व्रतमेव तु ॥ १५० ॥ सुप्तः क्षरन्ब्रह्मचारी द्विजः शुक्रमकामतः ॥ स्नात्वार्कमर्चयित्वा तु पुनर्मामित्यृचं जपेत् ॥ १५१ ॥ मनोरपि तथा चात्र श्रूयते परमं वचः ॥ उदकुंभं सुमनसो गोशकृन्मृत्तिकां कुशान् ॥ आहरेद्यावदर्थान्हि भैक्षं चापि हि नित्यशः ॥ १५२ ॥ गृहेषु येषां कर्तव्यं ताञ्छृणुष्व नृपोत्तम ॥ स्वकर्मसु रता ये वै तथा वेदेषु ये रताः ॥ यज्ञेषु चापि राजेन्द्र ये च श्रद्धासमाश्रिताः ॥ १५३ ॥ ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोन्वहम् ॥ गुरोः कुले न भिक्षेत स्वज्ञातिकुलबन्धुषु ॥ १५४ ॥ अलाभे त्वन्यगोत्राणां पूर्वं पूर्वं विवर्जयेत् ॥ सर्वं चापि चरेद्ग्रामं पूर्वोक्तानामसंभवे ॥ अंत्यवर्जं महाबाहो इत्याह भगवान्विभुः ॥ १५५ ॥ वाचं नियम्य प्रयतस्त्वग्निं शस्त्रं च वर्जयेत् ॥ चातुर्वर्ण्यं चरेद्भैक्षमलाभे कुरुनन्दन ॥ १५६ ॥ आरादाहृत्य समिधः सन्निदध्याद्गृहोपरि ॥ सायंप्रातस्तु जुहुयात्ताभिरग्निमतंद्रितः ॥ १५७ ॥ भैक्षाचरणमकृत्वा न तमग्निं समिध्य वै ॥ अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ १५८ ॥ वर्तनं चास्य भैक्षेण प्रवदंति मनीषिणः ॥[1]तस्माद्भैक्षेण वै नित्यं नैकान्नादी भवेद्व्रती ॥ १५९ ॥ भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥ दैवत्ये व्रतवद्राजन्पित्र्ये कर्मण्यथर्षिवत् ॥ काममभ्यर्थितोऽश्नीयाद्व्रतमस्य न लुप्यते ॥ १६० ॥ ब्राह्मणस्य महाबाहो कर्म यत्समुदाहृतम् ॥ राजन्यवैश्ययोर्नैतत्पंडितैः कुरुनन्दन ॥१६१॥ चोदितोऽचोदितो[2] वापि गुरुणा नित्यमेव हि ॥ कुर्यादध्ययने योगमाचार्यस्य हितेषु च ॥ १६२ ॥ बुद्धींद्रियाणि मनसा शरीरं वाचमेव हि ॥ नियम्य प्रांजलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ॥ ॥ १६३ ॥ नित्यमुद्धृतपाणिः स्यात्साध्वाचारस्तु संयतः ॥ आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥ १६४ ॥ वस्त्रवेषैस्तथान्नैस्तु हीनः स्याद्गुरुसन्निधौ ॥ उत्तिष्ठेत्प्रथमं चास्य जघन्यं चापि संविशेत् ॥ १६५ ॥ प्रतिश्रवणसंभाषे तल्पस्थो न समाचरेत् ॥ न चासीनो न भुञ्जानो न तिष्ठन्न पराङ्मुखः ॥ १६६ ॥ आसीनस्य स्थितः कुर्यादभिगच्छंश्च तिष्ठतः ॥ प्रत्युद्गन्ता तु व्रजतः पश्चाद्धावंश्च धावतः ॥ १६७ ॥ पराङ्मुखस्याभिमुखो दूरस्थस्यैत्य चान्तिकम् ॥ नमस्कृत्य शयानस्य निदेशे तिष्ठेत्सर्वदा ॥ १६८ ॥ नीचं शय्यासनं चास्य

१ उपरोधम्–इ० पा० । २ चोदितो वापि गुरुणा नित्यमेव हि पाठश्च–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वदा गुरुसन्निधौ ॥ गुरोश्च चक्षुर्विषये न यथेष्टासनो भवेत् ॥ १६९ ॥ नामोच्चारणमेवास्य परोक्षमपि सुव्रत ॥ न चैनमनु कुर्वीत गतिभाषणचेष्टितैः ॥ १७० ॥ परीवादस्तथा निन्दा गुरोर्यत्र प्रवर्तते ॥ कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ १७१ ॥ परीवादाद्रासभः स्यात्सारमेयस्तु निन्दकः ॥ परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥ १७२ ॥ दूरस्थो नार्चयेदेनं नक्रुद्धो नान्तिके स्त्रियाः ॥ यानासनगतो राजन्नवरुह्याभिवादयेत् ॥ १७३ ॥ प्रतिकूले समाने तु नासीत गुरुणा सह ॥ अशृण्वति गुरौ राजन्न किंचिदपि कीर्तयेत् ॥ १७४ ॥ गोश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ॥ आसीत गुरुणा सार्धं शिलाफलकनौषु च ॥ १७५ ॥ गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ॥ गुरुपुत्रेषु चार्येषु गुरोश्चैव स्वबंधुषु ॥ १७६ ॥ बालः समानजन्मा वा विशिष्टो यज्ञकर्मणि ॥ अध्यापयन्गुरुसुतो गुरुवन्मानमर्हति ॥ १७७ ॥ उत्सादनमथांगानां स्नापनोच्छिष्टभोजने ॥ पादयोर्नेजनं राजन्गुरुपुत्रेषु वर्जयेत् ॥ ॥ १७८ ॥ गुरुवत्प्रतिपूज्यास्तु सवर्णा गुरुयोषितः ॥ असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः ॥ १७९ ॥ अभ्यंजनं च स्नपनं गात्रोत्सादनमेव च ॥ गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥ १८० ॥ गुरुपत्नीं तु युवतीं नाभिवादेत पादयोः ॥ पूर्णविंशतिवर्षेण गुणदोषौ[1] विजानता ॥ १८१ ॥ स्वभाव एव नारीणां नराणामिह दूषणम् ॥ अंतोर्थान्न[2] प्रमाद्यंति प्रतिपाद्य विपाश्चितः ॥ १८२ ॥ अविद्वांसमलं लोके विद्वांसमपि वा पुनः ॥ प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ १८३ ॥ मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ॥ बलवानिंद्रियग्रामो विद्वांसमपि कर्षति ॥ १८४ ॥ राजेंद्र गुरुपत्नीनां युवतीनां युवा भुवि ॥ विधिवद्वंदनं कुर्यादसावहमिति ब्रुवन् ॥ १८५ ॥ विप्रोऽस्य पादग्रहणमन्वहं चाभिवादनम् ॥ गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥ १८६ ॥ यथा खनन्खनित्रेण जलमाप्नोति मानवः ॥ तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ १८७ ॥ मुंडो वा जटिलो वा स्यादथ वा स्याच्छिखी जटी ॥ नैनं ग्रामेऽभिनिम्लोचेदर्को नाभ्युदियात्क्वचित् ॥ १८८ ॥ तं चेदभ्युदियात्सूर्यः शयानं कामकारतः ॥ निम्लोचेद्वाप्यभिज्ञानाज्जपन्नुपवसेद्दिनम् ॥ १८९ ॥ सूर्येण ह्यभिनिर्मुक्तः शयानोभ्युदितश्च यः ॥ प्रायश्चित्तमकुर्वाणो युक्तः स्यान्महतैनसा ॥ १९० ॥ उपस्पृश्य महाराज उभे संध्ये समाहितः ॥ शुचौ देशे जपञ्जप्यमुपासीत यथाविधि ॥ ॥ १९१ ॥ यदि स्त्री यद्यवरजः श्रेयः किंचित्समाचरेत् ॥ तत्सर्वमाचरेद्युक्तो यत्र वा रमते मनः ॥[3] १९२ ॥ धर्मार्थावुच्यते श्रेयः कामार्थौ



१ भार्यासु–इ० पा० । २ अतोऽर्थान्न प्रमाद्यंति प्रमदासु विपश्चितः–इ० पा० । ३ अमृतम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्ममेव च ॥ अर्थ एवेह वा श्रेयस्त्रिवर्ग इति संस्थितिः ॥ १९३ ॥ पिता माता तथा भ्राता आचार्याः कुरुनंदन ॥ नार्तेनाप्यवमंतव्या ब्राह्मणे न विशेषतः ॥ १९४ ॥ आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ॥ माताप्यथादितेर्मूर्तिर्भ्राता स्यान्मूर्तिरात्मनः ॥ १९५ ॥ यन्माता पितरौ क्लेशं सहेते संभवे नृणाम् ॥ न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥ १९६ ॥ तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च भारत ॥ तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ १९७ ॥ तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ॥ न तैरनभ्यनुज्ञातो धर्ममन्यं समाचरेत् ॥१९८॥ त एव हि त्रयो लोकास्त एव त्रय आश्रमाः ॥ त एव च त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ १९९ ॥ माता वै गार्हपत्याग्निः पिता वै दक्षिणः स्मृतः ॥ गुरुराहवनीयश्च साग्नित्रेता गरीयसी ॥ २०० ॥ त्रिषु तुष्टेषु चैतेषु त्रीँल्लोकाञ्जयते गृही ॥ दीप्यमानः स्ववपुषा देववद्दिवि मोदते ॥ ॥ २०१ ॥ इमं लोकं पितृभक्त्या मातृभक्त्या तु मध्यमम् ॥ गुरुशुश्रूषया चैव गच्छेच्छक्रसलोकताम् ॥ २०२ ॥ सर्वे तेनादृता धर्मा यस्यैते त्रय आदृताः ॥ अनादृतास्तु येनैते सर्वास्तस्याफलाः क्रियाः ॥ २०३ ॥ यावत्त्रयस्ते जीवेयुस्तावन्नान्यत्समाचरेत् ॥ तेष्वेव नित्यं शुश्रूषां कुर्यात्प्रियहिते रतः ॥ २०४ ॥ तेषामनुपरोधेन पार्थक्यं यद्यदाचरेत् ॥ तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः ॥ २०५ ॥ त्रिष्वेतेष्विति कृत्यं हि पुरुषस्य समाप्यते ॥ एष धर्मः परः साक्षादुपधर्मोन्य उच्यते ॥ २०६ ॥ श्रद्दधानः शुभां विद्यामाददीतावरादपि ॥ अंत्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥२०७॥ विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् ॥ अमित्रादपि सद्वृत्तममेध्यादपि कांचनम् ॥ २०८ ॥ स्त्रियो रत्नं नयो विद्या धर्मः शौचं सुभाषितम् ॥ विविधानि च शिल्पानि समादेयानि सर्वशः ॥ २०९ ॥ अब्राह्मणादध्ययनमापत्काले विधीयते ॥ अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥२१०॥ नाब्राह्मणे गुरौ शिष्यो वासमात्यंतिकं वसेत् ॥ ब्राह्मणे चाननूचाने कांक्षन्गतिमनुत्तमाम् ॥ ॥ २११ ॥ यदि त्वात्यंतिको वासो रोचते च गुरोः कुले ॥ युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥ २१२ ॥ आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम् ॥ स गच्छत्यंजसा विप्रो ब्रह्मणः सद्म शाश्वतम् ॥ २१३ ॥ न पूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित् ॥ स्नानाय गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥ २१४ ॥ क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमेव च ॥ धान्यं वासांसि शाकं वा गुरवे प्रीतमाहरेत् ॥ २१५ ॥ स्वर्गते गां परित्यज्य गुरौ भरतसत्तम ॥ गुणान्विते गुरुसुते गुरुदारेऽथ वा नृप ॥ सपिंडे वा गुरोश्चापि गुरु

१ आगमाः–इ०पा० । २ पविश्रमू–इ०पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वद्वृत्तिमाचरेत् ॥ २१६ ॥ एतेष्वविद्यमानेषु स्थानासनविहारवान् ॥ प्रयुंजानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ वीरस्य कुर्वञ्छुश्रूषां याति वीरसलोकताम् ॥ २१७ ॥ चरत्येवं हि यो विप्रो ब्रह्मचर्यमविप्लुतः ॥ स गत्वा ब्रह्मसदनं ब्रह्मणा सह मोदते ॥ २१८ ॥ इत्येष कथितो धर्मः प्रथमं ब्रह्मचारिणः ॥ गृहस्थस्यापि राजेन्द्र शृणु धर्ममशेषतः ॥२१९॥ काले प्राप्य व्रतं विप्र ऋतुयोगेन भारत ॥ प्रपालयन्व्रतं याति ब्रह्मसालोक्यतां विभो ॥ २२० ॥ सदोपनयनं शस्तं वसंते ब्राह्मणस्य तु ॥ क्षत्रियस्य ततो ग्रीष्मे प्रशस्तं मनुरब्रवीत् ॥ २२१ ॥ प्राप्ते शरदि वैश्यस्य सदोपनयनं परम् ॥ इत्येष त्रिविधः कालः कथितो व्रतयोजने ॥ २२२ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि उपनयनविधिवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् ॥ तदर्धिकं पादिकं वा ग्रहणांतिकमेव च ॥१॥ वेदानधीत्य वेदौ वा वेदं वापि नृपोत्तम ॥ अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥२॥ तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ॥ स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा ॥३॥ गुरुणा समनुज्ञातः समावृत्तो यथाविधि ॥ उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥४॥ ॥ शतानीक उवाच ॥ ॥ लक्षणं द्विजशार्दूल स्त्रीणां वद महामुने ॥ कीदृग्लक्षणसंयुक्ता कन्या स्यात्सुखदा नृप ॥ ५ ॥ ॥ सुमंतुरुवाच ॥ ॥ यदुक्तं ब्रह्मणा पूर्वं स्त्रीलक्षणमनुत्तमम् ॥ श्रेयसे सर्वलोकानां शुभाशुभफलप्रदम् ॥६॥ तत्ते वच्मि महाबाहो शृणुष्वैकमना नृप ॥ श्रुतेन येन जानीषे कन्यां शोभनलक्षणाम् ॥७॥ सुखासीनं सुरश्रेष्ठमभिगम्य महर्षयः ॥ पप्रच्छुर्लक्षणं स्त्रीणां यत्पृष्टोऽहं त्वयाधुना ॥ ८ ॥ प्रणम्य शिरसा देवमिदं वचनमब्रुवन् ॥ भगवन्ब्रूहि नः सर्वं स्त्रीणां लक्षणमुत्तमम् ॥ ९ ॥ श्रेयसे सर्वलोकानां शुभाशुभफलप्रदम् ॥ प्रशस्तामप्रशस्तां च जानीमो येन कन्यकाम् ॥ १० ॥ तेषां तद्वचनं श्रुत्वा विरिंचो वाक्यमब्रवीत् ॥ शृणुध्वं द्विजशार्दूला वच्मि युष्मास्वशेषतः ॥ ११ ॥ प्रतिष्ठिततलौ सम्यग्रक्तांभोजसमप्रभौ ॥ ईदृशौ चरणौ धन्यौ योषितां भोगवर्धनौ ॥ १२ ॥ करालैरतिनिर्मांसै रूक्षैरर्धशिरान्वितैः ॥ दारिद्र्यं दुर्भगत्वं च प्राप्नुवंति न संशयः ॥१३॥ अंगुल्यः संहता वृत्ताः स्निग्धाः सूक्ष्मनखास्तथा ॥ कुर्वंत्यत्यंतमैश्वर्यं राजभावं च योषितः ॥ १४ ॥ ह्रस्वाः सुजीवितं ह्रस्वा विरला वित्तहानये ॥ दारिद्र्यं मूलमग्रासु प्रेष्यं च पृथुलासु च ॥ १५ ॥ परस्परसमारूढैस्तनुभिर्वृत्तपर्वभिः ॥ बहूनपि पतीन्हत्वा दासी भवति वै द्विजाः ॥१६॥ अंगुष्ठोन्नतपर्वाणस्तुंगाग्राः कोमलान्विताः ॥ रत्नकांचनलाभाय

१ तत्र—इ० पा० । २ धन्या—इ० पा० । ३ ऋषीणां कुरुशार्दूल—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विपरीता विपत्तये॥१७॥ सुभगत्वं नखैः स्निग्धैराताम्रैश्च धनाढ्यता ॥ पुत्राः स्युरुन्नतैरेभिः सुसूक्ष्मैश्चापि राजता॥१८॥पांडुरैः स्फुटितै रूक्षैर्नीलै धूम्रैस्तथा खरैः ॥ निःस्वता भवति स्त्रीणां पीतैश्चाभक्ष्यभक्षणम् ॥१९॥ गुल्फाः स्निग्धाश्च वृत्ताश्च समारूढशिरास्तथा ॥ यदि स्युर्नूपुरान्दध्युर्बां धवाद्यैः समाप्नुयुः ॥ २० ॥ अशिराः शरकांडाभाः सुवृत्तात्पतनूरुहाः ॥ जंघाः कुर्वंति सौभाग्यं यानं च गजवाजिभिः ॥ २१ ॥ क्लिश्यते रोम जंघा स्त्री भ्रमत्युद्धतपिंडिका ॥ काकजंघा पतिं हन्ति वाचाटा कपिला च या ॥ २२ ॥ जानुभिश्चैव मार्जारसिंहजान्वनुकारिभिः ॥ श्रियमाप्य सुभाग्यत्वं प्राप्नुवंति सुतांस्तथा ॥ २३ ॥ घटाभैरध्वगा नार्यो निर्मांसैः कुलटाः स्त्रियः ॥ शिरालैरपि हिंस्राः स्युर्विश्लिष्टैर्धनवर्जिताः ॥ २४ ॥ अत्यंतकुटिलै रूक्षैः स्फुटिताग्रैर्गुडप्रभैः ॥ अनेकजैस्तथा रोमैः केशैश्चापि तथाविधैः ॥ २५ ॥ अत्यंतपिंगला नारी विषतुल्येति निश्चितम् ॥ सप्ताहाभ्यंतरे पापा पतिं हन्यान्न संशयः ॥ २६ ॥ हस्तिहस्तनिभैर्वृत्ते रंभाभैः करभोपमैः ॥ प्राप्नुवंत्यूरुभिः शश्वत्स्त्रियः सुखमनंगजम् ॥ २७॥ दौर्भाग्यं बद्धमांसैश्च बंधनं रोमशोरुभिः ॥ तनुभिर्वधमित्याहुर्मध्यच्छिद्रेष्वनीशता ॥२८॥ संध्यावर्णं समं चारु सूक्ष्मरोमान्वितं पृथु ॥ जघनं शस्यते स्त्रीणां रतिसौख्यकरं द्विज ॥ २९ ॥ अरोमको भगो यस्याः समः सुश्लिष्टसंस्थितः॥ अपि नीचकुलोत्पन्ना राजपत्नी भवत्यसौ॥३०॥ अश्वत्थपत्रसदृशः कूर्मपृष्ठोन्नतस्तथा ॥ शशिबिंबनिभश्चापि तथैव कलशाकृतिः ॥ भगः शस्ततमः स्त्रीणां रतिसौभाग्यवर्धनः ॥ ३१ ॥ तिल पुष्पनिभो यश्च यश्चाग्रे खुरसंनिभः ॥ द्वावप्येतौ परप्रेष्यं कुर्वाते च दारिद्रताम् ॥ ३२ ॥ उलूखलनिभैः शोकं मरणं विवृताननैः ॥ विरूपैः पूतिनिर्मांसैर्गजसंनिभरोमभिः ॥ दौःशील्यं दुर्भगत्वं च दारिद्र्यमधिगच्छति ॥ ३३ ॥ कपित्थफलसंकाशः पीनो वलिविर्जितः ॥ स्फीतः प्रशस्यते स्त्रीणां निंदितश्चान्यथा द्विजाः ॥ ३४ ॥ पयोधरभरानम्रप्रचलत्रिवलीगुरुः ॥ मध्यः शुभावहः स्त्रीणां रोमराजीविभूषितः ॥ ३५ ॥ पणवाभैर्मृदंगाभैस्तथा मध्ये यवोपमैः ॥ प्राप्नुवंति भयावासक्लेशदौःशील्यमीदृशैः ॥३६॥ अवक्रानुल्बणं पृष्ठमरोमशमगर्हितम् ॥ नानास्तरणपर्यंकरतिसौख्यकरं परम् ॥ ३७ ॥ कुब्जमद्रोणिकं पृष्ठं रोमशं यदि योषितः ॥ स्वप्नांतरे सुखं तस्या नास्ति हन्यात्पतिं च सा ॥ ३८ ॥ विपुलैः सुकुमारैश्च कुक्षिभिः सुबहुप्रजाः ॥ मण्डूककुक्षिर्या नारी राजानं सा प्रसूयते ॥ ३९ ॥ उन्नतैर्वलिभिर्मध्याः सुवृत्तैः कुलटाः स्त्रियः ॥ जारकर्मरतास्ताः स्युः प्रव्रज्यां च समाप्नुयुः ॥ ४० ॥ उन्नता च नतैः क्षुद्रा विषमैर्विषमा

१ आवर्तैः—इ० पा० । २ कुसुमाकारः—इ० पा० । ३ परकर्म—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शस्ता ॥ आयुरैश्वर्यसंपन्ना वनिता हृदयैः समैः ॥ ४१ ॥ सुवृत्तमुन्नतं पीनमदूरोन्नतमायतम् ॥ स्तनयुग्ममिदं शस्तमतोऽन्यदसुखावहम् ॥ ४२ ॥ उन्नतिः प्रथमे गर्भे द्वयोरेकस्य भूयसी ॥ वामे तु जायते कन्या दक्षिणे तु भवेत्सुतः ॥ ४३ ॥ दीर्घे तु चूचुके[1] यस्याः सा स्त्री धूर्ता रतिप्रिया ॥ सुवृत्ते तु पुनर्यस्या द्वेष्टि सा पुरुषं सदा ॥४४॥ स्तनैः सर्पफणाकारैः श्वजिह्वाकृतिभिस्तथा ॥ दारिद्र्यमधिगच्छंति स्त्रियः पुरुषचेष्टिताः ॥ अवपृष्ठघटीतुल्या भवंति हि तथा द्विजाः ॥ ४५ ॥ सुसमं मांसलं चारु शिरो रोमविवर्जितम् ॥ वक्षो यस्या भवेन्नार्या भोगान्भुक्ते यथेप्सितान् ॥ ४६ ॥ हिंस्रा भवति वक्रेण दौःशील्यं रोमशेन तु ॥ निर्मांसेन तु वैधव्यं विस्तीर्णे कलहप्रिया ॥४७॥ चतस्रो रक्तगंभीरा रेखाः स्निग्धाः करे स्त्रियाः ॥ यदि स्युः सुखमाप्नोति विच्छिन्नाभिरनीशता ॥४८॥ रेखाः कनिष्ठिकामूलाद्यस्याः प्राप्ताः प्रदेशिनीम् ॥ शतमायुर्भवेत्तस्यास्त्रयाणामुन्नतौ क्रमात् ॥४९॥ संवृत्ताः समपर्वाणस्तीक्ष्णाग्राः कोमलत्वचः ॥ समा ह्यंगुलयो यस्याः सा नारी भोगवर्धिनी ॥ ५० ॥ बंधुजीवारुणैस्तुंगैर्नखैरैश्वर्यमाप्नुयात् ॥ खरैर्वक्रैर्विवर्णाभैः श्वेतपीतैरनीशता ॥ ५१ ॥ रक्तैर्मृदुभिरैश्वर्यं निश्छिद्रांगुलिभिर्द्विजाः ॥ स्फुटितैर्विषमै रूक्षैः क्लेशं पाणिभिराप्नुयुः ॥५२॥ समरेखा यवा यासामंगुष्ठांगुलिपर्वसु ॥ तासां हि विपुलं सौख्यं धनं धान्यं तथाऽक्षयम् ॥ ५३ ॥ मणिबंधोऽव्यवच्छिन्नो रेखात्रयविभूषितः ॥ ददाति न चिरादेव भोगमायुस्तथाक्षयम् ॥ ५४ श्रीवत्सध्वजपद्माक्षगजवाजिनिवेशनैः ॥ चक्रस्वस्तिकवज्रासिपूर्णकुंभनिभांकुशैः ॥ ५५॥ प्रासादच्छत्रमुकुटैर्हारकेयूरकुंडलैः ॥ शंखतोरणनिर्व्यूहैर्हस्तन्यस्तैर्नृपस्त्रियः ॥ ५६ ॥ यस्याः पाणितले रक्ता यूपकुंभाश्च कुंडिकाः ॥ दृश्यंते चरणे यस्या यज्ञपत्नी भवत्यसौ ॥५७॥ वीथ्यापणतुलामानैस्तथा मुद्रादिभिः स्त्रियः ॥ भवंति वणिजां पत्न्यो रत्नकांचनशालिनाम् ॥५८॥ दात्रयोक्त्रयुगाबंधफलोलूखललांगलैः ॥ भवंति धनधान्याढ्याः कृषीवलजनांगनाः ॥५९॥ अनुन्नतशिरासंधि पीनं रोमविवर्जितम् ॥ गोपुच्छाकृति नारीणां भुजयोर्युगुलं शुभम् ॥ ६० ॥ निगूढग्रंथयो यस्याः कूर्परौ रोमवर्जितौ ॥ बाहू वै ललितौ यस्याः प्रशस्तौ वृत्तकोमलौ ॥ ६१ ॥ उन्नतावनतौ चैव नातिस्थूलौ न रोमशौ ॥ सुखदौ तु सदा स्त्रीणां सौभाग्यारोग्यवर्धनौ ॥ ६२ ॥ स्थूले स्कंधे वहेद्भारं रोमशे व्याधिता भवेत् ॥ वक्रस्कंधे भवेद्वंध्या कुलटा चोन्नतानने ॥ ६३ ॥ स्पष्टं रेखात्रयं यस्या ग्रीवायां चतुरंगुलम् ॥ मणिकांचनमुक्ताढ्यं सा दधाति विभूषणम् ॥ ६४ ॥ अधना स्त्री कृशग्रीवा दीर्घग्रीवा च बंधकी ॥ ह्रस्वग्रीवा मृतापत्या स्थूलग्रीवा च दुःखिता ॥६५॥ अनुन्नता समांसा च समा यस्याः कृकाटिका ॥ सुदीर्घमायुस्त्वस्यास्तु

[1] चुचुके-इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चिरं भर्ता च जीवति ॥ ६६ ॥ निर्मांसा बहुमांसा च शिराला रोमशा तथा ॥ कुटिला विकटा चैव विस्तीर्णा न च शस्यते॥६७॥ न स्थूलो न कृशोऽत्यर्थं न वक्रो न च रोमशः ॥ हनुरेवंविधः श्रेयांस्ततोन्यो न प्रशस्यते ॥६८॥ चतुरस्रमुखी धूर्ता मंडलास्या शिवा भवेत् ॥ अप्रजा वाजिवक्त्रा स्त्री महावक्त्रा च दुर्भगा ॥ ६९ ॥ श्ववराहवृकोलूकमर्कटास्याश्च याः स्त्रियः ॥ क्रूरास्ताः पापकर्मिण्यः प्रजाबांधववर्जिताः ॥७० ॥ मालतीवकुलांभोजनीलोत्पलसुगंधि यत् ॥ वदनं मुच्यते नैतत्पानतांबूलभोजनैः ॥ ७१ ॥ ताम्राभः किंचिदालंभः स्थौल्यकार्श्यविवर्जितः ॥ अधरो यदि तुंगश्च नारीणां भोगदः सदा ॥७२॥ स्थूले कलहशीला स्याद्विवर्णे चातिदुःखिता॥ उत्तरोष्ठेन तीक्ष्णेन वनिता चातिकोपना॥७३॥ जिह्वा तनुतरा वक्रा ताम्रा दीर्घा च शस्यते ॥ स्थूला ह्रस्वा विवर्णा या वक्रा भिन्ना च निंदिता ॥७४॥ शंखकुन्देंदुधवलैः स्निग्धैस्तुंगैरसंधिभिः ॥ मिष्टान्नपानमाप्नोति दंतैरेभिरनुन्नतैः॥७५॥सूक्ष्मैरतिकृशैर्ह्रस्वैः स्फुटितैर्विरलैस्तथा॥ रूक्षैश्च दुःखिता नित्यं विकटैर्भामिनी भवेत्॥७६॥सुमृष्टदर्पणांभोजपूर्णविंबेंदुसंनिभम्॥ वदनं वरनारीणामभीष्टफलदं स्मृतम् ॥ ७७ ॥ न स्थूला न कृशा वक्रा नातिदीर्घा समुन्नता ॥ ईदृशी नासिका यस्याः सा धन्या तु शुभंकरी ॥७८॥ उन्नता मृदुला या च रेखा शुद्धा न संगता ॥ भ्रूर्वक्रतुल्या सूक्ष्मा च योषितां सा सुखावहा॥७९॥ धनुस्तुल्याभिः सौभाग्यं वंध्या स्याद्दीर्घरोमभिः॥ पिंगलासंगता ह्रस्वा दारिद्र्याय न संशयः ॥८०॥ नीलोत्पलदलप्रख्यैराताम्रैश्चारुपक्ष्मभिः ॥ वनिता नयनैरेभिर्भोगसौभाग्यभागिनी॥८१॥खञ्जनाक्षी मृगाक्षी च वराहाक्षी वरांगना ॥ यत्रयत्र समुत्पन्ना महांतं भोगमश्नुते ॥ ८२ ॥ अगंभीरैरसंश्लिष्टैर्बहुरेखाविभूषितैः ॥ राजपत्न्यो भवन्तीह नयनैर्मधुपिंगलैः ॥८३॥ वायसाकृतिनेत्राणि दीर्घापांगानि योषिताम् ॥ अनाविलानि चारूणि भवंति हि विभूतये ॥८४॥ गंभीरैः पिंगलैश्चैव दुःखिताः स्युश्चिरायुषः ॥ वयोमध्ये त्यजेत्प्राणानुन्नताक्षी तु यांगना ॥८५॥ रक्ताक्षी विषमाक्षी च धूम्राक्षी प्रेतलोचना॥ वर्जनीया सदा नारी श्वनेत्रा चैव दूरतः ॥ ८६ ॥ उद्भ्रान्तकैः करैश्चित्रैर्नयनैस्त्वंगनास्त्विह ॥ मद्यमांसप्रिया नित्यं चपलाश्चैव सर्वतः ॥ ८७ ॥ करालाकृतयः कर्णा नभःशब्दास्तु संस्थिताः ॥ वहंति विकसत्कांति हेमरत्नविभूषणम् ॥ ८८ ॥ खरोष्ट्रनकुलोलूककपिलश्रवणाः स्त्रियः ॥ प्राप्नुवंति महद्दुःखं प्रायशः प्रव्रजंति च ॥ ८९ ॥ ईषदापांडुगंडा या सुवृत्ता पर्वणि त्विह ॥ प्रशस्ता निन्दिता त्वन्या रोमकूपकदूषिता ॥ ९० ॥ अर्धेंदुप्रतिमाभोगमरोम तु समाहितम् ॥ भोगारोग्यकरं श्रेष्ठं ललाटं वरयोषिताम् ॥ ९१ ॥ द्विगुणं परिणाहेन ललाटं विहितं च यत् ॥ शिरः

१ अदृशा–इ०, अदशा–इ० च पा० । २ नेत्रतुल्याभिः–इ० पा० ! ३ रुजं गता–इ० पा० । ४ गृत्ताक्षी–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रशस्तं नारीणामधन्या हस्तिमस्तका ॥ ॥ ९२ ॥ सूक्ष्माः कृष्णा मृदुस्निग्धाः कुञ्चिताग्राः शिरोरुहाः ॥ भवंति श्रेयसे स्त्रीणामन्ये स्युः क्लेशशोकदाः ॥ ९३ ॥ हंसकोकिलवीणालिशिखिवेणुस्वराः स्त्रियः ॥ प्राप्नुवंति बहून्भोगान्भृत्यानाज्ञापयन्ति च ॥ ९४ ॥ भिन्नकांस्यस्वरा नारी खरकाकस्वरा च या ॥ रोगं व्याधिं भयं शोकं दारिद्र्यं चाधिगच्छति ॥ ९५ ॥ हंसगोवृषचक्राह्वमत्तमातंगगामिनी ॥ स्वकुलं द्योतयेन्नारी महिषी पार्थिवस्य च ॥ ९६ ॥ श्वशृगालगतिर्निन्द्या या च वायसवद्व्रजेत् ॥ दासी मृगगतिर्नारी द्रुतगामी च बन्धकी ॥ ९७ ॥ फलिनीरोचना हेमकुंकुमप्रभ एव च ॥ वर्णः शुभकरः स्त्रीणां यश्च दूर्वांकुरोपमः ॥ ९८ ॥ मृदूनि मृदुरोमाणि नात्यंतस्वेदकानि च ॥ सुरभीणि च गात्राणि यासां ताः पूजिताः स्त्रियः ॥ ९९ ॥ नोद्वहेत्कपिलां कन्यां नाधिकांगीं न रोगिणीम् ॥ नालोमिकां नातिह्रस्वां न वाचाटां न पिंगलाम् ॥ १०० ॥ नर्क्षवृक्षनदीनाम्नीं नांत्यपर्वतनामिकाम् ॥ न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ॥ १०१ ॥ अव्यंगांगीं सौम्यनाम्नीं हंसवारणगामिनीम् ॥ तनुलोमकेशदशनां मृद्वंगीमुद्वहेत्स्त्रियम् ॥ १०२ ॥ महांत्यपि समृद्धानि गोजाविधनधान्यतः ॥ स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ॥ १०३ ॥ हीनक्रियं निष्पुरुषं निश्छन्दोरोमशार्शसम् ॥ क्षयामयाव्यपस्मारिश्वित्रकुष्ठिकुलानि च ॥ १०४ ॥ पादौ सुगुल्फौ प्रथमं प्रतिष्ठौ जंघे द्वितीयं च सुजानुचक्रे ॥ मेढ्रोरुगुह्यं च ततस्तृतीयं नाभिः कटिश्चेति चतुर्थमाहुः ॥ १०५ ॥ उदरं कथयंति पञ्चमं हृदयं षष्ठमथ स्तनान्वितम् ॥ अथ सप्तममंसजत्रुणी कथयंत्यष्टममोष्ठकन्धरे ॥ १०६ ॥ नवमं नयने च सभ्रुणी सललाटं दशमं शिरस्तथा ॥ अशुभेष्वशुभं दशाफलं चरणं चरणाद्यशुभेषु शोभनम् ॥ १०७ ॥ इदं महात्मा स महानुभावः शचीनिमित्तं गुरुरब्रवीद्द्विजाः ॥ शक्रेण पृष्टः सविशेषमुत्तमं संलक्ष्यमुक्तं वरयोपलक्षणम्[१] ॥ १०८ ॥ मत्सकाशात्पुनः श्रुत्वा लक्षणं पुरुषस्य च ॥ यथाधुना भवद्भिस्तु श्रुतं मत्तो द्विजोत्तमाः ॥ १०९ ॥ लक्षणेभ्यः प्रशस्तं तु स्त्रीणां सद्वृत्तमुच्यते ॥ सद्वृत्तमुक्ता या स्त्री सा प्रशस्ता न च लक्षणैः ॥ ११० ॥ ईदृग्लक्षणसंपन्नां सुकन्यामुद्वहेत्तु यः ॥ ऋद्धिर्वृद्धिस्तथा कीर्तिस्तत्र तिष्ठति नित्यशः ॥ ॥ १११ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि स्त्रीलक्षणवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥ सद्वृत्तं श्रोतुमिच्छामि देवस्त्रीणां सुविस्तरात् ॥ उत्तमाधममध्यं च संबन्धे स्त्रीकृते यथा ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ शतानीक महाबाहो ब्रह्मलोके

१ वरयोपाचिह्नमित्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पितामहः ॥ उक्त्वा स लक्षणं स्त्रीणां सद्वृत्तं चोक्तवान्पुनः ॥ २ ॥ यथोक्तं ब्रह्मणा तेषामृषीणां कुरुनन्दन ॥ स प्रेयो वचनं श्रुत्वा ब्रह्मा वचनमब्रवीत् ॥ ३ ॥ शृणुध्वं द्विजशार्दूलाः स्त्रीणां सद्वृत्तमादितः ॥ वक्ष्ये युष्मानशेषं वै लोकानुग्रहकाम्यया ॥ ४ ॥ त्रिवर्गप्राप्तये वक्ष्ये स्त्रीवृत्तं गृहमेधिनाम् ॥ प्राग्विद्यादीनुपादाय तैरर्थांश्च यथाक्रमम् ॥ विन्देत सदृशीं भार्यां शास्त्रदृष्टेन कर्मणा ॥ ५ ॥ गृहाश्रमो हि निःस्वानां महत्येषा विडंबना ॥ तस्मात्पूर्वमुपादेयं वित्तमेव गृहैषिणा ॥ ६ ॥ वरं सोढा मनुष्येण तीव्रा नरकवेदना ॥ न त्वेव च गृहे दृष्टं पुत्रदारक्षुधार्दितम् ॥ ७ ॥ असंभवे शिशुं दृष्ट्वा रुदंतं प्रार्थनापरम् ॥ वज्रसारमयं मन्ये हृदयं यन्न दीर्यते ॥ ८ साध्वीं भार्यां प्रियां दृष्ट्वा कुचैलां क्षुत्कृशीकृताम् ॥ अस्य दुःखस्य तन्नास्ति सुखं यत्समतां व्रजेत् ॥ ९ ॥ रूक्षान्विवर्णान्क्षुधितान्भूमिप्रस्तरशायिनः ॥ पुत्रदारान्निजान्दृष्ट्वा किमकार्यं भवेन्नृणाम् ॥१०॥ बाहूत्तरीयं क्षुत्क्षामं दृष्ट्वा दीनमुखं सुतम् ॥ मृत्युरेवोत्सवः पुंसां व्यसनं जीवितं द्विजाः ॥११॥ परिसीदत्स्वपत्येषु दृष्ट्वा दीनमुखीं प्रियाम् ॥ वज्रकायशरीरास्ते ये न यांति सहस्रधा ॥ १२ ॥ तस्मादर्थविहीनस्य पुंसो दारपरिग्रहात् ॥ कुतस्त्रिवर्गसंसिद्धिर्यातनैव हि तस्य सा ॥ १३ ॥ अभार्यस्याधिकारोस्ति न द्वितीयाश्रमे यथा ॥ तद्वदर्थविहीनानां सर्वत्र नाधिकारिता ॥ १४ ॥ केचित्त्वपत्यमेवाहुस्त्रिवर्गावाप्तिसाधनम् ॥ पुंसामर्थः कलत्रं च येऽन्ये नीतिविदो विदुः ॥ १५ ॥ धर्मोपि द्विविधो यस्मादिष्टापूर्तक्रियात्मकः ॥ स च दारात्मकः सर्वं ज्ञेयमर्थैकसाधनम् ॥ १६ ॥ निजेनापि दरिद्रेण लोको लज्जति बंधुना ॥ परोपि हि मनुष्याणामैश्वर्यात्स्वजनायते ॥ १७ ॥ न दरिद्रं समीपेपि स्थितवंतं प्रपश्यति ॥ दूरस्थमपि वित्ताढ्यमादराद्भजते जनः ॥ १८ ॥ तस्मात्प्रयत्नतः पूर्वमर्थमेव प्रसाधयेत् ॥ स हि मूलं त्रिवर्गस्य गुणानां गौरवस्य च ॥ १९ ॥ सर्वेपि हि गुणा विद्याकुलशीलादयो नृणाम् ॥ संति तस्मिन्नसंतोपि संति संतोपि नासति ॥ २० ॥ शास्त्रं शिल्पं कलाः कर्म यच्चान्यदपि चेष्टितम् ॥ साधनं सर्वमर्थानामर्था धर्मादिसाधनाः ॥ २१ ॥ साधनानां त्रिवर्गोस्ति तं विना केवलं नृणाम् ॥ अजागलस्तनस्येव निधनायैव संभवः ॥ २२ ॥ प्राक्पुण्यैर्विपुला संपद्धर्मकामादिहेतुजा ॥ भूयो धर्मेण सामुत्र तयां तांविति च क्रमः ॥ २३ ॥ एकचक्रकमेतद्धि प्रोक्तमन्योन्यहेतुकम् ॥ पूर्वपश्चिमबाहुभ्यामुत्तराधरमध्यमाः ॥ २४ ॥ विज्ञाय मतिमानेवं यस्त्रिवर्गं निषेवते ॥ संख्याशतसमायुक्तैरवाप्नोत्युत्तरोत्तरम् ॥ २५ ॥ नाभार्यस्याधिकारोस्ति त्रिवर्गे निर्धनस्य वा ॥ ना भार्यायामतः पूर्वमर्थमेव

१ स नः–इ० पा० । २ विप्राणाम् । ३ लोको निजोऽप्यपार्थस्य शत्रुर्भवति भूमिप–इति पाठान्तरम् । ४ रक्षणाय च–इ०पा० । ४ सम्पदा । ५ धर्मार्थौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रसाधयेत् ॥ २६ ॥ तस्मात्क्रमागतैरर्थैः स्वयं वाधिगतैर्युतः ॥ क्रियायोग्यैः समर्थश्च कुर्याद्दारपरिग्रहम् ॥ २७ ॥ अनुरूपे कुले जातां श्रुत
वित्तक्रियादिभिः ॥ लभेतानिंदितां कन्यां मनोज्ञां धर्मसाधनाम् ॥ २८ ॥ पुमानर्धपुमांस्तावद्यावद्भार्यां न विंदति ॥ तस्माद्यथाक्रमं काले
कुर्याद्दारपरिग्रहम् ॥ २९ ॥ एकचक्रो रथो यद्वदेकपक्षो यथा खगः ॥ अभार्योऽपि नरस्तद्वद्[1]योग्यः सर्वकर्मसु ॥ ३० ॥ पत्नीपरिग्रहाद्धर्मस्तथा
र्थो बहुलाभतः ॥ सत्प्रीतियोगात्कामोऽपि त्रयमस्यां विदुर्बुधाः ॥ ३१ ॥ त्रिधा विवाहसंबंधो हीनतुल्याधिकैः सह ॥ तुल्यैः सह समस्ते
पामितरौ नीचमध्यमौ ॥ ३२ ॥ असमैर्निद्यते सद्भिरुत्तमैः परिभूयते ॥ तुल्यैः प्रशस्यते यस्मात्तस्मात्साधुतमो मतः ॥ ३३ ॥ कृत्वैवाधि
कसंबंधमपमानं समश्नुते ॥ न चैषामानतिं गच्छेन्नैव नीचैः सहेष्यते॥३४॥उत्तमोऽपि च संबंधो[2] नीचैस्तत्समतां व्रजेत् ॥ अतस्तं वर्जयेद्धीमा
न्निंदितं सदृशोत्तमैः ॥ ३५ ॥ विजातीयैश्च संबंधं सहेच्छंति न सूरयः ॥ उभयोर्भ्रश्यते तेन यथा कोकिलया शुकः ॥ ३६ ॥ तद्भाति कुलबा
ह्यत्वादवश्यं चावमानतः ॥ प्रतिपत्तेरशक्यत्वाच्चोत्तमोपि न शस्यते ॥ ३७ ॥ एकेऽपि परिहर्तव्या अन्ये परिहरंत्युत ॥ तस्माद्यावपि नैवेष्टौ
संबंधावधमोत्तमौ ॥ ३८ ॥ एकपात्रादिभिर्येषामुपचारैः परस्परम् ॥ प्रत्यहं वर्धते स्नेहः संबंधः सोभिधीयते ॥ ३९ ॥ यत्रावाहविवाहादावन्यो
न्याः प्रतिपत्तयः ॥ स्पर्धयैव प्रवर्धंते तं संबंधं विदुर्बुधाः ॥ ४० ॥ व्यसनेभ्युदये वापि येषां प्राणैर्धनैरपि ॥ सहैकप्रतिपत्तित्वं संबंधानां
स उत्तमः ॥ ४१ ॥ स्नेहव्यक्तौ मनुष्याणां द्वावेव निकषोपलौ ॥ तथा कृतज्ञतायां च व्यसनाभ्युदयागमौ ॥ ४२ ॥ स च स्नेहो नृणां प्रायः
समेष्वेव हि दृश्यते[3] ॥ साम्यं चाप्युपगंतव्यं वित्तशीलकुलादिभिः ॥ ४३ ॥ तस्माद्विवाहसंबंधं सख्यमेकान्तकारिणाम् ॥ सदृशैरेव कुर्वीत
नोत्तमे नाप्यनुत्तमैः[4] ॥ ४४ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि स्त्रीलक्षणसद्वृत्तवर्णनं नाम षष्ठोऽध्यायः ॥
॥ ६ ॥ ६ ॥ ॥ ब्रह्मोवाच[5] ॥ ॥ असपिंडा च या मातुरसगोत्रा च या पितुः ॥ सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ १ ॥ सहजो
न भवेद्यस्या न च विज्ञायते पिता ॥ नोपयच्छेत[6] तां प्राज्ञः पुत्रिकाधर्मशंकया ॥ २ ॥ ब्राह्मणानां प्रशस्ता स्यात्सवर्णा दारकर्मणि ॥ काम
शस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ॥ ३ ॥ क्षत्रस्यापि सवर्णा स्यात्प्रथमा द्विजसत्तमाः ॥ द्वे चावरे तथा प्रोक्ते कामतस्तु न धर्मतः ॥ ४ ॥



---

१ त्याज्यः सर्वेषु कर्मसु—इ०पा० । २ सम्बन्ध इति शेषः । ३ तस्मिन्काले हि दृश्यते—इ०पा० । ४ नापि चाधमैः—इ०पा० । ५ इतः प्राक्कस्मिन्पुस्तकेऽध्यायार्थकथानुसंधानार्थम्—"अथोत्रिविधसंबंधनिर्णयः"—इ०पा० । ६ उद्वहेदित्यर्थः—'उपायमः—' इत्यात्मनेपदम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैश्यस्यैका वरा प्रोक्ता सवर्णा चैव धर्मतः ॥ तथावरा कामतस्तु द्वितीया न तु धर्मतः ॥ ५ ॥ शूद्रैवं भार्या शूद्रस्य धर्मतो मनुरब्रवीत् ॥ चतुर्णामपि वर्णानां परिणेता द्विजोत्तमः ॥ ६ ॥ न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः ॥ कस्मिंश्चिदपि वृत्तांते शूद्रा भार्योपदिश्यते ॥ ॥ ७ ॥ हीनजातिस्त्रियं मोहादुद्वहंतो द्विजातयः ॥ कुलान्येव नयंत्याशु ससंतानानि शूद्रताम् ॥ ८ ॥ शूद्रमारोप्य वेद्यां तु पतितोत्रिर्बभूव ह ॥ उतथ्यः पुत्रजननात्पतितत्वमवाप्तवान् ॥ ९ ॥ शूद्रस्य पुत्रमासाद्य शौनकः शूद्रतां गतः ॥ भृग्वादयोप्येवमेव पतितत्वमवाप्नुयुः ॥ १० ॥ शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ॥ जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥ ११ ॥ दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ॥ नादन्ति पितरो देवाः स च स्वर्गं न गच्छति ॥ १२ ॥ वृषलीफेनपीतस्य निःश्वासोपहतस्य च ॥ तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥ १३ ॥ चतुर्णामपि विप्रेन्द्राः प्रेत्येह च हिताहितम् ॥ समासतो ब्रवीम्येष विवाहाष्टकमुत्तमम् ॥ १४ ॥ ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथासुरः ॥ गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥ १५ ॥ ये यस्य धर्मा वर्णस्य गुणदोषौ च यस्य यौ ॥ शृणुध्वं तद्द्विजश्रेष्ठाः प्रसवे च गुणागुणम् ॥ १६ ॥ विप्रस्य चतुरः पूर्वान्क्षत्रस्य चतुरोऽवरान् ॥ विट्शूद्रयोस्तु त्रीनेव विद्याद्धर्मानराक्षसान् ॥ १७ ॥ चतुरो ब्राह्मणस्याद्यान्प्रशस्तान्कवयो विदुः ॥ राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ॥ १८ ॥ क्षत्रियाणां त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ॥ पैशाचश्चासुरश्चैव न कर्त्तव्यौ कथंचन ॥ १९ ॥ पृथक्पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ ॥ गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥ २० ॥ आच्छाद्य चार्चयित्वा तु श्रुतशीलवते स्वयम् ॥ आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ॥ ॥ २१ ॥ वितते चापि यज्ञे तु कर्म कुर्वति चार्त्विजि ॥ अलंकृत्य सुतादानं दैवो धर्म उदाहृतः ॥ २२ ॥ एकं गोमिथुनं द्वे वा वरादादाय धर्मतः ॥ कन्याप्रदानं विधिवदार्षीयो धर्म उच्यते ॥ २३ ॥ सहोभौ चरतं धर्ममिति वाचानुभाष्य तु ॥ कन्याप्रदानमभ्यर्च्य प्राजापत्यविधिः स्मृतः ॥ २४ ॥ ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायाश्चैव शक्तितः ॥ कन्याप्रदानं स्वच्छन्दादासुरो धर्म उच्यते ॥ २५ ॥ इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ॥ गान्धर्वः स विधिर्ज्ञेयो मैथुन्यः कामसंभवः ॥ २६ ॥ हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् ॥ प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥ २७ ॥ सुप्तां मत्तां प्रमत्तां च रहो यत्रोपगच्छति ॥ स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः ॥ २८ ॥

---

१ जातित्वाटाए । २ दाम्यां तु–इ० पा० । ३ पडानुपूर्व्यां विप्रस्य–इ० पा० । ४ द्वौ धर्म्यौ वैश्यशूद्रयोः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जलपूर्वं द्विजाग्र्याणां कन्यादानं प्रशस्यते ॥ इतरेषां तु वर्णानामितरेतरकाम्यया ॥ २९ ॥ यो यस्यैषां विवाहानां विभूनां कीर्तितो गुणः ॥ तं निबोधत वै विप्राः सम्यक्कीर्तयतो मम ॥ ३० ॥ कुलानि दश पूर्वाणि तथान्यानि दशैव तु ॥ स हि तान्यात्मना चैव मोचयत्येनसो ध्रुवम् ॥ ३१ ॥ ब्राह्मीपुत्रः सुकृतकृद्दैवोढाजं सुतं शृणु ॥ दैवोढाजः सुतो विप्राः सप्त सप्त परावरान् ॥ आर्षोढाजः सुतः स्त्रीणां पुरुषांस्ता स्त्र्येद्विजाः ॥ ३२ ॥ ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ॥ ब्रह्मवर्चस्विनः पुत्रा जायंते शिष्टसंमताः ॥ ३३ ॥ रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः ॥ पुत्रवन्तोऽथ धर्मिष्ठा जीवन्ति च शतं समाः ॥ ३४ ॥ इतरेषु निबोधध्वं नृशंसानृतवादिनः ॥ जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥ ३५ ॥ अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ॥ निन्दितैर्निंदिता नृणां तस्मान्निन्द्यान्विवर्जयेत् ॥ ३६ ॥ करग्रहणसंस्काराः सवर्णासु भवन्ति वै ॥ असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि ॥ ३७ ॥ बाणः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ॥ वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ॥ ३८ ॥ न कन्यायाः पिता विद्वान्गृह्णीयाच्छुल्कमण्वपि ॥ गृह्णन्हि शुल्कं लोभेन स्यान्नरोऽपत्यविक्रयी ॥ ३९ ॥ स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः ॥ नारीयानानि वस्त्रं वा ते पापा यान्त्यधोगतिम् ॥ ४० ॥ आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् ॥ अल्पो वापि महान्वापि विक्रयस्तावदेव सः ॥४१॥ यासां नाददते शुल्कं ज्ञातयो न स विक्रयः ॥ अर्हणं तत्कुमारीणामानृशंस्यं च केवलम् ॥ ४२ ॥ इत्थं दारान्समासाद्य देशमग्र्यं समावसेत् ॥ ब्राह्मणो द्विजशार्दूल य इच्छेद्विपुलं यशः ॥ ४३ ॥ ॥ ऋषय ऊचुः ॥ ॥ को देशः परमो ब्रह्मन्कश्च पुण्यो मतस्तव ॥ प्रवसन्यत्र विप्रेन्द्र यशः प्राप्नोति कंजज ॥ ४४ ॥ ॥ ब्रह्मोवाच ॥ ॥ न हीयते यत्र धर्मश्चतुष्पात्स कलो द्विजाः ॥ स देशः परमो विप्राः स च पुण्यो मतो मम ॥ ४५ ॥ विद्वद्भिः सेवितो धर्मो यस्मिन्देशे प्रवर्तते ॥ शास्त्रोक्तश्चापि विप्रेन्द्राः स देशः परमो मतः ॥ ४६ ॥ ऋषय ऊचुः ॥ विद्वद्भिःसेवितं धर्मं शास्त्रोक्तं च सुरोत्तम ॥ वदास्मासु सुरश्रेष्ठ कौतुकं परमं हि नः ॥ ४७ ॥ ॥ ॥ ब्रह्मोवाच ॥ ॥ विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ॥ हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥४८॥ कामात्मता न प्रशस्ता न चेहा स्याप्यकामता ॥ काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥ ४९ ॥ संकल्पाज्जायते कामो यज्ञाद्यानि च सर्वशः ॥ व्रता नियमधर्माश्च सर्वे संकल्पजाः स्मृताः ॥ ५० ॥ कामादृते क्रियाकारी दृश्यते नेह कर्हिचित् ॥ यद्यद्धि कुरुते कश्चित्तत्तत्कामस्य चेष्टितम् ॥५१॥ निगमो धर्ममूलं स्यात्स्मृ

१ परं ब्रह्मद्विषः–इ० पा० । २ महर्षयः–इ० पा० । ३ महीयते–इ० पा० । ४ नियमा धर्ममूलं स्युः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तिशीलं तथैव च ॥ तथाचारश्च साधूनामात्मनस्तुष्टिरेव च ॥ ५२ ॥ सर्वं तु समवेक्षेत निश्चियं ज्ञानचक्षुषा ॥ श्रुतिप्राधान्यतो विद्वान्स्व धर्मे निवसेत वै ॥ ५३ ॥ श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्सदा नरः ॥ प्राप्य चेह परां कीर्तिं याति शक्रसलोकताम् ॥५४॥ श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ॥ ते सर्वार्थेषु मीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ ५५ ॥ योऽवमन्येत ते चोभे हेतुशास्त्राश्रयाद्द्विजः ॥ स साधुभि र्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥ ५६ ॥ वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ॥ एतच्चतुर्विधं विप्राः साक्षाद्धर्मस्य लक्षणम् ॥ ॥ ५७ ॥ धर्मज्ञानं भवेद्विप्रा अर्थकामेष्वसज्जताम् ॥ धर्मं जिज्ञासमानानां प्रमाणान्नैगमं परम् ॥ ५८ ॥ निषेकादिश्मशानांतो मन्त्रैर्यस्योदितो विधिः ॥ अधिकारो भवेत्तस्य वेदेषु च जपेषु च ॥ ५९ ॥ सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम् ॥ तदेव निर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ ६० ॥ यस्मिन्देशे य आचारः पारंपर्यक्रमागतः ॥ वर्णानां सांतरालानां स सदाचार उच्यते ॥ ६१ ॥ कुरुक्षेत्रं च मत्स्याश्च पंचालाः शूरसेनयः ॥ एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनंतरम् ॥ ६२ ॥ एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ॥ स्वंस्वं चरित्रं शिक्षंति पृथिव्यां सर्वमानवाः ॥ ६३ ॥ हिमवद्विंध्ययोर्मध्ये यत्प्राग्विनशनादपि ॥ प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥६४॥ आ समुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ॥ तयोरे वांतरं गिर्योरार्यावर्त्तं विदुर्बुधाः ॥६५॥ अटते यत्र कृष्णा गौर्मृगो नित्यं स्वभावतः ॥ स ज्ञेयो याज्ञिको देशो म्लेच्छदेशस्त्वतः परः ॥६६॥ एतान्नित्यं शुभान्देशान्संश्रयेत द्विजोत्तमः ॥ यस्मिन्कस्मिंश्च निवसेत्पादजो वृत्तिकर्शितः ॥ ६७ ॥ प्रकीर्तितेयं धर्मस्य बुधैर्योनिर्द्विजोत्तमाः ॥ संभवश्चास्य सर्वस्य समासान्न तु विस्तरात् ॥ ६८ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि विवाहधर्मवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ब्रह्मोवाच ॥ ॥कर्तव्यं यद्गृहस्थेन तदिदानीं निबोधत॥ गदतो द्विजशार्दूल विस्तराच्छास्त्रतस्तथा ॥ ॥ १ ॥ वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ॥ शुभदेशाश्रयश्चैव पत्नी वैवाहिकी गृहे ॥ २ ॥ स्वाश्रयेण विना शक्यं न यस्माद्रक्षणादिकम् ॥ वित्तानामिव दाराणामतस्तद्विधिरुच्यते ॥ ३ ॥ हेतवो हि त्रिवर्गस्य विपरीतास्तु मानद ॥ अरक्षणाद्भवंत्यस्मादमीषां रक्षणं मतम् ॥ ४ ॥ निस र्गात्पुंस्यसंतोषाद्गुणदोषविमर्षतः ॥ दुष्टानां चापि संसर्गाद्रक्ष्या एव च योषितः ॥ ५ ॥ पुरुषस्थानवेश्मानि त्रिविधं प्राहुराश्रयम् ॥ वित्तानां रक्षणाद्यर्थमपूर्वाधिगमाय च ॥ ६ ॥ कुलीनो नीतिमान्प्राज्ञः सत्यसंधो दृढव्रतः ॥ विनीतो धार्मिकस्त्यागी विज्ञेयः पुरुषाश्रयः ॥ ७ ॥ नगरे

१ दि मानवः–इ०पा० । २ ब्रह्मसलोकताम्–इ०पा० । ३ धर्मः–इ० पा० । ४ गिरिनद्योः–इ०पा० । ५ ब्राह्मणो वृत्तिकर्शितः–इ० पा० । ६ विपरीतार्थमानकाः–इ० पा० । ७ नार्यो–इ०पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

खर्वटे खेटे ग्रामे चापि क्रमागते ॥ यात्रावशाद्वा निवसेद्धार्मिकाद्यजनान्विते ॥ ८ ॥ गुरुणानुमतस्तत्र ग्रामण्यादिजनेन वा ॥ प्रतिवेश्माद्यबाधेन शुद्धं कुर्यान्निवेशनम् ॥ ९ ॥ द्वारचत्वरशालानां सर्वकारुकवेश्मनाम् ॥ द्यूतसूनासुरावेशनटराजानुजीविनाम् ॥ १० ॥ पाखंडदेववीथीनां राजमार्गं कुलस्य च ॥ दूरात्सुगुप्तं कर्तव्या जीविका विभवोचिता ॥ ११ ॥ सापिधानैकनिष्काशं शुद्धपृष्ठं समंततः ॥ सद्वृत्ताप्तजनाकीर्णमदुष्टप्रातिवेशिकम् ॥ १२ ॥ प्रागुदक्प्रवणे देशे वास्तुविद्याविधानतः ॥ प्रविभक्तक्रियाकांक्षं सर्वर्तुकमनोहरम् ॥ १३ ॥ अर्चास्नानोदकागारगोष्ठागारमहानसैः ॥ युक्तं गोवाजिशालाभिः सदासीभृत्यकाश्रयैः ॥ १४ ॥ बहिरंतःपुरस्त्रीकं सर्वोपकरणैर्युतम् ॥ विभक्तशयनोद्देशमाप्तवृद्धैरधिष्ठितम् ॥ १५ ॥ अरक्षणाद्धि दाराणां वर्णसंकरजादयः ॥ दृष्टा हि बहवो दोषास्तस्माद्रक्ष्याः सदा स्त्रियः ॥१६॥ न ह्यासां प्रमदं दद्यान्न स्वातंत्र्यं न विश्वसेत् ॥ विश्वस्तवच्च चेष्टेत न्याय्यं भर्त्सनमाचरेत् ॥१७॥ नाधिकारं क्वचिद्दद्यादृते पाकादिकर्मणः ॥ स्त्रीणां ग्रामीणवत्ता हि भोगायालं सुशासिता ॥ ॥ १८ ॥ नित्यं तत्कर्मयोगेन ताः कर्तव्या निरंतराः ॥ इत्येवं सर्वदा व्याप्तेः स्यादविघ्ननिराश्रया ॥ १९ ॥ दौर्गत्यमतिरूपं चाप्यसत्संगः स्वतंत्रता ॥ पानाशनकथागोष्ठीप्रियत्वाकर्मशीलता ॥ २० ॥ कुहकेक्षणिकामुंडाभिक्षुकीसूतिकादिभिः ॥ गोप्रसंगैस्तथासद्भिर्लिंगियाचकशिल्पिभिः ॥ २१ ॥ संवाहोद्यानयात्रासूद्यानेष्वामंत्रणादिषु ॥ प्रसंगस्तीर्थयात्रार्थं धर्मेषु प्रकटेषु च ॥ २२ ॥ विप्रयोगः सदा भर्त्रा तज्ज्ञातिकुलनिःस्वता ॥ अमाधुर्यकदर्यत्वे भृशं पुंसां च वाच्यता ॥ २३ ॥ अतिक्रौर्यमतिक्षांतिरत्यंताभीतिपातनम् ॥ स्त्रीभिर्जितत्वमत्यर्थं सत्यं तास्ताः सदोषताः ॥२४॥ स्त्रीणां पत्युरधीनत्वात्पुमानेव हि निंद्यते ॥ भर्तुरेव हि तज्जाड्यं यद्भृत्यानामयोग्यता ॥२५॥ तस्माद्यथोदितास्त्वेता रक्ष्याः शासनताडनैः॥ ताडनैश्च यथाकालं यथावत्समुपाचरेत्॥२६॥ परिगृह्य बहून्दारानुपचारैः समो भवेत् ॥ यथाक्रमोचितैः कर्म दानसत्कारवासनैः ॥ २७ ॥ प्रथमोभिजनो धर्मो योग्यत्वं च सुपुत्रता ॥ पक्षे वित्तं विशेत्स्त्रीणां मानस्तत्कारणं तथा ॥२८॥ तस्मान्मानो न कर्तव्यो हेयश्चापि न तत्कृतः ॥ गुरुत्वे लाघवे वापि सतां कार्यं निबंधनम् ॥२९॥ आकस्मिके प्रयुंजानः प्रेक्षावान्मानलाघवे ॥ स यत्किंचनकारित्वाच्चायमेवैति लाघवम् ॥ ३० ॥ यथामानापमानौ हि प्रयुज्येतानिमित्ततः ॥ तन्निमित्ता जनत्यागे प्रयतंते तदाश्रिताः ॥ ३१ ॥ एत

१ द्वारचत्वरनागानां शस्त्रकारकवेश्मनाम् ॥ अतिन्यूनावरावेशनटरंगानुजीविनाम् ॥ पाखंडदेवतीर्थनाम्–इ० पा० । २ सौगन्ध्यमतिरूपत्वमुत्सृजेच्च पतिव्रता–इ० पा० । ३ पानगेयकथागोष्ठीप्रियत्वाकर्मशीलता–इ० पा० । ४ प्रसंगाद्यैस्तथासत्स्त्रीलिंगिधारकशिल्पिभिः–इ० पा० । ५ स्त्रीणां पत्युरधीनत्वं प्रमाणैरधिगम्यते–इ० पा० ।





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देव स्वंपत्यानां ज्ञेयं माननकारणम् ॥ यत्स्वापत्यनिमित्तेषु प्रधाने कुलयोग्यते ॥ ३२ ॥ तत्संयोगात्सुखं पुंसां महद्दुःखं वियोगतः ॥ तत्प्राप्तिः प्रतिहातव्या स्वार्थायैव प्रियाण्यपि ॥ ३३ ॥ अतः स्वार्थैकनिष्ठोऽयं लोकः सर्वोऽवसीयते ॥ तत्प्रसिद्धिर्भवेदस्तमानाद्भ्रांतिविधायकः ॥ :३४ ॥ ततो दारादिका भृत्या नियंतव्यास्तथा द्विजाः ॥ यथेहामुत्र वा श्रेयः प्राप्नुयादुत्तरोत्तरम् ॥ ३५ ॥ स्त्रीणां धर्मार्थकामेषु नातिसंधानमाचरेत् ॥ तासां तेष्वभिसंधानाद्भवेदात्माभिसंहितः ॥ ३६ ॥ जाया त्वर्धं शरीरस्य नृणां धर्मादिसाधने ॥ नातस्तासु व्यथां कांचित्प्रतिकूलं समाचरेत् ॥ ३७ ॥ यज्ञोत्सवादौ नाकस्मात्कांचिदासां विशेषयेत् ॥ वस्त्रतांबूलदानादौ प्रतिपत्तौ समो भवेत् ॥३८॥ ॥ प्रियाप्रियत्वं भेदो हि कामतस्तु रहोगतः ॥ उपचारैः पुनर्वाक्यैस्तुल्यवृत्तिः प्रशस्यते ॥३९॥ आर्तवे तु पुनः सर्वा उपगम्याः प्रिया इव ॥ ॥ पूर्वाभिजातधर्मार्थ्या पुत्रिणी चोत्तरोत्तरम्॥४०॥ उदग्गच्छेदनेनैव विधिना नित्यमार्तवे ॥ तुल्यवृत्तिर्यथाकालं स्वंस्वं वासमखंडयन् ॥ ४१ ॥ नित्यपर्यायवासानामपादानमसून्विदुः ॥: ऋतुदुःखं प्रमोदश्च तथा पूर्वं समागतः ॥ ४२ ॥ अन्यया सह यद्दुःखं सदसद्वा रहोगतम् ॥ उत्कंठितं वा यत्किंचित्सपत्नीषु न तद्वसेत् ॥४३ ॥ यत्किंचिदन्य संबद्धमन्यथा कथितं मिथः ॥ तस्य कुर्यादनिर्वेदमात्मनैव विचिंतयेत्॥४४॥अन्योन्यमत्सराख्यानैर्न ता वाचापि भर्त्सयेत्॥ गुणदोषौ च विज्ञाय स्वयं कुर्यान्न निष्कलौ ॥ ४५ ॥ वस्त्रालंकारभोज्यादौ तदपत्येष्वनुक्रमात् ॥ मातृदोषाननाहत्य तुल्यदृष्टिः पिता भवेत् ॥ ४६ ॥ अन्यस्यान्यगतै र्दोषैर्दूषणं न हि नीतिमत् ॥ यत्तु तेषामपत्यं तु तत्तुल्यमुभयोरपि ॥ ४७ ॥ प्रीतिं द्वेषमभिप्रायं शौचाशौचगतागमान् ॥ बहिरंतश्च जानीयाद्दास गूढचरैः सदा ॥ ४८ ॥ आत्मानमपि विज्ञाय चित्तवृत्तेरनीश्वरम् ॥ विश्वसेत कथं स्त्रीषु सर्वाविनयधामसु ॥ ४९ ॥ वृद्धदास्यः क्रमायाता धात्र्यश्च परिचारिकाः ॥ तन्मातृपितृकाद्याश्च पण्डवृद्धाश्चरा मताः ॥ ५० ॥ विविधैस्तत्कथाख्यानैस्तुल्यशीलदयान्वितैः ॥ प्रविश्यांतरभिप्रायं विद्यात्काले प्रयोजितैः॥५१॥ तेषुतेषु कथार्थेषु कथ्यमानेषु लक्षयेत्॥ मुखाकारादिभिर्लिंगैरभिप्रायं मनोगतम्॥५२॥सीतारुंधतिसंबंधैस्तथा शाकुंतलादिभिः॥ सदसच्चरिताख्यानैर्भावं विद्यात्प्रवृत्तितः ॥ ५३ ॥ तद्दुष्टानामदुष्टेषु साधूनामितरेषु च ॥ प्रीतिः कथाप्रबंधेषु स्यात्सख्यं पुरुषेष्वितः ॥ ५४ ॥ एवमागमदुष्टाभ्यामनुमित्या च तत्त्वतः ॥ स्त्रीणां विदित्वाभिप्रायं वर्तेताशु यथोचितम् ॥ ५५ ॥ स्त्रीभ्यो विप्रतिपन्नाभ्यः प्राणैरपि वियोजनम् ॥ दृष्टं हि च यथा राज्ञामतो रक्षेत्प्रयत्नतः ॥ ५६ ॥ वेण्या गूढेन शस्त्रेण हतो राजा शुभध्वजः ॥ मेखलामणिना देव्या सौवीरश्च नराधि

---

१ हि पत्नीनाम्–इ० पा० । २ समुत्स्य निमित्तेषु प्रधानं गुणयोग्यता ॥ यत्सया॥श्रयं पुंसा महद्दुःखं वियोगवत्–इ० पा० । ३ भावं विद्यात्प्रवृत्तिभिः–इ० पा० । ४ तथा–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पः ॥५७॥ भ्राता देवीप्रयुक्तेन भद्रसेनो निपातितः ॥ तथा पुत्रेण कारूषो घातितो दर्पणासिना॥५८॥द्वौ काशिराजौ वै वंद्यौ चानंदापुरयोपिता॥ विषं प्रयुज्य पंचत्वमानीतौ पूजितात्मकौ ॥ ५९ ॥ एवमादि महाभागा राजानो ब्राह्मणाश्च ह ॥ स्त्रीभिर्यत्र निपात्यंते तत्रान्येष्विह का कथा ॥ ॥ ६० ॥ तस्मान्नित्याप्रमत्तेन जाया रक्ष्याश्च नित्यशः ॥ यथावदुपचर्याश्च गुणदोषानुरूपतः ॥ ६१ ॥ वैषम्यादुपचाराणां विकारैश्चा निमित्तजैः ॥ विशेषेण सपत्नीकैरकस्माच्चापि वेदनैः ॥ ६२ ॥ असम्भागे च वाग्दंडपारुष्यादप्रसंगतः ॥ प्रद्वेषो भर्तरि स्त्रीणां प्रकोपश्चापि जायते ॥ ६३ ॥ ततश्चायाति वार्धक्यमुद्रोढुश्चापि शत्रुताम् ॥ तस्मान्न तान्प्रयुंजीत दोषान्दारविनाशकान् ॥ ६४ ॥ न चैताः स्वकुलाचारमधर्मं वापि चांजसा ॥ न गुणांश्चाप्युपेक्षंते प्रकृत्या किमु पीडिताः ॥ ६५ ॥ सतीत्वे प्रायशः स्त्रीणां प्रदृष्टं कारणत्रयम् ॥ परपुंसामसंप्रीतिः प्रिये प्रीतिः स्वरक्षणे ॥ ६६ ॥ तस्मात्सुरक्षिता नित्यमुपचारैर्यथोचितैः ॥ सुभृंता नित्यकर्माणः कर्तव्या योषितः सदा ॥६७॥ उत्तमां सामदानाभ्यां मध्यमाभ्यां तु मध्यमाम् ॥ पश्चिमाभ्यामुभाभ्यां च अधमां संप्रसाधयेत् ॥६८॥ भेददंडौ प्रयुज्यापि प्रागपत्याद्यपेक्षया ॥ तच्छिष्टानां तदा पश्चात्सामदानप्रसाधने ॥ ६९ ॥ यास्तु विध्वस्तचारित्रा भर्तुश्चाहितकारिकाः ॥ त्याज्या एव स्त्रियः सद्भिः[1] कालकूटविषोपमाः ॥७०॥इष्टाः[2] कुलोद्गताः[3] साध्व्यो विनीताभर्तृवत्सलाः ॥ सर्वदा साधनीयास्ताः संप्रदायोत्तरोत्तरैः[4] ॥ ७१ ॥ एवमेव यथोद्दिष्टं स्त्रीवृत्तं योनुतिष्ठति ॥ प्राप्नोत्येव स संपूर्णं त्रिवर्गं लोकसंभवम्[5] ॥ ७२ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि विवाहधर्मेषु स्त्रीविषये नरवृत्त वर्णनं नामाष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ एवं स्त्रीषु मनुष्याणां वृत्तिरुक्ता समासतः ॥ सांप्रतं च मनुष्येषु स्त्रीणां समुपदिश्यते ॥१॥ सम्यगाराधनात्पुसां रतिर्वृत्तिश्च योषितः[6] ॥ पुत्राः स्वर्गाद्यदृष्टं च तस्मादिष्टो हि तद्विधिः ॥ २ ॥ कर्तव्यं नाम यत्किंचित्सर्वं वि[7]धिमपेक्षते ॥ व्यक्तिमायाति वैफल्यं तदेवारब्धमन्यथा ॥ ३ ॥ विध्यपेक्षीणि सर्वाणि कार्याण्यविफलान्यपि[8] ॥ हेतुभूतास्त्रिवर्गस्य महारंभा विशेषतः ॥ ४ ॥ सर्वसाध्याविधिज्ञानमागमैकनिबंधनम् ॥ साध्यं दृष्टमदृष्टं च द्वयं विधिनिषेधयोः ॥५ ॥ शास्त्राधिकारो न स्त्रीणां न ग्रन्थानां च धारणे ॥ तस्मादिहान्ये मन्यंते तच्छासनमनर्थकम् ॥ ६ ॥ आगमैकक्रियायोगे स्त्रीणामध्यधिकारिता ॥ मृते भर्तरि साध्वी स्यादित्यादौ स्मृतिभाषितम् ॥ ७ ॥



१ स्वादृताः–इ० पा० । २ सर्वाः–इ० पा । ३ हृष्टाः कुलोद्भवाः–इ० पा० । ४ अप्रमादोत्तरैः–इ० पा० । ५ स्त्रीवर्गं लोकसंमतम्–इ० पा० । ६ रतिर्भवति योषिताम्–इ० पा० । ७ स्थिर–इ० पा० ।
८ अल्पफलानि च–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात्कार्यमकार्यं वा विज्ञाय प्रभुरागमात् ॥ गुणदोषेषु ताः सम्यक्छास्ति राजा प्रजा इव ॥ ८ ॥ सत्येव प्रमदाः काश्चिद्विशेषाधिगतागमाः ॥
यत्तु शास्त्राधिकारित्वं वचनं स्यान्निरर्थकम् ॥ ९ ॥ केचिद्वेदविदो विप्राः कृत्यैर्वैषक्रियापराः ॥ तथापि जातिमात्रेण त एवात्राधिकारिणः ॥ १० ॥
क्रियन्ते वेदशास्त्रज्ञैः प्रयोगाः शास्त्रलौकिकाः ॥ स्थितमेषामदूरेपि शास्त्रमेव निबन्धनम् ॥ ११ ॥ व्याधधीवरगोपालप्रभृतीनां च दृश्यते ॥ विष्टचं
गारकसौर्यादिदिनानां परिवर्जनम् ॥ १२ ॥ गम्यागम्यादिकार्येयं नियताचारसंस्थितिः ॥ लोकानां शास्त्रवाक्यानां प्राणाः स्वेष्टनिबन्धनाः ॥ १३ ॥
तस्माच्चतुर्णां वर्णानामाश्रमाणां च सर्वशः ॥ मुख्यगौणादिभेदानां ज्ञेया शास्त्राधिकारिता ॥ १४ ॥ पौर्वापर्यं तु विज्ञातुमशक्यं लोकशास्त्रयोः ॥
तच्छास्त्रमेव मंतव्यं यथा कर्मशरीरवत् ॥ १५ ॥ आगमे च पुराणे च द्विधैव नास्तिकग्रहम् ॥ मार्गं महद्भिराचीर्णं प्रपद्येताविकल्पधीः ॥ १६ ॥
मूलं गृहस्थधर्माणां यस्मान्नार्यः पतिव्रताः ॥ तस्मादासां प्रवक्ष्यामि भर्तुराराधने विधिम् ॥ १७ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्धसाहस्र्यां
संहितायां ब्राह्मे पर्वणि आगमनप्रशंसानाम नवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ आराध्यानां हि सर्वेषामयमाराधने विधिः ॥ चित्त
ज्ञानानुवृत्तिश्च हितैपित्वं च सर्वदा ॥ १ ॥ कन्या पुनर्भूर्वेश्या च त्रिविधा एव योषितः ॥ प्रिया मध्याप्रिया चैव योग्यामध्येतरा तथा ॥ २ ॥
समा श्रेष्ठा च नीचा च भूयोपि त्रिविधाः पुनः ॥ पूर्ववत्परयोर्वृत्तिरिष्टानुक्त्या प्रियाप्रिये ॥ ३ ॥ अधमाप्रिययोरत्र पतिपत्न्यादिका मता ॥
निषिद्धानां तु भक्ष्यादि तद्धि यत्नाद्विधीयते ॥ ४ ॥ एकद्वित्वबहुत्वाद्या ये भेदाः समुदाहृताः ॥ ज्येष्ठादिवृत्ते वक्ष्यामस्तानशेषान्द्विजोत्तमाः ॥
॥ ५ ॥ वृत्तं च द्विविधं स्त्रीणां बाह्यमाभ्यंतरं तथा ॥ भर्तुरन्यजने बाह्यं तस्याः शारीरमांतरम् ॥ ६ ॥ ज्ञातीतरविभागेन तद्बाह्यं द्विविधं
पुनः ॥ पूज्यं तुल्यं कनिष्ठं च तत्प्रत्येकं पुनस्त्रिधा ॥ ७ ॥ रहोरतं प्रकाशं च शारीरमपि तत्त्रिधा ॥ भर्तुश्चित्तानुकूल्येन प्रयोक्तव्यं यथोचि
तम् ॥ ८ ॥ माता पिता स्वसा भ्राता पितृव्याचार्यमातुलाः ॥ सभार्या भगिनी भर्ता भर्तृमातृपितृष्वसा ॥ ९ ॥ धात्री वृद्धांगनादिश्च यस्त
त्रातसमो जनः ॥ प्रथमोढा सपत्नी च स्त्रीणां मान्यतमो गणः ॥ १० ॥ एषामेव त्वपत्यादिभगिनीभ्रातरस्तथा ॥ कनिष्ठा भर्तुरित्यादिभार्या
श्चाप्तसमो मतः ॥ ११ ॥ हीनोऽन्यः शासनीयस्तु तत्र तावन्न विद्यते ॥ योग्यता सुतसौभाग्यैर्न यावत्स्यात्प्रतिष्ठिता ॥ १२ ॥ यत्रापि गुरु

१ तत्रापि-इ० पा० । २ वृत्तज्ञानानुवृत्तिश्च-इ० पा० । ३ पूर्ववत्परयोर्वृत्ति विद्यान्मुक्त्वा प्रियागमम्-इ० पा० । ४ एका द्वियंहुनारीणाम्-इ० पा० । ५ समक्ता-इ० पा० । ६ गुणः-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भर्तॄणामानुकूल्येन सर्वदा ॥ वृत्तिः प्रशस्यते स्त्रीणां पूजाचाराविरोधिनी ॥ १३ ॥ देवरैः पतिमित्रैश्च परिहासक्रियोचितैः ॥ विविक्त देशावस्थानं वर्जयेदिति नर्म च ॥ १४ ॥ प्रायशो हि कुलस्त्रीणां शीलविध्वंसहेतवः ॥ दुष्प्रयोगो रहो नित्यं स्वातंत्र्यमतिनर्मता ॥ १५ ॥ दुष्टसंगे त्वरा स्त्रीणां युवभिर्नर्म नोचितम् ॥ निर्भेपता स्वतंत्राणां साफल्यं रहसि व्रजेत् ॥१६॥ पुंसो दुष्टेंगिताकारान्दुष्टभावप्रयोजितान् ॥ भ्रातृव त्पितृवच्चैतान्पश्यती परिवर्जयेत् ॥ १७ ॥ पुंसोऽन्याग्रहमालापस्मितविप्रेक्षितानि च ॥ करांतरेण द्रव्याणां निबंधं ग्रहणार्पणम् ॥ १८ ॥ द्वारप्रदे शावस्थानं राजमार्गावलोकनम् ॥ प्रेक्षोद्यानादिशीलत्वं निरुध्यादेशमालयम् ॥ १९ ॥ बहूनां दर्शने स्थानं दृष्टिवाक्कायचापलम् ॥ष्ठीवनत्वं ससी त्कारमुच्चैर्हसितजल्पितम् ॥ २० ॥ सांगत्यं लिंगिदुष्टस्त्रीभिक्षुकीक्षणिकादिभिः ॥ मंत्रमंडलदीक्षायां सक्तिः संवसनेषु च ॥ २१ ॥ इत्येवमादिदु र्वृत्तं प्रायो दुष्टजनोचितम् ॥ वर्जयेत्परिरक्षंती कुलत्रितयवाच्यताम् ॥ २२ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि स्त्रीदुर्वृत्तवर्णनंनाम दशमोऽध्यायः ॥ १० ॥ ॥ ॥ ब्रह्मोवाच ॥ ॥ या पतिं दैवतं पश्येन्मनोवाक्कायकर्मभिः ॥ तच्छरीरार्धजातेव सर्वदा हितमाचरेत् ॥ १ ॥ तत्प्रियां प्रियवत्पश्येत्तद्द्वेष्यां द्वेष्यवत्सदा ॥ अधर्मानर्थयुक्तेभ्योऽयुक्ता चास्य निवर्तते ॥२॥ प्रियं किमस्य किं पथ्यं साम्यं चास्य कथं भवेत् ॥ ज्ञात्वैवं सर्वभृत्येषु न प्रमाद्येत वै द्विजाः ॥ ३ ॥ देवतापितृकार्येषु भर्तुः स्नानाशनादिषु ॥ सत्कारेऽभ्यागतानां च यथौचित्यं न हापयेत् ॥४ ॥ वेश्मात्मा च शरीरं हि गृहिणीनां द्विधा कृतम् ॥ ॥ संस्कर्तव्यं प्रयत्नेन प्रथमं पश्चिमादपि ॥ ५ ॥ कृत्वा वेश्म सुसंमृष्टं त्रिकाल विहितार्चनम् ॥ वृत्तकर्मोपभोगानां संस्कर्तव्यं यथोचितम् ॥ ६ ॥ प्रातर्मध्यापराह्णेषु बहिर्मध्यांतरेषु च ॥ गृहसंमार्जनं कृत्वा निष्कारान्न निशि क्षिपेत् ॥ ७ ॥ गोमहिष्यादिशालानां तत्पुरीषादिमात्रकम् ॥ व्यपनेयं तु यत्नेन संमार्जन्या प्रसाधनम् ॥ ८ ॥ दासकर्मकरादीनां बाह्याभ्यंतर चारिणाम् ॥ पोषणादिविधिं विद्यादनुष्ठानं च कर्मसु ॥९॥ शाकमूलफलादीनां वल्लीनामौषधस्य च ॥ संग्रहः सर्वबीजानां यथाकालं यथाबलम् ॥ ॥ १० ॥ ताम्रकांस्यायसादीनां काष्ठवेणुमयस्य च ॥ मृन्मयानां च भांडानां विविधानां च संग्रहम् ॥ ११ ॥ कुंडकादिजलद्रोण्या कलशोदंचता लुकाः ॥ शाकपात्राण्यनेकानि स्नेहानां गोरसस्य च ॥ १२ ॥ मुसलं कंडनीयं तु यंत्रकं चूर्णचालनी ॥ दोहन्यो नेत्रकं मंथा मंडन्यः शृंखलानि च ॥१३॥ संदंशः कुंडिका शूलाः पट्टपिप्पलको दृषत् ॥ डाविका हस्तको दर्वी भ्राष्टस्फुटलकानि च ॥ १४ ॥ तुलाप्रस्थादिमानानि मार्जन्यः

॥ २० ॥

१ पूज्यदाराविरोधिनी–इ० पा० । २ कालान्तरेण–इ०पा० । ३ विरुद्धम्–इ०पा० । ४ अश्ममयस्य–इ०पा० । ५ शूर्पवर्धिनी–इ०पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पिटाकानि च ॥ सर्वमेतत्प्रकुर्वीत प्रयत्नेन च सर्वदा ॥१५॥ हिंग्वादिकमथो जाजी पिपल्यो मरिचानि च ॥ राजिका धान्यकं शुंठी त्रिचतुर्जात कानि च ॥ १६ ॥ लवणं क्षारवर्गाश्च सौवीरकपरूपकौ ॥ द्विदलामलकं चिंचा सर्वाश्च स्नेहजातयः ॥ १७ ॥ शुष्ककाष्ठानि वल्लूरमरिष्टा पिष्टमा पयोः ॥ विकाराः पयसश्चापि विविधाः कंदजातयः ॥ १८ ॥ नित्यनैमित्तिकानां हि कार्याणामुपयोगतः ॥ सर्वमित्यादि संग्राह्यं यथावद्विभवोचितम् ॥१९॥ यत्कार्याणां समुत्पत्तावुपाहर्तुं न दृश्यते ॥ तत्प्रागेव यथायोगं संगृह्णीयात्प्रयत्नतः ॥ २० ॥ धान्यानां घृष्टपिष्टानां क्षुण्णोपहतयोरपि ॥ भृशं शुष्कार्द्रसिद्धानां क्षयवृद्धी निरूपयेत् ॥ २१ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि गृहधर्मवर्णनं नामैकादशोऽध्यायः ॥ ११ ॥ ॥ ब्रह्मोवाच ॥ ॥ व्रीहीणां कोद्रवाणां च सारधर्ममुदारकः[1] ॥ कंगुकोद्रवयोर्ज्ञेयो वरटः पंचभागकः ॥ १॥ पंचभागान्प्रियंगूनां शालीनां च त्रयोऽष्ट च ॥ चणकानां तृतीयांशः समक्षुण्णंत्रयं विदुः ॥ २ ॥ पौनीययवगोधूमं[2] पिष्टधान्यचतुष्टयम् ॥ तुल्यमेवावगंतव्यं मुद्गा मापास्तिला यवाः ॥३॥ पंचभागादिका घृष्टा गोधूमाः सक्तवस्तथा ॥ कुल्मापाः पिष्टमांसं च सम्यगर्धादिकं भवेत् ॥४॥ सिद्धं तदेव द्विगुणं पुन्नाको यावकस्तथा ॥ कंगुकोद्रवयोरन्नं चणकोदारकस्य च[3] ॥ ५ ॥ द्विगुणं[4] चीनकानां च व्रीहीणां च चतुर्गुणम् ॥ शालेः पंचगुणं विद्यात्पुराणे त्वतिरिच्यते ॥ ६ ॥ क्रियापाकविशेषास्तु वृद्धिरेवोपदिश्यते ॥ निमित्तस्य वरान्नस्य तद्वृद्धिर्द्विगुणा भवेत् ॥ ७ ॥ तस्माद्भूयो विरूढस्य चतुर्भागो विवर्धते ॥ लाजा धानाः कलायाश्च भृष्टाद्द्विगुणवृद्धयः ॥ ८ ॥ भ्रष्टव्यानामतोऽन्येषां पंचभागोऽधिको मतः ॥ चापकानां च पिष्टानां पादहीनाः कलायजाः ॥ ९ ॥ मुद्गमापमसूराणामर्धपादावरो भवेत् ॥ क्लिन्नशुष्कवरान्नानां हानिर्वृद्धिर्विशिष्यते ॥ १० ॥ तथार्धेन तु शोध्यानामाढक्या मुद्गमापयोः ॥ मसूराणां च जानीयात्क्षयं पंचमभागकम् ॥ ११ ॥ षड्भागेनातसीतैलं सिद्धार्थककपित्थयोः ॥ तथा निंबकदंबादौ[5] विद्यात्पंचमभागकम् ॥ १२ ॥ तिलेंगुदीमधूकानां[6] नक्तमालकुसुंभयोः ॥ जानीयात्पादकं तैलं खलमन्यत्प्रचक्षते ॥ १३ ॥ क्षेत्रकालक्रियादिभ्यः क्षयादेर्व्यभिचारतः ॥ प्रत्यक्षीकृत्य तान्सम्यगनुमित्यावधारयेत् ॥ १४ ॥ क्षीरदोषे गवां[7] प्रस्थं महिषीणां च सर्पिषः ॥ पादाधिकमजावीनामुत्पादं तद्विदो विदुः ॥ १५ ॥ सुभूमितृणकालेभ्यो वृद्धिर्वा क्षीरसर्पिषाम् ॥ अतस्तेषां विधातव्यो ह्यर्थादेव विनि

१ सारमर्धमुदारकः—इ०पा० । २ यमनीयवगोधूमम्—इ०पा० । ३ यवकोदारवस्य च—इ०पा० । ४ त्रिगुणम् इ०पा० । ५ कुसुंभादेः इ०पा० । ६ मापकाणाम् इ० पा० । ७ व्रजन्—इ० पा० ।
८ तत्तद्भागविनिश्चयः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्वयः ॥ १६ ॥ प्रत्यक्षीकृत्य यत्नेन पक्षमासान्तरे तथा ॥ पयोवृत्तैर्गवादीनां कुर्यात्संभवनिर्णयम् ॥ १७ ॥ कार्पासकृमिकोशौमौर्णक
क्षौमादिकर्तनम् ॥ कुणिपङ्ग्वंधयोपाभिर्विधवाभिश्च कारयेत् ॥ १८ ॥ बालवृद्धान्धकार्पण्ये यत्कर्तव्यमवश्यतः ॥ विनियोगं नयेत्सर्वं प्रियोप
ग्रहपूर्वकम् ॥ १९ ॥ कर्मणामन्तरालेषु प्रोषिते चापि भर्तरि ॥ स्वयं वै तदनुष्ठेयं नित्यानां चाविरोधतः ॥ २० ॥ शूद्राणां स्थूलसूक्ष्मत्वं
बहुत्वं च व्ययाव्ययौ ॥ मत्वा विशेषं कुर्वीत चेतनप्रतिपत्तिषु ॥ २१ ॥ कारयेद्वस्त्रधान्यादि स्वाप्तवृद्धैरधिष्ठितम् ॥ शूद्राणां क्षयवृद्ध्यादि
मन्तव्यं वेतनानि च ॥ २२ ॥ क्षौमकार्पासयोर्विद्यात्सूत्रं पञ्चमभागकम् ॥ देशकालादिभागात्तु प्रत्यक्षादेव निर्णयः ॥ २३ ॥ अवघातेन
तूलस्य क्षयो विंशतिभागकः ॥ छन्नां व्याप्तां तु वातेन तद्वद्दूर्णां प्रचक्षते ॥ २४ ॥ पञ्चाशद्भागिकीं हानिं सूत्रे कुर्वीत लक्षणात् ॥ वृद्धिस्तु
मण्डसंपर्काद्शैकादशिका भवेत् ॥ २५ ॥ श्लक्ष्णमध्यमसूत्राणामर्धाधिकसमं भवेत् ॥ स्थूलानां तु पुनर्मूल्यात्पादोनं वालचेतनम् ॥ २६ ॥
कर्मणो भूरिभेदत्वाद्देशकालप्रभेदतः ॥ तद्विद्भ्य एव बोद्धव्यो वालचेतननिश्चयः ॥ २७ ॥ स्थूलं दिनत्रयं देयं मध्यमं च त्रिरात्रिकम् ॥ सूक्ष्म
मापक्षतो मृष्टं मासात्तत्परिकर्मकम् ॥ यदत्र क्षयवृद्ध्यादि तदुत्सर्गात्प्रदर्शितम् ॥२८॥ कालकर्त्रादिभेदेन व्यभिचारोपि दृश्यते ॥ शय्यासनान्य
नेकानि कंवलाश्चतुरास्रिकाः ॥ २९ ॥ कंचुकाश्चावकोषाश्च मध्या रक्ताश्च भूरिशः ॥ गुरुबालादि वृद्धानामभ्यागतजनस्य च ॥ ३० ॥
भोगायानुगतो भर्त्ता कुर्याद्विविधमात्रकम् ॥ यदस्य श्वशुरादीनां कल्पितं शयनादिकम् ॥ ३१ ॥ भर्तुश्चैव विशेषेण तदन्येन न कारयेत् ॥
वस्त्रं माल्यमलंकारं विधृतं देवरादिभिः ॥ ३२ ॥ न धारयेन्न चैतेषामाक्रमेच्छयनानि वा ॥ पिण्याकनककुद्दांश्च कालरूक्षाणि यानि च ॥ ३३ ॥
हेयं पर्युषिताद्यन्नं गोभक्तेनोपयोजयेत् ॥ कुलानां बहुधेनूनां गोध्यक्षव्रजजीविनाम् ॥ ३४ ॥ किलाटगविकादीनां भक्तार्थमुपयोजनम् ॥ दध्नः
समाहरेत्सर्पिर्दुहेद्वत्सान्न पीडयेत् ॥३५॥ वर्षाशरद्वसन्तेषु द्वौ कालावन्यदा सकृत् ॥ तक्रं वाप्युपयुञ्जीत श्ववराहादिपोषणे॥३६॥पिण्याकक्लेदनार्थं
वा विक्रेयं वा तदर्हयेत् ॥ वृत्तिं धान्यहिरण्येन गोपादीनां प्रकल्पयेत् ॥३७॥ ते हि क्षीरव्रता लोभादुपहन्युस्तदन्वयान् ॥ दोहकालं गवां दोग्धा
नातिवर्तेत वै द्विजाः ॥३८॥ प्रसरोदकयोर्गोपा मन्थकस्य च मन्थकाः ॥ मासमेकं यथा स्तन्यं मासमेकं स्तनद्वयम् ॥३९॥ सततं पाययेदूर्ध्वं
स्तनमेकं स्तनद्वयम्॥ तिलपिष्टाभिः पिण्डाभिस्तृणेन लवणेन च ॥ वारिणा च यथाकालं पुष्णीयादिति वत्सकान् ॥४०॥ जरद्गुर्गर्भिणी धेनुर्व



१ आयुर्वेदः–इ० पा० । २ लेखनादिति पाठः । ३ देशकालप्रसिद्धितः–इ० पा० । ४ ग्रथम्–इ० पा० । ५ कोद्राश्च–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्सा वत्सतरी तथा ॥ पञ्चानां समभागेन घासं यूथे प्रकल्पयेत् ॥ ४१ ॥ एको गोपालकस्तस्य त्रयाणामथ वा द्वयम् ॥ पञ्चानां वत्सक श्चैकः प्रवरास्तु पृथक्पृथक् ॥ ४२ ॥ गोचरस्यानयनार्थं व्यालानां त्रासनाय[1] च ॥ घण्टाः कर्णेषु बध्नीयुः[2] शोभारक्षार्थमेव च ॥ ४३ ॥ पशव्ये व्यालनिर्मुक्ते देशे भूरितृणोदके ॥ अभूतदुष्टे वारण्ये सदा कुर्वीत गोकुलम् ॥ ४४ ॥ सगुप्तमटवीवासं नित्यं कुर्यादजाविकम् ॥ ऊर्णां वर्षे द्विरा दद्याच्चैत्राश्वयुजमासयोः ॥ ४५ ॥ यूथे वृषा दशैतासां चत्वारः पञ्च वा गवाम् ॥ अश्वोष्ट्रमहिषाणां च यथा स्युः सुखसेविताः ॥ ॥ ४६ ॥ विद्यात्कृपीवलादीनां योगं कृषिककर्मसु ॥ भक्तवेतनलाभं च कर्मकालानुरूपतः ॥ ४७ ॥ क्षेत्रकेदारवाटेषु भृत्यानां कर्म कुर्वताम् ॥ खलेषु[3] च विजानीयात्क्रियायोगं प्रतिक्षणम् ॥ ४८ ॥ योग्यतातिशयं मत्वा कर्मयोगेषु कस्यचित् ॥ ग्रासाच्छादशिरोभ्यंगैर्विशेषं तस्य कार येत् ॥ ४९ ॥ पन्नशाकादिवापानां कन्दबीजादिजन्मनाम् ॥ संग्रहः सर्वबीजानां काले वापः सुभूमिषु ॥ ५० ॥ जातानां रक्षणं सम्यग्रक्षिता नां च संग्रहः ॥ तेषां च संगृहीतानां यथावन्निवपक्रिया ॥ ५१ ॥ गृहमूलं स्त्रियश्चैव धान्यमूलो गृहाश्रमः ॥ तस्माद्धान्येषु भक्तेषु न कुर्यान्मुक्त हस्तताम् ॥ ५२ ॥ धान्यं तु संचितं नित्यं मितो भक्तपरिव्ययः ॥ न चान्ने मुक्तहस्तत्वं गृहिणीनां प्रशस्यते ॥ ५३ ॥ अल्पमित्येव नावज्ञां चरे दन्नेषु वै द्विजाः ॥ मधुवल्मीकयोर्वृद्धिं क्षयं दृष्ट्वांजनस्य च ॥ ५४ ॥ ये केचिदिह निर्दिष्टा व्यापाराः पुरुषोचिताः ॥ दंपत्योरैक्यमास्थाय तद्वि दानप्रसंगतः ॥ ५५ ॥ संत्येव पुरुषा लोके स्त्रीप्रधानाः सहस्रशः ॥ तेषु तासां प्रयोक्तृत्वाददोष इति गृह्यताम् ॥ ५६ ॥ एवं योग्यतया युक्ता सौभाग्येनोद्यमेन च ॥ सम्यगाराध्य भर्तारं तत्रैनं वशमानयेत् ॥ ५७ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि स्त्रीधर्मवर्णनं नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ प्रथमं प्रतिबुध्येत प्रवर्तेत स्वकर्मसु ॥ पश्चाद्भृत्यजनस्यापि भुञ्जीत च शयीत च ॥ १ ॥ भर्त्रा विरहिता स्त्री च श्वशुराभ्यां विशेषतः ॥ देहलीं नातिवर्तेत प्रतीकारे[4] महत्यपि ॥ २ ॥ उत्थाय प्रथमं भर्तुरविज्ञाता न निष्क्रमेत् ॥ क्षपायां सावशेषायां रात्रौ वा वासरादिषु ॥३॥ तद्वासभवनस्यैव शनैराहूय कार्मिकान् ॥ स्वव्यापारेषु तान्सर्वांस्तत्रतत्र नियो जयेत् ॥ ४ ॥ विबुद्धस्य ततो भर्तुर्निर्वर्त्यावश्यकं विधिम् ॥ गृहकार्याणि सर्वाणि विदधीताप्रमादतः ॥५॥ मुक्त्वावासकनेपथ्यं कर्मयोग्यं विधाय च ॥ तत्कालोचितकर्तव्यमनुतिष्ठेद्यथाक्रमम् ॥ ६ ॥ महानसं सुसंमृष्टं चुल्ल्यादिविहितार्चनम् ॥ सर्वोपकरणोपेतमसंबाधमनाविलम् ॥७॥ न चा

१ शासनाय च–इ० पा० । २ घण्टाशब्दश्रवणेन गावो मेऽत्र सन्तीति ज्ञानं जायत इत्येतत्तात्पर्यम् । ३ स्थलेषु–इ० पा० । ४ प्रतीहारे–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तिगुप्तं प्रकटं प्रविभक्तक्रियाश्रयम् ॥ भर्तुराप्तजनाकीर्णं गूढं कक्षादिवर्जितम् ॥ ८ ॥ तत्र पाकादिभांडानि बहिरंतश्च कारयेत् ॥ निर्णिक्तमलपंकानि शुक्तिवल्कादिचूर्णकैः ॥ ९ ॥ निशि कुर्वीत धूमार्चिः शोधितानि दिवातपैः ॥ दधिपात्राणि कुर्वीत सदैवांतरितानि च ॥ १० ॥ साधुकारितदुग्धेषु शोधितेषु दिवातपे ॥ ईषद्भूद्धोक्तपात्रेषु स्वच्छं येन भवेद्दधि ॥ ११ ॥ स्नेहगोरसपाकादि कृत्वा सुप्रत्यवेक्षितम् ॥ कुर्यात्स्वयमधिष्ठाय भर्तुः पाकविधिक्रियाम् ॥१२॥ किं प्रियं च किमाग्नेयं षड्रसाभ्यंतरेषु च ॥ किं पथ्यं किमपथ्यं च स्वास्थ्यं वास्य कथं भवेत् ॥ इति यत्नाद्विजानीयादनुष्ठेयं च तत्तथा ॥ १३ ॥ नित्यानुरागं सत्कारमाहारं सुपरीक्षितम् ॥ महानसादौ कुर्वीत जनमाप्तं क्रमागतम् ॥ १४ ॥ शत्रुं दायादसंबंधं क्रुद्धभीतावमानितम् ॥ अवाच्योपगृहीतं वा नैवमादीनि योजयेत् ॥ १५ ॥ पुनःपुनः प्रतिष्ठाप्य गुप्तं स्वयमधिष्ठितम् ॥ भर्तुराहारपानादि विदध्यादप्रमादतः ॥१६ ॥ पाकं निर्वर्त्य मात्राणां कृत्वा स्वेदप्रमार्जनम् ॥ गन्धतांबूलमाल्यादि किंचिदादाय मात्रया ॥१७ ॥ यथौचित्यादितत्काले भर्तुर्विनयसंभ्रमैः ॥ तत्कालानुगतात्यर्थमाहारसुपपादयेत् ॥ १८ ॥ स्वभावामयकालानां वैपरीत्येन सर्वदा ॥ सर्वमाहारपानादि प्रयोज्यं तद्विदो जगुः ॥ १९ ॥ हीनतुल्याधिकत्वेन भर्ता पश्यति यं यथा ॥ तं तथैवाधिकं पश्येन्न्यायतः प्रतिपत्तिषु ॥२०॥ सापत्नकान्यपत्यानि पश्येत्स्वेभ्यो विशेषतः ॥ भगिनीवत्सपत्नीश्च तद्वधूर्निजबन्धुवत् ॥ २१ ॥ ग्रासाच्छादशिरोभ्यंगस्नानमंडनकादिकम् ॥ सपत्नीनामकृत्वा तु आत्मनोऽपि न कारयेत् ॥ २२ ॥ व्याधितानां चिकित्सार्थमौषधादिकमादरात् ॥ विदध्यादात्मनस्तासां सर्वाश्रितजनस्य च ॥ २३ ॥ तच्छोके शुचमादद्यात्तुष्टौ मुदमावहेत् ॥ भृत्यबन्धुसपत्नीनां तुल्यदुःखसुखा भवेत् ॥ २४ ॥ लब्धावकाशा स्वप्याच्च निशि सुप्तोत्थिता क्रमात् ॥ अन्यत्र व्ययकर्तारं पतिं रहसि बोधयेत् ॥ २५ ॥ यदवद्यं सपत्नीनां स्वयमस्मै न तद्वदेत् ॥ दौःशील्यादि तु सापायं गूढमस्मै निवेदयेत् ॥ २६ ॥ दुर्भगामनपत्यां वा भर्त्रा चातितिरस्कृताम् ॥ [2]अदुष्टां सम्यमाश्वास्य तेनैतामनुकूलयेत् ॥ २७ ॥ तथा वाग्दण्डपारुष्यैर्जनं भर्त्रा विपीडितम् ॥ कुर्याद्विधेयमाश्वास्य न चेद्दोषाय तद्भवेत् ॥ २८ ॥ मत्वात्मनोनपत्यत्वं कालं चापि गतं बहुम् ॥ संतानादिकमुद्दिश्य कार्यमात्मनिवेदनम् ॥ २९ ॥ यच्चान्यदपि जानीयात्किंचिदस्य चिकीर्षितम् ॥ तत्किलाजानतीवास्य सिद्धमेव प्रदर्शयेत् ॥ ३० ॥ वैवाहिकं विधिं भर्तुः सर्वं कृत्वा ससंभ्रमम् ॥ परिणीतां च तां पश्येन्नित्यं भगिनिकामिव ॥ ३१ ॥ पूजां संबंधिवर्गस्य मंगलं मंडलानि च ॥ कुर्यादभिनवोढायाः सुप्रहृष्टेन चेतसा ॥ ३२ ॥



१ सात्म्यं चास्य यथा भवेत्–इ० पा० । २ अधस्तां सम्यगावास्य तस्यै चान्नं प्रकल्पयेत्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातृवच्छिक्षयेदेनां गृहकृत्येष्वमत्सरा ॥ प्रदेशिकविधिं वास्या विदध्याद्यत्नतः स्वयम् ॥ ३३ ॥ एवं भर्तुरभिप्राय सर्वमित्यादिकारयेत् ॥ सुखार्थं वापि संत्यज्य स्त्रीणां भर्ताधिदेवता ॥ ३४ ॥ भर्ताधिदेवता नार्या वर्णा ब्राह्मणदेवताः ॥ ब्राह्मणा ह्यग्निदेवास्तु प्रजा राजन्यदेवताः ॥३५॥ तासां त्रिवर्गसंसिद्धौ प्रदिष्टं कारणद्वयम् ॥ भर्तुर्यदनुकूलत्वं यच्च शीलमविप्लुतम् ॥ ३६ ॥ न तथा यौवनं लोके नापि रूपं न भूषणम् ॥ यथा प्रियानुकूलत्वं सिद्धं शश्वदनौषधम् ॥ ३७ ॥ वयोरूपादिहारिण्यो दृश्यंते दुर्भगाः स्त्रियः ॥ वल्लभा मंदरूपाश्च बह्व्यो गलितयौवनाः ॥ ३८ ॥ तस्मात्प्रियत्वं लोकानां निदानं योग्यतापरम् ॥ तां विनान्ये गुणा वन्ध्याः सर्वेऽनर्थकृतोपि वा ॥ ३९ ॥ तस्मात्सर्वप्रयत्नेन विदध्यादात्मयोग्यताम् ॥ परचित्तज्ञता चास्या मूलं सर्वक्रियास्विह ॥ ४० ॥ बहिरागच्छतो ज्ञात्वा कालं संमृज्य भूमिकाम् ॥ सज्जीकृतासना तिष्ठेत्तस्याज्ञां प्रतितत्परा ॥ ४१ ॥ स्वयं प्रक्षालयेत्पादावुत्थाप्य परिचारिकाम् ॥ तालवृंतादिकैः कुर्याच्छ्रमस्वेदापनोदनम् ॥४२॥ आहारस्नानपानादौ सस्पृहं यत्र लक्षयेत ॥ तदिंगितज्ञा तत्त्वेन सिद्धमस्मै निवेदयेत् ॥४३ ॥ सपत्नीपतिबंधूनां भर्तृचित्तानुकूल्यतः ॥ प्रतिपत्तिं प्रयुंजीत स्वबंधूनां न वै तथा ॥ ॥ ४४ ॥ तेषु चात्मनि च ज्ञात्वा भर्तृचित्तं प्रसादयेत ॥ प्रतिपत्तिं तथाप्येषां नाद्रियेत स्वबंधुषु ॥ ४५ ॥ अपि भर्तुरभिप्रेतं नारी तत्कुलवासिनी ॥ सत्कारैर्निजबंधूनां तेन नोपैति वाच्यताम् ॥४६॥ पूज्य एव हि संबंधः सर्वावस्थासु योषिताम् ॥ कस्ततोऽप्युपकारांशं लिप्सेत कुलजः पुमान् ॥ ४७ ॥ संपूज्य स्वसुतां तस्मै विधिवत्प्रतिपाद्यते ॥ ततोऽस्या लिप्सते नाम किमकार्यमतः परम् ॥ ४८ ॥ कन्यां प्रदाय यैर्वृत्तिरात्मनः परिकल्प्यते ॥ दासभंडनटादीनां मार्गोयं न महात्मनाम् ॥४९॥ तस्मात्स्त्रीबांधवा नित्यं प्रीतिमात्रैकसाधिनीम् ॥ प्रतिपत्तिं समादद्युः संबंधिभ्यः प्रसंगिनीम् ॥ ५० ॥ तस्या भर्तरि रक्षेत प्रीतिं लोके च वाच्यताम् ॥ आत्मनोऽसत्प्रवादं च चेष्टेरन्साधुवृत्तयः ॥ ५१ ॥ एवं विज्ञाय सद्वृत्तं स्त्री वर्त्तेत तथा सदा ॥ येन तत्परिवर्गस्य भवेद्भर्तुश्च संमता ॥ ५२ ॥ प्रियापि साधुवृत्तापि विख्याताभिजनापि च ॥ जनापवादात्संप्राप सीतानर्थं सुदारुणम् ॥५३॥ सर्वस्यामिपभूतत्वाद्गुणदोषानभिज्ञतः ॥ प्रायेणाविनयौचित्यात्स्त्रीणां वृत्तं हि दुष्करम् ॥ ५४ ॥ अगृह्यत्वान्मनोवृत्तेः प्रायः कपटदर्शनात् ॥ निरंकुशत्वाल्लोकस्य निर्वाच्या विरलाः स्त्रियः ॥ ५५ ॥ दैवयोगादयोगत्वाद्व्यवहारानभिज्ञतः ॥ वाच्यतापत्तयो दृष्टाः स्त्रीणां शुद्धेपि चेतसि ॥ ५६ ॥ तासां दैवप्रतीकारो नोपभोगादृते भवेत् ॥ चारित्रं लोकवृत्तं च एतयोर्विदुरौषधम् ॥५७॥ हिंदोलकादिक्रीडायां प्रसक्तां

१ क्षमता परा–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तरुणीं निशि ॥ रममाणां विटैः सार्धं विधवां स्वैरचारिणीम् ॥५८॥ वृद्धादिभार्यां संज्ञायां यानगेयादिसंगिनीम् ॥ कःश्रद्दध्यात्सतीत्येवं साध्वीमपि हि योषितम् ॥ ५९ ॥ यौ चासामिंगिताकारौ संदिग्धार्थप्रसाधकौ ॥ तयोस्तत्त्वपरिज्ञानं विषयो योगिनां यदि॥६०॥ तस्माद्यथोक्तमाचारमनुतिष्ठेत्सुसंयता ॥ मिथ्यालग्नोऽप्यसद्वादः कंपयत्येव तत्कुलम् ॥६१॥ त्रिकुल्या वाच्यता रक्ष्या प्रतिष्ठाप्यथ संततिः ॥ भर्तुस्त्रिवर्गसिद्धिश्चसाध्यं तत्कुलयोषिताम् ॥६२॥ पातयंत्येव दौःशील्यादात्मानं सकुलत्रयम् ॥ उद्धरंति तदेवैताः स्त्रियश्चारित्रभूषणाः॥६३॥भर्तृचित्तानुकूलत्वं यासां शीलमविच्युतम् ॥ तासां रत्नसुवर्णादि भार एव न मण्डनम् ॥ ६४ ॥ लोकज्ञाने परा कोटिः पत्यौ भक्तिश्च शाश्वती ॥ शुद्धान्वयानां नारीणां विद्यादेतत्कुलव्रतम् ॥६५॥ तस्माल्लोकश्च भर्ता च सम्यगाराधितो यया ॥ धर्ममर्थं च कामं च सैवाप्नोति निरत्यया ॥६६॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि स्त्रीधर्मकथनं नाम त्रयोदशोऽध्यायः ॥१३॥ ॥छ॥ ॥ ब्रह्मोवाच ॥ ॥ प्रोषिते मंडनं स्त्रीणां पत्यौ मंगलमात्रकम्॥निष्पादनं च यत्नेन तदारब्धस्य कर्मणः॥१॥शय्यागुरुसमीपे स्याद्देहसंस्कारवर्जनम् ॥ समुपार्जनमर्थानां व्ययानां परिहापणम् ॥ २ ॥ व्रतोपवासतात्पर्यं तद्वार्तापरिमार्गणम् ॥ दैवज्ञेक्षणिकप्रश्नो देवानामुपयाचनम् ॥३॥ नित्यं तस्यागमाशंसा क्षेमार्थं देवपूजनम् ॥ न चात्युज्ज्वलवेषत्वं न सदा तैलधारणम् ॥ ४ ॥ ज्ञातिवेश्म न गंतव्यं सकामगमनेन च ॥ गुरूणामाज्ञया यावद्भर्तुराप्तजनैः सह ॥ ५ ॥ तत्रापि न चिरं तिष्ठेत्स्नानादीन्वापि नाचरेत् ॥ यावदर्थं क्षणं स्थित्वा ततः शीघ्रं समाचरेत् ॥ ६ ॥ आगते प्रकृतिस्थैव कृत्वा तात्कालिकं विधिम् ॥ मुक्तप्रवासने पथ्ये स्नाते भुक्तवति प्रिये ॥ ७ ॥ आत्मानं समलंकृत्य सविशेषं मुदान्विता ॥ देवपूजोपहारादीन्दद्यात्प्रागुपपादितान् ॥ ८ ॥ कनिष्ठामातृवज्ज्येष्ठां तदपत्यानि चात्मवत् ॥ पश्येत्तत्परिवर्गं तु नित्यं स्वपरिवर्गवत् ॥ ९ ॥ तत्पुरोनासने तिष्ठेत्पतिं नामंत्रयेत च ॥ तदभिप्रायतः कुर्यात्प्रवृत्तिं सर्वकर्मसु ॥ १० ॥ न संसृजेत तद्विष्टैः सख्यं कुर्वीत तत्प्रियैः ॥ जनमाप्ततमं तस्य सदाभर्तुश्च मानयेत् ॥ ११॥ पैतृकात्समुपानीतं वसुसौगंधिकादिकम् ॥ तस्मै निवेद्यात्मतया तदा तदुपयोजयेत् ॥ १२ ॥ सोपि तत्प्रीतये किंचिदादद्यादल्पमूल्यकम् ॥ संगोप्य मातृवत्स्थेयं तत्तथैवोपयोजयेत् ॥ १३ ॥ तत्प्रीत्यर्थं गृहीतं यद्वैलक्ष्यादिनिवृत्तये ॥ सविशेषं प्रसंगेन तस्यैतत्प्रतिपादयेत् ॥ १४ ॥ स्त्रीणां यदे



---

१ सती चासौ जाया चेति कर्मधारयः। २ यदि योगिनां स्याच्चर्हि स्यान्नास्माकमित्यवान्तरवाक्यम्। ३ न विप्लुतम्–इ० पा०। ४ अवश्यं गमनेन च–इ०पा०। ५ तस्मै–इ० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्सापत्न्यं परं मात्सर्यकारणम् ॥ तस्मात्तत्परिहर्तव्यं परमोदार[1]चर्यया ॥ १५ ॥ तथा कल्पितनेपथ्या भर्तुः पर्यायवासरे ॥ ह्रियमा[2]दयमानेव पतिं गच्छेद्विसर्जिता ॥ १६ ॥ गत्वा रहसि भर्तारं तत्कालोचितसंभ्रमैः ॥ तद्भावानुगतैस्तैस्तैः सविशेषमुपाचरेत् ॥ १७ ॥ प्रतिबुध्य ततः काले सविशेषं त्रपान्विता ॥ ज्येष्ठाय वसतिं गच्छेद्विशेषेण तथा पुनः ॥ १८ ॥ अप्रातिकूल्यं ज्येष्ठाया हित मन्यत्र योषितः ॥ ततः शनैस्त्ववच्छिद्य पतिं स्ववशमानयेत् ॥ १९ ॥ बहिष्पाकादियोगेन चतुःषष्ट्या रहोगतम् ॥ ज्येष्ठामतिशया नेव भर्तारमुपरंजयेत् ॥ २० ॥ प्रागल्भ्यं रहसि स्त्रीणां लज्जाधिक्यं ततोऽन्यदा ॥ चित्तज्ञानानुवृत्तिश्च पत्यौ संसेवनं परम् ॥ २१ ॥ एवमाराध्य भर्तारं गृहमाक्रम्य च क्रमात् ॥ गौरवं प्रतिपत्तिं वा ज्येष्ठादिषु न हापयेत् ॥ २२ ॥ गृहव्यापारदानेषु पतिं गूढं तथा वदेत् ॥ अधिकुर्यादनिच्छंती ज्येष्ठैवेनां यथा बलात् ॥ २३ ॥ सापि विज्ञाय भर्तारं कनिष्ठाकृष्टमानसम् ॥ विश्रामं प्रार्थयेदेनामधिकुर्यात्सुतामिव ॥ २४ ॥ मत्वा भर्तुरभिप्रेतं रक्षंती निजगौरवम् ॥ कृतं भर्त्रनुकूलं स्यात्तदिष्टायानुमोदयेत् ॥ २५ ॥ स्वामिनो यदभिप्रेतं भृत्यैः किं क्रियतेऽन्यथा ॥ क्लिश्यते तत्र मूढात्मा परतन्त्रो वृथा जनः ॥ २६ ॥ तस्मात्सर्वास्ववस्थासु मनोवाक्कायकर्मभिः ॥ हितं स्वाम्यनुकूलत्वं नारीणां तु विशेषतः ॥ २७ ॥ सापि ज्येष्ठा पतिं चैव गृहतंत्रं च सर्वदा ॥ समावर्ज्य गुणैर्धीरा प्रागवस्थां न विस्मरेत् ॥ २८ ॥ न सौभाग्यमदं कुर्यान्न चौद्धत्यादिविक्रियाम् ॥ नितरामानतिं गच्छेत्सदानार्यभयादिव ॥२९॥ यथा योग्यतया पत्यौ सौभाग्यमभिवर्धते ॥ स्पर्धयेच्च कुलस्त्रीणां प्रश्रयोपाधिकं तथा ॥ ३० ॥ एवमाराध्य भर्तारं तत्कार्येष्वप्रमादिनी ॥ पूज्यानां पूजने नित्यं भृत्यानां भरणेषु च ॥ ३१ ॥ गुणानामर्जने नित्यं शीलवत्परिरक्षणे ॥ प्रेत्य चेह च निर्द्वंद्वं सुखमाप्नो त्यनुत्तमम् ॥ ३२ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि स्त्रीधर्मेषु सपत्नीकर्तव्यवर्णनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ब्रह्मोवाच ॥ ॥ दुर्भगा च पुनर्नित्यमुपवासादितत्परा ॥ बाह्येषु पतिकृत्येषु स्याद्विशेषाभियोगिनी ॥ १ ॥ न प्रशंसां सपत्नीषु निंदां चापि तथात्मनि ॥ असूयां भर्तुरीर्ष्यां वा प्रणयं वापि दर्शयेत् ॥२॥ मद्विधा या हि बह्वेतत्तच्चात्यंतिकमश्नुते ॥ यदस्या युष्मतो यायाद्भार्याशब्दाभिधेयताम् ॥ ३ ॥ न च निर्भूषणा तिष्ठेन्न चाप्युद्धतभूषणा ॥ नान्यदा गंधमाल्यादि ग्राह्यं पत्युपचारतः ॥ ४ ॥ न्यूनं सर्वशो ग्राह्यं वल्लभाया विशेषतः ॥ भूषणं गंधमाल्यं तु तावत्कालमलक्षितम् ॥ ५ ॥ संबाधानां प्रदेशानां नित्यं स्वेदादिमार्जनम् ॥ दंतनासादिषं

१ परमोदारकर्मणा–इ० पा० । २ दयतेः ज्ञानार्थे रूपम् । ३ विज्ञाय–इ० पा० । ४ स्त्रिया कार्यभरादिषु–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कानां विगंधस्य च शोधनम् ॥ ६ ॥ निमित्तं भर्तुरेतासां यत्किंचिदभिलक्षयेत् ॥ नानेन वा तयोर्यत्नं विदध्यादंगमार्जने ॥ ७ ॥ सर्वासां च सपत्नीनां सर्वत्रानुगता भवेत् ॥ वैतसीं वृत्तिमास्थाय वल्लभाया विशेषतः ॥ ८ ॥ अन्यस्या यदनुष्ठेयं यत्र सीदेत्समर्पितम् ॥ भर्तुश्चाविदितं यत्नात्तत्कुर्यादविरोधि चेत् ॥ ९ ॥ कोशवस्त्रान्नतांबूलगंधपानौषधादिकम् ॥ तत्सर्वमनियुक्तानां दोषवत्वाद्विरुध्यते ॥ १० ॥ यत्तु मुक्तमनुष्ठेयं गृहसंमार्जनादिकम् ॥ स्त्रीणामनधिकारेऽपि प्रायस्तद्विधिरुच्यते ॥ ११ ॥ अभ्यंगोद्वर्तनं स्नानं भोजनं मंडनानि च ॥ कुर्याद्भर्तुरपत्यानां धात्रीकर्माणि सादरम् ॥ १२ ॥ आत्मवत्तान्यपत्यानि साधयत्यनुयोगतः ॥ स्वेनाप्यमीषां वित्तेन विदध्यान्मंडनादिकम् ॥ १३ ॥ भोगः स्वयमपत्यैर्वा स्त्रीवित्तस्य पतिर्विधा ॥ पूर्वे वयस्यभिनंद्य पश्चिमे चोपयोजनम् ॥१४॥ उभयोगस्तु वा मा वा कर्मजः पृथगेव सः ॥ सद्वृत्ते त्वधिकां ख्यातिं कुर्वीत क्रियया पुनः ॥ १५ ॥ न कापि दुर्भगा नाम सुभगा नाम जातितः ॥ व्यवहाराद्भवत्येष निर्देशो रिपुमित्रवत् ॥ १६ ॥ भर्तृचित्तापरिज्ञानादननुष्ठानतोऽपि वा ॥ वृत्तैर्लोकविरुद्धैश्च यांति दुर्भगतां स्त्रियः ॥ १७ ॥ आनुकूल्यान्मनोवृत्तेः परोऽपि प्रियतां व्रजेत् ॥ प्रातिकूल्यान्निजोप्याशु प्रियः प्रद्वेषतामियात् ॥ १८ ॥ तस्मात्सर्वास्ववस्थासु मनोवाक्कायकर्मभिः ॥ प्रियं समाचरेन्नित्यं तच्चित्तानुविधायिनी ॥ १९ ॥ यामन्यां कामयेत्तासां तं तया संप्रयोजयेत् ॥ कुपितां च प्रियां कांचिद्यत्नादस्मै प्रसादयेत् ॥ २० ॥ तत्पादपरिचर्यायां गात्रसंवाहने तथा[1] ॥ पीडने शिरसश्चैव परं कौशलमभ्यसेत् ॥ २१ ॥ पीडनं मृदु मध्यं च गात्रावस्थाविशेषतः ॥ मुखगात्रादिभिर्लिंगैः प्रयोज्यं तत्सुखावहम् ॥ २२ ॥ बाहूरुकटिपृष्ठेषु[2] स्कंधे शिरसि पादयोः ॥ गाढमर्दनमिच्छंति प्रायोन्यत्रापि मध्यमम् ॥ २३ ॥ निर्मांसेषु प्रदेशेषु नाभिमूलेषु मर्मसु ॥ हृद्गंडककपोलादाविच्छंति मृदु मर्दनम् ॥ २४ ॥ गाढं जाग्रदवस्थायामर्धसुप्तस्य मध्यमम् ॥ किंचित्सपरिघातं च मृदुसुप्तस्य नेति वा ॥ २५ ॥ विरुद्धं सर्वगात्रेषु लोमवत्सु विशेषतः ॥ उत्कंडूयत्सु सोद्धर्षं स्नेहाक्तेषु च मर्दनम् ॥ २६ ॥ स्पर्शाद्रोमांचजननं सनखच्छुरितं शनैः ॥ पुलकोल्लेखनोपेतं शिरःकंडूश्च पार्श्वयोः ॥ ॥ २७ ॥ तेषुतेषु च गात्रेषु तत्प्रयोज्यं तथातथा ॥ निद्रागमाय तत्काले रागसंधुक्षणाय च ॥ २८ ॥ तिष्ठतश्चोपविष्टस्य[3] जाग्रतः स्वपतोऽपि वा ॥ संवाहनं प्रशंसंति यदत्यर्थं सुखावहम् ॥ २९ ॥ नैष्पंद्यं पुलकोद्भेदो गात्राणामक्षिमीलनम् ॥ तत्प्रदेशार्पणं किंचिद्बोधेद्रिक्तदर्शनम् ॥ ३० ॥ ऊरुमूलादिदेशे च तत्पाणिप्रतिपीडनम् ॥ लक्षयेन्निपुणा[4] यत्र तत्रैवाधिकमाचरेत् ॥ ३१ ॥ एवमेव यथोद्दिष्टं स्त्रीवृत्तं यानुतिष्ठति[5] ॥ पतिमाराध्य संपूर्णं त्रिवर्गं साधिगच्छति ॥३२॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि स्त्रीधर्मवर्णनं नाम पंचदशोऽध्यायः ॥१५॥ छ ॥



१ पादसंवाहने तथा—इ० पा० । २ कटिगुह्येषु—इ० पा० । ३ संविष्टस्योपविष्टस्य—इ० पा० । ४ न क्षयंति मणा यत्र—इ० पा० । ५ अधितिष्ठति—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ ॥ सुमन्तुरुवाच ॥ ॥ इत्युक्त्वा भगवान्ब्रह्मा स्त्रीलक्षणमशेषतः ॥ सद्वृत्तं च तथा स्त्रीणां जगाम स निजालयम् ॥१॥ ऋषयश्च तथा जग्मुः स्वानि धिष्ण्यान्यशेषतः ॥ स्त्रीलक्षणं तथा वृत्तं श्रुत्वा कृत्स्नं महीपते ॥ २ ॥ इत्थं लक्षणसंपन्नां भार्यां प्राप्य महीपते ॥ कर्तव्यं यद्गृहस्थेन तदिदानीं निबोध मे॥३॥ वैवाहिकाग्नौ कुर्वीत गृह्यं कर्म यथाविधि ॥ पञ्चयज्ञविधानं तु पक्तिं कुर्यात्सदा गृही॥४॥ पञ्च सूना गृहस्थस्य तेन स्वर्गं न गच्छति ॥ कण्डनी पेषणी चुल्ली उदकुंभीः प्रमार्जनी ॥ ५ ॥ आसां क्रमेण सर्वासां विशुद्ध्यर्थं मनीषिभिः ॥ पञ्चोदिष्टा महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥ ६ ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञश्च तर्पणम् ॥ होमो दैवो बलिर्भौमस्तथान्योऽतिथिपूजनम् ॥ ७ ॥ पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः ॥ स गृहेपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥ ८ ॥ देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ॥ न निर्वपति पञ्चाना मुच्छ्वसन्न च जीवति ॥ ९ ॥ ॥ शतानीक उवाच ॥ ॥ यस्य नास्ति गृहे त्वग्निः स मृतो नात्र संशयः ॥ न स पूजयितुं शक्तो देवादीन्ब्राह्मणोत्तमः ॥१०॥ निरग्निकस्य विप्रस्य कथं देवादयो द्विज ॥ प्रीताः स्युः शान्तये तस्य परं कौतूहलं मम ॥ ११ ॥ ॥ सुमंतुरुवाच ॥ ॥ साधु पृष्टोऽस्मि राजेन्द्र श्रूयतां परमं वचः ॥ अनग्नयस्तु ये विप्रास्तेषां श्रेयोऽभिधीयते ॥१२॥ व्रतोपवासनियमैर्[1]नानादानैस्[2]तथा नृप ॥ देवादयो भवन्त्येव प्रीतास्तेषां न संशयः ॥ १३ ॥ विशेषादुपवासेन तिथौ किल महीपते ॥ प्रीता देवादयस्तेषां भवन्ति कुरुनन्दन ॥ १४ ॥ ॥ ॥ ॥ शतानीक उवाच ॥ ॥ भगवंस्त्वं तिथीन्ब्रूहि तिथीनां च विधिं हि मे ॥ प्राशनं गृह्यधर्मांश्च उपवासविधीनपि ॥ १५ ॥ मुच्येम येन पापौघात्त्वत्प्रसादाद्द्विजोत्तम ॥ संसाराच्चापि विप्रेन्द्र श्रेयसे जगतस्तथा ॥ १६ ॥ ॥ सुमंतुरुवाच ॥ ॥ शृणु कौरव कर्माणि तिथिगुह्याश्रितानि तु ॥ श्रुतानि घ्नंति पापानि उपोषितफलानि च ॥ १७ ॥ प्रतिपदि क्षीरप्राशनं द्वितीयायां लवणवर्जनम् ॥ तृतीयायां तिलान्नं प्राश्नीयाच्चतुर्थ्यां क्षीराशनश्च पञ्चम्याम् ॥ फलाशनः सदा षष्ठ्यां शाकाशनः सप्तम्यां बिल्वाहारोऽष्टम्यां तु ॥ १८ ॥ पिष्टाशनो नवम्यामनग्निपाकाहारो दशम्यामेकादश्यां घृताहारो द्वादश्यां पायसाहारः ॥ त्रयोदश्यां गोमूत्राहारश्चतुर्दश्यां यवान्नाहारः ॥ १९ ॥ कुशोदकप्राशनः पौर्णमास्यां हविष्याहारोऽमावास्यायाम् ॥ एष प्राशनविधिस्तिथीनामेव चानेन विधिना पक्षमेकं यो वर्तयति ॥ २० ॥ सोऽश्वमेधफलं दशगुणफलमवाप्नोति ॥ स्वर्गे मन्वन्तराणि यावत्प्रतिवसति ॥ २१ ॥ उपगीयमानोप्सरोगन्धर्वैर्मासत्रयचतुष्टयम् ॥ सोऽश्वमेधराजसूयानां शतगुणमवाप्नोति ॥ २२ ॥

१ निष्कृत्यर्थम्—इ० पा० । २ स्तुतिदानैः—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वर्गे उपगीयमानोप्सरोगन्धर्वैश्चतुर्युगानां दशशतीर्यावत्प्रतिवसति ॥ तथाष्टमासपारणे राजसूयाश्वमेधाभ्यां सहस्रगुणफलमवाप्नोति ॥ २३ ॥ स्वर्गे चतुर्दश मन्वन्तराणि यावत्प्रतिवसति ॥ उपगीयमानोप्सरोगन्धर्वैर्य एवं नियममास्थाय वर्षमेकं वर्तयति ॥ २४ ॥ स सवितुर्लोके कालं मन्वन्तरं प्रतिवसति ॥ २५ ॥ य एवं नियमान्राजन्नाश्वयुजनवम्यां माघमासस्य सप्तम्यां वैशाखतृतीयायां कार्तिकपौर्णमास्यां तिथिव्रतानि गृह्णाति ब्रह्मचारी गृहस्थो वनस्थो नारी नरो वा शूद्रः प्रयतमानसः दीर्घायुष्यं सवितुः सालोक्यं व्रजति ॥ २६ ॥ यैश्चापि पुरा राजन्ननेन विधिना एतासु तिथिष्वन्यजन्मान्तरे उपवासविधिः कृतः दानानि दत्तानि विविधप्रकाराणि ब्राह्मणानां तपस्विजनेषु वा ॥ २७ ॥ त्रिरात्रोपवासिनां तीर्थयात्रातपोगुरुमातापितृशुश्रूषानिरतानां तेषां स्वर्गादिभोगवासनादिहागतानां फलनिष्पत्तिचिह्नानि मनुष्यलोके प्रत्यक्षत एव दृश्यंते॥२८॥ हस्त्यश्वयानयुग्यधनरत्नकनकहिरण्यकटककेयूरग्रैवेयककटिसूत्रब्रह्मसूत्रकर्णालंकारमुकुटवरवस्त्रवरनारीवरविलेपनसुरूपगुणदीर्घायुषो विगताधिव्याधयो दानोपवासरतानां फलान्येतानि नृत्यगीतवादित्रमङ्गलपाठकशब्दैरिहाद्यापि पुण्यकृतो बोध्यमाना दृश्यन्त इति॥२९॥तथाकृतोपवासा अपि हि दृश्यंते॥ ॥ ३० ॥ तथा अदत्तदाना अकृतपुण्याश्च प्रत्यक्षत एव दृश्यंते ॥ ३१ ॥ तद्यथा काणकुष्ठिबधिरजडमूकव्यंगा रोगदारिद्र्योपसर्गव्याधिहतायुषश्च दृश्यंतेऽद्यापि मानवाः ॥ ३२ ॥ ॥ शतानीक उवाच ॥ ॥ द्विजेंद्र तिथयः प्रोक्ताः समासेन त्वया बुध ॥ विस्तरेणैव मे भूयः प्रब्रूहि द्विजसत्तम ॥ ॥३३॥ रहस्यं यत्तिथीनां तु देवानां च विचेष्टितम् ॥ यानीष्टानि च देवानां भोज्यानि नियमास्तथा॥३४॥तानि मे वद धर्मज्ञ येन पूतो भवेन्वहम्॥ निर्द्वंद्वो हि यथा विप्र लभे यागफलानि तु ॥३५॥ ॥ सुमंतुरुवाच ॥ ॥ रहस्यं यत्तिथीनां च भोजनं फलमेव तु ॥ यावच्च येन नियमो विशेषात्स्त्रीजनस्य च ॥ ३६ ॥ एतत्ते सर्वमाख्यामो रहस्यं तन्निबोध मे ॥ यन्मया नोक्तपूर्वं हि कस्यचित्सुप्रियस्य हि ॥ ३७ ॥ तत्तेहं संप्रवक्ष्यामि यस्य देवस्य या तिथिः ॥ देवतानां रहस्यानि व्रतानि नियमास्तथा ॥ ३८ ॥ तान्छृणुष्व महाबाहो गदतो मम नारद ॥ सृष्टिं पूर्वं वदिष्यामि संक्षेपेण तिथिं प्रति ॥ ३९ ॥ तमोभूतमिदं त्वासीदलक्ष्यमवितर्कितम् ॥ जगद्ब्रह्मा समागत्यासृजदात्मानमात्मना ॥ ४० ॥ संभूतात्मैव आत्मासावण्डमध्याद्विनिःसृतः ॥ आत्मनैवात्मनो ह्यण्डं सृष्ट्वा स विभुरादितः ॥४१॥ ब्रह्मा नारायणाख्योसौ सृष्टिं कर्तुं समुद्यतः ॥ ताभ्यां सोंडकपालाभ्यां दिवं भूमिं च निर्ममे ॥ ४२ ॥ दिशश्चोपदिशश्चैव देवादीन्दानवांस्तथा ॥ तिथिं पूर्वामिमां राजंश्चकाराथ विभुः स्वयम् ॥ ४३ ॥ तिथीनां प्रवरा यस्माद्ब्रह्मणा समुदाहृता ॥ प्रतिपादितापरे पूर्वे प्रतिपत्तेन तूच्यते ॥ ४४ ॥ अस्मात्पदात्तु तिथयो यस्मात्त्वन्याः प्रकीर्तिताः ॥ अस्यांते कथयिष्यामि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपवासविधिं परम् ॥ ४५ ॥ कार्त्तिक्यां माघसप्तम्यां वैशाखस्य युगादिषु ॥ नियमोपवासं प्रथमं ग्राहयेत विधानवित् ॥ ४६ ॥ यां तिथिं नियमं कर्तुं भक्त्या समनुगच्छति ॥ तस्यां तिथौ विधानं यत्तन्निबोध जनाधिप ॥ ४७ ॥ यदा तु प्रतिपद्यां वै गृह्णीयान्नियमं नृप ॥ चतुर्दश्यां कृताहारः संकल्पं परिकल्पयेत् ॥ ४८ ॥ अमावास्यां न भुञ्जीत त्रिकालं स्नानमाचरेत् ॥ पवित्रो हि जपेन्नित्यं गायत्रीं शिरसा सह ॥ ४९ ॥ अर्चयित्वा प्रभाते तु गन्धमाल्यैर्द्विजोत्तमान् ॥ शक्त्या क्षीरं प्रदद्यात्तु ब्रह्मा मे प्रीयतां प्रभुः ॥ ५० ॥ ततो भुञ्जीत गोक्षीरमनेन विधिना नृप ॥ एष एव विधिर्दृष्टः सर्वासु तिथिषु नृप ॥ ५१ ॥ संवत्सरगते काले व्रतमेतत्समाप्यते ॥ व्रतांते यत्फलं तस्य तन्निबोध नराधिप ॥ ५२ ॥ विमुक्तपापः शुद्धात्मा दिव्यदेहस्य देहिनः ॥ ब्रह्मा ददाति संतुष्टो विमानमतितेजसम् ॥ अव्याहतगतिं दिव्यं किन्नराप्सरसैर्युतम् ॥ ५३ ॥ रमित्वा सुचिरं तत्र दैवतैः सह देववत् ॥ इह चागत्य विप्रत्वं दश जन्मान्यसौ लभेत् ॥ ५४ ॥ वेदवेदांगविद्यश्च दीर्घायुश्चैव सुप्रभः ॥ भोगी धनपतिर्दाता जायतेऽसौ कृते युगे ॥ ॥ ५५ ॥ विश्वामित्रस्तु राजेन्द्र ब्राह्मणत्वजिगीषया ॥ तपश्चचार विपुलं संतापाय दिवौकसाम् ॥ ब्राह्मणत्वं न लेभेऽसौ लेभे विघ्ननेकशः ॥ ॥ ५६ ॥ ततस्तु नियमात्तेषां तिथीनां प्रवरा तिथिः ॥ उपोषिता बहुविधा ज्ञात्वा ब्रह्मप्रियां तिथिम् ॥ ५७ ॥ ततो देवो ददौ ब्रह्मा विश्वामित्राय धीमते ॥ इहैव तेन देहेन ब्राह्मणत्वं सुदुर्लभम् ॥ ५८ ॥ तिथीनां प्रवरा ह्येषा तिथीनामुत्तमा तिथिः ॥ क्षत्रियो वैश्यशूद्रो वा ब्राह्मणत्वमवाप्नुयुः ॥ ॥ ५९ ॥ एवं तिथिरियं राजन्कामदा कंजजप्रिया ॥ सरहस्या मया प्रोक्ता या नोक्ता यस्य कस्यचित् ॥ ६० ॥ हैहयैस्तालजंघैश्च तुरुष्कैर्यवनैः शकैः ॥ उपोषिता इहात्रैव ब्राह्मणत्वमभीप्सुभिः ॥६१॥ इत्येषा परमा पुण्या शिवा पापहरा तथा ॥ पठितोपासिता राजञ्छ्रद्धया च श्रुता तथा ॥ ॥ ६२ ॥ माहात्म्यं चापि योऽप्यस्याः शृणुयान्मानवो नृप ॥ ऋद्धिं वृद्धिं तथा कीर्तिं शिवं चाप्य दिवं व्रजेत् ॥ ६३ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि प्रतिपत्कल्पवर्णनं नाम षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥ ब्रूहि मे विस्तराद्ब्रह्मन्प्रतिपत्कृत्यमादरात् ॥ ब्रह्मपूजाविधानं च पूजने यच्च वै फलम् ॥१॥ ॥ सुमंतुरुवाच ॥ ॥ शृणुष्वैकमना राजन्कथयाम्येष शांतिदम् ॥ पूर्वमेकार्णवे घोरं नष्टे स्थावरजंगमे ॥ २ ॥ स्वयंभूरभवद्देवः सुरज्येष्ठश्चतुर्मुखः ॥ ससर्ज लोकान्देवांश्च भूतानि विविधानि च ॥३॥ कायेन मनसा वाचा जंगमस्थावराणि च ॥ पिता यः सर्वदेवानां भूतानां च पितामहः ॥ ४ ॥ तस्मादेष सदा पूज्यो यतो लोकगुरुः परः ॥ सृजत्येष जगत्कृत्स्नं

१ विधानतः-इ० पा० । २ न लभितम्-इ० पा० । ३ अत्र विशेषतः-इ० पा० । ४ प्रतिपत्कल्पम्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाति संहरते तथा ॥५॥ रुद्रोऽस्य मनसो जातो विष्णुर्जातोऽस्य वक्षसः ॥ मुखेभ्यश्चतुरो वेदा वेदांगानि च कृत्स्नशः ॥ ६ ॥ देवाप्सरसगंधर्वाः सयक्षोरगराक्षसाः ॥ पूजयंति सदा वीर विरिंचिं सुरनायकम् ॥७॥ सर्वो ब्रह्ममयो लोकः सर्वं ब्रह्मणि संस्थितम्॥ तस्मात्समर्चयेद्ब्रह्मन्य इच्छेच्छ्रेय आत्मनः ॥ ८ ॥ यो न पूजयते भक्त्या सुरज्येष्ठं सुरेश्वरम् ॥ न स नाकस्य राज्यस्य न च मोक्षस्य भाजनम् ॥ ९ ॥ यस्तु पूजयते भक्त्या विरिंचिं भुवनेश्वरम् ॥ स नाकराज्यमोक्षेषु क्षिप्रं भवति भाजनम् ॥ १० ॥ तस्मात्सौम्यमना भूत्वा यावज्जीवं प्रतिज्ञया ॥ अर्चयित्वा सदा देवमापन्नोपि नरो नृप ॥ ११ ॥ वरं देहपरित्यागो वरं नरकसम्भवः ॥ न त्वेवापूज्य भुंजंति देवं वै पद्मसंभवम् ॥ १२ ॥ सदा पूजयते यस्तु वीर भक्त्या पितामहम् ॥ मनुष्यचर्मणा नद्धः स वेधा नात्र संशयः॥१३॥ न हि वेधोऽर्चनात्किंचित्पुण्यमभ्यधिकं भवेत् ॥ इति विज्ञाय यत्नेन पूजनीयः सदा विधिः ॥ १४ ॥ यो ब्रह्माणं द्वेष्टि मोहात्सर्वदेवनमस्कृतम् ॥ नरो नरकगामी स्यात्तस्य संभाषणादपि ॥ १५ ॥ ब्रह्मणोर्चां प्रतिष्ठाप्य सर्वयत्नैर्विधानतः ॥ यत्पुण्यं फलमाप्नोति तदेकाग्रमनाः शृणु ॥ १६ ॥ सर्वयज्ञतपोदानतीर्थवेदेषु यत्फलम् ॥ तत्फलं कोटिगुणितं लभेद्वेधः प्रतिष्ठया ॥ १७ ॥ कञ्जजं स्थापयेद्यस्तु कृत्वा शालां मनोरमाम् ॥ सर्वांगमोदित पुण्यं कोटिकोटिगुणं लभेत् ॥ १८ ॥ मातृजान्पितृजांश्चैव यां चैवोद्वहते स्त्रियम् ॥ कुलैकविंशमुत्तार्य ब्रह्मलोके महीयते ॥ १९ ॥ भुक्त्वा तु विपुलान्भोगान्प्रलये समुपस्थिते ॥ ज्ञानयोगं समासाद्य स तत्रैव विमुच्यते ॥ २० ॥ अथ वा राज्यमाकांक्षेज्जायते संभवांतरे ॥ सप्तद्वीपसमुद्रायाः क्षितेरधिपतिर्भवेत् ॥ २१ ॥ त्रिसंध्यं यो जपेद्ब्रह्म कृत्वाष्टदलपंकजम् ॥ पौर्णमास्यां प्रतिपदि तस्य पुण्यफलं शृणु ॥ २२ ॥ अनेनैव स देहेन ब्रह्मा संतिष्ठते क्षितौ ॥ पापहा सर्वमर्त्यानां दर्शनात्स्पर्शनादपि ॥ ॥ २३ ॥ उद्धृत्य दिवि संस्थाप्य कुलानामेकविंशतिम् ॥ तैः कुलैः सहितो नित्यं मोदते गोगतो नृप ॥ २४ ॥ अप्येकवारं यो भक्त्या पूजयेत्पद्मसंभवम् ॥ पद्मस्थं मूर्तिमंतं वा ब्रह्मलोकं स गच्छति ॥२५॥ पुण्यक्षयात्क्षितिं प्राप्य भवेत्क्षितिपतिर्महान् ॥ वेदवेदांगतत्त्वज्ञो ब्राह्मणश्चापि जायते॥ ॥ २६ ॥ न तत्तपोभिरत्युग्रैर्न च सर्वैर्महामखैः ॥ गच्छेद्ब्रह्मपुरं दिव्यं मुक्त्वा भक्तिपरात्मकान् ॥२७॥ मृद्दार्वैष्टकशैलैर्वा यः कुर्याद्ब्रह्मणो गृहम् ॥ त्रिःसप्तकुलसंयुक्तो ब्रह्मलोके महीयते ॥ २८ ॥ मृन्मयात्कोटिगुणितं फलं दार्विष्टकामये ॥ इष्टकाद्द्विगुणं पुण्यं कृते शैलमये गृहे ॥ २९ ॥ क्रीडमानोपि यः कुर्याच्छालां वै ब्रह्मणो नृप ॥ ब्रह्मलोके स लभते विमानं सर्वकामिकम् ॥ ३० ॥ पुष्पमालापरिक्षिप्तं किंकिणीजालभूषितम् ॥ दोला

१ च इ० पा० । २ चत्वारः । ६ विरिंचिं सर्वकामदम्–इ० पा० । ४ भुञ्जते । ५ गां.भूमिं गतः–भूमिष्ठ एवेत्यर्थः । ६ सर्वकामदम्–इ० पा० । ७ क्रीडन् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विक्षेपसंपन्नं घंटाचामरभूषितम् ॥ ३१ ॥ मुक्तादामवितानेन शोभितं सूर्यसुप्रभम् ॥ अप्सरोगणसंकीर्णं सर्वकामसुखप्रदम् ॥ ३२ ॥ तत्रोषित्वा महाभोगी क्रीडमानः सदा सुरैः ॥ पुनरागत्य लोकेस्मिन्राजा भवति धार्मिकः ॥ ३३ ॥ पश्यन्परिहरञ्जन्तून्मृदुपूर्वं महीपते ॥ शनैः संमार्जनं कुर्वंश्चान्द्रायणफलं व्रजेत् ॥ ३४ ॥ वस्त्रपूतेन तोयेन यः कुर्यादुपलेपनम् ॥ पश्यन्परिहरञ्जतूंश्चान्द्रायणफलं लभेत् ॥ ३५ ॥ नैरंतर्येण यः कुर्यात्पक्षं संमार्जनार्चनम् ॥ युगकोटिशतं साग्रं ब्रह्मलोके महीयते ॥ ३६ ॥ तस्यांते स चतुर्वेदः सुरूपः प्रियदर्शनः ॥ आढ्यः सर्वगुणोपेतो राजा भवति धार्मिकः ॥ ३७ ॥ कपटेनापि यः कुर्याद्ब्रह्मशालां सुमानद ॥ समार्जनादि वै कर्म सोऽपि प्राप्नोति तत्फलम् ॥ ३८ ॥ तावद्भ्रमंति संसारे दुःखशोकभयप्लुताः ॥ न भवंति सुरश्रेष्ठे यावद्भक्ता महीपते ॥ ३९ ॥ समासक्तं यथा चित्तं जन्तोर्विषयगोचरे ॥ यद्येवं ब्रह्मणि न्यस्तं को न मुच्येत बन्धनात् ॥ ४० ॥ खण्डस्फुटितसंस्कारं शालायां यः करोति वै ॥ अरामावसथाद्येषु लभते मौक्तिकं फलम् ॥ ४१ ॥ नास्ति ब्रह्मसमो देवो[१] नास्ति ब्रह्मसमो गुरुः ॥ नास्ति ब्रह्मसमं ज्ञानं नास्ति वेधःसमं तपः ॥ ४२ ॥ प्रतिपद्यादिसर्वेषु दिवसेषूत्सवेषु च ॥ पर्वकालेषु[२] पुण्येषु पौर्णमास्यां विशेषतः ॥ ४३ ॥ शंखभेर्यादिनिर्घोषैर्महद्भिर्गेयसंयुतैः ॥ कुर्यान्नीराजनं देवे सुरज्येष्ठे चतुर्मुखे ॥ ४४ ॥ यावत्पर्वाणि विधिना कुर्यान्नीराजनं नृप ॥ तावद्युगसहस्राणि ब्रह्मलोके महीयते ॥ ४५ ॥ स्नानकाले त्रिसंध्यं तु यः कुर्यान्नृत्यवादनम् ॥ गीतं वा मुखवाद्यं वा तस्य पुण्यफलं शृणु ॥ ४६ ॥ यावन्त्यहानि कुरुते गेयनृत्यादिवादनम् ॥ तावद्युगसहस्राणि ब्रह्मलोके महीयते ॥ ४७ ॥ कपिलापञ्चगव्येन कुशवारियुतेन च ॥ स्नापयेन्मंत्रपूतेन ब्राह्मं स्नानं हि तत्स्मृतम् ॥ ४८ ॥ कपिलापंचगव्येन दधिक्षीरघृतेन च ॥ स्नानं शतगुणं[४] ज्ञेयमितरेषां नराधिप ॥ ४९ ॥ देवाग्निकार्यमुद्दिश्य कपिलामाहरेत्सदा ॥ ब्रह्मक्षत्रविशश्चैव न शूद्रस्तु कदाचन ॥ ५० ॥ कापिलं यः पिबेच्छूद्रो देवकार्यार्थनिर्मितम् ॥ स पच्येत महाघोरे सुचिरं नरकार्णवे ॥ ५१ ॥ वर्षकोटिसहस्रैस्तु[५] यत्पापं समुपार्जितम् ॥ सुरज्येष्ठघृताभ्यंगाद्दहेत्सर्वं न संशयः ॥ ५२ ॥ कल्पकोटिसहस्रैस्तु यत्पापं समुपार्जितम् ॥ पितामहघृतस्नानं दहत्यग्निरिवेंधनम् ॥ ५३ ॥ घृतस्नानं प्रतिपदि सकृत्कृत्वा तु कांजजम् ॥ कुलैकविंशमुत्तार्य विष्णुलोके महीयते ॥ ५४ ॥ अयुतं यो गवां दद्याद्भक्त्यां वै वेदपारगे ॥ वस्त्रहेमादियुक्तानां क्षीरस्नानेन यत्फलम् ॥ ५५ ॥ सकृदाज्येन पयसा विरिंचिं स्नपयेत्तु यः ॥ गांगेयेन स यानेन याति ब्रह्मसलोकताम् ॥ ५६ ॥ स्नाप्य दध्ना सकृद्वीर[६] कञ्जजं विष्णुमाप्नुयात् ॥ मधुना स्नपयित्वा तु वीरलोके महीयते ॥ ५७ ॥

१ लोके–इ० पा० । २ सर्वकालेषु–इ० पा० । ३ भक्तिपूर्वम्–इ० पा० । ४ दशगुणम्–इ० पा० । ५ सहस्रे तु–इ० पा० । ६ विप्रे–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्नानमिक्षुरसेनेह यो विरिंचेः समाचरेत् ॥ स याति लोकं सविस्तुतेजसा भासयन्नभः ॥ ५८ ॥ शुद्धोदकेन[1] यो भक्त्या स्नपयेत्पद्मसंभवम् ॥ उत्सृज्य पापकलिलं स यात्येव सलोकताम् ॥ ५९ ॥ वस्त्रपूतेन तोयेन स्नपयेद्यः सकृद्विभुम् ॥ स सर्वकालं तृप्तात्मा लोकवश्यत्वमाप्नुयात् ॥ ६० ॥ सर्वौषधीभिर्यो भक्त्या स्नपयेत्पद्मसंभवम् ॥ कांचनेन विमानेन ब्रह्मलोके महीयते ॥ ६१ ॥ गन्धचन्दनतोयेन स्नापयेद्योंबुजोद्भवम् ॥ रुद्रलोकमवाप्नोति तेजसा हेमसन्निभः ॥ ६२ ॥ पाटलोत्पलपद्मानि करवीराणि सर्वदा ॥ स्नानकाले प्रयोज्यानि स्थिराणि सुरभीणि च ॥ ६३ ॥ एषामेकतमं स्नानं भक्त्या कृत्वा तु वेधसि ॥ विधूय पापकलिलं विधिलोके[2] महीयते ॥ ६४ ॥ कर्पूरागरुतोयेन स्नपयेद्यस्तु[3] कञ्जजम् ॥ सर्वपापविशुद्धात्मा ब्रह्मलोके महीयते ॥ ६५ ॥ गायत्रीशतजप्तेन विमलेनांभसा विभुम् ॥ स्नपयित्वा सकृद्भक्त्या ब्रह्मलोकमवाप्नुयात् ॥ ६६ ॥ विभुं शीतांबुना स्नाप्य धारोष्णपयसा ततः ॥ ततः पश्चाद् घृतस्नानं कृत्वा पापैर्विमुच्यते ॥ ६७ ॥ एतत्स्नानत्रयं कृत्वा पूजयित्वा तु भक्तितः ॥ अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥ ६८ ॥ मृत्कुंभैस्ताम्रजैः कुंभैः स्नानं शतगुणं[4] भवेत् ॥ रौप्ये लक्षोत्तरं प्रोक्तं हैमैः कोटिगुणं भवेत् ॥ ६९ ॥ ब्रह्मणो दर्शनं पुण्यं दर्शनात्स्पर्शनं परम् ॥ स्पर्शनादर्चनं श्रेष्ठं घृतस्नातमतः परम् ॥ ७० ॥ वाचिकं मानसं पापं घृतस्नानेन देहिनाम् ॥ क्षिणुते पद्मजो यस्मात्तस्मात्स्नानं समाचरेत् ॥ ७१ ॥ स्नपयित्वार्चयेद्भक्त्या यथा तच्छृणु भारत ॥ शुचिवस्त्रधरः स्नातः कृतन्यासश्च भारत ॥ ७२ ॥ चतुर्हस्तं लिखेत्पद्मं चतुर्भागविभागितम् ॥ मध्ये तस्य लिखेच्चक्रं दलैर्द्वादशभिश्चितम् ॥ ७३ ॥ सरोजानि ततोन्यस्य अक्षराणि समन्ततः ॥ अक्षरं विहितं चान्यत्पत्रभागे प्रकीर्तितम् ॥ ७४ ॥ नानावर्णकसंयोगाल्लिखेच्चैवानुपूर्वशः ॥ कृष्णोत्कटं तु मध्यं स्यात्पीतरक्तं तथा परम् ॥ ७५ ॥ सितं शुद्धं तु कर्त्तव्यं मध्यभागे तु वर्तुलम् ॥ प्रभाकुण्डलकैर्बाह्यैर्वेष्टयेच्चक्रनायकम् ॥ ७६ ॥ एवमालिख्य यत्नेन मूलमंन्त्रं ततो न्यसेत् ॥ मूर्ध्नः पादतलं यावत्प्रणवं विन्यसेद्बुधः ॥ ७७ ॥ नादरूपं न्यसेत्तावद्यावच्छब्दस्य शून्यता ॥ तत्कारं[5] विन्यसेन्मूर्ध्नि सकारं मुखमण्डले ॥ ७८ ॥ विकारं कण्ठदेशे तु तुकारं सर्वसंधिषु[6] ॥ वकारं हृदि मध्ये तु रेकारं पार्श्वयोर्द्वयोः ॥ ७९ ॥ णकारं दक्षिणे कुक्षौ यकारं वामसंज्ञके ॥ भकारं कटिनाभिस्थं र्गोकारं जानुपर्वसु ॥ ८० ॥ देकारं जंघयोर्न्यस्य वकारं पादपद्मयोः ॥ स्यकारमंगुष्ठयोर्न्यस्य धीकारं चोरसि न्यसेत् ॥ ८१ ॥ मकारं जानुदेशे तु हिकारं गुह्यमाश्रितम् ॥ धिकारं हृदये न्यस्य योकारं चौष्ठयो

१ फलोदकेन इ० पा० । २ विधुलोकमवाप्नुयात्–इ० पा।० ३ पूजयेत्–इ० पा० । ४ दशगुणम्–इ० पा० । ५ इत आरभ्य गायत्रीप्रत्येकार्णन्यासः प्रोच्यते । ६ चांगसंधिषु–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्र्यसेत् ॥ ८२ ॥ नकारं नासिकाग्रे तु प्रकारं नेत्रमाश्रितम् ॥ चोकारं तु भ्रुवोर्मध्ये दकारं प्राणमाश्रितम् ॥ ८३ ॥ याकारं विन्यसेन्मूर्ध्नि तकारं केशमाश्रितम् ॥ न्यासं कृत्वात्मनो देहे देवे कुर्यात्तथा नृप ॥ सर्वोपचारसंपन्नं कृत्वा सम्यङ् निरीक्षयेत् ॥ ८४ ॥ कुंकुमागुरुकर्पूर चन्दनेन विमिश्रितम् ॥ गन्धतोयमुपस्कृत्य गायत्र्या प्रणवेन च ॥ प्रोक्षयेत्सर्वद्रव्याणि पश्चादर्चनमाचरेत् ॥ ८५ ॥ चक्रग्रन्थिषु सर्वासु प्रणवं विनिवेशयेत्[1] ॥ भूयः प्लुतं समुच्चार्य प्रणवं सर्वतोमुखम् ॥ ८६ ॥ विन्यसेत्पद्ममध्ये तु पीठनिष्पत्तिहेतवे ॥ आसने पृथिवी ज्ञेया सर्वसत्त्वधरा मता ॥ ८७ ॥ ह्रस्वोंकारे मता सा तु दीर्घोंकारे तु देवराट् ॥ प्लुतस्तु व्यापयेद्भावं मोक्षदं चामृतात्मकम् ॥ ८८ ॥ यत्नस्थो न निवर्तेत योगी प्राणपरायणः ॥ आवाहनं ततः कुर्यादक्षरेण परेण[2] तु ॥ ८९ ॥ आवाह्य तेजोरूपं तु न्यसेन्मन्त्रवरांस्ततः ॥ ततो विभावयेद्देवं पद्मस्थं चतुराननम् ॥ ९० ॥ स्रष्टारं सर्वजगतां विष्णुरुद्रविधानगम् ॥ संभाव्य विधिवद्भक्त्या पश्चाचार्चनमाचरेत् ॥ ९१ ॥ गन्धपुष्पादिसंभारान्क्रमात्सर्वान्प्रकल्पयेत् ॥ गायत्रीमुच्चरन्मन्त्रं सर्वकर्माणि कारयेत् ॥ ९२ ॥ पुष्पं धूपं तथा दीपं नैवेद्यं सुमनोहरम् ॥ खंडलड्डुकश्रीवेष्टकासाराशोकवर्तिकाः ॥ ९३ ॥ स्वस्तिकोल्लोपिकादुग्धतिलावेष्टतिलाढिकाः ॥ फलानि चैव पक्कानि लग्नखण्डगुडानि च ॥ ९४ ॥ अन्यांश्च विविधान्दद्यात्पूपानि विविधानि च ॥ एवमादीनि सर्वाणि दापयेच्छक्तितो नृप ॥ ९५ ॥ मूलमन्त्रेण देवस्य ततो देहं विभावयेत् ॥ पूजयेच्चापि विधिना येन तं ते ब्रवीम्यहम् ॥ ९६ ॥ प्राणायामत्रयं कृत्वा देहसंशोधनाय वै ॥ आवाहयेत्ततोनन्तं धारयन्तं वचः सदा ॥ ९७ ॥ ध्यात्वानन्तं ततो रुद्रं पद्मकिंजल्कमध्यगम् ॥ ध्यायेद्विष्णुं ततो देवं न्यसेत्पद्मोदरोद्भवम् ॥ ९८ ॥ एवं त्रिदेवता रूढं पद्ममध्येंबुजोद्भवम् ॥ पूजयेन्मूलमन्त्रेण पद्मोदरभवं नृप ॥ ९९ ॥ ऋग्वेदं तु यजुर्वेदं सामवेदं च पूजयेत् ॥ ज्ञानवैराग्यमैश्वर्यं धर्मं संपूजयेद्बुधः ॥ १०० ॥ ईशानादिक्रमाद्राजन्विदिशासु समंततः[3] ॥ शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च ॥ १०१ ॥ ज्योतिषं च महाबाहो उपवेदाश्च कृत्स्नशः ॥ इतिहासपुराणानि यथायोग्यं यथाक्रमम् ॥ १०२ ॥ शिक्षा कल्पो व्याकरणं देवस्य पुरतः सदा ॥ कल्पादयस्ततश्चान्ये दिशासु विदिशासु च ॥ १०३ ॥ महाव्याहृतयः सर्वाः प्रणवेन समन्विताः ॥ पूर्वादिक्रमयोगेन पूजयेद्विधिना नृप ॥ ॥१०४॥ शक्तयो ब्रह्मणस्त्वेता लोकरूपा व्यवस्थिताः ॥ पूजनीयाः प्रयत्नेन मंत्ररूपाः स्थिताः स्वयम् ॥१०५॥ अरकांतरसंस्थांश्च[4] षट् समुद्रान्स

१ विनिवेदयेत्–इ० पा० । २ परन्तप–इ० पा० । ३ समाहितः–इ० पा० । ४ यन्त्रदलान्तर्वर्तिन इत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मर्चयेत् ॥ नक्षत्राणि ग्रहाश्चैव राशयश्च विशेषतः ॥ पूज्याः सर्वे यथान्यायं सुराग्रेषु व्यवस्थिताः ॥ १०६ ॥ नागाश्च गरुडश्चैव पूजनीयस्तथा
ग्रतः ॥ देवता ऋषयश्चैव सहिताः कुलपर्वताः ॥ तत्तेजोनिलयाः सर्वे पूजनीयाः प्रयत्नतः ॥ १०७ ॥ आचम्य विधिवत्पूर्वं मंत्रपूतेन वारिणा ॥
हृदयादीन्न्यसेदंगान्हृदयादिषु कृत्स्नशः ॥ १०८ ॥ शिखा नेत्रं तथा चर्म अस्त्रं च भरतर्षभ ॥ महेंद्रादिदिशश्चैताः पूजयेद्विधिवन्नृप ॥ १०९ ॥
हृदयं पुरतः पूज्यं शिरो देवस्य पृष्ठतः ॥ पूर्वं संपूजयेद्देवं मूलमंत्रेण कृत्स्नशः ॥ ११० ॥ विसर्जयेद्दर्शयित्वा मुद्रां तु भरतर्षभ ॥ अंकुशं नरशा
र्दूल ह्याह्वाने कंजमादिशेत् ॥ १११ ॥ यस्त्वेवं पूजयेद्देवं प्रतिपन्नित्यमेव च ॥ उपोष्य पंचदश्यां तु स याति परमं पदम् ॥ ११२ ॥ ॥ सुमंतु
रुवाच ॥ ॥ आपो हिष्ठेति मंत्रोऽयं हृदयं परिकीर्तितम् ॥ ऋतं सत्यं शिखा प्रोक्ता उदुत्यं नेत्रमादिशेत् ॥ ११३ ॥ चित्रं देवानां मस्त्रमिति
सर्वलोकेषु विश्रुतम् ॥ वर्मणा ते च्छादयामि कवचं समुदाहृतम् ॥ ११४ ॥ भूर्भुवः स्वरिति तथा शिरसे परिकीर्तितम् ॥ गायत्रीमूलतंत्रस्तु
साधकः सर्वकर्मणाम् ॥११५॥ गायत्र्या पूजयेद्देवमोंकारेणाभिमंत्रितम् ॥प्रणवेनापरान्सर्वानृग्वेदादीन्प्रपूजयेत् ॥११६॥ आह्वाने पूजने वीर विसर्गे
ब्रह्मणस्तथा ॥ गायत्री परमो मंत्रो वेदमाता विभाविनी ॥ ११७ ॥ गायत्र्यक्षरतत्त्वैस्तु पूजयेद्यस्तु देवताम् ॥ स गच्छेद्ब्रह्मणः स्थानं दुर्लभं यद्सुरा
सदम् ॥ ११८ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि प्रतिपत्कल्पे ब्रह्मणोऽर्चनविधिवर्णनं नाम सप्त
दशोऽध्यायः ॥ १७ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ पौर्णमास्युपवासं तु कृत्वा भक्त्या नराधिप ॥ अनेन विधिना यस्तु विरिंचिं पूजयेन्नरः ॥
॥ १ ॥ प्रतिपद्यां महाबाहो स गच्छेद्ब्रह्मणः पदम् ॥ ऋग्भिर्विशेषतो देवी विरिंचेर्वास्तुदेवताः ॥ २ ॥ कार्त्तिके मासि देवस्य रथयात्रा प्रकीर्तिता ॥
यां कृत्वा मानवो भक्त्या याति ब्रह्मसलोकताम् ॥ ३ ॥ कार्तिके मासि राजेंद्र पौर्णमास्यां चतुर्मुखम् ॥ मार्गेण चर्मणा सार्धं सावित्र्या च परतंप ॥
॥ ४ ॥ भ्रामयेन्नगरं सर्वं नानावाद्यैः समन्वितम् ॥ स्थापयेद्भ्रामयित्वा तु सलोकं नगरं नृप ॥ ५ ॥ ब्राह्मणं भोजयित्वाग्रे शांडिलेयं प्रपूज्य च ॥
आरोपयेद्रथे देवं पुण्यवादित्रनिस्वनैः ॥ ६ ॥ रथाग्रे शांडिलीपुत्रं पूजयित्वा विधानतः ॥ ब्राह्मणान्वाचयित्वा च कृत्वा पुण्याहमंगलम् ॥ ७ ॥
देवमारोपयित्वा तु रथे कुर्यात्प्रजागरम् ॥ नानाविधैः प्रेक्षणकैर्ब्रह्मघोषैश्च पुष्कलैः ॥ ८ ॥ कृत्वा प्रजागरं ह्येवं प्रभाते ब्राह्मणं नृप ॥ भोजयित्वा
यथाशक्त्या भक्ष्यभोज्यैरनेकशः ॥ ९ ॥ पूजयित्वा जनं वीर वस्त्रेण विधिवन्नृप ॥ बीजेन च महाबाहो पयसा पायसेन च ॥ १० ॥ ब्राह्मणान्वा

१ ऋषयश्च–इ० पा० । २ अल्पभारं च भारत–इ० पा० । ३ मुकुलम्–इ० पा० । ४ परमां गतिम्–इ० पा० । ५ अग्निः–इ० पा० । ६ तु तं वीरं वस्त्रेण विधिवन्नृप–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चयित्वा च च्छांदेन विधिना नृप ॥ कृत्वा पुण्याहशब्दं च रथं च भ्रामयेत्पुरे॥११॥चतुर्वेदविदैर्विप्रैर्भ्रामयेद्ब्रह्मणो रथम् ॥ बह्वृचाथर्वणोच्चारैश्छंदोगाध्वर्युभिस्तथा ॥ १२ ॥ भ्रामयेद्देवदेवस्य सुरज्येष्ठस्य तं रथम् ॥ प्रदक्षिणं पुरं सर्वं मार्गेण सुसमेन तु ॥१३॥ न वोढव्यो रथो वीर शूद्रेण शुभमिच्छता॥ नारुहेत रथं प्राज्ञो मुक्त्वैकं भोजकं नृप ॥१४॥ ब्रह्मणो दक्षिणे पार्श्वे सावित्रीं स्थापयेन्नृप ॥ भोजको वामपार्श्वे तु पुरतः कंजजं न्यसेत्॥१५॥ एवं तूर्यनिनादैस्तु शंखशब्दैश्च पुष्कलैः ॥ भ्रामयित्वा रथं राजन्पुरं सर्वं प्रदक्षिणम् ॥ स्वस्थाने स्थापयेद्भूयः कृत्वा नीराजनं बुधः ॥१६॥ य एवं कुरुते यात्रां भक्त्या यश्चापि पश्यति ॥ रथं चाकर्षते यस्तु स गच्छेद्ब्रह्मणः पदम् ॥१७॥ कार्त्तिके मास्यमावास्यां यस्तु दीपप्रदीपनम् ॥ शालायां ब्रह्मणः कुर्यात्स गच्छेद्ब्रह्मणः पदम्॥१८॥ प्रतिपदि ब्राह्मणांश्चापि गुडमिश्रैः प्रदीपकैः ॥ वासोभिरहतैश्चापि स गच्छेद्ब्रह्मणः पदम् ॥ १९॥ गंधैः पुष्पैर्नवैर्वस्त्रैरात्मानं पूजयेच्च यः ॥ तस्यां प्रतिपदायां तु स गच्छेद्ब्रह्मणः पदम् ॥२०॥ महापुण्या तिथिरियं बलिराज्यप्रवर्तिनी ॥ ब्रह्मणः सुप्रिया नित्यं बालेया परिकीर्तिता ॥२१॥ ब्राह्मणान्पूजयित्वास्यामात्मानं च विशेषतः ॥ स याति परमं स्थानं विष्णोरमिततेजसः॥२२॥ चैत्रे मासि महाबाहो पुण्या प्रतिपदा परा ॥ तस्यां यः श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तम ॥२३॥ न तस्य दुरितं किंचिन्नाधयो व्याधयो नृप ॥ भवंति कुरुशार्दूल तस्मात्स्नानं प्रवर्तयेत ॥ २४ ॥ दिव्यं नीराजनं तद्धि सर्वरोगविनाशनम् ॥ गोमहिष्यादि यत्किंचित्तत्सर्वं भूषयेन्नृप ॥२५॥ तैलशस्त्रादिभिर्वस्त्रैस्तोरणाधस्ततो नयेत ॥ ब्राह्मणानां तथा भोज्यं कुर्यात्कुरुकुलोद्वह ॥२६॥ तिस्रो ह्येताः पराः प्रोक्तास्तिथयः कुरुनंदन ॥ कार्त्तिकेश्वयुजे मासि चैत्रे मासे च भारत ॥ २७ ॥ स्नानं दानं शतगुणं कार्त्तिके या तिथिर्नृप ॥ बलिराज्याप्तिसुखदापांशुलाशुभनाशिनी ॥ २८ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि प्रतिपत्कल्पसमाप्तिवर्णनं नामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ द्वितीयायां तु राजेंद्र अश्विनौ सोमपीतिनौ ॥ च्यवनेन कृतौ यज्ञे मिषतो मघवंस्य च ॥ १ ॥ ॥ शतानीक उवाच ॥ ॥ कथमिंद्रस्य मिषतः कृतौ तौ सोमपीतिनौ ॥ च्यवनेन हि देवानां पश्यतां तद्वदस्व मे ॥ २ ॥ अहो महत्तपस्तस्य च्यवनस्य महात्मनः ॥ यदिंद्रस्य बलादेव देवत्वं प्रापिता वुभौ ॥ ३ ॥ ॥ सुमंतुरुवाच ॥ ॥ पुरातनयुगे सन्धौ पश्चिमेऽथ नराधिप ॥ च्यवनो योगमास्थाय गंगाकूलेऽवसच्चिरम् ॥ ४ ॥ तत्र शर्यातिरयातः स्नातुमंतःपुरैः सह ॥ स्नात्वाभ्यर्च्य पितॄन्देवान्गमनायोपचक्रमे ॥ ५ ॥ तत्र मूढं जनपदमपश्यत्पथि चेष्टनम् ॥ विण्मूत्रोत्सर्गसंरुद्धं

१ अ नैवेद्यः—इ० पा० । २ केवलमार्गोऽयं पाठः सर्वेषु पुस्तकेषु । ३ मंत्रपुरःसरः—इ० पा० । ४ अतिथीन्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्योतिराक्षिप्तनिष्क्रियम् ॥ भ्रमंतं तत्रतत्रैव समीक्ष्य स बलं नृपः ॥ ६ ॥ उवाच दुर्मना राजा अमात्यान्स्वान्पुरोगमान्[1] ॥ च्यवनस्याश्रमोयं हि नापराद्धं तु केनचित् ॥ ७ ॥ न चोवाच यदा कश्चित्तस्य राज्ञस्तु पृच्छतः ॥ तदा सुता सुकन्यास्य प्रोवाच पितरं वचः ॥ ८ ॥ मया दृष्टं तु यत्तात सखिभिः सह कौतुकम् ॥ तत्ते वच्मि निबोध त्वं शृणु तात महाद्भुतम् ॥ ९ ॥ शिंजितारावबहुलाः कांचीनूपुरमेखलाः ॥ गायन्त्यो विलपन्त्यश्च क्रीडन्त्यश्चात्र कानने ॥ १० ॥ कोकिलध्वनिमश्रौषं व्यक्ताव्यक्ताक्षरं कृशम् ॥ सुकन्ये ह्येहिह्येहीति वल्मीकाद्वाचमुद्गिरन् ॥ ११ ॥ तत्र गत्वाद्भुतं तात पश्यामः किल पावकौ ॥ दीपाविवाचलशिखौ भूयः कन्या उवाच ह ॥ १२ ॥ मया च कौतुकात्तात किमेतदित्यबुद्धितः ॥ सूदितौ दर्भसूच्यग्रैस्तत्तेजः समुपारमत् ॥ १३ ॥ तच्छ्रुत्वा नृपतिस्त्रस्तस्तूर्णं तद्वनमागमत् ॥ यत्रास्ते भार्गवः कष्टं वल्मीकांतर्गतो मुनिः ॥ १४ ॥ गत्वा स तत्र प्रोवाच प्रणिपत्य द्विजोत्तमम् ॥ अपराद्धं मया[2] देव तत्क्षमस्व नमोऽस्तु ते ॥ १५ ॥ स तं प्रोवाच नृपतिं मया ज्ञातं नराधिप ॥ सुकन्यां मे प्रयच्छस्व निवेशार्थी[3] ह्यहं नृप ॥ अनुक्रमन्सुकन्यां तु दत्त्वा राजन्सुखी भव ॥ १६ ॥ इत्युक्तः प्रददौ राजा सुकन्यामविचारयन् ॥ ततः स्वपुरमागम्य अवसत्सुचिरं सुखी ॥ १७ ॥ सुकन्यापि पतिं लब्ध्वा सुप्रीताराधयत्तदा ॥ राज्यश्रियं परित्यज्य वल्कलाजिनधारिणी ॥ १८ ॥ गते बहुतिथे काले वसंते समुपस्थिते ॥ तपोद्योतितसर्वांगीं रूपोदार्यगुणान्विताम् ॥ स्नातां स्वभार्यां च्यवन उवाच मधुराक्षरम् ॥ १९ ॥ एह्येहि भद्रे भद्रं ते शयनीयं समाश्रय ॥ अपत्यं जनयस्वाद्य कुलद्वयविवर्धनम् ॥ २० ॥ एवमुक्ता तु सा कन्या प्रांजलिः पतिमब्रवीत् ॥ नार्हस्यद्य[4] सुकल्याण संगमं स्थंडिलेऽसमे ॥ २१ ॥ मम प्रियं कुरुष्वाद्य ततो मामाह्वयस्व च ॥ पितृगेहे यथातिष्ठं शयनीये सुसंस्कृते ॥ २२ ॥ बहुगैरिकवर्णाद्यैः श्वेतपीतारुणाकुले ॥ वस्त्रालंकारगन्धाद्यैस्तथा त्वमपि तत्कुरु ॥ २३ ॥ आत्मानं वयसोपेतं रूपवन्तं सुवर्चसम् ॥ वस्त्रालंकारगन्धाढ्यं पश्येयं येन सादरम् ॥ २४ ॥ सुकन्याया वचः श्रुत्वा च्यवनः प्राह दुर्मनाः ॥ न मेऽस्ति वित्तं कल्याणि पितुस्तेऽस्ति यथा वने ॥ २५ ॥ स कथं भूपयाम्यद्य सुरूपश्च कथं वद ॥ प्रोवाच सा पतिं भूयः प्रहसंती कृतांजलिः ॥ वित्तं ददावैलविलो रूपं वैरोचनोददत् ॥ २६ ॥ च्यवनः प्राह भार्यां तां न[4] करिष्ये तपोव्ययम् ॥ एवमुक्त्वा तपश्चोग्रं तताप सुचिरं तदा ॥ २७ ॥ अथ तत्रागतौ वीरावश्विनौ कालपर्ययात् ॥ दृष्टवन्तौ सुकन्यां



१ धर्मेणामात्यान्पुरोहितपुरोगमान्—इ० पा० । २ मयेति कन्यायां स्वत्वाभिमानात् । परिवारकृतस्यापि कर्मणः स्वामिन्यारोपस्य सार्वत्रिकत्वात् । ३ निवेशं गच्छ वै नृप—इ० पा० । ४ नार्हसि ह्यद्य कल्याण आह्वानं स्थंडिले मम—इ० पा० । ४ तत्करिष्ये तपोव्ययात्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तौ दीप्त्या वै देवतामिव ॥ २८ ॥ उपगम्योचतुस्तां तौ का त्वं सुन्दरि रूपिणी ॥ किमर्थमिह एका त्वं तिष्ठसे कस्तवाश्रयः ॥ २९ ॥ सा तावुवाच तन्वंगी शर्यातिदुहिता ह्यहम् ॥ भर्ता च च्यवनो मह्यं कौ च वां मे तथोच्यताम् ॥ ३० ॥ ऊचतुश्चाश्विनौ देवावावां विद्धि नृपात्मजे ॥ किं करिष्यसि तेन त्वं जीर्णेन च कृशेन च ॥ आवयोर्वृणु भर्तारमेकमेव यमिच्छसि ॥ ३१ ॥ सा त्वब्रवीच्च मा मैवं वक्तुमर्हौ दिवौकसौ ॥ भर्तारमनुरक्तांगी यथा स्वाहा विभावसोः ॥३२॥ ॥ अश्विनावूचतुः ॥ ॥ आयातु च विशत्वद्य च्यवनो वैष्णवीजलम् ॥ ततो नौ मध्यगं ह्येकं वृणीष्वान्यं यमिच्छसि ॥ ३३ ॥ तावब्रूतां सुकन्यां तु गत्वा पृच्छ स्वकं पतिम् ॥ तं च पृष्ट्वा पुनश्चात्रागच्छ नौ संनिधौ पुनः ॥ ३४ ॥ आवामत्रैव तिष्ठावो यावदागमनं तव ॥ सा गत्वा प्राह भर्तारमश्विनावेवमूचतुः ॥ ३५ ॥ रूपवंतं च भर्तारं करिष्यावो यमिच्छसि ॥ अथ मध्यगतं ह्येकं भर्तृत्वेन वरिष्यसि ॥ ३६ ॥ एवमस्त्विति तां प्राह स भार्यां च्यवनस्त्वरन् ॥ सा तं गृह्य जगामाशु यत्र तौ भिषजावुभौ ॥ ३७ ॥ स तावुवाच च्यवनो यथोक्तं भवतोर्वचः ॥ कुरुतं ह्यश्विनौ क्षिप्रं सुकन्या चेप्सितं वृणोत् ॥३८॥ तौ तं संगृह्य गंगायां प्रविष्टौ मुनिना सह ॥ मुहूर्तात्तु समुत्तिष्ठन्नुपतश्च श्रिया वृताः ॥ ३९ ॥ शोभंते स्म महाबाहो कमुद्दिश्य तपोयुताः ॥ कल्पादौ कलशे यद्वत्कंजाक्ष व्योम वेधसः ॥ उदकादुत्थितास्तस्मात्सर्वे ते समरूपकाः ॥ ४० ॥ सुकन्या तु ततो दृष्ट्वा भर्तारं देवरूपिणम् ॥ हर्षेण महताविष्टा न च तं वेद भारत ॥ ४१ ॥ समकायाः समवयः समरूपाः समश्रियः ॥ वस्त्रालंकारसदृशान्दृष्ट्वा चिंतां गता चिरम् ॥ ४२ ॥ सा चिंतयित्वा सुचिरं वैद्यदेवावुवाच ह ॥ बीभत्सोपि मया भर्ता परित्यक्तो न कर्हिचित् ॥ ४३ ॥ भवद्भिरात्मसदृशं कथं त्यक्त्वा वृणे परम् ॥ तस्मात्तमेव भर्तारं प्रयच्छध्वं दिवौकसः ॥४४॥ तया सबहुमानं तौ प्रांजल्या प्रार्थितौ तदा ॥ देवचिह्नानि स्वान्येव धारयन्तौ सुपूजितौ ॥ ४५ ॥ सुकन्या निपुणं तौ तु सुनिरीक्ष्य च विह्वला ॥ न रजो न निमेषो वै न स्पृशेते धरां पदे ॥ ४६ ॥ अयं च सरजा म्लानो भूमिमाश्रित्य तिष्ठति ॥ निमेषं चैव तस्यैवं ज्ञात्वा वै च्यवनो वृतः ॥४७॥ च्यवने वृते सुकन्यया पुष्पवृष्टिः पपात ह ॥ देवदुंदुभयश्चैव प्रावाद्यंत अनेकशः ॥४८॥ ततस्तु च्यवनस्तुष्टो दिव्यरूपधरस्तदा ॥ उवाच तौ तु सुप्रीत अश्विनौ किं करोमि वाम् ॥ ४९ ॥ भार्या दत्ता कृतं रूपं देवानामपि दुर्लभम् ॥ उपकारं वरिष्ठं यो न करोत्युपकारिणः ॥ ५० ॥ एकविंशत्सगच्छेच्च नरकाणि क्रमेण वै ॥ तस्मादहं वरिष्ठं वै करिष्येऽहममानुपम ॥५१॥ उपकारं भवद्भ्यां तु प्रीतः कुर्यां सुनिश्चितम् ॥ यज्ञभागफलं दद्यां

१ सत्वरा—इ० पा० । २ हृदम्—इ० पा० । ३ अडभाव आर्षः । ४ कृतम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्देवेष्वपि दुर्लभम् ॥ ५२ ॥ एवमुक्त्वा तु देवेशौ विससर्ज महामुनिः ॥ आजगामाश्रमं पुण्यं सहभार्यो मुदान्वितः ॥ ५३ ॥ अथ शुश्राव शर्यातिश्च्यवनं देवरूपिणम् ॥ जगाम च महातेजा द्रष्टुं मुनिवरं वशी ॥ ५४ ॥ तं दृष्ट्वा प्रणिपत्यादौ प्रतिपूज्य यथार्हतः ॥ सुकन्यां तु ततो दृष्ट्वा प्रणिपत्याभिनंद्य च ॥ ५५ ॥ सस्वजे मूर्ध्नि आघ्राय ततोत्संगं समानयत् ॥ सा तस्याः सस्वजे प्रेम्णा आनन्दाश्रुपरिप्लुता ॥ संस्थाप्य तां मुदा युक्तो नृपतिः सह भार्यया ॥ ५६ ॥ भूयोऽब्रवीत्सुसंतुष्टं च्यवनस्तं नराधिपम् ॥ संभारं कुरु यज्ञार्थं याजयिष्ये नराधिप ॥ ५७ ॥ एवमुक्तः स नृपतिः प्रणिपत्य महामुनिम् ॥ जगाम स्वपुरं हृष्टो यज्ञार्थं यत्नमाचरत् ॥ ५८ ॥ सप्रेष्यान्प्रेषयन्क्षिप्रं यज्ञार्थे द्रव्यमाहरत् ॥ मंत्रिपुरोहिताचार्यानानयामास सत्वरम् ॥ ५९ ॥ समानीतेषु सर्वेषु तेषु द्रव्येषु भारत ॥ आजगाम विशुद्धात्मा च्यवनः सह भार्यया ॥ ६० ॥ संपूजितश्च शुश्राव महांतं त्यागमौजसम् ॥ अन्यैश्च बहुभिः सार्द्धमत्र्यंगिरसभार्गवैः ॥ ६१ ॥ प्रवर्तिते महायज्ञे यजमाने नृपोत्तमे ॥ ऋत्विक्त्वकर्मनिरते हूयमाने हुताशने ॥ आहूताः स्वागताः सर्वे भागार्थं त्रिदिवालयाः ॥ ६२ ॥ यज्ञभागे प्रवृत्ते तु शास्त्रोक्तेन विधानतः ॥ आगतावश्विनौ तत्र आहूतौ च्यवनेन तु ॥ ६३ ॥ आह्वाने क्रियमाणे तु अश्विभ्यां तु तदा नृप ॥ प्रोवाचेंद्रोऽथ च्यवनं नैतौ भागान्वितौ कुरु ॥ देवानां भिषजावेतौ न भागार्हौ न दैवतौ ॥ ६४ ॥ च्यवनस्त्विंद्रमाहेदं देवौ ह्येतावुभावपि ॥ ममोपकारिणावेतौ दद्मि भागं न संशयः ॥ ६५ ॥ ततो ह्युवाच सक्रोधः स शक्रश्च्यवनं रुषा ॥ विप्रर्षे प्रहरिष्यामि यदि भागं प्रयच्छसि ॥ ६६ ॥ एवमुक्तस्तु विप्रर्षिर्न चोवाचापि किंचन ॥ भागौ ददौ च सोऽश्विभ्यां स्रुवमुद्यम्य मंत्रतः ॥ ६७ ॥ अथ उद्यम्य भिदुरं मोक्तुकामो दिवस्पतिः ॥ स्तंभितश्च्यवनेनाथ सवज्रः स नराधिप ॥ ६८ ॥ स स्तंभयित्वा त्विंद्रं तु भागं दत्त्वाश्विनोर्वशी ॥ समापयामास तदा यज्ञकर्म यथार्थवत् ॥ ६९ ॥ कंजजोऽथाजगामाशु आह च च्यवनं तदा ॥ उत्तंभ्यतामयं लेखो भागश्चास्त्वश्विनोरिह ॥ ७० ॥ तथेंद्रस्तमुवाचेदं च्यवनं प्रीतमानसः ॥ जानामि शक्तिं तपसश्च्यवनेह तवोत्तमाम् ॥ ७१ ॥ ख्यापनार्थं हि तपसस्तव एतत्कृतं मया ॥ अद्यप्रभृति भागोस्तु देवत्वं चाश्विनोस्तथा ॥ ७२ ॥ यस्त्विमां तपसः ख्यातिं त्वदीयां वै पठिष्यति ॥ शृणुयाद्वापि शुद्धात्मा तस्य पुण्यफलं शृणु ॥ ७३ ॥ विरोचनसदो गत्वा गत्वा पुष्पसदस्तथा ॥ कालेथ वामदेवस्य मुंजकेशसदस्तथा ॥ यौवनयुक्तः स क्रीडंस्तिष्ठतीति न संशयः ॥ ७४ ॥ एवमुक्त्वा जगामाशु देवः स्वभवनं वशी ॥ च्यवनोऽपि सभार्यो वै शर्यातिश्चाश्रमं

१ सन्धिरार्षः। २ सुकन्या। ३ मातुरित्यर्थः। तस्य इत्यस्य प्रेम्णेत्यनेन सम्बन्धः। स्वस्वजे इत्यनेन तामिति विभक्तिपरिणामः।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गतः ॥ ७५ ॥ अथापश्यद्विमानाभं भवनं देवनिर्मितम् ॥ शय्यासनवरैर्जुष्टं सर्वकामसमृद्धिमत् ॥ ७६ ॥ उद्यानवापिभिर्जुष्टं देवेंद्रेण समाहृतम् ॥ गोखण्डसन्निभं रेजे गृहं तद्भुवि दुर्लभम् ॥ ७७ ॥ सुभूपणानि दिव्यानि रत्नवंति महांति च ॥ अरजांसि च वस्त्राणि दिव्यप्रावरणानि च ॥ ७८ ॥ दृष्ट्वा तत्सर्वमखिलं सह पत्न्या महामुनिः ॥ मुदं परमिकां लेभे शक्रं च प्रशशंस ह ॥ ७९ ॥ एवमिष्टा तिथिरियं द्वितीया अश्विनो र्नृप ॥ देवत्वं यज्ञभागं च संप्राप्ताविह भारत ॥ ८० ॥ उपोष्या विधिना येनतं शृणुष्व नराधिप ॥ रूपं सुरूपं यो वांछेद्द्वितीयायां नराधिप ॥ ८१ ॥ कार्तिके शुक्लपक्षस्य द्वितीयायां नराधिप ॥ पुष्पाहारो वर्षमेकं भवेत्स नियतात्मवान् ॥ ८२ ॥ कालप्राप्तानि यानि स्युर्हविष्यं कुसमानि तु ॥ भुञ्जीयात्तानि दत्त्वा तु ब्राह्मणेभ्यो नराधिप ॥ ८३ ॥ सौवर्णरौप्यपुष्पाणि अथ वा जलजानि च ॥ व्रतांते तस्य संतुष्टौ देवौ त्रिभुवनेऽश्विनौ ॥ ८४ ॥ ददतुः कामगं दिव्यं विमानमतितेजसम् ॥ सुचिरं दिवि नारीभिर्लोकेऽसौ रमतेश्विनोः ॥ ८५ ॥ इह चागत्य कल्पांते जातो विप्रः पुरस्कृतः ॥ वेदवेदांगविदुपः सप्तजन्मांतराण्यसौ ॥ ८६ ॥ जातोजातो भवेद्विद्वान्ब्राह्मणोसौ कृते युगे ॥ दाता यज्ञपतिर्वाग्मी आधिव्याधिविवर्जितः ॥ ८७ ॥ पुत्रपौत्रैः परिवृतः सह पत्न्याऽवसच्चिरम् ॥ मध्यदेशे सुनगरे धर्मिष्ठो राज्यभाग्भवेत् ॥ ८८ ॥ इत्येषा कथिता तुभ्यं द्वितीया पुष्पसंज्ञिता ॥ फल संज्ञा तथान्या स्यात्सुते वै मुञ्जकेशिनि ॥ ८९ ॥ सुष्ठु पुण्या पापहरा विष्टरश्रवसः प्रिया ॥ अशून्यशयना लोके प्रख्याता कुरुनन्दन ॥ ९० ॥ तामुपोष्य नरो राजञ्छ्रद्धाभक्तिपुरस्कृतः ॥ ऋद्धिं वृद्धिं श्रियं वाथ भार्यया सह मोदते ॥ ९१ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि द्वितीयाकल्पे शर्यात्याख्याने पुष्पद्वितीयावर्णनं नामैकोनविंशोऽध्यायः ॥ १९ ॥ छ ॥

॥ शतानीक उवाच ॥ ॥ ब्रूहि मे द्विजशार्दूल द्वितीयां फलसंज्ञिताम् ॥ यामुपोष्य नरो योपिद्वियोगं नेह गच्छति ॥ १ ॥ पत्न्या नरो मुनिश्रेष्ठ भार्या च पतिना सह ॥ तामहं श्रोतुमिच्छामि विधवा स्त्री न जायते ॥ उपोपितेन येनार्यं पत्न्या च सहितो नरः ॥ २ ॥ तन्मे ब्रूहि द्विजश्रेष्ठ श्रेयोऽर्थं नरयोपिताम् ॥ येन मे कौतुकं ब्रह्मञ्छ्रुत्वापूर्वं प्रसर्पति ॥ ३ ॥ ॥ सुमन्तुरुवाच ॥ ॥ अशून्यशयनां नाम द्वितीयां शृणु भारत ॥ यामुपोष्य न वैधव्यं स्त्री प्रयाति नराधिप ॥ पत्नीवियुक्तश्च नरो न कदाचित्प्रजायते ॥ ४ ॥ शेते जगत्पतिः कृष्णः श्रिया सार्धं यदा नृप ॥ अशून्यनयना नाम तदा ग्राह्या हि सा तिथिः ॥ ५ ॥ कृष्णपक्षे द्वितीयायां श्रावणे मासि भारत ॥ इदमुच्चारयेत्स्नातः प्रणम्य जगतः पतिम् ॥ श्रीवत्सधारिणं देवं भक्त्याभ्यर्च्य श्रिया

१ वापीभिरित्यर्थः । २ आदित्यकलापसमं वा स्वर्गसदृशम् । ३ काञ्चनानि इ–इ० पा० । ४ तु नगरे–इ० पा० । ५ पत्न्या ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सह ॥ ६ ॥ श्रीवत्सधारिञ्छ्रीकांत श्रीवत्स श्रीपतेऽव्यय ॥ गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामदम् ॥ ७ ॥ गावश्च मा प्रणश्यन्तु मा प्रणश्यन्तुं मे जनाः ॥ ८ ॥ जामयो मा प्रणश्यंतु मत्तो दांपत्यभेदतः ॥ लक्ष्म्या वियुज्येहं देव न कदाचिद्यथा भवान् ॥ ९ ॥ तथा कलत्रसंबन्धो देव मा मे वियुज्यताम् ॥ लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा ॥ १० ॥ शय्या ममाप्यशून्यास्तु तथा तु मधुसूदन ॥ एवं प्रसाद्य पूजां च कृत्वा लक्ष्म्यास्तथा हरेः ॥ ११ ॥ फलानि दद्याच्छायायामभीष्टानि जगत्पतिम् ॥ नक्तं[1] प्रणम्यायतने हविर्भुञ्जीत वाग्यतः ॥ १२ ॥ ब्राह्मणाय द्वितीयेऽह्नि शक्त्या दद्याच्च दक्षिणाम् ॥ १३ ॥ ॥ शतानीक उवाच ॥ ॥ कानि तानि अभीष्टानि केशवस्य फलानि तु ॥ योज्यानि शयने विप्र देवदेवस्य कथ्यताम् ॥ १४ ॥ किं च दानं द्वितीयेऽह्नि दातव्यं ब्राह्मणस्य तु ॥ भक्तैर्नरैर्द्विजश्रेष्ठ देवदेवस्य शक्तितः ॥ १५ ॥ ॥ सुमन्तुरुवाच ॥ ॥ यानि तत्र महाबाहो काले संति फलानि तु ॥ मधुराणि सुतीव्राणि न चापि कटुकानि तु ॥ १६ ॥ दातव्यानि नृपश्रेष्ठ स्वशक्त्या शयने नृप ॥ मधुराणि प्रदत्तानि नरो वल्लभतां व्रजेत् ॥ १७ ॥ योषिच्च कुरुशार्दूल भर्तुर्वल्लभतामियात् ॥ तस्मात्कटुकतीव्राणि स्त्रीलिङ्गानि विवर्जयेत् ॥ १८ ॥ खर्जूरमातुलिङ्गानि श्वेतेन शिरसा सह ॥ फलानि शयने राजन्यज्ञभागहरस्य तु ॥ १९ ॥ देयानि कुरुशार्दूल स्वशक्त्या मुञ्जकेशिने ॥ एतान्येव तु विप्रस्य गांगेयसहितानि तु ॥ २० ॥ द्वितीयेऽह्नि प्रदेयानि भक्त्या शक्त्या च भारत ॥ वासोदानं तथा धान्यफलदानसमन्वितम् ॥ गांगेयस्य विशेषेण धान्यदानं प्रचक्षते ॥ २१ ॥ एवं करोति यः सम्यङ्नरो मासचतुष्टयम् ॥ ततो जन्मत्रयं वीर गृहभङ्गो न जायते ॥ २२ ॥ अशून्यशयनश्चासौ धर्मकामार्थसाधनः ॥ भवत्यव्याहतैश्वर्यः[2] पुरुषो नात्र संशयः ॥ २३ ॥ नारी च राजन्धर्मज्ञा व्रतमेतद्यथाविधि ॥ या करोति न सा शोच्या बन्धुवर्गस्य जायते ॥ २४ ॥ वैधव्यं दुर्भगत्वं च भर्तृत्यागं च सत्तम ॥ नाप्नोति जन्मत्रितयमेतच्चीर्त्वा[3] महाव्रतम् ॥ २५ ॥ अदत्त्वा कटुकानीह फलानि कुरुनन्दन ॥ खर्जूरमातुलिङ्गानि बृहत्फलशिरांसि च ॥ २६ ॥ दत्त्वा द्विजेभ्यो राजेंद्र मधुराणि पराणि च ॥ तस्मात्स्वशक्त्या यत्तेन देयानि मधुराणि च ॥२७॥ इत्येषा कथिता कृष्णद्विभीया तिथिरुत्तमा ॥ यामुपोष्य नरो राजन्नृद्धिं वृद्धिं तथा व्रजेत् ॥ २८ ॥ ॥ शतानीक उवाच ॥ ॥ भवता कथितेयं वै द्वितीया तिथिरुत्तमा ॥ अश्विभ्यां द्विजशार्दूल कथम स्यांजनार्दनः ॥ २९ ॥ संपूज्यः फलसंज्ञायां कथितः पद्मया सह ॥ तदत्र कौतुकं मह्यं सुमहज्जायते द्विज ॥ ३० ॥ सुमंतुरुवाच ॥ ॥ एवमेतन्न



१ नक्षत्रं च प्रणम्याशु—इ० पा० । २ भवति—इ० पा० । ३ चरित्वा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्देहो तथा वदसि भारत ॥ अश्विनोर्वै तिथिरियं किं तु वाक्यं निबोध मे ॥ ३१ ॥ अशून्यशयना दत्ता विष्णोरमिततेजसः ॥ अश्विभ्यां कुरुशार्दूल प्रीतये मुंजकेशिनः ॥ ३२ ॥ तावेव कुरुशार्दूल पूज्येतेऽत्र महीपते ॥ नासत्यौ भगवान्विष्णुर्दत्तश्च श्रीर्विभाव्यते ॥ ३३ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि द्वितीयाकल्पसमाप्तौ विंशोध्यायः ॥ २० ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ पतिव्रता पतिप्राणा पतिशुश्रूषणे रता ॥ एवंविधापि या प्रोक्ता शुचिः संशोभना सती ॥ १ ॥ सोपवासा तृतीयां तु लंवणं परिवर्जयेत् ॥ सा गृह्णाति च वै भक्त्या व्रतमामरणांतिकम् ॥ २ ॥ गौरी ददाति संतुष्टा रूपं सौभाग्यमेव च ॥ लावण्यं ललितं हृद्यं श्लाघ्यं पुंसां मनोरमम् ॥ ३ ॥ पुंसो मनोरमा नारी भर्ता नार्या मनोरमः ॥ गौरीव्रतेन भवति राजँल्लवणवर्जनात् ॥ ४ ॥ इदं व्रतं प्रति विभो धर्मराजस्य शृण्वतः ॥ उमया च पुरा प्रोक्तं यद्वाक्यं तन्निबोध मे ॥ ५ ॥ मया व्रतमिदं सृष्टं सौभाग्यकरणं नृणाम् ॥ मर्त्ये तु नियता नारी व्रतमेतच्चरिष्यति ॥ सह भर्त्रा स मोदेत यथा भर्ता हरो मम ॥ ६ ॥ याच कन्या न भर्तारं विंदते शोभना सती ॥ सा त्विदं व्रतमुद्दिश्य भवेदक्षारभोजना ॥ मच्चित्ता मन्मनाः कुर्यान्मद्भक्ता मत्परिग्रहा ॥ ७ ॥ गौरीं संस्थाप्य सौवर्णीं गंधालंकारभूषिताम् ॥ वस्त्रालंकारसंवीतां पुष्पमंडलमंडिताम् ॥ ८ ॥ लवणं गुडं घृतं तैलं देव्यै शक्त्या निवेदयेत् ॥ कटुखण्डं जीरकं च पत्रशाकं च भारत ॥ ९ ॥ गुडघृष्टांस्तथापूपान्खण्डवेष्टांस्तथा नृप ॥ ब्राह्मणे व्रतसंपन्ने प्रदद्यात्सुबहुश्रुते ॥ १० ॥ शुक्लपक्षे सदा देया यथा शक्त्या हिरण्मयी ॥ धनहीने तु भक्त्या च मधुवृक्षमयी नृप ॥ ११ ॥ अर्च्या नित्यं संनिधाना तत्र गौरी न संशयः ॥ अक्षारलवणं रात्रौ भुंक्ते चैव सुवाग्यता॥१२॥गौरी सन्निहिता नित्यं भूमौ प्रस्तरशायिनी ॥ एवं नियमयुक्तस्य देव्या यत्स मुदाहृतम् ॥ १३ ॥ तच्छृणुष्व महाबाहो कथ्यमानं महाफलम् ॥ भर्तारं तु लभेत्कन्या यं वांछति मनोनुगम् ॥ १४ ॥ सुचिरं सह वै भर्त्रा क्रीडयित्वा इहैव सा ॥ संततिं च प्रतिष्ठाप्य सह तेनैव गच्छति ॥ १५ ॥ हेलिलोकं चन्द्रलोकं लोकं चित्रशिखंडिनः ॥ गत्वा याति सदो राजन्वामदेवस्य भारत ॥ १६ ॥ विधवा तु यदा राजन्देव्या व्रतपरायणा ॥ भर्तारं नियता नित्यं सदार्चनपरायणा ॥ १७ ॥ इह चोत्सृज्य देहं स्वं दृष्ट्वा हरिपुरे प्रियम् ॥ आक्षिप्य यमदूतेभ्यः सह भर्त्रा रमेद्दिवि ॥ १८ ॥ वर्षकोटिं दशगुणां रमित्वा सा इहागता ॥ भर्त्रा सहैव पूर्वोक्त

१ अतुलतेजसः–इ० पा० । २ अशनम्–इ० पा० । ३ तथा खंडम्–इ० पा० । ४ शक्त्या–इ० पा० । ५ स्वास्तरशायिनी–इ० पा० । ६ एवं नियमयुगिति विशेषणसामर्थ्याद्व्रतमित्यध्याहार्यम्, ततश्च देव्या यन्महाफलं समुदाहृतं तच्छृणिवत्यर्थः । एवं नियमयुक्तस्येत्येकं वा पदम्, अत्रापि पक्षे व्रतस्येवेदं विशेषणम् । ७ क्रीडित्वा । ८ नीतिपरायणा–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लभते फलमीप्सितम् ॥ १९ ॥ इन्द्राण्यापि व्रतमिदं पुत्रार्थिन्या नराधिप ॥ लब्धः पुत्रो व्रतस्यांते जयंतो नाम नामतः ॥२०॥ अरुंधत्या तथा चीर्णं वशिष्ठं प्रति कामतः ॥ दृश्यते दिवि चाद्यापि वशिष्ठस्य समीपतः ॥ २१ ॥ रोहिण्या लवणत्यागात्सपत्नीगणमर्दनम् ॥ लब्धं देव्याः प्रसादेन सौभाग्यमचलं दिवि ॥ २२ ॥ इत्येषा तिथिरित्येव तृतीया लोकपूजिता ॥ सदा विशेषतः पुण्या वैशाखे मासि या भवेत् ॥ २३ ॥ पुण्या भाद्रपदे मासि माघेप्येवं न संशयः ॥ माघे भाद्रपदे चापि स्त्रीणां धन्या प्रचक्षते ॥ २४ ॥ साधारणी तु वैशाखे सर्वलोकस्य भारत ॥ माघमासे तृतीयायां गुडस्य लवणस्य च ॥ दानं श्रेयस्करं राजन्स्त्रीणां च पुरुषस्य च ॥२५॥ गुडेन तुष्यते दत्तो लवणेन तु विश्वभूः ॥ गुडपूपास्तु दातव्या मासि भाद्रपदे तथा ॥ २६ ॥ तृतीयायां तु माघस्य वामदेवस्य प्रीतये ॥ वारिदानं प्रशस्तं स्यान्मोदकानां च भारत ॥ २७ ॥ वैशाखे मासि राजेंद्र तृतीया चन्दनस्य च ॥ वारिणा तुष्यते वेधा मोदकैर्भीम एव हि ॥ दानात्तु चन्दनस्येह कंजजो नात्र संशयः ॥ २८ ॥ या त्वेषा कुरुशार्दूल वैशाखे मासि वै तिथिः ॥ तृतीया साऽक्षया लोके गीर्वाणैरभिनंदिता ॥ २९ ॥ आगतेयं महाबाहो भूरि चंद्रं वसुव्रता ॥ कलधौतं तथान्नं च घृतं चापि विशेषतः ॥यद्यद्दत्तं त्वक्षयं स्यात्तेनेयमक्षया स्मृता॥३०॥यत्किंचिद्दीयते दानं स्वल्पं वा यदि वा बहु॥तत्सर्वमक्षयं स्याद्वै तेनेयमक्षया स्मृता॥३१॥योऽस्यां ददाति करकान्वारिबीजसमन्वितान् ॥ स याति पुरुषो वीर लोकं वै हेममालिनः॥३२॥इत्येषा कथिता वीर तृतीया तिथिरुत्तमा॥यामुपोष्य नरो राजन्नृद्धिं वृद्धिं श्रियं भजेत्॥३३॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां ब्राह्मे पर्वणि तृतीयाकल्पविधिवर्णनं नामैकविंशोऽध्यायः ॥२१॥ ॥ सुमंतुरुवाच॥ ॥ चतुर्थ्यां तु सदा राजन्निराहारव्रतान्वितः॥दत्त्वा तिलान्नं विप्रस्य स्वयं भुंक्ते तिलौदनम्॥१॥ वर्षद्वयेसमाप्तिर्हि व्रतस्य तु यदा भवेत्॥विनायकस्तस्य तुष्टो ददाति फलमीहितम् ॥२॥ याति भाग्यनिवासं हि क्रीडते विभवैः सह॥ इह चागत्य पुण्यांते दिव्यो दिव्यवपुर्यशाः ॥३॥ मतिमान्धृतिमान्वाग्मी भाग्यवान्कामकारवान् ॥ असाध्यान्यपि साध्येह क्षणादेव महांत्यपि ॥४॥ हस्त्यश्वरथसंपन्नः पत्नीपुत्रसहायवान् ॥ राजा भवति दीर्घायुः सप्तजन्मान्यसौ नृप ॥ एतद्ददाति संतुष्टो विघ्नहंता विनायकः ॥ ५ ॥ ॥ शतानीक उवाच ॥ विघ्नः कस्य कृतस्तेन येन विघ्नविनायकः ॥ एतद्वदस्व विघ्नेशविघ्नकारणमद्य मे ॥ ६ ॥ ॥ सुमंतुरुवाच ॥ ॥ कौमारे लक्षणे पुंसां स्त्रीणां च



१ धर्मम्–इ० पा० । २ सर्वकामफलप्रदम्–इ० पा० । ३ सर्वकामार्थसिद्धये–इ० पा० । ४ असां दत्तम्–इ० पा० । ५ ईप्सितम्–इ० पा० । ६ लभते यशः–इ० पा० । ७ हस्त्यश्वस्वार्थसंपन्नः–इ० पा० । ८ विघ्नहर्ता–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुकृते कृते ॥ विघ्नं चकार विघ्नेशो गांगेयस्य विनायकः॥७॥ तं तु विघ्नं विदित्वासौ कार्त्तिकेयो रुषान्वितः ॥ उत्कृष्य दंतं तस्यास्याद्धंतुं तं च समुद्यतः ॥ ८ ॥ निवार्यापृच्छद्देवेशो रोपः कार्यः कुतस्त्वया ॥ तं चाचख्यौ स पित्रे वै कृतं पूरुषलक्षणम् ॥ तत्र विघ्नकृते मह्यं योषिता न च लक्षणम् ॥ ९ ॥ अथोवाच महादेवः प्रहसन्स्वसुतं किल ॥ मम किं लक्षणं पुत्र पश्यसे त्वं वदस्व मे ॥ १० ॥ स चोवाच करे तुभ्यं कपालं द्विजलक्षितम् ॥ अविचारेण संस्थाप्यं कपाली तेन चोच्यसे ॥ स तल्लक्षणमादाय समुद्रे प्राक्षिपद्रुषा ॥ ११ ॥ अथ देवसमाजे वै प्रवृत्ते ब्रह्मरुद्रयोः ॥ अहं ज्यायानहं ज्यायान्विवादोऽभूत्तयोर्द्वयोः ॥ तव संभूत्यभिज्ञोऽस्ति मां तु वेद न कश्चन ॥ १२ ॥ एवं शिवेऽति ब्रुवति ब्रह्मणः पंचमं शिरः ॥ मुक्ताट्टहासं प्रोवाच त्वामहं वेदिता भव॥१३॥एवं ब्रुवत्तु रुद्रेण ब्राह्मं हयशिरो महत् ॥ नखाग्रेण निकृत्तं च तस्यैव च करे स्थितम्॥१४॥ करस्थेनैव तेनासावागच्छद्यत्र वै हरिः ॥ तपस्तेपे तदा मेरौ तत्रासौ भगवान्वशी ॥१५॥ कृत्ते हयशिरे तस्मिन्स्थानात्तस्मात्तु ब्रह्मणः॥ रोपाद्विनिःसृतस्त्वन्यः पुरुषः श्वेतकुंडली ॥ १६ ॥ कवची सशिरस्कश्च सशरः सशरासनः ॥ अनिर्देश्यवपुः स्रग्वी किं करोमि स चाब्रवीत् ॥ १७ ॥ अथोवाच रुषा ब्रह्मा हन्यतां स सुदुर्मतिः ॥ स तु मार्गेण रुद्रस्य आगच्छद्रोपतो द्रुतम् ॥ १८ ॥ रुद्रोपि विष्णुतेजोभिः प्रविष्टः स त्वधिष्ठितः ॥ स प्रविश्य तदापश्यत्तपंतं चोत्तमं तपः ॥ हरो नारायणं देवं वैकुंठमपराजितम् ॥ १९ ॥ हरं दृष्ट्वाथ संप्राप्तं कार्यं चास्य विचिंत्य च ॥ उवाच शूलिनं देवो भिन्धि शूलेन मे भुजम् ॥२०॥ स विभेद महातेजा भुजं शूलेन तं हरः ॥ २१ ॥ शूलभेदादसृक्चोर्ध्वं जगामावृत्य रोदसी ॥ विनिवृत्य ततः पश्चात्कपाले निपपात ह ॥ २२ ॥ असृक्कपाले पतितं प्रदेशिन्या व्यवर्द्धयत् ॥ यदा हि विनिवृत्तिः स्याद्देवस्य रुधिरं प्रति ॥ २३ ॥ तदा तु व्यसृजत्तोयं स कृत्वा वारुणीं तनुम् ॥ तोये प्रवृत्तेऽसृग्भूते कपाले यत्र तच्छिरः ॥ २४ ॥ कपाले तु प्रदेशिन्या रुद्रोऽसौ रुधिरेऽसृजत् आमुक्तकवचं रक्तं रक्तकुंडलिनं नरम् ॥ २५ ॥ अथोवाच भवं देवं किं करोमीति मानद ॥ असावपि ससर्जाथ श्वेतकुंडलिनं नरम् ॥ २६ ॥ तावुभौ समयुध्येतां धनुष्प्रवरधारिणौ ॥ यथा राजन्बलीयांसौ कुजकेतू युगात्यये ॥२७॥ तयोस्तु युध्यतोरेवं संवर्तश्चाधिको गतः ॥ न चादृश्यत विजय एकस्यापि तदा तयोः ॥ २८ ॥ अथांतरिक्षे तौ दृष्ट्वा वागुवाचाशरीरिणी ॥ अवतारोऽथ भविता युवयोर्हि मया सह ॥ २९ ॥ भारापनोदः कर्तव्यः पृथिव्यर्थे सुरैः सह ॥ तदाश्चर्यो हि भविता देवकार्यार्थसिद्धये ॥ ३० ॥ भूलोकभावं निर्धूय भूयो गंता सुरालयम् ॥ एवमुक्त्वा तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैकुंठो ददावेकं रवेस्तदा ॥ ३१ ॥ श्वेतकुंडलिनं हंसं तं जग्राह रविर्मुदा ॥ इंद्रस्यापि ततः पश्चाद्रक्तकुंडलिनं ददौ ॥३२॥ जग्राह च मुदा युक्त इंद्रः स्वं च पुरं ययौ ॥ गतौ रवींद्रौ प्रगृह्य पुरुषौ क्रोधसंभवौ ॥३३॥ अथोवाच तदा रुद्रं देवः कमलसंस्थितः ॥ गच्छ त्वमपि कापाले कपालव्रत चर्यया॥अवतारो व्रतस्यास्य मर्त्यलोके भविष्यति ॥ ३४ ॥ ये च व्रतं त्वदीयं वै धारयिष्यंति मानवाः ॥ न तेषां दुर्लभं किंचिद्भवितेह परत्र च॥ ॥ ३५ ॥ एवं संलप्य बहुशः सुसुखं प्रतिनंद्य च ॥ आहूय च समुद्रं स प्रत्युवाचाविचारयन् ॥ ३६ ॥ कुरुष्वाभरणं स्त्रीणां लक्षणं यद्विलक्षणम्॥ कार्त्तिकेयेन यत्प्रोक्तं तद्वदस्वाविचारयन् ॥३७॥ स चाह मम नाम्नेदं भवेत्पुरुषलक्षणम् ॥ देवेन तत्प्रतिज्ञातमेवमेतद्भविष्यति ॥३८॥ कार्त्तिकेयेन यत्प्रोक्तं तद्वदस्वाविचारयन् ॥ ३९॥ प्रयच्छास्य विषाणं वै निष्कृष्टं यत्त्वयाऽधुना ॥ अवश्यमेव तद्भूतं भवितव्यं तु कस्यचित् ॥ ४० ॥ ऋते[1] विनायकं तद्वै दैवयोगान्न कामतः ॥ गृहाण एतत्सामुद्रं यत्त्वया परिकीर्तितम् ॥ ४१ ॥ स्त्रीपुंसोर्लक्षणं श्रेष्ठं सामुद्रमिति विश्रुतम् ॥ इमं च सविषाणं वै कुरु देवविनायकम् ॥ ४२॥ अथोवाच च देवेशं बाहुलेयः समत्सरम् ॥ विषाणं दद्मि चास्याहं तव वाक्यान्न संशयः ॥ ४३ ॥ यदा त्वयं विषाणं च मुक्त्वा तु विचरिष्यति॥ तदा विषाणमुक्तः सन्भस्म एतं करिष्यति॥४४॥ एवमस्त्विति तं चोक्त्वा विषाणं तत्करे ददौ॥विनायकस्य देवेशः कार्तिकेयमते स्थितः ॥ ४५ ॥ सविषाणकरोद्यापि दृश्यते प्रतिमा नृप ॥ भीमसूनोर्महाबाहोर्विघ्नं कर्तुं महात्मनः॥४६॥ एतद्रहस्यं देवानां मया ते समुदाहृतम् ॥ यत्र देवो न वै वेद देवानां भुवि दुर्लभम् ॥४७॥ मया प्रसन्नेन तव गुह्यमेतदुदाहृतम् ॥ कथितं तिथिसंयोगे विनायककथामृतम् ॥ ४८ ॥ य इदं श्रावयेद्विद्वान्ब्राह्मणान्वेदपारगान् ॥ क्षत्रियांश्च स्ववृत्तिस्थान्विट्शूद्रांश्च गुणान्वितान् ॥ ४९ ॥ न तस्य दुर्लभं किंचिदिह चामुत्र विद्यते ॥ न च दुर्गतिमाप्नोति न च याति पराभवम् ॥५०॥ निर्विघ्नं सर्वकार्याणि साधयेन्नात्र संशयः॥ऋद्धिं वृद्धिं श्रियं चापि विंदेत भरतोत्तम॥५१॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि चतुर्थीकल्पवर्णनं नाम द्वाविंशोऽध्यायः ॥२२॥छ॥ ॥ शतानीक उवाच ॥ ॥ केनायं भीमजो विप्र प्रमथाधिपतिः कृतः ॥ भर्तृत्वे चापि विघ्नानामधिकारी कथं बभौ ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ साधु पृष्टोऽस्मि राजेन्द्र यदर्थं विघ्नकारकः ॥ यैर्वापि विघ्नकरणैर्नियुक्तोऽपि विनायकः ॥ तत्ते वच्मि महाबाहो शृणुष्वैकमनाधुना ॥२ ॥ आद्ये कृतयुगे वीर प्रजासर्गमवाप ह ॥ दृष्ट्वा कर्माणि सिद्धानि विना विघ्नेन भारत ॥ ३ ॥ अगतक्लेशां प्रजां दृष्ट्वा गर्वितां कृत्स्नशो नृप ॥ बहुश



[1] दृष्ट्वा–इ० पा० । [2] स्त्रीणां च पुरुषाणां च–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्चितयित्वा तु इदं कर्म महीपते ॥ ४ ॥ विनायकः समृद्ध्यर्थं प्रजानां विनियोजितः ॥ गणानां चाधिपत्ये च भीमः कंजजसात्वतैः ॥ ततोप
सृष्टो यस्तस्य लक्षणानि निबोध मे ॥ ५ ॥ स्वप्नेवगाहतेऽत्यर्थं जलं मुडांश्च पश्यति ॥ काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ॥ ६ ॥ अंत्यजै
र्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥ व्रजमानस्तथात्मानं मन्यतेऽनुगतं परैः ॥७॥ विमना विफलारंभः संसीदत्यनिमित्ततः॥करटारूढमात्मानमंभसो
तरंगं तथा ॥ ८ ॥ पत्तिभिश्चावृतं यांतं संगमनांतिकं नृप ॥ पश्यते कुरुशार्दूल स्वप्नांते नात्र सशयः ॥ ९ ॥ चित्तं च विकृताकारं करवीरविभू
पितम् ॥ तेनोपसृष्टो लभतेन राज्यं पौर्वसंभवम् ॥ १० ॥ कुमारी न च भर्तारमपत्यं गर्भिणी तथा ॥ आचार्यत्वं श्रोत्रियश्च शिष्याश्चाध्यय
नं तथा ॥ वणिग्लाभं च नाप्नोति कृषिं चैव कृपीवलः ॥ ११ ॥ स्नपनं तस्य कर्तव्यं पुण्येऽहनि महीपते ॥ गौरसर्षपकल्केन साज्येनोत्सादितेन
तु ॥ १२ ॥ शुक्लपक्षे चतुर्थ्यां तु वासरे धिपणस्य च ॥ तिष्ये च वीरनक्षत्रे तस्यैव पुरतो नृप ॥ १३ ॥ सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ॥
भद्रासनोपविष्टस्य स्वस्ति वाच्य द्विजाञ्छुभान् ॥ १४ ॥ व्योमकेशं तु संपूज्य पार्वतीं भीमजं तथा ॥ कृष्णं सपितरं तात पवमानं सितं तथा
॥ १५ ॥ धिपणं चेन्दुपुत्रं च कोणं केतुं च भारत ॥ विधुंतुदं बाहुलेयं नंदकस्य च धारिणम् ॥ १६ ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्र
दात् ॥ मृत्तिकां रोचनां गंधान्गुग्गुलं चाप्सु निक्षिपेत्॥१७॥ यदाहृतं ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ॥ चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं तथा॥
॥१८॥ सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ॥ तेन त्वामभिषिंचामि पावमान्यः पुनंतु ते ॥१९॥ भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः॥
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ २० ॥ यत्ते केशेषु दौर्भाग्यं सीमंते यच्च मूर्धनि ॥ ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नंतु ते सदा ॥
॥ २१ ॥ स्नातस्य सार्षपं तैलं स्रुवेणौदुंबरेण तु ॥ जुहुयान्मूर्धनि कुशान्सव्येन परिगृह्य तु ॥२२॥ मितश्च संमितश्चैव तथा च शालकंटकः॥
कूष्मांण्डो राजश्रेष्ठास्तेऽग्नयः स्वाहासमन्विताः ॥२३॥ नामभिर्बलिमंत्रैश्च नमस्कारसमन्वितैः ॥ दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः ॥२४॥
कृताकृतांस्तंडुलांश्च पललौदनमेव च ॥ मत्स्यान्पक्वांस्तथैवामान्मांसमेतावदेव तु ॥ २५ ॥ पुष्पं चित्रं सगंधं च सुरां च त्रिविधामपि ॥
मूलकं पूरिकाः पूपांस्तथैवोंडेरिकास्रजम् ॥ दधिपायसमन्नं च गुडवेष्टान्समोदकान्॥२६॥ विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम् ॥ दूर्वासर्षपपु
ष्पाणां दत्त्वा पुष्पांजलित्रयम्॥२७॥ रूपं देहि यशो देहि भगं भगवति देहि मे॥ पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे॥ अचलां बुद्धिं मे देहि

१ अद्य विधिपूर्वकम्–इ० पा० । २ अब्जमानम्–इ० पा० । ३ कोणलक्ष्यं च–इ० पा० । ४ सारीभिः पावनं स्मृतम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धरायां ख्यातिमेव च॥२८॥ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः॥भोजयेद्ब्राह्मणान्दद्याद्वस्त्रयुग्मं गुरोरपि॥२९॥एवं विनायकं पूज्य ग्रहांश्चैव विधान
तः ॥ कर्मणां फलमाप्नोति श्रियं प्राप्नोत्यनुत्तमाम्॥३०॥आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा ॥ विनायकपतेश्चैव सर्वसिद्धिमवाप्नुयात् ॥
॥३१॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि चतुर्थीकल्पवर्णनं नाम त्रयोविंशोऽध्यायः॥२३॥ ॥शतानीक उवाच॥ ॥
नराणां योषितां चैव लक्षणानि महामते ॥ प्रोक्तानि यानि विप्रेन्द्र व्योमकेशस्य सूनुना ॥ १ ॥ क्रुद्धेन यानि क्षिप्तानि ईश्वरेण महोदधौ ॥ कृष्ण
स्य वचनाद्भूयः समुद्रेणार्पितानि वै ॥२॥ अर्पितानि ततस्तस्य तेन प्राप्तानि वै कथम् ॥ बाहुलेयेन विप्रेन्द्र तानि मे वद सुव्रत ॥ ३ ॥ ॥ सुमन्तु
रुवाच ॥ ॥ यथा गुहेन राजेन्द्र स्त्रीपुंसां लक्षणानि वै ॥ प्रोक्तानि कुरुशार्दूल तथा ते कथयामि वै ॥ ४ ॥ शक्तिपाताद्धते क्रौंचे व्योम
केशस्य सूनुना ॥ ब्रह्मा तुष्टोऽब्रवीदेनं वरं वरय मेऽनघ ॥ ५ ॥ असावपि महातेजाः प्रणम्य शिरसा विभुम् ॥ पितामहं बभाषेदं लक्षणं ब्रूहि मे
विभो ॥ ६ ॥ नराणां युवतीनां च कौतुकं परमं मम ॥ यन्मयोक्तं पुरा देव प्रक्षिप्तं लवणार्णवे ॥ ७ ॥ मत्पित्रा देवदेवेश सक्रोधेन पुरा तथा ॥
प्राप्तं च विस्मृतं भूयस्तन्मे ब्रूहि ह्यशेषतः ॥ ८ ॥ ॥ ब्रह्मोवाच ॥ ॥ साधु पृष्टोऽस्मि देवेश भीमस्यानन्दवर्धन ॥ लक्षणानि निबोध त्वं
पुरुषाणामशेषतः ॥ अधमोत्तममध्यानि यानि प्राप पयोनिधिः ॥ ९ ॥ शिवेऽहनि सुनक्षत्रे ग्रहे सौम्ये शुभे रवौ ॥ पूर्वाह्णे मङ्गलैर्युक्ते परीक्षेत
विचक्षणः ॥ १० ॥ प्रमाणं संहतिं छायां गतिं सर्वांगलक्षणम् ॥ दन्तकेशनखश्मश्रु एतत्सर्वं विचक्षणः ॥ ११ ॥ पूर्वमायुः परीक्षेत पश्चाल्लक्षण
मादिशेत् ॥ क्षीणे ह्यायुषि मर्त्यानां लक्षणैः किं प्रयोजनम् ॥ १२ ॥ जघन्यो नवतिः प्रोक्तो मध्यमस्तु शतांगुलः ॥ अष्टोत्तरशतं यस्य
उत्तमं तस्य लक्षणम् ॥ १३ ॥ प्रमाणलक्षणं प्रोक्तं समुद्रेण शुभाशुभम् ॥ यन्मे पुरा देववर मया वै कथितं तव ॥ अतः परं प्रवक्ष्यामि देहाव
यवलक्षणम् ॥ १४ ॥ पादैः समांसकैः[1] स्निग्धै रक्तैः सौम्यैः सुशोभनैः ॥ उन्नतैः स्वेदरहितैः शिराहीनैश्च पार्थिवः ॥ १५ ॥ यस्य पादतले रेखा
सांकुशेव प्रकाशते ॥ सततं हि सुखं तस्य पुरुषस्य न संशयः ॥ १६ ॥ अस्वेदनौ मृदुतलौ कमलोदरसन्निभौ ॥ श्लिष्टांगुली[2] ताम्रनखौ
सुपार्ष्णी व्योमकेशज ॥ १७ ॥ उष्णौ शिराविरहितौ गूढगुल्फौ च भीमज ॥ कूर्मोन्नतौ च चरणौ प्रख्यातौ पार्थिवस्य तु ॥ १८ ॥ शूर्पाकृती[3]
महाबाहो रूक्षौ श्वेतनखौ तथा ॥ वक्रौ शिरासन्ततौ च संशुष्कौ विरलांगुली ॥ १९ ॥ दारिद्र्यदुःखदौ ज्ञेयौ चरणौ भीमनन्दन ॥ ब्रह्मघ्नौ

१ समांसलैः–इ० पा० । २ स्निग्धांगुली–इ० पा० । ३ पादौ वै–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवशार्दूल पक्वमृत्सदृशौ पदौ ॥ २० ॥ पीतावगम्यानिरतौ कृष्णौ पानरतौ सदा ॥ अभक्ष्यभक्षणे श्वेतौ ज्ञेयौ सेनाधिपोत्तम ॥ ॥ २१ ॥ अंगुष्ठौ पृथुलौ येषां ते नरा भाग्यवर्जिताः ॥ क्लिश्यन्ते विकृतांगुष्ठास्ते नराः पादगामिनः ॥ २२ ॥ चिपिटैर्विकृतैर्भग्नैरंगुष्ठै रतिनिन्दिताः ॥ वक्रैर्भग्नैस्तथा ह्रस्वैरंगुष्ठैः क्लेशभागिनः ॥ २३ ॥ शूर्पाकारैश्च विकृतैर्भग्नैर्वक्रैः शिराततैः ॥ सस्वेदैः पाण्डुरूक्षैश्च चरणैरति निन्दिताः ॥ २४ ॥ यस्य प्रदेशिनी दीर्घा अंगुष्ठं या अतिक्रमेत् ॥ स्त्रीभोगं लभते नित्यं पुरुषो नात्र संशयः ॥ कनिष्ठायां तु दीर्घायां सुवर्णस्य तु भागिनः ॥ २५ ॥ चिपिटा विरलाः शुष्का यस्यांगुल्यो भवन्ति वै ॥ सभवेद्दुःखितो नित्यं धनहीनश्च वै[२] गुह ॥ २६ ॥ श्वेतैर्नखैर्विरूक्षैश्च पुरुषा दुःखजीविनः ॥ कुशीलाः कुनखैर्ज्ञेयाः कामभोगविवर्जिताः ॥ विकृतैः स्फुटितैरूक्षैर्नखैर्दारिद्र्यभागिनः ॥ २७ ॥ ब्रह्महत्यां च कुर्वन्ति पुरुषा हरितैर्नखैः ॥ बन्धुभिश्चवियुज्यन्ते कुलक्षयकराश्च ते ॥ २८ ॥ इन्द्रगोपकसंकाशैर्नखैर्नृपतयः स्मृताः ॥ शंखावर्तप्रतीकाशैर्नखैर्भवति पार्थिवः ॥ २९ ॥ ताम्रैर्नखैस्तथैश्वर्यं धन्याः पद्मनखा नराः ॥ रक्तैर्नखैस्तथैश्वर्यं पुष्पितैः सुभगो भवेत् ॥ सूक्ष्मैरुपचितैस्ताम्रैर्नखैर्नृपतयः स्मृताः ॥ ३० ॥ रोमशाभ्यां च जंघाभ्यां दुःखदारिद्र्यभागिनः ॥ बन्धनं ह्रस्वजंघानामैश्वर्यं चैव निर्दिशेत् ॥ ३१ ॥ मृगजंघाश्च राजानो जायन्ते नात्र संशयः ॥ दीर्घजंघाः स्थूलजंघा नित्यं भाग्यविवर्जिताः ॥ ३२ ॥ शृगालजंघाः पुरुषा नित्यं भाग्यविवर्जिताः ॥ काकजंघा नरा ये तु भवेयुर्दुःखभागिनः ॥ ३३ ॥ पीनंजंघास्तथैश्वर्यं प्राप्नुवन्ति न संशयः ॥ सिंहव्याघ्रसमा जंघा धनिनः परिकीर्तिताः ॥ ३४ ॥ पार्थिवानां भवेद्रोम चैकैकं रोमकूपके ॥ पंडितश्रोत्रियाणां च द्वेद्वे ज्ञेये महामते ॥ ३५ ॥ त्रिभिस्त्रिभिस्तथा निःस्वा मानवा दुःखभागिनः ॥ केशाश्चैव महाबाहो निन्दिता पूजितास्तथा ॥ ३६ ॥ निर्मांसजानुर्म्रियते प्रवासे शिवनन्दन ॥ ३७ ॥ सौभाग्यमल्पैः कथितं दारिद्र्यं विकटैस्तथा ॥ निम्नैः स्त्रीजिता ज्ञेयाः समांसै राज्यभागिनः ॥ ३८ ॥ हंसभासशुकानां च तुल्या यस्य गतिर्भवेत् ॥ स भवेत्पार्थिवः पूज्यः समुद्रवचनं यथा ॥ ३९ ॥ अन्येषामपि शस्तानां पक्षिणां च शुभा गतिः ॥ वृषसिंहगजेन्द्राणां गतिर्भोगविवर्धिनी ॥ ४० ॥ जलोर्मिसदृशी या च काकोलूकसमा च या ॥ गतिर्द्रव्यविहीनानां दुःखशोकभयंकरा ॥ ४१ ॥ श्वानोष्ट्रमहिषाणां खरसूकरयोस्तथा ॥ गतिर्मेषसमा

१ नृपशार्दूल–इ० पा०। २ निस्वाः–इ० पा०। ३ भवंति सुभगनरा–इ० पा०। ४ पीनजंघा–इ० पा०। ५ दांभनंदन–इ०, कुलनंदन–इ० पा०। ६ हंसभासादिकंठीनाम्–इ० पा०। ७ पृष्ठाग्र–इ० पा०। ८ भाग्यविवर्द्धिनी–इ० पा०। ९ खरशूकरयोस्तथा–इ० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येषां ते नरा भाग्यवर्जिताः ॥ ४२ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि चतुर्थीकल्पे पुरुषलक्षणवर्णनं नाम चतुर्विंशोध्यायः ॥ २४ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ दक्षिणावर्तलिंगश्च नरो वै पुत्रमान्भवेत् ॥ वामावर्ते तथा लिंगे नरः कन्यां प्रसूयते ॥ १ ॥ स्थूलैः शिरालैर्विषमैर्लिंगैर्दारिद्र्यमादिशेत् ॥ ऋजुभिर्वर्तुलाकारैः पुरुषाः पुत्रभागिनः ॥ २ ॥ निम्नपादोपविष्टस्य भूमिं स्पृशति मेहनः ॥ दुःखितं तं विजानीयात्पुरुषं नात्र संशयः ॥ ३ ॥ भूमौ पादोपविष्टस्य गुल्फौ स्पृशति मेहनः ॥ ईश्वरं तं विजानीयात्प्रमदानां च वल्लभम् ॥ ४ ॥ सिंहव्याघ्रसमो यस्य ह्रस्वो भवति मेहनः ॥ भोगवान्स तु विज्ञेयोऽशेषभोगसमन्वितः ॥ ५ ॥ रेखाकृतिर्मणिर्यस्य मेहने हि विराजते ॥ पार्थिवः स तु विज्ञेयः समुद्रवचनं यथा ॥ ६ ॥ सुवर्णरजतप्रख्यैर्मणिमुक्तासमप्रभैः ॥ प्रवालसदृशैः स्निग्धैर्मणिभिः पार्थिवो भवेत् ॥ ७ ॥ पांडुरैर्मलिनै रूक्षैर्दीर्घव्यासैर्दिशो व्रजेत् ॥ समैस्तथोन्नतैश्चापि सुस्निग्धैर्मणिभिर्गृही ॥ ८ ॥ धनरक्षास्तथा स्त्रीणां भोक्तारस्ते भवंतिहि ॥ मणिभिर्मध्यनिम्नैस्तु पितरस्ते भवंति हि ॥ ९ ॥ युवतीनां महाबाहो निःस्वाश्चापि भवंति ते॥ नोल्बणैश्चापि धनिनो नरा वीर भवंति हि ॥ १० ॥ मूत्रधारा पतेदेका वलिता दक्षिणा यदि ॥ स भवेत्पार्थिवः पृथ्व्याः समुद्रवचनं यथा ॥ ११ ॥ द्वे धारे च तथा स्निग्धे धनवान्भोगवान्स्मृतः ॥ बहुधारास्तथा रूक्षाः सशब्दाः पुरुषाधमाः ॥ १२ ॥ मीनगंधि भवेद्रेतो धनवान्पुत्रवान्भवेत् ॥ हविर्गंधि भवेद्यस्य धनाढ्यः श्रोत्रियः स्मृतः ॥१३॥ मूर्षगंधिर्भवेत्पुत्री पद्मगंधिर्नृपः स्मृतः॥लाक्षागंधिर्भवेद्यश्च बहुकन्यः प्रजायते॥मद्यगंधिर्भवेद्योद्धा क्षारगंधिर्दरिद्रकः ॥१४॥ शीघ्रमैथुनगामी यः स दीर्घायुरतोऽन्यथा ॥ अल्पायुर्देवशार्दूल विज्ञेयो नात्र संशयः ॥ १५ ॥ तद्वच्छुक्रः स्त्रीजनको मांसगन्धी च भोगवान् ॥ पद्मवर्णं भवेद्रक्तं स नरो धनवान्भवेत् ॥ १६ ॥ किंचिद्रक्तं तथा कृष्णं भवेद्यस्य तु शोणितम् ॥ अधमः स तु विज्ञेयः सदा दुःखैकभाजनम् ॥१७॥ प्रवालसदृशं स्निग्धं भवेद्यस्य च शोणितम् ॥ राजानं तं विजानीयात्सप्तद्वीपाधिपं गुह ॥ १८ ॥ विस्तीर्णा मांसला स्निग्धा बस्तिः पुंसां प्रशस्यते॥ निर्मांसा विकटा रूक्षा बस्तिर्येषां न ते शुभाः ॥ १९॥ गोमायुसदृशी यस्य श्वानोष्ट्रमहिषस्य च ॥ स भवेद्दुःखितो नित्यं पुरुषो नात्र संशयः ॥२०॥ यश्चैकवृषणस्तात जले प्राणान्विमुंचति ॥ स्त्रीचञ्चलस्तु विषमैः समै राज्यं प्रचक्षते॥२१॥ ऊर्ध्वगैश्चापि ह्रस्वायुः शतंजीवी प्रलंबधृक् ॥ मानवाश्चापि रक्तैस्तु धनवंतो भवंति वै॥२२॥ स्थूलस्फिग्भवति क्षेमी द्रव्ययुक्तः समांसधृक् ॥



१ दुर्लभम्–इ० पा० । २ मेषगंधिर्भवेत्पुत्री–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याघ्रस्फिङ्मंडलो राजा मंडूकस्फिङ्नराधिपः ॥ द्विमंडलो महाबाहो सिंहस्फिक्सार्वभौमता ॥२३॥ उष्ट्रवानरयोर्यस्तु धारयेत्स्फिङ्माहामते ॥ धनधान्यविहीनोऽसौ विज्ञेयो भीमनंदन ॥ २४ ॥ पुमान्मृगोदरो धन्यो मयूरोदर एव च ॥ व्याघ्रोदरो नरपती राजा सिंहोदरो भवेत् ॥ २५ ॥ मंडूकसदृशं यस्य पुरुषस्योदरं भवेत् ॥ स भवेत्पार्थिवः पृथ्व्यां समुद्रवचनं यथा ॥ २६ ॥ मांसलैर्ऋजुभिर्वृत्तैः पार्श्वैर्नृपतयः स्मृताः ॥ ईश्वरो व्याघ्रपृष्ठस्तु सेनायाश्चैव नायकः ॥२७॥ सिंहपृष्ठो नरो यस्तु बंधनं तस्य निर्दिशेत् ॥ कूर्मपृष्ठास्तु राजानो धनसौभाग्यभागिनः ॥२८॥ विस्तीर्णं हृदयं येषां मांसलोमचितं समम् ॥ शतायुषो विजानीयाद्भोगभाजो महाधनान् ॥ २९ ॥ विरलाः शुष्कास्तथा रूक्षा दृश्यंतेंऽगुलयः करे ॥ स भवेद्दुःखितो नित्यं नरो दारिद्र्यभाजनम् ॥३० ॥ यस्य मीनसमा रेखा कर्मसिद्धिश्च तस्य तु ॥ धनवान्स तु विज्ञेयो बहुपुत्रश्च मानवः॥३१॥ तुला यस्य तु वेदी वा करमध्ये तु दृश्यते ॥ तस्य सिध्यति वाणिज्यं पुरुषस्य न संशयः ॥ ३२ ॥ सौम्ये पाणितले यस्य द्विजस्य तु विशेषतः॥ यज्ञयाजी भवेन्नित्यं बहुवित्तश्च मानवः ॥ ३३ ॥ शैलं वाप्यथ वा वृक्षः करमध्ये तु दृश्यते ॥ अचलां श्रियमाप्नोति बहुभृत्यसमन्वितः ॥ ३४ ॥ शक्तितोमरबाणासिरेखा[1] चापोपमा तथा ॥ यस्य हस्ते महाबाहो स जयेद्विग्रहे रिपून् ॥ ३५ ॥ ध्वजश्चाप्यथ वा शंखः करमध्ये तु दृश्यते ॥ समुद्रयायी स भवेद्धनी च सततं गुह ॥ ३६ ॥ श्रीवत्समथ वा पद्मं वज्रं वा चक्रमेव च ॥ रथो वाप्यथ वा कुंभो यस्य हस्ते प्रकाशते ॥ राजानं तं विजानीयात्परसैन्यविदारणम् ॥ ३७ ॥ दक्षिणे तु करांगुष्ठे यवो यस्य तु दृश्यते ॥ सर्वविद्याप्रवक्ता च भवेद्वै नात्र संशयः ॥ ३८ ॥ यस्य पाणितले रेखा कनिष्ठामूलमु[2]त्थिता ॥ गता मध्यं प्रदेशिन्याः स जीवेच्छरदः शतम् ॥ ३९ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्धसाहस्र्यां संहितायां ब्राह्मे पर्वाणि चतुर्थीकल्पे पुरुषलक्षणवर्णनं नाम पंचविंशोऽध्यायः ॥ २५ ॥ ॥ ब्रह्मोवाच ॥ ॥ समकुक्षिर्भवेद्भोगी निम्नकुक्षिर्धनापहः ॥ मायावी विषमा[3] कुक्षिस्तथा कुहककृत्सदा ॥ १ ॥ राजा स्यान्निम्नकुक्षिस्तु सार्वभौमो महाबलः ॥ सर्पोदरा दरिद्राः स्युर्बहुभक्षाश्च सुव्रत ॥ २ ॥ विस्तीर्णाभिर्मंडलाभिरुन्नताभिश्च नाभिभिः ॥ भवंति सुखिनो वीरा धनधान्यसमन्विताः ॥३॥ निम्नाभिरथ स्वल्पाभिः क्लेशभाजो भवंति हि ॥ वलिर्मध्यंगता वीर विषमा च विशेषतः ॥ धनहानिं तथा शूलं नित्यं जनयते विभो ॥ ४ ॥ वामावर्ता सदा शान्तिं करोतीति विदुर्बुधाः ॥ करोति मेधां दक्षिणेन संप्रवृत्ता दिवस्पते ॥५॥ पार्श्वायता दीर्घमायुरैश्वर्यमूर्ध्वतः स्मृतम् ॥ गवाढ्यतामधस्ताच्च करोतीति

१ पद्मनालोपमा भवेत्–इ० पा० । २ उच्छ्रिता–इ० पा० । ३ यस्येति शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदुर्बुधाः ॥ ६॥ शतपत्रकर्णिकाभा नाभिर्यस्य महामते॥ भूपत्वं कुरुते सा तु पुरुषस्य न संशयः ॥७॥ समोदरो भवेद्भोगी निस्वः स्याद्विषमो
दरः॥ सूक्ष्मोदरो भवेद्वाग्मी बहुसम्पत्समन्वितः ॥८॥ शस्त्रेणांतं व्रजेद्वीर स्त्रीभोगं चाप्नुयात्तथा ॥ आचार्यो बहुपुत्रश्च यथासंख्यं विनिर्दिशेत् ॥९॥
वलिभिर्देवशार्दूल इत्याह स पयोनिधिः॥अगम्यागामिनो ज्ञेया विषमाभिर्न संशयः॥१०॥ऋजुभिर्वसुभोगी स्यात्परदारविनिंदकः॥मांसलैर्मृदुभिः
पार्श्वैः राजा स्यान्नात्र संशयः ॥ ११ ॥ अनूर्ध्वचिबुका ये तु सुभगास्ते भवंति वै ॥ निर्धना विषमैर्दीर्घैर्भवन्तीह सुवीरज ॥ १२ ॥ पीनैश्चोप
चितैर्निम्नैः स्कंधैर्भीमांगसंभव ॥ राजानः सुखिनश्चापि भवंतीह न संशयः ॥ १३ ॥ समोन्नतं तु हृदयं समं च पृथु चैव हि ॥ अवेपनं मांसलं
च पार्थिवानां न संशयः ॥ १४ ॥ खररोमचितं वीरशिरालं च विशेषतः ॥ अधनानां भवेदेव हृदयं ऋभवोत्तम ॥ समवक्षसोऽर्थयुताः पीनैः
शूराः स्मृता बुधैः ॥ १५ ॥ तनुभिर्द्रव्यहीनाः स्युरसमैश्चाप्यकिंचनाः ॥ वध्यंते चापि शस्त्रेण नात्र कार्या विचारणा॥ १६ ॥ हनुभिर्विषमैर्वीर
जन्महीनो भवेन्नरः ॥ यस्योन्नतो भवेद्धनुः स भोगी स्यान्न संशयः ॥ १७ ॥ निर्मांसैर्विषमैर्वीर निःस्वो निम्नैः प्रचक्ष्यते ॥ धनवांश्च भवे
त्पीनैः सुखभोगसमन्वितः ॥ विषमैरर्थहीनः स्याद्दुःखभागी सदा नरः ॥ १८ ॥ चिपिटग्रीवको दुष्टो मतो लोके स वै गुह ॥ शूरः स्यान्महिष
ग्रीवो मृगग्रीवो भयातुरः ॥ १९ ॥ कंबुग्रीवो भवेद्राजा लंबकठोऽग्रलक्षणः ॥ ह्रस्वग्रीवस्तु धनवान्सुसुखी भोगवांस्तथा ॥ २० ॥ निर्मांसौ रो
मशौ भग्नावल्पौ वापि विशेषतः ॥ निर्धनस्येदृशावंसौ प्रख्यातौ व्योमकेशज ॥ २१ ॥ भवेदरोमशं पृष्ठं धनिनां भीमसंभव ॥ सलोमशं तथा
वक्रं निर्धनानां बलाधिप ॥ २२ ॥ अस्वेदनावुन्नतौ च तथा पीनौ षडानन ॥ समरोमसुगंधौ च कक्षौ ज्ञेयौ धनान्वितौ ॥ २३ ॥ अव्युच्छिन्नौ
तथा श्लिष्टौ विपुलौ च सुराधिप ॥ शूराणामीदृशावंसौ नगजानंदवर्धन ॥ २४ ॥ उद्बद्धबाहुको यस्तु वधबंधनमाप्नुयात् ॥ दीर्घबाहुर्भवेद्राजा सम्
द्रवचनं यथा ॥ २५ ॥ प्रलंबबाहुर्विज्ञेयो नरः सर्वगुणान्वितः ॥ ह्रस्वबाहुर्भवेद्दासः परप्रेष्यकरोऽपि वा ॥ २६ ॥ वामावर्तभुजा ये तु दीर्घायत
भुजाश्च ये ॥ संपूर्णबाहू राजा स्यादित्याह स पयोनिधिः ॥ २७ ॥ ग्रीवा च वर्तुलाकारा कंबुरेखासमावृता ॥ स भवेत्पार्थिवो भूमौ सर्वदुष्टनि
बर्हणः ॥ २८ ॥ दीर्घग्रीवा बकग्रीवा शुकग्रीवाश्च ये नराः ॥ उष्ट्रग्रीवाः करिग्रीवाः सर्वे ते निर्धनाः स्मृताः ॥ २९ ॥ इभांगसदृशौ वृत्तौ समौ
पीनौ च सुव्रत ॥ आजानुलंबिनौ बाहू पार्थिवानां न संशयः ॥ ३० ॥ दरिद्राणां लोमशौ ह्रस्वौ बाहू ज्ञेयौ सुरोत्तम ॥ तस्कराणां च विषमौ

१ चिबुकैर्ऋभयोत्तम-इ० पा० । २ बहुला यस्य-इ० पा० । ३ करिकरोपमावित्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थूलौ सूक्ष्मौ च सुव्रत ॥ ३१ ॥ निम्नं करतलं यस्य पितृवित्तं न तस्य वै ॥ भवेदार्भवशार्दूल तथा भीरुश्च मानवः ॥ ३२ ॥ सुवृत्ततनुनिम्नेन धनवान्करतलेन तु ॥ उत्तानकरतलो दाता भवतीति न संशयः ॥ ३३ ॥ विषमा भवंति विषमैर्निम्नाश्चापि विशेषतः ॥ करतलैर्देवशार्दूल लाक्षाभैरीश्वराः स्मृताः॥३४॥ अगम्यागमनं पीतै रूक्षैर्निर्धनता स्मृता ॥ अपेयपानं कुर्वंति नीलकृष्णैः सदैव हि ॥ ३५ ॥ निम्नाः स्निग्धा भवेन्नृणां रेखा करतले गुह ॥ धनिनां न दरिद्राणामित्याह स पयोनिधिः ॥ ३६ ॥ विरलांगुलयो ये तु ते दरिद्राः प्रचक्षते ॥ धनिनस्तु महाबाहो ये घनांगुलयो नराः॥३७॥वदनं मंडलं यस्य धर्मशीलं तमादिशेत् ॥ शुंडवक्त्रा नरा ये तु दुर्भगास्ते न संशयः॥३८॥हरिवक्त्रा जिह्मवक्त्रा विकृतास्यास्तथा नराः ॥ भग्नवक्त्राः करालास्याः सर्वे ते तस्कराः स्मृताः ॥ ३९ ॥ संपूर्णवक्त्रा राजानो गजसिंहाननास्तथा ॥ छागवानरवक्त्राश्च धनिनः परिकीर्तिताः ॥ ४० ॥ यस्य गंडौ सुसंपूर्णौ पद्मपत्रसमप्रभौ ॥ कृषिभागी भवेन्नित्यं बहुवित्तश्च मानवः ॥ ४१ ॥ सिंहव्याघ्रगजेंद्राणां कपोलः सदृशो यदि ॥ महाभोगी स विज्ञेयः सेनायाश्चैव नायकः ॥ ४२ ॥ वदनं तु समं श्लक्ष्णं सौम्यं संवृतमेव हि ॥ पार्थिवानां महाबाहो विपरीतं तु दुःखदम् ॥ ४३ ॥ महामुखं तु देवेश दुर्भगत्वं प्रयच्छति ॥ स्त्रीमुखं पुत्रनाशाय मंडलं सुखितां व्रजेत् ॥ ४४ ॥ द्रव्यनाशाय वै दीर्घं पापदं भयदं तथा ॥ धूर्तानां चतुरस्रं स्यात्पुत्रहानिकरं शृणु ॥ ४५ ॥ निम्नवक्त्रं च देवेन्द्र पुत्रहानिकरं भवेत् ॥ ह्रस्वं भतति कीनाशे पूर्णकांतं च भोगिनाम् ॥ ४६ ॥ रक्ताधरो नरपतिर्धनवान्कमलाधरः ॥ स्थूलोष्ठा हनुमूलाश्च शुष्कैस्तीक्ष्णैश्च दुःखिताः ॥ ४७ ॥ अस्फोटिताग्रं स्निग्धं च नतं मृदु तथा गुह ॥ संपूर्णं च सदा शस्तं श्मश्रु भूमिपतेर्गुह ॥ ४८ ॥ रक्तैश्चाल्पैस्तथा रूक्षैः श्मश्रुभिर्भीमनन्दन ॥ नराश्चोरा भवंत्येव परदाररतास्तथा ॥ ४९ ॥ निर्मांसौ यस्य वै कर्णौ संग्रामान्नाशमृच्छति[1] ॥ चिपिटाभ्यां भवेद्भोगी ह्रस्वौ च कृपणस्य च ॥ ॥ ५० ॥ शंकुकर्णश्च भूनाथः सर्वशत्रुभयङ्करः ॥ दीर्घायू रोमशाभ्यां तु विपुलाभ्यां नराधिपः ॥ भोगी च स भवेन्नित्यं देवब्राह्मणपूजकः ॥५१॥ शिरावबद्धौ क्रूरस्य व्यालम्बौ च विशेषतः ॥ मांसलौ सुखदौ ज्ञेयौ श्रवणौ व्योमकेशज ॥ ५२ ॥ भोगी स्यान्निम्नगण्डो वै मन्त्री संपूर्णगंडकः ॥ शुभभाक्छुकनासस्तु चिरजीवी शुष्कनासिकः ॥ ५३ ॥ कुंदकुड्मलसङ्काशैः प्रकाशैर्दशनैर्नृपः ॥ ऋक्षवानरदंताश्च नित्यं क्षुत्परिपीडिताः ॥ ५४ ॥ हस्तिदंताः खरदंताः स्निग्धदंता गुणान्विताः ॥ करालैर्विरलै रूक्षैर्दशनैर्दुःखजीविनः ॥ ५५ ॥ द्वात्रिंशद्दंता राजान एकत्रिंशच्च भोगवान् ॥ त्रिंश

---

१ न स गच्छति–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हंता नरा नित्यं सुखदुःखित्वभागिनः ॥ ऊनत्रिंशच्च दशनैः पुरुषा दुःखभागिनः॥५६॥ कृष्णजिह्वो भवेत्प्रेष्यः सबलया तु जिह्वया ॥ भवेत्को पस्य कर्ता वै स्थूलरूक्षश्च जिह्वया ॥ ५७॥ श्वेतजिह्वा नरा ज्ञेयाः शौचाचारसमन्विताः ॥ पद्मपत्रसमा जिह्वा सूक्ष्मा दीर्घा सुशोभना॥स्थूला च न च विस्तीर्णा येषां ते मनुजाधिपाः ॥ ५८ ॥ निम्ना स्निग्धा च ह्रस्वा च रक्ताग्रा रसना यदि ॥ सर्वविद्याप्रवक्तारस्ते भवंति न संशयः॥५९॥ कृष्णतालुर्नरो यस्तु स भवेत्कुलनाशनः ॥ सुखभागी दुःखभागी पीततालुर्नराधिपः ॥ ६० ॥ विकृतं स्फुटितं रूक्षं तालुकं न प्रशस्यते ॥ सिंह तालुर्नरपतिर्गजतालुस्तथैव च ॥ पद्मतालुर्भवेद्राजा श्वेततालुर्धनेश्वरः ॥ ६१ ॥ हंसस्वरा नरा धन्या मेघगम्भीरनिःस्वनाः ॥ क्रौंचस्वनाश्च राजानो भोगवंतो महाधनाः ॥ ६२ ॥ चक्रवाकस्वना धन्या राजानो धर्मवत्सलाः ॥ कुम्भस्वनो नरपतिर्दुंदुभिस्वन एव च ॥ रूक्षदीर्घस्वराः क्रूराः पशूनां सदृशा न तु ॥ ६३ ॥ गुर्गुरस्वरसंयुक्ताः पुरुषाः क्लेशभागिनः ॥ चापस्वना भाग्ययुता भिन्नकांस्यस्वराश्च ये ॥ क्षीणभिन्नस्वरा ये स्युरधमास्ते प्रकीर्तिताः ॥ ६४ ॥ पार्थिवास्तनुनासाश्च दीर्घनासाश्च भोगिनः ॥ ह्रस्वनासा नरा ये तु धर्मशीलास्तु ते मताः ॥ ६५ ॥ हस्त्य श्वसिंहनासाश्च सूचीनासाश्च ये नराः ॥ तेषां सिध्यति वाणिज्यं हयानां चैव विक्रयः ॥ ६६ ॥ विकृता नासिका यस्य स्थूलाग्रा रूपवर्जिता ॥ पापकर्मा स विज्ञेयः सामुद्रवचनं यथा ॥ ६७ ॥ दाडिमीपुष्पसंकाशे भवेतां यस्य लोचने ॥ भूपतिः स तु विज्ञेयः सप्तद्वीपाधिपो गुह ॥ ६८ ॥ व्याघ्राक्षाः कोपना ज्ञेयाः कर्कटाक्षाः कलिप्रियाः ॥ बिडालहंसनेत्राश्च भवंति पुरुषाधमाः ॥ ६९ ॥ मयूरनकुलाक्षाश्च नरास्ते मध्यमाः स्मृताः ॥ न श्रीस्त्यजति सर्वज्ञ पुरुषं मधुपिंगलम् ॥ ७० ॥ आपिंगलाक्षा राजानः सर्वभोगसमन्विताः ॥ रोचना हरितालाक्षा गुञ्जापिंगा धनेश्वराः ॥ बल सत्त्वगुणोपेताः पृथिवीचक्रवर्तिनः ॥७१॥ द्विमात्रावीक्षणा नित्यं जीवंति परमाश्रिताः ॥ त्रिमात्रास्यंदिनो ज्ञेयाः पुरुषाः सुखभागिनः ॥७२॥ चतुर्मात्रानिमेषैश्च नयनैरीश्वराः स्मृताः ॥ दीर्घायुषोधर्मरताः पंचमात्रानिमेषिणः ॥ ७३ ॥ ह्रस्वकर्णा महाभागा महाकर्णाश्च ये नराः ॥ आवर्त कर्णा धनिनः स्निग्धकर्णास्तथैव च ॥ ७४ ॥ दीर्घायुषः शुक्तिकर्णाः शंखकर्णा महाधनाः ॥ दीर्घायुषो दीर्घकर्णा लंबकर्णास्तपस्विनः ॥ ७५ ॥ ललाटेनार्धचन्द्रेण भवंति पृथिवीश्वराः ॥ विपुलेन ललाटेन महाधनपतिः स्मृतः ॥ स्वल्पेन तु ललाटेन नरो धर्मरतः स्मृतः ॥ ७६ ॥ रेखाः पंच ललाटे तु स्त्रिया वा पुरुषस्य वा ॥ शतं जीवति वर्षाणामैश्वर्यं चाधिगच्छति ॥ ७७ ॥ चतूरेखामशीतिं तु त्रिभिः सप्ततिमेव च ॥ द्वाभ्यां

१ दुःखी–इ० पा० । २ दुर्वाच–इ० पा० । ३ मांसला–इ० पा० । ४ पुरुषः–इ० पा० । ५ कुक्कुटाक्षाः–इ० पा० । ६ न स्त्री त्यजति–इ०पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षष्टिं तु रेखाभ्यां चत्वारिंशत्तथैकया ॥ अरेखेन ललाटेन विज्ञेया पंचविंशतिः ॥ ७८ ॥ रेखाच्छेदैस्तु विज्ञेया हीनमध्योत्तमा नराः ॥ अल्पायुषस्तथाल्पाभिर्व्याधिभिः परिपीडिताः ॥ ७९ ॥ त्रिशूलं पट्टिशं वापि ललाटे यस्य दृश्यते ॥ ईश्वरं तं विजानीयाद्भोगिनं कीर्तिमाश्रितम् ॥ ॥ ८० ॥ उत्क्रांतनिम्नं तु शिरः स्वल्पोपहतमेव च ॥ चन्द्राकारं नरेन्द्राणां गवाढ्यं मंगलं स्मृतम् ॥ ८१ ॥ विषमं तु दरिद्राणां शिरो दीर्घं तु दुःखिनाम् ॥ नागकुंभनिभं राज्ञः समं सर्वत्र भोगिनः ॥ ८२ ॥ कपिलैः स्फुटितै रूक्षैः स्थूलैश्च शिखरेशयैः ॥ दुःखिताः पुरुषा ज्ञेया रोमश्मश्रुभिरेव च ॥ ८३ ॥ रूक्षा विवर्णा निस्तेजाः खराः स्थूलाश्च मूर्धजाः ॥ नातिस्तोका न बहुशो मूर्धजा दुःखभागिनः ॥ ८४ ॥ विरलाश्च मृदुस्निग्धा भ्रमरांजनसप्रभाः ॥ कचा यस्य तु दृश्यंते स भवेत्पृथिवीपतिः ॥ ८५ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि चतुर्थीकल्पे पुरुषलक्षणवर्णनं नाम षड्विंशोऽध्यायः ॥ २६ ॥ ॥ कार्तिकेय उवाच ॥ ॥ संक्षेपतो मम विभो लक्षणानि नृपस्य तु ॥ शुभानि चांगजातानि ब्रूहि मे वदतां वर ॥ १ ॥ ॥ ब्रह्मोवाच ॥ ॥ शृणु वक्ष्येंगजातानि पार्थिवस्य शुभानि च ॥ पार्थिवो ज्ञायते यैस्तु नराणां मध्यभागतः ॥ २ ॥ त्रीणि यस्य महाबाहो विपुलानि नरस्य तु ॥ उन्नतानि तथा षड् वै गंभीराणि च त्रीणि वै ॥ ३ ॥ चत्वारि चापि ह्रस्वानि सप्त रक्तानि वा विभो ॥ दीर्घाणि चापि सूक्ष्माणि भवंति यस्य पंच वा ॥ ४ ॥ नाभिः संधिः स्वनश्चेति गंभीराणि च त्रीणि वै ॥ वदनं च ललाटं च दंतोत्तम उरस्तथा ॥ ५ ॥ विस्तीर्णमेतत्त्रितयं वीर यस्य नरस्य तु ॥ स राजा नात्र संदेहः शृणुष्वेवोन्नतानि च ॥ ६ ॥ कृकाटिका तथा चास्यं नखा वक्षोथ नासिका ॥ कक्षे चापि महाबाहो षडेतानि विदुर्बुधाः ॥ ७ ॥ लिंगं पृष्ठं तथा ग्रीवा जंघा ह्रस्वानि सुव्रत ॥ नेत्रांते हस्तपादौ तु ताल्वोष्ठौ च सुरोत्तम ॥ जिह्वा रक्ता नखाश्चैव सप्तैतानि महामते ॥ ८ ॥ त्वचः कररुहाः केशा दशना ऋषभोत्तम ॥ सूक्ष्माण्येतानि च गुह पंच चापि विदुर्बुधाः ॥ ९ ॥ नासिकालोचनं बाहू स्तनयोरंतरं हनुः ॥ इति दीर्घमिदं प्रोक्तं पंचकं भूभुजां नृप ॥ १० ॥ क्षुतं राज्ञां सकृद्द्विस्त्रिर्नादितं ह्लादितं तथा ॥ दीर्घायुषां प्रयुक्तं ते हसितं च विदुर्बुधाः ॥ ११ ॥ पद्मपत्रनिभे नेत्रे धनिनां शिवनंदन ॥ भार्गवीमाप्नुयात्सोपि रक्तांते यस्य लोचने ॥ १२ ॥ मधुपिंगैर्महात्मानो नरा ज्ञेयाः सुराधिप ॥ भीरवो हि कृशाक्षास्तु चौरा मंडलचक्रकैः ॥ १३ ॥ क्रूराः केकरनेत्रास्तु गंभीरैरर्थसंपदः ॥ नीलोत्पलाभैर्वेदविदो भृशं कृष्णैस्तथा

१ छत्राकारम्-इ०पा०। २ क्रोधनाःकोकनेत्रास्तु-इ० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थिता ॥ मंत्रित्वं स्थूलसुदृशो वदंति भुवि तद्विदः ॥ १४ ॥ श्यामाक्षाः सुभगा ज्ञेया दीनाक्षैश्च दरिद्रता ॥ विस्तीर्णैर्भोगिनो ज्ञेया विपुलैश्च तथा गुह ॥ १५ ॥ अभ्युन्नताभिर्ह्रस्वायुर्विशालाभिः सुखी भवेत् ॥ दारिद्रो विपन्नाभिस्तु ततो ज्ञेयः सुरोत्तम ॥ १६ ॥ भ्रुवो बालेंदुसदृशा धनिनामार्भवोत्तम ॥ दीर्घाभिर्निर्धनो ज्ञेयः संसक्ताभिस्तु सुव्रत ॥ १७ ॥ क्षीणाभिरर्थहीनाः स्युर्नरा ज्ञेयाःसुरोत्तम ॥ मध्ये नतभ्रुवो ये च परदाररतास्तु ते ॥ १८ ॥ विरलैरुन्नतैः शंखैर्धन्याः स्युर्नात्र संशयः ॥ निम्नैः स्तुत्यर्थसंसक्ता उन्नतैश्च जनाधिपाः ॥ १९ ॥ विषमललाटा विधनाः सदा स्युर्देवसत्तम ॥ आचार्याः शुक्तिसदृशैर्नराः स्युर्नात्र संशयः ॥ २० ॥ उन्नतशिरोभिराढ्या नरा ज्ञेयाः सदा गुह ॥ वधबंधभागिनो वीरा नरा निम्नललाटिनः ॥ ॥ भृशमुन्नतैश्च मूर्खाश्च कृपणाश्च तथा नतैः ॥ २१ ॥ शुभावहं मनुष्याणां वदनं स्याद्यथा शृणु ॥ अदीनमाननं स्निग्धं सस्मितं च विशेषतः ॥ २२ ॥ साश्रु दीनं तथा रूक्षमस्निग्धं निंदितं गुह ॥ असंभाव्यं मुखं ज्ञेयं नराणां नगदारण ॥ २३ ॥ अकंपं शुभदं ज्ञेयं नराणां हसितं गुह ॥ निमीलिताक्षं पापस्य हसितं चार्भवोत्तम ॥ २४ ॥ आमंडलं शिरो यस्य स गवाढ्यो नरो भवेत् ॥ छत्राकृति शिरो यस्य स भवेन्नृपतिर्नरः ॥ २५ ॥ चिपिटाकारितशिरा हन्याद्वै पितरौ नरः ॥ घंटाकृति शिरोध्वानमसकृत्सेवते नरः ॥ निम्नं शिरोनर्थदं स्यान्नराणामार्भवोत्तम ॥ २६ ॥ गुडैः स्निग्धैस्तथा कृष्णैरभिन्नाग्रैस्तथैव हि ॥ केशैर्न चातिबहुलैर्मृदुभिः पार्थिवो भवेत् ॥ २७ ॥ बहुलाः कपिलाः स्थूला विषमाः स्फुटितास्तथा ॥ परुषा ह्रस्वातिकुटिला दरिद्राणां कचा घनाः ॥ २८ ॥ इत्युक्तं लक्षणं नृणां शुभं वाशुभमेव च ॥ योषितां तदिदानीं ते लक्षणं वच्मि भीमज ॥ २९ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि चतुर्थीकल्पे पुरुषलक्षणवर्णनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ॥ ब्रह्मोवाच ॥ ॥ शृण्विदानीं महाबाहो स्त्रीलक्षणमनुत्तमम् ॥ यन्मयोक्तं पुरा वीर नारदस्य महात्मनः ॥ १ ॥ तत्त्वं विज्ञायते येन शुभाशुभमवस्थितम् ॥ निंदितं च प्रशस्तं च स्त्रीणां वक्ष्यामि लक्षणम् ॥ २ ॥ मातरं पितरं चैव भ्रातरं मातुलं तथा ॥ द्वौ तु बिंबौ परीक्षेत समुद्रस्य वचो यथा ॥ ३ ॥ मुहूर्तेतिथिसंपन्ने नक्षत्रे चाभिपूजिते ॥ द्विजैस्तु सह वागम्य कन्यां वीक्षेत शास्त्रवित् ॥ ४ ॥ हस्तौ पादौ परीक्षेत अंगुलीर्नखमेव च ॥ पाणिमेव च जंघे च कटिनासोरु एव च ॥५॥ जघनोदरपृष्ठं च स्तनौ कर्णौ भुजौ तथा ॥ जिह्वां चौष्ठौ च दंताश्च कपोलं गलकं तथा ॥ ६ ॥ चक्षुर्नासा ललाटं च शिरः केशांस्तथैव च ॥ रोमराजिं स्वरं वर्णमावर्तानि तु वा

१ धनाढ्याः–इ० पा० । २ मुतान्नसंसक्ताः–इ० पा० । ३ अदीनानश्रुस्निग्धं च–इ० पा० । ४ च तथा गुह–इ० पा० । ५ पाणिरेखा च–इ० पा० । ६ रोमराजिस्तथामध्यमावर्तागानि–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुनः ॥७॥ यस्यास्तु रेखाग्रीवायां यां च रक्तांतलोचना ॥ यस्य सा गृहमागच्छेत्तद्गृहं सुखमेधते ॥८॥ ललाटे दृश्यते यस्यास्त्रिशूलं देवनिर्मितम्॥बहूनां स्त्रीसहस्राणां स्वामिनीं तां विनिर्दिशेत् ॥९॥ राजहंसगतिर्यस्या मृगाक्षी मृगवर्णिका ॥ समशुक्लाग्रदंता च कन्यां तामुत्तमां विदुः॥१०॥ मंडूककुक्षी या कन्या न्यग्रोधपरिमंडला॥एकं जनयते पुत्रं सोपि राजा भविष्यति॥११॥हंसस्वरा मृदुवचा या कन्या मधुपिंगला॥ अष्टौ जनयते पुत्रान्धनधान्यविवर्धिनी॥ १२ ॥ आयतौ श्रवणौ यस्याः सुरूपा चापि नासिका॥ भ्रुवौ चेन्द्रायुधाकारौ सात्यंतं सुखभागिनी॥ १३ ॥ तन्वी श्यामा तथा कृष्णा स्निग्धांगी मृदुभाषिणी ॥ शंखकुंदेंदुदशना भवेदैश्वर्यभागिनी ॥१४॥ विस्तीर्णं जघनं यस्या वेदिमध्या तु या भवेत् ॥ आयते विपुले नेत्रे राजपत्नी तु सा भवेत् ॥१५॥ यस्याः पयोधरे वामे हस्ते कर्णे गलेपि वा ॥ मशकं तिलकं वापि सा पूर्वं जनयेत्सुतम् ॥१६॥ गूढगुल्फांगुलिशिरा अल्पपार्ष्णिः सुमध्यमा ॥ रक्ताक्षी रक्तचरणा सात्यंतं सुखभागिनी॥१७॥ कूर्मपृष्ठायतनखौ स्निग्धभावविवर्जितौ ॥ वक्रांगुलितलौ पादौ कन्यां तां परिवर्जयेत् ॥१८॥ येन केनचिदंशेन मांसं यस्या विवर्धते ॥ रासभीं तादृशीं विद्यान्न सा कल्याणमर्हति ॥१९॥ पादे प्रदेशिनीयस्या अंगुष्ठं समतिक्रमेत् ॥ दुःशीला दुर्भगा ज्ञेया कन्यां तां परिवर्जयेत् ॥ २० ॥ पादे मध्यमिका यस्याः क्षितिं न स्पृशते यदि ॥ रमते सा न कौमारे स्वच्छंदा कामचारिणी ॥ २१ ॥ पादे अनामिका यस्याः क्षितिं न स्पृशते यदि ॥ द्वितीयं पुरुषं हत्वा तृतीये सा प्रतिष्ठिता ॥ २२ ॥ पादे कनिष्ठा यस्यास्तु क्षितिं न स्पृशते यदि ॥ द्वितीयं पुरुषं हत्वा तृतीये सा प्रतिष्ठिता ॥ २३ ॥ न देविका न धनिका न धान्यप्रतिनामिका ॥ गुल्मवृक्षसनाम्नी च कन्यां तां परिवर्जयेत् ॥२४॥ इंद्रचंद्रादिपुरुषसनाम्नी च यदा भवेत् ॥ नैताःपतिषु रज्यंते याश्च नक्षत्रनामिकाः ॥ २५ ॥ आवर्तः पृष्ठतो यस्या नाभिं समनुविंदति ॥ तदपत्यं भवेद्ध्रस्वं ह्रस्वायुश्च विनिर्दिशेत् ॥२६॥ पृष्ठावर्ता पतिं हंति नाभ्यावर्ता पतिव्रता ॥ कट्यावर्ता तु स्वच्छंदा न कदाचिद्विरज्यते ॥ २७ ॥ यस्यास्तु हसमानाया गंडे जायेत कूपकम् ॥ रमते सा न कौमारे स्वच्छंदा कार्यकारिणी ॥ ॥ २८ ॥ यस्यास्तु गच्छमानायाष्टिट्टीकायति जंघिका ॥ पुत्रं व्यवस्येत्सा कर्तुं पतित्वे नात्र संशयः ॥ २९ ॥ स्थूलपादा च या कन्या सर्वांगेषु च लोमशा ॥ स्थूलहस्ता च या स्याद्वै दासीं तां निर्दिशेद्बुधः ॥ ३० ॥ यस्याश्चोत्कटकौ पादौ मुखं च विकृतं भवेत् ॥ उत्तरोष्ठे च रोमाणि सा क्षिप्रं भक्षयेत्पतिम् ॥ ३१ ॥ त्रीणि यस्याः प्रलंबंते ललाटमुदरं स्फिचौ ॥ त्रीणि भक्षयते सा तु देवरं श्वशुरं पतिम् ॥ ३२ ॥ समुद्रूपितचा

१ यावद्वक्रानुलोमगा–इ० पा० । २ दुःखदा कार्यनाशिनी–इ० पा० । ३ चौत्कंपकौ–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रित्रा गुरुभक्ता पतिव्रता ॥ देवब्राह्मणभक्ता च मानुषीं तां विनिर्दिशेत् ॥ ३३ ॥ नित्यं स्नाता सुगंधा च नित्यं च प्रियवादिनी ॥ अल्पाशिन्य ल्परोषा च देवतां तां विनिर्दिशेत् ॥ ३४ ॥ प्रच्छन्नं कुरुते पापमपवादं च रक्षति ॥ हृदयं स्याच्च दुर्ग्राह्यं मार्जारीं तां विनिर्दिशेत् ॥ ३५ ॥ हसते क्रीडते चैव क्रुद्धा चैव प्रसीदति ॥ नीचेषु रमते नित्यं रासभीं तां विनिर्दिशेत् ॥३६॥ प्रतिकूलकरी नित्यं बंधूनां भर्तुरेव च ॥ स्वच्छंदे ललितां चैव आसुरीं तां विनिर्दिशेत् ॥ ३७ ॥ बह्वाशी बहुवाक्या च नित्यं चाप्रियवादिनी ॥ हिनस्ति स्वपतिं या तु राक्षसीं तां विनिर्दिशेत् ॥३८॥ शौचाचारपरिभ्रष्टा रूपभ्रष्टा भयंकरा ॥ प्रस्वेदमलपंका च पिशाचीं तां विनिर्दिशेत् ॥ ३९ ॥ नित्यं स्नातां सुगंधां च मांसमद्यप्रियादिनीम् ॥ वृक्षो द्यानप्रसक्तां च गान्धर्वीं तां विनिर्दिशेत् ॥४०॥ चपला चंचला चैव नित्यं पश्येद्दिशस्तथा ॥ चलस्वभावा लुब्धा च वानरीं तां विनिर्दिशेत् ॥ ॥ ४१ ॥ चंद्राननां शुभांगीं तु मत्तवारणगामिनीम् ॥ आरक्तनखहस्तां तु विद्याद्विद्याधरीं बुधः ॥ ४२ ॥ वीणावादित्रशब्देन वंशगीतरवेण च ॥ पुष्पधूपप्रसक्तां च गांधर्वीं तां विनिर्दिशेत् ॥ ४३ ॥ ॥ सुमंतुरुवाच ॥ ॥ इत्येवमुक्त्वा स महानुभावो जगाम वेधा निजमंदिरं वै ॥ स्त्रीणां तथा पुंस्त्ववतां च वीर यल्लक्षणं पार्थिव लोकपूज्यम् ॥ ४४ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि चतुर्थी कल्पे स्त्रीलक्षणवर्णनं नामाष्टाविंशोऽध्यायः ॥२८॥छ॥ ॥ शतानीक उवाच ॥ ॥ गकाराक्षरदेवस्य गणेशस्य महात्मनः ॥ आराधानविधिं ब्रूहि सांगं मंत्रसमन्वितम् ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ न तिथिर्न च नक्षत्रं नोपपवासो विधीयते ॥ यथेष्टं चेष्टतः सिद्धिः सदा भवति का मिका ॥ २ ॥ श्वेतार्कमूलं संगृह्य कुर्याद्गणपतिं बुधः ॥ अंगुष्ठपर्वमात्रं तु पद्मासनगतं तथा ॥ ३ ॥ चतुर्भुजं त्रिनेत्रं च सर्वाभरणभूषितम् ॥ नागयज्ञोपवीतांगं शशाङ्ककृतशेखरम् ॥ ४ ॥ दंतं सव्ये करे दद्याद्द्वितीये चाक्षसूत्रकम् ॥ तृतीये परशुं दद्याच्चतुर्थे मोदकं न्यसेत् ॥ ५ ॥ कुंकुमं चंदनं चापि समालंभनमुच्यते ॥ वासोभिर्भूषणै रक्तैर्माल्यैश्चाराधयेद्गणम् ॥ ६ ॥ धूपेन च सुगंधेन मोदकैश्चापि पूजयेत् ॥ एवं पूज्याग्रतस्तस्य भोजयेद्ब्राह्मणं बुधः ॥ ७ ॥ वामनं कुब्जकं चापि भोजयेत्पुरतो द्विजम् ॥ आशीर्वादं ततस्तस्मात्प्राप्य सिद्धिमवाप्नुयात् ॥ ॥ ८ ॥ भक्त्या कुरुकुलश्रेष्ठ शृणुमंत्रपदानि वै ॥ गं स्वाहा मूलमंत्रोयं प्रणवेन समन्वितः ॥ ९ ॥ गां नमो हृदयं ज्ञेयं गीं शिरः परि कीर्तितम् ॥ शिखा च गूं नमो ज्ञेयो गैं नमः कवचं स्मृतम् ॥ १० ॥ गौं नमो नेत्रमुद्दिष्टं गः फट् कामास्त्रमुच्यते ॥ आगच्छोल्कामुखा

१ कर्मण्यण्, ततो ङीप्। २ क्रुद्धा च—इ० पा०। ३ दद्यात्पाद्यानि तस्य वै—इ० पा०।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वेभ्योऽपराजितो भवति ॥३३॥ ॐ वक्रतुंडाय स्वाहा ॥ ॐ एकदंष्ट्राय स्वाहा ॥ ॐ कृतकृष्णाय स्वाहा ॥ ॐ गजकर्णाय स्वाहा ॥ ॐ लम्बोदराय स्वाहा ॥ ॐ विकटाय स्वाहा ॥ ॐ धूम्रवर्णाय स्वाहा ॥ ॐ गगनकूजाय स्वाहा ॥ ॐविनायकाय स्वाहा ॥ ॐ गणपतये स्वाहा ॥ ॐहस्तिमुखाय स्वाहा ॥ ३४ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि चतुर्थीकल्पे गणपतिकल्पवर्णनं नामैकोनत्रिंशोऽध्यायः॥ २९ ॥ ॥ सुमंतुरुवाच ॥ ॥ निंबमयमंगुष्ठपर्वमात्रं गणपतिं कृत्वा नित्यधूपगंधादिभिरर्चयित्वा प्रच्छन्नं शिरसि बद्ध्वा गच्छेत् ॥ सर्वजनप्रियो भवति ॥ श्वेतार्कमूलांगुष्ठमात्रं गणपतिं कृत्वा धूपादिभिरर्चयित्वा सर्वान्वर्णान्वशमानयति ॥ श्वेतचंदनमंगुष्ठमात्रं गणपतिं कृत्वा पुष्पगंधादिभिरर्चयित्वा शुक्लचतुर्थ्यामष्टम्यां वा बलिं कुर्यादष्टसहस्रं जुहुयाद्दध्ना पायसेन राजानं वशमानयति ॥ रक्तचंदनमयं गणपतिमंगुष्ठमात्रं कृत्वा भौतिकं बलिं दद्याद्दधिमधुघृताहुतीनां गणपतिमष्टसहस्रं जुहुयादात्मप्रापिकां प्रजां वशमानयति ॥ रक्तकरवीरमूलांगुष्ठपर्वमात्रं गणपतिं कारयेत् ॥ रक्तपुष्पगंधोपहारैर्बलिं दद्यात् ॥ तिललवणघृतेनाष्टसहस्रं जुहुयात् ॥ दशग्रामान्वशमानयति ॥ श्वेतकरवीरांगुष्ठपर्वमात्रं गणपतिं कृत्वा तिलपिष्टदधिघृतक्षीरहरिद्रामिश्रेणाष्टसहस्रं जुहुयाद्वेश्यां वशमानयति ॥ अश्वत्थमूलांगुष्ठपर्वमात्रं गणपतिं कृत्वा गंधपुष्पधूपबलिं दत्त्वा शतं जुहुयाच्छत्रुं वशमानयति ॥ अर्कमूलांगुष्ठपर्वमात्रं गणपतिं कृत्वा गंधपुष्पधूपबलीन् दद्यात् ॥ तिंदुकाष्टशतं जुहुयाच्छत्रुं वशमानयति ॥ बिल्वमूलमयमंगुष्ठपर्वमात्रं गणपतिं कृत्वा गंधपुष्पधूपार्चितं कृत्वा त्रिमध्वक्तानामष्टसहस्रं जुहुयाद्राजामात्यान्वशमानयति ॥ शिरसि धूपान्धृत्वा गच्छेद्राजद्वारं विग्रहे जयो भवति ॥ हस्तिदंतमृत्तिकामयमंगुष्ठपर्वमात्रं गणपतिं कारयेत् ॥ गंधपुष्पधूपार्चितं कृत्वा कृष्णचतुर्थ्यां नग्नो भूत्वाभ्यर्चयेत् ॥ सप्त वाराञ्जपेन्नित्यं नारीणां सुभगो भवति ॥ वृषभशृंगमृत्तिकांगुष्ठमात्रं गणपतिं कारयेत् ॥ गंधपुष्पार्चितं कृत्वा गुग्गुलुधूपं दद्याद्धोपपतिं वशमानयति ॥ अथ वा वल्मीकमृत्तिकांगुष्ठपर्वमात्रं गणपतिं कारयेत् ॥ कटुकतैलेन प्रतिमां लेपयेत् ॥ उन्मत्तककाष्ठेनाग्निं प्रज्वाल्याहुतीनामष्टसहस्रं जुहुयात्तिलसर्षपमिश्रेण सर्वधूपं दद्यात्त्रिकटुकेन लेपयेत् ॥ अगरुधूपं दद्याद्राजानं वशमानयति ॥ परेषां च वल्लभो भवति ॥ रक्तचन्दनेनात्मानं धूपयेत्सुभगो भवति ॥ ॐ गणपतये वक्रतुण्डाय गजदन्ताय गुलुंगुलेतिनिनादाय चतुर्भुजाय त्रिनेत्राय मुशलपाशवज्रहस्ताय सर्वभूतदमनाय सर्वलोकवशंकराय सर्वदुष्टोपघातजननाय सर्वशत्रुविमर्दनाय सर्वराज्यसमीह



१ सप्तयाग्रम्-इ० पा० । २ गुग्गुलुचतुर्भुजाय-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येति मंत्र आवाहने ह्ययम् ॥ ११ ॥ गं गणेशाय नमो गंधमंत्रः प्रकीर्तितः ॥ पुष्पोल्काय नमः पुष्पमंत्र एष प्रकीर्तितः ॥ १२ ॥ धूपोल्काय नमो धूपमंत्र एष प्रकीर्तितः ॥ दीपोल्काय नमो दीपमंत्र एष प्रकीर्तितः ॥ १३ ॥ ॐ गं महोल्काय नमो बलिमंत्रः प्रकीर्तितः ॥ ओं संसिद्धोल्काय नमोमंत्रश्चायं विसर्जने ॥ १४ ॥ ओं महाकर्णाय विद्महे वक्रतुण्डाय धीमहि ॥ तन्नो दन्तिः प्रचोदयात् गायत्री जपः पूर्वतः ॥ १५ ॥ महागणपतये वीरं स्वाहा दक्षिणतः सदा ॥ महोल्काय पश्चिमतः कूश्मांडायोत्तरेण तु ॥ एकदंतत्रिपुरांतकाय आग्नेय्यां वीर निर्दिशेत् ॥ १६ ॥ ओं शिवदत्त विकटहरहास प्राणाय स्वाहा नैर्ऋत्याम् ॥ तुलंबनात्यचलदन्तकाय स्वाहा वायव्याम् ॥ १७ ॥ पद्मदंष्ट्राय नरायेति ऐशान्यां होमयेद्बुधः ॥ हुं फट् हुं फट् हस्ततालध्वनिर्हसनकूर्दनः ॥ १८ ॥ मृदनर्तनगणपतिर्देवस्य मुद्रां ततो होमं समाचरेत् ॥ नयदा वश्या भवति ॥ कृष्णतिलाहुतिमष्टसहस्रं जुहुयात्त्रिरात्रेण राजा वश्यो भवति ॥ १९ ॥ तिलयवहोमेन सर्वे जनपदा वश्या भवंति ॥ अतिरूपवती कन्या गच्छंतमनुच्छति ॥ २० ॥ चणतंदुलहोमेनाजितो भवेत् ॥ निंबपत्रसमैस्तैलैर्विद्वेषणं करोति ॥ सोमग्रहणे उदकमध्ये अवतीर्य अष्टसहस्रं जपेत् ॥ संग्रामे अपराजितो भवति ॥ २१ ॥ ( ॐ लंबराज्ञे नमः । ) आदित्याभिमुखो भूत्वा अष्टसहस्रं जपेत् ॥ आदित्यो वरदो भवति ॥ २२ ॥ शुक्लचतुर्थ्यामुपोष्य गंधपुष्पादिभिरर्चनं कृत्वा तिलतन्दुलाञ्जुहुयात् ॥ शिरसा धारयंस्तैरपराजितो भवति ॥ २३ ॥ अपामार्गसमिद्भिरग्निं प्रज्वाल्य एकविंशत्याहुतीर्यो जुहुयात् ॥ त्रिरात्राच्छत्रुं व्यापादयति ॥ २४ ॥ अथोत्तरेण मन्त्रं व्याख्यास्ये ॥ वृक्षमूले कज्जलं संगृह्य सप्तभिर्मंत्रितं कृत्वा नेत्राण्यंजयेद्यं पश्यति स वशी भवति ॥ २५ ॥ पुष्पं फलं मूलं चाष्टसहस्राभिमंत्रितं कृत्वा यस्मै ददाति स वश्यो भवति ॥ २६ ॥ यत्किंचिन्मूलमंत्रेण करोति तत्सिध्यति ॥ सर्वे ग्रहाः सुप्रीता भवंति ॥ नगरद्वारं गत्वा अष्टसहस्रं द्वारं निरूपयेत् ॥ २७ ॥ पुरं द्वारेण गृह्यते प्राङ्मुखो यजति स उच्चाटयति ॥ संमुखो जपति चोरान्विद्रावयति ॥२८॥ तृणानि लूनयति ॥ काष्ठानि च्छेदयति ॥ २९ ॥ गजराजेन युद्धयति ॥ जलमध्ये सप्तरात्रं जपेत् ॥ अकाले वर्षयति ॥ कूपतडागाञ्छोषयति ॥ प्रतिमां नृत्ययति ॥ आकर्षयति ॥ स्तंभयति ॥ योजनशतात्स्त्रीपुरुषानाकर्षयति ॥ ३० ॥ गोरोचनां च सहस्राभिमंत्रितां कृत्वा हस्ते बद्ध्वा योजनशतसहस्रं गत्वा पुनरागच्छति ॥३१॥ अथ मारयितुकामः खदिरकीलकं कृत्वा स्त्रीपुरुषं विचिंत्य हृदये निखनयेत् ॥ क्षणादेव म्रियते ॥३२॥ सर्वपातकविमुक्तो भवति ॥ अग्नितेजाः

१ अयं वीरशब्दोऽन्यत्र नास्ति । २ ओं उनचायनलकाय स्वाहा—इ० पा० । ३ गजं गजेन—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाय राजानमिह वशमानय हनहन पचपच वज्रांकुशेन गणेश फट् स्वाहा ॥ ॐ गां गीं गूं गैं गौं गः स्वाहा नमः हृदयं मूलमंत्रस्य ॥
ॐ कः शिरः, ॐः खः शिखा, ॐ गः हृदयम्, ॐ गुः वक्त्रम्, ॐ गैं नेत्रम्, ॐ घः कवचम्, ॐ ङ आवाहनं हृदयस्य आवाहनांगानिभवं
ति ॐ नमः हृदयं मूलमंत्रस्य, ॐ गाः शिरः, ॐ गैः नमः शिखा ॐ गौः नमः कवचम्, ॐ गं नमः नेत्रे, ॐ गः फट् अस्त्रम् ॥ ॐ अंगुष्ठो
ल्काय स्वाहा आवाहनं हृदयस्य स्वाहा विसर्जनं हृदयस्य ॐ गन्धोल्काय स्वाहा ॥ गन्धमन्त्रः ॥ ॐ धर्मभूतोल्काय स्वाहा ॥ पुष्पमन्त्रः ॥
दुर्जैयाय पूर्वेण ॥ ॐ धूर्जटये दक्षिणेन ॥ ॐ लंबोदराय पश्चिमतः ॥ ॐ गणपतये उत्तरतः ॥ ॐ गणाधिपतये ऐशान्याम् ॥ ॐ महागणपतये
आग्नेय्याम् ॥ ॐ कूश्मांडाय नैर्ऋत्याम् ॥ ॐ एकदन्तत्रिपुरघातिने त्रिनेत्राय वायव्याम् ॥ ॐ महागणपतये विद्महे वक्रतुण्डाय धीमहि ॥ तन्नो
दंतिः प्रचोदयात् ॥ गायत्री ॥ पद्मदंष्ट्रमालाप्रकर्षणीपरश्वंकुशपाशपटहमुद्रा अष्टौ मुद्रा दर्शयित्वा ततः कर्माणि कारयेत् ॥ कृष्णतिलाहुतीना
मष्टसहस्रं जुहुयात् ॥ राजानं वशमानयेत् ॥ आवाहनाद्येकादशमुद्रा नैवेद्यांतं क्रमाद्दर्शयेत् ॥ आराधयेद्येन विधिना त्रिनेत्रं शूलिनं हरम् ॥
तेनैवाराधयेद्देवं विघ्नेशं गणपं नृप ॥ १ ॥ तदेव मण्डलं चास्य अंगन्यासस्तथैव च ॥ ऋते मन्त्रपदानीह समानं सर्वमेव हि ॥ २ ॥ पूजये
द्यस्तु विघ्नेशमेकदन्तमुमासुतम् ॥ नश्यंति तस्य विघ्नानि न चारिष्टं कदाचन ॥ ३ ॥ यश्चोपवासं कृत्वा तु चतुर्थ्यां पूजयेन्नरः ॥ सर्वे तस्य समा
रंभाः सिध्येयुर्नात्र संशयः ॥ ४ ॥ यस्यानुकूलो विघ्नेशः शिवयोः कुलनन्दन ॥ तस्यानुकूलं सर्वं स्याज्जगद्वै सर्वकर्मसु ॥५॥ तस्मादारा धयेद्देवं
भक्तिश्रद्धासमन्वितः ॥ कुंकुमागुरुधूपेन तथैवोंडीरकस्रजा ॥ पललोह्लापिकाभिश्च जातिकोन्मत्तकैस्तथा ॥ ६ ॥ शुक्लपक्षे चतुर्थ्यां तु विधिनानेन
पूजयेत् ॥ तस्य सिध्यति निर्विघ्नं सर्वकर्म न संशयः ॥ ७ ॥ एकदन्ते जगन्नाथे गणेशे तुष्टिमागते ॥ पितृदेवमनुष्याद्याः सर्वे तुष्यंति भारत ॥
॥ ८ ॥ तस्मादाराधयेद्देवं सदा भक्तिपुरःसरम् ॥ कर्णलेपैस्तुंडिकाभिर्मोदकैश्च महीपते ॥ पूजयेत्सततं देवं विघ्नविनाशाय दंतिनम् ॥ ९ ॥
इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि चतुर्थीकल्पे विनायकपूजाविधिनिरूपणं नाम त्रिंशोऽध्यायः ॥ ३० ॥ ॥छ॥
॥ ॥ सुमन्तुरुवाच ॥ ॥ शिवा शान्ता सुखा राजंश्चतुर्थी त्रिविधा स्मृता ॥ मासि भाद्रपदे शुक्ला शिवा लोकेषु पूजिता ॥ १ ॥ तस्यां स्नानं
तथा दानमुपवासो जपस्तथा ॥ क्रियमाणं शतगुणं प्रसादाद्दन्तिनो नृप ॥ २ ॥ गुडलवणघृतानां तु दानं शुभकरं स्मृतम् ॥ गुडापूपैस्तथा

१ दुर्गाय पूर्वे–इ० प्र०। परं चासाधीयानप्रकृतत्वात्। २ एकदंतत्रिपुरान्तकाय–इ० पा०। ३ पल्लालविकारैश्च जातीकुरवकैस्तथा–इ० पा०। ४ पुण्डरीकैः—इ० पा०। ५ महत्—इ० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वीर पुण्यं ब्राह्मणभोजनम् ॥ ३ ॥ यास्तस्यां नरशार्दूल पूजयंति सदा स्त्रियः ॥ गुडलवणपूपैश्च श्वश्रूं श्वशुरमेव च ॥ ४ ॥ ताः सर्वाः सुभगाः स्युर्वै विघ्नेशस्यानुमोदनात् ॥ कन्यका तु विशेषेण विधिनानेन पूजयेत् ॥ ५ ॥ ( इति शिवाकल्पः ) ॥ ॥ सुमन्तुरुवाच ॥ ॥ माघे मासि तथा शुक्ला या चतुर्थी महीपते ॥ सा शांता शांतिदा नित्यं शांतिं कुर्यात्सदैव हि ॥ ६ ॥ स्नानदानादिकं कर्म सर्वमस्यां कृतं विभो ॥ भवेत्सहस्रगुणितं प्रसादात्तस्य दंतिनः ॥ ७ ॥ कृतोपवासो यस्तस्यां पूजयेद्विघ्ननायकम् ॥ तस्य होमादिकं कर्म भवेत्साहस्रिकं नृप ॥ ८ ॥ लवणं च गुडं शाकं गुडपूपांश्च भारत ॥ दत्त्वा भक्त्या तु विप्रेभ्यः फलं साहस्रिकं भजेत् ॥ ९ ॥ विशेषतः स्त्रियो राजन्पूजयन्त्यो गुरुं नृप ॥ गुडलवणघृतैर्वीर सदा स्युर्भाग्यसंयुताः ॥ १० ॥ ( इति शांताकल्पः ) ॥ सुमन्तुरुवाच ॥ ॥ सुखावहा च सुसुखा सौभाग्यकरणी परम् ॥ ११ ॥ चतुर्थी कुरुशार्दूल रूपसौभाग्यदा शुभा ॥ सुखाव्रतं महापुण्यं रूपदं भाग्यदं तथा ॥ १२ ॥ सुसूक्ष्मं सुकरं धन्यमिह पुण्यसुखावहम् ॥ परत्र फलदं वीर दिव्यरूपप्रदायकम् ॥ १३ ॥ हसितं ललितं चोक्तं चेष्टितं च सुखावहम् ॥ सविलासभुजक्षेपश्चंक्रमश्चेष्टितं शुभम् ॥ १४ ॥ सुखाव्रतेन सर्वेषां सुखं कुरुकुलोद्वह ॥ कृत्येन पूजिते चेशे विघ्नेशे शिवयोः सुते ॥ १५ ॥ यदा शुक्लचतुर्थ्यां तु वारो भौमस्य वै भवेत् ॥ तदा सा सुखदा ज्ञेया चतुर्थी वै सुखेति च ॥ १६ ॥ पुरा मैथुनमाश्रित्य स्थिताभ्यां तु हिमाचले ॥ भीमोमाभ्यां महाबाहो रक्तबिन्दुश्च्युतः क्षितौ ॥ १७ ॥ मेदिन्यां स प्रयत्नेन सुखेन विधृतोऽनया ॥ जातोस्याः स कुजो वीर रक्तो रक्तसमुद्भवः ॥ १८ ॥ ममांगतो यथोत्पन्नस्तस्मादंगारको ह्ययम् ॥ अङ्गदोंगोपकारश्च अंगानां तु प्रदो नृणाम् ॥ १९ ॥ सौभाग्यादिकरो यस्मात्तस्मादंगारको मतः ॥ भक्त्या चतुर्थ्यां नक्तेन यो वै श्रद्धासमन्वितः ॥ २० ॥ उपवत्स्यति ना राजन्नारी वा नान्यमानसा ॥ पूजयेच्च कुजं भक्त्या रक्तपुष्पविलेपनैः ॥ २१ ॥ गणेशं प्रथमं भक्त्या योर्चयेच्छ्रद्धयान्वितः ॥ यस्य तुष्टः प्रयच्छेत्स सौभाग्यं रूपसंपदम् ॥ २२ ॥ पूर्वं च कृतसंकल्पः स्नानं कृत्वा यथाविधि ॥ गृहीत्वा मृत्तिकां वंदेन्मंत्रेणानेन भारत ॥ २३ ॥ इह त्वं वंदिता पूर्वं कृष्णेनोद्धरता किल ॥ तस्मान्मे दह पाप्मानं यन्मया पूर्वसंचितम् ॥ २४ ॥ इमं मंत्रं पठन्वीर आदित्याय प्रदर्शयेत् ॥ आदित्यरश्मिसंपूतां गंगाजलकणोक्षिताम् ॥ २५ ॥ दत्त्वा मृदं शिरसि तां सर्वांगेषु च योजयेत् ॥ ततः स्नानं प्रकुर्वीत मंत्रयेत जलं पुनः[5] ॥ २६ ॥ त्वमापो योनिः सर्वेषां दैत्यदानवदौकसाम् ॥ स्वेदांडजोद्भिदां चैव



१ नित्यम्—इ० पा० । २ दन्तिनो नृप—इ० पा० । ३ भवेत्—इ० पा० । ४ कुरुनंदन—इ० पा० । ५ मैत्रम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रसानां पतये नमः ॥ २७ ॥ स्नातोहं सर्वतीर्थेषु सर्वप्रस्रवणेषु च ॥ तडागेषु च सर्वेषु मानसादिसरःसु च ॥ २८ ॥ नदीषु देवखातेषु सुतीर्थेषु ह्रदेषु वै ॥ ध्यायन्पठन्निमं मंत्रं ततः स्नानं समाचरेत् ॥२९ ॥ ततः स्नात्वा शुचिर्भूत्वा गृहमागत्य वै स्पृशेत् ॥ दूर्वाश्वत्थौ शमीं स्पृष्ट्वा गां च मंत्रेण मंत्रवित् ॥३०॥ दूर्वां नमस्य मंत्रेण शुचौ भूमौ समुत्थिताम् ॥ त्वं दूर्वेमृतनामासि सर्वदेवैस्तु वंदिता॥३१॥वन्दिता दह तत्सर्वं दुरितं यन्मया कृतम् ॥ ३२ ॥ शमीमंत्रं प्रवक्ष्यामि तन्निबोध महीपते ॥ पवित्राणां पवित्रा त्वं काश्यपी प्रथिता श्रुतौ ॥ शमी शमय मे पापं नूनं वेत्सि धराधरान् ॥ ३३ ॥ अश्वत्थालंभने वीर मंत्रमेतं निबोध मे ॥ नेत्रस्पंदादिजं दुःखं दुःस्वप्नं दुर्विचिन्तनम् ॥ शक्तानां च समुद्योगमश्वत्थ त्वं क्षमस्व मे ॥ ३४ ॥ इमं मंत्रं पठन्वीर कुर्याद्वै स्पर्शनं बुधः ॥ ततो देव्यै तु गां दद्याद्वीरं कृत्वा प्रदक्षिणाम् ॥ समालभ्य तु हस्तेन ततो मंत्रमुदीरयेत् ॥ ३५ ॥ सर्वदेवमयी देवि मुनिभिस्तु सुपूजिता ॥ तस्मात्स्पृशामि वंदे त्वां वंदिता पापहा भव ॥ ३६ ॥ इमं मंत्रं पठन्वीरं भक्त्या श्रद्धासमन्वितः ॥ प्रदक्षिणं तु यः कुर्यादर्जुनं कुरुनंदन ॥ प्रदक्षिणीकृता तेन पृथिवी स्यान्न संशयः ॥ ३७ ॥ एवं मौनेन चागत्य ततो वह्निगृहं व्रजेत् ॥ प्रक्षाल्य च मृदा पादावाचांतोग्निगृहं विशेत् ॥ होमं तत्र प्रकुर्वीत एभिर्मंत्रपदैर्वरैः ॥ ३८ ॥ शर्वाय शर्वपुत्राय क्षोण्युत्संगभवाय च ॥ कुजाय ललितांगाय लोहितांगाय वै तथा ॥३९॥ ॐकारपूर्वकैर्मंत्रैः स्वाहाकारसमन्वितैः ॥ अष्टोत्तरशतं वीर अर्धार्धमर्धमेव च ॥ ४० ॥ एतैर्मंत्रपदैर्भक्त्या शक्त्या वा कामतो नृप ॥ खादिरैः सुसमिद्भिस्तु चाज्यदुग्धैर्यवैस्तिलैः ॥ ४१ ॥ भक्ष्यैर्नानाविधैश्चान्यैः शक्त्या भक्त्या समन्वितः ॥ हुत्वाहुतीस्ततो वीर देवं संस्थापयेत्क्षितौ ॥ ४२ ॥ सौवर्णं राजतं वापि शक्त्या दारुमयं नृप ॥ देवदारुमयं वापि श्रीखण्डचन्दनैरपि ॥ ४३ ॥ ताम्रे पात्रे रौप्यमये चाज्यकुंकुमकेसरैः ॥ अन्यैर्वा लोहितैर्वापि पुष्पैः पत्रैः फलैरपि ॥ रक्तैश्च विविधैर्वीर अथ वा शक्तितोऽर्चयेत् ॥ ४४ ॥ यावद्विसृजते वित्तं वित्तवान्वीर भक्तितः ॥ तावद्विवर्धते पुण्यं दातुः शतसहस्रिकम् ॥ ४५ ॥ अन्ये ताम्रमये पात्रे वंशजे मृन्मयेपि वा ॥ पूजयंति नराः शक्त्या कृत्वा कुंकुमकेशरैः॥पुरुषाकृतिकृतं पात्र इमं मंत्रैः समर्चयेत् ॥४६॥ अग्निर्मूर्धेति मंत्रेण गंधपुष्पादिभिस्तथा॥ धूपैरभ्यर्च्य विधिवद्ब्राह्मणाय प्रदीयते ॥ ४७॥ गुडौदनं घृतं क्षीरं गोधूमाञ्छालितंडुलान् ॥ अवेक्ष्य शक्तिं दद्याद्वै दरिद्रो वित्तवांस्तथा ॥ ४८ ॥

१ मध्यमणिन्यायेन मयेत्यस्योभयत्र सम्बन्धः, तथा चायमर्थः, हे दूर्वे त्वं देवैर्वन्दिता तु पुनः मया वन्दिता सती यन्मया दुरितं कृतम्, तत्सर्वं दह । इह वन्दितेतिद्विरुक्त्या शब्दावृत्तिदीपकोऽलङ्कारः । २ नियम्-इ० पा० । ३ हरिद्राद्यादिभिः-इ० पा० । ४ कृत्वा कृत्यम्—इ० पा० । ५ भक्तितः-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वित्तशाठ्यं न कर्तव्यं विद्यमाने धने नृप ॥ वित्तशाठ्यं हि कुर्वाणो नामुत्र बलभाग्भवेत् ॥ ४८ ॥ ॥ शतानीक उवाच ॥ ॥ अंगारकेण संयुक्ता चतुर्थी नक्तभोजनैः ॥ उपोष्या कतिमात्रा तु उताहो सकृदेव तु ॥ ४९ ॥ ॥ सुमंतुरुवाच ॥ ॥ चतुर्थी सा चतुर्थी तु यदांगारकसंयुता ॥ उपोष्या तत्र तत्रैव प्रदेयो विधिवद्गुडः॥५०॥ उपोष्य नक्तेन विभो चतस्रः कुजसंयुताः ॥ चतुर्थ्यां च चतुर्थ्यां च विधानं शृणु यादृशम् ॥ ५१ ॥ सौवर्णं तु कुजं कृत्वा सविनायकमादरात् ॥ दशसौवर्णिकं मुख्यं दशार्धमर्धमेव च ॥५२॥ सौवर्णपात्रे रौप्ये वा भक्त्या ताम्रमयेऽपि वा ॥ विंशत्पलानि पात्राणि विंशत्यर्धपलानि वा ॥ ५३ ॥ विंशत्कर्षाणि वा वीर विंशदर्धार्धमेव वा ॥ रौप्यसंख्यं पलं कार्यं पलार्धमर्धमेव च ॥ ५४ ॥ शक्त्या वित्तैश्च भक्त्या च पात्रे ताम्रमयेऽपि तु ॥ प्रतिष्ठाप्य ग्रहेशं वै वस्त्रैः संपरिवेष्टितम् ॥ विविधैः साधकै रक्तैः पुष्पै रक्तैः समन्वितम् ॥ ५५ ॥ ब्राह्मणाय सदा दद्याद्दक्षिणासहितं नृप ॥ वाचकाय महाबाहो गुणिने श्रेयसे नृप ॥ ५६ ॥ इति ते कथिता पुण्या तिथी नासुत्तमा तिथिः ॥ यामुपोष्य नरो रूपं दिव्यमाप्नोति भारत ॥ ५७ ॥ कांत्यात्रेयसमं वीरं तेजसा रविसंनिभम् ॥ प्रभया रविकल्पं च समीरबलसंश्रितम् ॥५८॥ ईदृग्रूपं समाप्येह याति भौमसदो नृप ॥ प्रसादाद्विघ्ननाथस्य तथा गणपतेर्नृप ॥५९॥ पठतां शृण्वतां राजन्कुर्वतां च विशेषतः ॥ ब्रह्महत्यादिपापानि क्षीयंते नात्र संशयः ॥ ऋद्धिं वृद्धिं तथा लक्ष्मीं लभते नात्र संशयः ॥ ६० ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि चतुर्थीकल्पे सुखावहांगारकचतुर्थीव्रतनिरूपणं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ ( समाप्तश्चायं चतुर्थीकल्पः ) ॥ ४ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ पंचमी दयिता राजन्नागानां नंदिवर्धिनी ॥ पञ्चम्यां किल नागानां भवतीत्युत्सवो महान् ॥ १ ॥ वासुकिस्तक्षकश्चैव कालियो मणिभद्रकः ॥ ऐरावतो धृतराष्ट्रः कर्कोटकधनंजयौ ॥ एते प्रयच्छंत्यभयं प्राणिनां प्राणजीविताम् ॥ २ ॥ पंचम्यां स्नपयन्तीह नागान्क्षीरेण ये नराः ॥ तेषां कुले प्रयच्छंति तेऽभयप्राणदक्षिणाम् ॥ ३ ॥ शप्ता नागा यदा मात्रा दह्यमाना दिवानिशम् ॥ निर्वापयंति स्नपनैर्गवां क्षीरेण मिश्रितैः ॥ ४ ॥ ये स्नापयंति वै नागान्भक्त्या श्रद्धासमन्विताः ॥ तेषां कुले सर्पभयं न भवेदिति निश्चयः ॥ ५ ॥ ॥ शतानीक उवाच ॥ ॥ मात्रा शप्ताः कथं नागाः किं समुद्दिश्य कारणम् ॥ कथं चानंदकरणं कस्य वा संप्रसादजम् ॥ ६ ॥ ॥ सुमंतुरुवाच ॥ ॥ उच्चैःश्रवा अश्वरत्नं श्वेतो जातोऽमृतोद्भवः ॥ तं दृष्ट्वा चाब्रवीत्कद्रूर्नागानां जननी स्वसाम् ॥ ७ ॥ अश्वरत्नमिदं



१ हि–इ० पा० । २ सार्धं कुर्याद्ध सर्वमेव वा–इ० पा० । ३ धृतशिरास्तथान्ये ये महोरगाः–इ० पा० । ४ पूजयंति–इ० पा० । ५ न जलैर्गवां क्षीरैरमिश्रितैः–इ० पा० । ६ स्वस्वामित्यार्षम्, विनताम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्वेतं संप्रेक्षेऽमृतसंभवम् ॥ कृष्णांश्च वीक्षसे वालान्सर्वं श्वेतमुतांबरे ॥ ८ ॥ ॥ विनतोवाच ॥ ॥ सर्वश्वेतो हयवरो नास्य कृष्णो न लोहितः ॥ कथं पश्यसि कृष्णं त्वं विनतोवाच तां स्वसाम् ॥ ९ ॥ ॥ कद्रूरुवाच ॥ ॥ वीक्षेऽहमेकनयना कृष्णबालसमन्वितम् ॥ द्विनेत्रा त्वं तु विनते न पश्यसि पणं कुरु ॥ १० ॥ ॥ विनतोवाच ॥ ॥ अहं दासी भवित्री ते कृष्णे केशे प्रदर्शिते ॥ न चेद्दर्शयसे कद्रु मम दासी भविष्यसि ॥११॥ एवं ते विपणं कृत्वा गते क्रोधसमन्विते ॥ विनता शयने सुप्ता कद्रूर्जिह्ममचिंतयत् ॥ १२ ॥ आहूय पुत्रान्प्रोवाच बाला भूत्वा हयोत्तमे ॥ तिष्ठध्वं विपणे जेष्ये विनतां जयगर्द्धिनीम् ॥१३॥ प्रोचुस्ते जिह्मबुद्धिं तां नागा मांतां विगृह्य तु ॥ अधर्म्यमेतन्मातस्ते न करिष्याम ते वचः ॥१४॥ तान्छशाप रुपा कद्रूः पावको वः प्रधक्ष्यति ॥ गते बहुतिथे काले पांडवो जनमेजयः ॥ १५ ॥ सर्पसत्रं स कर्ता वै भुवि ह्यन्यैः सुदुष्करम् ॥ तस्मिन्सत्रे स तिग्मांशुः पावको वः प्रधक्ष्यति ॥ १६ ॥ एवं शप्त्वा रुपा कद्रूः किंचिन्नोक्तवती तु सा ॥ मात्रा शप्तास्तथा नागाः कर्तव्यं नान्वपत्सत ॥१७॥ वासुकिं दुःखितं ज्ञात्वा ब्रह्मा प्रोवाच सांत्वयन् ॥ मा शुचो वासुकेऽत्यर्थं शृणु मद्वचनं परम् ॥ १८ ॥ यायावरकुले जातो जरत्कारुरिति द्विजः॥ भविष्यति महातेजास्तस्मिन्काले तपोनिधिः ॥१९॥ भगिनीं च जरत्कारुं तस्मै त्वं प्रतिदास्यसि ॥ भविता तस्य पुत्रोऽसावास्तीक इति विश्रुतः ॥ २० ॥ स तत्सत्रं प्रवृद्धं वै नागानां भयदं महत् ॥ निषेधेत्सुमतिर्वाग्भिरग्र्याभिस्तं नविष्यति ॥ २१ ॥ तदिमां भगिनीं राजंस्तस्य त्वं प्रतिदास्यसि ॥ जरत्कारुं जरत्कारोः प्रदद्या अविचारयन् ॥ २२ ॥ यदासौ प्रार्थतेऽरण्ये यत्किंचिद्धि वदिष्यति ॥ तत्कर्तव्यमशंकेन यदीच्छेः श्रेय आत्मनः ॥ २३ ॥ पितामहवचः श्रुत्वा वासुकिः प्रणिपत्य च ॥ तथाकरोद्यथा चोक्तं यत्नं च परमास्थितः ॥ २४ ॥ तच्छ्रुत्वा पन्नगाः सर्वे प्रहर्षोत्फुल्ललोचनाः ॥ पुनर्जातामिवात्मानं मेनिरे भुजगोत्तमाः ॥ २५ ॥ तत्र सत्रं महाबाहो तव पित्रा प्रवर्तितम् ॥ ऋत्विग्भिः स हि तेनेह सर्वलोकेषु दुष्करम् ॥ २६ ॥ प्रोक्तं च विष्णुना पूर्वं धर्मपुत्रस्य धीमतः ॥ अवश्यं तस्य भविता नागानां भयकारकम् ॥ २७ ॥ तस्मात्कालांतराद्राजन्साग्रे वर्षशते गते ॥ तत्सत्रं भविता घोरं नागानां क्षयकारकम् ॥ २८ ॥ यास्यन्त्यधर्मभरिता दंदशूका विषोल्बणाः ॥ कोटिसंख्या महाराज निपतिष्यंत्यहर्निशम् ॥ २९ ॥ अपूर्वे तु निमग्नानां घोरं रौद्राग्निसागरे ॥ आस्तीकस्तत्र भविता तेषां नौर्वह्निसागरे ॥ ३० ॥ श्रुत्वा स चाग्निं राजानमृत्विजस्तदनंतरम् ॥ निवर्तयिष्यते यागं नागानां मोहनं परम् ॥ ३१ ॥ पंचम्यां तत्र भविता ब्रह्मा प्रोवाच लेलिहान् ॥

१ मातामित्यार्षम्। २ महाराज—इ० पा०। ३ दवलकगुदुर्धरम्—इ० पा०। ४ क्षयकारकम् इ० पा०।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मादियं महाबाहो पंचमी दयिता सदा ॥ नागानामानंदकरी दत्ता वै ब्रह्मणा पुरा ॥ ३२ ॥ कृत्वा तु भोजनं पूर्वं ब्राह्मणानां तु कामतः ॥ विसृज्य नागाः प्रीयंतां ये केचित्पृथिवीतले ॥ ३३ ॥ ये च हेलिमरीचिस्था येन्तरे दिवि संस्थिताः ॥ ये नदीषु महानागा ये सरस्वतिगामिनः ॥ ये च वापीतडागेषु तेषु सर्वेषु वै नमः ॥ ३४ ॥ नागान्विप्रांश्च संपूज्य विसृज्य च यथार्थतः ॥ ततः पश्चात्तु भुञ्जीत सह भृत्यैर्नराधिप ॥ ३५ ॥ पूर्वं मधुरमश्नीयात्ततो भुञ्जीत कामतः ॥ एवं नियमयुक्तस्य यत्फलं तन्निबोध मे ॥ ३६ ॥ मृतो नागपुरं याति पूज्यमानोऽप्सरोगणैः ॥ विमानवरमारूढो रमते कालमीप्सितम् ॥ ३७ ॥ इह चागत्य राजासावयुतानां वरो भवेत् ॥ सर्वरत्नसमृद्धः स्याद्वाहनाढ्यश्च जायते ॥ ॥ ३८ ॥ पंच जन्मान्यसौ राजा द्वापरे द्वापरे भवेत् ॥ आधिव्याधिविनिर्मुक्तः पत्नीपुत्रसहायवान्॥ तस्मात्पूज्याश्च पाल्याश्च घृतपायसगुग्गुलैः ॥ ३९ ॥ ॥ शतानीक उवाच ॥ ॥ दशंति ये नरं विप्र नागाः क्रोधसमन्विताः ॥ भवेत्किं तस्य दष्टस्य विस्तराद्ब्रूहि मे द्विज ॥४०॥ ॥सुमंतुरुवाच ॥ ॥नागदष्टो नरो राजन्प्राप्य मृत्युं व्रजत्यधः ॥ अधो गत्वा भवेत्सर्पो निर्विषो नात्र संशयः ॥४१॥ ॥ शतानीक उवाच ॥ ॥ नागदष्टः पिता यस्य भ्राता वा दुहितापि वा ॥ माता पुत्रोथ वा भार्या किं कर्तव्यं वदस्व मे ॥ ४२॥ मोक्षाय तस्य विप्रेंद्र दानं व्रतमुपोषणम्॥ ब्रूहि तद्द्विजशार्दूल येन तद्वै करोम्यहम् ॥ ४३ ॥ ॥ सुमंतुरुवाच॥ ॥उपोष्या पंचमी राजन्नागानां पुष्टिवर्धिनी ॥ त्वमेवमेकं राजेंद्र विधानं शृणु भारत ॥ ४४ ॥ मासि भाद्रपदे या तु कृष्णपक्षे महीपते ॥ महापुण्या तु सा प्रोक्ता ग्राह्यापि च महीपते ॥ ४५ ॥ ज्ञेया द्वादश पंचम्यो ह्यायने भरतर्षभ ॥ चतुर्थ्यां त्वेकभक्तं तु तस्यां नक्तं प्रकीर्तितम् ॥ ४६ ॥ भुवि चित्रमयान्नागानथ वा कलधौतकान् ॥ कृत्वा दारुमयान्वापि अथ वा मृन्मयान्नृप ॥४७॥ पंचम्यामर्चयेद्भक्त्या नागानां पंचकं नृप ॥ करवीरैः शतपत्रैर्जातीपुष्पैश्च सुव्रत ॥४८॥ तथा गंधैश्च धूपैश्च पूज्य पंचकमुत्तमम्॥ब्राह्मणं भोजयेत्पश्चाद् घृतपायसमोदकैः ॥४९॥ अनंतो वासुकिः शंखः पद्मः कंबल एव च ॥ तथा कर्कोटको नागो नागो ह्यश्वतरो नृप॥५०॥धृतराष्ट्रः शंखपालः कालियस्तक्षकस्तथा॥पिंगलश्च तथा नागो मासिमासि प्रकीर्तिताः ॥५१॥ वत्सरांते पारणं स्याद्ब्राह्मणान्भोजयेद्बहून्॥ इतिहासविदे नागं गैरिकेण कृतं नृप ॥ तथार्चना प्रदातव्या वाचकाय महीपते ॥५२॥ एष वै नागपञ्चम्या विधिः प्रोक्तो बुधैर्नृप॥तव पित्रा



१ वसुधायाः—इ० पा० । २ मान्याश्च—इ० पा० । ३ शुक्लपक्षे—इ० पा० । ४ भूरि चन्द्रमयं नागम्—इ० पा० । पुस्तकांतरे च " भूरि चन्द्रमयं नागमथ वा कलधौतकम् ॥ कृत्वा दारुमयं वापि अथ वा मृन्मयं नृप ॥ पंचम्यामर्चयेद्भक्त्या नागं पंचफणं नृप ॥ करवीरैः शतपत्रैर्जातीपुष्पैश्च सुव्रत ॥ तथा गंधैश्च धूपैश्च पूज्य पन्नगमुत्तमम्—इ० पा० । ५ पन्नगम्—इ० पा० । ६ संवत्संते पारणं स्यान्महाब्राह्मणभोजनम्—इ० पा० । ७ एष पारणके चापि—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतश्चैव पितुर्मोक्षाय भारत ॥५३॥ त्वमेकमेकं वै वीर पंचम्या भरतर्षभ ॥ सुवर्णभारनिष्पन्नं नागं दत्त्वा तथा च गाम् ॥५४॥ व्यासाय कुरुशार्दूल पितुरानृण्यमाप्नुयाः ॥ तव पित्रा कृता ह्येवं पंचम्युपासना नृप ॥ ५५ ॥ उत्सृज्य नागतां वीर तव पूर्वपितामहः ॥ पुष्पोत्तरं सदो गत्वा तथा पुष्पसदो नृप ॥ ५६ ॥ सुनासीरसदो गत्वा तदा भर्गसदो गतः ॥ स्वभूसदस्ततो गत्वा कंजजस्य सदो गतः ॥ ५७ ॥ अन्येपि ये करिष्यंति इदं व्रतमनुत्तमम् ॥ दष्टको मोक्ष्यते तेषां शुभं स्थानमवाप्स्यति ॥५८॥ यश्चेदं शृणुयान्नित्यं नरः श्रद्धासमन्वितः[1] ॥ कुले तस्य न नागेभ्यो भयं भवति कुत्रचित् ॥ ५९ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि पंचमीकल्पे नागपंचमीव्रतवर्णनं नाम द्वात्रिंशोऽध्यायः॥३२॥ ॥ शतानीक उवाच ॥ ॥ सर्पाणां कति रूपाणि के वर्णाः किं च लक्षणम् ॥ का जातिस्तु भवेत्तेषां केषु योनिकुलेषु वा ॥१॥ ॥ ॥ सुमंतुरुवाच[2] ॥ ॥ पुरा मेरौ नगवरे कश्यपं तपसां निधिम् ॥ प्रणम्य शिरसा भक्त्या गौतमो वाक्यमब्रवीत् ॥ २ ॥ सर्पाणां कति रूपाणि किं चिह्नं किं च लक्षणम् ॥ जातिं कुलं तथा वर्णान्ब्रूहि सर्वं प्रजापते ॥३॥ कथं वा जायते सर्पः कथं मुंचेद्विषं प्रभो ॥ विषवेगाः कति प्रोक्ताः कत्येव विषनाडिकाः ॥ ४ ॥ दंष्ट्राः कतिविधाः प्रोक्ताः किं प्रमाणं विषागमे ॥ गृह्णीते तु कदा गर्भं कथं चेह प्रसूयते ॥ ५ ॥ कीदृशी स्त्री पुमांश्चैव कीदृशश्च नपुंसकः ॥ किं नाम दशनं चैव एतत्कथय सुव्रत ॥६॥ तस्य तद्वचनं श्रुत्वा कश्यपः प्रत्यभाषत ॥ शृणु गौतम तत्त्वेन सर्पाणामिह लक्षणम् ॥ ७ ॥ मास्याषाढे तथा ज्येष्ठे प्रमाद्यंति भुजंगमाः ॥ ततो नागोऽथ नागी च मैथुने संप्रपद्यते ॥ ८ ॥ चतुरो वार्षिकान्मासान्नागी गर्भमधारयत् ॥ ततः कार्त्तिकमासे तु अंडकानि प्रसूयते ॥ ९ ॥ अंडकानां तु विज्ञेये द्वेशते द्वे च विंशती ॥ तान्येव भक्षयेत्सा तु भागैकं घृणया त्यजेत् ॥ १० ॥ स्वर्णार्कवर्णाद्धे तस्मात्पुमान्संजायतेंडकात् ॥ तान्येव खादते सर्प अहोरात्राणि विंशतिम् ॥ ११ ॥ स्वर्णकेतकवर्णाभाद्दीर्घराजीवसंनिभात् ॥ तस्मादुत्पद्यते स्त्री वै अंडाद्ब्राह्मणसत्तम ॥ १२ ॥ शिरीषपुष्पवर्णाभादंडकात्स्यान्नपुंसकः ॥ ततो भिनत्ति चांडानि षण्मासेन तु गौतम ॥ १३ ॥ ततस्ते प्रीतिसंबंधात्स्नेहं बध्नंति बालकाः ॥ ततोऽसौ सप्तरात्रेण कृष्णो भवति पन्नगः ॥ १४ ॥ आयुःप्रमाणं सर्पाणां शतं विंशोत्तरं स्मृतम् ॥ मृत्युश्चाष्टविधो ज्ञेयः शृणुष्वात्र यथाक्रमम् ॥ १५ ॥ मयूरान्मातु

---

१ श्रद्धाभक्तिसमन्वितः–इ० पा० । २ कस्मिंश्चित्पुस्तके पूर्वं प्रोक्तः–"सुमन्तुरुवाच" इत्यादिपाठो नास्ति परं त्वत्र–"तस्य तद्वचनं श्रुत्वा सुमंतुः प्राह तत्तदा ॥ इममर्थं पुरा पृष्टो गौतमेन च कश्यपः । प्रहृष्टवदनः सौम्यः कश्यपः प्रत्यभाषत ॥" इति पाठोऽस्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाद्वापि चकोराद्गोखुरात्तथा ॥ विडालान्नकुलाच्चैव वराहाद्वृश्चिकात्तथा ॥ एतेषां यदि मुच्येत जीवेद्विंशोत्तरं शतम् ॥ १६ ॥ सप्ताहे तु ततः पूर्णे दंष्ट्राणां चाधिरोहणम् ॥ विषस्यागमनं तत्र निक्षिपेच्च पुनःपुनः ॥ १७ ॥ एवं ज्ञात्वा तु तत्त्वेन विषकर्म्मारभेत वै ॥ एकविंशतिरात्रेण विषदंष्ट्रा सुजायते ॥ नागीपार्श्वसमावर्ती बालसर्पः स उच्यते ॥१८॥ पंचविंशतिरात्रस्तु सद्यः प्राणहरो भवेत् ॥ षण्मासाज्जातमात्रस्तु कंचुकं वै प्रमुंचति ॥ १९ ॥ पादानां चापि विज्ञेये द्वे शते द्वे च विंशती ॥ गोलोमसदृशाः पादाः प्रविशंति क्रमंति च ॥ २० ॥ संधीनां चास्य विज्ञेये द्वे शते विंशती तथा ॥ अंगुल्यश्चापि विज्ञेया द्वे शते विंशती तथा ॥ २१ ॥ अकालजाता ये सर्पा निर्विषास्ते प्रकीर्तिताः ॥ पंचसप्ततिवर्षाणि आयुस्तेषां प्रकीर्तितम् ॥ २२ ॥ रक्तपीतशुक्लदंता अनीला मंदवेगिनः ॥ एते अल्पायुषो ज्ञेया अन्ये च भीरवः स्मृताः ॥ २३ ॥ एकं चास्य भवेद्वक्त्रं द्वे जिह्वे च प्रकीर्तिते ॥ द्वात्रिंशद्दशनाः प्रोक्ताः पन्नगानां न संशयः ॥ २४ ॥ तेषां मध्ये चतस्रस्तु दंष्ट्रा याः सुविषावहाः ॥ मकरी कराली कालरात्री यमदूती तथैव च ॥ २५ ॥ सर्वासां चैव दंष्ट्राणां देवताः परिकीर्तिताः ॥ प्रथमा ब्रह्मदेवत्या द्वितीया विष्णुदेवता ॥ तृतीया रुद्रदेवत्या चतुर्थी यमदेवता ॥ २६ ॥ हीना प्रमाणतः सा तु वामनेत्रं समाश्रिता ॥ नास्यां मंत्राः प्रयोक्तव्या नौषधं नैव भेषजम् ॥ २७ ॥ वैद्यः पराङ्मुखो याति मृत्युस्तस्या विलेखनात् ॥ चिकित्सा न बुधैः कार्या तदंतं तस्य जीवितम् ॥ २८ ॥ मकरीं मासिकां विद्यात्करालीं च द्विमासिका ॥ कालरात्री भवेत्त्रीणि चतुरो यमदूतिका ॥ २९ ॥ मकरीं गुडौदनं दद्यात्कषायान्नं करालिकाम् ॥ कालरात्रीं कटुयुतं दूतीं वै सांनिपातिकम् ॥ ३० ॥ मकरी शस्त्रकं विद्यात्कराली काकपादिका ॥ कराकृतिः कालरात्रिर्याम्या कूर्माकृतिः स्मृता ॥ ३१ ॥ मकरी वातुला ज्ञेया कराली पैत्तिकी स्मृता ॥ कफात्मिका कालरात्री यमदूती सान्निपातकी ॥ ३२ ॥ शुक्ला तु मकरी ज्ञेया कराली रक्तसंनिभा ॥ कालरात्री भवेत्पीता कृष्णा च यमदूतिका ॥ ३३ ॥ वामा शुक्ला च कृष्णा च रक्ता पीता च दक्षिणा ॥ समासेन तु वक्ष्यामि यथैता वर्णतः स्मृताः ॥ ३४ ॥ शुक्ला तु ब्राह्मणी ज्ञेया रक्ता तु क्षत्रिया स्मृता ॥ वैश्या तु पीतिका ज्ञेया कृष्णा शूद्रा तु कथ्यते ॥ अतः परं प्रवक्ष्यामि दंष्ट्राणां विषलक्षणम् ॥ ३५ ॥ दंष्ट्राणां तु विषं नास्ति नित्यमेव भुजंगमे ॥ दक्षिणं नेत्रमासाद्य विषं सर्पस्य तिष्ठति ॥ ३६ ॥ संक्रुद्धस्येह सर्पस्य विषं गच्छति मस्तके ॥ मस्तकाद्धमनीं याति ततो नाडीषु गच्छति ॥ ३७ ॥ नाडीभ्यः पद्यते दंष्ट्रां विषं तत्र प्रवर्तते ॥ तत्सर्वं कथयिष्यामि यथावदनुपूर्वशः ॥ ३८ ॥ अष्टभिः कारणैः सर्पो

१ गोरलात्–इ० पा० । २ गुर्मौदनम्–इ० पा० । ३ विषवर्धने–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दशते नात्र संशयः ॥ आक्रांतो दशते पूर्वं द्वितीयं पूर्ववैरिणम् ॥ ३९ ॥ तृतीयं दशते भीतश्चतुर्थं मददर्पितः ॥ ... क्षुधाविष्टः षष्ठं चेह विषोल्बणः ॥ सप्तमं पुत्ररक्षार्थमष्टमं कालचोदितः ॥ ४० ॥ यस्तु सर्पो दशित्वा तु उदरं परिवर्तयेत् ॥ बलभुग्नाकृतिं दंष्ट्रामाक्रांतं तं विनिर्दिशेत् ॥ ४१॥ यस्य सर्पेण ःदष्टस्य गभीरं दृश्यते व्रणम् ॥ वैरदष्टं विजानीयात्कश्यपस्य वचो यथा ॥ ४२ ॥ एकं दंष्ट्रापदं यस्य अव्यक्तं न च कल्पितम् ॥ भीतदष्टं विजानीयाद्यथोवाच प्रजापतिः ॥ ४३ ॥ यस्य सर्पेण दष्टस्य रेखा दंतस्य जायते ॥ मददष्टं विजानीयात्कश्यपस्य वचो यथा ॥ ४४ ॥ द्वे च दंष्ट्रापदे यस्य दृश्यंते च महाक्षतम् ॥ क्षुधाविष्टं विजानीयाद्यथोवाच प्रजापतिः ॥ ४५॥ द्वे दंष्ट्रे यस्य दृश्येते क्वचिद्रुधिरसंकुले ॥ विषोल्बणं विजानीयाद्दंशं तं नात्र संशयः ॥ ४६ ॥ अपत्यरक्षणार्थाय जानीयात्तं न संशयः ॥ यत्तु काकपदाकारं त्रिभिर्दंतैस्तु लक्षितम् ॥ ४७ ॥ महानाग इति प्रोक्तं कालदष्टं विनिर्दिशेत् ॥ त्रिविधं दष्टजातैस्तु लक्षणं समुदाहृतम् ॥ ४८ ॥ दष्टानुपीतं विज्ञेयं कश्यपस्य वचो यथा ॥ विषभागात्तु सर्पस्य त्रिभागस्तत्र संक्रमेत्॥४९॥उदरं दर्शयेद्यस्तु उद्धतं तं विनिर्दिशेत् ॥ छर्दितं विषवेगेन निर्विषः पन्नगो भवेत्॥५०॥ असाध्यश्चापि विज्ञेयश्चतुर्दंष्ट्राभिपीडितः ॥ग्रीवाभंगो भवेत्किंचित्संदष्टो विषयोगतः॥ इतो दंशस्ततः शुद्धो व्यंतरः परिकीर्तितः॥५१॥ ॥इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि पंचमीकल्पे सर्पदंष्ट्रावर्णनं नाम त्रयस्त्रिंशोऽध्यायः॥३३॥छ॥ ॥कश्यप उवाच ॥ ॥ अतः परं प्रवक्ष्यामि कालदष्टस्य लक्षणम् ॥ शृणु गौतम तत्त्वेन यादृशो भवते नरः॥१॥ जिह्वाभंगोऽथ हृच्छूलं चक्षुर्भ्यां च न पश्यति ॥ दंशं च दग्धसंकाशं पक्वजंबूफलोपमम् ॥ २ ॥ वैवर्ण्यं चैव दंतानां श्यावो भवति वर्णतः ॥ सर्वेष्वंगेषु शैथिल्यं पुरीषस्य च भेदनम् ॥ ३ ॥ भग्नस्कंधकटिग्रीव ऊर्ध्वदृष्टिरधोमुखः ॥ दह्यते वेपते चैव स्वपते च मुहुर्मुहुः ॥ ४ ॥ शस्त्रेण च्छिद्यमानस्य रुधिरं न प्रवर्तते ॥ दंडेन ताड्यमानस्य दंडराजी न जायते ॥ ५ ॥ दंशे काकपदं सुनीलमसकृज्जम्बूफलाभं घनमुच्छूनं रुधिरार्द्रसेकबहुलं कृच्छ्रान्निरोधो भवेत् ॥ हिक्काश्वासगलग्रहश्च सुमहान्पांडुस्त्वचा दृश्यते शुष्कांगं प्रवदंति शास्त्रनिपुणास्तत्कालदष्टं विदुः ॥ ६ ॥ दंशे यस्याथ शोथः प्रचलितवलितं मण्डलं वा सुनीलं प्रस्वेदो गात्रभेदः स्रवति च रुधिरं सानुनासं च जल्पेत् ॥ दन्तोष्ठाभ्यां वियोगो भ्रमति च हृदयं सन्निरोधश्च तीव्रो दिव्यानामेष दंशः स्थलविपुलमयो विद्धि तं कालदष्टम् ॥ ७ ॥ दन्तैर्दन्तान्स्पृशति बहुशो दृष्टिरायासखिन्ना स्थूलो दंशः स्रवति रुधिरं केकरं चक्षुरेकम् ॥ प्रत्यादिष्टः श्वसिति

१ दष्टा।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सततं सानुनासं च भाषेत्पापं ब्रूते सकलगदितं कालदष्टं तमाहुः[1]॥ ८ ॥ वेपते वेदना तीव्रा रक्तनेत्रश्च जायते ॥ ग्रीवाभंगश्चला नाभिः कालदष्टं विनिर्दिशेत् ॥ ९ ॥ दर्पणे सलिले वापि आत्मच्छायां न पश्यति ॥ मन्दरश्मिं तथा तीव्रं तेजोहीनं दिवाकरम् ॥ १० ॥ वेपते वेदनात्रस्तो रक्तनेत्रश्च जायते ॥ स याति निधनं जन्तुः कालदष्टं विनिर्दिशेत् ॥ ११ ॥ अष्टम्यां च नवम्यां च कृष्णपक्षे चतुर्दशीम् ॥ नागपञ्चमीदष्टानां जीवितस्य च संशयः ॥ १२ ॥ आर्द्राश्लेषामघाभरणीकृत्तिकासु विशेषतः ॥ विशाखां त्रिषु पूर्वासु मूलस्वातीशतात्मके ॥ सर्पदष्टा न जीवंति विषं पीतं च यैस्तथा ॥ १३ ॥ शून्यागारे श्मशाने च शुष्कवृक्षे तथैव च ॥ न जीवंति नरा दष्टा नक्षत्रे तिथिसंयुते ॥ १४ ॥ अष्टोत्तरं मर्म शतं प्राणिनां समुदाहृतम् ॥ तेषां मध्ये तु मर्माणि दश द्वे चापि कीर्तिते ॥ १५ ॥ शंखे नेत्रे भ्रुवोर्मध्ये बस्तिभ्यां वृषणोत्तरे ॥ कक्षे स्कन्धे हृदि मध्ये तालुके चिबुके गुदे ॥ १६ ॥ एषु द्वादशमर्मेषु[2] दंशैः शस्त्रेण वा हतः ॥ न जीवति नरो लोके कालदष्टं विनिर्दिशेत् ॥ १७ ॥ अकचटतपयशां वदंति प्रोक्ता जीवंति न तत्र हि ॥ गतं ब्रूयाद्यदि स्खलति शिरस्तस्य संप्राप्तकालः ॥ १८ ॥ भवति च यदि दूतो ह्युत्तमस्याधमो वा यदि भवति च दूत उत्तमो वाधमस्य ॥ आदौ दष्टस्य नाम यदि वदति क्वचिद्वक्ति तस्याथ पश्चात्तं वर्णभेदो यदि भवति समः प्राप्तकालस्य दूतः ॥ १९ ॥ दूतो वा दंडहस्तो भवति च युगलं पाशहस्तस्तथा वा रक्तं वस्त्रं च कृष्णं मुखशिरसि गतमेकवस्त्रश्च दूतः ॥ तैलाभ्यक्तश्च तद्वद्यदि त्वरितगतिर्मुक्तकेशश्च याति यः कुर्याद्घोरशब्दं करचरणयुगैः प्राप्तकालस्य दूतः ॥ २० ॥ नागोदयं प्रवक्ष्यामि ईशानेन तु भाषितम् ॥ ब्रह्मणा तु पुरा सृष्टा ग्रहा नागास्त्वनेकशः ॥ २१ ॥ अनन्तं भास्करं विद्यात्सोमं विद्यात्तु वासुकिम् ॥ तक्षकं भूमिपुत्रं तु कर्कोटं च बुधं विदुः ॥ २२ ॥ पद्मं बृहस्पतिं विद्यान्महापद्मं च भार्गवम् ॥ कुलिकः शंखपालश्च द्वावेतौ तु शनैश्चरः ॥ २३ ॥ पूर्वपादः शंखपालो द्वितीयः कुलिकस्तथा ॥ नित्यं भागे यथोद्दिष्टे दिनरात्री तथैव च ॥ २४ ॥ शुक्रसोमौ च मध्याह्ने उदये तु क्षमासुतः ॥ शनिः प्रागष्टमे भागे दिवारात्रे त्विहोच्यते ॥ २५ ॥ ग्रहाश्च भुञ्जते चैव शेषं भागस्य लक्षणम् ॥ रविवारे सदा ज्ञेयौ पादौ दश चतुर्दश ॥ २६ ॥ अष्ट द्वादश वै चन्द्रे दश षष्ठे कुजे तथा ॥ बुधस्य नवमे पादे राहौ च दिवसस्य च ॥२७॥ गुरोर्द्वितीयः षष्ठश्च षोडशस्य तु वर्जयेत् ॥ भास्करस्य दिने प्रोक्ते चतुर्थे दशमेष्टमे ॥ ॥२८॥शनैश्चरदिने पादं त्यजेच्चैव सुदारुणम् ॥ द्वितीयं द्वादशं चैव षोडशस्य तु वर्जयेत् ॥२९॥ मुहूर्तघटिकादूर्ध्वं घटिका चतुर्थं भागं विंशतिश्च ॥

१ निशाकरम्—इ० पा० । २ मर्मसु ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुहूसुतं बुद्बुदं निमेषमेतत्कालस्य लक्षणम् ॥३०॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि पञ्चमीकल्पे दंशदष्टकदूतलक्षणं नाम चतुस्त्रिंशोऽध्यायः॥३४॥ ॥छ॥ ॥ कश्यप उवाच ॥ ॥ सविषा दंष्ट्रयोर्मध्ये यमदूती तु वै भवेत् ॥ न चिकित्सा बुधैः कार्या तं गतायुं विनिर्दिशेत् ॥ १ ॥ प्रहरार्धं दिवारात्रावेकैकं भुञ्जते बहिः ॥ एकस्य च समानं च द्वितीयं षोडशं तथा ॥ २ ॥ नागोदयो यमुद्दिश्य हतो विद्धो विदारितः ॥ कालदष्टं विजानीयात्कश्यपस्य वचो यथा ॥ ३ ॥ यन्मात्रं पतते बिंदुर्वालाग्रं सलिलोद्धृतम् ॥ तन्मात्रं स्रवते दंष्ट्रा विषं सर्पस्य दारुणम् ॥ ४ ॥ नाडीशते तु संपूर्णे देहे संक्रमते विषम् ॥ यावत्संक्रामयेद्बाहुं कुञ्चितं वा प्रसारयेत् ॥ ५ ॥ अनेन क्षणमात्रेण विषं गच्छति मस्तके ॥ वेपते विषवेगे तु शतशोऽथ सहस्रशः ॥ ६ ॥ वर्धते रक्तमासाद्य ततो वातैः शिखी यथा ॥ तैलबिंदुर्जलं प्राप्य यथा वेगेन वर्धते ॥७॥ शिखंडी आश्रयं प्राप्य मारुतेन समीरितः ॥ ततः स्थानशतं प्राप्य त्वचास्थानं विचेष्टितम् ॥८॥ त्वचासु द्विगुणं विद्याच्छोणितेषु चतुर्गुणम् ॥ पित्ते तु त्रिगुणं याति श्लेष्मे वै षोडशं भवेत् ॥ ९ ॥ वायौ त्रिंशद्गुणं चैव मज्जाषष्टिगुणं तथा ॥ प्राणे चैकार्णवीभूते सर्वगात्राणि संधयेत्॥१०॥ श्रोत्रे निरुध्यमाने च याति दष्टस्त्वसाध्यताम् ॥ ततोऽसौ म्रियते जंतुर्निःश्वासोच्छ्वासवर्जितः ॥११॥ निष्क्रांते तु ततो जीवे भूते पञ्चत्वमागते॥ तानि भूतानि गच्छंति यस्ययस्य यथातथम् ॥ १२ ॥ पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥ इत्येषामेव संघातः शरीरमभिधीयते ॥ १३ ॥ पृथिवी पृथिवीं याति तोयं तोयेषु लीयते ॥ तेजो गच्छति चादित्यं मारुतो मारुतं व्रजेत् ॥ १४ ॥ आकाशं चैवमाकाशे सह तेनैव गच्छति ॥ स्वस्थानं ते प्रपद्यंते परस्परनियोजिताः ॥ १५ ॥ न जीवेदागतः कश्चिदिह जन्मनि सुव्रत ॥ विषार्तं न उपेक्षेत त्वरितं तु चिकित्सयेत् ॥ १६ ॥ एकमस्ति विषं लोके द्वितीयं चोपपद्यते ॥ यथा नानाविधं चैव स्थावरं तु तथैव च ॥ १७ ॥ प्रथमे विषवेगे तु रोमहर्षोऽभिजायते ॥ द्वितीये विषवेगे तु स्वेदो गात्रेषु जायते ॥ १८ ॥ तृतीये विषवेगे तु कंपो गात्रेषु जायते ॥ चतुर्थे विषवेगे तु श्रोत्रांतरनिरोधकृत् ॥ १९ ॥ पञ्चमे विषवेगे तु हिक्का गात्रेषु जायते ॥ षष्ठे च विषवेगे तु प्राणेभ्योऽपि प्रमुच्यते ॥ सप्तधातुवहा ह्येते वैनतेयेन भाषिताः ॥ २० ॥ त्वचः स्थाने विषे प्राप्ते तस्य रूपाणि मे शृणु ॥ अंगानि तिमिरायंते तपंते च मुहुर्मुहुः ॥ २१ ॥ एतानि यस्य चिह्नानि तस्य त्वचि गतं विषम् ॥ तस्यागदं प्रवक्ष्यामि येन संपद्यते सुखम् ॥ २२ ॥ अर्कमूलमपामार्गं प्रियंगुं तगरं तथा ॥ एतदालोड्य दातव्यं ततः संपद्यते सुखम् ॥ २३ ॥ ततस्तस्मिन्कृते

१ वर्धयेत्–इ० पा० । २ तैलकम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विप्र न निवर्तेत चेद्विषम् ॥ त्वचः स्थानं ततो भित्त्वा रक्तस्थानं प्रधावति ॥ २४ ॥ विषे च रक्तं संप्राप्ते तस्य रूपाणि मे शृणु ॥ दह्यते मुह्यते चैव शीतलं बहु मन्यते ॥ २५ ॥ एतानि यस्य रूपाणि तस्य रक्तगतं विषम् ॥ तत्रागदं प्रवक्ष्यामि येन संपद्यते सुखम् ॥ २६ ॥ उशीरं चन्दनं कुष्ठमुत्पलं तगरं तथा ॥ महाकालस्य मूलानि सिंदुवारनगस्य च ॥ हिंगुलं मरिचं चैव पूर्ववेगे तु दापयेत् ॥ २७ ॥ बृहती वृश्चिका काली इंद्रवारुणिमूलकम् ॥ सप्तगंधघृतं चैव द्वितीये परिकीर्तितम् ॥ २८ ॥ सिंदुवारं तथा हिंगु तृतीये कारयेद्बुधः ॥ तस्य पानं च कुर्वीत अंजनं लेपनं तथा ॥ २९ ॥ एतेनैवोपचारेण ततः संपद्यते सुखम् ॥ रक्तस्थानं ततो गत्वा पित्तस्थानं प्रधावति ॥ ३० ॥ पित्तस्थानगते विप्र विषरूपाणि मे शृणु ॥ उत्तिष्ठते निपतते दह्यते मुह्यते तथा ॥ ३१ ॥ गात्रतः पीतकः स्याद्वै दिशः पश्यति पीतिकाः ॥ प्रबला च भवेन्मूर्च्छा न चात्मानं विजानते ॥ विषक्रियां तस्य कुर्याद्यया संपद्यते सुखम् ॥ ३२ ॥ पित्तस्थानमतिक्रम्य श्लेष्मस्थानं च गच्छति ॥ ३३ ॥ पिप्पल्यो मधुकं चैव मधु खंडं घृतं तथा ॥ मधुसारमलाबूं च जातिं शंकरवालुकाम् ॥ इंद्रवारुणिकामूलं गवां मूत्रेण पेषयेत् ॥ ३४ ॥ नस्यं तस्य प्रयुंजीत पानमालेपनांजनम् ॥ एतेनैवोपचारेण ततः संपद्यते सुखम् ॥ ३५ ॥ श्लेष्मस्थानं ततः प्राप्ते तस्य रूपाणि मे शृणु ॥ गात्राणि तस्य रुध्यंते निःश्वासश्च न जायते ॥ लाला च स्रवते तस्य कंठो घुरुघुरायते ॥ ३६ ॥ एतानि यस्य रूपाणि तस्य श्लेष्मगतं विषम् ॥ तस्यागदं प्रवक्ष्यामि येन संपद्यते सुखम् ॥ ३७ ॥ त्रिकटुकी श्लेष्मातको लोध्रश्च मधुसारकम् ॥ एतानि समभागानि गवां मूत्रेण पेषयेत् ॥ ३८ ॥ तस्य पानं च कुर्वीत अंजनं लेपनं तथा ॥ एतेनैवोपचारेण ततः संपद्यते सुखम् ॥ ३९ ॥ श्लेष्मस्थानमतिक्रम्य वायुस्थानं च गच्छति ॥ तत्र रूपाणि वक्ष्यामि वायुस्थानगते विषे ॥ ४० ॥ आध्मायते च जठरं बांधवांश्च न पश्यति ॥ ईदृशं कुरुते रूपं दृष्टिभंगश्च जायते ॥ ४१ ॥ एतानि यस्य रूपाणि तस्य वायुगतं विषम् ॥ तस्यागदं प्रक्ष्यामि येन संपद्यते सुखम् ॥ ४२ ॥ शोणामूलं प्रियालं च रक्तं च गजपिप्पलीम् ॥ भार्ङ्गीं वचां पिप्पलीं च देवदारुं मधूककम् ॥ ४३ ॥ मधूकसारं सहसिंदुवारं हिंगुं च पिष्ट्वा गुटिकां च कुर्यात् ॥ दद्याच्च तस्यांजनलेपनादि एपोऽगदः सर्पविषाणि हन्यात् ॥ ४४ ॥ अंजनं चैव नस्यं च क्षिप्रं दद्याद्विषान्विते ॥ वायुस्थानं ततो मुक्त्वा मज्जास्थानं प्रधावति ॥ ४५ ॥ विषे मज्जागते क्षिप्र तस्य रूपाणि मे शृणु ॥ दृष्टिश्च हीयते तस्य भृशमंगानि मुंचति ॥ ४६ ॥ एतानि यस्य रूपाणि तस्य मज्जागतं विषम् ॥ तस्यागदं प्रवक्ष्यामि येन संपद्यते सुखम् ॥ ४७ ॥



१ चैव तद्देहम्–इ० पा० । २ इंद्रवारुकमूलकम्–इ० पा० । ३ श्रोत्राणि तस्य रुध्यंते–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घृतमधुशर्करान्वितमुशीरं चदनं तथा ॥ एतदालोड्य दातव्यं पानं नस्यं च सुव्रत ॥ ४८ ॥ ततः प्रणश्यते दुःखं ततः संपद्यते सुखम् ॥ अथ तस्मिन्कृते योगे विषं तस्य निवर्तते ॥४९॥ मज्जास्थानं ततो गत्वा मर्मस्थानं प्रधावति॥विषे तु मर्मं संप्राप्ते शृणु रूपं यथा भवेत्॥५०॥ निश्चेष्टः पतते भूमौ कर्णाभ्यां बधिरो भवेत्॥ वारिणा सिच्यमानस्य रोमहर्षो न जायते ॥५१॥ दंडेन हन्यमानस्य दंडराजी न जायते॥शस्त्रेण च्छिद्यमानस्य रुधिरं न प्रवर्तते ॥ ५२ ॥ केशेषु लुच्यमानेषु नैव केशान्प्रवेदते ॥ यस्य कर्णौ च पार्श्वे च हस्तपादं च संधयः ॥ शिथिलानि भवंतीह स गतासुरिति श्रुतिः ॥ ५३॥ एतानि यस्य रूपाणि विपरीतानि गौतम ॥ मृतं तु न विजानीयात्कश्यपस्य वचो यथा ॥५४॥ वैद्यास्तस्य न पश्यंति ये भवंति कुशिक्षिताः ॥ विचक्षणास्तु पश्यंति मंत्रौषधिसमन्विताः ॥५५॥ तस्यागदं प्रवक्ष्यामि स्वयं रुद्रेण भाषितम् ॥ मयूरपित्तं मार्जारपित्तं गन्धनाडीमूलमेव च ॥ ५६ ॥ कुंकुमं तगरं कुष्ठं कासमर्दत्वचं तथा ॥ उत्पलस्य च किंजल्कं पद्मस्य कुमुदस्य च ॥ ५७ ॥ एतानि समभागानि गोमूत्रेण तु पेषयेत् ॥ एषोऽगदो यस्य हस्ते दष्टो न म्रियते स वै ॥ कालाहिनापि दष्टेन क्षिप्रं भवति निर्विषः ॥५८॥ क्षिप्रमेव प्रदातव्यं मृतसंजीवनौषधम् ॥ अंजनं चैव नस्यं च क्षिप्रं दद्याद्विचक्षणः ॥ ५९ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि पंचमीकल्पे धातुगतविषक्रियावर्णनं नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥छ॥ ॥ गौतम उवाच॥ ॥ कीदृशं सर्पदष्टस्य सर्पिण्याः कीदृशं भवेत् ॥ कुमारदष्टः कीदृक्स्यात्सूतिकादंशितस्य च ॥ १ ॥ रूपं नपुंसकेनेह व्यंतरेण च कीदृशम् ॥ एतदाख्याहि मे सर्वमेभिर्दष्टस्य लक्षणम् ॥ २ ॥ ॥ ॥ कश्यप उवाच ॥ ॥ अतः परं प्रवक्ष्यामि नागानां रूपलक्षणम् ॥ सर्पदष्टस्य च तथा समासाद्द्विजपुंगव ॥ ३ ॥ अथ सर्पेण दष्टस्य ऊर्ध्वदृष्टिः प्रजायते ॥ सर्पीदष्टस्य च तथा अधोदृष्टिः प्रजायते ॥ ४ ॥ कन्यादष्टस्य वामा स्याद्दृष्टिर्द्विजवरोत्तम ॥ कुमारेणापि दष्टस्य दक्षिणा एव जायते ॥५॥ गर्भिण्या वाथ दष्टस्य तथा स्वेदश्च जायते ॥ रोमांचः सूतिकायास्तु वेपथुश्चापि जायते ॥ नपुंसकेन दष्टस्य अंगमर्दः प्रजायते ॥ ॥६॥ पन्नग्यः प्रभवो रात्रौ दिवा सर्पो विषाधिकः॥ नपुंसकस्तु संध्यायां कश्यपेन तु भाषितम्॥७॥ अंधकारे तु दष्टो य उदके गहने वने ॥ सुप्तो वा चेत्प्रमत्तो वा यदि सर्पं न पश्यति ॥ दष्टरूपाण्यजानन्वै कथं वैद्यचिंकित्सितम्॥८॥चतुर्विधा इह प्रोक्ताः पन्नगास्तु महात्मना ॥ दर्वीकरा मंडलिनो राजिला व्यंतरास्तथा ॥ ९ ॥ दर्वीकरा वातविषा मंडला पैत्तिकाः स्मृताः ॥ श्लेष्मला राजिला ज्ञेया व्यंतराः सान्निपातिकाः ॥ १० ॥

२ गंधनानालीमूलमेव च--इ० पा० । २ मुखशोषः--इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रक्तं परीक्षयेदेषां सर्पाणां तु पृथक्पृथक् ॥ कृष्णं दर्वीकराणां तु जायते नाल्पमुल्बणम् ॥ ११ ॥ रक्तं घनं च बहुशः शोणितं मंडलीकृतम् ॥ पिच्छिलं राजिले स्वल्पं तद्वद्व्यंतरके तथा ॥ १२ ॥ सर्पा ज्ञेयास्तु चत्वारः पंचमो नोपलभ्यते ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव चतुर्थकः ॥ १३ ॥ ब्राह्मणे मधुरं दद्यात्तिक्तं दद्यात्तथोत्तरे ॥ वैश्ये कर्पफलं दद्याच्छूद्रे त्रिस्थूणमेव च ॥ १४ ॥ ब्राह्मणेन तु दष्टस्य दाहो गात्रेषु जायते ॥ मूर्च्छा च प्रबला स्याद्वै नात्मानमभिजानते ॥ १५ ॥ श्यामवर्णं मुखं च स्यान्मज्जास्तंभश्च जायते ॥ तस्य कुर्यात्प्रतीकारं येन संपद्यते सुखम् ॥ १६ ॥ अश्वगंधाप्यपामार्गः सिंदुवारं सुरामयम् ॥ एतत्सर्पिःसमायुक्तं पाने नस्ये च दापयेत् ॥ एतेनैवोपचारेण सुखी भवति मानवः ॥ १७ ॥ क्षत्रियेण तु दष्टस्य कंपो गात्रेषु जायते ॥ मूर्छा मोहस्तथा स्याद्वै नात्मानमभिवेत्ति सः ॥ १८ ॥ जायते वेदना तस्य ऊर्ध्वं चैव निरीक्षते ॥ तस्य कुर्यात्प्रतीकारं येन संपद्यते सुखम् ॥ १९ ॥ अर्कमूलमपामार्गं प्रियंगुमिन्द्रवारुणीम् ॥ एतत्सर्पिःसमायुक्तं पानं नस्यं च दापयेत् ॥ एतेनैवोपचारेण सुखी भवति मानवः ॥ २० ॥ वैश्येनापि हि दष्टस्य शृणु रूपाणि यानि तु ॥ श्लेष्मप्रकोपो लाला च न चोद्वहति चेतनाम् ॥ २१ ॥ मूर्छा च प्रबला यस्य आत्मानं नाभिनंदति ॥ तस्य कुर्यात्प्रतीकारं येन संपद्यते सुखम् ॥ २२ ॥ अश्वगंधा सगोमूत्रा गृहधूमं सगुग्गुलम् ॥ शिरीषार्कपलाशेन श्वेता च गिरिकर्णिका ॥ २३ ॥ गोमूत्रेण समायुक्तं पानं नस्यं च दापयेत् ॥ एष वैश्येन दष्टानामगदः परिकीर्त्तितः ॥ २४ ॥ शूद्रेणापि हि दष्टस्य शृणु तत्त्वेन गौतम ॥ कुंथ्यते वेपते चैव ज्वरः शीतं च जायते ॥ २५ ॥ अंगानि चुंलुचुलायंते शूद्रदष्टस्य लक्षणम् ॥ तत्रागदं प्रवक्ष्यामि येन संपद्यते सुखम् ॥ २६ ॥ पद्मं च लोध्रकं चैव क्षौद्रं पद्मस्य केसरम् ॥ मधूकसारं मधु च श्वेतां च गिरिकर्णिकाम् ॥ २७ ॥ एतानि समभागानि पेषयेच्छीतवारिणा ॥ पानलेपांजनैर्नस्यैः सुखी भवति मानवः ॥ २८ ॥ पूर्वाह्णे चरते विप्रो मध्याह्ने क्षत्रियश्चरेत् ॥ अपराह्णे चरेद्वैश्यः शूद्रः संध्याचरो भवेत् ॥२९॥ आहारो वायुपुष्पाणि ब्राह्मणानां विदुर्बुधाः ॥ मूषिका क्षत्रियाणां च आहारो द्विजसत्तम ॥ वैश्या मंडूकभक्षाश्च शूद्राः सर्वाशिनस्तथा ॥३०॥ अग्रतो दशते विप्रः क्षत्रियो दक्षिणेन तु ॥ वामपार्श्वे सदा वैश्यः पश्चाद्वै शूद्र आदशेत् ॥ ३१ ॥ मदकाले तु संप्राप्ते पीड्यमाना महाविषाः ॥ अवेलायां दशंते वै मैथुनार्ता भुजंगमाः ॥ ३२ ॥ पुष्पगंधाः

१ कटुकमेव च–इ० पा० । २ प्रियंगुमत्तवारुणीम्–इ० पा० । ३ कुथ्यते–इ० पा० । ४ चिमिचिमायंते–इ० पा० । ५ चांतरे–इ० पा० । ६ आहारं चात्र पुष्पाणि–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मृता विप्राः क्षत्रियाश्चंदनावहाः ॥ वैश्याश्च घृतगंधा वै शूद्राः स्युर्मत्स्यगंधिनः ॥ ३३ ॥ वासं तेषां प्रवक्ष्यामि यथावदनुपूर्वशः ॥ वापीकूपतडागेषु गिरिप्रस्रवणेषु च ॥ वसंति ब्राह्मणाः सर्पा ग्रामद्वारे चतुष्पथे ॥३४॥ आरामेषु पवित्रेषु शुचिष्वायतनेषु च ॥ वसन्ति क्षत्रिया नित्यं तोरणेषु सरःसु च ॥३५॥ श्मशाने भस्मशालासु पलालेषु तटेषु च ॥ गोष्ठेषु पथि वृक्षेषु विप्र वैश्या वसंति च ॥३६॥ अविविक्तेषु स्थानेषु निर्जनेषु वनेषु च ॥ शून्यागारे श्मशाने च शूद्रा विप्र वसंति च ॥ ३७॥ श्वेताश्च कपिलाश्चैव ये सर्पास्त्वनलप्रभाः ॥ मनस्विनः सात्त्विकाश्च ब्राह्मणास्ते बुधैः स्मृताः ॥३८॥ रक्तवर्णाः सुवर्णाभाः प्रवालमणिसंनिभाः ॥ सूर्यप्रभास्तथा विप्र क्षत्रियास्ते भुजंगमाः॥३९॥नानाविचित्रराजीभिरतसीवर्णसन्निभाः॥ बाणपुष्पसवर्णाभा वैश्यास्ते वै भुजंगमाः ॥ ४० ॥ काकोदरनिभाः केचिद्ये च अंजनसन्निभाः ॥ काकवर्णा धूम्रवर्णास्ते शूद्राः परिकीर्तिताः ॥४१॥ यस्य सर्पेण दष्टस्य दंशमंगुष्ठमंतरम् ॥ बालदष्टं विजानीयात्कश्यपस्य वचो यथा॥ ४२ ॥ यस्य सर्पेण दष्टस्य दंशं द्व्यंगुलमंतरम् ॥ यौवनस्थेन दष्टस्य एतद्भवति लक्षणम् ॥ ४३ ॥ यस्य सर्पेण दष्टस्य सार्धं द्व्यंगुलमंतरम् ॥ वृद्धदष्टं विजानीयात्कश्यपस्य वचो यथा ॥४४॥ अनंतः प्रेक्षते पूर्वं वामपार्श्वे तु वासुकिः ॥ तक्षको दक्षिणेनेह कर्कोटः पृष्ठतस्तथा ॥ ४५ ॥ चलते भ्रमते पद्मो महापद्मो निमज्जति ॥ विसंज्ञस्तिष्ठते चैव शंखपालो मुहुर्मुहुः ॥ ४६ ॥ सर्वेषां कुरुते रूपं कुलिकः पन्नगोत्तमः ॥ अनंतस्य दिशा पूर्वा वासुकेस्तु हुताशनी ॥४७॥ दक्षिणा तक्षकस्योक्ता कर्कोटस्य तु नैर्ऋती ॥ पश्चिमा पद्मनाभस्य महापद्मस्य वायुजा ॥ उत्तरा शंखपालस्य ऐशानी कंबलस्य तु॥४८॥अनंतस्य भवेत्पद्मं वासुकेः स्यात्तथोत्पलम् ॥ स्वस्तिकं तक्षकस्योक्तं कर्कोटस्य तु पंकजम् ॥ ४९ ॥ पद्मस्य तु भवेत्पद्मं शूलं पद्मेतरस्य तु ॥ शंखपाले भवेच्छत्रं कुलिकस्यार्धचन्द्रकम् ॥ ५० ॥ अनंतकपिलौ विप्रौ क्षत्रियौ शंखवासुकी ॥ महापद्मस्तक्षकश्च वैश्यौ विप्र प्रकीर्तितौ ॥ पद्मकर्कोटकौ शूद्रौ सदा ज्ञेयौ मनीषिभिः ॥ ५१ ॥ अनंतकुलिकौ शुक्लौ वर्णतो ब्रह्मसंभवौ ॥ वासुकिः शंखपालश्च रक्तौ ह्यग्निसमुद्भवौ ॥ ५२ ॥ तक्षकश्च महापद्म ईषत्पीतौ बभूवतुः ॥ पद्मकर्कोटकौ विप्र सर्पौ कृष्णौ बभूवतुः ॥ ५३ ॥ हयं यानं वृषं छत्रं राजानमथ पावकम् ॥ धरणीमुत्पाद्य धृतानेतान्सिद्धिकरान्विदुः ॥ ॥५४॥पूर्णकुम्भः पाताका च कांचनं मणयस्तथा ॥ शिरीषं माणिकं कण्ठे जीवजीवेति सुव्रत ॥ एतेषां दर्शनं श्रेष्ठं कन्या चैकप्रसूयिका ॥५५॥

१ नदीह्रदतडागेषु—इ० पा० । २ विप्रो वै वसते नित्यं सदा ब्राह्मणसत्तम—इ० पा० । ३ विशुद्धायतनेषु च—इ० पा० । ४ विमज्जंस्तिष्ठते—इ० पा० । ५ श्रिरेखकम्—इ० पा० । ६ नृपोत्तम—इ० पा० । ७ प्रायः पीतौ—इ० पा० । ८ हयपाल्म्—इ० पा० । ९ शयनं मणिकं कंठे—इ० शरसीमाणिकं कंठे—इ० च पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चतुःषष्टिः समाख्याता भोगिनो ये तु पन्नगाः ॥ अदृश्यास्तेषु षट्त्रिंशद्दृश्यास्त्रिंशन्महीचराः ॥ ५६ ॥ विंशच्च स्रग्विणः प्रोक्ताः सप्त मंडलिनस्तथा ॥ राजीवन्तो दश प्रोक्ता दर्व्यः षोडश पंच च ॥ ५७ ॥ दुंदुभो डुंडुभश्चैव चेटंभश्चेंद्रवाहनः ॥ नागपुष्पसवर्णाख्या निर्विषा ये च पन्नगाः ॥ एवमेवतुसर्पाणां शतद्विनवति स्मृतम् ॥ ५८ ॥ वराहकर्णीं गजपिप्पलीं च गांधारिकां पिप्पलदेवदारु ॥ मधूकसारं सहसिंदुवारं हिंगुं च पिष्ट्वा गुटिका च कार्या ॥५९॥ ॥ सुमंतुरुवाच ॥ ॥ इत्युक्तवान्पुरा वीर गौतमस्य प्रजापतिः ॥ लक्षणं सर्वनागानां रूपवर्णौ विषं तथा ॥ ॥ ६० ॥ तस्मात्संपूजयेन्नागान्सदा भक्त्या समन्वितः ॥ विशेषतस्तु पंचम्यां पयसा पायसेन च ॥ ६१ ॥ श्रावणे मासि पंचम्यां शुक्लपक्षे नराधिप ॥ द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः ॥ ६२ ॥ पूजयेद्विधिवद्वारं दधिदूर्वाक्षतैः कुशैः ॥ गंधपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः॥ ॥ ६३ ॥ ये त्वस्यां पूजयंतीह नागान्भक्तिपुरःसराः ॥ न तेषां सर्पतो वीर भयं भवति कर्हिचित् ॥ ६४ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि पञ्चमीकल्पे श्रावणिकनागपञ्चमीव्रतवर्णनं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ तथा भाद्रपदे मासि पंचम्यां श्रद्धयान्वितः ॥ अथालेख्य नरो नागान्कृष्णवर्णादिवर्णकैः ॥ १ ॥ पूजयेद्गंधपुष्पैश्च सर्पिःपायसगुग्गुलैः ॥ तस्य तुष्टिं समायांति पन्नगास्तक्षकादयः ॥ २ ॥ आसप्तमात्कुलात्तस्य न भयं नागतो भवेत् ॥ तस्मात्सर्वप्रयत्नेन नागान्संपूजयेद्बुधः ॥ ३ ॥ इति श्रीभविष्ये महापुराणे शतर्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि पंचमीकल्पे भाद्रपदिकनागपञ्चमीव्रतवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥३७॥ ॥ छ ॥ ॥ ॥ सुमंतुरुवाच ॥ ॥ तथा चाश्वयुजे मासि पञ्चम्यां कुरुनंदन ॥ कृत्वा कुशमयान्नागान्गंधाद्यैः संप्रपूजयेत् ॥ १ ॥ घृतोदकाभ्यां पयसा स्नपयित्वा विशांपते ॥ गोधूमैः पयसा स्विन्नैर्भक्ष्यैश्च विविधैस्तथा ॥ २ ॥ यस्त्वस्यां विधिवन्नागाञ्छुचिर्भक्त्या समन्वितः ॥ पूजयेत्कुरुशार्दूल तस्य शेषादयो नृप ॥३॥ नागाः प्रीता भवंतीह शांतिमाप्नोति वा विभो ॥ स शांतिलोकमासाद्य मोदते शाश्वतीः समाः ॥ ४ ॥ इत्येष कथितो वीर पञ्चमीकल्प उत्तमः ॥ यत्रायमुच्यते मंत्रः सर्वसर्पनिषेधकः ॥ ५ ॥ ( ॐ कुरुकुल्ले फट् स्वाहा । ) ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि पंचमीकल्पे समाप्तिकथनं नामाष्टत्रिंशोऽध्यायः ॥३८॥ ॥छ॥ ॥सुमंतुरुवाच॥ ॥ षष्ठ्यां फलाशनो राजन्विशेषात्कार्तिके नृप ॥ राज्यच्युतो विशेषेण स्वं राज्यं लभतेऽचिरात् ॥१॥ षष्ठी तिथिर्महाराज सर्वदा सर्वकामदा॥ उपोष्या तु प्रयत्नेन सर्वकालं जया



१ मत्तपन्नगाः—इ० पा० । २ अष्टत्रिंशन्महीचराः—इ० पा० । ३ मुकुलिनः—इ० पा० । ४ क्षेत्रभः क्षेत्रवाहनः—इ० पा० । ५ कृष्णपक्षे इ० पा० अप्रासंगिकः । ६ इंद्राण्या सह पूजयेत्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थिना ॥ २ ॥ कार्त्तिकेयस्य दयिता एषा षष्ठी महातिथिः ॥ देवसेनाधिपत्यं हि प्राप्तं तस्यां महात्मना ॥३॥ अस्यां हि श्रेयसा युक्तो यस्मात्स्कंदो भवाग्रणीः ॥ तस्मात्षष्ठ्यां नक्तभोजी प्राप्नुयादीप्सितं सदा ॥ ४ ॥ दत्त्वार्घ्यं कार्त्तिकेयाय स्थित्वा वै दक्षिणामुखः ॥ दध्ना-घृतोदकैः पुष्पैर्मंत्रेणानेन सुव्रत ॥ ५ ॥ सप्तर्षिदारज स्कन्द स्वाहापतिसमुद्भव ॥ रुद्रार्यमाग्निज विभो गंगागर्भ नमोऽस्तु ते ॥ प्रीयतां देवसेनानीः संपादयतु हृद्गतम् ॥ ॥ ६ ॥ दत्त्वा विप्राय चात्मान्नं यच्चान्यदपि विद्यते ॥ पश्चाद्भुङ्क्ते त्वसौ रात्रौ भूमिं कृत्वा तु भाजनम् ॥७॥ एवं षष्ठ्यां व्रतं स्नेहात्प्रोक्तं स्कन्देन यत्नतः ॥ तन्निबोध महाराज प्रोच्यमानं मयाखिलम् ॥ ८ ॥ षष्ठ्यां यस्तु फलाहारो नक्ताहारो भविष्यति ॥ शुक्लाकृष्णासु नियतो ब्रह्मचारी समाहितः ॥ ९ ॥ तस्य सिद्धिं धृतिं तुष्टिं राज्यमायुर्निरामयम् ॥ पारत्रिकं चैहिकं च दद्यात्स्कन्दो न संशयः ॥ १० ॥ यो हि नक्तोपवासः स्यात्स नक्तेन व्रती भवेत् ॥ इह वामुत्र सोत्यंतं लभते ख्यातिमुत्तमाम् ॥ स्वर्गे च नियतं वासं लभते नात्र संशयः ॥ ११ ॥ इह चागत्य कालांते यथोक्तफलभाग्भवेत् ॥ देवानामपि वंद्योऽसौ राज्ञां राजा भविष्यति ॥ १२ ॥ यश्चापि शृणुयात्कल्पं षष्ठ्याः कुरुकुलोद्वह ॥ तस्य सिद्धिस्तथा तुष्टिर्धृतिः स्यात्ख्यातिसंभवा ॥ १३ ॥ इति श्रीभविष्ये महापुराणे शतार्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि षष्ठीकल्पवर्णनं नाम एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥ अहो व्रतं महत्कष्टं संशयो हृदि वर्तते ॥ कार्त्तिकेयस्य माहात्म्यं श्रुत्वा जन्म तथा द्विज ॥ १ ॥ अनेकजनितस्येह कार्त्तिकेयस्य सुव्रत ॥ माहात्म्यं सुमहद्विप्र कथमेतद्विभाव्यते ॥ २ ॥ जातिः श्रेष्ठा भवेद्वीर उत कर्म भवेद्वरम् ॥ संशयस्तु महानत्र दृष्ट्वा मे कृत्तिकासुतम् ॥ ३ ॥ एतद्वद विनिश्चित्य न यथा संशयो भवेत् ॥ जन्मतः कर्मणश्चैव यज्ज्यायस्तद्ब्रवीहि मे ॥ ४ ॥ ॥ ॥सुमंतुरुवाच ॥ ॥ इममर्थं पुरा पृष्टो ब्रह्मा शिष्यैर्मनीषिभिः ॥ यदुक्तं तेन तेषां च तत्ते वच्मि निबोध मे ॥५॥ सुरज्येष्ठं सुखासीनमभिगम्य महर्षयः ॥ प्रणम्य च महाबाहो विश्वामित्रस्य विप्रताम् ॥ ६ ॥ दृष्ट्वा विस्मयमागत्य कौतूहलसमन्विताः ॥ भक्तिं श्रद्धां पुरोधाय प्रणम्यानतकन्धराः ॥ ७ ॥ ॥ ऋषय ऊचुः ॥ ॥ भो ब्रह्मन्नादिकल्पे हि ब्राह्मण्यं ब्रूहि किं भवेत् ॥ जात्यध्ययनदेहात्मसंस्काराचारकर्मणाम्[1] ॥ ८ ॥ बाह्याभ्यंतरसामान्यविशेषा यदि कृत्रिमाः ॥ मनोवाक्कर्मशारीरजातिद्रव्यगुणात्मकाः ॥ ९ ॥ संत्यक्तव्याः प्रसिद्धा ये जातिभेदविधायिनः ॥ वस्तुभूताः परोक्षैर्वा प्रमाणैर्न विनिश्चिताः ॥ १० ॥ अव्यक्तागमसिद्धश्चेज्जातिभेदविधिर्नृणाम् ॥ विकल्पोऽयं न पुष्णाति भवतः शेमुषीबलम् ॥११॥ ॥ ब्रह्मो

१ संस्काराधानकर्मणाम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाच ॥ ॥ एवमेतन्न संदेहो यथा यूयं वदंति ह ॥ शृणुध्वं योगिनो वाक्यं सतर्कं शिष्यश्रेयसे ॥ १२ ॥ ॥ योगेश्वर उवाच ॥ ॥ प्रमाणे हि प्रसिद्धे तु भिन्नार्थविषये यतः ॥ स्पष्टयोग्यार्थविषयं प्रत्यक्षं तावदीक्षते ॥ १३ ॥ सामान्यातींद्रियग्राही सिद्धांतोऽभ्युपगम्यते ॥ स एव भगवानेकं प्रमाणमिति चेन्न तत् ॥ १४ ॥ यस्माद्द्विविधमेतत्ते संकटं भद्र वर्तते ॥ वेदस्य पौरुषेयत्वं नित्यजातिसमर्थकम् ॥ १५ ॥ कार्या विशेषा वेदोक्ता न युक्तमकृतं वचः ॥ ताल्वादिकरणानां च व्यापारानंतरं श्रुतेः ॥ १६ ॥ व्यापारात्परतस्तस्य प्रागभावविशेषतः ॥ तद्भावानुविधायित्वमन्वयव्यतिरेकतः ॥ १७ ॥ तस्माद्धूमाग्निवद्धार्थफलभावोऽवतिष्ठते ॥ न च व्यापारवचसोरन्यथानुपपत्तितः ॥ १८ ॥ पुरुषानुगता जातिर्ब्राह्मणत्वादिकास्ति चेत् ॥ द्विवर्णजातिभेदेन प्रत्यक्षार्थोपलक्षणात् ॥ १९ ॥ गोवर्गमध्यं च गतो यथाश्वो निर्धार्यते ज्ञैः सुविचक्षणत्वात् ॥ मनुष्यभावादविशिष्यमाणस्तद्वद्द्विजः शूद्रगणान्न भिन्नः ॥ २० ॥ मनुष्यजातेर्न परो विशेषो यः कल्प्यते सर्वनरानुयायी ॥ संस्कारयुक्ता हि क्रिया विशिष्टा द्विजन्मनां शूद्रविवेकहेतुः ॥ २१ ॥ जीवोपि ब्राह्मणः प्रोक्तो यैरतत्त्वज्ञमानवैः ॥ प्रभ्रष्टब्राह्मणत्वास्ते जायंते विप्रसंगतः ॥ २२ ॥ जराजन्मांतरक्लेशदुष्टग्राहकुलाकुलम् ॥ नरतिर्यगसच्छूद्रयोनिदुःखोर्मिसंकटम् ॥ २३ ॥ दौःस्थित्यरोगशोकार्तिजनावर्तसमन्वितम् ॥ श्वानशूकरचांडालकृमिकूर्मादिकायकम् ॥ २४॥ संसारसागरं घोरं मग्नः खलु परिप्लवन् ॥ भूरिपापभराक्रांतः स जीवो ब्राह्मणः कथम् ॥ २५ ॥ ॥ ब्रह्मोवाच ॥ ॥ सप्तव्याधकथा विप्रा मनुना परिकीर्तिता ॥ तां निशम्य यदुश्रेष्ठ नित्यं जातिपदं त्यजेत् ॥ २६ ॥ सप्तव्याधा दशार्णेषु मृगाः कालंजरे गिरौ ॥ चक्रवाकाः सरिद्द्वीपे हंसाः सरसि मानसे ॥ २७ ॥ तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ॥ प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥ २८ ॥ तस्मान्न जीवे ब्राह्मण्यं पश्यामो हि कथञ्चन ॥ २९ ॥ शस्त्रादिमद्भार्गवजातियुक्तो गजाश्वगोजोष्ट्रखरादिकानाम् ॥ शक्त्या कृतो ह्यंगजवर्णधर्मैर्भेदः स्फुटं लक्षणतोऽत्र यद्वत् ॥ ३० ॥ तदुत्तरान्नैव विकर्तनीया ब्राह्मण्यजातिर्नृषु नास्ति काचित् ॥ नित्याकृतिर्नानुपभेदरूपा यथा हि भेदः परमोत्र सिध्येत् ॥ सिताद्यसाधारणतुल्यरूपाः सनातनोंगेषु न वर्णभेदः ॥ ३१ ॥ ब्राह्मण्यमध्रुवमिदं किल कृत्रिमत्वादकृत्रिमं भवति सामयिकत्वयोगात् ॥ सांकेतिकं सुकृतलेशविशेषलब्धं वाणिज्यभेषजकृतामिव जातिभेदाः ॥ ३२ ॥ किं ब्राह्मणा ये सुकृतं त्यजंति किं क्षत्रिया लोकमपालयंतः ॥ स्वधर्महीना हि तथैव वैश्याः शूद्राः स्वमुख्यक्रियया विहीनाः ॥ ३३ ॥ तस्मान्न गोश्ववत्कश्चिज्जातिभेदोऽ

१ यदथ । २ दशारण्ये–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्ति देहिनाम् ॥ कार्यशक्तिनिमित्तस्तु संकेतः कृत्रिमो भवेत्॥३४॥ एवं प्रमाणैः प्रतिषिध्यमानां सांकेतिकीं याति नरो व्यवस्थाम्॥ स्वकीयसिद्धां स्वमतैर्निषिद्धां न बुध्यते मूढमना वराकः॥३५॥गोमहिष्यजवाज्युष्ट्रवानेयाविगजाधिपाः॥ प्रेष्यवार्धुषिकाकार्यकरणोद्यतमानसाः॥३६॥ वणिक्कारु क्रियाविष्टा दिव्यास्तेऽपि च ये द्विजाः ॥ विनष्टास्ते तु विज्ञेयाः क्रव्यादाश्च कुशीलवाः ॥ ३७ ॥ पलांडुलशुनादाश्च मृग्युर्ध्रीक्षीरपायिनः ॥ मांस सर्वरसक्षीरक्रयविक्रयकारिणः ॥ ३८ ॥ पुनर्भूवृषलीवेश्याचांडालस्त्रीनिषेविणः ॥ शूद्रान्नरसपुष्टांगाः प्रेतवस्त्रान्नभोजनाः ॥ ३९ ॥ मृतसूतकल व्यान्नपानाद्यभ्यवहारिणः ॥ ब्रह्मदेवपितृभूतमनुष्येषु बहिष्कृताः ॥ ४० ॥ मात्सर्यमदविद्वेषतृष्णाकामतमोमयाः ॥ हीनाचारा हि ये केचिदपरे पिशुना द्विजाः ॥ प्रकारैर्बहुभिः सर्वे ते प्रणश्यंति नान्यथा ॥ ४१ ॥ एवं शास्त्रोदितन्यायमार्गभ्रष्टास्तु ये नराः ॥ विशिष्टगोत्रसंस्कारकलापस कलात्मकाः ॥ ४२ ॥ वेदानध्यापयंतोऽपि तेऽधीयानाः श्रुतिक्रमात् ॥ ब्राह्मणत्वाद्विहीयंते दुराचारविधायिनः ॥ ४३ ॥ तस्मान्न जातिरेकत्र भूतात्मास्त्यनपायिनी ॥ नाशित्वादत्र च श्लोकान्मानवाः समधीयते ॥ ४४ ॥ सद्यः पतति मांसेन लाक्षया लवणेन च ॥ त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयी॥४५॥गोरक्षकान्वाणिजिकांस्तथा कारुकुशीलवान् ॥ प्रेष्यान्वार्धुषिकांश्चैव शूद्रांस्तान्मनुरब्रवीत् ॥४६॥ शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ॥ क्षत्रियो याति विप्रत्वं विद्याद्वैश्यं तथैव च ॥ ४७ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि षष्ठीकल्पे कार्तिकेयवर्णने जातिवर्णनं नाम चत्वारिंशोऽध्यायः ॥४०॥ ॥ ब्रह्मोवाच ॥ ॥ वेदाध्ययनमप्येतद्ब्राह्मण्यं प्रतिपद्यते ॥ विप्रवद्वैश्यराजन्यौ राक्षसा रावणादयः ॥ १ ॥ श्वादचांडालदासाश्च लुब्धकाभीरधीवराः ॥ येन्येऽपि वृषलाः केचित्तेपि वेदानधीयते ॥ २ ॥ शूद्रा देशांतरं गत्वा ब्राह्मण्यं क्षत्रियं श्रिताः ॥ व्यापाराकारभाषाद्यैर्विप्रतुल्यैः प्रकल्पितैः ॥ ३ ॥ वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ॥ प्रोद्वहंति शुभां कन्यां शुद्धब्राह्मणजां नराः ॥४॥ अथ वाधीत्य वेदांस्तु क्षत्रवैश्यैस्तु वा नराः ॥ गौडपूर्वां कृतामेयुर्जातिं वा दाक्षिणात्यजाम् ॥ ५ ॥ अपरि ज्ञातशूद्रत्वाद्ब्राह्मण्यं यांति कामतः ॥ तस्मान्न ज्ञायते भेदो वेदाध्यायक्रियाकृतः ॥ ६ ॥ शास्त्रकारैस्तथा चोक्तं न्यायमार्गानुसारिभिः ॥ ते साधु मतमाकर्ण्य संतः संति विमत्सराः ॥ ७ ॥ आचारहीनान्न पुनंति वेदा यद्यप्यधीताः सह षड्भिरंगैः ॥ शिल्पं हि वेदाध्ययनं द्विजानां वृत्तं स्मृतं ब्राह्मणलक्षणं तु ॥ ८ ॥ अधीत्य चतुरो वेदान्यदि वृत्ते न तिष्ठति ॥ न तेन क्रियते कार्यं स्त्रीरत्नेनेव पंढकः ॥ ९ ॥ शिखाप्रणवसंस्कारसंध्योपा

१ वणिज्यादिप्रवृत्तयाः—इ० पा० । २ मद्यपादाः स्त्रीषु यायिनः—इ० पा० । ३ हीनयाचः—इ० पा० । ४ उद्वहन्ति द्विजस्त्रियः—इ० पा० । ५ न नः क्रिया सतां कार्या वैश्यास्ते ब्राह्मणा मताः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सनमेखलाः ॥ दंडाजिनपवित्राद्याः शूद्रेष्वपि निरंकुशाः ॥ १० ॥ प्रसंगोपि हि शूद्राणां न शक्यो विनिवारितुम् ॥ देवोत्तमत्रयेणापि निवर्तंते नराः स्वयम् ॥ ११ ॥ तस्मान्नैतेऽपि लक्ष्यंते विलक्षणतया नृणाम् ॥ यज्ञोपवीतसंस्कारमेखलाचूलिकादयः ॥ १२ ॥ आभिचारिकमंत्राद्यैर्दुर्लभत्वादिभाषणैः ॥ ब्राह्मणस्यैव शक्तिश्चेत्केनास्य विनिहन्यते ॥ १३ ॥ तपःसत्यादिमाहात्म्याद्देवतासमयस्मृतिः ॥ मंत्रशक्तिर्नृणामेषां सर्वेषामपि विद्यते ॥ १४ ॥ वंचनं दुर्वचस्यापि क्रियते सर्वमानवैः ॥ शूद्रब्राह्मणयोस्तस्मान्नास्ति भेदः कथंचन ॥ १५ ॥ शापानुग्रहकारित्वं शक्तिभेदो न विद्यते ॥ चौरचाटादिराजन्यदुर्जनाभिहते नृणाम् ॥ १६ ॥ आत्मदुःखोदयापायं स्वेषु जंतुषु रक्षणम् ॥ कर्तुं न प्रभवेच्छूद्रो ब्राह्मणस्तद्वदेव हि ॥ ॥ १७ ॥ मा भूद्युगे कलावेतद्देशे चाकार्यकृद्द्विजे ॥ स्यादन्यदेशकालादौ द्विजानामतिशायिनाम् ॥ १८ ॥ शापानुग्रहसामर्थ्यमन्यद्वाध्यात्मगोचरम् ॥ ब्रह्मसाधनमेतद्धि लिंगं केचित्प्रचक्षते ॥ १९ ॥ संसाराक्तचेतस्का मोहांधतमसावृताः ॥ पतंत्युन्मार्गगर्तेषु प्रत्यग्नि शलभा यथा ॥ २० ॥ जातिधर्मः स्वयं किंचिद्विशेषः श्रुतिसंगमात् ॥ असिद्धः शूद्रजातीनां प्रसिद्धो विप्रजातिषु ॥ २१ ॥ संस्कारो योनिसाध्यो वा सामग्रीप्रभवोऽथ वा ॥ शूद्रेभ्योऽतिशयं धत्ते यः साधारणतागुणः ॥ २२ ॥ विप्राणां पंचधा भेदः कल्पनीयस्तु पंडितैः ॥ न जातिजन्नबीजो वा विशेषो युक्तिबाधकात् ॥ क्रमाक्रमक्रियाः संति न सनातनवस्तुनः ॥ २३ ॥ नित्यो न हेतुर्विगतक्रियत्वाद्धेतुर्भवेद्वेदविशेषतः सः ॥ स तत्समस्तत्प्रतिसान्निधानात्कालात्ययेक्षित्वमयुक्तमेव ॥ २४ ॥ स्वांतःशरीरवृत्तिस्थः श्रुतियोगादुदेति यः ॥ सोनन्यवेदविज्ञातस्वभावोन्यैर्न गम्यते ॥ २५ ॥ विशिष्टाधीतिधर्मत्वे कृत्रिमा ब्रह्मसंगतिः ॥ यस्यास्त्यतिशयस्तस्य नान्यो नाश्रयते यदि ॥ २६ ॥ दृश्यस्वभावं किमभीष्टमेतद्ब्राह्मण्यमाहोस्विददृष्टरूपम् ॥ सर्वैः प्रतीयेत हि दृश्यरूपं ततोन्यथावद्गतिरेव न स्यात् ॥ २७ ॥ सामग्र्यभावात्परमं विशेषं भूदेवगात्रस्थमभूमिदेवाः ॥ स्मरंति तेनात्मनि पुण्यपापं यथा तथेत्येतदयुक्तमुक्तम् ॥ २८ ॥ सामग्र्यनुष्ठानगुणैः समग्रा शूद्रा यतः संति समा द्विजानाम् ॥ तस्माद्विशेषो द्विजशूद्रनाम्नोर्नाध्यात्मिको बाह्यनिमित्तको वा ॥ २९ ॥ संस्कारतः सोऽतिशयो यदि स्यात्सर्वस्य पुंसोस्त्यतिसंस्कृतस्य ॥ यः संस्कृतो विप्रगणप्रधानो व्यासादिकैस्तेन न तस्य साम्यम् ॥ ३० ॥ हेतुत्वं घटंते नैषां जात्यादीनामसंभवात् ॥ जातेरकृतकत्वाच्च अधीते न विशेषतः ॥ ३१ ॥ संस्कारातिशयाभावादंतरस्यागते परैः ॥ भौतिकत्वाच्छरीरस्य समस्तानामसंहतेः ॥ ३२ ॥ किं चान्यनास्तिकम्लेच्छ

१ विचक्षणतया–इ० पा० । २ केनान्यस्य विहन्यते—इ० पा० । ३ भाव्यम्–इ० पा० । ४ विद्यते–इ० पा० !



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यवनादिजनेष्वेलम् ॥३३॥ वेदोदितबहिर्दुष्टचारितेषु दुरात्मसु ॥ धर्मादतिशयो दृष्टः क्रूरसाहसिकादिषु ॥ तस्माद्विप्रेषु जात्यादिसामग्रीप्रभवो न सः॥
॥३४॥ तस्मान्न च विभेदोस्ति न बहिर्नांतरात्मनि ॥ न सुखादौ न चैश्वर्ये नाज्ञायां नाभयेष्वपि॥३५॥न वीर्ये नाकृतौ नाक्षे न व्यापारे न चायुषि ॥
नांगे पुष्टे न दौर्बल्ये न स्थैर्ये नापि चापले॥३६॥ न प्रज्ञायां न वैराग्ये न धर्मे न पराक्रमे ॥ न त्रिवर्गे न नैपुण्ये न रूपादौ न भेषजे॥३७॥ न
स्त्रीगर्भेन गमने न देहमलसंप्लवे ॥ नास्थिरन्ध्रे न च प्रेम्णि न प्रमाणे न लोमसु॥३८॥शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः॥ नेक्ष्यते सर्वधर्मेषु
संहतैस्त्रिदशैरपि ॥ ३९ ॥ उक्तमात्रा विसंभूतिर्विचारक्रमकारिभिः ॥ वृद्धवृन्दारकाधीशैरप्रधृष्यमिदं वचः ॥ ४० ॥ न ब्राह्मणाश्चन्दमरीचिशुभ्रा
न क्षत्रियाः किंशुकपुष्पवर्णाः ॥ न चेह वैश्या हरितालतुल्याः शूद्रा न चांगारसमानवर्णाः ॥ ४१ ॥ पादप्रचारैस्तनुवर्णकेशैः सुखेन दुःखेन
च शोणितेन ॥ त्वङ्मांसमेदोस्थिरसैः[3] समानाश्चतुष्प्रभेदा हि कथं भवंति ॥४२॥ वर्णप्रमाणाकृतिगर्भवासवाग्बुद्धिकर्मेन्द्रियजीवितेषु ॥ बलत्रिव
र्गामयभेषजेषु न विद्यते जातिकृतो विशेषः ॥ ४३ ॥ स एक एवात्र पतिः प्रजानां कथं पुनर्जातिकृतः प्रभेदः ॥ प्रमाणदृष्टांतनयप्रवादैः परीक्ष्य
माणो विघटत्वमेति ॥ ४४ ॥ चत्वार एकस्य पितुः सुताश्च तेषां सुतानां खलु जातिरेका ॥ एवं प्रजानां हि पितैक एव पित्रैकभावान्न च जाति
भेदः ॥ ४५ ॥ फलान्यथोदुंबरवृक्षजातेर्यथाग्रमध्यांतभवानि यानि ॥ वर्णाकृतिस्पर्शरसैः समानि तथैकतो जातिरतिप्रचिन्त्या ॥ ४६ ॥ ये
कौशिकाः काश्यपगौतमाश्च कौंडिन्यमांडव्यवशिष्ठगोत्राः ॥ आत्रेयकौत्सांगिरसः सगर्गा मौद्गल्यकात्यायनभार्गवाश्च ॥ ४७ ॥ गोत्राणि नाना
विधजातयश्च भ्रातृस्नुषामैथुनपुत्रभावाः ॥ वैवाहिकं कर्म न वर्णभेदाः सर्वाणि शिल्पानि भवंति तेषाम् ॥ ४८ ॥ ये चान्ये[4] पंडिताः प्राहुर्देहब्राह्म
णतां नराः ॥ तेषां दुर्दृष्टितिमिरमपनीयानुकंप्य च ॥ ४९ ॥ न्यायाञ्जनौषधैर्दिव्यैः परिणामसुखावहैः ॥ उपनीतैः प्रयत्नेन सुदृष्टिं संविदध्महे ॥
॥ ५० ॥ मूर्तिमत्त्वाच्च नाशित्वं नाशित्वाच्छेपभूतवत् ॥ देहाधारनिविष्टानां[5] ब्राह्मण्यं न प्रकल्प्यते ॥ ५१ ॥ एकैकोवयवस्तेषां न ब्राह्मण्यं
समश्नुते ॥ न चानेकसमूहेपि सर्वथातिप्रसंगतः ॥ ५२ ॥ पृथिव्युदकवाय्वग्निपरिणामाविशेषतः ॥ देहतः सर्वभूतानां ब्राह्मणत्वप्रसंगतः ॥५३॥
देहस्य ब्राह्मणत्वं यैरतत्त्वज्ञैः प्रकल्प्यते ॥ संस्कर्तॄणां शरीरस्य तेषां न ब्रह्मता भवेत् ॥ ५४ ॥ मृग्यमाणे प्रयत्नेन देहे तन्नोपलभ्यते ॥ तस्मान्न

१ अपि–इ० पा० । २ योऽस्मात्–इ० पा० । ३ त्वङ्मांसकेशास्थिरसैः–इ० पा० । ४ ये चार्थम्–इ० पा० । ५ वेदाहारविनष्टानाम्–इ० पा० । ६ समस्तोऽपि हि देहोऽयं सर्वख्यातिप्रसङ्गतः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देहे ब्राह्मण्यं नापि देहात्मकं भवेत् ॥ ५५ ॥ वर्णापसदचांडालश्वादादीनां प्रसज्यते ॥ यदि देहस्य विप्रत्वं भवद्भिरुपगम्यते ॥ ५६ ॥ देहशक्ति गुणैः क्षीणैः कायभस्मादिरूपवत् ॥ तस्माद्देहात्मकेनैतद्ब्राह्मण्यं नापि कमजम् ॥ ५७ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि षष्ठीकल्पे ब्राह्मण्यविवेकवर्णनं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ अपरैश्च सदाचारयोगयुक्तैर्मनीषिभिः ॥ यदकारि महासत्त्वैः सुभाषितमिदं शृणु ॥ १ ॥ बहुवनस्पतिशंखपिपीलिकाभ्रमरवारणजातिसुदाहरन् ॥ गतिषु कर्ममितो नटवत्सदा भ्रमति जंतुरलब्धसुदर्शनः ॥ २ ॥ रूपैश्वर्यज्ञानकुलैर्विभवैर्वर्मितो भूत्वा धर्मपथं चेद्विजहासि ॥ न वक्ष्ये व्रजन्भुवनानि त्वमटिष्यंस्तस्मादभिभस्मीभूते मद आत्मनः ॥ ३ ॥ जातिकुलरूपवयोवर्णानेकश्रुतमदान्धाः क्लीबाः ॥ परत्र चेह च हितमप्यर्थं न पश्यन्ति ॥ ४ ॥ ज्ञात्वा भवपरिवर्ते जातीनां कोटिशतसहस्रेषु ॥ हीनोत्तममध्यत्वं को जातिमदं बुधः कुर्यात् ॥ ५ ॥ नैकाञ्जातिविशेषानिंद्रियनिवृत्तिपूर्वकान्सर्वान् ॥ कर्मवशाद्गच्छत्यत्र कस्यैका शाश्वती जातिः ॥६॥ विद्वत्सदसि योप्याह संस्काराद्ब्राह्मणो भवन् ॥ न्यायज्ञैः स निराकार्यो वाक्यैर्न्यायानुसारिभिः ॥ ७ ॥ गर्भाधानं पुंसवनं सीमंतोन्नयनं तथा ॥ जातकर्म नामकर्म तथान्नप्राशनं च वै ॥ ८ ॥ चूडोपनयनं चास्य व्रतादेशस्तथैव च ॥ समावर्तनमप्यन्यत्पाणिग्रहणमेव च ॥ ९ ॥ इत्येवमादिसंस्कारविधानैर्येतिसंस्कृताः ॥ त एव ब्राह्मणा येषां नैरंतर्येण कामनाः ॥ १० ॥ यस्माद्वै ब्राह्मणा जाता ब्राह्मणैः कृतसंस्कृतैः ॥ नायुःशक्तिर्हि कांत्यादिविशेषो विद्यते स्फुटः ॥ ११ ॥ तौ वा ब्राह्मणगात्रोत्थौ संस्कृतासंस्कृतौ नरौ ॥ इष्टानिष्टाप्त्यनाप्तिभ्यां न भिद्येते परस्परम् ॥ १२ ॥ ज्ञानाध्ययनमीमांसानियमैंद्रियनिग्रहैः ॥ विना संस्कारयोगेऽपि पुंसः शूद्रान्न भिन्नता ॥ १३ ॥ संस्कारः क्रियमाणश्च न शूद्रे च प्रवर्तते ॥ संस्कृतांगश्च पापेभ्यो न पश्यति निवर्तते ॥ १४ ॥ विलासिनीभुजंगादिजनवन्मदविह्वलाः ॥ व्यामुह्यंति सदाचाराद्ब्राह्मण्यत्वात्पतंति च ॥ १५ ॥ संस्कृतोऽपि दुराचारो नरकं याति मानवः ॥ निःसंस्कारः सदाचारो भवेद्विप्रोत्तमः सदा ॥ १६ ॥ मंत्रपूतात्मसंस्कारयुक्तोपि प्लवते न तु ॥ ब्राह्मण्यादविकल्पं स पश्चाद्दुश्चारितो नरः ॥ १७ ॥ सामर्थ्यात्पतनं तस्माद्ब्राह्मण्यान्मुच्यते ध्रुवम् ॥ दुरनुष्ठानसक्तानां पुंसां पुरुषपुंगवैः ॥ १८ ॥ किं क्वचिद्दृष्टमेवैतत्किं वा स्पर्धाविदत्ययम् ॥ तुल्य



१ वर्णापसदचाण्डालनिषादानां प्रसज्यते—इ० पा०। २ न्यायज्ञैः सत्क्रियाः कार्याः—इ० पा०। ३ नेह ते हतकाधमाः—इ० पा०। ४ संस्कृताङ्गस्य पापेभ्यो लावण्यं विनिवर्तते—इ० पा०। ५ संस्कारेभ्यः। ६ ब्राह्मण्यं हापयन्ति च—इ० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुत्सहसे कर्तुमप्यदृष्टं तदा वद ॥ १९ ॥ आचारमनुतिष्ठंतो व्यासादिमुनिसत्तमाः ॥ गर्भाधानादिसंस्कारकलापरहिताः स्फुटम् ॥ २० ॥ विप्रोत्तमाः श्रियं प्राप्ताः सर्वलोकनमस्कृताः ॥ बहवः कथ्यमाना ये कतिचित्तान्निबोधत ॥ २१ ॥ जातो व्यासस्तु कैवर्त्याः श्वपाक्याश्च पराशरः ॥ शुक्याः शुकः कणादाख्यस्तथोलूक्याः सुतोभवत् ॥ २२ ॥ मृगीजोथर्षश्रृंगोपि वशिष्ठो गणिकात्मजः ॥ मंदपालो मुनिश्रेष्ठो नाविकापत्यमुच्यते ॥ २३ ॥ मांडव्यो मुनिराजस्तु मंडूकीगर्भसंभवः ॥ बहवोन्येऽपि विप्रत्वं प्राप्ता ये पूर्ववद्द्विजाः ॥ २४ ॥ यच्चैतच्चारुचरितैरचर्यमुच्चरितं वचः ॥ तद्विचार्याचरन्नुच्चैराचारोपचितद्युतिः ॥ २५ ॥ हरिणीगर्भसंभूत ऋष्यश्रृंगो महामुनिः ॥ तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥ २६ ॥ श्वपाकीगर्भसंभूतः पिता व्यासस्य पार्थिव ॥ तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥ २७ ॥ उलूकीगर्भसंभूतः कणादाख्यो महामुनिः ॥ तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥ २८ ॥ गणिकागर्भसंभूतो वशिष्ठश्च महामुनिः ॥ तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥ २९ ॥ नाविकागर्भसंभूतो मंदपालो महामुनिः ॥ तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥ ३० ॥ वेदतंत्रजसंस्कारकलापनिपुणैरपि ॥ विद्यातपोधनबलादुत्कृष्टं लभ्यते फलम् ॥ ३१ ॥ लब्धसंस्कारदेहाश्च महापातकिनो नराः ॥ यस्मान्निवर्तते ब्रह्म तस्मात्सांकेतिकं विदुः ॥३२॥ ॥ इति श्रीभविष्ये महापुराणे शतार्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि षष्ठीकल्पे ब्राह्मण्यसंस्कारविवेकवर्णनं नाम द्वाचत्वारिंशोऽध्यायः ॥ ४२ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ किं चान्यदपरं यूयं वेदमंत्रविदो जनाः ॥ प्रष्टव्या कस्य संस्कारे विशेषमुपगच्छत ॥ १ ॥ किं देहस्योत येनासौ निसर्गमलिनः स्थितः ॥ शुक्रशोणितसंभूतः शमलोद्भवकीटवत् ॥ २ ॥ निषेकादिश्मशानांतैर्विविधैर्विधिविस्तरैः ॥ देहिनोऽतिशयं केचिदुपगच्छंति मानवाः ॥ ३ ॥ तेषां गूढमनःकायवाग्विदुष्टैः सुचेष्टितैः ॥ असंयतमनुष्याणां पक्षोऽयं दूष्यते मया ॥ ४ ॥ वैदिकाखिलसंस्कारसारभूता द्विजातयः ॥ सर्वकार्यकरान्सर्वान्नृपलानतिशेरते ॥ ५ ॥ चंडकर्मा विकर्मस्थो ब्रह्महा गुरुतल्पगः ॥ स्तेनो गोघ्नः सुरापाणः परस्त्रीरमणप्रियः ॥ ६ ॥ मिथ्यावादी मदोन्मत्तो नास्तिको वेदनिंदकः ॥ ग्रामयाजकनिग्रंथौ बहुदोषो दुरासदः ॥७॥ निंषिद्धाचारसंसेवी चोरश्चाटो मदोद्धतः ॥ धूर्तो नटः शठः पापी सर्वाशी सर्वविक्रयी ॥ ८॥ वाङ्मनःकायजैर्दुष्टैर्हता ये ब्राह्मणाधमाः ॥ ते न शुद्धिं व्रजंतीह अपि यज्ञशतैरपि ॥ ९ ॥ शूद्राणां यान्यनिष्टानि संपद्यंते स्वभावतः ॥ विप्राणामपि तान्येव निर्विघ्नानि भवंति न ॥ १० ॥ तस्मान्मंत्रोग्निहोत्रं वा वेद्यां

१ मेदपालः—इ० पा० । २ नाविकागर्भसंभवः—इ० पा० । ३ निषिद्धाचारसंवीतो यो रथ्यादी मदोद्धतः—इ० पा० । ४ यज्ञशतैः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पशुवधोपि वा ॥ हेतवो न हि विप्रत्वे शूद्रैः शक्या क्रिया यथा ॥ ११ ॥ ये चापि कर्मबंधेन बद्धाः सीदन्ति जंतवः ॥ संसारानलसंतापविक्लवी
कृतमानसाः ॥ १२ ॥ ते जन्ममरणाटव्यां सुखामृतपिपासवः ॥ कृपणस्याश्रयेऽटन्तो लभन्ते नैव निर्वृतिम् ॥ १३ ॥ चतुर्वर्णा नरा ये तु तत्त
द्वीर्ये नराधमाः ॥ तेषां सर्वात्मना सर्वैर्धर्मैः सांकर्यमीक्ष्यते ॥ १४ ॥ शूद्रविप्रादयो योनौ न भिद्यंते परस्परम् ॥ सर्वधर्मसमानत्वात्संस्कारादि
निरर्थकम् ॥ १५ ॥ तदनुष्ठानवैधर्म्यवियोगमरणादिभिः ॥ असेव्यसेवनैरन्यैः शूद्रविप्रादयः समाः ॥१६॥ बुद्ध्या शक्त्या स्वभावेन धर्मैर्जात्या
दिभिः श्रिया ॥ कर्तव्यैः पुण्यपापाभ्यां शनैः सर्वशरीरगैः ॥१७॥ बंधनै रोधनैर्नानायातनोपायपीडनैः॥दण्डैरदण्डकरणैर्विषादपरिवेदनैः ॥१८॥
सात्त्विकैः प्रीतिधर्माद्यै राजसैश्चित्रवेष्टितैः ॥ तामसैस्तापमोहाद्यैर्दूयमानाः पुनःपुनः ॥ १९ ॥ श्लेष्ममारुतपित्ताद्यैर्महाबीभत्सदर्शनैः ॥ क्वचि
द्वृत्तिनिवृत्तिभ्यामृतानृतहिताहितैः ॥ २० ॥ अलंकारोपयोगेन मन्मथाद्यैर्विचेष्टितैः ॥ धनलाभाशयानैकजंतुसंघातपातनैः ॥ २१ ॥ अधिसिद्धि
गतिं याति नानाविधमनोरथैः ॥ आत्मस्नेहपरद्वेषस्वीकृतद्रव्यरक्षणैः ॥ २२ ॥ अतिक्षीबत्वसंक्षोभक्षुतक्षामक्षमामयैः ॥ यातनोपायपैशुन्यशून्य
त्वोपशमैस्तथा ॥ २३ ॥ अप्रशस्तैरनुष्ठानैः समीपस्थापदः समाः ॥ हिंसकाः प्राणिनः पापवितथालापभाषिणः ॥२४॥ साधूनां भापकाः स्तेना
निर्दयाः पारदारिकाः ॥ नीचकर्मसमाचाराः सर्वभक्षाः पिशाचवत् ॥ २५ ॥ दुष्कुलीना दुराचारा नृपाणामुपजीविनः ॥ विप्रकार्या विकर्मस्था
धनिनो दुष्टचेतसः ॥ २६ ॥ लुब्धका हरिणान्हत्वा वासं कृत्वा यथा वने ॥ तथा खादंति पिशुना बहवश्च[3] क्रियावशात् ॥ २७ ॥ वेदैर्वादमधी
यानाः प्राणिघाताभिशंसिनः ॥ पुष्णंति कपटैरर्थान्वेदविक्रयिणोऽधमाः ॥ २८ ॥ मायिनो मत्सरग्रस्ता लुब्धा मुग्धा मदोद्धताः ॥ चाटाः कार्प
टिकाः क्रूराः कदर्याः कलहप्रियाः ॥ २९ ॥ वाचाटा दुष्टकुलटा अटन्तो भाटकैः सह ॥ भंडमान्या भटाटोपैः संक्रुद्धाः सुविलुंठकाः ॥ ३० ॥
पर्यटा भाटका जीवाः कण्ठकश्लोकभाषिणः ॥ विक्रीणते ह्यविक्रेयमभक्ष्यद्रव्यभक्षिणः ॥३१॥ शूद्रकर्मानुतिष्ठंतो निस्तपास्ते नराधमाः॥ सेवा
ध्यापनवाणिज्यकृष्याद्यारंभलंभिताः ॥ गृह्णन्तः संपदो बाह्याद्रव्यधान्यधनादिकाः ॥ ३२ ॥ क्रोधादाभ्यंतरान्दोषांस्तथा दुष्टमनोरथान् ॥ अत्य
जंतो विशिष्टानां श्रेष्ठास्ते कचमर्दिनः ॥ ३३ ॥ नोपादेयानि वस्त्राणि नित्यमाददते द्विजाः ॥ हापयंति न हेयानि कथं ते गुरवः क्षितौ ॥ ३४ ॥
दंडिका दिण्डिका भंडाश्चंडाश्चंडालचेष्टिताः ॥ वैतंडकास्ते निघ्नंति यथा सिंहो मृगान्पशून् ॥ ३५ ॥ निर्ग्रंथं मुनिमालोक्य मन्यमानाः समुन्न

१ धर्मेणेज्यादिभिः–इ० पा० । २ मंत्रः–इ० पा० । ३ हरयश्च–इ० पा० । ४ दयादममधीयानाः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तम् ॥ परिभूयावतिष्ठन्ते धिक्ताव्रिक्तान्स्ववैरिणः ॥ ३६ ॥ तस्मात्संसारिकाः सत्त्वाश्चित्तक्लेशकलंकिताः ॥ दौःशील्यदौर्मनस्याद्यैस्तुल्यजातीयवन्धनात् ॥ ३७ ॥ शूद्रां प्ररोचते विप्रो रागिणीं मैथुनं प्रति ॥ सा कामदुःखविगमे गर्भं धत्ते समागमे ॥ ३८ ॥ कामंकामातुराभ्यस्तु रोचंते शूद्रमानवाः ॥ मैथुनं प्रति ब्राह्मण्ये तेऽपि तासां सुखावहाः ॥३९॥ ये तु जात्यादिभिर्भिन्ना गवाश्वोष्ट्रमतंगजाः ॥ ते विजातिषु नो गर्भं कुर्वंतेऽपि सुखार्थिनः ॥ ४० ॥ अनड्वानेव गोरेव कामं पुष्णाति संगमे ॥ घोटकाश्च रतिं सम्यक्कुर्वंते वडवासु च॥४१॥ पतिं करभमेवाप्य करभी रमते मुदा ॥ गजमेव पतिं लब्ध्वा सुखं तिष्टति हस्तिनी ॥ ४२ ॥ तिर्यग्जातिः स्त्रिया साकं कुर्वाणाऽपि हि मैथुनम् ॥ न तस्याः कुरुते गर्भं नरो नापि सुखासिकाम् ॥ ४३ ॥ तिरश्चा सह कुर्वाणा मैथुनं मनुजांगना ॥ नाधत्ते तत्कृतं गर्भं न युक्तं मैथुनं तयोः ॥४४॥ नैवं कश्चिद्विभागोस्ति मैथुने स्त्रीमनुष्ययोः ॥ येन संक्षीयते भेदः प्रस्फुटं द्विजशूद्रयोः ॥ ४५ ॥ वेदपाठच्छलेनायं न क्रियाभिः प्रपद्यते ॥ बहुभिर्जडसंघातैरविशिष्टे पदेऽहनि ॥ ४६ ॥ देहे देहिनि चामुष्मिन्नशुचावनवस्थिते ॥ रागद्वेषादिभिर्दोषैरधिकं परिपीडिते ॥४७॥ कुलालचक्रवद्भ्रांतमानसे विषयार्णवे ॥ घोरदुःखभयाक्रांते समाजेऽनीश्वरात्मनि ॥ ४८ ॥ जन्ममृत्युजराशोकानिष्टयोगाग्निपीडिते ॥ हीनसत्त्वशरीरादौ न विशेषो विभाव्यते ॥ ४९ ॥ तस्मान्मनुष्यभेदोऽयं संकेतवलनिर्मितः ॥ ब्राह्मण्यं ब्राह्मणासंगाद्ब्राह्मणी चोपसेवते ॥ ५० ॥ पतिं त्यक्त्वा सुखास्वादलालसैर्मदलालसैः ॥ आसेव्यते विटं गत्वा वंचकी चेटकैरपि ॥५१॥ ब्राह्मण्यात्प्रच्यवंतेन्ये महापातकसेविताः ॥ व्यलीककल्पनैवैषा तस्माज्जात्यादिकल्पना ॥ ५२ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि षष्ठीकल्पे वर्णव्यस्थावर्णनं नाम त्रिचत्वारिंशोऽध्यायः ॥४३॥छ॥ ॥ब्रह्मोवाच॥ ॥ हेयोपादेयतत्त्वज्ञास्त्यक्तान्यायपथागमाः ॥ जितेंद्रियमनोवाचः सदाचारपरायणाः ॥ १ ॥ नियमाचारवृत्तस्था हितान्वेषणतत्पराः ॥ संसाररक्षणोपायक्रियायुक्तमनोरथाः ॥२॥ सम्यग्दर्शनसंपन्नाः समाधिस्था हतक्रुधः ॥ स्वाध्यायभक्तहृदयास्त्यक्तसंगा विमत्सराः ॥ ३ ॥ विशोका विमदाः शांताः सर्वप्राणिहितैषिणः ॥ सुखदुःखसमालोका विविक्तस्थानवासिनः ॥ ४ ॥ व्रतोपयुक्तसर्वांगा धार्मिकाः पापभीरवः ॥ निर्ममा निरहंकारा दानशूरा दयापराः ॥ ५ ॥ सत्यब्रह्मविदः शांताः सर्वशास्त्रेषु निष्ठिताः ॥ सर्वलोकहितोपायप्रवृत्तेन स्वयंभुवा ॥ ६ ॥ वागीश्वरेण देवेन नाभेयेन भवच्छिदा ॥ ब्रह्मणा कृतमर्यादास्त एव ब्राह्मणाः स्मृताः ॥ ७ ॥ महातपोधनैरार्यैः सर्वसत्त्वाभयप्रदैः ॥ सर्वलोकहितार्थाय निपुणं सुप्रतिष्ठितम् ॥ ८ ॥ बृहत्त्वाद्भगवान्ब्रह्मा नाभेयस्तस्य ये जनाः॥भक्त्यासक्ताः प्रपन्नाश्च ब्राह्मणास्ते प्रकीर्तिताः ॥ ९ ॥ क्षत्रियास्तु क्षतत्राणाद्वैश्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वार्ताप्रवेशनात् ॥ ये तु श्रुतेर्द्धृतिं प्राप्ताः शूद्रास्तेनेह कीर्तिताः ॥ १० ॥ ये चाचाररताः प्राहुर्ब्राह्मण्यं ब्रह्मवादिनः ॥ ते तु फलं प्रशंसंति यत्सदा मनसेप्सितम् ॥ ११ ॥ क्षमा दमो दया दानं सत्यं शौचं धृतिर्घृणा ॥ मार्दवार्जवसंतोपानहंकारतपःशमाः ॥ १२ ॥ धर्मो ज्ञानमपैशुन्यं ब्रह्मचर्यममूढता ॥ ध्यानमास्तिक्यमद्वेषो वैराग्यं च शमात्मता ॥ १३ ॥ पापभीरुत्वमस्तेयममात्सर्यमतृष्णता ॥ नैःसंग्यं गुरुशुश्रूषा मनोवाक्कायसंयमः ॥ १४ ॥ य एवंभूतमाचारमनुतिष्ठंति मानवाः ॥ ब्राह्मण्यं पुष्कलं तेषां नित्यमेव प्रवर्धते ॥ १५ ॥ ते स्वमतास्वादलब्धवर्णाचारा महौजसः ॥ सर्वशास्त्राविरोधेन पवित्रीकृतमानसाः ॥ १६ ॥ सज्जनाभिमताः प्राज्ञाः पुराणागमपंडिताः ॥ गीतगीतागमाचाराः स्मृतिकाराः पठंति च ॥ १७ ॥ मन्वंतरेषु सर्वेषु चतुर्युगविभागशः ॥ वर्णाश्रमाचारकृतं कर्म सिद्ध्यत्यनुत्तमम् ॥ १८ ॥ संसिद्धायां तु वार्तायां ततस्तेपां स्वयं प्रभुः ॥ मर्यादां स्थापयामास यथारब्धां परस्परम् ॥ १९ ॥ ये वै परिगृहीतारस्तेषां सत्त्वबलाधिकाः ॥ इतरेषां क्षतत्राणान्स्थापयामास क्षत्रियान् ॥ २० ॥ उपतिष्ठंति ये तान्वै याचंतो नर्मदाः सदा ॥ सत्यब्रह्म सदाभूतं वदंतो ब्राह्मणास्तु ते ॥ २१ ॥ ये चान्येप्यबलास्तेषां वैश्यकर्मणि संस्थिताः ॥ कीलानि नाशयंति स्म पृथिव्यां प्रागतंद्रिताः ॥ वैश्यानेव तु तानाह कीनाशान्वृत्तिमाश्रितान् ॥ २२ ॥ शोचंतश्च द्रवंतश्च परिचर्यासु ये नराः ॥ निस्तेजसोऽल्पवीर्याश्च शूद्रांस्तानब्रवीत्तु सः ॥ २३ ॥ ब्राह्मणक्षत्रियविशां शूद्राणां च परस्परम् ॥ कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ २४ ॥ शमस्तपो दमः शौचं क्षांतिरार्जवमेव च ॥ ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ २५ ॥ शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ॥ दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ २६ ॥ कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ॥ परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ २७ ॥ योगस्तपो दया दानं सत्यं धर्मश्रुतिर्घृणा ॥ ज्ञानं विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् ॥ २८ ॥ शिखा ज्ञानमयी यस्य पवित्रं च तपोमयम् ॥ ब्राह्मण्यं पुष्कलं तस्य मनुः स्वायंभुवोऽब्रवीत् ॥ २९ ॥ यत्र वा तत्र वा वर्णे उत्तमाधममध्यमाः ॥ निवृत्तः पापकर्मभ्यो ब्राह्मणः स विधीयते ॥ ३० ॥ शूद्रोऽपि शीलसंपन्नो ब्राह्मणादधिको भवेत् ॥ ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत् ॥ ३१ ॥ न सुरां संधयेद्यस्तु आपणेषु गृहेषु च ॥ न विक्रीणाति च तथा सच्छूद्रो हि स उच्यते ॥ ३२ ॥ यद्येका स्फुटमेव जातिरपरा कृत्यात्परं भेदिनी यद्वा व्याहृतिरेकतामधिगता यच्चान्यधर्मं ययौ ॥ एकैकाखिलभावभेदनिधनोत्पत्तिस्थितिव्यापिनी किं नासौ प्रतिपत्तिगोचरपथं यायाद्धि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्त्या नृणाम् ॥ ३३ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि षष्ठीकल्पे वर्णविभागविवेकवर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ इदं शृणु मयाख्यातं तर्कपूर्वमिदं वचः ॥ युष्माकं संशये जाते कृते वै जातिकर्मणोः ॥ ॥ १ ॥ पुनर्वच्मि निबोधध्वं समासान्न तु विस्तरात् ॥ संसिद्धिं यांति मनुजा जातिकर्मसमुच्चयात् ॥ २ ॥ सिद्धिं गच्छेद्यथा कार्यं दैवकर्मसमुच्चयात् ॥ एवं संसिद्धिमायाति पुरुषो जातिकर्मणोः ॥ ३ ॥ इत्येवमुक्तवान्पूर्वं शिष्याणां बोधने पुरा ॥ योगीश्वरो महातेजाः समासान्न तु विस्तरात् ॥ ४ ॥ ॥ सुमंतुरुवाच ॥ ॥ इति पृष्टः पुरा ब्रह्मा ऋषीन्प्रोवाच भारत ॥ सवितर्कमिदं वाक्यं विप्रर्षे जातिकर्मणोः ॥ ५ ॥ तस्मात्त्वया महाबाहो न कार्यो विस्मयो नृप ॥ कार्तिकेयं प्रति सदा देवानां दुर्विदा गतिः ॥ ६ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि षष्ठीकल्पे कार्तिकेयवर्णनं नाम पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ येयं भाद्रपदे मासि षष्ठी च भरतर्षभ ॥ सुपुण्येयं पापहरा शिवा शांता गुहप्रिया ॥ १ ॥ स्नानदानादिकं सर्वं यस्यामक्षय्यमुच्यते ॥ येऽस्यां पश्यंति गांगेयं दक्षिणापथमाश्रितम् ॥ २ ॥ ब्रह्महत्यादिभिः पापैर्मुच्यंते नात्र संशयः ॥ तस्मादस्यां सदा पश्येत्कार्त्तिकेयं नृपोत्तम ॥ ३ ॥ पूजयंति गुहं येऽस्यां नरा भक्तिसमन्विताः ॥ प्राप्येह ते सुखान्कामान्गच्छंतींद्रसलोकताम् ॥ ४ ॥ यस्तु कारयते वेश्म सुदृढं सुप्रतिष्ठितम् ॥ दार्वं शैलमयं चापि भक्त्या श्रद्धासमन्वितः ॥ गांगेयं यानमारुह्य गच्छेद्गांगेयसद्म वै ॥ ५ ॥ संमार्जनादि यः कर्म कुर्याद्गुहगृहे नरः ॥ ध्वजस्यारोपणं राजन्स गच्छेद्रुद्रसद्म वै ॥ ६ ॥ चंदनागरुकर्पूरैर्यश्च पूजयते गुहम् ॥ गजाश्वरथयानाढ्यं सैनापत्यमवाप्नुते ॥७॥ राज्ञां पूज्यः सदा प्रोक्तः कार्तिकेयो महीपते ॥ कार्त्तिकेयमृते नान्यं राज्ञां पूज्यं प्रचक्षते ॥ ८ ॥ संग्रामं गच्छमानो यः पूजयेत्कृत्तिकासुतम् ॥ स शत्रुं जयते वीर यथेंद्रो दानवान्रणे ॥९॥ तस्मात्सर्वप्रयत्नेन पूजयेच्छंकरात्मजम् ॥ पूजमानस्तु तं भक्त्या चंपकैर्विविधैर्नृप ॥ मुच्यते सर्वपापेभ्यस्तदा गच्छेच्छिवालयम् ॥ १० ॥ तैलं षष्ठ्यां न भुंजीत न दिवा कुरुनंदन ॥ यस्तु षष्ठ्यां नरो नक्तं कुर्याद्धि भरतर्षभ ॥ सर्वपापैः स निर्मुक्तो गांगेयस्य सदो व्रजेत् ॥ ११ ॥ त्रिःकृत्वो दक्षिणामाशां गत्वा यः श्रद्धयान्वितः ॥ पूजयेद्देवदेवेशं स गच्छेच्छांतिमंदिरम् ॥ १२ ॥ इति श्रीभविष्ये महापुराणे शतार्धसाहस्र्यां संहितायां षष्ठीकल्पे कार्त्तिकेयमाहात्म्यवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ इति षष्ठीकल्पः समाप्तः ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ सप्तम्यां सोपवासस्तु नक्ताहारोऽपि वा भवेत् ॥ सप्तम्यां देवदेवेन लब्धं स्वं रूपमादरात् ॥१॥ अण्डेन सह जातो वै अण्डस्थो वृद्धिमागतवान् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अण्डस्थस्यैव दक्षेण भार्यां दत्त्वा स्वकां सुताम् ॥ २ ॥ नाम्ना रूपेति रूपेण नान्या नारी तथा[1] भवेत् ॥ अण्डस्थ एव सुचिरं स्थितो मार्तण्ड इत्यतः ॥ ३ ॥ दक्षाज्ञया विश्वकर्मा वपुरस्य प्रकाशयन् ॥ प्रकाशतस्ततो नाम तस्य जातं नराधिप ॥ अंडस्थस्यैव सञ्जातो यमुना यम एव च ॥ ४ ॥ दाक्षायणी तस्य भार्या वैराग्यात्तनुमध्यमा ॥ चिंतयामास सा देवी दुःखान्निर्वेदमागता ॥ ५ ॥ अहो तेजोमयं रूपं कान्तं कान्तस्य कांतिमत् ॥ न चास्य किञ्चित्पश्यामि अंगं तेजोविमोहितम् ॥ ६ ॥ शुभं कनकतुल्यं मे रूपं कांतं सुकांतिमत् ॥ सांप्रतं श्यामतां यातं दग्धमेतस्य तेजसा ॥ ७ ॥ तस्मात्तप्स्ये तपश्चाहं गत्वा वै उत्तरान्कुरून् ॥ स्वां छायामत्र निक्षिप्य भयाच्छापस्य रूपिणी ॥ ८ ॥ निक्षिप्योवाच तां बालां मा चास्मै वै वदिष्यसि ॥ एवं सा निश्चयं कृत्वा गता वै उत्तरान्कुरून् ॥ ९ ॥ स्वरूपं तत्र निक्षिप्य वडवारूपधारिणी ॥ चचार सा मृगैः सार्धं बहून्वर्षगणान्नृप ॥ १० ॥ असावपि च मार्तंडश्छायां भार्याममन्यत ॥ शनिं च तपतीं चैव द्वे अपत्ये च जज्ञिवान् ॥ ११ ॥ अथ च्छायात्मापत्यानि स्नेहेन परिपालयेत् ॥ नातिस्नेहेन चापश्यद्यमुनां यममेव च ॥ १२ ॥ अथ ताभ्यां विवादोऽभूदादित्यदुहित्रोर्द्वयोः ॥ ते उभे विवदंत्यौ तु परस्परमसंमतम् ॥ यमुना तपती चोभे निम्नगे संबभूवतुः ॥ १३ ॥ यमोपि यमुनाभ्राता छायया ताडितो भृशम् ॥ पादमुद्यम्य तस्या वै तस्थौ सम्मुख एव सः ॥ १४ ॥ छाया शशाप तं रोषाद्यस्मात्पादोद्यतो मम ॥ तस्मात्ते कर्म बीभत्सं प्राणिनां प्राणहिंसनम् ॥ १५ ॥ भविष्यति चिरं मूढ आचन्द्रार्कं न संशयः ॥ पादं च यदि भूमौ त्वमिमं संस्थापयिष्यसि ॥ १६ ॥ कृमयो भक्षयिष्यंति मच्छापकलुषीकृतम् ॥ १७ ॥ तेषां विवदमानानां मार्तंडोऽभ्यागमत्ततः ॥ यमोप्याह महात्मानं मार्तंडं लोकपावनम् ॥ १८ ॥ तात नित्यमियं चापि क्रूरभावेन पश्यति ॥ न चास्याः सुसमा दृष्टिरस्मास्वस्तीति लक्ष्यते ॥ १९ ॥ प्रोवाचाथ स तां छायां मार्तंडो भृशकोपनः ॥ समे[2] अपत्ये किं मूढे समत्वं नानुपश्यसि ॥ २० ॥ यमः प्रोवाच पितरं नेयं माता पितर्मम ॥ मातुश्छाया त्वियं पापा शप्तोऽहमनया पितः ॥ यमुना तपती वृत्तं तत्सर्वं विन्यवेदयत् ॥ २१ ॥ अथ प्रोवाच मार्तंडो मा[3] ते पादो महीतले ॥ मांसं रुधिरमादाय कृमयो यांतु भूतलम् ॥ २२ ॥ यमुनायाश्च यत्तोयं गंगातुल्यं भविष्यति ॥ नर्मदायास्तपत्याश्च समं पुण्येन वै द्विज ॥ २३ ॥ विंध्यस्य दक्षिणेनेह तपती प्रवहिष्यति ॥ तत्सायुज्यतया सार्धं गंगा यास्यति शोभना ॥ २४ ॥ गंगामासाद्य यमुना गंगा सैव भविष्यति ॥ सौरसौम्ये उभे पुण्ये सर्वपापप्रणाशने ॥ २५ ॥ सौरी[4]

१ तथाविधा–इ० पा० । २ समेत्योवाच स च्छायां समत्वं नानुपश्यसि–इ० पा० । ३ मुंच पादं महीतले–इ० पा० । ४ गौरी च–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च वैष्णवी चोभे महापापभयापहे ॥ त्वं पुत्र लोकपालत्वं ब्रह्मणोऽज्ञां सभाजयन् ॥ अद्यप्रभृति च्छायेयं स्वदेहस्था भविष्यति ॥ २६ ॥ एवं संस्थाप्य स्वां भार्यामपत्यानि तथैव च ॥ आजगाम सकाशं वै दक्षस्याह च कारणम् ॥ दक्षो विज्ञाय तत्सर्वं मार्तंडमिदमाह वै ॥ २७ ॥ रूपं न पश्यती तुभ्यं सा भार्या उत्तरान्गता ॥ २८ ॥ रूपं ते प्रकटिष्यामि यदि शक्ष्यसि वेदनाम् ॥ असौ प्रोवाच शक्ष्येऽहं प्रकाशी कुरु मे वपुः ॥ २९ ॥ अथ सस्मार तक्षाणं स्मृत एवाजगाम सः ॥ प्रोवाच दक्षस्तक्षाणं मार्तंडं वै प्रकाशय ॥ ३० ॥ तक्षा प्रोवाच मार्तण्डं वेदनां विसहिष्यसे ॥ विसहिष्येथ प्रोवाच तक्षाणं दक्षचोदितः ॥ ३१ ॥ अथ तक्षा प्रकाशं वै तस्य रूपं विभावसोः ॥ मुखादारभ्य पादांतं ततक्ष करणैः स्वकैः ॥ किरणैस्तुद्यमानेषु तस्यांगेषु पुनःपुनः ॥ क्षणेक्षणे मूर्च्छयति मार्तंडो वेदनातुरः ॥ ३२ ॥ तस्य शापभयात्तक्षा पादौ गुल्फादियावतः ॥ चकाराथो निराकारा अंगुल्यो न प्रकाशयत् ॥ ३३ ॥ पर्याप्तं तक्षकर्मेदं वेदना मम बाधते ॥ तक्षा प्रोवाच मार्तण्डं वेदनां जहि गोपते ॥ ३४ ॥ करवीरस्य पुष्पाणि रक्तचन्दनमेव च ॥ करादारभ्य गात्राणि विलिम्पे देहजानि ते ॥ ३५ ॥ तत्तत्कृतं तथा तेन स रुजं त्यक्तवान्रविः ॥ अतश्चेमानि चेष्टानि मार्तण्डस्येह भूपते ॥ ३६ ॥ करवीरस्य पुष्पाणि तथा वै रक्तचन्दनम् ॥ इदमाह पुरा देवो ह्यनूरोरग्रतो नृप ॥ ३७ ॥ करवीरस्य पुष्पाणि रक्तचन्दनमेव हि ॥ इतिहासपुराणाभ्यां सुपर्णगुग्गुलं तथा ॥ ३८ ॥ यः प्रयच्छति मे भक्त्या स मे प्राणान्प्रयच्छति ॥ तस्मान्न देयमन्यन्मे भक्तियुक्तेन जानता ॥ ३९ ॥ मार्तण्डस्यांडजं तेजो गृहीत्वा किल भारत ॥ चकार वज्रमंजरं शत्रुलेखादिनाशनम् ॥ ४० ॥ मार्तंडः परितुष्टोऽभूल्लब्ध्वा रूपं गतव्यथः ॥ जगाम स कुरून्वेगात्स्वभार्यादर्शनोत्सुकः ॥ ४१ ॥ मृगमध्यगतां दृष्ट्वा वडवारूपधारिणीम् ॥ अश्वरूपं ततः कृत्वा स्वभार्यामधिरुह्य सः ॥ अवासृजत्स्वकं तेजो वेगेनारुह्य सोऽश्ववत् ॥ ४२ ॥ परपुरुषाशंकया सा स्थिता देवस्य संमुखी ॥ तेजोनासापुटाभ्यां तु युगपत्साक्षिपत्पुनः ॥ ४३ ॥ तत्र जातौ देवभिषजौ नासत्यावश्विनाविति ॥ रेतसोंऽते तु रेवंतो विरोचनसुतो महान् ॥ ४४ ॥ तपती शनिश्च सावर्णिश्छायापत्यानि वै विदुः ॥ यमुना यमश्च पूर्वोक्तौ संज्ञायाश्च तथात्मजौ ॥ ४५ ॥ भार्या लब्धा वपुर्दिव्यं तथा पुत्राश्च भारत ॥ सप्तम्यां देवदेवस्य सर्वमेवमिदं यतः ॥ अनेन कारणेनेष्टा सदा देवस्य सप्तमी ॥ ४६ ॥ सप्तम्यां सोपवासस्तु रात्रौ भुंजीत यो नरः ॥ कृत्वोपवासं षष्ठ्यां तु पंचम्यामेककालभुक् ॥ ४७ ॥ दत्त्वा सुसंस्कृतं

---

१ श्रावणम्–इ० पा० । २ चक्रमजरम्–इ० पा० । ३ सवर्णाय:स्ताथात्मजौ–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शाकं भक्ष्यभोज्यैः समन्वितम् ॥ देवाय ब्राह्मणेभ्यश्च रात्रौ भुंजीत वाग्यतः ॥ ४८ ॥ यावज्जीवं नरः कश्चिद्व्रतमेतच्चरेदिति ॥ तस्य श्रीर्विजयश्चैव त्रिवर्गश्चापि वर्धते ॥४९॥ मृतश्च स्वर्गमायाति विमानवरमास्थितः ॥ सूर्यलोके स रमते मन्वंतरगणान्बहून् ॥ इह चागत्य कालांते नृपः शांति समन्वितः ॥ ५० ॥ पुत्रपौत्रैः परिवृतो दाता स्यान्नृपतिश्चिरम् ॥ भुनक्ति हि धरां राजन्विग्रहैश्चाजितः परैः ॥ ५१ ॥ ये नरा राजशार्दूल शाकाहारेण सप्तमीम् ॥ उपोष्य लब्धं तत्तीर्थं पित्र्यं वै राजसंज्ञिकम्॥५२॥ कुरुणा तव पूर्वेण शाकाहारेण सप्तमीम् ॥ धर्मक्षेत्रं कुरुक्षेत्रं कृतं तस्य विवस्वता ॥५३॥ सप्तमी नवमी षष्ठी तृतीया पंचमी नृप ॥ कामदास्तिथयो ह्येता इहैव नरयोपिताम् ॥५४॥ सप्तमी माघमासे तु नवम्याश्वयुजे मता ॥ षष्ठीभाद्रपदे धन्या वैशाखे तु तृतीयिका ॥ ५५ ॥ पुण्या भाद्रपदे प्रोक्ता पंचमी नागपंचमी ॥ इत्येतास्तेषु मासेषु विशेषास्तिथयः स्मृताः ॥ ५६ ॥ शाकं सुसंस्कृतं कृत्वा यश्च भक्त्या समन्वितः ॥ दत्त्वा विप्रे यथाशक्त्या पश्चाद्भुंक्ते निशि व्रती ॥ ५७ ॥ कार्तिके शुक्लपक्षस्य ग्राह्येयं कुरुनंदन ॥ चतुर्भिर्वापि मासैस्तु पारणं प्रथमं स्मृतम् ॥ ५८ ॥ अगस्त्यकुसुमैश्चात्र पूजा कार्या विभावसोः ॥ विलेपनं कुंकुमं तु धूपश्चैवाप राजितैः ॥ ५९ ॥ स्नानं च पंचगव्येन तमेव प्राशयेत्ततः ॥ नैवेद्यं पायसं चात्र देवदेवस्य कीर्तितम् ॥ ६० ॥ तदेव देयं विप्राणां शाकं भक्ष्यमथा त्मना ॥ शुभशाकसमायुक्तं भक्ष्यपेयसमन्वितम् ॥ ६१ ॥ द्वितीये पारणे राजञ्छुभगंधानि यानि वै ॥ पुष्पाणि तानि देवस्य तथा श्वेतं च चंदनम् ॥ ६२ ॥ अगुरुश्चापि धूपोऽत्र नैवेद्यं गुडपूपकाः ॥ स्नानं कुशोदकेनात्र प्राशनं गोमयस्य तु ॥ ६३ ॥ तृतीये करवीराणि तथा रक्तं च चंदनम् ॥ धूपानां गुग्गुलश्चात्र प्रियो देवस्य सर्वदा ॥ ६४ ॥ शाल्योदनं तु नैवेद्यं दधिमिश्रं महामते ॥ तमेव ब्राह्मणानां च भक्ष्यलेह्यसम न्वितम् ॥ कालशाकेन च विभो युक्तं दद्याद्विचक्षणः ॥ ६५ ॥ गौरसर्षपकल्केन स्नानं चात्र विदुर्बुधाः ॥ तस्यैव प्राशनं धन्यं सर्वपापहरं शुभम् ॥ ६६ ॥ तृतीये पारणस्यांते महद्ब्राह्मणभोजनम् ॥ श्रवणं च पुराणस्य वाचनं चापि शस्यते ॥ ६७ ॥ देवस्य पुरतस्तात ब्राह्मणानां तथा ग्रतः ॥ ब्राह्मणाद्वाचकाच्छ्राव्यं नान्यवर्णसमुद्भवात् ॥ अथ तान्ब्रह्मणान्सर्वान्भक्त्या शक्त्या च पूजयेत् ॥ ६८ ॥ वाचकस्यामले राजन्वाससी संनिवेदयेत् ॥ वाचके पूजिते देवः सदा तुष्यति भास्करः ॥६९॥ करवीरं यथेष्टं तु तथा रक्तं च चंदनम् ॥ यथेष्टं गुग्गुलं तस्य यथेष्टं पायसं सदा ॥ ७० ॥ यथेष्टा मोदकास्तस्य यथा वै ताम्रभाजनम् ॥ यथेष्टं च घृतं तस्य यथेष्टो वाचकः सदा ॥ पुराणं च यथेष्टं वै सवितुः कुरुनंदन ॥७१॥

१ आप्नोति–इ० पा० । २ परभक्ष्यसमन्वितम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्येषा सप्तमी पुण्या शाकाह्वा गोपतेः सदा ॥ यामुपोष्य नरो भक्त्या भाग्यवांश्च प्रजायते ॥ ७२ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे शाकसप्तमीव्रतवर्णनंनाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥ विस्तराद्वद विप्रेंद्र सप्तमीकल्पमुत्तमम् ॥ महाभाग्यं च देवस्य भास्करस्य महात्मनः ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ अत्रैवाहुर्महात्मानः संवादं पुण्यमुत्तमम् ॥ कृष्णेन सह सत्त्वेन स्वपुत्रेण महीपते ॥ २ ॥ भक्त्या प्रणम्य विधिवद्वासुदेवं जगद्गुरुम् ॥ इहामुत्र हितं शांबः पप्रच्छ ज्ञानमुत्तमम् ॥ ३ ॥ जातो जंतुः कथं दुःखैर्जन्मनीह न बाध्यते ॥ प्राप्नोति विविधान्कामान्कथं च मधुसूदन ॥ ४ ॥ परत्र स्वर्गमाप्नोति सुखानि विविधानि च ॥ अनुभूयोचितं कालं कथं मुक्तिमवाप्नुते ॥ ५ ॥ दृष्ट्वैवं मम निर्वेदो जातो व्याधिर्जनार्दन ॥ दृष्ट्वेमं जीविताशापि रोचते न हि मे क्षणम् ॥ ६ ॥ किं त्वेवमकृतार्थोऽस्मि यन्मे प्राणा न यांति हि ॥ संसारे न पतिष्यामि जराव्याधिसमन्विते ॥ ७ ॥ येनोपायेन तन्मेऽद्य प्रसादं कुरु सुव्रत ॥ आधिव्याधिविनिर्मुक्तो यथाहं स्यां तथा वद ॥ ८ ॥ ॥ वासुदेव उवाच ॥ ॥ देवतायाः प्रसादोऽन्यः सर्वस्य परमो मतः ॥ उपायः शाश्वतो नित्य इति मे निश्चिता मतिः ॥ ९ ॥ अनुमानागमाद्यैश्च सम्यगुत्पादितामया ॥ कदाचिदन्यथा कर्तुं धीयते केनचित्कचित् ॥ १० ॥ प्रसादो जायते तस्य सम्यगाराधनक्रिया ॥ यदा तां च समुद्दिश्य कृता तद्वेदिना तथा ॥ ११ ॥ विशिष्टा देवता सम्यग्विशिष्टेनैव देहिना ॥ आराधिता विशिष्टं च ददाति फलमीहितम् ॥ १२ ॥ ॥ शांब उवाच ॥ ॥ अस्तित्वे न च संदेहः केषांचिद्देवतां प्रति ॥ नास्तीति निश्चयोऽन्येषां विशिष्टास्त्वं कथाः कुरु ॥ १३ ॥ ॥ वासुदेव उवाच ॥ ॥ सिद्धं तु देवतास्तित्वमागमेषु बहुष्वथ ॥ प्रमाणमागमो यस्य तस्यास्तित्वं च विद्यते ॥ १४ ॥ अनुमानेन वाप्यद्य तदस्तित्वं प्रसाध्यते ॥ प्रमाणमस्ति यस्येदं सिद्धा यस्येह चास्तिता ॥ १५ ॥ प्रत्यक्षेणापि चास्तित्वं देवतायां प्रसाध्यते ॥ तच्चावश्यं प्रमाणं च दृष्टं सर्वशरीरिणाम् ॥ १६ ॥ यदि नामा विविक्तास्तु तिर्यग्योनिगता अपि ॥ नोत्पद्यते तथा ह्यस्तित्वव्यवहारो यथा स्थितः ॥ १७ ॥ ॥ शांब उवाच ॥ ॥ प्रत्यक्षेणोपलभ्यंते सम्यग्वै यदि देवताः ॥ अनुमानागमाभ्यां च तदर्थं न प्रयोजनम् ॥ १८ ॥ ॥ वासुदेव उवाच ॥ ॥ प्रत्यक्षेणोपलभ्यंते न सर्वा देवताः क्वचित् ॥ अनुमानागमैर्गम्याः संति चान्याः सहस्रशः ॥ १९ ॥ ॥ शांब उवाच ॥ ॥ या चाक्षगोचरा काचिद्विशिष्टेष्टफलप्रदा ॥ तामेवादौ मम

१ भार्गव्यां न विजायते–इ० पा० । २ सर्वत्र शांबशब्दे सांब इति दंत्यादिरपिपाठः पुस्तकान्तरेषु ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चक्ष्व कथयिष्यस्यथापराम् ॥ २० ॥ ॥ वासुदेव उवाच ॥ ॥ प्रत्यक्षं देवता सूर्यो जगच्चक्षुर्दिवाकरः ॥ तस्मादभ्यधिका काचिद्देवता नास्ति शाश्वती ॥ २१ ॥ यस्मादिदं जगज्जातं लयं यास्यति यत्र च ॥ कृतादिलक्षणः कालः स्मृतः साक्षाद्दिवाकरः ॥ २२ ॥ ग्रहनक्षत्रयोगाश्च राशयः करणानि च ॥ अदित्या वसवो रुद्रा अश्विनौ वायवोऽनलः ॥ २३ ॥ शक्रः प्रजापतिः सर्वे भूर्भुवः स्वस्तथैव च ॥ लोकाः सर्वे नगा नागाः सरितः सागरास्तथा ॥ भूतग्रामस्य सर्वस्य स्वयं हेतुर्दिवाकरः ॥ २४ ॥ अस्येच्छया जगत्सर्वमुत्पन्नं सचराचरम् ॥ स्थितं प्रवर्तते चैव स्वार्थे चानुप्रवर्तते ॥ २५ ॥ प्रसादादस्य लोकोऽयं चेष्टमानः प्रदृश्यते ॥ अस्मिन्नभ्युदिते सर्वमुदेदस्तमिते सति ॥ अस्तं यातीत्य दृश्येन किमेतत्कथ्यते मया ॥ २६ ॥ तस्मादतः परं नास्ति न भूतं न भविष्यति ॥ यो वै वेदेषु सर्वेषु परमात्मेति गीयते ॥ २७ ॥ इतिहासपुराणेषु अंतरात्मेति गीयते ॥ बाह्यात्मैति सुषुम्णास्थः स्वप्नस्थो जाग्रतः स्थितः ॥ २८ ॥ अस्तं यातीत्यदृष्टेन किमेतत्कथ्यते मया ॥ तस्मादतः परं नास्ति न भूतं न भविष्यति ॥ २९ ॥ यन्न वाह इति ख्यातः प्रेरकः सर्वदेहिनाम् ॥ नानेन रहितं किंचिद्भूतमस्ति चराचरम् ॥ ३० ॥ यो वेदैर्वेदविद्भिश्च विस्तरेणेह शक्यते ॥ वक्तुं वर्षशतैर्नासौ शक्यः संक्षेपतो मया ॥ ३१ ॥ तस्माद्गुणाकरः ख्यातः सर्वत्रायं दिवाकरः ॥ सर्वेशः सर्वकर्तायं सर्वभर्तायमव्ययः ॥ ३२ ॥ जाता मत्स्यादयः सम्यग्गतिमन्तो महेश्वरात् ॥ मंडलव्यतिरिक्तं च जानामि परमार्थतः ॥ ३३ ॥ तथास्य मंडलं कृत्वा यो ह्येनमुपतिष्ठते ॥ प्रातः सायं च मध्याह्ने स याति परमां गतिम् ॥ ३४ ॥ किं पुनर्मंडलस्थं यो जपते परमार्थतः ॥ विविधाः सिद्धयस्तस्य भवंति न तदद्भुतम् ॥३५॥ मंडले च स्थितं देवं देहे चैनं व्यवस्थितम् ॥ स्वबुद्ध्यैवम संमूढो यः पश्यति स पश्यति ॥ ३६ ॥ ध्यात्वैवं पूजयेद्यस्तु जपेद्यो जुहुयाच्च यः ॥ स सर्वान्प्राप्नुयात्कामान्गच्छेद्धर्मध्वजं तथा ॥ ३७ ॥ तस्मात्त्वमिह दुःखानामंतं कर्तुं यदीच्छसि ॥ इहामुत्र च भोगानां भुक्तिं मुक्तिं च शाश्वतीम् ॥ ३८ ॥ आराधयार्कमर्कस्थो मंत्रैरिह तदात्मनि ॥ अंगैर्वृतं वृते चैव स्थाने शास्त्रेण शोधिते ॥ ३९ ॥ कवचेन च संगुप्ते सर्वतोऽस्त्रेण रक्षिते ॥ एवं प्राप्स्यसि यत्नेन सर्वदा फलमीप्सितम् ॥ ४० ॥ दुःखमाध्यात्मिकं नेह तथा चैवाधिभौतिकम् ॥ आधिदैविकमत्युग्रं न भविष्यति ते सदा ॥४१॥ न भयं विद्यते तेषां प्रपन्ना ये दिवाकरम् ॥ इहामुत्र सुखं तेषामच्छिद्रं जायते सुखम् ॥ ४२ ॥ सूर्येणेदं ममोद्दिष्टं साक्षाद्यज्ज्ञानमुत्तमम् ॥ आराधितेन विधिवत्का



१ नामदंडक्षणानि च—इ० पा० । २ तस्मात्क्षयकरोयोऽखौ ।—इ० पा० । ३ दृष्ट्वा—इ० पा० । ४ तं देवम्—इ० पा० । ५ भुवम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लेन बहुना तथा ॥ ४३ ॥ प्राप्यते परमं स्थानं यत्र धर्मध्वजः स्थितः ॥ एतत्संक्षिप्तमुद्दिष्टं क्षिप्रसिद्धिकरं परम् ॥ यथा नान्यदतो ऽस्तीति स्वयं सूर्येण भाषितम् ॥ ४४ ॥ उपायोयं समाख्यातस्तव संक्षेपतस्त्विह ॥ यस्मात्परतरो नास्ति ह्रितोपायः शरीरिणाम् ॥ ॥ ४५ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे आदित्यमाहात्म्यवर्णनं नामाष्टचत्वारिंशो ऽध्यायः ॥ ४८ ॥ छ ॥ ॥ वासुदेव उवाच ॥ अथार्चनविधिं वक्ष्ये धर्मकेतोरनुत्तमम् ॥ सर्वकामप्रदं पुण्यं विघ्नघ्नं दुरितापहम् ॥ १ ॥ सूर्यमंत्रैः पुरः स्नातो यजेत्तेनैव भास्करम् ॥ यतस्ततः प्रवक्ष्यामि स्नानमादौ समासतः ॥ २ ॥ आचांतस्तमुपालभ्य मुद्रया शुचिशुद्धया ॥ कृत्वा नीराजनं पुत्र संशोध्य च जलं ततः ॥ ३ ॥ स्नानांनाद्धृदयपूतेन मन्त्रेण मत्कुलोद्वह ॥ उत्थायाचम्य तेनैव वाससी परिधाय च ॥ ४ ॥ द्विराचम्याथ संप्रोक्ष्य तनुं सप्ताक्षरेण च ॥ उत्थायाचम्य तेनैव रवेः कृत्वार्घ्यमेव च ॥ ५ ॥ दत्त्वा तेन जपित्वा तं स्वकं ध्यात्वार्कवद्धृदि ॥ गत्वा चायतनं शुभ्रमार्कमार्की तनुं यजेत् ॥ ६ ॥ पूरकं कुंभकं कृत्वा रेचकं च समाहितः ॥ कृत्वोंकारेण दोषांस्तु हन्यात्कायादिसंभवान् ॥ ७ ॥ वायव्याग्नेयमाहेन्द्रवारुणीभिर्यथाक्रमम् ॥ किल्बिषं वारुणाद्भिश्च हन्यात्सिद्ध्यर्थमात्मनः ॥ ८ ॥ शोषणं दहनं स्तंभं प्लावनं च यथाक्रमात् ॥ वाय्वग्नींद्रजनाख्याभिर्धारणाभिः कृते सति ॥ ९ ॥ ध्यात्वा विशुद्धमात्मानं प्रणमेदर्कमास्थितम् ॥ देहं तेनैव संचिन्त्य पंचभूतमयं परम् ॥ १० ॥ सूक्ष्मं स्थूलं तथाक्षाणि स्वस्थानेषु प्रकल्प्य च ॥ विन्यस्यांगानि खादीनि हृदाद्यानि हृदादिषु ॥ ११ ॥ खस्वाहा हृदयं भानोः खमर्काय शिरस्तथा ॥ उल्का स्वाहा शिखार्कस्य यै च हुं कवचं परम् ॥ खां फडस्त्रं च संहारश्चादितः प्रणवः कृतः ॥ १२ ॥ स पूर्वं प्रणवस्याथो मंत्रकर्मप्रसिद्धये ॥ एभिर्जलं त्रिधा जप्त्वा स्नानद्रव्याणि तेन च ॥ १३ ॥ संप्रोक्ष्य पूजयेत्सूर्यं गंधपुष्पादिभिः शुभैः ॥ ततो मूर्तिषु सर्वासु रात्रावग्नौ प्रपूजयेत् ॥ १४ ॥ प्राक्पश्चिमोदगभ्यग्रां प्रातः सायं निशासु वै ॥ सप्ताक्षरेण सन्मंत्रं ध्यात्वा च पद्मकर्णिकाम् ॥ १५ ॥ आदित्यमंडलान्तस्थं तत्र देहं प्रकल्पयेत् ॥ प्रभामंडलमध्यस्थं ध्यात्वा देहं यथा पुरा ॥ सर्वलक्षणसंपूर्णं सहस्रकिरणोज्ज्वलम् ॥ १६ ॥ रक्तैर्गंधैश्च पुष्पैश्च चरुभिर्बलिभिस्तथा ॥ रक्तचंदनमिश्रैर्वा वस्त्रैरावरणैः शुभैः ॥ १७ ॥ आवाहनादिकर्माणि रक्षां तु हृदयेन च ॥ तच्चित्तश्च सदा कुर्याज्ज्ञात्वा कर्मक्रमं बुधः ॥ १८ ॥ कृत्वा चावाहनं मंत्रैरेकत्र स्थापनं ततः ॥ यावद्यागावसानं तु सान्निध्यं तत्र

१ स्नानाद्धृदयपूतेन मनुना मत्कुलोद्वह—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कल्प्य च ॥ १९ ॥ दत्त्वा पाद्यादिकां पूजां शक्त्या वार्घ्यं निवेद्य च ॥ जपित्वा विधिवद्ध्यात्वा ततो देवीं विसर्जयेत् ॥ २० ॥ एष कर्मक्रमः प्रोक्तः सर्वेषां यजनक्रमात् ॥ प्रवक्ष्यामि जपस्थानं पद्मेशावरणे तथा ॥ २१ ॥ आदित्यं कर्णिकासंस्थं दलेष्वंगानि पूर्वशः ॥ सोमादीन्राहुपर्यंतान्ग्रहांश्चैवोदगादितः ॥ २२ ॥ मूर्तिमल्लोकपालांश्च क्रमादावरणेष्वथ ॥ तदस्त्राणि च रक्षार्थं स्वमंत्रैः पूजयेत्क्रमात् ॥ २३ ॥ प्रणवैश्चाभिधानैश्च चतुर्थ्या ह्यभियोजितैः ॥ सर्वेषां कथिता मंत्रा मुद्राश्च कथयाम्यतः ॥ २४ ॥ व्योममुद्रा रतिः पद्मा महाश्वेतास्त्रमेव च ॥ पंचमुद्राः समाख्याताः सर्वकर्मप्रसिद्धये ॥ २५ ॥ उत्तानौ तु करौ कृत्वा अंगुल्यो ग्रंथिताः क्रमात् ॥ तर्जनीं यंति यावत्ताः समे वाधोमुखे स्थिते ॥ २६ ॥ तर्जन्यौ मध्यमस्यैव ज्येष्ठाग्रे वानुगोपरि ॥ मुद्रेयं सर्वमुद्राणांव्योम मुद्रेति कीर्तिता ॥ सर्वकर्मसु योगोयं तथा स्थानं प्रकल्पते ॥२७॥ पद्मवत्प्रसृताः सर्वा महाश्वेता रवेः स्मृता ॥ जवसंनिहितो नित्यं रथारूढो रविः स्मृतः ॥ २८ ॥ हस्तावूर्ध्वमुखौ कृत्वा वामांगुष्ठेन योजितौ ॥ द्रव्याणां शोधने योज्या रक्षार्थं च विशेषतः ॥ २९ ॥ अनया मुद्रया सर्वं रक्षितं शोधितं भवेत् ॥ अर्घ्यं दत्वा प्रयोक्तव्या पूजांते च विशेषतः ॥ ३० ॥ जपध्यानावसाने च यदीच्छेत्सिद्धिमात्मनः ॥ अनेन विधिना नित्यं जपेदब्दमतंद्रितः ॥ ३१ ॥ स लभेतेप्सितान्कामानिहामुत्र न संशयः ॥ रोगार्तो मुच्यते रोगाद्धनहीनो धनं लभेत् ॥ ३२ ॥ राज्यभ्रष्टो लभेद्राज्यमपुत्रः पुत्रमाप्नुयात् ॥ प्रज्ञामेधासमृद्धीश्च चिरंजीवति मानवः ॥ सुरूपां लभते कन्यां कुलीनां पुरुषो ध्रुवम् ॥३३॥ सौभाग्यं स्त्री कुलीनापि कन्या च पुरुषोत्तमम् ॥ अविद्यो लभते विद्यामित्युक्तं भानुना पुरा ॥ ३४ ॥ नित्ययागः स्मृतो ह्येष धनधान्यसुखावहः ॥ प्रजापशुविवृद्धिश्च निष्कामस्यापि जायते ॥ ३५ ॥ तदैकः स्तूयते स्वर्गे शब्द्यते च नरोत्तमः ॥ भक्त्या तं पूजयेद्यस्तु नरः पुण्यतरः सदा ॥ ३६ ॥ इह वै कामिकं प्राप्य ततो गच्छेन्मनोः पदम् ॥ द्विजास्तस्य प्रसादेन तेजसा बुधसंन्निभः ॥ ३७ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सूर्यमाहात्म्यवर्णनं नामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ छ ॥ ॥ वासुदेवउवाच ॥ ॥ नैमित्तिकं ततो वक्ष्ये यज्ज्ञात्वा च समासतः ॥ सप्तम्यां ग्रहणे चैव संक्रांतिषु विशेषतः ॥ १ ॥ शुक्लपक्षस्य सप्तम्यां हविर्भुक्त्वैकदा दिवा ॥ सम्यगाचम्य संध्यायां वारुणं प्रणिपत्य च ॥ २ ॥ इंद्रियाणि च संयम्य कृतं ध्यात्वा स्वपेदधः ॥ दर्भशय्यागतो रात्रौ प्रातः स्नातः सुसंयतः ॥३॥ ततः संध्यामुपास्याथ पूर्वोक्तं च मनुं जपेत् ॥ जुहुयाच्च तदा वह्निं सूर्याग्नी परिकल्प्य च ॥ ४ ॥ सूर्याग्निकरणं वक्ष्ये तर्पणं च समासतः ॥ अर्चनागारमुल्लिख्य प्रविश्यार्च्य जनैर्जनम् ॥ ५ ॥ प्रक्षिप्यास्तीर्य दर्भैश्च



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पात्राण्यालभ्य च क्रमात् ॥ पवित्रं द्विकुशं कृत्वा साग्रं प्रादेशसंमितम् ॥ ६ ॥ तेन पात्राणि संप्रोक्ष्य संशोध्याथ विलोक्य च ॥ उदगग्रे स्थिते पात्रे प्रज्वाल्याथोल्मुकेन च ॥ ७ ॥ पर्यग्निकरणं कृत्वा तथाज्योत्पवनं त्रिधा ॥ परिमृज्य स्रुवादींश्च दर्भैः संप्रोक्षयेत्ततः ॥ ॥ ८ ॥ जुहुयात्प्रोक्ष्य तान्वह्नौ तत्रार्कं पूर्ववद्यजेत् ॥ अभूमौ स्थितपात्रेण विप्टरेण तु पाणिना ॥ दानेन यदुशार्दूल नान्तरिक्षे स्थले क्वचित् ॥ ९ ॥ दक्षिणेन स्रुवं गृह्य जुहुयात्पावकं बुधः ॥ हृदयेन क्रियाः सर्वाः कर्तव्याः पूर्वचोदिताः ॥ १० ॥ अर्कादारभ्य संज्ञार्थं दद्यात्तूष्णीं हुतिं स्थितः ॥ वरुणाय शतैर्माघे सप्तम्यां वरुणं यजेत् ॥ ११ ॥ यथाशक्त्या तु विप्रेभ्यः प्रदद्यात्खण्डवेष्टकान् ॥ दद्याच्च दक्षिणां शक्त्या प्राप्नोति याचितं फलम् ॥ १२ ॥ एवं वै फाल्गुने सूर्यं चैत्रे वैशाख एव च ॥ वैशाखे मासि धातारमिंद्रं ज्येष्ठे यजेद्रविम् ॥ १३ ॥ आषाढे श्रावणे मासि नभं भाद्रपदे यमम् ॥ तथाश्वयुजि पर्जन्यं त्वष्टारं कार्तिके यजेत् ॥ १४ ॥ मार्गशीर्षे च मित्रं च पौषे विष्णुं यजेद्यदि ॥ संवत्सरेण यत्प्रोक्तं फलमिष्टं दिनेदिने ॥ तत्सर्वमाप्नुयात्क्षिप्रं भक्त्या श्रद्धान्वितो व्रती ॥ १५ ॥ एवं संवत्सरे पूर्णे कृत्वा वै कांचनं रथम् ॥ सप्तभिर्वाजिभिर्युक्तं नानारत्नोपशोभितम् ॥ १६ ॥ आदित्यप्रतिमां मध्ये शुद्धहेम्ना कृतां शुभाम् ॥ रत्नैरलंकृतां कृत्वा हेमपद्मोपरिस्थिताम् ॥ ॥ १७ ॥ तस्मिन्रथवरे कृत्वा सारथिं चाग्रतः स्थितम् ॥ वृतं द्वादशभिर्विप्रैः क्रमान्मासाधिपात्मभिः ॥ १८ ॥ मध्ये कृत्वा स्वमाचार्यं पूजयित्वा यथाश्रुति ॥ संचिन्त्यादित्यवर्णं वै वस्त्ररत्नादिनार्हयेत् ॥ १९ ॥ एवं मासाधिपान्विप्रान्संपूज्याथ निवेदयेत् ॥ आचार्याय रथं छत्रं ग्रामं गाश्च महीं शुभाम् ॥ २० ॥ अश्वान्मासाधिपेभ्यस्तु द्वादशभ्यो निवेदयेत् ॥ एवं भक्त्या यथाशक्त्या हेमरत्नादिभूषणम् ॥ २१ ॥ दत्त्वा तस्य नमस्कृत्य व्रतं पूर्णं निवेदयेत ॥ अत ऊर्ध्वं न दोषोऽत्र व्रतस्याकरणेष्वपि ॥ २२ ॥ एवमस्त्विति विप्रेन्द्रैः सहाचार्यैः पुनःपुनः ॥ वह्नींश्चैवाशिषो दत्त्वा प्रवदेत्प्रीयतामिति ॥ २३ ॥ आदित्यो येन कामेन त्वया आराधितो व्रतैः ॥ तुभ्यं ददातु तं कामं संपूर्णं भवतु व्रतम् ॥ २४ ॥ आचार्यान्विप्ररूपैस्तु प्रविष्टो भास्करः स्वयम् ॥ दास्यत्येव परं कर्तुमित्युक्तं भानुना स्वयम् ॥ २५ ॥ विप्रेभ्यो गुणवद्भ्यश्च निस्वेभ्यश्च विशेषतः ॥ दीनान्धकृपणेभ्यश्च शक्त्या दत्त्वा च दक्षिणाम् ॥ ब्राह्मणान्भोजयित्वा च व्रतमेतत्समापयेत् ॥ २६ ॥ कृत्वैवं सप्तमीमब्दं राजा भवति धार्मिकः ॥ पुरुषः स्त्री भवेद्राज्ञां तादृशामथ वल्लभा ॥ २७ ॥ शतयोजनविस्तीर्णं निःसपत्नमकंटकम् ॥ निष्पन्नमण्डलं भुंक्ते साग्रं वर्षशतं सुखी ॥ २८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वित्तहीनोऽपि यो भक्त्या कृत्वा ताम्रमयं रथम् ॥ दद्याद्व्रतावसाने तु कृत्वा सर्वं यथोदितम् ॥ सोऽशीतियोजनं भुंक्ते विस्तीर्णं मण्डलं नृपः ॥ ॥ २९ ॥ एवं पिष्टमयं योऽपि वित्तहीनः करोति ना ॥ आषष्टियोजनं भुंक्ते दीर्घायुर्नीरुजः सुखी ॥ सूर्यलोके च कल्पांतं यावत्स्थित्वेदमाप्नुयात् ॥ ३० ॥ मनसापि च यो भक्त्या यजेदर्कमतंद्रितः ॥ सर्वावस्थासु सोऽप्यत्र व्याधिभिर्मुच्यते भृशम् ॥ ३१ ॥ आपदो न स्पृशंत्येनं नीहारा इव भास्करम् ॥ किं पुनर्व्रतसंपन्नं भक्तं मंत्रैश्च रक्षितम् ॥ ३२ ॥ यत एवं ततो ज्ञात्वा विधानं कल्पचोदितम् ॥ सुखेन फलसिद्ध्यर्थं कुर्यात्सर्वमशेषतः ॥३३॥ इत्येतत्कथितं सांब पुरा सूर्येण मे शुभम् ॥ कल्पोयं प्रथमे कल्पे सर्वदा गोपितो मया ॥३४॥ अनेन विधिना वत्स विशुद्धेनांतरात्मना ॥ भानुमाराधयेत्क्षिप्रं यदीच्छेत्फलमुत्तमम् ॥ ३५ ॥ मयास्यैव प्रसादेन प्राप्ताः पुत्राः सहस्रशः ॥ असुरा निर्जिताश्चैव सुराः सर्वे वशीकृताः ॥ ३६ ॥ त्वयाप्ययं गोपितव्यः कल्पः सूर्यस्य संमतः ॥ प्रसादादस्य कल्पस्य सदा सन्निहितो रविः ॥ चक्रेऽस्मिन्निर्जिता येन सुरासुरनरोरगाः ॥ ३७ ॥ यदिनाधिष्ठितं चक्रमिदं सूर्यांशुभिः स्वयम् ॥ सततं स्यात्प्रभायुक्तं कथमध्याहतं भवेत् ॥ ३८ ॥ अहमेतं जपन्नित्यं यजन्ध्यायंश्च शक्तितः ॥ जातोस्मि सर्वकामानां पूज्यः श्रेष्ठश्च तेजसा ॥ ३९ ॥ त्वमभ्यस्यैव मनसा वाचा वा कर्मणापि वा ॥ कुरुभक्तिमनेनैव विधिना फलसिद्धये ॥ ४० ॥ शृणुयाद्भक्तियुक्तो यो नरः श्रद्धासमन्वितः ॥ विधानमादितः पुत्र सप्तमीं कुरुते च यः ॥ ४१ ॥ सेहं प्राप्याखिलं काममारोग्यं च जयं तथा ॥ भार्गव्या परया युक्तो गच्छेद्वैरोचनं सदः ॥ ४२ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सप्तमीमाहात्म्यवर्णनं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ ॥ छ ॥ ॥ वासुदेव उवाच ॥ ॥ माघस्य शुक्लपक्षे तु पञ्चम्यां मत्कुलोद्वह ॥ एकभक्तं सदाख्यातं षष्ठ्यां नक्तमुदाहृतम् ॥ १ ॥ सप्तम्यामुपवासं तु केचिदिच्छंति सुव्रत ॥ षष्ठ्यां केचिद्वदंतीह सप्तम्यां पारणं किल ॥ २ ॥ कृतोपवासः षष्ठ्यां तु पूजयेद्भास्करं बुधः ॥ रक्तचन्दनमिश्रैस्तु करवीरैश्च सुव्रत ॥ ३ ॥ गुग्गुलेन महाबाहो संयावेन च सुव्रत ॥ पूजयेद्देवदेवेशं शंकरं भास्करं रविम् ॥ ४ ॥ एवं हि चतुरो मासान्माघादीन्पूजयेद्रविम् ॥ आत्मनश्चापि शुद्ध्यर्थं प्राशनं गोमयस्य च ॥ ५ ॥ स्नानं च गोमयेनेह कर्तव्यं चात्मशुद्धये ॥ ब्राह्मणान्दिव्यभौमांश्च भोजयेच्चापि शक्तितः ॥ ६ ॥ ज्येष्ठादिष्वथ मासेषु श्वेतचन्दनमुच्यते ॥ श्वेतानि चापि पुष्पाणि शुभगन्धान्वितानि वै ॥ ७ ॥ कृष्णागरुस्तथा धूपो नैवेद्यं पायसं स्मृतम् ॥ तेनैव ब्राह्मणांस्तुष्टान्भोजयेच्च

१ यथाशक्त्या–इ० पा० । २ उत्तमंत्रैश्च रक्षितम्–इ० पा० । ३ अतंद्रिताः–इ० पा० । ४ अत्र पादपूर्त्यर्थं स इत्यस्य सोर्लोपः । ५ अद्देवं शंकर रविम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महामते ॥ ८॥ प्राशयेत्पञ्चगव्यं तु स्नानं तेनैव पुत्रक ॥ कार्तिकादिषु मासेषु अगस्तिकुसुमैः स्मृतम् ॥ ९ ॥ पूजयेन्नरशार्दूल धूपैश्चैवापराजितैः॥ नैवेद्यं गूडपूपास्तु तथा चेक्षुरसं स्मृतम् ॥ १० ॥ तेनैव ब्राह्मणांस्तात भोजयस्व स्वशक्तितः ॥ कुशोदकं प्राशयेथाः स्नानं च कुरु शुद्धये ॥ ११ ॥ तृतीये पारणस्यांते माघे मासि महामते ॥ भोजनं तत्र दानं च द्विगुणं समुदाहृतम् ॥ १२ ॥ देवदेवस्य पूजा च कर्तव्या शक्तितो बुधैः ॥ रथस्य चापि दानं तु रथयात्रा तु सुव्रत ॥ १३ ॥ व्रतस्य प्राप्तिहेतोर्वै कर्तव्या विभवे सति ॥ दानं स्वर्णरथस्येह यथोक्तं विभवे सति ॥ इत्येषा कथिता पुत्र रथाह्वा सप्तमी शुभा ॥ १४ ॥ महासप्तमी विख्याता महापुण्या महोदया ॥ यामुपोष्य धनं पुत्रान्कीर्तिं विद्यामवाप्नुयात् ॥ १५ ॥ तथाखिलं कुवलयं चन्द्रेण च समोर्चिषा ॥ १६ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे महासप्तमीव्रतवर्णनं नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ इत्युक्त्वा भगवान्देवः शंखचक्रगदाधरः ॥ अन्तर्धानं गतो वीर शांबस्येह प्रपश्यतः ॥ १ ॥ शांबोऽपि कृत्वा विधिवत्सप्तमीं रथसप्तमीम् ॥ आदिभिर्व्याधिभिर्मुक्तो जगामाशु स्वमंदिरम् ॥ २ ॥ ॥ शतानीक उवाच ॥ ॥ रथयात्रा कथं कार्या रथः कार्यः कथं रवेः ॥ केनेह मर्त्यलोकेषु रथयात्रा प्रवर्तिता ॥ ३ ॥ ॥ सुमंतुरुवाच ॥ ॥ इममर्थं पुरा पृष्टः पद्मयोनिः प्रजापतिः ॥ रुद्रेण कुरु शार्दूल आसीनः कांचने गिरौ ॥ ४ ॥ पद्मासनं पद्मयोनिं सुखासीनं प्रजापतिम् ॥ प्रणम्य शिरसा देवो रुद्रोवाचमुदैरयत् ॥ ५ ॥ ॥ श्रीरुद्र उवाच ॥ ॥ य एष भगवान्देवो भास्करो लोकभास्करः ॥ कथमेष भ्रमेद्देवो रथस्थो विमलः सदा ॥ ६ ॥ ॥ ब्रह्मोवाच ॥ ॥ यथा दिवि भ्रमेत्तात रथारूढो रविः सदा ॥ तथा ते वर्तयिष्येऽहं रथं चास्य त्रिलोचन ॥ ७ ॥ रथेन ह्येकचक्रेण पञ्चारेण त्रिणाभिना ॥ हिरण्मयेन कांतेन अष्टबन्धैकनेमिना ॥८॥ चक्रेण भास्वता चैव दिवि सूर्यः प्रसर्पति ॥ दशयोजनसाहस्रो विस्तारोप्यस्य कथ्यते॥९॥ त्रिगुणा च रथोपस्थादीषा दण्डप्रमाणतः ॥ युगमस्य तु विस्तीर्णमरुणो यत्र सारथिः ॥ १० ॥ प्रासंगः कांचनो दिव्यो युक्तः पवनगैर्हयैः ॥ छन्दोभिर्वाजिरूपैस्तु यतश्चक्रं ततः स्थितैः ॥ ११ ॥ येनासौ पर्यटेद्व्योम्नि भास्वता तु दिवस्पतिः ॥ अथैतानि तु सूर्यस्य प्रत्यंगानि रथस्य तु ॥ १२ ॥ संवत्सरस्यावयवैः कल्पितानि यथाक्रमम् ॥ नाभ्यस्तिस्रस्तु चक्रस्य त्रयः कालाः प्रकीर्तिताः ॥ १३ ॥ आराः पञ्चर्तवस्तस्य नेम्यः षड्ऋतवः स्मृताः ॥ रथवेदी स्मृते तस्य अयने दक्षिणोत्तरे ॥ १४ ॥ मुहूर्ता इषवस्तस्य शम्याश्चास्य कलाः स्मृताः ॥ तस्य काष्ठाः

१ विंशोनमनूरुः–इ० पा० । २ नेमयस्तस्य–इ० पा० । ३ अमर्तं बन्धनं तस्य गावाश्चास्य कलाः स्मृताः–इ०पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मृताः कोणा अक्षदंडः क्षणाः स्मृताः ॥ १५ ॥ निमेषाश्चास्य कर्षाः स्यादीषादंडो लवाः स्मृताः ॥ रात्रिर्वरूथो धर्मोऽस्य ध्वज ऊर्ध्वं प्रति ष्ठितः॥ १६ ॥ युगाक्षिकोटी ते तस्य अर्थकामावुभौ स्मृतौ ॥ अश्वरूपाणि च्छंदांसि वहंते वामतो धुरम् ॥१७॥ गायत्री चैव त्रिष्टुप् च जगत्यनुष्टु बेव च ॥ पंक्तिश्च बृहती चैव उष्णिगेव तु सप्तमी ॥ १८ ॥ चक्रमक्षनिबद्धं तु ध्रुवे चाक्षः समर्पितः ॥ सहचक्रो भ्रमत्यक्षः स चाक्षो भ्रमति ध्रुवे ॥ ॥ १९ ॥ अक्षः सहैव चक्रेण भ्रमतेऽसौ ध्रुवे स्थितः ॥ एवमक्षवशात्तस्य संनिवेशो रथस्य तु ॥ २० ॥ तथा संयोगभावेन संसिद्धो भास्करो रथः ॥ तेन चासौ रविर्देवो नभः संसर्पते सदा ॥ २१ ॥ युगाक्षकोटिसंबद्धे द्वे रश्मी स्यंदनस्य तु ॥ ध्रुवे ते भ्रमतो रश्मी न चक्रयुगयोस्तु वै ॥ ॥ २२ ॥ भ्रमतो मंडलान्यस्य रवेरस्य रथस्य तु ॥ कुलालचक्रवद्याति मण्डलं सर्वतोदिशम् ॥ २३ ॥ युगाक्षकोटी ते तस्य दक्षिणे स्यंदनस्य तु ॥ ऋग्यजुर्भ्यां गृहीतेन विचक्राश्वेन वै ध्रुवे ॥ २४ ॥ ह्रसेते तस्य रश्मी तु मण्डलेपूत्तरायणे ॥ दक्षिणेऽथ समृद्धे तु भ्रमतो मण्डलानि तु ॥ ॥ २५ ॥ युगाक्षकोटी ते तस्य भ्रमेते स्यंदनस्य तु ॥ सक्तासक्तं च भ्रमते मण्डलं सर्वतोदिशम् ॥ २६ ॥ आकृष्येते ध्रुवेणेह समं तिष्ठति सुव्रत ॥ तदा साभ्यंतरं देवो भ्रमते मंडलानि तु ॥ २७ ॥ ध्रुवेण मुच्यमाने तु पुना रश्मियुगेन वै ॥ तथैव बाह्यतः सूर्यो भ्रमते मंडलानि तु ॥ ॥ २८ ॥ अशीतिमंडलशतं काष्ठयोरुभयोरपि ॥ सरथोऽधिष्ठितो देवैर्विभ्रमेद्दपिभिः सह ॥ २९ ॥ गंधर्वैरप्सरोभिश्च सर्पग्रामणिराक्षसैः ॥ एतैर्वसति वै सूर्ये मासौ द्वौ द्वौ क्रमेण तु ॥ ३० ॥ धातार्यमा पुलस्त्यश्च पुलहश्च प्रजापतिः ॥ खण्डको वासुकिश्चैव सकर्णो रश्मिरेव च ॥३१॥ तुंबुरुर्नारदश्चैव गंधर्वौ गायतां वरौ ॥ क्रतुस्थलाप्सरश्चैव या च सा पुंजिकस्थला ॥ ३२ ॥ ग्रामणीरथकृत्स्नश्च रथौजाश्वतरावुभौ ॥ रक्षोहेतिः प्रहेतिश्च यातुधानौ च तावुभौ ॥ ३३ ॥ मधुमाधवयोरेष गणो वसति भास्करे ॥ तथा ग्रीष्मौ तु द्वौ मासौ मित्रश्च वरुणश्च ह ॥ ३४ ॥ पौरु ऋपिरत्रिर्वशिष्ठश्च तक्षकोऽनंत एव च ॥ मेनका सहजन्या च गंधर्वौ च हहा हूहूः ॥ ३५ ॥ रथस्वनश्च ग्रामण्यौ रथचित्रश्च तावुभौ ॥ पौरु पेयो वधश्चैव यातुधानौ महाबलौ ॥ ३६ ॥ शुचिशुक्रौ तु द्वौ मासौ वसंत्येते दिवाकरे ॥ इंद्रश्चैवः विवस्वांश्च अंगिरा भृगुरेव च ॥ ३७ ॥ एलापर्णस्तथा सर्पः शंखपालश्च पन्नगाः ॥ प्रम्लोचा दुंदुकाश्चैव गंधर्वौ भानुदर्दुरौ ॥ ३८ ॥ यातुधानौ तथा [३]सर्पस्तथा ब्राह्मश्च तावुभौ ॥ एते नभो नभस्यौ च निवसंति दिवाकरे ॥३९॥ शरद्येते पुनः शुभ्रा निवसंति स्म देवताः ॥ पर्जन्यश्चैव पूषा च भारद्वाजः सगौतमः ॥ ४० ॥

१ चक्रमस्याक्षजंबद्धं तु सन्निवेशो रथस्य तु–इ० पा० । २ कुलालचक्रवत्तस्य भ्रमते मंडलानि तु–इ० पा० । ३ रथेनबाह्यतेसूर्यः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चित्रसेनश्च गंधर्वस्तथा वसुरुचिश्चयः ॥ विश्वाची च घृताची च ते उभे पुण्यलक्षणे॥४१॥ नागस्त्वैरावतश्चैव विश्रुतश्च धनंजयः ॥ सेनजिच्च सुषेणश्च सेनानीर्ग्रामणीस्तथा॥४२॥ आपो वातश्च द्वावेतौ यातुधानौ प्रकीर्तितौ ॥ वसंत्येते तु वै सूर्ये इषोर्जौ कालपर्ययात्॥४३॥हैमंतिकौ तु द्वौ मासौ वसंत्येते दिवाकरे ॥ अंशो भगश्च द्वावेतौ कश्यपश्च क्रतुस्तथा॥४४॥ भुजंगश्च महापद्मः सर्पः कर्कोटकस्तथा ॥ आपो वातश्च द्वावेतौ यातुधानौ प्रकीर्तितौ ॥ ४५ ॥ चित्रांगदश्च गंधर्वोरुणायुश्चैव तावुभौ ॥ सहे चैव सहस्ये च वसंत्येते दिवाकरे ॥ ४६ ॥ पूषा जिष्णुर्जमदग्निर्विश्वामित्रस्तथैव च ॥ काद्रवेयौ महानागौ कंबलाश्वतरावुभौ॥४७॥ गन्धर्वौ धृतराष्ट्रश्च सूर्यवार्चाश्च तावुभौ ॥ तिलोत्तमा च रंभा च सर्वलोके च विश्रुते ॥ ४८ ॥ ग्रामणीः सेनजिच्चैव सत्यजिच्च महातपाः ॥ ब्रह्मोपेतश्च वै रक्षो यज्ञो यज्ञस्तथैव च ॥ एते तपस्तपस्ये च निवसंति दिवाकरे ॥ ४९ ॥ अन्येऽपि ये मंदेहा राक्षसाधिपतयो देवदेवगुह्यतमस्य रक्षार्थं सकलदेवैरस्मदादिभिः संनियुक्तास्तान्भवते कथयामि ॥ ५० ॥ ॥ रुद्र उवाच ॥ ॥ वद ब्रह्मन्कथां दिव्यां यामहं प्रष्टुमागतः ॥ तामेव विस्तरेणैव कथयाशु मम प्रभो ॥ ५१ ॥ दिविष्ठं भास्करं दृष्ट्वा नमेत्केन विधानतः ॥ किं फलं तस्य वा देव समाप्ते भवति कर्मणि ॥ ५२ ॥ ॥ ब्रह्मोवाच ॥ ॥ शृणु रुद्र समासेन भास्करस्य नतिक्रियाम् ॥ यां कृत्वा रोगदुःखार्ता मुच्यंते पापसंचयात् ॥ ५३ ॥ स्थंडिले मंडलं कृत्वा द्वादशांगुलमानतः ॥ सद्यो गोमयलिप्ते च तत्रैवावाहयेद्रविम् ॥ ५४ ॥ पूजयित्वा गणेशादीन्वासुदेवं च सात्यकिम् ॥ सत्यभामां तथा लक्ष्मीमुमां देवीं च शंकरम् ॥ ५५ ॥ मंडलस्य समीपस्थान्पूर्वोक्तान्वेदमंत्रवित ॥ ततः प्रदक्षिणीकृत्य दंडवत्प्रणमेत्सकृत् ॥ ५६ ॥ शतं सहस्रमयुतं लक्षं वा निजपापतः ॥ दृष्ट्वा शक्तिं प्रणम्याथ सदा संयतमानसः ॥ ५७ ॥ विप्राय दक्षिणां दद्यान्निरुच्छ्वासः समाहितः ॥ रक्तिके च हिरण्यस्य शतमात्रे सहस्रके ॥ ५८ ॥ मापकाणां चतुष्कं चायुतं दशगुणं दिशेत् ॥ लक्षे दशगुणं प्रोक्तं दद्याद्रोगविमुक्तये ॥ ५९ ॥ एवं कृते विरूपाक्ष सर्वरोगाद्विमुच्यते ॥ इदं रहस्यं परमं शृणुयाद्यो हि मानवः ॥ ६० ॥ तस्य रोगा विनश्यंति मार्तंडस्य प्रसादतः ॥ अन्यच्च ते प्रवक्ष्यामि यच्चापृष्टमुमापते ॥ तच्छृणुष्व मया प्रोक्तं रथयन्तृनियामकम् ॥ ६१ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सूर्यपूजावर्णनं नाम द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥छ॥ ॥ ब्रह्मोवाच ॥ ॥ तत्रारुणो मया पूर्वं सारथ्ये सन्नियोजितः ॥ इंद्रेण माठरो नाम वायुना कल्मषेण तु ॥ १ ॥ वैनतेयेन ताक्ष्योपरि विमलो

१ ग्रामणीर्नाम गंधर्व सत्यजिच्च महाबली—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नखतुंडप्रहरणः पुरोगामी नियुक्त इति ॥ कालेन दंडो महादंडायुधो भवता शेषा महागणाधिपाः ॥ २ ॥ वैशाखेन राज्ञा वसुभिदायुधांगारिकौ द्वौ अग्निना पिंगलः ॥ संयंता महादंडायुधो भवता शेषो महागणाधिपः ॥ ३ ॥ हस्तो यमेन पाशहस्तोंबुपतिना समिन्धनः ॥ अलकाधिपतिना विष्णुः ॥ ४ ॥ अश्विभ्यां कालोपकालौ वाक्षप्रधानकौ ॥ नरनारायणाभ्यां क्षारौ धारौ धिषणकृष्णौ ॥ ५ ॥ वैराजशंखपालपर्जन्यरजसां दिशासु विदिशासु दिशां पालनं विश्वेदेवा ददुः ॥ ६ ॥ सत्तैतालोकमातरः सर्वमरुतोऽददन् ॥ ओंकारो वषट्कारो वेदनिस्वनः पिनाकी विनायकः शेषोऽनन्तो वासुकिश्च नागसहस्रेणात्मतुल्येनादित्यस्य रथमनुयांति ॥ ७ ॥ गायत्री सावित्री रथे स्थिते उभे संध्ये सदा सा देवता या रविमडलं नापैति ॥ भगवंतं सहस्रकिरणमवलंबितुम् ॥८॥ एतद्वै सर्वदैवत्यं मंडलं ब्रह्मवादिनं ब्रह्मयज्ञवादिनीं यज्ञः ॥ भगवद्भक्तानां परमादित्योयं विष्णुर्माहेश्वराणां महेश्वरः ॥ ९ ॥ स्थानाभिमानिनो ह्येते सदा वै वृषभध्वज ॥ सूर्यमाप्याययंत्येते तेजसां तेज उत्तमम् ॥ १० ॥ ग्रथितैः स्वैर्वचोभिस्तु स्तुवंते ऋषयो रविम् ॥ गंधर्वाप्सरसश्चैव गीतनृत्यैरुपासते ॥ ११ ॥ वियद्भ्रमणतो रक्षां कुर्वंति स्म इषुग्रहम् ॥ सर्पा वहंति वै सूर्यं यातुधानास्तु यांति च ॥ १२ ॥ वालखिल्या नमंत्येतं परिचार्योदयाद्रविम् ॥ दिवस्पतिः स्वभूश्चोभौ अग्रगौ योजनस्य तु ॥ १३ ॥ भर्गोऽथ दक्षिणे पार्श्वे कंजजो वामतः स्थितः ॥ सर्वे ते पृष्ठगा ज्ञेया ग्रहा लोकेषु पूजिताः ॥ १४ ॥ उपरागशिखी चोभावग्रतो नात्र संशयः ॥ मनुष्यधर्मा दक्षिणत उत्तरेण प्रचेतसः ॥ १५ ॥ संभवंति तथा कृष्ण उभावेतौ सदाग्रगौ ॥ वामेन वीतिहोत्रस्तु पृष्ठतस्तु हरिः सदा॥१६॥ रथपीठे क्षमा ज्ञेया अंतराले नभस्तथा ॥ आश्रित्य रथजां कांतिं खं दिवः समयः स्थितः॥१७॥ ध्वजो दंडश्च विज्ञेयो ध्वजाग्रे वृष एव च ॥ ऋद्धिर्वृद्धिस्तथा श्रीश्च पताका पार्वतीप्रिय ॥१८॥ ध्वजदंडाग्रे गरुडस्तदग्रे वरुणालयः॥ मैनाकश्छत्रदंडस्तु हिमवांश्छत्रमुच्यते ॥ १९ ॥ केचिदेवं वदंतीह लोकेचान्ये महामते ॥ छत्रदंडस्तथा क्लेशः क्लेशं छत्रं विदुर्बुधाः ॥ २० ॥ एतेषामेव देवानां यथा वीर्यं तथा तपः ॥ यथायोगं तथा सत्त्वं यथा सत्त्वं तथा बलम् ॥२१॥ तथा तपत्यसौ सूर्यस्तेषां सिद्धः स्वतेजसा॥ एते तपंति वर्षंति यांति विश्वं सृजंति च ॥ २२ ॥ भूतानामशुभं कर्म व्यपोहंति च कीर्तिताः ॥ एते सहैव सूर्येण भ्रमंते सानुगा दिवि ॥ २३ ॥ तपंतश्च जपंतश्च ह्लादयंतश्च वै द्विजाः ॥ गोपायंति स्म भूतानि इह ते ह्यनुकंपया ॥ २४ ॥ प्रीणाति देवानमृतेन सूर्यः सोमेन सूक्तेन विवर्धयित्वा॥ शुक्लेन पूर्णा दिवसक्रमेण तं कृष्णपक्षे

१ उन्नयन्ति—इ० पा० । २ चोपैति—इ० पा० । ३ नयंत्यस्तम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विबुधाः पिबंति ॥ २५ ॥ पीतं हि सोमं द्विकलावशेषं कृष्णे तु पक्षे रुचिभिर्ज्वलंतम् ॥ सुधामृतं तत्पितरः पिबंति ऊर्जाश्च सौम्याश्च तथैव कल्पाः ॥ २६ ॥ सूर्येण गोभिश्च समृद्धिताभिरद्भिः पुनश्चैव समुज्झिताभिः ॥ तथौषधीभिः सततं पिबंति अत्यंतपानेन क्षुधा जयंति ॥ २७ ॥ मासार्धतृप्तिस्तु मताभिरद्भिर्मासेन तृप्तिः स्वधया पितॄणाम् ॥ अन्नेन शश्वद्विदधाति मर्त्यं त्वयं जगच्चैव बिभर्ति गोभिः ॥ २८ ॥ अहोरात्रं रथेना सावेकचक्रेण वै भ्रमन् ॥ सप्तद्वीपसमुद्रांतं सप्तभिश्च हयैः सह ॥ २९॥ छन्दोभिर्वाजिरूपैस्तैर्यतश्चक्रं ततः स्थितैः ॥ कामरूपैः सकृद्युक्तैरंतरस्थैर्मनोजवैः ॥ ३० ॥ हरिभिरव्ययैर्वश्यैः क्षुधाश्रमविवर्जितैः ॥ त्र्यशीतिमंडलशतमीहंत्यब्देन वै हयाः ॥ ३१ ॥ बाह्यतोऽभ्यंतरं चैव मंडलं दिवसक्रमात् ॥ कल्पादौ संप्रयुक्तास्ते वहंत्याभूतसंप्लवम् ॥३२॥ आवृता वालखिल्यैस्तैर्भ्रमंति तान्यहानि तु ॥ ग्रथितैः स्वैर्वचोभिस्तु स्तूयमानो महर्षिभिः ॥ ३३ ॥ सेव्यते नृत्यगीतैश्च गंधर्वैरप्सरोगणैः ॥ पतंगः पतगैरश्वैर्वसते भ्रमयन्दिवि ॥३४॥ वीथ्याश्रयया विचरते नक्षत्राणि यथा शशी ॥ मध्यगश्चामरावत्यां यदा भवति भास्करः ॥ ३५ ॥ वैवस्वते संयमने उत्तिष्ठन्दृश्यते तदा ॥ सुखायामर्धरात्रं तु विभायामस्तमेति च ॥ ३६ ॥ वैवस्वते संयमने मध्यमस्तु रविर्यदा ॥ सुखायामथ वारुण्यामुत्तिष्ठन्दृश्यते तदा ॥ ३७ ॥ रात्र्यर्धं चामरावत्यामस्तमेति यमस्य वै ॥ सोमपुर्यां विभायां तु मध्यगश्चार्यमा यदा ॥ ३८ ॥ माहेन्द्रस्यामरावत्यामुत्तिष्ठति दिवाकरः ॥ अर्धरात्रं संयमने वारुण्यामस्तमेति च ॥ ३९ ॥ एवं चतुर्षु पार्श्वेषु मेरोः कुर्वन्प्रदक्षिणम् ॥ उदयास्तमने चासावुत्तिष्ठति पुनःपुनः ॥४०॥ पूर्वाह्णे चापराह्णे च द्वौ द्वौ देवालयौ पुनः ॥ तपत्येकं तु मध्याह्ने ताभिरेव गभस्तिभिः ॥ ४१ ॥ उदितो वर्धमानाभिरामध्याह्नात्तपेद्रविः ॥ ततः परं ह्रसंतीभिर्गोभिरस्तं नियच्छति ॥ ४२ ॥ यत्रोद्यन्दृश्यते सूर्यः स तेषामुदयः स्मृतः ॥ प्रणाशं गच्छते यत्र स तेषामस्तमुच्यते ॥ ४३ ॥ एवं पुष्करमध्येन तदा सर्पति भास्करः ॥ त्रिंशद्भागं तु मेदिन्या मुहूर्तेन स गच्छति ॥ ४४ ॥ योजनाग्रेण संख्यां[1] तु मुहूर्तस्य निबोध मे ॥ पूर्णं शतसहस्राणां[2] सहस्रं तु त्रिलोचन ॥ ४५ ॥ पंचाशच्च तथाल्पानि सहस्राण्यधिकानि तु ॥ मौहूर्तिकी गतिर्ह्येषा सूर्यस्य तु विधीयते ॥ ४६ ॥ योजनानां सहस्रे द्वे द्वे शते द्वे च योजने ॥ निमेषांतरमात्रेण दिवि सूर्यः प्रसर्पति ॥४७॥ स शीघ्रमेव पर्येति भास्करोऽलातचक्रवत् ॥ भ्रमन्वै भ्रममाणेषु ऋक्षेषु विचरत्यसौ ॥४८॥ इन्द्रः पूजयते[3] सूर्यमुत्तिष्ठंतं दिने दिने ॥ मध्याह्ने च यमः पश्चादस्तं यांतमपां पतिः ॥४९॥ सोमस्तथार्धरात्रे तु सदा पूजयते रविम् ॥ विष्णुर्भवानहं रुद्रः पूजयाम निशाक्षये ॥५०॥

१ संख्याम्–इ० पा० । २ त्रिंशच्छतसहस्राणाम्–इ० पा० । ३ पूजयंति–इ०, पूजयामः–इ० च पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवमग्निर्निर्ऋतिश्च वायुरीशान एव च ॥ पूजयंति क्रमेणेव भ्रममाणं दिवाकरम्॥श्रेयोर्थं देवशार्दूल सर्वे ब्रह्मादयः सुराः ॥५१॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि रथसप्तमीकल्पे सूर्यगतिवर्णनं नाम त्रिपंचाशत्तमोऽध्यायः ॥५३॥ ॥छ॥ ॥ रुद्र उवाच ॥ ॥ अहो हंसस्य माहात्म्यं वर्णितं भवतेदृशम् ॥ कथ्यतां पुनरेवेदं माहात्म्यं भास्करस्य तु ॥१॥ ॥ब्रह्मोवाच॥ ॥ आदित्यमंत्रमखिलं त्रैलोक्यं सचराचरम् ॥ भवत्यस्माज्जगत्सर्वं सदेवासुरमानुषम् ॥२॥ रुद्रेंद्रोपेंद्रचंद्राणां विप्रेंद्रत्रिदिवौकसाम् ॥ महाद्युतिमतां कृत्स्नं तेजो यत्सार्वलौकिकम् ॥ ॥३॥ सर्वात्मा सर्वलोकेशो देवदेवः प्रजापतिः ॥ सूर्य एष त्रिलोकस्य मूलं परमदैवतम् ॥ ४ ॥ अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठति ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥५॥सूर्यात्प्रसूयते सर्वं तत्र चैव प्रलीयते ॥ भावाभावौ हि लोकानामादित्यान्निःसृतौ पुरा ॥ ६ ॥ एतत्तु ध्यानिनां ध्यानं मोक्षं चाप्येष मोक्षिणाम् ॥ अत्र गच्छंति निर्वाणं जायंतेऽस्मात्पुनः प्रजाः॥७॥क्षणा मुहूर्ता दिवसा निशाः पक्षाश्च नित्यशः॥मासाः संवत्सराश्चैव ऋतवोऽथ युगानि च॥८॥ सदादित्यादृते ह्येषा कालसंख्या न विद्यते ॥कालादृते न नियमो नाग्निर्न हवनक्रिया ॥ ९ ॥ ऋतूनामविभागाच्च पुष्पमूलफलं कुतः ॥ कुतः सस्यविनिष्पत्तिस्तृणौषधिगणाः कुतः ॥१०॥ अभावो व्यवहाराणां जंतूनां दिवि चेह च ॥ जगत्प्रतपनमृते भास्करं वारितस्करम् ॥ ११ ॥ नावृष्ट्या तपते सूर्यो नावृष्ट्या परिविश्यते ॥ नावृष्ट्या विकृतिं धत्ते वारिणा दीप्यते रविः ॥ १२ ॥ वसंते कपिलः सूर्यो ग्रीष्मे कांचनसप्रभः ॥ श्वेतो वर्णेन वर्षासु पांडुः शरदि भास्करः ॥ १३ ॥ हेमंते ताम्रवर्णस्तु शिशिरे लोहितो रविः॥ इति वर्णाः समाख्याताःशृणु वर्णफलं हर ॥१४॥ कृष्णो भयाय जगतस्ताम्रः सेनापतिं विनाशयति ॥ पीतो नरेंद्रपुत्रं श्वेतस्तु पुरोहितं हंति ॥ १५ ॥ चित्रोथ वापि धूम्रो रवी रश्मिव्याकुलं करोत्युच्चैः ॥ तस्करशस्त्रनिपातैर्यदि न सलिलमाशु पातयति ॥ १६ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि रथसप्तमीकल्पे सूर्यमहिमवर्णनं नाम चतुष्पंचाशत्तमोऽध्यायः ॥५४ ॥ छ ॥ ॥ रुद्र उवाच ॥ ॥ रथयात्रा कथं कार्या भास्करस्येह मानवैः ॥ फलं च किं भवेत्तेषां यात्रां कुर्वंति ये रवेः ॥ १ ॥ विधिना केन कर्तव्या कस्मिन्काले सुरोत्तम ॥ कथं च भ्रामयेद्देवं रथारूढं दिवाकरम् ॥ २ ॥ देवस्य ये रथं भक्त्या भ्रामयंति वहंति च ॥ तेषां च किं फलं प्रोक्तं ये च नृत्यकरा नराः ॥ ३ ॥ भ्रमन्ति ये च देवेन नृत्यगीतपरायणाः ॥ प्रजागरं च कुर्वंति भक्त्या श्रद्धासमन्विताः ॥ ४ ॥ तेषां च किं फलं प्रोक्तं रथं यँच्छंति ये रवेः ॥ बलिं भक्तं च ये भक्त्या

१ विश्रमम्–इ० पा० । २ नाग्नेर्विहरणक्रिया–इ० पा० ।। ३ ऋतुनामविभागश्च–इ० पा० । ४ स्वापजागरणाः कुतः–इ० पा० । ५ नराः–इ० पा० । ६ रात्रँ च नभसि स्थितम्–इ० पा० । ७ गच्छंति–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिशंत्याह्निकभोजनम् ॥ ५ ॥ एतन्मे ब्रूहि निखिलं सुरज्येष्ठ सविस्तरम् ॥ लोकानां श्रेयसे देव परं कौतूहलं हि मे ॥ ६ ॥ ॥ ब्रह्मोवाच ॥ ॥ साधु पृष्टोऽस्मि भूतेश गणेशोसि त्रिलोचन ॥ शृणुष्वैकमना वच्मि यथाप्रश्नं सविस्तरम् ॥ ७ ॥ देवस्य रथयात्रेयं भास्करस्य महात्मनः ॥ इंद्रोत्सवस्तथा रुद्र मया ह्येतौ प्रकीर्तितौ ॥ ८ ॥ मर्त्यलोके शांतिहेतोर्लोकानां लोकपूजित ॥ प्रवर्तिताबुभौ यस्मिन्देशे देवमहोत्सवौ ॥ ९ ॥ न तत्रोपद्रवाः संति राजतस्करसंभवाः ॥ तस्मात्कार्याविमौ भक्त्या दुर्भिक्षस्येह शांतये ॥ १० ॥ शुक्लपक्षे तु सप्तम्यां मासि भाद्रपदे हर ॥ घृतेनाभ्यंगयेद्देवं पंचपूतांगजेन वै ॥ ११ ॥ अभ्यंगयेद्धृदेशं यः सर्षपैः श्रद्धयान्वितः ॥ दिने दिने जगन्नाथं प्रविष्टं वर्णके रविम् ॥ १२ ॥ स गच्छेद्यानमारूढो गैरिकं किंकिणीकृतम् ॥ वैश्वानरपुरं दिव्यं गंधर्वाप्सरशोभितम् ॥ १३ ॥ शाल्योदनं खंडमिश्रं वज्रं वज्रसमन्वितम् ॥ वर्णभक्तं प्रयच्छेद्यो भास्कराय दिनेदिने ॥ १४ ॥ आरूढः स विमानं तु ज्वालामालाकुलं शुभम् ॥ गच्छेन्मम पुरं देव स्तूयमानो महर्षिभिः ॥ १५ ॥ तस्मात्सर्वप्रयत्नेन भास्कराय नरैः शिव ॥ वर्णभक्तं प्रदातव्यं प्रविष्टस्येह वर्णकम् ॥ १६ ॥ घृतपूर्णं खंडवेष्टं कासारं मोदकं पयः ॥ दध्योदनं पायसं च संयावं गुडपूपकान् ॥ १७ ॥ ये प्रयच्छंति देवस्य भास्करस्येह वर्णकम् ॥ ते गच्छंति न संदेहो नरा वै मंदिरं मम ॥ १८ ॥ अहन्यहनि यो भक्त्या भास्कराय प्रयच्छति ॥ अभ्यंगाय घृतं देयं स याति परमां गतिम् ॥ १९ ॥ तथा यो वर्णभक्तं च अहन्यहनि भक्तितः ॥ स प्राप्येह शुभान्कामान्गच्छेत्स भवसालयम् ॥ २० ॥ चूर्णमुद्वर्तनायेह यः प्रयच्छेच्छुभं रवेः ॥ स याति परमं स्थानं यत्र देवो दिवाकरः ॥ २१ ॥ ततस्तं स्नापयेद्देवं पौषे मासि विधानतः ॥ सप्तम्यां शुक्लपक्षस्य शृणुष्वैकमनास्तथा ॥ २२ ॥ तीर्थोदकमुपानीय अन्यद्वाथ जलं शुभम् ॥ वेदोक्तेन विधानेन प्रतिमां स्थापयेद्बुधः ॥ २३ ॥ यजेद्धि तीर्थनामानि मनसा संस्मरन्बुधः ॥ प्रयागं पुष्करं देवं कुरुक्षेत्रं च नैमिषम् ॥ २४ ॥ पृथूदकं चंद्रभागां शोणं गोकर्णमेव च ॥ ब्रह्मावर्तं कुशावर्तं विल्वकं नीलपर्वतम् ॥ २५ ॥ गंगाद्वारं तथा पुण्यं गंगासागरमेव च ॥ कालप्रियं मित्रवनं शुंडीरस्वामिनं तथा ॥ २६ ॥ चक्रतीर्थं तथा पुण्यं रामतीर्थं तथा शिवम् ॥ वितस्ता हर्षपंथा वै तथा वै देविका स्मृता ॥ २७ ॥ गंगा सरस्वती सिंधुश्चंद्रभागा सनंदा ॥ विपाशा यमुना तापी शिवा वेत्रवती तथा ॥ २८ ॥ गोदावरी पयोष्णी च कृष्णा वेण्या तथा नदी ॥ शतरुद्रा पुष्करिणी कौशिकी सरयूस्तथा ॥ २९ ॥ तथान्ये सागराश्चैव सांनिध्यं कल्पयंतु वै ॥ तथाश्रमाः पुण्यतमा दिव्यान्यायतनानि च ॥ ३० ॥ एवं स्नानविधिं कृत्वा अर्चयित्वा प्रणम्य च ॥ धूपमर्घ्यं प्रदत्त्वा तु प्रतिमामधिवासयेत् ॥ ३१ ॥ त्रिरात्रं सप्तरात्रं वा मासं मासार्धमेव च ॥ स्थितं स्नानगृहे देवं पूजयेद्भक्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तो नरः ॥ ३२ ॥ चत्वरे लेपयेद्वेदिं चतुरस्रां शुभे कृताम् ॥ चतुर्दिशं श्वेतकुंभैर्वितानवरशोभिताम् ॥३३॥ कृष्णपक्षे तु माघस्य सप्तम्यां त्रिपुरां तक ॥ कृत्वाग्निकार्यं विधिवत्कृत्वा ब्राह्मणभोजनम् ॥ ३४ ॥ शंखभेरीनिनादैस्तु ब्रह्मघोषैश्च पुष्कलैः ॥ पुण्याहघोषैर्विविधैर्ब्राह्मणान्स्वस्ति वाच्य च ॥ ३५ ॥ ततोऽस्य परया भक्त्या सूर्यस्य परमात्मनः ॥ रथेन दर्शनीयेन किंकिणीजालमालिना ॥ सूर्यश्च भ्रामयेद्देवं महोत्सवपुरः सरम् ॥ ३६ ॥ शुक्लपक्षे तु माघस्य रथमारोपयेद्रविम् ॥ कृत्वाग्निहोमं विधिवत्तथा ब्राह्मणभोजनम् ॥ ३७ ॥ प्रीणयित्वा जनं सर्वं दक्षिणाभोजना दिना ॥ प्रपूज्य ब्राह्मणान्दिव्यान्भौमांश्चापि सुवाचकान् ॥ ३८ ॥ इतिहासपुराणाभ्यां वाचको ब्राह्मणोत्तमः ॥ ततो देवश्च इष्टश्च संपूज्यो यत्नत स्तदा ॥ ३९ ॥ माघस्य शुक्लपक्षस्य पंचम्यामेकभक्तकम् ॥ अयाचितं चतुर्थ्यां तु षष्ठ्यां नक्तं प्रकीर्तितम् ॥ ४० ॥ सप्तम्यामुपवासं तु आश्र माद्रोपयेद्रथम् ॥ अग्निकार्यं तु वै कृत्वा रथस्य पुरतः शिव ॥ ४१ ॥ षष्ठ्यां च रात्रौ भूतेश रथस्येहाधिवासनम् ॥ ब्राह्मणान्भोजयित्वा तु दिव्या न्भौमांश्च वाचकान् ॥ ४२ ॥ रथमारोपयेद्देवं सप्तम्यां भूतभावनम् ॥ सितायां माघमासे तु तस्य देवालयाग्रतः ॥ ४३ ॥ तत्रस्थस्यैव देवस्य कुर्या द्रात्रौ प्रजागरम् ॥ नानाविधैः प्रेक्षणकैर्दीपवृक्षोपशोभितैः ॥ ४४ ॥ शंखतूर्यनिनादैश्च ब्रह्मघोषैश्च पुष्कलैः ॥ कुर्यात्प्रजागरं भक्त्या देवस्य पुरतो निशि ॥ ४५ ॥ ततोऽष्टम्यां च यत्नेन देवं रथगतं नयेत् ॥ नगरस्योत्तरं द्वारं शंखभेरीनिनादितम् ॥ ४६ ॥ ततः पूर्वं दक्षिणं च द्वारं चापि तथा परम् ॥ एवं हि क्रियमाणायां यात्रायां वत्सरावधौ ॥ ४७ ॥ मानवाः सुखमेधंते राजा जयति चाहितान् ॥ नीरुजश्च जनाः सर्वे गवां शांतिर्भवे त्तथा ॥ ४८ ॥ कर्तारश्चापि यात्रायाः स्वर्गभाजो भवंति हि ॥ वोढारश्च तथा वत्स सूर्यलोकं व्रजंति वै ॥ ४९ ॥ ॥ रुद्र उवाच ॥ ॥ कथं संचा ल्यते ब्रह्मन्स्थापिता प्रतिमा सकृत् ॥ एतन्मे वद देवेश सुमहान्संशयो हि मे ॥ ५० ॥ ॥ ब्रह्मोवाच ॥ ॥ पूर्वमेव सहस्रांशोर्यानहेतोर्महात्मनः ॥ संवत्सरस्यावयवैः कल्पितोऽस्य रथो मया ॥ ५१ सर्वेषां तु रथानां वै स रथः प्रथमः स्मृतः ॥ तं दृष्ट्वा तु ततस्त्वन्ये स्यंदना विश्वकर्मणा ॥५२॥ कल्पिताः सर्वदेवानां सोमादीनामनेकशः ॥ विश्वकर्मकृतं प्राप्य रथं देवेन पुत्रक ॥५३॥ पूजार्थमात्मनो दत्तं मनवे सत्कुलोद्वह ॥ मनुनेक्ष्वाकवे दत्तं मर्त्यैः संपूज्यतां रविः ॥ ५४ ॥ अतस्तु रथयानेन चालनं विहितं रवेः ॥ तस्मान्न चालने दोषः सवितुश्चल एव सः ॥ ५५ ॥ यस्माद्रथेन पर्येति भास्करः पृथिवीमिमाम् ॥ गच्छन्न दृश्यते चैतन्मंडलं सवितुस्तथा ॥ ५६ ॥ अदृष्टं चलते यस्मात्तस्माद्वै पार्वतीप्रिय ॥ तदेवं रथयात्रासु दृष्टं



१ कथितः—इ० पा० । २ वाहनम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भानोर्मनीषिभिः ॥ ५७ ॥ अन्येषां चालनं नेष्टं देवानां पार्वतीप्रिय ॥ ब्रह्मविष्णुशिवादीनां स्थापितानां विधानतः ॥ ५८ ॥ तस्माद्रथेन देवस्य यात्रा कार्या विधानतः ॥ प्रजानामिह शांत्यर्थं प्रतिसंवत्सरं सदा ॥ ५९ ॥ कांचनो वाथ रौप्यो वा दृढदारुमयोऽपि वा ॥ दृढाक्षयुगचक्रश्च रथः कार्यः सुयंत्रितः ॥ ६० ॥ तस्मिन्नथवरे श्रेष्ठे कल्पिते सुमनोरमे ॥ आरोप्य प्रतिमां यत्नाद्योजयेद्वाजिनः शुभान् ॥ ६१ ॥ हरिल्लक्षणसंपन्नान्सुसु खान्वशवर्तिनः॥कुंकुमेन समालब्धांश्चामरस्रग्विभूषितान् ॥ ६२ ॥ सदश्वान्योजयित्वा तु रथस्यार्घ्यं प्रदाय च ॥ विबुधान्पूजयित्वा तु धूपमाल्या नुलेपनैः ॥ ६३ ॥ आहारैर्विविधैश्चापि भोजयित्वा द्विजोत्तमान् ॥ दीनांधकृपणादींश्च सर्वान्संतर्प्य शक्तितः ॥ ६४ ॥ न कंचिद्विमुखं कुर्यादुत्त माधममध्यमम् ॥ सूर्यक्रतौ तु वितते एवमाहुर्मनीषिणः ॥ ६५ ॥ यश्चिंतयति भग्नाशः क्षुधावातप्रपीडितः ॥ अदातुर्हि पितॄंस्तेन स्वर्गस्था नपि पातयेत् ॥ ६६ ॥ यज्ञश्च दक्षिणाहीनः सवितुर्न प्रशस्यते ॥ तस्मान्नानाविधैः कामैर्भक्ष्यलेह्यसमन्वितैः ॥ ६७ ॥ पूजयित्वा जनं सर्वमि ममुच्चारयेन्मनुम् ॥ बलिं गृह्णंतु मे देवा आदित्या वसवस्तथा ॥६८॥ मरुतोथाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ असुरा यातुधानाश्च रथ स्था यास्तु देवताः ॥ ६९ ॥ दिग्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥ जगतः स्वस्ति कुर्वंतु ये च दिव्या महर्षयः ॥ ७० ॥ मा विघ्नं मा च मे पापं मा च मे परिपंथिनः ॥ सौम्या भवंतु तृप्ताश्च देवा भूतगणास्तथा ॥ ७१ ॥ वामदेव्यैः पवित्रैश्च मानस्तोकरथंतरैः ॥ आकृष्णेन रंजसा ऋचमेकामुदाहरेत् ॥ ७२ ॥ ततः पुण्याहशब्देन कृतवादित्रनिःस्वनैः ॥ रथक्रमणकं कुर्याद्वर्त्मना सुसमेन तु ॥ पुरुषैश्चापि वोढव्यः सूर्यभक्तिस मन्वितैः ॥ ७३ ॥ सुकृतैः प्रग्रहैर्दांतैर्बलीवर्दैरथापि वा ॥ यथा पर्यटनं च स्याद्विषमे पथि गच्छतः ॥ ७४ ॥ उपवासस्थितैर्विप्रैर्दिव्यैर्भौमैश्च सुव्रतैः ॥ त्रिंशद्भिः षोडशैर्वापि प्रतिमां भास्करस्य तु॥७५॥ स्थानात्प्रचाल्य वै रुद्र रथमारोपयेच्छनैः॥ राज्ञी च निक्षुभा रुद्र भार्ये तस्य महात्मनः ॥ ७६ ॥ शनैरारोपयेद्रुद्र उभयोः पार्श्वयो रथे ॥ निक्षुभां दक्षिणे पार्श्वे राज्ञीं चाप्युत्तरे तथा ॥ ७७ ॥ द्वावेव ब्राह्मणौ तस्मिन्दिव्यो भौमश्च पार्श्वयोः॥ब्रह्मकल्पस्तथा भौमः कूबरस्योपरि स्थितः॥७८॥ गरुडं पृष्ठतश्चास्य वल्गमानं प्रकल्पयेत्॥आतपत्रं तथा श्वेतं स्वर्णदंडमनौपमम्॥७९॥ सुवर्णबिंदुभिश्चित्रं मणिमुक्ताफलोज्ज्वलम् ॥ ततस्त्विन्द्रधनुःप्रख्यं स्वर्णदंडमथाव्रणम् ॥ ८० ॥ ध्वजं प्रकल्पयेत्तस्य पताकाभिरलंकृतम् ॥ भूतेश नानावर्णाभिस्सप्तभिः कामनाशन॥८१॥ ध्वजोपरिचरं व्योम अरुणाधिष्ठितं भवेत् ॥ रथतुंडगतान्विप्रान्नयेद्रथवरं रवेः ॥८२॥सारथ्यं रुद्र कुर्याद्वै

१ यत्नतः-इ० पा० । २ प्रीणयित्वा-इ० पा० । ३ यातुधानाद्याः-इ० पा० । ४ गुर्वैः-इ० पा० । ५ परम्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रेयोऽर्थमात्मनः सदा ॥ नारुहेत रथेऽश्रद्धो यदीच्छेच्छ्रेय आत्मनः ॥८३॥ रथमारोहतस्तस्य क्षयं गच्छति संततिः ॥ स रथो देवदेवस्य वोढव्यो ब्राह्मणैः सदा ॥८४॥ क्षत्रियैश्चापि वैश्यैश्च न तु शूद्रैः कदाचन ॥ ये त्वन्यदेवताभक्ता ये च मद्यप्रवर्तकाः॥८५॥नैतैः शूद्रैश्च वोढव्य इतरैस्तु सदो ह्यते ॥ उपवासव्रतोपेतैर्वोढव्यः पार्वतीप्रिय ॥ ८६ ॥ स्वस्थानाच्चलितो रुद्र पूर्वद्वारं व्रजेत वै ॥ दिनमेकं वसेत्तत्र पूज्यमानो नृपेण वै ॥ ८७ ॥ नानाविधैः प्रेक्षणकैः पुराणश्रवणेन च ॥ नानाविधैर्ब्रह्मघोषैर्ब्राह्मणानां च तर्पणैः ॥ ८८ ॥ स्थित्वा तु तत्राष्टम्यंतं नवम्यां चलते पुनः ॥ व्रजेत दक्षिणं द्वारं नगरस्य त्रिलोचन ॥ ८९ ॥ तत्रापि दिनमेकं तु तिष्ठतेंधकसूदन ॥ स्थितेत्र तैः पूज्यमानो यथा राज्ञा तथा नृपैः ॥९०॥ तस्मादपि चलेद्रुद्र द्वारं पश्चात्ततोत्तरम् ॥ तत्रापि पूज्यः शूद्रैस्तु विधिवत्प्रियदर्शन ॥९१॥ तस्माच्च चलते रुद्र व्रजेन्मध्यं पुरस्य तु ॥ तत्रस्थं पूजयंति स्म ब्राह्मणाः श्रद्धयान्विताः ॥ ९२ ॥ शंखवादित्रनिनिर्घोषैस्तथा प्रेक्षणकैर्वरैः ॥ ब्रह्मघोषैश्च विविधैः समंताद्दीपकैः शुभैः ॥ ९३ ॥ नानाविधैर्वित्तदानैर्ब्राह्मणानां च तर्पणैः ॥ दीनांधकृपणानां च तर्पणैस्त्रिपुरांतक ॥ ९४ ॥ पुरमध्याच्च चलितस्तिष्ठेत्प्राप्य स्वमंदिरम् ॥ इत्थं प्राप्य स्थितो देवः पुरतो मंदिरस्य तु ॥ ९५ ॥ तत्र स्थितः पूजनीयो भवेत्पौरेण कृत्स्नशः ॥ पूज्यमानस्त्वहोरात्रं रथारूढस्तु तिष्ठति ॥ ९६ ॥ अपरे दिने व्रजेत्स्थानं तच्चिरंतनमादरात् ॥ त्रयोदश्यां व्यतीतायां चतुर्दश्यां त्रिलोचन ॥ ९७ ॥ सदैवं भ्रामयेद्देवं ग्रहेशं दुरितापहम् ॥ परिवारयुतं रुद्र सानुगं परमेश्वरम् ॥ ९८ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि रथसप्तमीकल्पे रथयात्रावर्णनं नाम पंचपंचाशत्तमोध्यायः ॥ ५५ ॥ छ ॥ ॥ श्रीरुद्र उवाच ॥ ॥ कथं प्रचालयेद्ब्रह्मन्रथस्थं तमनाशनम् ॥ अनुगाश्च कथं चास्य के च ते अनुगाः क्रमात् ॥ १ ॥ भूयोभूयः सुरश्रेष्ठ विस्तरान्मम श्रेयसे ॥ वद सर्वं जगन्नाथ परं कौतूहलं हि मे॥२॥ ॥ ब्रह्मोवाच ॥ ॥ शनैर्नयेद्रथं रुद्र वर्त्मना सु समेन तु ॥ यथा पर्यटनं तु स्याद्विषमे पथि गच्छतः॥ ३ ॥ प्रतीहाररथं पूर्वं नयेन्मार्गविशुद्धये ॥ तस्मादनंतरं रुद्र दंडनायकमादरात् ॥४॥ पिंगलं च ततस्तस्य पृष्ठगं चादरान्नयेत् ॥ रक्षको द्वारको यस्माद्रथारूढौ तु पृष्ठतः ॥ ५ ॥ रथारूढस्तथा दिंडी देवस्य पुरतः स्थितः ॥ तस्मादपि तथा रुद्र लेखको भास्करप्रियः ॥ ६ ॥ शनैःशनैर्नयेद्रुद्र रथं देवस्य यत्नतः ॥ युगाक्षचक्रभंगो वा यथा न स्यात्त्रिलोचन ॥ ७ ॥ ईषाभंगे द्विजभयं भग्नेऽक्षे क्षत्रियक्षयः ॥ तुलाभंगे तु वैश्यानां शय्याशूद्रक्षयो भवेत् ॥ ८ ॥ युगभंगे त्वनावृष्टिः पीठभंगे प्रजाभयम् ॥ परचक्रागमं विद्याच्चक्रभंगे रथस्य

१ शूद्रः–इ० पा० । २ व्रजेद्वेः–इ० पा० । ३ बक्षि–इ० पा० । ४ भयम् इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तु ॥ ९ ॥ ध्वजस्य पतने चापि नृपभंगं विनिर्दिशेत् ॥ व्यङ्गितप्रतिमायां तु राज्ञो मरणमादिशेत् ॥ १० ॥ छत्रभंगाद्भयं रुद्र युवराज्ञो विनिर्दिशेत् ॥ उत्पन्नेष्वेवमाद्येषु उत्पातेष्वशुभेषु च॥११॥ बलिकर्म पुनः कुर्याच्छांतिहोमं तथैव च ॥ ब्राह्मणान्वाचयेद्भूयो दद्याद्दानानि चैव हि॥१२॥ पूर्वोत्तरे च दिग्भागे रथस्याग्निं प्रकल्पयेत्॥ समिद्भिस्तु घृताक्ताभिर्होमयेज्जातवेदसम्॥१३॥स्वाहाकारान्वदन्सम्यग्दैवतेभ्यस्त्वनुक्रमात् ॥ ग्रहेभ्यश्च प्रजाभ्यश्च नामान्युद्दिश्य होमयेत् ॥१४॥ प्रथमं चाग्नये स्वाहा स्वाहा सोमाय चैव हि॥स्वाहा प्रजापतये च देया आहुतयः क्रमात्॥१५॥स्वस्त्यस्त्विह च विप्रेभ्यः स्वस्ति राज्ञे तथैव च ॥ गोभ्यः स्वस्ति प्रजाभ्यश्च जगतः शांतिरस्तु वै ॥१६॥ शं नोऽस्तु द्विपदे नित्यं शांतिरस्तु चतुष्पदे॥ शं प्रजाभ्यस्तथैवास्तु शं सदात्मनि चास्तु वै ॥ १७ ॥ भूः शांतिरस्तु देवेश भुवः शांतिस्तथैव च ॥ स्वश्चैवास्तु तथा शांतिः सर्वत्रास्तु तथा रवेः॥ ॥ १८ ॥ त्वं देव जगतः स्रष्टा पोष्टा चैव त्वमेव हि ॥ प्रजापाल ग्रहेशान शांतिं कुरु दिवस्पते ॥ १९ ॥ इदमन्यच्च वक्ष्यामि शांत्याः परमकारणम् ॥ यात्राकारणभूतस्य पुरुषस्य स्वजन्मनः ॥२०॥ दुःस्थान्ग्रहांश्च विज्ञाय ग्रहशांतिं समाचरेत्॥प्रादेशमात्राः कर्तव्याः समिधोऽथ प्रमाणतः॥ ॥ २१ ॥ अर्कमय्यो रवेः कार्याः पालाश्यः शशिनः स्मृताः ॥ खादिर्यश्चैव भौमाय आपामार्ग्योऽब्जसूनवे ॥२२॥ आश्वत्थ्यश्चाथ जीवाय औदुंबर्यः सिताय च ॥ असिताय शमीमय्यो दूर्वा कार्यास्तु राहवे॥२३॥केतवे तु कुशाः कार्याः दक्षिणाश्चाप्यतः शृणु॥सूर्याय शोभनां धेनुं शंखं दद्याद्दथेंदवे॥२४॥रक्तमनड्वाहं भौमाय कांचनं सोमसूनवे ॥ जीवाय वाससी देये शुक्रायाश्वं सितं हर॥२५॥ शनैश्चराय गां नीलां राहवे भांडपायसम् ॥ छागं तु केतवे दद्याच्छ्रणेषां भोजनान्यपि ॥ २६ ॥ गुडौदनं तु सूर्याय सोमाय घृतपायसम् ॥ हविष्यमन्नं भौमाय क्षीरान्नं सोमसूनवे ॥ २७ ॥ दध्योदनं तु जीवाय शुक्रायाथ घृताशनम् ॥ तिलपिष्टांश्च माषांश्च सूर्यपुत्राय दापयेत् ॥ २८ ॥ राहवे दापयेन्मांसं केतवे चित्रमोदनम् ॥ सौवीरमारनालं च स्विन्नबीजं च कांजिकम् ॥ २९ ॥ यथा बाणप्रहाराणां वारणं कवचं स्मृतम् ॥ तथा दैवोपघातानां शांतिर्भवति वारणम् ॥ ३० ॥ अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च ॥ नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥३१॥ ग्रहाः पूज्याः सदा रुद्र इच्छता विपुलं यशः ॥ श्रीकामः शांतिकामो वा ग्रहयज्ञं समाचरेत् ॥ ३२ ॥ वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन्पुनः ॥ यानपत्या भवेन्नारी दुष्प्रजाश्चापि या भवेत् ॥ ३३ ॥ बाला यस्याः प्रम्रियंते या च कन्याप्रजा भवेत् ॥ राज्यभ्रष्टो नृपो यस्तु दीर्घरोगी च यो भवेत् ॥ ३४ ॥ ग्रहयज्ञः स्मृतस्तेषां

१ प्रतिमायां व्यंगितायाम्–इ० पा० । २ दुःस्था ग्रहाश्च विज्ञेयाः पूजाशांतिं समाचरेत्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानवानां मनीषिभिः ॥ तस्मादसौ सदा कार्यः श्रेयोऽर्थं जानता हर ॥ ३५ ॥ दत्तपुष्पः क्रूरदृक्च पुष्पजो धिषणस्तथा ॥ सितासितौ तथा रुद्र उपरागः शिखी तथा ॥ ३६ ॥ एते ग्रहा महाबाहो विद्वद्भिः पूजिताः सदा ॥ ताम्रकात्स्फाटिकाद्रक्तचन्दनात्स्वर्णकादपि ॥ ३७ ॥ राजतादायसा त्सीसाद्ग्रहाः कार्याः प्रयत्नतः ॥ स्वर्णे वाथ पटे लेख्या यथाशास्त्रं महेश्वर ॥ ३८ ॥ यथावर्णं प्रदेयानि वासांसि कुसुमानि च ॥ गंधाश्च बलयः श्चैव धूपो देयश्च गुग्गुलः ॥ ३९ ॥ कर्तव्या मंत्रवंतश्च चरवः प्रतिदैवतम् ॥ आकृष्णेन इमं देवा अग्निर्मूर्धा दिवः ककुत् ॥ ४० ॥ उद्बुध्यस्व यथासंख्यमृच एताः प्रकीर्तिताः ॥ बृहस्पते अतियदर्यस्तथैवान्नात्परिस्रुतः ॥ ४१ ॥ शं नो देवी तथा कांडात्केतुं कृण्वन्निमाः क्रमात् ॥ पूर्वोक्ताः समिधस्त्वत्र यथाशास्त्रं प्रहोमयेत् ॥ ४२ ॥ एकैकस्याष्टशतकमष्टाविंशतिरेव वा ॥ होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः ॥ ४३ ॥ पूर्वोक्त भोजनं यद्धि ब्राह्मणेभ्यो निवेदयेत् ॥ शक्तितो वा यथालाभं दक्षिणा तुं विधानतः ॥ ४४ ॥ यश्च यस्य यदा दुःस्थः स तं यत्नेन पूजयेत् ॥ मयैषां हि वरो दत्तः पूजिताः पूजयिष्यथ ॥ ४५ ॥ ग्रहाधीना नरेंद्राणामुच्छ्रयाः पतनानि च ॥ भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥ ४६ ॥ ग्रहा गावो नरेंद्राश्च गुरवो ब्राह्मणास्तथा ॥ पूजिताः पूजयंत्येते निर्दहंत्यपमानिताः ॥ ४७ ॥ यथा समुत्थितं यंत्रं यंत्रेणैव प्रहन्यते ॥ तथा समुत्थितां पीडां ग्रहशांत्यां प्रशामयेत् ॥ ४८ ॥ यज्वनां सत्यवाक्यानां तथा नित्योपवाँसिनाम् ॥ जपहोमपराणां च सर्वं दुष्टं प्रशाम्यति॥ ४९ ॥ एवं कृत्वा प्रजाशांतिं कृत्वा च स्वस्तिवाचनम् ॥ पुनः सज्जं रथं कृत्वा कुर्यात्प्रक्रमणं हर ॥ ५० ॥ मार्गं शेषं नयित्वा तु नयेद्देवालयं रविम् ॥ पूजयित्वा ततः पूर्वा याः प्रोक्ता रथदेवताः ॥ ५१ ॥ यथा पूज्या ग्रहाः सर्वे उत्पातेषु त्रिलोचन ॥ रथदेवास्तथा पूज्या याः स्थिता रथमाश्रिताः ॥ ५२ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे आदित्यमहिमवर्णनं नाम षट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ छ॥ ॥ ब्रह्मोवाच ॥ ॥ क्षीरं यवागूर्ब्रह्मणे स्यात्परमान्नं त्रिलोचन ॥ फलानि कार्तिकेयस्य दद्याद्भूतेशप्रीतये ॥ विवस्वते मधु मांसं तथा मद्यं च सुव्रत ॥ १ ॥ पुरुहूताय भक्ष्याणि सानुगाय निवेदयेत् ॥ हविरन्नमग्नये स्यादग्रान्नं विष्णवे तथा ॥ २ ॥ राक्षसेभ्यः समैरेयं दद्यान्मांसौदनं हर ॥ संस्कृतं पिशितान्नं च रेवताय निवेदयेत् ॥ ३ ॥ तिलान्नं पितृराजाय दद्यात्त्रिपुरसूदन ॥



१ यथाक्रमम्–इ० पा० । २ त्रिलोचन–इ० पा० । ३ मनुमं–इ० पा० । ४ च विशेषतः–इ० पा० । ५ अमीषाम्–इ० पा० । ६ शांतिः प्रशोधयेत्–इ० पा० । ७ सेविनाम्–इ० पा० । ८ सर्वाः–इ० पा० । ९ देवताः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आश्विनाभ्यामपूपांस्तु वसुभ्यो मांसमोदनम् ॥ ४ ॥ पितृभ्यः पायसं दद्याद्घृताक्तं मधुना सह ॥ कात्यायन्यै यवागूं च श्रियै दद्यात्तथा दधि ॥ ५ ॥ सरस्वत्यै त्रिमधुरं वरुणायेक्षुरसौदनम् ॥ खांडवान्नं धनपतावेवं मित्रे त्रिलोचन ॥ ६ ॥ सस्नेहेन तु तक्रेण मरुद्भ्यस्तर्पणं स्मृतम् ॥ मांसान्नभक्तसूपांश्च मातृभ्यो वै निवेदयेत् ॥ ७ ॥ उल्लेपिकाश्च भूतेभ्यो जलं सूर्याय वै हर ॥ दद्याद्गणाधिपतये मोदकांस्त्रिपुरांतक ॥ ८ ॥ शष्कुल्यस्तु नैर्ऋताय देयाः स्युर्गणनायक ॥ सर्वभक्ष्याणि विश्वेभ्यो दातव्यानि समंततः ॥ ९ ॥ क्षीरौदनमृषिभ्यस्तु क्षीरं नागेभ्य एव हि ॥ सूर्यरथाय बलिं दद्यात्कुर्यांद्धि सार्वभौतिकम् ॥ १० ॥ उद्वर्तनं सुरा मांसं तद्वाहेभ्यश्च भारत ॥ आज्यं च ब्रह्मणे दद्यात्त्र्यंबकाय तिलांस्तथा ॥ ११ ॥ स्वाहातनये वै लाजा दातव्यास्त्रिपुरांतक ॥ भास्कराय सदा दद्यात्कोविदारं त्रिलोचन ॥ १२ ॥ राजवृक्षं तथेंद्राय हविष्यं पावकाय च ॥ चक्रिणे सप्तधान्यं च गरुडे मत्स्यमोदनम् ॥ १३ ॥ यक्षेभ्यो विविधान्नानि निर्यासं रेवते त्यजेत् ॥ वैकंकतस्रजो रुद्र यमाय परिकीर्तिताः ॥ १४ ॥ देयं स्यात्कर्णिकारं तु अश्विभ्यां वृषभध्वज ॥ श्रियै पद्मानि देयानि चंडिकायै सुचंदनम् ॥ १५ ॥ नवनीतं सरस्वत्यै विनतायै तथामिषम् ॥ पुष्पाण्यप्सरसां रुद्र मालत्याः परिकीर्त्तितम् ॥ १६ ॥ वरुणायाग्निमंथं तु फलं मूलं निर्ऋतये ॥ बिल्वं दद्यात्कुबेराय कपित्थं मरुतां तथा ॥ १७ ॥ गंधर्वेभ्यस्त्वारग्वधं दद्यात्त्रिपुरसूदन ॥ वासवेभ्यस्तु कर्पूरं दद्याद्दारु गणाधिपे ॥ १८ ॥ पितृभ्यः पिण्डमूलानि भूतेभ्यश्च विभीतकम् ॥ गोभ्यो यवान्प्रदद्याद्वै मातृभ्यश्चाक्षतान्हर ॥ १९ ॥ गुग्गुलं विघ्नपतये विश्वेभ्यो देयमोदनम् ॥ ऋषिभ्यो ब्रह्मवृक्षं तु नागेभ्यो विषमुत्तमम् ॥ २० ॥ भास्करस्येह देयानि सकलानि गणाधिप ॥ मधुसर्पिस्तथोक्तानि गैरिकस्य त्रिलोचन ॥ २१ ॥ न्यग्रोधं तस्य वाहेभ्यो भक्त्या रुद्र निवेदयेत् ॥ सायं प्रातस्तु मध्याह्ने सदैकाग्रमना हर ॥ २२ ॥ सर्वेषां शक्तितो भक्त्या दद्याद्धूपं विचक्षणः ॥ मंत्रतो देवशार्दूल यो यस्येह प्रकीर्तितः ॥ २३ ॥ शान्त्यर्थं ब्राह्मणेभ्यस्तु तिलान्दद्याद्विचक्षणः ॥ वैश्वानरे वा जुहुयाद् घृतेन सहितान्हर ॥ २४ ॥ देवानाममृतं ह्येते पितॄणां हि स्वधामृतम् ॥ शरणं ब्राह्मणानां च सदा ह्येतान्विदुर्बुधाः ॥ २५ ॥ कश्यपस्यांगजा ह्येते पवित्राश्च तथा हर ॥ स्नाने दाने तथा होमे तर्पणे ह्यशने पराः ॥ २६ ॥ इत्थं देवान्ग्रहांश्चैव पूजयित्वा प्रयत्नतः ॥ अवतार्य रथाच्चैनं मण्डले स्थापयेत्पुनः ॥ २७ ॥ कृत्वा त्वारार्तिकं यत्नाद्दीपतोययवाक्षतैः ॥ कार्पासबीजलवणतुषैर्दुष्टदृष्टिशांतये ॥ २८ ॥ वेदीमारोपयेत्पश्चात्पत्नीभ्यां सह सुव्रत ॥ तत्रस्थं पूजयेद्देवं दिनानि दश सुव्रत ॥ २९ ॥ दशाहिकेति विख्याता या पूजा

१ खंडं मांसम्-ख० पा० । २ यथाविधि-ख० पा० । ३ देयम्-ख० पा० । ४ निवाधनं: ख० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भूतले हर ॥ तथा संपूजयेद्देवं चतुर्थेऽह्नि तथा हर ॥३०॥ चतुर्थेऽहनि कर्तव्यं यत्नाद्धि स्नपनं रवेः ॥ अभ्यंगभोजनाद्यैस्तु पूजासत्कारमंडलैः ॥ ॥३१॥अनेन विधिनापूज्य दशाहानि दिवाकरम् ॥ ततो नयेत्परं स्थानं यत्तत्पूर्वमथालयम्॥ ३२ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि रथसप्तमीकल्प आदित्यमहिमवर्णनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ अनेन विधिना यस्तु कुर्याद्वा कारयेत वा ॥ यात्रां भगवतो भक्त्या भास्करस्यामितौजसः ॥ १ ॥ स परार्धं तु वर्षाणां सूर्यलोके महीयते ॥ कुले न जायते तस्य दरिद्रो व्याधितोऽपि वा ॥ २ ॥ अभ्यंगाय घृतं यस्तु भास्कराय प्रयच्छति ॥ कृते तु वर्णतिलके स गच्छेत्सुरभीपुरम् ॥ ३ ॥ तीर्थोदकं तु यो भक्त्या गंगायाश्च तथोदकम् ॥ स्नानार्थमानयेद्यस्तु भास्करस्य त्रिलोचन ॥ ४ ॥ भक्त्या वर्णत्रयं दद्याद्भास्करस्य त्रिलोचन ॥ समाप्येहाखिलान्कामान्प्राप्नुयाद्वरुणालयम् ॥ ५ ॥ रक्तवर्णं तु यो दद्याद्धविष्यान्नं गुडौदनम् ॥ स गच्छेद्दीप्तिमान्रुद्र सूर्यलोकं पुरं वरम् ॥ ६ ॥ गच्छेत्पुरवरे रुद्र यत्र देवः प्रजापतिः ॥ स्नापयेद्यस्तु वा भक्त्या भास्करं पूजयेत्तथा ॥ ७ ॥ स गच्छेद्दीप्तिमान्रुद्र सूर्यलोकं न संशयः ॥ रथमारोपयेद्यस्तु रथमार्गं प्रमार्जति ॥ ८ ॥ स याति वातसालोक्यं वाततुल्यपराक्रमः ॥ रथस्य गच्छतो यस्तु मार्गे कुर्यात्सुमण्डलम् ॥ ९ ॥ स लोकं प्राप्नुयात्पुण्यं मारुतं नात्र संशयः ॥ सूर्यस्य गच्छतो यस्तु मार्गं कुर्यात्सुमण्डलम् ॥ १० ॥ स लोकं प्राप्नुयात्पुण्यं यः कुर्यान्मार्गमादरात्॥ पुष्पप्रकरशोभाढ्यं शुभतोरणमंडितम् ॥११॥ शंखतूर्यनिनादाढ्यं तथा प्रेक्षणकान्वितम् ॥ स याति परमं स्थानं यत्र देवो विभावसुः ॥ १२ ॥ देवेन सहितो यस्तु नृत्यन्गायंस्तथार्चयन् ॥ कुर्यान्महोत्सवं भक्त्या स याति परमं पदम् ॥ १३ ॥ प्रजागरं यस्तु कुर्याद्देवे रथगते रवौ ॥ स सुखी पुण्यवान्नित्यं मोदते शाश्वतीः समाः॥१४॥ भक्तदासादिकं सर्वं यो ददाति रवेर्नरः॥संप्राप्येहाखिलान्कामान्सूर्यलोकमवाप्नुयात् ॥ १५ ॥ रथारूढस्य सूर्यस्य भ्रमतो दर्शनं हर ॥ दुर्लभं देवशार्दूल विशेषात्पुरतो व्रजन् ॥ १६ ॥ उत्तराभिमुखं यांतं तथा वै दक्षिणामुखम् ॥ धन्यः पश्यति देवेशं भास्करं भक्तवत्सलम् ॥ १७ ॥ अथ संवत्सरे प्राप्ते भानोर्यात्रादिने यदि ॥ रथप्रक्रमणं तत्र न कथंचित्कृतं भवेत् ॥ १८ ॥ ततो वै द्वादशे वर्षे कर्तव्यं भूतिमिच्छता ॥ इन्द्रध्वजस्य चाप्येवं यदि नोत्थापनं कृतम् ॥ १९ ॥ ततो वै द्वादशे वर्षे कर्तव्यं नान्तरा पुनः ॥ यात्रायाश्चापि ये भंगं कुर्वंति वृषभध्वज ॥ २० ॥ मन्देहा नाम ते ज्ञेया राक्षसा नात्र संशयः ॥ ये कुर्वन्ति

१ सवितुः—इ० पा० । २ स्नानार्थमानयेद्यस्तु—इ० पा० । ३ शुभास्तरणमण्डितम्—इ० पा० । ४ दद्यात्—इ—पा० । ५ भक्त्या दद्याह्निकासंज्ञम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथा यात्रां नरा धर्मध्वजस्य तु ॥ २१ ॥ इन्द्रादिदेवास्ते ज्ञेया गताश्च परमं पदम् ॥ पुनर्यात्राविधिं चेमं समासात्कथयामि ते ॥ २२ ॥ यं श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ वर्तमाने तु वै माघे रथे देवगणाश्रिते ॥ २३ ॥ स तस्मिन्नेव मनसा स्थापनीयो रथोपरि ॥ द्यौर्मही च द्विमूर्तिस्थे यथापूर्वं प्रतिष्ठिते ॥ २४ ॥ तथैव राज्ञी द्यौर्ज्ञेया निक्षुभा पृथिवी स्मृता ॥ एताभ्यामपि देवीभ्यां यथैव सवितुस्तथा ॥ २५ ॥ दिंडिनः पिंगलादीनां पृथुः कार्यो रथक्रमः ॥ मनसा चिन्तयेदन्यां यथास्थानेषु देवताम् ॥ २६ ॥ दिक्पालाँल्लोकपालांश्च कल्पयेन्मनसैव तु ॥ देवो वेदमयश्चायं सर्वदेवमयस्तथा ॥ २७ ॥ मंडलमृङ्मयं चैव छन्दांस्यास्यं प्रकीर्तितम् ॥ गायत्री चैव त्रिष्टुप्च जगत्यनुष्टुबेव च ॥ २८ ॥ पंक्तिश्च वृहती चैव उष्णिगेव च सप्तमी ॥ ततो देवमयत्वाच्च च्छन्दसां चैव कल्पनात् ॥ २९ ॥ ततो वेदमयत्वाच्च तरणिर्लोकपूजितः ॥ रथप्रक्रमणात्सूर्यो वोढव्यो ब्रह्मवादिभिः ॥ ३० ॥ उपवासपरैर्युक्तैर्वेदवेदांगपारगैः ॥ रथं तु नारुहेच्छूद्रो भास्करस्य त्रिलोचन ॥ ३१ ॥ आरुह्य तरणेर्यानं व्रजेच्छूद्रो ह्यधोगतिम् ॥ यथोक्तकरणाद्रुद्र सदा शांतिर्भवेन्नृणाम् ॥ ३२ ॥ नायकश्चापि सर्वेषां देवानां तु दिवाकरः ॥ विन्यसेत्तु रथानां तु देवतायतनेषु च ॥ ३३ ॥ ततो धूपोपहारैस्तु पूजयेत्प्रथमं रविम् ॥ दिग्देवानुचरांश्चैव पूजयेत्पूज्यते श्रिया ॥ ३४ ॥ अपूज्य प्रथमं सूर्यमपरान्यस्तु पूजयेत् ॥ तत्तद्भूतकृतं पाद्यं न प्रगृह्णंति देवताः ॥ ३५ ॥ यात्राकाले तु संप्राप्ते सवितुर्दीक्षितां तनुम् ॥ ये द्रक्ष्यंति नरा भक्त्या ते भविष्यंत्यकल्मषाः ॥ ३६ ॥ पौर्णमास्याममायां च दर्शनं पुण्यदं स्मृतम् ॥ सप्तम्यां च तथा षष्ठ्यां दिने तस्य रवेस्तथा ॥ ३७ ॥ आषाढी कार्त्तिकी माघी तिथ्यः पुण्यतमाः स्मृताः ॥ महाभाग्यं तिथेः पुण्यं यथा शास्त्रेषु गीयते ॥ ३८ ॥ कार्त्तिक्यां तु विशेषेण महाकार्तिक्युदाहृता ॥ एवं कालसमायोगाद्यात्राकालो विशिष्यते ॥ ३९ ॥ दर्शनं च महापुण्यं सर्वपापहरं भवेत् ॥ उपवासपरो यस्तु तस्मिन्काले यतव्रतः ॥ ४० ॥ पूजयेत्तु रविं भक्त्या स गच्छेत्परमां गतिम् ॥ देवोऽयं यज्ञपुरुषो लोकानुग्रहकांक्षया ॥ ४१ ॥ प्रतिमावस्थितो भूत्वा पूजां गृह्णात्यनुग्रहात् ॥ स्नानाद्दानाज्जपाद्धोमात्संयोगाद्देवकर्मणः ॥ ४२ ॥ कूर्चानां वपनाच्चैव दीक्षितः पुरुषो भवेत् ॥ कचानां वापनं कार्यं सूर्यभक्तैः सदा नरैः ॥ ४३ ॥ सूर्यक्रतौ शुचिस्त्वेवं दीक्षितः पुरुषो भवेत् ॥ चतुर्णामपि वर्णानां भक्त्या सूर्यस्य नित्यदा ॥ ४४ ॥ एवं येऽत्र करिष्यंति ते नरा नित्यदीक्षिताः ॥ चीर्णव्रता महात्मानस्ते यास्यंति परां गतिम् ॥ ४५ ॥ इत्येषा कथिता रुद्र रथयात्रा दिवस्पतेः ॥ यां श्रुत्वा

१ वा गगनाश्रिते—इ० पा० । २ रथसंक्रमणे—इ० पा० । ३ हि—इ० पा० । ४ वे तद्भूतकृतं पाद्यं न प्रगृह्णन्ति देवताः—इ० पा० । ५ दक्षिणाम्—इ० पा० । ६ यः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाचयित्वा च सर्वरोगैर्विमुच्यते ॥ ४६ ॥ कृत्वा च विधिवद्भक्त्या याति सूर्यसदो नरः ॥ रथाह्वा कथिता रुद्र समासात्सप्तमी शुभा ॥ ४७ ॥ भूयोऽपि श्रूयतां रुद्र सप्तमीं गदतो मम ॥ ४८ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे रथयात्रावर्णनं नामाष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ माघे मासि तथा देव सिते पक्षे जितेंद्रियः ॥ षष्ठ्यामुपोषितो भूत्वा गंधपुष्पोपहारतः ॥ १ ॥ पूजयित्वा दिनकरं रात्रौ तस्याग्रतः स्वपेत् ॥ विबुद्धस्त्वथ सप्तम्यां भक्त्या भानुं समर्चयेत् ॥ २ ॥ ब्राह्मणान्भोजयेत्पश्चाद्वित्तशाठ्यं विवर्जयेत् ॥ खंडवेष्टैर्मोदकैश्च तथेक्षुगुडपूपकैः ॥ ३ ॥ अथ संवत्सरे पूर्णे सप्तम्यां कारयेद्बुधः ॥ देवदेवस्य वै यात्रां पूर्वोक्त विधिना हर ॥ ४ ॥ कृष्णपक्षे तु यः कृत्वा रथमारोहितं रविम् ॥ पश्येद्भक्त्या जगन्नाथं स याति परमां गतिम् ॥ ५ ॥ तृतीयायामेकभक्तं चतुर्थ्यां नक्तमुच्यते ॥ पंचम्यामयाचितं स्यात्षष्ठ्यां चैवसुपोषणम् ॥ ६ ॥ सप्तम्यां पारणं कुर्याद्दृष्ट्वा देवं रथे स्थितम् ॥ पूजयित्वा च विधिना शक्त्या भक्त्या[1] त्रिलोचन ॥ ७ ॥ सौवर्णं तु रथं कृत्वा ताम्रपात्रोपरि स्थितम् ॥ रथमध्ये न्यसेद्व्योम पूजितं मणिभिर्हर ॥ ८ ॥ पद्मरागं न्यसेन्मध्ये मौक्तिकं पूर्वतो न्यसेत् ॥ इंद्रनीलमथो याम्यां वारुण्यां मरकतं हर ॥ ९ ॥ प्रवालमुत्तरे रुद्र सवज्रं विन्यसेद् बुधः ॥ श्वेतं पीतासितं चापि रक्तं चांधकसूदन ॥ १० ॥ एतानि तात वस्त्राणि दिक्षु सर्वासु विन्यसेत् ॥ पताकाकारसंस्थानं घंटाभरणभूपितम् ॥ ११ ॥ पुष्पैर्दामैरलंकृत्य रथं रुद्र समंततः ॥ यथान्यायं पूजयित्वा भास्कराय निवेदयेत् ॥ १२ ॥ भोजयित्वाथ वा विप्रानाचार्याय निवेदयेत् ॥ योऽधीते सप्तमीकल्पं सोपाख्यानं च भारत ॥ १३ ॥ आचार्यः स द्विजो ज्ञेयो वर्णानामनुपूर्वशः ॥ सौराणां वैष्णवानां तु शैवानां पार्वतीप्रिय ॥ १४ ॥ अलाभे तु सुवर्णस्य रथं राजतमादिशेत् ॥ तदलाभे ताम्रमयं रथं व्योम च कारयेत् ॥ १५ ॥ अभावे चापि ताम्रस्य रथः पिष्टमयः स्मृतः ॥ सहिरण्यो महादेव ताम्रभाजनमाश्रितः[2] ॥ १६ ॥ कौशेययुग्मसहितं[3] ब्राह्मणाय निवेदयेत् ॥ पूर्वोक्ताय महादेव वाचकाय महात्मने ॥ १७ ॥ पञ्चरत्नसमायुक्तं शुभगन्धाधिवासितम् ॥ स्वशक्त्या तु विरूपाक्ष वित्तशाठ्यं विवर्जयेत् ॥ १८ ॥ एषा पुण्या पापहरा रथाह्वा सप्तमी हर ॥ कथिता ते मया रुद्र महतीयं प्रकीर्तिता ॥ १९ ॥ स्नानं दानमथो होमः पूजा ग्रहपतेर्हर ॥ शतसाहस्रं भवेदस्यां कृतं भूधरविग्रते ॥ २० ॥ एवमेषा पुण्यतमा माघे प्रोक्ता तु सप्तमी ॥ यामुपोष्य नरो भक्त्या सूर्यस्यानुचरो भवेत् ॥ २१ ॥ ब्राह्मणो याति देवत्वं क्षत्रियो विप्रतां व्रजेत् ॥ वैश्यः क्षत्रियतां

१ शक्त्या–इ० पा० । २ सपर्याकं देवताजनमाश्रितम्–इ० पा० । ३ कापाययुग्मसहितम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रवेः ॥ स नरो भानुसालोक्यमाप्नोति धुतकल्मषः ॥२६॥ यस्तु देवालयं भानोर्भक्त्या कारयति ध्रुवम् ॥ स सप्त पुरुषाँल्लोकं भानोर्नयति मानवः ॥ २७ ॥ यावंत्यब्दानि देवार्चा रवेस्तिष्ठति मंदिरे ॥ तावद्वर्षसहस्राणि सूर्यलोके महीयते ॥ २८ ॥ देवार्चा लक्षणोपेता तद्गृहे संततो विधिः ॥ निष्कामं च मनो यस्य स यात्यक्षरसाम्यताम् ॥२९॥ पुष्पाणि च सुगंधीनि मनोज्ञानि च यः पुमान् ॥ प्रयच्छति सहस्रांशोः सदा प्रयतमानसः ॥ ॥३०॥ धूपांश्च तांस्तान्विविधान्गन्धाढ्यं चानुलेपनम् ॥ नरः सोऽनुदिनं यज्ञं करोत्याराधनं रवेः॥३१॥ यज्ञेशो भगवान्पूपा सदा क्रतुभिरिज्यते ॥ बहूपकरणा यज्ञा नानासंभारविस्तराः ॥ ३२ ॥ न ते दिंडिन्नवाप्यंते मनुष्यैरल्पसंचयैः ॥ भक्त्या तु पुरुषैः पूजा कृता दूर्वांकुरैरपि ॥ भानोर्ददाति हि फलं सर्वयज्ञैः सुदुर्लभम् ॥ ३३ ॥ यानि पुष्पाणि हृद्यानि धूपगंधानुलेपनम् ॥ दयितं भूषणं यच्च प्रीतये चैव वाससी ॥ ३४ ॥ यानि चाभ्यवहार्याणि भक्ष्याणि च फलानि वै ॥ प्रयच्छ तानि मार्तंडे भवेथाश्चैव तन्मनाः ॥ ३५ ॥ आद्यं तं भुवनाधारं यथाशक्त्या प्रसादय ॥ आराध्य याति तं देवं तस्मिन्नेव नरो लयम् ॥ ३६ ॥ पुष्पैस्तीर्थोदकैर्गंधैर्मधुना सर्पिषा तथा ॥ क्षीरेण स्नापयेद्भानुं ग्रहेशं गोपतिं खगम् ॥ ॥ ३७ ॥ दधिक्षीरह्नदान्पुण्यांस्ततो लोकान्मधुच्युतः ॥ प्रयास्यति गणश्रेष्ठ निर्वृतिं च विलक्षणाम् ॥ ३८ ॥ स्तोत्रैर्गीतैस्तथा वाद्यैर्ब्राह्मणानां च तर्पणैः ॥ मनसश्चैव योगेन आराधय दिवाकरम् ॥ ३९ ॥ आराध्य तं जगन्नाथं मया सर्गः प्रवर्तितः ॥ विष्णुश्च पालयेल्लोकांस्तमाराध्य दिवाकरम् ॥ ४० ॥ रुद्रश्च प्राप्तवान्देवीं भवानीं तत्प्रसादतः ॥ दीप्यंते ऋषयश्चापि तमाराध्य दिवाकरम् ॥ ४१ ॥ स त्वमेभिः प्रकारैस्तमुपवासैश्च भास्करम् ॥ तोषयाब्दं हि तुष्टोऽसौ भानुर्द्वंद्वप्रशांतिदः॥४२॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे ब्रह्मदिंडिसंवादे आदित्यक्रियायोगवर्णनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥छ॥ ॥ दिंडिरुवाच ॥ ॥ उपवासैः सुरश्रेष्ठ कथं तुष्यति भास्करः ॥ परिहारांस्तथाचक्ष्व ये त्याज्याश्चोपवासिभिः ॥१॥ यद्यत्कार्यं यथा चैव भास्कराराधने नरैः ॥ तत्सर्वं विस्तराद्ब्रह्मन्यथावद्वक्तुमर्हसि ॥ २ ॥ ॥ ब्रह्मोवाच ॥ ॥ स्मृतः संपूजितो धूपपुष्पान्नैर्भानुरादरात् ॥ भोगिनामुपकाराय किं पुनश्चोपवासिनाम् ॥ ३ ॥ उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ॥ उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥४॥ एकरात्रं द्विरात्रं वा त्रिरात्रं नक्तमेव च ॥ उपवासी रविं यस्तु भक्त्या ध्यायति मानवः ॥५॥ तन्नामजापी तत्कर्मरतस्तद्गतमानसः ॥ निष्कामः पुरुषो दिंडे स ब्रह्म परमाप्नुयात् ॥ ६ ॥ यं च काममभिध्याय भास्करार्पितमानसः ॥ उपोषति

१ समोदंत-इ० पा०।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवं सुरज्येष्ठं चतुर्मुखम् ॥ उवाच स महातेजा दिंडिर्लोकेशमादरात् ॥ १ ॥ देवदेवेन भवतादिष्टोऽस्मि च महात्मना ॥ क्रियायोगामृतं सर्वमाख्यास्यति भवान्किल ॥ २ ॥ स त्वां पृच्छाम्यहं ब्रह्मन्क्रियायोगं निरंतरम् ॥ संतोषयितुमीशेहं यथावद्वक्तुमर्हसि ॥ ३ ॥ ॥ ब्रह्मोवाच ॥ ॥ एह्येहि मत्सकाशं च मत्समीपे गणाधिप ॥ ब्रह्महत्या प्रणष्टा ते दर्शनादेव तस्य तु ॥ ४ ॥ अनुग्राह्योऽसि भूतेश भास्करस्यामितौजसः ॥ आराधनाय भूतेश यदीशे प्रवणं मनः ॥ ५ ॥ यदि देवपतिं भानुमाराधयितुमिच्छसि ॥ भगवंतमनाद्यंतं भव दीक्षागुणान्वितः ॥ ६ ॥ न ह्यदीक्षान्वितैर्भानुर्ज्ञातुं स्तोतुं च तत्त्वतः ॥ द्रष्टुं वा शक्यते मूढैः प्रवेष्टुं कुत एव हि ॥ ७ ॥ जन्मभिर्बहुभिः पूता नरास्तद्गतचेतसः ॥ भवंति भगवन्सौरास्तदा दीक्षागुणान्विताः ॥ ८ ॥ अनेकजन्मसंसारचिते पापसमुच्चये ॥ नाक्षीणे जायते पुंसां मार्तंडाभिमुखी मतिः ॥९॥ प्रद्वेषं याति मार्तंडे द्विजान्वेदांश्च निंदति ॥ यो नरस्तं विजानीयात्पापबीजसमुद्भवम् ॥ १० ॥ पाखंडेषु रतिः पुंसां हेतुवादानुकूलता ॥ जायते विष्णुमायाम्भःपतितानां दुरात्मनाम् ॥ ११ ॥ यदा पापक्षयः पुंसां तदा वेदद्विजादिषु ॥ रवौ च देवदेवेशे श्रद्धा भवति निश्चला ॥ १२ ॥ यदा स्वल्पावशेषस्तु नराणां पापसंचयः ॥ तदा दीक्षागुणान्सर्वे भजंते नात्र संशयः ॥ १३ ॥ भ्रमतामत्र संसारे नराणां पापदुर्गमे ॥ हस्तावलंबदोप्येको भक्तिप्रीतो दिवाकरः॥१४॥ सर्वभागवतो भूत्वा सर्वपापहरं रविम्॥ आराधयेह तं भक्त्या प्रीतिमेष्यति भास्करः ॥१५॥ ॥ दिंडिरुवाच ॥ ॥ किं लक्षणा नरा दीक्षामर्हंति पद्मसंभव ॥ यच्च दीक्षान्वितैः कार्यं तन्मे कथय पद्मज ॥ १६ ॥ ॥ ब्रह्मोवाच ॥ ॥ कर्मणा मनसा वाचा प्राणिनां यो न हिंसकः ॥ भावभक्तश्च मार्तंडे तस्य दीक्षा गुणान्विता ॥ १७ ॥ ब्राह्मणांश्चैव देवांश्च नित्यमेव नमस्यति ॥ न च द्रोग्धा परं वादे स मार्तंडं समर्चति ॥१८॥ सर्वान्देवान्रविं वेत्ति सर्वलोकांश्च भास्करम् ॥ तेभ्यश्च नान्यमात्मानं स नरः सौरतां व्रजेत् ॥ १९ ॥ देवं मनुष्यमन्यं वा पशुपक्षिपिपीलिकान् ॥ तरुपाषाणकाष्ठानि भूम्यंभोगगनं दिशः ॥ २० ॥ आत्मानं चापि देवेशाद्व्यतिरिक्तं दिवाकरात् ॥ यो न जानाति यतिषु स वै दीक्षागुणान्भजेत् ॥ २१ ॥ भावं न कुरुते यस्तु सर्वभूतेषु पापकम् ॥ कर्मणा मनसा वाचा स तु दीक्षां समर्हति ॥ २२ ॥ सुतप्तेनेह तपसा यज्ञैर्वा बहुदक्षिणैः ॥ तां गतिं न नरा यांति यां गताः सूर्यमाश्रिताः ॥ २३ ॥ येन सर्वात्मना भानौ भक्त्या भावो निवेशितः ॥ गणेश्वर कृतार्थत्वाच्छ्लाघ्यः सौरः स मानवः ॥ २४ ॥ अपि नः स कुले धन्यो जायते कुलपावनः ॥ भगवान्भक्तिभावेन येन भानुरुपासितः ॥ २५ ॥ यः कारयति देवार्चां हृदयालंबनं

१ क्रियायोगमशृणवमाख्यातं भगवन्किल–इ०पा०। २ असुरांशसमुद्भवम्–इ० पा०। ३ कर्म–इ० पा०। ४ भोगी परस्वादेः–इ०पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

याति शूद्रो वैश्यत्वमेति च ॥ २२ ॥ विद्याविनयसंपन्नं भर्त्तारं कन्यका लभेत् ॥ अपुत्रा स्त्री सुतं विंदेत्सौभाग्यं च गणाधिप ॥ २३ ॥ विधवा चाप्युपोष्येमां सप्तमीं त्रिपुरांतक ॥ नान्यजन्मसु वैधव्यं प्राप्नुयात्पार्वतीप्रिय ॥ २४ ॥ बहुपुत्रा बहुधना पत्युर्वल्लभतां व्रजेत् ॥ यावद्वै सप्त जन्मानि स्त्रियस्तु पुरुषास्तथा ॥ २५ ॥ एवंविधा सप्तमी ते कथिता वृषभध्वज ॥ यां श्रुत्वा मानवो भक्त्या मुच्यते ब्रह्महत्यया ॥ २६ ॥ इति श्रीभविष्ये महापुराणे शतार्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे रथसप्तमीमाहात्म्यवर्णनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥छ॥

॥ सुमन्तुरुवाच ॥ ॥ इत्युक्त्वा स जगामाशु सुरज्येष्ठं त्रिलोचनम् ॥ रथयात्रा महाबाहो सूर्यस्येत्यमितौजसः ॥ १ ॥ ॥ शतानीक उवाच ॥ यमाराध्य जगन्नाथं मम पूर्वपितामहाः ॥ तुष्ट्यर्थं ब्राह्मणानां तु अन्नमापुश्चतुर्विधम् ॥ २ ॥ तस्य देवस्य माहात्म्यं श्रुतं च बहुशो मया ॥ देवर्षिसिद्धमनुजैः स्तुतस्य हि दिनेदिने ॥ ३ ॥ कः स्तोतुमीशस्तमजं यस्यैतत्सचराचरम् ॥ अव्ययस्याप्रमेयस्य विबुध्येतोदयाज्जगत् ॥ ४ ॥ कराभ्यां यस्य देवेशौ कविष्णू लोकपूजितौ ॥ उत्पन्नौ द्विजशार्दूल ललाटात्त्रिपुरांतकः ॥ ५ ॥ तस्य देवस्य कैः शक्या वक्तुं सर्वा विभूतयः ॥ सोऽहमिच्छामि देवस्य तस्य सर्वात्मना द्विज ॥ ६ ॥ श्रोतुमाराधनं येन निस्तरेयं भवार्णवम् ॥ केनोपायेन मन्त्रैर्वा रहस्यैः परिचर्यया ॥ ७ ॥ दानैर्व्रतोपवासैर्वा होमैर्जाप्यैरथापि वा ॥ आराधितः समस्तानां क्लेशानां हानिदो भवेत् ॥ ८ ॥ सैका विद्या हि विद्यानां यया तुष्यति सर्वकृत् ॥ श्रुतानामपि तत्पुण्यं यत्र भानोः प्रकीर्तनम् ॥ ९ ॥ रहस्यानां रहस्यं तद्येन हंसः प्रसीदति ॥ एकः श्रेष्ठतमो मंत्रस्तदेकं परमं व्रतम् ॥ १० ॥ उपोषितं च तच्छ्रेष्ठं येन भानुः प्रसीदति ॥ सा चैका रसना धन्या मार्तंडं स्तौति या सदा ॥ ११ ॥ तदेकं निर्मलं चित्तं यद्गतं सततं रवौ ॥ श्लाघ्यानामपि तौ श्लाघ्याविह लोके परत्र च ॥ १२ ॥ यौ सदा द्विजशार्दूल भानोः पूजाकरौ करौ ॥ तदेकं केवलं धन्यं शरीरं सर्वजंतुषु ॥ १३ ॥ यदेव पुलकोद्भासि भानोर्नामानुकीर्तने ॥ सा जिह्वा कण्ठतालूकमथ वा प्रतिजिह्विका ॥ १४ ॥ अथ वा सापरो रोगो या न वक्ति रवेर्गुणम् ॥ नवद्वाराणि संत्यस्मिन्पुरे पुरुषसत्तम ॥ १५ ॥ प्राकारैस्त्वावृते विष्वग्वृथा तानि विदुर्बुधाः ॥ दत्त्वावधानं यच्छब्दे विनैव रविसंस्तुतिम् ॥ १६ ॥ श्रेयसां न हि संप्राप्तौ पुरुषाणां विचेष्टितम् ॥ जन्मन्यविफला सेवा कृता याश्रित्य भास्करम् ॥ १७ ॥ दुर्गसंसारकांतारमपारमभिधावताम् ॥ एको भानुनमस्कारः संसारार्णवतारकः ॥ १८ ॥ रत्नानामाकरो मेरुः सर्वाश्चर्यमयं नभः ॥ तीर्थानामाश्रयो गंगा देवानामाश्रयो रविः ॥ १९ ॥ एव

१ कामुकी—इ० पा० । २ तपनम्—इ० पा० । ३ यथा—इ० पा० । ४ यद्धृतम्—इ०, यद्वृत्तम्—इ० च पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मादिगुणो भोगो भानोरमिततेजसः ॥ श्रुतो मे बहुशः सिद्धैर्गीयमानैस्तथामरैः ॥ २० ॥ सोऽहमिच्छामि तं देवं सप्तलोकपरायणम् ॥ दिवाकरमशेषस्य जगतो ह्यव्यवस्थितम् ॥ २१ ॥ आराधयितुमीशेशं भास्करं चामितौजसम् ॥ मार्तंडं भुवनाधारं स्मृतमात्राघदारिणम् ॥ २२ ॥ इतिश्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सूर्यपरिचर्यावर्णनं नाम षष्टितमोऽध्यायः ॥ ६० ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ तमेकमक्षरं धाम परं सदसतोर्महत्[1] ॥ भेदाभेदस्वरूपस्थं प्रणिपत्य रविं नृप ॥ १ ॥ प्रवक्ष्यामि यथापूर्वं विरिंचेन महात्मना ॥ ऋषीणां कथितं पूर्वं तं निबोध नराधिप ॥ २ ॥ आराधनाय सवितुर्महात्मा पद्मसंभवः ॥ योगं ब्रह्मपरं प्राह महर्षीणां यथा प्रभुः ॥ ३ ॥ समस्तवृत्तिसंरोधात्कैवल्यप्रतिपादकम् ॥ तदा जगत्पतिर्ब्रह्मा प्रणिपत्य महर्षिभिः ॥ ४ ॥ सर्वैः किलोक्तो भगवानात्मयोनिः प्रजाहितम् ॥ योयं योगो भगवता प्रोक्तो वृत्तिनिरोधजः ॥ ५ ॥ प्राप्तुं शक्यः स त्वनेकैर्जन्मभिर्जगतः पते ॥ विषया दुर्जया नृणामिंद्रियाकर्षिणः प्रभो ॥ ६ ॥ वृत्तयश्चेतसश्चापि चञ्चलस्यापि दुर्धराः ॥ रागादयः कथं जेतुं शक्या वर्षशतैरपि ॥ ७ ॥ न योगयोग्यं भवति मन एभिरनिर्जितैः ॥ अल्पायुषश्च पुरुषा ब्रह्मन्कृतयुगेप्यमी ॥ ८ ॥ त्रेतायां द्वापरे चैव किमु प्राप्ते कलौ युगे ॥ भगवंस्त्वामुपासीनान्प्रसन्नो वक्तुमर्हसि ॥ ९ ॥ अनायासेन येनैव उत्तरेम भवार्णवम् ॥ दुःखांबुमग्नाः पुरुषाः प्राप्य ब्रह्मन्महाप्लवम् ॥ १० ॥ उत्तरेम भवांभोधिं तथा त्वमनुचिंतय ॥ एवमुक्तस्तदा ब्रह्मा क्रियायोगं महात्मनाम् ॥ ११ ॥ तेषामृषीणामाचष्ट नराणां हितकाम्यया ॥ आराधयत विश्वेशं दिवाकरमतंद्रिताः ॥ १२ ॥ बाह्यालंबनसापेक्षास्तमजं जगतः पतिम् ॥ इज्यापूजानमस्कारशुश्रूषाभिरहर्निशम् ॥ १३ ॥ व्रतोपवासैर्विविधैर्ब्राह्मणानां च तर्पणैः ॥ तैस्तैश्चाभिमतैः कामैर्ये च चेतसि तुष्टिदाः ॥ १४ ॥ अपरिच्छेद्यमाहात्म्यमाराधयत भास्करम् ॥ तन्निष्ठास्तद्गतधियस्तत्कर्माणस्तदाश्रयाः ॥ १५ ॥ तद्दृष्टयस्तन्मनसः सर्वस्मिन्त्सं इति स्थिताः ॥ समस्तान्यथ कर्माणि तत्र सर्वात्मनात्मनि ॥ १६ ॥ संन्यसध्वं स वः कर्ता समस्तावरणक्षयम् ॥ एतत्तदक्षरं ब्रह्म प्रधानपुरुषावुभौ ॥ १७ ॥ यतो यस्मिन्यथा चोभौ सर्वव्यापिन्यवस्थितौ[2] ॥ परः पराणां परमः सैकः सुमनसां परः ॥ १८ ॥ यस्माद्भिन्नमिदं सर्वं यच्चेदं यच्च नेंगति[3] ॥ मोक्षकारणमव्यक्तमचिन्त्यमपरिग्रहम् ॥ समाराध्य जगन्नाथं क्रियायोगेन मुच्यते ॥ १९ ॥ इति ते ब्रह्मणः श्रुत्वा रहस्यमृषिसत्तमाः ॥ २० ॥ नराणामुपकाराय योगशास्त्राणि चक्रिरे ॥ क्रियायोगपराणीह मुक्तिकारीण्यनेकशः ॥२१॥ आराध्यते जगन्नाथस्तद

१ महति—इ० पा०। २ धाता यस्मिन्यथा चोर्मी सर्वथापि व्यवस्थिती—इ० पा०। ३ तं जाने सर्वतोगतिम्—इ०पा०।





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुष्ठानतत्परैः ॥ परमात्मा स मार्तंडः सर्वेशः सर्वभावनः ॥ २२ ॥ यान्युक्तानि पुरा तेन ब्रह्मणा कुरुनंदन ॥ तानि ते कुरुशार्दूल सर्वपापहराण्यहम् ॥ २३ ॥ वक्ष्यामि श्रूयतामद्य रहस्यमिदमुत्तमम् ॥ संसारार्णवमग्नानां विषयाक्रांतचेतसाम् ॥ २४ ॥ हंसपोतं विना नान्यत्किंचिदस्ति परायणम् ॥ उत्तिष्ठंश्चिंतय रविं व्रजंश्चिंतय गोपतिम् ॥ २५ ॥ भुंजंश्चिंतय मार्तंडं स्वपंश्चिंतय भास्करम् ॥ एवमेकाग्रचित्तस्त्वं संश्रितः सततं रविम् ॥ ॥ २६ ॥ जन्ममृत्युमहाग्राहं संसारांभस्तरिष्यसि ॥ २७ ॥ ग्रहेशमीशं वरदं पुराणं जगद्विधातारमजं च नित्यम् ॥ समाश्रिता ये रविमीशितारं तेषां भवो नास्ति विमुक्तिभाजाम् ॥ २८ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सूर्ययोगमहिमवर्णनं नामैकपष्टितमोऽध्यायः ॥ ६१ ॥ ॥ सुमंतुरुवाच ॥ ॥ अथान्यं सरहस्यं तु संवादं वच्मि तेखिलम् ॥ सूर्यस्य दिंडिना सार्धं सर्वपापप्रणाशनम् ॥ १ ॥ ब्रह्महत्याभिभूतस्तु पुरा दिंडिर्महातपाः ॥ आराधनाय देवस्य स्तोत्रं चक्रे महात्मनः ॥ २ ॥ श्रुत्वा तस्यार्थतः स्तोत्रं तुतोष भगवान्रविः ॥ उवाच देवदेवस्तं दिंडिनं गणनायकम् ॥ ३ ॥ ॥ आदित्य उवाच ॥ ॥ हंत दिंडे प्रसन्नोऽस्मि भक्त्या स्तोत्रेण तेऽनघ ॥ वरं वृणीष्व धर्मज्ञ यत्ते मनसि वर्तते ॥ ४ ॥ ॥ दिंडिरुवाच ॥ ॥ एष एव वरः श्लाघ्यो यत्प्राप्तोऽसि ममांतिकम् ॥ त्वद्दर्शनमपुण्यानां स्वप्नेष्वपि च दुर्लभम् ॥ ॥ ५ ॥ यथैषा ब्रह्महत्या मे आगता लोकगर्हिता ॥ भवाञ्जानाति सर्वेशो हृदिस्थः सर्वदेहिनाम् ॥ ६ ॥ त्वत्प्रसादान्ममेशान नाशमाशु प्रयातु वै ॥ तथा च दुरितं सर्वं यच्चान्यल्लोकगर्हितम् ॥ ७ ॥ यद्यदिच्छाम्यहं तत्तत्सर्वमस्तु दिवस्पते ॥ एतेनैवानुमानेन प्रसन्नो भगवन्निति ॥ ८ ॥ ज्ञातं मया हि मार्तंडे नाप्रसन्ने विभूतयः ॥ एवं सर्वसुखाह्लादमध्यस्थोऽपि हि भानुमान् ॥ ९ ॥ त्वं मामगाधे संसारे मग्नमुद्धर्तुमर्हसि ॥ सुखानि तानि चैवांते येषां दुःखं न तत्सुखम् ॥ १० ॥ यदा तु दुःखमागामि किं वा कस्यैव भक्षणात् ॥ तत्प्रसादं कुरु विभो जगतां त्वं जगत्पते ॥ ११ ॥ ज्ञानदानेन येनैवमुत्तरेयं भवार्णवम् ॥ इत्युक्तस्तेनमार्तंडः कथयामास योगवित् ॥ १२ ॥ योगं निर्बीजमत्यंतं दुःखसंयोगभेषजम् ॥ श्रुत्वा योगं तु तं दिंडिर्निर्बीजं निष्कलं बभौ ॥१३॥ प्रणिपत्य महातेजा इदं वचनमब्रवीत् ॥ देवदेव त्वया योगो यः प्रोक्तो ध्वान्तनाशन ॥ नैष प्राप्यो मया नान्यैर्मानवैरजितेंद्रियैः ॥ १४ ॥ विषया दुर्जयाः पुंभिरिंद्रियाकर्षिणः सदा ॥ इंद्रियाणां जयो युक्तः कः शक्तानां करिष्यति ॥ १५ ॥ अहंममेतिविख्याति दुर्जयं चंचलं मनः ॥ रागादयस्तथा त्यक्तुं शक्या जन्मांन्तरैर्यदि ॥ १६ ॥ सोऽहमिच्छामि देवेश त्वत्प्रसादादनिर्जितैः ॥ रागादिभिरमर्त्यत्वं

१ वं तव—इ० पा० । २ सर्वज्ञ–इ० पा० । ३ अशेषेण–इ० पा० । ४ पातकस्यैव लक्षणात्–इ० पा० । ५ जगन्नाथ–इ० पा० । ६ वद–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रापुः प्रक्षीणकल्मषाः ॥ १७ ॥ ॥ आदित्य उवाच ॥ ॥ यद्येवं मुक्तिकामस्त्वं गणनाथ शृणुष्व तम् ॥ क्रियायोगं समस्तानां क्लेशानां हानिकारकम् ॥ १८ ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥ मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ १९ ॥ मद्भावना मद्यजना मद्भक्ता मत्परायणाः ॥ मम पूजाकराश्चैव मयि यांति लयं नराः ॥ २० ॥ सर्वभूतेषु मां पश्यन्समंवस्थितमीश्वरम् ॥ कर्तासि केन चैव त्वमेवं दोषान्ग्रहीस्यसि ॥ २१ ॥ जंगमाजंगमे ज्ञाते मय्यासक्ते समंततः ॥ रागलोभादिनाशेन भवित्री कृतकृत्यता ॥ २२ ॥ भक्त्यातिप्रणयस्यापि चंचलत्वान्मनो यदि ॥ मय्यावेशं दधद्भूयः कुरु मद्रूपिणीं तनुम् ॥ २३ ॥ सुवर्णरजताद्यैस्त्वं शैलमृद्दारुलेखनम्॥ पूजोपहारैर्विविधैः संपूजय त्रिलोचनम् ॥ ॥ २४ ॥ तस्याश्रितं समाविश्य सर्वभावेन सर्वदा ॥ पूजिता सैव ते भक्त्या ध्याता चैवोपकारिणी ॥ २५ ॥ गच्छंस्तिष्ठन्स्वपन्भुंजंस्तामेवाग्रे च पृष्ठतः ॥ उपर्यधस्तथा पार्श्वे चिंतयंस्तन्मयश्च वै ॥ २६ ॥ स्नानैस्तीर्थोदकैर्द्रव्यैः पुष्पैर्गंधानुलेपनैः ॥ वासोभिर्भूषणैर्भक्ष्यैर्गीतवाद्यैर्मनोरमैः ॥ २७ ॥ यच्च यच्च तवेष्टं वै किंचिद्भोज्यादिकं तव ॥ भक्तिनम्रो गणश्रेष्ठ प्रीणयस्व कृतिं मम ॥ २८ ॥ रागेणाकृष्यते तात गंधर्वाभिमुखं यदि ॥ मयि बुद्धिं समावेश्य गायेथा याः कथा मम ॥ २९ ॥ कथया रमते चेतो यदि तद्भवतो मम ॥ श्रोतव्याः प्रीतियोगेन मत्स्वरूपोदयाः कथाः ॥ ॥ ३० ॥ एवं समर्पितमनाश्चेतसो येऽथ आश्रयाः ॥ हेयांस्तान्निखिलान्दिण्डे परित्यज्य सुखी भव ॥ ३१ ॥ अक्षीणरागद्वेषोऽपि मत्प्रियः परमः परम् ॥ पदमाप्नोपि मा भैषीर्मय्यर्पितमना भव ॥३२॥ मयि संन्यस्य सर्वं त्वमात्मानं यत्नवान्भव ॥ मदर्थं कुरु कर्माणि मा च धर्मव्यतिक्रमम् ॥३३॥ एवं व्यपोह्य हत्यास्त्वं ब्रह्मण मोक्ष्यसे भवात् ॥ एतेनैवोपदेशेन व्याख्यातमखिलं तव॥३४॥क्रियायोगं समास्थाय मदर्पितमना भव ॥ ३५ ॥ ॥ दिंडिरुवाच ॥ ॥ मद्धिताय जगन्नाथ क्रियायोगामृतं मम ॥ विस्तरेण समाख्याहि प्रसन्नस्त्वं हि दुःखहा ॥ ३६ ॥ त्वामृते न हि तद्वक्तुं समर्थोऽन्यो जगद्गुरो ॥ गुह्यमेतत्पवित्रं च तदाचक्ष्व प्रसीद मे ॥ ३७ ॥ ॥ आदित्य उवाच ॥ ॥ आख्यास्यते तदखिलं निर्विकल्पं गणाधिप ॥ इत्युक्त्वांतर्दधे देवः सर्वलोकप्रदीपकः ॥ ३८ ॥ स च दिंडिर्महातेजा जगामाशु नभोगतिम् ॥ ३९ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि दिंड्यादित्यसंवादवर्णनं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ प्रणम्य शिरसा

१ हानिकारणम्–इ० पा० । २ सर्वत्र–इ० पा० । ३ प्रज्ञाप्स्यसि–इ० पा० । ४ पुण्यैः–इ० पा० । ५ प्रतिकृतिमित्यर्थः । ६ मय्यर्पितमना भूत्वा सर्वान्कामानवाप्स्यसि–इ०पा० । ७ अस्ति–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तमाप्नोति प्रसादो खगमेऽखिलम् ॥ ७ ॥ ॥ दिंडिरुवाच ॥ ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैः स्त्रीभिश्च कंजज ॥ संसारगर्ते पंकस्थे सुगतिः प्राप्यते कथम् ॥ ८ ॥ ॥ ब्रह्मोवाच ॥ ॥ अनाराध्य जगन्नाथं गोपतिं ध्वान्तनाशनम् ॥ निर्व्यलीकेन चित्तेन कः प्रयास्यति सद्गतिम् ॥ ९ ॥ विषयग्राहि वै यस्य न चित्तं भास्करार्पितम् ॥ स कथं पापपंकाक्तो नरो यास्यति सद्गतिम् ॥ १० ॥ यदि संसारदुःखार्तः सुगतिं गंतुमिच्छसि ॥ तदाराधय सर्वेशं भास्करं ज्योतिषां पतिम् ॥ ११ ॥ पुष्पैः सुगंधैर्द्रव्यैश्च धूपैः सागरुचंदनैः ॥ वासोभिर्भूषणैर्भक्ष्यैरुपवासपरायणः ॥ १२ ॥ यदि संसारनिर्वेदादभिवांछसि सद्गतिम् ॥ तदाराधय मार्तंडं भक्तिप्रवणचेतसा ॥ १३ ॥ पुष्पाणि यदि ते न स्युः शस्तपादपपल्लवैः ॥ दूर्वांकुरैरपि दिंडे तदभावेऽर्चयार्यमम् ॥ १४ ॥ पुष्पपत्रांबुभिर्धूपैर्यथाविभवमात्मनः ॥ पूजितस्तुष्टिमतुलां भक्त्या यात्येकचेतसा ॥ १५ ॥ यः सदायतने भानोः कुरुते मार्जनक्रियाम् ॥ स यात्युत्तमके स्थाने सर्वपापं व्यपोहति ॥ १६ ॥ यावत्यः पांसुकणिका मार्ज्यन्ते भास्करालये ॥ दिनानि दिवि तावंति तिष्ठत्यर्कसमो नरः ॥ १७ ॥ अहन्यहनि यत्पापं कुरुते गणनायक ॥ गोचर्ममात्रं संमार्ज्य हंति तद्भास्करालये ॥ १८ ॥ यश्चानुलेपनं कुर्याद्भानोरायतने नरः ॥ सोऽपि लोकं समासाद्य हंसेन सह मोदते ॥ १९ ॥ मृदा धातुविकारैर्वा वर्णकैर्गोमयेन वा ॥ उपलेपनकृद्याति मत्पुरं यानमास्थितः ॥ २० ॥ उदकाभ्युक्षणं भानोर्यः करोति सदा गृहे ॥ सोऽपि गच्छति यत्रास्ते भगवान्यादसां पतिः ॥ २१ ॥ पुष्पप्रकरमत्यर्थं सुगंधं भास्करालये ॥ अनुलिप्ते नरो दत्त्वा न दुर्गतिमवाप्नुयात् ॥ २२ ॥ विमानमतिशोभाढ्यं सर्वर्तुसुखभूषितम् ॥ समाप्नोति नरो दत्त्वा दीपकं भास्करालये ॥ २३ ॥ यस्तु संवत्सरं पूर्णं तिलपात्रप्रदो नरः ॥ ध्वजं च भास्करे दद्यात्सममत्र फलं लभेत् ॥ २४ ॥ विधूतो हंति वातेन दातुरज्ञानतः कृतम् ॥ पापं कर्तुं गृहे भानोर्दिवा रात्रौ नराधिप ॥ २५ ॥ गीतवाद्यादिभिर्भानुं य उपास्ते तमोपहम् ॥ गंधर्वैर्नृत्यगीतैः स विमानस्थो निषेव्यते ॥ २६ ॥ जातिस्मरत्वं मेधां च तथैवोपरमे स्मृतिम् ॥ प्राप्नोति गणशार्दूल कृत्वा पुस्तकवाचनम् ॥ २७ ॥ एवं खगेश्वरो भक्त्या येन भानुरुपासितः ॥ स प्राप्नोति गतिं श्लाघ्यां यां यामिच्छति चेतसा ॥ २८ ॥ देवत्वं मनुजैः कैश्चिद्गंधर्वत्वं तथा परैः ॥ विद्याधरत्वमपरैः संराध्येह दिवाकरम् ॥ २९ ॥ शक्रः क्रतुशतेनेशमाराध्य ज्योतिषां पतिम् ॥ देवेंद्रत्वं गतस्तस्मान्नान्यः पूज्यतमः क्वचित् ॥ ३० ॥ ब्रह्मचारिगृहस्थानां वनस्थानां गणाधिप ॥ नान्यः पूज्यस्तथा स्त्रीणामृते देवं दिवाकरम् ॥ ३१ ॥ मध्ये परिव्राजकानां सहस्रांशुं महात्मनाम् ॥ मोक्षद्वारं विशंतीह तं रविं विजि

१ शक्रः क्रतुशतेनेह समाराध्य दिवाकरम्-इ० पा० । २ परिमल-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तात्मनाम् ॥ ३२ ॥ एवं सर्वाश्रमाणां हि सहस्रांशुः परायणम् ॥ सर्वेषां चैव वर्णानां ग्रहेशो वै गतिः परा ॥ ३३ ॥ शृणुष्व गदतः काम्यानुपवासांस्तथापरान् ॥ शृणु दिंडे महापुण्यफलकां सप्तमीं पराम् ॥ ३४ ॥ आदित्याराधनायैनां सर्वपापहरां शिवाम् ॥ यामुपोष्य नरो भक्त्या मुच्यते सर्वपातकैः ॥३५॥ तथा लोकमवाप्नोति सूर्यस्यामिततेजसः ॥ अथ भाद्रपदे मासि शुक्लपक्षे समागते ॥३६॥ सोपोष्या प्रथमं तात विधानं शृणु तत्र वै ॥ अयाचितं चतुर्थ्यां तु पंचम्यामेकभोजनम् ॥३७॥ उपवासपरः षष्ठ्यां जितक्रोधो जितेंद्रियः॥ अर्चयित्वा दिनकरं गंधधूपनिवेदनैः ॥ ॥३८॥ पुरतः स्थंडिले रात्रौ स्वप्याद्देवस्य पुत्रक॥प्रध्यायन्मनसा देवं सर्वभूतार्तिनाशनम् ॥३९ ॥ सर्वदोषप्रशमनं सर्वपातकनाशनम् ॥ विबुद्धस्त्वथ सप्तम्यां कुर्याद्ब्राह्मणभोजनम्॥४०॥पूजयित्वा दिनकरं पुष्पधूपविलेपनैः[1]॥नैवेद्यं तात देवस्य फलानि कथयंति हि[2]॥४१॥खर्जूरनालिकेराणि तथा चाम्रफलानि तु ॥ मातुलिंगफलान्येव कथितानि मनीषिभिः॥४२॥एतैश्च भोजयेद्विप्रानात्मना च प्रभक्षयेत्॥ तथैषां चाप्यभावेन शृणु चान्यानि सुव्रत ॥४३॥ शालिगोधूमपिष्टानि कारयेद्गणनायक॥ गुडगर्भकृतानीह[3] घृतपाकेन पाचयेत्॥४४॥चातुर्यावकमिश्राणि आदित्याय निवेदयेत् ॥ अग्निकार्यमथो कृत्वा ब्राह्मणान्भोजयेत्ततः ॥४५॥ इत्थं द्वादश वै मासान्कार्यं व्रतमनुत्तमम् ॥ मासि मासि फलाहारः फलदायी फलार्चनः ॥४६॥ वर्षांते त्वथ कुर्वीत शक्त्या[4] ब्राह्मणभोजनम् ॥ स्नानप्राशनयोश्चापि विधानं शृणु सुव्रत ॥४७॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्॥ तिलसर्षपयोः कल्कं श्वेता मृच्चापि सुव्रत[5] ॥ ४८ ॥ दूर्वाकल्कं घृतं चापि गोशृंगक्षालितं जलम् ॥ जातिगुल्मविनिर्यासः प्रशस्तः स्नानकर्मणि ॥ ॥ ४९ ॥ प्राशने चाप्यथैतानि सर्वपापहराणि वै ॥ आदौ कृत्वा भाद्रपदं यथा संख्यं विदुर्बुधाः ॥ ५० ॥ इत्थं वर्षांतमासाद्य भोजयित्वा द्विजोत्तमान् ॥ दिव्यान्भोगान्माहादेव ततस्तेभ्यो निवेदयेत् ॥५१॥ फलानि तात[6] हैमानि यथा शक्त्या गणाधिप ॥ सवत्सामथ वा धेनुं भूमिं सस्यान्वितामथ ॥ ५२ ॥ प्रासादमथ वा भौमं सर्वधान्यसमन्वितम् ॥ दद्याच्छुक्लानि वस्त्राणि ताम्रपात्रं सविद्रुमम् ॥ ५३ ॥ शक्तियुक्तस्य चैतानि दरिद्रस्य तु मे शृणु॥फलानि पिष्टकान्येषां तिलचूर्णान्वितानि तु ॥५४॥ भोजयित्वा द्विजान्दद्याद्राजतानि फलानि तु॥धातुरक्तं वस्त्रयुग्ममाचार्याय निवेदयेत् ॥ ५५ ॥ सहिरण्यं महादेव पंचरत्नसमन्वितम् ॥ इत्थं समाप्यते तात पारणं वार्षिकांतिकम् ॥ ५६ ॥ इत्येषा वै पुण्यतमा सप्तमी

१ पुष्पधूपविलेपनैः—इ० पा० । २ कथयाम्यहम्—इ० पा० । ३ तानि—इ० पा० । ४ भक्त्या च—इ०, रक्तानि—इ० च पा० । ५ च निर्मलम्—इ० पा० । ६ राजा तानि—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुरितापहा ॥ यामुपोष्य नराः सर्वे यांति सूर्यसलोकताम् ॥ ५७ ॥ पूज्यमानः सदा देवैर्गंधर्वाप्सरसां गणैः ॥ अनया मानवो नित्यं पूजयेद्भास्करं सदा ॥ ५८ ॥ दारिद्र्यदुःखदुरितैर्मुक्तो याति दिवाकरम् ॥ ब्राह्मणो मोक्षमायाति क्षत्रियश्चेंद्रतां व्रजेत् ॥ ५९ ॥ वैश्यो धनदसालोक्यं शूद्रो विप्रत्वमाप्नुयात् ॥ अपुत्रो लभते पुत्रं दुर्भगा सुभगा भवेत्॥६०॥ यामुपोष्य च नारीमां सप्तमीं लोकपूजिताम् ॥ विधवा वा सती भक्त्या अनया पूजयेद्रविम् ॥ ६१ ॥ नान्यजन्मनि वैधव्यं नारी प्राप्नोति मानद ॥ चिंतामणिसमा ह्येषा विज्ञेया फलसप्तमी ॥ ६२ ॥ पठतां शृण्वतां दिंडे सर्वकामप्रदा स्मृता ॥ ६३ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि ब्रह्मदिंडिसंवादे सप्तमीकल्पे फलसप्तमीवर्णनं नाम चतुःषष्टितमोऽध्यायः ॥६४॥ ॥ ॥ ब्रह्मोवाच ॥ ॥ अतः परं प्रवक्ष्यामि रहस्यां नाम सप्तमीम् ॥ सप्तमी कृतमात्रेयं नरांस्तारयते भवात् ॥ ॥ १ ॥ सप्तापरान्सप्त पूर्वान्पितॄंश्चापि न संशयः ॥ रोगांश्छिनत्ति दुश्छेद्यान्दुर्जयाञ्जयते ह्यरीन् ॥ २ ॥ अर्थान्प्राप्नोति दुष्प्रापान्यः कुर्यान्नाम सप्तमीम् ॥ कन्यार्थी लभते कन्यां धनार्थी लभते धनम् ॥ ३ ॥ पुत्रार्थी लभते पुत्रान्धर्मार्थी धर्ममाप्नुयात् ॥ समयान्पालयन्सर्वान्कुर्याच्चेमां विचक्षणः ॥ ४ ॥ समयाञ्छृणु भूतेश श्रेयसे गदतो मम ॥ आदित्यभक्तः पुरुषः सप्तम्यां गणनायक ॥ ५ ॥ मैत्रीं सर्वत्र वै कुर्याद्भास्करं वापि चिंतयेत् ॥ सप्तम्यां न स्पृशेत्तैलं नीलं वस्त्रं न धारयेत् ॥ ६ ॥ न चाप्यामालकैः स्नानं न कुर्यात्कलहं क्वचित् ॥ ॥ दिंडिरुवाच ॥ ॥ किमर्थं न स्पृशेत्तैलं सप्तम्यां पद्मसंभव ॥ ७ ॥ कश्च दोषो भवेद्देव नीलवस्त्रस्य धारणात् ॥ ॥ ब्रह्मोवाच ॥ ॥ शृणु दिंडे महाबाहो नीलवस्त्रस्य धारणे ॥ ८ ॥ दूषणं गणशार्दूल गदतो मम कृत्स्नशः ॥ पालनं विक्रयश्चैव सद्वृत्तिरुपजीवनम्॥९॥ पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥ नीलीरक्तेन वस्त्रेण यत्कर्म कुरुते द्विजः ॥ १० ॥ स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ॥ वृथा तस्य महायज्ञा नीलसूत्रस्य धारणात् ॥ ॥ ११ ॥ नीलीरक्तं यदा वस्त्रं विप्रस्त्वंगेषु धारयेत् ॥ अहोरात्रोषितो भूत्वा पंचगव्येन शुद्ध्यति ॥ १२ ॥ रोमकूपे यदा गच्छेद्रक्तं नीलस्य कस्यचित् ॥ पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥ १३ ॥ नीलीमध्यं यदा गच्छेत्प्रमादाद्ब्राह्मणः क्वचित् ॥ अहोरात्रोषितो भूत्वा पंचगव्येन शुद्ध्यति ॥ १४ ॥ नीलीदारु यदा भिंद्याद्ब्राह्मणानां शरीरके ॥ शोणितं दृश्यते यत्र द्विजश्चांद्रायणं चरेत् ॥ १५ ॥ कुर्यादज्ञानतो यस्तु नीलेर्वा दंतधावनम् ॥ कृत्वा कृच्छ्रद्वयं दिंडे विशुद्धः स्यान्न संशयः ॥ १६ ॥ वापयेद्यत्र नीलीं तु भवेत्तत्राशुचिर्मही ॥ प्रमाणद्वादशाब्दानि

१ पूज्यमान्यः सदा देवैर्गन्धर्वैरप्सरोगणैः- इ० पा० । २ वस्त्रस्य- इ० पा० । ३ त्रिरात्रोपोषितः- इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत ऊर्ध्वं शुचिर्भवेत् ॥ १७ ॥ सप्तम्यां स्पृशतस्तैलमिष्टा भार्या विनश्यति ॥ इत्येष नीलीतैलस्य दोषस्ते कथितो मया ॥ १८ ॥ न चैव खादेन्मांसानि मद्यानि न पिबेद्बुधः ॥ न द्रोहं कस्यचित्कुर्यान्न पारुष्यं समाचरेत् ॥ १९ ॥ नावभाषेत चांडालं स्त्रियं नैव रजस्वलाम् ॥ न वापि संस्पृशेद्धीनं मृतकं नावलोकयेत् ॥ २० ॥ नास्फोटयेन्नातिहसेद्गायेच्चापि न गीतकम् ॥ न नृत्येदतिरागेण न च वाद्यानि वादयेत् ॥ २१ ॥ न शयीत स्त्रिया सार्धं न सेवेत दुरोदरम् ॥ न रुद्यादश्रुपातेन न च वाच्यं च शौकिकम् ॥ २२ ॥ आक्षेपेन्न शिरोयूका न वृथावादमाचरेत् ॥ परस्यानिष्टकथनमतिशोकं च वर्जयेत् ॥ २३ ॥ न कश्चित्ताडयेज्जन्तुं न कुर्यादतिभोजनम् ॥ न चैव हि दिवा स्वप्नं दंभं शाठ्यं च वर्जयेत् ॥ २४ ॥ रथ्यायामटनं वापि यत्नतः परिवर्जयेत ॥ अथापरो विधिश्चात्र श्रूयतां त्रिपुरांतक ॥ ॥ २५ ॥ चैत्रात्प्रभृति कर्तव्या सर्वदा नाम सप्तमी ॥ धातेति चैत्रमासे तु पूजनीयो दिवाकरः ॥ २६ ॥ अर्यमेति च वैशाखे ज्येष्ठे मित्रः प्रकीर्तितः ॥ आषाढे वरुणो ज्ञेय इन्द्रो नभसि कथ्यते ॥ २७ ॥ विवस्वांश्च नभस्येऽथ पर्जन्योऽश्वयुजि स्मृतः ॥ पूषा कार्त्तिकमासे तु मार्गशीर्षेंऽशुरुच्यते ॥ २८ ॥ भगः पौषे भवेत्पूज्यस्त्वष्टा माघे तु शस्यते ॥ विष्णुश्च फाल्गुने मासि पूज्यो वंद्यश्च भास्करः ॥ २९ ॥ सप्तम्यां चैव सप्तम्यां भोजयेद्भोजकान्बुधः ॥ सघृतं भोजनं देयं भोजयित्वा विधानतः ॥ ३० ॥ भोजकायैव विप्राय दक्षिणां स्वर्णमापकम् ॥ सघृतं भोजनं देयं रक्तवस्त्राणि चैव हि ॥ ३१ ॥ अभावे भोजकानां तु दक्षिणीया द्विजोत्तमाः ॥ तथैव भोजनीयाश्च श्रद्धया परया विभो ॥ ३२ ॥ विशेषतो वाचकश्च ब्राह्मणः कल्पवित्सदा ॥ इत्येषा कथिता तुभ्यं सप्तमी गणनायक ॥ ३३ ॥ श्रुता सती पापहरा सूर्यलोकप्रदायिनी ॥ ३४ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि ब्रह्मदिंडिसंवादे सप्तमीकल्पे आदित्यमाहात्म्यवर्णने सप्तमीवर्णनं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ इत्युक्त्वा भगवान्ब्रह्मा जगामादर्शनं विभोः ॥ सूर्यमाराधयद्दिंडी सूर्यस्यानुचरोऽभवत् ॥ ॥ १ ॥ ॥ शतानीक उवाच ॥ ॥ भूयः कथय विप्रेंद्र माहात्म्यं भास्करस्य मे ॥ शृण्वतो नास्ति मे तृप्तिरमृतस्येव सुव्रत ॥ २ ॥ ॥ सुमंतुरुवाच ॥ ॥ शृणुष्वावहितो राजन्संवादं द्विजशंखयोः ॥ यं श्रुत्वा सर्वपापेभ्यो मुच्यते मानवो नृप ॥ ३ ॥ आसीनमाश्रमे शंखं द्विजो द्रष्टुं जगाम ह ॥ फलभारानतच्छाये वृक्षवृन्दसमाकुले ॥ ४ ॥ परस्परमृगशृंगकण्डूयितमृगावृते ॥ बर्हिर्वनांबरानीततीर्थकन्दोपभोगिनि ॥ ५ ॥ प्रभूत

१ विशुध्यति–इ० पा० । २ प्रयतश्च–इ० पा० । ३ ततः–इ० पा० । ४ अलभे–इ० पा० । ५ विभो–इ० पा० । ६ सूर्यमाहात्म्यतो दिण्डिः–इ० पा० । ७ नात्र संशयः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुसुमामोदषट्पदोद्गीतशालिनि ॥ सिद्धदेवर्षिगंधर्वतीर्थसेवितवारिणि ॥६॥ मुण्डैश्च जटिलैश्चैव तापसैरुपशोभिते ॥ आश्रमे तं मुनिश्रेष्ठं शंखाह्वं सुखमास्थितम् ॥ ७ ॥ स्तोत्रैः स्तोतुं सहस्रांशुं तद्भक्तं तत्परायणम् ॥ ततः संहत्य सहसा तं भोजककुमारकाः ॥ ८ ॥ विनीता उपसंगम्य यथावदभिवाद्य च ॥ आसनेषूपविष्टास्त उपविष्टमथाब्रुवन् ॥ ९ ॥ भगवन्त्सर्ववेदेषु च्छिंधि नः संशयो महान् ॥ विनयेनोपपन्नानां कुमाराणां ततो मुनिः ॥ १० ॥ अनादींश्चतुरो वेदानुवाच प्रीतमानसः ॥ तेषां तु पठतामेव आश्रमं तु यदृच्छया ॥ ११ ॥ मुनिश्रेष्ठोऽथ तं देशमाजगाम द्विजो नृप ॥ यथावदर्चितस्तेन शंखेनामिततेजसा ॥ १२ ॥ वंदितश्च कुमारैस्तैरभवत्प्रीतमानसः ॥ अथैतानब्रवीच्छंखस्तान्भोजककुमारकान् ॥ १३॥ शिष्टागमादनध्यायः स च जातो विरम्यताम् ॥ यथाज्ञापयसीत्याहुः कुमारास्ते ऋषिं ततः ॥ १४ ॥ पप्रच्छ सिद्धिदश्चैतान्के ह्येते किं पठंति च ॥ शंखोवाच महाराज कुमारा भोजकात्मजाः ॥ १५ ॥ससूत्रकल्पांश्चतुरो विप्र वेदानधीयते ॥ तथैव सप्तमीकल्पे परिचर्यां च भास्वतः ॥ ॥ १६ ॥ अग्निकार्यविधानं च प्रतिष्ठाकल्पमादितः ॥ अँध्यंगलक्षणं ब्रह्मन्रथयात्राविधिं तथा ॥ १७ ॥ ॥ द्विज उवाच ॥ ॥ कथं क्रियेत सप्तम्यां कश्चार्चनविधिक्रमः ॥ गंधपुष्पप्रदीपानां किं फलं रविमंदिरे ॥ १८ ॥ केन तुष्यति दानेन व्रतेन नियमेन च ॥ धूपपुष्पोपहारादि किं च देयं विवस्वते ॥ १९ ॥ एतदिच्छाम्यहं श्रोतुं तन्मे ब्रूहि तपोधन ॥ विशेषतस्तु माहात्म्यं ब्रूहि मां भास्करस्य हि ॥ २० ॥ ॥ शंख उवाच ॥ ॥ इममर्थं वशिष्टेन पृष्टः सांबो यथा पुरा ॥ स चोवाच वशिष्ठाय तदहं कथयामि ते ॥ २१ ॥ अत्राश्रमे पुण्यतमे तीर्थानामुत्तमे प्रभुः ॥ ववन्दे नियतात्मानं वशिष्ठं मुनिसत्तमम् ॥ २२ ॥ विनयेनोपसंगम्य ववन्दे चरणौ मुनेः ॥ कृतप्रणामं सांबं तु भक्तिप्रह्वीकृताननम्॥ ॥ २३ ॥ विलोक्य परमप्रीतो मुनिः पप्रच्छ तं तदा ॥ सर्वतः स्फुटितं गात्रं कुष्ठेन महता तव ॥२४॥ घोररूपेण तीव्रेण कथं तद्विगतं तव ॥ कथं च लक्ष्मीरधिका रूपं चातिमनोहरम् ॥ २५ ॥ तेजस्वितातिमहती तथैव सुकुमारता ॥ २६ ॥ ॥ सांब उवाच ॥ ॥ स्तुतो नामसहस्रेण लोकनाथो दिवाकरः ॥ दर्शनं च गतः साक्षाद्दत्तवांश्च वरान्मम ॥ २७ ॥ ॥ वशिष्ठ उवाच ॥ ॥ कथमाराधितः सूर्यस्त्वया यादवनंदन ॥ कैश्च व्रततपोदानैर्दर्शनं भगवान्गतः ॥ २८ ॥ ॥ सांब उवाच ॥ ॥ शृणुष्वावहितो ब्रह्मन्सर्वमेव मया यथा ॥ तोषितो भगवा

१ नेत्रेषु–इ० पा० । २ अभ्यंगलक्षणम्–इ० पा० । ३ अथाचष्टे–इ० पा० । ४ चावयं च–इ० पा० । ५ वद–इ० पा० । ६ तत्र सांब समागमत्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्मूर्यो विधिना येन सुव्रत ॥ २९ ॥ मोहान्मयोपहसितो दुर्वासाः कोपनो मुनिः ॥ ततोऽहं तस्य शापेन महाकुष्ठमवाप्तवान् ॥ ३० ॥ ततोहं पितरं गत्वा कुष्ठयोगाभिपीडितः ॥ लज्जमानोऽतिगर्वेण इदं वाक्यमथाब्रवम् ॥ ३१ ॥ तात सीदति मे गात्रं स्वरश्च परिहीयते ॥ घोररूपो महाव्याधिर्वपुरेप जिघांसति ॥ ३२ ॥ अशेषव्याधिराज्ञाहं पीडितः क्रूरकर्मणा ॥ वैद्यैरोपधिभिश्चैव न शांतिर्मम विद्यते ॥ ३३ ॥ सोऽहं त्वया ह्यनुज्ञातस्त्यक्तुमिच्छामि जीवितम् ॥ यदि वाहमनुग्राह्यस्ततोऽनुज्ञातुमर्हसि ॥ ३४ ॥ इत्युक्तवाक्यः स पिता पुत्रशोकाभिपीडितः ॥ पिता क्षणं ततो ध्यात्वा मामेवं वाक्यमुक्तवान् ॥ ३५ ॥ धैर्यमाश्रयतां पुत्र मा शोके च मनः कृथाः ॥ हंति शोकार्दितं व्याधिः शुष्कं तृणमिवानलः ॥ ॥३६॥ देवताराधनपरो भव पुत्रक मा शुचः ॥ इत्युक्ते च मया प्रोक्तो देवमाराधयामि कम् ॥ ३७ ॥ कमाराध्य विमुच्येऽहं तात रोगैः समंततः ॥ इत्येवमुक्तो भगवान्मामुवाच पिता मम ॥ ३८ ॥ इममर्थं पुरा पृष्टः पद्मयोनिः सनातनः ॥ याज्ञवल्क्येन ऋषिणा योगीशेन महात्मना ॥३९॥ यदुवाच महातेजास्तस्मै स यदुनंदन ॥ तच्छृणुष्व शुचिर्भूत्वा आत्मनः श्रेयसे सुत ॥ ४० ॥ सुरज्येष्ठं सुखासीनं पद्मयोनिं प्रजापतिम् ॥ याज्ञवल्क्यो महातेजाः पर्यपृच्छत्पितामहम् ॥ ४१ ॥ भगवञ्छ्रोतुमिच्छामि किंचिदात्ममनोगतम् ॥ समाराध्य विभो देवं नरो मुच्येत वै भवात् ॥ ॥ ४२ ॥ गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ॥ य इच्छेन्मोक्षमास्थातुं देवतां कां यजेत सः ॥ ४३ ॥ कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैः श्रेयसं सुखम् ॥ स्वर्गतश्चैव किं कुर्याद्येन न च्यवते पुनः ॥ ४४ ॥ देवतानां तु को देवः पितॄणां चैव कः पिता ॥ तस्मात्परतरं यच्च तन्मे ब्रूहि पितामह ॥ ४५ ॥ केन सृष्टमिदं विश्वं ब्रह्मन्स्थावरजंगमम् ॥ प्रलये च कमभ्येति तन्मे त्वं वक्तुमर्हसि ॥ ४६ ॥ ॥ ब्रह्मोवाच ॥ ॥ साधु पृष्टोऽस्मि भवता तुष्टश्चास्मि महामते ॥ प्रणम्य शिरसा देवं पुण्योत्तरमनुत्तमम् ॥ ४७ ॥ कथयिष्ये द्विजश्रेष्ठ शृणुष्वैकमनाधुना ॥ आत्मनः श्रेयसे विप्र शुचिर्भूत्वा समाहितः ॥ ४८ ॥ उद्यन्य एप कुरुते जगद्वितिमिरं करैः ॥ नातः परतरो देवः किमन्यत्कथयामि ते ॥ ४९ ॥ अनादिनिधनो ह्येप पुरुपः शाश्वतोऽव्ययः ॥ दीपयत्येव लोकांस्त्रीत्रवी रश्मिभिरुल्बणैः ॥ ५० ॥ सर्वदेवात्मको ह्येप तपसा चांशुतापनः ॥ सर्वस्य जगतो नाथः कर्मसाक्षी शुभाशुभे॥५१॥क्षपयत्येष भूतानि तथा विसृजते पुनः॥ एष भाति तपत्येप वर्धते च गभस्तिभिः ॥५२॥ एप धाता विधाता च पूर्पां प्रकृतिभावन ॥ न ह्येप क्षयमायाति नित्यमक्षयमंडलः ॥ ५३ ॥ पितॄणां हि पिता ह्येप देवतानां च देवता ॥ ध्रुवं स्थानं स्मृतं ह्येष आधारो



१ महानुभावो हि हरेर्दुर्वासाः कोपितो मुनिः—इ०पा० । २ स्थैर्यमालंब्यताम्—इ० पा० । ३ ततः—इ० पा० व्याप्त—इत्यर्थः । ४ पूर्पापूताविभावनः—इ०पा० । ५ एवम्—इ०पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जगतस्तथा ॥ ५४ ॥ सर्वकाले जगत्कृत्स्नमादित्यात्संप्रसूयते ॥ प्रलये च तमभ्येति आदित्यं दीप्ततेजसम् ॥ ५५ ॥ योगिनश्चात्र संलीनास्त्यक्त्वा गृहकलेवरम् ॥ वायुभूता विशंत्यस्मिंस्तेजोराशौ दिवाकरे ॥ ५६ ॥ तस्य रश्मिसहस्राणि शाखा इव विहंगमाः ॥ वसंत्याश्रित्य मुनयः संसिद्धा दैवतैः सह ॥ ५७ ॥ जनकादयो गृहस्थास्तु राजानो योगधर्मिणः ॥ वालखिल्यादयश्चैव मुनयो ब्रह्मचारिणः ॥ ५८ ॥ व्यासादयो वनस्थाश्च भिक्षुः पंचशिखस्तथा ॥ सर्वे ते योगमास्थाय प्रविष्टाः सूर्यमंडलम् ॥ ५९ ॥ शुको व्यासात्मजः श्रीमान्योगधर्ममवाप्य तु ॥ आदित्यकिरणान्पीत्वा न पुनर्भवमाप्तवान् ॥ ६० ॥ शब्दमात्राः श्रुतिसुखा ब्रह्मविष्णुशिवादयः ॥ प्रत्यक्षोऽयं स्मृतो देवः सूर्यस्तिमिरनाशनः ॥ ६१ ॥ तस्मादन्यव्रते भक्तिर्न कार्या शुभमिच्छता ॥ दृष्टेन साध्यते यस्माददृष्टं नित्यमेव हि ॥ त्वयातः सततं विप्र अर्चनीयो दिवाकरः ॥ ६२ ॥ ॥ ॥ याज्ञवल्क्य उवाच ॥ ॥ अहो य एप कथितो भवता भास्करो मम ॥ देवता सर्वदेवानां नैतन्मिथ्या प्रजायते ॥ ६३ ॥ तस्य देवस्य माहात्म्यं श्रुतं सुबहुशो मया ॥ देवर्षिसिद्धमनुजैः स्तुतस्येह महात्मनः ॥ ६४ ॥ कः स्तौति दैवतमजं यस्यैतत्सचराचरम् ॥ अक्षयस्याप्रमेयस्य किरणोद्गमनाद्भवेत् ॥ ६५ ॥ दक्षिणात्किरणाद्यस्य संभूतो भगवान्हरिः ॥ वामाद्भवांस्तथा जातः किरणात्किल कंजज ॥ ६६ ॥ लालाटाद्यस्य रुद्रस्तु का तुल्या तेन देवता ॥ तस्य देवस्य कः शक्तः प्रवक्तुं गुणविस्तरम् ॥ ६७ ॥ सोऽहमिच्छामि देवस्य तस्य सर्वात्मनः प्रभोः ॥ श्रोतुमाराधनं येन निस्तरेयं भवार्णवम् ॥ ६८ ॥ केनोपायेन मंत्रैर्वा रहस्यैः परिचर्यया ॥ दानैर्व्रतोपवासैर्वा होमैर्जप्यैरथापि वा ॥ ६९ ॥ आराधितः समस्तानां क्लेशानां हानिदो रविः ॥ शक्यः समाराधयितुं कथं शंस प्रजापते ॥ ७० ॥ धर्मार्थकामसंप्राप्तौ पुरुषाणां विचेष्टताम् ॥ जन्मन्यवितथा सैका क्रिया यार्कं समाश्रिता ॥ ७१ ॥ दुर्गसंसारकांतारमपारमभिधावताम् ॥ एकः सूर्यनमस्कारो मुक्तिमार्गस्य देशकः ॥ ७२ ॥ सोऽहमिच्छामि तं देवं सप्तलोकपरायणम् ॥ कालायनमशेपस्य जगतो ह्यवस्थितम् ॥ ७३ ॥ आराधयितुं गोपालं ग्रहेशममितौजसम् ॥ शंकरं जगतो दीपं स्मृतमात्राघनाशनम् ॥ ७४ ॥ तमनाद्यं सुरश्रेष्ठं प्रसादयितुमिच्छतः ॥ उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ॥ ॥ ७५ ॥ तस्यैतद्वचनं श्रुत्वा भक्तिमुद्वहतो रवौ ॥ जगाम परितोपं स पद्मयोनिर्महातपाः ॥ ७६ ॥ ॥ ब्रह्मोवाच ॥ ॥ यत्पृच्छसि द्विजश्रेष्ठ सूर्यस्याराधनं प्रति ॥ व्रतोपवासजप्यादि तदिहैकमनाः शृणु ॥ ७७ ॥ अनादि यत्परं ब्रह्म सर्वहेयविवर्जितम् ॥ व्याप्य

१ सवित्रे–इ० पा० । २ विचेष्टितम्–इ० पा० । ३ दाता । ४ कालत्रयमतिश्रेष्ठम्–इ० पा० । ५ आश्रयंतं महौजसम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्सर्वभूतेषु स्थितं सदसतः परम् ॥ ७८ ॥ प्रधानपुंसोरनयोर्यतः क्षोभः प्रवर्तते ॥ नित्ययोर्व्यापिनोश्चैव जगदादौ महात्मनोः ॥ ७९ ॥ तत्क्षोभकत्वाद्ब्रह्मांडं सृष्टेर्हेतुर्निरंजनः ॥ अहेतुरपि सर्वात्मा जायते परमेश्वरः ॥ ८० ॥ प्रधानपुरुषत्वं च तथैवेश्वरलीलया ॥ सम्प्रुपैति ततश्चैवं ब्रह्मत्वं छंदतः प्रभुः ॥ ८१ ॥ ततः स्थितौ पालयिता विष्णुत्वं जगतः क्षये ॥ रुद्रत्वं च जगन्नाथः स्वेच्छया कुरुते रविः ॥ ८२ ॥ तमेकमक्षरं धाम सर्वदेवनमस्कृतम् ॥ भेदाभेदस्वरूपं तं प्रणिपत्य दिवाकरम् ॥ वर्णयिष्येऽखिलं विप्र तस्यैवाराधनं रवेः ॥ ८३ ॥ गुह्यं चापि तथा तस्य भास्करस्य शृणुष्व वै ॥ तुष्टेन हि पुरा मह्यं कथितं भास्करेण तु ॥ ८४ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि याज्ञवल्क्यब्रह्मसंवादे सप्तमीकल्पे आदित्यमाहात्म्यवर्णनं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥छ॥ ॥ ब्रह्मोवाच ॥ ॥ प्रभाते संस्तुतो देवो मूर्तिहेतोर्मया पुरा ॥ यजंतं चापरं देवं भक्तिनम्रं महामतिः ॥ १ ॥ प्रत्यक्षत्वमथो गत्वा रहस्यं प्रोक्तवान्मम ॥ अहं च कृतवान्प्रश्नं दृष्ट्वा प्रत्यक्षतो रविम् ॥ २ ॥ वेदेषु च पुराणेषु सांगोपांगेषु गीयसे ॥ त्वमजः शाश्वतो धाता महाभूतमनुत्तमम् ॥ ३ ॥ प्रतिष्ठितं भूतभव्यं त्वयि सर्वमिदं जगत् ॥ चत्वारो ह्याश्रमा देव सर्वे गार्हस्थ्यमूलकाः ॥ ४ ॥ यजंते त्वामहरहर्नानामूर्तिसमाश्रिताः ॥ पिता माता हि सर्वस्य दैवतं त्वं हि शाश्वतम् ॥ ५ ॥ यजसे चैव कं देवमेवं चापि न विद्महे ॥ कथ्यतां मम देवेश परं कौतूहलं हि मे ॥ ६ ॥ इत्थं मयोक्तो भगवानिदं वचनमब्रवीत् ॥ अवाच्यमेतद्वक्तव्यमात्मगुह्यं सनातनम् ॥ ७ ॥ तव भक्तिमतो ब्रह्मन्वक्ष्यामीह यथातथम् ॥ यतः सूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवम् ॥ ८ ॥ इंद्रियैरिंद्रियार्थैश्च सर्वभूतैश्च वर्जितम् ॥ स ह्यंतरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते ॥ ९ ॥ त्रिगुणव्यतिरिक्तोऽसौ पुरुषश्चेति कथ्यते ॥ हिरण्यगर्भो भगवान्सैव बुद्धिरिति स्मृतः ॥ १० ॥ महानिति च योगेषु प्रधानश्चेति कथ्यते ॥ सांख्ये च पठ्यते शास्त्रे नामभिर्बहुभिः सदा ॥ ११ ॥ विश्वगो विश्वभूतश्च विश्वात्मा विश्वसंभवः ॥ धृतं चैवात्मकं येन इदं त्रैलोक्यमात्मना ॥ १२ ॥ अशरीरः शरीरेषु लिप्यते न च कर्मभिः ॥ ममांतरात्मा तव च ये चान्ये देहसंज्ञकाः ॥ १३ ॥ सर्वेषां साक्षिभूतोसौ न करोति न लिप्यते ॥ सगुणो निर्गुणो विष्णुर्ज्ञानगम्यो ह्यसौ स्मृतः ॥ १४ ॥ सर्वतः पाणिपादोऽसौ सर्वतोऽक्षिशिरोमुखः ॥ सर्वतः श्रुतियुक्तोसौ सर्वमावृत्य तिष्ठति ॥ १५ ॥ विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ॥ एकश्च

१ वर्तयिष्ये–इ० पा० । २ इतिहासपुराणेषु–इ० पा० । ३ महारूपम्–इ० पा० । ४ नानावृत्तीरुपाश्रिताः–इ० पा० । ५ स च–इ० पा० । ६ स वेदे पठ्यते शास्त्रे मुनिभिर्बहुभिः सदा–इ० पा० । ७ विश्वभावनः–इ० पा० । ८ शक्तिभूतः–इ० पा० । ९ विश्वः–इ० पा० । १० विश्वमूर्तिः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रति क्षेत्रेषु स्वैरचारी यथासुखम् ॥ १६ ॥ क्षेत्राण्यस्य शरीराणि बीजं चापि शुभाशुभम् ॥ तानि वेत्ति स योगात्मा अतः क्षेत्रज्ञ उच्यते ॥ अव्यक्तके पुरे शेते तेनासौ पुरुषः स्मृतः ॥ १७ ॥ विश्वं बहुविधं ज्ञेयं स च सर्वत्र विद्यते ॥ तस्मात्स बहुरूपत्वाद्विश्वरूप इति स्मृतः ॥ १८ ॥ महापुरुषशब्दं हि बिभर्त्येष सनातनः ॥ स तु वै विक्रियापन्नः सृजत्यात्मानमात्मना ॥ १९ ॥ आकाशात्पतितं तोयं याति स्वाद्वन्तरं यथा ॥ भूमे रसविशेषेण तथा गुणवशात्तु सः ॥२०॥ एक एव यथा वयुर्देहे तिष्ठति पंचधा ॥ एकत्वं च पृथक्त्वं च तथा तस्य न संशयः ॥२१॥ स्थानां तरविशेषेण यथाग्निर्लभते पराम् ॥ संज्ञां दावाग्निकाद्येषु तथा देवो ह्यसौ स्मृतः ॥२२॥ यथा दीपसहस्राणि दीप एकः प्रसूयते ॥ तथा रूपसहस्राणि स एवैकः प्रसूयते ॥ २३ ॥ स यदा बुध्यतेत्मानं तदा भवति केवलः ॥ एकत्वं प्रलये चास्य बहुत्वं स्यात्प्रवर्तने ॥ २४ ॥ नित्यं हि नास्ति जगति भूतं स्थावरजंगमम् ॥ ऋते तमेकमीशानं पुरुषं बीजसंज्ञितम् ॥ २५ ॥ अक्षयश्चाप्रमेयश्च सर्वगश्च स उच्यते ॥ तस्मादव्यक्तमुत्पन्नं त्रिगुणं सर्वकारणम् ॥ २६ ॥ अव्यक्ताव्यक्तभावस्था या सा प्रकृतिरुच्यते ॥ तां योनिं ब्रह्मणो विद्धि योसौ सदसदात्मकः ॥ २७ ॥ नास्ति तस्मात्परो ह्यन्यः स पिता स प्रजापतिः ॥ आत्मा मम स विज्ञेयस्ततस्तं पूजयाम्यहम् ॥ २८ ॥ स्वर्गताश्चापि ये केचित्तं नमस्यंति देहिनः ॥ ते तत्प्रसादाद्गच्छंति तेनादिष्टाः परां गतिम् ॥२९॥ तं देवाश्चासुराश्चैव नानामतसमाश्रिताः ॥ भक्त्या संपूजयंत्याद्यं गतिं चैषां ददाति सः ॥३०॥ स हि सर्वगतश्चैव निर्गुणश्चापि कथ्यते ॥ एवं ज्ञात्वा तमात्मानं पूजयामि सनातनम् ॥ भास्करं देवदेवेशं सर्वभूतेशमच्युतम् ॥३१॥ ॥ ब्रह्मोवाच ॥ ॥ इत्युक्तवान्पुरा पृष्टो मया देवो दिवाकरः॥पूजय त्वं महात्मानं तपंतं विपुलं तपः॥३२॥इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि ब्रह्मयाज्ञवल्क्यसंवादे सप्तमीकल्पे सूर्यमहिमवर्णनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ब्रह्मोवाच॥ ॥ वच्मि ते परमं देवं सर्वदेवैश्च पूजितम् ॥ आराधयंति यं देवं ब्रह्मविष्णुमहेश्वराः ॥ १ ॥ पद्माकृतिं सदा ब्रह्मा नलिनैर्गुग्गुलेन तु ॥ व्योमरूपं सदा देवं महादेवोर्चंते रविम् ॥ २ ॥ जातिपुष्पैर्द्विजश्रेष्ठ धूपेन विजयेन तु ॥ वृषणं सिह्लकं विप्र श्रीखण्डमगरुस्तथा ॥ ३ ॥ कर्पूरं च तथा मुस्ता शर्करा सत्वचा द्विज ॥ इत्येष विजयो धूपः स्वयं देवेन निर्मितः ॥ ४ ॥ केशवश्चक्ररूपं तु सदा संपूजयेद्रविम् ॥ नीलोत्पलदलश्यामो नीलोत्पलकदंबकैः॥ ५ ॥ धूपेनागुरुसंज्ञेन भक्तिश्रद्धासमन्वितः ॥ मया स पृष्टो देवेशस्तस्यैवाराधनाय वै ॥६॥ कानि पुष्पाणि चेष्टानि सदा भास्करपूजने ॥ तेन चोक्तानि

१ एकं सनातनम्–इ० पा० । २ देवेष्वसौ स्मृतः–इ० पा० । ३ तं विहायैकमीशानम्–इ० पा० । ४ आदिष्टाम्–इ० पा० । ५ नानामतामयस्थिताः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुष्पाणि स्वयं तानि निबोध मे ॥७॥ मल्लिकायास्तु कुसुमैर्भोगवाञ्जायते नरः ॥ सौभाग्यं पुंडरीकैश्च भजत्येव च शाश्वतम् ॥८॥ गन्धंकुटजकैः पुष्पैः परमैश्वर्यमश्नुते ॥ भवत्यक्षयमत्यन्तं नित्यमर्चयतो रविम् ॥९॥ मन्दारपुष्पैः पूजा तु सर्वकुष्ठविनाशिनी ॥ बिल्वपत्रैश्च कुसुमैर्महतीं श्रियमश्नुते ॥१०॥ अर्कस्रजा भवत्यर्थं सर्वकामफलप्रदः ॥ प्रदद्याद्रूपिणीं कन्यामर्चितो बकुलस्रजा ॥११॥ किंशुकैरर्चितो देवो न पीडयति भास्करः ॥ पूजितोऽगस्त्यकुसुमैःरानुकूल्यं प्रयच्छति ॥ १२ ॥ करवीरैस्तु विप्रेन्द्र सूर्यस्यानुचरो भवेत् ॥ तथा मुद्गरपुष्पैश्च समभ्यर्च्य दिवाकरम् ॥ १३ ॥ हंसयुक्तेन यानेन रवेः सालोक्यतां व्रजेत् ॥ शतपुष्पसहस्रैस्तु पूषसालोक्यतां व्रजेत् ॥ बकपुष्पैर्द्विजश्रेष्ठ याति भानुसंलोकताम् ॥ १४ ॥ चतुःसमेन गन्धेन समभ्यर्च्य दिवाकरम् ॥ पञ्चभूतालयस्थानमाप्नुयान्नात्र संशयः ॥१५॥ देवागारं तु संमार्ज्य भक्त्या यस्तु प्रलेपयेत् ॥ स रोगान्मुच्यते क्षिप्रं द्रव्यलाभं च विन्दति ॥ १६ ॥ तस्य चायतनं भक्त्या गैरिकेणोपलेपयेत् ॥ प्राप्नुयान्महतीं लक्ष्मीं रोगैश्चापि प्रमुच्यते ॥ १७ ॥ अष्टादशेह कुष्ठानि ये चान्ये व्याधयो नृणाम् ॥ प्रलयं यांति ते सर्वे मृदा यद्युपलेपयेत् ॥ १८॥ विलेपनानां सर्वेषां रक्तचन्दनमुत्तमम् ॥ पुष्पाणां करवीराणि प्रशस्तानि प्रचक्षते ॥ १९ ॥ नातः परतरं किंचिद्भास्वतस्तुष्टिकारकम् ॥ किं तस्य न भवेल्लोके यस्त्वेभिः स्वर्चयेद्रविम् ॥ २०॥ करवीरैः पूजयेद्यो भास्करं श्रद्धयान्वितः ॥ सर्वकामसमृद्धोऽसौ सूर्यकाममवाप्नुयात् ॥ २१ ॥ विलेप्यायतनं यस्तु कुर्यान्मण्डलकं शुभम् ॥ स सूर्यलोकमासाद्य मोदते शाश्वतीः समाः ॥ २२ ॥ एकेनास्य भवेदर्थो द्वाभ्यामारोग्यमश्नुते ॥ त्रिभिः सन्तत्यविच्छिन्ना चतुर्भिर्भार्गवीं लभेत् ॥ ॥ २३ ॥ पञ्चभिर्विपुलं धान्यं षड्भिरायुर्बलं यशः ॥ सप्तमंडलकारी स्यान्मडलाधिपतिर्नरः ॥ २४ ॥ आयुर्धनसुतैर्युक्तः सूर्यलोके महीयते ॥ घृतप्रदीपदानेन चक्षुष्माञ्जायते नरः ॥ २५ ॥ कटुतैलप्रदानेन स शत्रूञ्जयते नरः ॥ तिलतैलप्रदानेन सूर्यलोके महीयते ॥ २६ ॥ मधूकतैलदानेन सौभाग्यं परमं व्रजेत् ॥ संपूज्य विधिवद्देवं पुष्पधूपादिभिर्बुधः ॥ २७ ॥ यथाशक्त्या ततः पश्चान्नैवेद्यं भक्तितो न्यसेत् ॥ पुष्पाणां प्रवरा जाती धूपानां विजयः परः ॥ २८ ॥ गन्धानां कुंकुमं श्रेष्ठं लेपानां रक्तचन्दनम् ॥ दीपदाने घृतं श्रेष्ठं नैवेद्ये मोदकः परः ॥ २९ ॥ एतैस्तुष्यति देवेशः सान्निध्यं चाधिगच्छति ॥ एवं संपूज्य विधिवत्कृत्वा चापि प्रदक्षिणम् ॥ ३० ॥ प्रणम्य शिरसा देवं देवदेवं दिवाकरम् ॥ सुखा

१ सुगन्धकुब्जकैः-इ० पा० । २ सर्वकष्टविनाशिनी-इ० पा० । ३ कुन्दुरपुष्पैश्च-इ० पा० । ४ भौमसलोकताम्-इ० पा० । ५ उपलेप्यालयं यस्तु-इ० पा० । ६ भार्गवीं जामदग्न्योपार्जितत्वात्पृथ्वीमित्यर्थः । वस्तुतस्तु-लक्ष्मीमित्यर्थ एव ज्यायान्, पुराणेषु तस्यां भृगोरुत्पत्तिवर्णनात् । ७ चायुष्मान्--इ० पा० । ८ मधूकतैलदीपेन भोगभाग्यपरं सुखम्-इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सीनस्ततः पश्येद्रवेरभिमुखे स्थितः ॥ ३१ ॥ एकं सिद्धार्थकं कृत्वा हस्ते पानीयसंयुतम् ॥ कामं यथेष्टं हृदये कृत्वा तं वांछितं नरः ॥ ३२ ॥ पिबेत्सतोयं तं विप्र अस्पृष्टं दशनैः सकृत् ॥ द्वितीयायां तु सप्तम्यां द्वौ गृहीत्वा तु सुव्रत ॥ ३३ ॥ तृतीयायां तु सप्तम्यां ग्रहीतव्यास्त्रयोऽपि च ॥ ज्ञेयाश्चतुर्थ्यां चत्वारः पञ्चम्यां पञ्च एव हि ॥ ३४ ॥ षट् पिबेच्चापि षष्ठ्यां तु इतीयं वैदिकी श्रुतिः ॥ सप्तम्यां सप्तमायां तु सप्त चैव पिबेन्नरः ॥ ३५ ॥ आदौ प्रभृति विज्ञेयो मन्त्रोऽयमभिमन्त्रणे ॥ सिद्धार्थकस्त्वं हि लोके सर्वत्र श्रूयसे यथा ॥ तथा मामपि सिद्धार्थमर्थतः कुरुतां रविः ॥ ३६ ॥ ततो हविरुपस्पृश्य जपं कुर्याद्यथेप्सितम् ॥ हुताशनं च जुहुयाद्विधिदृष्टेन कर्मणा ॥३७॥ एवमेव पराः कार्याः सप्तम्यः सप्त सर्वदा ॥ एकात्प्रभृति कार्या सा सर्वदोदकसप्तमी ॥ ३८ ॥ एकं तोयेन सहितं द्वौ चापि घृतसंयुतौ ॥ त्रींस्तथा मधुना सार्धं दध्ना चतुर एव च ॥ ३९ ॥ युक्तान्नपयसा पञ्च षट् च गोमयसंयुतान् ॥ पञ्चगव्येन वै सप्त पिबेत्सिद्धार्थकान्द्विज ॥ ४० ॥ अनेन विधिना यस्तु कुर्यात्सर्षपसप्तमीम् ॥ बहुपुत्रो बहुधनः सिद्धार्थश्चापि सर्वदा ॥ ४१ ॥ इह लोके नरो विप्र प्रेत्य याति विभावसुम् ॥ तस्मात्संपूजयेद्देवं विधिनानेन भास्करम् ॥ ४२ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सिद्धार्थसप्तमीव्रतवर्णनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ सप्तम्यामुषितो विप्रः स्वप्नदर्शनमुच्यते ॥ स्वप्ने दृष्टे च सप्तम्यां पुरुषो नियतव्रतः ॥ १ ॥ समाप्य विधिवत्सर्वं जपहोमादिकं क्रमात् ॥ पूजयित्वा दिनेशं तु यथाविभवमात्मनः ॥ २ ॥ ततः शयीत शयने देवदेवं विचिंतयन् ॥ संप्रसुप्तो यदा पश्येदुदयंतं दिवाकरम् ॥ ३ ॥ शक्रध्वजं तथा चंद्रं तस्य सर्वाः समृद्धयः ॥ दृश्यं जनं तथा शंक्तिं स्रग्विगोवेणुनिस्वनाः ॥ ४ ॥ श्वेताब्जचामरादर्शकनकासिसुतोद्भवम् ॥ रुधिरस्य स्रुतिं सेकं पानं[1] चैश्वर्यकारम् ॥ ५ ॥ श्वेतायाः पंचपूताया दर्शनं वृद्धिकारकम् ॥ प्रजापतेर्घृताक्तस्य दर्शनं पुत्रदं स्मृतम् ॥ ६ ॥ शस्तवृक्षाभिरोहश्च क्षिप्रमैश्वर्यकारकः ॥ दोहनं महिषीसिंहीगोधेनूनां स्वके मुखे ॥ ७ ॥ धनुषां च शराणां च नाभौ च द्रुतनिर्गतिः ॥ अभिहन्यात्स्वयं खादेत्सिंहान्नागा भुजगांस्तथा ॥ ८ ॥ स्वांगशीर्षं हुतवहे तस्य श्रीरग्रतः स्थिता ॥ राजते हैमने पात्रे यो भुंक्ते पायसं द्विजः ॥ ९ ॥ पद्मपत्रे यथा विप्रस्तस्य जंतोर्बलं भवेत् ॥ द्यूते वादेथ वा युद्धे विजयो हि सुखावहः ॥ १० ॥ अग्नेस्तु ग्रसनं विप्र आग्नेयं वृद्धिकारकम् ॥ गात्रस्य ज्वलनं विप्र शिरोवेधश्च भूतये॥११॥

१ शक्रम्—इ० पा० । २ आयु श्रीमागतश्चेव—इ० पा० । ३ ततश्चन्द्रोपमो भवेत्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माल्यांबराणां शुक्लानां शस्तानां शुक्लपक्षिणाम् ॥ सदा लाभं प्रशंसंति तथा विष्ठानुलेपनम् ॥ १२ ॥ स्वांगस्य कर्तने क्षेपे रथयाने प्रजागमः ॥ नानाशिरोबाहुता च हस्तानां कुरुते श्रियम् ॥ १३ ॥ अगम्यागमनं चैव शोकमध्ययनं तथा ॥ देवद्विजजनाचार्यगुरुवृद्धतपस्विनः ॥ ॥ १४ ॥ यद्यद्वदंति तत्सर्वं सत्यमेव हि निर्दिशेत् ॥ प्रशस्तदर्शनं चैव अभिषेको नृपश्रियाः ॥ १५ ॥ स्याद्राज्यं शिरश्छेदेन बहुधा स्फुटितेन तु ॥ रुदितं हर्षसंप्राप्त्यै राज्यं निगडबंधने ॥ १६ ॥ तुरंगं वृषभं पद्मं राजानं श्वेतकुंजरम् ॥ महदैश्वर्यमाप्नोति योभीकश्चाधिरोहति ॥ १७ ॥ ग्रसमानो ग्रहांस्तारा महीं च परिवर्तयन् ॥ उन्मूलयन्पर्वतांश्च राज्यलाभमवाप्नुयात् ॥ १८ ॥ देहान्निष्क्रांतिरंत्राणां तैर्वा वृक्षस्य वेष्टनम् ॥ पातः समुद्रसरितामैश्वर्याणि सुखानि च ॥१९॥ उदधिं सरितं वापि तीर्त्वा पारं प्रयाति च ॥ अद्रिं लंघयतश्चापि भवंत्यर्थजयायुषः ॥२०॥ उज्ज्वला स्त्री विशेदंकमाशीर्वादपराः स्त्रियः ॥ भवत्यर्थागमः शीघ्रं कृमिभिर्यदि भक्ष्यते ॥ २१ ॥ स्वप्ने स्वप्न इति ज्ञातं दृष्टप्रकथनं तथा ॥ मंगलानां च सर्वेषां शुभं दर्शनमेव च ॥ २२ ॥ संयोगश्चैव मंगल्यैरारोग्यधनकारकः ॥ ऐश्वर्यराज्यलाभाय यस्मिन्स्वप्न उदाहृतः ॥ २३ ॥ तैर्दृष्टे रोगिणो रोगान्मुच्यंते नात्र संशयः ॥ न स्वप्नं शोभनं दृष्ट्वा स्वप्यात्प्रातश्च कीर्तयेत् ॥ राजभोजकविप्रेभ्यः शुचिभ्यश्च शुचिर्नरः ॥ २४ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे स्वप्नदर्शनवर्णनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ छ ॥

॥ ब्रह्मोवाच ॥ ॥ ततो मध्याह्नसमये स्नातः प्रयतमानसः ॥ तथैव देवान्विधिवत्पूजयित्वा यथासुखम् ॥ १ ॥ सम्यक्कृतजपो मौनी नरो हुतहुताशनः ॥ निष्क्रम्य देवायतनाद्भोजकान्भोजयेत्ततः ॥ २ ॥ तथा पुराणविदुष इतिहासविदो द्विजान् ॥ तथा वेदविदश्चैव दिव्यान्भौमांश्च सुव्रत ॥ ३ ॥ रक्तानि वस्त्राणि तथा च गावः सुगंधमाल्यादि हविष्यमन्नम् ॥ पयस्विनी चाप्यथ भोजकाय देया तथान्यत्प्रियमात्मनो यत् ॥ ॥ ४ ॥ भवेदलाभो यदि भोजकानां विप्रास्तदार्हंति जयोपजीविनः ॥ ये मंत्रविद्ब्राह्मणपाठकाश्च ये येऽपि सामाध्ययनेषु युक्ताः ॥ ५ ॥ प्रथमं भोजका भोज्याः पुराणविदुषैः सह ॥ तेषामृते मंत्रविदस्तथा वेदविदो द्विजाः ॥ ६ ॥ कृत्वैवं सप्तमीः सप्त नरो भक्त्या समन्वितः ॥ श्रद्धधानोऽनसूयश्च अनंतं प्राप्नुयात्सुखम् ॥७॥ दशानामश्वमेधानां कृतानां यत्फलं लभेत् ॥ तत्फलं सप्तमीः सप्त कृत्वा प्राप्नोति मानवः ॥८॥ दुष्प्रापं नास्ति तल्लोके अनया यन्न लभ्यते ॥ न च रोगोस्त्यसौ लोके एनया यो न शाम्यति ॥ ९ ॥ कुष्ठानि चापि सर्वाणि दुरुच्छेद्यान्यपि ध्रुवम् ॥



१ सुरावारणवल्यानां वस्त्राणां युक्तपक्षिणाम्–इ० पा० । २ दिवाकरम्–इ० पा० । ३ नरः–इ० पा० । ४ आर्षोऽयं पाठः सर्वेषु पुस्तकेषूपलभ्यते । ५ फलम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपयांति यथा नागा गरुडस्य भयार्दिताः ॥ १० ॥ व्रतनियमतपोभिः सप्तमीः सप्त एवं विधिवदिह हि कृत्वा मानवो धर्मशीलः ॥ श्रुतधन सुतभाग्यारोग्यपुण्यैरुपेतो व्रजति तदनुलोकं शाश्वतं तिग्मरश्मेः ॥ ११ ॥ इमं विधिं द्विजश्रेष्ठ श्रुत्वा कृत्वा च मानवः ॥ सहस्ररश्मिं स विशे न्नात्र कार्या विचारणा ॥ १२ ॥ सुरैर्वा मुनिभिर्वापि पुराणज्ञैरिदं श्रुतम् ॥ सर्वे ते परमात्मानं पूजयंति दिवाकरम् ॥ १३ ॥ इदमाख्यानमार्येयं यन्मयाभिहितं तव ॥ सूर्यभक्ताय दातव्यं नेतराय कदाचन ॥ १४ ॥ यश्चैतच्छ्रावयेन्नित्यं यश्चैतच्छृणुयान्नरः ॥ स सहस्रार्चिषं देवं प्रविशेन्नात्र संशयः ॥ १५ ॥ मुच्येदार्तस्तथा रोगाच्छ्रुत्वेमामादितः कथाम् ॥ जिज्ञासुर्लभते कामान्भक्तः सूर्यगतिं लभेत् ॥ १६ ॥ क्षेमेण गच्छतेऽध्वानं यस्त्विदं पठतेध्वनि ॥ यो यं प्रार्थयते कामं स तं प्राप्नोति च ध्रुवम् ॥ १७ ॥ एकांतभावोपगत एकांते सुसमाहितः ॥ प्राप्यैतत्परमं गुह्यं भूत्वा सूर्य व्रतो नरः ॥१८॥ प्राप्नोति परमं स्थानं भास्करस्य महात्मनः ॥ लग्नगर्भा प्रमुच्येत गर्भिणी जनयेत्सुतम् ॥१९॥ वंध्या प्रसवमाप्नोति पुत्रपौत्रसम न्वितम् ॥ एवमेतन्ममाख्यातं भास्करेणामितौजसा ॥ मयापि तव माख्यातं भक्त्या भानोरिदं द्विज ॥ २० ॥ पूजनीयस्त्वया भानुः सर्वपापोप शांतये ॥ स हि धाता विधाता च सर्वस्य जगतो गुरुः ॥ २१ ॥ उद्यन्यः कुरुते नित्यं जगद्वितिमिरं करैः ॥ द्वादशात्मा स देवेशः प्रीयतां तेऽ दितेः सुतः ॥ २२ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे आदित्यमाहात्म्ये सर्षपसप्तमीव्रतवर्णनं नाम सप्ततितमोऽध्यायः ॥ ७० ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ नामभिः संस्तुतो देवो यैरर्कः परितुष्यति ॥ तानि ते कीर्तयाम्येष यथावदनुपूर्वशः ॥ १ ॥ नमः सूर्याय नित्याय रवये कार्यभानवे ॥ भास्कराय मतंगाय मार्तंडाय विवस्वते ॥ २ ॥ आदित्यायादिदेवाय नमस्ते रश्मि मालिने ॥ दिवाकराय दीप्ताय अग्नये मिहिराय च ॥ ३ ॥ प्रभाकराय मित्राय नमस्तेऽदितिसंभव ॥ नमो गोपतये नित्यं दिशां च पतये नमः ॥ ४ ॥ नमो धात्रे विधात्रे च अर्यम्णे वरुणाय च ॥ पूष्णे भगाय मित्राय पर्जन्यायांशवे नमः ॥ ५ ॥ नमो हितकृते नित्यं धर्माय तपनाय च ॥ हरये हरिताश्वाय विश्वस्य पतये नमः ॥ ६ ॥ विष्णवे ब्रह्मणे नित्यं त्र्यंबकाय तथात्मने ॥ नमस्ते सप्तलोकेश नमस्ते सप्तसप्तये ॥ ७ ॥ एकस्मै हि नमस्तुभ्यमेकचक्ररथाय च ॥ ज्योतिषां पतये नित्यं सर्वप्राणभृते नमः ॥८॥ हिताय सर्वभूतानां शिवायार्तिहराय च ॥ नमः पद्मप्रबोधाय नमो वेदादिमूर्तये ॥ ९ ॥ काधिजाय नमस्तुभ्यं नमस्तारासुताय च ॥ भीमजाय नमस्तुभ्यं पावकाय च वै नमः ॥ १० ॥ धिषणाय नमो

१ नाभकाय-इ० पा० । २ भक्त्या स्वर्गगतिं लभेत्-इ० पा० । ३ तुभ्यम्-इ० पा० । ४ हराय-इ० पा० । ५ द्वादशमूर्तये-इ० पा० । ६ भौमजाय-इ०, कविजाय-इ० च पा० । ७ विकटाय-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यं नमः कृष्णाय नित्यदा ॥ नमोऽस्त्वदितिपुत्राय नमो लक्ष्याय नित्यशः ॥११॥ एतान्यादित्यनामानि मया प्रोक्तानि वै पुरा ॥ आराधनाय देवस्य सर्वकामेन सुव्रत ॥ १२ ॥ सायं प्रातः शुचिर्भूत्वा यः पठेत्सुसमाहितः ॥ स प्राप्नोत्यखिलान्कामान्यथाहं प्राप्तवान्पुरा ॥ १३ ॥ प्रसादात्तस्य देवस्य भास्करस्य महात्मनः ॥ श्रीकामः श्रियमाप्नोति धर्मार्थी धर्ममाप्नुयात् ॥ १४ ॥ आतुरो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ राज्यार्थी राज्यमप्नोति कामार्थी काममाप्नुयात् ॥ १५ ॥ एतज्जप्यं रहस्यं च संध्योपासनमेव च ॥ एतेन जपमात्रेण नरः पापात्प्रमुच्यते ॥ ॥ १६ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे ब्रह्मप्रोक्तसूर्यनामवर्णनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ इत्थं ब्रह्मवचो योगी श्रुत्वा राजन्दिवाकरम् ॥ व्योमरूपं समाराध्य गतः सूर्यसलोकताम् ॥१॥ तथा त्वमपि राजेंद्र पूजयित्वा विभावसुम् ॥ गमिष्यसि परं स्थानं देवानामपि दुर्लभम् ॥ २ ॥ ॥ शतानीक उवाच ॥ ॥ आद्यं स्थानं रवेः कुत्र जंबूद्वीपे महामुने ॥ यत्र पूजां विधानोक्तां प्रतिगृह्णात्यसौ रविः ॥३॥ ॥ सुमंतुरुवाच॥ ॥स्थानानि त्रीणि देवस्य द्वीपेऽस्मिन्भास्करस्य तु ॥ पूर्वं मिंद्रवनं नाम तथा मुंडीरमुच्यते ॥ ४ ॥ कालप्रियं तृतीयं तु त्रिषु लोकेषु विश्रुतम् ॥ तथान्यदपि ते वच्मि यत्पुरा ब्रह्मणोदितम् ॥५॥ चंद्रभागातटे नाम्ना पुरं यत्सांबसंज्ञितम् ॥ द्वीपेस्मिन्च्छाश्वतं स्थानं यत्र सूर्यस्य नित्यता ॥ ६ ॥ प्रीत्या सांबस्य तत्रार्को जनस्यानुग्रहाय च ॥ तत्र द्वादशभागेन मित्रो मैत्रेण चक्षुषा ॥ ७ ॥ अवलोकञ्जगत्सर्वं श्रेयोऽर्थं तिष्ठते सदा ॥ प्रयुक्तां विधिवत्पूजां गृह्णाति भगवान्स्वयम् ॥ ८ ॥ ॥ शतानीक उवाच ॥ ॥ कोयं सांबः सुतः कस्य कस्य प्रीतो दिवाकरः ॥ यस्य चायं सहस्रांशुर्वरदः पुंण्यकर्मणः ॥ ९ ॥ ॥ सुमंतुरुवाच ॥ ॥ य एते द्वादशादित्या विराजंते महाबलाः ॥ तेषां यो विष्णुसंज्ञस्तु सर्वलोकेषु विश्रुतः ॥ १० ॥ इहासौ वासुदेवत्वमवाप भगवान्विभुः ॥ तस्मात्सांबः सुतो जज्ञे जांबवत्यां महाबलः ॥ ११ ॥ स तु पित्रा भृंशं शप्तः कुष्ठरोगमवाप्तवान् ॥ तेनायं स्थापितः सूर्यः स्वनाम्ना च पुरं कृतम् ॥ ॥ १२ ॥ ॥ शतानीक उवाच ॥ ॥ शप्तः कस्मिन्निमित्तेऽसौ पित्रा चैवात्मसंभवः ॥ नाल्पं हि कारणं विप्र येनासौ शप्तवान्सुतम् ॥ १३ ॥ ॥ सुमंतुरुवाच ॥ ॥ शृणुष्वावहितो राजंस्तस्य यच्छापकारणम् ॥ दुर्वासा नाम भगवान्रुद्रस्यांशसमुद्भवः ॥ १४ ॥ अटमानः स भगवांस्त्रील्लोंका



१ भारतस्य तु–इ० पा० । २ मित्रवलम्–इ०, मित्रवनम्–इ० च० पा० । ३ कोलप्रियम्–इ० पा० । ४ सर्वत्र सांबशब्दे शांब इति तालव्यादिः पा० । ५ विद्यते–इ० पा० । ६ कोऽयं सांबः कुतस्तस्य यस्य नाम्ना रवेः पुरम्–इ० पा० । ७ पृथुकर्मणः–इ० पा० । ८ सांबः स्वयंभुवा–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्प्रचचार ह ॥ अथ प्राप्तो द्वारवतीं मधुसंज्ञोचितां पुरा ॥ १५ ॥ तमागतमृषिं दृष्ट्वा सांबो रूपेण गर्वितः ॥ पिंगाक्षं क्षुधितं रूक्षं विरूपं सुकृशं तथा ॥ १६ ॥ अनुकारास्पदं चक्रे दर्शने गमने तथा ॥ दृष्ट्वा तस्य मुखं सांबो वक्र चक्रे तथात्मनः ॥ १७ ॥ मुखं कुरुकुलश्रेष्ठ गर्वितो यौवनेन तु ॥ अथ क्रुद्धो महातेजा दुर्वासा ऋषिसत्तमः ॥ १८ ॥ सांबं चोवाच भगवांन्विधुन्वन्मुखमात्मनः ॥ यस्माद्विरूपं मां दृष्ट्वा स्वात्मरूपेण गर्वितः ॥ १९ ॥ गमने दर्शने मह्यमनुकारं समाचरः ॥ तस्मात्तु कुष्ठरोगित्वमचिरात्त्वं गमिष्यसि ॥ २० ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सांबाय दुर्वाससा शापविसर्जनं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ छ ॥ ॥ ॥ सुमंतुरुवाच ॥ ॥ एतस्मिन्नेव काले तु नारदो भगवानृषिः ॥ ब्रह्मणो मानसः पुत्रस्त्रिषु लोकेषु विश्रुतः ॥ १ ॥ सर्वलोकचरः सोऽथ अटमानः समंततः ॥ वासुदेवं स वै द्रष्टुं नित्यं द्वारवतीं पुरीम् ॥२॥ आयाति ऋषिभिः सार्धं क्रोधनो मुनिसत्तमः॥अथागच्छति तस्मिंस्तु सर्वे यदुकुमारकाः ॥ ३ ॥ प्रद्युम्नप्रभृतयो ये प्रह्वाश्चावनताः स्थिताः ॥ अभिवाद्यार्घ्यपाद्याभ्यां पूजां चक्रुः समंततः ॥ ४ ॥ सांबस्त्ववश्यभावित्वात्तस्य शापस्य कारणम् ॥ अवज्ञां कुरुते नित्यं नारदस्य महात्मनः ॥ ५ ॥ रतः क्रीडासु वै नित्यं रूपयौवनगर्वितः ॥ अविनीतं तु तं दृष्ट्वा चिंतयामास नारदः ॥ ६ ॥ अस्याहमविनीतस्य करिष्ये विनयं शुभम् ॥ एवं संचिंतयित्वा तु वासुदेवमथाब्रवीत् ॥७॥ ॥ इमाः षोडश साहस्र्यः स्त्रियो यादवसत्तम ॥ सर्वासां हि सदा सांबे भावो देव समाश्रितः ॥८॥ रूपेणाप्रतिमः सांबो लोकेस्मिन्सचराचरे॥सदा हीच्छंति तांस्तस्य दर्शनं चापि हि स्त्रियः ॥ ९ ॥ श्रुत्वैवं नारदाद्वाक्यं चिंतयामास केशवः ॥ यदेतन्नारदेनोक्तमन्यदत्र तु किं भवेत् ॥ १० ॥ वचनं श्रूयते लोके चापल्यं स्त्रीषु विद्यते ॥ श्लोकौ चेमौ पुरा गीतौ चित्तज्ञैर्योपितां द्विजैः ॥ ११ ॥ पौंश्चल्याच्चलचित्तत्वान्नैःस्नेह्याच्च स्वभावतः ॥ रक्षिताः सर्वतो ह्येता विकुर्वन्ति हि भर्तृषु ॥ १२ ॥ नैता रूपं परीक्षंते नासां वयसि निश्चयः ॥ सुरूपं वा विरूपं वा पुमानित्येव भुंजते ॥ १३ ॥ ॥ सुमंतुरुवाच ॥ ॥ मनसा चिंतयन्नेव कृष्णो नारदमब्रवीत् ॥ न ह्यहं श्रद्दधाम्येतद्यदेतद्भाषितं त्वया ॥१४॥ ब्रुवाणमेवं देवं तु नारदो वाक्यमब्रवीत्॥ तथाहं तत्करिष्यामि यथा श्रद्धास्यते भवान् ॥ १५ ॥ एवमुक्त्वा ययौ स्वर्गं नारदस्तु यथागतः ॥ ततः कतिपयाहोभिर्द्वारकां पुनरभ्यगात् ॥ ॥ १६ ॥ तस्मिन्नहनि देवोऽपि सहान्तःपुरिकैर्जनैः ॥ अनुभूय जलक्रीडां पानमासेवते रहः ॥१७॥ रैम्यरैवतकोद्याने नानाद्रुमविभूषिते ॥ सर्वर्तुकुसुमैर्नित्यं वासिते

१ जटिलम्–इ० पा० । २ सांबस्य–इ० पा० । ३ प्रत्युवाच ह–इ० पा० । ४ भूयः–इ० पा० । ५ पुण्यरैवतकोद्याने नानारत्नविभूषिते–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वकानने ॥१८॥ नानाजलजफुल्लाभिर्दीर्घिकाभिरलंकृते ॥ हंससारससंघुष्टे चक्रवाकोपशोभिते॥१९॥तस्मिन्स रमते देवः स्त्रीभिः परिवृतस्तदा॥ हारनूपुरकेयूररशनाद्यैर्विभूषणैः ॥ २० ॥ भूषितानां वरस्त्रीणां चार्वंगीनां विशेषतः ॥ ताभिः संपीयते पानं शुभगंधान्वितं शुभम् ॥ २१ ॥ एतस्मिन्नंतरे बुद्धा मद्यपानात्ततः स्त्रियः ॥ उवाच नारदः सांब सांबोत्तिष्ठ कुमारक ॥ २२ ॥ त्वां समाह्वायते देवो न युक्तं स्थातुमत्र ते ॥ तद्वाक्यार्थमबुद्ध्वैव नारदेनाथ चोदितः ॥ २३ ॥ गत्वा तु सत्वरं सांबः प्रणाममकरोत्प्रभोः ॥ साष्टांगं च हरेः सांबो विधिवद्वल्लभस्य च ॥ २४ ॥ एतस्मिन्नंतरे तत्र यास्तु वै स्वल्पसात्त्विकाः ॥ तं दृष्ट्वा सुंदरं सांबं सर्वाश्चुक्षुभिरे स्त्रियः ॥ २५ ॥ न स दृष्टः पुरा याभिरंतःपुरनिवासिभिः ॥ मद्यदोषात्ततस्तासां स्मृतिलोपात्तथा नृप ॥२६॥ स्वभावतोल्पसत्त्वानां जघनानि विसुस्रुवुः ॥ श्रूयते चाप्ययं श्लोकः पुराणप्रथितः क्षितौ॥२७॥ ब्रह्मचर्येऽपि वर्तन्त्याः साध्व्या ह्यपि च श्रूयते ॥ हृद्यं हि पुरुषं दृष्ट्वा योनिः संक्लिद्यते स्त्रियाः ॥ २८ ॥ लोकेपि दृश्यते ह्येतन्मद्यस्यात्यर्थसेवनात् ॥ लज्जां मुंचंति निःशंका ह्रीमत्यो ह्यपि हि स्त्रियः ॥ २९ ॥ समांसैर्भोजनैः स्निग्धैः पानैः सीधुसुरासवैः ॥ गंधैर्मनोज्ञैर्वस्त्रैश्च कामः स्त्रीषु विजृंभते ॥ ३० ॥ सीधुप्रयुक्तं शुक्रेण सततं साधु हीच्छता ॥ मद्यं न पेयमत्यर्थं पुरुषेण विपश्चिता ॥ ३१ ॥ नारदोप्यथ तं सांबं प्रेषयित्वा त्वरान्वितः ॥ आजगामाथ तत्रैव सांबस्यानुपदेन तु ॥ ३२ ॥ आयांतं ताश्च तं दृष्ट्वा प्रियं सौमनसमृषिम् ॥ सहसैवोत्थिताः सर्वाः स्त्रियस्तं मदविह्वलाः ३३ ॥ तासामथोत्थितानां तु वासुदेवस्य पश्यतः ॥ भित्त्वा वासांसि शुभ्राणि पत्रेषु पतितानि तु ॥ ३४ ॥ ता दृष्ट्वा तु हरिः क्रुद्धः सर्वास्ता शप्तवान्स्त्रियः ॥ यस्माद्गतानि चेतांसि मां मुक्त्वान्यत्र च स्त्रियः ॥ ३५ ॥ तस्मात्पतिकृताँल्लोकानायुषोंते न यास्यथ ॥ पतिलोकपरिभ्रष्टाः स्वर्गमार्गात्तथैव च ॥ ३६ ॥ भूत्वा चाशरणा यूयं दस्युहस्तं गमिष्यथ ॥ ३७ ॥ ॥ सुमंतुरुवाच ॥ ॥ शापदोषात्ततस्तस्मात्ताः स्त्रियः स्वर्गते हरौ ॥ हृताः पांचनदैश्चोरैरर्जुनस्य तु पश्यतः ॥ अल्पसत्त्वास्तु यास्त्वासन्गतास्ता दूषणं स्त्रियः ॥ ३८ ॥ रुक्मिणी सत्यभामा च तथा जांबवती प्रिया ॥ नैता गता दस्युहस्तं स्वेन सत्त्वेन रक्षिताः ॥ ३९ ॥ शप्त्वैव ताः स्त्रियः कृष्णः सांबमप्यशपत्ततः ॥ यस्मादतीव ते कांतं रूपं दृष्ट्वा इमाः स्त्रियः ॥४०॥ क्षुब्धाः सर्वा यतस्तस्मात्कुष्ठरोगमवाप्नुहि ॥ तस्य तद्वचनं श्रुत्वा सांबः कृष्णस्य भारत॥४१॥ उवाच प्रहसन्राजन्संस्मरन्नृषिभाषितम् ॥ अनिमित्तमहं तात भावदोषविवर्जितः ॥ शप्तो न मेत्र वै क्रुद्धो दुर्वासा अन्यथा वदेत् ॥४२॥ ॥ सुमंतुरुवाच ॥ ॥

१ पितुः–इ० पा० । २ क्षीबभात्र आर्षः । ३ माल्यैश्च–इ० पा० । ४ साधु प्रयुक्तम्–इ० पा० । ५ तस्मात्परिहताश्चांते न पेद्यत न मां पुनः–इ० पा० । ६ कृत्वा ह्यविनयं यूयं दस्युहस्तं गमिष्यथ–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्मिञ्छत्तेऽनिमित्तेऽसौ पित्रा जांबवतीसुतः ॥ प्राप्तवान्कुष्ठरोगित्वं विरूपत्वं च भारत ॥ ४३ ॥ सांबेन पुनरप्येव दुर्वासाः कोपितो मुनिः ॥ तच्छापान्मुसलं जातं कुलं येनास्य घातितम् ॥ ४४ ॥ श्रुत्वा ह्यविनयाद्दोषान्सांबेनाप्तान्क्षमाधिप ॥ नित्यं भाव्यं विनीतेन गुरुदेवद्विजातिषु ॥ ४५ ॥ प्रियं च वाक्यं वक्तव्यं सर्वप्रीतिकरं विभो ॥ किं त्वया न श्रुतौ श्लोकौ यावुक्तौ वेधसा पुरा ॥ शृंण्वतो देवदेवस्य व्योमकेशस्य भारत ॥ ४६ ॥ यो धर्मशीलो जितमानरोषो विद्याविनीतो न परोपतापी ॥ स्वदारतुष्टः परदारवर्जितो न तस्य लोके भयमस्ति किंचित् ॥ ४७ ॥ न तथा शीतलसलिलं न चंदनरसो न शीतला छाया ॥ प्रह्लादयति च पुरुषं यथा मधुरभाषिणी वाणी ॥ ४८ ॥ ततः शापाभिभूतेन सम्यगाराध्य भास्करम् ॥ सांबेनाप्तं तथारोग्यं रूपं च परमं पुनः ॥ ४९ ॥ रूपमाप्य तथाऽऽरोग्यं भास्कराद्धरिसूनुना ॥ निवेशितो रविर्भक्त्या स्वनाम्ना क्ष्माधिपेश्वर ॥ ५० ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सांबकृतसूर्याराधनवर्णनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥छ॥ ॥ शतानीक उवाच ॥ ॥ स्थापितो यदि सांबेन सूर्यश्चंद्रसरित्तटे ॥ तस्मान्नाद्यमिदं स्थानं यथैतद्भाषते भवान् ॥१॥ ॥ सुमंतुरुवाच ॥ ॥ आद्यं स्थानमिदं भानोः पश्चात्सांबेन भारत ॥ विस्तरेणास्य चाद्यस्य कथ्यमानं निबोध मे ॥ २ ॥ अत्राद्यो लोकनाथोऽसौ रश्मिमाली जगत्पतिः ॥ मित्रत्वे च स्थितो देवस्तपस्तेपे पुरा नृप ॥ ३ ॥ अनादिनिधनो ब्रह्मा नित्यश्चाक्षय एव च ॥ सृष्ट्वा प्रजापतीन्ब्रह्मा सृष्ट्वा च विविधाः प्रजाः॥४॥ससर्ज मुखतो देवं पूर्वमंबुजसन्निभम् ॥ कंजजस्तं ततो देवं वक्षस्तो निर्ममे नृप ॥ ५ ॥ ललाटात्कुरुशार्दूल नीरजाक्षं दिगंबरम् ॥ ऋभवः पादतः सर्वे सृष्टास्तेन महात्मना ॥६॥ ततः शतसहस्रांशुरव्यक्तः पुरुषः स्वयम् ॥ कृत्वा द्वादशधात्मानमदित्यामुदपद्यत ॥ ७ ॥ इन्द्रो धाता च पर्जन्यः पूषा त्वष्टार्यमा भगः ॥ विवस्वानंशुर्विष्णुश्च वरुणो मित्र एव च ॥ ८ ॥ एभिर्द्वादशभिस्तेन आदित्येन महात्मना ॥ कृत्स्नं जगदिदं व्याप्तं मूर्तिभिस्तु नराधिप ॥ ९ ॥ तस्य या प्रथमा मूर्तिरादित्यस्येन्द्रसंज्ञिता ॥ स्थिता सा देवराजत्वे दानवासुरनाशिनी ॥ १० ॥ द्वितीया चास्य या मूर्तिर्नाम्ना धातेति कीर्तिता ॥ स्थिता प्रजापतित्वे सा विधात्री सृजते प्रजाः ॥ ११ ॥ तृतीया तस्य या मूर्तिः पर्जन्य इति विश्रुता ॥ करेष्वेव स्थिता सा तु वर्षत्यमृतमेव हि ॥ १२ ॥ चतुर्थी तस्य या मूर्तिर्नाम्ना पूषेति विश्रुता ॥ मंत्रेष्ववस्थिता सा तु प्रजाः पुष्णाति भारत ॥ १३ ॥ मूर्तिर्या पंचमी तस्य नाम्ना त्वष्टेति विश्रुता ॥ वनस्पतिषु सा नित्यमोष

१ पुरतः–इ० पा० । २ यथाह मधुसूदनः–इ० पा० । ३ दिवाकरम्–इ० पा० । ४ भारत–इ० पा० । ५ नित्यशः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धीषु च वै स्थिता ॥ १४ ॥ षष्ठी मूर्तिस्तु या तस्य अर्यमेति च विश्रुता ॥ प्रजासंवरणार्थं सा पुरेष्वेव स्थिता सदा ॥ १५ ॥ भानोर्या सप्तमी मूर्तिर्नाम्ना भग इति स्मृता ॥ भूमौ व्यवस्थिता सा तु क्ष्माधरेषु च भारत ॥ १६ ॥ अष्टमी चास्य या मूर्तिर्विवस्वानिति संज्ञिता ॥ अग्नौ व्यवस्थिता सा तु पचतेऽन्नं शरीरिणाम् ॥ १७ ॥ नवमी चित्रभानोर्या मूर्तिरंशुरिति स्मृता ॥ वीर चंद्रे स्थिता सा तु आप्याययति वै जगत् ॥१८॥ मूर्तिर्या दशमी तस्य विष्णुरित्यभिधीयते ॥ प्रादुर्भवति सा नित्यं गीर्वाणारिविनाशिनी ॥ १९ ॥ मूर्तिस्त्वेकादशी या तु भानोर्वरुणसंज्ञिता ॥ जीवाययति सा कृत्स्नं जगद्धि समुपाश्रिता ॥ २० ॥ अपां स्थानं समुद्रस्तु वरुणोऽत्र प्रतिष्ठितः ॥ तस्माद्वै प्रोच्यते वीर सागरो वरुणालयः ॥ ॥ २१ ॥ मूर्तिर्या द्वादशी भानोर्नामतो मित्रसंज्ञिता ॥ लोकानां सा हितार्थं तु स्थिता चंद्रसरित्तटे ॥२२॥ वायुभक्षा तपस्तेपे युक्ता मैत्रेण चक्षुषा ॥ अनुगृह्णन्सदा भक्तान्वरैर्नानाविधैः सदा ॥ २३ ॥ एवमाद्यमिदं स्थानं पुण्यं मित्रपदं स्मृतम् ॥ तत्र मित्रः स्थितो यस्मात्तस्मान्मित्रपदं स्मृतम् ॥ २४ ॥ तयाराध्य महाबाहो सांबेनामिततेजसा ॥ तत्प्रसादात्तदादेशात्प्रतिष्ठा तस्य वै कृता ॥ २५ ॥ आभिर्द्वादशभिस्तेन भास्करेण महात्मना ॥ कृत्स्नं जगदिदं व्याप्तं मूर्तिभिस्तु नराधिप ॥ २६ ॥ तस्माद्वंद्यो नमस्यश्च द्वादशस्वपि मूर्तिषु ॥ ये नमस्यंति चादित्यं नरा भक्तिसमन्विताः ॥२७॥ ते यास्यंति परं स्थानं तिष्ठेद्यत्रांबुजेश्वरः ॥ इत्येवं द्वादशात्मानमादित्यं पूजयेत्तु यः ॥२८॥ स मुक्तः सर्वपापेभ्यो याति हेलिसलोकताम्॥२९॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सूर्यद्वादशमूर्तिवर्णनं नाम चतुःसप्ततितमोऽध्यायः॥ ॥७४॥ ॥छ॥ ॥ शतानीक उवाच ॥ ॥ कथं सांबः प्रपन्नोऽर्कं केन वा प्रतिपादितः ॥ उग्रं शापं च तं प्राप्य पितरं स किमुक्तवान् ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ उक्तमेव पुरा वीर यथा शप्तः स यादवः ॥ पित्रा सांबो महाराज हरिणांबुजधारिणा ॥२॥ अथ शापाभिभूतस्तु सांबः पितरमब्रवीत् ॥ विनयावनतो भूत्वा प्रांजलिः शिरसा गतः ॥ ३ ॥ किं मयापकृतं देव येन शप्तोस्म्यहं त्वया ॥ अहं त्वदाज्ञया देव त्वरमाणोत्र आगतः ॥४॥ कस्मान्निपातितः शापो मयि तेऽनपकारिणि ॥ न वै जानाम्यहं किंचित्प्रसीद जगतः पते ॥५॥ शापं नियच्छ मे देव प्रसादं कुरु मे प्रभो ॥ कश्मलेनाभिभूतोऽहं येन मुच्येय किल्बिषात् ॥६॥ तमुवाच ततः कृष्णः सांबं बुद्ध्वा ह्यनागसम् ॥ नाहं पुत्र पुनः शक्तो रोगस्यास्य व्यपोहने ॥७॥ अस्यायं जगतो नाथो द्वादशात्मा दिवाकरः ॥ सहस्ररश्मिरादित्यः शक्तः पुत्र व्यपोहितुम् ॥८॥ ज्ञातं मयाधुना चैव यथा त्वं नारदेन तु॥रोषाद्विसर्जितः पुत्र मत्स

१ देवेषु च–इ० पा० । २ लोकम्–इ० पा० । ३ चिंतया विनतः–इ० पा० । ४ अहम्–इ० पा० । ५ दिवस्पतिः–इ०, जगत्पतिः–इ० च पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काशं महात्मना ॥ ९ ॥ तस्मात्तमेव पृच्छ त्वं प्रसाद्य ऋषिसत्तमम् ॥ आख्यास्यति स ते देवं शापं यस्तेऽपनेष्यति ॥१०॥ अथैतत्स पितुर्वाक्यं श्रुत्वा जांबवतीसुतः ॥ दीनः शोकपरीतात्मा ततः सञ्चिंत्य भारत ॥११॥ द्वारवत्यां स्थितं विष्णुं कदाचिद्द्रष्टुमागतम् ॥ विनयादुपसंगम्य सांबः पप्रच्छ नारदम् ॥ १२ ॥ भगवन्वेधसः पुत्र सर्वलोकज्ञ सुव्रत ॥ प्रसादं कुरु मे विप्र प्रणतस्य महामते ॥ १३ ॥ येन मे नीरुजं कायं कश्मलं च प्रणश्यति ॥ तं योगं ब्रूहि मे विप्र प्रणतस्यास्य सुव्रत ॥ १४ ॥ ॥ नारद उवाच ॥ ॥ यः स्तुत्यः सर्वदेवानां नमस्यः पूज्य एव च ॥ पूजयित्वाशु तं देवं ततो व्याधिं प्रहास्यसि ॥ १५ ॥ ॥ सांब उवाच ॥ ॥ कः स्तुत्यः सर्वदेवानां नमस्यः पूज्य एव च ॥ कः सर्वगश्च सर्वत्र शरणं यं व्रजाम्यहम् ॥ १६ ॥ [1]पितृशापानलेनाहं दह्यमानो महामुने ॥ शांत्यर्थमस्य कं देवं शरणं च व्रजाम्यहम् ॥ १७ ॥ एतच्छ्रुत्वा तु सांबस्य वचनं करुणावहम् ॥ हित्वा तु [4]कामजं वीर नारदो वाक्यमब्रवीत् ॥ १८ ॥ स्तुत्यो वंद्यश्च पूज्यश्च नमस्य ईड्य एव च ॥ भास्करो यदुशार्दूल ब्रह्मादीनां सदानघ ॥ १९ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सांबोपाख्याने सांबं प्रति कृष्णशापे सांबस्य नारदोपसंगमनवर्णनं नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ कदाचित्पर्यटँल्लोकान्सूर्यलोकमहं गतः ॥ तत्र दृष्टो मया सूर्यः सर्वदेवगणैर्वृतः ॥१॥ गंधर्वैरप्सरोभिश्च नागैर्यक्षैश्च राक्षसैः ॥ तत्र गायंति गंधर्वा नृत्यन्त्यप्सरसस्तथा ॥२॥ रक्षंत्युद्यतशस्त्रास्तं यक्षराक्षसपन्नगाः ॥ ऋचो यजूंषि सामानि मूर्तिमंतीह सर्वशः ॥ तत्कृतैर्विविधैः स्तोत्रैः स्तुवंति ऋषयो रविम् ॥ ३ ॥ मूर्तिमत्यः स्थितास्तत्र तिस्रः संध्याः शुभाननाः ॥ गृहीतवज्रनाराचाः परिवार्य रविं स्थिताः ॥ ४ ॥ अरुणा वर्णतः पूर्वा मध्यमा चेन्दुसन्निभा ॥ तृतीयाक्ष्मांजसंकाशा संध्या चैव प्रकीर्तिता ॥ ५ ॥ आदित्या वसवो रुद्रा मरुतोथाश्विनौ तथा ॥ त्रिसंध्यं पूजयंत्यर्कं तथान्ये च दिवौकसः ॥ ॥ ६ ॥ ईरयञ्जयशब्दं तु इंद्रस्तत्रैव तिष्ठति ॥ कविस्तु त्र्यंबको देवस्त्रिसंध्यं पूजयंति वै ॥ ७ ॥ दिनादावंबुजाकारं पूजयेदंबुजासनम् ॥ चक्ररूपं तु मध्याह्ने घृतार्चिः पूजयेत्सदा ॥ ८ ॥ पूजयेत्सगणं रात्रौ विपुलाज्यस्वरूपिणम् ॥ रविं भक्त्या सदा देवं कँजार्धकृतशेखरः ॥ ९ ॥ सारथ्यं कुरुते तस्य पतगस्याग्रजः सदा ॥ वहमानो रथं दिव्यं कालावयवनिर्मितम् ॥१०॥ हरितैः सप्तभिर्युक्तं छन्दोभिर्वाजिरूपिभिः ॥११॥ द्वे भार्ये पार्श्वयोस्तस्य राज्ञीनिक्षुभसंज्ञिता ॥ तथान्यैर्नामभिर्देवाः परिवार्य रविं स्थिताः ॥ १२ ॥ पिंगलो लेखकस्तत्र तथान्यो दंडनायकः ॥

१ शापपरीतात्मा–इ० पा० । २ देव–इ० पा० । ३ कतमात्स्यम्–इ० पा० । ४ कामजं क्रोधमित्यर्थः–"कामात्क्रोधोऽभिजायते" इति भगवद्गीतासु वचनात् । ५ पद्मसंकाशा:सामरा विप्रकीर्तिता–इ०पा० । ६ शब्दादावंबुजाधारम्–इ० पा० । ७ चन्द्रशेखर इति भावः । ८ वैनतेयाग्रजः सदा–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजाश्रोषौ च द्वौ द्वारे स्थितौ कल्माषपक्षिणौ ॥ १३ ॥ ततो व्योम चतुःशृंगं मेरोः सद्दशलक्षणम् ॥ दिंडिस्तथाग्रतस्तस्य दिक्षु चान्ये स्थिताः सुराः ॥ १४ ॥ एवं सर्वगमं देवं प्रदीप्तं जगति द्विज ॥ ब्रह्माद्यैः संस्तुतं देवं गीर्वाणैर्ऋषभोत्तमम् ॥ ग्रहेशं भुवनेशानमादित्यं शरणं व्रज॥१५॥ सांब उवाच ॥ ॥ तत्त्वतः श्रोतुमिच्छामि कथं सर्वगतो रविः॥१६॥ कति वा रश्मयस्तस्य मूर्तयश्च कति स्मृताः ॥ का राज्ञी निक्षुभा का च कश्चायं दंडनायकः ॥ १७ ॥ पिंगलश्चापि कस्तत्र किं चासौ लिखते सदा ॥ राजाश्रोषौ च कौ तत्र कौ च कल्माषपक्षिणौ ॥ १८ ॥ किं दैवत्यं च तद्व्योम मेरोः सद्दशलक्षणम् ॥ को दिंडिरग्रतस्तत्र के देवा दिक्षु ये स्थिताः ॥ १९ ॥ तत्त्वतो निगमैश्चैव विस्तरेण वदस्व माम् ॥ येनाहं तत्त्वतो ज्ञात्वा व्रजामि शरणं द्विज ॥ २० ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने नारदसांबसंवादे सूर्यपरिवारवर्णनं नाम षट्सप्ततितमोऽध्यायः ॥७६॥ ॥ नारद उवाच ॥ ॥ विस्तरेणानुपूर्व्या च सूर्यं निगदतःशृणु॥ ततः शेषान्प्रवक्ष्येऽहं नमस्कृत्य विवस्वते ॥ १ ॥ अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् ॥ प्रधानं प्रकृतिश्चेति यमाहुस्तत्त्वचिंतकाः ॥ २ ॥ गंधैर्वर्णै रसैर्हीनं शब्दस्पर्शविवर्जितम् ॥ जगद्योनिं महद्भूतं परं ब्रह्म सनातनम् ॥३॥ निग्रहं सर्वभूतानामव्यक्तमभवत्किल॥ अनाद्यंतमजं सूक्ष्मं त्रिगुणं प्रभवाप्ययम् ॥ ४ ॥ अनाकारमविज्ञेयं तमाहुः पुरुषं परम् ॥ तस्यात्मना सर्वमिदं जगद्व्याप्तं महात्मनः ॥५॥ तस्येश्वरस्य प्रतिमा ज्ञानवैराग्यलक्षणा ॥ धर्मैश्वर्यकृता बुद्धिर्ब्राह्मी तस्याभिमानिनः ॥ ६ ॥ अव्यक्ताज्जायते तस्य मनसा यद्यदिच्छति॥ चतुर्मुखस्य ब्रह्मत्वे कालत्वे चांतकृद्भवेत् ॥ ७ ॥ सहस्रमूर्धा पुरुषस्तिस्रोवस्थाः स्वयंभुवः ॥ सत्त्वं रजश्च ब्रह्मत्वे कालत्वे च रजस्तमः ॥८॥ सात्त्विकं पुरुषत्वे च गुणवृत्तं स्वयंभुवः ॥ ब्रह्मत्वे सृजते लोकान्कालत्वे चापि संक्षिपेत् ॥ ९ ॥ पुरुषत्वे उदासीनस्तिस्रोऽवस्थाः प्रजापतेः ॥ त्रिधा विभज्य चात्मानं त्रिकालं संप्रवर्तते ॥ ॥१०॥ सृजते ग्रसते चैव वीक्षते च त्रिभिः स्वयम् ॥ अग्रे हिरण्यगर्भस्तु प्रादुर्भूतः स्वयंभुवः ॥११॥ आदित्यस्यादिदेवत्वादजातत्वादजः स्मृतः ॥ देवेषु समहान्देवो महादेवः स्मृतस्ततः ॥१२॥ सर्वेशत्वाच्च लोकस्य अधीशत्वाच्च ईश्वरः ॥ बृहत्त्वाच्च स्मृतो ब्रह्मा भवत्वाद्भव उच्यते ॥१३॥ पाति यस्मात्प्रजाः सर्वाः प्रजापतिरतः स्मृतः ॥ पुरे शेते च वै यस्मात्तस्मात्पुरुष उच्यते ॥ १४ ॥ नोत्पाद्यत्वादपूर्वत्वात्स्वयंभूरिति विश्रुतः ॥ १५॥ हिरण्यांडगतो यस्माद्ग्रहेशो वै दिवस्पतिः ॥ तस्माद्धिरण्यगर्भोऽसौ देवदेवो दिवाकरः ॥ १६ ॥ आपो नारा इति प्रोक्ता ऋषिभिस्तत्त्वदर्शिभिः ॥



१ दौवारिकौ च द्वौ द्वारे ततः कल्माषपक्षिणौ—इ० पा० । २ अवाप्रतम्—इ० पा० । ३ ज्ञानविज्ञानलक्षणा—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयनं तस्य ता आपस्तेन नारायणः स्मृतः ॥१७॥ अर इत्येष शीघ्रार्थो निपातः कविभिः स्मृतः॥ आप एवार्णवा भूत्वा न शीघ्रास्तेन ता नराः ॥ १८ ॥ एकार्णवे पुरा तस्मिन्नष्टे स्थावरजंगमे॥नारायणाख्यः पुरुषः सुष्वाप सलिले तदा ॥ सहस्रशीर्षा सुमनाः सहस्राक्षः सहस्रपात्॥१९॥ सहस्रबाहुः प्रथमः प्रजापतिस्त्रयीपथे यः पुरुषो निगद्यते ॥ आदित्यवर्णो भुवनस्य गोप्ता अपूर्व एकः पुरुषः पुराणः ॥ २० ॥ हिरण्यगर्भः पुरुषो महात्मा संपद्यते वै तमसः परस्तात् ॥ २१ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने सूर्यवर्णनं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ नारद उवाच ॥ ॥ तुल्यं युगसहस्रस्य नैशं कालमुपास्य सः ॥ शर्वर्यंते प्रकुरुते ब्रह्मत्वं सर्गकारणात् ॥१॥ सलिलेनाप्लुतां भूमिं दृष्ट्वा कार्यं विचिंत्य सः ॥ भूत्वा स तु वराहो वै अपः संविशते प्रभुः ॥ २ ॥ सञ्चिंत्यैवं स देवेशो भूमेरुद्धरणे क्षमः ॥ महीं महार्णवे मग्नामुद्धर्तुमुपचक्रमे ॥ ३ ॥ उत्तिष्ठतस्तस्य जलार्द्रकुक्षेर्महावराहस्य महीं विधार्य ॥ विधुन्वतो वेदमयं शरीरं रोमांतरस्था मुनयो जपंति ॥ ४ ॥ उद्धृत्योर्वीं स सलिलात्प्रजासर्गमकल्पयत् ॥ मनसा जनयामास पुत्रानात्मसमाञ्छुभान् ॥ ५ ॥ भृग्वंगिरसमत्रिं च पुलस्त्यं पुलहं क्रतुम् ॥ मरीचिमथ दक्षं च वशिष्ठं नवमं तथा ॥ ६ ॥ नव प्रजापतीन्सृष्ट्वा ततः स पुरुषोत्तमः ॥प्रादुर्भूतोऽदितेः पुत्रः प्रजानां हितकाम्यया ॥ ७ ॥ मरीचात्कश्यपं पुत्रं यं वेधा जनयज्जले ॥ प्रजापतीनां दशमं तेजसा ब्रह्मणः समम् ॥ ८ ॥ वृक्षकन्याऽदितिर्नाम्ना पत्नी सा कश्यपस्य तु ॥ अंडं सा जनयामास भूर्भुवःस्वस्त्रिसंयुतम् ॥ ९ ॥ तत्रोत्पन्नः सहस्रांशुर्द्वादशात्मा दिवाकरः ॥ नवयोजनसाहस्रो विस्तारोऽस्य महात्मनः ॥ विस्तारात्त्रिगुणश्चास्य परिणाहो विभावसोः ॥ १० ॥ यथापुष्पं कदंबस्य समंतात्केशरैर्वृतम् ॥ तथैव तेजसां गोलं समंताद्रश्मिभिर्वृतम् ॥ ११ ॥ सहस्रशीर्षा पुरुषो ब्राह्मं योगमुदाहरन् ॥ तैजसस्य च गोलस्य स तु मध्ये व्यवस्थितः ॥ १२ ॥ आदत्ते स तु रश्मीनां सहस्रेण समंततः ॥ अपो नदीसमुद्रेभ्यो ह्रदकूपेभ्य एव च ॥ १३ ॥ सौरी प्रभा या देवस्य अस्तं याते दिवाकरे ॥ अग्निमाविशते रात्रौ तस्माद्दूरात्प्रकाशते ॥ १४ ॥ उदिते च ततः सूर्ये तेज आग्नेयमाविशत् ॥ पादेन तेजसश्चाग्नेस्तस्मात्स तपते रविः ॥ १५ ॥ प्रकाशत्वं तथोष्णत्वं सूर्येऽग्नौ च प्रकीर्तिते ॥ परस्परानुप्रवेशादाप्यायेते दिवानिशम् ॥१६॥ व्यापकत्वं च रश्मीनां नामानि च निबोध मे ॥ हेतयः किरणा गावो रश्मयोऽथ गभस्तयः ॥ १७ ॥ अभीपवो घनं चोस्रा वसवोथ मरीचयः ॥ नाड्यो दीधितयः साध्या मयूखा भानवोंशवः ॥ १८ ॥ सप्तार्चयः सुपर्णाश्च कराः

१ द्यावन्ध्यादित्वात्तररूपम्। २ शयने–इ० । ३,४ पुरुषः–इ० पा० । ५ स उच्यते–इ० पा० । ६ यजंति–इ० पा० । ७ आहुर्यम्–इ० पा० । ८ त्वम्निः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पादास्तथैव च ॥ एषां तु नाम्नां रश्मीनां पर्याया विंशतिः स्मृताः ॥ १९ ॥ चंदनादीनि वक्ष्यामि नामान्येषां पृथक्पृथक् ॥ सहस्रं तात कथितं शीतवर्षोष्णनिःश्रवम् ॥२०॥ तेषां चतुःशतं नाड्यो वर्षंते चित्रमूर्तयः ॥ चंदनाचैव मंदाश्च कोतनामानुमास्तथा ॥ अमृता नाम ते सर्वे रश्मयो वृष्टिहेतवः ॥२१॥ हिमोद्वहास्तु तत्रान्ये रश्मयस्त्रिशतं स्मृताः ॥ चंद्रास्ते नामतः सर्वे पीतास्ते तु गभस्तयः ॥२२॥ सौम्येशाश्चैव वामश्च ह्लादिनेनो हिमसर्जनाः ॥ शुक्लाश्च ककुभश्चैव गावो विश्वभृतस्तथा॥२३॥ शुक्लास्ते नामतः सर्वे त्रिशतं धर्मसर्जनाः ॥ समं बिभ्रति ते सर्वे मनुष्या देवतास्तथा॥२४॥ मनुष्यानोषधीभिस्तु स्वधया च पितॄनपि ॥ अमृतेन सुरान्सर्वांस्त्रयस्त्रिभिरतर्पयन् ॥२५॥ वसंते चैव ग्रीष्मे च शतैः स तपते त्रिभिः ॥ वर्षाशरत्सु चैवेशस्तपते संप्रवर्षते ॥ २६ ॥ हेमन्ते शिशिरं चैव हिमोत्सर्गं च स त्रिभिः ॥ ओषधीषु बलं धत्ते स्वधायां च स्वधां पुनः ॥ अमरेष्वमृतं सूर्यस्त्रयं त्रिषु नियच्छति ॥ २७ ॥ कालोग्निर्वत्सरश्चैव द्वादशात्मा प्रजापतिः ॥ तपत्येषु सुरश्रेष्ठस्त्रींल्लोकान्त्सचराचरान् ॥ २८ ॥ एष ब्रह्मा तथा विष्णुरेष एव महेश्वरः ॥ ऋचो यजूंषि सामानि एष एव न संशयः ॥ २९ ॥ ऋचाभिः स्तूयते पूर्वं मध्याह्ने यजुर्भिः सदा ॥ सामभिस्त्वपराह्णेषु महेशानैः प्रपूज्यते ॥ ३० ॥ पूज्यमानस्तु नित्यं वै तपत्येष दिवस्पतिः ॥ सदैष तेजसां राशिर्दीप्तिमान्त्सर्वलोकगः ॥ ३१ ॥ पार्श्वतोर्ध्वमधश्चैव तापयत्येष सर्वतः ॥ ब्रह्मविष्णुमहेशानैः पूज्यमानस्तु नित्यशः ॥ ३२ ॥ यथा सर्वगतो वायुर्वहमानस्तु तिष्ठति ॥ तद्वत्सहस्रकिरणो ग्रहराजो दिवस्पतिः ॥ ३३ ॥ सूर्यो गोभिर्जगत्कृत्स्नमादीपयति सर्वशः ॥ त्रीणि रश्मिशतान्यस्य भूर्लोकं द्योतयन्ति वै ॥३४ ॥ त्रीणित्रीणि तथा चान्यौ द्वौ लोकौ तापयंत्युत ॥ शतं चापि अधस्तात्तु पातालं तापयन्त्युत ॥ ३५ ॥ इत्येतन्मण्डलं शुक्लं भास्वरं हेलिसंज्ञितम् ॥ नक्षत्रग्रहसोमानां प्रतिष्ठायोनिरेव च ॥ विधुऋक्षग्रहाः सर्वे विज्ञेयाः सूर्यसंभवाः ॥ ३६ ॥ रवेः करसहस्रं यत्प्राङ्मया समुदाहृतम् ॥ तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहसंज्ञिताः ॥ ३७ ॥ सुषुम्णो हरिकेशश्च विश्वकर्मा तथैव च ॥ सूर्यश्चैवापरो रश्मिर्नाम्ना विष्णुरिति स्मृतः ॥ ३८ ॥ ससत्त्वः सर्वबन्धुस्तु जीवायति च वै जगत् ॥ सप्तजः प्रथमस्तत्र कञ्जजश्च तथा परः ॥ ३९ ॥ तारेयश्चापरस्तत्र गुरुः सुमनसां तथा ॥ उग्राह्वः पंचमस्तेषां पुत्रोन्यो वनमालिनः ॥ कः शेषः सप्तमस्तेषामेते वै सप्त रश्मयः ॥ ४० ॥ आदित्यमूलमखिलं त्रैलोक्यं सचराचरम् ॥ भवत्यस्माज्जगत्सर्वं सदेवासुरमानुषम् ॥ ४१ ॥ रुद्रेन्द्रोपेन्द्रचन्द्राणां विप्रेन्द्र त्रिदिवौकसाम् ॥ महद्युतिमतः कृत्स्नं तेजो यत्सार्वलौकिकम् ॥ ४२ ॥ सर्वात्मा सर्व

१ चन्दनाश्चैव चन्द्राश्च केन वा गौतमारतथा--इ०, चन्द्रश्चैव सदाचक्रोरुनानौरुननास्तथा--इ० च पा० । २ सौम्याश्च वासवीयाश्च ह्लादिनो हिमसर्जनाः--इ० पा० । ३ गोलसंज्ञितम्--इ० पा० । ४ धूम्रव्रतः--इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोकेशो देवदेवः प्रजापतिः ॥ सूर्य एव त्रिलोकस्य मूलं परमदैवतम् ॥ ४३ ॥ अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टि वृष्टेरन्नं ततः प्रजाः ॥ ४४ ॥ सूर्यात्प्रसूयते सर्वं तस्मिन्नेव प्रलीयते ॥ भावाभावौ तु लोकानामादित्यान्निःसृतौ पुरा ॥ ४५ ॥ एतत्तु ध्यानिनां ध्यानं मोक्षश्चाप्येव मोक्षिणाम् ॥ अत्र गच्छन्ति निर्वाणं जायन्तेऽस्मात्पुनः प्रजाः ॥ ४६ ॥ क्षणा मुहूर्ता दिवसा निशाः पक्षास्तु नित्यशः ॥ मासाः संवत्सराश्चैव ऋतवोऽथ युगानि च ॥ अथादित्यमृते ह्येषां कालसंख्या न विद्यते ॥ ४७ ॥ कालादृते न नियमा नाग्नेर्विहरणक्रिया ॥ ऋतू नामविभागाच्च पुष्पमूलफलं कुतः ॥ ४८ ॥ अभावो व्यवहाराणां जंतूनां दिवि चेह च ॥ जगत्प्रतापनमृते भास्करं वारितस्करम् ॥ ४९ ॥ नावृष्ट्या तपते सूर्यो नावृष्ट्या परिवेष्यते ॥ आदित्यस्य च नामानि सामान्यानीह द्वादश ॥५०॥ द्वादशैव पृथक्त्वेन तानि वक्ष्याम्यनेकशः ॥ आदित्यः सविता सूर्यो मिहिरोऽर्कः प्रतापनः ॥ ५१ ॥ मार्तंडो भास्करो भानुश्चित्रभानुर्दिवाकरः ॥ रविर्वै द्वादशश्चैव ज्ञेयः सामान्यनामभिः ॥ ५२ ॥ विष्णुर्धाता भगः पूषा मित्रेन्द्रौ वरुणोऽर्यमा ॥ विवस्वानंशुमांस्त्वष्टा पर्जन्यो द्वादश स्मृताः ॥ ५३ ॥ इत्येते द्वादशादित्याः पृथक्त्वेन प्रकीर्तिताः ॥ उत्तिष्ठंति सदा ह्येते मासैर्द्वादशभिः क्रमात् ॥ ५४ ॥ विष्णुस्तपति चैत्रे च वैशाखे चार्यमा तथा ॥ विवस्वाञ्ज्येष्ठमासे तु आषाढे चांशुमांस्तथा ॥ ५५ ॥ पर्जन्यः श्रावणे मासि वरुणः प्रोष्ठसंज्ञके ॥ इन्द्रश्चाश्वयुजे मासि धाता तपति कार्तिके ॥ ५६ ॥ मार्गशीर्षे तथा मित्रः पौषे पूषा दिवाकरः ॥ माघे भगस्तु विज्ञेयस्त्वष्टा तपति फाल्गुने ॥ ५७ ॥ तैश्च द्वादशभिर्विष्णू रश्मीनां दीप्यते सदा ॥ दीप्यते गोसहस्रेण शतैश्च त्रिभिरर्यमा ॥ ५८ ॥ द्विसप्तकैर्विवस्वांस्तु अंशुमान्पंचकैस्त्रिभिः ॥ विवस्वानिव पर्जन्यो वरुणश्चार्यमा इव ॥ ५९ ॥ इन्द्रस्तु द्विगुणैः षड्भिर्धातैकादशभिः शतैः ॥ मित्रवद्भगवत्त्वष्टा सहस्रेण शतेन च ॥ ६० ॥ उत्तरोपक्रमेऽर्कस्य वर्धंते रश्मयः सदा ॥ दक्षिणोपक्रमे भूयो ह्रसन्ते सूर्यरश्मयः ॥ ६१ ॥ एवं रश्मिसहस्रं तु सौर्यं लोकार्थसाधकम् ॥ भिद्यते ऋतुमासैस्तु सहस्रं बहुधा भृशम् ॥ ६२ ॥ एवं नाम्नां चतुर्विंशदेकस्यैषा प्रकीर्तिता ॥ विस्तरेण सहस्रं तु पुनरेवं प्रकीर्तितम् ॥ ६३ ॥ आसां परमयत्नेन ब्रुवते भिन्नदर्शनाः ॥ तामसा बुद्धिमोहाच्च दृष्टान्तानि ब्रुवंति हि ॥ ६४ ॥ ब्रह्माणं कारणं केचित्केचिदाहुर्दिवाकरम् ॥ केचिद्रुद्रं परत्वेन आहुर्विष्णुं तथापरे ॥ ६५ ॥ कारणं तु स्मृता ह्येते नानार्थेषु सुरोत्तमाः ॥ एकः स तु पृथक्त्वेन स्वयंभूरिति विश्रुतः ॥ ६६ ॥ वनमालिनमुग्रेशं दिवि चक्षुरिवांतकम् ॥ तं

१ पुनः—इ० पा० । २ दृष्ट्वा नातिक्रमंति हि—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वयंभूरिति प्रोक्तं स सौपार्णिमनौपमम् ॥ ६७ ॥ यथानुरज्यते वर्णैर्विविधैः स्फाटिको मणिः ॥ तथा गुणवशात्तस्य स्वयंभोरनुरंजनम् ॥ ६८ ॥ एको भूत्वा यथा मेघः पृथक्त्वेन प्रतिष्ठितः ॥ वर्णतो रूपतश्चैव तथा गुणवशात्तु सः ॥ ६९ ॥ नभसः पतितं तोयं याति स्वादांतरं यथा ॥ भूमे रसविशेषेण तथा गुणवशात्तु सः ॥ ७० ॥ यथेंधनवशादग्निरेकस्तु बहुधायते ॥ वर्णतो रूपतश्चैव तथा गुणवशात्तु सः ॥ ॥ ७१ ॥ यथा द्रव्यविशेषाच्च वायुरेकः पृथग्भवेत् ॥ सुगंधिः पूतिगंधिर्वा तथा गुणवशात्तु सः ॥ ७२ ॥ यथा वा गार्हपत्योग्निरन्यत्संज्ञांतरं व्रजेत् ॥ दक्षिणाहवनीयादिब्रह्मादिषु तथा ह्यसौ ॥ ७३ ॥ एकत्वे च पृथक्त्वे च प्रोक्तमेतन्निदर्शनम् ॥ तस्माद्भक्तिः सदा कार्या देवे ह्यस्मिन्दिवाकरे ॥ ७४ ॥ एषोंडजोऽधिगश्चैव एष एव भृगुस्तथा ॥ एष रजस्तमश्चैव एष सत्त्वगुणस्तथा ॥ ७५ ॥ एष वेदाश्च यज्ञाश्च सर्वश्चैव न संशयः ॥ सूर्यव्याप्तमिदं सर्वं जगत्स्थावरजंगमम् ॥ ७६ ॥ ईज्यते पूज्यते चासावत्र यानात्मको रविः ॥ सर्वत्र सविता देवस्तनुभिर्नामभिश्च सः ॥ ७७ ॥ वसत्यग्नौ तथा वाते व्योम्नि तोये तथा विभो ॥ एवंविधो ह्ययं सूर्यः सदा पूज्यो विजानता ॥ ७८ ॥ आदित्यं वेत्ति यस्त्वेवं स तस्मिन्नेव लीयते ॥ अप्येकं वेत्ति यो नाम धात्वर्थनिगमै रवेः ॥ ७९ ॥ स रोगैर्वर्जितः सर्वैः सद्यः पापात्प्रमुच्यते ॥ न हि पापकृतः सांब भक्तिर्भवति भास्करे ॥ ॥ ८० ॥ तथा त्वं परया भक्त्या प्रपद्यस्व दिवाकरम् ॥ येन व्याधिविनिर्मुक्तः सर्वान्कामानवाप्स्यसि ॥ ८१ ॥ यथा तव पिता सांब यथा वेधा यथा हरः ॥ यथा गुणवशात्तस्य स्वयंभोरनुरंजनम् ॥ ८२ ॥ एकीभूय यथा मेघः पृथक्त्वेन प्रतिष्ठते ॥ वर्णतो रूपतश्चैव तथा गुणवशात्तु सः ॥ ॥ ८३ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सूर्यमहिमवर्णनं नामाष्टसप्ततितमोऽध्यायः ॥ ॥ ७८ ॥ ॥ ॥ सुमंतुरुवाच ॥ ॥ एतच्छ्रुत्वा तु कात्स्न्र्येन हृष्टो जांबवतीसुतः ॥ जातकौतूहलो भूयः परिपप्रच्छ नारदम् ॥ १ ॥ ॥ सांब उवाच ॥ ॥ अहो सूर्यस्य माहात्म्यं वर्णितं हर्षवर्धनम् ॥ येन मे भक्तिरुत्पन्ना परा ह्यस्मिन्विभावसौ ॥ २ ॥ ततो राज्ञीं महाभागां निक्षुभां च महामुने ॥ दिंडिनं पिंगलादींश्च सर्वान्कथय मे मुने ॥ ३ ॥ ॥ नारद उवाच ॥ ॥ प्रागुक्तेऽर्कस्य द्वे भार्ये राज्ञी निक्षुभसंज्ञिते ॥ तयोर्हि राज्ञी द्यौर्ज्ञेया निक्षुभा पृथिवी स्मृता ॥ ४ ॥ सौम्यमासस्य सप्तम्यां द्यावार्कः सह युज्यते ॥ माघकृष्णस्य सप्तम्यां मह्या सह भवेद्रविः ॥ भूरादित्यश्च भगवान्गच्छतः संगमं तथा ॥ ५ ॥ ऋतुस्नाता मही तत्र गर्भं गृह्णाति भास्करात् ॥ द्यौर्जलं सूयते गर्भं वर्षास्विह च भूतले ॥ ६ ॥

१ इत्येते द्वादशादित्या जगत्पालात्मको रविः–इ० पा० । २ पापैः–इ० पा० । ३ सादरम्–इ० पा० । ४ पौषस्य शुक्लसप्तम्यां राज्ञ्यार्कः सह युज्यते–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततस्त्रैलोक्यभूत्यर्थं मही सस्यानि सूयते ॥ सस्योपयोगसंहृष्टा जुह्वत्याहुतयो द्विजाः ॥ ७ ॥ स्वाहाकारस्वधाकारैर्यजंति पितृदेवताः ॥ ८ ॥ निक्षुभा सूयते यस्मादन्नौषधिसुधामृतैः ॥ मर्त्यान्पितॄंश्च देवांश्च तेन भूर्निक्षुभा स्मृता ॥ ९ ॥ यथा राज्ञी द्विधा भूता यस्य चेयं सुता मता ॥ अपत्यानि च यान्यस्यास्तानि वक्ष्याम्यशेषतः ॥ १० ॥ मरीचिर्ब्रह्मणः पुत्रो मरीचेः कश्यपः सुतः ॥ तस्माद्धिरण्यकशिपुः प्रह्लादस्तस्य चात्मजः ॥ ११ ॥ प्रह्लादस्य सुतो नाम्ना विरोचन इति श्रुतः ॥ विरोचनस्य भगिनी संज्ञाया जननी शुभा ॥ १२ ॥ हिरण्यकशिपोः पौत्री दितेः पुत्रस्य सा स्मृता ॥ सा विश्वकर्मणः पुत्री प्राह्लादी प्रोच्यते बुधैः ॥ १३ ॥ अथ नाम्ना सुरूपेति मरीचेर्दुहिता शुभा ॥ पुत्री ह्यंगिरसः सा तु जननी तु बृहस्पतेः ॥ १४ ॥ बृहस्पतेस्तु भगिनी विश्रुता ब्रह्मवादिनी ॥ प्रभासस्य तु सा पत्नी वसूनामष्टमस्य तु ॥ १५ ॥ प्रसूता विश्वकर्माणं सर्वशिल्पकरं वरम् ॥ स वै नाम्ना पुनस्त्वष्टा त्रिदशानां च वार्धकिः ॥ १६ ॥ देवाचार्यश्च तस्येयं दुहिता विश्वकर्मणः ॥ सुरेणुरिति विख्याता त्रिषु लोकेषु भामिनी ॥ १७ ॥ राज्ञी संज्ञा च द्यौस्त्वाष्ट्री प्रभा सैव विभाव्यते ॥ तस्यास्तु या तनुच्छाया निक्षुभा सा महीमयी ॥ १८ ॥ सा[2] तु भार्या भगवतो मार्तंडस्य महात्मनः ॥ साध्वी पतिव्रता देवी रूपयौवनशालिनी ॥ १९ ॥ न तु तां नररूपेण सूर्यो भजति वै पुरा ॥ आदित्यस्येह तद्रूपं महता स्वेन तेजसा ॥ २० ॥ गात्रेष्वप्रतिरूपेषु नातिकांतमिवाभवत् ॥ अनिष्पन्नेषु गात्रेषु गोलं दृष्ट्वा पितामहः ॥ २१ ॥ मार्तस्त्वं भव चांडस्तु मार्तंडस्तेन स स्मृतः ॥ देवानां च यतस्त्वादिस्तेनादित्य इति स्मृतः ॥ २२ ॥ अतः परं प्रवक्ष्यामि प्रजास्तस्य महात्मनः ॥ त्रीण्यपत्यानि संज्ञायां जनयामास वै रविः ॥ २३ ॥ वर्षाणां तु सहस्रं वै वसमाना पितुर्गृहे ॥ भर्तुः समीपं याहीति पित्रोक्ता सा पुनःपुनः ॥ २४ ॥ अगच्छद्वडवा भूत्वा त्यक्त्वा रूपं यशस्विनी ॥ उत्तरांश्च कुरून्गत्वा तृणान्यनुचचार ह ॥ ॥ २५ ॥ पितुः समीपं या भार्या संज्ञा या वचनेन सा ॥ संज्ञाया धारयद्रूपं छाया सूर्यमुपस्थिता ॥ २६ ॥ द्वितीयायां तु संज्ञायां संज्ञेयमिति चिंतयन् ॥ आदित्यो जनयामास पुत्रौ कन्यां च रूपिणीम् ॥ २७ ॥ पूर्वजस्य मनोस्तुल्यौ सादृश्येन च तावुभौ ॥ श्रुतश्रवाश्च धर्मज्ञः श्रुतकर्मा तथैव च ॥ २८ ॥ श्रुतश्रवा मनुस्ताभ्यां सावर्णियो भविष्यति ॥ श्रुतकर्मा तु विज्ञेयो ग्रहो यो वै शनैश्चरः ॥ २९ ॥ कन्या च तपती नाम रूपेणाप्रतिरूपिणी ॥ संज्ञा तु पार्थिवी तेषामात्मजानां यथाकरोत् ॥ ३० ॥ न

१ त्रैलोक्यवार्तार्थम्—इ० पा० । २ सा च भार्या भगवतो मार्तंडस्य महात्मनः । शची पतिव्रता देवी रूपयौवनशालिनी—इ० पुस्तकांतरस्थः पाठः अन्येषु पुस्तकेषु तु मूलस्थ एव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्नेहं पूर्वजानां तु तथा कृतवती तु सा ॥ मनुस्तु क्षमते तस्या यमस्तस्या न चक्षमे ॥ ३१ ॥ बहुशो यात्यमानस्तु पितुः पत्न्या सुदुःखितः ॥ स वै कोपाच्च बाल्याच्च भाविनोऽर्थस्य वै बलात् ॥ ३२ ॥ पदा संतर्जयामास संज्ञां वैवस्वतो यमः ॥ तं शशाप ततः क्रोधात्संज्ञा सा पार्थिवी भृशम् ॥ ३३ ॥ पदा तर्जयसे यन्मां पितुर्भार्यां गरीयसीम् ॥ तस्मात्तैवष चरणः पतिष्यति न संशयः ॥३४॥ यमस्तु तेन शापेन भृशं पीडितमानसः ॥ मनुना सह तन्मातुः पितुः सर्वं न्यवेदयत् ॥ ३५ ॥ स्नेहेन तुल्यमस्मासु माता देव न वर्तते ॥ निःस्नेहाज्ज्यायसो ह्यस्मान्कनीयां संबुभूषति ॥ ३६ ॥ तस्या मयोद्यतः पादो न तु देव निपातितः ॥ बाल्याद्वा यदि वा मोहात्तद्भवान्क्षंतुमर्हति ॥३७॥ शप्तोऽहमस्मिँल्लोकेश जनन्या तपतां वर ॥ तव प्रसादाच्चरणस्त्रायतां महतो भयात् ॥ ३८ ॥ ॥ रविरुवाच ॥ ॥ असंशयं महत्पुत्र भविष्यत्यत्र कारणम् ॥ येन त्वामाविशत्क्रोधो धर्मज्ञं धर्मशालिनम् ॥ ३९ ॥ सर्वेषामेव शापानां प्रतिघातस्तु विद्यते ॥ न तु मात्राभिशप्तानां क्वचिन्मोक्षो भवेदिह ॥ ४० ॥ न शक्यमेतन्मिथ्या मे कर्तुं मातुर्वचस्तव ॥ किंचित्तेऽहं विधास्यामि पितृस्नेहादनुग्रहम् ॥ ४१ ॥ कृमयो मांसमादाय यास्यंति तु महीतले ॥ कृतं तस्या वचः सत्यं त्वं च त्रातो भविष्यसि ॥ ४२ ॥ ॥ सुमंतुरुवाच ॥ ॥ आदित्यस्त्वब्रवीच्छायां किमर्थं तनयावुभौ ॥ तुल्येष्वभ्यधिकः स्नेह एकत्र क्रियते त्वया ॥ ४३ ॥ सा तत्पुराभवं तस्मै नाचचक्षे विवस्वते ॥ आत्मानं स समाधाय वक्तुं तस्यामपश्यत ॥ ४४ ॥ तां शप्तुकामो भगवानुद्यतः कुपितस्ततः ॥ ततश्छाया यथावृत्तमाचचक्षे विवस्वते ॥ ४५ ॥ विवस्वांस्तु ततः क्रुद्धः श्रुत्वा श्वशुरमागतः ॥ स चापि तं यथान्यायमर्चयित्वा दिवाकरम् ॥ निर्दग्धुकामं रोषेण सांत्वयामास तं शनैः ॥ ४६ ॥ ॥ विश्वकर्मोवाच ॥ ॥ तवातितेजसाविष्टमिदं रूपं सुदुःसहम् ॥ असहंती तु संज्ञा च वने चरति शाद्वले ॥ ४७ ॥ द्रक्ष्यते तां भवानद्य स्वां भार्यां शुभचारिणीम् ॥ रूपार्थं भवतोरण्ये चरंतीं सुमहत्तपः ॥४८॥ रूपं ते ब्रह्मणो वाक्याद्यदि वै रोचते विभो ॥ प्रशातयामि देवेन्द्र श्रेयोऽर्थं जगतः प्रभो ॥ ४९ ॥ संतुष्टस्तस्य तद्वाक्यं बहु मेने महातपाः ॥ ततोऽन्वजानात्त्वष्टारं रूपनिर्वर्तनाय तु ॥ ५० ॥ विश्वकर्मा ह्यनुज्ञातः शाकद्वीपे विवस्वतः ॥ भ्रमिमारोप्य तत्तेजः शातयामास तस्य वै ॥५१॥ आजानुलिखितश्चासौ निपुणं विश्वकर्मणा ॥ लेखनं नाभ्यनंदत्तु ततस्तेन निवारितः ॥ ५२ ॥ तत्र तद्भासितं रूपं तेजसा प्रकृतेन तु ॥ कांतात्कांततरं भूत्वा अधिकं शुशुभे ततः ॥ ५३ ॥ ददर्श योगमास्थाय स्वां भार्यां वडवां तथा ॥ अदृश्यां सर्वभूतानां तेजसा स्वेन संवृताम् ॥५४॥

१ सा च संज्ञायचः स्मृत्वा–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अश्वरूपेण मार्तण्डस्तां सुखेन समासदत् ॥ मैथुनाय विचेष्टंतीं परपुंसो विशंकया ॥ ५५ ॥ सा तं विवस्वतः शुक्रं नासाभ्यां सम धारयत् ॥ देवौ तस्यामजायेतामश्विनौ भिषजां वरौ ॥ ५६ ॥ नासत्यश्चैव दस्रश्च तौ स्मृतौ नामतोऽश्विनौ ॥ अतः परं स्वकं रूपं दर्शयामास भास्करः ॥ तद्दृष्ट्वा चापि संज्ञा तु तुतोष च मुमोह च ॥ ५७ ॥ ततस्तु जनयामास संज्ञा सूर्यसुतं शुभम् ॥ रूपेण चात्मनस्तुल्यं रेवतं नाम नामतः ॥ ५८ ॥ पितुर्गृह्याष्टमं सोऽश्वं जातमात्रः पलायत ॥ स तस्मिन्त्सकृदारूढस्तमश्वं नैव मुंचति ॥ ५९ ॥ ततोर्केण समादिष्टौ दंडनायकपिंगलौ ॥ अश्वं प्रत्यानयेथां मे मा बलाच्छिद्रतोऽस्य तु ॥६०॥ पार्श्वस्थौ तिष्ठतस्तस्य अश्वच्छिद्राभिकांक्षिणौ ॥ न च्छिद्रं तु लभेते तौ तस्याद्यापि महात्मनः ॥ ६१ ॥ प्लवन्गच्छत्यसौ यस्मात्संज्ञायाः शांतिदः सुतः ॥ रेवृस्तु च गतौ धातू रेवंतस्तेन स स्मृतः ॥ ६२ ॥ मनुर्यमो यमी चैव सावर्णिः स शनैश्चरः ॥ तपती चाश्विनौ चैव रेवंतश्च रवेः सुताः ॥ ६३ ॥ एवमेषा पुरा संज्ञा द्वितीया पार्थिवी स्मृता ॥ या संज्ञा सा स्मृता राज्ञी छाया या सा तु निक्षुभा ॥ ६४ ॥ राजृदीप्तौ स्मृतो धातू राजा राजति यत्सदा ॥ अधिकः सर्वभूतेभ्यो राजते च दिवाकरः ॥६५॥ अधिकं राजते यस्मात्तस्माद्राजा स उच्यते ॥ राज्ञः पत्नी तु सा यस्मात्तस्माद्राज्ञी प्रकीर्तिता ॥ ६६ ॥ क्षुभ संचलने, धातुर्निश्चला तेन निक्षुभा ॥ भवन्तीत्यथ वा यस्मात्स्वर्गीयाः क्षुद्विवर्जिताः ॥ छायां तां विशते दिव्यां स्मृता सा तेन निक्षुभा ॥ ६७ ॥ दृष्ट्वा जनं सदा तात भृशं पीडितमानसम् ॥ धर्मेण रंजयामास धर्मराजस्ततः स्मृतः ॥ ६८ ॥ शुद्धेन कर्मणा तात शुभेन परमद्युतिः ॥ पितॄणामाधिपत्यं च लोकपालत्वमाप च ॥६९॥ सांप्रतं वर्तते योऽयं मनुर्लोके महामते ॥ यस्यान्ववाये जातस्तु शंखचक्रगदाधरः ॥ ७० ॥ यमस्य भगिनी यातु यमी कन्या यशस्विनी ॥ साभवत्सरितां श्रेष्ठा यमुना लोकपावनी॥७१॥ मनुः प्रजापतिस्त्वेष सावर्णिः स महायशाः ॥ भविष्यन्स मनुस्तात अष्टमः परिकीर्तितः ॥ ७२ ॥ मेरुपृष्ठे तपो दिव्यमद्यापि चरते प्रभुः ॥ भ्राता शनैश्चरस्तस्य ग्रहत्वं स तु लब्धवान् ॥७३॥ तपती नाम या नाम्ना तयोः कन्या गरीयसी ॥ सा बभूव शुभा पत्नी राज्ञः संवरणस्य तु ॥ ७४ ॥ तापी नाम नदी चेयं विंध्यमूलाद्विनिःसृता ॥ नित्यं पुण्यजला स्नाने पश्चिमोदधिगामिनी ॥ ७५ ॥ सौम्यया संगता सा तु सर्वपापभयापहा ॥ वैवस्वती यथा वीर संगता शिवकांतया ॥ ७६ ॥ अश्विनौ देववैद्यत्वं लब्धवंतौ यदूत्तम ॥ तयोः कर्मोपजीवंति लोकेस्मिन्भिषजः सदा ॥ ७७ ॥ रेवंतो नाम योऽर्कस्य रूपेणा

१ याशियाः–इ० पा० । २ गंगया ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्कसमः सुतः ॥ अश्वानामाधिपत्ये तु योजितः स तु भानुना ॥ ७८ ॥ क्षेमेण गच्छतेऽध्वानं यस्तं पूजयते पथि ॥ सुखप्रसाद्यो मर्त्यानां सदा यदुकुलोद्वह ॥ ७९ ॥ त्वष्टापि तेजसा तेन मार्तंडस्यैव चाज्ञया ॥ भोजानुत्पादयामास पूजार्थं तस्य सुव्रत ॥ ८० ॥ य इदं जन्म देवस्य शृणुयाद्वा पठेत वा ॥ विवस्वतो हि पुत्राणां सर्वेषाममितौजसाम् ॥८१॥ सर्वपापविनिर्मुक्तो याति सूर्यसलोकताम् ॥ इह राजा भवत्येव पुनरेत्य न संशयः ॥८२॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे आदित्यमाहात्म्यवर्णनं नामैकोनाशीतितमोऽध्यायः ॥७९॥ ७९ ॥ ॥ सुमंतुरुवाच ॥ ॥ इत्थं श्रुत्वा कथां दिव्यां हेलिमाहात्म्यमाश्रिताम् ॥ सांबः पप्रच्छ भूयोऽपि नारदं मुनिसत्तमम् ॥१॥ ॥ सांब उवाच ॥ ॥ सूर्यपूजाफलं यच्च यच्च दानफलं महत् ॥ प्रणिपाते फलं यच्च गीतवाद्ये च यत् फलम् ॥२॥ भास्करस्य द्विजश्रेष्ठ तन्मे ब्रूहि समंततः ॥ येन संपूजयाम्येष भानुं देवै[३]: सदार्चितम् ॥ ३ ॥ ॥नारद उवाच॥ ॥ इममर्थं पुरा पृष्टो ब्रह्मा लोकपितामहः ॥ दिंडिना यदुशार्दूल शृणुष्वैकाग्रमानसः ॥ ४ ॥ सुखासीनं तथा देवं सुरज्येष्ठं पितामहम् ॥ प्रणम्य शिरसा दिंडिरिदं वचनमब्रवीत् ॥ ५ ॥ ॥ ॥ दिंडिरुवाच ॥ ॥ सूर्यपूजाफलं ब्रूहि ब्रूहि दानफलं तथा ॥ प्रणामे यत्फलं देव यच्चोक्तं तौर्यकत्रये ॥ ६ ॥ इतिहासपुराणाभ्यां कारिते श्रवणे तथा ॥ पुरतो देवदेवस्य यत्फलं स्यात्तदुच्यताम् ॥ ७ ॥ मार्जने लेपने यच्च देवदेवस्य मंदिरे ॥ भास्करस्य कृते ब्रूहि मम लोकपितामह ॥ ८ ॥ ॥ ब्रह्मोवाच ॥ ॥ स्तुतिजप्योपहारेण पूजया च नरो रवेः ॥ उपवासेन षष्ठ्यां च सर्वपापैः प्रमुच्यते ॥ ९ ॥ प्रणिधाय शिरो भूमौ नमस्कारपरो रवेः ॥ तत्क्षणात्सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ १० ॥ भक्तियुक्तो नरो यस्तु रवेः कुर्यात्प्रदक्षिणाम् ॥ प्रदक्षिणी कृता तेन सप्तद्वीपा भवेन्मही ॥ ११ ॥ सूर्यलोकं व्रजेच्चापि इह रोगैश्च मुच्यते ॥ उपानहौ परित्यज्य अन्यथा नरकं व्रजेत् ॥ १२ ॥ सोपानत्को नरो यस्तु आरोहेत्सूर्यमंदिरम् ॥ स याति नरकं घोरमसिपत्रवनं विभो ॥१३॥ सूर्यं मनसि यः कृत्वा कुर्याद्व्योमप्रदक्षिणाम् ॥ प्रदक्षिणीकृतास्तेन सर्वे देवा भवंति हि ॥ १४ ॥ परितुष्टाश्च ते सर्वे प्रयच्छंति गतिं शुभाम् ॥ सर्वे देवा महाबाहो ह्यभीष्टं तु परंतप ॥ १५ ॥ एकाहारो नरो भूत्वा षष्ठ्यां योऽर्चयते रविम् ॥ सप्तम्यां वा महाबाहो सूर्यलोकं स गच्छति ॥ १६ ॥ अहोरात्रोपवासी च पूजयेद्यस्तु भास्करम् ॥ सप्तम्यां वाथ षष्ठ्यां वा स गच्छेत्परमां गतिम् ॥ १७ ॥ कृष्णपक्षस्य सप्तम्यां सोपवासो जितेंद्रियः ॥ सर्वरक्तोपहारेण पूजये

१ अश्वाधिपत्ये पित्रा तु–इ० पा० । २ केचैरिति पाठे ब्रह्मशंकरादिभिरित्यर्थः । ३ वसुन्धरा–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्तु भास्करम् ॥ १८ ॥ पंकजैः करवीरैर्वा कुंकुमोदकचंदनैः ॥ मोदकैश्च गणश्रेष्ठ सूर्यलोकं स गच्छति ॥ १९ ॥ शुक्लपक्षस्य सप्तम्या मुपवासरतः सदा ॥ सर्वशुक्लोपहारेण पूजयेद्यस्तु भास्करम् ॥ २० ॥ जातीमुद्गरकैश्चैव श्वेतोत्पलकदंबकैः ॥ पायसेन तथा देवं सवस्त्रेणार्चयेद्र विम् ॥ २१ ॥ सर्वपापविशुद्धात्मा विधुः कांत्या न संशयः ॥ हंसयुक्तेन यानेन हंसलोकमवाप्नुते ॥ २२ ॥ ॥ दिंडिरुवाच ॥ ॥ ब्रूहि मे विस्त राद्देव सप्तमीकल्पमुत्तमम् ॥ उपोष्य सप्तमीं येन गमिष्ये शरणं रवेः ॥ २३ ॥ ॥ ब्रह्मोवाच ॥ ॥ साधु पृष्टोऽस्मि भवता सप्तमीकल्पमुत्तम म् ॥ यथा सहस्रकिरणः पुरा पृष्टोऽरुणेन वै ॥ २४ ॥ कथिताः सप्त सप्तम्यो भानुना श्रेयसे नृणाम् ॥ अरुणस्य गणश्रेष्ठ पृच्छतः कारणां तरे ॥ २५ ॥ कस्यचित्त्वथ कालस्य देवदेवं दिवाकरम् ॥ ध्यानमाश्रित्य तिष्ठन्तमरुणो वाक्यमब्रवीत् ॥ २६ ॥ किमर्थं देवदेवेश ध्यानमा श्रित्य तिष्ठसि ॥ दिनं न याति देवेश कारणं मम कथ्यताम् ॥ २७ ॥ कुरु चंक्रमणं देव वंहमानो दिवस्पते ॥ इत्येवं भगवान्पृष्ट इदं वचनम ब्रवीत् ॥ २८ ॥ शृणु त्वं द्विजशार्दूल यदर्थं ध्यानमाश्रितः ॥ अर्वावसुर्द्विजश्रेष्ठः स चापुत्रः खगोत्तम ॥ २९ ॥ आराधयति मां नित्यं गंधपुष्पोपहारकैः ॥ पुत्रकामः खगश्रेष्ठ न च जानात्ययं यथा ॥ ३० ॥ पुत्रदोऽहं भवे येन विधिना पूजितः खग ॥ श्रूयतां च विधिः सर्वे येन प्रीतो भवे नृणाम् ॥ ३१ ॥ सप्तमीकल्पसंज्ञो वै विधीनामुत्तमो विधिः ॥ यस्तु मां पूजयेन्नित्यं तस्य पुत्रान्द दाम्यहम् ॥ ३२ ॥ गृह्णीष्व सप्तमीकल्पं गत्वा ब्रूहि द्विजोत्तमम् ॥ येनाहं बहुपुत्रत्वं दद्यां तस्य तथा खग ॥ ३३ ॥ श्रुत्वा भानोः क्षणादेव जगाम स खगोत्तमः ॥ कथयामास तत्सर्वं भानोर्वचनमादितः ॥ ३४ ॥ ब्राह्मणस्य खगश्रेष्ठ स च श्रुत्वा द्विजोत्तमः ॥ चकार सप्तमीकल्पं यथाख्यातं खगेन तु ॥ ३५ ॥ ऋद्धिं वृद्धिं तथारोग्यं प्राप्य पुत्रांश्च पुष्कलान् ॥ गतोऽसौ सूर्यलोकं च तेजसा तत्समोभवत् ॥ ३६ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पमाहात्म्यवर्णनं नामाशीतितमोऽध्यायः ॥ ८० ॥ ॥ ब्रह्मोवाच ॥ ॥ जया च विजया चैव जयंती चापराजिता ॥ महाजया च नंदा च भद्रा चान्या प्रकीर्तिता ॥ १ ॥ शुक्लपक्षस्य सप्तम्यां सूर्यवारो भवेद्यदि ॥ सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥ २ ॥ स्नानं दानं तथा होम उपवासस्तथैव च ॥ सर्वं विजयसप्तम्यां महापातकनाशनम् ॥ ३ ॥ पंचम्यामेकभक्तं स्यात्षष्ठ्यां नक्तं प्रचक्षते ॥ उपवासस्तु सप्तम्यामष्टम्यां पारणं भवेत् ॥ ४ ॥ केचिद्देवमुशंत्येव नेति चान्ये गणाधिप ॥

१ सदा–इ० पा० । २ ह्रर्यमानो दिवस्पते–इ०, चोक्ष्यमाणो दिवस्पते–इ० च पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभिप्रेतस्तु मे[1] षष्ठ्यामुपवासो गणोत्तम ॥ ५ ॥ चतुर्थ्यामेकभक्तं तु पंचम्यां नक्तमादिशेत् ॥ उपवासस्तु षष्ठ्यां स्यात्सप्तम्यां पारणं भवेत् ॥ ६ ॥ उपवासपरः षष्ठ्यामब्देशं पूजयेद्बुधः ॥ गंधपुष्पोपहारैश्च भक्त्या श्रद्धासमन्वितः ॥ ७ ॥ प्रकल्प्य पूजां भूमौ तु देवस्य पुरतः स्वपेत् ॥ जपमानस्तु गायत्रीं सौरसूक्तमथापि वा ॥ ८ ॥ अक्षरं वा महाश्वेतं षडक्षरमथापि वा ॥ विबुद्धस्त्वथ सप्तम्यां कृत्वा स्नानं गणाधिप ॥९॥ ग्रहेशं पूजयित्वा तु होमं कृत्वा विधानतः ॥ ब्राह्मणान्भोजयेद्भक्त्या शक्त्या च गणनायक॥१०॥ शाल्योदनमपूपांश्च खंडवेष्टांश्च शक्तितः॥ सघृतं पायसं दद्यात्तथा विप्रेषु शक्तितः॥११॥ दत्त्वा च दक्षिणां भक्त्या ततो विप्रान्विसर्जयेत् ॥ इत्येषा कथिता देव पुण्या विजयसप्तमी ॥१२॥ यामुपोष्य नरो गच्छेत्पदं वैरोचनं परम् ॥ करवीराणि रक्तानि कुंकुमं च विलेपनम् ॥ १३ ॥ विजयं धूपमस्यां तु भानोस्तुष्टिकराणि वै ॥ एषा पुण्या पापहरा महापातकनाशिनी ॥ १४ ॥ अत्र दत्तं हुतं चापि क्षीयते न गणाधिप ॥ स्नानं दानं तथा होमः पितृदेवाभिपूजनम् ॥ १५ ॥ सर्वं विजयसप्तम्यां महापातकनाशनम् ॥ आदित्यवारेण युता स्मृता विजयसप्तमी ॥ १६ ॥ इत्येषा कथिता वीर सर्वकामप्रदायिनी ॥ धन्यं यशस्यमायुष्यं कीर्तितं श्रवणं तथा ॥ १७ ॥ स्मरणं तु तथास्यां तु पुण्यदं त्रिपुरांतक ॥ १८ ॥ ॥ इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे विजयसप्तमीवर्णनं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥छ॥ ॥ दिंडिरुवाच ॥ ॥ ये त्वादित्यदिने ब्रह्मन्पूजयंति दिवाकरम् ॥ स्नानदानादिकं तेषां किं फलं स्याद्ब्रवीतु मे ॥ १ ॥ पुण्या सा सप्तमी प्रोक्ता युक्ता तेन पितामह ॥ विजयेति तथा नाम वर्ण्यतामस्य पुण्यता ॥ २ ॥ ॥ ब्रह्मोवाच ॥ ॥ ये त्वादित्यदिने ब्रह्मञ्छ्राद्धं कुर्वंति मानवाः ॥ सप्तजन्मसु ते जाताः संभवंति विरोगिणः ॥ ३ ॥ नक्तं कुर्वंति ये तत्र मानवाः स्थैर्यमाश्रिताः ॥ जपमानाः परं जाप्यमादित्यहृदयं परम् ॥ ४ ॥ आरोग्यमिह वै प्राप्य सूर्यलोकं व्रजंति ते ॥ उपवासं च ये कुर्युरादित्यस्य दिने सदा ॥ ५ ॥ जपंति च महाश्वेतां ते लभंते यथेप्सितम् ॥ अहोरात्रेण नक्तेन त्रिरात्रनियमेन वा ॥ ६ ॥ जपमानो महाश्वेतामीप्सितं लभते फलम् ॥ विशेषतः सूर्यदिने जपमानो गणाधिप ॥ ७ ॥ षडक्षरं तथा श्वेतां गच्छेद्वैरोचनं पदम् ॥ द्वादशेह स्मृता वारा आदित्यस्य महात्मनः ॥ ८॥ नंदो भद्रस्तथा सौम्यः कामदः पुत्रदस्तथा ॥ जयो जयंतो विजय आदित्याभिमुख



१ यः–इ० पा० । २ यजमानः–इ० पा० । ३ शक्त्या–इ० पा० । ४ शाश्वतम्–इ० पा० । ५ कथ्यतां मम शृण्वतः–इ० पा० । ६ प्राप्ते–इ० पा० । ७ शुभकर्मा–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थितः ॥ ९ ॥ हृदयो रोगहा चैव महाश्वेतप्रियोऽपरः ॥ शुक्लपक्षस्य षष्ठ्यां तु माघे मासि गणाधिप ॥ १० ॥ यः कुर्यात्स भवेद्भूपः सर्वपापभयापहः ॥ अत्र नक्तं स्मृतं पुण्यं घृतेन स्नपनं रवेः ॥ ११ ॥ अगस्त्यकुसुमानीह भानोस्तुष्टिकराणि तु ॥ विलेपनं सुगंधस्तु श्वेतचंदनमुत्तमम् ॥ १२ ॥ धूपस्तु गुग्गुलः श्रेष्ठो नैवेद्यं पूपमेव हि ॥ दत्त्वा पूपं तु विप्रस्य ततो भुञ्जीत वाग्यतः ॥ १३ ॥ नक्षत्रदर्शनान्नक्तं केचिदिच्छंति मानद ॥ मुहूर्तोनं दिनं केचित्प्रवदंति मनीषिणः ॥ १४ ॥ नक्षत्रदर्शनान्नक्तमहम्मन्ये गणाधिप ॥ प्रस्थमात्रं भवेत्पूपं गोधूममयमुत्तमम् ॥ १५ ॥ यवोद्भवं वा कुर्वीत सगुडं सर्पिषान्वितम् ॥ सहिरण्यं च दातव्यं ब्राह्मणे सेतिहासके ॥ १६ ॥ भौमे दिव्येऽथ वा देयं न्यसेद्वा पुरतो रवेः ॥ दातव्यो मंत्रतश्चायं मंडको ग्राह्य एव हि ॥ १७ ॥ भूत्वादित्येन वै भक्त्या आदित्यं तु नमस्य च ॥ आदित्यतेजसोत्पन्नं राज्ञीकरविनिर्मितम् ॥ श्रेयसे मम विप्र त्वं प्रतीच्छापूपमुत्तमम् ॥१८॥ कामदं सुखदं धर्म्यं धनदं पुत्रदं तथा ॥ सदास्तु ते प्रतीच्छामि मंडकं भास्करप्रियम् ॥१९॥ एतौ चैव महामंत्रौ दानादाने रविप्रियौ ॥ अपूपस्य गणश्रेष्ठ श्रेयसे नात्र संशयः ॥२०॥ एष नंदविधिः प्रोक्तो नराणां श्रेयसे विभो॥ अनेन विधिना यस्तु नरः पूजयते रविम् ॥ सर्वपापविनिर्मुक्तः सूर्यलोके महीयते ॥२१॥ न दारिद्र्यं न रोगश्च कुले तस्य महात्मनः ॥ योऽनेन पूजयेद्भानुं न क्षयः संततेस्तथा ॥ २२ ॥ सूर्यलोकाच्च्युतश्चासौ राजा भवति भूतले ॥ बहुरत्नसमायुक्तस्तेजसाद्विजसंनिभः ॥ २३ ॥ पठतां शृण्वतां चेदं विधानं त्रिपुरांतक ॥ कं ददात्यचलं दिव्यमंबुजामचलां तथा ॥ २४ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि आदित्यवारकल्पे नंदविधिवर्णनं नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ मासि भाद्रपदे वीर शुक्ले पक्षे तु यो भवेत् ॥ षष्ठ्यां गणकुलश्रेष्ठ स भद्रः परिकीर्तितः ॥ १ ॥ तत्र नक्तं तु यः कुर्यादुपवासमथापि वा ॥ हंसयानसमारूढो याति हंससलोकताम् ॥ २ ॥ मालतीकुसुमानीह तथा श्वेतं च चंदनम् ॥ विजयं च तथा धूपं नैवेद्यं पायसं परम् ॥ ३ ॥ पूजायां भास्करस्येह कुर्यात्त्रिपुरसूदन ॥ इत्थं संपूज्य देवेशं मध्याह्ने च दिनाधिपम् ॥ ४ ॥ दत्त्वा तु दक्षिणां शक्त्या ततो भुंजीत वाग्यतः ॥ पायसं गणशार्दूल सगुडं सर्पिषा सह ॥ ५ ॥ य एवं पूजयेद्भक्त्या मानवस्तिमिरापहम् ॥ सर्वकामानवाप्नोति पुत्रदारधनादिकान् ॥ ६ ॥ विमुक्तः सर्वपापेभ्यो व्रजेद्भानुसलोकताम् ॥ एष भद्रा

१ यो भवेत्स भवेन्नन्द–इ० पा० । २ मानवाः–इ० पा० । ३ दिव्यसंज्ञिके–इ० पा० । ४ अपूपः–इ० पा० । ५ नन्दम्–इ० पा० । ६ सर्वपापविमुक्तात्मा–इ० पा० । ७ बहानन्दसमायुक्तः–इ०, बहुभर्तृसमायुक्तः–इ० च पा० । ८ द्विजसत्तम–इ० पा० । ९ सुखम् । १० कृष्णपक्षे–इ० पा० । ११ भाद्रे–इ०, भद्रम्–इ० च पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ ८५ ॥

अ० ८६

विधिः प्रोक्तो मया यस्ते गणाधिप ॥ ७ ॥ श्रुत्वा कृत्वा च यत्पापान्मुच्यते मानवो भुवि ॥ ८ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वण्यादित्यवारकल्पे भद्रविधिवर्णनं नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ नक्षत्रं रोहिणी वीर यदा वारेस्य वै भवेत् ॥ यात्यसौ सौम्यतां वीरं स सौम्यः परिकीर्तितः ॥ १ ॥ स्नानं दानं जपो होमः पितृदेवादितर्पणम् ॥ अक्षयं स्यान्न संदेहस्त्वत्र वारे महात्मनः ॥ २ ॥ नक्तं समाश्रितो योऽत्र पूजयेद्भास्करं नरः ॥ याति लोकं स देवस्य भास्करस्य न संशयः ॥ ३ ॥ रक्तोत्पलानि वै तत्र तथा रक्तं च चंदनम् ॥ सुगंधश्चापि धूपस्तु नैवेद्यं पायसं तथा ॥ ब्राह्मणाय च दातव्यं भोक्तव्यं चात्मना तथा ॥ ४ ॥ य एवं पूजयेत्सौम्ये चित्रभानुं गवांपतिम् ॥ स विमुक्तस्तु पापेभ्यस्त्वाष्ट्रीं कांतिमवाप्नुयात् ॥ ५ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि आदित्यवारकल्पे सौम्यविधिवर्णनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ प्राप्ते मार्गशिरे मासि शुक्लषष्ठ्यां तु यो भवेत् ॥ स ज्ञेयः कामदो वारः[1] सदेष्टो भास्करस्य तु ॥ १ ॥ तत्र यः पूजयेद्भानुं भक्त्या श्रद्धासमन्वितः ॥ विमुक्तः सर्वपापैस्तु प्राप्नुते नंदनाधिपम्[2] ॥ २ ॥ रक्तचंदनमिश्राणि करवीराणि सुव्रत ॥ धूपं घृताहुतिं वीर भास्कराय प्रयोजयेत् ॥ ३ ॥ नैवेद्यं चापि कृशरं सुगंधं तीक्ष्णमेव च ॥ कृत्वोपवासमथ वा नक्तं त्रिपुरसूदन ॥४॥ इत्थं प्रपूजितो ह्यत्र[3] भास्करो लोकभास्करः ॥ कामान्ददाति सर्वान्वै अतोयं कामदः स्मृतः ॥५॥ स पुत्रं पुत्रकामस्य धनकामस्य वा धनम् ॥ विद्यार्थिने शुभां विद्यामारोग्यं रोगिणे विभो ॥ ६ ॥ अन्यांश्च विविधान्कान्मंत्रैः संपूजितो रविः ॥ ददाति गणशार्दूल अतोयं कामदः स्मृतः ॥ ७ ॥ दद्याद्यो मंडकं चात्र गोपतेर्गोत्रभूषणः ॥ गोत्रारितेजसा[4] तुल्यो गोपतेर्गोपुरं व्रजेत् ॥ ८ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि आदित्यवारकल्पे कामदविधिवर्णनं नाम पंचाशीतितमोऽध्यायः ॥ ८५ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ पंचतारं भवेद्यत्र नक्षत्रं ते वृपध्वज ॥ वारे तु देवदेवस्य स वारः पुत्रदः स्मृतः ॥ १ ॥ उपवासो भवेत्तत्र श्राद्धं कार्यं तथा भवेत् ॥ प्राशनं चापि पिंडस्य मध्यमस्य प्रकीर्तितम् ॥ २ ॥ सोपवासस्तु यो भक्त्या पूजयेदत्र गोपतिम् ॥ धूपमाल्योपहारैस्तु दिव्यगंधसमन्वितैः ॥ ३ ॥ एवं पूज्य विवस्वंतं तस्यैव पुरतो निशि ॥ भूमौ स्वपिति वै वीर जपञ्छ्वेतां महामते ॥ ४ ॥ प्रातरुत्थाय च स्नानं कृत्वा दत्त्वार्घ्यमुत्तमम् ॥ रक्तचंदनसंमिश्रैः करवीरैर्गणाधिप ॥ ५ ॥ प्रपूज्य ग्रहभूतेशमंशुमंतं त्रिलोचन ॥ वीरं[5] च पूजयित्वा तु ततः श्राद्धं प्रकल्पयेत् ॥ ६ ॥ पंचभिर्ब्राह्मणैर्देव

॥ ८७ ॥

१ वारः–इ० पा० । २ चन्दनाधिपम्–इ० पा० । ३ चात्र–इ० पा० । ४ शक्रतेजसेत्यर्थः । ५ दीपं च–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिव्यैर्भौमैश्च सुव्रत ॥ मगसंज्ञौ तत्र दिव्यौ ब्राह्मणौ परिकल्पयेत् ॥ ७ ॥ त्रीनत्र ब्राह्मणानभीमान्प्रकल्प्यांधकसूदन ॥ कुर्यादेवं ततः श्राद्धं पार्वणं भास्करप्रियम् ॥ ८ ॥ श्राद्धे त्वथ समाप्ते तु दद्यात्पिंडं तु मध्यमम् ॥ पुरतो देवदेवस्य स्थित्वा मंत्रेण सुव्रत ॥ ९ ॥ स एष पिंडो देवेश योऽभीष्टस्तव सर्वदा ॥ अश्नामि पश्यते तुभ्यं तेन मे संततिर्भवेत् ॥ १० ॥ प्रसादात्तव देवेश इति मे भावितं मनः ॥ इत्थं संपूजितो ह्यत्र भास्करः पुत्रदो भवेत् ॥ ११ ॥ अतोऽयं पुत्रदो वारो देवस्य परिकीर्तितः ॥ एवमत्र सदा यस्तु भास्करं पूजयेन्नरः ॥ १२ ॥ उपवासपरः श्राद्धे स पुत्रं लभते ध्रुवम् ॥ धनं धान्यं हिरण्यं च आरोग्यं सुखदं तथा ॥ सूर्यलोकं च संप्राप्य ततो राजा भवेन्नृपु ॥ १३ ॥ प्रभया द्विजसंकाशः कांत्या चांबुजसन्निभः ॥ वीर्येण गोपतेस्तुल्यो गांभीर्ये सागरोपमः ॥ १४ ॥ (इति पुत्रदविधिवर्णनम्) ॥ ॥ ब्रह्मोवाच ॥ ॥ दक्षिणे त्वयने यः स्यात्स जयः परिकीर्तितः ॥ १५ ॥ अत्रोपवासो नक्तं च स्नानं दानं जपस्तथा ॥ भवेच्छतगुणं देव भास्करप्रीतये कृतम् ॥ १६ ॥ तस्मान्नक्तादि कर्तव्यं यत्स्याच्छतगुणं विभोः ॥ १७ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि आदित्यवारकल्पे जयवारतिथिवर्णनं नाम षडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ जयन्तो ह्युत्तरे ज्ञेयश्चायने गणनायक ॥ वारो देवस्य यः स्याद्वै तत्र पूज्यो दिवाकरः ॥ १ ॥ पूजितस्तत्र देवेशः सहस्रगुणितं फलम् ॥ ददाति देवशार्दूल स्नानदानादिकर्मणाम् ॥ २ ॥ घृतेन पयसा यत्र स्नानमिक्षुरसेन तु ॥ विलेपनं कुंकुमं तु प्रशस्तं भास्करे प्रियम् ॥ ३ ॥ धूपक्रिया गुग्गुलेन नैवेद्ये मोदकः स्मृतः ॥ इत्थं संपूज्य देवेशं कुर्याद्धोमं ततस्तिलैः ॥ ब्राह्मणान्भोजयेत्पश्चान्मोदकांस्तिलशष्कुलीः ॥ ४ ॥ इत्थं यः पूजयेद्भानुं मंत्रेणैव गणाधिप ॥ सहस्रगुणितं तस्य फलं देवो ददाति वै ॥ ५ ॥ स्नानदानजपादीनामुपवासस्य वै विभो ॥ ६ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वण्यादित्यवारकल्पे जयंतविधिवर्णनं नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ छ ॥ ब्रह्मोवाच ॥ ॥ शुक्लपक्षस्य सप्तम्यां प्राजापत्यर्क्षसंयुतः ॥ स ज्ञेयो विजयो नाम सर्वपापभयापहः ॥ १ ॥ तत्र कोटिगुणं सर्वं फलं पुण्यस्य कर्मणः ॥ ददाति भगवान्देवः पूजितश्चंदनाधिपः ॥ २ ॥ स्नानं दानं जपो होमः पितृदेवादिपूजनम् ॥ नक्तं चाप्युपवासस्तु सर्वमत्र दिवाकरः ॥ ३ ॥ कुर्यात्कोटिगुणं सर्वं पूजितो ह्यत्र गोपतिः ॥ तस्मादत्र सदा देवं पूजयेद्भक्तिमान्नरः ॥ ४ ॥

१ पूजित–इ० पा० । २ मम–इ० पा० । ३ तत्र यो कुर्वन् पूजाम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वेशं सप्तद्वीपेशं सप्तसैंधववाहनम् ॥ सप्तम्यां तु समाराध्य सप्तप्रकृतिसंभवम् ॥ ५ ॥ सप्तलोकाधिपत्यं तु प्राप्नुते सप्तरश्मिभिः ॥ ६ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वण्यादित्यवारकल्पे. विजयवारविधिवर्णनं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ॥ छ ॥ ॥ ॥ ब्रह्मोवाच ॥ ॥ कृष्णपक्षस्य सप्तम्यां माघमासे भवेत्तु यः ॥ सादित्याभिमुखो ज्ञेयः शृणु चास्य विधिं परम् ॥ १ ॥ कृत्वैकभक्तं कृष्णस्य वारे त्रिपुरसूदन ॥ प्रातः कृत्वा ततः स्नानं पूजयित्वा दिवाकरम् ॥ २ ॥ आदित्याभिमुखस्तिष्ठेद्यावदस्तमनं रवेः ॥ जपमानो महाश्वेतां लाभमाश्रित्य सुव्रत ॥ ३ ॥ चतुर्हस्तमृजुं श्लक्ष्णमव्रणं सुसमं दृढम् ॥ रक्तचंदनवृक्षस्य स्तंभं कृत्वा गणाधिप ॥ ४ ॥ तमाश्रित्य महाभक्त्या देवदेवं दिवाकरम् ॥ पश्यमानो जपञ्श्वेतां तिष्ठेदस्तमनाद्रवेः ॥ ५ ॥ गंधपुष्पोपहारैस्तु पूजयित्वा दिवाकरम् ॥ ब्राह्मणे दक्षिणां दत्त्वा ततो भुञ्जीत वाग्यतः ॥ ६ ॥ इत्थमेतं तु यः कुर्यादादित्यप्रीतये नरः ॥ भानुमांस्तस्य प्रीतः स्यात्सर्वं प्रीतो ददाति हि ॥ ७ ॥ धनं धान्यं तथा पुत्रमारोग्यं भार्गवीं यशः ॥ तस्मात्संपूजयेदत्र गीर्वाणाधिपतिं हर ॥ ८ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वण्यादित्यवारकल्पे आदित्याभिमुखविधिवर्णनं नाम नवाशीतितमोऽध्यायः ॥ ८९ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ रविसंक्रमणे यः स्याद्रवेर्वारो गणाधिप ॥ स ज्ञेयो हृदयो नाम आदित्यहृदयप्रियः ॥ १ ॥ तत्र नक्तं समाश्रित्य देवं संपूज्य भक्तितः ॥ गत्वा च सदने भानोरादित्याभिमुखस्थितः ॥ २ ॥ जपेदादित्यहृदयं संख्ययाष्टशतं बुधः ॥ अथ वास्तमनं यावद्भास्करं चिंतयेद्धृदि ॥ ३ ॥ गृहमेत्य ततो विप्रान्भोजयेच्छक्तितः शिव ॥ भुक्त्वा तु पायसं वीरं ततो भूमौ स्वपेद्बुधः ॥ ४ ॥ योत्र संपूजयेद्भानुं भक्त्या श्रद्धासमन्वितः ॥ स कामाँल्लभते सर्वान्भास्कराद्धृदयस्थितान् ॥५॥ तेजसा यशसा तुल्यः प्रभयैषां महात्मनाम् ॥ शक्रगोपांडजानां तु गोपतेर्गोवृपेक्षण ॥६॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वण्यादित्यवारकल्पे हृदयवारविधिवर्णनंनाम नवतितमोऽध्यायः ॥ ९० ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ पूष्णो भवेद्यदा ऋक्षं भवेच्च भगदैवतम् ॥ वासरः स महान्प्रोक्तः सर्वरोगभयापहः ॥ १ ॥ योऽत्र पूजयते भानुं शुभगंधविलेपनैः ॥ सर्वरोगविनिर्मुक्तो याति भानुसलोकताम् ॥२॥ अर्कपत्रपुटे कृत्वा पुष्पाण्यर्कस्य सुव्रत ॥ देवस्य पुरतो रात्रौ भक्त्या यः स्थापयेद्बुधः ॥ ३ ॥ पूजयित्वार्कपुष्पैस्तु अर्कमर्कप्रियं सदा ॥ प्राशयित्वार्कपुष्पं तु दत्त्वा विप्राय दक्षिणाम् ॥४॥ भक्त्या च पायसं वीर रात्रौ स्वपिति भूतले ॥ अनेन विधिना यस्तु पूजये

१ 'योत्र लेभे चेत्' इति सुलोपः । २ च विधिना सदा–इ० पा० । ३ पत्रम्–इ० पा० ।





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दत्त्र वै रविम् ॥ ५ ॥ स मुक्तः सर्वरोगैस्तु गच्छेद्दिनकरालयम् ॥ तस्मादपि व्रजेल्लोकं फुंकाररवहेतिनः ॥ ६ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वण्यादित्यकल्पे रोगहरविधिवर्णनं नामैकनवतितमोऽध्यायः ॥ ९१ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ यस्त्वादित्यग्रहस्यास्य वारो देवस्य सुव्रत ॥ शस्यः प्रोक्तः प्रियो लोके ख्यातो गोश्रुतिभूषणः ॥ १ ॥ यस्तु पूजयते तस्मिन्पतंगं पतगप्रियम् ॥ गन्धपुष्पोपहारैस्तु सूर्यलोकं स गच्छति ॥ २ ॥ सोपवासो गणश्रेष्ठ आदित्यग्रहणे शुचिः ॥ जपमानो महाश्वेतां खपोषमथ वा शिवम् ॥ ३ ॥ पूजयेज्जगतामीशं तमोनाशनमाशुगम् ॥ पूजयित्वा खपोपं तु महाश्वेतां ततो जपेत् ॥ ४ ॥ पूजयित्वा महाश्वेतां रविं देवं समर्चयेत् ॥ महाश्वेतां प्रतिष्ठाप्य गन्धपुष्पैः सुपूजिताम् ॥ ५ ॥ तस्या एव बहिः कार्यं स्थंडिलं सुसमाहितः ॥ शुचौ भूमिविभागे तु वीरं संस्थाप्य यत्नतः ॥ ६ ॥ कुर्याद्धोमं तिलैः स्नातः सर्पिषा च विशेषतः ॥ आदित्यग्रहवेलायां जपेच्छ्वेतां महामते ॥ ७ ॥ मुक्ते दिनकरे पश्चात्स्नानं कृत्वा समाहितः ॥ पूजयित्वा महाश्वेतां खगोल्कं च ग्रहाधिपम् ॥ ८ ॥ ब्राह्मणान्वाचयित्वा च ततो भुञ्जीत वाग्यतः ॥ आदित्यग्रहयुक्तेऽस्मिन्वारे त्रिपुरसूदन ॥ ९ ॥ यत्कर्म क्रियते पुण्यं तत्सर्वं शुभदं भवेत् ॥ स्नानदानजपादीनां कर्मणां गोवृषध्वज ॥ १० ॥ अनन्तं हि फलं तेषां भवत्यस्मिन्न संशयः ॥ कृतानां तु गणश्रेष्ठ भास्करस्य वचो यथा ॥ ११ ॥ तस्माद्द्विजगणैः कार्यं पुण्यकर्मविचक्षणैः ॥ एकभक्तं च नक्तं च उपवासं गणाधिप ॥ १२ ॥ ये वादित्यदिने कुर्युस्ते यांति परमं पदम् ॥ धर्म्यं पुण्यं यशस्यं च पुत्रीयं कामदं तथा ॥ १३ ॥ तस्मिन्दानमपूपस्य गोदानेन समं भवेत् ॥ द्वादशैते महाबाहो वीरभानोर्महात्मनः ॥ १४ ॥ तुष्टिदाः कथितास्तुभ्यं सर्वपापभयापहाः ॥ पठतां शृण्वतां तात कुर्वतां च विशेषतः ॥ १५ ॥ कृत्वैकमेषां विधिवद्वारं वृषभवाहन ॥ वृषादित्रितयं प्राप्य चात्रिजामचलां तथा ॥ १६ ॥ ततो याति परं लोकं वृषकेतोमहात्मनः ॥ तेजसांबुजसंकाशः प्रभयांडजसन्निभः ॥ १७ ॥ पविहेतिसमो वीर्ये कान्त्या चन्द्रसमप्रभः ॥ १८ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वण्यादित्यवारकल्पे महाश्वेतवारविधिवर्णनं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ येषां धर्मक्रियाः सर्वाः सदैवोद्दिश्य भास्करम् ॥ न कुले जायते तेषां दरिद्रो व्याधितोऽपि वा ॥ १ ॥ देवायतनभूमेस्तु गोमयेनोपलेपनम् ॥ यः करोति नरो भक्त्या सद्यः पापात्प्रमुच्यते ॥ २ ॥ श्वेतया रक्तयावापि पीतमृत्तिकयापि वा ॥ उपलेपनकर्ता वै त्त्रिन्तितं लभते फलम् ॥ ३ ॥ चित्रभानुं विरञ्चैव

१ द्विजम्–इ० पा० । २ सर्वपापैस्तु–इ० पा० । ३ स गच्छेद्भास्करम्–इ० पा० । ४ ततोऽर्चयेत्–इ० पा० । ५ पुरःकुर्याद्रयिकार्यम्–इ० पा० । ६ रविं देवं समर्चयेत्–इ० पा० । ७ विचिन्तितम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुसुमैर्यः सुगन्धिभिः ॥ पूजयेत्सोपवासस्तु स कामानीप्सिताँल्लभेत् ॥४॥ घृतेन दीपकं ज्वाल्य तिलतैलेन वा रवेः ॥ प्रयाति सूर्यलोकं स दीप कोटिशतैर्वृतः ॥ ५ ॥ दीपतैलप्रदानेन न याति नरकं नरः ॥ दीपतैलं तिलाश्चैव महापातकनाशनाः ॥६॥ दीपं ददाति यो नित्यं भास्कराय तनेषु च ॥ चतुष्पथेषु तीर्थेषु रूपौजस्वी ह जायते ॥ ७ ॥ यस्तु कारयते दीपं रवेर्भक्तिसमन्वितः ॥ स कामानीप्सितान्प्राप्य वृन्दारकपुरं व्रजेत् ॥८॥ यः समालभते सूर्यं चन्दनागुरुकुंकुमैः ॥ कर्पूरेण विमिश्रैश्च तथा कस्तूरिकान्वितैः ॥ ९ ॥ शुभं कालं कोटिशतं विहृत्य च भवालये ॥ पुनः सञ्जायते भूमौ राजराजो न संशयः ॥ सर्वकामसमृद्धात्मा सर्वलोकनमस्कृतः ॥ १० ॥ चन्दनोदकमिश्रैश्च दत्त्वार्घ्यं कुसुमैं रवेः ॥ सपुत्रपौत्र पत्नीकः स्वर्गलोके महीयते ॥ ११ ॥ सुगन्धोदकमिश्रैस्तु दत्त्वार्घ्यं कुसुमैं रवेः ॥ देवलोके चिरं स्थित्वा राजा भवति भूतले ॥ १२ ॥ स हिरण्येन चार्घेण रक्तोदकयुतेन वा ॥ कोटीशतं तु वर्षाणां स्वर्गलोके महीयते ॥ १३ ॥ पद्मैरभ्यर्चनं कृत्वा रवेः स्वर्गगतो नरः ॥ पद्मे वसति वर्षाणां स्त्रीपद्मशतसंवृतः ॥ १४ ॥ गुग्गुलं सघृतं दत्त्वा रवेर्भक्तिसमन्वितः ॥ तत्क्षणात्सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ १५ ॥ पक्षं तु गुग्गुलं दत्त्वा मुच्यते ब्रह्महत्यया ॥ संवत्सरेण लभते अश्वमेधफलं शिव ॥१६॥ धूपेन लभते स्वर्गं तुरुष्केण सुगन्धिना ॥ कर्पूरागुरुधूपेन राजसूयफलं लभेत् ॥१७॥ पूर्वाह्णे मानवो भक्त्या श्रद्धया योऽर्चयेद्रविम् ॥ स तत्फलमवाप्नोति यद्दत्ते कपिलाशते ॥ १८ ॥ मध्याह्ने योऽर्चयेत्सूर्यं प्रयतात्मा जितेन्द्रियः ॥ लभते भूमिदानस्य गोशतस्य च तत्फलम् ॥ १९ ॥ पश्चिमायां तु सन्ध्यायां योऽर्चयेद्भास्करं नरः ॥ शुचिः शुक्लांबरोष्णीपो गोस हस्रफलं लभेत् ॥ २० ॥ अर्धरात्रे तु यो हेलिं भक्त्या संपूजयेन्नरः ॥ जातिस्मरत्वमाप्नोति कुले जातो वृषान्वितः ॥२१॥ प्रदोषरात्रिवेलायां यः पूजयति भास्करम् ॥ स गत्वा सहसा वीर क्रीडेत्सौमनसं क्षयम् ॥२२॥ दण्डनायकवेलायां प्रभातसमये पुनः ॥ पूजयित्वा रविं भक्त्या व्रजेदनि मिषालयम् ॥२३॥ एवं वेलासु सर्वासु अवेलासु च मानवः ॥ भक्त्या पूजयते योऽर्कमर्कपुष्पैः समाहितः॥तेजसादित्यसंकाशो ह्यर्कलोके महीयते॥ ॥२४॥ अयने तूत्तरे सूर्यमथ वा दक्षिणायने॥ पूजयेद्यस्तु वै भक्त्या स गच्छेत्कञ्जजालयम्॥२५॥तत्रस्थः पूज्यते कैशैः सर्वैः सुमनसैस्तथा॥गोपतिः पूज्यते यद्वद्गोपतिप्रमुखैः सुरैः ॥ २६ ॥ विषुवेषूपरागेषु पडशीतिमुखेषु च ॥ पूजयित्वा रविं भक्त्या नात्मानं शोचते नरः ॥ २७ ॥ विबुध्य वा



१ दिनान्येव–इ० पा० । २ देवतायतनेषु–इ० पा० । ३ धारयते–इ० पा० । ४ उपित्वा च–इ० पा० । ५ मम लोके–इ० पा० । ६ भक्त्या समाहितः—इ० पा० । ७ सागरसंक्षयम्—इ० पा० । ८ देवैः–इ० पा० । ९ बिंबमध्यगतं देवम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वयं वापि यो नमस्कुरुते रविम् ॥ संतुष्टो भास्करस्तस्मै गतिमिष्टां प्रयच्छति ॥ २८ ॥ कृशरापायसापूपफललोन्मिश्रमोदकैः ॥ बलिं कृत्वा तु सूर्याय सर्वकाममवाप्नुयात् ॥२९॥ मोदकानां प्रदानेन पायसस्य च सुव्रत ॥ मधुमांसरसैश्चापि प्रीयतेऽतीवभास्करः ॥३०॥ घृतेन तर्पणं कृत्वा सदा स्निग्धो भवेन्नरः ॥ तर्पयित्वा तु मांसेन सद्यः पापात्प्रमुच्यते ॥ ३१ ॥ घृतेन स्नपनं कृत्वा एकाहमुदये रवेः ॥ गवां शतसहस्रस्य दत्तस्य फलमश्नुते ॥ ३२ ॥ गवां क्षीरेण संतर्प्य पुंडरीकफलं लभेत् ॥ रसेन स्नापयेद्देवमश्वमेधफलं लभेत् ॥ ३३ ॥ सूर्याय तरुणीं धेनुं गामेकां यः प्रयच्छति ॥ कन्नजामचलां प्राप्य पुनर्लेखपुरं व्रजेत् ॥ ३४ ॥ गोशरीरे तु रोमाणि यावन्ति त्रिपुरान्तक ॥ स तावद्वर्षकोटीस्तु लेखलोके महीयते ॥ ३५ ॥ गोशतं भानवे दत्त्वा राजसूयफलं लभेत् ॥ अश्वमेधफलं तस्य यः सहस्रं प्रयच्छति ॥३६॥ गुग्गुलुं देवदारुं च दहेन्नित्यं घृतस्रवम् ॥ आज्यधूमो हि देवानां प्रकृत्यैव प्रियः सदा ॥३७॥ भेर्यादीनि च वाद्यानि शंखवेण्वादिकानि च ॥ ये प्रयच्छंति सूर्याय यांति ते हंसमंदिरम् ॥ ३८ ॥ वस्त्रमाहरते यस्तु रवेर्भक्तिसमन्वितः ॥ तीर्थोदकमथैवान्यः स याति विबुधालयम् ॥३९॥ विमानैः स्त्रीशताकीर्णैः क्रीडयित्वा चिरं नरः ॥ मानुषत्वमनुप्राप्य राजा भवति धार्मिकः ॥४०॥ छत्रं ध्वजं वितानं च पताकाश्चामराणि च ॥ हेमदंडानि वै दद्याद्रवेर्यो भक्तिमान्नरः ॥ ॥ ४१ ॥ विमानेन स दिव्येन किंकिणीजालमालिना ॥ सूर्यलोकमतो गत्वा भवत्यप्सरसां पतिः ॥ ४२ ॥ तत्रोष्य सुचिरं कालं स्वर्गात्प्रत्यागतः पुनः ॥ मानुष्ये जायते राजा सर्वराजनमस्कृतः ॥ ४३ ॥ दत्त्वा वासांसि सूर्याय अलंकारांस्तथैव च ॥ क्रीडते जनलोकस्थो यावदाभूतसंप्लवम् ॥४४॥ गीतवादित्रनृत्यैश्च कुर्याज्जागरणं रवेः ॥ गंधर्वाप्सरसां मध्ये क्रीडते सुचिरं नरः ॥ ४५ ॥ गंधैः पुष्पैस्तथा पत्रैः स्तोत्रैर्वा विविधैस्तथा ॥ ये स्तुवंति रविं भक्त्या ते यांति पतगालयम् ॥ ४६ ॥ उपः स्तुवंति ये सूर्यमुपगायंति ते सदा ॥ पाठकाश्चारणाश्चैव सर्वे ते स्वर्गगामिनः ॥ ४७ ॥ अश्वयुक्तं युगैर्युक्तं यो दद्याद्रवये रथम् ॥ कांचनं वापि रौप्यं वा मणिरत्नान्वितं शुभम् ॥ ४८ ॥ स यानेनार्कवर्णेन किंकिणीजालमालिना ॥ स्वर्गलोकमितो गत्वा क्रीडतेऽप्सरसा सह ॥ ४९ ॥ यस्तु दारुमयं कुर्याद्रवे रथमनुत्तमम् ॥ स यात्यर्कसवर्णेन विमानेनार्कमंडलम् ॥ ५० ॥ यात्रां कुर्वंति ये भानोर्नराः संवत्सरादपि ॥ षण्मासाद्वा गणश्रेष्ठ तेषां पुण्यफलं शृणु ॥ ५१ ॥ ( षण्मासान्वा गणश्रेष्ठ तेषां कर्मफलं शृणु ॥ ) ध्यानिनो योगिनश्चैव प्राप्नुवंतीह यां गतिम् ॥ तां गतिं प्रतिपद्यंते सूर्यवर्त्मावगाहिनः ॥५२॥ रथं वहंति ये भानोर्नरा भक्ति

१ प्रयत्नेन–इ० पा० । २ मधुमांसादिकेण–इ० पा० । ३ स्नपनं कृत्वा—इ० पा० । ४ नर्मणीम्–इ० पा० । ५ आज्यधूपः–इ० पा० । ६ असमाप्तिः इव भाति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समन्विताः ॥ अरोगाश्चाद्दरिद्राश्च जातौ जातौ भवंति ते ॥ ५३ ॥ कर्तारो रथयात्राया ये नरा भास्करस्य तु ॥ ते भानुलोकमासाद्य विहरन्ति यथासुखम् ॥ ५४ ॥ यात्राभंगं तु यो मोहात्क्रोधाद्वा कुरुते नरः ॥ मंदेहास्ते नरा ज्ञेया राक्षसाः पापकारिणः ॥ ५५ ॥ धनं धान्यं हिरण्यं वा वासांसि विविधानि च ॥ ये प्रयच्छंति सूर्याय ते यांति परमां गतिम् ॥ ५६ ॥ गा वाथ महिषीर्वापि गजानश्वांश्च शोभनान् ॥ यः प्रयच्छति सूर्याय तस्य पुण्यफलं शृणु ॥ ५७ ॥ अक्षयं सर्वकामीयमश्वमेधफलं लभेत् ॥ सहस्रगुणितं तच्च दानमस्योपतिष्ठति ॥ ५८ ॥ महीं ददाति योऽर्काय कृष्टां फलवतीं शुभाम् ॥ स तारयति वै वंश्यान्दश पूर्वान्दशापरान् ॥५९॥ विमानेन च दिव्येन गोपुरं गोपतेर्व्रजेत् ॥ क्रीडत्यप्सरसां मध्ये करीव करिणीगणे ॥ ६० ॥ ग्रामं ददाति यो भक्त्या सूर्याय मतिमान्नरः ॥ विमानेनार्कवर्णेन स याति परमां गतिम् ॥ ६१ ॥ आरामान्ये प्रयच्छंति पत्रपुष्पफलोपगान् ॥ भानवे भक्तियुक्तास्तु ते यांति परमां गतिम् ॥ ६२ ॥ मानसं वाचिकं वापि कर्मजं यच्च दुष्कृतम् ॥ सर्वं सूर्यप्रसादेन अशेषं च प्रणश्यति ॥६३॥ आर्तो वा व्याधितो वापि दरिद्रो दुःखितोऽपि वा ॥ आदित्यं शरणं गत्वा नात्मानं शोचते नरः ॥ ॥ ६४ ॥ एकाहेनापि यद्भानोः पूजायाः प्राप्यते फलम् ॥ तद्वै क्रतुशतैरिष्टैः प्राप्यते फलमुत्तमम् ॥ ६५ ॥ कृत्वा प्रेक्षणकं भानोर्दिव्यमायतने शुभम् ॥ अक्षयं सर्वकामीयं राजसूयफलं लभेत् ॥६६॥ वेश्याकदंबकं यस्तु दद्यात्सूर्याय भक्तितः ॥ स गच्छेत्परमं स्थानं यत्र तिष्ठति भानुमान् ॥ ॥६७॥ पुस्तकं भानवे दद्याद्भारतस्य गणाधिप ॥ सर्वपापविमुक्तात्मा विष्णुलोके महीयते ॥ ६८ ॥ रामायणस्य दत्वा तु पुस्तकं त्रिपुरांतक ॥ वाजपेयफलं प्राप्य गोपतेः पुरमाव्रजेत् ॥६९॥ भविष्यं सांबसंज्ञं वा दत्त्वा सूर्याय पुस्तकम् ॥ राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥७०॥ सर्वान्कामानवाप्नोति याति सूर्यसलोकताम् ॥ सूर्यलोके चिरं स्थित्वा ब्रह्मलोकं व्रजेत्पुनः ॥ स्थित्वा कल्पशतं तत्र राजा भवति भूतले॥७१॥ भानोरायतने यस्तु प्रपां कुर्याद्गणाधिप ॥ स याति परमं स्थानं दिव्यं सौमनसं नरः ॥ ७२ ॥ शीतकाले घनं दद्यान्नराणां शीतनाशनम् ॥ भानोरायतने देव अश्वमेधफलं लभेत् ॥७३॥ इतिहासपुराणभ्यां पुण्यं पुस्तकवाचनम् ॥ अश्वमेधसहस्रं यो नित्यं कर्तुं प्रवर्तते ॥ न तत्फलमवाप्नोति यदाप्नोत्यस्य कर्मणः ॥७४॥ तस्मात्सर्वप्रयत्नेन कार्यं पुस्तकवाचनम् ॥ इतिहासपुराणाभ्यां भानोरायतने शुभम् ॥ ७५ ॥ नान्यत्पुष्टिकरं



१ शुभम्-इ० पा० । २ विनयं यत्र तिष्ठति-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भानोस्तथा तुष्टिकरं परम् ॥ पुण्याख्यानकथा यास्तु यथा तुष्यतिभास्करः ॥ ७६ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमी कल्पे भानुमहिमवर्णनं नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ अत्राख्यानमुशंतीह संवादं गणपुंगव ॥ पितामहकुमाराभ्यां पुण्यं पापहरं शिवम् ॥ १ ॥ स्रष्टारं सर्वलोकानां सुखासीनं पितामहम् ॥ प्रणम्य शिरसा देवं श्रद्धाभक्तिसमन्वितः ॥ २ ॥ कुमारो देवशार्दूल इदं वचनमब्रवीत् ॥ गतोऽहमद्य भगवन्द्रष्टुं देवं दिवाकरम् ॥ ३ ॥ कृत्वा प्रदक्षिणं देवः स मया पूजितो रविः ॥ प्रणम्य शिरसा भक्त्या परया श्रद्धया विभो ॥ ४ ॥ अनुज्ञातस्ततस्तेन सुखासीनो ह्यहं स्थितः ॥ आसीनेन मया तत्र दृष्टमाश्चर्यमद्भुतम् ॥ ५ ॥ काञ्चनेन विमानेन किंकिणीजालमालिना ॥ मणिमुक्ताविचित्रेण वैदूर्यवरवेदिना ॥ ६ ॥ आगतं पुरुषं तत्र दृष्ट्वा देवो दिवाकरः ॥ ससंभ्रमं समुत्थाय आसनादेव सत्तम ॥ ७ ॥ गृहीत्वा दक्षिणे पाणौ पुरतः प्राप्य तं नरम् ॥ शिरस्याघ्राय देवेश पूजयामास वै रविः ॥ ८ ॥ उपविष्टं तु तं भानुरिदं वचनब्रवीत् ॥ सुस्वागतं भद्र सुखकृता प्रीतास्त्वया वयम् ॥ ९ ॥ समीपे मम तिष्ठ त्वं यावदाभूतसंप्लवम् ॥ पुनर्यास्यसि तत्स्थानं यत्र ब्रह्मा स्वयं स्थितः ॥ १० ॥ एतस्मिन्नंतरे चान्यो विमानवरमास्थितः ॥ आगतः पुरुषो देवो यत्र तिष्ठति भास्करः ॥ ११ ॥ स चाप्येवं नरो देव पूजितो भानुना तदा ॥ सामपूर्वं तथोक्तस्तु प्रश्रयावनतः स्थितः ॥ १२ ॥ तत्र मे कौतुकं जातं दृष्ट्वा पूजां कृतां तयोः ॥ भानुना देवशार्दूल पृष्टो भानुर्मया ततः ॥ १३ ॥ किमनेन कृतं देव योऽयं पूर्वमिहागतः ॥ नरस्तव सकाशं वै यस्य तुष्टो भवान्भृशम् ॥ १४ ॥ यदस्य भवता पूजा कृता हि स्वयमेव तु ॥ अत्र मे कौतुकं जातं विस्मयश्च विशेषतः ॥ १५ ॥ तथैवास्य कृता पूजा द्वितीयस्य नरस्य च ॥ सर्वथा पुण्यकर्माणाविमौ नरवरोत्तमौ ॥ १६ ॥ ब्रह्मविष्णुशिवाद्यैस्तु पूज्यते भगवान्त्सदा ॥ यस्त्वमाभ्यां परं पूजां कृतवान्देवसत्तम ॥ १७ ॥ कथ्यतां मम देवेश किमेतौ कर्म चक्रतुः ॥ यस्येदृक्परमं पुण्यं फलं दिव्यमवापतुः ॥ श्रुत्वा तद्वचनं देव इदं वचनमब्रवीत् ॥ १८ ॥ ॥ सूर्यउवाच ॥ ॥ साधु पृष्टोऽस्मि भवता कर्मणो निर्णयं परम् ॥ १९ ॥ यदनेन कृतं कर्म नरेण मुनित्तम ॥ योऽसौ सूर्यमिहायातस्तच्छृणुष्व महामते ॥ २० ॥ येयं मदंशसंभूतैः पार्थिवैः पालिता सदा ॥ अयोध्या नाम नगरी प्रख्याता पृथिवीतले ॥ २१ ॥ तत्रासौ वैश्यजातीयो धनपाल इति स्मृतः ॥ तस्यां पुर्यां द्विज श्रेष्ठ दिव्यमायतनं व्यधात् ॥ २२ ॥ तस्मिन्नायतने दिव्ये ह्याम्नायार्थं तथाश्रितः ॥ ब्राह्मणानां विशिष्टानां पूजयित्वा कदंबकम् ॥ २३ ॥ इतिहा

१ विभावसुः–इ० पा० । २ गृहीत्वा दक्षिणे पादे पुरतः स्थाप्य तं नरम्–इ० पा० । ३ मम–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सपुराणाभ्यां वाचकं च विशेषतः ॥ पूजयित्वा द्विजश्रेष्ठं मुनिश्रेष्ठं महामुनिम् ॥ २४ ॥ पुस्तकं चापि संपूज्य गंधपुष्पोपहारतः ॥ तस्य विप्रक दंवस्य व्यासस्य च यथाग्रतः ॥ २५ ॥ प्रकल्प्योक्तो द्विजोऽनेन पाठको वाचकोत्तमः ॥ एष तिष्ठति देवेशः सहस्रकिरणो रविः ॥ २६ ॥ चातु वर्ण्यमिदं चापि श्रोतुकामं कदंबकम् ॥ तिष्ठ चेह द्विजश्रेष्ठ कुरु पुस्तकवाचनम् ॥ २७ ॥ येन मे वरदो भानुः सप्त जन्मानि वै भवेत् ॥ यावत्संव त्सरं विप्र प्रगृह्य वृत्तिमुत्तमाम् ॥ २८ ॥ स्वर्णनिष्कशतं विप्र ततो दास्ये तथापरम् ॥ पूर्णे वर्षे द्विजश्रेष्ठ श्रेयोऽर्थमहमात्मनः ॥ २९ ॥ एवं प्रवर्तिते तस्मिन्पुण्ये पुस्तकवाचने ॥ षण्मासागतमात्रे तु काले सुरवरोत्तम ॥ तथैवान्तरतश्चायं कालधर्ममुपेयिवान् ॥ ३० ॥ मया चास्य विमानं तु प्रेषितं कुर्वतो व्रतम् ॥ इत्येषा कर्मणस्तुष्टिः पुण्याख्यानकजार्चिता ॥ ३१ ॥ गंधपुष्पोपहारैस्तु न तथा जायते मम ॥ प्रीतिर्देववर श्रेष्ठ पुराण श्रवणे यथा ॥ ३२ ॥ गोसुवर्णहिरण्यानां वस्त्राणां चापि कृत्स्नशः ॥ ग्रामाणां नगराणां च दानं प्रीतिकरं मम ॥ ३३ ॥ न तथा स्यात्सुर श्रेष्ठ यथ प्रीतिकरं गुह ॥ इतिहासपुराणाभ्यां श्रवणं सुरसैन्यप ॥ ३४ ॥ श्राद्धं कुर्वंति ये मह्यं भक्ष्यभोज्यैरनेकशः ॥ न करोति तथा प्रीति र्यथा पुस्तकवाचनम् ॥ ३५ ॥ कर्णश्राद्धे यथा प्रीतिर्मम स्यात्सुरत्तम ॥ न तथा जायते प्रीतिर्भोज्यश्राद्धे तथैव च ॥ ३६ ॥ अथ किं बहुनोक्तेन नान्यत्प्रीतिकरं मम ॥ पुण्याख्यानादृते देव गुह्यमेतत्प्रकीर्त्तितम् ॥ ३७ ॥ यश्चायमपरो विप्र इहायतो नरोत्तमः ॥ अयमा सीद्द्विजश्रेष्ठस्तस्मिन्नेव पुरोत्तमे ॥ ३८ ॥ एकदा तु गतश्चायं धर्मश्रवणमुत्तमम् ॥ श्रोतुं भक्त्या द्विजश्रेष्ठ श्रद्धया परया वृतः ॥ ३९ ॥ श्रुत्वा तत्र ततो भक्त्या पुण्याख्यानमनुत्तमम् ॥ कृत्वा प्रदक्षिणं तस्य वाचकस्य महात्मनः ॥ एष विप्रोमरश्रेष्ठ दत्तवान्स्वर्णमाषकम् ॥ ४० ॥ दत्त्वा तु दक्षिणां तस्मै वाचकायामितौजसे ॥ आनंदमगमद्विप्रः प्राप्तवान्कांचनं यथा ॥४१॥ एतद्धि सफलं चास्य न चान्यत्कृतवानयम् ॥ यदनेन कृता पूजा वाचकस्य महात्मनः ॥ फलं हि कर्मणस्तस्य यन्मया पूजितः स्वयम् ॥ ४२ ॥ वाचकं पूजयेद्यस्तु श्रद्धाभक्तिसमन्वितः ॥ तेनाहं पूजितः स्यां वै को विष्णुः शंकरस्तथा॥४३॥ वाचकं भोजयेद्यस्तु भक्त्या भोज्यैरनुत्तमैः ॥ तेनाहं पूजितः स्यां वै दश वर्षाणि पंच च॥४४॥ न यमो न यमी चापि न मंदो न मनुस्तथा ॥ तपती न तथान्विष्टा यथेष्टो वाचको मम ॥ ४५॥ वाचके सत्कृते देव भोजिते सुरसैन्यप ॥ तृप्तिर्भवति मे देव संवत्सरशतद्वयम् ॥ ४६ ॥ न केवलं मम प्रीतिर्वाचके भोजिते भवेत् ॥ कृत्स्नशो देवतानां च इंद्रादीनां तथा भवेत् ॥४७॥



१ याचकः—इ० पा० । २ देवः—इ० पा० । ३ महात्मने—इ०·पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मविष्णुशिवादीनां स चेष्टो वाचको मम ॥ प्रीते तस्मिन्देवताः स्युः सर्वाः प्रीता न संशयः ॥ ४८ ॥ इत्येतत्कथितं सर्वमाभ्यां कर्म महाबल ॥ ४९ ॥ न चान्यच्चक्रतुः कर्म किमन्यच्छ्रोतुमिच्छसि ॥ एतद्दृष्ट्वाहमाश्चर्यं तवाभ्याशमिहागतः ॥ किमत्र तथ्यं देवेश कथ्यतां कौतुकं मम ॥ ॥ ५० ॥ श्रुत्वा कुमारवचनं सर्वलोकपितामहः ॥ ५१ ॥ ॥ ब्रह्मोवाच ॥ ॥ हंत भोः साधु पुण्योऽसि नास्ति तुल्यस्त्वयापरः ॥ यद्दृष्टौ भवता तौ हि सुपुण्यौ पुण्यकारिणौ ॥ ५२ ॥ यदुक्तं भानुना वत्स तत्तथा नान्यथा भवेत् ॥ यदासीन्मे मुखं पुत्र प्रथमं लोकपूजितम् ॥ ५३ ॥ तस्मादेतानि सर्वाणि निर्गतानि समंततः ॥ इतिहासपुराणानि लोकानां हितकाम्यया ॥५४॥ यथैतानि ममेष्टानि पुराणानि महामते ॥ न तथा वै चतुर्वेदी न चांगानि महामते ॥ ५५ ॥ शृण्वंत्येतानि ये भक्त्या नित्यं श्रद्धासमन्विताः ॥ दत्त्वा तु वाचके वृत्तिं ते गच्छंति परं पदम् ॥ ॥ ५६ ॥ धर्मार्थकाममोक्षाणां स्पष्टीकरणमुत्तमम् ॥ इतिहासपुराणानि मया सृष्टानि सुव्रत ॥५७॥ चत्वारो य इमे वेदा गूढार्थाः सततं स्मृताः ॥ अतस्त्वेतानि सृष्टानि बोधार्थेषां महामते ॥ ५८ ॥ यस्तु कारयते नित्यं धर्मश्रवणमुत्तमम् ॥ आदित्याद्भास्करं प्राप्य याति तत्परमं पदम् ॥ ॥ ५९ ॥ दत्त्वा तु दक्षिणां तत्र आदित्यस्य पुरं व्रजेत् ॥ किमाश्चर्यं सुरश्रेष्ठ दानपात्रं हि तत्परम् ॥ ६० ॥ यथा देववरो लेखो यथा हेतिः परं पविः ॥ ब्राह्मणानां तथा श्रेष्ठो वाचको नात्र संशयः ॥ ६१ ॥ हेतिर्यथा तेजसां तु सरसां सागरो यथा ॥ तथा सर्वद्विजेभ्यस्तु वाचकः प्रवरः स्मृतः ॥ ॥ ६२ ॥ वाचकं पूजयेद्यस्तु नरो भक्तिपुरःसरम् ॥ पूजितं सकलं तेन जगत्स्यान्नात्र संशयः ॥ ६३ ॥ सत्यमुक्तं न संदेहो भानुना मत्कुलोद्वह ॥ वाचकेन समं पात्रं न जात्वन्यद्भवेत्क्वचित् ॥ ६४ ॥ तच्छ्रुत्वा ब्रह्मणो वाक्यं कुमारो वाक्यमब्रवीत् ॥ ६५ ॥ अहो हि धन्यता तस्य पुण्यश्रवणकारिणः ॥ दानं च ददतोऽत्यर्थं पुण्यता वाचकाय वै ॥ ६६ ॥ ॥ ब्रह्मोवाच ॥ ॥ इत्थं दिंडे सदा यस्तु देवदेवस्य मंदिरे ॥ कुर्याच्चु धर्मश्रवणं स याति परमां गतिम् ॥ ६७ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे पुण्यश्रवणमाहात्म्यवर्णनं नाम चतुर्नवतितमोऽध्यायः ॥ ९४ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ त्रिभिः प्रदक्षिणां कृत्वा यो नमस्कुरुते रविम् ॥ भूमौ गतेन शिरसा स याति परमां गतिम् ॥ १ ॥ सोपानत्को देवगृहमारोहेद्यस्तु मानवः ॥ स याति नरकं घोरं तामिस्रं नाम नामतः ॥ २ ॥ श्लेष्ममूत्रपुरीषाणि समुत्सृजति यस्तु वै ॥ देवस्यायतने भानोः स गच्छेन्नरकं क्रमात् ॥ ३ ॥ घृतं मधु पयस्तोयं तथेक्षुरसमुत्तमम् ॥ स्नपनार्थं तु देवस्य य ददतीह मानवाः ॥ सर्वकामानवाप्येह ते यांति हेलिमंडलम् ॥ ४ ॥ स्नाप्यमानं रविं भक्त्या ये पश्यंति वृषध्वज ॥ तेऽश्वमेधफलं प्राप्य लयं यांति वृष

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्वजे ॥ ५ ॥ स्नपनं ये च कुर्वंति भानोर्भक्तिसमन्विताः ॥ लभंते तत्फलं भीम राजसूयाश्वमेधयोः ॥ ६ ॥ यथा न लंघयेत्कश्चित्स्नपनं भास्करस्य तु ॥ तथा कार्यं प्रयत्नेन लंघितं ह्यसुखावहम् ॥ ७ ॥ तामिस्रं नरकं याति लंघयेच्च स रौरवान् ॥ तस्मात्सर्वप्रयत्नेन कार्यं स्नपनमादितः ॥ ८ ॥ घृतेन स्नापयेद्देवं कंजमाप्नोति मानवः ॥ मधुना प्रियमायाति तोयेनापि घृतौकसम् ॥ ९ ॥ इक्षुरसेन संस्नाप्य पयसा कंजशध्वजम् ॥ एवमेभिः स्नापयेद्वै रविमीहितमाप्नुयात् ॥ १० ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मेपर्वणि सप्तमीकल्प आदित्यालयमाहात्म्यवर्णनं नाम पंचनवतितमोऽध्यायः ॥ ९५ ॥ छ ॥ ॥ दिंडिरुवाच ॥ ॥ यश्चैताः सप्त सप्तम्यो भवता कथिता मम ॥ तासां या प्रथमा देव कथिता सा सविस्तरा ॥ १ ॥ यास्त्वन्या देवशार्दूल ताः सर्वाः कथयस्व मे ॥ येनोपोष्य ततस्तास्तु व्रजेहं हेलिसद्म वै ॥ २ ॥ ॥ ब्रह्मोवाच ॥ ॥ शुक्लपक्षस्य सप्तम्यां नक्षत्रं पंचतारकम् ॥ यदा स्यात्सा तदा ज्ञेया जया नामेति सप्तमी ॥ ३ ॥ तस्यां दत्तं[1] हुतं जापस्तर्पणं देवपूजनम् ॥ सर्वं शतगुणं प्रोक्तं पूजा चापि दिवाकरे ॥ ४ ॥ भास्करस्य प्रिया ह्येषा सप्तमी पापनाशिनी ॥ धन्या यशस्या पुत्र्या च कामदा कंजजावहा ॥ ५ ॥ विधिनानेन कर्तव्या तिथिर्या मम विद्यते ॥ तं शृणुष्व विधिं मत्तो येन कृत्वार्थमश्नुते ॥ ६ ॥ हंसे हंससमारूढे शुक्लेयं सप्तमी पुरा ॥ समुपोष्य च कर्तव्या विधिनानेन शंकर ॥ ७ ॥ पारणा तृतीयाऽह्ने स्यात्कथितं गोवृषावहम् ॥ प्रथमं चतुरो मासान्पारणं कथितं बुधैः ॥ ८ ॥ कथितान्यत्र पुष्पाणि करवीरस्य सुव्रत ॥ चंदनं च तथा रक्तं धूपार्थं गुग्गुलं परम् ॥ ९ ॥ कांसारं तु सुपक्कं च नैवेद्यं भास्कराय वै ॥ अनेन विधिनापूज्य मार्तंडं विबुधाधिपम् ॥ १० ॥ पूजयेद्ब्राह्मणान्भीम भक्ष्यभोज्यैर्यथाविधि ॥ कांसारं भोजयेद्विप्रान्पारणेऽस्मिन्विचक्षणः ॥ स्वयमेव तथाश्नीयात्प्रयतो मौनमाश्रितः ॥ ११ ॥ पंचम्यामेकभक्तं तु षष्ठ्यां नक्तं प्रवर्तते ॥ कृत्वोपवासं सप्तम्यामष्टम्यां पारणं भवेत् ॥ १२ ॥ षष्ठ्या समेता कर्तव्या नाष्टम्येयं कदाचन ॥ यस्योपवासनायैव षष्ठ्यामाहुरुपोषितम् ॥ १३ ॥ यथैकादश्यां कुर्वंति उपवासं मनीषिणः ॥ उपवासनाय द्वादश्यां तथेयं परिकीर्तिता ॥ १४ ॥ सिद्धार्थकैः स्नानमंत्रः प्राशनं गोमयस्य तु ॥ भानुर्मे प्रीयतामत्र दंतकाष्ठं तथार्कजम् ॥ १५ ॥ इत्येष कथितस्तात प्रथमे पारणे विधिः ॥ द्वितीयं श्रूयतां भीम पारणं गदतो मम ॥ १६ ॥ मालतीकुसुमानीह श्रीखण्डं चंदनं तथा ॥ नैवेद्यं पायसं भानोर्धूपं विजयमादिशेत् ॥ १७ ॥ ब्राह्मणान्भोजयेद्वापि तथाश्नीयात्स्वयं विभो ॥ रविर्मे प्रीयतामत्र नाम देवस्य कीर्तयेत् ॥ १८ ॥ प्राशयेत्पंचगव्यं तु खदिरं दंत



[1] दानमित्यर्थः, अर्थ भावनिष्ठान्तः प्रयोगः । एवं हुतमित्यत्रापि हवनमित्यर्थो बोध्यः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धावने ॥ द्वितीये पारणे वीर विधिरुक्तो मयाधुना ॥ १९ ॥ तृतीयं पारणं चापि कथ्यमानं निबोध मे ॥ अगस्तिकुसुमैरत्र भास्करं पूजयेद्बुधः ॥ ॥ २० ॥ समालंभनमत्रोक्तं श्रीखंडं कुसुमं तथा ॥ सिह्लको धूप उद्दिष्टो भानोः प्रीतिकरः परः ॥ २१ ॥ शाल्योदनं तु नैवेद्यं रसालोपरिसंयुतम् ॥ ब्राह्मणानां तु दातव्यं भक्षयेत तथात्मना ॥ २२ ॥ कुशोदकप्राशनं तु बदर्यां दंतधावनम् ॥ विकर्तनः प्रीयतां मे नाम देवस्य कीर्तयेत् ॥ ॥ २३ ॥ वर्षासु देवदेवस्य पूजा कार्या विधानतः ॥ गंधपुष्पोपहारैस्तु नानाप्रेक्षणकैस्तथा ॥ २४ ॥ गोदानैर्भूमिदानैर्वा ब्राह्मणानां च तर्पणैः ॥ इत्थं संपूज्य देवेशं देवस्य पुरतः स्थितः ॥ २५ ॥ कारयेत्परमं पुण्यं धन्यं पुस्तकवाचनम् ॥ वस्त्रैर्गंधैस्तथा धूपैर्वाचकं पूजयेत्ततः ॥ २६ ॥ देवस्य पुरतः स्थित्वा ततो मंत्रमुदीरयेत् ॥ देवदेव जगन्नाथ सर्वरोगार्तिनाशन ॥ ग्रहेश लोकनयन विकर्तनतमोऽपह ॥ २७ ॥ कृतेयं देवदेवेश जया नामेति सप्तमी ॥ मया तव प्रसादेन धन्या पापहरा शिवा ॥ २८ ॥ अनेन विधिना वीर यः कुर्यात्सप्तमीमिमाम् ॥ तस्य स्नानादिकं सर्वं भवेच्छतगुणं विभो ॥ २९ ॥ कृत्वेमां सप्तमीं वीर पुरुषः प्राप्नुयाद्यशः ॥ धनं धान्यं सुवर्णं च पुत्रमायुर्बलं श्रियम् ॥ ३० ॥ प्राप्येह देवशार्दूल सूर्यलोकं स गच्छति ॥ तस्मादेत्य पुनर्भूमौ राजराजो भवेद्बुधः ॥ ३१ ॥ इत्येषा कथिता वीर जया नामेति सप्तमी ॥ कृता स्मृता श्रुता सा तु हेलिलोकप्रदायिनी ॥ ३२ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे जयानामसप्तमीमाहात्म्यवर्णनं नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ माघस्य शुक्लपक्षे तु सप्तमी या त्रिलोचन ॥ जयंती नाम सा प्रोक्ता पुण्या पापहरा शिवा ॥ १ ॥ सोपोष्या येन विधिना शृणु तं पार्वतीप्रिय ॥ पारणानि तु चत्वारि कथितान्यत्र पंडितैः ॥ २ ॥ पंचम्यामेकभक्तं तु षष्ठ्यां नक्तं प्रकीर्तितम् ॥ उपवासस्तु सप्तम्यामष्टम्यां पारणं भवेत् ॥ ३ ॥ माघे च फाल्गुने मासि तथा चैत्रे च सुव्रत ॥ वकपुष्पाणि रम्याणि कुंकुमं च विलेपनम् ॥ ४ ॥ नैवेद्यं मोदकांश्चात्र धूप आज्यमुदाहृतः ॥ प्राशनं पंचगव्यं तु पवित्रीकरणं परम् ॥ ५ ॥ मोदकैर्भोजयेद्विप्रान्यथाशक्त्या गणाधिप ॥ शाल्योदनं च भूतेश दद्याच्छक्त्या द्विजेषु वै ॥ ६ ॥ इत्थं संपूजयेद्यस्तु भास्करं लोकपूजितम् ॥ सर्वस्मिन्पारणे वीर सोऽश्वमेधफलं लभेत् ॥ ७ ॥ द्वितीये पारणे पूज्य राजसूयफलं लभेत् ॥ वैशाखाषाढज्येष्ठेषु श्रावणे मासि सुव्रत ॥ पूजार्थमथ भानोर्वै शतपत्राणि सुव्रत ॥ ८ ॥ श्वेतं च चंदनं भीम धूपो गुग्गुलुरुच्यते ॥ नैवेद्यं गुडपूपास्तु प्राशनं गोमयस्य तु ॥ भोजने चापि विप्राणां गूडपूपाः प्रकीर्तिताः ॥ ९ ॥ द्वितीयमिदमाख्यातं पारणं पापनाशनम् ॥ राजसूयाश्वमेधाभ्यां फलदं भास्करप्रियम् ॥ १० ॥ तृतीयं शृणु देवस्य पूजार्थे भास्करस्य तु ॥ मासि भाद्रपदे



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वीर तथा चाश्वयुजे विभो ॥११॥ कार्त्तिके चापि मासे तु रक्तचंदनमादिशेत् ॥ मालतीकुसुमानीह धूपो विजय उच्यते ॥१२॥ नैवेद्यं घृतपूपास्तु भोजनं च द्विजन्मनाम् ॥ कुशोदकप्राशनं तु कायशुद्धिकरं परम् ॥१३॥ तृतीयमपि चाख्यातं पारणं पापनाशनम् ॥ राजसूयाश्वमेधाभ्यां फलदं भास्करप्रियम् ॥ १४ ॥ चतुर्थमपि ते वच्मि पारणं पापनाशनम् ॥ राजसूयाश्वमेधाभ्यां फलदं भस्करप्रियम् ॥ १५ ॥ तदद्य देवशार्दूल पारणं श्रेय से शृणु ॥ मासि मार्गशिरे वीर पौषे मासि तथा शिव ॥ १६ ॥ माघे च देवशार्दूल शृणु पुण्यान्यशेषतः ॥ करवीराणि रक्तानि तथा रक्तं च चंदनम् ॥ १७ ॥ अमृताख्यस्तथा धूपो नैवेद्यं पायसं परम् ॥ आर्जनीयं तथा तक्रं प्राशनं परमं स्मृतम् ॥ १८ ॥ अगरुं चंदनं मुस्तं सिह्लकं त्र्यूषणं तथा ॥ समभागैस्तु कर्तव्यमिदं चामृतमुच्यते ॥१९॥ नामानि कथितान्यत्र भास्करस्य महात्मनः ॥ चित्रभानुस्तथा भानुरादित्यो भास्करस्तथा ॥२०॥ प्रीयतामिति सर्वस्मिन्पारणे विधिमादिशेत् ॥ अनेन विधिना यस्तु कुर्यात्पूजां विभावसोः॥२१॥ तस्यां तिथौ देवदेव स याति परमं पदम् ॥ कृत्वैवं सप्तमीं भीम सर्वकामानवाप्नुते॥२२॥पुत्रार्थी लभते पुत्रान्धनार्थी लभते धनम् ॥ सरोगो मुच्यते रोगैः शुभमाप्नोति पुष्कलम् ॥२३॥ पूर्णे संवत्सरे भीम कार्या पूजा दिवाकरे ॥ गंधपुष्पोपहारैस्तु ब्राह्मणानां च तर्पणैः ॥ नानाविधैः प्रेक्षणकैः पूजया वाचकस्य तु ॥ २४ ॥ इत्थं संपूज्य देवेशं ब्राह्मणांश्चाभिपूज्य च ॥ वाचकं च द्विजं पूज्य इदं वाक्यमुदीरयेत् ॥ २५ ॥ धर्मकार्येषु मे देव अर्थकायेषु नित्यशः ॥ कामकार्येषु सर्वेषु जयो भवतु सर्वदा ॥ २६ ॥ ततो विसर्जयेद्विप्रान्वाचकं तु द्विजोत्तमम् ॥ इत्थं कुर्यादिदं यस्तु स जयं प्राप्नुयात्फलम् ॥ सर्वपापविशुद्धात्मा सूर्य्यलोकं स गच्छति ॥ २७ ॥ विमानवरमारूढः कंजजोद्भवमुत्तमम् ॥ तेजसा रविसंकाशः प्रभया पतगोपमः ॥ २८ ॥ ॥ इति श्रीभविष्ये माहपुराणे ब्राह्मे पर्वणि सप्तमीकल्पे जयंतीकल्पवर्णनं नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ मासि भाद्रपदे शुक्ला सप्तमी या गणाधिप ॥ अपराजितेति विख्याता महापातकनाशिनी ॥ १ ॥ चतुर्थ्यामेकभक्तं तु पंचम्यां नक्तमादिशेत् ॥ उपवासं तथा षष्ठ्यां सप्तम्यां पारणं स्मृतम् ॥ २ ॥ पारणान्यत्र चत्वारि कथितानि मनीषिभिः ॥ पुष्पाणि करवीरस्य तथा रक्तं च चंदनम् ॥ ३ ॥ धूपक्रिया गुग्गुलेन नैवेद्यं गुडपूपकाः॥ भाद्रपदादिमासेषु विधिरेष प्रकीर्तितः॥४॥श्वेतानि भीम पुष्पाणि तथा श्वेतं च चंदनम् ॥ धूपमाज्यमिहाख्यातं नैवद्यं पायसं रवेः॥५॥मार्गशीर्षादिमासेषु विधिरेष प्रकीर्तितः ॥ ततोऽगस्त्यस्य पुष्पाणि कुंकुमं च विलेपनम् ॥६॥ धूपार्थं सिह्लकं प्रोक्तमथ वा रविवर्णकम् ॥ शाल्योदनं च नैवेद्यं सरसं फाल्गुनादिषु ॥७॥ रक्तोत्पलानि भूतेश सागुरुं चंदनं तथा ॥ अनंतो धूप उद्दिष्टो नैवेद्यं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

खंडपूपकाः ॥८॥ श्रीखंडं ग्रंथिसहितमगुरुः सिह्लकं तथा ॥ मुस्ता तथेद्रं भूतेश शर्करा गृह्यते त्र्यहम् ॥ ९ ॥ इत्येष धूपोऽनंतस्तु कथितो देवसत्तम ॥ ज्येष्ठादिमासेषु तथा विधिरुक्तो मनीषिभिः ॥१०॥ शृणु नामानि देवस्य प्राशनानि च सुव्रत ॥ सुधांशुरर्यमा चैव सविता त्रिपुरांतकः॥११॥ पारणेष्वेव सर्वेषु प्रीयतामिति कीर्तयेत् ॥ गोमूत्रं पंचगव्यं तु घृतं चोष्णं पयो दधि ॥ १२ ॥ यस्त्वेतां सप्तमीं कुर्यादनेन विधिना नरः ॥ अपराजितो भवेत्सोऽसौ सदा शत्रुभिराहवे ॥ १३ ॥ जित्वा शत्रुं लभेतापि त्रिवर्गं नात्र संशयः ॥ त्रिवर्गमथसंप्राप्य स्वर्भानोः पुरमश्नुते ॥ १४ ॥ ततः पूर्णेषु मासेषु पूजयेच्छक्तितः खगम् ॥ गंधपुष्पोपहारैस्तु पुराणश्रवणेन च ॥ १५ ॥ अश्वदानेन च विभोर्ब्राह्मणानां च तर्पणैः ॥ वाचकं पूजयित्वा च भास्करस्य प्रियं सदा ॥ १६ ॥ भास्कराय ध्वजान्दद्यान्नानारत्नविभूषितान् ॥ य इत्थं कुरुते वीर सप्तमीं यत्नतः सदा ॥ १७ ॥ सपराजित्य वै शत्रुं याति हंससलोकताम् ॥ १८ ॥ शुक्लाश्वोद्भवयानेन आपगेन पताकिना ॥ आपगाधिपसंकाश आपगानुचरोभवेत् ॥ १९ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे अपराजितावर्णनं नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः ॥ महाजया तदा सा वै सप्तमी भास्करप्रिया ॥ १ ॥ स्नानं दानं जपो होमः पितृदेवाभिपूजनम् ॥ सर्वं कोटिगुणं प्रोक्तं भास्करस्य वचो यथा ॥ २ ॥ यस्तस्यां मानवो भक्त्या घृतेन स्नापयेद्रविम् ॥ सोऽश्वमेधफलं प्राप्य स्वर्गलोकमवाप्नुयात् ॥ ३ ॥ पयसा स्नापयेद्यस्तु भास्करं भक्तिमान्नरः ॥ विमुक्तः सर्वपापेभ्यो याति सूर्यसलोकताम् ॥ ४ ॥ कार्पूरेण विमानेन किंकिणीजालमालिना ॥ तेजसा हरिसंकाशः कांत्या सूर्यसमस्तथा ॥ ५ ॥ स्थित्वा तत्र चिरं कालं राजा भवति चांजसा ॥ महाजयैषा कथिता सप्तमी त्रिपुरांतक ॥ ६ ॥ यामुपोष्य नरो भक्त्या भवते सूर्यलोकगः ॥ ततो याति परं ब्रह्म यत्र गत्वा न शोचति ॥ ७ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे महाजयाकल्पवर्णनं नामैकोनशततमोऽध्यायः ॥ ९९ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी ॥ नंदा सा कथिता वीर सर्वानंदकरी शुभा ॥ १ ॥ पंचम्यामेकभक्तं तु षष्ठ्यां नक्तं प्रकीर्तितम् ॥ सप्तम्यामुपवासं तु कीर्तयंति मनीषिणः ॥ २ ॥ पारणान्यत्र वै त्रीणि शंसंतीह मनीषिणः ॥ मालतीकुसुमानीह सुगंधं चंदनं तथा ॥ ३ ॥ कर्पूरागरुसंमिश्रं धूपं चात्र विनिर्दिशेत् ॥ दध्योदनं सखंडं च नैवेद्यं भास्करप्रियम् ॥ ४ ॥ तमेव दद्याद्विप्रेभ्योऽश्रीयाच्च तदनु स्वयम् ॥ धूपार्थं भास्करस्यैष प्रथमे पारणे विधिः ॥ ५ ॥ पलाशपुष्पाणि विभो धूपो यः शक्य एव च ॥ कर्पूरं चंदनं कुष्ठमगुरुः सिह्लकं तथा ॥ ६ ॥ सग्रंथि वृषणं भीम कुंकुमं गृञ्जनं तथा ॥ हरीतकी तथा भीम एष पक्षक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उच्यते॥७॥धूपः प्रबोध आदिष्टो नैवेद्यं खंडमंडकाः ॥ कृष्णागरुः सितं कंजं बालकं वृषणं तथा ॥८॥ चंदनं तगरो मुस्ता प्रबोधशर्करान्विता ॥ भोजयेद्ब्राह्मणांश्चापि खंडखाद्यैर्गणाधिप ॥ निंबपत्रं तु संप्राश्य ततो भुंजीत वाग्यतः ॥९॥ पारणस्य द्वितीयस्य विधिरेष प्रकीर्तितः ॥ १० ॥ नीलोत्पलानि शुभ्राणि धूपं गौग्गुलमाहरेत् ॥ नैवेद्यं पायसं देयं प्रीतये भास्करस्य तु ॥ ११ ॥ विलेपनं चंदनं तु प्राशने विधिरुच्यते॥ तृतीयस्यापि ते वीर कथितो विधिरुत्तमः ॥ १२ ॥ शृणु नामानि देवस्य पावनानि नृणां सदा ॥ विष्णुर्भगस्तथा धाता प्रीयतामुद्रिरेच्च वै ॥१३॥ अनेन विधिना यस्तु कुर्यात्प्रयतमानसः ॥ सकामानिह संप्राप्य नंदते शाश्वतीः समाः ॥ १४ ॥ ततः सूर्यसदो गत्वा नंदते नंदवर्धन ॥ एषा तु नंदजननी तवाख्याता मया शिव ॥ १५ ॥ यामुपोष्य ततो भुक्त्वा नंदते हंसमाप्य वै ॥ १६ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे नंदानामसप्तमीवर्णनं नाम शततमोऽध्यायः ॥ १०० ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ शुक्लपक्षे तु सप्तम्यां नक्षत्रं सवितुर्भवेत् ॥ यदा प्रथमता चैव तदा वै भद्रतां व्रजेत् ॥ १ ॥ स्नपनं तत्र देवस्य घृतेन कथितं बुधैः ॥ क्षीरेण च तथा वीर पुनरिक्षुरसेन च ॥ ॥ २ ॥ स्नापयित्वा तु देवेशं चंदनेन विलेपयेत् ॥ दग्ध्वा तु गुग्गुलं तस्य दद्याद्भद्रं तथाग्रतः ॥ ३ ॥ गोधूमचूर्णं निवपन्विमलं शशिसन्निभम् ॥ सवज्रं सगुडं चैव रक्तपुष्पोपशोभितम् ॥ ४ ॥ यदस्य शृंगमीशानं तत्र वै मौक्तिकं न्यसेत् ॥ यदाग्नेयं तत्र माणिक्यं न्यसेद्वा लोहितं मणिम् ॥ ॥ ५ ॥ नैर्ऋत्ये मकरं दद्याद्वायव्ये पद्मरागिणम् ॥ गांगेयमंततस्तस्य स्वशक्त्या विन्यसेद्बुधः ॥६॥ चतुर्थ्यामेकभक्तं तु पंचम्यां नक्तमादिशेत् ॥ षष्ठ्यामयाचितं प्रोक्त उपवासो ह्यतः परः ॥ ७ ॥ पाषंडिनो विकर्मस्थान्बैडालव्रतिकांत्यजान् ॥ सप्तम्यां पालयेत्प्राज्ञो दिवा स्वापं विवर्जयेत् ॥ ८ ॥ अनेन विधिना यस्तु कुर्याद्वै भद्रसप्तमीम् ॥ तस्मै भद्राणि सर्वाणि यच्छंति ऋभवः सदा ॥ ९ ॥ भद्रं ददाति यस्त्वस्यां भद्रस्तस्य सुतो भवेत् ॥ भद्रमासाद्य भूतेश सदा भद्रेण तिष्ठति ॥ १० ॥ ॥ दिंडिरुवाच ॥ ॥ कोऽयं भद्र इति प्रोक्तः कथं कार्यं प्रभूषणम् ॥ दत्त्वा च किं फलं विद्याद्विधिना केन दीयते ॥ ११ ॥ ॥ ब्रह्मोवाच ॥ ॥ व्योम भद्रमिति प्रोक्तं देवचिह्नमनूपमम् ॥ यद्धृत्वेह नरः सूर्यं मुच्यते सर्वकिल्बिषैः ॥ १२ ॥ शालिपिंडमयं कार्यं चतुष्कोणमनूपमम् ॥ गव्येन सर्पिषा युक्तं खंडशर्करयान्वितम् ॥१३॥ चातुर्जातकपूर्णं तु द्राक्षाभिश्च विशेषतः ॥ नालिकेरफलैश्चैव सुगंधं च गणाधिप ॥ १४ ॥ मध्येंद्रनीलं भद्रस्य न्यसेत्प्राज्ञः स्वशक्तितः ॥ पुष्परागं मरकतं पद्मरागं तथैव



१ मुक्त्वन्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च ॥ १५ ॥ अनौपम्यं च माणिक्यं क्रमात्कोणेषु विन्यसेत् ॥ वाचकायाथ वा दद्यादथ वा भोजके स्वयम् ॥ १६ ॥ अनेन विधिना यस्तु कृत्वा भद्रं प्रयच्छति ॥ स हि भद्राणि संप्राप्य गच्छेद्गोपतिमंदिरम् ॥ १७ ॥ ब्रह्मलोकं ततो गच्छेद्यानारूढो न संशयः ॥ तेजसा गोजसंकाशः कांत्या गोजसमस्तथा ॥ १८ ॥ प्रभया गोपतेस्तुल्य ऊर्जसा गोपरस्य च ॥ तस्मादेत्य पुनर्भूमौ गोपतिः स्यान्न संशयः ॥ प्रसादाद्गोपतेर्वीर सर्वज्ञाधिपपूजितः ॥ १९ ॥ इत्येषा कथिता भीम भद्रा नामेति सप्तमी ॥ यामुपोष्य नरो भीम ब्रह्मलोकमवाप्नुयात् ॥ २० ॥ शृण्वंति ये पठंतीह कुर्वंति च गणाधिप ॥ ते सर्वे भद्रमासाद्य यांति तद्ब्रह्म शाश्वतम् ॥ २१ ॥ ॥ सुमंतुरुवाच ॥ ॥ इत्युक्तवान्पुरा ब्रह्मा दिंडिने सप्तमी व्रतम् ॥ २२ ॥ मयाप्युक्तं तव विभो यथाज्ञातं यथाश्रुतम् ॥ २२ ॥ गृहीत्वा सप्तमीकल्पं मानवो यस्तु भूतले ॥ त्यजेत्कामाद्भयाद्वापि स ज्ञेयः पतितोऽबुधः ॥ २३ ॥ तस्माद्धारय तद्वीर न त्याज्यं सप्तमीव्रतम् ॥ त्यजमानो भवेद्वीर आरूढपतितो नरः ॥ २४ ॥ श्रावयेद्यस्तु भक्त्या च सप्तमीकल्पमादितः ॥ सोऽश्वमेधफलं प्राप्य ततो याति परं पदम् ॥ २५ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे भद्राकल्पवर्णनं नामैकाधिकशततमोऽध्यायः ॥ १०१ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ एवं या देवदेवस्य सप्तमी भास्करस्य तु ॥ यथा बहूनां भार्याणां भर्तुः काचित्प्रिया भवेत् ॥१॥ सर्वाश्च तिथयो ह्यस्य प्रियाः सूर्यस्य भारत ॥ तस्मादस्यां नरेणेह पूजनीयो दिवाकरः ॥२॥ ॥ ॥ शतानीक उवाच ॥ ॥ तिथीनामधिपः सूर्यः सर्वासां कथितो यदि ॥ सप्तम्यामेव यागोऽस्य किमर्थं क्रियते बुधैः ॥३॥ ॥ सुमंतुरुवाच ॥ ॥ इदमर्थं पुरा पृष्टः सुरज्येष्ठो दिवि स्थितः ॥ विष्णुना कुरुशार्दूल तेनोक्तं हरये यथा ॥ तथा ते सर्वमाख्यास्ये शृणुष्वैकमना विभो ॥४॥ सुखासीनं सुरज्येष्ठं पुरा देवं पितामहम् ॥ प्रणम्य शिरसा देव कृष्णो वचनमब्रवीत् ॥५॥ यद्येष भानुमान्देवस्तिथीनामधिपः स्मृतः ॥ किमर्थं पूज्यते ब्रह्मन्सप्तम्यां ब्रूहि मे विभो ॥६॥ एवमुक्तः सुरज्येष्ठो विष्णुना प्रभविष्णुना ॥ प्रहस्य भगवान्देव इदं वचनमब्रवीत् ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ ॥ देवेभ्यस्तिथयो दत्ता भास्करेण महात्मना ॥ मुक्त्वैकां सप्तमीं सर्वां सम्यगाराधनेन वै ॥ ८ ॥ यस्यैव यद्दिनं दत्तं स तस्यैवाधिपः स्मृतः ॥ स्वदिने पूजितस्तस्मात्स्वमन्त्रैर्वरदो भवेत् ॥ ९ ॥ ॥ विष्णुरुवाच ॥ ॥ अर्केण कतरत्कस्मै दिनं दत्तं महात्मना ॥ स्वदिने पूजितेऽस्मिन्वै स्वमन्त्रैर्जायते ध्रुवम् ॥ १० ॥ ॥ ब्रह्मोवाच ॥ ॥ अग्नये प्रतिपद्दत्ता द्वितीया ब्रह्मणे तथा ॥ तृतीया यक्षराजाय गणेशाय चतुर्थ्यपि ॥ ११ ॥ पञ्चमी नागराजाय कार्तिकेयाय पष्ठ्यपि ॥ सप्तमी स्थापितात्मार्थं दत्ता रुद्राय चाष्टमी ॥ १२ ॥ दुर्गायै नवमी दत्ता यमाय दशमी स्वयम् ॥ विश्वेभ्यश्चाथ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवेभ्यो दत्ता चैकादशी सदा ॥ १३ ॥ द्वादशी विष्णवे दत्ता मदनाय त्रयोदशी ॥ चतुर्दशी शंकराय दत्ता सोमाय पूर्णिमा ॥ १४ ॥ पितॄणां भानुना दत्ता पुण्या पञ्चदशी सदा ॥ तिथ्यः पञ्चदशैतास्तु सोमस्य परिकीर्तिताः ॥ १५ ॥ पीयते कृष्णपक्षे तु सुरैरेभिर्यथोदितैः ॥ शुक्लपक्षे प्रपूर्यते षोडश्या कलया सह ॥ १६ ॥ अक्षया सा सदैकैका तत्र साक्षात्स्थितो रविः ॥ क्षयवृद्धिकरो ह्येवं तेनासौ तत्पतिः स्मृतः ॥ १७ ॥ ददाति गतिमक्षीणां ध्यानमात्रस्थितो रविः ॥ अन्येपीष्टान्यथाकामान्प्रयच्छंति सुखेन वै ॥ १८ ॥ तथा सर्वं प्रवक्ष्यामि कृष्ण संक्षेपतः शृणु ॥ अग्निमिष्ट्वा च हुत्वा च प्रतिपद्यमृतं घृतम् ॥ हविषा सर्वधान्यानि प्राप्नुयादमितं धनम् ॥ १९ ॥ ब्रह्माणं च द्वितीयायां संपूज्य ब्रह्मचारिणम् ॥ भोजयित्वा च विद्यानां सर्वासां पारगो भवेत् ॥ २० ॥ तृतीयायां च वित्तेशं वित्ताढ्यो जायते ध्रुवम् ॥ क्रयादिव्यवहारेषु लाभो बहुगुणो भवेत् ॥ २१ ॥ गणेशपूजनं कुर्याच्चतुर्थ्यां सर्वकर्मसु ॥ अविघ्नं विद्विषां विघ्नं कुर्याच्चास्य न संशयः ॥ २२ ॥ नागानिष्ट्वा च पञ्चम्यां न विषैरभिभूयते ॥ स्त्रियं च लभते पुत्रान्परां च श्रियमाप्नुयात् ॥ २३ ॥ संपूज्य कार्तिकेयं तु षष्ठ्यां श्रेष्ठः प्रजायते ॥ मेधावी रूपसंपन्नो दीर्घायुः कीर्तिवर्धनः ॥ २४ ॥ सप्तम्यां पूज्य रक्षेशं चित्रभानुं दिवाकरम् ॥ अष्टम्यां पूजितो देवो गोवृषाभरणो हरः ॥ २५ ॥ ज्ञानं ददाति विपुलं कांतिं च विपुलां तथा ॥ मृत्युहा ज्ञानदश्चैव पाशहा च प्रपूजितः ॥ २६ ॥ दुर्गां संपूज्य दुर्गाणि नवम्यां तरतीच्छया ॥ संग्रामे व्यवहारे च सदा विजयमश्नुते ॥ २७ ॥ दशम्यां यममातिष्ठेत्सर्वव्याधिहरो ध्रुवम् ॥ नरकादथ मृत्योश्च समुद्धरति मानवम् ॥ २८ ॥ एकादश्यां यथोद्दिष्टा विश्वेदेवाः प्रपूजिताः ॥ प्रजां पशुं धनं धान्यं प्रयच्छन्ति महीं तथा ॥ २९ ॥ द्वादश्यां विष्णुमिष्ट्वेह सर्वदा विजयी भवेत् ॥ पूज्यश्च सर्वलोकानां यथा गोपतिगोकरः ॥ ३० ॥ कामदेवं त्रयोदश्यां सुरूपो जायते ध्रुवम् ॥ इष्टां रूपवतीं भार्यां लभेत्कामांश्च पुष्कलान् ॥ ३१ ॥ दृष्ट्वेश्वरं चतुर्दश्यां सर्वैश्वर्यसमन्वितः ॥ बहुपुत्रो बहुधनस्तथा स्यान्नात्र संशयः ॥ ३२ ॥ पौर्णमास्यां तु यः सोमं पूजयेद्भक्तिमान्नरः ॥ स्वाधिपत्यं भवेत्तस्य संपूर्णं न च हीयते ॥ ३३ ॥ पितरः स्वदिने दिंडे हृष्टाः कुर्वंति सर्वदा ॥ प्रजावृद्धिं धनं रक्षां चायुष्यं बलमेव च ॥ ३४ ॥ उपवासं विनाप्येते भवंत्युक्तफलप्रदाः ॥ पूजया जपहोमैश्च तोषिता भक्तितः सदा ॥ ३५ ॥ मूलमन्त्रैश्च संज्ञाभिरंशमन्त्रैश्च कीर्तिताः ॥ पूर्ववत्पद्ममध्यस्थाः कर्त्तव्याश्च तिथीश्वराः ॥ ३६ ॥ गन्धपुष्पोपहारैश्च यथा शक्त्या विधीयते ॥ पूजा बाह्येन विधिना

१ व्योममात्रस्थितः--इ० पां० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतापि च फलप्रदा ॥ ३७ ॥ आज्यधारासमिद्भिश्च दधिक्षीरान्नमाक्षिकैः ॥ यथोक्तफलदो होमो जपः शांतेन चेतसा ॥ ३८ ॥ मूलमन्त्राश्च संज्ञाभिरंगमन्त्राश्च कीर्तिताः ॥ कृत्वा यज्ञान्दश द्वौ च फलान्येतानि भक्तितः ॥ ३९ ॥ यथोक्तानि तथोक्तानि लभेतेहाधिकान्यपि ॥ इह यस्माद्यथान्यस्मिन्यो वसेद्यः सुखी सदा ॥ ४० ॥ तेषां लोकेषु मन्त्रज्ञो यावत्तेषां तिथिः स्थिता ॥ दहेत्तस्मात्तथारिष्टं तद्रूपो जायते नरः ॥ ४१ ॥ सुरूपो धर्मसंपन्नो क्षपितारिर्महीपतिः ॥ स्त्री वा नपुंसको वापि जायते पुरुषोत्तमः ॥ ४२ ॥ इत्येताः कथिताः कृष्ण तिथयो या मया तव ॥ नक्षत्रदेवताः सर्वा नक्षत्रेषु व्यवस्थिताः ॥ ४३ ॥ इष्टान्कामान्प्रयच्छन्ति यास्ता वक्ष्ये महीधर ॥ चन्द्रमा यत्र नक्षत्रे महावृद्ध्या स्थितः सदा ॥ ४४ ॥ उक्तस्तु देवतायज्ञस्तदा सा फलदा भवेत् ॥ देवताश्च प्रवक्ष्यामि नक्षत्राणां यथाक्रमम् ॥ ४५ ॥ नक्षत्राणि च सर्वाणि यज्ञाश्चैव पृथक्पृथक् ॥ अश्विन्यामश्विनाविष्ट्वा दीर्घायुर्जायते नरः ॥ ४६ ॥ व्याधिभिर्मुच्यते क्षिप्रमत्यर्थं व्याधिपीडितः ॥ भरण्यां यम उद्दिष्टः कुसुमैरसितैः शुभैः ॥ ४७ ॥ तथा गन्धादिभिः शुभ्रैरपमृत्योर्विमोचयेत् ॥ ४८ ॥ अनलः कृत्तिकायां तु इह संपूजितः परः ॥ रक्तमाल्यादिभिर्दद्यात्फलं होमेन च ध्रुवम् ॥ ४९ ॥ पूज्यः प्रजापतिः प्रीत इष्टो दद्यात्पशूंस्तथा ॥ रोहिण्यां देवशार्दूल पूजनादिह गोपते ॥ मृगशीर्षे सदा सोमो ज्ञानमारोग्यमेव च ॥ ५० ॥ आर्द्रायां तु शिवं पूज्य पश्चाद्विजयमाप्नुयात् ॥ पद्मादिभिः स दिव्यैश्च पूजितः शं प्रयच्छति ॥ ५१ ॥ तथा पुनर्वस्वदितिः सदा संपूज्यते दिवि ॥ गुरुणा तर्पिता चैव मातेव परिरक्षति ॥ ५२ ॥ पुष्ये बृहस्पतिर्बुद्धिं ददाति विपुलां शुभाम् ॥ गीतैर्गंधादिभिर्नागा आश्लेषायां प्रपूजिताः ॥ ५३ ॥ तर्पिताश्च यथान्यायं भक्ष्याद्यैर्मधुरैः सितैः ॥ रक्षामिपादिभिस्तैस्तैः प्रीतिं कुर्वंति मानद ॥ ५४ ॥ मघासु पितरः सर्वे हव्यैः कव्यैश्च पूजिताः ॥ प्रयच्छंति धनं धान्यं भृत्यान्पुत्रान्पशूंस्तथा ॥ ५५ ॥ फाल्गुन्यामथ वै पूषा इष्टः पुष्पादिभिः शुभैः ॥ पूर्वायां विजयं दद्यादुत्तरायां भगं तथा ॥ ५६ ॥ भर्तारमीप्सितं दद्यात्कन्यायै पुरुषाय ताम् ॥ इह जन्मनि युज्येत रूपद्रविणसंपदा ॥ ५७ ॥ पूजितः सविता हस्ते विश्वतेजोनिधिः सदा ॥ गंधपुष्पादिभिः सर्वं ददाति विपुलं धनम् ॥ ५८ ॥ राज्यं तु त्वष्टा चित्रायां निःसपत्नं प्रयच्छति ॥ इष्टः संतर्पितः प्रीतः स्वात्यां वायुर्बलं परम् ॥ ॥ ५९ ॥ इन्द्राग्नी च विशाखायां जातरक्तैः प्रपूज्य च ॥ धनधान्यानि लब्ध्वेह तेजस्वी निवसेत्सदा ॥ ६० ॥ रक्तैर्मित्रमनूराधास्वेवं संपूज्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्तितः ॥ श्रियो भजंति सर्वेषां चिरं जीवंति सर्वदा ॥ ६१ ॥ ज्येष्ठायां पूर्ववच्छक्रमिष्ट्वा पुष्टिमवाप्नुयात् ॥ गुणैर्ज्येष्ठैश्च[1] सर्वेषां कर्मणा च धनेन च ॥ ६२ ॥ मूले देवपितॄन्सर्वान्भक्त्या[2] संपूज्य पूर्ववत् ॥ पूर्ववत्फलमाप्नोति स्वर्गस्थाने ध्रुवो भवेत् ॥ ६३ ॥ पूर्वाषाढे ह्यपः पूज्य हुत्वा तत्रैव पूर्ववत् ॥ संतापान्मुच्यते क्षिप्रं शारीरान्मानसात्तथा ॥ ६४ ॥ आषाढासु तथा विश्वानुत्तराषाढयोगतः ॥ विश्वेशं पूज्य पुष्पाद्यैः[3] सर्वमाप्नोति मानवः ॥ ६५ ॥ श्रवणे तु सितैर्विष्णुं पीतैर्नीलैश्च भक्तितः ॥ संपूज्य श्रियमाप्नोति परं विजयमेव च ॥ ६६ ॥ धनिष्ठासु वसूनिष्ट्वा न भयं भजते क्वचित् ॥ महतोऽपि भयात्त्वेतैर्गंधपुष्पादिभिः शुभैः ॥ ६७ ॥ इंद्रं शतभिषायां च व्याधिभिर्मुच्यते ध्रुवम् ॥ आतुरः पुष्टिमाप्नोति स्वास्थ्यमैश्वर्यमेव च ॥ ६८ ॥ अजं भाद्रपदायां तु शुद्धस्फटिकसन्निभम् ॥ संपूज्य भक्तिमाप्नोति परं विजयमेव च ॥ ६९ ॥ उत्तरायामहिर्बुध्न्यं परां शांतिमवाप्नुयात् ॥ रेवत्यां पूजितः पूषा ददाति सततं शुभम् ॥ सितैः पुष्पैः स्थितिं चैव धृतिं विजयमेव च ॥ ७० ॥ तवैवैते समाख्याता यज्ञाः संक्षेपतो मया ॥ नक्षत्रदेवतानां च साधकानां हिताय वै ॥ भक्त्या वित्तानुसारेण भवंति फलदाः सदा ॥ ७१ ॥ गंतुमिच्छेदनंत्यं वा क्रियां प्रारब्धमेव च ॥ नक्षत्रदेवतायज्ञं कृत्वा तत्सर्वमाचरेत् ॥ ७२ ॥ एवं कृते हि तत्सर्वं यात्राफलमवाप्नुयात् ॥ क्रियाफलं च संपूर्ण मित्युक्तं भानुना स्वयम् ॥ ७३ ॥ यज्ञात्स विजयं कुर्यात्क्रियां कुर्याद्यथेप्सिताम् ॥ कालचक्रेऽथ वा सूर्यं राशिचक्रे कलात्मना ॥ ॥ ७४ ॥ विश्वतेजोनिधिं ध्यात्वा सर्वं कुर्याद्यथेप्सितम् ॥ विभूतिरेषा चोद्दिष्टा क्रियाभिः साध्यते ध्रुवम् ॥ ७५ ॥ उद्दिष्टाभिः प्रयत्नेन मुक्तियोगेन साध्यते ॥ भानोराराधनाद्वापि प्राप्यते मुक्तिरेव हि ॥ तस्मादाराधय रविं भक्त्या त्वं मधुसूदन ॥ ७६ ॥ इज्या पूजा नमस्कारशुश्रूषाभिरहर्निशम् ॥ व्रतोपवासैर्विविधैर्ब्राह्मणानां च तर्पणैः ॥ ७७ ॥ यः कारयति देवार्चां हृदयालंबनं रवेः ॥ स नरो भानुसालोक्यमुपैति गतकल्मषः[6] ॥ ७८ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे नक्षत्रपूजाविधिवर्णनं नाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ यश्च देवालयं भक्त्या भानोः कारयते स्थिरम् ॥ स सप्त पुरुषाँल्लोकान्भानोर्नयति मानवः ॥ १ ॥ यावंत्यब्दानि देवार्चा रवेस्तिष्ठति मंदिरे ॥ तावद्वर्षसहस्राणि सूर्यलोके स मोदते[7] ॥ २ ॥ देवार्चा लक्षणोपेता यद्गृहे संततो विधिः ॥ निष्कामं वा मनो यस्य स याति रविसाम्यताम् ॥ ३ ॥ पुष्पाण्यतिसुगंधीनि मनोज्ञानि च यः पुमान् ॥ प्रयच्छति हि देवेशं तद्वा

१ गुडैः संपूज्य ज्येष्ठायां युज्यते मधुसूदन—इ० पा० । २ शक्त्या—इ० पा० । ३ विभवैः—इ० पा० । ४ नात्र कार्या विचारणा—इ० पा० । ५ पशून्—इ० पा० । ६ धुतकल्मषः—इ० पा० । ७ महीयते—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वगतमानसः ॥ ४ ॥ धूपांश्च विविधांस्तांस्तान्गन्धाढ्यं चानुलेपनम् ॥ दीपबल्युपहारांश्च यच्चाभीष्टमथात्मनः ॥ ५ ॥ नरः सोऽनुदिनं यज्ञा
त्प्राप्नोत्याराधनाद्रवेः ॥ यज्ञेशोभगवान्भानुर्मखैरपि च तोष्यते ॥ ६ ॥ बहूपकरणा यज्ञा नानासंभारविस्तराः ॥ प्राप्यंते तैर्धनयुतैर्मनुष्यैर्लोक
संचयैः ॥ ७ ॥ भक्त्या तु पुरुषैः पूजा कृता दूर्वांकुरैरपि ॥ रवेर्ददाति हि फलं सर्वयज्ञैः सुदुर्लभम् ॥ ८ ॥ यानि पुष्पाणि भक्ष्याणि धूपगंधानु
लेपनम् ॥ दयितं भूषणं यच्च रक्तके चैव वाससी ॥ ९ ॥ यानि चाभ्युपहाराणि भक्ष्याणि च फलानि च ॥ प्रयच्छ तानि देवेश भवेथाश्चैव
तन्मनाः ॥ १० ॥ आद्यं तं यज्ञपुरुषं यथा शक्त्या प्रसादय ॥ आराध्य स्थापितं देवं तस्मिन्नेव नरालये ॥ ११ ॥ पुण्यैस्तीर्थोदकैर्गंधैर्मधुना
सर्पिषा तथा ॥ क्षीरेण स्नापयेद्देवं चित्रभानुं दिवाकरम् ॥ १२ ॥ दधिक्षीरह्रदान्याति स्वर्गलोकान्मधुच्युतान् ॥ प्रयास्यति यदुश्रेष्ठ निर्वृतिं वापि शाश्व
तीम् ॥ १३ ॥ स्तोत्रैर्गीतैस्तथा वाद्यैर्ब्राह्मणानां च तर्पणैः ॥ मनसश्चैकतायोगादाराधय विभावसुम् ॥ १४ ॥ आराध्य तं विदेहानां पुरुषाः सप्तसप्ततिः ॥
हैहयानां च पंचाशदमृतत्वं समागताः ॥ १५ ॥ स त्वमेभिः प्रकारैस्तमुपवासैस्तु भास्करम् ॥ संतोषय हि तुष्टोऽसौ भानुर्भवति शांतिदः ॥ १६ ॥
॥ कृष्णउवाच ॥ ॥ उपवासैश्चित्रभानुः कथं तुष्टः प्रजायते ॥ परिचर्या कथं कार्या या कार्या चोपवासिना ॥ १७ ॥ यद्यत्कार्यं यदा चैव
भानोराराधनं नरैः ॥ तत्सर्वं विस्तराद्ब्रह्मन्यथावद्वक्तुमर्हसि ॥ १८ ॥ ॥ ब्रह्मोवाच ॥ ॥ स्मृतः संपूजितो धूपपुष्पाद्यैः स सदा रविः ॥ भोगि
नामुपकाराय किं पुनश्चोपवासिनाम् ॥ १९ ॥ उपावृत्तस्तु पापेभ्यो यस्तु वासोगुणैः सह ॥ उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥ २० ॥ एक
रात्रं द्विरात्रं वा त्रिरात्रमथ वा हरे ॥ उपवासी रविं यस्तु भक्त्या ध्यायति मानवः ॥ २१ ॥ तन्नामयाजी तत्कर्मरतस्तद्गतमानसः ॥ निष्कामः पूज
यित्वा तं परं ब्रह्माधिगच्छति ॥ २२ ॥ यश्च काममभिध्याय भास्करार्पितमानसः ॥ उपोषति तमाप्नोति प्रसन्ने तु वृषध्वजे ॥ २३ ॥ ॥ श्रीकृष्ण
उवाच ॥ ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैः स्त्रीभिस्तथा विभो ॥ संसारगर्तपंकस्थैः सुगतिः प्राप्यते कथम् ॥ २४ ॥ ॥ ब्रह्मोवाच ॥ ॥ अथाराध्य
जगन्नाथं भास्करं तिमिरापहम् ॥ निर्व्यलीकेन चित्तेन प्रयास्यति च सद्गतिम् ॥ २५ ॥ विषयग्राहवैषम्यं न चित्तं भास्करार्पणम् ॥ स कथं पाप
कर्ता वै नरो यास्यति सद्गतिम् ॥ २६ ॥ यदि संसारदुःखार्तः सुगतिं गंतुमिच्छसि ॥ तदाराधय सर्वेशं ग्रहेशं लोकपूजितम् ॥ २७ ॥ पुष्पैः सुगं
धैर्हृद्यैश्च धूपैः सागुरुचन्दनैः ॥ वासोविभूषणैर्भक्ष्यैरुपवासपरायणः ॥ २८ ॥ यदि संसारनिर्वेदादभिवांछसि सद्गतिम् ॥ तदाराधय कालेशं यच्चेष्टं

१ प्रथन्ते–इ० पा० । २ जगत्पतिम्–इ० पा० । ३ श्रीविष्णुरुवाच–इति सर्वत्र कृष्ण उवाचेत्यस्य स्थाने पाठः । ४ भूतेशम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तव चेतसा ॥ २९ ॥ पुष्पाणि यदि तेन स्युः शस्तं पादपपल्लवैः ॥ दूर्वांकुरैरपि कृष्ण तदभावेऽर्चयेद्रविम् ॥ ३० ॥ पुष्पपत्रांबुभिर्धूपैर्यथाविभव मात्मनः ॥ पूजितस्तुष्टिमतुलां भक्त्या यात्येकचेतसाम् ॥३१॥ यः सदायतने भानोः कुर्यात्संमार्जनं नरः ॥ स पांसुदेहसंयोगात्सर्वपापैः प्रमुच्यते ॥ ३२ ॥ यावत्यः पांसुकणिका मार्ज्यंते भास्करालये ॥ दिनानि दिवि दिव्यानि तावंति मोदते नरः ॥ ३३ ॥ सबाह्याभ्यंतरं वेश्म मार्जते भास्करस्य यः ॥ स बाह्याभ्यंतरस्तस्य कायो निष्कल्मषो भवेत् ॥ ३४ ॥ यश्चानुलेपनं कुर्याद्भानोरायतने नरः ॥ स हेलिलोकमासाद्य मोदते गोगते हरौ ॥ ३५ ॥ मृदा वा मृद्विकारैर्वा वर्णकैर्गोमयेन वा ॥ अनुलेपनकृद्भक्त्या नरो गोपतिमाप्नुयात् ॥ ३६ ॥ उदकाभ्युक्षणं भानोर्यः करोति तथा क्षये ॥ स गच्छति नरः कृष्ण यत्रास्ते गोपतिः सदा॥३७॥पुष्पप्रकरमत्यर्थं सुगंधं भास्करालये ॥ अनुलिप्ते नरो दद्यात्पूषोत्तरगृहं व्रजेत् ॥३८॥ विमानवरमभ्येति सर्वरत्नमयं दिवि ॥ संप्राप्नोति नरो दत्त्वा दीपकं भास्करालये ॥ ३९ ॥ यस्तु संवत्सरं पूर्णं तिलपात्रप्रदो नरः ॥ ध्वजं च भास्करे दद्यात्सममत्र फलं लभेत् ॥ ४० ॥ विधुनोत्यतिवातेन दातुरज्ञानतः कृतम् ॥ पापं दातुर्गृहे भानुर्दिवारात्रौ न संशयः ॥ ४१ ॥ गीत वाद्यादिभिर्देवं य उपास्ते विभावसुम् ॥ गंधर्वनृत्यैर्वाद्यैश्च विमानस्थो निषेव्यते ॥४२॥ जातिस्मरत्वं वृद्धिं च ततस्तु परमां गतिम् ॥ प्राप्नोति हेलेरायतने पुण्याख्यानकथाकरः ॥ ४३ ॥ तस्मात्कुर्यात्प्रयत्नेन पूजयेद्वापि वाचकम् ॥ नान्यत्प्रीतिकरं भानोः पुण्याख्यानादृते क्वचित् ॥ ४४ ॥ एकोऽपि हेलेः सुकृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ॥ दशाश्वमेधी पुनरेति जन्म हेलिप्रणामी न पुनर्भवाय ॥ ४५ ॥ एवं देवेश्वरो[1] भक्त्या येन भानुरुपासितः ॥ स प्राप्नोति गतिं श्लाध्यां यामिच्छति च चेतसा ॥ ४६ ॥ तमाराध्य मया प्राप्तं ब्रह्मत्वं लोकपूजितम् ॥ सौरेर्यथेप्सितं प्राप्तं त्वया तस्मात्पुरानघ ॥४७॥ ब्रह्महत्याभिभूतस्तु गोश्रुताभरणो हरः ॥ तमाराध्य रविं भक्त्या मुक्तोऽसौ ब्रह्महत्यया ॥ ४८ ॥ देवत्वं मनुजैः कैश्चिद्गंधर्वत्वं तथा परैः ॥ विद्याधरत्वमपरैरेवाप्तं हि दिवाकरात् ॥ ४९ ॥ लेखः क्रतुशतेनेशमाराध्यैनं दिवाकरम् ॥ इन्द्रत्वमगमत्तस्मान्नान्यः पूज्यो दिवाकरात् ॥ ५० ॥ देवेभ्योऽप्यतिपूज्यस्तुस्वगुरुर्ब्रह्मचारिणा ॥ तस्मात्स यज्ञपुरुषो विवस्वान्पूज्य एव हि ॥ ५१ ॥ स्त्रियाश्च भर्तारमृते पूज्योऽत्यंतं विभावसुः ॥ भर्तुर्गृहस्थस्य सतः पूज्यो गोपतिरंशुमान् ॥ ५२ ॥ वैश्यानामपि चाराध्यस्तपोभिस्तमनाशनः ॥ ध्येयः परिव्राज

१ शुचि–इ० पा० । २ देवदेवेश्वरः–इ० पा० । ३ पूज्यतमो रवेः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कानां सदा देवो विभावसुः ॥ ९३॥ एवं सर्वाश्रमाणां हि चित्रभानुः परायणम् ॥ सर्वेषां चैव वर्णानां तमाराध्याप्नुयाद्गतिम् ॥ ९४ ॥ · ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सूर्यपूजामहिमवर्णनं नाम त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ छ ॥ ॥ शृणुष्व संयतः काम्यानुपवासांस्तथापरान् ॥ तांस्तानाश्रित्य यान्कामान्कुरुतेप्सितमानसः ॥ १ ॥ सप्तम्यां शुक्लपक्षे तु फाल्गुनस्येह मानवः ॥ जपन्हेलीति देवस्य नाम भक्त्या पुनःपुनः ॥ २ ॥ देवार्चने चाष्टशतं कृत्वैतच्च जपेच्छुचिः ॥ स्नातः प्रस्थान काले तु उत्थाने स्खलिते क्षुते ॥ ३ ॥ पाखंडान्पतितांश्चैव तथैवान्यायशालिनः ॥ नालपेत तथा भानुमर्चयेच्छ्रद्धयान्वितः ॥ इदं चोदाहरे द्धानौ मनः संधाय तत्परः ॥ ४ ॥ हंसहंस कृपालुस्त्वमगतीनां गतिर्भव ॥ संसारार्णवमग्नानां त्राता भव दिवाकर ॥ ५ ॥ एवं प्रसाद्योपवासं कृत्वा नियतमानसः ॥ पूर्वाह्ण एव च सकृत्प्राश्याद्याचमनीयकम् ॥ ६ ॥ स्नात्वार्चयित्वा हंसेति पुनर्नाम प्रकीर्तयेत् ॥ वज्रधारात्रयं चैव क्षिपेत्त्रिर्देवपा दयोः ॥ ७ ॥ चैत्रवैशाखयोश्चैव तद्वज्ज्येष्ठे तु पूजयन् ॥ मर्त्यलोके गतिं श्रेष्ठां कृष्ण प्राप्नोति वै नरः ॥ ८ ॥ उत्क्रांतस्तु व्रजेत्कृष्ण दिव्यं हंसा लयं शुभम् ॥ वृषध्वजप्रसादाद्वै संक्रंदनश्रिया वृतः ॥ ९ ॥ आषाढे श्रावणे चैव मासि भाद्रपदे तथा ॥ तथैवाश्वयुजे चैव अनेन विधिना नरः ॥ ॥ १० ॥ उपोष्य संपूज्य तथा मार्तंडेति च कीर्तयेत् ॥ गोमूत्रप्राशनात्पूतो धनी धनपुरं व्रजेत् ॥ ११ ॥ आराधितस्य जगतामीश्वरस्याव्यया त्मनः ॥ उत्क्रांतिकाले स्मरणं भास्करस्य तथाप्नुयात् ॥१२॥ क्षीरस्य प्राशनं कृष्ण विधिं चैव यथोदितम् ॥ कार्त्तिकादि यथान्यायं कुर्यान्मास चतुष्टयम् ॥ १३ ॥ तेनैव विधिना कृष्ण भास्करेति च कीर्तयेत् ॥ स याति भानुसालोक्यं भास्करं स्मरति क्षये ॥ १४ ॥ प्रतिमासं द्विजातिभ्यो दद्याद्दानं यथेप्सितम् ॥ चातुर्मास्ये तु संपूर्णे कृत्वा पुस्तकवाचनम् ॥१५॥ कथां तु भास्करस्येह संगीतकमथापि वा ॥ धर्मश्रवणमभीष्टं सदा धर्मध्वजस्य तु ॥ १६ ॥ वाचकं पूजयित्वा तु तस्मात्कार्यं विपश्चिता ॥ श्राद्धमन्येन पक्वेन वाचकेन द्विजेन तु ॥ दिव्येन च यथायुक्तमभीष्टं भास्करस्य हि ॥ १७ ॥ एवमेव गतिं श्रेष्ठां देवानामनुकीर्तनात् ॥ प्राप्नुयात्त्रिविधां कृष्ण त्रिलोकाख्यां नरः सदा ॥ १८ ॥ कथितं पारणं यत्ते प्रथमं गोधराधनम् ॥ आधिपत्यं तथा भोगांस्ततः प्राप्नोति मानुषः ॥ १९ ॥ द्वितीयेन तथा भोगान्गोपतेः प्राप्नुयान्नरः ॥ सूर्यलोकं तृतीयेन पारणे न तथाप्नुयात्॥२०॥ एवमेतत्समाख्यातं गतिप्रापकमुत्तमम्॥विधानं देवशार्दूल यदुक्तं सप्तमीव्रते ॥ २१ ॥ यः श्वेतां सप्तमीं कुर्यात्सुगतिं श्रद्धया नरः ॥ तथा भक्त्या च वै नारी प्राप्नोति त्रिविधां गतिम् ॥२२॥ एषा धन्या पापहरा तिथिर्नित्यमुपासिता ॥ आराधनायःयस्तेषां यदा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भानोर्धराधर ॥ २३ ॥ पठतां शृण्वतां चापि सर्वपापभयापहा ॥ तथा धन्या च पुण्या च त्रिवर्गादीष्टदा सदा ॥ २४ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे त्रिवर्गसप्तमीव्रतनिरूपणं नाम चतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ फाल्गुनामलपक्षस्य सप्तम्यां क्ष्माधराव्यय ॥ उपोषितो नरो नारी समभ्यर्च्य तमोऽपहम् ॥१ ॥ सूर्यनाम जपन्भक्त्या मितभोक्ता जितेंद्रियः ॥ उत्तिष्ठन्प्रस्वपंश्चैव सूर्यमेवाभिकीर्तयेत् ॥ २ ॥ ततोऽन्यदिवसे प्राप्ते त्वष्टम्यां प्रयतो रविम् ॥ स्नात्वा देवं समभ्यर्च्य दद्याद्विप्राय दक्षिणाम् ॥ ३ ॥ रविमुद्दिश्य वै चाग्नौ घृतहोमकृतक्रियः ॥ प्रणिपत्य जगन्नाथमिति वाणीमुदीरयेत् ॥ ४ ॥ यमाराध्य पुरा देवी सावित्री कामनाय वै ॥ स मे ददातु देवेशः सर्वान्कामान्विभावसुः ॥५॥ समभ्यर्च्य इति प्राप्तान्कृत्स्नान्कामान्यथेप्सितान् ॥ स ददात्यखिलान्कामान्प्रसन्नो मे दिवस्पतिः ॥ ६ ॥ भ्रष्टराज्यश्च देवेन्द्रो यमभ्यर्च्य दिवस्पतिः ॥ कामान्त्संप्राप्तवान्राज्यं स मे कामं प्रयच्छतु ॥ ७ ॥ एवमभ्यर्च्य पूजां च निष्पाद्येह विवस्वतः ॥ भुञ्जीत प्रयतः सम्यग्घविष्यं पतगध्वज ॥८॥ फाल्गुने चैत्रवैशाखज्येष्ठे यस्य समापनम् ॥ चतुर्भिः पारणं मासैरेभिर्निष्पादितं भवेत् ॥ ९ ॥ करवीरैश्चतुरो मासान्भक्त्या संपूजयेद्रविम् ॥ कृष्णागुरुं दहेद्धूपं प्राश्यं गोशृंगजं जलम् ॥ १० ॥ नैवेद्यं खंडवेष्टांस्तु दद्याद्विप्रेभ्य एव च ॥ ततश्च श्रूयतामन्या ह्याषाढादिषु या क्रिया ॥११॥ जातीपुष्पाणि शस्तानि धूपो गोग्गुल उच्यते ॥ कूपोदकं समश्नीयान्नैवेद्यं पायसं मतम् ॥ १२ ॥ स्वयं तदेव चाश्नीयाच्छेषं पूर्ववदाचरेत् ॥ कार्त्तिकादिषु मासेषु गोमूत्रं कायशोधनम् ॥१३॥ महांगो धूप उद्दिष्टः पूजा रक्तोत्पलैस्तथा ॥ कांसारं चात्र नैवेद्यं निवेद्यं भास्कराय वै ॥ १४ ॥ प्रतिमासं च विप्राय दातव्या दक्षिणा तथा ॥ कर्पूरं चंदनं मुस्तामगरुं तगरं तथा ॥ १५ ॥ ऊषणं शर्करा कृष्ण सुगंधं सिह्लकं तथा ॥ महांगोऽयं स्मृतो धूपः प्रियो देवस्य सर्वदा ॥ १६ ॥ प्रीणनं चेष्टया भानोः पारणेपारणे गते ॥ यथाशक्ति यथायोगं वित्तशाठ्यं विवर्जयेत् ॥ १७ ॥ सद्भावेनैव सप्ताश्वः पूजितः प्रीयते यतः ॥ पारणांते यथाशक्त्या पूजितः स्नापितो रविः ॥ १८ ॥ प्रीणितश्चेप्सितान्कामान्दद्यादव्याहतं हरे ॥ एषा पुण्या पापहरा सप्तमी सर्वकामदा ॥ १९ ॥ यथाभिलषितान्कामाँल्लभते गरुडध्वज ॥ उपोष्यैतां त्रिभुवनं प्राप्तमिंद्रेण वै पुरा ॥ २० ॥ पुत्रं प्रापच्च सावित्री पुत्रांस्तु अदितिस्तथा ॥ यदवः कामनां प्राप्ता धौम्यो वेदमवाप्तवान् ॥ २१ ॥ त्वयाप्ता भार्गवी कृष्ण शंकरः शुद्धिमाप्तवान् ॥ पितामहत्वं प्राप्तोऽहं तत्प्रसादाज्जनार्दन ॥ २२ ॥ अन्यैश्चाधिगताः कामास्तमाराध्य न संशयः ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैर्योषिद्भिरेव च ॥ २३ ॥ यंयं काममभिध्यायेत्तंतं प्राप्नोत्युपोषणात् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जनः प्राप्नोत्यसंदिग्धं भानोराराधनाद्यतः ॥ २४ ॥ अपुत्रः पुत्रमाप्नोति गोगतश्चापि मोदते ॥ रोगाभिभूत आरोग्यं कन्या विंदति सत्पतिम् ॥ २५ ॥ समागत्य प्रवसित उपोष्यैतदवाप्नुयात् ॥ सर्वान्कामानवाप्नोति गोगतश्चापि मोदते ॥ २६ ॥ नापुत्रो नाधनो वापि न वानिष्टो न निर्घृणः ॥ उपोष्यैतद्व्रतं मर्त्यः स्त्रीजनो वपि जायते ॥ २७ ॥ गोहेलिलोकमासाद्य मोदते शाश्वतीः समाः ॥ गौरिकं यान मारूढस्तेजसा रविसन्निभः ॥ २८ ॥ पुनरेत्य महीं कृष्ण घनाघनसमो नृपः ॥ क्ष्मातले स्यान्न संदेहः प्रसादाद्गोपतेर्नरः ॥ २९ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे कामदासप्तमीव्रतनिरूपणं नाम पंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ॥ छ ॥ ॥ ॥ ॥ ब्रह्मोवाच ॥ ॥ पुनश्चैतन्महाभाग श्रूयतां गदतो मम ॥ प्रोक्तं खगेन देवानां तिथिमाहात्म्यमुत्तमम् ॥ १ ॥ ॥ विष्णुरुवाच ॥ ॥ विजयातिजया चैव जयंती च महातिथिः ॥ त्वत्तः श्रुता सुरश्रेष्ठ ब्रूहि मे पापनाशिनीम् ॥ २ ॥ तथोत्तरायणं ब्रूहि शस्तं यद्भास्करार्चने ॥ यत्र संपूजितो भानुर्भवेत्सर्वाघनाशनः ॥ तन्मे कथय यत्नेन भक्त्या पृष्टोऽक्षयं फलम् ॥ ३ ॥ ॥ ब्रह्मोवाच ॥ ॥ शुक्लपक्षे तु सप्तम्यां यदर्क्षं तु रवेर्भवेत् ॥ तदा स्यात्सा महापुण्या सप्तमी पापनाशिनी ॥ ४ ॥ तस्यां संपूज्य देवेशं चित्रभानुं जगद्गुरुम् ॥ सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ॥ ५ ॥ यश्चोपवासं कुरुते तस्यां नियतमानसः ॥ सर्वपापविमुक्तात्मा सूर्यलोके महीयते ॥ ६ ॥ दानं यद्दीयते किंचित्तमुद्दिश्य दिवा करम् ॥ होमो वा क्रियते तत्र तत्सर्वं चाक्षयं भवेत् ॥ ७ ॥ एक ऋग्वेदः पुरतो जप्तः श्रद्धापरेण तु ॥ ऋग्वेदस्य समस्तस्य यच्छते सत्फलं ध्रुवम् ॥ ॥ ८ ॥ सामवेदफलं साम यजुर्वेदफलं यजुः ॥ अथर्वा अथर्वांगिरसो निखिलं यच्छते रविः ॥ ९ ॥ तारका इव राजंते द्योतमाना दिवानिशम् ॥ समभ्यर्च्य च सप्तम्यां देवदेवं दिवाकरम् ॥ १० ॥ यत्र पापमशेषं वै नाशयत्यत्र भास्करः ॥ कर्तव्या सप्तमी कृष्ण तेनोक्ता पापनाशिनी ॥ ॥ ११ ॥ अस्यां समभ्यर्च्य रविं याति सौरपुरं नरः ॥ विमानवरमारुह्य कर्पूरोद्भवमुत्तमम् ॥ १२ ॥ तेजसा कविसंकाशः प्रभया सूर्यसन्निभः ॥ कांत्यात्रेयसमः कृष्ण शौर्ये हरिसमः सदा ॥ १३ ॥ मोदते तत्र सुचिरं वृंदारकगणैः सह ॥ पुनरेत्य भुवं कृष्ण भवेद्वै क्ष्माधिपाधिपः ॥ १४ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे पापनाशिनीव्रतविधिवर्णनं नाम षडधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ छ ॥ ॥ ॥ ॥ ब्रह्मोवाच ॥ ॥ तथान्यदपि धर्मज्ञ शृणुष्व गदतो मम ॥ पदद्वयं जगद्धातुर्देवदेवस्य गोपतेः ॥ १ ॥ यदेकपादपीठं हि तत्र न्यस्तं पद द्वयम् ॥ स्वयमंशुमता कृष्ण लोकानां हितकाम्यया ॥ २ ॥ वामनस्य पदं कृष्ण ज्ञेयं वै उत्तरायणम् ॥ देवाद्यैः सकलैर्वंद्यं दक्षिणं दक्षिणाय

१७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नम् ॥३॥ अहं त्वं च सदा कृष्ण दक्षिणं पादमर्चतः ॥ श्रद्धान्वितौ भास्करस्य हरीशौ वाममर्चतः ॥४॥ तस्मिन्यः प्रत्यहं सम्यग्देवदेवस्य मानवः ॥ करोत्याराधनं तस्य तुष्टः स्याद्भानुमान्सदा ॥ ५ ॥ ॥ विष्णुरुवाच ॥ ॥ कथमाराधनं तस्य देवदेवस्य गोपतेः ॥ क्रियते देवशार्दूल तत्समाख्यातुमर्हसि ॥६॥ ॥ ब्रह्मोवाच ॥ ॥ उत्तरे त्वयने कृष्ण स्नातो नियतमानसः ॥ घृतक्षीरादिभिर्देवं स्नापयेत्तिमिरापहम् ॥७॥ चारुवस्त्रोपहारैश्च पुष्पधूपानुलेपनैः ॥ समभ्यर्च्य ततः सम्यग्ब्राह्मणानां च तर्पणैः ॥८॥ पदद्वयं व्रतं यस्य गृह्णीयाद्भानुतत्परः ॥ वन्देत्स्नातश्चित्रभानुं ततश्च गरुडध्वज॥९॥ भुक्त्वान्नं चित्रभानुं तु चित्रभानुं व्रजंस्तथा ॥ स्वपन्विबुध्यन्प्रणमन्होमं कुर्वंस्तथार्चयन् ॥ १० ॥ चित्रभानोरनुदिनं करिष्ये नामकीर्तनम् ॥ यावदद्य दिनात्प्राप्तं क्रमशो दक्षिणायनम् ॥११॥ चलिते हुंकृते चैव वेदारंभेपि वा सदा ॥ तावद्वक्ष्ये चित्रभानुं यावदेवोत्तरायणम् ॥१२॥ यावज्जीवं च यत्किंचिज्ज्ञानतोऽज्ञानतोऽपि वा॥करिष्येऽहं तथा चैव कीर्तयिष्यामि तं प्रभुम्॥१३॥यदानृतं किंचिद्वक्ष्ये तदा वक्ष्यामि तद्वचः॥अज्ञानादथ वा ज्ञानात्कीर्तयिष्यामि तं प्रभुम् ॥१४॥ षण्मासमेकमनसा चित्रभानुमयं परम् ॥ तं स्मरन्मरणे याति यां गतिं सास्तु मे गतिः ॥१५॥ षण्मासाभ्यंतरे मृत्युर्यदि तस्मिन्भवेन्मम ॥ तन्मया भास्करस्येह स्वयमात्मा निवेदितः ॥ १६ ॥ परमात्ममयं ब्रह्म चित्रभानुमयं परम् ॥ यमंते संस्मरिष्यामि स मे भानुः परा गतिः॥१७॥ यदि प्रातस्तथा सायं मध्याह्ने वा जपाम्यहम् ॥ षण्मासाभ्यंतरे न्यासः कृतो व्रतमयो मया ॥ १८ ॥ तथा कुरु जगन्नाथ स्वर्गलोकपरायणः ॥ चित्रभानो यथा शक्त्या भवान्भवति मे गतिः॥१९॥एवमुच्चार्य षण्मासं चित्रभानुमयं व्रतम् ॥ तावन्निष्पादयेद्यावत्संपूर्णं दक्षिणायनम् ॥२०॥ ततश्च प्रीणनं कुर्याद्यथाशक्त्या विभावसोः ॥ भोजयेद्ब्राह्मणान्दिव्यान्भौमांश्चापि सदक्षिणान् ॥ २१ ॥ पुण्याख्यानकथां कुर्यान्मार्तंडस्य तथाग्रतः ॥ पूजयेद्वाचकं भक्त्या यथाशक्त्या च लेखकम्॥२२॥एवं व्रतमिदं कृष्ण यो धारयति मानवः॥ इहैव देवशार्दूल मुच्यते सर्वकिल्बिषैः ॥ २३ ॥ षण्मासाभ्यंतरे चास्य मरणं यदि जायते ॥ प्राप्नोत्यनशनस्योक्तं यत्फलं तदसंशयम् ॥ २४॥ पदद्वयं च देवस्य सम्यक्त्वेन सदार्चितम् ॥ भवत्येतज्जगौ भानुः पुरा चंद्राय पृच्छते ॥२५॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे भानुपादद्वयव्रतवर्णनं नाम सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ॥छ॥ ॥ ब्रह्मोवाच ॥ ॥ कृष्णपक्षे तु माघस्य सर्वाप्तिं सप्तमीं शृणु ॥ यामुपोष्य समाप्नोति सर्वान्कामांस्तथा परान् ॥ १ ॥ पाखंडादिभिरालापं न कुर्याद्भानुतत्परः ॥ पूजयेत्प्रणतो देवमेकाग्रमनसा शुभम् ॥ २ ॥

१ धराधरसमन्वितः–इ० पा० । २ शुक्लपक्षे–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माघाद्यैः पारणं मासैः षड्भिः सांक्रान्तिकं स्मृतम्॥मार्तंडः प्रथमं नाम द्वितीयं कः प्रकीर्तितम् ॥३॥ तृतीयं चित्रभानुश्च विभावसुरतः परम् ॥ भगेति पंचमं ज्ञेयं षष्ठं हंसः स उच्यते ॥ ४ ॥ पूर्णेषु षट्सु मासेषु पंचगव्यमुदाहृतम् ॥ स्नाने च प्राशने चैव प्रशस्तं पापनाशनम् ॥ ५ ॥ प्रणामं देवदेवस्य कृत्वा पूजां यथाविधि ॥ विप्राय दक्षिणां दद्याच्छ्रद्दधानश्च शक्तितः ॥ ६ ॥ पारणांते च देवस्य प्रीणनं भक्तिपूर्वकम् ॥ कुर्वीत भक्त्या विधिवद्द्विभक्त्या तु गृह्यते ॥ ७ ॥ नक्तभोजी तथा विष्णो तैलक्षारविवर्जितः ॥ कृष्ण जागरणं रात्रौ सप्तम्यामथ वा दिने ॥ ८ ॥ एतामुषित्वा धर्मज्ञो हंसप्रीणनतत्परः ॥ सर्वान्कामानवाप्नोति सर्वपापैः प्रमुच्यते ॥ ९ ॥ यतः सर्वमवाप्नोति यद्यदिच्छति चेतसा ॥ अतो लोकेषु विख्याता सर्वार्थावाप्तिसप्तमी ॥ १० ॥ कृताभिलषिता ह्येषा प्रारब्धा धर्मतत्परैः ॥ पूरयत्यखिलान्कामान्संश्रुता च दिनेदिने ॥ ११ ॥ तमाराधयस्व रविं तथाथ गरुडध्वज ॥ यथाराधितवान्भानुं भगणाधिपतिः पुरा ॥ १२ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सर्वार्थावाप्तिसप्तमीवर्णनं नामाष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ मार्तंडसप्तमीं कृष्ण यथान्यां[1] वच्मि तेनघ ॥ शृणुष्वैकमना वीर गदतो मे शुभप्रदाम् ॥ १ ॥ यस्याः सम्यगनुष्ठानात्प्राप्नोत्यभिमतं फलम् ॥ पौषे मासे सिते पक्षे सप्तम्यां समुपोषितः ॥ २ ॥ सम्यक्संपूज्य मार्तंडं मार्तंड इति वै जपेत् ॥ पूजयेत्कुतपं भक्त्या श्रद्धया परयान्वितः ॥ ३ ॥ धूपपुष्पोपहाराद्यै रुपवासैः समाहितः ॥ मार्तंडेति जपन्नाम पुनस्तद्गतमानसः ॥ ४ ॥ विप्राय दक्षिणां दद्याद्यथाशक्त्या खगध्वज ॥ स्वपन्विबोधन्स्खलितो मार्तंडेति च कीर्तयेत् ॥ ५ ॥ पाषंडादिविकर्मस्थैरालापं च विवर्जयेत् ॥ गोमूत्रं गोपयो वापि दधि क्षीरमथापि वा ॥ ६ ॥ गोदेहतः समुद्भूतं प्राश्नीयादात्मशुद्धये ॥ द्वितीयेऽह्नि पुनः स्नातस्तथैवाभ्यर्चनं रवेः ॥ ७ ॥ तेनैव नाम्ना संभूय दत्त्वा विप्राय दक्षिणाम् ॥ ततो भुञ्जीत गोदोहसंभूतेन समन्वितम् ॥ ८ ॥ एवमेवाखिलान्मासानुपोष्य प्रयतः शुचिः ॥ दद्याद्गवादिकं विप्रान्प्रतिमासं स्वशक्तितः ॥ ९ ॥ धारिता चेत्पुनर्वर्षे यथाशक्त्या गवादिकम् ॥ दत्त्वा परं रवेर्भूयः शृणु यत्फलमश्नुते ॥ १० ॥ स्वर्णशृंगीं च पंचम्यां षष्ठ्यां च वृषभं नरः ॥ प्रतिमासं द्विजातिभ्यो यद्दत्त्वा फलमश्नुते ॥ ११ ॥ तत्प्राप्नोत्यखिलं सम्यग्व्रतमेतदुपोषितः ॥ तं च लोकमवाप्नोति मार्तंडो यत्र तिष्ठति ॥ १२ ॥ शांडिलेयसमः कृष्ण तेजसा नात्र संशयः ॥ मार्तंडसप्तमीमेतामुपोष्यैते गणा दिवि ॥ १३ ॥ विद्योतमाना दृश्यंते लोकैरद्यापि भूधर ॥

१ यथान्यायं च वच्मि ते—इ० पा० । २ विद्वान्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात्त्वमादिदेवेशं ग्रहेशं भास्करं रविम् ॥ अनयार्चय गोविंद गोपतिं गोलसन्निभम् ॥ १४ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे मार्तंडसप्तमीवर्णनं नाम नवाधिकशततमोऽध्यायः ॥ १०९ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ शुक्लपक्षे तु सप्तम्यां मासि भाद्रपदेऽच्युत ॥ प्रणम्य शिरसादित्यं पूजयेत्सप्तवाहनम् ॥ १ ॥ पुष्पधूपादिभिर्वीर कृतपानां च तर्पणैः ॥ पाषंडादिभिरालापमकुर्वन्नियतात्मवान् ॥ २ ॥ विप्राय दक्षिणां दत्त्वा नक्तं भुञ्जीत वाग्यतः ॥ तिष्ठन्व्रजन्प्रस्थितश्च क्षुतप्रस्खलितादिषु ॥ ३ ॥ आदित्यनामस्मरणं कुर्वन्नुच्चारणं तथा ॥ अनेनैव विधानेन मासान्द्वादश वै क्रमात् ॥ ४ ॥ उपोष्य पारणे पूर्णे समभ्यर्च्य जगद्गुरुम् ॥ पुण्येन श्रावणेनेह प्रीणयन्पुष्टिमश्नुते ॥ ५ ॥ अनंतं श्रावणेनेह यतः फलमुदाहृतम् ॥ तेनादित्यं समभ्यर्च्य तदेव लभते फलम् ॥ ६ ॥ एवं यः पुरुषः कुर्यादादित्याराधनं शुचिः ॥ प्राप्येह विपुलं भोगं धर्ममर्थं तथाव्ययम् ॥ ७ ॥ अमुत्र लोकमायाति दिव्ये खे गीतसंयुते ॥ नारी वा स्वर्गमभ्येत्य ह्यनंतं फलमश्नुते ॥ ८ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पेऽनंतरसप्तमीव्रतवर्णनं नाम दशाधिकशततमोऽध्यायः ॥ ११० ॥ ॥छ॥ ॥ ॥ ब्रह्मोवाच ॥ ॥ श्रावणे मासि देवाग्र्यं सप्तम्यां सप्तवाहनम् ॥ शुक्लपक्षे समभ्यर्च्य पुष्पधूपादिभिः शुचिः ॥ १ ॥ पाखण्डादिभिरालापमकुर्वन्नियतात्मवान् ॥ विप्राय दक्षिणां दत्त्वा नक्तं भुञ्जीत वाग्यतः ॥ २ ॥ अभ्यंगं देवदेवस्य वर्षे वर्षे नियोजयेत् ॥ सप्तम्यामन्नमेवाग्र्यं शुभं शुक्लं नवं तथा ॥ ३ ॥ विभवेषु तथान्येषु वादित्राण्येव वै विदुः ॥ तथा देवस्य मासेऽस्मिन्नभ्यंगः परिगीयते ॥ ४ ॥ यस्तु चाराधयेद्भक्त्या भास्करस्य नरोऽच्युत ॥ अभ्यंगं विधिवच्छक्त्या कृत्वा ब्राह्मणभोजनम् ॥ ५ ॥ शंखतूर्यनिनादैश्च ब्रह्मघोषैश्च पुष्कलैः ॥ स दिव्यं यानमारूढो लोकमायाति हेलिनः ॥ ६ ॥ अनेनैव विधानेन मासान्द्वादश वै क्रमात् ॥ उपोष्य पारणे पूर्णे दद्याद्विप्राय दक्षिणाम् ॥ ७ ॥ व्रतं यः पुरुषः कुर्यादादित्याराधनं शुचिः ॥ स गच्छेत्परमं लोकं दिव्यं वै वनमालिनः ॥ ८ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पेऽभ्यंगसप्तमीवर्णनं नामैकादशोत्तरशततमोऽध्यायः ॥ १११ ॥ ॥ छ ॥ ॥ ॥ ॥ ब्रह्मोवाच ॥ ॥ एवं कृष्ण सदा भानुर्नरैर्भक्त्या यथाविधि ॥ फलं ददात्यसुलभं सलिलेनापि पूजितः ॥ १ ॥ न भानुर्जीवदानेन न पुष्पैर्न फलैस्तथा ॥ आराध्यते सुशुद्धेन हृदयेनैव केवलम् ॥ २ ॥ रागादपेतं हृदयं वाग्दुष्टा नानृतादिभिः ॥ हिंसाविरहितं कर्म भास्कराराधनत्रयम् ॥ ३ ॥ रागादिदूषिते चित्ते नास्पन्दी तिमिरापहः ॥ बध्नाति तं नरं हंसः कदाचित्कर्दमांभसि ॥ ४ ॥ तमसो नाशनायालं चेन्दो



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लेखा ह्यनारतम् ॥ हिंसादिदूपितं कर्म केशवाराधने कुतः ॥५॥ जनश्चित्ताप्रसादाद्वै न चाप तिमिरापहम् ॥ तस्मात्सत्यस्वभावेन सत्यवाक्येन चाच्युत ॥ ६ ॥ अहिंसकेन चादित्यो निसर्गादेव तोपितः ॥ सर्वस्वमपि देवाय यो दद्यात्कुटिलाशयः ॥ ७ ॥ सनैवाराधयेदेवं देवदेवं दिवाकरम् ॥ रागादपेतं हृदयं कुरु त्वं भास्करार्पणम् ॥ ततः प्रापयसि दुष्प्राप्यमयत्नेनैव भास्करम् ॥ ८ ॥ ॥ विष्णुरुवाच ॥ ॥ देवेशः कथितः सम्यक्काम्योऽयं भास्करो मयि ॥ आराधनविधिं सर्वं भूयः पृच्छामि तं वद ॥ ९ ॥ कुले जन्म तथारोग्यं धनवृद्धिश्च दुर्लभा ॥ त्रितयं प्राप्यते येन तन्मे वद जगत्पते ॥ १० ॥ ॥ ब्रह्मोवाच ॥ ॥ मासे तु माघे सितसप्तमेऽह्नि हस्तर्क्षयोगे जगतः प्रसूतिम् ॥ संपूज्य भानुं विधिनोपवासी सुगन्धधूपान्नवरोपहारैः ॥ ११ ॥ गृही तु पुष्पैः प्रतिपाद्य पूजां दानादियुक्तं व्रतमब्दमेकम् ॥ दद्याच्च दानं मुनिपुङ्गवेभ्य स्तत्कथ्यमानं विनिबोध धीर ॥ १२ ॥ वस्त्रं तिलान्व्रीहियवान्हिरण्यं यवान्नमंभः करकासुपानहम् ॥ छत्रोपपन्नं गुडफेणिताढ्यं दद्यात्क्रमा द्वस्तु अनुक्रमेण ॥ १३ ॥ यद्वेप वर्षे विधिनोदितेन यस्यां तिथौ लोकगुरुं प्रपूज्य ॥ अश्मंतनान्यात्मविशुद्धिहेतोः संप्राशनानीह निबोध तानि ॥ १४ ॥ गोमूत्रमंभश्च रसं नु शाकं दूर्वा दधिव्रीहितिलान्यवांश्च ॥ सूर्यांशुतप्तं जलमंबुजाक्ष क्षीरं च मासैः क्रमशः प्रयुज्यः ॥ १५ ॥ कुले प्रधाने धनधान्यपूर्णे पद्मावृते ह्यस्तसमस्तदुःखे ॥ प्राप्नोति जन्माऽविकलेन्द्रियश्च भवत्यरोगो मतिमान्सुखी च ॥ १६ ॥ तस्मात्त्व मप्येतदमोघवीर्यं दिवाकराराधनमप्रमत्तः ॥ कुरु प्रभावं भगवन्तमीशमाराध्य कामानखिलानुपेहि ॥ १७ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे तृतीयपदव्रतवर्णनं नाम द्वादशोत्तरशततमोऽध्यायः ॥ ११२ ॥ ॥ छ ॥ ॥ विष्णुरुवाच ॥ ॥ सुरज्येष्ठ पुनर्ब्रूहि यत्पृच्छाम्यहमादितः ॥ यत्फलं समवाप्नोति कारयित्वा रवेर्गृहम् ॥ १ ॥ देवार्चां कारयित्वा तु यत्पुण्यं पुरुषोऽश्नुते ॥ पूजयित्वा च विधि वदनुलिप्य च यत्फलम् ॥ २ ॥ कानि माल्यानि शस्तानि कानि नार्हति भास्करः ॥ के धूपा भानुदयिताः के वर्ज्याश्च जगत्पतेः ॥ ३ ॥ उपचारफलं किं स्यात्किं फलं गीतवादिते ॥ घृतक्षीरादिना यच्च स्नापिते भास्करे फलम् ॥ ४ ॥ यथोपलेपनादौ च फलमभ्युक्षितेन तु ॥ दिवाकरगृहे तात तदशेषं वदस्व मे ॥ ५ ॥ ॥ ब्रह्मोवाच ॥ ॥ साधु वत्स यदेतत्त्वं मार्तण्डस्येह पृच्छसि ॥ शुश्रूषणे विधिं पुण्यं तदि हैकमनाः शृणु ॥ ६ ॥ यस्तु देवालयं भानोर्दार्वं शैलमथापि वा ॥ कारयेन्मृन्मयं चापि तस्य पुण्यफलं शृणु ॥ ७ ॥ अहन्यहनि यज्ञेन यजतो

१ पठेच पापम्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यन्महत्फलम् ॥ प्राप्नोति तत्फलं भानोर्यः कारयति मन्दिरम् ॥ ८ ॥ कुलानां शतमागामि समतीतं कुलं शतम् ॥ कारयेद्भगवद्धाम स नयेदर्कलोकताम् ॥ ९ ॥ सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ॥ भानोरालयविन्यासप्रारंभादेव नश्यति ॥ १० ॥ सप्तलोकमयो भानुस्तस्य यः कुरुते गृहम् ॥ प्रतिष्ठां समवाप्नोति स नरः साप्तलौकिकीम् ॥ ११ ॥ प्रशस्तदेशभूभागे प्रशस्तं भवनं रवेः ॥ कारयेदक्षयाँल्लोकान्स नरः प्रतिपद्यते ॥ १२ ॥ इष्टकाचयविन्यासो यावद्वर्षाणि तिष्ठति ॥ तावद्वर्षसहस्राणि तत्कर्तुर्दिवि संस्थितिः ॥ १३ ॥ प्रतिमां लक्षणवतीं यः कारयति मानवः ॥ दिवाकरस्य तल्लोकमक्षयं प्रतिपद्यते ॥ १४ ॥ षष्टिवर्षसहस्राणां सहस्राणि स मोदते ॥ लोके सुमनसां वीर प्रत्येकं मधुसूदन ॥ १५ ॥ प्रतिष्ठाप्य रवेरर्चां सुप्रशस्ते निवेशने ॥ पुरुषः कृतकृत्योस्ति न दोषफलमश्नुते ॥ १६ ॥ ये भविष्यंति येऽतीता आकल्पं पुरुषाः कुले ॥ तांस्तारयति संस्थाप्य देवस्य प्रतिमां रवेः ॥ १७ ॥ अनुशिष्टाः किल पुरा यमेन यमकिंकराः ॥ पाशदंडकराः कृष्ण प्रजासंयमनोद्यताः ॥ १८ ॥ ॥ यम उवाच ॥ ॥ विहरंतु यथान्यायं नियोगो मेऽनुपाल्यताम् ॥ नाज्ञाभंगं करिष्यंति भवतां जंतवः क्वचित् ॥ ॥ १९ ॥ केवलं ये जगन्मूलं विवस्वंतमुपाश्रिताः ॥ भवद्भिः परिहर्तव्यास्तेषां नैवेह संस्थितिः ॥ २० ॥ ये तु वैवस्वता लोके तच्चित्तास्तत्परायणाः ॥ पूजयंति सदा भानुं ते च त्याज्याः सुदूरतः ॥ २१ ॥ तिष्ठंश्च प्रस्वपन्गच्छन्नुत्तिष्ठन्स्खलिते क्षुते ॥ संकीर्तयति देवं यः स नस्त्याज्यः सुदूरतः ॥ २२ ॥ नित्यनैमित्तिकैर्देवं ये यजंति तु भास्करम् ॥ न चालोक्या भवद्भिस्ते तद्ध्यानं हंति वो गतिम् ॥ २३ ॥ ये पुष्पधूपवासोभिर्भूषणैश्चापि वल्लभैः ॥ अर्चयंति न ते ग्राह्या मत्पितुस्ते परिग्रहाः ॥ २४ ॥ उपलेपनकर्तारः कर्तारो मार्जनस्य ये ॥ अर्कालये परित्याज्यं तेषां त्रिपुरुषं कुलम् ॥ २५ ॥ येन वायतनं भानोः कारितं तत्कुलोद्भवः ॥ पुमान्स नावलोक्यो वै भवद्भिर्दुष्टचक्षुषा ॥ २६ ॥ येनार्चा भगवद्भक्त्या मत्पितुः कारिता शुभा ॥ नराणां तत्कुलं वीराः सदा त्याज्यं सुदूरतः ॥ २७ ॥ भवतां भ्रमतां यत्र भानुसंश्रयमुद्रया ॥ न चाज्ञाभंगकृत्कश्चिद्भविष्यति नरः क्वचित् ॥ २८ ॥ इत्युक्ताः किंकरास्तेन यमेन सुमहात्मना ॥ अनाश्रित्य वचः कृष्ण सत्राजितमथो गताः ॥ २९ ॥ तस्य ते तेजसा सर्वे भानोर्भक्तस्य सुव्रत ॥ मोहिताः पतिता भूमौ यथा च विहगा नगात् ॥ ३० ॥ एतां महाफलां योर्चां भानोः कारयते नरः॥ तवाख्यानं महाबाहो गृहं कारयितुश्च यत् ॥ ३१ ॥ यज्ञा नराणां पापौघनाशकाः सर्वकामदाः ॥ तथैवेष्टो जगद्धातुः सर्वयज्ञमयो

१ क्षयम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रविः ॥ ३२ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे आदित्यालयवन्दनमार्जनादिवर्णनं नाम त्रयोदशोत्तरशततमो ऽध्यायः ॥ ११३ ॥छ॥ ॥ ब्रह्मोवाच ॥ ॥ स्थापितां प्रतिमां भानोः सम्यक्संपूज्य मानवः ॥ यंयं प्रार्थयते कामं तंतं प्राप्नोत्यसंशयम् ॥१॥ यः स्नापयति देवस्य घृतेन प्रतिमां रवेः ॥ प्रस्थेप्रस्थे द्विजाग्र्याणां स ददाति गवां शतम् ॥ २ ॥ गवां शतस्य विप्रेभ्यो यद्दत्तस्य भवेत्फलम् ॥ घृतप्रस्थेन तद्भानोर्भवेत्स्नातकयोगिनाम् ॥ ३ ॥ भूरिद्युम्नेन संप्राप्ता सप्तद्वीपा वसुंधरा ॥ घटोदकेन मार्तंडप्रतिमा स्नापिता किल ॥ ४ ॥ प्रतिमामसिताष्टम्यां घृतेन जगतीपतेः ॥ स्नापयित्वा समस्तेभ्यः पापेभ्यः कृष्ण मुच्यते ॥ ५ ॥ सप्तम्यामथ षष्ठ्यां वा गव्येन हविषा रवेः ॥ स्नपनं तु भवेच्छ्रेष्ठं महापातकनाशनम् ॥ ६ ॥ ज्ञानतोऽज्ञानतो वापि यत्पापं कुरुते नरः ॥ तत्क्षालयति संध्यायां घृतेन स्नपनं रवेः ॥ ७ ॥ सर्वं यज्ञमयो भानुर्हव्यानां परमं घृतम् ॥ तयोरशेषपापानां क्षालकः संगमो भवेत् ॥ ८ ॥ येषु क्षीरवहा नद्यो ह्रदाः पायसकर्दमाः ॥ मोदते तेषु लोकेषु क्षीरस्नानकरो रवेः ॥ ९ ॥ आह्लादं निर्वृतिस्थानमारोग्यं चारुरूपताम् ॥ सप्तजन्मान्यवाप्नोति क्षीरस्नानपरो रवेः ॥ १० ॥ दध्यादीनां विकाराणां क्षीरतः संभवो यथा ॥ यथा च विमलं क्षीरं यथा निर्वृतिकारकम् ॥ तथा च निर्मलं ज्ञानं भवत्यपि न संशयः ॥ ११ ॥ ग्रहानुकूलतां पुष्टिं प्रियत्वमखिले जने ॥ करोति भगवान्भानुः क्षीरस्नपनतोषितः ॥ १२ ॥ सर्वस्य स्निग्धतामेति दृष्टमात्रे प्रसीदति ॥ घृतक्षीरेण देवेशे स्नापिते तिमिरापहे ॥ १३ ॥ ७॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे आदित्यस्नापनयोगवर्णनं नाम चतुर्दशोत्तरशततमोऽध्यायः ॥ ११४ ॥ ॥ ब्रह्मोवाच ॥ ॥ प्रशंसंति महात्मानः संवादं भास्कराश्रयम् ॥ गौतम्या सह कौशल्या सुमनायां सुरालये ॥१॥ स्वर्गेऽतिशोभनां दृष्ट्वा कौशल्यां पतिना सह ॥ ब्रह्माणी गौतमी नाम पर्यपृच्छत विस्मिता ॥ २ ॥ ॥ गौतम्युवाच ॥ शतशः संति कौशल्ये देवाः स्वर्गनिवासिनः ॥ देवपत्न्यस्तथैवैताः सिद्धाः सिद्धांगनास्तथा ॥ ३ ॥ न तेषामीदृशो गन्धो न कांतिर्न सुरूपता ॥ न वाससी शोभने ये यथा ते पतिना सह ॥ ४ ॥ नैवाभरणजातानि तेषां भ्राजंति वै तथा ॥ यथा तव यथा पत्युर्न च स्वर्गनिवासिनाम् ॥ ५ ॥ सुस्नातचेलतश्चैव युवयोरतिरिच्यते ॥ लेखाद्यानामपीशानां क्षयातिशयवर्जितः ॥ ६ ॥ तपःप्रभावो दानं वा होमो वा कर्मसंज्ञितः ॥ युवयोर्यत्स माचक्ष्व तत्सर्वं वरवर्णिनि ॥ येन मे विक्रमे बुद्धिर्मनुजा येन संगताः ॥७॥ ॥ कौशल्योवाच ॥ ॥ यज्ञो यज्ञेश्वरो भानुरावाभ्यां जातु तोषितः ॥ स्वर्गप्राप्तिरियं तस्य कर्मणः फलमुत्तमम् ॥ ८ ॥ सुरूपता ततः प्रीतिः पश्यतां चारुवेषिता ॥ यत्पृच्छसि महाभागे तदप्येषां वदामि ते ॥ ९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तीर्थोदकैस्तथा गन्धैः स्नापितो यद्दिवाकरः ॥ तेन कांतिरियं नित्यं देवांस्त्रिभुवनेश्वरान् ॥ १० ॥ मनःप्रसादः सौम्यत्वं शरीरे ये च निर्वृताः ॥ यत्प्रियत्वं च सर्वं स्यात्तद्घृतस्नापनात्फलम् ॥ ११ ॥ यान्यभीष्टानि वासांसि यच्चाभीष्टविभूषणम् ॥ रत्नानि यान्यभीष्टानि यत्प्रियं चानुलेपनम् ॥ १२ ॥ ये धूपा यानि माल्यानि दयितान्यभवन्सदा ॥ मम भर्तुस्तदैवास्य तदा राज्यं प्रशासतः ॥ १३ ॥ तानि सर्वाणि सर्वज्ञ सर्वपातरि भानुनि ॥ दत्तानि तत्समुत्थोऽयं गंधधूपात्मको गुणः ॥१४॥ आहारा दयिता ये च पवित्राश्च निवेदिताः ॥ त्रिलोककर्तुः सवितुस्तृप्तिस्तद्गुणसंभवा ॥ १५ ॥ स्वर्गकामेन मे भर्त्रा मया च शुभदर्शने ॥ कृतमेतत्कृतेनाभूदावयोर्भवसंक्षयः ॥१६॥ ये त्वकामा नराः सम्यक्तत्कुर्वंति च शोभने ॥ तेषां ददाति विश्वेशो भगवान्मुक्तिमीश्वरः ॥ १७ ॥ ॥ ब्रह्मोवाच ॥ ॥ एवमभ्यर्च्य मार्तंडमर्कं देवेश्वरं गुरुम् ॥ प्राप्तोस्म्यभिमतान्कामान्कृष्णाहं शाश्वतीः समाः ॥१८॥ चंदनागुरुकर्पूरकुंकुमोशीरपद्मकैः ॥ अनुलिप्तो नरैर्भक्त्या ददाति सागरोद्भवाम् ॥ १९ ॥ कालेयकं तुरुष्कं च रक्तचंदनमेव च ॥ यान्यात्मनः सदेष्टानि तानि शस्यान्यपाकुरु ॥२०॥ गंधाश्चापि शुभा ये च धूपा ये विजयोदयाः ॥ दिवाकरस्य धर्मज्ञ निवेद्यास्सर्वदाच्युत ॥ २१ ॥ न दद्यात्सल्लकीक्षारं नो मुखेन च संहृतम् ॥ दद्यादर्काय धर्मज्ञ धूपमाराधनोद्यतः ॥२२॥ मालती मल्लिका चैव यूथिका चातिमुक्तिकः ॥ पाटलाः करवीरश्च जपा सेवंतिरेव च ॥ २३ ॥ कुंकुमस्तगरश्चैव कर्णिकारः सकेशरः ॥ चंपकः केतकः कुंदो बाणबर्बरमालिका ॥ ॥ २४ ॥ अशोकस्तिलको लोध्रस्तथा चैवाटरूषकः ॥ शतपत्राणि धन्वानि बकाह्वानी विशेषतः ॥ २५ ॥ अगस्तिं किंशुकं तद्वत्पूजार्थं भास्करस्य तु ॥ अमी पुष्पप्रकारास्तु शस्ता भास्करपूजने ॥ २६ ॥ बिल्वपत्रं शमीपत्रं पत्रं वा भृंगरस्य च ॥ तमालपत्रं च हरे सदैव भगवत्प्रियम् ॥ २७ ॥ तुलसी कालतुलसी तथा रक्तं च चंदनम् ॥ केतकी पत्रपुष्पं तु सद्यस्तुष्टिकरं रवेः ॥ २८ ॥ पद्मोत्पलसमुत्थानि रक्तं नीलोत्पलं तथा ॥ सितोत्पलं तु भानोस्तु दयितानि सदाच्युत ॥ २९ ॥ कृष्णलोकन्मत्तकं कांतं तथैव गिरिमल्लिका ॥ न कर्णिकारिकापुष्पं भास्कराय निवेदयेत् ॥ ३० ॥ कुटजं शाल्मलीपुष्पं तथान्यद्गन्धवर्जितम् ॥ निवेदितं भयं रोगं निःस्वतां च प्रयच्छति ॥ ३१ ॥ येषां न प्रतिषेधोस्ति गंधवर्णान्वितानि च ॥ तानि पुष्पाणि देयानि भानवे लोकभानवे ॥ ३२ ॥ सुगंधैश्च सुरामांसीकर्पूरागरुचंदनैः ॥ तथान्यैश्च शुभैर्द्रव्यैरर्चयेद्वनमालिनम् ॥ ३३ ॥ दुकूलपट्टकौशेयवार्क्षकार्पासकादिभिः ॥ वासोभिः पूजयेद्भानुं यानि चात्मप्रियाणि तु ॥ ३४ ॥ भक्ष्याणि यान्य

१ ददाति मनसेप्सितान्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भीष्टानि भोज्यान्यभिमतानि च ॥ फलं च वल्लभं यत्स्यात्तत्ते देयं दिवाकरे ॥ ३५ ॥ सुवर्णमणिमुक्तानि रजतं च तथाच्युत ॥ दक्षिणा विविधा चेह यच्चान्यदपि वल्लभम् ॥ तच्च देवाधिदेवाय भास्कराय निवेदयेत् ॥ ३६ ॥ आत्मानं भास्करं मत्वा यज्ञं तस्मै निवेदयेत् ॥ तत्तद्व्यक्तरूपाय भास्कराय निवेदयेत् ॥ ३७ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्प आदित्यमाहात्म्ये सूर्यपूजाविधिवर्णनं नाम पञ्चदशोत्तरशततमोऽध्यायः ॥ ११५ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ ॥ कृष्ण राजा महानासीद्ययातिकुलसंभवः ॥ सत्राजिदिति विख्यातश्चक्रवर्ती महाबलः ॥ १ ॥ प्रभावैस्तेजसा कान्त्या क्षांत्या बलसमन्वितः ॥ धैर्यगांभीर्यसंपन्नो वदान्यो यशसान्वितः ॥२॥ बुद्ध्या विक्रमदक्षश्च संपन्नो ब्राह्मणायतः ॥ कृती कविस्तथा शूरः षट्पदाख्यैर्न निर्जितः ॥ ३ ॥ सदा पंचसु रक्तश्च वसुमद्भिर्न निर्जितः ॥ रुद्रता वसुभिर्जातैः सत्त्वश्रद्धासमन्वितः ॥ ॥ ४ ॥ अंबुजस्यांडजस्येव आत्रेयस्य तथाच्युत ॥ अंबुजायास्तथा कृष्ण वार्यपात्रं स वै विभो ॥ ५ ॥ गांगेयेन बले तुल्यः पौलस्त्यार्चाश्रमो यथा ॥ गांगेयस्य तथा कृष्ण धिषणस्य हरेर्यथा ॥ ६ ॥ काम्यश्च द्विजभक्तस्तु तथा वाल्मीकिवत्सदा ॥ व्यासस्य देवशार्दूल जामदग्न्यस्य वा विभोः ॥ ७ ॥ एषां नैकैर्गुणैर्युक्तः स राजा क्ष्मातले विभो ॥ शशास स महाबाहुः सप्तद्वीपां वसुंधराम् ॥ ८ ॥ यस्मिन्गाथां प्रगायंति ये पुराणविदो जनाः ॥ सत्राजिते महाबाहौ कृष्ण धात्रीं समाश्रिते ॥ ९ ॥ यावत्सूर्य उदेति स्म यावच्च प्रतितिष्ठति ॥ सात्राजितं तु तत्सर्वं क्षेत्रमित्यभिधीयते ॥ १० ॥ स सर्वरत्नसंयुक्तां सप्तद्वीपवतीं महीम् ॥ शशास धर्मेण पुरा चक्रवर्ती महाबलः ॥ ११ ॥ नान्यायकृन्न चाशक्तो वदान्यो बलवत्तरः ॥ तस्याभूत्पुरुपा राज्ञः सम्यग्धर्मानुशासिनः ॥ १२ ॥ चत्वारः सचिवास्तस्य राज्ञः सत्राजितस्य तु ॥ बभूवुरप्रतिहताः सदा वातिबलस्य वै ॥ १३ ॥ तस्य भक्तिरतीवासीन्निसर्गादेव भूपतेः ॥ दिवाकरे जगद्भानौ रक्तचन्दनमालिनि ॥ १४ ॥ तस्योर्ध्वमहिमानं च विलोक्य पृथिवीपतेः ॥ न केवलं जनस्यापि ह्यभवत्तस्य विस्मयः ॥ १५ ॥ संचिन्तयामास नृपः समृद्ध्या विस्मितस्तथा ॥ कथं स्यात्संपदेषा मे पुनरप्यन्यजन्मनि ॥ १६ ॥ एवं स बहुशो राजा तदा कृष्ण महायशाः ॥ चिंतयन्नपि तन्मूलं नासदन्निश्चयान्वितः ॥ १७ ॥ यदा न निश्चयं राजा स ययौ भार्गवीप्रियः ॥ तदा पप्रच्छ धर्मज्ञान्स विप्रान्समुपागतान् ॥ १८ ॥ सर्वांश्च ससुखान्वीर विविक्तांतःपुरस्थितः ॥ प्रणिपत्य महाबाहुर्यदीतुं शासनक्रियाः ॥ १९ ॥ विश्वासानुग्रहा बुद्धिर्भवतां मयि सत्तमाः ॥ तदहं प्रष्टुमिच्छामि किंचित्तद्वक्तुमर्हथ ॥ २० ॥ सद्भिर्याखिलविज्ञानसम्यग्धौतांतरात्मभिः ॥ भवद्भिर्यद्यनुग्राह्यः स्यामहं वेदवित्तमाः ॥ २१ ॥ तद्यथावन्मया पृष्टा भवन्तो मत्प्रसादिनः ॥ वक्तुमर्हथ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्वांसः सर्वस्यैवोपकारिणः ॥ २२ ॥ ॥ ब्रह्मोवाच ॥ ॥ यस्ते मनसि संदेहस्तं पृच्छाद्य महीपते ॥ वदिष्यामो यथान्यायं यत्ते[1] मनसि वर्त्तते ॥ २३ ॥ वयं हि नृपशार्दूल भवता परितोषिताः ॥ सम्यक्प्रजां पालयित्रा ददता भोजनं सदा ॥ २४ ॥ संतुष्टो ब्राह्मणोऽश्रीयाच्छिंद्याद्वा धर्मसंशयम् ॥ हितं चोपदिशेद्वर्त्म अहिताद्वा निवर्तयेत् ॥ २५ ॥ विवक्षुमथ भूपालं भार्या तस्यैव धीमतः ॥ प्रणिपातेन चाहेदं विनयात्प्रणयान्वितम् ॥ २६ ॥ न स्त्रीणामवनीपाल वक्तुमीदृग्गिहेष्यते ॥ तथापि भूपते वक्ष्ये संपदीदृक्सुदुर्लभा ॥ २७ ॥ भूयोऽपि संशयान्प्रष्टुमलमीशो भवानृषीन् ॥ नन्वहं पुरुषव्याघ्र सदांतःपुरचारिणी ॥ २८ ॥ तत्प्रसादं यदि भवान्करोति मम पार्थिव ॥ तन्मदीयमृषीन्प्रष्टुं संदेहं पार्थिवार्हसि ॥ २९ ॥ ॥ सत्राजित उवाच ॥ ॥ ब्रूहि सुभ्रूर्मतं यत्ते प्रष्टव्या यन्मया द्विजाः ॥ भूयोऽहमात्मसंदेहं प्रक्ष्याम्येतद्विजोत्तमान् ॥ ३० ॥ ॥ विमलवत्युवाच ॥ ॥ श्रूयन्ते पृथिवीपाल नृपा ये तु चिरंतनाः ॥ येषां च संपद्भूपाल यथा तेद्य किलाभवत् ॥ ३१ ॥ तदीदृक्संपदो धाम तवाशेषं क्षितीश्वर ॥ येन कर्मविपाकेन तद्वदंतु महर्षयः ॥ ३२ ॥ अहं च भवतो भार्या सर्वसीमंतिनीवरा ॥ अतीव कर्मणा येन तद्विज्ञाने कुतूहलम् ॥ ३३ ॥ तथा संपत्समृद्धत्वमन्येष्वपि हि विद्यते ॥ निरस्तातिशयत्वेन नूनं नाल्पेन कर्मणा ॥ ३४ ॥ तदन्यजन्मचरितं नरनाथ निजं भवान् ॥ मुनीन्पृच्छ त्वया चाहं यन्मया च पुरा कृतम् ॥ ३५ ॥ ॥ ब्रह्मोवाच ॥ ॥ स तथोक्तस्तया राजा पत्न्या विस्मितमानसः ॥ मुनीनां पुरतो भार्यां प्रशंसन्वाक्यमब्रवीत् ॥ ३६ ॥ साधु देवि मतं यन्मे त्वया यदिदमीरितम् ॥ सत्यं मुनिवचः पुंसां स्वार्द्धं वै गृहिणी तथा ॥ ३७ ॥ सोऽहमेतन्महाभागे पृच्छाम्येतान्महामुनीन् ॥ तेषामविदितं किंचित्त्रिलोकेषु न विद्यते ॥ ३८ ॥ एवमुक्त्वा प्रियां राजा प्रणिपत्य च तानृषीन् ॥ यथावदेतदखिलं पप्रच्छ धरणीधरः ॥ ३९ ॥ ॥ राजोवाच ॥ ॥ भगवंतो ममाशेषं प्रसादाद्गतचेतसः ॥ कथयंतु यथावृत्तं यन्मया सुकृतं कृतम् ॥ ४० ॥ कोऽहमासं पुरा विप्राः किंस्वित्कर्म मया कृतम् ॥ किं वानया तु चार्वंग्या मम पत्न्या कृतं द्विजाः ॥ ४१ ॥ येनावयोरियं लक्ष्मीर्मर्त्यलोके सुदुर्लभा ॥ चत्वारश्चाप्रतिहता अमात्या मम गच्छतः ॥ ४२ ॥ अशेषा भूभृतो वश्या धनस्यांतो न विद्यते ॥ बलं चैवाप्रतिहतं शरीरारोग्यमेव च ॥ ४३ ॥ प्रतिभाति च मे कांत्या भार्यायामखिलं जगत् ॥ ममापि वपुषस्तेजो न कश्चित्सहते द्विजाः ॥ ४४ ॥ सोऽहमिच्छामि तज्ज्ञातुं तथैवेयमनिंदिता ॥ निजानुष्ठानमखिलं यस्याशेषमिदं फलम् ॥ ४५ ॥ ॥ ब्रह्मोवाच ॥ ॥



१ यत्ते सांद्रायिकं हृदि–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रभातश्च वसवोऽष्टौ प्रकीर्तिताः ॥ १० ॥ नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनावुभौ ॥ विश्वेदेवान्प्रवक्ष्यामि नामतस्तान्निबोधत ॥ ११ ॥ क्रतु दक्षो वसुः सत्यः कालकामौ धृतिः कुरुः ॥ शंकुमात्रो वामनश्च विश्वेदेवा दश स्मृताः ॥ १२ ॥ वर्तमाना इमे देवा भविष्यानंतरे शृणु ॥ यमश्च तुषिताश्चैव वसवो वशवर्तिनः ॥ १३ ॥ सत्याश्च भूतरजसः साध्याश्च तदनंतराः ॥ षट्सु मन्वंतरेष्वेवं देवा द्वादशद्वादश ॥ पारा वतास्तथा चान्ये ते ह्यासंस्तुषितैः सह ॥ १४ ॥ साध्यान्देवान्प्रवक्ष्यामि नामतस्तान्निबोध मे ॥ मनोऽनुमंता प्राणश्च नरो नारा यणस्तथा ॥ १५ ॥ वृत्तिलम्बो मनुश्चैव समो धर्मश्च वीर्यवान् ॥ वित्तस्वामी प्रभुश्चैव साध्या द्वादश कीर्तिताः ॥ १६ ॥ एते यज्ञभुजो देवाः सर्वलोकेषु पूजिताः ॥ अदित्यामेव ते धीर कश्यपस्यात्मजाः स्मृताः ॥ १७ ॥ विश्वे च वसवः साध्या विज्ञेया धर्मसूनवः ॥ एवं धर्मसुतः सोमस्तृतीयो वसुरिष्यते ॥ १८ ॥ धर्मोपि ब्रह्मणः पुत्रः पुराणे निश्चयं गतः ॥ अथ चेन्द्रान्वसूंश्चैव नामभिश्च निबोध मे ॥ १९ ॥ स्वायंभुवो मनुः पूर्वं ततः स्वारोचिषः स्मृतः ॥ उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥ २० ॥ इत्येते षडतिक्रांताः सप्तमः सांप्रतो मनुः ॥ वैवस्वतेति विज्ञेयो भविष्याः सप्त चापरे ॥ २१ ॥ एषामाद्योऽर्कसावर्णिर्ब्रह्मसावर्णिरेव च ॥ तस्माच्च भवसावर्णिर्धर्मसावर्णिरित्युत ॥ २२ ॥ पंचमो दक्षसावर्णिः सावर्णिः पंच कीर्तिताः ॥ रौच्यो भौत्यश्च द्वावन्यावित्येते मनवः स्मृताः ॥२३॥ इंद्रस्तु विष्णुभुग्ज्ञेयो विद्युतिस्तदनंतरम् ॥ विभुः प्रभुश्चैव शिखी तथैव च मनोजवः ॥ २४ ॥ ओजस्वी सांप्रतस्त्विंद्रो बलिर्भाव्यस्ततः परम् ॥ अद्भुतस्त्रिदिवश्चैव दशमस्त्विद्र उच्यते ॥ ॥ २५ ॥ सुसात्त्विकश्च कीर्तिश्च शतधामा दिवस्पतिः ॥ इति भूता भविष्याश्च इंद्रा ज्ञेयाश्चतुर्दश ॥ २६ ॥ कश्यपोऽत्रिर्वशिष्ठश्च भरद्वाजश्च गौतमः ॥ विश्वामित्रो जमदग्निः सप्तैते ऋषयः स्मृताः ॥ २७ ॥ अतः परं प्रवक्ष्यामि मरुतोऽग्निपरिग्रहान् ॥ प्रवहोथावहश्चैव उद्वहः संवह स्तथा ॥ २८ ॥ विवहो निवहश्चैव परिवाहस्तथैव च ॥ अंतरिक्षचरा ह्येते पृथङ्मार्गविसारिणः ॥ २९ ॥ सूर्योऽग्निश्च शुचिर्नाम्ना वैद्युतः पाव कः स्मृतः ॥ निर्मंथः पवमानोऽग्निस्त्रयः प्रोक्ता इमेग्नयः ॥ ३० ॥ अग्नीनां पुत्रपौत्रास्तु चत्वारिंशत्तथैव तु ॥ मरुतामपि सर्वेषां विज्ञेयाः सप्तस प्तकाः ॥ ३१ ॥ क्रतुः संवत्सरोऽह्यग्निर्ऋतवस्तस्य जज्ञिरे ॥ ऋतुपुत्राश्च वै पंच इति सर्गः सनातनः ॥ ३२ ॥ संवत्सरस्तु प्रथमो द्वितीयः परि

१ धनिर्दीव–इ० पा० । २ तथैव महावर्तिनः–इ० पा० । ३ वै स्मृताः–इ० पा० । ४ इमं भवेश्च–इ० पा० । ५ एतत्सार्धमधिकम् । ६ सुनीतिश्च सुकीर्तिश्च–इ० पा० । ७ वायुभानौ–इ० पा० ।
८ अन्तरिक्षचराः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वत्सरः ॥ इद्वत्सरस्तृतीयस्तु चतुर्थस्त्वनुवत्सरः ॥ ३३ ॥ पंचमो वत्सरस्तेषामित्येवं पंच ते स्मृताः ॥ तेषु संवत्सरो ह्यग्निः सूर्यस्तु परिवत्सरः ॥ ॥ ३४ ॥ सोम इद्वत्सरस्तेषां वायुश्चैवानुवत्सरः ॥ रुद्रस्तु वत्सरो ज्ञेयः पंचैता युगदेवताः ॥ ३५ ॥ आर्तवाः पितरो ज्ञेया ये जाताः ऋतुसूनवः॥ पितामहास्तु विज्ञेयाः पंचाब्दा ब्रह्मणः सुताः ॥ ३६ ॥ सौम्या बर्हिपदश्चैव अग्निष्वात्ताश्च ये त्रयः ॥ एते वै पितरस्तेषां ये जीवत्पितृका नराः॥ ॥ ३७ ॥ आदित्यश्चैव सोमश्च लोहितांगो बुधस्तथा ॥ बृहस्पतिश्च शुक्रश्च तथा हेलिसुतश्च यः ॥ ३८ ॥ उपरागः शिखी चोभौ नवैते नु ग्रहाः स्मृताः ॥ त्रैलोक्यस्य त्विमे नित्यं भावाभावनिवेदकाः ॥ ३९ ॥ आदित्यश्चैव सोमश्च द्वावेतौ मंडलग्रहौ ॥ राहुश्छायाग्रहस्तेषां शेषास्तारा ग्रहाः स्मृताः ॥ ४० ॥ नक्षत्राधिपतिः सोमो ग्रहराजो दिवाकरः ॥ पठ्यते चाग्निरादित्य उदकश्चंद्रमाः स्मृतः ॥ ४१ ॥ आदित्यः पठ्यते ब्रह्मा विष्णुस्तेषां तु चंद्रमाः ॥ महेश्वरस्तु विज्ञेयस्तृतीयस्तारकग्रहः ॥ ४२ ॥ कश्यपस्य सुतः सूर्यः सोमो धर्मसुतः स्मृतः ॥ देवासुरगुरू द्वौ तु नामतस्तौ महाग्रहौ ॥ ४३ ॥ प्रजापतिसुतावेतावुभौ शुक्रबृहस्पती ॥ बुधः सोमात्मजः श्रीमाञ्छनी रविसुतः स्मृतः ॥ ४४ ॥ सिंहिकायाः सुतो राहुः केतुस्तु ब्रह्मणः सुतः ॥ सर्वेषां च ग्रहाणां हि अधस्ताच्चरते रविः ॥ ४५ ॥ ततो दूरं स्मृतं तावद्विधोर्नक्षत्रमण्डलम् ॥ नक्षत्रेभ्यः कुज बुधौ श्वेताह्वस्तदनंतरम् ॥४६॥ तस्मान्माहेश्वरश्चोर्द्ध्वं धिषणस्तदनन्तरम् ॥ कृष्णश्चोर्ध्वं ततस्तस्मादथ चित्रशिखंडिजः ॥ ४७ ॥ एषामेव क्रमः प्रोक्तश्चासक्तं त्रिदिवं ध्रुवे ॥ आदित्यनिलयो राहुः कदाचित्सोममार्गगः ॥ ४८ ॥ सूर्यमंडलसंस्थस्तु शिखी सर्पति सर्वदा ॥ नवयोजनसाहस्रो विस्तारो भार्गवस्य तु ॥४९॥ द्विगुणः सूर्यविस्ताराद्विस्तारः शनिनः स्मृतः ॥ त्रिगुणं मंडलं ज्ञेयं नाक्षत्रं विस्तराद्विधोः ॥५०॥ नक्षत्रमंडलात्तत्र पादहीनो बृहस्पतिः ॥ बृहस्पतेः पादहीनः शुक्रोंगारक एव हि ॥ ५१ ॥ विस्तारो मंडलानां तु पादहीनस्तयोर्बुधः ॥ बुधतुल्यानि ऋक्षाणि सर्वऋक्षाणि यानि तु ॥ ५२ ॥ योजनान्यर्धमात्राणि तेभ्यो ह्रस्वं न विद्यते ॥ राहुः सूर्यप्रमाणश्च कदाचित्सोमसंनिभः ॥ ५३ ॥ नक्षत्रग्रहमा नस्तु केतुस्त्वनियतः स्मृतः ॥ अविज्ञातगतिश्चैव चंचलत्वान्नराधिप ॥ ५४ ॥ तथालक्षितरूपस्तु बहुरूपधरो हि सः ॥ भूर्लोकः पृथिवी प्रोक्ता अंतरिक्षं भुवः स्मृतम् ॥ ५५ ॥ स्वर्लोकस्त्रिदिवं ज्ञेयं शेषादूर्ध्वं यथाक्रमम् ॥ भूपतिस्तु सदा त्वग्निस्तेनासौ भूपतिः स्मृतः ॥ ५६ ॥ वायुर्नभस्पतिस्तेन तथा सूर्यो दिवस्पतिः ॥ गंधर्वाप्सरसश्चैव गुह्यकाः सिद्धराक्षसाः ॥ ५७ ॥ भूर्लोकवासिनः सर्वे अंतरिक्षचराञ्छृणु ॥ मरुतः



१ पंचाब्दा ये युगात्मकाः--इ० पा० । २ सोममंडल--इ० पा० । ३ ब्राह्मणस्य तु--इ० पा० । ४ द्विगुणम्--इ० पा० । ५ तस्माद्ग्रहणमात्रं तु--इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सप्तमस्कंधे रुद्रास्तत्रैव चाश्विनौ ॥ ५८ ॥ आदित्या वसवः सर्वे तथैव च गवां गणाः ॥ चतुर्थे तु महर्लोके वसंते कल्पवासिनः ॥ ॥ ५९ ॥ प्रजानां पतिभिः सर्वैः सहिताः कुरुनंदन ॥ जनलोके पंचमे च वसंते भूमिदाः सदा ॥ ६० ॥ ऋतुः सनत्कुमाराद्या वैराजश्च तथाश्रयाः ॥ सत्यस्तु सप्तमे लोके ह्यपुनर्मार्गगामिनाम् ॥ ६१ ॥ ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः ॥ इतिहासविदो यत्र क्रीडंते कुरुनंदन ॥ ६२ ॥ शृण्वंति च पुराणानि ये सदा भीमनंदन ॥ महीतलात्सहस्राणां शतादूर्ध्वं दिवाकरः ॥ ६३ ॥ शतयोजनकोट्यस्तु भूमेरूर्ध्वं ध्रुवः स्थितः ॥ ततो विंशतिलक्षस्तु त्रैलोक्योत्सेध उच्यते ॥ ६४ ॥ द्विगुणैस्तु सहस्रैस्तु योजनानां शतेषु च ॥ लोकांतरमथो चैवं ध्रुवादूर्ध्वं विधीयते ॥ ६५ ॥ देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ भूता विद्याधराश्चैव अष्टौ ते देवयोनयः ॥ ६६ ॥ यस्मिन्व्योम्नि त्विमे लोकाः सप्त वै संप्रतिष्ठिताः ॥ मरुतः पितरो ह्येते तस्मिन्नेवाग्नयो ग्रहाः ॥ ६७ ॥ यास्त्वप्येताः समाख्याता मयाष्टौ देवयोनयः ॥ मूर्ताश्चामूर्तयश्चैव सर्वास्ता व्योम्नि संस्थिताः ॥ ६८ ॥ एवंविधमिदं व्योम सर्वव्योममयं स्मृतम् ॥ सर्वदेवमयं चैव सर्वग्रहमयं तथा ॥ ६९ ॥ तस्माद्यो ह्यर्चयेद्व्योम तेन सर्वेऽर्चिताः सुराः ॥ तस्मात्सर्वप्रयत्नेन शुभार्थी व्योम चार्चयेत् ॥ ७० ॥ यस्त्वर्चते सदा व्योम भक्त्या श्रद्धासमन्वितः ॥ वृषध्वजसदो राजन्स गच्छेन्नात्र संशयः ॥ ७१ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे व्योममाहात्म्ये भुवनकोशवर्णनं नाम पंचविंशत्युत्तरशततमोऽध्यायः ॥ १२५ ॥छ॥ ॥ सुमंतुरुवाच ॥ ॥ आकाशं खं दिशो व्योम अन्तरिक्षं नभोऽम्बरम् ॥ पुष्करं गगनं मेरुर्विपुलं च विलं तथा ॥ १ ॥ आपोच्छिद्रं तथा शून्यं तमो वै रोदसी तथा ॥ नामान्येतानि ते व्योम्नः कीर्तितानि महीपते ॥ २ ॥ लवणक्षीरदध्यम्लघृतमध्विक्षवस्तथा ॥ स्वादूदकश्च सप्तैते समुद्राः परिकीर्तिताः ॥ ३ ॥ हिमवान्हेमकूटश्च निषधो नील एव च ॥ श्वेतश्च शृंगवांश्चैव षडेते वर्षपर्वताः ॥ ४ ॥ मध्यसंस्थस्तथैतेषां महाराजतपर्वतः ॥ माहेन्द्री चाप्यथाग्नेयी याम्या च नैर्ऋती तथा ॥ ५ ॥ वारुणी चाथ वायव्या सौम्यैशानी तथैव च ॥ एताः पुर्यस्तु देवानां तथोपरि समाश्रिताः ॥ ६ ॥ पृथिव्यां तु स्थितो वीर लोकालोकस्तु पर्वतः ॥ ततश्चंडकपालं तु तस्मात्तत्परतस्तु यः ॥ ७ ॥ ततोऽग्निर्वायुराकाशं ततो भूतादिरुच्यते ॥ ततो महानहंकारः प्रकृतिः पुरुषस्ततः ॥८॥ पुरुषादीश्वरो ज्ञेय ईश्वरेणावृतं जगत् ॥ ईश्वरो भगवान्भानुस्तेनेदं पूरितं जगत् ॥ ९ ॥ सहस्रांशुर्महातेजाश्चतुर्बाहुर्महाबलः ॥ ऊर्ध्वमप्यथ लोकास्तु प्राङ्मया ये प्रकीर्तिताः ॥ १० ॥

१ मायांजन-इ०पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भूयस्तान्त्संप्रवक्ष्यामि अंडावरणकारकान् ॥ भूर्लोकस्तु भुवर्लोकस्तृतीयः परिकीर्तितः॥११॥महर्जनस्तपः सत्यः सप्त लोकाः प्रकीर्तिताः ॥ तत स्त्वंडकपालं तु तस्माच्च परस्तपः ॥ १२ ॥ ततोऽग्निर्वायुराकाशं ततो भूतादिरुच्यते ॥ ततो महान्प्रधानश्च प्रकृतिः पुरुषस्ततः ॥ १३ ॥ पुरुषा दीश्वरो ज्ञेय ईश्वरेणावृतं जगत् ॥ भूमेरधस्तात्सप्तैव लोकानभिमताञ्छृणु ॥ १४ ॥ तलं सुतलपाताले तलातलं तथातलम् ॥ वितलं च कुरुश्रेष्ठ सप्तमं च रसातलम् ॥१५॥ ततोऽग्निर्वायुराकाशं ततो भूतादिरुच्यते ॥ ततो महान्प्रधानश्च प्रकृतिः पुरुषस्ततः ॥१६॥ पुरुषादीश्वरो ज्ञेय ईश्वर रेणावृतं जगत् ॥ एवं मेरोः प्रमाणं तु सर्वमेतत्प्रकीर्तितम् ॥ १७ ॥ चतुरस्रश्चतुःशृंगः स मेरुः कांचनः शुभः ॥ पृथिव्यां संस्थितो मध्ये सिद्ध गंधर्वसेवितः ॥ १८ ॥ चतुर्भिः कांचनैः शृंगैर्दिव्यैर्दिवमिवोल्लिखन् ॥ योजनानां सहस्राणि चतुराशीतिरुच्छ्रितः ॥ १९ ॥ प्रविष्टः षोडशाध स्तादष्टाविंशतिविस्तृतः ॥ विस्तारस्त्रिगुणश्चास्य परिणाहस्ततः स्मृतः ॥ २० ॥ तस्य सौमनसं नाम शृंगमेकं तु कांचनम् ॥ द्वितीयं पद्म रागाभं ज्योतिष्कं नाम नामतः ॥ २१ ॥ तृतीयं नामतश्चित्रं सर्वदेवमयं शुभम् ॥ चतुर्थं राजतं शुक्लं चन्द्रौजस्कमिति स्मृतम् ॥ २२ ॥ यत्तु सौमनसं नाम शृंगं गांगेयमुच्यते ॥ तदेव चोदयो नाम्ना यत्रोद्यन्दृश्यते रविः ॥ २३ ॥ उत्तरेण परिक्रम्य जंबूद्वीपं दिवाकरः ॥ दृश्यो भवति भूतानां शिखरं च समास्थितः ॥ २४ ॥ कांचनस्य च शैलस्य तेजसार्कस्य चाहृते ॥ उभे संध्ये प्रकाशेते आताम्रे पूर्वपश्चिमे ॥ २५ ॥ शृंगे सौमनसे सूर्य उत्तिष्ठत्युत्तरायणे ॥ ज्योतिषे दक्षिणे चापि विषुवे मध्यतस्तयोः ॥ २६ ॥ ईशेंद्रोद्रिश्च ऐशान्यां तत्राग्निः पूर्वदक्षिणे ॥ नैर्ऋ तेऽपि ततो ज्ञेयो वायव्ये मरुतस्तथा ॥ २७ ॥ मध्ये तु कंजजः साक्षाद्ब्रह्मा ज्योतींपि चैव हि ॥ आदित्यस्तेन रूपेण तस्मिन्व्योम्नि प्रतिष्ठितः ॥ ॥ २८ ॥ इदं देवमयं व्योम तथा लोकमयं स्मृतम् ॥ पूर्वकोणस्थिते शृंगे स्थितः शुक्रो महीपते ॥ २९ ॥ हेलिजश्चापरे ज्ञेयो धननाथस्तथापरे ॥ सोमश्चापि चतुर्थे तु स्थितः शृंगे जनाधिप ॥ ३० ॥ मध्ये केशास्थितो राजन्हुंकारश्च पिनाकिनः ॥ शृंगे पूर्वोत्तरे राजन्स्थितो देवो विधुक्षये ॥ ॥ ३१ ॥ ततः स्थितो महादेवो गोपतिर्लोकपूजितः ॥ पूर्वाग्नेयीस्थिते शृंगे स्थितो वै शांडिलः सुतः ॥ ३२ ॥ ततः स्थितो महातेजाः कीनाशो हेलिनंदनः ॥ स्थितो वै नैर्ऋते शृंगे विरूपाक्षो महाबलः ॥ ३३ ॥ तस्मादनंतरो देवः स्थितो वै यादसां पतिः ॥ ततः स्थितो महा तेजा वीर मित्रो महाबलः ॥ ३४ ॥ वायव्यं शृंगमाश्रित्य सर्वदेवनमस्कृतम् ॥ ततः स्थितो दशबलो नरमारुह्य भारत ॥ ३५ ॥ ब्रह्मा मध्ये

१ अण्डकटाहं तु–इ० पा० । २ तस्मिन्सौमनसे शृंगे–इ० पा० । ३ विधुक्षयः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थितो देवो ह्यनंतश्चाथ एव हि ॥ उपेंद्रशंकरौ देवौ ब्रह्मणोंते समास्थितौ ॥ २६ ॥ एप मेरुस्तथा व्योम एप धर्मश्च पठ्यते ॥ सर्वदेव मयश्चायं मेरुर्व्योम इति स्मृतः ॥ २७ ॥ तथा वेदमयश्चापि पठ्यते नात्र संशयः ॥ शृंगाणि वेदाश्चत्वारः पूर्वशृंगादयो विदुः ॥ २८ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे व्योममाहात्म्यवर्णनं नाम षड्विंशत्युत्तरशततमोऽध्यायः ॥ १२६ ॥ ॥ छ ॥ ॥ ॥ शतानीक उवाच ॥ ॥ कथमाराधितः सूर्यः सांबेनामिततेजसा ॥ विमुक्तस्तु कथं रोगैर्ब्रूहि मां द्विजसत्तम ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ साधु पृष्टोऽस्मि राजेंद्र शृणु सांबकथां पुरा ॥ विस्तराद्वच्मि ते सर्वां कथां पापविमोचिनीम् ॥ २ ॥ पुरा संश्रुत्य माहात्म्यं भास्करस्य स नारदात् ॥ विनयादुपसंगम्य वचः पितरमब्रवीत् ॥ ३ ॥ कश्मलेनाभिभूतोऽस्मि मलेन व्याधिनाच्युत ॥ वैद्यैरोपधिभिश्चापि न शांति र्मम विद्यते ॥ ४ ॥ वनं गच्छामि भगवन्ननुज्ञां दातुमर्हसि ॥ शिवेन पुंडरीकाक्ष ध्याय मां पुरुषोत्तम ॥ ५ ॥ अनुज्ञातः स कृष्णेन सिंधो रुत्तरकूलतः ॥ गत्वा संतारयामास चंद्रभागां महानदीम् ॥ ६ ॥ ततो मित्रवनं गत्वा तीर्थं त्रैलोक्यविश्रुतम् ॥ उपवासपरः सांबः शुष्को धमनि संततः ॥ ७ ॥ आराधनार्थं सूर्यस्य गुह्यं स्तोत्रं जजाप ह ॥ वेदैश्चतुर्भिः समितं पुराणाश्रयबृंहितम् ॥ ८ ॥ यदेतन्मंडलं शुक्लं दिव्यं ह्यजरमव्ययम् ॥ युक्तं मनोजवैरश्वैर्हरिनेत्रैर्ब्रह्मवादिभिः ॥ ९ ॥ आदिरेप हि भूतानामादित्य इति संज्ञितः ॥ त्रैलोक्यचक्षुरेवात्र परमात्मा प्रजापतिः ॥ १० ॥ एप वै मंडले ह्यस्मिन्पुरुपो दीप्यते महान् ॥ एप विष्णुरचिंत्यात्मा ब्रह्मा चैप पितामहः ॥ ११ ॥ रुद्रो महेंद्रो वरुण आकाशं पृथिवी जलम् ॥ वायुः शशांकः पर्जन्यो धनाध्यक्षो विभावसुः ॥ १२ ॥ यप एप मंडले ह्यस्मिन्पुरुपो दीप्यते महान् ॥ एकः साक्षान्महादेवो वृत्रमंडनिभः सदा ॥ १३ ॥ कालो ह्येप महाबाहुर्निबोधोत्पत्तिलक्षणः ॥ य एप मंडले ह्यस्मिंस्तेजोभिः पूरयन्महीम् ॥ १४ ॥ भ्राम्यते ह्यव्यवच्छिन्नो वातैर्योऽमृतलक्षणः ॥ नातः परतरं किंचित्तेजसा विद्यते क्वचित् ॥ १५ ॥ पुष्णाति सर्वभूतानि एप एव सुधामृतैः ॥ अंतस्थान्म्लेच्छजातीयांस्तिर्यग्योनिगतानपि ॥ १६ ॥ कारुण्यात्सर्वभूतानि पासि त्वं च विभावसो ॥ श्वित्रकुष्ठ्यंधबधिरान्पंगूंश्चापि तथा विभो ॥ १७ ॥ प्रपन्नवत्सलो देव कुरुते नीरुजो भवान् ॥ मंडलमग्नांश्च निर्धनाल्पायुपस्तथा ॥ १८ ॥ प्रत्यक्षदर्शी त्वं देव समुद्धरसि लीलया ॥ का मे शक्तिः स्तवैः स्तोतुमार्तोऽहं रोगपीडितः ॥ १९ ॥ स्तूयसे त्वं सदा देवैर्ब्रह्मविष्णुशिवादिभिः ॥ महेंद्रसिद्धगंधर्वैरप्सरोभिः सगुह्यकैः ॥ २० ॥ स्तुतिभिः किं पवित्रैर्वा तव देव समीरितैः ॥ यस्य ते

१ [illegible]—इ० पा० । २ ब्रह्मवादिभिः—इ० पा० । ३ अनादिरेप भूतानामादित्य इति संज्ञितः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋग्यजुःसाम्नां त्रितयं मंडलस्थितम् ॥ २१ ॥ ध्यानिनां त्वं परं ध्यानं मोक्षद्वारं च मोक्षिणाम् ॥ अनंततेजसाक्षोभ्यो ह्यचिंत्याव्यक्तनिष्कलः ॥ २२ ॥ यदयं व्याहृतः किंचित्स्तोत्रेस्मिञ्जगतः पतिः ॥ आर्तिं भक्तिं च विज्ञाय तत्सर्वं ज्ञातुमर्हसि ॥ २३ ॥ तमुवाच ततः सूर्यः प्रीत्यै जांबवतीसुतम् ॥ प्रीतोऽस्मि तपसा वत्स ब्रूहि तन्मां यदिच्छसि ॥ २४ ॥ ॥ सांब उवाच ॥ ॥ यदि प्रसन्नो भगवानेष एव वरो मम ॥ भक्तिर्भवतु मेऽत्यर्थं त्वयि देव सनातन ॥ २५ ॥ ॥ श्रीसूर्य उवाच ॥ ॥ भूयस्तुष्टोऽस्मि भद्रं ते वरं वरय सुव्रत ॥ स द्वितीयं वरं वव्रे तदेव वरदं विभुम् ॥ २६ ॥ मलः शरीरसंस्थो मे त्वत्प्रसादात्प्रणश्यतु ॥ येन मे शुद्धमखिलं वपुर्भवतु गोपते ॥ २७ ॥ ॥ सुमंतुरुवाच ॥ ॥ स तथास्त्विति तेनोक्तो भास्करेण महात्मना ॥ तां मुमोच रुजं सांबो देहात्त्वचमिवोरगः ॥२८॥ ततो रूपेण दिव्येन रूपवानभवत्पुनः॥ प्रणम्य शिरसा देवं पुरतोऽवस्थितोऽभवत् ॥ २९ ॥ ॥ श्रीसूर्य उवाच ॥ ॥ भूयश्च शृणु मे सांब तुष्टोहं यद्ब्रवीमि ते ॥ अद्य प्रभृति त्वन्नाम्ना मम स्थानानि सुव्रत॥ क्षितौ ये स्थापयिष्यंति तेषां लोकाः सनातनाः ॥ ३० ॥ स्थापयस्वैव मामस्मिंश्चंद्रभागातटे शुभे ॥ तव नाम्ना च सांबेदं परां ख्यातिं गमिष्यति ॥ ३१ ॥ कीर्तिस्तवाक्षया लोके ख्यातिं यास्यति सुव्रत ॥ भूयश्च ते प्रदास्यामि प्रत्यहं स्वप्नदर्शनम् ॥ ३२ ॥ ॥ सुमंतुरुवाच ॥ ॥ एवं दत्त्वा वरं तस्मै वृष्णिसिंहाय चापरम् ॥ प्रत्यक्षदर्शनं दत्त्वा तत्रैवांतरधाद्धरिः ॥ ३३ ॥ य इदं पठते स्तोत्रं त्रिकालं भक्तिमान्नरः ॥ त्रिसप्तशतमावर्त्य होमं वा सप्तरात्रकम् ॥ ३४ ॥ राज्यकामो लभेद्राज्यं धनकामो लभेद्धनम् ॥ रोगार्तो मुच्यते रोगाद्यथा सांबस्तथैव सः ॥ ३५ ॥ सूर्यलोकं व्रजेच्चापि भक्त्यापूज्य दिवाकरम् ॥ रमते च तथा तस्मिन्देवैश्च परिवारितः ॥ ३६ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने सूर्यप्रसादवर्णनं नाम सप्तविंशत्युत्तरशततमोऽध्यायः ॥ १२७ ॥छ॥ ॥ सुमंतुरुवाच ॥ ॥ अस्तावीच्च ततः सांबः कृशो धमनिसंततः ॥ राजन्नामसहस्रेण सहस्रांशुं दिवाकरम् ॥ १ ॥ खिद्यमानं ततो दृष्ट्वा सूर्यः कृष्णात्मजं तदा ॥ स्वप्नेस्मै दर्शनं दत्त्वा पुनर्वचनमब्रवीत् ॥ २ ॥ ॥ श्रीसूर्य उवाच ॥ ॥ सांबसांब महाबाहो शृणु जांबवतीसुत ॥ अलं नामसहस्रेण पठ चेमं शुभं स्तवम् ॥ ३ ॥ यानि गुह्यानि नामानि पवित्राणि शुभानि च ॥ तानि ते कीर्तयिष्यामि प्रयत्नादवधारय ॥ ४ ॥ वैकर्तनो विवस्वांश्च मार्तंडो भास्करो रविः ॥ लोकप्रकाशकः श्रीमाँल्लोकचक्षुर्ग्रहेश्वरः ॥ ५ ॥ लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा ॥ तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥ ६ ॥ गभस्तिहस्तो ब्रह्मा च सर्वदेवनमस्कृतः ॥ एकविंशतिरित्येष स्तव इष्टस्सदा मम ॥ ७ ॥ शरीरारोग्यदश्चैव धनवृद्धियशस्करः ॥ स्तवराज इति ख्यातस्त्रिषु



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोकेषु विश्रुतः ॥ ८ ॥ य एतेन महाबाहो द्वे संध्येऽस्तमनोदये ॥ स्तौति मां प्रणतो भूत्वा सर्वपापैः प्रमुच्यते ॥ ९ ॥ मानसं वाचिकं वापि कायिकं यच्च दुष्कृतम् ॥ एकजाप्येन तत्सर्वं प्रणश्यति ममाग्रतः ॥ १० ॥ एष जप्यश्च होमश्च संध्योपासनमेव च ॥ बलिमंत्रोऽर्घ्यमंत्रोथ धूपमंत्रस्तथैव च ॥ ११ ॥ अन्नप्रदाने स्नाने च प्रणिपाते प्रदक्षिणे ॥ पूजितोऽयं महामंत्रः सर्वपापहरः शुभः ॥ १२ ॥ एवमुक्त्वा स भगवान्भास्करो जगतां पतिः ॥ आमंत्र्य कृष्णतनयं तत्रैवांतर्हितोऽभवत् ॥ १३ ॥ सांबोपि स्तवराजेन स्तुत्वा सप्ताश्ववाहनम् ॥ प्रीतात्मा नीरुजः श्रीमांस्तस्माद्रोगाद्विमुक्तवान् ॥ १४ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबस्तववर्णनं नामाष्टाविंशत्युत्तरशततमोऽध्यायः ॥ ॥ १२८ ॥ ॥ सुमंतुरुवाच ॥ ॥ अथ लब्धवरः सांबो वरं प्राप्य पुरातनम् ॥ मन्यमानस्तदाश्चर्यं प्रहृष्टेनांतरात्मना ॥ १ ॥ पूर्वाभ्यासेन तेनैव सार्धमन्यैस्तपस्विभिः ॥ स्नापनार्थं नातिदूरं चंद्रभागां नदीं ययौ ॥ २ ॥ कृत्वात्ममंडलाकारं श्रद्दधानो दिनेदिने ॥ सस्नौ संचिंतयामास किं रूपं स्थापयाम्यहम् ॥ ३ ॥ स स्नातः सहसैवाथ प्रणम्य तु प्रभावतीम् ॥ उह्यमानां जलौघेन प्रतिमां संमुखीं रवेः ॥ ४ ॥ तां दृष्ट्वा तस्य वीरस्य समुत्पन्नमिदं यथा ॥ देवेन यत्तदाज्ञप्तं तदिदं नात्र संशयः ॥ ५ ॥ स तामुत्तार्य सलिलादानीय च महीपते ॥ तस्मिन्मित्रवनोद्देशे स्थापयामास तां तदा ॥ ६ ॥ निधाय प्रतिमाँल्लोके सांबस्तस्य महात्मनः ॥ मित्रं मित्रवने रम्ये स्थापयित्वा विधानतः ॥ ७ ॥ ततस्तामेव पप्रच्छ प्रणम्य प्रतिमां रवेः ॥ केनेयं निर्मिता नाथ भवतो ह्याकृतिः शुभा ॥ ८ ॥ प्रतिमा तमुवाचाथ शृणु सांब ब्रुवे स्वयम् ॥ निर्मिता येन चाप्येषा मदीया पुरुषाकृतिः ॥ ९ ॥ ममातितेजसाविष्टं रूपमासीत्पुरातनम् ॥ असह्यं सर्वभूतानां ततोऽस्म्यभ्यर्चितः सुरैः ॥ सह्यं भवतु ते रूपं सर्वप्राणभृतामिति ॥ १० ॥ ततो मया समादिष्टो विश्वकर्मा महातपाः ॥ तेजसां शातनं कुर्वन्रूपं निर्वर्तयस्व मे ॥ ११ ॥ ततस्तु मत्समादेशात्तेनैव निपुणं तदा ॥ शाकद्वीपे भ्रमिं कृत्वा रूपं निर्वर्तितं मम ॥ १२ ॥ प्रीत्या तेषां प्रपंचोऽयं स मया कारितः पुनः ॥ तेनेयं कल्पवृक्षाच्च निर्मिता विश्वकर्मणा ॥ १३ ॥ कृत्वा हिमवतः पृष्ठे पुरा सिद्धनिषेविते ॥ त्वदर्थं चंद्रभागायां ततस्तेनावतारिता ॥१४॥ भवतस्तारणार्थं हि ततः स्थानमिदं शुभम् ॥ रुचिरं सर्वदा सांब सान्निध्यं मेत्र यास्यति ॥ १५ ॥ सान्निध्यं मम पूर्वाह्णे सुतीरे द्रक्ष्यते जनैः ॥ कालप्रिये च मध्याह्नेऽपराह्णे चात्र नित्यशः ॥ १६ ॥ पूर्वाह्णे पूजयेद्ब्रह्मा मध्याह्ने चक्रधृत्स्वयम् ॥ शंकरश्चापराह्णे तु मां पूजयति सर्वदा ॥ १७ ॥ इत्युक्तोसौ भगवता भास्क

१ प्राप्यस्त—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रेण स यादवः ॥ हर्षमाप महाबाहो भास्करोंतर्दधे ततः ॥ १८ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने साम्बकृतादित्यमूर्तिस्थापनं नामैकोनत्रिंशदुत्तरशततमोऽध्यायः ॥ १२९ ॥ ॥ शतातीक उवाच ॥ ॥ कथं सांबेन विप्रेंद्र प्रतिष्ठा कारिता रवेः ॥ कस्य वा वचनात्तेन प्रासादः कारितो रवेः ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ अत्र ते वच्मि राजेंद्र यथा सांबेन धीमता ॥ प्रतिष्ठा कारिता भानोः प्रासादश्च महीपते ॥ २ ॥ सुलब्ध्वा प्रतिमां भानोश्चिंतयामास नारदम् ॥ स चापि चिंतितश्चागाद्यत्र जांबवतीसुतः ॥ ३ ॥ तमागतमभिप्रेक्ष्य नारदं मुनिसत्तमम् ॥ संपूज्य विधिवत्सांबो नारदं वाक्यमब्रवीत् ॥ ४ ॥ प्रासादं कारयेद्यस्तु भास्करस्य नरो द्विज ॥ किं फलं तस्य देवर्षे प्रतिष्ठां यश्च कारयेत् ॥ ५ ॥ ॥ नारद उवाच ॥ ॥ प्रासादं शोभने देशे यस्तु कारयते रवेः ॥ स याति नरशार्दूल सूर्यलोकं न संशयः ॥ ६ ॥ ॥ सांब उवाच ॥ ॥ कथं कुर्यादायतनं कस्मिन्देशे द्विजोत्तम[1] ॥ कीदृक्छस्तं चायतनं देवदेवस्य वै द्विज ॥ ७ ॥ ॥ ॥ नारद उवाच ॥ ॥ यत्र प्रभूतं सलिलमागमे च विनाशने ॥ देवतायतनं कुर्याद्यशोधर्मविवृद्धये ॥८॥ इष्टापूर्तेन लभते लोकांस्तांश्च[2] विभूपितान् ॥ देवानामालयं कार्यं द्वयं यत्र च दृश्यते ॥ ९ ॥ सलिलाढ्यं च आरामः कृतेष्वायतनेषु च ॥ स्थानेष्वेतेषु सान्निध्यमुपगच्छंति देवताः ॥ ॥ १० ॥ सरःसु नलिनीच्छन्ननिरस्तरविरश्मिषु ॥ हंससंक्षिप्तकह्लारवीथीविमलवारिषु ॥ ११ ॥ हंसकारंडवक्रौंचचक्रवाकविराविषु ॥ पर्यन्तविमलच्छायाविश्रांतजनचारिषु ॥ १२ ॥ क्रौंचकांचीसुलापाश्च कलहंसकलस्वनाः ॥ नद्यस्तोयांशुका यत्र शफरीकृतमेखलाः ॥ १३ ॥ फुल्लद्रुमोत्तमावासाः संगमश्रोणिमंडलाः ॥ पुलिनाद्युन्नतोरस्का रसहासाश्च निम्नगाः ॥ १४ ॥ वनोपांतनदीशैलसंस्कारोपान्तभूमिषु ॥ रमते देवता नित्यं पुरेषूद्यानवत्सु च ॥ १५ ॥ भूमयो ब्राह्मणादीनां याः प्रोक्ता वास्तुकर्मणि ॥ ता एव तेषां शस्यंते देवतायतनेष्वपि ॥ १६ ॥ चतुःषष्टिपदं कुर्याद्देवतायतनं सदा ॥ द्वारं च मध्यमं तमिन्समदिक्संप्रशस्यते ॥ १७ ॥ यो विस्तारो भवेत्तस्य द्विगुणा तत्समुन्नतिः ॥ उच्छ्रायस्तु तृतीयोथ तेन तुल्या कटिर्भवेत् ॥ १८ ॥ विस्तारार्धो भवेद्गर्भो भिन्नयोन्याः समंततः ॥ गर्भपादोनविस्तीर्णं द्वारं द्विगुणमुच्छ्रितम् ॥ १९ ॥ उच्छ्रयात्पादविस्तीर्णा शाखा तद्वदुदुंबरी ॥ विस्तरात्पादप्रतिमाद्बाहुल्यं शेषयोः स्मृतम् ॥ २० ॥ नृपंचसप्तनवभिः शाखाभिस्तत्प्रशस्यते ॥ अथ शाखाचतुर्भागे प्रतिहारौ निवेशयेत् ॥ २१ ॥ शैलमंगल्यविहगः श्रीवृक्षः स्वस्तिकैर्घटैः ॥ मानाष्टमेन[3] भागेन प्रतिमा स्यात्स

१ कस्मिन्देशे द्विजोत्तमः—इ० पा० । २ लोकांस्तांस्तान्स्वभक्तितः—इ० पा० । ३ मिथुनैर्द्वारमारभ्ये भागेन स्यात्सुपिण्डिका—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पिंडिका ॥ २२ ॥ द्विभागा प्रतिमा तत्र तृतीयो भागपिंडिका ॥ पूर्वे मेरुर्महाबाहो कैलासश्च तथापरे ॥ २३ ॥ भवंति चापरे वीर विमानच्छ दनं तथा ॥ समुद्रपद्मगरुडनंदिवर्द्धनकुञ्जराः ॥२४॥ गृहराजो वृषो हंसः सर्वतोभद्रको घटः ॥ सिंहो वृषश्चतुष्कोणः षोडशाष्टाश्रयस्तथा ॥२५॥ इत्येते विंशतिः प्रोक्ताः प्रासादा यदुनंदन ॥ यथोक्तानुक्रमेणैव लक्षणानि वदामि ते ॥ २६ ॥ नवत्रिंशदुच्छ्रितमेरुर्द्वादशभौमो विविधकुहरश्च ॥ द्वारैर्युतश्चतुर्भिर्द्वात्रिंशद्धस्तविस्तीर्णः ॥२७॥ त्रिंशद्धस्तायामो दशभौमः सप्त मंदरः ॥ शिखरयुतः कैलासोऽपि शिखरवानष्टाविंशोऽष्टभौमश्च ॥२८॥ जालगवाक्षैर्युक्तो विमानसंज्ञस्त्रिसप्तकायामः ॥ नन्दन इति वै भौमो द्वात्रिंशत्षोडशांगयुतः ॥२९॥ वृत्तः समुद्रनामा पद्माकृतिरयं चाष्टौ ॥ शृंगेणै केन भवेदेकेन च भूमिका तस्य ॥ ३० ॥ गरुडाकृतिश्च गरुडो नंदी वै षष्टिविस्तीर्णः ॥ कायश्च सप्तभौमो विभूषितोऽगैश्च सप्तविंशतिभिः ॥ ३१ ॥ कुंजर इति गजपृष्ठः षोडशहस्तोच्छ्रितो मध्ये ॥ गृहराजः षोडशकस्त्रिचक्रशाला भवेद्वलभी ॥ ३२ ॥ वृष एव भूमिशृंगो द्वादशहस्तः समुन्नतो वृत्तः ॥ हंसो हंसाकारो घटोऽष्टसहस्रकलशरूपः ॥ ३३ ॥ द्वारैर्युतश्चतुर्भिर्बहुशिखरो भवति सर्वतोभद्रः ॥ बहुरुचिरचन्द्रशालः षड्विंशद्भागभू मिश्च ॥ ३४ ॥ सिंहः सिंहाकारो द्वादशकोणोऽष्टहस्तश्च ॥ ३५ ॥ सहस्रत्रितयं चैव कथितं विश्वकर्मणा ॥ प्राहुः स्थापयतश्चात्र मतमेकं विप श्चितः ॥ ३६ ॥ कपोतपालिनीयुक्तमतो गच्छति तुल्यताम् ॥ ३७ ॥ ॥ सांब उवाच ॥ ॥ य एते कथिता विप्र प्रासादा विंशतिस्त्वया ॥ तेषां सूर्यस्य कः कार्यः प्रासादो भास्करस्य तु ॥ ३८ ॥ स्थानानि यानि चोक्तानि प्रासादस्य द्विजोत्तम ॥ तेषां त्वयोक्तं हि पुरं व्ययवद्भिर्नरैर्युतम् ॥ ३९ ॥ तस्मिन्प्रदेशे वै कार्यं भानोर्मंदिरमुत्तमम् ॥ दिशां भागे च कतमे ब्रूहि शेषं द्विजोत्तम ॥ ४० ॥ ॥ नारद उवाच ॥ पुरमध्यं समाश्रित्य कुर्यादायतनं रवेः ॥ दिशां भागेऽथ वा पूर्वे पूर्वद्वारसमीपतः ॥ ४१ ॥ भूमिं परीक्ष्य पूर्वं तु कुर्यादायतनं ततः ॥ इष्टगंधरसोपेता निम्ना भूमिः प्रशस्यते ॥ ४२ ॥ शर्करातुषकेशास्थिक्षारांगारविवर्जिता ॥ मेघदुंदुभिनिर्घोषा सर्वबीजप्ररोहिणी ॥ ४३ ॥ शुक्ला रक्ता तथा पीता कृष्णा च कथिता क्षितिः ॥ द्विजराजन्यवैश्यानां शूद्राणां च यथाक्रमम् ॥ ४४ ॥ परीक्षितायां तस्यां तु मध्ये तस्याः प्रमाणतः ॥ उपलिप्य चतुर्हस्तं चतुरस्रं समंततः ॥ ४५ ॥ हस्तमात्रमधः कृत्वा मध्ये तस्या दशांगुलम् ॥ गर्तमुत्कीर्य तेनैव पांसुना प्रतिपूरयेत् ॥ ४६ ॥ समे समगुणा ज्ञेया हीने हीनगुणा भवेत् ॥ वर्धमाने तु वै पांसौ भवेद्वृद्धिकरी क्षितिः ॥ ४७ ॥ नित्यं संसु

१ निर्घोष मे–इ० पा० । २ सिंहाक्रान्तः–इ० पा० । ३ महत्–इ० पा० । ४ त्रिधा–इ० पा० । ५ हस्तमात्रम्–इ० पा० । ६ परिपूरयेत्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

खमर्कस्य कदाचित्पश्चिमामुखम् ॥ स्थापनीयं गृहं सम्यक्प्राङ्मुखस्थानकल्पनात् ॥ ४८ ॥ भवनाद्दक्षिणे पार्श्वे रवेः स्नानगृहं भवेत् ॥ अग्निहोत्र गृहं कार्यं रवेरुत्तरतः शुभम् ॥ उदङ्मुखं भवेच्छंभोर्मातॄणां गृहमेव च ॥ ४९ ॥ ब्रह्मा पश्चिमतः स्थाप्यो विष्णुरुत्तरतस्तथा ॥ निंबस्तु दक्षिणे पार्श्वे वामे राज्ञी प्रकीर्तिता ॥ ५० ॥ पिंगलो पक्षिणे भानोर्वामतो दंडनायकः ॥ श्रीमहाश्वेतयोः स्थानं पुरतस्त्वंशुमालिनः ॥ ५१ ॥ ततः स्था प्याश्विनोः स्थानं पूर्वदेवगृहाद्बहिः ॥ द्वितीयायां तु कक्षायां राज्ञास्त्रौषौव्यवस्थितौ ॥ ५२ ॥ तृतीयायां तु कक्षायां स्थितौ कल्माषपक्षिणौ ॥ जंडकामचरौ स्थाप्यौ दक्षिणां दिशमाश्रितौ ॥५३॥ उदीच्यां स्थापनीयस्तु कुबेरो लोकपूजितः ॥ उत्तरेण ततस्तस्य रेवतः सविनायकः॥५४॥ यत्र वा विद्यते स्थानं दिक्षु सर्वा गृहादयः ॥ द्वे मण्डलेऽर्घ्यदानार्थं कार्ये सव्यापसव्यतः ॥ ५५ ॥ दद्यादुदयवेलायामर्घं सूर्याय दक्षिणे ॥ उत्तरे मण्डले दद्यादर्घ्यमस्तमने रवेः ॥ ५६ ॥ चक्राकृतां तथान्यस्मिन्देवस्य प्रतिमां रवेः ॥ स्थापयेद्विधिवद्वीर चतुर्भिः कलशैः शुभैः ॥५७॥ नाना तूर्यनिनादैश्च शंखशब्दैश्च पुष्कलैः ॥ तृतीये मंडले ह्येवं पूजनीयो दिवाकरः ॥ ५८ ॥ चतुरस्रं चतुःशृंगं व्योम देवगृहाग्रतः ॥ प्रतिमायास्तु सूत्रेण कार्यं मध्येऽस्य मंडलम् ॥ ५९ ॥ दिंडी स्थाप्यः पुरस्तस्मादादित्याभिमुखः स्थितः ॥ यदेतत्कथितं व्योम सर्वदेवमयं मया॥६०॥मध्याह्ने तस्य दातव्यमर्घ्यमत्र यदूत्तम ॥ अथ वा मंडलं चान्यत्तृतीयं चक्रसंमितम् ॥६१॥ स्थापयित्वा तु देवेशं दातव्योऽर्घः सुपण्डितैः ॥ देवस्य पुरतः कार्यं व्योमस्थानं समीपतः ॥ पुस्तकवाचनस्थानमथ वा यत्र रोचते ॥६२॥ एष स्थानविधिः प्रोक्तो देवतानां यथाक्रमम् ॥ गृहराज्ञोथ रुद्रस्तु द्रावेतौ भास्करप्रियौ ॥६३॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने प्रासादलक्षणवर्णनं नाम त्रिंशदुत्तरशततमोऽध्यायः ॥१३०॥ ॥छ॥ ॥ नारद उवाच ॥ ॥ अथ ते संप्रवक्ष्यामि प्रतिमाविधिविस्तरम् ॥ सर्वेषामेव देवानामादित्यस्य विशेषतः ॥१॥ अर्चा सप्तविधा प्रोक्ता भक्तानां शुभवृद्धये ॥ कांचनी राजती ताम्री पार्थिवी शैलजा स्मृता ॥ २ ॥ वार्क्षी चालेख्यका चेति मूर्तिस्थानानि सप्त वै ॥ वार्क्षीविधानं ते वीर वर्णयिष्याम्यशेषतः ॥ ३ ॥ कर्त्रनुकूले दिवसे संवत्सरविशोधिते ॥ शुभैर्निमित्तैः शकुनैः प्रस्थानैश्च वनं विशेत् ॥ ४ ॥ क्षीरिणो वर्जिताः सर्वे दुर्बलास्ते स्वभावतः ॥ चतुष्पथेषु न ग्राह्या ये च पुत्रकवृक्षकाः ॥ ५ ॥ देवतायतनस्था ये तथा

१ तथा–इ० पा० । २ निम्बं श्रीपर्णवृक्षश्च वामे राज्ञो प्रवर्तिता–इ० पा० । ३ पार्श्वे–इ० पा० । ४ जानुकामाचरौ–इ० पा० । ५ सह–इ० पा० । ६ गीतशब्दैः–इ० पा० । ७ अत्र–इ० पा० । ८ चक्रसंज्ञितम्–इ० पा० । ९ प्रतिमा सप्तधा प्रोक्ता–इ० पा० । १० पुत्रकवृक्षकाः–नवविरूढाः–बालवृक्षा इत्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वल्मीकसंभवाः ॥ उत्कीर्णा देवता येषु चैत्यवृक्षाश्च ये स्मृताः ॥ ६ ॥ श्मशानभूमिजा ये च पक्षिणां निलयाश्च ये ॥ सकोटराश्च ये वृक्षाः शुष्काग्रा ये च पादपाः ॥ ७ ॥ शस्त्रेण निहता ये च कुञ्जराशास्तथा कृताः ॥ सामाद्याः सरुजोऽधश्च व्याधिनश्च तथैव च ॥ ८ ॥ अकाले पुष्पिता ये च काले ते च विवर्जिताः ॥ शीर्णपर्णाश्च तरवो रक्षोध्वांक्षनिषेविताः ॥ एकशाखातिशाखाश्च त्रिशाखाश्च तथाधमाः ॥ ९ ॥ मधूको देवदारुश्च वृक्षराजश्च चन्दनः ॥ बिल्वश्चाम्रातकश्चैव खदिरोथाञ्जनस्तथा ॥ १० ॥ निम्बः श्रीपर्णवृक्षश्च पनसः सरलोऽर्ज्जुनः ॥ रक्त चन्दनपर्यन्ताः श्रेष्ठाः स्युः प्रतिमाद्रुमाः ॥ ११ ॥ वर्णानामानुपूर्व्येण द्वौ द्वौ वृक्षौ प्रकीर्तितौ ॥ निंबाद्याः सर्ववर्णानां वृक्षाः साधारणाः स्मृताः ॥ १२ ॥ कथ्यमानान्विशेषेण शृणु वीर तथापरान् ॥ सुरदारुः शमी चैव मधूकश्चन्दनस्तथा ॥ एते वै तरवस्तात ब्राह्मणानां शुभाः स्मृताः ॥ १३ ॥ क्षत्रस्य च तथारिष्टः खदिरस्तिंदुकस्तथा ॥ अश्वत्थश्च तथा सांब द्रुमः करकतः शुभः ॥ १४ ॥ वैश्यानां तद्वदेव स्युः खदिरश्चंदनस्तथा ॥ पुण्याश्च तरवश्चैते शुभदास्तु तथैव च ॥ १५ ॥ केसरः सर्जकश्चाम्रः शालवृक्षस्तथेतरः ॥ एते वै तरवः पुण्याः शूद्राणां शुभदायकाः ॥ १६ ॥ लिङ्गं च प्रतिमां चैवमवस्थाप्य यथाविधि ॥ वृक्षं चाभिमतं गत्वा पूजयेद्बलिपुष्पकैः ॥ १७ ॥ शुचौ देशे विविक्ते च केशांगारविवर्जिते ॥ प्रागुदक्प्रवणे देशे लोककष्टविवर्जिते ॥ १८ ॥ विस्तीर्णस्कन्धविटपः पत्रवानृजुवृद्धिगः ॥ आतंकहीनोविवशः सत्त्व कपर्णः शुभस्तथा ॥ १९ ॥ स्वेनैव पतिता ये च हस्तिभिः पातितास्तथा ॥ शुष्काश्च वह्निदग्धाश्च पक्षिभिश्चापि वर्जिताः ॥ २० ॥ तरवो वर्जनीयाश्च ग्रहीतव्याः शुभा द्रुमाः ॥ स्निग्धरूपाः सपर्णाश्च सपुष्पाः सफलास्तथा ॥ २१ ॥ तेषां तु ग्रहणं चाष्टमासेषु कार्त्तिकादिषु ॥ भूत्वा शुभ दिने चैव सोपवासोधिवासयेत् ॥ २२ ॥ समन्तादुपलिप्याथ तस्याधस्ताद्वसुन्धराम् ॥ गायत्र्या परिपूतेन परितः प्रोक्ष्य वारिणा ॥ २३ ॥ शुक्ले च परिधूते च परिधाय च वाससी ॥ पूजयेद्गन्धमाल्यैश्च सधूपबलिकर्मभिः ॥ २४ ॥ ततः कुशैः परिस्तीर्णे हुत्वाग्नौ तस्य चांतिके ॥ देवदारुस मिद्भिश्च मन्त्रेणानेन तत्त्ववित् ॥ २५ ॥ ॐ भूर्भुवः सुवरिति ततो वृक्षं च पूजयेत् ॥ ॐ प्रजापतये सत्यसदाय नित्यं श्रेष्ठांतरात्मन्त्सचराचरात्मन् ॥ सान्निध्यमस्मिन्कुरु देव वृक्षे सूर्यावृतं मण्डलमाविशेश्च नमः ॥ २६ ॥ ॥ नारद उवाच ॥ ॥ एवं संपूजयित्वा तु वाक्यैस्तं परिसांत्वयन् ॥ वृक्षलोकस्य शांत्यर्थं गच्छ देवालयं शुभम् ॥ २७ ॥ देव त्वं स्थास्यसे तत्र च्छेददाहविवर्जितः ॥ काले धूपप्रदानेन सपुष्पैर्बलिकर्म

१ नापरिगृहं च–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिः ॥ २८ ॥ लोकास्त्वां पूजयिष्यंति ततो यास्यसि निर्वृतिम् ॥ वृक्षमूले कुठारं तु धूपमाल्यैः प्रपूज्य च ॥ २९ ॥ पूर्वतस्तु शिरः कृत्वा स्थापनीयः प्रयत्नतः ॥ परमान्नमोदकौदनपलपूपिकादिभिर्भक्ष्यैः ॥ ३० ॥ मद्यैः कुसुमैर्धूपैर्गन्धैश्च तरुं समभ्यर्च्य ॥ सुरपितृपिशाचराक्षसभुजङ्गसुरगणविनायकाद्यानाम् ॥ ३१ ॥ कृत्वा पूजां रात्रौ वृक्षं संस्पृश्य च ब्रूयात् ॥ ३२ ॥ अर्चासु देवदेव त्वं देवैश्च परिकल्पितः ॥ नमस्ते वृक्ष पूजेयं विधिवत्परिगृह्यताम् ॥३३॥ यानीह भूतानि वसंति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम् ॥ अन्यत्र वासं परिकल्पयंतु क्षमन्तु ते चाद्य नमोऽस्तु तेभ्यः ॥ ३४ ॥ प्रभातायां तु शर्वर्यां पुनः संपूज्य तं नगम् ॥ ब्राह्मणेभ्यस्ततो दत्त्वा भोजकेभ्यश्च दक्षिणाम् ॥ छिन्द्याद्वनस्पतींस्तज्ज्ञैस्तैः कृतस्वस्तिवाचनैः ॥ ३५ ॥ पूर्वस्यां दिशि पातोऽस्य ऐशान्यां चापि यो भवेत् ॥ अथ वा उत्तरस्यां तु तथा छिन्द्यात्तु नान्यथा ॥ ३६ ॥ ऐन्द्रैशान्योरुदीच्यां च पातस्तिसृषु शस्यते ॥ नैर्ऋत्याग्नेययाम्यासु दिक्षु पातो न शोभनः ॥ वायव्यां चैव वारुण्यां तस्य पातस्तु मध्यमः ॥ ३७ ॥ यस्य बाह्यस्थिता शाखा दिक्षु नद्या चतसृषु ॥ वास्तुपूर्वं ततः स्थित्वा ततः पश्चादवस्थिता ॥ ३८ ॥ अविलग्नमशब्दं तु पतनं तु प्रशस्यते ॥ उत्पद्येद्द्विदलं यस्य द्रावश्च मधुरो भवेत् ॥ ३९ ॥ सर्पिस्तैलं क्षरेद्यस्य पादपं तं विवर्जयेत् ॥ शुभदं यदुशार्दूल शृणु त्वं कथये शुचि ॥ ४० ॥ वृक्षं प्रभाते सलिलैर्निषिक्तं पूर्वोत्तरस्यां दिशि संनिकृत्य ॥ मध्वाज्यदिग्धेन कुठारकेण प्रदक्षिणं शोपमभिप्रहण्यात् ॥ ४१ ॥ पूर्वोत्तरेऽप्युत्तरदिग्विभागे पातो यदा वृद्धिकरस्तदा स्यात् ॥ आग्नेयकोणक्रमशोऽग्निदाह उग्रोग्ररोगाः सुधनक्षयश्च ॥४२॥ गारुडे दिशि पाषाणं कपोतो गृहगोधिका ॥ सितवर्णं जलं ज्ञेयमंगुष्ठाभं भवेत्क्रमिः ॥ दोषैरेतैर्विनिर्मुक्तं मुदा कालं समुद्धरेत् ॥ ४३ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे दारुपरीक्षावर्णनं नामैकत्रिंशदुत्तरशततमोऽध्यायः ॥ १३१ ॥ नारद उवाच ॥ हंत ते सर्वदेवानां प्रतिमालक्षणं परम् ॥ वच्मि ते यदुशार्दूल आदित्यस्य विशेषतः ॥ १ ॥ एकहस्ता द्विहस्ता वा त्रिहस्ता वा प्रमाणतः ॥ तथा सार्द्धत्रिहस्ता च सवितुः प्रतिमा शुभा ॥ २ ॥ प्रासादाद्द्वारतो वापि प्रमाणं च प्रकल्पितम् ॥ तद्वत्प्रमाणं कर्तव्यं सततं शुभमिच्छता ॥ ३ ॥ एकहस्ता भवेत्सौम्या द्विहस्ता धनधान्यदा ॥ त्रिहस्ता प्रतिमा भानोः सर्वकामप्रदा स्मृता ॥ ४ ॥ सार्धत्रिहस्ता प्रतिमा सुभिक्षक्षेमकारिणी ॥ अग्रे मध्ये च मूले च प्रतिमा सर्वतः समा ॥ गांधर्वी सा तु विज्ञेया धनधान्यावहा स्मृता ॥ ५ ॥ देवागारस्य यद्द्वारं तस्मादष्टांशमुद्यता ॥ त्रिभागैः पिंडिका कार्या द्वौ

१ तुंगं यथा तथा--इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भागौ प्रतिमा भवेत् ॥ ६ ॥ अंगुलैश्च तथा मूर्तिश्चतुरशीतिसंमितैः ॥ विस्तारायामतः कार्या वदनं द्वादशांगुलम् ॥ ७ ॥ मुखात्त्रिभागैश्चि बुकं ललाटं नासिका तथा ॥ कर्णौ नासिकया तुल्यौ पादौ चानियतौ तयोः ॥ ८ ॥ नयने द्व्यंगुले स्यातां त्रिभागा तारका भवेत् ॥ तृतीयतार काभागात्कुर्याद्दृष्टिं विचक्षणः ॥ ९ ॥ ललाटमस्तकोत्सेधं कुर्यात्तत्सममेव च ॥ परिणाहस्तु शिरसो भवेद्द्वाविंशदंगुलः ॥ १० ॥ तुल्या नासि कया ग्रीवा मुखेन हृदयांतरम् ॥ मुखमात्रा भवेन्नाभिस्ततो मेढ्रमनन्तरम् ॥ मुखविस्तारणमुरस्ततोऽर्द्धं तु कटिः स्मृता ॥ ११ ॥ बाहू प्रबाहतु ल्यौ तु ऊरू जंघे च तत्समे ॥ गुल्फाधस्ताच्च पादः स्यादुच्छ्रितश्चतुरंगुलः ॥ १२ ॥ षडंगुलसुविस्तारस्तस्यांगुष्ठांगुलत्रयम् ॥ प्रदेशिनी च तत्तुल्या हीना शेषा नखैर्युताः ॥१३॥ चतुर्दशांगुलः पाद आयामात्परिकीर्तितः ॥ एवंलक्षणसंयुक्ता प्रतिमार्च्या भवेत्सदा ॥१४॥ अंसौ हरेस्तथै वोरू ललाटं च सनासिकम् ॥ नियते नयने गंडौ मूर्तेः कुर्यात्समुन्नते ॥ १५ ॥ विशालधवलावामपक्ष्मलायतलोचने ॥ सस्मिताननपद्मस्य चारुबिंबाधरस्तथा ॥ १६ ॥ रत्नप्रोद्भासिमुकुटकटकांगदहारवान् ॥ अव्यंगपदमध्यादिसमायोगोऽपि शोभितः ॥१७॥ सुप्रभो मंडलश्चारुर्विचित्र मणिकुंडलः ॥ कराभ्यां कांचनीं मालां प्रोद्वहन्ससरोरुहाम् ॥ १८ ॥ एवं लक्षणसंयुक्तां कारयेदीहितप्रदाम् ॥ प्रजाभ्यश्च सदा भानुः शिवारोग्या भयप्रदः ॥ १९ ॥ अल्पांगायां नृपभयं हीनांगायामकल्पता ॥ खातोदर्यां च क्षुत्पीडा कृशायां तु दरिद्रता ॥ २० ॥ सक्षतायां भयं शस्त्रात्स्फुटिता मृत्युकारिणी ॥ दक्षिणावनतायां तु शश्वदायुःक्षयो भवेत् ॥ २१ ॥ उत्तरावनतायां तु वियोगो भवति ध्रुवम् ॥ नालोक्या नाप्यनालोक्या रक्ष्या मूर्तिः प्रशस्यते ॥ २२ ॥ तस्माद्भास्करभक्तेन लोकद्वयहितैषिणा ॥ तन्मूर्तेश्चादरः कार्यस्तदधीनास्तु संपदः ॥ २३ ॥ शिरोरुगंडवदनैः सर्वांगा वयवैस्तथा ॥ एवंलक्षणसंपूर्णा प्रतिमा भवते शुभा ॥२४॥ नासाललाटजंघोरुदंडवक्षोभिरन्विता ॥ कुर्यादादित्यवेषं तु गूढपादोदरं तथा ॥ २५ ॥ कमलोदरकांतिनिभः कंचुकगुप्तः प्रसन्नमुखः ॥ रक्तोत्पलप्रभामंडलश्च कर्तुः शुभं करोत्यर्कः ॥२६॥ कुंडलभूषितवदनः प्रलंबहारोऽपि गूढवृत्तः ॥ नृपतिभयं व्यंगायां हीनांगायामकल्पना कर्तुः ॥ २७ ॥ खातोदर्यां क्षुद्भयमर्थविनाशः कृशांगायाम् ॥ मरणं तु सक्षतायां शस्त्रनिपातेन निर्दिशे त्कर्तुः ॥२८॥ वामोन्नता तु पत्नीं दक्षिणावनता हिनस्त्यायुः ॥ अंधत्वमूर्द्ध्वदृष्टिः करोति चिंतामधोमुखी दृष्टिः ॥२९॥ सर्वप्रतिमास्वेवं शुभाशुभं भास्करेणोक्तम् ॥ ब्रह्मा कमंडलुकरश्चतुर्मुखः पंकजस्थश्च ॥ ३० ॥ स्कंदः कुमाररूपः शक्तिधरो बर्हिकेतुश्च ॥ शुक्लश्चतुर्विषाणो द्विपो महेंद्रस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वज्रपाणित्वम् ॥ ३१ ॥ तिर्यगूर्ध्वललाटसंस्थं तृतीयमपि लोचनं चिह्नम् ॥ ३२ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने श्रीसूर्यप्रतिमालक्षणवर्णनं नाम द्वात्रिंशदुत्तरशततमोऽध्यायः ॥ १३२ ॥ छ ॥ ॥ ॥ नारद उवाच ॥ ॥ ततोऽधिवासनं कुर्याद्विधिदृष्टेन कर्मणा ॥ ऐशान्यां दिशि वै कुर्यादधिवासनमंडपम् ॥ १ ॥ चतुस्तोरणसंपन्नं सर्वाभरणसंयुतम् ॥ दिशासु विदिशास्वेव पताकाभिस्तु भूपितम् ॥ २ ॥ आग्नेय्यां दिशि रक्ताः स्युः कृष्णाः स्युर्याम्यनैर्ऋते ॥ श्वेता दिश्यपरस्यां तु वायव्यामेव पांडुरा ॥ ३ ॥ चित्रा चोत्तरपार्श्वे तु पीता पूर्वोत्तरे तथा ॥ श्रियमायुर्जयं चैव बलं यशो यदूत्तम ॥४॥ ददाति सा वीर कृता संपदर्थे न संशयः ॥ हिताय सर्वलोकानां मृन्मयी प्रतिमा भवेत् ॥ ५ ॥ सुभिक्षक्षेमदा नित्यं सर्वा मणिमयी कृता ॥ गांगेयी[1] पुष्टिदा स्याद्वै रौप्या कीर्तिप्रवर्तिनी ॥ ६ ॥ प्रजावृद्धिं ताम्रमयी कुर्यान्नित्यमसंशयः ॥ भूमेर्लाभं तु विपुलं कुर्यादश्ममयी सदा ॥ ७ ॥ प्रधानपुरुषं हंति त्रपुलोहमयी सदा ॥ सर्वदेवमयस्यैवमर्चां कुर्यात्प्रयत्नतः ॥ ८ ॥ ॥ सांब उवाच ॥ ॥ सर्वदेवमयत्वं हि ब्रूहि मे भास्करस्य तु ॥ सर्वदेवमयो ह्येष कथं नारद कथ्यते ॥ ९ ॥ ॥ नारद उवाच ॥ ॥ साधु सांब महाबाहो शृणु मे परमं वचः ॥ बुधसोमौ स्मृतौ नेत्रे ललाटे चेश्वरः स्थितः ॥ १० ॥ सुरज्येष्ठः शिरस्तस्य कपालेऽस्य बृहस्पतिः ॥ एकादश तथा रुद्राः कंण्ठमस्य[2] समाश्रिताः ॥ ११ ॥ नक्षत्राणि ग्रहाश्चैव दशनेषु समाश्रिताः ॥ धर्माधर्मौ च देवस्य ओष्ठसंपुटके स्थितौ ॥१२॥ सर्वशास्त्रमयी देवी जिह्वायां च सरस्वती ॥ दिशश्च विदिशश्चैव सर्वाः श्रोत्रेषु संस्थिताः ॥ १३ ॥ ब्रह्मेन्द्रौ तालुदेशे तु स्थितौ देवैश्च पूजितौ ॥ आदित्या द्वादश विभोर्भ्रुवोर्मध्ये समाश्रिताः ॥ १४ ॥ ऋषयो रोमकूपेषु समुद्रा जठरे स्थिताः ॥ यक्षकिन्नरगन्धर्वाः पिशाचा दानवास्तथा ॥ १५ ॥ राक्षसाश्च गणाः सर्वे हृदये स्युः स्थिता रवेः ॥ नद्यो बाहुगताश्चैव नगाः कक्षांतरे स्थिताः ॥ १६ ॥ पृष्ठमध्ये स्थितो मेरुः स्तनयोरंतरे कुजः ॥ तस्य पुत्रो धर्मराजः स्थितो वै नाभिमण्डले ॥ १७ ॥ कटिदेशे पृथिव्याद्या लिंगे सृष्टिः समाश्रिता ॥ जानुनी चाश्विनीदेवावूरू तस्याचलाः स्मृताः ॥ १८ ॥ सप्त पातालोकास्तु नखमध्ये समाश्रिताः ॥ससागरवना पृथ्वी पादमध्येस्य वर्तते ॥ १९ ॥ देवः कालाग्निरुद्रो यो दन्तान्तेषु समाश्रितः ॥ सर्वदेवमयो भानुः सर्वदेवात्मकस्तथा ॥ २० ॥ व्यंगेषु वायवश्चैव लोकालोकं चराचरम् ॥ व्याप्तं कर्मशरीरेण वायुना तस्य वै विभोः ॥ २१ ॥ स एष भगवानर्को भूतानुग्रहणे स्थितः ॥ एतत्ते परमं ज्ञानमेतत्ते परमं पदम् ॥ २२ ॥ तस्य स्थान



१ काञ्चनी । २ कण्ठमध्ये-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विभागेन प्रतिमास्थापनं यथा ॥ तत्ते सर्वं प्रवक्ष्यामि यथोक्तं ब्रह्मणा पुरा ॥ २३ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने प्रतिमाप्रतिष्ठाकल्पे विश्वरूपवर्णनं नाम त्रयस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३३ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ प्रतिपच्च द्वितीया च चतुर्थी पंचमी तथा ॥ दशमी त्रयोदशी चैव पौर्णमासी च कीर्तिता ॥ १ ॥ सोमो बृहस्पतिश्चैव शुक्रश्चैव बुधस्तथा ॥ एते सौम्या ग्रहाः प्रोक्ताः प्रतिष्ठायज्ञकर्मणि ॥ २ ॥ त्रिपूत्तरासु रेवत्यामश्विन्यां ब्राह्मभे तथा ॥ पुनर्वस्वोस्तथा हस्ते वासवे श्रवणेथ वा ॥ भरण्यां चैव नक्षत्रे भानोः स्थापनमुत्तमम ॥ ३ ॥ शोधयित्वा तु वै भूमिं तुपकेशविवर्जिताम् ॥ वालुकांगारपाषाणास्थिविहीनां विशोध्य तु ॥ ४ ॥ चतुर्हस्त समायुक्ता वेदी विस्तरतो रवेः ॥ ५ ॥ मंडपस्तु प्रमाणेन दशहस्तः समंततः ॥ मंडलं वृक्षशाखाभिः कारयेद्विधिपूर्वकम् ॥ ६ ॥ नदीसंगमतीरेत्थां मृत्तिकां च समानयेत् ॥ उपलिप्य ततो भूमिं कारयेत्कुण्डमुत्तमम् ॥ ७ ॥ चतुरस्रं श्रिया युक्तं पूर्वं कुण्डं तु कारयेत् ॥ दक्षिणे चार्धचन्द्रं स्याद्वारुण्यां दिशि वर्तुलम् ॥ ८ ॥ पद्माकारं तु वै कुर्यादुत्तरे च विचक्षणः ॥ तोरणानि ततः कुर्यात्पञ्चहस्तानि सुव्रत ॥ ९ ॥ न्यग्रोधोदुम्बरौ चैव बिल्वपालाशमेव च ॥ अश्वत्थश्च शमी चैव चन्दनश्चेति कीर्तिताः ॥ १० ॥ शुक्लवस्त्रसमायुक्तश्चित्रपट्टसमन्वितः ॥ जपमालान्वितः कुर्यात्तोरणानि विचक्षणः ॥ ११ ॥ अग्निमीळेति मंत्रेण यजेद्वै पूर्वतोरणम् ॥ इषेत्वोर्जेति मंत्रेण यजेद्दक्षिणतोरणम् ॥ १२ ॥ अग्न आयाहीति मंत्रेण पश्चिमं तु समर्चयेत् ॥ शं नो देवीति मंत्रेण यजेदुत्तरतोरणम् ॥ १३ ॥ कलशांस्तु समादाय हेमगर्भसमन्वितान् ॥ श्वेतचन्दनपंकेन कण्ठस्वस्तिकभूषणान् ॥ १४ ॥ यवशालिशरावाग्रवस्त्रालंकारविग्रहान् ॥ आजिघ्रेति च मंत्रेण कलशांस्तु निवेशयेत् ॥ १५ ॥ दुकूलैश्चित्रपट्टैश्च वेष्टयेत्स्तम्भमालिकाम् ॥ ध्वजादर्शपताकाभिश्चामरैस्तु वितानकैः ॥ १६ ॥ शंखघण्टानिनादैश्च गेयमंगलवाचनैः ॥ तूर्यभेरीनिनादैश्च वेदध्वनिसमन्वितैः ॥ १७ ॥ पुण्यैश्च जयशब्दैश्च कारयेत महोत्सवम् ॥ पताकाभिर्विचित्राभिः पूजामाल्योपशोभितम् ॥ १८ ॥ विचित्रस्रग्वितानाढ्यं प्रकीर्णकुसुमांकुरम् ॥ तन्मध्ये तु कुशास्तीर्णे देवार्चां स्थापयेद् बुधः ॥ १९ ॥ पताकां पीतवर्णां तु पूर्वे शक्राय दापयेत् ॥ आग्नेय्यां रक्तवर्णाभां यमाशायां यमोपमाम् ॥ २० ॥ नीलांजनसमप्रख्यां नैर्ऋत्यां च प्रदापयेत् ॥ वारुण्यां सितवर्णां च कृष्णां वायव्यगो

१ पुष्पेण—इ० पा० । २ रवेः—इ० पा० । ३ मंवत्—इ० पा० । ४ वासवां च—इ० पा० । ५ उत्तरेण—इ० पा० । ६ तान्सुमंगल्यम्—इ० पा० । ७ अग्नये इत्यर्थः । ८ याम्यायां यमर्क्षनिभाम्—इ० पा० । ९ यमोपमां कृष्णाम् । यमायेति शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चरे ॥ २१ ॥ हरितां यक्षराजाय ऐशान्यां सर्ववर्णिकाम् ॥ श्वेतरक्तकचूर्णेन पद्ममालेखयेत्ततः ॥ २२ ॥ वेद्या वेदीति मंत्रेण वेद्या आलभनं भवेत् ॥ पूर्वाग्रानुत्तराग्रांश्च कुशानास्तीर्य यत्नतः ॥ २३ ॥ योगेयोगेति मंत्रेण कुशैश्चास्तरणं भवेत् ॥ शय्या तत्रैव कर्तव्या दिव्या स्तरणसंयुता ॥ २४ ॥ गडुके द्वे विचित्रे तु तन्मध्ये स्थापयेद्बुधः ॥ विचित्रदीपमालाभिर्भक्ष्यभोज्यान्नपानकैः ॥ २५ ॥ पूपकान्सुविचित्रान्वै मोदकांश्च प्रदापयेत् ॥ पायसं कृशरं चैव दध्योदनसमन्वितम् ॥ २६ ॥ दधि चन्द्रसमप्रख्यं शुभच्छत्रं च विन्यसेत् ॥ २७ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने सूर्यप्रतिष्ठायां मंडलविधिवर्णनं नाम चतुस्त्रिंशदुत्तरशततमोऽध्यायः ॥१३४ ॥छ॥

॥ ॥ नारद उवाच ॥ ॥ अतः परं प्रवक्ष्यामि स्नानकर्मविधिं तव ॥ स्नापकस्तु महाप्राज्ञो ब्राह्मणो वेदपारगः ॥१॥ अभिज्ञः सौरशास्त्राणाम रुणो यदुसत्तम ॥ भोजको भोजकैश्चान्यैर्ब्राह्मणैश्च तथा वृतः ॥ २ ॥ दिशाभागे मंडलस्य ईशाने वै यथाक्रमम् ॥ हस्तमात्रप्रमाणं तु भद्रपीठं तु विन्यसेत् ॥ ३ ॥ हस्तिना शकटेनापि भक्त्या ब्रह्मरथेन च ॥ मंगलैर्ब्रह्मघोषैश्च देवं प्रासादमानयेत् ॥ ४ ॥ भद्रपीठं समादाय भद्रं कर्णेति मंत्रतः ॥ सूत्रधारस्तथा प्रोक्तः शुक्लांबरधरः शुचिः ॥ ५ ॥ स्नापयेत्कलशं गृह्य देवदेवं विभावसुम् ॥ सासुद्रं तोयमाहृत्य जाह्नवं यामुनं तथा ॥ ॥ ६ ॥ सारस्वतं जलं पुण्यं चांद्रभागं ससैंधवम् ॥ पुष्करस्य जलं श्रेष्ठं गिरिप्रस्रवणोदकम् ॥ ७ ॥ अन्यद्वापि शुचि तोयं नदीनदतडागजम् ॥ यथाशक्त्या उपाहृत्य कलशैः कांचनादिभिः ॥ ८ ॥ भोजकाश्चाष्टभिः सूर्यं कलशैः स्नापयंति वै ॥ ततस्तु मणिरत्नानि सर्वबीजौषधीस्तथा ॥ ९ ॥ सुगंधीनि च माल्यानि स्थलजान्यंबुजानि च ॥ चंदनानि च मुख्यानि गंधाश्च विविधास्तथा ॥ १० ॥ ब्राह्मी सुवर्चला मुस्ता विष्णुक्रान्ता शतावरी ॥ दूर्वा च शिखिपुष्पी च प्रियंगू रजनी वचा ॥ ११ ॥ संभृत्यैतांस्तु संभारान्स्नानकर्मविभागवित् ॥ बलाश्वत्थशिरीषाणां पल्लवैः कुशसंयुतैः ॥ १२ ॥ कलशोपरि विन्यस्य दद्यादर्घ्यं रवेः सदा ॥ कांचनै राजतैस्ताम्रैर्मृन्मयैः कलशैस्तथा ॥ १३ ॥ साक्षतैः सहिरण्यैश्च सर्वौषधिसमन्वितैः॥गायत्र्या परिपूतैस्तु षोडशैः स्नापयेद्रविम् ॥१४॥ कुशोत्तरां ततः कृत्वा वेदिं पक्वेष्टकामयीम्॥तस्यां वेद्यां समारोप्य परिधाप्य च वाससी ॥ १५ ॥ प्रतिमामभिषिंचेच्च सोपवासः प्रयत्नतः ॥ मूर्ध्नि सर्वौषधीः कृत्वा तथैवामलकानि च ॥ १६ ॥ मंत्रेण मृत्तिकां चापि मंत्रतश्च जलं तथा ॥ त्वं देवी वंदिता देवैः सकलैर्दैत्यदानवैः ॥ १७ ॥ तेन संस्थापिता मूर्ध्नि मया देवस्य शुद्धये ॥ आदिस्त्वं सर्वभूतानां

१ यदि नुवतः—इ० पा० । २ चतुरस्राम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवतानां च सर्वथा ॥ १८ ॥ रसानां पतये तुभ्यमाह्वानं च कृतं मया ॥ इत्थं पौराणिकैर्मंत्रैर्वैदिकैश्च विशेषतः ॥ १९ ॥ कार्यं [1] वारुणं स्नानं देवस्य यदुनंदन ॥ इत्थमुच्चारयेद्वाचं कुर्यात्स्नानं विचक्षणः ॥ २० ॥ देवास्त्वामभिषिंचंतु ब्रह्मविष्णुशिवादयः ॥ व्योमगंगा च पूर्णेन द्वितीयकलशेन तु ॥ २१ ॥ सारस्वतस्य पूर्णेन कलशेन सुरोत्तम ॥ शक्रादयोभिषिंचंतु लोकपालाः सुरोत्तमाः ॥ २२ ॥ सागरोदकपूर्णेन चतुर्थकलशेन तु ॥ वारिणा परिपूर्णेन पद्मपत्रसुगंधिना ॥ २३ ॥ पंचमेनाभिषिंचंतु नागाश्च कलशेन तु ॥ हिमवद्धेमकूटाद्याश्चाभिषिंचंतु वारिणा ॥ २४ ॥ नैर्ऋतोदकपूर्णेन षष्ठेन कलशेन तु ॥ सर्वतीर्थांबुपूर्णेन पद्मरेणुसुवासिना ॥ २५ ॥ सप्तमेनाभिषिंचंतु ऋषयः सप्त ये वराः ॥ वसवश्चाभिषिंचंतु कलशेनाष्टमेन वै ॥ २६ ॥ अष्टमंगलयुक्तेन देवदेव नमोऽस्तु ते ॥ ततो वै कलशैर्दिव्यैः स्नानकर्म समारभेत् ॥ २७ ॥ समुद्रं गच्छ यः प्रोक्तो मंत्रमेतमुदीरयेत् ॥ हिरण्यगर्भेति च यो मन्त्रस्तं समुदीरयेत् ॥२८॥ समुद्रज्येष्ठेति मंत्रेण क्षालयेन्मृत्तिकान्वितम् ॥ सिनीवालीति मंत्रेण दद्याद्वल्मीकमृत्तिकाम् ॥ २९ ॥ शम्युदुंबरमश्वत्थं न्यग्रोधं च पलाशकम् ॥ यज्ञं यज्ञेति मंत्रेण दद्यात्पंचकषायिकम् ॥ ३० ॥ पंचगव्यं पवित्रं च आहरेत्ताम्रभाजने ॥ गायत्र्या चैव गोमूत्रं गंधद्वारेति गोमयम् ॥ ३१ ॥ आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ तेजोऽसीति घृतं तद्वद्देवस्य त्वा कुशोदकम् ॥ ३२ ॥ एवमादिविधियुतं पंचगव्यं प्रकीर्तितम् ॥ या ओषधीति मंत्रेण स्नानमोषधिभिः क्रमात् ॥ ३३ ॥ द्रुपदाभिः पुनस्तस्य कुर्याच्चोद्वर्तनं बुधः ॥ शिरःस्नानं ततो दद्यान्मानस्तोकाभिमंत्रितम् ॥ ३४ ॥ विष्णोरराटमंत्रेण दद्याद्गंधोदकं शुभम् ॥ ततो नद्युद्भवेनैव क्षालयेच्छुद्धवारिणा ॥ ३५ ॥ जातवेदसमुच्चार्य वस्त्रपूतेन वारिणा ॥ तत आवाहयेद्देवं रक्तमाल्यांबरं शुभम् ॥ ३६ ॥ एह्येहि भगवन्भानो लोकानुग्रहकारक ॥ यज्ञभागं गृहाणार्घ्यमर्कदेव नमोऽस्तु ते ॥ ३७ ॥ हिरण्येन तु पात्रेण देवायार्घ्यं प्रदापयेत् ॥ इदं विष्णुर्विचक्रमे मंत्रेणार्घ्यं समर्पयेत् ॥ ३८ ॥ पार्थिवैः प्रथमं कलशैः स्नापयेद्भास्करं बुधः ॥ ततस्त्वौदुंबरैर्वीर राजतैस्तदनंतरम् ॥३९॥ ततस्तु कांचनैर्देवं स्नापयेद्यदुनंदन ॥ सर्वतीर्थजलैर्युक्तं सर्वौषधिसमन्वितम् ॥ ४० ॥ शंखमादाय देवस्य ततो मूर्धनि शंकर ॥ दत्त्वा पुष्पाणि देवस्य मूर्ध्नि यत्नाद्विचक्षणः ॥ ४१ ॥ तोयमुत्क्षिप्य यत्नेन ततः स्नपनमाचरेत् ॥ प्रथमं स्नापयेद्देवं वारिणा यदुनंदन ॥ ४२ ॥ ततस्तु पयसा राजन्पायसेन ततस्तु वै ॥ घृतेन मधुना वापि तथा इक्षुरसेन च ॥ ४३ ॥ अग्निष्टोमस्य यज्ञस्य गोमेधस्य च सुव्रत ॥ ज्योतिष्टोमस्य राजेन्द्र वाजपेयस्य वै विभो ॥ ४४ ॥ राजसूया

१ आपो हिष्ठेति त्र्यृचा—इ० पा० । २ चरणोपरि देवस्य—इ० पा० । ३ गोव्रतस्य—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्वमेधाभ्यां घृताद्यैर्लभते फलम् ॥ यस्तु कारयते स्नानं यस्तु भक्त्या प्रपश्यति ॥ क्रियमाणं तु देवस्य स्नानं यदुकुलोद्वह ॥ ४५ ॥ य एते कथिता यज्ञा एतेषां क्रमशः फलम् ॥ अर्चां च कुरुशार्दूल दृष्ट्वा वै लभते फलम् ॥ ४६ ॥ स्नानं तु यत्नतः कार्यं देवदेवस्य सुव्रत ॥ यथा न लंघयेत्कश्चिद्देवस्य स्नपनं विभोः ॥ ४७ ॥ न प्राश्नंति यथा काकास्तीर्थं लोकविगर्हिताः ॥ स्नानोदकं तु देवस्य अथ वा पय एव हि ॥ ४८ ॥ भूमौ गतं यथा चैव प्राश्नाति यदुनंदन ॥ रोगं प्राप्नोति कर्ता वै दुःखं कारयिता तथा ॥४९॥ तस्माद्यत्नेन कर्तव्यं देवस्य स्नपनं विभोः॥ ५० ॥ स्नापयित्वा क्रमेणेत्थं स्नानकर्म विधानवित् ॥ ततो वर्धनिकां गृह्य वारिधारां समुत्सृजेत् ॥ ५१ ॥ त्रिवारान्पुरतोऽर्कस्य आचमस्वेति च ब्रुवन्॥ वेदोसीति च मंत्रेण उपवीतं प्रदापयेत् ॥ ५२ ॥ बृहस्पतेति मंत्रेण वस्त्रयुग्मं प्रदापयेत् ॥ यत्नकर्म प्रकुर्वाणः पुष्पमालां प्रदापयेत् ॥ ५३ ॥ धूरसीति च मंत्रेण धूपं दद्यात्सगुग्गुलम् ॥ समिद्धोंजनमंत्रेण अंजनं तु प्रदापयेत् ॥ ५४ ॥ युंजानीति च मंत्रेण रोचनां तस्य दापयेत् ॥ आरार्तिकं च वै कुर्याद्दीर्घायुष्ट्वाय वर्चसे ॥ ५५ ॥ स्नानकर्म त्विदं प्रोक्तं भास्करस्य महात्मनः ॥ भोजका ब्राह्मणाश्चैव क्रियां कुर्युः प्रयत्नतः ॥५६॥ बह्वृचोऽथर्वणश्चैव छन्दोगोध्वर्युरेव च ॥ स्नापकस्य च चिह्नानि ये च मूर्तिधरास्तथा ॥ ५७ ॥ तेषां प्रवक्ष्यामि विभो शृणु चैकमनाः किल॥ संपूर्णगात्रो मतिमाञ्छास्त्रज्ञः प्रियदर्शनः ॥५८॥ कुलीनः श्रद्दधानश्च आर्यदेशसमुद्भवः ॥ न स्थूलो न कृशो दीर्घः सौरशास्त्रविशारदः ॥ ५९॥ यश्च युक्तो जितात्मा च गुरुभक्तो जितेन्द्रियः ॥ पंचविंशतितत्त्वज्ञः स्थापकः समुदाहृतः ॥ ६० ॥ वर्जनीयांश्च वक्ष्यामि यैस्तु कर्म न कारयेत्॥ हीनांगश्चाधिकांगश्च वामनो विकटस्तथा ॥६१॥ नातिगौरो न कृष्णश्च स्नापनाय प्रयोजयेत् ॥ चार्वाको याजकश्चैव नित्यं गोमुखदंभकः ॥६२॥ अशुचिव्रतसंयुक्तः श्यामदंतोऽथ मत्सरी ॥ कोपनो दुष्टशीलश्च युवा वा वृद्ध एव च ॥ ६३ ॥ श्वित्री कुष्ठी च रोगी च काणो दुर्मतिरेव च ॥ संकीर्णो जातिहीनश्च तथा च वृषलीपतिः ॥ ६४ ॥ कुब्जश्चांधस्तथा व्यंगः खल्वाटो विकलेन्द्रियः ॥ अविनीतो दुरात्मा च विकलः पंगुरेव च ॥ ॥ ६५ ॥ तिथिनक्षत्रयोगानां वाराणां च तथा विभो ॥ सूचको जीविकार्थं हि यश्च मूल्येन पाठयेत् ॥ ६६ ॥ ईदृशान्स्नापकान्सर्वान्वर्जयेत प्रयत्नतः ॥ तस्मात्सर्वप्रयत्नेन परीक्ष्याः स्नापका बुधैः ॥ ६७ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने सूर्यप्रतिष्ठास्नानविधिवर्णनं नाम पंचत्रिंशदुत्तरशततमोऽध्यायः ॥ १३५ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ अतः परं प्रवक्ष्यामि अधिवासनमुत्त



१ प्रणश्यति–इ० पा० । २ प्रयत्नतः–इ० पा० । ३ मन्युमान्–इ० पा० । ४ रोगयुक्तोऽथ वै बालः–इ० पा० । ५ मृतकोऽर्थी च दुष्टं तत्र न योजयेत्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मम् ॥ सहस्रशीर्षा पुरुषो मंडपं यत्नतो विशेत् ॥ १ ॥ ततोन्ये च शुचौ देशे असंस्पृष्टोपलेपने ॥ मंडलं पंचवर्णैस्तु आलिखेच्चतुरस्रकम् ॥२॥ पताकातोरणच्छत्रध्वजमाल्याद्यलंकृतम् ॥ विचित्रसुवितानाढ्यं प्रकीर्णकुसुमोत्करैः ॥ ३ ॥ तस्य मध्ये कुशास्तीर्णे मूर्तिः स्थाप्या विवस्वतः ॥ तत्रास्यावाहनं कृत्वा दद्यादर्घ्यं विवस्वते ॥ ४ ॥ सुवर्णमधुपर्कादि कृत्वा तत्र विधानतः ॥ देवस्य दर्शयेद्गां च सवत्सां रोहिणीं शुभाम् ॥ ५ ॥ नमो गोपतये तुभ्यं सहस्रांशो प्रसीद मे ॥ एवमर्घ्येण संपूज्य परिधाय च वाससी ॥ ६ ॥ यज्ञोपवीतमातिथ्यं तथाभ्यंगं तथैव च ॥ वत्सरे वत्सरे तस्य नवमभ्यंगमाहरेत् ॥ ७ ॥ श्रावणे मासि राजेंद्र पवित्रं तस्य तद्धि वै ॥ ब्राह्मणान्भोजयित्वा तु वर्षेवर्षे प्रयोजयेत् ॥ ८ ॥ अभ्यंगं यदुशार्दूल श्रावणे मासि भास्करम् ॥ सर्वगंधैः समालभ्य चंदनागुरुकुंकुमैः ॥ ९ ॥ अलंकारैरलंकृत्य कुसुमैश्च सुगंधिभिः ॥ मालाभिश्च विचित्राभिराबद्धाभिरनेकशः ॥ १० ॥ ततो धूपं निवेद्याशु प्रतिमाग्रे प्रयत्नतः ॥ सहस्रशीर्षा पुरुषो मंडपं च प्रवेशयेत् ॥ ११ ॥ नमः शंभवेति मंत्रेण शय्यायां विनिवेशयेत् ॥ विश्वतश्चक्षुरित्येव कुर्यात्कमलनिष्कलम् ॥ १२ ॥ पुनरेव च वक्ष्यामि संकलीकरणं शुभम् ॥ स्नापने तु यथा कार्यः स्वदेहे न्यास उत्तमः ॥१३॥ प्रतिमायां तथा कार्यो यथा चालंभनं बुधः ॥ ॐ हुं खपोल्काय नमो मूलमंत्रः प्रकीर्तितः ॥१४॥ आदित्योऽयं स्वयं देवो ह्यक्षरेणोपबृंहितः ॥ ॐकारं विन्यसेन्मूर्ध्नि हुंकारं नासिकोपरि ॥ १५ ॥ खकारं च ललाटे तु पकारं वदने न्यसेत् ॥ लकारं चैव कंठे तु ककारं हृदये न्यसेत् ॥ १६ ॥ यकारं तु भुजे वामे नकारं दक्षिणे भुजे ॥ मकारं वामकुक्षौ च विसर्गं दक्षिणे न्यसेत् ॥१७॥ ॐकारं तु सदा ध्यायेज्ज्वालामालासमाकुलम् ॥ हुंकारं शुद्धवर्णाभं प्रसुवंतमलं शुभम् ॥ १८ ॥ खकारं चिंतयेत्प्राज्ञो भिन्नांजनसमप्रभम् ॥ तरुणादित्यवर्णाभं खकारं चिंतयेद्बुधः ॥ १९ ॥ पोकारं तु महाबाहो हेमवर्णं विचिंतयेत् ॥ शुक्लपद्मनिभाकारमकारं चिंतयेद्बुधः ॥२०॥ जातीकुसुमसंकाशं ह्रींकारं सर्ववर्णकम् ॥ क्षीरवर्णं सकारं तु चिंतयेत्सततं बुधः ॥ २१ ॥ नकारं हिमकुंदाभं मकारममृताक्षरम् ॥ ह्रींकारं विद्युत्संकाशं ह्रींकारं सर्ववर्णकम् ॥ २२ ॥ क्षीरवर्णं सकारं तु चिन्तयेत्सततं बुधः ॥ नकारं स्वर्णवर्णाभं मकारं कनकप्रभम् ॥ २३ ॥ ततो देवं महात्मानं सहस्रकिरणं रविम् ॥ प्रसादाभिमुखं देवं शयनीये निवेशयेत् ॥ २४ ॥ अग्निकार्यं ततः कुर्युरग्निकुंडेषु वै द्विजाः ॥ ततोऽरण्यां समुत्थाप्य अग्निं लौकिकमेव वा ॥ २५ ॥ प्रज्वाल्याग्निं विधानेन कुर्याद्धोमं विचक्षणः ॥ बह्वृचः पूर्वकांडेषु याम्यां मध्यंदिनस्तथा ॥ २६ ॥ पश्चिमे चैव च्छंदोग उत्तरेऽथर्वणो

१ सुमनोधूपदीपैः–इ० पा० । २ दद्यात्तत्र प्रयत्नेन–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मतः ॥ मध्ये च भोजकः कुर्याद्धोमं यज्ञे यदूत्तम ॥ २७ ॥ शमीपालाशोदुंबराणि ह्यपामार्गस्तथैव च ॥ द्वादश तु सहस्राणि अष्टौ चत्वारि एव च ॥ २८ ॥ द्वे त्रीणि च सहस्राणि अथ वा एकमेव हि ॥ अग्निर्मूर्धेति मंत्रेण कुंडस्यालंभनं भवेत् ॥ २९ ॥ उल्लिख्याभ्युक्ष्य तेनैव अग्निं दूत मिति स्मृतः ॥ संबुध्यस्वाग्ने मंत्रेण गर्भाधानं तु कारयेत् ॥ ३० ॥ सीमंतेति पुनस्तत्र महामंत्रेण होमयेत् ॥ जातकर्म तथा प्रोक्तं प्राणायामं विदुर्बुधाः ॥ ३१ ॥ नमः स्वाहेति मंत्रेण नामकरणमेव च ॥ अन्नप्राशनमंत्रेण अन्नप्राशनमादिशेत् ॥ ३२ ॥ ज्येष्ठमग्रेति मंत्रेण तेन चूडोपक र्मणि ॥ व्रतबंधस्य मंत्रेण व्रतबंधं समादिशेत् ॥ ३३ ॥ समावर्तनमित्येव आकृष्णेति च होमयेत् ॥ पत्नीसंयोजनं चैव स्वयमेव प्रकल्पयेत् ॥ ३४ ॥ अग्निहोत्रादिकं कर्म यज्ञकर्माणि यानि च ॥ महाव्याहृतिमंत्रेण होतव्यानि समंततः ॥ ३५ ॥ मातॄणां यज्ञभूतानां बलिकर्म प्रदाप येत् ॥ सर्वकामसमृद्ध्यर्थं कारयेदधिवासनम् ॥ ३६ ॥ त्रिरात्रं पंचरात्रं च अहोरात्रमथापि वा ॥ ततः स्वलंकृतां स्नातां मणिरत्नैर्विभूषिताम् ॥ ३७ ॥ कृतरक्षां प्रयत्नेन प्रतिमामधिवासयेत् ॥ देवागारादथैशाने दिग्भागे दिव्यमंदिरम् ॥३८॥ कृत्वा कुशपरिस्तीर्णे वरास्तरणसंवृते ॥ पूर्व शीर्षां तथा शय्यां शुक्लां शुक्लांबरोत्तराम् ॥३९॥ तस्यामावेशयेत्सम्यङ् महाश्वेतमुपाहरेत् ॥ निक्षुभां दक्षिणे पार्श्वे वामे राज्ञी च कीर्तिता ॥४०॥ दंडपिंगलकौ चास्य स्थितौ पादप्रवेशितौ ॥ तस्यां संवेशितायां तु शर्वर्यां प्रतिमां रवेः ॥ ४१ ॥ वसेत्तां रजनीं तत्र स्तूयमानश्चतुर्दिशम् ॥ ब्राह्म णैर्वेदिभिश्चापि गीतज्ञैश्चारणैस्तथा ॥ ४२ ॥ कुर्याज्जागरणं तत्र सूर्यभक्तिसमन्वितैः ॥ प्रभातायां तु शर्वर्यां बोधयेदृग्विधानतः ॥ ४३ ॥ हविष्यं भोक्तुकामांस्तु ब्राह्मणान्भोजकांस्तथा ॥ दक्षिणाभिश्च संपूज्य तैः कृतस्वस्तिवाचनः ॥ ४४ ॥ ततो गर्भगृहस्याथ मध्ये कृत्वा तु पिंडिकाम् ॥ विधिवत्तत्र सौवर्णं न्यसेत्सप्तहयं रथम् ॥ ४५ ॥ सर्वबीजौषधैश्चैव तत्र धृत्वा विधानवित् ॥ दत्त्वार्घ्यं स्थापयेत्तत्र यजमानः सहायवान् ॥४६॥ शंखदुंदुभिनिर्घोषैर्जलधारासहाक्षतैः ॥ कृत्वा पुण्याहशब्दं तु आलयस्य प्रदक्षिणाम् ॥ ४७ ॥ शुभलग्ने दिने ऋक्षे पूर्वाह्णे भानवे क्षणे ॥ मुहूर्ते च शुभे भानोः प्रतिमां स्थापयेद्बुधः ॥ ४८ ॥ नाधोमुखीं नोर्ध्वमुखीं न पार्श्वावनतां तथा ॥ समामभिमुखीं चेमां प्रतिमां तु निवेशयेत् ॥४९॥ पत्न्यौ चास्य ततः सम्यक्पार्श्वयोर्विनिवेशयेत् ॥ निक्षुभा दक्षिणे पार्श्वे स्वे राज्ञी तु वामतः ॥ ५० ॥ ततस्तदुपहारार्थं संभारैः प्राक्समाहृतैः ॥ मोदकापूपिकापूपशष्कुलीभूतशीर्षकैः ॥ ५१ ॥ कृशरैः पायसोन्मिश्रैः सर्वदिक्षु क्षिपेद्बलिम् ॥ इन्द्राय देवपतये बलिने वज्रपाणये ॥ ५२ ॥ शत

१ निक्षुभी–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यज्ञाधिपतये तस्मै इन्द्राय ते नमः ॥ त्रातारमिंद्रमंत्रेण इंद्रस्यावाहनं भवेत् ॥ ५३ ॥ अग्नये रक्तनेत्राय ज्वालामालार्चिताय वै ॥ शक्तिहस्ताय तीव्राय तथा चैवाजवाहिने ॥ आग्नेय्यामग्निमंत्रेण वह्नेरावाहनं स्मृतम् ॥ ५४ ॥ दंडहस्ताय कृष्णाय महिषोत्तमवाहिने ॥ सूर्यपुत्राय देवाय धर्मराजाय वै नमः ॥ ५५ ॥ यमाय त्विति मंत्रेण मुद्रास्तस्यैव कीर्तिताः ॥ नैर्ऋते खड्गहस्ताय नीललोहितकाय च ॥ ५६ ॥ सर्वबाह्याधिपतये विरूपाख्याय वै नमः ॥ आंयं गौरिति मंत्रेण नैर्ऋत्यां तु प्रकल्पयेत् ॥ ५७ ॥ वारुण्यां पाशहस्ताय वरुणायेति कल्पयेत् ॥ मंत्रेणावाहनं विद्यात्पंचनद्यः सरस्वतीम् ॥ ५८ ॥ प्राणात्मकाय धूपाय अव्यंगायानिलाय च ॥ ध्वजहस्ताय भीमाय नमो गंधवहाय च ॥ ५९ ॥ तस्याप्यावाहनं विद्याद्यद्देवादेवहेडनम् ॥ गदाहस्ताय सोमाय शुष्मिणे नृगताय च ॥ ६० ॥ गदापट्टिशहस्ताय सोमराजाय वै नमः ॥ ईशावास्यं च मुद्रा वै सोममंत्रः प्रकीर्तितः ॥ ६१ ॥ चतुर्मुखाय देवाय पद्मासनगताय च ॥ कृष्णाजिननिषण्णाय नमो लंबोदराय च ॥ ६२ ॥ गणाधिपतये देव नीलकंठाय शूलिने ॥ विरूपाक्षाय रुद्राय त्रैलोक्याधिपते नमः ॥ अभि त्वा शूर नो मंत्र ईशानाय प्रकल्पयेत् ॥ ६३ ॥ सर्वनागाधिराजाय श्वेतवर्णाय भोगिने ॥ सहस्रफणिने नित्यमनंताय नमोनमः ॥ ६४ ॥ नमोऽस्तु सर्पेभ्य इति मंत्रश्चैव प्रकीर्तितः ॥ पंचरात्रादिभिर्न्यासो ह्यंगन्यासः प्रयुज्यते ॥ ६५ ॥ तथोपक्षीरपानैश्च स्तुतिस्तोत्रैश्च भास्करम् ॥ विप्रेभ्यो भोजकेभ्यश्च ततो दद्याच्च दक्षिणाम् ॥ ६६ ॥ सूर्यक्रतुं महापुण्यं नैव कुर्याददक्षिणम् ॥ स्थाप्यतेऽनेन विधिना तद्भक्तैः प्रतिमा च या ॥ ६७ ॥ सा तु वृद्धिकरा नित्यं सांनिध्याच्च सदा भवेत् ॥ सप्तजन्मसु तेषां तु न रोगाः संभवंति हि ॥ ६८ ॥ उपासते त्रिरात्रं ये भानोर्यात्राभिवासने ॥ गंधमाल्योपहारैस्तु ते यांति भुवनं रवेः ॥ ६९ ॥ आत्मीयं परकीयं वा प्रतिमास्थापनं रवेः ॥ यः पश्यति पुमान्भक्त्या स स्वर्लोकमवाप्नुयात् ॥ ७० ॥ दशानामश्वमेधानां वाजपेयशतस्य च ॥ फलं प्राप्नोति पुरुषः प्रतिष्ठाप्य दिवाकरम् ॥ ७१ ॥ यावत्कीर्तिः पुण्यकृता भानोः स्थाने निवेशिते ॥ तावत्स तु यदुश्रेष्ठ सूर्यलोके महीयते ॥ ॥ ७२ ॥ स्थापने चास्य वै मंत्रः प्रोक्तो लोकेषु पूजितः ॥ ध्रुवा द्यौश्च ध्रुवा पृथ्वी ध्रुवं विश्वमिदं जगत् ॥ श्रेयसे यजमानस्य तथा त्वं ध्रुवतां व्रज ॥ ७३ ॥ स्थापयित्वा रविं भक्त्या विधिदृष्टेन कर्मणा ॥ मासेमासे क्रतुफलं लभंते नात्र संशयः ॥ ७४ ॥ एकाहेनापि यद्भानोः पूजया प्राप्यते फलम् ॥ न तु क्रतुशतैर्वीर प्राप्यते मानवैर्भुवि ॥ ७५ ॥ कृत्वापि सुमहत्पापं यः पश्चात्सेवते रविम् ॥ स याति सूर्यलोकं तु नरो विगतकल्मषः ॥ ७६ ॥ न भवेदिष्टकानां च द्रवणं भूमिसंमिति ॥ स्वर्गे महीयते तावत्कारको देववेश्मनः ॥ ७७ ॥ खंडस्फुटितसंस्कारं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृत्वा यत्फलमाप्यते ॥ न तु क्रतुसहस्रैस्तु प्राप्यते फलमुत्तमम् ॥ ७८ ॥ सिकतायामपि गृहं यस्तु कुर्याद्विभावसोः ॥ गोपतेः स प्रियसदः प्रग च्छेद्गोपतेर्वरम् ॥ ७९ ॥ इत्येवं सुरवरस्य तस्य भानोर्भूतानां स्थितिनिलयप्रसूतिहेतोः ॥ श्रीभागी भवति नरो निकेतकारी कल्पानां वसति शतं स सूर्यलोके ॥ ८० ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने सूर्यप्रतिष्ठावर्णनं नाम षट्त्रिंशदुत्तरशततमोऽध्यायः॥ ॥ १३६ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ यः प्रासादं रचयति पुमान्देवतानां प्रयत्नात्तत्र प्रीत्या सपदि कुरुते स्थापनां भानुभक्तः ॥ दिव्या न्भोगाँल्लभति च सदा कामतश्चाप्रमेयांस्तान्भुक्त्वासौ पुनरपि भवेच्चक्रवर्ती पृथिव्याम् ॥ १ ॥ ये मानवास्त्रिदशमूर्तिनिकेतनानि कुर्वंति साधुजन दृष्टिमनोहराणि ॥ तेषां मृतेप्यपरमार्थमये शरीरे लोके परिभ्रमति कीर्तिमयं शरीरम् ॥ २ ॥ इति ते कथितमिदं देवपूज्यस्य सवितुः स्थाप नमिवाधानम् ॥ साधारणं विधानं शृणु देवानां प्रतिष्ठापने वीर ॥ ३ ॥ स्नातो भुक्तो वस्त्रालंकृतकुसुमैर्गंधैः प्रतिमाया आस्तीर्णायां शय्यायां स्थापनं कुर्यात् ॥ सुप्तायां तु स नृत्यगीतैर्जागरणैः सम्यगेवाधिवास्य दैवज्ञेन प्रतिदिष्टकाले संस्थापनं कुर्यात् ॥ अभ्यर्च्य कुसुमगंधानुलेपनैः शंखतूर्यनिर्घोषैः प्रादक्षिण्येन नयेदायतनस्य प्रयत्नेन कृत्वा बलिं प्रतिमामभ्यर्च्य ब्राह्मणांश्च साधून्दत्त्वा हिरण्यकलशं विधिना निक्षिपेत्पिंडि कामध्ये सुश्वभ्रे स्थापकदैवज्ञद्विजान्सम्यग्विशेषतोभ्यर्च्याकल्पान्तं भोगी भवतीह परत्र सुखी ॥ ४ ॥ विष्णोर्भागवता मताश्च सवितुः शंभोः सभस्मद्विजा मातृणामपि मातृमण्डलविदो विप्रा विदुर्ब्राह्मणाः ॥ सर्वे यस्य विमुक्तशुक्लवसना बुद्धस्य रक्तांबरा ये यं देवमुपाश्रिताः सुविधिना तैस्तस्य कार्या क्रिया ॥ ५ ॥ सामान्यमिदं देवानामधिवासनं भवति मया कथितम् ॥ क्रियमाणमिदं दृष्ट्वा देवानां प्रतिष्ठापनम् ॥ नरो भक्त्या इह कामानवाप्य सर्वान्परत्र स्वर्गभाजनं भवति ॥ ६ ॥ इदं ते कथितं राजन्प्रतिष्ठापनमादितः ॥ यत्कृत्वा सवितुः स्नानं नरो याति मनो गतिम् ॥ ७ ॥ इत्थं कुर्यान्नरो भक्त्या सवितुः स्थापनं बुधः ॥ कारयेत्पुरतो भक्त्या सवितुः स्थापनं बुधः ॥ ८ ॥ इतिहासपुराणस्य श्रवणं पापनाशनम् ॥ ताभ्यां हि श्रवणाद्वीर सान्निध्यं याति भास्करः ॥ ९ ॥ कृते त्वायतने तस्मिन्ये चान्ये चापि देवताः ॥ तस्मात्कार्यं बुधैर्नित्यं धर्मश्रवणमादितः ॥ १० ॥ वाचकं पूजयित्वा तु ब्राह्मणानुपपूज्य च ॥ कारयेद्वाचनं वीर पुस्तकस्याग्रतो रवेः ॥ ११ ॥ सर्वस्वं स्थापके दद्याद्यत्किंचिद्गृहमागतम् ॥ गोदानमथ वा दद्यात्तस्य चित्तं प्रसादयेत् ॥ १२ ॥ इत्येष कथितो वीर प्रतिष्ठाकल्प आदितः ॥ कृत्वा दृष्ट्वा च



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुत्वा च यं नरोऽर्कमवाप्नुयात् ॥ १३ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने प्रतिष्ठापनविधिवर्णनं नाम सप्तत्रिंशदुत्तरशततमोऽध्यायः ॥ १३७ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ हंत ते कथयिष्यामि ध्वजारोपणमुत्तमम् ॥ यदुक्तं ब्रह्मणा पूर्वमृपभाविपतेः पुरः ॥ १ ॥ पुरा देवासुरे युद्धे यानि देवैर्जयेप्सुभिः ॥ कृतान्युपरि चिह्नानि वाहनानि ध्वजानि तु ॥ २ ॥ लक्ष्मचिह्नध्वजं केतुरिति पर्यायनामभिः ॥ कीर्तितः स च तस्येह प्रमाणं गदतः शृणु ॥ ३ ॥ ध्वजो वंशस्य कर्तव्यस्त्वविद्ध ऋजुरव्रणः ॥ प्रासादव्यास तुल्यस्तु ध्वजवंशप्रमाणतः ॥ ४ ॥ देवागारस्य ये प्रोक्ता मञ्जरीकलशादयः ॥ अथ वा तत्प्रमाणस्तु ध्वजदंडः प्रकीर्तितः ॥ ५ ॥ अन्तर्गृहस्य या वेदी सूत्रतः परिकल्पिता ॥ तस्या व्यासो भवेद्वंशः प्रसादस्य यदूत्तम ॥ ६ ॥ अथ वा मूलसूत्रेण यो व्यासोऽन्तर्गृहस्य तु ॥ प्रासादव्यास इति स प्रोक्तश्चेह न संशयः ॥ ७ ॥ केतुर्भवेद्वरो वंशो न निम्नो न ऋजुस्तथा ॥ पत्रं ध्वजे युगं चैव नलिकापुरुपस्तथा ॥ ८ ॥ चतुर्हस्ता भवन्त्यंते प्रशस्ताः कृष्णनन्दन ॥ अष्टहस्तप्रमाणस्तु विंशार्धस्य प्रमाणतः ॥९॥ सामान्यो ध्वजदंडस्तु सर्वसाधारणो मतः ॥ दंडपाणिध्वजो यस्तु स्मृतः षोडशहस्तवान् ॥१०॥ विंशद्धस्तात्परो दंडो न कार्यः सर्वथा रवेः ॥ युग्महस्तस्तु कर्तव्योः ध्वजदंडो मनीपिभिः ॥११॥ चतुरंगुल विस्तीर्णः सुवृत्तो ध्यंगुलोपरि ॥ नातिसूक्ष्मो न च स्थूलो न कार्यो नतपर्वकः॥१२॥समपर्वातु कर्तव्यः सुदृढः सूक्ष्म एव हि॥वक्रः पुत्रविनाशाय सव्रणोऽर्थविनाशनः ॥ १३ ॥ रोगदो युग्महस्तस्तु भिन्नो दुःखमनंतकम् ॥ करोति हानिं धर्मस्य हीनो यस्तु प्रमाणतः ॥ १४ ॥ वैपम्यमसमपर्वा दद्यात्कृच्छ्रमथोन्नतः ॥ जयो जयंतो जैत्रेयः शत्रुहंता जयावहः ॥ १५ ॥ नंदोपनंदनौ चैवेन्द्रोपेन्द्रौ गदितौ तथा ॥ दशैते कीर्तिता भेदा ध्वजस्यानन्दसंमिताः ॥ १६ ॥ द्विहस्तस्तु जयो दंडो जयंतो द्विगुणो मतः ॥ द्वादशहस्तस्तु जैत्रेयः शत्रुहंता कलान्वितः ॥ १७ ॥ जयावहस्तु विंशार्धो नन्द आदित्यसन्निभः ॥ चतुर्दशोपनन्दस्तु इन्द्रः षोडश उच्यते ॥ १८ ॥ उपेन्द्रोष्टादशः प्रोक्तस्तथेन्द्रो विंशतिः स्मृतः ॥ भिन्नो वक्रोऽसाधितश्च न कार्यो दण्ड एव हि ॥ १९ ॥ मूलमंत्रेण कर्तव्यो व्यासतोऽन्तर्गृहस्य तु ॥ ध्वजदण्डो महाबाहो अथ वा वास्तुमानतः॥ २० ॥ मंजरीमानतो वापि तदर्धेनाथ वा विभो ॥ पताका वै शुभा कार्या ध्वजवंशावलंबिनी ॥ २१ ॥ देवागारस्य शिखरात्रिभागपरिमार्जनी ॥ सा प्रोक्ता दशधा वीर मानतोमानतस्तथा ॥ २२ ॥ अंकुरः पल्लवश्चैव स्कन्धः शाखा तथैव च ॥ पताका कदली वीर केतुर्लक्ष्म

१ दण्ड कृत्वा तु यत्नतः–इ० पा० । २ इन्द्रसंज्ञकः–इ० पा० । ३ रौद्रः–इ० पा० । ४ राजेन्द्रः–इ० पा० । ५ अष्टाधिकदशहस्त इत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जयस्तथा ॥ २३ ॥ ध्वजश्च दशमः प्रोक्तः सर्वदेवमयोऽव्ययः ॥ अंकुरो ब्यङ्गुलः प्रोक्तः पल्लवश्चतुरंगुलः ॥ २४ ॥ स्कन्धः षडंगुलः प्रोक्तः शाखा चाष्टांगुला मता ॥ एकादशपताका तु कदली च चतुर्दश ॥ २५ ॥ केतुस्तु षोडशः प्रोक्तो लक्ष्माष्टादशमुच्यते ॥ जया विंशति वै प्रोक्ता एता वत्त्वंगुलानि तु ॥ २६ ॥ देवागारस्य कुम्भस्य प्रसन्ना सा प्रमार्जनी ॥ अंकुरेति पताका सा विज्ञेया यदुनन्दन ॥ २७ ॥ पल्लवेति द्वितीयस्य मार्जनी परिकीर्तिता ॥ त्रिभागमार्जनीस्कन्धः शाखा वै पञ्चमस्य तु ॥ २८ ॥ षष्ठस्योक्ता पताका तु कदली सप्तमस्य तु ॥ अष्टमस्य तथा केतुर्लक्ष्म च नवमस्य तु ॥ २९ ॥ ततस्तु दशमः प्रोक्तो जयंतो यदुनन्दन ॥ वृषस्थानावमार्गी तु ध्वजस्तु परिकीर्तितः ॥ ३० ॥ [1]गजो मेषोऽथ महिषः कबन्धस्तु वृषस्तथा ॥ हरिणोऽथ नरश्चैव नरश्च नरसत्तम ॥३१॥ स्थानान्येतानि भूयोऽथ प्रयुक्तस्य ध्वजस्य तु ॥ दिशाभागे तु पूर्वाद्यु क्रमेण परिकल्पयेत् ॥ ३२ ॥ एवं दशविधा प्रोक्ता पताका तत्त्वदर्शिभिः ॥ कर्तव्या सा यथापूर्वं तच्छृणु त्वं नराधिप ॥ ३३ ॥ शुक्लवस्त्रमयी चित्रा सघंटा सुमनोहरा ॥ नानाचामरसंपन्ना किंकिणीजालमंडिता ॥ ३४ ॥ ध्वजाग्रे चैव कर्तव्यो देवतालिंगसूचकः ॥ कांचनो वाथ रौप्यो वा मणिरत्नमयोऽपि वा ॥ ३५ ॥ रंगकैर्लिख्यते वापि तद्वाहनसमाकृतिः ॥ ध्वजदंडोऽत्र विन्यस्तः कर्तव्यो यदुनन्दन ॥३६॥ गरुत्मांस्तु ध्वजो विष्णोरीश्वरस्य ध्वजो वृषः ॥ ब्रह्मणः पंकजं कार्यं रवेर्धर्मः स्मृतो ध्वजः ॥ ३७ ॥ [2]हंसो जलाधिपस्योक्तः सोमस्य तु नरो ध्वजः ॥ बलदेवस्य कालस्तु कामस्य मकरध्वजः ॥ ३८ ॥ सिंहो ध्वजस्तु दुर्गायाः कीर्तितो यदुनन्दन ॥ गोधा चापि उमादेव्या रैवतस्य हयः स्मृतः ॥ ॥ ३९ ॥ कच्छपो वरुणस्योक्तो वातस्य हरिणो मतः ॥ पावकस्य तथा मेष आखुर्गणपतेर्मतः ॥ ४० ॥ ब्रह्मर्षीणां कुशः प्रोक्त इत्येषा ध्वज कल्पना ॥ यस्य यद्वाहनं प्रोक्तं तत्तस्य ध्वज उच्यते ॥ ४१ ॥ विष्णोर्ध्वजे तु सौवर्णं दंडं कुर्याद्विचक्षणः ॥ पताका चापि पीता स्याद्गरुडस्य समीपगा ॥ ४२ ॥ ईश्वरस्य ध्वजे दण्डो राजतो यदुनन्दनः ॥ पताका चापि शुक्ला स्याद्वृषभस्य समीपगा ॥ ४३ ॥ पितामहध्वजे दंडः स्मृतस्ताम्रमयो बुधैः ॥ पञ्चवर्णा पताका स्यात्पङ्कजस्य समीपगा ॥ ४४ ॥ आदित्यस्य च सौवर्णो ध्वजे दण्डः प्रकीर्तितः ॥ पंचवर्णा पताका स्याद्धर्मस्याधोगता नृप ॥ ४५ ॥ किंकिणीजालसंपन्ना नानाबुद्बुदसन्निभा ॥ पुष्पमालोपसम्पन्ना नानावादिभिरावृता ॥ ४६ ॥ दण्ड इन्द्रध्वजस्योक्तः कांचनो यदुनन्दन ॥ पताका बहुवर्णा स्यात्कुञ्जरस्य समीपगा ॥ ४७ ॥ आयसश्चापि दण्डोक्तो यमचिह्नं विचक्षणैः ॥ पताका

१ भूमी तु—इ० पा० । २ सिंहो जलाधिपस्य—इ०पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वर्णतः कृष्णा महिषस्य समीपगा ॥ ४८ ॥ जलाधिपध्वजो दण्डो राजतः परिकीर्तितः ॥ पताका सर्वतः श्वेता विचित्रा सा च कथ्यते ॥४९॥ ध्वजे चापि कुबेरस्य दण्डो मणिमयः स्मृतः ॥ पताका चापि रक्ता स्यान्नरपादसमीपगा ॥५०॥ बलदेवध्वजे दण्डो राजतो यदुनन्दन ॥ पताका वर्णतः शुक्ला तालस्याधोगता स्मृता ॥ ५१ ॥ कामध्वजे त्रिलोहः स्याद्दंडो यदुकुलोद्वह ॥ पताका रोहिणी तत्र मकरस्य समीपगा ॥ ५२ ॥ मायूरं कार्त्तिकेयस्य चिह्नं लोकेषु गीयते ॥ त्रिलोहदण्डमारूढं बहुरत्नविभूषितम् ॥ ५३ ॥ बहुवर्णकचित्रा तु पताका कथिता बुधैः ॥ हस्तिदंतभवं दण्डं कुर्याद्गणपतेर्नृप ॥ ५४ ॥ ताम्रदंडं समारूढं संशुद्धं संप्रतिष्ठितम् ॥ शुक्ला पताका कर्तव्या सुप्रमाणा महीपते ॥५५॥ मातॄणां चापि कर्तव्यो नैकरूपो ध्वजो बुधैः ॥ पताकाभिरनेकाभिर्बहुरत्नाभिरन्वितः ॥ ५६ ॥ रेवतस्यापि कर्तव्यो ध्वजो वाजी नराधिप ॥ रक्ता पताका तत्रापि कर्तव्या यदुनंदन ॥ ५७ ॥ चामुंडामंदिरे कार्यः शिरोमालाकुलो ध्वजः ॥ नीला पताका कर्तव्या दंडो लोहमयस्तथा ॥५८॥ रीतीमयश्च मातॄणां रेवतस्य च कारयेत् ॥ गौर्या ध्वजस्ताम्रमयः पताका गोपसन्निभा ॥ ५९ ॥ स्वर्णदंडस्तु वीरस्य ध्वजो मेषसमन्वितः ॥ पताका बहुरत्नाढ्या कर्तव्या यदुनंदन ॥ ६० ॥ अश्मसारमयो दंडो ध्वजो वातस्य उच्यते ॥ पताका कृष्णवर्णा तु हरिणस्य समीपगा ॥६१॥ भगवत्या ध्वजो दंडः सर्वरत्नमयः स्मृतः ॥ पताका तु त्रिवर्णा स्यात्सिंहस्याधोगता नृप ॥ ६२ ॥ एवंविधमिमं कृत्वा ध्वजं लक्षणलक्षितम् ॥ अधिवास्य ततो राजंस्तत आरोपयेद्बुधः ॥ ६३ ॥ ततः सर्वौषधीभिश्च स्नापयित्वा प्रयत्नतः ॥ समालभ्य च बध्नीयान्मध्ये प्रतिसरान्नृप॥६४॥ कल्पयित्वा शुभां वेदिं कलशैरुपशोभिताम् ॥तस्यां वेद्यां समारोप्य तां रात्रिमधिवासयेत् ॥ ६५ ॥ नानाकुसुमचित्रां च स्रजं तस्यानुलंबयेत्॥ समभ्यर्च्य प्रयत्नेन धूपमस्य निवेदयेत् ॥ ६६ ॥ बलिकर्म ततः कृत्वा कृशरापूपकादिभिः ॥ पलालापूपिकाभिश्च दधिपायससूपकैः ॥ ६७ ॥ उद्दिश्य लोकपालेभ्यो बलिं दद्याच्च वायसैः ॥ ब्राह्मणान्स्वस्ति वाच्याथ कृत्वा पुण्याहमंगलम् ॥६८॥ वादित्रकृतनिर्घोषं जलं संस्कारसंयुतम्॥ नानाबुद्बुदसंपन्नं वेष्टितं नववाससा ॥ ६९ ॥ शुभे लग्ने दिने ऋक्षे ध्वजं चारोपयेद्बुधः ॥ विन्यस्य स्वर्णकलशं श्वभ्रराजं ध्वजस्य तु ॥ ७० ॥ एवमारोपयेद्यस्तु ध्वजं देवालयोपरि ॥ स श्रिया वर्धते नित्यं प्राप्नोति परमां गतिम् ॥ ७१ ॥ असुरा वासमिच्छंति ध्वजहीने सुरालये ॥ तस्मा देवालयं प्राज्ञो ध्वजहीनं न कारयेत् ॥ ७२ ॥ मंत्रश्च स्थापने प्रोक्तो विधानज्ञैर्ध्वजस्य तु ॥ एह्येहि भगवन्देव देववाहन वै खग ॥ ७३ ॥

१ बहुवर्णा च-इ० पा० । २ दधिपायसपूर्वकैः-इ० पा० । ३ जनकृत्कारसंकुलम्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीकरः श्रीनिवासश्च जय जैत्रोपशोभित ॥ व्योमरूप महारूप धर्मात्मंस्त्वं च वै गतः ॥७४॥ सान्निध्यं कुरु दंडेऽस्मिन्साक्षी च ध्रुवतां व्रज ॥ कुरु वृद्धिं सदा कर्तुः प्रासादस्यार्कवल्लभ ॥ ७५ ॥ ॐ एह्येहि भगवन्नीश्वरविनिर्मित उपरिचरवायुमार्गानुसारिन्श्रीनिवास रिपुध्वंस यक्षनिलय सर्वदेवप्रियं कुरु सान्निध्यं शांतिं स्वस्त्ययनं च मेभयं सर्वविघ्ना व्यपसरंतु ॥ ७६ ॥ मंत्रेणानेन राजेन्द्र श्वभ्रे दंडे निवेशयेत् ॥ पताकां पूर्वमंत्रेण स्थित्वा पूर्वमुखो नृप ॥ ७७ ॥ क्षिपेदूर्ध्वमथाकाशं प्रासादशिखराद्विभोः ॥ यजमानस्ततः पश्येत्पताकां यदुनंदन ॥ ७८ ॥ प्रासादपुरतो वीर पताकां पातयेद्यदि ॥ इंद्रलोकं तदा कर्ता विशेद्वै यदुनंदन ॥ ७९ ॥ आग्नेय्यामग्निलोकं तु याम्यां यमसदो भजेत् ॥ नैर्ऋत्यां नैर्ऋतं लोकं वारुण्यः वारुणं व्रजेत् ॥८०॥ यस्य देवस्य यद्वेश्म कृतं यदुकुलोद्वह ॥ तस्य लोकमवाप्नोति वृषस्थानगतो यदि॥८१॥वायव्ये वायुमाप्नोति सौम्यायां सोममाप्नुयात्॥ ऐशान्यामीशमाप्नोति कर्ता वै देववेश्मनः ॥८२॥ य एवं कारयेद्भक्त्या ध्वजस्यारोपणं रवेः ॥ स हि भुक्त्वा परान्भोगान्सूर्यलोके महीयते ॥ ८३ ॥ तेजसांबुजसंकाशः कांत्या चाम्बुजसन्निभः ॥ द्विजातितुल्यः प्रभया विक्रमेण च गोपतेः ॥ ८४ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने ध्वजारोपणविधिवर्णनं नामाष्टत्रिंशदुत्तरशततमोऽध्यायः ॥१३८॥ छ॥ ॥ सांब उवाच ॥ ॥ त्वत्प्रसादान्मया प्राप्तं रूपमेतत्पुरातनम् ॥ प्रत्यक्षदर्शनं चापि भास्करस्य महात्मनः ॥ १ ॥ सर्वमेतत्तु संप्राप्य पुनश्चिंताकुलं मनः ॥ देवस्य परिचर्यायाः पालनं कः करिष्यति ॥२॥ गुणयुक्तं द्विजं किंचित्समर्थं परिपालने ॥ ममैवानुग्रहाद्ब्रह्मन्द्विजं व्याख्यातुमर्हसि ॥ ३ ॥ एवमुक्तस्तु सांबेन नारदः प्रत्युवाच तम् ॥ न द्विजाः परिगृह्णंति देवस्य स्वीकृतं धनम् ॥ ४ ॥ विद्यते हि धनं ह्यत्र गुणश्चायं प्रतिग्रहः ॥ देवचर्यागतैर्द्रव्यैः क्रिया ब्राह्मी न विद्यते ॥५॥ अवज्ञया च कुर्वंति ये क्रियां लोभमोहिताः ॥ अपांक्तेया भवंतीह ते वै देवलका द्विजाः ॥६॥ देवस्वं ब्राह्मणस्वं च यो लोभादुपजीवति ॥ स पापात्मा नरो लोके गृध्रोच्छिष्टेन जीवति ॥ ततो न ब्राह्मणः कश्चिद्देवचर्यां करिष्यति ॥७॥ विधिज्ञं ज्ञानवंतं च परिचर्याक्षमं तथा ॥ देव एव तमाख्यातुं तस्मात्तं शरणं व्रज ॥८॥ अथ वा यदुशार्दूल उग्रसेनपुरोहितम् ॥ गत्वा गौरमुखं पृच्छ स ते कामं विधास्यति ॥ ९ ॥ नारदेनैवमुक्तस्तु सांबो जांबवतीसुतः ॥ सुखासीनं गृहे वीर उग्रसेनपुरोहितम् ॥ १० ॥ कृतपूर्वाह्णिकं वीर विप्रं गौरसुखं नृप ॥ विनयेनोपसंगम्य सांबो वाक्यमथाब्रवीत् ॥ ११ ॥ मया भानोः प्रसादेन कारितं विपुलं गृहम् ॥ सपत्नीकं ससैन्यं

१ गत्वा गृहे महाबाहो यशसी कुरुतेऽनघ ॥ ततः स गत्वा सांबस्तु प्रणिपत्य महामुनिम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च पृथिव्यां सारवत्स्थितम् ॥ १२ ॥ सर्वं तस्मिन्मया दत्तं कृतं मूर्तेश्च मंडलम् ॥ तस्माद्दिक्षा विशिष्टेभ्यो देयं दानं मनोगतम् ॥ १३ ॥ तत्सर्वं मम संप्रीत्या गृहाण त्वं महामुने ॥ सांबवाक्यमिदं श्रुत्वा प्रत्युवाच महामुनिः ॥ १४ ॥ गौरमुख उवाच ॥ ॥ ब्रवीम्यहमशेषेण यथावदनु पूर्वशः ॥ अहं विप्रो भवान्राजा स च देवपरिग्रहः ॥ अपरस्परमेवं तु ग्रहणं मे विरुध्यते ॥ १५ ॥ ब्रह्मविद्याप्रणीतानि स्वकर्माणि द्विजातयः ॥ कुर्वाणा न प्रहीयन्ते अन्यथा भिन्नवृत्तयः ॥ १६ ॥ क्षांतिरध्यापनं जापः सत्यं च यदुनंदन ॥ एतानि विप्रकर्माणि न देवार्थपरिग्रहः ॥ १७ ॥ यदि देवार्थदानं स्यात्ततो देवलका द्विजाः ॥ देवद्रव्याभिलापश्च ब्राह्मण्यं तु विमुंचति ॥ १८ ॥ देवद्वारे च यद्दानं ब्राह्मणाय प्रयच्छति ॥ द्वावेतौ पापकर्तारावात्मदोषेण मानवौ ॥ १९ ॥ देवार्थदानं वार्ष्णेय यद्गृहीत्वा च यो द्विजः ॥ श्राद्धे वा यदि वा सत्रे तज्जुहोति ददाति वा ॥ भिन्नवृत्तो द्विजः पापो राक्षसः सोऽभिजायते ॥ २० ॥ द्विजो देवलको यत्र पंक्त्यां भुंक्ते महीपते ॥ अन्नान्युपस्पृशेन्नीचा सा पंक्तिः पापमाचरेत् ॥ २१ ॥ द्विजो देवलको यस्य संस्कारं संप्रयच्छति ॥ सोऽधोमुखान्पितॄन्त्सर्वानाक्रम्य विनिपातयेत् ॥ २२ ॥ आत्मानं पातयेद्यस्तु सोन्यानुद्धरते कथम् ॥ उद्धरिष्यति चात्मानमित्येषा कल्पनाधमा ॥ २३ ॥ यो हठाच्च भयाच्चैव कुरुते रविवेश्मनः ॥ वृत्तिं विधत्ते विप्रत्वात्पतितस्स तु जायते ॥ २४ ॥ सप्रतिग्रहमंत्रेण द्विजोऽश्नाति परिग्रहम् ॥ देवप्रतिग्रहार्थेषु वेदवाक्यं न विद्यते ॥ २५ ॥ तस्माद्राजा न देवार्थं विप्रे दद्यात्कथंचन ॥ ब्रह्मसूत्रमहं छित्त्वा गमिष्यामीति गम्यताम् ॥ २६ ॥ ॥ सांब उवाच ॥ ॥ अग्राह्यं चेद्द्विजातिभ्यः कस्मै देयमिदं मया ॥ श्रुतं वा दृष्टपूर्वं वा तन्मे व्याख्यातुमर्हसि ॥ २७ ॥ ॥ गौरमुख उवाच ॥ ॥ मगाय संप्रयच्छ त्वं पुरमेतच्छुभं विभो ॥ तस्याधिकारो देवान्ने देवतानां च पूजने ॥ २८ ॥ ॥ सांब उवाच ॥ ॥ कोयं मगेति ते प्रोक्तः क्व वासौ वसते विभो ॥ कस्य पुत्रो द्विजश्रेष्ठ किमाचारः किमाकृतिः ॥ २९ ॥ ॥ गौरमुख उवाच ॥ ॥ योऽयं मगेति वै प्रोक्तो मगो दिव्यो द्विजोत्तमः ॥ निक्षुभायाः सुतो वीर आदित्यात्मज उच्यते ॥ ३० ॥ ॥ सांब उवाच ॥ ॥ कथं स निक्षुभापुत्रः कथं वीरसुतस्तथा ॥ कथं चादित्यतनयो मगोऽसावुच्यतेनघ ॥ ३१ ॥ ॥ गौरमुख उवाच ॥ ॥ मानुषत्वं गता देवी निक्षुभा किल यादव ॥ गता शापमवाप्येह भास्कराल्लोकपूजिता ॥ ३२ ॥ गोत्रं मिहिरमित्याहुस्तस्मै ब्राह्मण्यमुत्तमम् ॥ सुजिह्वा नाम धर्मात्मा ऋषिपुत्रः पुरानघ ॥ ३३ ॥ तस्यात्मजा समुत्पन्ना निक्षुभा सा वरांगना ॥ रूपेणाप्रतिमा लोके हारलीला मता तु सा ॥ ३४ ॥ पितुर्नियोगात्सा

१ अध्ययनम्-इ० पा० । २ देवार्थपरिग्रहः-इ० पा० । ३ देवार्थदानम्-इ० पा० । ४ देवार्थदानम्-इ० पा० । ५ सोमाय-इ-पा० । ६ निक्षुभासुताः-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कन्या विहरेज्जातवेदसि ॥ ३५ ॥ विहरन्ती यथान्यायं समिद्धे पावके तथा ॥ अथ तां देवदेवेशो ह्यंशुमाली ददर्श ह ॥ ३६ ॥ रूपयौवनसंपन्नां ततः कामवशं गतः ॥ चिंतयामास देवेशः कथं तां वै भजाम्यहम् ॥ ३७ ॥ अनयावहृतो योऽयं पावको देवपूजितः ॥ वनमाविश्य तन्वंगीं भजेयं लोकपूजिताम् ॥ ३८ ॥ इति संचिंत्य देवेशः सहस्रांशुर्दिवस्पतिः ॥ विवेश पावकं वीर तत्पुत्रश्चाभवत्तदा ॥ ३९ ॥ ततो विलासलावण्यरूपयौवनशालिनी ॥ समिद्धं लंघयित्वाग्निं जगामायतलोचना ॥ ४० ॥ क्रुद्धः स्वरूपमास्थाय दृष्ट्वा कन्यां स पीडितः ॥ करं करेण संगृह्य ततस्तां हव्यवाहनः ॥ ४१ ॥ उवाच यदुशार्दूल नोदितो भास्करेण तु ॥ वेदोक्तं विधिमुत्सृज्य यथाहं लंघितस्त्वया ॥ ४२ ॥ तस्मान्मत्तः समुत्पन्नो न च पुत्रो भविष्यति ॥ जरशब्द इति ख्यातो वंशकीर्तिविवर्धनः ॥ ४३ ॥ अग्निजात्या मगाः प्रोक्ताः सोमजात्या द्विजातयः ॥ भोजकादित्यजात्या हि दिव्यास्ते परिकीर्तिताः॥४४॥तामेवमुक्त्वा भगवानादित्योऽन्तरतस्तदा॥अथोत्पन्नां प्रजां ज्ञात्वा ध्यानयोगेन वै ऋपिः॥४५॥ पतितः स्यान्महातेजा ऋग्जिह्वः सुमहामतिः ॥ शापमुद्यम्य तेजस्वी ऋग्जिह्वो वाक्यमब्रवीत् ॥ ४६ ॥ आत्मापराधात्कामिन्या यथा गर्भोनलावृतः ॥ संभूतस्ते महाभागे अपूज्योऽयं भविष्यति ॥ ४७ ॥ पुत्रशोकाभिसंतप्ता बाला पर्याकुलेक्षणा ॥ चिंतयामास दुःखार्ता तमेकं ज्वलनाकृतिम् ॥ ४८ ॥ ततो देववरिष्ठस्य मम योनिसमुद्भवः ॥ अयं दत्तो महाशापः पूज्यतां कर्तुमर्हसि ॥ ४९ ॥ भवेत्पूज्यो हि मे पुत्रो देवेश्वर तथा कुरु ॥ एवं चिंतयमानस्तु भगवानर्यमा किल ॥ ५० ॥ आग्नेयं रूपमाश्रित्य चेदं वचनमब्रवीत् ॥ स्निग्धो गंभीरनिर्घोपः शांतो ज्वरविवर्जितः॥ ॥५१॥ ऋग्जिह्वः सुमहातेजा धर्मं चरति सुव्रत ॥ तेनोत्सृष्टं महाशापं नान्यथा कर्तुमुत्सहे ॥५२॥ किं तु कार्यगरीयस्त्वादात्मनो योग्यमुत्तमम्॥ तव पुत्रं विधास्यामि चापूज्यं वेदपारगम् ॥५३॥ वंशश्च सुमहांस्तस्य निवसिष्यति भूतले ॥ ममांगानि महात्मानो वाशिष्ठा ब्रह्मवादिनः॥५४॥मद्यायना मद्यजना मद्भक्ता मत्परायणाः ॥ मम शुश्रूपकाश्चैव मम च व्रतचारिणः ॥ ५५ ॥ त्वां च मां च यथान्यायं वेदं तत्त्वार्थदर्शिनः ॥ पूजयिष्यंति निरताः सदा मद्भावभाविताः ॥ ५६ ॥ मत्कर्मणां मदंगानां मद्भावविनिवेशनात् ॥ विरजा मत्प्रसादेन मामेवैष्यंत्यसंशयम् ॥ ५७ ॥ जटाश्मश्रुधरा नित्यं सदा मयि परायणाः ॥ पंचकालविधानज्ञा वीरकालस्य यज्विनः ॥ ५८ ॥ पूर्णैकदक्षिणे पाणौ वर्म वामेन धारयन् ॥ पतिदानेन वदनं प्रच्छाद्य नियतः शुचिः ॥ ५९ ॥ प्राणं हि महतां कृत्वा ततो भुञ्जीत वाग्यतः ॥ अयमाद्याप्रसादाच्च व्याकुलेंद्रियचेतसा ॥ ६० ॥ विधिहीनं मंत्रहीनं ये वै यक्ष्यंति मामतः ॥ तेपि स्वर्गाच्च्युताः क्रांता रमंते सूर्यसन्निधौ ॥ ६१ ॥ एवंविधास्तव सुता भविष्यन्ति मही



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तले ॥ मगवंशे महात्मानो वेदवेदांगपारगाः ॥ ६२ ॥ एवमाश्वास्य तां देवीं भास्करो वारितस्करः ॥ अंतर्दधे महातेजाः सा च हर्षमवाप ह ॥ ॥ ६३ ॥ एवमेते समुत्पन्ना भोजकाः कृष्णनंदन ॥ विष्णुभास्ते तथादित्या उत्पन्ना लोकपूजिताः ॥ ६४ ॥ तेषामेतत्पुरं देहि पर्याप्तास्ते प्रतिग्रहे ॥ त्वदीयस्यास्य मे वीर तथा भास्करपूजने ॥ ६५ ॥ तस्य गौरमुखस्येदं वाक्यं श्रुत्वा स यादवः ॥ सांबो जांबवतीपुत्रः प्रणम्य शिरसोक्तवान् ॥ ६६ ॥ क्व वसंते महात्मान एते भास्करपुत्रकाः ॥ भोजका द्विजशार्दूल येन तानानयाम्यहम् ॥ ६७ ॥ ॥ गौरमुख उवाच ॥ ॥ नाहं जाने महाबाहो वसंते यत्र वै मगाः ॥ जानीते तान्रविर्वीर तस्मात्तं शरणं व्रज ॥ ६८ ॥ ब्राह्मणेनैवमुक्तस्तु प्रणम्य शिरसा रविम् ॥ जगाद भास्करं सांबः कस्ते पूजां करिष्यति ॥ ६९ ॥ विज्ञप्तस्त्वेव सांबेन प्रतिमा तमुवाच ह ॥ न योग्याः परिचर्यायां जंबूद्वीपे ममानघ ॥ ७० ॥ मम पूजाकरं गत्वा शाकद्वीपादिहानय ॥ लवणोदात्परे पारे क्षीरोदेन समावृतः ॥ ७१ ॥ जंबूद्वीपात्परो यस्माच्छाकद्वीप इति स्मृतः ॥ तत्र पुण्या जनपदाश्चतुर्वर्णसमन्विताः ॥ ७२ ॥ मगाश्च मगगाश्चैव गानगा[1] मंदगास्तथा ॥ मगा ब्राह्मणभूयिष्ठा मगगाः क्षत्रियाः स्मृताः ॥ ७३ ॥ वैश्यास्तु गानगा ज्ञेयाः शूद्रास्तेषां तु मंदगाः ॥ न तेषां संकरः कश्चिद्धर्माश्रयकृते क्वचित् ॥ ७४ ॥ धर्मस्यास्य विचारो वा ह्येकतः सुखिनः प्रजाः ॥ तेजसस्ते मदीयस्य निर्मिता विश्वकर्मणा ॥ ७५ ॥ तेभ्यो वेदास्तु चत्वारः सरहस्या मयोदिताः ॥ वेदोक्तैर्विविधैः स्तोत्रैः परैर्गुह्यैर्मया कृतैः ॥ ७६ ॥ ते च ध्यायन्ति मामेव यजंते मां च नित्यशः ॥ मन्मानसा मद्यजना मद्भक्ता मत्परायणाः ॥ ७७ ॥ मम शुश्रूषकाश्चैव मम च व्रतचारिणः ॥ अव्यंगधारिणश्चैव विधिदृष्टेन कर्मणा ॥ ७८ ॥ कुर्वंति ते सदा भद्रां मम पूजां ममानुगाः ॥ तथा देवाः सगंधर्वाः सिद्धाश्च सह चारणैः ॥ विहरंते रमंते च दृश्यमानाश्च तैः सह ॥७९॥ जंबूद्वीपे त्वहं विष्णुर्वेदवेदांगपूजितः ॥ शक्रोऽहं शाल्मलीद्वीपे क्रौंचद्वीपे ह्यहं भगः ॥ ८० ॥ प्लक्षद्वीपे त्वहं भानुः शाकद्वीपे दिवाकरः ॥ पुष्करे च स्मृतो ब्रह्मा ततश्चाहं महेश्वरः ॥ ८१ ॥ तान्मगान्मम पूजार्थं शाकद्वीपादिहानय ॥ आरुह्य गरुडं सांब शीघ्रं गत्वाविचारयन् ॥ ८२ ॥ तथेति गृह्य तामाज्ञां स्वजांबवती सुतः ॥ पुनर्द्वारवतीं गत्वा कान्त्यातीव समन्वितः ॥ ८३ ॥ आख्यातवान्पितुः सर्वं स्वर्कीयं देवदर्शनम् ॥ तस्माच्च गरुडं लब्ध्वा ययौ सांबोधिरुह्य तम् ॥ ८४ ॥ शाकद्वीपमनुप्राप्य संप्रहृष्टतनूरुहः ॥ तत्रापश्यद्यथोद्दिष्टान्सांबस्तेजस्विनो मगान् ॥ ८५ ॥ विवस्वंतं पूजयंतो धूपदीपादिभिः शुभैः ॥ सोऽभिवाद्य च तान्पूर्वं कृत्वा

१ मानगाः–इ० पा० । २ क्षियः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्येषां प्रदक्षिणाम् ॥ ८६ ॥ पृष्ट्वा चानामयं तेषां प्रशंसासामपूर्वकम् ॥ यूयं हि पुण्यकर्माणो द्रष्टव्यार्थे शुभार्थिनः ॥ रता येऽर्कस्य पूजायां येषां चैव वरप्रदः ॥ ८७ ॥ तनयं वित्त मां विष्णोः सांबं नाम्ना च विश्रुतम् ॥ चन्द्रभागातटे चापि मया सूर्यो निवेशितः ॥ ८८ ॥ तेनाहं प्रेषित श्चात्र उत्तिष्ठध्वं व्रजामहे ॥ ते तमूचुस्ततः सांबमेवमेतन्न संशयः ॥ ८९ ॥ अस्माकमपि देवेन व्याख्यातं पूर्वमेव हि ॥ अष्टादश कुलानीह मगानां वेदवादिनाम् ॥ यास्यंति ये त्वया सार्धं यथा देवेन भाषितम् ॥ ९० ॥ ततस्तानि दशाष्टौ च कुलानीह समंततः ॥ आरोप्य गरुडे सांबस्त्वरितः पुनरभ्यगात् ॥९१॥ सोल्पेनैव तु कालेन प्राप्तो मित्रवनं ततः ॥ कृत्वाज्ञां तु रवेः सांबः कृत्स्नं त्वेवं न्यवेदयत् ॥९२॥ रविः शोभ नमित्युक्त्वा प्रसन्नः सांबमब्रवीत् ॥ मम पूजाकरा ह्येते प्रजानां शांतिकारकाः ॥ ९३ ॥ मम पूजां करिष्यंति विधानोक्तां यदूत्तम ॥ तत्कृते न पुन श्चिंता तव काचिद्भविष्यति ॥९४॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने भोजकानयनं नामैकोनचत्वारिंशदु त्तरशततमोऽध्यायः ॥ १३९ ॥ ७ ॥ ॥ सुमंतुरुवाच ॥ ॥ एवं स आनयित्वा तु मगान्सांबो महीपते ॥ स महात्मा पुरा सांबश्चंद्रभागास रित्तटे ॥ १ ॥ पुरं निवेशयामास स्थापयित्वा दिवाकरम् ॥ कृत्वा धनसमृद्धं तु भोजकानां समार्पयत् ॥ २ ॥ तत्पुरं सवितुः पुण्यं त्रिषु लोकेषु विश्रुतम् ॥ सांबेन कारितं यस्मात्तस्मात्सांबपुरं स्मृतम् ॥ ३ ॥ तस्मिन्प्रतिष्ठितो देवः पुरमध्ये दिवाकरः ॥ सत्कृत्य स्थापिताः सर्वे आत्मनामां किते पुरे ॥ ४ ॥ मगानां तु सदाचारो दृष्टाचारकुलोचितः ॥ देवशुश्रूषणं गीतं वेदप्रोक्तेन कर्मणा ॥ ५ ॥ कृतकृत्यस्तदा सांबो वरं लब्ध्वा पुन र्युवा ॥ आदिदेवं सुरज्येष्ठमादित्यं प्रणिपत्य सः ॥ ६ ॥ अनंतरं मगान्सर्वान्प्रणिपत्याभिवाद्य च ॥ प्रस्थितो निर्मलः सांबः पुरीं द्वारवतीं तदा ॥ ७ ॥ मगानां कारणार्थेन प्रार्थिता भोजवंशजाः ॥ वसुदेवस्य पौत्रेण गोत्रजेन महात्मना ॥ ८ ॥ कन्यादानं कृतं तेषां मगानां भोजको त्तमैः ॥ सर्वास्ताः सहिताः कन्याः प्रवालमणिभूषिताः ॥ ९ ॥ अर्चयित्वा तु ताः सर्वाः प्रेषिताः सवितुर्गृहम् ॥ पुनर्गत्वा तु सांबेन पृष्टो देवो दिवाकरः ॥ १० ॥ मगानां ज्ञानमाख्याहि वेदानव्यंगमेव च ॥ सांबस्य वचनं श्रुत्वा भास्करो वाक्यमब्रवीत् ॥११॥ पृच्छ त्वं नारदं गत्वा स ते सर्वं वदिष्यति ॥ एवमुक्तोऽथ वै सांबो गतवान्नारदं प्रति ॥१२॥ गत्वा कृत्स्नमिदं सर्वं तस्मै तेन निवेदितम् ॥ स चाप्याह ततः सांबं न जाने ज्ञान मुत्तमम् ॥ १३ ॥ भोजकानां यदुश्रेष्ठ ज्ञानं व्यासो महामुनिः ॥ तं गत्वा परिपृच्छ त्वं प्रणम्य शिरसा मुनिम् ॥ १४ ॥ कृष्णानुरोधात्ते सर्वं स

१ वेदसाध्यं दि–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वक्ष्यति न संशयः ॥ नारदेनैवमुक्तस्तु सांबो जांबवतीसुतः ॥ १५ ॥ व्यासाश्रमं स गत्वा तु प्रणम्य शिरसा मुनिम् ॥ कृतांजलिपुटो भूत्वा इदं वचनमब्रवीत् ॥१६॥ शाकद्वीपं मया गत्वा आनीता मगपुंगवाः ॥ बाला यौवनसंपन्नाः संनिविष्टा मगोत्तमाः ॥१७॥ सत्कृत्य पूजयित्वा तु पुरं तेषां समर्पितम् ॥ संप्राप्य तु पुरं ते वै ज्येष्ठमध्यकनीयसः ॥ १८ ॥ भोजवंशसमुत्पन्नाः कन्यकाः समलंकृताः ॥ वरयित्वा कृतं तेषां विप्र प्रणयनं शुभम् ॥१९॥ अहो सभाग्याः श्लाघ्याश्च कृतपुण्याश्च ते सदा ॥ पूजायां ये रता भानोर्येषां चैव वरप्रदः ॥ २० ॥ पर्याप्तं सर्वमेतेषामिह चामुष्मिकं फलम् ॥ अनित्ये सति मानुष्ये देवपूजारता हि ये ॥ २१ ॥ किं तु चिन्तयतः सूर्यं चिंतयित्वा तु भोजकान् ॥ ज्ञानं प्रति तथा चैषां हृदये संशयो मम ॥ २२ ॥ कथं पूजाकरा ह्येते के मगाः के च भोजकाः ॥ ज्ञानं किं परमं तेषां ज्ञेयस्तेषां क एव तु ॥ २३ ॥ दिव्येति ते कथं प्रोक्ताः किमर्थं कूर्चधारणम् ॥ सौरव्रतं किमर्थं तु वाचकास्ते कथं स्मृताः ॥ २४ ॥ किमर्थं तेजसा वेदान्गायन्तश्चैव ते कथम् ॥ अथाहिकंचुकस्यांगं किं प्रमाणं च कस्य वै ॥ २५ ॥ कस्य वै का समाख्याता यदुत्पन्नं कथं स्मृतम् ॥ कथं देवांश्च गायंति यज्ञं कुर्वंति ते कथम् ॥२६॥ अग्निहोत्रं च किं तेषां पंच दोलाश्च काः स्मृताः ॥ एतत्सर्वं समाख्याहि भोजकानां विचेष्टितम् ॥ २७ ॥ सांबस्य वचनं श्रुत्वा कृष्णद्वैपायनो मुनिः ॥ कालीसुतो महातेजा उवाच परमं वचः ॥ २८ ॥ साधुसाधु यदुश्रेष्ठ साधु पृष्टोऽस्मि सुव्रत ॥ दुर्ज्ञेयं चेष्टितं किंचिद्भोजकानां न संशयः ॥ २९ ॥ भास्करस्य प्रसादेन ममापि स्मृतिमागतम् ॥ यथाख्यातं वशिष्ठेन तथा ते वच्मि कृत्स्नशः ॥ ३० ॥ मगानां चरितं श्रेष्ठं शृणु त्वं कृष्णनंदन ॥ ज्ञानेदिनं एवं ते कर्मयोगं समाश्रिताः ॥ ३१ ॥ श्रूयन्ते ऋषयः सर्वे मौनेन नियमस्थिताः ॥ भुंजते चापि मौनेन सर्वे वै परमर्षयः ॥३२॥ मुनिचर्याकृतस्तेपि शाकद्वीपनिवासिनः ॥ तस्मान्मौनेन भोक्तव्यमगुणत्वमनिच्छता ॥३३॥ वचः सूर्यसमाख्यातं कारणं च वरं तथा ॥अर्चायां ते च ते नित्यमर्चयन्तश्च ते स्मृताः ॥ ३४ ॥ भोजकन्यासुजातत्वाद्भोजकास्तेन ते स्मृताः ॥ ब्राह्मणानां यथा प्रोक्ता वेदाश्चत्वार एव तु ॥ ३५ ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदस्त्वथर्वणः ॥ ब्रह्मणोक्तास्तथा वेदा मगानामपि सुव्रत ॥३६॥ त एव विपरीतास्तु तेषां वेदाः प्रकीर्तिताः ॥ वेदो विश्वमदश्चैव विद्वद्विरसस्तथा ॥३७॥ वेदा ह्येते मगानां तु पुरोवाच प्रजापतिः ॥ मगा वेदमधीयन् ते वेदांगास्तेन ते स्मृताः ॥३८॥ शेषो न हि महाभागः सर्वसत्त्वसुखावहः ॥ ससूर्यरथमासाद्य रथिभिः सह वर्षति ॥ ३९ ॥ यस्तस्य तु पुनर्नाकं स रवेर्हि महानकः ॥ वंदितव्यो मगानां तु अस्त्रमंत्रेण नित्यशः ॥ ४० ॥ यथा स्रजो द्विजानां तु पूजाकाले प्रमीयते ॥ सर्वसंस्कारयज्ञेषु यथा दर्भा द्विजातिषु ॥४१॥ पवित्राः कीर्तितास्तेषां तथा धर्मो मगस्य



128

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तु ॥ एभिर्जयन्ति भूयिष्ठं तस्मिन्द्वीपे मगाधिपाः ॥ ४२ ॥ विद्यावंतः कुलश्रेष्ठाः शौचाचारसमन्विताः ॥ यंज्ञावसक्ता भक्ताश्च जपंतो मंत्रमादितः[1] ॥ ४३ ॥ प्रियास्तु यदुशार्दूल भोजका यदुनंदन ॥ अन्नमिव वै मंत्रो वेदस्य परिपच्यते ॥४४॥ सर्वेषां ब्राह्मणानां तु सावित्री परिकल्प्यते ॥ अस्माकं तु यदुश्रेष्ठ महाव्याहृतिपूर्विका ॥ ४५ ॥ अमोहकेनाथ विमानभुंजी मौनेन चैवापि यथा हि युक्तम् ॥ न चापि किंचित्स्मृतिकं स्पृशेच्च तच्चापि नात्रैव च संस्पृशेद्धि ॥४६॥ श्वसंत्यनिच्छंस्तु परिक्षिपेत्तु स्वाभीष्टसूर्यं तु नमेत्सदैव ॥ यथा यज्ञं हि मंत्रेण वेदप्रोक्तेन कर्मणा ॥४७॥ तत्त्वमन्यन्मगानां तु विधिमंत्रपुरस्कृतम्॥हविः संपद्यते यस्मात्तेन ते यज्विनः स्मृताः ॥४८॥ यथाग्निहोत्रं प्रथितं द्विजानां तथाध्वहोत्रं विहितं मगानाम्॥ अच्छं च नामेति तदध्वरस्य मुनेर्वचो नात्र विचारणास्ति ॥४९॥ पंचधूपाः प्रदातव्याः सिद्धिरस्येह सर्वदा ॥ दंडनायकवेले द्वे त्रिसंध्यं भास्करस्यतु ॥५०॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने भोजकोत्पत्तिवर्णनं नाम चत्वारिंशदुत्तरशततमोऽध्यायः॥१४०॥

॥ सांब उवाच ॥ भोजकानां यत्त्वयोक्तमव्यंगो देहशोधकः॥व्रतबंधस्त्वसौ प्रोक्तस्तेषां जातिश्च का स्मृता॥१॥ ॥व्यास उवाच ॥ ॥ ते पृष्टा भवता सर्वे भोजकानां कुमारकाः ॥ किमाख्यातं ततस्तैस्तु तदेवाचक्ष्व कृत्स्नशः ॥२॥ ॥ सांब उवाच ॥ ॥ संनिवेशा मया प्रोक्ता भोजकानां समंततः॥ ममैव ब्रूत तत्त्वं तद्वर्णः कोऽत्र कथं स्थितः ॥ ३ ॥ ततस्तु भगवान्प्राह वाक्यं वाक्यविशारदः ॥ ये त्वयोक्ताः श्रुताः सांब भोजकानां कुमारकाः ॥ ४ ॥ ममैवैते मगा ज्ञेया अष्टौ शूद्रा मदंगजाः ॥ एतद्बुद्ध्वा तु वचनं प्रणम्य शिरसा रविम् ॥५॥ दत्ता भोजकुलोत्पन्ना दशभ्यो दशकन्यकाः॥ ततस्तु मंदकेभ्योपि दत्ताश्चाष्टौ हि कन्यकाः ॥ ६ ॥ ततो निवेशितं तेषां मया सांब पुरं स्मर॥ दासकन्यास्तु याश्चाष्टौ भोजकन्याश्च या दश॥ ॥ ७ ॥ एतास्तेषां कुमाराणां ज्ञेयास्ता दश चाष्ट च ॥ तत्र ते भोजकन्यासु द्विजैरुत्पादिताः सुताः ॥ ८ ॥ भोजकास्तान्गणान्प्राहुर्ब्राह्मणान्दिव्यसंज्ञितान् ॥ दासकन्यासु ये जाता मंदगैरन्त्यसंज्ञितैः ॥ ९ ॥ मंदगा नाम ते ज्ञेयाः सवितुः परिचारकाः ॥ ते च विप्रपुरे तस्मिन्पुत्रदारशुभैर्वृताः ॥ १० ॥ स्वधर्मैर्यष्टुमारब्धैः शाकद्वीपेर्चितो रविः ॥ नानाविधैर्वैदिकैस्तु मंत्रैर्मुनिवरोत्तमाः ॥ ११ ॥ अव्यंगधारिणो मर्त्याः पूजयंते दिवस्पतिम् ॥ दृष्ट्वा व्यंगं तु वै तेषां कौतूहलसमन्वितः ॥ १२ ॥ सांबः प्राह नमस्कृत्य भूयः सत्यवतीसुतम् ॥ कथं वरोऽयमव्यंगः कथितो मुनिसत्तम ॥ १३ ॥ कुत एष समुत्पन्नः कस्माच्च स शुचिः स्मृतः ॥ बंधनीयः कदा चायं किमर्थं चैव धार्यते ॥ किं प्रमाणं च भगवन्व्यंग

[1] भक्ता मंत्रं जपंते च आदितः पुरुषोत्तम–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्चायं किमुच्युते ॥ १४ ॥ सुमंतुरुवाच ॥ ॥ श्रुत्वैवं वचनं व्यासो जांबवत्याः सुतस्य च ॥१५॥ उवाच कुरुशार्दूल साम्बं कालीसुतः स तु ॥ ॥ ॥ व्यास उवाच ॥ ॥ एतच्च मे यथोक्तस्त्वं जातिरेषां न संशयः ॥१६॥ अव्यंगस्यापि ते वच्मि लक्षणं गदतः शृणु ॥१७॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने भोजकजातिवर्णनं नामैकचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४१ ॥छ॥ ॥ व्यास उवाच ॥ ॥ देवता ऋषयो नागा गंधर्वाप्सरसां गणः ॥ यक्षरक्षांसि वै भानौ निवसंति ऋतुक्रमात् ॥ १ ॥ तत्र तु वासुकिर्ह्यब्दमुद्यत्सूर्यरथं जवात् ॥ स्व स्थानमाजगामाशु नमस्कृत्य दिवाकरम् ॥ २ ॥ अव्यंगमेव सूर्याय प्रीत्यर्थं वै समर्पयत् ॥ गांगेयभूषितं दिव्यं नातिरक्तसितं शुभम् ॥ ३ ॥ बबंध तं च तत्प्रीत्यै मध्यभागे तमात्मनः ॥ नागराजांगसंभूतो धृतो यस्माच्च भानुना ॥ ४ ॥ तत्तस्माद्धार्यते सूर्यप्रीत्यै तद्भक्तिमिच्छता ॥ विधा नेन च तत्त्वेन शुचिर्भवति भोजकः ॥ ५ ॥ नित्यं च धारणात्तस्य भवेत्प्रीतो दिवाकरः ॥ न धारयंति ये त्वेवं भोजकाः पूजका रवेः ॥ ६ ॥ सौरहीना न ते याज्या उच्छिष्टा नात्र संशयः ॥ स्मृत्याचारे ते हि भग्ना रविं नार्हंति पूजितुम् ॥ ७ ॥ पूजयंतो रविं ते हि नरकं यांति रौरवम् ॥ न वै हसेन्न उत्तिष्ठेद्यावदर्चां लभंति ते ॥ ८ ॥ इत्थं ज्ञात्वा न संदेहो ह्यव्यंगेन विना रविः ॥ नागराजस्य संस्पृष्टो ह्यारसुस्तेन संस्मृतः ॥ ९ ॥ एकवर्णः स कर्तव्यः कार्यसिद्धिकरस्तथा ॥ प्रमाणेनांगुलानां तु शताद्धि शतमुत्तरम् ॥ १० ॥ उत्कृष्टोयं प्रमाणेन मध्यमो विंशदुत्तरः ॥ शतम ष्टोत्तरं ह्रस्वो न तु ह्रस्वतरस्ततः ॥११॥ तदाकृतिः कृतश्चैष निर्मितो विश्वकर्मणा ॥ मध्यमे भोजकानां तु परः शत उदाहृतः ॥१२॥ संस्कृ तोऽपि विना तेन शुचिर्नैव भवत्युत॥तेनास्य धारणाद्वीर शुचिरेव तदा भवेत् ॥१३॥ हविर्होमादिकाः सर्वा भवंत्यस्य क्रियाः शुभाः ॥ अव्यंगः पतितांगश्च अव्यंगोऽथ महीपते ॥ १४ ॥ एष सारश्च सा रम्या वै ज्ञेया जयनामभिः ॥ अहेरंगात्समुत्पन्नो ह्यव्यंगस्तु ततः स्मृतः ॥ १५ ॥ यस्मादस्मादहेरंगमव्यंगस्तेन चोच्यते ॥ अर्हेति पूजायां धातोः प्रत्ययो ण्वुलततः स्मृतः ॥ १६ ॥ पूजितश्च पवित्रश्च यस्मात्तेनार्हकः स्मृतः ॥ सारसार्तः स्मृतं रूपं प्रधानं सार उच्यते ॥ १७ ॥ पण भक्तौ स्मृतो धातुस्तस्मात्सारसनः स्मृतः ॥ यस्मादर्चितमेवं तु सुवर्णमणिमौक्तिकैः ॥ १८ ॥ स ज्ञेयः पतितांगस्तु नित्ययज्ञैरुपाहृतः ॥ इत्येते कथिता वीर अव्यंगा व्यंगभोजकाः ॥ १९ ॥ ऋद्धिवृद्धिकरो नित्यं कायशुद्धिकर स्तथा ॥ सर्ववेदमयश्चायं सर्वदेवमयस्तथा ॥ २० ॥ सर्वभूतमयः सांब सर्वलोकमयस्तथा ॥ मध्येऽस्य संस्थितो ब्रह्मा मूले विष्णुर्महामते ॥२१॥ शशांकमौलिरन्त्ये तु संस्थितो यदुनंदन॥ऋग्वेदोऽस्य स्थितो मूले यजुर्वेदोऽस्य मध्यगः॥२२॥अग्रे स्थितः सामवेदो ग्रंथिरांगिरसोनघ॥पृथिवी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मूलमाश्रित्य स्तिथा च यदुसत्तम॥२३॥मूलाशनास्त्वपः सांब मध्ये देवो विभावसुः॥तासामनंतरं वात आकाशोऽग्रे समास्थितः ॥२४॥ मूले स्थितस्तु भूर्लोको भुवर्लोकस्तु मध्यगः ॥ स्वर्लोकश्चाग्रमाश्रित्य स्थितो व्यंगस्य यावता॥२५॥ एवं देवमयः सांब एवं लोकमयस्तथा॥धारणीयो महान्भक्त्या पूजकैः प्रीतये रवेः ॥२६॥ पूजयंति रविं ये वै विनानेन यदूत्तम ॥ पूजाफलं न तेषां स्यान्नरकं च व्रजंति हि ॥२७॥ तथा तेषां भवेन्नित्यमव्यङ्गो भोजकः सदा ॥ अन्यकाले यदुश्रेष्ठ इत्येतत्कथितं तव ॥२८॥ बन्धने कारणं वीर भूषणानि च सुव्रत ॥२९॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने व्यंगोत्पत्तिर्नाम द्विचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४२ ॥ ॥छ॥ ॥ सुमन्तुरुवाच ॥ ॥ श्रुत्वैवमेव सांबेन व्यासात्सत्यवतीसुतात् ॥ अव्यंगस्य च उत्पत्तिं पुनरागान्महामतिः ॥१॥ अथागत्य महातेजाः सांबो गत्वाश्रमं पुनः ॥ २ ॥ नारदस्य महाबाहोर्नारदं वाक्यमब्रवीत् ॥ कथमुत्क्षिप्य वै धूपं भोजकैः सवितुर्मुने ॥ ३ ॥ स्नानमाचमनं चैवमर्घ्यदानं महात्मने ॥ सांबस्य वचनं श्रुत्वा नारदो मुनिसत्तमः ॥ ४ ॥ उवाच कुरुशार्दूल सांबं जांबवतीसुतम् ॥ हंत ते कथयिष्यामि रवेर्धूपविधिक्रमम् ॥ ५ ॥ स्नानमाचमनं चैव स्वर्णदानं तथैव च ॥ आचांतस्त्रिस्ततः स्नात्वा वाससी निर्मले शुभे ॥ ६ ॥ अनार्द्रे संवसीतैव पवित्रे परिधाय च ॥ उदङ्मुखः प्राङ्मुखो वाप्याचामेच्च प्रयत्नतः ॥ ७ ॥ जले जलस्थो नाचामेज्जलादुत्तीर्य यत्नतः ॥ अप्सु[१] सूर्यस्तथाग्निश्च माता देवी सरस्वती ॥ ८ ॥ तस्मादुत्तीर्य चाचामेन्नाचामेत्तु जलाशये ॥ उपविश्य शुचौ देशे प्रयतः प्रागुदङ्मुखः ॥ ९ ॥ पादौ प्रक्षाल्य हस्तौ च अन्तर्जानुस्तथाचमेत् ॥ प्रसन्नाम्भिः पिबेत्त्वापः प्रयतः सुसमाहितः ॥ १० ॥ संमार्जनं तु द्विः कुर्यात्त्रिभिरभ्युक्षणं पुनः ॥ मूर्धानं खानि चात्मानमुपस्पृश्यानुपूर्वशः ॥ ११ ॥ आचांतोऽर्कं नमस्कृत्य शौचेषु शुचितामियात् ॥ क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः ॥ १२ ॥ भवंतीह क्रियाः सर्वा वृथा तस्य न संशयः ॥ शुचिकामा हि वै देवा वेदैरेवमुदाहृताः ॥ १३ ॥ इनोपासाकृतश्चैव सर्वे देवाः प्रयत्नतः ॥ शौचमेव प्रशंसंति शौचांगैर्हि विधीयते ॥ १४ ॥ आचान्तो मौनमास्थाय देवागारं ततो व्रजेत् ॥ श्वासरोधनिमित्तं तु प्राणमाच्छाद्य वाससा ॥ १५ ॥ शिरः प्रावृत्य यत्नेन केशोदकनिवृत्तये ॥ ततः पूजां रवेः कुर्यात्पुष्पैर्नानाविधैः शुभैः ॥ १६ ॥ गायत्रीं सशिरस्कां च यजमानः प्रयत्नतः ॥ धूपं ततोऽग्रये दद्यात्प्रथमं गुग्गुलाहुतिम् ॥ १७ ॥ पुष्पांजलिं ततो गृह्य तच्छिखायां प्रयत्नतः ॥ रवेर्मूर्धनि तं दद्यादेवमन्त्रमुदाहरन् ॥ १८॥ ॐ व्रतेन

१ जलमध्ये आचमननिषेधे हेतुमाह–'अप्सु'–इत्यादि ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्व्रतिनो वर्जयंति देवा मनुष्याः पितरश्च सर्वे ॥ तस्यादित्यं प्रसरं च मनामहे यस्तेजसा प्रथमं नाविभाति ॥ १९ ॥ धूपवेलाः स्मृताः पञ्च धूपेष्वेव तु पञ्चसु ॥ हवनाद्याः क्रियाः पञ्च रक्षिष्येहं तथा पुनः ॥ २० ॥ दंडनायकवेला तु प्रत्यृक्षे ऋक्षदर्शनात् ॥ नाज्ञावेला प्रदोषस्तु तत्त्व कार्यं विजानता ॥ २१ ॥ त्रिकालं तु रवेः पूजा कर्तव्या सूर्यदर्शनात् ॥ अर्धोदितस्तु पूर्वाह्णे ततोर्द्धस्तु [रविर्विभुः ॥ २२ ॥ हेलयेति च पूर्वाह्णे मध्याह्ने ज्वलनाय च ॥ तथैव मण्डले देयं नीचाह्ने ज्वलनाय च ॥ २३ ॥ चन्दनोदकमिश्राणि गन्धोदकयुतानि च ॥ पद्मानि करवीराणि तथा रक्तोत्पलानि च ॥ २४ ॥ कुसुमोदकमिश्राणि कुरुंटकुसुमं तथा ॥ गन्धादीनि च दिव्यानि कृत्वा वै ताम्रभाजने ॥ २५ ॥ धूपं दत्त्वाग्नये वीर प्रयत्नाद्गुग्गुलाहुतिम् ॥ अर्घ्यपात्रं तदा गृह्य कुर्यादावाहनं रवेः ॥२६॥ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते॥अनुकंपय मां देव गृहाणार्घ्यं दिवाकर ॥ २७ ॥ अनेनावाहानं कृत्वा जानुभ्यामवनीं गतः ॥ रवेर्निवेदयेदर्घ्यमादित्यहृदये गतः ॥ २८ ॥ ॐ नमोभगवते आदित्याय विश्वाय खेशाय ब्रह्मणे लोककर्तृणे ॥ ईशानाय पुराणाय सहस्राक्षाय ते नमः ॥ २९ ॥ सोमाय ऋग्यजुरथर्वाय ॥ ॐ भूर्भुवः स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ब्रह्मणे मुण्डे मध्ये पुरतः ॥ आदित्याय नमः ॥ ३० ॥ ॥ नारद उवाच ॥ ॥ सावित्र्याश्च परे तन्त्रे त्रैलोक्यत्राण कारिणे ॥ परितः परिगृह्याथ धूपभाजनमुत्क्षिपेत् ॥ ३१ ॥ निवेदयेत्ततो धूपं वाचमेतामुदीरयेत् ॥ त्वमेक एव रुद्राणां वसूनां च पुरातनः ॥ ३२ ॥ देवानां गीर्भिरभितः संस्तुतः शाश्वतो दिवि ॥ पूर्वाह्णे च तथा तेन मध्याह्ने चापरेण तु ॥ ३३ ॥ ॐ नमो भगवते ज्ञानात्मने त्वां च ॥ विष्णोस्तत्परमं पदं सदा पश्यंति सूरयः ॥ ३४ ॥ दिवाकरस्तु सायाह्ने मन्त्रेणार्घ्यं निवेदयेत् ॥ ॐ नमो वरुणाय शंभवे ॥ ३५ ॥ ॐ अकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ॥ हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन् ॥ ३६ ॥ अनेन विधिना दत्त्वा धूपं सूर्याय भोजकः॥ उत्क्षिपंश्चैव धूपेन विशेद्गर्भगृहं ततः ॥ ३७ ॥ ततः प्रविश्य धूपं तु प्रतिमायै निवेदयेत् ॥ मन्त्रेण मिहिरायेति निक्षुभायेति नित्यशः ॥ ३८ ॥ ततो राज्ञ्य नमश्चेति निक्षुभायै ततो नमः ॥ दंडनायकसंज्ञाय पिङ्गलाय च वै नमः ॥ ३९ ॥ तथा राज्ञाय स्रोषाय तथेशाय गरुत्मते ॥ ततः प्रदक्षिणं कुर्वन्दिग्देवेभ्यो निवेदयेत ॥ ४० ॥ दिंडिने तु ततो दद्याद्धेमंताय यदूत्तम ॥ महेश्वराय दद्यात्तु तथा व्योमाय यादव ॥ ४१ ॥ ( विश्वेभ्यो देवेभ्यो नमः ॥ रुद्रेभ्यो नमः ॥ ) ॐ ब्रह्मणे मुण्डपतये आदित्याय पुरुषेश्वराय सूर्याय नमोनमः ॥ ४२ ॥

१ ॐ नमो भगवते आदित्याय विश्वाय खेशाय ब्राह्मणे लोककर्तृणे ईशानाय पुराणाय सहस्राक्षाय ते नमः ॐ सोमाय ऋग्यजुरथर्वाय ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ॐ अनेककांतये नत्वा शेषाय वासुकितक्षककर्कोटकाय पद्मशंखकुलिकेभ्यो नागराजेभ्यो नमः ॥ ४३ ॥ तलसुतलपातालातलवितलरसातला दिवासिभ्यो दैत्यदानवपिशाचेभ्यो नमः ॥ ततः प्रदक्षिणं कुर्यान्मातृकाभ्यो नमोनमः ॥ ( ॐ ग्रहेभ्यो नमः ॥ ४४ ॥ ॐ दण्डनायकाय नमः ॥ ॐ मार्तंडाय नमः ॥ ॐ विनायकाय नमः ॥ ४५ ॥ ) एवमुद्दिश्य नामानि धूपं दत्त्वा वरानन ॥ उत्क्षिप्तो यत्र वै धूपो मुक्त्वा तत्रैव तं पुनः ॥ ४६ ॥ सूर्यगुप्तैरभिष्टूय एवं विज्ञाय ते ततः ॥ अर्चितस्त्वं यथा शक्त्या मया भक्त्या विभावसो ॥ ऐहिकामुष्मिकीं नाथ कार्यसिद्धिं ददस्व मे ॥ ४७ ॥ एवं त्रिषवणं स्नात्वा योऽर्चयेत्प्रणतो रविम् ॥ विधिना तु यथोक्तेन सोऽश्वमेधफलं लभेत् ॥ ४८ ॥ यश्चैवं कुरुते नित्यं यथोक्तं धूपविस्तरम् ॥ स पुत्रवानरोगी च मृतः संलीयते रवौ ॥ ४९ ॥ विधिना तु यथोक्तेन क्रियमाणानि यत्नतः ॥ सर्वकार्याणि सिद्ध्यन्ति सफलानि भवंति च ॥ ५० ॥ पुष्पं श्रेष्ठं यदा न स्यात्पत्राणि समुपाहरेत् ॥ पत्रं न स्यात्ततो धूपं धूपो न स्यात्ततो जलम् ॥ ५१ ॥ सर्वं न स्याद्यदा चैव प्रणिपातेन पूजयेत् ॥ अशक्तः प्रणिपातस्य मनसा पूजयेद्रविम् ॥ ५२ ॥ असम्भवे तु द्रव्याणां विधिरेष प्रकीर्तितः ॥ द्रव्याणां संभवे चैव सर्वमेवोपहारयेत् ॥ ५३ ॥ मन्त्रैः कर्मयुतो यस्तु मित्रे धूपं निवेदयेत् ॥ उच्चारणाच्च वै तेषां धूपप्रीतो भवेद्रविः ॥ ५४ ॥ शिरो नासा मुखं चैव भृशमावृत्य यत्नतः ॥ पूजयेद्भास्करं वीर शिथिलं तु न कारयेत् ॥ ५५ ॥ नलिनेन तु राजेंद्र नरो याति दिवाकरम् ॥ तस्माद्युक्तं सदा कार्यं पूज्यते च दिवाकरः ॥ ५६ ॥ तेऽश्वमेधफलं प्राप्य सूर्यलोकं व्रजंति हि ॥ धूपेन पूज्यमानं तु नराः पश्यंति यादव ॥ ५७ ॥ यांति ते परमं स्थानं यत्र पश्यंति सूरयः ॥ क्रियमाणं तथार्कं च भक्त्या पश्यंति ये नराः ॥ सर्वान्कामानिह प्राप्य ते यांति परमं पदम् ॥ ५८ ॥

इति श्रीभविष्ये महापुराणे ब्राह्मेःपर्वणि सप्तमीकल्पे सांबोपाख्याने धूपादिविविधविधिवर्णनं नाम त्रिचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४३ ॥

॥ ॥ सुमंतुरुवाच ॥ ॥ अथाजगाम भगवान्व्यासो द्वारवतीं पुरीम् ॥ द्रष्टुं नारायणं देवं शंखचक्रगदाधरम् ॥ १ ॥ तमागतमृषिं दृष्ट्वा वासुदेवो विशांपते ॥ अभ्युत्थाय महातेजाः पूजयामास भारत ॥ २ ॥ स्वयमेवासनं दत्त्वा पाद्यमर्घ्यं तथैव च ॥ पप्रच्छ प्रयतो भूत्वा व्यासं सत्यवती सुतम् ॥ ३ ॥ य एते भोजका विप्रा आनीता मत्सुतेन वै ॥ शाकद्वीपमितो गत्वा ज्ञानिनो मोक्षगामिनः ॥ ४ ॥ तान्दृष्ट्वा रूपतो विप्र प्रवेशा त्कर्मतस्तथा ॥ कौतूहलं समुत्पन्नं हर्षश्च परमो मम ॥ ५ ॥ कथमेतेःक्षणमपि तिष्ठंते पृथिवीतले ॥ येषां रविः सदा पूज्यस्तेषां मुक्तिः सदा

१ त्रिवृतमिति पाठः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वसेत् ॥ ६ ॥ नागत्वा भोजकत्वं हि मोक्षमाप्नोति कश्चन ॥ इदं मे मनसो ब्रह्मन्सदा संप्रतिभाति वै ॥ ७ ॥ ॥ व्यास उवाच ॥ ॥ एवमेव यथात्थ त्वं शंखचक्रगदाधर ॥ धन्या एते महात्मानो भोजका नात्र संशयः ॥ ८ ॥ ये पूजयंति सततं भानुमन्तं दिवाकरम् ॥ ज्ञानिनः कर्मनिष्ठाश्च सदा मोक्षगतिं गताः ॥ ९ ॥ यजंते सततं भानुं बलिपुष्पफलैस्तथा ॥ अन्नेनौषधिभिश्चैव आज्यहोमैश्च कृत्स्नशः ॥ १० ॥ होमं च शाश्वतं कृत्वा परं होमं ततः श्रिताः ॥ परहोमस्य करणात्पूतात्मानो ह्यकल्मषाः ॥ ११ ॥ विशंति परमां दिव्यां भास्करीं तैजसीं कलाम् ॥ कर्मणः साधने चैका तत्र चाग्नौ प्रतिष्ठिता ॥ १२ ॥ वायुमार्गस्थिता व्योम्नि द्वितीयांतःप्रकाशिका ॥ ततः परं तृतीया तु तत्स्मृतं सूर्यमण्डले ॥ ॥ १३ ॥ मंडलं तच्च सवितुर्दिव्यं ह्यजरमव्ययम् ॥ तस्याऽसौ पुरुषो मध्ये योऽसौ सदसदात्मकः ॥ १४ ॥ क्षराक्षरस्तु विज्ञेयो महासूर्यस्तथैव च ॥ निष्कलः सकलश्चापि द्वौ च तस्य प्रकल्पितौ ॥ १५ ॥ अक्षरः सकलश्चैव सर्वभूतव्यवस्थितः ॥ सतत्त्वः सकलः प्रोक्तस्तत्त्वहीनस्तु निष्कलः ॥ १६ ॥ तृणगुल्मलतावृक्षवृकसिंहद्विजाधिपान् ॥ सुरसिद्धमनुष्यांश्च स्थलजाञ्जलजान्हरेत् ॥ १७ ॥ व्यवस्थितः स सर्वत्र सर्वेषामंतरात्मनि ॥ यदा कल्पात्मकश्चैव द्वितीयां तनुमाश्रितः ॥१८॥ निष्कलस्तु सदा ज्ञेयः संस्थितस्तैजसीं कलाम्॥ हिमं घर्मं च वर्षं च त्रैलोक्ये कुरुते सदा ॥ १९ ॥ द्वितीया या तनुस्तस्य अक्षरं तत्परं पदम् ॥ देवयानं तु पंथानं कर्मयोगेन संस्थिता ॥ २० ॥ आदित्यसिद्धांतरिताः सांख्ययोगविदश्च ये ॥ तेऽभिगच्छंति तत्स्थानं स मोक्षः परिकीर्तितः ॥ २१ ॥ निर्द्वन्द्वो निर्गमश्चैव तत्र गत्वा न शोचति ॥ वेदेषु ब्रह्म वदंति ध्यायंते तत्त्ववेदिनः ॥ २२ ॥ ॐकारं तत्त्वतश्चापि ध्यायंते पुरुषोत्तम ॥ त्र्यक्षरं च तमोंकारं सार्धमात्रात्रये स्थितम् ॥ २३ ॥ वदंति चार्धमात्रस्थं मकारं व्यंजनात्मकम् ॥ ध्यायंति ये मकारीयं ज्ञानं ते हि सदात्मकम् ॥ २४ ॥ मकारो भगवान्देवो भास्करः परिकीर्तितः ॥ मकारध्यानयोगाच्च मगा ह्येते प्रकीर्तिताः ॥ २५ ॥ धूपमाल्यैर्यतश्चापि उपहारैस्तथैव च ॥ भोजयंति सहस्रांशुं तेन ते भोजकाः स्मृताः ॥ २६ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने भोजकस्योत्पत्तिवर्णनं नाम चतुश्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४४ ॥ ॥ छ ॥ ॥ ॥ ॥ वासुदेव उवाच ॥ ॥ ज्ञानोपलब्धिं विप्रेंद्र भोजकानां महामुने ॥ ब्रूहि तत्त्वं द्विजश्रेष्ठ कौतुकं परमं मम ॥ १ ॥ ॥ व्यास उवाच ॥ ॥ इमां ज्ञानोपलब्धिं तु निबोध गदतो मम ॥ अस्थिस्थूलं स्नायुयुतं मांसशोणितलेपनम् ॥ चर्मावनद्धं दुर्गंधि पूर्णं मूत्रपुरीषयोः ॥ २ ॥ जराशोकसमाविष्टं रोगायतनमातुरम् ॥ रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ॥ ३ ॥ कपालं वृक्षमूलानि कुचैलमसहायता ॥ समता सर्वं भूतेषु एवं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुक्तस्य लक्षणम् ॥ ४ ॥ तिले तैलं गवि क्षीरं काष्ठे पावकसंततिः ॥ उपायं चिंतयेदस्य धिया धीरः समाहितः ॥ ५ ॥ प्रमाथि च प्रयत्नेन मनः संयम्य चंचलम् ॥ बुद्धींद्रियाणि संयम्य शकुनानिव पंजरे ॥ ६ ॥ इंद्रियैर्नियतैर्देही धाराभिरिव तृप्यते ॥ सततममृतस्यैव जनार्दन महामते ॥ ॥ ७ ॥ प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम् ॥ प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ८ ॥ ध्यायमानस्य दह्यंते चांते दोषा यथाग्निना ॥ तथेंद्रियकृता दोषा दह्यंते प्राणनिग्रहात् ॥ ९ ॥ चित्तं चित्तेन संशोध्य भावं भावेन शोधयेत् ॥ मनस्तु मनसा शोध्य बुद्धिं बुद्ध्या तु शोधयेत् ॥ १० ॥ चित्तस्यातिप्रसादेन भाति कर्म शुभाशुभम् ॥ शुभाशुभविनिर्मुक्तो निर्द्वंद्वो निष्परिग्रहः ॥ निर्ममो निरहंकारस्ततो याति परां गतिम् ॥ ११ ॥ पर्वाह्णे लोहितं रूपं प्रथममृङ्मयं स्मृतम् ॥ यजुर्मयं द्वितीयं तु श्वेतं माध्याह्निकं स्मृतम् ॥ १२ ॥ कृष्णं तृतीयं सायाह्ने साम्नो रूपं तु तत्स्मृतम् ॥ प्रथमं राजसं देव द्वितीयं सात्त्विकं स्मृतम् ॥ १३ ॥ तृतीयं तामसं रूपं त्रैगुण्यं तस्य कल्पितम् ॥ त्रयाणां व्यतिरेकेण चतुर्थं सूर्यमंडलम् ॥ १४ ॥ ज्योतिःप्रकाशकं सूक्ष्मं प्रोक्तं देवनिरंजनम् ॥ चतुर्थं तु वेदविदः सूर्यसिद्धांतवेदिनः ॥ १५ ॥ ॐ कारप्रणवैर्युक्ता ध्याननिर्धूतकल्मषाः ॥ स्थिताः पद्मासने वीरा नाभिसंन्यस्तपाणयः ॥ १६ ॥ सुषुम्नानाडिकामार्गं कुंभरेचकपूरकैः ॥ त्रिभिः संशोध्य तान्पंच मरुतो देहमध्यगान् ॥ १७ ॥ पदांगुष्ठान्वितः स्विन्नमूर्ध्वमुत्क्षेपयेत्क्रमात् ॥ नाभिदेशे तु तं दृष्ट्वा देवमग्निमनामयम् ॥ १८ ॥ सोमं च हृदये दृष्ट्वा मूर्ध्नि वाग्निशिखां ततः ॥ वातरश्मिभिरासाद्य तं भित्त्वा मंडलं परम् ॥ १९ ॥ ततः परं तु यो गच्छेद्योगस्थः सूर्यमंडलम् ॥ यत्र गत्वा न शोचंति तत्सौरं परमं पदम् ॥ २० ॥ देवार्चनं महाबाहो कीर्तितं केशिसूदन ॥ प्रथमं हृदयं स्थानं द्वितीयं चाग्निमाश्रितम् ॥ २१ ॥ तृतीयं नाभिसंस्थं च चतुर्थं सूर्यमंडलम् ॥२२॥ स्थानं परं वै परमात्मसंस्थं भानोः सुरेशस्य वदंति तज्ज्ञाः ॥ ज्ञेयः स मोक्षश्च नृणां स एव संसारविच्छित्तिकरं पदं ततः ॥ २३ ॥ इदममृतसमं परस्य वेद्यं किरणसहस्रभृतो हितं जनानाम् ॥ ऋषिचरितमवेत्य तत्त्वसारं व्यपगतमोहधियः प्रयांति मोक्षम् ॥ २४ ॥ इदं मगानां चरितं मया ते प्रख्यापितं यानवरेण युक्तम् ॥ ज्ञात्वा त्विमं मोक्षविदो वदंति सिद्धाश्च तत्स्थानमवाप्नुवंति॥ ॥ २५ ॥ यन्मयोक्तमिदं ज्ञानं देयं श्रद्धावतां नृणाम् ॥ नास्तिकानामबुद्धीनां न देयं भूतिमिच्छता ॥ २६ ॥ ॥ सुमंतुरुवाच ॥ ॥ इत्युक्त्वा भगवान्व्यासो भोजकज्ञानमुत्तमम् ॥ नारायणं महाबाहो जगमायतनं हरेः ॥ २७ ॥ ख्यातो यस्त्रिषु लोकेषु गंगया परितोषितः ॥ बदर्यां मंडितो

१ वायुना चापि किल्बिषम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वीर नरनारायणाश्रमः ॥ २८ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे भोजकज्ञानवर्णनं नाम पंचचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४५ ॥ ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥ य एते भोजकाः प्रोक्ता देवदेवस्य पूजकाः ॥ नान्यं भोज्यमथैतेषां ब्राह्मणैश्च कदाचन ॥ १ ॥ भास्करस्य प्रिया ह्येते पूज्यत्वं च तथा गताः ॥ दिव्याश्चैते स्मृता विप्रा आदित्यांभःसमुद्भवाः ॥ २ ॥ अभोज्यत्वं कथं याता भोजकास्तद्वदस्व मे ॥ किं कुर्वाणास्तथा कर्म भोज्यतां यांति मे वद ॥३॥ ॥ सुमंतुरुवाच ॥ ॥ इममर्थं पुरा पृष्टो वासुदेवो महीपते ॥ कृतवर्मणा पुरा राजंस्तथा सांवो महावलः॥४॥ गतौ सांबपुरीं वीर तथा नारद पर्वतौ॥ भुक्तवंतौ गृहे सर्वे भोजकस्य महात्मनः ॥५॥ आदित्यकर्मणो लोके देवान्नख्यातिमागताः ॥ तेन ते पूजिताः सर्वे भक्त्या भोज्यैरनेकशः ॥६॥ आगतास्ते पुरीं वीर पुण्यां द्वारवतीं विभोः ॥ तावृषी दिवमारूढौ राजन्नारदपर्वतौ ॥७॥ वासुदेवं महातेजा हार्दिक्यो वाक्यमब्रवीत् ॥ य एते भोजका विप्र पूजका भास्करस्य तु ॥ ८ ॥ अन्नमेषां कथं विप्रौ भुक्तवंतौ जनार्दन ॥ तावृषी दिव्यमाख्यातौ यौ तौ नारदपर्वतौ ॥ अभोज्याः किल एते वै ब्राह्मणानां जनार्दन ॥९॥ वासुदेव उवाच ॥ ॥ न ते भोज्या महाबाहो भोज्या भोजाश्च सर्वदा ॥ अभिवाद्यां प्रयत्नेन यथादित्यो महामते ॥१०॥ आचरंतश्च तत्कर्म भोज्यत्वं प्रव्रजंति ते ॥ तच्छ्रूयतां यदुश्रेष्ठ यत्कार्यं चापि तैर्विभो ॥ यतमानैर्महाबाहो तदिहैकमनाः शृणु ॥११॥वृषली यस्य वै भार्या यश्चाव्यंगं न धारयेत् ॥ अभोज्यः स तु विज्ञेयो भोजको नात्र संशयः ॥१२॥ अस्नातः पूजयेद्यस्तु तथाभ्यंगविवर्जितः ॥ आदित्यं यदुशार्दूल तथा च विधिना विभो॥१३॥ सेवको भोजको यस्तु शूद्रान्नं येन भुज्यते ॥ कृषिं च कुरुते यस्तु देवार्चामपि वर्जयेत्॥१४॥जातकर्मादयो यस्य न संस्काराः कृता विभो ॥ आरुणेयैश्च मंत्रैश्च सावित्रीं न च वै पठेत् ॥ तस्य गेहे द्विजो भुक्त्वा कृच्छ्रपादेन शुध्यति ॥ १५ ॥ पितृदेवमनुष्याणां भूतानां भास्करस्य तु ॥ अकृत्वा विधिवत्पूजां यस्तु भुङ्क्ते स धर्महा ॥ १६ ॥ अभ्यंगेन विहीनो यः शंखहीनस्तथैव च ॥ शिरसा धारयेत्केशान्स ज्ञेयो भोजकाधमः ॥ १७ ॥ देवार्चनं तथा होमं स्नानं तर्पणमेव च ॥ दानं ब्राह्मणपूजां च कुर्वतो भोजकस्य तु ॥ अभ्यंगेन विहीनस्य सर्वं भवति निष्फलम् ॥ १८ ॥ सर्वदेवमयो ह्येष सर्ववेदमयस्तथा ॥ अभ्यंगो यदुशार्दूल पवित्रः परमः स्मृतः ॥ १९ ॥ भोजकानां यदुश्रेष्ठ तस्य मूले स्थितो हरिः ॥ मध्ये ब्रह्मा महातेजा अग्रे गोश्रुतिभूषणः ॥ २० ॥ ऋग्वेदो यस्य मूलस्थो मध्ये सामानि कृत्स्नशः ॥ यजुर्वेदस्तथा श्रेष्ठश्चाथर्वसहितः स्थितः ॥ २१ ॥ त्रयोऽग्नयस्तथा राजंस्त्रयो लोकाः स्थिताः क्रमात् ॥ एवमेष पवित्रस्तु अभ्यंगो भोजकस्य तु ॥ २२ ॥ यस्त्वनेन विहीनस्तु भोजको भोजकाधमः ॥ अभोज्यः स तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विज्ञेयः सोऽशुचिर्नात्र संशयः ॥ २३ ॥ निर्माल्यमथ नैवेद्यं कुंकुमं देवहेलिनाम् ॥ ये प्रयच्छंति शूद्राणां विक्रीणंति च भोजकाः ॥ तेऽधमा भोजका ज्ञेया ये च देवस्वहारिणः ॥ २४ ॥ न पूजयंति देवेशं देवस्वं क्षपयंति च ॥ न ते देवप्रियास्तात विज्ञेया भोजकाधमाः ॥ २५ ॥ यस्मिन्न भुक्ते नैवेद्यं भोजकोऽश्नातिमानद ॥ तदन्नं भुंजतस्तस्य नरकाय न शांतये ॥ २६ ॥ नैवेद्यं भोजयेत्तस्माद्भास्करस्य नरः सदा ॥ प्रथमं यदुशार्दूल तच्च देहविशोधनम् ॥ २७ ॥ ब्राह्मणानां पुरोडाशो यथा कायविशोधनः ॥ भोजकानां तथा वीर नैवेद्यं कायशोधनम् ॥ २८ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने भोजकवर्णनं नाम षट्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४६ ॥ ॥ छ ॥

॥ ॥ वासुदेव उवाच ॥ ॥ अत्र पृष्टो यथा देवो भास्करो देवपूजितः ॥ अरुणेन महाबाहो के प्रिया भोजकास्तथा ॥ १ ॥ पूजायां तव के योग्याः के न योग्या भवंति च ॥ इति पृष्टः स भगवानरुणेन दिवाकरः ॥ यदुवाच महाबाहो तदिहैकमनाः शृणु ॥ २ ॥ ॥ ॥ भास्कर उवाच ॥ ॥ परदारान्परद्रव्यं ये न हिंसंति भोजकाः ॥ ते प्रिया मम वै नित्यं ये न निंदंति दैवतान् ॥ ३ ॥ वाणिज्यं कृषिसेवां तु वेदानां निन्दनं च ये ॥ कुर्वंति भोजका ज्ञेयाः सर्वे ते मम वैरिणः ॥ ४ ॥ येषां भार्यासंग्रहणं कर्षणं ये प्रकुर्वते ॥ नृपसेवां खगश्रेष्ठ विज्ञेयाः पतितास्तु ते ॥ भुंजते ये च शूद्रान्नं ज्ञेयास्ते शत्रवो मम ॥ ५ ॥ पूजा कृता तु या तैस्तु तथार्घ्यं च खगोत्तम ॥ पूजां तामथ चाप्यर्घ्यं नाहं गृह्णामि खेचर ॥ ६ ॥ य एते कथिता वीर ये च शंखविवर्जिताः ॥ निर्माल्यं ये मदीयं तु नैवेद्यं कुंकुमं तथा ॥ ७ ॥ शूद्राय ये प्रयच्छंति विक्रीणंति च ये खग ॥ यच्छन्ति य च वैश्याय भोजका मे न ते प्रियाः ॥ ८ ॥ यजंते ये च सावित्रीं महाश्वेतां च गोपतेः ॥ ये न जानंति मे मुद्रां किंकराणां च नामतः ॥ ९ ॥ य एते कथिता वीर भोजकास्ते मया खग ॥ नैते पूजयितुं शक्ता ये प्रिया मम भोजकाः ॥ ताञ्छृणुष्व खगश्रेष्ठ भूत्वा चैकाग्रमानसः ॥ १० ॥ देवद्विजमनुष्याणां पितॄणां चापि पूजकाः ॥ ते प्रिया मम वै नित्यं शक्ताः पूजयितुं रविम् ॥११॥ येषां मुण्डं शिरो नित्यं ये चाभ्यंगसमन्विताः[1] ॥ वादयंति च ये शंखं दिव्यास्ते भोजका मताः ॥ १२ ॥ त्रिकालं ये च मां नित्यं सुस्नाताः क्रोधवर्जिताः ॥ पूजयंति खगश्रेष्ठ ते प्रिया मम भोजकाः ॥१३॥ वारे मदीये नक्तं तु षष्ठ्यां ये च प्रकुर्वते ॥ सप्तम्यामुपवासं तु तथा संक्रमणे मम ॥ १४ ॥ दिव्यास्ते ब्राह्मणा ज्ञेया भोजका मम पूजकाः ॥ पूजयंति च ये विप्रान्मद्भक्ता मत्परायणाः ॥

१ ये चाभ्यंगविहीनास्तु ये च सत्यविवर्जिताः—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ते प्रियाः सततं मह्यं भोजका गरुडाग्रज ॥ १५ ॥ मयि भक्तिं न कुर्वंति ब्राह्मणान्पूजयंति नो ॥ न ते पूज्या न वंद्याश्च ये द्विषंति च मां सदा ॥ ॥ १६ ॥ ये कुर्वंति महायज्ञान्भोजका गरुडाग्रज ॥ पितृदेवमनुष्याणां पूजार्थं संततं खग ॥ १७ ॥ प्रियास्ते सततं वीर भोजकानां तथोत्तमाः॥ तस्मात्सर्वप्रयत्नेन पंचयज्ञान्प्रवर्तयेत् ॥ १८ ॥ एकभक्तेन ये नित्यं वर्तंते कश्यपात्मज ॥ भुंजते न च ये रात्रौ भोजकास्ते प्रिया मम ॥ १९ ॥ मम वारे च ये वीर तथा षष्ठ्यां च केशव ॥ न रात्रौ भुञ्जते प्राज्ञा मत्प्रियास्ते मगाः खग ॥ २० ॥ प्रतिसंवत्सरं ये तु भोजका गरुडाग्रज ॥ न यच्छंति पितुर्मातुर्दिवसे तेन मे प्रियाः ॥ २१ ॥ इत्थं भूता भोजका ये माघमासे च सप्तमी ॥ पुष्पाणां करवीराणि तथा रक्तं च चंदनम् ॥ २२ ॥ वाचको ब्राह्मणानां तु नैवेद्यं मोदकास्तथा ॥ घृताहुत्यो गुग्गुलश्च क्षीरेण स्नपनं तथा ॥ २३ ॥ वाद्यानां शंखशब्दश्च नृत्यं नाट्यं मतं मम ॥ पंचवर्णाः पताकास्तु श्वेतं छत्रं च मे प्रियम् ॥ २४ ॥ नान्यवर्णैः कृता पूजा तथा प्रीणाति मां खग ॥ यथा कृता भोजकेन पूजा प्रीणाति मां सदा ॥ नान्यदेवप्रतिष्ठा तु कर्तव्या भोजकेन तु ॥ २५ ॥ ॥ वासुदेव उवाच ॥ ॥ इत्युक्त्वा भगवान्देवश्चारुणाय पुरानघ ॥ लक्षणं भोजकानां तु ततो मेरुमथाक्रमत् ॥ २६ ॥ एवं भोज्या भोजकास्तु न चाभोज्याः कदाचन ॥ अनुष्ठानविहीना ये न ते भोज्यास्तु भोजकाः ॥ २७ ॥ भौमास्तु ब्राह्मणा ये तु अनुष्ठानविवर्जिताः ॥ तेऽप्यभोज्या भवन्तीह विकर्मस्था विशेषतः ॥ २८ ॥ नास्ति पूज्यतमं किंचिन्मांगल्यं पावनं तथा ॥ चतुर्णामिह वर्णानां मुक्त्वा भोजकमुत्तमम् ॥ पूजिते भोजके वीर आदित्यः पूजितो भवेत् ॥ २९ ॥ भुञ्जते यस्य वै गेहे भोजका यदुनंदन ॥ तस्य भुंक्ते स्वयं भानुर्ब्रह्मा विष्णुस्तथा शिवः ॥३०॥ यथेह सर्वसत्त्वानां प्रधानत्वे स्थितो रविः ॥ तथेह सर्वभूतानां भोजकः पूज्य उच्यते ॥ ३१ ॥ तीर्थानां तु कुरुक्षेत्रं सरसां सागरो यथा ॥ तथा पूज्यतमो ज्ञेयः पूज्यानां भोजको विभो ॥३२॥ विशेषेण च सौराणां भोजकः पूज्य उच्यते॥ भर्ता पूज्यो यथा स्त्रीणां शिष्याणां च यथा गुरुः ॥ भोजकस्तु तथा पूज्यः सौराणां हृदिकात्मज ॥३३॥ यस्य भुंक्ते भोजकस्तु गंधपुष्पादिनार्चितः ॥ तस्य भुंक्ते स्वयं भानुः पितरो देवतास्तथा ॥३४॥ एवं पूज्यास्तथा भोज्या भोजका हृदिकात्मज ॥ ये सौरा भोजकस्यान्नं भुंजते निर्विकल्पतः ॥ ते सर्वे पापनिर्मुक्ता यांति सूर्यसलोकताम् ॥ ३५ ॥ कथितो यत्र यो भोज्यो यथा भोज्यः स वर्जितः ॥ अथ किं बहुनोक्तेन श्रूयतां वचनं मम ॥ ३६ ॥ नास्ति वेदात्परं शास्त्रं नास्ति गंगासमा सरित् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अश्वमेधसमं पुण्यं नास्ति पुत्रसमं सुखम् ॥ २७॥ नास्ति भानुसमो देवो नास्ति मातृसमा गतिः ॥ यथैतानि समस्तानि उत्तमानि यदूत्तम ॥ तथोत्तमो भोजकस्तु संप्रोक्तो भास्करेण तु ॥ २८ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने भोजकलक्षणवर्णनं नाम सप्तचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४७ ॥छ॥ ॥ सुमंतुरुवाच ॥ ॥ अथ सांबो महातेजा दृष्ट्वा चक्रं पितुः करे ॥ ज्वालामालाकरालं तु महता तेजसान्वितम् ॥ १ ॥ पप्रच्छ पितरं सांबो भक्त्या श्रद्धासमन्वितः ॥ कुतस्तात त्वया प्राप्तं चक्रमादित्यसन्निभम् ॥ २ ॥ किमर्थं वहते देव दिव्यमायुधमुत्तमम् ॥ एतदाख्याहि मे सर्वं श्रोतुंकामस्य कौतुकात् ॥ ३ ॥ ॥ वासुदेव उवाच ॥ ॥ साधुसाधु महाबाहो साधु पृष्टोऽस्म्यहं त्वया ॥ शृणुष्वैकमनाः पुत्र चक्रस्य विधिनिर्णयम् ॥ ४ ॥ दिव्यं वर्षसहस्रं तु भानुमाराध्य श्रद्धया ॥ प्राप्तं चक्रं मया तस्माद्भास्करा ल्लोकपूजितात् ॥ ५ ॥ नभोगः पंचकारूढः स्थितः साक्षाद्दिवाकरः ॥ ग्रहाः सोमादयो यस्य संस्थिता नाभिमंडले ॥ ६ ॥ आदित्या द्वादश समा अरेषु क्रमशस्तथा ॥ प्रोक्तं पथिषु तत्त्वानि पृथिव्यादीनि यानि वै ॥ ७ ॥ एतैस्तत्त्वैः परिव्याप्तं चक्रं कालात्मकं परम् ॥ संक्षेपात्ते मया ख्यातं दत्तं चक्रमिवापरम् ॥ ८ ॥ ॥ सांब उवाच ॥ ॥ कथं कालमयं देव चक्रं कमलमुच्यते ॥ इदं तावन्ममाचक्ष्व ज्ञातुमिच्छामि तत्त्वतः ॥ ९ ॥ ॥ वासुदेव उवाच ॥ ॥ कमलं ह्यृतुभिः षड्भिः षड्दलं चाक्षयाश्रितम् ॥ पुरुषाधिष्ठितं तद्धि तत्र सांगो रविः स्थितः ॥ १० ॥ यच्च कालत्रयं लोके तन्नाभित्रयमुच्यते ॥ मासा अरा महाबाहो पक्षाश्च प्रधयः स्मृताः ॥ ११ ॥ नेमी चैव परे प्रोक्ते अयने दक्षिणोत्तरे ॥ पथि नाभिषु योगे च योगाख्यास्तपनादिभिः ॥ १२ ॥ नक्षत्राणि ग्रहाश्चैव सदा चात्र स्थिताः स्मृताः ॥ एतैर्व्याप्तमिदं चक्रं स्थूलसूक्ष्मप्रभेदतः ॥ ॥ १३ ॥ अत्रोद्दिष्टेषु कालेषु ये नोद्दिष्टा मया तव ॥ युगादिकल्पपर्यंतास्तेऽपि चात्र स्थिताः क्रमात् ॥ १४ ॥ यत्ते कालात्मकं चक्रमिदं संक्षेपतो मया ॥ कथितं तद्धि निष्क्रान्तं प्रदीप्तात्सूर्यमंडलात् ॥ १५ ॥ असुराणां वधायेदं मया लब्धं दिवाकरात् ॥ आराध्य तपसा सूर्यं पुरा कल्पे जगद्गुरुम् ॥ अतः संपूजयाम्येनं ग्रहैस्तत्त्वैर्वृतं सदा ॥ १६ ॥ अर्कं भक्तो हि चक्रस्थं यः पूजयति भक्तिमान् ॥ तेजसा रविसंकाशः पुष्पोत्तरपुरं व्रजेत् ॥ १७ ॥ तस्मात्तं मत्कुलानंदं मित्रं संपूजयाम्यहम् ॥ ग्रहैस्तत्त्वैर्वृतं भक्त्या स्वमंत्रैः सततं विभुम् ॥ १८ ॥ सप्तम्यां चक्रमालिख्य ये यजंति दिवाकरम् ॥ रक्तचंदनपूर्णेन कुंकुमेन सुगंधिना ॥ १९ ॥ पिष्टगंधादिभिर्वापि रक्तवर्णकमिश्रकैः ॥ रक्तैश्च कमलैः शुद्धैः कर

१ श्रोतुकामस्य ते मुखात्–इ० पा० । २ वत्स–इ० पा० । ३ अयनादि तथैव हि–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वीरैः सुगंधिभिः ॥ २० ॥ अन्यैर्वा कुसुमैर्वन्यैः प्रत्यग्रैर्जंतुवर्जितैः ॥ अपर्युषितनिश्छिद्रैः शुभधन्यैर्दलैरपि ॥ २१ ॥ फलैः पक्वैरोषधिभिस्तथा दूर्वांकुरैः कुशैः ॥ धूपैश्च विविधैर्गंधैस्तथा वस्त्रैश्च भूषणैः ॥ २२ ॥ भक्ष्यैर्भोज्यैश्च पेयैश्च चोष्यैर्लेह्यैश्च शक्तितः ॥ वितानशोभासिकतैः पलाशैरुपशोभितैः ॥ २३ ॥ छत्रचामरघंटाभिर्भूषणैर्दर्पणादिभिः ॥ नृत्यवादित्रगीतैश्च वेदैः पुण्यकथास्वनैः ॥ २४ ॥ सर्वत्र जयघोषैश्च संपूर्णे पूजयंति ये ॥ संपूर्णान्विविधान्कामान्निर्विघ्नान्प्राप्नुवंति ते ॥ २५ ॥ स्वचक्रं चापि निर्विघ्नं वृद्धिमायाति सुव्रत ॥ हन्यते परचक्रं च यत्रेदं पूज्यते सकृत् ॥ २६ ॥ संक्रांतौ ग्रहणे चापि लिखित्वा यो जपेदिदम् ॥ भवंति नियताः सांब तस्य सानुग्रहा ग्रहाः ॥ २७ ॥ सर्वरोगविहीनस्तु सर्वदुःखविवर्जितः ॥ चिरं जीवति धर्मात्मा सर्वैश्वर्यसमन्वितः ॥ २८ ॥ एष वै कथितो वत्स चक्रयोगो मया तव ॥ अर्कस्य सर्वयज्ञानां श्रेष्ठः सिद्धिप्रदो भृशम् ॥ २९ ॥ पुण्यो धर्म्यस्तथा पुष्ट्यः शत्रुघ्नश्च विशेषतः ॥ श्वेतो रक्तोथ पीतश्च कृष्णश्चापि विभागशः ॥ ३० ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने कालचक्रवर्णनं नामाष्टचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४८ ॥ छ ॥ ॥

॥ सांब उवाच ॥ ॥ किंप्रमाणं लिखेच्चक्रं तत्र पद्मं च किं भवेत् ॥ नेमिप्रध्यारनाभीनां विभागः क्रियते कथम् ॥१॥ ॥ वासुदेव उवाच ॥ ॥ चतुःषष्ट्यंगुलं चक्रं कृत्वा वृत्तं प्रमाणतः ॥ अष्टांगुला भवेन्नेमिः सेयं विभवतः सदा ॥२॥ नाभिक्षेत्रं तथैव स्यात्पद्मं तत्त्रिगुणं भवेत् ॥ अरक्षेत्रं च पद्मस्य कर्णिकाकेसराणि च ॥ ३ ॥ केसरस्य च पादेन शेषपत्राणि कल्पयेत् ॥ पत्रसंधिश्च पादांगं क्रमात्तत्रापि भिद्यते ॥ ४ ॥ उन्नतं कमलं तत्तु कुर्यान्नाभ्यां न संशयः ॥ आकीर्णाः संविभक्ताश्च कर्तव्याः प्रधयः क्रमात् ॥ ५ ॥ अंगुलस्थूलमूलं स्यादराग्रं त्रिगुणं ततः ॥ भूमिः पीता बहिर्ज्ञेया कर्णिकाकेसराणि च ॥ ६ ॥ सितं नाभिस्थलं तत्र द्वाराणि परिकल्पयेत् ॥ हस्तमात्रं भवेत्तस्य तन्मानं द्वारसंनिभम् ॥ ७ ॥ शेषं रक्तं समुद्दिष्टं संहताः पत्रसंधयः ॥ नाभिनेम्यंतरे लेखाः सिताश्चांगुलमानतः ॥ ८ ॥ सितरक्तसिताभिश्च समंतादुपशोभितम् ॥ कपोलं द्वारपद्मं च द्वारकोणे प्रकल्पयेत् ॥ ९ ॥ चतुर्द्वारं भवेदेवमैन्द्रद्वारं प्रकल्पयेत् ॥ अपराह्णेऽथ पूर्वाह्णे वरुणमावाहयेत्सदा ॥ १० ॥ द्वाराण्येतानि संवर्त्य यथोक्तविधिना यजेत् ॥ यथोक्ता देवताः सर्वाः स्वमंत्रैरेव भक्तितः ॥ ११ ॥ चक्रमेवं समुद्दिष्टं यजनार्थं मया तव ॥ यन्त्रेनानेन संबद्धो दीक्षितश्चार्कमंडले ॥ इत्थं मे भानुना पूर्वमिदमुक्तं वरानन ॥ १२ ॥ ॥ सांब उवाच ॥ ॥ के मंत्राश्चक्रयज्ञेऽस्मिन्देवतानां प्रकीर्तिताः ॥ यन्त्रक्रमश्च कः प्रोक्तो रूपं किं च पृथक्पृथक् ॥ १३ ॥ ॥ वासुदेव उवाच ॥ ॥ खपोल्कं हृदयाध्यक्षं पूर्वोक्ते कमले



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यजेत् ॥ कर्णिकायां दलेष्वेवमंगानि हृदयादि च ॥ १४ ॥ नाममंत्राश्चतुर्थ्यंतास्तेषां पूर्वोक्तकोटयः ॥ १५ ॥ नमस्कारश्च सर्वत्र एष एव विधिः स्मृतः ॥ १५ ॥ स्वाहांता होमकाले च कर्मस्वन्येषु ते पुनः ॥ यथा कर्मावसानाश्च प्रयोक्तव्याः समासतः ॥ १६ ॥ ॐ खषोल्काय विद्महे दिवाकराय धीमहि ॥ तन्नः सूर्यः प्रचोदयात् ॥ १७ ॥ सावित्री च महाबाहो चतुर्विंशाक्षरा मता ॥ सर्वतत्त्वमयी पुण्या ब्रह्मगोत्रार्कवल्लभा ॥ १८ ॥ एवं मंत्राः प्रयोक्तव्याः सर्वकर्मस्वतंद्रितैः ॥ अन्यथा विफलं कर्म भवेदिह परत्र च ॥ १९ ॥ तस्मात्सर्वप्रयत्नेन मंत्राञ्ज्ञात्वा विधिं तथा ॥ यथावत्कर्म तत्कृत्वा साधयेदीप्सितं फलम् ॥ २० ॥ ॥ सांब उवाच ॥ ॥ आदित्यमंडले दीक्षा कस्य कार्या कथं च सा ॥ कदा केन किमर्थं च कथयेदं ममाखिलम् ॥२१॥ ॥ वासुदेव उवाच ॥ ॥ ब्राह्मणं क्षत्रियं वैश्यं कुलीनं शूद्रमेव च॥पुरुषं वा स्त्रिय वापि दीक्षयेत्सूर्यमंडले ॥२२॥ स्वयं भक्त्योपपन्नश्च प्रणिपत्य गुरुं तथा ॥ गुरुस्तं दीक्षयेद्विप्रः कल्पज्ञः सत्यवाक्छुचिः ॥ २३ ॥ षष्ठ्यामग्निं समाधाय पूर्वोक्तविधिना क्रमात् ॥ संपूज्यार्कं तथा वह्नौ हुत्वा वै हविषा रविम् ॥ २४ ॥ शिष्यं स्नातमथाचांतं खषोल्काकृतिविग्रहम् ॥ स्वांगैरालभ्य चांगेषु दर्भवद्भिस्तथाक्षतैः ॥२५॥ पुष्पैः संपूज्य चांगानि देयः कार्यो बलिस्तथा ॥ आदित्यो वरुणोऽर्कोऽग्निः साधितो हृदयेन च ॥ २६ ॥ भवेद् घृतगुडक्षीरैस्तंडुलैश्च प्रमाणतः ॥ त्रिभिरंजलिभिर्हुत्वा देवायाग्नौ हुतं पुनः ॥ २७ ॥ दत्त्वा शिष्याय मुक्त्वैवं दत्त्वांते दंतधावनम् ॥ क्षीरं वृक्षोद्भवं तस्मै द्वादशांगुलसन्निभम् ॥ २८ ॥ दंतश्लिष्टेऽपनीते च तेन प्राच्यां क्षिपेत्ततः ॥ दंतधावनमास्यं च तदा तस्योपरि क्षिपेत् ॥ २९ ॥ मैत्रावरुणमीशानं वक्रं सौम्यसमाश्रितम् ॥ प्रशस्तं दंतकाष्ठस्य मुखमन्यत्र निंदितम् ॥ ३० ॥ यां दिशं दंतकाष्ठस्य मुखं पश्यति तत्पतिम् ॥ अर्चयेत्तेन शांतिः स्यादित्युक्तं भानुना स्वयम् ॥३१॥ पुनस्तद्वचनं श्रुत्वा अंगैरालभ्य च क्रमात् ॥ संपूज्य लोचने तत्र संचिंत्य परिजप्य च ॥ ३२ ॥ कारयित्वा च संकल्पं तथा चेंद्रियसंयमम् ॥ स्वापयेत स्वयं चापि वरं श्रुत्वा समाहितः ॥ ३३ ॥ आचम्य कृतरक्षस्तु कृतद्रव्याधिवासनः ॥[1]हृदयेन नमेत्प्रातः स्नात्वा हुत्वा हुताशनम् ॥ ३४ ॥ स्वप्नं पृच्छेद्यथा दृष्टं शुभं संवादयेच्च तम् ॥ हृदयेनाशुभे दृष्टे शतहोमं समाचरेत् ॥ ३५ ॥ स्वप्ने पश्यति हर्म्याणि देवतानां हुताशनम् ॥ नदीयानानि रम्याणि उद्यानोपवनानि च ॥ ३६ ॥ पत्रपुष्पफलाढ्यानि कमलानि च राजतम् ॥ संपश्यति यदि स्वप्ने ब्राह्मणं वेदपारगम् ॥३७॥ राजानं शौर्य संपन्नं धनाढ्यं क्षत्रियोत्तमम् ॥ शुश्रूषणपरं शूद्रं यदि तत्त्वार्थमादिशेत् ॥३८॥ प्रशस्तं भाषणं चैव यथासंभवतो

१ दधिघृतक्षीरैः—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मतम् ॥ एतैः स्पर्शनमेतेषां श्रेष्ठमारोहणं ततः ॥३९॥ वाहनानि प्रशस्तानि प्रासादं नावमेव च॥पर्वतं च समारुह्य विपुलां भार्गवीं भजेत्॥४०॥ पीत्वा सुरां समुद्रं च दध्याज्यं क्षीरमेव च ॥ सोमं मांसं हविर्भुक्त्वा काश्यपीं लभते नरः ॥४१॥ लब्ध्वा वस्त्राणि रत्नानि विविधाभरणानि च॥ वाहनानि महीं गाश्च धान्योपकरणानि च॥४२॥समृद्धिमाप्नुयात्किंचित्स्वप्नानां दर्शनं शुभम्॥ शुभकर्मानुगं यच्च तत्सर्वं शुभमुच्यते॥४३॥तस्मा दन्यदनिष्टं स्यात्तस्माद्युक्ता प्रतिक्रिया॥क्रमादालिख्य सप्तम्यां तत्र संपूज्य भास्करम् ॥४४॥ तर्पयित्वा द्विजाञ्छिद्धानानम्य पूर्ववद्गुरुम्॥ सृष्टि क्रमेण भृत्यर्थं मुक्त्यर्थं नान्यथा भवेत् ॥ ४५ ॥ दिवाकरं समालभ्य पुरुषोथ यथाक्रमम् ॥ सर्वग्रहेषु तत्त्वेषु यथावत्तन्नियोजयेत् ॥ ४६ ॥ विशु द्धेषु विशुद्धं तं ध्यात्वा चादित्यवत्क्रमात् ॥ नियोजयेत्पृथिव्याश्च ततः प्रभृति सर्वशः ॥ ४७ ॥ आदित्यमंडलं शुद्धं सर्वमुक्तं नियोजयेत् ॥ एवं तु मनसा ध्यात्वा जुहुयाच्चैव तं शतम् ॥ ४८ ॥ सर्वैर्मन्त्रैः क्रमादेवं दीक्षा प्रोक्ता वरापस ॥ कृत्वैव पुष्पपातं तु तस्मिन्नादित्यमण्डले ॥४९॥ बद्धास्यमंजलौ पुष्पं कृत्वा दत्त्वा च मंत्रितम् ॥ क्षिपेद्वै कुलशुद्ध्यर्थं नामार्थं च विशेषतः ॥५०॥ यत्र तत्पतितं पुष्पं तस्य तत्कुलमादिशेत् ॥ नाम चादित्यसंयुक्तमित्युक्तं भानुना स्वयम् ॥ ५१ ॥ संपूज्य श्रावयेत्तत्र समयानर्कभाषितान् ॥ प्रातः सायं च मध्याह्ने रवेरभिमुखः स्थितः ॥ ॥ ५२ ॥ उपस्थानं सदा कुर्यादर्चनं च सदा नरः ॥ अदृष्ट्वार्कं न भोक्तव्यं दिवा रात्रौ हुताशनम् ॥ ५३ ॥ दृष्ट्वा भोक्तव्यमर्काख्यं न भोक्तव्यं कदाचन ॥ न च पद्भ्यां स्पृशेत्तद्वन्नासनं परिवर्जयेत् ॥ ५४ ॥ न लंघ्या प्रतिमाच्छाया न लंघ्यास्तिथयः क्वचित् ॥ नक्षत्राणि ग्रहा योगा मासा मासाधिपाश्च ये ॥ ५५ ॥ अयने ऋतवः पक्षास्तथैव दिवसानि च ॥ कालः संवत्सरश्चापि यः कश्चित्काल उच्यते ॥ ५६ ॥ अभिवंद्यः स सर्वोऽपि नमस्यः पूज्य एव च ॥ तस्मात्कालाधिपः सूर्यः स्वयं कालश्च पठ्यते ॥ ५७ ॥ ज्योतिर्गणस्य सर्वस्य स्थावरास्थावरस्य च ॥ चेतनाचेतनस्यापि सर्वात्मा यः प्रकीर्तितः ॥ ५८ ॥ स्तुत्यो वंद्यः सदा पूज्यस्त्वयायं सर्वथा नृप ॥ मनसा कर्मणा वाचा देवनिन्दां परित्य जेत् ॥ ५९ ॥ प्रेषयित्वा[1] च निर्माल्यं तदश्वेभ्यो निवेदयेत् ॥ प्रक्षाल्य हस्तौ पादौ च नमस्कुर्याद्दिवाकरम् ॥ ६० ॥ इत्येषा परमा दीक्षा तव संक्षेपतो मया ॥ भुक्तिमुक्तिकरी चापि कथिता प्रविभागतः ॥ ६१ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने सूर्यदीक्षावर्णनं नामैकोनपञ्चाशदुत्तरशततमोऽध्यायः ॥ १४९ ॥ ॥ छ ॥ ॥ वासुदेव उवाच ॥ ॥ अतः परं प्रवक्ष्यामि यथा पूज्यो

१ वर्धयित्वा च निर्माल्यं सदात्मान निवेदयेत्-इ० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिवाकरः ॥ स्थंडिले यदुशार्दूल निबोधैकाग्रमानसः ॥ १ ॥ मण्डलैरष्टभिः कार्यं चक्रं कालात्मकं शुभम् ॥ मध्ये पद्माकृतं चक्रमरैर्द्वादशभिर्युतम् ॥ २ ॥ तन्मध्ये कमलं प्रोक्तं पत्राष्टकसमन्वितम् ॥ सर्वात्मा सकलो देवः खपोल्कः किरणोज्ज्वलः ॥ ३ ॥ पूजनीयः सदा मध्ये सहस्रकिरणायुधः ॥ प्रणवेन महाबाहो चतुर्बाहुसमन्वितः ॥ ४ ॥ अरुणं[1] पूजयेत्प्राज्ञः सदा देवाग्रजं शुभम्[2] ॥ दक्षिणे पूजयेद्देवीं निक्षुभां भास्करस्य तु ॥ ५ ॥ रेवतं दक्षिणे पार्श्वे उत्तरे पिंगलं सदा ॥ संज्ञां च यदुशार्दूल श्रेयसे सततं बुधः ॥ ६ ॥ आग्नेय्यां लेखकं वीर नैर्ऋत्यामश्विनौ तथा ॥ वायव्यां पूजयेद्देवं मनुं वैवस्वतं विभुम् ॥ ७ ॥ ऐशान्यां पूजयेद्देवीं यमुनां लोकपावनीम् ॥ द्वितीयावरणे वीर पूर्वतः पूजयेद्द्वियत् ॥ ८ ॥ दक्षिणे च ततो देवीं पश्चिमे गरुडं तथा ॥ उत्तरे नागराजानं पुत्रमैरावतं शुभम् ॥ ९ ॥ आग्नेय्यां पूजयेद्देलिं प्रहेलिं नैर्ऋते तथा ॥ वायव्यामुर्वशीं देवीमीशाने विनतां तथा ॥ १० ॥ तृतीयावरणे पूर्वे पूजयेद्गुरुमादरात् ॥ पश्चिमे त्वर्कपुत्रं तु उत्तरे धिषणं तथा ॥ ११ ॥ ऐशाने शशिपुत्रं तु सोममाग्नेयमण्डले ॥ पूजयेद्दक्षिणे कोणे नैर्ऋते राहुमादरात् ॥ १२ ॥ वायव्ये विकचं वीर पूजयेत्सततं बुधः ॥ चतुर्थावरणे देवं पूजयेल्लेखमादरात् ॥ १३ ॥ आग्नेये शांडिलीपुत्रं दक्षिणे दक्षिणाधिपम् ॥ विरूपाक्षं नैर्ऋते देवं जलेशं पश्चिमे तथा ॥ १४ ॥ वायुपुत्रं च वायव्यां सततं पूजयेन्नरः ॥ ईशाने देवमीशानं[3] पूजयेत्सततं बुधः ॥ १५ ॥ उत्तरे यक्षराजानं कुबेरं पूजयेद्बुधः ॥ पञ्चमे पूजयेद्वीर सदा स्वावरणे द्विजाः ॥ १६ ॥ पूर्वतः परमां देवीं महाश्वेतां महामतिः ॥ श्रियमृद्धिं विभूतिं च धृतिं चैवोन्नतिं तथा ॥ १७ ॥ पृथिवीं यदुशार्दूल महाकीर्तिं तथैव च ॥ इन्द्रं विष्णुं चार्यमणं भगं पर्जन्यमेव च ॥ १८ ॥ विवस्वंतं तथार्कं च त्वष्टारं किरणोज्ज्वलम् ॥ पूजयेद्वरुणं षष्ठे चैवमेतान्दिवाकरान् ॥ १९ ॥ शिरो नेत्रे तथा वर्म अस्त्रं च यदुसत्तम ॥ अरुणं सरथं वीर सप्तमे पूजयेद्बुधः ॥ २० ॥ तथाश्वान्यदुशार्दूल सदा चावरणे बुधः ॥ यक्षरक्षांसि गन्धर्वान्मासान्पक्षानहानि तु ॥ २१ ॥ संवत्सरं तथा पुत्र ह्येतान्संपूजयेत्पुरा ॥ य एवं पूजयेद्देवं भास्करं सततं नरः ॥ स गच्छेत्परमं स्थानं यत्र गत्वा न शोचति ॥ २२ ॥ ( ॐ खपोल्काय नमः ) मूलमन्त्राक्षराणीह चांगानि परिचक्षते ॥ अनेन विधिना यस्तु पूजयेत्सततं रविम् ॥ २३ ॥ नित्यमुभयसप्तम्यां स गच्छेत्परमं पदम् ॥ इत्युक्त्वा भगवान्देवो जगामाशु गृहं रविः ॥ २४ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने आदित्यपूजाविधिवर्णनं नाम पञ्चाशदुत्तरशततमोऽध्यायः ॥ १५० ॥ ॥ छ ॥ ॥

१ वरुणम्—इ० पा० । २ सदा वेदानुगं शुभम्—इ० पा० । ३ वासुदेवम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ ॥ सूत उवाच ॥ ॥ अथ राजा महातेजाः शतानीको द्विजोत्तमम् ॥ प्रणम्य शिरसा भक्त्या सुमंतुं वाक्यमब्रवीत् ॥ १ ॥ अहो देवस्य माहात्म्यं भास्करस्यामितौजसः ॥ कीर्तितं भवता मह्यं सर्वपापप्रणाशनम् ॥ २ ॥ तस्मान्नार्कसमं देवं लोके पश्यामि सुव्रत ॥ न चाप्यस्य स्थिता विप्र गतिर्लोकेषु विद्यते ॥ ३ ॥ प्रवर्तते जगद्विप्र सर्गकाले दिवाकरात् ॥ स्थितौ पालयते चापी कल्पांते संहरेत्पुनः ॥ ४ ॥ श्रुत्वैवं देवमाहात्म्यं भास्करस्यामितौजसः ॥ कीर्तितं भवता मह्यमश्वमेधशताद्वरम् ॥ ५ ॥ किं तु मे संशयो ब्रह्मन्सुमहान्हृदि वर्तते ॥ केनोपायेन विप्रेंद्र मुच्यते संभवार्णवात् ॥ ६ ॥ दिवाकरप्रसादाद्वै सुप्रसन्नाद्वृषध्वजात् ॥ कथं तुष्येत्सदा देवोध मेंण कतरेण तु ॥ ७ ॥ श्रुता मे बहवो धर्माः श्रुतिस्मृत्युदितास्तथा ॥ वैष्णवाः शैवधर्माश्च तथा पौराणिकाः श्रुताः ॥ ८ ॥ श्रोतुकामो ह्यहं विप्र सौरं धर्मभनौपमम् ॥ भगवन्तस्सर्वधन्यास्ते सौरधर्मपरायणाः ॥ ९ ॥ ब्रूहि मे देवदेवस्य भानोर्धर्ममनौपमम् ॥ शृण्वतो नास्ति मे तृप्तिरमृतस्यैवमेव च ॥ १० ॥ अश्वमेधादयो यज्ञा बहुसंभारविस्तराः ॥ न शक्यास्ते यतः कर्तुमल्पवित्तैर्द्विजातिभिः ॥ ११ ॥ सुखोपायमतो ब्रूहि धर्मकामार्थसाधकम् ॥ हिताय सर्वमर्त्यानां सर्वपापभयापहम् ॥ १२ ॥ सौरधर्मपरं पुण्यं पवित्रं पापनाशनम् ॥ श्रुत्वा तु वचनं राज्ञो व्यासशिष्यो महामुनिः ॥ प्रणम्य शिरसा व्यासमिदं वचनमब्रवीत् ॥ १३ ॥ ॥ सुमंतुरुवाच ॥ ॥ श्रूयतामभिधास्यामि सुखोपायं महाफलम् ॥ परमं सर्वधर्माणां सर्वधर्ममनौपमम् ॥ १४ ॥ रविणा कथितं पूर्वमरुणस्य विशांपते ॥ कृष्णस्य ब्रह्मणो वीर शंकरस्य न विद्यते ॥ १५ ॥ संसारार्णवमग्नानां सर्वेषां प्राणिनामयम् ॥ सौरधर्मतमः श्रीमान्हिताय जगतोदितः ॥ १६ ॥ यैरयं शांतहृदयैः सूर्यभक्तैर्भगार्थिभिः ॥ संसेव्यते परो धर्मस्ते सौरा नात्र संशयः ॥ १७ ॥ एककालं द्विकालं वा त्रिकालं नित्यमेव च ॥ ये स्मरंति रविं भक्त्या सकृदेवापि भारत ॥ सर्वपापैर्विमुच्यंते सप्तजन्मकृतैरपि ॥ १८ ॥ स्तुवंति ये सदा भानुं न ते प्रकृतिमानुषाः ॥ स्वर्गलोकात्परिभ्रष्टास्ते ज्ञेया भास्करा भुवि ॥ १९ ॥ नानर्कः स्मरतेर्कं वै नानर्कोर्कं समर्चयेत् ॥ नानर्कः कीर्तयेदर्कं नानर्कोर्कमवाप्नुयात् ॥ २० ॥ सौरधर्मस्य सारोयं सूर्यभक्तिः सुनिश्चला ॥ षोडशांगा च सा प्रोक्ता रविणेह दिवौकसाम् ॥ २१ ॥ प्रातःस्नानं जपो होमस्तथा देवार्चनं नृप ॥ द्विजानां पूजनं भक्त्या पूजा गोश्वत्थयोस्तथा ॥ २२ ॥ इतिहासपुराणेभ्यो भक्तिश्रद्धापुरस्कृतम् ॥ श्रवणं राजशार्दूल वेदाभ्यासस्तथैव च ॥२३॥ मद्भक्त्या जनवात्सल्यं पूजायां चानुमोदनम् ॥ स्वयमभ्यर्चयेद्भक्त्या ममाग्रे वाचकं परम् ॥ २४ ॥ पुस्तकस्य सदा श्रेष्ठ ममातीव प्रियं सुराः ॥ मत्कथाश्रवणं नित्यं स्वरनेत्रांगविक्रिया ॥ २५ ॥ ममानुस्मरणं नित्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्त्या श्रद्धापुरस्कृतम् ॥ षोडशांगा भक्तिरियं यस्मिन्म्लेच्छेपि वर्तते ॥ विप्रेंद्रः स मुनिः श्रीमान्स जात्यः स च पंडितः ॥२६॥ न मे प्रियश्च तुर्वेदी मद्भक्तः श्वपचोपि यः ॥ तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥ २७ ॥ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥ तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ २८ ॥ यो मां सर्वगतं पश्येत्सर्वं च मयि संस्थितम् ॥ तस्याहमास्थितो नित्यं स च नित्यं मयि स्थितः ॥ २९ ॥ अष्टादशार्थकक्षायाः परं चाष्टभिरुद्भवैः ॥ रोधयित्वा महाबाहो तथा ज्ञानतरेण तु ॥ ३० ॥ दुर्गपालं विजित्याशु भास्करार्धं तु दुर्जयम् ॥ जित्वा च पुरराजानं महातेजमनौपमम् ॥ ३१ ॥ मनसाचलया भक्त्या यो मां ध्यायति मानवः ॥ अहं तमेव चिंतामि आत्मवत्ससततं नरम् ॥ ३२ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मवर्णनं नामैकपंचाशदुत्तरशततमोऽध्यायः ॥ १५१ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ सूरे च दुर्लभा भक्तिर्दुर्लभं सूरपूजनम् ॥ सूराय दुर्लभं दानं सूरहोमश्च दुर्लभः ॥ १ ॥ सुदुर्लभं रवेर्ज्ञानं तदभ्यासोपि दुर्लभः ॥ सुदुर्लभतरं ज्ञेयं खषोल्कज्ञानमुत्तमम् ॥ २ ॥ सुदुर्लभतरं ज्ञानं सदा वै भास्करस्य तु ॥ प्रदक्षिणां चक्रतुर्वै पादौ भक्त्यार्कमंदिरे ॥ ३ ॥ तौ करौ श्लाघ्यतां प्राप्तौ यौ पूजां चक्रतू रवेः ॥ सैवैका रसना धन्या स्तोत्रं या कुरुते रवेः ॥ ४ ॥ तन्मनः पुण्यतां प्राप्तं यद्वित्वा विषयं नृप ॥ निश्चला च रवेर्लीला निर्भीका क्रोधवर्जिता ॥ ५ ॥ ॥ शतानीक उवाच ॥ ॥ सूर्यार्चनविधिं कुर्वञ्छ्रोतुमिच्छामि तत्त्वतः ॥ त्वत्प्रसादाद्द्विजश्रेष्ठ कौतूहलमतीव मे ॥ ६ ॥ यत्पुण्यं स्थापिते सूर्ये कृते सूर्यालये च यत् ॥ सम्मार्जने च यत्पुण्यं यत्पुण्यमुपलेपने ॥ ॥ ७ ॥ स्थाने कृते च यत्पुण्यं तथा नीराजने कृते ॥ नीलौषधिप्रवापेन नृत्यमंगलवादितैः ॥ ८ ॥ अर्घ्यदानेन यत्पुण्यं तोयस्नानेन यद्भवेत् ॥ पंचामृतमयस्नाने दधिस्नाने च यत्फलम् ॥ ९ ॥ चक्राभ्यंगे च यत्प्रोक्तं वस्त्रस्नाने च यत्फलम् ॥ मधुस्नाने पयःस्नाने स्नान इक्षुरसस्य तु ॥ १० ॥ उद्वर्तनं शुचिस्थाने कुशपुष्पोदकेन तु ॥ सुवर्णरत्नतोयैश्च गंधचन्दनवारिभिः ॥ ११ ॥ कर्पूरागुरुतोयेन स्वच्छतोयेन यत्फलम् ॥ विलेपनैश्च गंधाढ्यैर्विलेपनफलं लभेत् ॥१२॥ तालपत्रप्रदाने तु प्रदाने चामरस्य तु ॥ रक्तपुष्पार्चने यच्च दामभिः पूजनेन च ॥ ॥ १३ ॥ सुमानां मंडपे यच्च पुष्पमालावलंबनात् ॥ पूजाभक्तिविशेषैश्च गृहमालावलंबने ॥ १४ ॥ पुष्पदानविशेषेण धूपदीपैश्च यत्फलम् ॥ वस्त्रालंकारदाने तु पुण्यश्रवणकीर्तने ॥ १५ ॥ ब्रह्मश्रवस्य दाने तु अव्यंगस्य च गोपते ॥ मगानां मत्प्रसादेन अभिवादनपूजने ॥ १६ ॥ व्योम



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूजाफलं यच्च अरुणस्य च पूजनम् ॥ तथान्यदपि यत्प्रोक्तमज्ञानाद्ब्राह्मणोत्तम ॥ १७ ॥ तत्सर्व ब्रूहि मे ब्रह्मन्भक्तानामनुकंपया ॥१८॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सूरधर्मेषु प्रश्नवर्णनं नाम द्विपंचाशदुत्तरशततमोऽध्यायः ॥ १५२ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ सुमतिश्च रवेर्भक्तः पांडवेय महामते ॥ अतस्ते निखिलं वच्मि शृणुष्वैकमना नृप ॥ १ ॥ कल्पादौ सृजतो वीर ब्रह्मणो विविधाः प्रजाः ॥ अहंकारो महानासीन्नास्ति लोके मदुत्तमः ॥ २ ॥ तथा पालयतो वीर केशवस्य धरापते ॥ तथा संहरतो जज्ञेऽहंकारस्त्र्यम्बकस्य च ॥ ३ ॥ चिंतयंतोऽथ ते देवाः केशवश्च नराधिप ॥ मिथस्ते स्पर्धया युक्ताः परस्परविरोधिनः ॥ ४ ॥ विवादस्तु महानासीत्कंजजांबुनगौकसाम् ॥ परस्परं महाबाहो मनसाश्रित्य केवलम् ॥ ५ ॥ अहं कर्ता विकर्ताऽहं पालकोऽहं जगत्प्रभुः ॥ इत्याह भगवान्ब्रह्मा कृष्णभीमौ समर्चितौ ॥ ६ ॥ तथैत्य शंकरः क्रुद्धः कः शक्तो महते भुवि ॥ संहर्तुं जगदेतद्धि स्रष्टुं पालयितुं तथा ॥ ७ ॥ नारायणोऽप्येवमेव मनाक् क्रोधसमन्वितः ॥ न वा शक्तो जगत्स्रष्टुं संहर्तुं रक्षितुं तथा ॥८॥ एवं तेषां प्रवदतां क्रुद्धानां च परस्परम् ॥ समाविशत्तदाऽज्ञानं तमो मोहात्मकं विभो ॥९॥ तेन क्रांतधियः सर्वे न पश्यंति परस्परम् ॥ अत्यर्थं मोहमापन्ना न जानंतीह किंचन ॥ १० ॥ अपश्यंतो मिथस्ते तु निषण्णाः क्ष्मातले विभो ॥ आरमंति हि ये चान्ये ते दिवाकरमास्थिताः ॥ ११ ॥ तमसा मोहिताः सर्वे निद्रावत्क्रांतचेतसः ॥ मनाग्ज्ञानेन चाक्रांताः किं कुर्यामेति मोहिताः ॥ १२ ॥ अथ भूताधिपो देवो गोश्रुताभरणोज्ज्वलः ॥ चंद्रार्धकृतशोभस्तु शीतलांशुविशोधितः ॥ १३ ॥ आर्तिमेत्य परां वीर मोहितस्तमसा विभो ॥ अपश्यन्नब्रवीद्देवं माधवं भूधरं हरिम् ॥ १४ ॥ ॥ महादेव उवाच ॥ ॥ कृष्ण कृष्ण महाबाहो क्व गतस्त्वं महामते ॥ ब्रह्मा च क्व गतो वीर नाहं पश्यामि वां क्वचित् ॥ १५ ॥ मोहेन महताहं वै तमसा च विमोहितः ॥ किं करोमि क्व गच्छामि क्वाहमधुना स्थितः ॥ १६ ॥ क्ष्माधरं पृथिवीं वृक्षान्देवगंधर्वदानवान् ॥ विपुलं सागरं सिन्धून्नाहं पश्यामि किंचन ॥ १७ ॥ केनोपायेन पश्येयं जगत्स्थावरजंगमम् ॥ ब्रूहि मे देवशार्दूल व्रीडामऽतीव जायते ॥ १८ ॥ शंकरस्य वचः श्रुत्वा हरिर्वचनमब्रवीत् ॥ शोकगद्गदया वाचा तमसा मोहितो नृप ॥ १९ ॥ ॥ विष्णुरुवाच ॥ ॥ भीमभीम न जानेऽहं क्व भवान्वर्ततेऽधुना ॥ ममापि मोहितं चेतस्तमसातीव शंकर ॥ २० ॥ क्व गच्छामि क्व तिष्ठामि कथं तत्स्वस्थतां व्रजेत् ॥ तमसा पूरितं सर्वं जगद्धि परमेश्वर ॥ २१ ॥ यद्यसौ दृश्यते देवः सुरज्येष्ठोंऽबुजोद्भवः ॥ पृच्छावस्तं महात्मानं यदि ते रोचते हर ॥ २२ ॥ हित्वा दर्पमहंकारं सममास्थाय केवलम् ॥ पद्माननं पद्मयोनिं पद्मपत्रनिभेक्षणम् ॥ २३ ॥ इत्येवं गदतो वाक्यं विष्णोरमिततेजसः ॥ श्रुत्वोवाच विभु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मा गंगाधरमहीधरौ ॥ २४ ॥ कृष्णकृष्ण महाबाहो भीमभीम महामते ॥ क्व भवंतौ ब्रूत किंच किं युवामूचथुर्मिथः॥ २५ ॥ ममातीव मनोबुद्धी तमसा वशमागते ॥ न शृणोमि न पश्यामि निद्रामोहवशं गतः ॥ २६ ॥ अहो बत जगत्सर्वं सदेवासुरमानुषम् ॥ तमसा व्याप्ततं देवौ न जाने क्व गतं महः ॥ २७ ॥ अथ तेषां प्रवदतां ब्रह्मादीनां दिवौकसाम् ॥ दर्पक्रोधभयार्तानां तमसाक्रांतचेतसाम् ॥ २८ ॥ तेषां दर्पापहाराय प्रबोधार्थं च गोपतेः ॥ तेजोरूपं समुद्भूतमष्टशृंगमनौपमम् ॥ २९॥ अलक्ष्यं पापतमसा महद्व्योम नराधिप ॥ ज्वालामालावृतं वीर बहुरूपं च भासते ॥ ३० ॥ शतयोजनविस्तीर्णं गतमूर्ध्वं भ्रमत्तथा ॥ गोमध्यतो महाराज कर्णिकेवांबुजस्य तु ॥ ३१ ॥ प्रकाशं तेजसा तस्य जगत्सर्वमिदं नृप ॥ पुरेष्वंतर्यथा वीर अंबुजस्यार्चिभिः सदा ॥३२॥ दृष्ट्वा परस्परं सर्वे हुंकारादिविकारिणः॥ तेजसा मोहितास्तस्य जगत्सर्वमिदं नृप ॥३३॥ तेजसा मोहितं तस्य महद्व्योम नराधिप॥ ततो विस्मयमासीना दृष्टगोपतयो नृप ॥ ३४ ॥ पश्यमाना महो व्योम्नि मिथो वचनमब्रुवन् ॥ अहो तेजः समुद्भूतमस्माकं श्रेयसे नृप ॥ ३५ ॥ प्रकाशाय च लोकानां सर्वे पश्याम किं न्विदम्॥ ज्ञानायोर्ध्वं गतो ब्रह्मा चाधस्तात्त्रिपुरांतकः ॥३६॥ तिर्यग्जगाम देवेशश्चक्रांबुजगदाधरः॥ अलब्ध्वा तस्य ते सर्वे प्रमाणं गैरिकाधिपाः॥३७॥ विस्मयोत्फुल्लनयनाः समागम्य परस्परम्॥सर्वे कंजादिका देवा इदं वचनमब्रुवन्॥३८॥ कोऽयं किमात्मकश्चायं किमिदं तेजसां निधिः॥ अहोऽस्य दर्शनात्सर्वे संजाता ज्ञानिनो वयम् ॥३९॥ तस्मात्सर्वे प्रणम्यैनं स्तुवीमोऽद्भुतदर्शनम् ॥ कृतांजलिपुटाः सर्वे चास्तुवंस्त्रिदिवौकसः ॥ ४० ॥ स्तुवतामप्यथैतेषां सहस्रकिरणो रविः ॥ आत्मानं दर्शयामास कृपया परया वृतः ॥ ४१ ॥ ज्ञात्वा भक्तिं महाबाहो ब्रह्मादीनां महोपमाम् ॥ अथ ते व्योम्नि देवेशं ददृशुः परमेश्वरम् ॥४२॥ खषोल्कलोकनाथेशं सहस्रकिरणोज्ज्वलम् ॥ कृत्तिकाभिरसंस्पृष्टं यद्वा तत्कार्तिकास्थितम् ॥ ४३ ॥ दुर्जयं कृत्तिकानां तु तथैकेन विवर्जितम् ॥ तथा हस्तविहीनं च सप्तर्षिरहितं तथा ॥४४॥ वर्षाब्दारहितं देवं सप्तस्वरविवर्जितम् ॥ सकलं निष्कलं चैव सदैकाकाररूपिणम् ॥४५॥ तद्दृष्ट्वानेकशिरसमनेकचरणं तथा ॥ अनेकोदरबाहुंसमनेकाभरणान्वितम् ॥ ४६ ॥ अनेकाननमक्षीबं सहस्राक्षमनौपमम् ॥ अनेकवर्णरूपं च अनेकमुकुटोज्ज्वलम् ॥ ४७ ॥ दृष्ट्वैवं देवदेवस्य रूपं भानोर्महात्मनः ॥ विस्मयोत्फुल्लनयनास्तुष्टुवुस्ते दिवाकरम् ॥ ४८ ॥ कृतांजलिपुटो भूत्वा ब्रह्मा स्तोतुं प्रचक्रमे ॥ प्रणम्य शिरसा भानुमिदं वचनमब्रवीत् ॥४९॥ ॥ ब्रह्मोवाच ॥ ॥ नमस्ते देवदेवेश सहस्रकिरणोज्ज्वल ॥ लोकदीप नमस्तेऽस्तु नमस्ते कोणवल्लभ ॥५०॥ भास्कराय नमो नित्यं खषोल्काय नमोनमः॥ विष्णवे कालचक्राय सोमायामिततेजसे ॥ ५१ ॥ नमस्ते पंचकालाय इन्द्राय वसुरेतसे ॥ खगा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

य लोकनाथाय एकचक्ररथाय च ॥ ५२ ॥ जगद्धिताय देवाय शिवायामिततेजसे ॥ तमोघ्नाय सुरूपाय तेजसां निधये नमः ॥ ५३ ॥ अर्थाय कामरूपाय धर्मायामिततेजसे ॥ मोक्षाय मोक्षरूपाय सूर्याय च नमोनमः ॥ ५४ ॥ क्रोधलोभविहीनाय लोकानां स्थितिहेतवे ॥ शुभाय शुभरूपाय शुभदाय शुभात्मने ॥ ५५ ॥ शांताय शांतरूपाय शांतयेस्मासु वै नमः ॥ नमस्ते ब्रह्मरूपाय ब्राह्मणाय नमोनमः ॥ ५६ ॥ ब्रह्मदेवाय ब्रह्मरूपाय ब्रह्मणे परमात्मने ॥ ब्रह्मणे च प्रसादं वै कुरु देव जगत्पते ॥ ५७ ॥ एवं स्तुत्वा रविं ब्रह्मा श्रद्धया परया विभो ॥ तूष्णीमासीन्महाभाग प्रहृष्टेनांतरात्मना ॥५८॥ ब्रह्मणोऽनंतरं रुद्रः स्तोत्रं चक्रे विभावसोः ॥ त्रिपुरारिर्महातेजाः प्रणम्य शिरसा रविम् ॥ ५९ ॥ ॥ महादेव उवाच ॥ ॥ जय भाव जयाजेय जय हंस दिवाकर ॥ जय शंभो महाबाहो खग गोचर भूधर ॥ ६० ॥ जय लोकप्रदीपेन जय भानो जगत्पते ॥ जय काल जयानंत संवत्सर शुभानन ॥६१॥ जय देवादितेः पुत्र कश्यपानंदवर्धन ॥ तमोघ्न जय सप्तेश जय सप्ताश्ववाहन ॥६२॥ ग्रहेश जय कांतीश जय कालेश शंकर ॥ अर्थकामेश धर्मेश जय मोक्षेश शर्मद ॥ ६३ ॥ जय वेदांगरूपाय ग्रहरूपाय वै नमः ॥ सत्याय सत्यरूपाय सुरूपाय शुभाय च ॥६४॥ क्रोधलोभविनाशाय कामनाशाय वै जय ॥ कल्माषपक्षिरूपाय यतिरूपाय शंभवे ॥६५॥ विश्वाय विश्वरूपाय विश्वकर्माय वै जय ॥ जयोंकार वषट्कार स्वाहाकार स्वधामय ॥६६॥ जयाश्वमेधरूपाय चाग्निरूपार्यमाय च ॥ संसारार्णवपीताय मोक्षद्वारप्रदाय च ॥ ६७ ॥ संसारार्णवमग्नस्य मम देव जगत्पते ॥ हस्तावलंबनो देव भव त्वं गोपतेद्भुत ॥ ६८ ॥ ईशोप्येवमहीनांगं स्तुत्वा भानुं प्रयत्नतः ॥ विरराम महाराज प्रणम्य शिरसा रविम् ॥ ६९ ॥ अथविष्णुर्महातेजाः कृतांजलिपुटो रविम् ॥ उवाच राजशार्दूल भक्त्या श्रद्धासमन्वितः ॥ ७० ॥ ॥ विष्णुरुवाच ॥ ॥ नमामि देवदेवेशं भूतभावनमव्ययम्॥दिवाकरं रविं भानुं मार्तंडं भास्करं भगम् ॥ ७१ ॥ इंद्रं विष्णुं हरिं हंसमर्कं लोकगुरुं विभुम्॥ त्रिनेत्रं त्र्यक्षरं त्र्यंगं त्रिमूर्तिं त्रिगतिं शुभम् ॥७२॥ षण्मुखाय नमो नित्यं त्रिनेत्राय नमोनमः॥चतुर्विंशतिपादाय नमो द्वादशपाणये॥७३॥नमस्ते भूतपतये लोकानां पतये नमः॥देवानां पतये नित्यं वर्णानां पतये नमः ॥७४॥ त्वं ब्रह्मा त्वं जगन्नाथो रुद्रस्त्वं च प्रजापतिः ॥ त्वं सोमस्त्वं तथादित्यस्त्वमोंकारक एव हि ॥ ७५ ॥ बृहस्पतिर्बुधस्त्वं हि त्वं शुक्रस्त्वं विभावसुः ॥ यमस्त्वं वरुणस्त्वं हि नमस्ते कश्यपात्मज ॥ ७६ ॥ त्वया ततमिदं सर्वं जगत्स्थावरजंगमम् ॥ त्वत्त एव समुत्पन्नं सदेवासुरमानुषम् ॥ ७७ ॥ ब्रह्मा चाहं च रुद्रश्च समुत्पन्ना जगत्पते ॥ कल्पादौ तु पुरा देव स्थितये जगतोनघ ॥ ७८ ॥ नमस्ते वेदरूपाय अहोरूपाय वै नमः ॥ नमस्ते ज्ञानरूपाय यज्ञाय च नमोनमः ॥ ७९ ॥ प्रसीदास्मासु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवेश भूतेश किरणोज्ज्वल ॥ संसारार्णवमग्नानां प्रसादं कुरु गोपते ॥ वेदांताय नमो नित्यं नमो यज्ञकलाय च ॥ ८० ॥ ॥ सुमंतुरुवाच ॥ ॥ स्तुत्वैवं भास्करं भक्त्या विष्णुर्भरतसत्तम ॥ प्रदध्यौ नृपशार्दूल रविं तद्गतमानसः ॥ ८१ ॥ एवं ते नरशार्दूल देवा ब्रह्मादयोऽनघ ॥ स्तुवंति तं महात्मानं सहस्रकिरणं रविम् ॥८२॥ इत्येवं स्तुवतां तेषां रविं भक्त्या महात्मनाम् ॥ अथ तुष्टो रविस्तेषां ब्रह्मादीनां जगत्पतिः ॥८३॥ विज्ञाय भक्तिं परमां श्रद्धां च परमां विभुः ॥ उवाच स महातेजाः प्रहृष्टेनांतरात्मना ॥८४॥ ग्रहेशो व्योम चारूढस्तेजसा प्रज्वलन्दिशः ॥ ब्रह्माणं विष्णुमीशानमामंत्र्यैतान्विशांपते॥८५॥ दृष्ट्वा तान्प्रणतान्त्सर्वाञ्छिरोभिरवनिं गतान्॥ तुष्टोऽस्मि ते सुरज्येष्ठ चतुर्मुख जगत्पते ॥ वरं वरय भद्रं ते मनसा त्वं यमिच्छसि ॥ ८६ ॥ श्रुत्वा तु वचनं भानोर्ब्रह्मा लोकगुरुर्नृप ॥ जगाम शिरसा भूमावुवाच स कृतांजलिः ॥८७॥ ब्रह्मोवाच ॥ कृतकृत्योऽस्मि देवेश पूतश्चास्मि खगाधिप ॥ धन्योऽस्म्यनुगृहीतोऽस्मि गतोऽस्मि परमां गतिम् ॥ सहस्रकिरणैर्यन्मे भवान्दर्शनमागतः ॥ ८८ ॥ अपश्यतश्च देवेश मूढमासीन्मनो मम ॥ भगवन्त्संप्रसीद त्वं ममोपरि विभावसो ॥९०॥ प्रयच्छ त्वं बलं भक्तिमात्मनो मम गोपते ॥ गत्वा शिरोभिरवनिमष्टांगैः पतितस्य च ॥ भक्त्या विज्ञप्तिमाकर्ण्य प्रसादं कुरु गोपते॥९१॥ब्रह्मणो वचनं श्रुत्वा पूषा देवो जगत्पतिः ॥ तथेत्याह महाराज विरंचिं प्रश्रयान्वितम् ॥ ९२ ॥ ब्रह्मणे च वरं दत्त्वा राजन्देवो दिवाकरः ॥ उवाच त्र्यंबकं देवं शशांककृतशेखरम् ॥९३॥ वरं वरय भूतेश भूभृज्जादयितानघ ॥ यमिच्छसि महादेव ददेहं तदशेषतः ॥ ९४ ॥ भास्करस्य वचः श्रुत्वा ईश्वरस्त्रिपुरांतकः ॥ गत्वा तु शिरसा भूमौ प्रणम्योवाच भास्करम् ॥९५॥ ॥ ॥ महादेव उवाच ॥ ॥ पुण्योऽहं पुण्यकर्माहं नास्ति धन्यतरो मम ॥ गतोऽहं परमां सिद्धिं गतश्च परमां गतिम् ॥ ९६ ॥ नाप्राप्यमस्ति देवेश नासाध्यं मम किंचन ॥ यस्य मे भगवान्देवः प्रसादप्रवणः स्थितः ॥ ९७ ॥ त्वया ततमिदं सर्वं जगत्स्थावरजंगमम् ॥ त्वत्त एव समुत्पन्नं लयं च त्वयि यास्यति ॥ ९८ ॥ यदि तुष्टो मम विभो अनुग्राह्योऽस्मि ते यदि ॥ अचलां देहि मे भक्तिमात्मनश्चरणं नय ॥ ९९ ॥ व्योमकेश वचः श्रुत्वा पूषा देवो दिवाकरः ॥ तथेत्याह हरं वीर ततो हरिमुवाच ॥ १०० ॥ नारायण महाबाहो वरं वरय गोधर ॥ परितुष्टोऽस्मि ते देव यमिच्छसि महाबल ॥ १०१ ॥ श्रुत्वा तु भास्करवचः कीलालजनको हरिः ॥ उवाच परया भक्त्या नत्वा च शिरसा रविम् ॥ १०२ ॥ ॥ ॥ नारायण उवाच ॥ ॥ जय देव जगन्नाथ जय देव गुरो रवे ॥ प्रसीद मम देवेश भक्तिं यच्छात्मनो रवे ॥ १०३ ॥ येनाहं सर्वदेवानामुत्तमः स्यां जगत्पते ॥ अजेयश्च तथा देव दैत्यदानवरक्षसाम् ॥ १०४ ॥ त्वद्भक्त्या बृंहितबलस्तेजसा महतान्वितः ॥ ततो मया महत्कर्म कर्तव्यं





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तव शासनात् ॥ १०५ ॥ प्रजानां पालनं देव देवानां च ग्रहाधिप ॥ वर्णानामाश्रमाणां च वर्णधर्मस्य वा विभो ॥ १०६ ॥ दुष्टदैत्यविनाशाय लोकानां पालनाय च ॥ सृष्टोऽहं भवता पूर्वं कल्पादौ च कृतोऽनघ ॥ १०७ ॥ यस्य रुष्टो भवान्स्त्यद्दै कथंचित्पुरुषस्य तु ॥ व्याधिर्दुःख मनारोग्यं दारिद्र्यं संततिक्षयः ॥ १०८ ॥ तस्यैतानि भवंतीह आधयो विविधास्तथा ॥ तस्मात्त्वं च ततो देव संस्तव्यः सततं बुधैः ॥ १०९ ॥ एवं त्वां गोपते देव भक्त्या श्रद्धासमन्वितः ॥ अहमर्चितुमिच्छामि तस्मान्मयि कृपां कुरु ॥ ११० ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे सूर्यतेजोवर्णनं नाम त्रिपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५३ ॥छ॥ ॥ सुमंतुरुवाच ॥ ॥ श्रुत्वा तु वचनं भानुर्विष्णोरमिततेजसः ॥ उवाच कुरुशार्दूल आदित्यः कृपयान्वितः ॥१॥ ॥ आदित्य उवाच ॥ ॥ कृष्णकृष्ण महाबाहो शृणु मे परमं वचः ॥ यदर्थं प्रार्थितः कृष्ण तत्सर्वं ते भविष्यति ॥२॥ देवदानवयक्षाणां गंधर्वोरगरक्षसाम् ॥ अजेयस्त्वं महाबाहो भविष्यसि न संशयः ॥३॥ जगत्पालयितुं सर्वं समर्थश्च भविष्यसि ॥ अचला तव भक्तिश्च भविष्यति ममोपरि ॥४॥ ब्रह्मापि सततं शक्तो जगत्स्रष्टुं भविष्यति ॥ संहर्तुं शंकरश्चापि मत्प्रसादाद्भविष्यति ॥५॥ भवन्तो मत्प्रसादेन ज्ञानिनामुत्तमं पदम् ॥ गमिष्यंति न संदेहो मम पूजाप्रसादतः ॥६॥ रवेर्वचनमाकर्ण्य गोश्रुताभरणो विभो ॥ उवाच गोपतिर्गोगो गोपतिं गोवृषध्वजः ॥ ७ ॥ त्वामाराध्य भविष्यामो वयं सर्वे सुरोत्तमाः ॥ कथमाराधयामो हि भवन्तं श्रद्धयान्विताः ॥ श्रेयसे सततं देव ब्रूहि नस्तत्त्वमात्मनः ॥ ८ ॥ भवतो हि न पश्यामो मूर्तिं परमपूजिताम् ॥ पश्यामः केवलं तेजो ह्यधस्तोयमिवोज्झितम् ॥ ॥ ९ ॥ ज्वालामालाकुलं सर्वमनेकाकृति चाद्भुतम् ॥ न चाकारविहीनं तु चेतसो लंबनं भवेत् ॥१०॥ आलंबनादृते देव न चित्तरमणं क्वचित् ॥ चेतसोऽरमणे भक्तिर्न पुंसां जायते क्वचित् ॥ ११ ॥ भक्तिं विना पूजयितुं न शक्यंते दिवौकसः ॥ त्वत्पूजने हि प्राप्यंते देव धर्मादयो नरैः ॥ ॥ १२ ॥ तस्माद्दर्शय तां मूर्तिमात्मनो या परा मता ॥ येन त्वां पूजयित्वा तु वयं सिद्धा भवामहे ॥ १३ ॥ ॥ सूर्य उवाच ॥ ॥ साधुसाधु महादेव साधु पृष्टोऽस्मि सुव्रत ॥ शृणु चैकमनाः कृत्स्नं गदतो मम मानद ॥ १४ ॥ चतुर्मूर्तिरहं देव जगद्व्याप्य व्यवस्थितः ॥ श्रेयसे सर्वलोकानामादिमध्यांतकृत्सदा ॥ १५ ॥ एका मे राजसी मूर्तिर्ब्रह्मेति परिकीर्तिता ॥ सृष्टिं करोति सा नित्यं कल्पादौ जगतां विभो ॥ १६ ॥ द्वितीया सात्त्विकी प्रोक्ता या परा परिकीर्तिता ॥ जगत्सा पालयेन्नित्यं दुष्टदैत्यविनाशिनी ॥१७॥ तृतीया तामसी ज्ञेया ईशेति परिकीर्तिता ॥ त्रैलोक्यं संहरेत्सा तु कल्पांते शूलपाणिनी ॥ १८ ॥ चतुर्थी तु गुणैर्हीना सत्यादिभिरनुत्तमा ॥ सा चाशक्या क्वचिद्द्रष्टुं स्थिता सा चाभवत्सदा ॥ १९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अ० पु०
॥१३८॥

तया ततमिदं सर्वं यच्चोद्गीथं तु मे गतिः ॥ निष्कला सकला सा तु सुरूपा रूपवर्जिता ॥२०॥ अंतर्गता च लोकानां न च कर्मफलं गता ॥ तिष्ठमाना प्यलिप्ता सा पद्मपत्रमिवांभसा ॥२१॥ अस्पृष्टा च सदा षड्भिः सप्तातीत्य व्यवस्थिता ॥ चतुस्तना च सा षड्भ्यस्तुरीयाख्या सुपूजिता ॥२२॥ न सा स्प्रष्टुं त्वया शक्या हरिणा ब्रह्मणा न च ॥ मामनाराध्य भूतेश व्योमरूपं कदाचन ॥ २३ ॥ यदेतद्भवतां देव प्रबोधार्थमुपस्थितम् ॥ अहंकार विमूढानां तमसा च त्रिलोचन ॥ २४ ॥ प्रकाशाय च लोकानां ज्वालामालासमाकुलम् ॥ कर्णिकेव स्थितं देवभूपद्मस्याखिलस्य च ॥ २५ ॥ यस्य संदर्शनादेव यूयं सर्वे प्रबोधिताः ॥ प्रकाशमभवद्वापि जगत्सर्वमथार्चिभिः ॥ २६ ॥ तस्मादाराधयस्वैनमस्पृष्टं गमनोपमम् ॥ मन्मूर्तिं येन तां दिव्यां द्रक्ष्यसि त्वं त्रिलोचन ॥ २७ ॥ यत्त्वाद्यमीश्वरं जज्ञे तद्व्योम परिकीर्तितम् ॥ कल्पांते ह्यत्र वै व्योम्नि लीयंते सर्वदेवताः ॥ २८ ॥ दक्षिणे लीयते ब्रह्मा वामे तस्य जनार्दनः ॥ त्वं सदा कचदेशे तु लीयसे त्रिपुरांतक ॥ २९ ॥ गायत्री लीयते तस्य हृदये लोकमातरः ॥ लीयंते मूर्ध्नि वै वेदः सषडंगपदक्रमः ॥ ३० ॥ जठरे लीयते सर्वं जगत्स्थावजंगमम् ॥ पुनरुत्पद्यते ह्यस्माद्ब्रह्माद्यं सचराचरम् ॥ ३१ ॥ आकाशं व्योम इत्याहुः पृथिवी निक्षुभा मता ॥ भूतश्रेयोहमाकाशो निक्षुभा दयिता मम ॥ ३२ ॥ मया निक्षुभया सर्वं जगद्व्याप्तं त्रिलोचन ॥ तस्मादाराधय व्योम त्वं ब्रह्मा केशवस्तथा ॥ ३३ ॥ तन्मे रूपं महद्व्योम पूजयित्वा त्रिलोचन ॥ दिव्यं वर्षसहस्रं हि गिरौ त्वं गंधमादने ॥ ततो यास्यसि संसिद्धिं षडंगां परमां शुभाम् ॥ ३४ ॥ कलापग्राममाश्रित्य शंखचक्रगदाधरः ॥ आराधयतु मां भक्त्या व्योमरूपं जनार्दनः ॥ ३५ ॥ अंतरिक्षगतं तीर्थं पुष्करं लोकपावनम् ॥ तत्र गत्वा विरिंचो मे व्योमरूपं सदार्चतु ॥ ३६ ॥ एवं मां सततं यूयं समाराध्य जगत्पतिम् ॥ समानां च सुदिव्यानां सहस्रत्रयमादरात् ॥ ३७ ॥ ततो द्रक्ष्यथ मे मूर्तिं परमां यां विदुर्बुधाः ॥ कदंबगोलकाकारां रश्मिमालाकुलां पराम् ॥ ३८ ॥ अथ नारायणो देवः प्रणम्य शिरसा रविम् ॥ कृतांजलिपुटो भूत्वा इदं वचनमब्रवीत् ॥ ३९ ॥ ॥ विष्णुरुवाच ॥ ॥ यदि ते परमं रूपं मतं व्योम ह्यनौपमम् ॥ तमाराध्य वयं सर्वे यास्यामः सिद्धिमुत्तमाम् ॥ ४० ॥ कीदृग्व्योम त्वहं ब्रह्मा हरश्च त्रिपुरांकः ॥ आराधयामहे देव भक्त्या श्रेयोर्थमात्मनः ॥ ४१ ॥ येन सिद्धिं गमिष्यामस्तमाराध्य दिवाकरम् ॥ तस्मान्नो लक्षणं ब्रूहि व्योम्नः परमपूजित ॥ ४२ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे व्यग्युपाख्याने चतुःपंचाशदुत्तरशततमोऽध्यायः ॥ १५४ ॥ ॥ छ ॥ ॥ आदित्य उवाच ॥ ॥ साधुसाधु सुरश्रेष्ठ साधु पृष्टोऽस्मि भूधर ॥ शृणुष्वैकमनाः कृष्ण गदतो निखिलं मम ॥ १ ॥ आराधयत्वयं देवो मम

ब्रा०प०१
अ० १५५
॥१३८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपमनोपमम् ॥ चतुष्कोणं परं व्योम अद्भुतं गैरिकोज्ज्वलम् ॥ २ ॥ त्वामाराध्य च चक्रांकं शंकरो वृत्तमादरात् ॥ शब्दादौ सततं ब्रह्म सगरादौ त्रिलोचनः ॥ ३ ॥ मध्याह्ने त्वं सदा देव भक्त्या मामर्चयस्व वै ॥ यथेष्टमृभवः सर्वे भक्त्या मां पूजयंतु वै ॥ ४ ॥ ततो ब्रह्मादयो देवाः श्रुत्वा वाक्यं विभावसोः ॥ प्रणम्य शिरसा सर्वे इदं वचनमब्रुवन् ॥ ५ ॥ धन्या देव वयं सर्वे कृतकृत्यास्तथैव च ॥ अस्माभिर्भगवान्पृष्टस्तेजसा प्रज्वलंति च ॥ ६ ॥ संभूता ज्ञानिनः सर्वे भवतो दर्शनाद्वयम् ॥ तमोमोहात्तथा तंद्रा सर्वमेकपदे गतम् ॥ ७ ॥ वयं त्वन्मूर्तयः सर्वे तेजसा तव संवृताः ॥ उत्पत्तिस्थितिनाशाय लोकानां तव शासनात् ॥ ८ ॥ स्थिताः सर्वे सुरज्येष्ठ लोकपालाश्च कृत्स्नशः ॥ अधुना साधयामेह व्योम्नः पूजां व्रजामहे ॥ ९ ॥ इत्थं तेषां वचः श्रुत्वा भास्करो वारितस्करः ॥ उवाच ब्रह्मविष्णवीशान्सामपूर्वमिदं वचः ॥ १० ॥ ॥ ॥ आदित्य उवाच ॥ ॥ एवमेतन्न संदेहो यदावदथ सुव्रताः ॥ यूयं मन्मूर्तयः सर्वे युष्माकमहमेव हि ॥ ११ ॥ यदेतद्दर्शनं देवाः प्रमाणं च यदुत्तमम् ॥ ज्वालामालाकुलं शुभ्रं शांडिलेयमिवोज्झितम् ॥ १२ ॥ युष्माकं देवशार्दूलास्तन्निबोधत कारणम् ॥ अहंकारविमूढानां मिथः कलहिनां तथा ॥ ॥ १३ ॥ प्रबोधार्थं हि युष्माकं तमसो नाशनाय च ॥ प्रवर्तनाय सर्वेषां कर्मणां च प्रदर्शितम् ॥ १४ ॥ तस्मादेवं विदित्वा तु नाहंकारः कदाचन ॥ कर्तव्यो भूतिमिच्छद्भिः सततं देवसत्तमाः ॥ १५ ॥ मानं दर्पमहंकारं पूर्वं त्यक्त्वा सुदूरतः ॥ आराधयत मां भक्त्या सततं श्रद्धयान्विताः ॥ १६ ॥ ततो द्रक्ष्यथ मे रूपं सकलं निष्कलं च यत् ॥ यस्य संदर्शनादेव सर्वे सिद्धिमवाप्स्यथ ॥ १७ ॥ एवमुक्त्वा महाराज सहस्रकिरणो विभुः ॥ जगामादर्शनं तेषां पश्यतामेव भारत ॥ १८ ॥ अथ ते विस्मिताः सर्वे ब्रह्मविष्णुपिनाकिनः ॥ तेजसा तस्य देवस्य भास्करस्य महौजसः ॥ १९ ॥ परस्परमथोचुस्ते विस्मयेन तदा नृप ॥ अहो महात्माऽयं देवोऽदितिपुत्रो दिवस्पतिः ॥ २० ॥ बृहद्भानुर्महातेजा लोकदीपो विभावसुः ॥ येन सर्वे वयं त्राता निघ्नता विपुलं तमः ॥ २१ ॥ आराधयामस्तं सर्वे गत्वा स्थानानि कृत्स्नशः ॥ येन सर्वे वयं तस्य प्रसादात्सिद्धिमाप्नुमः ॥ २२ ॥ तद्व्योम पूजयित्वा तु परया श्रद्धया विभोः ॥ आमंत्र्य ते मिथः सर्वे गताः पूजार्थमादरात् ॥ २३ ॥ जगाम पुष्करं ब्रह्मा शालग्रामं जनार्दनः ॥ वृषभध्वजो गतो वीर पर्वतं गंधमादनम् ॥ २४ ॥ त्यक्त्वा मानमहंकारं कुर्वंतस्तप उत्तमम् ॥ आराधयंति तं देवं भास्करं वारितस्करम् ॥ २५ ॥ व्योम्नि कृत्वा चतुष्कोणं ब्रह्मा नित्यमपूजयत् ॥ चक्रांकितं हरिर्नित्यं सम्यग्व्योम त्वपूजयत् ॥ २६ ॥ हरोऽपि सततं वीर तेजसा वह्निसन्निभम् ॥ अपूजयत्सदा वृत्तं व्योम भक्त्या समन्वितः ॥ २७ ॥ दिव्यवर्षसहस्रांते पूजयंतो दिवाकरम् ॥ गंधमाल्योपहारैस्तु नृत्यगीतप्रवादितैः ॥ २८ ॥ अतोषयन्महात्मानं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुर्वाणास्तप उत्तमम् ॥ भक्त्याचलेन मनसा विवस्वंतमनुत्तमम् ॥ २९ ॥ अथ तेषां महाराज प्रसन्नो भुवनाधिपः ॥ दर्शयामास लोकात्मा युगपद्वै विभावसुः ॥ ३० ॥ कृष्णात्मा च महातेजाश्चतुर्धा योगतोनघ ॥ गत्वैकेन सुरश्रेष्ठं सोऽब्रवीत्परमं वचः ॥ ३१ ॥ अन्येन शंकरं मन्ये अन्येन गरुडध्वजम् ॥ स ततापं तथान्येन रथारूढो दिवं सदा ॥ ३२ ॥ एवं योगबलाद्भानुः कृतवान्महदद्भुतम् ॥ उग्रे तपसि वर्तंतं दृष्ट्वा चैनं चतुर्मुखम् ॥ ३३ ॥ पूजयन्तं महद्व्योम भूगतैर्मुखपङ्कजैः ॥ उवाच तं महाराज भास्करश्चतुराननम् ॥ ३४ ॥ पश्यपश्य सुरज्येष्ठ वरदं मामुपागतम् ॥ श्रुत्वैवं वचनं भानोर्विरिंचिस्तमथैक्षत ॥ ३५ ॥ दृष्ट्वा जगाम प्रणतो ह्यवनिं मुखपंकजैः ॥ हर्षादुत्फुल्लनयनः पुनरुत्थाय भास्करम् ॥ उवाच परमं वाक्यं कृतांजलिपुटः स्थितः ॥ ३६ ॥ ॥ ब्रह्मोवाच ॥ ॥ नमस्ते देवदेवेश नमस्ते तिमिरापह ॥ नमस्ते भूत भव्येश भूतादे भूतभावन ॥ ३७ ॥ प्रसादं कुरु मे देव प्रसन्नोऽथ दिवाकरः ॥ गतिरन्या न मे देव विद्यते त्वदृते विभो ॥ ३८ ॥ ॥ आदित्य उवाच ॥ ॥ एवमेव यथात्थ त्वं नास्ति तत्र विचारणा ॥ त्वं मे प्रथमजः पुत्रः संभूतः कारणात्पुरा ॥ ३९ ॥ वरं वरय भद्रं ते वरदोस्मि तवाग्रतः ॥ यमिच्छसि सुरज्येष्ठ मा त्वं शंकां कुरु प्रभो ॥ ४० ॥ ॥ ब्रह्मोवाच ॥ ॥ यदि मे भगवांस्तुष्टो ददाति वरमुत्तमम् ॥ कर्तुं शक्नोमि सृष्टिं च प्रसादात्तव गोपते ॥ कृताकृता हि मे देव सृष्टिर्नेह प्रसिध्यति ॥ ४१ ॥ ॥ आदित्य उवाच ॥ ॥ न पुत्रत्वमहं प्राप्तस्तव देव चतुर्मुख ॥ तवान्वये गमिष्यामि पुत्रत्वं हि मरीचये ॥ ४२ ॥ ततो यास्यति ते सिद्धिं कृत्स्ना सृष्टिश्चतुर्मुख ॥ भवितैवं न सन्देहो मत्प्रसादा ज्जगत्पते ॥ ४३ ॥ एवमुक्तो विरिंचिस्तु रविणा पृथिवीपते ॥ तं वै व्योढं विवस्वंतं लोकनाथं जगत्पतिम् ॥ ४४ ॥ पुनराह सुरज्येष्ठः प्रणम्य शिरसा रविम् ॥ क्व मे वासो जगन्नाथ भविष्यति दिवस्पते ॥ ४५ ॥ ॥ आदित्य उवाच ॥ ॥ यन्मे रूपं महद्व्योम पृष्ठशृंगमनुत्तमम् ॥ तत्र देवकदंबैस्तु भवान्नित्यं निवत्स्यति ॥ ४६ ॥ इन्द्रः पूर्वदिशो भागे आग्नेय्यां शांडिलीसुतः ॥ दक्षिणस्यां यमो नित्यं नैर्ऋत्यामथ निर्ऋतिः ॥ ॥ ४७ ॥ पश्चिमायां तु वरुणो वायव्यां तु सदागतिः ॥ उत्तरे तु दिशो भागे निवसेद्धनदस्ततः ॥ ४८ ॥ ऐशान्यां शंकरो देवो मध्ये त्वं विष्णुना सह ॥ श्रुत्वैत्वं वचनं भानोर्वेधाः प्रीत्या तमब्रवीत् ॥ ४९ ॥ कृतकृत्यं तथात्मानं मन्यते च नराधिप ॥ चकार च तथा सर्वं भास्क रोक्तमशेषतः ॥ ५० ॥ स च सिद्धिं गतो वीर प्रसादाद्भास्करस्य तु ॥ आदित्योपि वरं दत्त्वा ब्रह्मण्यो ब्रह्मणेऽनघ ॥ ५१ ॥ जगाम सह देवेन पर्वतं गन्धमादनम् ॥ ददर्श तत्र भूतेशं तपस्तीव्रं समाश्रितम् ॥ ५२ ॥ कपर्दिनं शूलधरं चन्द्रार्ककृतशेखरम् ॥ पूजयंतं परं व्योम सुव्रतं तेज



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सान्वितम् ॥ ५३ ॥ गन्धमाल्योपहारैश्च नृत्यगीतप्रवादितैः ॥ मुखवाद्यैश्च बहुभिः प्रणवस्तोत्रगीतिभिः ॥ संपूज्यैवं महद्व्योम जगाम शिरसा महीम् ॥ ५४ ॥ दृष्ट्वैवं पूजयन्तं च भास्करस्त्रिपुरांतकम् ॥ तुष्टोवोचन्महातेजा गोश्रुताभरणं हरम् ॥ ५५ ॥ भीम तुष्टोऽस्मि ते वत्स वरं मत्तो वृणुष्व वै ॥ तवांतिकमहं प्राप्तो वरदो भूभृदालय ॥ ५६ ॥ श्रुत्वैवं वचनं भानोर्महादेवो महीपते ॥ ददर्श लोकनाथं तं प्रज्वलंतमनुत्तमम् ॥ उवाच प्रणतो भूत्वा अष्टांगैर्भूतलं गतः ॥ ५७ ॥ नमोनमस्ते देवेश प्रभाकर दिवाकर ॥ शुभालय शुभाधार विकर्तन शुभानन ॥ ५८ ॥ प्रसादं कुरु देवेश प्रसन्नस्त्वं विकर्तन ॥ संसारार्णवमग्नस्य भव पोतो जगत्पते ॥ ५९ ॥ तवांगसंभवो देव पुत्रोहं वल्लभस्तव ॥ यत्करोति महादेव पिता पुत्रस्य तत्कुरु ॥ ६० ॥ ॥ आदित्य उवाच ॥ ॥ एवमेतन्न सन्देहो यथा वदसि शंकर ॥ ललाटात्त्वं समुत्पन्नः पुत्रः पुत्रवतां वर ॥ ६१ ॥ वरं वरय भद्रं ते मनसा त्वं यमिच्छसि ॥ दुर्देयं चापि ते दास्ये त्रिपुरान्तक सुन्दर ॥ ६२ ॥ ॥ महादेव उवाच ॥ ॥ यदि तुष्टोऽसि मे देव अनुग्राह्योस्मि ते यदि ॥ प्रयच्छ मे वरं भानो देहि भक्तिं ममाचलाम् ॥ ६३ ॥ देवदानवगंधर्वयक्षरक्षोगणांस्तथा ॥ निर्जित्याहं यथा देव युगान्ते संहरे प्रजाम् ॥ ६४ ॥ तथा प्रयच्छ मे देव स्थानं च परमं विभो ॥ येनाहं हेतिसर्वं च जये देव जगत्प्रभो ॥ ६५ ॥ ॥ आदित्य उवाच ॥ ॥ देवदानवगन्धर्वयक्षराक्षसपन्नगान् ॥ हरिष्यसि जगच्चापि युगान्ते त्रिपुरान्तक ॥ ६६ ॥ यदेतत्पूजितं नित्यं मद्रूपं व्योम चोत्तमम् ॥ एतत्त्रिशूलं परमं तव शस्त्रं भविष्यति ॥ ईशाने च तथा भागे व्योम्नो वासो भविष्यति ॥ ६७ ॥ ॥ महादेव उवाच ॥ ॥ एवं भवतु मे देव यः प्रसादस्त्वया कृतः ॥ कृतकृत्योऽस्मि देवेश यन्मे देवो वरप्रदः ॥ ६८ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मनिरूपणं नाम पञ्चपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५५ ॥ ॥ छ ॥ ॥ सुमन्तुरुवाच ॥ ॥ इत्थं दत्त्वा वरं भानुरीश्वराय विशांपते ॥ शालग्रामं जगामाशु वरं दातुं हरेर्नृप ॥ १ ॥ ददर्श स हरिं तत्र तपन्तं परमं तपः ॥ कृष्णाजिनधरं शान्तं प्रज्वलन्तं स्वतेजसा ॥ २ ॥ पूजयन्तं महद्व्योम चक्राकारमनौपमम् ॥ गन्धमाल्योपहारैश्च नृत्यगीतप्रवादितैः ॥ ३ ॥ एवं संपूज्य तद्व्योम भक्त्या श्रद्धासमन्वितः ॥ जगाम शिरसा भूमिं हृदि ध्यायन्दिवाकरम् ॥ ४ ॥ विष्णुं तं प्रणतं दृष्ट्वा तुष्टो देवो विभावसुः ॥ उवाच विष्णुमामंत्र्य पश्य मामागतं हरे ॥ ५ ॥ तद्वाक्यं केशवः श्रुत्वा शिरसा च महीं गतः ॥ नमस्ते सर्वदेवेश नमस्ते गगनेचर ॥ ६ ॥ जगत्पते नमस्तेऽस्तु ग्रहाणां पतये नमः ॥ दारिद्र्यव्याधिदुःखघ्न नमस्ते भवनाशन ॥ ७ ॥ आदित्यार्क रवे भानो भग पूर्ण दिवाकर ॥ नमस्ते सर्वतत्त्वज्ञ सर्वपापविवर्जित ॥ ८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रसीद मे जगन्नाथ हंसानघ दिवस्पते ॥ संसारार्णवमग्नानां त्राहि देव वृषध्वज ॥ ९ ॥ पुत्रोऽहं तव देवेश द्वितीयो ब्राह्मणोऽनघ ॥ पितेव पुत्रस्य रवे देहि कामाञ्जगत्पते ॥ १० ॥ विष्णोर्वचनमाकर्ण्य हर्षं प्राप्य दिवाकरः ॥ उवाच कुरुशार्दूल हर्षगद्गदया गिरा ॥ ११ ॥ साधु कृष्ण महाबाहो तुष्टोहं तव केशव ॥ निशम्य ते परां भक्तिं श्रद्धां च पुरुषोत्तम ॥ १२ ॥ वरं वरय तस्मात्त्वं वत्स यं मनसेच्छसि ॥ वरदोऽहमनुप्राप्तो भक्त्याक्रांतस्तवानघ ॥ १३ ॥ निशम्य वचनं भानोर्विष्णुर्भक्त्या समन्वितः ॥ कृतांजलिपुटो भूत्वा इदं वचनमब्रवीत् ॥ १४ ॥ कृतकृत्योऽस्मि देवेश नास्ति धन्यतरो मम ॥ यस्य मे भगवंस्तुष्टो वरदस्त्वं गतः स्वयम् ॥ १५ ॥ यदि तुष्टो मम विभुर्भक्त्या क्रीतो मया यदि ॥ प्रयच्छत्वचलां भक्तिं यथा शत्रुं पराजये ॥ तथा मम वरं देहि सर्वाराति विनाशनम् ॥ १६ ॥ मम स्थानं च परमं सर्वलोकनमस्कृतम् ॥ लोकानां पालने युक्तिं बलं वीर्यं यशः सुखम् ॥ १७ ॥ एवमुक्तो रविर्भक्त्या विष्णुना वाक्यमुत्तमम् ॥ उवाच कुरुशार्दूल गजत्सन्नादयन्निव॥१८॥ साधु साधु महाबाहो ब्रह्मणस्त्वं जघन्यजः ॥ हरस्य अग्रजश्चापि सर्वदेवनमस्कृतः ॥ १९ ॥ भक्तश्चापि ममात्यंतं ब्रह्मण्यश्च सदानघ ॥ तस्मात्त्वाचला भक्तिर्भविष्यति ममोपरि ॥ २० ॥ एतदेव महद्व्योम चक्रं ते प्रभविष्यति ॥ सर्वायुधवरं वीर सर्वारातिविनाशनम् ॥ तथा स्थानं च परमं सर्वलोकनमस्कृतम् ॥ २१ ॥ इत्थं भानोर्वरं प्राप्य हरिर्देवो जगत्पतिः ॥ महाप्रसादमित्युक्त्वा जगाम शिरसा महीम् ॥ २२ ॥ भास्करोऽपि वरं दत्त्वा केशवायामितौजसे ॥ जगामाशु महाराज स्वपुरं विबुधाधिपः ॥२३ ॥ लोकानां पालने शक्तिं बलं वीर्यं यशः सुखम् ॥ दत्त्वा कृष्णाय देवेशस्तथान्यदपि कांक्षितम् ॥ २४ ॥ एवं ब्रह्मादयो देवाः पूजयित्वा दिवाकरम् ॥ शक्तिमंतो बभूवुस्ते सर्गादीनां प्रवर्तने ॥ २५ ॥ इति ते कथितं पुण्यमाख्यानं पापनाशनम् ॥ त्रिदैवत्यमुपाख्यानं त्रैसुरं लोकपूजितम् ॥२६॥ स्तोत्रत्रयसमायुक्तं धर्मकामार्थसाधनम् ॥ धर्म्यं स्वर्ग्यं तथा पुण्यमारोग्यधनधान्यदम् ॥ २७ ॥ य इदं शृणुयान्नित्यं पठेत्स्तोत्रत्रयं च यः ॥ सोऽग्नेयं यानमारूढो याति भानोः परं पदम् ॥ २८ ॥ अपुत्रो लभते पुत्रमधनो धनमश्नुते ॥ विद्यार्थी लभते विद्यां प्रसादाद्भास्करस्य तु ॥२९॥ तेजसा रविसंकाशः प्रभया पृश्निसन्निभः ॥ मोदते सुचिरं कालं ज्ञानिनामुत्तमो भवेत् ॥ ३० ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे त्रैसुरोपाख्यानवर्णनं नाम षट्पंचाशदुत्तरशततमोऽध्यायः ॥ १५६ ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥ एतन्मे कौतुकं ब्रह्मन्यद्दरं ब्रह्मणे रविः ॥ दत्तवांस्तव पुत्रत्वमन्वये कश्यपस्य तु ॥ ॥ १ ॥ यास्यामि द्विजशार्दूल प्रपन्नतिमिरापहः ॥ एतन्मे महदाश्चर्यं शंस भूमिं कथं व्रजेत् ॥ २ ॥ देवादीनां प्रणेता यो यो भुवि प्रसवो विभुः ॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स कथं भूतले व्योम जन्मभावं गमिष्यति ॥ ३ ॥ किमर्थं दिव्यमात्मानं जन्मने स नियोक्ष्यति ॥ यश्चक्रं वर्तयत्येको ब्रह्मादीनां मनोरमम् ॥४॥ स जन्मनि कथं पुण्यां बुद्धिं चक्रे विदांवर ॥ गोपायनं यत्कुरुते जगतः सर्वलौकिकम् ॥ ५ ॥ गोभिः पालयते कृत्स्नमात्मनो यः स्वयं रविः ॥ महाभूतानि भूतात्मा यश्चकार दधार च ॥ ६ ॥ अगर्भः स कथं गर्भमुदरे याचते विभुः ॥ येन गोभिः समाक्रांता विप्र लोकाश्चतुर्दश ॥ ७ ॥ स्थापिता जगतो मार्गास्त्रिवर्गप्रवरास्त्रयः ॥ योऽन्तकाले जगत्पीत्वा कृत्वा वज्रमयं वपुः ॥ ८ ॥ लोकमेकार्णवं चक्रे दृश्यते स्वेन कर्मणा ॥ यः पुराणे पुराणात्मा तेजसां रूपमास्थितः ॥ ९ ॥ अपि सृष्ट्वा द्विजश्रेष्ठ यः ससर्ज वसुंधराम् ॥ चकार च पुरा यश्च त्रैलोक्यमिदमव्ययः ॥ १० ॥ ददौ कृत्वा वसुमतीं सुराणां सुरसत्तमः ॥ यः स्थितो ह्यनलं पीत्वा संवत्सरमयश्च यः ॥ पातालस्थोर्णवरसं मध्यतोयमयं हविः ॥ ११ ॥ सहस्रशिरसं देवं सहस्राक्षं सहस्रशः ॥ सहस्रचरणं ब्रह्मन्यमाहुर्वै युगे युगे ॥ १२ ॥ मुखाद्यस्य समुत्पन्नो वेधा लोकपितामहः ॥ हरिश्च वक्षसो यस्य ललाटाद्यस्य शंकरः ॥ १३ ॥ येन ते निहता दैत्या मंदेहा नाम नामतः ॥ ब्रह्मादीनां दुराधर्षो यः सदा विघ्ननाशनः ॥१४॥ सर्वदेवमयं कृत्वा सर्वायुधधरं वपुः ॥ एकचक्ररथारूढो गरुडाग्रजसारथिः ॥ १५ ॥ करांते यो जगत्सर्वं सह दानवराक्षसम् ॥ प्रकाशतममस्पृष्टं वपुर्यस्य सदा द्विज ॥ १६ ॥ पूर्वां दिशं गतो नित्यमुदयाचलमक्रमम् ॥ नाशयेद्यस्तु सततं तमो लोकस्य शांतये ॥ १७ ॥ नाशयित्वा तमो यस्तु क्रियाः सर्वाः प्रवर्तयेत् ॥ योङ्क्राणि दक्षिणादीक्ष्य मुसलोलूखलानि च ॥ १८ ॥ गार्हपत्येन विधिना तद्वद्धार्येण कर्मणा ॥ अग्निमाहवनीं चैव वेदिं चैव कुशं स्रुचम् ॥ प्रोक्षणीयव्रतं चैव अवभृथं तथैव च ॥ १९ ॥ सर्वानिमांश्च यश्चक्रे हव्यभागप्रदान्मुखे ॥ हव्यादांश्च सुरान्यज्ञे कव्यादांश्च पितॄनपि ॥ २० ॥ भागार्थे मधुधानाय चक्रे यो यज्ञकर्मणि ॥ पूषणं च सुतं सोमं पवित्रामरणीमपि ॥ २१ ॥ यज्ञियानि च द्रव्याणि यज्ञांश्चापि सऋत्विजः ॥ सदस्यान्यजमानांश्च मेधाविनस्तथोत्तमान् ॥ २२ ॥ विबभाज पुरा सर्वं पारमेष्ठ्येन कर्मणा ॥ युगानुरूपो यः कृत्वा लोकाननुवरं क्रमात् ॥ २३ ॥ क्षणान्कलाश्च काष्ठाश्च कालवैकल्यमेव च ॥ मुहूर्तास्तिथयो मासाः पक्षाः संवत्सरास्तथा ॥२४॥ ऋतवः कालयोगाश्च प्रमाणं विविधं नृषु ॥ आयुः क्षेत्राण्यपचयोपचयांश्चैव योऽकरोत् ॥ २५ ॥ सृष्टा लोकास्त्रयोनंता येन ज्ञानेन वर्त्मना ॥ सर्वभूतगणाः सृष्टाः सर्वभूतात्मना सदा ॥ २६ ॥ प्रणामत्रयपूर्वेण योगेन रमते च यः ॥ यो गतागतिपोतेन त्रातास्ति जगदीश्वरः ॥ २७॥ यो गतिर्वृषयुक्तानां गतिर्योऽपापकर्मणाम् ॥ चातुर्वर्ण्यप्रभावश्च वपुर्होत्रस्य रक्षिता ॥ २८ ॥ धातुर्वैद्यस्य यो वेत्ता चतुराश्रमसंश्रयः ॥ दिगंबरानुभूतश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वायुर्वायुविभावनः ॥ २९ ॥ अग्नीषोमात्मकं ज्योतिर्योगीशः क्षणदांतकः ॥ यः परं श्रूयते ज्योतिर्यः परं श्रूयते तपः ॥ ३० ॥ यं परं परमं प्राहुः परमात्मानमच्युतम् ॥ ब्रह्मादिभिः स्तुतो देवो यश्च दैत्यांतकृद्विभुः ॥३१॥ युगांतेष्वंतको यस्तु यश्च लोकांतकोत्तमः ॥ सेतुर्यो लोकसेतूनां मध्ये यो मध्यकर्मणाम् ॥३२॥ वेत्ता यो वेदविदुषां प्रभुर्यः प्रभविष्णुनाम् ॥ सौम्यभूतस्तु सौम्यानामग्निभूतोग्निवर्चसाम् ॥ ३३ ॥ मानुषाणां मनोभूतस्तपोभूतस्तपस्विनाम् ॥ विनयो नयवृत्तीनां तेजस्तेजस्विनामपि ॥ ३४ ॥ विग्रहो विग्रहाणां च गतिर्गतिमतामपि ॥ आकाशप्रसवो वायुर्वायुः प्राणो हुताशनः ॥ देवाहुतिप्रदानोद्यत्प्राणाग्निस्तमनाशनः ॥ ३५ ॥ रसाद्धि शोणितं भवति शोणितान्मांससमुच्यते ॥ मांसान्मज्जावसोर्जन्म मज्जनोस्थीनि जन्मतः ॥ ३६ ॥ अस्थिमज्ज्ञः समभवत्ततो वै शुक्रमादिशेत् ॥ शुक्राद्गर्भः समभवद्रसमूलेन कर्मणा ॥ तत्रापः प्रथमो भागः स सौम्यो राशिरुच्यते ॥ ३७ ॥ ततः क्ष्मासंभवो ज्ञेयो द्वितीयो राशिरुच्यते ॥ शुक्रं सोमात्मकं विद्यादात्मरूपं यदात्मकम् ॥ ३८ ॥ भवो रसात्मकस्तेषां वीर्यं च शशिपावकम् ॥ कफवर्गे भवेच्छुक्रं पित्तवगे च शोणितम् ॥ ३९ ॥ कफस्य पृथिवी स्थानं पित्तं नाभौ प्रतिष्ठितम् ॥ देवस्य मध्यहृदयं स्थानं तु मनसः स्मृतम् ॥ नाभिकोष्ठांतरस्थं तु तत्र देवो दिवाकरः ॥४०॥ मनः प्रजापतिर्ज्ञेयः कफः सोमो विभाव्यते ॥ पित्तमग्निः स्मृतो यस्मादग्नीषोमात्मकं जगत् ॥ ४१ ॥ एवं प्रवर्तिते गर्भे वर्धितेऽर्बुदसन्निभे ॥ वायुः प्रवेशं संचक्रे संगतः परमात्मना ॥ ४२ ॥ ततोंऽगानि विसृजते बिभर्ति परिवर्तयन् ॥ प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ ४३ ॥ प्राणोस्य प्रथमं स्थानं वर्धयन्परिवर्तते ॥ अपानं पश्चिमे काय उदानोर्ध्वं शरीरगः ॥ व्यानोऽथ व्यापको देहे समानः सन्निवर्तते ॥ ४४ ॥ भूतावाप्तिस्ततस्तस्य जायतींद्रियगोचरा ॥ पृथिवी वायुराकाश आपो ज्योतिश्च पंचमः ॥ ४५ ॥ तस्येंद्रियाणि पिधानि स्वंस्वं योगं प्रचक्रमुः ॥ पार्थिवं देहमाहुस्तु प्राणात्मानं च मारुतम् ॥ ४६ ॥ निद्रा ह्याकाशयोनिश्च जलाश्रये प्रवर्तते ॥ ज्योतिश्चक्षुषि तज्जन्म तदंशस्तामसः स्मृतः ॥ ४७ ॥ ग्रामाश्च विषयाश्चैव यस्य वीर्यं प्रवर्तितम्॥ एवं यः सृजते लोकान्सदेवासुरमानवान् ॥ ४८ ॥ स कथं देवदेवेशो गर्भमेष्यति चांशुमान् ॥ यथोदरमदित्यास्तु यः स्वयं चाविशत्पुरा ॥४९॥ एवं मे संशयो ब्रह्मन्नेष मे विस्मयो महान् ॥ कथं रविर्ययौ गर्भभावं द्विजवरेति मे ॥ ५० ॥ आश्चर्यं परमं पृच्छे त्वामहं भास्करस्य वै ॥ भानोरुत्पत्तिमाश्चर्यं हृदि मे परिवर्तते ॥ ५१ ॥ एतदाश्चर्यमाख्यानं कथयस्व महामुने ॥ समाख्याहि बलं वीर्यं भानोरमिततेजसः ॥ ५२ ॥

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे सूर्यावतारकथाप्रस्तावर्णनं नाम सप्तपंचाशदुत्तरशततमोऽध्यायः ॥ १५७ ॥छ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुमंतुरुवाच ॥ ॥ प्रश्नभारो महांस्तात त्वयोक्तो रश्मिमालिनि ॥ यथाशक्ति तु वक्ष्यामि श्रूयतां भानवं यशः ॥ १ ॥ भानोः प्रभावश्रवणे यस्य ते मतिरुत्थिता ॥ हंत भानोः प्रवृत्तिं च शृणु दिव्यां मयेरिताम् ॥ २ ॥ सहस्रास्यं सहस्राक्षं सहस्रकिरणं च यम् ॥ सहस्रशिरसं देवं सहस्रकरमव्ययम् ॥ ३ ॥ सहस्रजिह्वं भास्वंतं सहस्रमुकुटं प्रभुम् ॥ सहस्रदं सहस्रारिं सहस्रभुजमव्ययम् ॥ ४ ॥ सवनं भवनं चैव हव्यं होतारमेव च ॥ पात्राणि समतीतानि वेददीक्षी चरुं शुभम् ॥ ५ ॥ श्रोत्रियं शूर्पमुसलं प्रोक्षणं दक्षिणायनम् ॥ अध्वर्युं सामगं विप्रं सदस्यं सदनं तथा ॥ ६ ॥ यूपं समित्स्रुवं दर्वीं मुसलोलूखलानि च ॥ प्राग्वंशं जयभूतिं च होतारं चयनं च यत् ॥ ७ ॥ रहस्यानि प्रमाणानि स्थावराणि चराणि च ॥ प्रतिष्ठितानि दाढर्यं च स्थंडिलानि कुशांस्तथा ॥ ८ ॥ मंत्रयज्ञवहं वह्निभागं भार्गवमेव च ॥ अग्रेभुजी सोमभुजां यश्च त्रिषु उदाहृतः ॥ ९ ॥ आयुर्वेदविदो विप्रा यजंते शाश्वतं विभुम् ॥ तस्य भानोः सुरेशस्य वीर चंदनमालिनः ॥ १० ॥ प्रादुर्भावसहस्राणि समतीतान्यनेकशः ॥ भूयश्चैव भविष्यंति विनश्यंति दिनेदिने ॥ ११ ॥ यत्पृच्छसि महाराज पुण्यां दिव्यां कथां शुभाम् ॥ यदर्थं भगवान्भानुः कश्यपस्य सुतोऽभवत् ॥ १२ ॥ तामहं त्वं प्रवक्ष्यामि शृणु सर्वमशेषतः ॥ हितार्थं सर्वमर्त्यानां लोकानां प्रभवाय च ॥ १३ ॥ बहुशः सर्वभूतात्मा स्वयं समभिजायते ॥ तथा समभवद्देवः कश्यपस्यादितेः सुतः ॥ १४ ॥ तुष्टो दत्त्वा वरं वीर विरञ्चस्य महात्मनः ॥ यं यं जनयते पुत्रमदितिः कश्यपाद्विभोः ॥ १५ ॥ स स याति विनाशं वै तत्क्षणादेव भारत ॥ दृष्ट्वा सुतान्नश्यमानान्पुत्रशोकान्विताऽदितिः ॥ १६ ॥ जगाम कश्यपाभ्याशे शोकव्याकुलितेक्षणा ॥ सापश्यत्तं च मारीचं मुनिं दीप्तं तपोनिधिम् ॥ १७ ॥ आद्यं देवगुरुं विप्रं दिव्यं त्रिषवणांबुभिः ॥ तेजसा वह्निसंकाशं सौरं वृकसमप्रभम् ॥ १८ ॥ न्यस्तदण्डश्रिया युक्तं बद्धकृष्णाजिनांबरम् ॥ वल्कलाजिनसवीतं प्रदीप्तं ब्रह्मवर्चसम् ॥ १९ ॥ हुताशमिव दीव्यन्तं तपन्तमिव भास्करम् ॥ अथादितिश्च दृष्ट्वैवं भर्तारममितौजसम् ॥ २० ॥ शोकगद्गदया वाचा इदं वचनमब्रवीत् ॥ किमर्थं भगवान्देवो निरुद्योगस्तु तिष्ठति ॥ २१ ॥ जातोजातो हि मे पुत्रः सद्य एव विनश्यति ॥ श्रुत्वा तु वचनं तस्याः कश्यपो मुनिसत्तमः ॥ २२ ॥ चकार गमने बुद्धिं ब्रह्मलोकं प्रति प्रभो ॥ स गत्वा ब्रह्मभवनं नानाभावसमन्वितम् ॥ २३ ॥ तद्वाक्यमुक्तं तं सर्वं यदुक्तं तस्य जायया ॥ कश्यपस्य वचः श्रुत्वा कञ्जजो वाक्यमब्रवीत् ॥ २४ ॥ पुत्र गच्छाम सदनं भानोः परमदुर्लभम् ॥ इत्युक्त्वा

१ वेदा विदन्तीति शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यानमारुह्य आग्नेयं पद्मलोचनः ॥ २५ ॥ वेधा जगाम भवनमादित्यस्य महात्मनः ॥ अदितिः कश्यपो ब्रह्मा जग्मुर्विपुलमाश्रिताः ॥ २६ ॥ ते मुहूर्तेन संप्राप्ताः सूर्यलोकं सुवर्चसम् ॥ दिव्यकामगमैर्यानैर्यथार्ह कुरुनन्दन ॥ २७ ॥ आदित्यं प्रष्टुमिच्छंति तेजसां राशिमुत्तमम् ॥ गच्छन्तस्ते च विस्तीर्णामादित्यस्य परां सभाम् ॥ २८ ॥ षट्पदोद्गीतनिनदां सामगैस्तु समीरिताम् ॥ ऋतवो बह्वृचमुखाः प्रोक्ताः पुण्यवदक्षराः ॥ २९ ॥ तुष्टुवुः पुरुपव्याघ्रं विततेषु च कर्मसु ॥ यज्ञसन्धौ वेदविदां पदक्रमविदां तथा ॥ ३० ॥ घोषेण परमर्षीणां सर्वं तत्र निनादितम् ॥ यज्ञसंस्तववि द्भिश्च शिक्षाविद्भिस्तथा द्विजैः ॥ ३१ ॥ अष्टादशपुराणज्ञैः सर्वविद्याविशारदैः ॥ मीमांसाहेतुवादज्ञैः सर्ववादविशारदैः ॥ ३२ ॥ लोकायतिकमु ख्यैश्च तुष्टुवुः सूर्यमीरितम् ॥ तत्रतत्र च विप्रेन्द्रान् नियताञ्छंसितव्रतान् ॥३३॥ जपहोमपरान्योग्यान्ददृशुः कश्यपादयः ॥ तस्यां सभायामास्ते स रश्मिमाली दिवाकरः ॥ ३४ ॥ सुरासुरगुरुः श्रीमाञ्छुशुभे वीर मायया ॥ उपासते च तत्रैव प्रजानां पतिमीश्वरम् ॥ ३५ ॥ दक्षः प्रचेताः पुलहो मरीचिश्च द्विजोत्तमः ॥ भृगुरत्रिर्वसिष्ठश्च गौतमो नारदस्तथा ॥ ३६ ॥ दिव्या आत्मांतरिक्षं च वायुस्तेजोबलं मही ॥ शब्दः स्पर्शः स्वरूपं च रसगन्धौ तथैव च ॥ ३७ ॥ प्रकृतिश्च विकाराश्च यच्चान्यत्कारणं महत् ॥ सांगोपांगाश्च चत्वारो वेदा लोकपते तथा ॥ ३८ ॥ लवाश्च ऋतवश्चैव संकल्पप्रणवास्तथा ॥ एते चान्ये च बहवो भानुमंतमुपासते ॥ ३९ ॥ अर्थो धर्मश्च कामश्च मोक्षश्च सविशेषतः ॥ द्वेषो हर्षश्च मोहश्च मत्सरो मान एव च ॥ ४० ॥ वृको विष्णुसुतः पुत्रः पुष्पजो धिषणस्तथा ॥ माहेश्वरस्तथा सौरो विटपो विकचस्तथा ॥ ४१ ॥ मारुतो विश्वकर्मा च अश्वि नावन्यवाहनौ ॥ एवमुक्तः सुवचनैर्भानुना प्रभविष्णुना ॥ ४२ ॥ जगाम कश्यपो वीर सहादित्या स्वमाश्रमम् ॥ अदितिर्देवमाता च तं गर्भं निदधे स्वयम् ॥ ४३ ॥ भूतात्मानं महात्मानं दिव्यं वर्षसहस्रकम् ॥ पूर्णे वर्षसहस्रे तु प्रवृत्तो गर्भ उत्तमः ॥ ४४ ॥ सुराणां शरणं देवश्चासुराणां विनाशनः ॥ गर्भस्थेन तु तेनैव परित्रातः सुतस्तथा ॥ ४५ ॥ आददानस्तु तेजांसि त्रैलोक्यस्य नराधिप ॥ तस्मिञ्जाते तु देवेशे त्रैलोक्यस्य सुखावहे ॥ ४६ ॥ प्रहत्य दैत्यसंघांश्च सुराणां नादवर्धने ॥ अभवत्परमानन्दः सर्वेषां तत्र तस्थुषाम् ॥ ४७ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु सूर्योत्पत्तिर्नामाष्टपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५८ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ दक्षः प्रजापतिश्चैव नमस्कारं चकार ह ॥ विद्योतमानो वपुषा सर्वाभरणभूषितः ॥ १ ॥ उपातिष्ठत देवेशं भानुं चर्षिगणैः सह ॥ ततो गंधर्वमुख्येषु प्रणदत्सु विहा यसि ॥ बहुभिः सह गंधर्वैः प्रगायत्सु महीपते ॥ २ ॥ एवं ते देवगंधर्वा उपागायंत भक्तितः ॥ उत्पन्नं द्वादशात्मानं भास्करं वारितस्करम् ॥ ३ ॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इन्द्रो विवस्वान्पूषा च त्वष्टा च सविता तथा ॥ भगोंऽशुमानर्यमार्कः पृश्निर्मार्तंड एव च ॥ इत्येकादश एवैते द्वादशो विष्णुरुच्यते ॥ ४ ॥ एवं द्वादशधा जातमंशुमंतं महाद्भुतम् ॥ स्तुवन्ति देवताः सर्वे गताश्च तरसा महीम् ॥ ५ ॥ मृगव्याधश्च शर्वश्च मृगांकांको महायशाः ॥ अजैकपादहिर्बुध्न्यः पीतः काचः परंतपः ॥ ६ ॥ दमनश्चेश्वरश्चैव कपाली च विशांपते ॥ स्थाणुर्भगश्च भगवान्रुद्राश्चैतेऽवतस्थिरे ॥ ७ ॥ अश्विनौ वसवश्चाष्टौ गरुडश्च महाबलः ॥ विश्वेदेवाश्च साध्याश्च तस्थुः प्रांजलयो नृप ॥ ८ ॥ नागराजो महाराज वासुकिः प्रांजलिः स्थितः ॥ अन्ये च बहवो नागा राक्षसाश्च महाबलाः ॥ ९ ॥ तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्च महाबलः ॥ अरुणश्चारुणिश्चैव तत्र प्रांजलयः स्थिताः ॥ १० ॥ पितामहश्च भगवान्स्वयमागम्य लोककृत् ॥ प्राह देवगुरुः श्रीमान्त्सुरैः सर्वैर्महर्षिभिः ॥ ११ ॥ यस्मात्प्रेक्षयते सर्वं प्रभविष्णुः सनातनः ॥ तस्माल्लोकेश्वरः श्रीमान्विवस्वांश्च भवत्विति ॥ १२ ॥ देवदानवयक्षाणां गंधर्वोरगरक्षसाम् ॥ यस्मादयमादिदेवस्तस्मादादित्य एव हि ॥ १३ ॥ एवमुक्त्वा तु भगवान्सार्धं देवर्षिभिः प्रभुः ॥ नमस्कृत्वा सुसंपूज्य ययौ तत्सदनं प्रति ॥ १४ ॥ या गतिर्यज्ञशीलानां या गतिः पुण्यकर्मिणाम् ॥ या गतिः सिद्धयोगानां या गतिश्च महात्मनाम् ॥ १५ ॥ यस्याष्टगुणमैश्वर्यं समभूद्देवसत्तमम् ॥ यं प्राप्य शाश्वतं विप्रा नावर्तंते भवार्णवे ॥ १६ ॥ वालखिल्यादयो ये च सर्वाश्रमनिवासिनः ॥ सेवंते यं यतात्मानो दुश्चरं व्रतमास्थिताः ॥ १७ ॥ योऽनंत इव नागेषु यस्य ते सर्वयोगिनः ॥ सहस्रमूर्धा रक्ताक्षः शेषादिभिरनुत्तमैः ॥ ॥ १८ ॥ यो यज्ञ इति विप्रेंद्रैरर्च्यते सुखमीप्सुभिः ॥ सर्वे च यं यतप्राणा ध्यायन्ति ब्रह्मरूपिणम् ॥ १९ ॥ यं वेदविदो गायंति वेत्तारं यज्ञदायिनम् ॥ तं पुत्रं द्वादशात्मानं कश्यपः प्राप्य सत्तमम् ॥ २० ॥ मुदं लेभे सहाऽदित्या सुखं च परमं विभो ॥ लोकश्च सुमुदे सर्वो राक्षसा भयमाप्नुवन् ॥ २१ ॥ मधुपिंगलो महाबाहुः कंबुग्रीवो हसन्निव ॥ इंगुदीवद्धमुकुटो दिशः प्रज्वलयन्निव ॥ २२ ॥ स उवाच महातेजाः कश्यपं चर्षिसत्तमम् ॥ एषोहं तव पुत्रत्वं गतो गर्भस्य सिद्धये ॥ २३ ॥ दत्त्वा वरं पुरा विप्र विरंचस्य महात्मनः ॥ तस्मात्त्वमृषिशार्दूल कुरु सृष्टिमनौपमाम् ॥ ॥ २४ ॥ एवमाराध्य देवेशं ब्रह्मा सृष्टिमवाप्तवान् ॥ आराध्य कश्यपश्चापि भास्करं सुतमाप्तवान् ॥ २५ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे उभयसप्तमीमहात्म्ये सूर्यावतारवर्णनं नामैकोनषष्ट्युत्तरशतमोऽध्यायः ॥ १५९ ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥ अहो देवस्य चरितं भास्करस्य त्वयोदितम् ॥ ब्रह्मादयोऽपि यं नित्यं पूजयंति विधानतः ॥ १ ॥ ब्रह्मा विष्णुः सुरा ब्रह्मंस्तमाराध्य दिवाकरम् ॥ दद्दशुस्तस्य किंभूतं रूपं यत्तन्महाद्भुतम् ॥ २ ॥ ॥ सुमंतुरुवाच ॥ ॥ आराध्य देवमीशानं भास्करं सूतिवाचकम् ॥ कविष्णू कुरुशार्दूल जग्मतुस्तौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिमाचलम् ॥३॥ गोपतेरंतिकं वीर प्रहृष्टौ विभुदर्शने ॥ कुंदेंदुसंनिभं द्रष्टुं कंजजश्चाच्युतश्च तौ ॥४॥ ददृशतुर्महात्मानं चंद्रार्धकृतशेखरम् ॥ पूज यंतं विवस्वंतं भास्करं वीरवन्नृप ॥ ५ ॥ आच्योंचतुर्महात्मानं कविष्णू तं त्रिलोचनम् ॥ भोभो भीम सुरज्येष्ठ पश्यावामिह चागतौ ॥ ६ ॥ श्रुत्वोवाच तयोर्वाक्यं कंजजस्याच्युतस्य च ॥ प्रणम्य शिरसा भूमौ कृत्वा पूजां विधानतः ॥७॥ उवाच मधुरं वाक्यं शिक्षाक्षरसमन्वितम् ॥ हर्ष गद्गदया वाचा दिशः सन्नादयन्निव ॥ ८ ॥ किमाराध्य रविं प्राप्तौ सर्वदेववरं विभुम् ॥ कथ्यतां निखिलं देवौ परमं कौतुकं मम ॥ ९ ॥ दृष्टवंतौ परं किंचिद्रूपं देवस्य शंकरम् ॥ अव्ययस्याप्रमेयस्य भानोरमिततेजसः ॥१०॥ निशम्य वचनं वीर शंकरस्य महात्मनः ॥ ऊचतुस्तौ महात्मानौ कविष्णू देवसत्तमौ ॥११॥ न तत्पश्यावहे रूपं यत्तत्परममद्भुतम् ॥ आराधयितुमेवापि ह्यागतौ तेंतिकं च तम् ॥१२॥ तस्मादाराधयामो हि एकी भूय विभावसुम्॥गत्वोदयगिरिं पुण्यं पर्वतं कनकोज्ज्वलम्॥१३॥श्रुत्वा तु वचनं वीर कंजजाच्युतयोर्हरः॥तथेत्याह महाबाहो हर्षादुत्फुल्ललोचनः॥ ॥१४॥ अथ ते राजशार्दूल विविगोगतयो नृप ॥ जग्मुस्तं पर्वतश्रेष्ठमुदयाचलमाशु वै ॥१५॥ तमासाद्य नगं पुण्यं शृंगैस्त्रिभिरलंकृतम् ॥ नाना धातुपिनद्धाङ्गं नानाधातुविभूषितम् ॥ १६ ॥ आराधनाय विधिवद्यत्नं चक्रुर्विभावसोः ॥ स्तुवन्तस्ते समर्चंतो ध्यायंतश्च विभावसुम् ॥ १७ ॥ दिव्यवर्षसहस्रांते तपंतः संस्थिता नगे ॥ पद्मासनगतो ब्रह्मा ध्यायमानो दिवाकरम् ॥१८॥ स्थाणुवत्संस्थितो भूमावूर्ध्वबाहुस्त्रिलोचनः ॥ पंचाग्निं भजमानस्तु स्थितो विष्णुरवाक्छिराः ॥ १९ ॥ एवं वर्षसहस्रांते तपश्चक्रुः सुदारुणम् ॥ आराधयंतो विधिवद्गोपतिं पुत्रमालिनम् ॥ २० ॥ अथ ब्रह्मेशविष्णूनां कुर्वतां तप उत्तमम् ॥ तुतोष भगवान्भानुरुवाच च महीपते ॥ २१ ॥ ब्रह्मञ्छंभो हरे ब्रूत मत्तः किमभिवांछथ ॥ तुष्टोहं भवतां दातु मिहायातो वरं स्वयम् ॥ २२ ॥ ॥ सुमंतुरुवाच ॥ ॥ निशम्य वचनं भानोः शांतं हृद्यं मनोरमम् ॥ प्रणम्य शिरसा केशा इदं वचमब्रुवन्॥ ॥ २३ ॥ कृतकृत्या वयं सर्वे प्रसादात्तव गोपते ॥ त्वामाराध्य पुरा देव त्वत्तः प्राप्य वरं शुभम् ॥ २४ ॥ उत्पत्तिस्थितिनाशानां वयं सर्वे दिवा कर ॥ संभूयेह समर्था वै त्वत्प्रसादान्न संशयः ॥ २५ ॥ किं त्वेकं देवदेवेश वरमिच्छामहे विभो ॥ यत्ते परमकं रूपं दुर्लभं दुर्दृशं तथा ॥ २६ ॥ तस्मादस्माज्जगन्नाथ रूपं दर्शय तेऽच्युतम् ॥ सर्वदेवमयं यत्ते यत्त्वयोक्तं पुरानघ ॥२७॥ तेषां तद्वचनं श्रुत्वा ब्रह्मविष्णवीशभाषितम्॥ दर्शयामास तद्रूपमद्भुतं लोकपूजितम् ॥ २८ ॥ अनेकवक्त्रशिरसमनेकाद्भुतदर्शनम् ॥ सर्वदेवमयं दिव्यं सर्वलोकमयं तथा ॥ २९ ॥ भूः पादौ द्यौः शिरश्चापि तत्राग्नी लोचने मते ॥ पादांगुल्यः पिशाचाश्च हस्तांगुल्यश्च गुह्यकाः ॥ ३० ॥ विश्वे देवाः स्मृतास्तस्य जंघासंघाः सुरोत्तमाः ॥ यक्षाः कुक्षिषु





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संलीनाः केशाश्चाप्सरसां गणाः ॥३१॥ दृष्टिधृष्टश्च विपुलाः केशा वीरांशवः स्मृताः ॥ तारका रोमरूपाणि रोमाणि च महर्षयः ॥३२॥ बाहवो विदिशस्तस्य दिशः श्रोत्रे नराधिप॥ अश्विनौ श्रवणे चास्य नासा वायुर्महाबलः॥३३॥ प्रसादश्च क्षमा चैव मनो धर्मस्तथैव च ॥ सत्यमस्याभव द्वाणी जिह्वा देवी सरस्वती ॥ ३४ ॥ ग्रीवादितिर्महादेवी तालू रुद्रश्च वीर्यवान् ॥ द्वारं स्वर्गस्य नाभिर्वै मित्रस्त्वष्टा पिचंडकः ॥ ३५ ॥ मुखं वैश्वानरश्चास्य वृषणौ च भगस्तदा ॥ हृदयं भगवान्ब्रह्मा ह्युदरं कश्यपो मुनिः ॥ ३६ ॥ पृष्ठेऽस्य वसवो देवा मरुतः सर्वसंधिषु ॥ सर्वच्छंदांसि दशना ज्योतींपि विमला प्रभा ॥ ३७ ॥ प्राणो रुद्रो महादेवः कुक्षौ चास्य महार्णवाः ॥ उदरे चास्य गंधर्वा भुजंगाश्च महाबलाः ॥ ३८ ॥ लक्ष्मीर्मेधा धृतिः कांतिः सर्वा विद्याश्च वै कटौ ॥ ललाटमस्य परमं वयःस्थानं परात्मनः ॥ ३९ ॥ सर्वज्योतींपि जानीहि तपश्चक्रश्च देव राट् ॥ तदेतदादिदेवस्य तनौ ह्याहुर्माहात्मनः ॥ ४० ॥ स्तनौ कुक्षौ च वेदाश्च तेष्टौ चास्य मखाः स्मृताः ॥ यष्टव्यपशुबंधाश्च द्विजानां वेष्टि तानि च ॥ ४१ ॥ सर्वदेवमयं दृष्ट्वा रूपमर्कस्य ते नृप ॥ ब्रह्मा हरो हरिर्देवाः परं विस्मयमागताः ॥ ४२ ॥ प्रणम्य शिरसा देवं वेपमाना धरां गताः ॥ भयगद्गदया वाचा इदं वचनमब्रुवन् ॥ ४३ ॥ समीक्ष्य रूपं ते देव भीमं ज्वालासमाकुलम् ॥ अनेकमुखबाहूरुचरणं चकिता वयम् ॥४४॥ दिग्ज्ञानं हृतमस्माकं तत्प्रसीद जगत्पते ॥ उपसंहर विश्वात्मन्द्रष्टुं शक्ता न ते वयम् ॥ ४५ ॥ इति तेपां वचः श्रुत्वा देवदेवो दिवाकरः ॥ प्रसन्नो भगवाह वचस्तान्प्रहसन्निदम् ॥ ४६ ॥ ॥ आदित्य उवाच ॥ ॥ यदेतत्परमं पुण्यमद्भुतं लोकभावनम्॥दृष्टं भवद्भिर्देवेंद्रा मम सर्वजग न्मयम् ॥ ४७ ॥ एतन्मया प्रसन्नेन युष्माकं श्रेयसेऽनघाः ॥ दर्शितं पूजितेनेह योगिनां यन्महालयम् ॥ ४८ ॥ ॥ ब्रह्मेशाच्युता ऊचुः ॥ ॥ एवमेतन्न संदेहो यथात्थ त्वं दिवस्पते ॥ योगिनामपि देवेश दर्शनं ह्यस्य दुर्लभम् ॥ ४९ ॥ त्वामाराध्य जगन्नाथं नाप्राप्यमिह विद्यते ॥ तस्मा त्पूज्यतमो लोके नान्यो देवेषु विद्यते ॥ ५० ॥ एवमुक्त्वाऽदितेः पुत्रो जगामादर्शनं रविः ॥ ब्रह्मादयोपि ते हर्षं प्रापुर्देवस्य दर्शनात् ॥ ५१ ॥ एवं ब्रह्मादयो देवाः पूजयित्वा दिवाकरम् ॥ गतास्ते परमां सिद्धिं गंधर्वा ऋषयस्तथा ॥ ५२ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु ब्रह्मादीनां सूर्यरूपदर्शनवर्णनं नाम षष्ट्युत्तरशततमोऽध्यायः ॥ १६० ॥ ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥ एव मेतद्यथात्थ त्वं भास्करो दैवतं परम् ॥ नास्त्यादित्यसमो देवो नास्त्यादित्यसमा गतिः ॥ १ ॥ आदित्यमूलमखिलं त्रैलोक्यं नात्र संशयः ॥ भवत्यस्माज्जगत्सर्वं सदेवासुरमानुषम् ॥ २ ॥ रुद्रेंद्रोपेंद्रकेंद्राणां विप्रेंद्र त्रिदिवौकसाम् ॥ द्युतिर्द्युतिमतां कृत्स्ना तेजो यत्सार्वलौकिकम् ॥ ३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वात्मा सर्वलोकेशो महादेवः प्रजापतिः ॥ सूर्य एव त्रिलोकस्य मूलं परमदैवतम् ॥ ४ ॥ ततः संजायते सर्वं तत्रैव प्रविलीयते ॥ भावाभावौ हि लोकनामादित्यान्निःसृतौ पुरा ॥ ५ ॥ जगज्ज्येष्ठो ग्रहो विप्र प्रदीप्तः प्रभवो रविः ॥ तत्र गच्छंति निधनं जायंते च पुनः पुनः ॥ ६ ॥ क्षणा मुहूर्ता दिवसा रात्रिपक्षाश्च कृत्स्नशः ॥ मासाः संवत्सराश्चैव ऋतवश्च युगानि च ॥ ७ ॥ स एष कालश्चाग्निश्च द्वादशात्मा प्रजापतिः ॥ प्रभासयति विप्रेंद्र त्रैलोक्यं सचराचरम् ॥ ८ ॥ तस्मादस्य द्विजश्रेष्ठ पूजने यत्फलं भवेत् ॥ तन्मे ब्रूहि प्रयत्नेन प्रसादप्रवणो भव ॥ ९ ॥ ॥ इति श्रीभविष्ये महापुराणे सप्तमीकल्पे ब्राह्मे पर्वणि सौरधर्मे सूर्यपूजाफलप्रश्नवर्णनं नामैकषष्ट्युत्तरशततमोऽध्यायः ॥१६१॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ भानुं प्रतिष्ठाप्य नरः सर्वदेवमयं विभुम् ॥ प्राप्नोत्यमरतां वीर तेजसा रविसन्निभः ॥ १ ॥ यो भानुं द्वेष्टि संमोहात्सर्वदेवनमस्कृतम् ॥ नरो नरकगामी स्यात्तस्य संभाषणादपि ॥ २ ॥ भानुमिष्टं प्रतिष्ठाप्य सर्वयत्नैर्विधानतः ॥ यत्पुण्यफलमाप्नोति तदेकाग्रमनाः शृणु ॥ ॥ ३ ॥ सर्वयज्ञतपोदानतीर्थदेवेषु यत्फलम् ॥ तत्फलं कोटिगुणितं स्थाप्य भानुं लभेन्नरः ॥ ४ ॥ यो भानुं स्थापयेद्भक्त्या विधिपूर्वं नराधिप ॥ सर्वांगसुदितं पुण्यं लभेत्कोटिगुणं नरः ॥ ५ ॥ मातृजान्पितृजांश्चैव यत्र चोद्वहते स्त्रियम् ॥ कुलत्रयं समुद्धृत्य शक्रलोके महीयते ॥६॥ भुक्त्वा तु विपुलान्भोगान्प्रलये समुपस्थिते ॥ ज्ञानयोगं समासाद्य तत्रैव प्रविमुच्यते ॥ ७ ॥ अथ वा राज्यमाकांक्षेज्जायते संभवांतरे ॥ सप्तद्वीपसमुद्रायाः क्षितेरधिपतिर्भवेत् ॥ ८ ॥ यत्कृत्वा पार्थिवं व्योम्नि अर्चयेत्सर्वदेवकम् ॥ समूलमखिलं तेन त्रैलोक्यं पूजितं भवेत् ॥ ९ ॥ इहैव धनवाञ्छ्रीमान्सोंतेऽर्कत्वमवाप्नुयात् ॥ त्रिसंध्यं कीर्तयेद्व्योम कृत्वा बिंबेन पार्थिवम् ॥ १० ॥ शतैकादशकं यावत्तस्य पुण्यफलं शृणु ॥ अनेन सह देहेन भानुः संतिष्ठते क्षितौ ॥ ११ ॥ पापहा सर्वमर्त्यानां दर्शनात्स्पर्शनादपि ॥ उद्धारयेच्च संस्थाप्यकुलानामेकविंशतिम् ॥ १२ ॥ गीर्वाणैः सहितो नित्यं मोदते दिवि सूरवत् ॥ योऽपि पिष्टमयं व्योम सर्वगंधोपशोभितम् ॥ १३ ॥ कुसुमैः सुसुगंधैश्च फलैश्च विविधैर्नृप ॥ भक्ष्यलेह्यरसैश्चैव घृतदीपैरलंकृतैः ॥ १४ ॥ नानारत्नसमायुक्तं नानागंधसमन्वितम् ॥ तस्य दक्षिणपार्श्वे तु विन्यसेद्गुरुं बुधः ॥ १५ ॥ दद्याद्वै पश्चिमे भागे श्रीखंडं चंदनं शुभम् ॥ उत्तरे चंदनं दद्याद्रक्तं दद्याच्च पूर्वतः ॥ १६ ॥ एवं वित्तानुसारेण कृत्वा विभवविस्तरम् ॥ कृष्णपक्षे तु सप्तम्यां भास्करस्य निवेदयेत् ॥ १७ ॥ सकृदेव तु यः कुर्याद्व्योम भरतसत्तम ॥ यत्फलं हि भवेत्तस्य तन्मे निगदतः शृणु ॥ १८ ॥ सर्वपापविनिर्मुक्तः सर्वे



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुःखविवर्जितः ॥ निष्कलः सर्वगो भूत्वा प्रविशेत्परमव्ययम् ॥ तेजसा रविसंकाशः प्रभयार्कसमप्रभः ॥ १९ ॥ पांसुना क्रीडमानो यः कुर्याद्व्योम ह्यकार्यतः ॥ स राजन्भवते राजा पर्वतेषु समंततः ॥ २० ॥ सर्वेषामेव पात्राणां परं पात्रं विभावसुः ॥ एतत्संतारयेद्यस्मादतीव नरकार्णवात् ॥ २१ ॥ तस्य पात्रस्य माहात्म्यं ध्रुवमक्षयमादिशेत् ॥ तस्मात्तस्मै सदा देयमप्रमेयफलार्थिभिः ॥ २२ ॥ रवौ दत्तं हुतं जप्तं बलिं पूजां निवेदयेत् ॥ अनंतफलमादिष्टं ब्रह्मादिसुरसत्तमैः ॥ २३ ॥ भक्त्या वित्तानुसारेण यः कुर्यादालयं रवेः ॥ सोग्र्येयं यानमारुह्य मोदते सह भानुना ॥ २४ ॥ महाविभवसारोपि यः कुर्याद्भक्तिवर्जितम् ॥ अल्पे महति वा तुल्यं फलमाढ्यदरिद्रयोः ॥ २५ ॥ वित्तशाठ्येन यः कुर्याद्वित्तवानपि मानवः ॥ न स फलमवाप्नोति प्रलोभाक्रांतमानसः ॥ २६ ॥ तस्मात्त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् ॥ भागद्वयं च धर्मार्थे अनित्यं जीवनं यतः ॥ २७ ॥ भक्त्या प्रचोदितं कुर्यादल्पवित्तोऽपि यो नरः ॥ महाविभवसारोऽपि न कुर्याद्भक्तिवर्जितः ॥ २८ ॥ सर्वस्वमपि यो दद्यादर्के भक्तिविवर्जितः ॥ न तेन धर्मभागी स्याद्भक्तिरेवात्र कारणम् ॥ २९ ॥ न तपोभिर्विभोरुग्रैर्न च सर्वैर्महामखैः ॥ गच्छेदेकं पुरं दिव्यमर्कं भक्तियुतो नृप ॥ ३० ॥ रुचिरं शुभशैलोत्थं कुर्याद्यस्तु रवेर्गृहम् ॥ त्रिसप्तकुलसंयुक्तः सूर्यलोकमवाप्नुयात् ॥ ३१ ॥ यन्मया कोटिगुणितं कृतं स्यादिष्टकाम्यया ॥ द्विपरार्धगुणं पुण्यं शैलजेऽपि विदुर्बुधाः ॥ ३२ ॥ मृच्छैलेन समं ज्ञेयं पुण्यमाढ्यदरिद्रयोः ॥ यत्र तत्र गतः कुर्याद्भक्त्या पुण्यं भगालयम् ॥ ३३ ॥ शैलोत्थमिष्टकाभिर्वा दृढं दारुमयं शुभम् ॥ स गच्छेत्परमं स्थानं भानोरमिततेजसः ॥ गैरिकं यानमारुह्य यः कुर्याद्धृतभूषणः ॥ ३४ ॥ क्रीडमानोऽपि यः कुर्याद्बालभावेऽर्कमंदिरम् ॥ सोऽर्कलोकमवाप्नोति विमानवरमास्थितः ॥ ३५ ॥ पुष्पमालाकुलं दिव्यं धूपगंधादिवासितम् ॥ अप्सरोगणसंकीर्णं सर्वकामसुखप्रदम् ॥ ३६ ॥ तत्र रूढो महाराज वत्सरं वृन्दमुत्तमम् ॥ उषित्वा भास्करपुरे पूज्यमानस्तु दैवतैः ॥ ३७ ॥ क्रमादागत्य लोकेऽस्मिन्राजा भवति धार्मिकः ॥ धर्मार्थकामसंपन्नो यशसा च नराधिप ॥३८॥ पश्यन्परिहरञ्जंतून्मार्जन्या मृदुसूक्ष्मया ॥ शनैः संमार्जनं कुर्याच्चांद्रायणफलं भवेत् ॥३९॥ पुत्रार्थं देहजीर्णाया वन्ध्यायाश्च विशेषतः ॥ रोगार्तानां च भूतानामारोग्यार्थं प्रपूजयेत् ॥ ४० ॥ गृहीत्वा गोमयं स्वच्छं स्थाने च पतितं शुभे ॥ उपर्युपरि संत्यज्य प्रत्यग्रं जन्तुवर्जितम् ॥ ४१ ॥ वस्त्रपूतगोमयेन यः कुर्यादुपलेपनम् ॥ पश्येत्तु सुखिताञ्जंतूंश्चांद्रायणशतं लभेत् ॥ ४२ ॥ यः कुर्यात्सर्वकार्याणि वस्त्रपूतेन वारिणा ॥ स मुनि-

१ 'क्रीडोनुखंपरिभ्यश्च' इति सूत्रे 'आङो दोऽनास्यविहरण' इत्याङोऽनुवर्तना...मने...। २ कृतशतवारचान्द्रायणजं फलमित्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स महासाधुः स गच्छेत्परमां गतिम् ॥ ४३ ॥ क्षरंति सर्वदानानि यज्ञहोमबलिक्रियाः ॥ अक्षरं तु महादानं सुखदं सर्वदेहिनाम् ॥ ४४ ॥ नैरं तर्येण यः कुर्यात्पक्षं संमार्जनार्चनम् ॥ वर्षमेकं शतं दिव्यं सुरलोके महीयते ॥ ४५ ॥ तस्यांते च चतुर्वेदसुरूपः प्रियदर्शनः ॥ आढ्यः सर्वगुणो पेतो राजा भवति धार्मिकः ॥ ४६ ॥ संपर्केणापि यः कुर्यान्नरः कर्म भगालये ॥ सोपि सौमनसं गत्वा पुरं क्रीडति नित्यशः ॥४७॥ तावद्भ्र मंति संसारे दुःखशोकपरिप्लुताः ॥ न भजंति रविं भक्त्या यावत्सर्वेऽपि देहिनः ॥ ४८ ॥ समासक्तं तथा चित्तं जन्तोर्विषयगोचरे ॥ यद्यर्कौ न भवद्देवः को मुञ्चेदेव बन्धनात् ॥ ४९ ॥ यः कुर्यात्कुट्टिमां भूमिं दर्पणोदरसन्निभाम् ॥ नानावर्णविचित्रां च विचित्र कुसुमोज्ज्वलाम् ॥ ५० ॥ क्वचित्कलशविन्यस्तां पंकजैरुपशोभिताम् ॥ रम्यां मनोरमां सौम्यामर्कायतनसंसदि ॥ ५१ ॥ यावद्दंडा भवेद्भूमिः समंताच्च सुशोभना ॥ तावद्युगसहस्राणि सूरलोके महीयते ॥ ५२ ॥ कारयेच्चित्रशास्त्रज्ञैश्चित्रकर्मार्कमंदिरे ॥ विचित्रं यानमारुह्य चित्रभानोर्गृहं व्रजेत् ॥५३॥ यावत्स देवरूपाणि ग्रहरूपाणि लेखयेत् ॥ तावद्युगसहस्राणि स्वर्गलोके महीयते ॥ ५४ ॥ भवेद्भूमिः समंताच्च यः कुर्यादर्कमंदि रम् ॥ आरामावसथादीनां लभेदामूल्यकं फलम् ॥ ५५ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मवर्णनंनाम द्विषष्ट्यु त्तरशततमोऽध्यायः ॥ १६२ ॥छ॥ ॥ सुमन्तुरुवाच ॥ ॥ भास्करस्य महाबाहो भानोरमिततेजसः ॥ स्नानकाले प्रकुर्वीत जयशब्दादिमंग लम् ॥ १ ॥ पद्मस्वस्तिकशंखं तु श्रीवत्सं द्विजसत्तम ॥ हेमरूपादिपात्रेषु कल्पितं गोमयादिभिः ॥ २ ॥ नानावर्णकसंयुक्तैरक्षतैस्तिलतंदुलैः ॥ स्वच्छैश्च दधिसंमिश्रैर्यथाशोभं प्रपूरितैः ॥ ३ ॥ द्रव्यपीठप्रदीपाश्च भूताश्वत्थादिपल्लवैः ॥ औषधीभिश्च मेध्याभिः सर्वबीजैर्यवादिभिः ॥ ॥ ४ ॥ सप्तम्यादिषु सर्वेषु षष्ठ्यादिषु विशेषतः ॥ शंखभेर्यादिभिः कुर्याद्वाद्यघोषं सुशोभनम् ॥ ५ ॥ त्रिसन्ध्यं वेदनिर्घोषं कुर्वीत फलमुत्तमम् ॥ कुर्यान्नीराजनं चैव शंखवादित्रमंगलैः ॥ ६ ॥ यावन्नीराजनं कुर्यात्पर्वाणि विधिवद्रवौ ॥ तावद्युगसस्राणि सूरलोके महीयते ॥ ७ ॥ कपिलापञ्चगव्येन कुशवारियुतेन वै ॥ स्नापयेन्मन्त्रपूतेन ब्रह्मस्नानं हि तत्स्मृतम् ॥ ८ ॥ यस्त्वेकमपि सर्वेब्दे ब्रह्मस्नानं प्रयच्छति ॥ स मुक्तः सर्वपापैस्तु सूर्यलोके महीयते ॥ ९ ॥ कपिलापञ्चगव्येन दधिक्षीरयुतेन च ॥ स्नानं दशगुणं ज्ञेयं महत्पुण्यं नरा धिप ॥ १० ॥ ऋभवो वीरमुद्दिश्य देहशुद्धिं च शाश्वतीम् ॥ कपिलामाहरेन्नित्यं मुनिदेवाग्निनिर्मिताम् ॥ ११ ॥ कापिलं यः पिबेच्छू

१ कपिलेतरगवामिति शेषः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्रोदेवकार्यार्थनिर्मितम् ॥ स पच्यते महाघोरे सुचिरं नरकार्णवे ॥ १२ ॥ वर्षकोटिसहस्रेण यत्पापं समुपार्जितम् ॥ घृताभ्यंगेन सूर्यस्य दहेत्सर्वं न संशयः ॥ १३ ॥ कल्पकोटिसहस्रैस्तु यत्पापं समुपार्जितम् ॥ वज्रस्नानेन तत्सर्वं दहत्यग्निरिवेंधनम् ॥ १४ ॥ सप्तम्यां च कृतस्नानो यजेत्सूर्यं सकृन्नरः ॥ कुलान्युद्धृत्य सप्तेह सूर्यलोके महीयते ॥ वसुहेमादियुक्तं च क्षीरस्नानस्य तत्समम् ॥ १५ ॥ सकृदाढकेन पयसा यो भानुं स्नापयेन्नरः ॥ राजतेन विमानेन सोऽर्कलोके महीयते ॥ १६ ॥ स्नाप्य दध्ना सकृद्भानुं स त्रिलोके महीयते ॥ मधुना स्नपयित्वा तं शुक्रलोके महीयते ॥ १७ ॥ उद्धृत्य शालिपिष्टेन वायुलोकेषु पूज्यते ॥ स्नानमिक्षुरसेनेह यः सूर्ये सकृदाचरेत् ॥ स गोपतिपुरं गच्छेत्सर्वकामसमन्वितः ॥ १८ ॥ फलोदकेन यो भानुं सकृत्स्नापयते नरः ॥ उत्सृज्य पापकलिलं पितृलोके महीयते ॥ १९ ॥ श्रीखंडवारिणा स्नाप्य सकृद्भानुं नराधिप ॥ चंद्रांशुनिर्मलः श्रीमांश्चरेदात्रेयमंदिरे ॥ २० ॥ वस्त्रपूतेन तोयेन यद्यर्कं स्नापयेत्सकृत् ॥ स सर्वकामतृप्तात्मा राकाधिपपुरं व्रजेत् ॥२१॥ आपो हिष्ठेति जप्येन गंगातोयेन भारत ॥ गैरिकेण विमानेन ब्रह्मलोके महीयते ॥ २२ ॥ कर्पूरागुरुतोयेन योऽर्कं स्नापयते सकृत् ॥ स्नाप्य भानुं सकृन्मन्त्रैः सप्तम्यां समुपोपितः ॥ स कुलानेकविंशतिमुत्तार्य रविमाव्रजेत् ॥ २३ ॥ पितॄनुद्दिश्य यो भानुं स्नापयेच्छीतवारिणा ॥ तृप्ताः स्वर्गं व्रजंत्याशु पितरो नरकादपि ॥ २४ ॥ भानुं शीतांबुनास्नाप्य धारोष्णपयसा सह ॥ स्नाप्य पश्चाद्घृतेनेशमग्निलोके महीयते ॥ २५ ॥ एतत्स्नानत्रयं कृत्वा पूजयित्वा तु भारत ॥ अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥ २६ ॥ मृत्कुम्भात्ताम्रकुम्भैस्तु स्नानं शतगुणं मतम् ॥ रौप्यैः पादोत्तरं पुण्यं दर्शनात्स्पर्शनं परम् ॥ स्पर्शनादर्चनं श्रेष्ठं घृतस्नानमतः परम् ॥ २७ ॥ इहामुत्र कृतं पापं घृतस्नानेन नश्यति ॥ सप्तजन्मकृतं पापं पुराणश्रवणेन तु ॥२८॥ दशापराधांस्तोयेन क्षीरेण तु शतं क्षमेत् ॥ स [illegible]स्रं क्षमते दध्ना घृतेनाप्ययुतं क्षमेत् ॥२९॥ नैरन्तर्येण यो मासं घृतस्नानं समाचरेत् ॥ दशैकादश कुलानीह नयेत्सूर्यस्य मंदिरम् ॥ ३० स्नानं पलशतं ज्ञेयमभ्यंगः पञ्चविंशतिः ॥ पलानां द्विसहस्रेण महास्नानमिति श्रुतिः ॥ ३१ ॥ घृताभ्यंगं घृतस्नान भानोः कुर्य्याद्द्विजोत्तम ॥ यश्च गोधूमचूर्णैस्तु कषायैर्दर्भसंमितैः ॥ ३२ ॥ दशधेनुसहस्राणि यद्दत्वा लभते फलम् ॥ तत्फलं लभते सर्वमर्कस्योद्वर्तने कृते ॥ ३३ ॥ अर्घ्यं पुष्पफलोपेतं यस्त्वर्काय निवेदयेत् ॥ स पूज्यः सर्वलोकेषु अर्कवन्मोदते दिवि ॥ ३४ ॥ गंधतोयेन संमिश्रमुदकाद्द्वादशोत्तरम् ॥ पञ्चगव्यसमायुक्तमर्घ्यं शतगुणं नृप ॥ ३५ ॥ योष्टांगगर्भमापूर्य भानोर्मूर्ध्नि

१ चन्द्रभवनं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निवेदयेत् ॥ दशवर्षसहस्राणि रमते चार्कमंदिरे ॥ ३६ ॥ आपः क्षीरं कुशाग्राणि घृतं दधि तथा मधु ॥ रक्तानि करवीराणि तथा रक्तं च चन्दनम् ॥ ३७ ॥ अष्टांग एष अर्घो वै ब्रह्मणा परिकीर्तितः ॥ सततं प्रीतिजननो भास्करस्य नराधिप ॥ ३८ ॥ दातुर्वैणवपात्रेण दत्तेऽर्घ्ये यत्फलं भवेत् ॥ तस्माच्छतगुणं पुण्यं मृत्पात्रेण नराधिप ॥ ३९ ॥ ताम्रार्घ्यपात्रदानेन पुण्यं शतगुणं मतम् ॥ पालाशपद्मपत्राभ्यां ताम्रपात्रे फलं लभेत् ॥ ४० ॥ रौप्यपात्रेण विज्ञेयं लक्षार्घ्यं नात्र संशयः ॥ सुवर्णपात्रविन्यस्तमर्घ्यं कोटिगुणं भवेत् ॥ ४१ ॥ एवं स्नानार्घ्यनैवेद्यबलिधूपादिषु क्रमात् ॥ पात्रांतरविशेषेण तत्फलं तूत्तरोत्तरम् ॥ ४२ ॥ रौप्यपात्रप्रदानेन यत्पुण्यं वेदपारगे ॥ ताम्रपात्रप्रदानेन तस्माच्छतगुणं रवौ ॥ ॥ ४३ ॥ फलं कोटिसुवर्णस्य यो दद्याद्वेदपारगे ॥ सूर्याय रूप्यपात्रे तु भवेत्पुण्यं ततोऽधिकम् ॥४४॥ सुवर्णपात्रं यो दद्याद्भास्कराय महीपते ॥ न शक्यं तस्य तद्वक्तुं पुण्यं पात्रविशेषतः ॥ ४५ ॥ तुल्यमेव फलं प्रोक्तं सर्वमाढ्यदरिद्रयोः ॥ तयोरभ्यधिकं तस्य यस्त्वर्के भावनाधिकः ॥ ॥ ४६ ॥ विभवे सति यो मोहान्न कुर्याद्विधिविस्तरम् ॥ नैव तत्फलमाप्नोति प्रलोभाक्रांतमानसः ॥ ४७ ॥ तस्मान्मन्त्रैः फलैस्तोयैश्चन्दनाद्यैश्च यत्नतः ॥ तदनंतफलं ज्ञेयं भक्तिरेवात्र कारणम् ॥ ४८ ॥ वर्षकोटिशतं दिव्यं सूर्यलोके महीयते ॥ गंधानुलेपनं पुण्यं द्विगुणं चन्दनस्य तु ॥ ॥ ४९ ॥ गंधाच्चतुर्गुणं ज्ञेयं पुष्पमष्टगुणं नृप ॥ कृष्णागुरु विशेषेण द्विगुणं फलमादिशेत् ॥ तस्माच्छतगुणं पुण्यं कुंकुमस्य विधीयते ॥ ५० ॥ चंदनागुरुकर्पूरैः श्लक्ष्णपिष्टैः सकुंकुमैः ॥ भानुं पर्याप्तमालिप्य कल्पकोटिं वसेद्दिवि ॥ ५१ ॥ स दीव्येत्सुरवृन्देन पुण्यगंधैः प्रलेपितः ॥ दशवर्षसहस्राणि वीर मित्रपुरे वसेत् ॥ ५२ ॥ भक्त्या निवेद्य अर्काय तालवृंतं नराधिप ॥ दशवर्षसहस्राणि वीरलोके महीयते ॥ ५३ ॥ मायूरं व्यजनं दत्त्वा सूर्यायातीव शोभनम् ॥ वर्षकोटिशतं पूर्णं प्रभंजनपुरे वसेत् ॥ ५४ ॥ पुष्पैररण्यसंभूतैः पत्रैर्वा गिरिसम्भवैः ॥ अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जंतुवर्जितैः ॥ ५५ ॥ आत्मारामभवैश्चैव पुष्पैः संपूजयेद्रविम् ॥ पुष्पजातिविशेषेण भवेत्पुण्यं ततोऽधिकम् ॥ ५६ ॥ तपःशीलगुणोपेत इतिहासविदि द्विजे ॥ दत्त्वा दश सुवर्णस्य निष्कान्यल्लभते फलम् ॥ ५७ ॥ करवीरस्य कुसुममर्काय विनिवेदयेत् ॥ लभते तत्फलं वीर यथाह भगवान्रविः ॥ एवं पुष्पविशेषेण फलं तदधिकं भवेत् ॥ ज्ञेयं पुण्यं रसज्ञेन यथा स्यात्तन्निबोध मे ॥ ५८ ॥ सदा पुष्पसहस्रेभ्यः करवीरं विशिष्यते ॥ बिल्वपत्रसहस्रेभ्यः पद्ममेकं नराधिप ॥ ५९ ॥ पद्मपुष्पसहस्रेभ्यो बकपुष्पं विशिष्यते ॥ बकपुष्पसहस्रेभ्यो मुद्गरं परमुच्यते ॥६०॥ कुशपुष्पसहस्रेभ्यः शमीपत्रं विशिष्यते ॥ शमीपुष्पसहस्रेभ्यो नृप नीलोत्पलं परम् ॥ सर्वासां पुष्पजातीनां प्रवरं नीलमुत्पलम् ॥ ६१ ॥ रक्तो



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्पलसहस्रेण नीलोत्पलशतेन च ॥ रक्तैश्च करवीरैश्च यस्तु पूजयते रविम् ॥ ६२ ॥ कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ वसेदर्कपुरे श्रीमान्सूर्यतुल्यपराक्रमः ॥ ६३ ॥ शेषाणां पुष्पजातीनां यत्फलं परिकीर्तितम् ॥ तत्फलस्यानुसारेण सूर्यलोके महीयते ॥ ६४ ॥ शमीपुष्पं बृहत्याश्च कुसुमं तुल्यमुच्यते ॥ करवीरसमा ज्ञेया जातीविजयपाटलाः॥ ६५ ॥ श्वेतमंदारकुसुमं सितपुष्पं च तत्समम् ॥ नागचंपकपुन्नागमुद्गराणां समाः स्मृताः ॥ ६६ ॥ गंधवंत्यपवित्राणि कुसुमानि विवर्जयेत् ॥ गंधहीनमपि ग्राह्यं पवित्रं यत्कुश दिकम् ॥ ६७ ॥ सात्त्विकं तद्धि कुसुमम पवित्रं च तामसम् ॥ मुद्गराणि कदंबानि रात्रौ देयानि सूरये ॥ ६८ ॥ दिवाशेषाणि पुष्पाणि त्यजेदुपहतानि च ॥ मुकुलैर्नार्चयेद्भानुमपक्वं न निवेदयेत् ॥ ६९ ॥ फलं क्वथितविद्धं च यत्नात्पक्वमपि त्यजेत् ॥ अलाभे बत पुष्पाणां पत्राण्यपि निवेदयेत् ॥ ७० ॥ पत्राणामप्यलाभे तु फलान्यपि निवेदयेत् ॥ फलानामप्यलाभेन तृणगुल्मौषधीरपि ॥ ७१ ॥ औषधीनामभावे तु भक्त्या भवति पूजितः ॥ प्रत्येकं मुक्तपुष्पेण दशसौवर्णिकं फलम् ॥ ७२ ॥ यः सुगन्धैर्मुक्तपुष्पैः सम्यग्भानुं प्रपूजयेत् ॥ माघासितेऽपि सुमनाः सोऽनंतफलमश्नुते ॥ ७३॥ करवीरैर्महाराज संयतो भानुमर्चयेत् ॥ सर्वपापविनिर्मुक्तः सूर्यलोके महीयते ॥ ७४ ॥ अगस्त्यकुसुमैर्भक्त्या यः सकृद्भानुमर्चयेत् ॥ गवां प्रयुतदानस्य फलं प्राप्य दिवं व्रजेत् ॥ ७५ ॥ मल्लिकोत्पलपद्मैश्च जातीपुन्नागचंपकैः ॥ अशोकश्वेतमंदारकर्णिकारांधुकैस्तथा ॥ ७६ ॥ करवीरार्ककह्लारशमीतगरकेशरैः ॥ अगस्तिबकपुष्पैस्तु शतपत्रैर्नराधिप ॥ ७७ ॥ पुष्पैरेतैर्यथालाभं यो नरः पूजयेद्रविम् ॥ स तत्फलमवाप्नोति तदेकाग्रमनाः शृणु ॥ ७८ ॥ सूर्यकोटिप्रतीकाशैर्विमानैः सर्वकामिभिः ॥ पुष्पमालापरिक्षिप्तैर्गीतवादित्रनादितैः ॥ ७९ ॥ तत्रीमधुरवाद्यैश्च स्वच्छंदगमनैर्नृप ॥ सूर्यकन्यासमाकीर्णैर्देवानां च सुदुर्लभैः ॥ ८० ॥ दोधूयमानश्चमरैः स्तूयमानः सुरासुरैः ॥ गच्छेदर्कपुरीं दिव्यां तत्र संपूजितो भवेत् ॥ ८१ ॥ यैस्तैश्च वापि कुसुमैर्जलजैः स्थलजैर्नृप ॥ संपूज्य श्रद्धया भानुमर्कलोके महीयते ॥ ८२ ॥ सूर्यस्योपरि यः कुर्याच्छोभनं पुष्पमंडलम् ॥ शोभितं पुष्पस्रग्दामैरापीठांतं प्रलंबितैः ॥ ८३ ॥ अत्याश्चर्यमहायानैर्दिव्यपुष्पोपशोभितः ॥ सर्वेषामुपरिष्टाच्च वसेदर्कपुरे सुखी ॥ ८४ ॥ अनेकरागविन्यस्तैः सुगन्धैः कुसुमैर्गृहम् ॥ यः कुर्यात्पर्वकाले तु विचित्रकुसुमोज्ज्वलम् ॥ ८५ ॥ स पुष्पकविमानेन पुष्पमालाकुलेन तु ॥ पुष्पेतरपुरं दिव्यं श्रयते नात्र संशयः ॥ ८६ ॥ अक्षयं मोदते कालमतिरस्कृतशासनः ॥ सौरादिसर्वलोकेषु यत्रेष्टं तत्र याति सः ॥ ८७ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु पुष्पपूजावर्णनं नाम त्रिषष्ट्युत्तरशततमोऽध्यायः ॥ १६३ ॥ ॥ छ ॥ शतानीक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उवाच ॥ ॥ पुनस्त्वं देवदेवस्य भास्करस्य महौजसः ॥ पूजने यत्फलं प्रोक्तं तन्मे ब्रूहि द्विजोत्तम ॥ १ ॥ सुमंतुरुवाच ॥ ॥ शृणु त्वं हि महाराज सर्वदं लोकपूजितम् ॥ ब्रह्मेशोपेंद्रदेवानां त्रयाणामपि भारत ॥ २ ॥ सुखासीनं सुरज्येष्ठं मनोवत्यां चतुर्मुखम् ॥ प्रणम्य शिरसा भूमौ विष्ण्वीशौ वाक्यमूचतुः ॥ ३ ॥ य एष भगवान्देवः सहस्रकिरणो रविः ॥ अस्य यत्पूजने पुण्यं प्राप्यते तद्वदस्व नौ ॥ ४ ॥ ॥ ब्रह्मोवाच ॥ ॥ साधु साधु जगन्नाथ साधु पृष्टोऽस्मि वामिह ॥ तस्माच्छृणुतमेकाग्रौ गदतो निखिलं मम ॥ ५ ॥ स्वयमुत्पाद्य पुष्पाणि यः सूर्यं पूजयेत्स्वयम् ॥ तानि साक्षात्प्रगृण्हाति तद्भक्त्या सततं रविः ॥ ६ ॥ यस्त्वारामं रवेः कुर्यादाम्रबिल्वादिशोभितम् ॥ जातीविजयराजार्ककरवीरैः सकुंकुमैः ॥७॥ पुन्नागनागबकुलैरशोकतिलचंपकैः ॥ अगस्तिकदलीखंडैस्तस्य पुण्यफलं शृणु ॥ ८ ॥ यावद्धि पत्रं कुसुमं बीजं सूतफलानि च ॥ तावद्वर्षसहस्राणि सूरलोके महीयते ॥ ९ ॥ सघृतं गुग्गुलं दद्याद्राजन्वा कंदुरुं तथा ॥ चतुर्वेदिगृहे जन्म प्राप्नोति सततं सुखी ॥ १० ॥ कृष्णागुरुं च कर्पूरंधूपं दद्याद्दिवाकरे ॥ नैरंतर्येण यस्तस्य राजन्पुण्यफलं शृणु ॥ ११ ॥ कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ भुक्त्वा सूर्यपुरे भोगांस्तस्यांते क्ष्माधिपो भवेत् ॥ १२ ॥ गुग्गुलं घृतसंयुक्तं यक्षो गृह्णाति शब्दकृत् ॥ यक्षाह्वयस्य दानेन तस्य लोके महीयते ॥ १३ ॥ कृष्णांशौ कृष्णसप्तम्यां यः साज्यं गुग्गुलं दहेत् ॥ स चासौ सौरमासाद्य वर्षाणां च दशार्बुदम् ॥ १४ ॥ देवदारुं नमेरुं च श्रीवासं कुंदुरुं तथा ॥ श्रीफलं चाज्यसंयुक्तं दग्ध्वाश्रयमवाप्नुयात् ॥ १५ ॥ एवं सौगंधिकं रूपं षट्सहस्रगुणोत्तरम् ॥ अगुरुं दशसाहस्रं सघृतं द्विगुणं भवेत् ॥१६॥ अनंतफलदं दैवं सदा कुंदुरुकामुकम् ॥ द्विसहस्रपलानां तु महिषाक्षस्य गुग्गुलोः ॥१७॥दग्ध्वार्धमविमिश्रस्य सूर्यतुल्यः प्रजायते ॥ शोधयेत्पापसंयुक्तं पुरुषं नात्र संशयः ॥ १८ ॥ कृष्णागुरुभवं धूपं तुषाग्निरिव कांचनम् ॥ योंतःपुरगृहं गन्धैः सुगन्धैः प्रविलेपयेत् ॥ १९ ॥ कपाटद्वारकुड्यादितिर्यगूर्ध्वं सवेदिकम् ॥ वासयेत्पुष्पमालाभिर्धूपैश्चापि सुगंधिभिः ॥ २० ॥ तस्य पुण्यं यथावत्तु युवयोर्वच्मि कृत्स्नशः ॥ आपूरयन्दिशः सर्वा नानागंधसमन्वितैः ॥ २१ ॥ कल्पकोटिशतं दिव्यं तेजसा वह्निसन्निभः ॥ शक्रवत्प्रज्वलन्देवः सूर्यलोके महीयते ॥ २२ ॥ तस्यांते धर्मशेषेण त्रैलोक्याधिपतिर्भवेत् ॥ शतावृतं तु यः कुर्यादेवं गन्धैर्भगालयम् ॥ २३ ॥ स सर्वशर्मसंयुक्तः सूर्यतुल्यपराक्रमः ॥ सूर्यलोके वसेद्देवो युवाभ्यां संप्रपूजितः ॥ २४ ॥ तद्रच्छुक्लैश्च संवीतं पट्टसूत्रैर्विनिर्मितम् ॥ दत्त्वोपवीतं सूर्याय भवेद्वेदांगपारगः ॥ २५ ॥ वासांसि सुविचित्राणि सूरलोके महीयते ॥ त्रुटिमात्रं तु यो दद्यादूर्णावस्त्रं सपंकजम् ॥ २६ ॥ भास्करस्योत्तमांगेषु तस्य पुण्यं ब्रवीम्यहम् ॥ इन्द्रस्यार्धासने तिष्ठेद्यावदिन्द्राश्चतु



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्दश ॥ २७ ॥ एवं वित्तानुसारेण सर्वं ज्ञेयं समासतः ॥ सर्वेषां हेमपात्राणां मुकुटानां च सर्वशः ॥ २८ ॥ अर्कपत्रपुटं चूर्णं मधुपर्णसमन्वितम् ॥
यो निवेदयतेऽर्काय सोऽश्वमेधफलं लभेत् ॥२९॥ शालितंडुलप्रस्थस्य कुर्यादन्नं सुसंस्कृतम् ॥ सूर्याय च चरुं दत्त्वा सप्तम्यां तु विशेषतः ॥३०॥
संयावं कृशरं पूपं पायसं यावकं तथा ॥ दध्योदनरसालान्नमोदकान्गुडपूपकान् ॥ ३१ ॥ यावंतस्तण्डुलास्तस्मिन्नैवेद्ये परिसंख्यया ॥ तावद्वर्ष
सहस्राणि सूरलोके महीयते ॥ ३२ ॥ गुडखंडकृतानां च भक्ष्याणां विनिवेदने ॥ घृतेन प्लावितानां च फलं शतगुणं लभेत् ॥ ३३ ॥ रसाल
खाद्यकाद्यानां भक्ष्याणां फलमिष्यते ॥ तदर्धं सलिलस्यापि वासितस्य निवेदयेत् ॥ ३४ ॥ यथाकालोपलब्धानि भक्ष्याणि विविधानि च ॥
निवेद्यार्काय परमं स्थानं प्राप्नोति पूजनात् ॥ ३५ ॥ प्रज्वाल्य घृतदीपं तु भास्करस्यालये शुभम् ॥ आग्नेयं यानमारुह्य गच्छेत्सौमनसं
पुरम् ॥ ३६ ॥ यः कुर्यात्कार्तिके मासि शोभनां दीपमालिकाम् ॥ सप्तम्यामथ षष्ठ्यां वामावास्यायामथापि वा ॥ ३७ ॥ भास्करायुतसंकाश
स्तेजसा भासयन्दिशः ॥ दिव्याभरणसंपन्नः कुलमुद्धृत्य सर्वशः ॥ ३८ ॥ यावत्प्रदीपसंख्यानं घृतेनापूर्य बोधितम् ॥ तावद्वर्षसहस्राणि सूर्यलोके
महीयते ॥ ३९ ॥ दीपवृक्षमथोद्बोध्य पर्वस्वायतनेषु वै ॥ पूर्वस्माद्द्विगुणं पुण्यं लभते नात्र संशयः ॥ ४० ॥ दीपवृक्षं समुद्बोध्य भास्करायतनेषु
भोः ॥ सर्वलोहमयं वीर रविलोके महीयते ॥ ४१ ॥ शिरसा धारयेद्दीपं भास्करस्याग्रतो निशि ॥ ललाटे चैव हस्ताभ्यां समुद्युक्तस्तथो
रसि ॥ ४२ ॥ भास्करायुतसंकाशो विमानैरर्कसन्निभैः ॥ कल्पायुतशतं चैव सूर्यलोके महीयते ॥ ४३ ॥ अन्नदाता तु यो वीर वीरलोके मही
यते ॥ भास्करस्याग्रतो दत्त्वा दर्पणं निर्मलं शुभम् ॥ ४४ ॥ पर्यंके शोभितं कृत्वा श्वेतमाल्यैः सचन्दनैः ॥ वृकार्कनिर्मलः श्रीमान्दिव्याभरण
रूपधृक् ॥ कल्पायुतसहस्राणि सूरलोके महीयते ॥ ४५ ॥ कृत्वा प्रदक्षिणं भक्त्या श्रद्दधानो रवेर्नरः ॥ अश्वमेधसहस्रस्य सुखेन लभते फलम् ॥
॥ ४६ ॥ कृत्वा प्रदक्षिणं यस्तु नमस्कारं प्रयोजयेत् ॥ राजसूयाश्वमेधाभ्यां सकलं विन्दते फलम् ॥ ४७ ॥ नमस्कारः स्मृतो यज्ञः सर्वयज्ञो
त्तमोत्तमः ॥ नमस्कृत्वा सहस्रांशुमश्वमेधफलं लभेत् ॥ ४८ ॥ प्रणम्य दंडवद्भूमौ नमस्कारेण योऽर्चयेत् ॥ स यां गतिमवाप्नोति न तां क्रतु
शतैरपि ॥ ४९ ॥ सर्वयज्ञोपवासेषु सर्वतीर्थेषु यत्फलम् ॥ अभिज्ञाप्योपहारेण पूजया फलमश्नुते ॥ ५० ॥ श्वेतं महाध्वजं कृत्वा कृत्वा चापं
च रंगकम् ॥ किंकिणीजालनिर्घोषं मयूरच्छत्रभूषितम् ॥ यस्त्वर्यम्णे नरो दद्याच्छ्रद्धया परयान्वितः ॥ ५१ ॥ स शतेन विमानानां सर्वदेव
नमस्कृतः ॥ मन्वन्तरशतं देव मोदते दिवि देववत् ॥ ५२ ॥ ध्वजमालाकुलं कुर्याद्यः प्रांतेषु भगालयम् ॥ महाध्वजाष्टकं चापि दिग्विदिक्षु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निवेदयेत् ॥ ५३ ॥ स विमानसहस्रेण ध्वजमालाकुलेन तु ॥ कल्पायुतशतं दिव्यं मोदते दिवि सूरवत् ॥ ५४ ॥ शतचन्द्रांशुविमलं मुक्तादामोपशोभितम् ॥ मणिदंडमयं छत्रं दद्याद्वा कांचनादिकम् ॥ ५५ ॥ स धार्यमाणच्छत्रेण हेमदंडोपशोभिना ॥ मोदते सूर्यलोके तु विमानवरमास्थितः ॥ ५६ ॥ ततस्तस्माच्चुतो लोकान्निसर्गाद्भुवमागतः ॥ भुङ्क्ते ससुद्रपर्यंतामेकच्छत्रां वसुन्धराम् ॥ ५७ ॥ यः शृंखलासमायुक्तां महाघण्टां महास्वनाम् ॥ कांस्यलोहमयीं वापि निबध्नीयाद्भगालये ॥ ५८ ॥ शोभनः स्यान्नरः श्रीमान्भगस्यातीव वल्लभः ॥ सूर्यतुल्यबलो भूत्वा सूर्यलोके महीयते ॥ ५९ ॥ भेरीमृदंगपटहझर्झरीमर्दलादिकम् ॥ दंशकांस्यादिवादित्रं यो भगाय निवेदयेत् ॥ ६० ॥ स विमानैर्महाभागैर्वंशवीणायुतस्वनैः ॥ युगान्तकशतं दिव्यं भगलोके महीयते ॥ ६१ ॥ सुसंगीतकदानेन सवाद्येन विशेषतः ॥ यथेष्टं भास्करे लोके मोदते कालमक्षयम् ॥ ६२ ॥ महामहास्वनं दत्त्वा शंखयुग्मं भगालये ॥ युगकोटिशतं दिव्यं भगलोके महीयते ॥ ६३ ॥ विमानं बहु वर्णाभं मध्ये पंकजभूषितम् ॥ विचित्रमेकवर्णं वा सनवस्त्रोपकल्पितम् ॥ ६४ ॥ किंकिणीजालसंपन्नं वर्णकैश्चोपशोभितम् ॥ पुष्पमालाप्रभं वापि घंटाचामरभूषितम् ॥ ६५ ॥ भगस्योपरि यो दद्यात्सर्वरत्नोपशोभितम् ॥ दुकूलपट्टदेवांगैर्वस्त्रैर्वा वर्णकान्वितैः ॥ ६६ ॥ पट्टादिवस्त्रतंतूनां परिसंख्या तु या भवेत् ॥ तावद्युगसहस्राणि सूरलोके महीयते ॥ ६७ ॥ भगाद्धुत्या जगत्सर्वं सृष्टिद्वारेण धार्यते ॥ अग्निवर्त्मा वचस्युक्तो ह्यग्निरस्यात्मजः सदा ॥ ६८ ॥ यस्त्वग्निकाय विधिवत्कुर्यान्नित्यं भगालये ॥ भगमुद्दिश्य राजेंद्र स याति परमां गतिम् ॥ ६९ ॥ सर्वान्नं यावकोपेतं यस्तु नित्यविधिं हरेत् ॥ पुष्पधूपजलोपेतं कालेकाले विशेषतः ॥ ७० ॥ महाश्वेतादिमातॄणां त्रिकल्पानां च सर्वशः ॥ यः कृत्वा सकृदप्येवं सर्वदिक्षु बलिं हरेत् ॥ स नरश्च सहस्राणि शांडिलेयपुरे वसेत् ॥ ७१ ॥ सौरसंध्याबलिं कृत्वा दिनांते सततं रवेः ॥ वर्षायुतशतं साग्रं भगलोके महीयते ॥ ७२ ॥ दध्योदनपयोभिर्यः पूरितं पात्रमावृतम् ॥ पुष्पधूपार्चितं चैव वितानोपरि शोभितम् ॥ ७३ ॥ शिरसा धारयेत्पात्रं शनैर्गच्छेत्प्रदक्षिणम् ॥ रव्यायतनपर्यंते शंखवीणादिनिस्वनैः ॥ ७४ ॥ दर्पणैर्धूपमालाभिर्गेयनृत्यादिशोभितम् ॥ भानोर्हि स्मृतिशीलश्च तस्य पुण्यफलं शृणु ॥ ७५ ॥ दिव्यं वर्षसहस्रं तु दिव्यं वर्षशतं तथा ॥ तपस्ततं महत्तेन भवेदेवं न संशयः ॥ ७६ ॥ भगभक्तिप्रसन्नात्मा यद्यपि स्यात्स पापकृत् ॥ भगलोके वसेन्नित्यं भगानुचरतां गतः ॥ ७७ ॥ कृष्णां तु षष्ठीं नक्तेन यश्च कृष्णां च सप्तमीम् ॥ इह भोगानवाप्नोति परत्र च शुभां गतिम् ॥ ७८ ॥ योब्दमेकं तु कुर्वीत नक्तं भगदिने नरः ॥ ब्रह्मचारी जितक्रोधो भगार्चनपरो नरः ॥ अयाचितात्परं नक्तं तस्मान्ना



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तेन वर्तयेत् ॥ ७९ ॥ देवैस्तु भुक्तं मध्याह्ने पूर्वाह्णे ऋषिभिस्तथा ॥ अपराह्णे तु पितृभिः संध्यायां गुह्यकादिभिः ॥ ८० ॥ सर्वा वेला ह्यतिक्रम्य सौराणां भोजनं परम् ॥ भुंजानो नक्तकाले तु सूर्यभक्तिपरायणः ॥ ८१ ॥ भगलोकमवाप्नोति सुमनाः सुमनोव्रतः ॥ भुक्त्वा सौमनसाँल्लोकान्राजा भवति भूतले ॥८२॥ हविष्यभोजनं स्नानमाहारस्य च लाघवम् ॥ अग्निकार्यमधःशय्यां नक्तभोजी समाचरेत् ॥ ८३ ॥ कृष्णषष्ठ्यां प्रयत्नेन कृत्वा नक्तं विधानतः ॥ नरो मार्गशिरे मासि अंशुमानिति पूजयेत् ॥८४॥ विधिवत्प्राश्य गोमूत्रमनाहारो निशि स्वपेत् ॥ अतिरात्रस्य यज्ञस्य फलमाप्नोति मानवः ॥ ८५ ॥ पुष्येप्येवं सहस्रांशुं भानुमंतमुशंति च ॥ वाजपेयफलं प्राप्य घृतं प्राश्य लभेन्नरः ॥ ८६ ॥ माघे दिवाकरं नाम कृष्णषष्ठ्यां नरोत्तम ॥ निशि पीत्वा तु गोक्षीरं गोमेधफलमाप्नुयात् ॥ ८७ ॥ मार्तंडं फाल्गुने मासि पूजयित्वा गवां पयः ॥ पिबेत्ततः सूर्यलोके मोदते सोऽयुतायुतम् ॥८८॥ चैत्रे मासि विवस्वंतं पूजयित्वा सुभक्तिमान् ॥ हविष्याशी सूर्यलोकेऽप्सरोभिः सह मोदते ॥८९॥ वैशाखे चण्डकिरणं पूजयेच्च पयोव्रतः॥वर्षाणामयुतं साग्रं मोदते सूर्यसंनिधौ॥९०॥ज्येष्ठे दिवस्पतिं पूज्य गवां शृंगोदकं पिबेत्॥गवां कोटिप्रदानस्य निखिलं फलमाप्नुयात् ॥९१॥ आषाढे त्वर्कनामानमिष्ट्वा प्राश्य च गोमयम् ॥ प्रयात्यर्कसलोकं तु वर्षाणां च शतंशतम् ॥९२॥ श्रावणेऽर्यमनामानं पूजयित्वा पयः पिबेत् ॥ वर्षाणामयुतं साग्रं मोदते भास्करालये ॥ ९३ ॥ मासि भाद्रपदे षष्ठ्यां भास्करं नाम पूजयेत् ॥ भास्करं पंचगव्यस्य सर्वमेधफलं लभेत्॥९४॥ मासि चाश्वयुजे षष्ठ्यां भगाख्यं नाम पूजयेत् ॥ पलगोमूत्रभुक्चैव अश्वमेधफलं लभेत् ॥ ९५ ॥ मासे तु कार्तिके षष्ठ्यां शक्राख्यं नाम पूजयेत् ॥ दूर्वांकुरं सकृत्प्राश्य राजसूयफलं लभेत्॥९६॥वर्षांते भोजयेद्विप्रान्सूर्यभक्तिपरायणान्॥पायसं मधुसंयुक्तं वस्त्रेण च परिस्रुतम्॥९७॥ शक्त्या हिरण्यवासांसि भक्त्या तेभ्यो निवेदयेत् ॥ निवेदयेच्च सूर्याय कृष्णां गां च पयस्विनीम् ॥ ९८ ॥ वर्षमेकं च देवे वै नैरंतर्येण यो नयेत् ॥ कृष्णषष्ठीव्रतं भक्त्या तस्य पुण्यफलं शृणु ॥९९॥ सर्वपापविनिर्मुक्तः सर्वकामसमन्वितः ॥ मोदते सूर्यलोके तु स नरः शाश्वतीः समाः॥१००॥ पुण्येष्वहःसु सर्वेषु विषुवद्ग्रहणादिषु ॥ दानोपवासहोमाद्यैरक्षयं खग जायते ॥१०१॥ ॥ सुमंतुरुवाच ॥ ॥ इत्युक्तवान्पुरा भानुररुणाय विशांपते॥ कृष्णषष्ठीव्रतं पुण्यं सर्वपापभयापहम् ॥ १०२ ॥ कृत्वेदं पुरुषो भक्त्या भास्करस्य महात्मनः ॥ प्रयाति परमं स्थानं भानोरमिततेजसः ॥१०३॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सूर्यषष्ठीव्रतवर्णनं नाम चतुःषष्ट्युत्तरशततमोऽध्यायः॥१६४॥छ॥ ॥ सुमंतुरुवाच ॥ ॥ अहं ते

१ पूजयित्वेति शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संप्रवक्ष्यामि सूर्यस्य व्रतमुत्तमम्॥ धर्मकामार्थमोक्षाणां प्रतिपादनमुत्तमम् ॥१॥ पौषमासे तु संप्राप्ते यः कुर्यान्नक्तभोजनम्॥ जितेंद्रियः सत्यवादी शालिगोधूमगोरसैः ॥२॥ पक्षयोः सप्तमीं यत्नादुपवासेन यापयेत् ॥ त्रिसंध्यमर्चयेद्भानुं शांडिलेयं च सुव्रत ॥३॥ अधःशायीभवेन्नित्यं सर्वभोगविवर्जितः ॥ मासि पूर्णे तु सप्तम्यां घृतादिभिररिंदम ॥ ४ ॥ कृत्वा स्नानं महापूजां सूर्यदेवस्य भारत ॥ नैवेद्यं मोदकप्रस्थं क्षीरं सिद्धं निवेदयेत् ॥५॥ भोजयेच्च द्विजानष्टौ भगार्चां शुभलक्षणाम् ॥ गां च दत्त्वा महाराज कपिलां भास्कराय तु ॥६॥ य एवं कुरुते पुण्यं सूर्यस्य व्रतमुत्तमम्॥ तस्य पुण्यफलं वच्मि सर्वकामसमन्वितम् ॥७॥ सूर्यकोटिप्रतीकाशैर्विमानैः सार्वकामिकैः ॥ अप्सरोगणसंकीर्णैर्महाविभवसंयुतैः ॥८॥ संगीतनृत्यवाद्याद्यैर्गंधर्वगणशोभितैः ॥ दोधूयमानश्चमरैः स्तूयमानः सुरासुरैः ॥९॥ सहस्रकिरणाभासः सौरैः सूर्यसमन्वितैः ॥ स याति परमं स्थानं यत्रास्ते रविरंशुमान् ॥१०॥ रोमसंख्या तु या तस्यास्तत्प्रसूतिः कुलेषु च ॥ तावद्युगसहस्राणि सूरलोके महीयते ॥११॥ त्रिःसप्तकुलजैः सार्धं भोगान्भुक्त्वा यथेप्सितान् ॥ ज्ञानयोगं समासाद्य पुनरेव प्रमुच्यते ॥ १२ ॥ योगाद्दुःखांतमाप्नोति ज्ञानयोगं प्रवर्तते ॥ सौरधर्माद्भवेज्ज्ञानं सौरधर्मो भगार्चनात् ॥ ॥ १३ ॥ इत्येवं ते समाख्यातं भवार्णवव्यपोहनम् ॥ सौरमोक्षक्रमोपायं सूराश्रयनिषेवणम् ॥ १४ ॥ माघमासे तु संप्राप्ते यः कुर्यान्नक्तभोजनम् ॥ पिण्याकं घृतसंयुक्तं भुंजानः स जितेन्द्रियः ॥ १५ ॥ सोपवासश्च सप्तम्यां भवेदुभयपक्षयोः ॥ घृताभिषेकमष्टम्यां कुर्याद्भानोर्नराधिप ॥ गां च दद्याद्दिनेशाय तरुणीं नीलसंनिभाम् ॥ १६ ॥ इन्द्रनीलप्रतीकाशैर्विमानैः शिखिसंयुतैः ॥ गत्वादित्यपुरं रम्यं भोगान्भुंक्ते यथेप्सितान् ॥ १७ ॥ राजेंद्र फाल्गुने मासि यः कुर्यान्नक्तभोजनम् ॥ श्यामाकक्षीरनीवारैर्जितक्रोधो जितेन्द्रियः ॥ १८ ॥ षष्ठ्यां वाप्यथ सप्तम्यामुपवासपरो नरः ॥ अष्टम्यां तु महास्नानं पञ्चगव्यघृतादिभिः ॥१९॥ वल्मीकजादिमृद्भिश्च गोमूत्रशकृदादिभिः ॥ त्वग्भिश्च क्षीरवृक्षाणां स्नापयित्वा प्रमार्जयेत् ॥२०॥ सौरभेयीं ततो दद्याद्रक्ताभां रक्तमालिने ॥ पद्मरागप्रतीकाशैर्विमानैर्हस्तिसंयुतैः ॥ गत्वादित्यपुरं रम्यं मोदते शाश्वतीः समाः ॥ २१ ॥ मासि चैत्रे तु संप्राप्ते यः कुर्यान्नक्तभोजनम् ॥ शाल्यन्नं पायसैर्युक्तं भुञ्जानश्च जितेन्द्रियः ॥ भानवे पाटलां दद्याद्वैष्णवीं तरुणीं नृप ॥ २२ ॥ पुष्परागप्रभैर्यानैर्नानाहंसादियायिभिः ॥ गच्छेत्सूर्यपुरं रम्यं मोदते शाश्वतीः समाः ॥२३॥ वैशाखे वीर मासे तु यः कुर्यान्नक्तभोजनम् ॥ सूर्ये खंडाज्यसंमिश्रं सकृद्दद्यान्निवेदनम् ॥ २४ ॥ गां च दद्यान्महाराज भास्कराय शुभानन ॥ सामान्यं च विधिं कुर्यात्प्रयुक्तो यो मया तव ॥ २५ ॥ शुद्धस्फटिकसंकाशैर्यानैर्बर्हिणवाहनैः ॥ अणिमादिगुणैर्युक्तः सूर्यवद्विचरेद्दिवि ॥ २६ ॥ संप्राप्ते श्रावणे मासि यः कुर्यान्नक्तभोजनम् ॥ क्षीरषष्टि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कभक्तेन सर्वसत्त्वहिते रतः ॥ २७ ॥ पीतवर्णां च गां दद्याद्भास्कराय महात्मने ॥ सामान्यमखिलं कुर्याद्विधानं यत्प्रकीर्तितम् ॥२८॥ स विचि
त्रैर्महायानैर्हंससारसगामिभिः ॥ गत्वादित्यपुरं श्रीमान्पूर्वोक्तं लभते फलम् ॥ २९ ॥ वीर भाद्रपदे मासि यः कुर्यान्नक्तभोजनम् ॥ हुतशेषहवि
ष्याशी वृक्षमूलमुपाश्रितः ॥ ३० ॥ स्वप्यादायतने रात्रौ सर्वभूतानुकम्पकः ॥ दद्याद्गां रोहिणीं श्रेष्ठां भास्कराय महात्मने ॥ ३१ ॥ निशाकरकर
प्रख्यैर्वज्रवैदूर्यसन्निभैः ॥ चक्रवाकसमायुक्तैर्विमानैः सार्वकामिकैः ॥ ३२ ॥ गत्वादित्यपुरं रम्यं सुरासुरसुवन्दितम् ॥ मोदते स महाभागो यावदा
भूतसंप्लवम् ॥ ३३ ॥ श्रीमानाश्वयुजे मासि यः कुर्यान्नक्तभोजनम् ॥ मिताशनं प्रभुञ्जानो जितक्रोधो जितेन्द्रियः ॥ ३४ ॥ दद्याद्गां पद्मवर्णाभां
भानवेऽमिततेजसे ॥ दिव्याभरणसंपन्नां तरुणीं च पयस्विनीम् ॥३५॥ स्वस्तिमौक्तिकसंकाशैरिंद्रनीलोपशोभितैः ॥ जीवो जीवकसंयुक्तविमानैः
सार्वकामिकैः ॥ गच्छेद्भानुसलोकत्वं भुञ्जानः स जितेन्द्रियः ॥ ३६ ॥ दिवाकराय गां दद्याज्ज्वलनार्कसमप्रभाम् ॥ पूर्वोक्तं च विधिं कुर्यात्सूर्य
तुल्यो भवेन्नरः ॥ ३७ ॥ कालानलशिखप्रख्यैर्महायानैरनंगोपमैः ॥ महासिंहकृतारोपैः सूर्यवन्मोदते सुखी ॥ ३८ ॥ मार्गशीर्षे शुभे मासि यः
कुर्यान्नक्तभोजनम् ॥ यच्चान्नं पयसा युक्तं भुञ्जानः स जितेन्द्रियः ॥३९॥ प्रयच्छेद्गां तथा रक्तां नानालंकारभूपिताम् ॥ सूर्याय कुरुशार्दूल विधिं
चापि समाचरेत् ॥ ४० ॥ सितपद्मनिभैर्यानैः श्वेताश्वरथसंयुतैः ॥ गत्वा तत्र पुरे रम्ये प्रभया परयान्वितः ॥ ४१ ॥ अहिंसासत्यवचनमस्तेयं
क्षांतिरार्जवम् ॥ त्रिषवणाग्निहवनं भूशय्या नक्तभोजनम् ॥ ४२ ॥ पक्षयोरुभयोर्मार्गे सप्तम्यां कुरुनंदन ॥ एतान्गुणान्समाश्रित्य कुर्वाणो व्रतमुत्त
मम् ॥ ४३ ॥ सप्तम्योभयविख्यातं सर्वपापभयापहम् ॥ सर्वरोगप्रशमनं सर्वकामफलप्रदम् ॥४४॥ इत्येवमादीन्नियमांश्चरेत्सूर्यव्रती सदा ॥ य इच्छे
द्विपुलं स्थानं भानोरमिततेजसः ॥४५॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्प उभयसप्तमीवर्णनं नाम पंचषष्ट्युत्तरशततमोऽध्यायः
॥ १६५ ॥ छ ॥ सुमंतुरुवाच ॥ सूर्यभक्ता तु या नारी ध्रुवं सा पुरुषो भवेत् ॥ स्त्री पुत्रमुत्तमं सा चेत्कांक्षते शृणु तद्व्रतम् ॥ १ ॥ निक्षुभार्काख्यमाख्यातं
सदा प्रीतिविवर्धनम् ॥ अवियोगकरं वीर धर्मकामार्थसाधकम् ॥ २ ॥ सप्तम्यामथ षष्ठ्यां वा संक्रांतौ च रवेर्दिने ॥ हविषा हविर्होमं तु सोपवासः
समाचरेत् ॥ ३ ॥ निक्षुभां कांस्यनिष्पन्नां कृत्वा स्वर्णमयीं शुभाम् ॥ राजतीं वाथ वा वर्षे स्नापयेच्च घृतादिभिः ॥४॥ गंधमाल्यैरलंकृत्य वस्त्रयु
ग्मैश्च शोभनैः ॥ भक्ष्यभोज्यैरशेषैश्च वितानध्वजचामरैः ॥ ५ ॥ भोजयेत्सूर्यभक्तांश्च शुक्लवस्त्रावगुण्ठितान् ॥ कृत्वायतनमध्ये तु प्रतिमामुपक
ल्पयेत् ॥ ६ ॥ कृत्वा शिरसि तत्पात्रं वितानच्छत्रशोभितम् ॥ ध्वजशंखादिविभवैर्भगस्यायतनं नयेत् ॥ ७ ॥ निक्षुभार्कदिनेशस्य व्रत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेतन्निवेदयेत् ॥ तत्पिंड्यां स्थापयेत्पात्रमुपशोभासमन्वितम् ॥ ८ ॥ प्रदक्षिणीकृत्य रविं प्रणिपत्य क्षमापयेत् ॥ समाप्य तद्व्रतं पुण्यं शृणुयात्फलमश्नुते ॥ ९ ॥ द्वादशादित्यसंकाशैर्महायानैर्नगोपमैः ॥ यथेष्टं भानवे लोके सौरैः सार्धं प्रमोदते ॥ १० ॥ वर्षकोटिसहस्राणि वर्षकोटिशतानि च ॥ नंदतेऽसौ महाभाग विष्णुलोके महीयते ॥ ११ ॥ ततः कर्मविशेषेण सर्वकामसमन्वितम् ॥ ब्रह्मलोकं समासाद्य परं सुखमवाप्नुयात्॥ १२ ॥ ब्रह्मलोकात्परिभ्रष्टः श्रीमान्त्सुरसुपूजितः ॥ प्रजापतिमवाप्नोति सुरासुरनमस्कृतः ॥ १३ ॥ लोकानिह चिरं भुक्त्वा सोमलोके महीयते ॥ सोमादैंद्रं पुनर्लोकमासाद्येंद्रपतिर्भवेत् ॥ १४ ॥ इंद्रलोकाच्च गंधर्वलोकं प्राप्य स मोदते ॥ ततस्तद्धर्मशेषेण भवत्यादित्यभावितः ॥ १५ ॥ स्वकर्मभावनोद्योगात्पुनः प्रारभते शुभम् ॥ शुभाच्च पुनरेत्येह स यात्यतिसहस्रशः ॥ १६ ॥ यावन्नाप्नोति मरणं तावद्भ्रमति कर्मणा ॥ सुनिर्वेदात्सुवैराग्यं वैराग्याज्ज्ञानसंभवः ॥ १७ ॥ ज्ञानात्प्रवर्तते योगो योगाद्दुःखांतमाप्नुयात् ॥ १८ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेनिक्षुभाव्रतवर्णनं नाम षट्षष्ट्युत्तरशततमोऽध्यायः॥ १६६ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ षष्ठ्यां चाप्यथ सप्तम्यां नियता ब्रह्मचारिणी ॥ वर्षमेकं न भुंक्ते या महाभागजिगीषया ॥ १ ॥ वर्षांते प्रतिमां कृत्वा निक्षुभांकेति विश्रुताम् ॥ स्नानाद्यं च विधिं कृत्वा पूर्वोक्तं लभते गुणम् ॥२॥ जांबूनदमयैर्यानैश्चतुर्द्वारैरलंकृते ॥ गत्वादित्यपुरे रम्ये अशेषं विंदते फलम् ॥ ३ ॥ सौरादिसर्वलोकेषु भोगान्भुक्त्वा यथेप्सितान् ॥ क्रमादागत्य लोकेऽस्मिन्राजानं पतिमाप्नुयात् ॥ ४ ॥ या नार्युपवसेदेवं कृष्णामेकां तु सप्तमीम् ॥ सा गच्छेत्परमं स्थानं भानोरमिततेजसः ॥ ५ ॥ वर्षांते प्रतिमां कृत्वा शालिपिष्टमयीं शुभाम् ॥ पीतानुलेपनैर्माल्यैः पीतवस्त्रैश्च पूजयेत् ॥ पूर्वोक्तमखिलं कृत्वा भास्कराय निवेदयेत् ॥ ६ ॥ सप्तभीमैर्महायानैर्दंतिचामीकरप्रभैः ॥ वर्षकोटिशतं साग्रं सूर्यलोके महीयते ॥ ७ ॥ सौरलोकादिलोकेषु भुक्त्वा भोगान्नराधिप ॥ क्रमादागत्य लोकेऽस्मिन्यथेष्टं विंदते पतिम् ॥ सर्वलक्षणसंपन्नं धनधान्यसमन्वितम् ॥ ८ ॥ कृष्णपक्षे तु सप्तम्यां या नारी तु दृढव्रता ॥ वर्षमेकमुपवसेत्सर्वभोगविवर्जिता ॥ ९ ॥ वर्षांते सर्वगंधाढ्यं निक्षुभार्कं निवेदयेत् ॥ सुवर्णमणिमुक्ताभ्यां भोजयित्वा मगांगनाम् ॥१०॥ सुविचित्रैर्महायानैर्दिव्यगंधर्वशोभितैः॥सा वै युगसहस्राणि सूरलोके नराधिप ॥११॥ यथेष्टं भानवे लोके भोगान्भुक्त्वा तु कृत्स्नशः ॥ क्रमादागत्य लोकेस्मिन्राजानं विंदते पतिम् ॥१२॥ एवं या कुरुते राजन्व्रतं पापभयापहम् ॥ निक्षुभार्कमिदं पुण्यं सा याति परमं पदम् ॥ १३ ॥ वर्षमेकं महाबाहो श्रद्धया परयान्वितः ॥ वर्षांते वै भोजयेद्वीर दांपत्यं भोजकेषु वै ॥१४॥ भोजयित्वा तु दांपत्यं भोगकानां महाबलैः ॥ पूजयेद्गंधमाल्यैस्तु वासोभिः कुरुनंदन ॥ १५ ॥ कृत्वा





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ताम्रमये पात्रे वज्रपूर्णैरलंकृतम् ॥ निक्षुभार्कं तु सौवर्णं दत्त्वा ताभ्यां तु शक्तितः ॥ १६ ॥ निक्षुभा भोजिका ज्ञेया भोजकोऽर्कः प्रकीर्तितः ॥ तस्मात्तौ पूजयेत्सौरीश्वरवच्छ्रद्धयान्वितः ॥ १७ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु निक्षुभार्कव्रतं नाम सप्तष ष्ट्युत्तरशततमोऽध्यायः ॥ १६७ ॥ सुमंतुरुवाच ॥ ॥ एकभक्तेन या नारी कार्त्तिकं क्षपयेन्नृप ॥ क्षमाहिंसादिनियमैः संयता ब्रह्मचारिणी ॥१॥ गुडाज्यमिश्रं शाल्यन्नं भास्कराय निवेदयेत् ॥ पक्षयोरुभयोस्तात श्रद्धया परयान्विता ॥ २॥ पुष्पाणां करवीराणां गुग्गुलं साज्यमादिशेत् ॥ सप्तम्यां तात षष्ठ्यां वै उपवासरतिर्भवेत् ॥ ३ ॥ इंद्रनीलप्रतीकाशैर्विमानैः सार्वकामिकैः ॥ वर्षायुतशतं साग्रं सूरलोके महीयते ॥ ४ ॥ तथा च सर्वलोकेषु भोगमासाद्य यत्नतः ॥ क्रमादागत्य लोकेऽस्मिन्यथेष्टं विंदते पतिम् ॥ ५ ॥ इत्येवं सर्वयज्ञेषु विधिस्तुल्यः प्रकीर्तितः ॥ एकभक्तोप वासस्य फलं च सदृशं भवेत् ॥ ६ ॥ क्षमा सत्यं दया दानं शौचमिंद्रियनिग्रहः ॥ सूर्यपूजाग्निहवनं संतोषः स्तेयवर्जनम् ॥७॥ सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः ॥ निःशेषमहं वक्ष्यामि मासान्मासव्रतं प्रति ॥ ८ ॥ मार्गशीर्षे शुभे मासि व्योमपृष्ठे विनिर्मितम् ॥ गंधमाल्यैरलंकृत्य शुभाननमनौपमम् ॥ ९ ॥ ताम्रपात्रादिकैश्चैवाप्यप्सरोगणसेवितैः ॥ सुमेरौ दशसाहस्रेसूर्यलोके महीयते ॥ १० ॥ सर्वदेवकदंबेषु संप्राप्य विमलां श्रियम् ॥ क्रमादागत्य लोकेऽस्मिन्राजानं पतिमाप्नुयात् ॥ पुष्पैरसुमलंकृत्य भानवे विनिवेदयेत् ॥ ११ ॥ गंधमाल्यैरलंकृत्य शुभाननमनौप मम् ॥ ताम्रपात्रादिकांस्यं वा कृत्वा तत्र निवेदयेत् ॥ १२ ॥ महापुष्पकयानेन दिव्यगंधप्रवाहिना ॥ सुमेरौ दशसाहस्रं सूर्यलोके महीयते ॥१३॥ भुक्त्वा तु विपुलान्भोगान्सर्वलोकेषु भारत ॥ संप्राप्यैतं क्रमाल्लोकं यथेष्टं विंदते पतिम् ॥१४॥ माघे रथमश्वयुजं दीपमाल्यविभूषितम् ॥ पिष्टसानुसमा युक्तं कृत्वायतनमानयेत् ॥१५॥ महारथोपमैर्यानैः श्वेताश्ववरसंयुतैः ॥ वर्षायुतशतं साग्रं सूर्यलोके महीयते ॥१६॥ सर्वामराणां लोकेषु प्राप्य भोगान्यथे प्सितान् ॥ क्रमादागत्य लोकेऽस्मिन्यथेष्टं पतिमाप्नुयात् ॥१७॥ प्रतिमां फाल्गुने मासि कृत्वा पिष्टमयीं रवेः ॥ गंधमाल्यैरलंकृत्य स्थापयेद्भास्करा लये ॥१८॥ यानैरप्रतिमैर्दिव्यैर्गीतनादसमाकुलैः ॥ सुमेरौ दशसाहस्रं सूर्यलोके महीयते ॥१९॥ सर्वाभिमतलोकेऽस्मिन्प्राप्य भोगान्यथेप्सितान् ॥ पुनरेत्य इमं लोकं यथेष्टं विंदते पतिम् ॥२०॥ कृत्वारुणं तथा चैत्रे गंधमाल्योपशोभितम् ॥ स्थाप्य पात्रे यथोक्ते तु भास्कराय निवेदयेत् ॥२१॥ शरदिंदुप्रतीकाशैर्विमानैः सार्वकामिकैः ॥ वर्षायुतशतं साग्रं सूर्यलोके महीयते ॥ २२॥ कर्मक्षयादिहागत्य पुत्रपौत्रसमन्वितम् ॥ अभीष्टं पतिमा साद्य लभेद्भोगान्सुदुर्लभान् ॥ २३ ॥ तंडुलाढकपिष्टेन कृत्वा वै मेरुपर्वतम् ॥ निक्षुभार्कसमायुक्तं सर्वधातुविभूषितम् ॥ २४ नानालंकार



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संपन्नं नानामाल्यविभूषितम् ॥ सर्वरत्नसमायुक्तं स्थापयेद्भास्करालये ॥ २५ ॥ महद्व्योमव्रतं ह्येतद्वैशाखे यः समाचरेत् ॥ नानाविधैश्च यानैस्तु सूर्यलोके महीयते ॥ २६ ॥ सौरादिसर्वलोकेषु भुक्त्वा भोगानशेषतः ॥ क्रमादागत्य लोकेऽस्मिन्राजानं पतिमाप्नुयात् ॥ २७ ॥ द्वितीयं च तथा पद्ममाषाढे पिष्टमुत्तमम् ॥ सर्वबीजरसैः पूर्णं कृत्वा तु शुभलक्षणम् ॥ नानाकेशरगंधाढ्यं सर्वरत्नविभूषितम् ॥ २८ ॥ एतैर्वा हैमभिर्यानैः सर्वभोगान्वितैर्नृप ॥ वर्षकोटिशतं साग्रं सूर्यलोके महीयते ॥२९॥ भुक्त्वा तु विपुलान्भोगान्सर्वलोकेष्वनुक्रमात् ॥ प्राप्ता तु सर्वभोगाढ्यं तरुणं विंदते पतिम् ॥ ३० ॥ सर्वधातुसमाकीर्णं विचित्रध्वजशोभितम् ॥ निवेदयेत सूर्याय श्रावणे तिलपर्वतम् ॥ ३१ ॥ स्वच्छंदगामिभिर्यानैर्नानावर्णविभूषितैः ॥ वर्षकोटिशतं साग्रं सूर्यलोके महीयते ॥ ३२ ॥ संप्राप्य विविधान्भोगान्बह्वाश्चर्यसमन्वितान् ॥ क्रमाल्लोकमिमं प्राप्य राजानं विंदते पतिम् ॥ ३३ ॥ कृत्वा भाद्रपदे मासि व्योम शालिमयं नृप ॥ वितानध्वजच्छत्राढ्यं नानामालाविभूषितम् ॥ ३४॥ तरुणार्ककरप्रख्यैर्महायानैः सुशोभनैः ॥ वर्षकोटिसहस्राणि सूर्यलोके महीयते ॥ ३५ ॥ संप्राप्य विविधान्भोगान्त्सर्वान्निमिषसंभवान् ॥ क्रमादागत्य लोकेऽस्मिन्न जानं विंदते पतिम् ॥ ३६ ॥ कृत्वा चाश्वयुजे मासि विपुलं धान्यपर्वतम् ॥ सुवर्णवस्त्रगंधाढ्यं भास्कराय निवेदयेत् ॥ ३७ ॥ सावित्रैश्च महायानैर्वरभोगसमन्वितैः ॥ वर्षकोटिसहस्राणि सूर्यलोके महीयते ॥ ३८ ॥ सूर्यलोकादिलोकेषु भुक्त्वा भोगान्यथेप्सितान् ॥ अस्मिँल्लोके चा संप्राप्ता राजानं विंदते पतिम् ॥ चन्द्राग्निभास्कराणां तु कांतितेजःप्रभान्वितम् ॥ ३९ ॥ यंयं कामं समुद्दिश्य नरनारीनपुंसकाः ॥ पूजयंति रविं भक्त्या तत्सर्वं प्राप्नुवंति हि ॥ ४० ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु कामप्रदस्त्रीव्रतवर्णनं नामाष्टषष्ट्युत्तरशततमोऽध्यायः ॥ १६८ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ मृन्मयं दारुजं शैलं पक्वेष्टकमथापि वा ॥ कृत्वा मठं गृहं वापि यथा विभवसंभवात् ॥ १ ॥ सर्वोपकरणोपेतं सर्वधान्यसमन्वितम् ॥ सूर्यायेत्थं गृहं दद्यात्सर्वान्कामानवाप्नुयात् ॥ २ ॥ कृत्वैकभक्तं हेमंते माघमासमतंद्रितः ॥ मासांतेन रथं कुर्याच्चित्रवस्त्रोपशोभितम् ॥ ३ ॥ श्वेतैश्चतुर्भिः संयुक्तं तुरंगैः समलंकृतम् ॥ श्वेतध्वजपताकाभिश्छत्रचामरदर्पणैः ॥ ॥ ४ ॥ तंडुलाढकपिष्टेन कृत्वा भानुं नराधिप ॥ विन्यस्य तं रथोपस्थे संज्ञया सह भूपते ॥ ५ ॥ तं रात्रौ राजमार्गेण शंखभेर्यादिनिस्वनैः ॥ भ्रमयित्वा शनैः पश्चात्सूर्यायतनमाविशेत् ॥ ६ ॥ तत्र जागरपूजाभिः प्रदीपावलिशोभितैः ॥ प्रेक्षणीयैः प्रदानैश्च क्षपयित्वा शनैः क्षपाम् ॥७॥





१ ऐसभावश्छान्दसः । २ इह लोक इति शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रभाते स्नपनं कृत्वा मधुक्षीरघृतेन च ॥ दीनांधकृपणेभ्योऽन्नं यथाशक्त्या च दक्षिणाम् ॥ ८ ॥ रथं संवाहनोपेतं भास्कराय निवेदयेत् ॥ भुक्त्वा च बांधवैः सार्धं प्रणम्यार्कगृहं व्रजेत् ॥९॥ सर्वव्रतानां प्रवरं मंत्रधर्मान्वितः सदा ॥ व्रतं सूर्यव्रतं नाम सर्वकामार्थसिद्धये ॥१०॥ सर्वव्रतेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ॥ सर्वं सूर्यरथेनेह तत्पुण्यं लभते नृप ॥ ११ ॥ सूर्यायुतप्रतीकाशैर्विमानैः सार्वकामिकैः ॥ त्रिसप्तकुलजैः सार्धं सूर्यलोके महीयते ॥ १२ ॥ भुक्त्वा तु विपुलान्भोगान्सर्वलोकेष्वनुक्रमात् ॥ कल्पायुतशतं साग्रं ततो राजा भवेत्क्षितौ ॥ १३ ॥ पंचबलिसमायुक्तं मृदु षड्वास्तुकल्पितम् ॥ सर्वोपकरणोपेतं सूर्यं संज्ञां प्रकल्पयेत् ॥ १४ ॥ संज्ञादेवीसमायुक्तं पैष्टांशाढ्यं निवेदयेत् ॥ सौरज्ञानार्थतत्त्वज्ञमाचार्यसुदयान्वितम् ॥ १५ ॥ संपूज्य गंधपुष्पाद्यैर्वस्त्रालंकारचामरैः ॥ भक्ष्य भोज्यैरशेषैश्च ततः शय्यां निवेदयेत् ॥ १६ ॥ तदूर्णातूलवस्त्राणां परिसंख्या तु यावती ॥ तावद्वर्षसहस्राणि सूर्यलोके महीयते ॥ १७ ॥ सुरादिसर्वलोकेषु भुक्त्वा भोगानशेषतः ॥ कामादागत्य लोकेऽस्मिन्राजा भवति धार्मिकः ॥ १८ ॥ दश गोभिः सह वृषं ता वृषैकादशाः स्मृताः ॥ सूर्याय विनिवेद्येह यत्फलं लभते शृणु ॥ १९ ॥ द्वादशादित्यतुल्यात्मा अणिमादिगुणैर्युतः ॥ सर्वत्र मोदते राजन्सूर्यस्यानुचरो भवेत् ॥ २० ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सूर्यव्रतवर्णनं नामैकोनसप्तत्युत्तरशततमोऽध्यायः ॥ १६९ ॥ ॥ छ ॥ ॥ सुमन्तुरुवाच ॥ ॥ सवृषं गोशतं दत्त्वा भास्कराय नराधिप ॥ त्रिःसप्तकुलजैः सार्धं शृणु यत्फलमाप्नुयात् ॥ १ ॥ वरकोटिप्रतीकाशैः सर्वकामसमन्वितैः ॥ महायानैरसंख्येयैरमरासुरपूजितैः ॥ २ ॥ द्वादशादित्यसंकाशो दिवाकर इवापरः ॥ गत्वादित्यपुरं रम्यं क्रीडते सूर्यमंडपे ॥ ३ ॥ भुक्त्वा तु विपुलान्भोगान्प्रलये सर्वदेहिनाम् ॥ मोहकंचुकमुत्सृज्य विशत्यादित्यमंडलं ॥ ४ ॥ सर्वज्ञः सूरपरमः शुद्धः स्वात्मन्यवस्थितः ॥ सर्वगः परिपूर्णत्वात्सूर्यवद्दीप्तिमान्भवेत् ॥ ५ ॥ यो दद्यादुभयमुखीं सौरभेयीं दिवाकरे ॥ सप्तद्वीपां महीं दत्त्वा यत्फलं तदवाप्नुयात् ॥ पादद्वयं शिरोऽर्धं च सशैलवनकानना ॥ ६ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे गोदानवर्णनं नाम सप्तत्युत्तरशततमोऽध्यायः ॥ १७० ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥ मगानां ब्रूहि मे धर्मं समासव्यासयोगतः ॥ फलं च किं भवेद्ब्रह्मन्मगधर्मनिषेवणात् ॥ १ ॥ ॥ सुमंतुरुवाच ॥ ॥ य एष धर्मः सूर्येति तवाख्यातो मयानघ ॥ मगधर्मः स प्रोक्तः सर्वपापभयापहः ॥ २ ॥ सर्वेषामेव वर्णानां मगधर्मनिषेवणम् ॥ मगधर्मश्च संप्रोक्त एतेषां भवमुक्तये ॥३॥ ब्राह्मणाः क्षत्रिया वैश्याः स्त्री शूद्रो वा मगाश्रमी ॥ यः पूजयति मार्तंडं स याति परमां गतिम् ॥ ४ ॥ त्रिसंध्यमर्चयेद्भानुमग्निकार्यं च शक्तितः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुर्यान्मगो महाबाहो मुखमावृत्य यत्नतः ॥५॥ त्रिसंध्यमेककालं वा पूजयेच्छ्रद्धया रविम् ॥ असंपूज्य रविं मोहान्न भुंजीत कदाचन ॥ ६ ॥ एष धर्मः परो ज्ञेयः शेषो भवति मानवः ॥ अपूजयित्वा भुंजानो विष्ठां भुङ्क्ते च वै मगः ॥ ७ ॥ देवं समाश्रितैः पूजा कर्तव्येयं त्रिभिः सदा ॥ मनसा पूजयेद्योगी पुष्पैश्चारण्यसंभवैः ॥ ८ ॥ देवार्थपुष्पहिंसायां न भवेत्तस्य हिंसकः ॥ यद्यल्पमपि चात्मार्थं निहन्याद्धिंसकस्तदा ॥ ९ ॥ मग श्चाग्निपरो नित्यं तद्भक्तोऽतिथिपूजकः ॥ मगी मैथुनवर्ज्यः स्याच्छ्रीमान्गृहमगाश्रमी ॥ १० ॥ देवाग्निस्वतिथौ भक्तं पचते चात्मकारणात् ॥ आत्मार्थे यः पचेन्मोहात्स मगो नरकं व्रजेत् ॥ ११ ॥ देवार्थे पचनं येषां संतानार्थं तु मैथुनम् ॥ अर्थो दानार्थ उद्दिष्टो नरकं हि विपर्ययात्॥ ॥ १२ ॥ जीवत्तृतीयभागेपि न प्रकुर्वीत वार्चनम् ॥ वित्तार्जने तदर्धेन यतो नित्यं हि जीवितम् ॥ १३ ॥ न्यायोपार्जितवित्तः स्यादन्यायं परि वर्जयेत् ॥ अन्यायार्जितवित्तैस्तु कुर्वन्नरकमाप्नुयात् ॥ १४ ॥ वाचोर्थे ब्रह्मचारी यः सूर्यपूजाग्नितत्परः ॥ भवेज्जितेंद्रियः शांतो नैष्ठिको भौति कोऽपि वा ॥ १५ ॥ सर्वगंधविनिर्मुक्तः कंदमूलफलाशनः ॥ मम वैखानसो ज्ञेयः सूर्यपूजाग्नितत्परः ॥ १६ ॥ निवृत्तः संगमेभ्यस्तु सूर्यध्यान रतः सदा ॥ ज्ञेयः सौरयतींद्राय पूजानिष्ठो जितेंद्रियः ॥ १७ ॥ मुंडोपनयनो व्यंगी शुक्लवासःसमन्वितः ॥ ज्ञेयं तदर्चनस्थानमेतत्कार्यं प्रय त्नतः ॥ १८ ॥ अथाव्यंगो महाराज धारयेद्यस्तु भोजकः ॥ अगम्यं सर्वसत्त्वानां सूर्यलोकं स गच्छति ॥ १९ ॥ ध्वंसनं सर्वदुष्टानां सर्वपाप भयापहम् ॥ भावशुद्धेन सततमर्चनीयो दिवाकरः ॥ २० ॥ गंधलेपविहीनोऽपि भावशुद्धो न दुष्यति ॥ भावेषु च चरेच्छौचं वस्त्रपूतं जलं पिबेत् ॥ २१ ॥ दृष्टिपूतं न्यसेत्पादं सत्यपूतं वचो वदेत् ॥ सौरध्यानरताः शांताः सौरधर्मपरायणाः ॥ २२ ॥ सर्वे एवाश्रमा ज्ञेया भस्करांगस मुद्भवाः ॥ भोजकाष्टव्रतं धार्यं रविणोक्तमनौपमम् ॥२३॥ सर्वव्रतानां परमं धर्मालयमनुत्तमम् ॥ सौरभक्ते सदा क्षांतिरहिंसा सर्वदा शमः ॥२४॥ संतोषः सत्यमस्तेयं ब्रह्मचर्यं तथाष्टमम् ॥ यथासंभवपूजाभिः कर्मणा मनसा गिरा ॥ २५ ॥ सौरभक्तिः सदा कार्या भोजकेषु विशेषतः ॥ स्वदेहान्निर्विशेषं हि भोजकान्पालयेद्बुधः ॥ २६ ॥ भयदारिद्र्यरोगेभ्यस्तेषां कुर्यात्प्रियाणि वै ॥ सूर्यस्य परिपूर्णस्य किं नाम क्रियते नरैः ॥ २७ ॥ यत्कृतं भोजकानां वै तत्कृतं स्याद्रवेर्नृप ॥ सुदूरमपि गंतव्यं मगानां यत्र वै गणः ॥ २८ ॥ स च प्रयत्नाद्द्रष्टव्य स्तत्र संनिहितो रविः ॥ भोजकस्य तु भक्तस्य सूर्यपूजारतस्य च ॥ २९ ॥ आज्ञां कृत्वा यथान्यायमश्वमेधफलं लभेत् ॥ देवा श्रमगतो भक्त्या देवार्चां पूजयेन्नृप ॥ ३० ॥ स्वागतासनपाद्यार्घ्यमधुपर्काद्यनुक्रमात् ॥ भोजयित्वा यथान्यायं सूर्यलोके महीयते ॥३१॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतिश्रयप्रदानेन राजा भवति भारत ॥ दत्त्वा स्थानं तथा शौचं वारुणं लोकमाप्नुयात् ॥ ३२ ॥ श्वेतबिंदुपरीतांगं ध्यानश्रम विकर्शितम् ॥ संवीज्य तालवृंत्तेन वायुलोके महीयते ॥ ३३ ॥ क्षुत्पिपासातुरं श्रांतं मलिनं रोगिणं तथा ॥ पालयित्वा यथा शक्त्या सर्वान्कामानवाप्नुयात् ॥ ३४ ॥ पतिताशस्तसंकीर्णचंडालादीनां पक्षिणाम् ॥ कारुण्यात्सर्वभूतानां देयमन्नं स्वशक्तितः ॥ ३५ ॥ अत्यल्पमपि कारुण्याद्दत्तं भवति चाक्षयम् ॥ तस्मात्सर्वेषु भूतेषु देव कारुण्यमुच्यते ॥३६॥ अभावे तृणभूम्यन्नं पत्रं धनफलानि च ॥ दत्त्वाऽऽग ताय प्रणतः स्वर्गं याति प्रियेण वा ॥३७॥ न हीदृक्स्वर्गयानाय यथा लोके प्रियं वचः ॥ इहामुत्र सुखं तेषां वाग्येषां मधुरा भवेत् ॥३८॥ अमृत स्यंदिनीं वाचं चंदनस्पर्शशीतलाम् ॥ धर्माविरोधिनीमुक्त्वा सुखमक्षय्यमाप्नुयात् ॥ ३९ ॥ अलं दानेन राजेंद्र पूजयाध्यापनेन वा ॥ इदं स्वर्गस्य सोपानमचलं यत्प्रियं वचः ॥ ४० ॥ पूजाभिभाषणं दृष्टिः प्रत्येकं स्वर्गहेतवः ॥ संपृच्छेपागतं भक्त्या कुशलं प्रश्नमादरात् ॥ ४१ ॥ गमने तस्य वक्तव्यं पंथानः संतु ते शिवाः ॥ सुखं भवतु ते नित्यं सर्वकार्यकरं भृशम् ॥ ४२ ॥ आशीर्वादमिदं वाक्यं सर्वकालेषु सर्वदा ॥ नमस्कारा दिवाक्येषु स्वस्ति मंगलवादने ॥ ४३ ॥ शिवं भवतु ते नित्यं तं ब्रूयात्सर्वकर्मसु ॥ एवमादि च वाचारमनुष्ठाय सदाश्रमी ॥ ४४ ॥ अशेषपाप निर्मुक्तः सूर्यलोके महीयते ॥ सूर्यभक्ते तु या भक्तिः सद्भक्तैः क्रियते नरैः ॥ सूर्ये भक्तिसमा नित्यं भक्ते भक्तिरनुष्ठिता ॥ ४५ ॥ आक्रुष्टे ताडि ते वापि यो नाक्रोशेन्न ताडयेत् ॥ वाक्यादधिकृतः स्वस्थः स दुःखात्परिमुच्यते ॥ ४६ ॥ सर्वेषामेव तीर्थानां क्षांतिः परमपूजिता ॥ तस्मा त्पूर्वं प्रयत्नेन क्षांतिः कार्या क्रियासु वै ॥ ४७ ॥ ज्ञानयोगतपो यस्य यज्ञदानानि सत्क्रिया ॥ क्रोधनस्य वृथा यस्मात्तस्मात्क्रोधं विवर्जयेत् ॥ ॥ ४८ ॥ मर्मास्थिप्राणहृदयं निर्दहेदप्रियं वचः ॥ न वचो ह्यप्रियं तस्माद्भोजकेषु विशेषतः ॥ ४९ ॥ क्षमा दानं त्विषः सत्यं क्षमाहिंसार्कसं भवाः ॥ न शक्या विस्तराद्वक्तुमपि वर्षशतैरपि ॥ ५० ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे भोजकभोजनानु ष्ठानवर्णनं नामैकसप्तत्युत्तरशततमोऽध्यायः ॥ १७१ ॥ ॥ छ॥ ॥ ॥ सुमंतुरुवाच ॥ ॥ पुनः शृणु महाराज धर्ममादित्यसंमतम् ॥ सौरप्रियं सदा सौरं पवित्रं पापनाशनम् ॥ १ ॥ क्वचिद्गच्छन्यदा पश्येत्सूर्यार्चासंप्रपूजनम् ॥ यत्र पूजा ततो गच्छन्त्स सूर्यो नात्र संशयः ॥२ ॥ स्नाननैवेद्यवस्त्रैश्च नानालंकारभूषणैः ॥ यथाविभवमाश्रित्य नमस्कारादिसंस्तवैः ॥ ३ ॥ दृष्ट्वायतनमाक्रम्य नमस्कृत्य रविं व्रजेत् ॥ क्वचित्पथि नदीं शैलं गच्छमानं च भोजकम् ॥ ४ ॥ उपश्रुत्यावनिं गत्वा भोजकं पूजयेद्बुधः ॥ रथाश्वगजयानेभ्यो ह्यवतीर्य मगान्नृप ॥ मगानां भोजनं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्त्या शक्त्या दानं प्रकल्पयेत् ॥ ५ ॥ दशपूर्वान्दश परानात्मना सह भारत ॥ समादाय व्रजेत्स्थानं रवेरमिततेजसः ॥ ६ ॥ दैवपर्वोत्सवे श्राद्धे पुण्येषु दिवसेषु च ॥ भानुं संपूज्य विधिवद्भोजकान्भोजयेत्ततः ॥ ७ ॥ पितरः सर्वदेवानां सूर्यमाश्रित्य संस्थिताः ॥ प्रीते सूर्ये तु ते सर्वे प्रीताः स्युर्नात्र संशयः ॥ ८ ॥ यदा च श्रद्धया युक्तं प्रसक्तं रविपूजनम् ॥ भोजयेद्भोजकं भक्त्या श्राद्धेषु विधिवन्नृप ॥ ९ ॥ भोजकस्य महाराज दिवसेनापि यत्फलम् ॥ न तच्छक्यमिदं तेन प्राप्तुं वर्षशतैरपि ॥ १० ॥ यः पश्यति प्रसन्नात्मा यो न द्वेष्टि न कांक्षति ॥ शब्दादीनां तु संभोगं स विज्ञेयो जितेंद्रियः ॥ ११ ॥ ज्ञानविज्ञानसम्पन्नः सूर्यभक्त्या समन्वितः ॥ पाषंडयोगमुक्तश्च स वै भोजक उच्यते ॥ १२ ॥ सूर्यधर्माद्भवेज्ज्ञानं ज्ञानाद्वैराग्यसंभवः ॥ ज्ञानवैराग्ययुक्तस्य सूर्ययोगः प्रवर्तते ॥ १३ ॥ सूर्ययोगाच्च सर्वज्ञः परिपूर्णः सुनिर्वृतः ॥ आत्मन्यवस्थितः शुद्धः सूर्यवद्दिवि मोदते ॥१४॥ सर्वेषामेव भूतानामुत्तमः पुरुषः स्मृतः ॥ पुरुषेभ्यो द्विजः श्रेष्ठो द्विजेभ्यो ग्रंथपारगः ॥ १५ ॥ ग्रन्थिभ्यो वेदविद्वांसस्तेभ्यस्तत्त्वार्थचिंतकाः ॥ अर्थविद्भ्यश्च ज्ञानार्थप्रतिबुद्धो विशिष्यते ॥ १६ ॥ ज्ञानार्थकोटिकोटिभ्यो वरिष्ठा योगिनो मताः ॥ योगिनां कोटिकोटिभ्यो भोजकश्चोत्तमो भवेत् ॥ १७ ॥ योगज्ञा योगनिष्ठाश्च पितरो योगसंभवाः ॥ भोजिते भोजके सर्वे प्रीताः स्युस्ते न संशयः ॥ १८ ॥ सर्वज्ञानतपोदानैः कृतैर्दत्तैश्च यत्फलम् ॥ तत्फलं लभते सर्वं विधिवद्भोज्य भोजकम् ॥ १९ ॥ यश्च द्रव्यकलापात्मा दक्षिणा हविर्ऋत्विजः ॥ ऋग्यजुःसामयोगैश्च देवयज्ञः प्रकीर्तितः ॥२०॥ ब्रह्मचर्यं तपो मौनं क्षांतिराहारलाघवम् ॥ इत्येतत्तपसां रूपं सुधीरं पंचलक्षणम् ॥२१॥ यच्च दिष्टं विशिष्टं च न्यायप्राप्तं च यद्भवेत्॥तत्तद्गुणवते देयमित्येतद्दानलक्षणम्॥२२॥विवर्धनीं सहस्राणां सर्वसस्यप्ररोहिणीम्॥ दद्याद्भूमिं जलोपेतां भूमिदानं तदुच्यते ॥२३॥एकच्छत्त्रां महींकृत्वा द्विजेभ्यः प्रतिपादयेत् ॥ संपूर्णां पर्वतारण्यैर्भूमिदानं तदुच्यते॥२४॥ कन्यामलंकृतां दद्यादधनाय नराधिप॥ द्विजाय वेदविदुषे कन्यादानं तदुच्यते ॥२५॥ सर्वदोषविनिर्मुक्तां कुलयोग्यामलंकृताम् ॥ मध्यमोत्तमवस्त्राणां यो दद्यादहतानि च ॥२६॥ एतत्समासतो ज्ञेयं वस्त्रदानस्य लक्षणम्॥ब्रह्मविष्णुसमाधिक्यकांतिशीलपरायणः॥अहोरात्रं न भुञ्जीतह्युपवासस्य लक्षणम् ॥२७॥ चत्वारिंशत्समायुक्तं पिंडानां हि शतद्वयम् ॥ मासे ह्यद्याद्यथाकाममिदं चांद्रायणं स्मृतम्॥२८॥ ऋषिभिः सर्वशास्त्रज्ञैस्तपोनिष्ठैर्जितेंद्रियैः ॥ देवैश्च सेवितं तोयं क्षितौ तत्तीर्थमुच्यते ॥ २९ ॥ सूर्यावांतरस्थानानि पुण्यक्षेत्राणि निर्दिशेत् ॥ मृतानां तेषु सूर्यत्वं सौरक्षेत्रेषु देहिनाम् ॥ ३० ॥ दानान्यावसथं कुर्यादुद्यानं देवतागृहम् ॥ तीर्थेष्वेतानि यः कुर्यात्सोऽक्षयं लभते फलम् ॥ ३१ ॥ क्षान्तिः स्पृहा तथा सत्यं दानं शीलं तपः श्रुतम् ॥ एतदष्टांगमुद्दिष्टं परं पात्र



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्य लक्षणम् ॥ ३२ ॥ यज्ञोपवासदानानि तपस्तीर्थफलानि च ॥ संपूर्णं लभते भक्त्या भोजयित्वा तु भोजकान् ॥ ३३ ॥ सूरे भक्तिः क्षमा सत्यं दशेंद्रियविनिग्रहः ॥ सुखितेषु च मैत्री च सूर्यधर्मस्य लक्षणम् ॥ ३४ ॥ सूर्यभक्तं द्विजं भक्त्या यः श्राद्धेषु च भोजयेत् ॥ कुलसप्तकमुद्धृत्य सूर्यलोके महीयते ॥ ३५ ॥ बहुनात्र किमुक्तेन सूर्यभक्तं तु भोजयेत् ॥ सूर्यभक्तेन यद्भुक्तं भानुनामाश्रयं नृप ॥ ३६ ॥ न वेदविदुषां कोट्या लभ्यते चेह तत्फलम् ॥ तत्फलं लभते राजन्भोजं भाज्य विधानतः ॥ ३७ ॥ तस्माच्छ्राद्धे विशेषेण पुण्येषु दिवसेषु च ॥ सूर्यमुद्दिश्य विप्रेंद्र भोजं संभोजयेन्नृप ॥ ३८ ॥ असंयतः संयतो वा सर्वावस्थां गतोपि वा ॥ यश्चासौ रविभक्तः स्यात्सूर्यवत्पूज्य एव हि ॥ ३९ ॥ संसर्गाद्वापि वा लोभाद्भोजकं यस्तु भोजयेत् ॥ सोऽपि यां गतिमाप्नोति न तां यज्ञशतैरपि ॥ ४० ॥ तस्मान्मान्यश्च पूज्यश्च रक्षणीयश्च सर्वदा ॥ भोजकः कुरुशार्दूल सौरेण गतिमिच्छता ॥ ४१ ॥ नाममात्रप्रयत्नोऽपि यदि स्याद्भोजको रवेः ॥ सूर्यवत्स हि द्रष्टव्यः पूजनीश्च भारत ॥ ४२ ॥ गृहे श्राद्धस्य यत्पुण्यमरण्ये तच्छताधिकम् ॥ सौराश्रमेषु विज्ञेयं तत्पुण्यमयुताधिकम् ॥ ४३ ॥ दत्त्वा तु भोजके सौम्यं ह्यासनं सपरिच्छदम् ॥ धातुदंतमयं चापि राजा भवति भूतले ॥ ४४ ॥ विमले वाससी दत्त्वा भोजकाय महीपते ॥ उद्धृत्य शतसाहस्रं सूर्यलोके महीयते ॥ ४५ ॥ दत्त्वा तु लोमशां राजन्भोजकाय शुभां बृहत् ॥ रोम्णिरोम्णि सुवर्णस्य दत्तस्य फलमाप्नुयात् ॥ ४६ ॥ शंखं ददाति यो भक्त्या तथा दिव्ये च पादुके ॥ सूर्यलोकमवाप्नोति तेजसा रविसन्निभः ॥ ४७ ॥ लिखापयति यो भक्त्या पुराणेन तु पुस्तकम् ॥ युगकोटिशतं दिव्यं सूर्यलोके महीयते ॥ ४८ ॥ भवेदिहागतः श्रीमान्सुखाढ्यो वेदपारगः॥ यः करोति गृहं भानोस्तत्स्थानं चोत्तमं भवेत् ॥ ४९ ॥ तत्सूर्यो भोजकः सोत्र भोजकः सूर्य एव हि ॥ तेन भोजकविप्रेषु दानमक्षय्यमित्यपि ॥ ५० ॥ यद्यद्यस्योपयुज्येत देयं तत्तस्य यत्नतः ॥ उपयोगपरो नित्यं सूर्यस्तदुभयोरपि ॥५१॥ व्याख्याने सौरधर्मस्य कृत्वा आमलकं महत् ॥ शोभितं पुष्पपत्राद्यैर्न्यसेत्तत्रासने सुराः ॥ ५२ ॥ शोभितं माल्यगन्धैस्तु सूर्यस्य साधनं महत् ॥ पुरस्तात्तस्य संस्थाप्य आचार्यं पूजयेत्सदा ॥ सूर्यवत्सौरधर्मे च तुल्यमेतद्द्वयं वचः ॥ ५३ ॥ य एवं न्यायतो वक्ति सौरधर्मं शृणोति च ॥ आयुर्विद्यां यशः कीर्तिमुपलभ्य रविं जपेत् ॥ वदंत्यन्ये पिवन्त्यन्ये सर्वे ते फलभागिनः ॥ ५४ ॥ तस्मादेवंविधो धर्मो वाचकैश्च विदुर्बुधाः ॥ तस्यान्ते पूजयेद्भक्त्या य इच्छेद्विपुलं यशः ॥ ५५ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे द्विसप्तत्युत्तरशततमोऽध्यायः ॥ १७२ ॥ ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुनर्मे ब्रूहि विप्रेन्द्र सौरं धर्ममनुत्तमम् ॥ समासात्कथितं ब्रह्मन्विस्तरेण प्रकीर्तय ॥ १ ॥ ॥ सुमन्तुरुवाच ॥ ॥ साधुसाधु महाबाहो साधु पृष्टोऽस्मि भारत ॥ त्वत्समो नास्ति लोकेऽस्मिन्सौरः पार्थिवसत्तम ॥ २ ॥ कीर्तयाम्यद्य तं पुण्यं संवादं पापनाशनम् ॥ गरुडारुणयो राजन्पुरावृत्तं नराधिप ॥ ३ ॥ सुखासीनं पुरा राजन्नरुणं सूर्यसारथिम् ॥ उपगम्य महाबाहो गरुडो वाक्यमब्रवीत् ॥ ४ ॥ धर्माणामुत्तमं धर्मं सर्वपापप्रणाशनम् ॥ सौरधर्मं खगश्रेष्ठ ब्रूहि मे कृत्स्नशोनघ ॥ ५ ॥ ॥ अरुण उवाच ॥ ॥ साधु वत्स महात्मासि धन्यस्त्वं पापवर्जितः ॥ श्रोतुकामोऽसि यत्पुत्र सौरधर्ममनुत्तमम् ॥ ६ ॥ शृणु त्वं कीर्तयाम्येष सुखोपायं महत्फलम् ॥ परमं सर्वधर्माणां सौरधर्ममनुत्तमम् ॥ ७ ॥ अज्ञानार्णवमग्नानां सर्वेषां प्राणिनामयम् ॥ सौरधर्मो ह्ययं श्रीमान्परतीरप्रदो यतः ॥ ८ ॥ ये स्मरंति रविं भक्त्या कीर्तयंति च ये खग ॥ पूजयन्ति च ये नित्यं ते गताः परमं पदम् ॥ ९ ॥ आत्मद्रोहः कृतस्तेन जातेनेह खगाधिप ॥ नार्चितो येन देवेशः सहस्रकिरणो रविः ॥ १० ॥ सुचिरं संभ्रमत्यस्मिन्दुःखदे च भवार्णवे ॥ जराभूतमहाग्राहे तृष्णावेलाकुलापरे ॥ ११ ॥ मानुष्यं दुर्लभं प्राप्य येऽर्चयंति दिवाकरम् ॥ तेषां हि सफलं जन्म कृतार्थास्ते नरोत्तमाः ॥ १२ ॥ सूर्यभक्तिपरा ये च ये च तद्गतमानसाः ॥ ये स्मरंति सदा सूर्यं न ते दुःखस्य भागिनः ॥ १३ ॥ विविधानि मनोज्ञानि विविधाभरणाः स्त्रियः ॥ धनं वा दृष्टपर्यंतं सूर्यपूजाविधेः फलम् ॥ १४ ॥ ये वांछन्ति महाभोगान्राज्यं वा त्रिदशालये ॥ सौभाग्यं कांतिमतुलां भोगं त्यागं यशः श्रियम् ॥ १५ ॥ सौन्दर्यं जगतः ख्यातिः कीर्तिर्धर्मादयः स्मृताः ॥ फलान्येतानि वै पुत्र सूर्यभक्तिविधेर्बुध ॥ १६ ॥ तस्मात्संपूजयेत्सूर्यं सर्वदेवगणार्चितम् ॥ दुर्लभा भास्करे भक्तिर्दुर्लभं च तदर्चनम् ॥ १७ ॥ दानं च दुर्लभं तस्मै तद्धोमश्च सुदुर्लभः ॥ दुर्लभं तस्य विज्ञानं तदभ्यासोऽपि दुर्लभः ॥ १८ ॥ सुदुर्लभतरं ज्ञेयं तदाराधनमुत्तमम् ॥ लोभस्तेषां मनुष्याणां ये रविं शरणं गताः ॥ १९ ॥ येषामिहेश्वरे भानौ नित्यं सूर्ये गतं मनः ॥ नमस्कारादिसंयुक्तं रविरित्यक्षरद्वयम् ॥ २० ॥ जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम् ॥ य एवं पूजयेद्भानुं श्रद्धया परयान्वितः॥ मुच्यते सर्वपापेभ्यः स नरो नात्र संशयः ॥ २१ ॥ डाकिन्यो विविधाकारा राक्षसाः सपिशाचकाः ॥ न तस्य पीडां कुर्वंति तथान्याश्च विभीषणाः ॥ २२ ॥ शत्रवो नाशमायांति संग्रामे जयमाप्नुयात् ॥ न रोगैः पीड्यते वीर आपदो न स्पृशंति तम् ॥ २३ ॥ धनमायुर्यशो विद्या प्रभावो ह्यतुलं तथा ॥ शुभेनोपचयं यांति नित्यं पूर्णमनोरथाः ॥ २४ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे गरुडारुणसंवादे सौरधर्मवर्णनं नाम त्रिसप्तत्युत्तरशततमोऽध्यायः ॥ १७३ ॥ ॥ छ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ ॥ अरुण उवाच ॥ ॥ पूजयित्वा रविं भक्त्या ब्रह्मा ब्रह्मत्वमागतः ॥ विष्णुत्वं चापि देवेशो विष्णुराप तदर्चनात् ॥ १ ॥ शंकरोऽपि जगन्नाथः पूजयित्वा दिवाकरम् ॥ महादेवत्वमगमत्तत्प्रसादात्खगाधिप ॥ २ ॥ सहस्राक्षोपि देवेश इन्द्रो भानुं तमोपहम् ॥ इन्द्रत्वमगमद्देवं पूजयित्वा दिवाकरम् ॥ ३ ॥ मातरो देवगंधर्वाः पिशाचोरगराक्षसाः ॥ पूजयंति सदा भानुमीशानं सुरनायकम् ॥ ४ ॥ सर्वमेतज्जगन्नित्यं भानौ देवे प्रतिष्ठितम् ॥ तस्मात्संपूजयेद्भानुं य इच्छेत्स्वर्गमक्षयम् ॥ ५ ॥ यो न पूजयते सूर्यं भास्करं तमसूदनम् ॥ धर्मार्थकाममोक्षाणां न नरो भाजनं भवेत् ॥ ६ ॥ तस्मात्कार्यं हि तद्ध्यानं यावज्जीवं प्रतिज्ञया ॥ अर्चयेत सदा भानुमापन्नोऽपि सदा खग ॥ ॥ ७ ॥ यस्तु संतिष्ठते नित्यं विना सूर्यस्य पूजनात् ॥ वरं प्राणपरित्यागः शिरसो वाथ च्छेदनम् ॥ ८ ॥ सूर्यं संपूज्य भुञ्जीत त्रिदशेशं दिवाकरम् ॥ इत्थं निर्वहते यस्य यावज्जीवं तदर्चनम् ॥ मनुष्यचर्मणा नद्धः स रविर्नात्र संशयः ॥ ९ ॥ न हि अर्कार्चनादन्यत्पुण्यमप्यधिकं भवेत् ॥ इति विज्ञाय यत्नेन पूजयस्व दिवाकरम् ॥ १० ॥ सूर्यभक्तागमाश्चैव सूर्यार्चनपरायणाः ॥ संयता धर्मसंपन्ना धर्मादीन्साधयन्ति ते ॥ ११ ॥ सर्वद्वन्द्वसहा वीरा नीतिविध्युक्तचेतसः ॥ परोपकारनिरता गुरुशुश्रूषणे रताः ॥ १२ ॥ अमानिनो बुद्धिमन्तोऽव्यक्तस्पर्धा गतस्पृहाः ॥ शांतास्वांतगता भद्रा नित्यं स्वागतवादिनः ॥ १३ ॥ स्वल्पवाचः सुमनसः शूराः शास्त्रविशारदाः ॥ शौचाचारसुसंपन्ना दयादाक्षिण्यगोचराः ॥ १४ ॥ दंभमत्सरनिर्मुक्तास्तृष्णालोभविवर्जिताः ॥ संविभागपराः प्रोक्ता न शठाश्चाप्यकुत्सिताः ॥ १५ ॥ विषयेष्वपि निर्लेपाः पद्मपत्रमिवांभसा ॥ न दीना मानिनश्चैव न च रोगवशानुगाः ॥ १६ ॥ भवंति भावितात्मानः सुस्निग्धाः साधुसेविताः ॥ न पाणिपादवाक्चक्षुःश्रोत्रशिश्नोदरे रताः ॥ १७ ॥ चपलानि न कुर्वंति सर्वव्यासंगवर्जिताः ॥ सूर्यासनरताः शांताः षडक्षरमनोगताः ॥ १८ ॥ इत्याचारसमायुक्ता भवंति भुवि मानवाः ॥ एकांतभक्तिमास्थाय धर्मकामार्थसिद्धये ॥ १९ ॥ पूजनीयो रविर्नित्यं गुणेष्वेतेषु वर्तते ॥ सर्वेषामेव पात्राणामतिपात्रं दिवाकरः ॥ पतन्तं त्रायते यस्मादतीव नरकार्णवात् ॥ २० ॥ तस्य पात्रातिपात्रस्य माहात्म्यं दानमण्वपि ॥ अनेन फलमादिष्टमिहलोके परत्र च ॥ २१ ॥ द्रव्येणापि हि यः कुर्यान्नरः कर्म तदालये ॥ सोऽपि देहक्षये ज्ञानं प्राप्य शांतिमवाप्नुयात् ॥ २२ ॥ सर्वद्विजकदंबेषु कश्चिज्ज्ञानमवाप्नुयात् ॥ कश्चिदेतत्तु मे दिव्यं लब्ध्वा ज्ञानं विमुञ्चति ॥ २३ ॥ तावद्भ्रमंति संसारे दुःखशोकपरिप्लुताः ॥ न भवंति रवेर्भक्ता यावत्सर्वेपि देहिनः ॥ २४ ॥ सूर्यस्यालेपनं पुण्यं द्विगुणं चन्दनस्य तु ॥ चन्दनादगुरौ ज्ञेयं पुण्यमष्टगुणोत्तरम् ॥ २५ ॥ कृष्णागुरौ विशेषेण द्विगुणं फलमिष्यते ॥ तस्माच्छतगुणं पुण्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुंकुमस्य विधीयते ॥ २६ ॥ सूर्ययज्ञोपकरणं कृत्वाल्पं यदि वा बहु ॥ भावाद्वित्तानुसारेण सूर्यलोके महीयते ॥ २७ ॥ यदपीष्टमनिष्टं च न्यायेनोभयमागतम् ॥ तत्सूर्याय निवेद्यं सद्भक्त्यानन्तफलार्थिना ॥ २८ ॥ कर्मशाठ्येन यः कुर्याद्दुःखेनापि तदर्चनम् ॥ सोऽपि द्विजो दिवं याति कर्मणा पापवर्जितः ॥ २९ ॥ सर्वमन्यत्परित्यज्य सूर्ये चैकमनाः सदा ॥ सूर्यपूजाविधिं कुर्याद्य इच्छेच्छ्रेय आत्मनः ॥ ३० ॥ त्वरितं जीवितं याति त्वरितं यौवनं तथा ॥ त्वरितं व्याधिरप्येति तस्मान्नित्यं रविं व्रजेत् ॥ ३१ ॥ यावन्नाभ्येति मरणं यावन्नाक्रमते जरा ॥ यावन्नेंद्रिय वैकल्यं तावदर्चेद्दिवाकरम् ॥ ३२ ॥ न सूर्यार्चनतुल्योपि न धर्मोन्यो जगत्त्रये ॥ इत्थं विज्ञाय देवेशं पूजयस्व दिवाकरम् ॥ ३३ ॥ ये भक्त्या देवदेवेशं सूर्यं शांतमजं प्रभुम् ॥ इह लोके सुखं प्राप्य ते गताः परमं पदम् ॥ ३४ ॥ गोपतिं पूजयित्वा तु प्रहृष्टेनांतरात्मना ॥ कृतांजलिपुटो भूत्वा पुरा ब्रह्माब्रवीदिदम् ॥ ३५ ॥ ॥ ब्रह्मोवाच ॥ ॥ भगवन्तं भगकरं शांतचित्तमनुत्तमम् ॥ देवमार्गप्रणेतारं प्रणतोऽस्मि रविं सदा ॥ ॥ ३६ ॥ शाश्वतं शोभनं शुद्धं चित्रभानुं दिवस्पतिम् ॥ देवदेवेशमीशेशं प्रणतोऽस्मि दिवाकरम् ॥ ३७ ॥ सर्वदुःखहरं देवं सर्वदुःखहरं रविम् ॥ वराननं वरांगं च वरस्थानं वरप्रदम् ॥ ३८ ॥ वरेण्यं वरदं नित्यं प्रणतोऽस्मि विभावसुम् ॥ अर्कमर्यमणं चेन्द्रं विष्णुमीशं दिवाकरम् ॥ ३९ ॥ देवेश्वरं देवरतं प्रणतोऽस्मि विभावसुम् ॥ य इदं शृणुयान्नित्यं ब्रह्मणोक्तं स्तवं परम् ॥ स हि कीर्तिं परां प्राप्य पुनः सूर्यपुरं व्रजेत् ॥ ४० ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे गरुडारुणसंवादे सूर्यस्तुतिर्नाम चतुःसप्तत्युत्तरशततमोऽध्यायः ॥१७४॥ ॥छ॥ ॥ गरुड उवाच ॥ ॥ सर्वरोगहता ये तु आधिव्याधिसमन्विताः ॥ ग्रहोपघातैर्विविधैरर्दिता ये च मानवाः ॥ १ ॥ अरिभिः पीडिता ये च विनायकहताश्च ये ॥ कर्तव्यं किं भवेत्तेषामात्मनः श्रेयसेऽनघ ॥ २ ॥ ॥ अरुण उवाच ॥ ॥ नानारोगहतानां तु अर्दितानां तथारिभिः ॥ आदित्याराधनं मुक्त्वा नान्यच्छ्रेयस्करं परम् ॥ ३ ॥ तस्मादाराधयेन्नित्यं सर्वरोगविनाशनम् ॥ ग्रहोपघातहंतारं राजोपद्रवनाशनम् ॥ ४ ॥ ॥ गरुड उवाच ॥ ॥ सर्वपत्रविहीनं मे सर्वरोगविवर्जितम् ॥ शापेन ब्रह्मवादिन्याः पश्यांगं द्विजसत्तम ॥ ५ ॥ एवं मतस्य मे तात किं कार्यमवशिष्यते ॥ येनाहं कर्मणा कल्पो भवेयं पत्रवान्पुनः ॥ ६ ॥ तन्मे ब्रूहि खगश्रेष्ठ प्रपन्नस्य खगाधिप ॥ यत्कृत्वा कल्पतां प्राप्य पूजयामि दिवाकरम् ॥७॥ ॥ अरुण उवाच ॥ ॥ पूजयस्व जगन्नाथं भास्करं तिमिरापहम् ॥ सूर्याग्निकार्यं सततं शुद्धचित्तः समाचर ॥ ८ ॥ महाशांतिकरं ख्यातं सर्वोपद्रवनाशनम् ॥ ग्रहोपघा

१ अर्चयन्त इति क्षेपः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्धंतारं शुभकार्यंकरं परम् ॥ ९ ॥ ॥ गरुड उवाच ॥ ॥ नाहं शक्तोस्मि वै कर्तुं पूजां दिनकरस्य च ॥ न चाग्निकार्यं शक्नोमि कर्तुं विकलतां गतः ॥१०॥ तस्मान्मे कुरु शांत्यर्थमग्निकार्यं खगाधिप ॥ महाशांतिरिति ख्यातं शांतये मम सुव्रत ॥ ११ ॥ ॥ अरुण उवाच ॥ ॥ एवमेव यदात्थ त्वं वैनतेय खगाधिप ॥ अकल्पस्त्वं न शक्नोषि महाव्याधिप्रपीडितः ॥ १२ ॥ अहं करोमि ते पुत्र शांतये पावकार्चनम् ॥ यत्कृतं मम चार्केण पुरा शांतिदमादरात् ॥१३॥ सर्वपापहरं पुण्यं महाविघ्नविनाशनम् ॥ महोदयं शांतिकरं [1]लक्षहोमविधि स्मृतम् ॥ १४ ॥ अपमृत्युहरं वीर सर्वव्याधिहरं परम् ॥ परचक्रप्रमथनं सदाविजयवर्धनम् ॥ १५ ॥ तृप्तिदं सर्वदेवानां भास्करप्रियमुत्तमम् ॥ आग्नेय्यां दिशि लिप्याथ स्थंडिलं गोमयेन तु ॥१६॥ देवालयस्य विधिवत्कुर्यादग्निप्रबोधनम् ॥ महाव्याहृतिभिर्वीर लक्षहोमं समाचरेत् ॥१७॥ भूर्भुवःस्वरिति स्वाहा प्रणवेन समन्वितम् ॥ आरक्तदेहरूपाय रक्ताक्षाय महात्मने॥१८॥ धराधराय शान्ताय सहस्राक्षिशिराय च॥१९॥अधोमुखाय श्वेताय स्वाहा पूर्वाहुतिं सृजेत् ॥ चतुर्मुखाय शांताय पद्मासनगताय च ॥२०॥ पद्मवर्णाय वेधाय कमण्डलुधराय च ॥ द्वितीयोर्ध्वमुखायेह स्वाहाकाराहुतिं सृजेत्॥२१॥ हेमवर्णाय देहाय ऐरावतगताय च ॥ सहस्राक्षशरीराय पूर्वदिश्युन्मुखाय च ॥ २२ ॥ देवाधिपाय चेन्द्राय विहस्ताय शुभाय च ॥ स्वाहाकारं चोत्सृजेदेव तृतीयवदनाय च ॥ २३ ॥ दीप्ताय व्यक्तदेहाय ज्वालामालाकुलाय च ॥ इन्द्रनीलाभदेहाय सर्वारोग्यकराय च॥ २४ ॥ यमाय धर्मराजाय दक्षिणाशामुखाय च ॥ कृष्णांबरधरायेह स्वाहाहुतिमनुत्सृजेत् ॥२५॥ नीलजीमूतवर्णाय रक्तांबरधराय च ॥ मुक्ताफलशरीराय पिंगाक्षाय महात्मने ॥ २६ ॥ शुक्लवस्त्राय पीताय दिव्यपाशधराय च ॥ स्वाहाकाराय च तथा पश्चिमाभिमुखाय च ॥ २७ ॥ कृष्णपिंगलनेत्राय वायव्याभिमुखाय च ॥ नीलध्वजाय वीराय तथा चेन्द्राय वेधसे ॥२८॥ स्वाहेति पवनायेह आहुतिं चोत्सृजेद्बुधः॥ गदाहस्ताय सूर्याय चित्रस्रग्भूषणाय च॥२९॥ महोदराय शांताय स्वाहाधिपतये तथा ॥ उत्तराभिमुखायेह महादेवप्रियाय च ॥ ३० ॥ श्वेताय श्वेतवर्णाय चित्राक्षाय महात्मने ॥ शांताय शांतरूपाय पिनाकवरधारिणे ॥ ३१ ॥ ईशानाभिमुखायेह दद्यादीशाय चाहुतिम् ॥ विसृजेत्खगशार्दूल विधिवच्छ्रेयसेनघ ॥ ३२ ॥ एवं देवं महात्मानं पावकं विधिवत्खग ॥ अर्हेदिति तु यत्कार्यं तत्सौरं खगसत्तम ॥ ३३ ॥ लक्षहोमं च विधिवत्कृत्वा शांतिकमाचरेत् ॥ भूर्भुःस्वरिति स्वाहा लक्षहोमविधिः स्मृतः ॥ ३४ ॥ महाहोमे च वै सौर एष एव विधिः परः ॥ कृत्वैवमग्निकार्यं तु भोजको भास्कराय वै ॥ ३५ ॥ शांत्यर्थं सर्व

१ लक्षसंख्यापरिच्छिन्नो होमविधिर्यत्र तत्पावकार्चनमहं करोमीति त्रयोदशचतुर्दशपञ्चदशषोडशश्लोकानामेकत्रान्वयः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोकानां ततः शांतिकमाचरेत् ॥ सिन्दूरासनरक्ताभः रक्तपद्माभलोचनः ॥ ३६ ॥ सहस्रकिरणो देवः सप्ताश्वरथवाहनः ॥ गभस्तिमाली भगवान्सर्वदेवनमस्कृतः ॥ ३७ ॥ करोतु ते महाशांतिं ग्रहपीडानिवारिणीम् ॥ त्रिचक्ररथमारूढ अपां सारमयं तु यः ॥३८॥ दशाश्ववाहनो देव आत्रेयश्चामृतस्रवः ॥ शीतांशुरमृतात्मा च क्षयवृद्धिसमन्वितः ॥ सोमः सौम्येन भावेन ग्रहपीडां व्यपोहतु ॥ ३९ ॥ पद्मरागनिभो भौमो मधुपिंगललोचनः ॥ अंगारकोऽग्निसदृशो ग्रहपीडां व्यपोहतु ॥ ४० ॥ पुष्परागनिभेनेह देहेन परिपिंगलः ॥ पीतमाल्यांबरधरो बुधः पीडां व्यपोहतु ॥ ४१ ॥ तप्तगैरिकसंकाशः सर्वशास्त्रविशारदः ॥ सर्वदेवगुरुर्विप्रो ह्यथर्वणवरो मुनिः ॥ ४२ ॥ बृहस्पतिरिति ख्यात अर्थशास्त्रपरश्च यः ॥ शांतेन चेतसा सोपि परेण सुसमाहितः ॥ ४३ ॥ ग्रहपीडां विनिर्जित्य करोतु तव शांतिकम् ॥ सूर्यार्चनपरो नित्यं प्रसादाद्भास्करस्य तु ॥ ४४ ॥ हिमकुंदेंदुवर्णाभो दैत्यदानवपूजितः ॥ महेश्वरस्ततो धीमान्महासौरो महामतिः ॥ ४५ ॥ सूर्यार्चनपरो नित्यं शुक्रः शुक्लनिभस्तदा ॥ नीतिशास्त्रपरो नित्यं ग्रहपीडां व्यपोहतु ॥ ४६ ॥ नानारूपधरोव्यक्त अविज्ञातगतिश्च यः ॥ नोत्पत्तिर्जायते यस्य नोदयपीडितैरपि ॥ ४७ ॥ एकचूलो द्विचूलश्च त्रिशिखः पंचचूलकः ॥ सहस्रशिररूपस्तु चन्द्रकेतुरिव स्थितः ॥४८॥ सूर्यपुत्रोग्निपुत्रस्तु ब्रह्मविष्णुशिवात्मकः ॥ अनेकशिखरः केतुः स ते पीडां व्यपोहतु ॥ ४९ ॥ एते ग्रहा महात्मानः सूर्यार्चनपराः सदा ॥ शांतिं कुर्वंतु ते हृष्टाः सदा कालं हितेक्षणाः ॥ ५० ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु सूर्याग्निकर्मणि पंचसप्तत्युत्तरशततमोऽध्यायः ॥ १७५ ॥ छ ॥ ॥ समंतुरुवाच ॥ ॥ पद्मासनः पद्मवर्णः पद्मपत्रनिभेक्षणः ॥ कमण्डलुधरः श्रीमान्देवगंधर्वपूजितः ॥ १ ॥ चतुर्मुखो देवपतिः सूर्यार्चनपरः सदा ॥ सुरज्येष्ठो महातेजाः सर्वलोकप्रजापतिः ॥ ब्रह्मशब्देन दिव्येन ब्रह्मा शांतिं करोतु ते ॥ २ ॥ पीतांबरधरो देव आत्रेयीदयितः सदा ॥ शंखचक्रगदापाणिः श्यामवर्णश्चतुर्भुजः ॥ ३ ॥ यज्ञदेहः क्रमो देव आत्रेयीदयितः सदा ॥ शंखचक्रगदापाणिर्माधवो मधुसूदनः ॥ ४ ॥ सूर्यभक्तान्वितो नित्यं विगतिर्विगतत्रयः ॥ सूर्यध्यानपरो नित्यं विष्णुः शांतिं करोतु ते ॥ ५ ॥ शशिकुंदेंदुसंकाशो विश्रुताभरणैरिह ॥ चतुर्भुजो महातेजाः पुष्पार्धकृतशेखरः ॥ ६ ॥ चतुर्मुखो भस्मधरः स्मशाननिलयः सदा ॥ गोत्रारिर्विश्वनिलयस्तथा च क्रतुदूषणः ॥ ७ ॥ वरो वरेण्यो वरदो देवदेवो महेश्वरः ॥ आदित्यदेहसंभूतः स ते शांतिं करोतु वै ॥ ८ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु षट्सप्तत्युत्तरशततमोऽध्यायः ॥ १७६ ॥ छ ॥ ॥ अरुण उवाच ॥ ॥ पद्मरागप्रभा देवी चतुर्वदनपंकजा ॥ अक्षमालार्पितकरा कमंड



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लधरा शुभा ॥ १ ॥ ब्रह्माणी सौम्यवदना आदित्याराधने रता ॥ शांतिं करोतु सुप्रीता आशीर्वादपरा खग ॥ २ ॥ महाश्वेतेति विख्याता आदित्यदयिता सदा ॥ हिमकुंदेंदुसदृशा महावृषभवाहिनी ॥ ३ ॥ त्रिशूलहस्तावरणा विश्रुताभरणा सती ॥ चतुर्भुजा चतुर्वक्त्रा त्रिनेत्रा पापनाशिनी॥ वृषध्वजार्चनरता रुद्राणी शांतिदा भवेत् ॥ ४ ॥ मयूरवाहना देवी सिंदूरारुणविग्रहा ॥ शक्तिहस्ता महाकाया सर्वालंकारभूषिता ॥५॥ सूर्यभक्ता महावीर्या सूर्यार्चनरता सदा ॥ कौमारी वरदा देवी शांतिमाशु करोतु ते ॥ ६ ॥ गदाचक्रधरा श्यामा पीतांबरधरा खग ॥ चतुर्भुजा हि सा देवी वैष्णवी सुरपूजिता ॥७॥ सूर्यार्चनपरा नित्यं सूर्यैकगतमानसा ॥ शांतिं करोतु ते नित्यं सर्वासुरविमर्दिनी ॥८॥ ऐरावतगजारूढा वज्रहस्ता महाबला ॥ सर्वत्रलोचना देवी वर्णतः कर्बुरारुणा ॥ ९ ॥ सिद्धगंधर्वनमिता सर्वालंकारभूषिता ॥ इंद्राणी ते सदा देवी शांतिमाशु करोतु वै ॥ १० ॥ वराहघोणा विकटा वराहवरवाहिनी ॥ श्यामावदाता या देवी शंखचक्रगदाधरा ॥ ११ ॥ तेजयंतीति निमिषान्पूजयंती सदा रविम् ॥ वाराही वरदा देवी तव शांतिं करोतु वै ॥ १२ ॥ अर्धकोशा कटीक्षामा निर्मांसा स्नायुबंधनात् ॥ करालवना घोरा खड्गघंटोद्भता सती ॥ १३ ॥ कपालमालिनी क्रूरा खट्वांगवरधारिणी ॥ आरक्ता पिंगनयना गजचर्मावगुंठिता ॥ १४ ॥ गोश्रुताभरणा देवी प्रेतस्थाननिवासिनी ॥ शिवारूपेण घोरेण शिवरूपभयंकरी ॥ चामुंडा चंडरूपेण सदा शांतिं करोतु ते ॥ १५ ॥ चंडमुंडकरा देवी मुंडदेहगता सती ॥ कपालमालिनी क्रूरा खट्वांगवरधारिणी ॥ १६ ॥ आकाशमातरो देव्यस्तथान्या लोकमातरः ॥ भूतानां मातरः सर्वास्तथान्याः पितृमातरः ॥ १७ ॥ वृद्धिश्राद्धेषु पूज्यंते यास्तु देव्यो मनीषिभिः ॥ मात्रे प्रमात्रे तन्मात्रे इति मातृमुखास्तथा ॥ १८ ॥ पितामही तु तन्माता वृद्धा या च पितामही ॥ इत्येतास्तु पितामह्यः शांतिं ते पितृमातरः ॥ १९ ॥ सर्वा मातृमहादेव्यः स्वायुधाव्यग्रपाणयः ॥ जगद्व्याप्य प्रतिष्ठंत्यो बलिकामा महोदयाः ॥ २० ॥ शांतिं कुर्वंतु ता नित्यमादित्याराधने रताः ॥ शांतेन चेतसा शांत्यः शांतये तव शांतिदा ॥ २१ ॥ सर्वावयवमुख्येन गात्रेण च सुमध्यमा ॥ पीतश्यामातिसौम्येन स्निग्धवर्णेन शोभना ॥ २२ ॥ ललाटतिलकोपेताचंद्ररेखार्धधारिणी ॥ चित्रांबरधरा देवी सर्वाभरणभूषिता ॥ २३ ॥ वरा स्त्रीमयरूपाणां शोभा गुणसुसम्पदा ॥ भावनामात्रसंतुष्टा उमा देवी वरप्रदा ॥२४॥ साक्षादागत्य रूपेण शांतेनामिततेजसा ॥ शांतिं करोतु ते प्रीता आदित्याराधने रता ॥ २५ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु दशमुखे अग्निकार्यविधौ सप्तसप्तत्युत्तरशततमोऽध्यायः ॥ ॥ १७७ ॥ ॥ अरुण उवाच ॥ ॥ अबलो बालरूपेण खट्वांगशिखिवाहनः ॥ पूर्वेण वदनः श्रीमांस्त्रिशिखः शक्तिसंयुतः ॥ १ ॥ कृत्तिकायाश्च



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रुद्रस्य चांगोद्भूतः सुरार्चितः ॥ कार्तिकेयो महातेजा आदित्यवरदर्पितः ॥ शांतिं करोतु ते नित्यं बलं सौख्यं च तेजसा ॥ २ ॥ आत्रेयीबलवान्देव आरोग्यं च खगाधिप ॥ श्वेतवस्त्रपरीधानरूयक्षः कनकसुप्रभः ॥ ३ ॥ शूलहस्तो महाप्राज्ञो नंदीशो रविभावितः ॥ शांतिंकरो तु ते शान्तो धर्मे च मतिमुत्तमाम् ॥ ४ ॥ धर्मेतरावुभौ नित्यमचलः संप्रयच्छतु ॥ महोदरो महाकायः स्निग्धांजनसमप्रभः ॥ ५ ॥ एकदंष्ट्रोत्कटो देवो गजवक्त्रो महाबलः ॥ नागयज्ञोपवीतेन नानाभरणभूषितः ॥६॥ सर्वार्थसंपदोद्धारो गणाध्यक्षो वरप्रदः ॥ भीमस्य तनयो देवो नायकोथ विनायकः ॥ करोतु ते महाशांतिं भास्करार्चनतत्परः ॥ ७ ॥ इंद्रनीलनिभरूयक्षो दीप्तशूलायुधोद्यतः ॥ रक्तांबरधरः श्रीमान्कृष्णांगो नागभूषणः ॥ ८ ॥ पापापनोदमतुलमलक्ष्यो मलनाशनः ॥ करोतु ते महाशांतिं प्रीतः प्रीतेन चेतसा ॥ ९ ॥ वरांबरधरा कन्या नानालंकारभूषिता ॥ त्रिदशानां च जननी पुण्या लोकनमस्कृता ॥ १० ॥ सर्वसिद्धिकरा देवी प्रसादपरमास्पदा ॥ शांतिं करोतु ते माता भुवनस्य खगाधिप ॥ ११ ॥ स्निग्धश्यामेन वर्णेन महामहिषमर्दनी ॥ धनुश्चक्रप्रहरणा खङ्गपट्टिशधारिणी ॥ १२ ॥ आतर्जन्यायतकरा सर्वोपद्रवनाशिनी ॥ शांतिं करोतु ते दुर्गा भवानी च शिवा तथा ॥ १३ ॥ अतिसूक्ष्मो ह्यतिक्रोधरूयक्षो भृंगिरिटिर्महान् ॥ सूर्यात्मको महावीरः सूर्यैकगतमानसः ॥ सूर्यभक्तिकरो नित्यं शिवं ते संप्रयच्छतु ॥ १४ ॥ प्रचंडगणसैन्येशो महाघंटाक्षधारकः ॥ अक्षमालार्पितकरश्चाक्षचंडेश्वरो वरः ॥ १५ ॥ चंडपापहरो नित्यं ब्रह्महत्याविनाशनः ॥ शांतिं करोतु ते नित्यमादित्याराधने रतः ॥ करोति च महायोगी कल्याणानां परंपराम् ॥ १६ ॥ आकाशमातरो दिव्यास्तथान्या देवमातरः ॥ सूर्यायणपरा देव्यो जगद्व्याप्य व्यवस्थिताः ॥ शांतिं कुर्वंतु मे नित्यं मातरः सुरपूजिताः ॥ १७ ॥ ये रुद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ॥ मातरो रुद्ररूपाश्च गणानामधिपाश्च ये ॥ १८ ॥ विघ्नभूतास्तथा चान्ये दिग्विदिक्षु समाश्रिताः ॥ सर्वे ते प्रीतमनसः प्रतिगृह्णंतु मे बलिम् ॥ सिद्धिं कुर्वंतु ते नित्यं भयेभ्यः पांतु सर्वतः ॥ १९ ॥ ऐंद्रादयो गणा ये तु वज्रहस्ता महाबलाः ॥ हिमकुन्देंदुसदृशा नीलकृष्णांगलोहिताः ॥ २० ॥ दिव्यांतरिक्षा भौमाश्च पातालतलवासिनः ॥ ऐंद्राः शांतिं प्रकुर्वंतु भद्राणि च पुनः पुनः ॥ २१ ॥ आग्नेय्यां ये भृताः सर्वे ध्रुवहत्यानुषंगिणः ॥ सूर्यानुरक्ता रक्ताभा जपासुमनिभास्तथा ॥ २२ ॥ विरक्तलोहिता दिव्या आग्नेय्यां भास्करादयः ॥ आदित्याराधनपरा आदित्यगतमानसाः ॥ २३ ॥ शांतिं कुर्वंतु ते नित्यं प्रयच्छंतु बलिं मम ॥ भंयाऽऽदित्यसमा ये तु सततं दण्डपाणयः ॥

१ प्रभयेत्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आदित्याराधनपराः कं प्रयच्छंतु ते सदा ॥ २४ ॥ ऐशान्यां संस्थिता ये तु प्रशांताः शूलपाणयः ॥ भस्मोद्धूलितदेहाश्च नीलकण्ठा विलोहिताः ॥ २५ ॥ दिव्यांतरिक्षा भौमाश्च पातालतलवासिनः ॥ सूर्यपूजाकरा नित्यं पूजयित्वांशुमालिनम् ॥ २६ ॥ ततः सुप्रीतमनसो लोकपालैः समन्विताः ॥ शांतिं कुर्वंतु मे नित्यं कं प्रयच्छंतु पूजिताः ॥२७॥ अमरावती पुरी नाम पूर्वभागे व्यवस्थिता ॥ विद्याधरगणाकीर्णा सिद्धगन्धर्वसेविता ॥२८॥ रत्नप्राकाररुचिरा महारत्नोपशोभिता ॥ तत्र देवपतिः श्रीमान्वज्रपाणिर्महाबलः ॥ गोपतिर्गोसहस्रेण शोभमानेन शोभते ॥२९॥ ऐरावतगजारूढो गैरिकाभो महाद्युतिः॥देवेंद्रः सततं हृष्ट आदित्याराधने रतः ॥ ३० ॥ सूर्यज्ञानैकपरमः सूर्यभक्तिसमन्वितः ॥ सूर्यप्रणामः परमां शांतिं तेऽद्य प्रयच्छतु ॥ ३१ ॥ आग्नेयदिग्विभागे तु पुरी तेजस्वती शुभा ॥ नानादेवगणाकीर्णा नानारत्नोपशोभिता ॥ ३२ ॥ तत्र ज्वालासमाकीर्णो दीप्तांगारसमद्युतिः ॥ पुरगो दहनो देवो ज्वलनः पापनाशनः ॥ ३३ ॥ आदित्याराधनरत आदित्यगतमानसः ॥ शांतिं करोतु ते देवस्तथा पापपरिक्षयम् ॥ ३४ ॥ वैवस्वती पुरी रम्या दक्षिणेन महात्मनः ॥ सुरासुरशताकीर्णा नानारत्नोपशोभिता ॥३५॥ तत्र कुन्देंदुसंकाशो हरिपिंगललोचनः ॥ महामहिषमारूढः कृष्णस्रग्वस्त्रभूषणः ॥ ३६ ॥ अन्तकोऽथ महातेजाः सूर्यधर्मपरायणः ॥ आदित्याराधनपरः क्षेमारोग्ये ददातु ते ॥ ३७ ॥ नैर्ऋते दिग्विभागे तु पुरी कृष्णेति विश्रुता ॥ मोहरक्षोगणाशौचपिशाचप्रेतसंकुला ॥ ३८ ॥ तत्र कुन्दनिभो देवो रक्तस्रग्वस्त्रभूषणः ॥ खड्गपाणिर्महातेजाः करालवदनोज्ज्वलः ॥ ३९ ॥ रक्षेंद्रो वसते नित्यमादित्याराधने रतः ॥ करोतु मे सदा शांतिं धनं धान्यं प्रयच्छतु ॥ ४० ॥ पश्चिमे तु दिशो भागे पुरी शुद्धवती सदा ॥ नानाभोगिसमाकीर्णा नानाकिन्नरसेविता ॥ ४१ ॥ तत्र कुन्देंदुसंकाशो हरिपिंगललोचनः ॥ शांतिं करोतु मे प्रीतः शांतः शांतेन चेतसा ॥ ४२ ॥ यशोवती पुरी रम्या ऐशानीं दिशमाश्रिता ॥ नानागणसमाकीर्णा नानाकृतशुभालया ॥ तेजःप्राकारपर्यंता अनौपम्या सदोज्ज्वला ॥ ४३ ॥ तत्र कुंदेंदुसंकाशश्चांबुजाक्षो विभूषितः ॥ त्रिनेत्रः शांतरूपात्मा अक्षमालाधराधरः ॥ ईशानः परमो देवः सदा शांतिं प्रयच्छतु ॥ ४४ ॥ भूलोके तु भुवर्लोके निवसंति च ये सदा ॥ देवादेवाः शुभायुक्ताः शांतिं कुर्वंतु ते सदा ॥ ४५ ॥ महर्लोके जनोलोके परलोके गताश्च ये ॥ ते सर्वे मुदिता देवाः शांतिं कुर्वंतु ते सदा ॥ ४६ ॥ सरस्वती सूर्यभक्ता शांतिदा विदधातु मे ॥ चारुचामीकरस्था या सरोजकरपल्लवा ॥ सूर्यभक्त्याश्रिता देवी विभूतिं ते प्रयच्छतु ॥ ४७ ॥ हरेण सुविचित्रेण भास्वत्कनक

१ धरसुवर्णावनुरस्थेत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेखला ॥ अपराजिता सूर्यभक्ता करोतु विजयं तव ॥ ४८ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मवर्णनं नामाष्टसप्तत्युत्तरशततमोऽध्यायः ॥ १७८ ॥ ॥ छ ॥ ॥ अरुण उवाच ॥ ॥ कृत्तिका परमा देवी रोहिणी च वरानना ॥ श्रीमन्मृगशिरो भद्रा आर्द्रा चाप्यपरोज्वला ॥ १ ॥ पुनर्वसुस्तथा पुष्य आश्लेषा च तथाधिप ॥ सूर्यार्चनरता नित्यं सूर्यभावानुभाविताः ॥ २ ॥ अर्चयंति सदा देवमादित्यं सुरते सदा ॥ नक्षत्रमातरो ह्येताः प्रभामालाविभूषिताः ॥ ३ ॥ मघा सर्वगुणोपेता पूर्वा चैव तु फाल्गुनी ॥ स्वाती विशाखा वरदा दक्षिणां दिशमाश्रिताः ॥ ४ ॥ अर्चयंति सदा देवमादित्यं सुरपूजितम् ॥ तवापि शांतिकं ह्येतं कुर्वंतु गगनोदिताः ॥ ५ ॥ अनुराधा तथा ज्येष्ठा मूलं सूर्यपुरःसरा ॥ पूर्वाषाढा महावीर्या आषाढा चोत्तरा तथा ॥ ६ ॥ अभिजिन्नाम नक्षत्रं श्रवणं च बहुश्रुतम् ॥ एताः पश्चिमतो दीप्ता राजंते चानुमूर्तयः ॥ ७ ॥ भास्करं पूजयंत्येताः सर्वकालं सुभाविताः ॥ शांतिं कुर्वंतु ते नित्यं विभूतिं च महर्द्धिकाम् ॥८॥ धनिष्ठा शतभिषा तु पूर्वभाद्रपदा तथा ॥ ९ ॥ उत्तरा भाद्ररेवत्यौ चाश्विनी च महामते ॥ भरणी च महादेवी नित्यमुत्तरतः स्थिताः ॥ १० ॥ सूर्यार्चनरता नित्यमादित्यगतमानसाः ॥ शांतिं कुर्वंतु ते नित्यं विभूतिं च महर्द्धिकाम् ॥ ११ ॥ मेषो मृगाधिपः सिंहो धनुर्दीप्तिमतां वरः ॥ पूर्वेण भासयंत्येते सूर्ययोगपराः शुभाः ॥ शांतिं कुर्वंतु ते नित्यं भक्त्या सूर्यपदांबुजे ॥ १२ ॥ वृषः कन्या च परमा मकरश्चापि बुद्धिमान् ॥ एते दक्षिणभागे तु पूजयंति रविं सदा ॥ भक्त्या परमया नित्यं शांतिं कुवतु ते सदा ॥१३॥ मिथुनं च तुला कुंभः पश्चिमे च व्यवस्थिताः ॥ जपंत्येते सदाकालमादित्यं ग्रहनायकम् ॥ १४ ॥ शांतिं कुर्वंतु ते नित्यं खखोल्काज्ञानतत्पराः ॥ सतपोदत्तपुण्याभ्यां ये स्मृता सततं बुधैः ॥ १५ ॥ ऋषयः सप्त विख्याता ध्रुवांताः परमोज्वलाः ॥ भानुप्रसादात्संपन्नाः शांतिं कुर्वंतु ते सदा ॥ १६ ॥ कश्यपो गालवो गार्ग्यो विश्वामित्रो महामुनिः ॥ मुनिर्दक्षो वशिष्ठश्च मार्कण्डः पुलहः क्रतुः ॥ १७ ॥ नारदो भृगुरात्रेयो भारद्वाजश्च वै मुनिः ॥ वाल्मीकिः कौशिको वात्स्यः शाकल्योऽथ पुनर्वसुः ॥ १८ ॥ शालंकायन इत्येते ऋषयोऽथ महातपाः ॥ सूर्यध्यानैकपरमाः शातिं कुर्वंतु ते सदा ॥ १९ ॥ मुनिकन्या महाभागा ऋषिकन्याः कुमारिकाः ॥ सूर्यार्चनरता नित्यं शांतिं कुर्वंतु ते सदा ॥ २० ॥ सिद्धाः समृद्धतपसो ये चान्ये वै महातपाः ॥ विद्याधरा महात्मानो गरुडश्च त्वया सह ॥ २१ ॥ आदित्यपरमा ह्येते आदित्याराधने रताः ॥ सिद्धिं ते संप्रयच्छंतु आशीर्वादपरायणाः ॥ २२ ॥ नमुचिर्दैत्यराजेंद्रः शंकुकर्णो महाबलः ॥ महानाथोऽथ विख्यातो दैत्यः परमवीर्यवान् ॥ २३ ॥ ग्रहाधिपस्य देवस्य नित्यं पूजापरायणाः ॥ बलं वीर्यं च ते ऋद्धिमारोग्यं च ददंतु ते ॥२४॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महाद्यो यो हयग्रीवः प्रह्लादः प्रभयान्वितः ॥ तानैकाग्निमुखो दैत्यः कालनेमिर्महाबलः ॥ २५ ॥ एते दैत्या महात्मानः सूर्यभावेन भाविताः ॥ तुष्टिं बलं तथाऽऽरोग्यं प्रयच्छंतु सुरारयः ॥ २६ ॥ वैरोचनो हिरण्याक्षस्तुर्वसुश्च सुलोचनः ॥ मुचकुंदो मुकुंदश्च दैत्यो रैवतकस्तथा ॥२७॥ भावेन परमेणेमं यजंते सततं रविम् ॥ सततं च शुभात्मानः पुष्टिं कुर्वंतु ते सदा ॥ २८ ॥ दैत्यपत्न्यो महाभागा दैत्यानां कन्यकाः शुभाः ॥ कुमारा ये च दैत्यानां शांतिं कुर्वंतु ते सदा ॥ २९ ॥ आरक्तेन शरीरेण रक्तांतायतलोचनाः ॥ महाभागाः कृताटोपाः शंखाद्याः कृतलक्षणाः ॥ ३० ॥ अनंतो नागराजेंद्र आदित्याराधने रतः ॥ महापापविषं हत्वा शांतिमाशु करोतु ते ॥ ३१ ॥ अतिपीतेन देहेन विस्फुरद्भोगसंपदा ॥ तेजसा चातिदीप्तेन कृतस्वस्तिकलांछनः ॥ ३२ ॥ नागराट् तक्षकः श्रीमान्नामकोव्या समन्वितः ॥ करोतु ते महाशांतिं सर्वदोषविषापहाम् ॥ ३३ ॥ अतिकृष्णेन वर्णेन स्फुटाधिकटमस्तकः ॥ कंठरेखात्रयोपेतो घोरदंष्ट्रायुधोद्यतः ॥ ३४ ॥ कर्कोटको महानागो विषदर्पबलान्वितः ॥ विषशस्त्राग्निसंतापं हत्वा शांतिं करोतु ते ॥ ३५ ॥ पद्मवर्णः पद्मकान्तिः फुल्लपद्मायतेक्षणः ॥ ख्यातः पद्मो महानागो नित्यं भास्करपूजकः ॥ ३६ ॥ स ते शांतिं शुभं शीघ्रमचलं संप्रयच्छतु ॥ श्यामेन देहभारेण श्रीमत्कमललोचनः ॥ ३७ ॥ विषदर्पबलोन्मत्तो ग्रीवायां रेखयान्वितः ॥ शंखपालश्रिया दीप्तः सूर्यपादाब्जपूजकः ॥ ३८ ॥ महाविषं गरश्रेष्ठं हत्वा शांतिं करोतु ते ॥ अतिगौरेण देहेन चंद्रार्धकृतशेखरः ॥ ३९ ॥ दीपभागे कृताटोपशुभलक्षणलक्षितः ॥ कुलिको नाम नागेन्द्रो नित्यं सूर्यपरायणः ॥ अपहृत्य विषं घोरं करोतु तव शांतिकम् ॥ ४० ॥ अंतरिक्षे च ये नागा ये नागाः स्वर्गसंस्थिताः ॥ गिरिकंदरदुर्गेषु ये नागा भुवि संस्थिताः ॥ ४१ ॥ पाताले ये स्थिता नागाः सर्वे यत्र समाहिताः ॥ सूर्यपादार्चनासक्ताः शांतिं कुर्वंतु ते सदा ॥४२॥ नागिन्यो नागकन्याश्च तथा नागकुमारकाः ॥ सूर्यभक्ताः सुमनसः शांतिं कुर्वंतु ते सदा ॥४३॥ य इदं नामसंस्थानं कीर्तयेच्छृणुयात्तथा ॥ न तं सर्पा विहिंसंति न विषं क्रमते सदा ॥ ४४ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मवर्णनं नामैकोनाशीत्युत्तरशततमोऽध्यायः ॥१७९॥ ॥ गंगा पुण्या महादेवी यमुना नर्मदा नदी ॥ गौतमी चापि कावेरी वरुणा,देविका तथा ॥ ॥१॥ सर्वग्रहपतिं देवं लोकेशं लोकनायकम् ॥ पूजयंति सदा नद्यः सूर्यसद्भावभाविताः ॥ शांतिं कुर्वंतु ते नित्यं सूर्यध्यानैकमानसाः ॥२॥ निरंजना नाम नदी शोणश्चापि महानदः ॥ मंदाकिनी च परमा तथा सन्निहिता शुभा ॥३॥ एताश्चान्याश्च बहवो भुवि दिव्यंतरिक्षके ॥ सूर्यार्चनरता नद्यः कुर्वंतु तव शांतिकम् ॥४॥ महावैश्रवणो देवो यक्षराजो महर्धिकः ॥ यक्षकोटिपरीवारो यक्षसंख्येयसंयुतः ॥५॥ महाविभवसंपन्नः सूर्यपादार्चने रतः ॥ सूर्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्यानैकपरमः सूर्यभावेन भावितः॥६॥शांतिं करोतु ते प्रीतः पद्मपत्रायतेक्षणः ॥ माणिभद्रो महायक्षो मणिरत्नविभूषितः ॥७॥ मनोहरेण हारेण कंठलग्नेन राजते ॥ यक्षिणीयक्षकन्याभिः परिवारितविग्रहः ॥ सूर्यार्चनसमासक्तः करोतु तव शांतिकम् ॥८॥ सुचिरो नाम यक्षेंद्रो मणिकुंडल भूषितः ॥ ललाटे हेमपटलप्रबद्धेन विराजते ॥ ९ ॥ बहुयक्षसमाकीर्णो यक्षैर्नमितविग्रहः ॥ सूर्यपूजापरो युक्तः करोतु तव शांतिकम् ॥ १० ॥ पांचिको नाम यक्षेंद्रः कंठाभरणभूषितः ॥ कुक्कुटेन विचित्रेण बहुरत्नान्वितेन तु ॥ ११ ॥ यक्षवृन्दसमाकीर्णो यक्षकोटिसमन्वितः ॥ सूर्यार्चन करः श्रीमान्करोतु तव शांतिकम् ॥ १२ ॥ धृतराष्ट्रो महातेजा नानायक्षाधिपः खग ॥ दिव्यपट्टः शुक्लच्छत्रो मणिकांचनभूषितः ॥ १३ ॥ सूर्य भक्तः सूर्यरतः सूर्यपूजापरायणः ॥ सूर्यप्रसादसंपन्नः करोतु तव शांतिकम् ॥ १४ ॥ विरूपाक्षश्च यक्षेंद्रः श्वेतवासा महाद्युतिः ॥ नानाकांचनमा लाभिरुपशोभितकंधरः ॥ १५ ॥ सूर्यपूजापरो भक्तः कंजाक्षः कंजसन्निभः ॥ तेजसादित्यसंकाशः करोतु तव शांतिकम् ॥ १६ ॥ अंतरिक्षगता यक्षा ये यक्षाः स्वर्गगामिनः ॥ नानारूपधरा यक्षाः सूर्यभक्ता दृढव्रताः ॥ १७ ॥ तद्भक्तास्तद्गमनसः सूर्यपूजासमुत्सुकाः ॥ शांतिं कुर्वंतु ते हृष्टाः शांताः शांतिपरायणाः ॥ १८ ॥ यक्षिण्यो विविधाकारास्तथा यक्षकुमारकाः ॥ यक्षकन्या महाभागाः सूर्याराधनतत्पराः ॥ १९ ॥ शांतिं स्व स्त्ययनं क्षेमं बलं कल्याणमुत्तमम् ॥ सिद्धिं चाशु प्रयच्छंतु नित्यं च सुसमाहिताः ॥ २० ॥ पर्वताः सर्वतः सर्वे वृक्षाश्चैव महर्द्धिकाः ॥ सूर्यभ क्ताः सदा सर्वे शांतिं कुर्वंतु ते सदा ॥ २१ ॥ सागराः सर्वतः सर्वे गृहारण्यानि कृत्स्नशः ॥ सूर्यस्याराधनपराः कुर्वंतु तव शांतिकम् ॥ २२ ॥ राक्षसाः सर्वतः सर्वे घोररूपा महाबलाः ॥ स्थलजा राक्षसा ये तु अंतरिक्षगताश्च ये ॥२३॥ पाताले राक्षसा ये तु नित्यं सूर्यार्चने रताः ॥ शांतिं कुर्वंतु ते सर्वे तेजसा नित्यदीपिताः ॥ २४ ॥ प्रेताः प्रेतगणाः सर्वे ये प्रेताः सर्वतोमुखाः ॥ अतिदीप्ताश्च ये प्रेता ये प्रेता रुधिराशनाः ॥२५॥ अंतरिक्षे च ये प्रेतास्तथा ये स्वर्गवासिनः ॥ पाताले भूतले वापि ये प्रेताः कामरूपिणः ॥ २६ ॥ एकचक्रो रथो यस्य यस्तु देवो वृषध्वजः ॥ तेजसा तस्य देवस्य शांतिं कुर्वंतु ते सदा ॥२७॥ ये पिशाचा महावीर्या वृद्धिमंतो महाबलाः ॥ नानारूपधराः सर्वे सर्वे च गुणवत्तराः ॥२८॥ अंतरिक्षे पिशाचा ये स्वर्गे ये च महाबलाः ॥ पाताले भूतले ये च बहुरूपा मनोजवाः ॥ २९ ॥ यस्याहं सारथिर्वीर यस्य त्वं तुरगः सदा ॥ ते जसा तस्य देवस्य शांतिं कुर्वंतु तेऽञ्जसा ॥ ३० ॥ अपस्मारग्रहाः सर्वे सर्वे चापि ज्वरग्रहाः ॥ ये च स्वर्गस्थिताः सर्वे भूमिगा ये ग्रहोत्तमाः ॥ ॥ ३१ ॥ पाताले तु ग्रहा ये च येग्रहाः सर्वतो गताः ॥ दक्षिणे किरणे यस्य सूर्यस्य च स्थितो हरिः ॥ ३२ ॥ हरो यस्य सदा वामे ललाटे कंज



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जः स्थितः ॥ तेजसा तस्य देवस्य शांतिं कुर्वंतु ते सदा ॥ ३३ ॥ इति देवादयः सर्वे सूर्ययज्ञविधायिनः ॥ कुर्वंतु जगतः शांतिं सूर्यभक्तेषु सर्वदा ॥ ३४ ॥ जयःसूर्याय देवाय तमोहंत्रे विवस्वते ॥ जयप्रदाय सूर्याय भास्कराय नमोस्तु ते ॥ ३५ ॥ ग्रहोत्तमाय देवाय जयः कल्याणकारिणे ॥ जयः पद्मविकाशाय बुधरूपाय ते नमः ॥ ३६ ॥ जयः दीप्तिविधानाय जयः शांतिविधायिने ॥ तमोघ्नाय जयायैव अजिताय नमोनमः ॥३७॥ जयार्क जयदीप्तीश सहस्रकिरणोज्ज्वल ॥ जय निर्मितलोकस्त्वमजिताय नमोनमः ॥ ३८ ॥ गायत्रीदेहरूपाय सावित्रीदयिताय च ॥ धराधराय सूर्याय मार्तंडाय नमोनमः ॥ ३९ ॥ सुमंतुरुवाच ॥ एवं हि कुर्वतः शांतिमरुणस्य महीपते ॥ श्रेयसे वैनतेयस्य गरुडस्य महात्मनः ॥ ४० ॥ एतस्मिन्नेव काले तु सुपर्णः पत्रवानभूत् ॥ तेजसा बुधसंकाशो बलेन हरिणा समः ॥ ४१ ॥ संपूर्णावयवो राजन्यथापूर्वं तथाभवत् ॥ प्रसादाद्देवदेवस्य भास्करस्य महात्मनः ॥ ४२ ॥ एवमन्येऽपि राजेंद्र मानवा ये च रोगिणः ॥ अस्मिन्कृतेऽग्निकार्ये तु विरुजास्ते भवंति हि ॥ तस्माद्यत्नेन कर्तव्यमग्निकार्यं विधानतः ॥ ४३ ॥ करणीयं च राजेंद्र मानवैश्च प्ररोगिभिः ॥ अस्मिन्कृते अग्निकार्ये विरुजास्ते भवंति हि ॥ ४४ ॥ ग्रहोपघाते दुर्भिक्ष उत्पातेषु च कृत्स्नशः ॥ अवर्षमाणे पर्जन्ये लक्षहोमसमन्वितः ॥ ४५ ॥ पूजयित्वा प्रसूक्तं तु ध्यात्वा वीरं प्रयत्नतः ॥ वारुणैश्च तथा सूक्तैर्होमं कुर्याद्विचक्षणः ॥ ४६ ॥ चेतसा सुप्रसन्नेन सर्पिषा मधुना सह ॥ तिलैर्यवैश्च सहितैः पायसं मधुना तथा ॥ ४७ ॥ इदं च शांतिकं कुर्याद्बलिं दद्यात्प्रयत्नतः ॥ एवं कृते श्रियं देवा वर्षंते कामना नृणाम् ॥ ४८ ॥ इत्येवं शांतिकाध्यायं यः पठेच्छृणुयादपि ॥ विधिना सत्रलोकस्तु ध्यायमानो दिवाकरम् ॥ ४९ ॥ स विजित्य रणे शत्रुं मानं च परमं लभेत् ॥ अक्षयं मोदते कालमतिरस्कृतशासनः ॥ ५० ॥ व्याधिभिर्नाभिभूयेत पुत्रपौत्रैः प्रतिष्ठितः ॥ भवेदादित्यसदृशस्तेजसा प्रभया तथा ॥ ५१ ॥ यात्तुद्दिश्य पठेद्वीर वाचको मानवो भुवि ॥ न पीड्यते च तै रोगैर्वातपित्तकफात्मकैः ॥ ५२ ॥ नाकाले मरणं तस्य न सर्पैश्चापि दश्यते ॥ न विषं क्रमते देहे न जडांध्यं न मूकता ॥ ५३ ॥ न चोत्पत्तिभयं तस्य नाभिचारकजं भवेत् ॥ ये रोगा ये महोत्पाता येऽहयश्च महाविषाः ॥ ते सर्वे प्रशमं यांति श्रवणादस्य भारत ॥ ५४ ॥ यत्पुण्यं सर्वतीर्थानां गंगादीनां विशेषतः ॥ तत्पुण्यं कोटिगुणितं प्राप्नोति श्रवणादिभिः ॥ ५५ ॥ दशानां राजसूयानामन्येषां च विशेषतः ॥ जीवेद्वर्षशतं साग्रं सर्वव्याधिविवर्जितः ॥ ५६ ॥ गोघ्नश्चैव कृतघ्नश्च ब्रह्महा गुरुतल्पगः ॥ शरणागतदीनार्तमित्रविश्रंभघातकः ॥ ५७ ॥ दुष्टः पापसमाचारः पितृहा मातृहा तथा ॥ श्रवणादस्य पापेभ्यो मुच्यते नात्र संशयः ॥ ५८ ॥ इतिहासमिमं पुण्यमग्निकार्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनुत्तमम् ॥ न दद्यात्कस्यचिद्वीर मूर्खस्य कलुषात्मनः ॥ ५९ ॥ सूर्यभक्ते सदा देयं सूर्येण कथितं पुरा ॥ अरुणस्य महाबाहो गरुडस्यारुणेन च ॥ ६० ॥ गरुडेन पुरा प्रोक्तं भोजकानां महात्मनाम् ॥ सूर्यशर्मसुखादीनां शाकद्वीपे महीपते ॥ ६१ ॥ तैश्चापि कथितं पुण्यं मुनेर्व्यासस्य धीमतः ॥ तेनापि कथितं पुण्यं सर्वपापभयापहम् ॥ ६२ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे गरुडारुणसंवादे शांतिकवर्णनं नामाशीत्युत्तरशततमोऽध्यायः ॥ १८० ॥ छ ॥ ॥ शतानीक उवाच[1] ॥ ॥ पंचप्रकारं धर्मं मे वद स्मार्तं[2] यथाक्रमम् ॥ कौतुकं पृच्छते ब्रह्मन्समासव्यासयोगतः ॥ १ ॥ ॥ सुमन्तरुवाच ॥ ॥ पंचधा वर्णितं धर्मं शृणु राजन्समासतः ॥ यथोक्तं भास्करेणेह अरुणस्य महात्मनः ॥ २ ॥ सहस्रकिरणं भानुमुदयस्थं दिवाकरम् ॥ प्रणम्य शिरसा देवमुवाच गरुडाग्रजः ॥ ३ ॥ भगवन्देवदेवेश सहस्रकिरणोज्ज्वल ॥ स्मृतिधर्मान्यथातत्त्वं वक्तुमर्हसि पृच्छतः ॥ ४ ॥ एवं पृष्टस्तु भगवानरुणेन खगाधिपः ॥ उवाच परया प्रीत्या पूजयित्वा महीपते ॥ ५ ॥ ॥ ॥ भास्कर उवाच ॥ ॥ स्मृतिधर्मं वेदमूलं शृणु त्वं गरुडाग्रज ॥ पूर्वानुभूतं यद्ध्यानमथ तत्स्मरणं स्मृतिः ॥ ६ ॥ धर्मः क्रियात्मा निर्दिष्टः श्रेयोभ्युदयलक्षणः ॥ स च पञ्चविधः प्रोक्तो वेदमूलः सनातनः ॥ ७ ॥ अस्य शब्दस्यानुष्ठानात्स्वर्गो मोक्षश्च जायते ॥ इह लोके सुखैश्वर्यमलं यच्च खगाधिप ॥ ८ ॥ ॥ अनूरुरुवाच ॥ ॥ कथं पंचविधो ह्येष प्रोक्तो धर्मः सनातनः ॥ कस्य भेदास्तु ते पंच ब्रूहि मे देवसत्तम ॥ ९ ॥ ॥ ॥ भास्कर उवाच ॥ ॥ वेदधर्मः स्मृतस्त्वेक आश्रमाणां स तत्परः ॥ वर्णाश्रमस्तृतीयस्तु गुणनैमित्तिको यथा ॥ १० ॥ वर्णत्वमेकमाश्रित्य अधिकारे प्रवर्तते ॥ सवर्णाश्रमदंडस्तु भिक्षा दंडादिको यथा ॥११॥ वर्णाश्रमाश्रमत्वं च योधिकृत्य प्रवर्तते ॥ स वर्णाश्रमधर्मस्तु दंडाद्या मेखला यथा ॥१२॥ यो गुणेन प्रवर्तेत स गुणो धर्म उच्यते ॥ यथा मूर्धाभिषिक्तस्य प्रजानां पालनं परम् ॥१३॥ निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते ॥ नैमित्तिकः स विज्ञेयो जातिद्रव्यगुणाश्रयः ॥१४॥ एष तु द्विविधः प्रोक्तः समासादविशेषतः ॥ नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥ १५ ॥ स चतुर्धा निरूप्यस्तु स्वरूपफलसाधनैः ॥ प्रमाणतस्तु प्रत्येकं समस्तैश्च यथाक्रमम् ॥ १६ ॥ श्रुत्या सह विरोधे तु बाध्यते विषयं विना ॥ व्यवस्थया विरोधेन कार्यो यत्नः परीक्ष्यते ॥१७॥ स्मृत्या सह विरोधेन चार्थशास्त्रस्य साधनम् ॥ परस्परविरोधे तु अर्थशास्त्रस्य साधनम् ॥१८॥ अदृष्टार्थे विकल्पस्तु व्यवस्थासंभवे सति ॥ स्मृतिशास्त्रविकल्पस्तु आकांक्षापूरणे सति ॥ १९ ॥ वेदमूले स्थितं त्वेतदनुष्ठानं क्रिया

१ कौतुकं पृच्छते मह्यं संक्षेपविस्तारयोगात्कथयेत्यर्थः । पृच्छते इति चतुर्थ्येकवचनान्तम् । २ अद्वेशः इत्यर्थः । ३ धर्मशब्दवाच्यस्येत्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सती ॥ एवं शक्यविधानं तु न्यायो ह्येवं व्यवस्थितः ॥ २० ॥ निषेधविधिरूपं तु द्विधा शास्त्रं खगाधिप ॥ एकरूपं वदंत्यन्ये बहुरूपमथा परे ॥ २१ ॥ पंचप्रकाराः स्मृतय एवं शिष्यव्यवस्थिताः ॥ त्रिधा चतुर्धा द्वेधा वा एकधा बहुधा खग ॥ २२ ॥ दृष्टार्था तु स्मृतिः काचिददृष्टार्था तथापरा ॥ अनुवादस्मृतिस्त्वन्या दृष्टादृष्टा तु पंचमी ॥ सर्वा एता वेदमूलाः स्मृता वै ऋषिभिः स्वयम् ॥ २३ ॥ ॥ ॥ अरुण उवाच ॥ ॥ या एता भवता प्रोक्ताः स्मृतयः पर्वगोपने ॥ एतासां लक्षणं ब्रूहि समासादेव सत्तम ॥ २४ ॥ दृष्टार्था का मता देव अदृष्टार्था च का भवेत ॥ दृष्टादृष्टस्वरूपा का न्यायमूला च का भवेत् ॥ अनुवादस्मृतिः का स्याद्दृष्टादृष्टा तु का भवेत् ॥ २५ ॥ एवमुक्तो महातेजा भास्करो वारितस्करः ॥ उवाच तं खगं वीरं प्रणतं विनयान्वितम् ॥ २६ ॥ ॥ आदित्य उवाच ॥ ॥ षड्गुणस्य स्वरूपं तु प्रयोगात्कार्यगौरवात ॥ समयानामुपायानां योगो व्याससमासतः ॥ २७ ॥ अध्यक्षाणां च निक्षेपः करणानां निरूपणम् ॥ दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्गरुडाग्रज ॥ २८ ॥ संध्योपास्तिस्तथा कार्या शुनो मांसं न भक्षयेत् ॥ अदृष्टार्था स्मृतिः प्रोक्ता मनुना विनतात्मज ॥ २९ ॥ पालाशं धारयेद्दंडमुभयार्थां विदुर्बुधाः ॥ विरोधे तु विकल्पः स्याद्यागो होमस्ततो यथा ॥ ३० ॥ श्रुतौ दृष्टं यथा कार्यं स्मृतौ तत्तादृशं यदि ॥ उक्तानुवादिनी सा तु पारिव्राज्यं तथा गृहात् ॥ ३१ ॥ उक्तो धर्मश्च संक्षेपात्परिभाषा च तद्गता ॥ तत्साधनं च देशादि इत्थमित्यब्रवीद्रविः ॥ ३२ ॥ ब्रह्मावर्तः परो देश ऋषिदेशस्तस्त्वनंतरः ॥ मध्यदेशस्ततोऽप्यन्य आर्यावर्तस्त्वनंतरः ॥ ३३ ॥ कृष्णसारस्तु विचरेन्मृगो यत्र स्वभावतः ॥ यज्ञियः स तु देशः स्यान्म्लेच्छदेशस्ततः परः ॥ ३४ ॥ ब्रह्मादीनां च देवानां ब्राह्मणादेस्तथैव च ॥ भूतग्रामस्य कृत्स्नस्य त्रयं कृत्स्नस्य खेचर ॥ ॥ ३५ ॥ साधनत्वं मनुः प्राह वेदमूलं सनातनम् ॥ प्रकाशयज्ञसंसिद्ध्यै यदशब्दस्य एव तु ॥ ३६ ॥ उपलभ्य यथातत्त्वं स च दर्शितवान्नृपिः ॥ सम्यक्संसाधनं धर्मः कर्तव्यस्त्वधिकारिणा ॥ ३७ ॥ निष्कामेन सदा वीर काम्यं रूपान्वितेन च ॥ आचारयुक्तः श्रद्धालुर्वेदज्ञोऽध्यात्मचिंतकः ॥ कर्मणां फलमाप्नोति न्यायार्जितधनश्च यः ॥ ३८ ॥ ॥ अरुण उवाच ॥ ॥ ब्रह्मावर्तादिदेशानां समस्तानां विभावसो ॥ विभागं ब्रूहि देवेंद्र संमानय ग्रहाधिप ॥ ३९ ॥ ॥ आदित्य उवाच ॥ ॥ सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम् ॥ तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ ४० ॥ हिमवद्विंध्ययोर्मध्यं यत्प्राग्विनशनादपि ॥ प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥ आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ॥ ४१ ॥ तयोरेवांतरं गिर्योरार्यावर्तं विदुर्बुधाः ॥ एतान्विज्ञाय सद्देशान्संश्रयेत प्रयत्नतः ॥ ४२ ॥ शूद्रस्तु यस्मिंस्तस्मिन्वा निवसेद्वृत्तिकर्शितः ॥ एषा धर्मस्य वो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्योतिः समासात्कथिता तव ॥ ४३ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु अरुणादित्यसंवादे स्मृतिभेदवर्णनं नामैकाशीत्युत्तरशततमोऽध्यायः ॥ १८१ ॥ ॥छ॥ ॥ आदित्य उवाच ॥ ॥ उक्तं धर्मस्य रूपं तु साधिकारं सनातनम् ॥ अतः परं प्रवक्ष्यामि धर्ममाश्रमिणां खग ॥ १ ॥ ब्रह्मचारी गृहस्थश्च वनस्थो भिक्षुरेव च ॥ चत्वार आश्रमाः प्रोक्ता एक एव चतुर्विधः ॥ २ ॥ गायत्रो ब्रह्मचारी तु प्राजापत्यो द्वितीयकः ॥ देवव्रतस्तृतीयस्तु नैष्ठिकस्तु चतुर्थकः ॥ ३ ॥ चत्वार आश्रमाः प्रोक्ताः सवेदाः समधर्मकाः ॥ अतः परं प्रवक्ष्यामि संस्कारं धर्मसिद्धये ॥ ४ ॥ गर्भाधानमृतौ कार्यं दृष्टयोस्तु समन्त्रकम् ॥ कार्यं पुंसवनं मातुस्तृतीये मासि संयुतैः ॥ ५ ॥ सीमन्तः सप्तमे गर्भे षष्ठे वा सप्तमेऽपि वा ॥ पात्रसंस्कारका इष्टा गर्भाधानादयस्त्रयः ॥ ६ ॥ जातकर्मादयः सर्वे संस्काराः पुरुषस्य तु ॥ जातस्य प्राशनं यत्र स्वर्णादीनां समन्त्रकम् ॥ ७ ॥ जातकर्मेति तत्प्रोक्तं गुह्यं नाम तदैव तु ॥ प्रकाशो नाम कर्तव्यं दिने त्वेकादशेर्थवत् ॥ ८ ॥ धर्मशास्त्रादिसंयुक्तं षष्ठेऽन्नप्राशनं खग ॥ प्रथमेऽब्दे तृतीये वा चूडाकर्म विधीयते ॥ ९ ॥ अष्टमे दशमे वापि ब्राह्मणस्योपनायनम् ॥ पुरुषस्य तथा चान्यजातीयानां विशेषतः ॥ १० ॥ एकादशे द्वादशे वा कार्यं क्षत्रियवैश्ययोः ॥ वेदसंस्कारकं वच्मि मन्यन्ते त्वौपनायनम् ॥ ११ ॥ पुरुषस्य तथा चान्य उभयोश्च ब्रवीम्यहम् ॥ सावित्रं वैदिकं चैव महानाम्नीमहाव्रतम् ॥ १२ ॥ तथौपनिषदं चाब्दं गोदानं च सुवर्णकम् ॥ व्रतानि ग्रहणार्थानि वेदस्येति मनोर्मतम् ॥ १३ ॥ वेदैकदेशपाठस्य उक्तं गृह्ये प्रपञ्चकम् ॥ उक्ता गुरोस्तु शुश्रूषा दृष्टादृष्टार्थसाधनम् ॥ १४ ॥ उभयोर्वा तथा चान्या यथान्यायं यथाश्रुतम् ॥ गुरोरप्येव तं विद्यात्तद्ध्यानं त्रिविधं स्मृतम् ॥ १५ ॥ तोषः परस्परस्येति एतावान्धर्मसंग्रहः ॥ कृत्स्नो वेदोऽधिगंतव्यः स्वधर्ममनुतिष्ठता ॥ १६ ॥ ज्ञात्वा वेदं ब्रह्मचारी ग्रंथार्थान्यान्यथाविधि ॥ नैष्ठिकश्च विधानं तु यावज्जीवं विधीयते ॥ विद्यान्तेऽभीष्टदानं च अनुज्ञातो गृही भवेत् ॥ १७ ॥ निष्कासनं गुरुगृहाद्गृहस्थस्य यथाभवेत् ॥ नैष्ठिकश्च तथा स्नानं कुर्यात्सम्यग्यथाविधि ॥ १८ ॥ उद्वहेद्वै ततो भार्यां सवर्णां लक्षणान्विताम् ॥ अविप्लुतब्रह्मचर्यश्चाधिकारी खगोत्तम ॥ १९ ॥ स्वतन्त्रमन्ये चेच्छन्ति ह्यधिकारं द्विजोत्तमाः ॥ सप्तमीं पञ्चमीं चैव कन्यकां पितृमातृतः ॥ २० ॥ उद्वहेत द्विजो भार्यामसमानार्षगोत्रजाम् ॥ संख्याविधिविवाहेषु गोत्रार्थं विधिवर्जितम् ॥ २१ ॥ विकल्पेनैव मन्तव्यमृषीणां विविधा श्रुतिः ॥ अष्टौ विवाहा वर्णानां संस्काराख्या इति श्रुतिः ॥ २२ ॥ यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ॥ तस्य कुर्यान्नृपो दंडं स्वयं षण्णवतिं पणान् ॥२३॥ पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ॥ पतंति पितरस्तस्य कन्या च वृषली



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवेत् ॥ २४ ॥ यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ॥ अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥ २५ ॥ सर्वदोषान्हि विख्याप्य स्त्रिया वा पुरुषस्य वा ॥ उभयोरपि विख्याप्य ततः संबन्धमाचरेत् ॥ २६ ॥ गौरी कन्या प्रधाना वै मध्यमा कन्यका स्मृता ॥ रोहिणी तत्समा ज्ञेया अधमा तु रजस्वला ॥ २७ ॥ ॥ अनूरुरुवाच ॥ ॥ गौरी तु का मता कन्या रोहिणी च जगत्पते ॥ रजस्वला नग्निका च देवकन्या च का भवेत् ॥ २८ ॥ ॥ भास्कर उवाच ॥ ॥ असंप्राप्तरजा गौरी प्राप्ते रजसि रोहिणी ॥ अव्यञ्जनयुता कन्या कुचहीना च नग्निका ॥ २९ ॥ सप्तवर्षा भवेद्गौरी दशवर्षा तु नग्निका ॥ द्वादशे तु भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ ३० ॥ व्यञ्जनेन समोपेतां सोमो भुङ्क्ते हि कन्यकाम् ॥ पयोधरेषु गंधर्वा रजस्यग्निः प्रकीर्तितः ॥ ३१ ॥ हिनस्ति व्यञ्जनैः पुत्रान्कुलं हन्यात्पयोधरैः ॥ गतिमिष्टां तथा लोकान्हन्याच्च रजसा पितुः ॥ ३२ ॥ तस्मादव्यञ्जनोपेतामरजस्कपयोधराम् ॥ नान्योपभुक्तां सोमाद्यैर्दद्याद्दुहितरं पिता ॥ ३३ ॥ अन्नं तस्य न भोक्तव्यं वृथा पाको हि स स्मृतः ॥ वृथा पाकस्य भुक्त्वान्नं प्रायश्चित्तं समाचरेत् ॥३४॥ प्राणायामं त्रिरभ्यस्य घृतं प्राश्य विशुद्ध्यति ॥ विवाहयेदेकगोत्रां समानप्रवरां खग ॥ कृत्वा तस्यां समुत्सर्गमतिकृच्छ्रो विशोधनम् ॥ ३५ ॥ उद्वाहयेत्सगोत्रां च तनयां मातुलस्य च ॥ ऋषिभिश्चैव तुल्यो यो द्विजश्चान्द्रायणं चरेत् ॥ ३६ ॥ असपिण्डा तु या मातुरसगोत्रा च या पितुः ॥ सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ३७ ॥ ॥ ॥ अरुण उवाच ॥ ॥ दारकर्म किमुक्तं वै यदुक्तं भवता इदम् ॥ सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ३८ ॥ ॥ आदित्य उवाच ॥ ॥ अग्निहोत्रादि यत्कर्म वैदिकं विनतात्मज ॥ तदुक्तं दारकर्मेति द्वाभ्यां योगाच्च मैथुने ॥३९॥ नोद्वहेत्कपिलां कन्यां नाधिकांगीं न रोगिणीम् ॥ नालोमिकां नातिलोमां न चाकूटां न पिङ्गलाम् ॥४०॥ ऋक्षवृक्षनदीनाम्नीं नान्यपर्वतनामिकाम् ॥ न यक्षाहिप्रेष्यनाम्नीं चातिभीषणनामिकाम्॥४१॥ यस्यास्तु न भवेद्भ्राता न विज्ञायेत वै पिता ॥ नोपगच्छेद्धि तां प्राज्ञः पुत्रिकाधर्मशंकया ॥४२॥ हंसस्वरामेकवर्णां मधुपिंगललोचनाम् ॥ तादृशीं वरयेत्कन्यां गृहार्थी खगसत्तम ॥ ४३ ॥ दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ॥ परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥४४॥ परिवित्तिः परिवेत्ता च यया स परिविद्यते ॥ सर्वे ते नरकं यांति दातृयाजकपंचमाः ॥ ४५ ॥ क्लीबे देशांतरस्थे वा पतिते व्रजिते तथा ॥ योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥४६॥ खंजवामनकुब्जेषु गद्गदेषु जडेषु च ॥ जात्यंधे बधिरे मूके न दोषः परिवेदने ॥ ४७ ॥ न श्राद्धं तु कनिष्ठस्य विकुलाय च कन्यका ॥ वरश्च कुलशीलाभ्यां न शुद्ध्येत कदाचन ॥ न मंत्राः कारणं तत्र न च कन्या वृता भवेत् ॥ ४८ ॥ उद्वाहिता तु या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कन्या न च प्राप्ता तु मैथुनम् ॥ पुनरभ्येति भर्तारं यथा कन्या तथैव सा ॥ ४९ ॥ समाक्षिप्य मतां कन्यां पिता त्वक्षतयोनिकाम् ॥ कुलशी
लवते दद्यान्न स्याद्दोषः खगाधिप ॥ ५० ॥ ॥ अनूरुरुवाच ॥ ॥ एतेऽष्टौ प्रभवाः प्रोक्ता विवाहा ये जगत्पते ॥ लक्षणं ब्रूहि चैतेषां समासात्ति
मिरापह ॥ ५१ ॥ ॥ आदित्य उवाच ॥ ॥ शुभां लक्षणसंपन्नां कुलशीलगुणान्विताम् ॥ अलंकृत्यार्हते दानं विवाहो ब्राह्म उच्यते ॥ ५२ ॥ सह
धर्मक्रियाहेतोर्दानं समयबंधनात् ॥ अलंकृत्यैव कन्यायाः प्राजापत्यः स उच्यते ॥ ५३ ॥ प्रदानं यत्र कन्यायाः सहगोमिथुनेन तु ॥ सवर्णायाः
सगोत्रायास्तमार्षमृषयो विदुः॥ ५४ ॥ अंतर्वेद्यां समानीय कन्यां कनकमंडिताम् ॥ ऋत्विजे चैव यद्दानं विवाहो दैवसंज्ञकः ॥ ५५ ॥ एते विवा
हाश्चत्वारो धर्मकामार्थदायकाः ॥ अशुल्का ब्रह्मणा प्रोक्तास्तारयंति कुलद्वयम् ॥ ५६ ॥ चतुर्ष्वेतेषु दत्तायामुत्पन्नो यः सुतः स्त्रियाम् ॥ दातुः
प्रतिग्रहीतुश्च पुनात्यासप्तमान्पितॄन् ॥ ५७ ॥ विविक्ते स्वयमन्योऽन्यं स्त्रीपुंसोर्यः समागमः ॥ प्रीतिहेतुः स गांधर्वो विवाहः पंचमो मतः ॥५८॥
हत्वा च्छित्त्वा च भित्त्वा च क्रोशंतीं रुदतीं गृहात्॥प्रसह्य कन्याहरणं राक्षसोद्वाह उच्यते॥५९॥शुल्कं प्रदाय कन्याया हरणं व्यसनादपि॥प्रसाद
हेतुरुक्तोयमासुरः सप्तमस्तथा ॥ ६० ॥ सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ॥ स पापिष्ठो विवाहानां पैशाचश्चाष्टमोधमः ॥ ६१ ॥ एतान्स
शुल्कान्सामान्यान्विवाहांश्चतुरो विदुः ॥ केवलं क्षत्रियस्यैव वीर्यं छित्त्वा हि राक्षसः ॥ ६२ ॥ प्राप्ते पूर्वविवाहे तु विधिर्वैवाहिकः शिवः ॥ कर्त
व्यस्तु त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥ ६३ ॥ दोषवत्याः प्रदाने तु दातुः षण्णवतिर्दमः ॥ स्यात्तु शुल्कप्रदाने च कन्यायाश्चापवर्जने ॥६४॥
मोक्षोपवर्तनं द्वेषः स्त्रीधनस्य निवर्तनम् ॥ आकांक्षा तीर्थसंरोधस्त्यागहेतुश्च वक्ष्यते ॥ ६५ ॥ परस्परस्य संबंधान्मोक्षः स्त्रीपुंसयोः स्मृतः ॥ न
स्यादन्यतरः प्रीतो रोपात्सांप्रतिकादपि ॥ ६६ ॥ बाधते चेत्पतिर्भार्यां स तु द्वेष इति स्मृतः ॥ वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत्॥६७॥
भोक्तुस्तु स्वयमेवेदं प्रतिज्ञाहननं भवेत् ॥ वृथा मोक्षेण भोगेन स्त्रियै दद्यात्सवृद्धिकम् ॥६८॥ आपत्तिसमये जाते स्त्रीधनं भोक्तुमर्हति ॥ आकांक्षे
ताष्टवर्षाणि भर्तापि प्रसवं स्त्रियाः ॥ ६९ ॥ जायन्ते यदि नो पुत्रास्तस्यां यत्ने महत्यपि ॥ ततो विंदेत पुत्रार्थी धर्मतः कुलजां स्त्रियम् ॥ ७० ॥
पुत्रलाभात्परं लोके नास्ति हि प्रसवार्थिनः ॥ एतां शुल्कस्य तां भुक्त्वा अन्यां लब्धुं यदीच्छति ॥ समस्तास्तोषयित्वार्थैः सूर्योढां परमां वरेत्॥
॥ ७१ ॥ एका शूद्रस्य वैश्यस्य द्वे तिस्रः क्षत्रियस्य तु ॥ चतस्रो ब्राह्मणस्य स्युर्भार्या राज्ञो यथेष्टतः ॥ ७२ ॥ अतीर्थगमनात्पुंसस्तीर्थे संगाहना



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्स्त्रियाः ॥ उभयोर्धर्मलोपः स्यात्स्वेष्वेव तु विशेषतः ॥ ७३ ॥ यौगपद्ये तु तीर्थानां विवाहक्रमशो व्रजेत् ॥ तत्साम्यं जीवपुत्रा वा ग्रहणक्रमशोपि वा॥७४॥ ब्राह्मादिभिर्विवाहैस्तु संस्कृतो तो खगाधिप ॥ अष्टौ विवाहा वर्णानां वैनतेय उशंति वै ॥ ७५॥ ब्राह्मो दैवस्तथार्षश्च प्राजापत्यः खगाधिप ॥ गांधर्वश्चासुरो रक्षः पैशाचस्त्वष्टमोऽधमः ॥ ७६ ॥ प्रशस्ताः क्षत्रियादीनां विप्रादीनां तु मानतः ॥ प्रतिग्रहादयो बद्धा विवाहा ब्राह्मणस्य तु ॥७७॥ क्षत्रियस्यापि देया तु प्रतिग्रहविवर्जिता ॥ प्रवृत्तिं केचिदिच्छंति दानमित्यपरे स्त्रियाः ॥ पावनं पुरुषाणां तु विवाहं परिचक्षते ॥७८॥ इति श्रीभविष्ये महापुराणे सप्तमीकल्पे ब्राह्मे पर्वणि सूर्यारुणसंवादे विवाहविधिवर्णनं नाम द्व्यशीत्युत्तरशततमोऽध्यायः ॥ १८२ ॥छ॥ भास्कर उवाच॥कुर्यात्पंचमहायज्ञानधिकारो द्विजस्य सः॥भूतपित्रमरब्रह्ममनुष्याणां यथाविधि॥१॥सदा सदान कृत्यानां फलार्थमपरे स्थिताः॥नित्यानित्यमिति प्राहुरनुषंगात्फलं परे ॥२॥ अतिथेः परितोषाय परिचर्या विधीयते ॥ अदृष्टनियमादृष्टमारोग्यान्तं च वर्जनम् ॥३॥ तिस्रोष्टकास्तु कर्तव्या मध्यावर्ता चतुर्थिका॥शाकपायसपूपैस्तु मांसेन तु चतुर्थिका॥४॥प्रतिपदि क्रियते यत्तु चतुष्पार्वणमुच्यते ॥ स्वगृह्योक्तविधानेन तत्तु पक्षादि कीर्त्यते॥५॥नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिंडनम्॥पार्वणं चेति विज्ञेयं गोष्ठशुद्ध्यर्थमुत्तमम्॥कर्मांगं नवमं प्रोक्तं वैदिकं दशमं स्मृतम् ॥६॥ ॥ ॥ अनूरुरुवाच ॥ ॥ यदेतद्भवता प्रोक्तं श्राद्धं द्वादशधा विभो ॥ तस्य सर्वस्य मां ब्रूहि लक्षणं वै पृथक्पृथक् ॥ ७ ॥ नित्यं किमुच्यते श्राद्धं किं वा नैमित्तिकं भवेत् ॥ काम्यादि देवदेवेश एतेषां लक्षणं वद ॥ ८ ॥ ॥ आदित्य उवाच ॥ ॥ अहन्यहनि यच्छ्राद्धं तन्नित्यं खग कीर्तितम् ॥ वैश्वदेवविहीनं तु अशक्तावुदकेन तु ॥ ९ ॥ एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ॥ तत्सदैव प्रकर्तव्यमयुग्मान्भोजयेद्द्विजान् ॥ १० ॥ कामयुक्तं हि तत्काम्यमभिप्रेतार्थसिद्धये ॥ पार्वणेन विधानेन[1] तदप्युक्तं खगाधिप ॥ ११ ॥ वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ॥ सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतिना ॥१२॥ गंधोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम्॥ अर्घार्थं पितृपात्रेषु प्रेतपात्रं प्रमोचयेत् ॥१३॥ ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिंडनम् ॥ नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि॥१४॥ दर्शे वै क्रियते यत्तु तत्पार्वणमुदाहृतम् ॥ पर्वणि क्रियते यच्च तत्पार्वणमिति स्थितिः ॥ गोभ्यश्च क्रियते श्राद्धं तद्गोष्ठश्राद्धमुच्यते ॥ १५ ॥ बहूनां विदुषां संपत्सुखार्थं पितृतृप्तये ॥ क्रियते शुद्धये यद्वै ब्राह्मणानां च भोजनम् ॥ शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय मनीषिभिः ॥ १६ ॥ निषेककाले सोमे च सीमंतोन्नयने तथा ॥ ज्ञेयं पुंसवने श्राद्धं तच्च कर्मांगमेव च ॥ ॥ १७ ॥ क्रियते देवमुद्दिश्य सप्तम्यादिषु यत्नतः ॥ गच्छेद्देशांतरे यस्तु श्राद्धं कुर्यात्तु सर्पिषा ॥ तद्यत्नार्थमिति प्रोक्तं प्रदिशेच्च न संशयः ॥१८॥

१ द्रव्येषु सत्स्वेवेत्यर्थः । २ मन्त्रबद्धा इत्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शरीरोपचये श्राद्धमश्ववृद्ध्यर्थमेव च ॥ पुष्ट्यर्थमेतद्विज्ञेयमौपचारिकमुच्यते ॥ १९ ॥ सर्वेषामेव श्राद्धानां श्रेष्ठं सांवत्सरं मतम् ॥ क्रियते यत्खगश्रेष्ठ मृतेहनि बुधैः सह ॥ २० ॥ मृतेऽहनि पुनर्यस्तु न कुर्याच्छ्राद्धमादरात् ॥ मातुश्च खगशार्दूल वत्सरांते मृतेऽहनि ॥ २१ ॥ नाहं तस्य खगश्रेष्ठ पूजां गृह्णामि नो हरिः ॥ न ब्रह्मा न च वै रुद्रो न चान्ये देवतागणाः ॥ २२ ॥ तस्माद्यत्नेन कर्तव्यं वर्षेवर्षे मृतेऽहनि ॥ नरेण खगशार्दूल भोजकेन विशेषतः ॥ २३ ॥ भोजको यस्तु वै श्राद्धं न करोति खगाधिप ॥ मातापितृभ्यां सततं वर्षेवर्षे मृतेऽहनि ॥२४॥ स याति नरकं घोरं तामिस्रं नाम नामतः ॥ ततो भवति दुष्टात्मा नगरे सूकरः खग ॥ २५ ॥ अनूरुरुवाच ॥ ॥ न जानाति दिनं यस्तु न मासं विबुधाधिप ॥ मृतौ यत्र महाप्राज्ञ पितरौ स कथं नरः ॥ श्राद्धं करोतु वै ताभ्यां विधिवद्वत्सरात्मकम् ॥ २६ ॥ ॥ आदित्य उवाच ॥ ॥ न जानाति नरो यस्तु मृतानां विनतात्मज ॥ मासं दिनं मृतानां तु पितॄणां खगसत्तम ॥ २७ ॥ यथा कुर्यात्खगश्रेष्ठ शृणु कृत्स्नं समासतः ॥ मृताहं यो न जानाति मानवो विनतात्मज ॥ २८ ॥ तेन कार्यममायां च श्राद्धं सांवत्सरं खग ॥ मासे मार्गशिरे वीर मावे वा विधिवत्खग ॥ ॥ २९ ॥ विशेषतो भोजनेन यो मां पूजयते सदा ॥ प्रीतये मम वै तेन संपूज्याः पितरः सदा ॥ ३० ॥ ममेष्टाः पितरो नित्यं गावो विप्राश्च सुव्रत ॥ तस्माच्च ते सदा पूज्या मद्भक्तेन विशेषतः ॥ ३१ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे ःपर्वणि सप्तमीकल्पे सौरधर्मे श्राद्धविधिकथनं नाम त्र्यशीत्युत्तरशततमोऽध्यायः ॥१८३॥ ॥ प्रख्याते प्रत्यये नैव प्रश्नपूर्वं प्रतिग्रहः ॥ यजनेऽध्यापने वादे षड्विधो वेदविक्रयः ॥ १ ॥ वेदविक्रयनिर्दिष्टं स्त्रिया चावर्जितं धनम् ॥ न देयं पितृदेवेभ्यो यच्च क्लीबात्खगाधिप ॥ २ ॥ अनुयोगेन यो दद्याद्ब्राह्मणाय प्रतिग्रहम् ॥ स पूर्वं नरकं याति ब्राह्मणास्तदनंतरम् ॥ ३ ॥ वेदाक्षराणि यावंति नियुज्यन्तेर्थकारणात् ॥ तावत्यो भ्रूणहत्या वै वेदविक्रयमाप्नुयात् ॥ ४ ॥ वैश्वदेवेन यो हीन आदित्यस्य च कर्मणः ॥ सर्वे ते वृषला ज्ञेयाः प्राप्तवेदाश्च ब्राह्मणाः ॥५॥ येषामध्ययनं नास्ति ये च केचिदनग्नयः॥कुलं वाऽश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः ॥ ६ ॥ अकृत्वा वैश्वदेवं तु यो भुङ्क्ते सोऽबुधः खग ॥ वृथा तेनान्नपाकेन यमयोनिं व्रजेत्तु सः ॥ ७ ॥ प्रियो वा यदि वा द्वेष्यो मूर्खः पंडित एव च ॥ वैश्वदेवे तु संप्राप्ते सोऽतिथिः स्वर्गसंक्रमः ॥ ८ ॥ नैकग्रामीणमतिथिं विप्रसांगतिकं तथा ॥ अचिंत्यो भ्यागतो यस्मात्तस्मादतिथिरुच्यते ॥ ९ ॥ अचिंत्यः स तु वै नाम्ना वैश्वदेव उपागतः ॥ अतिथिं तं विजानीयान्न पुनः पूर्वमागतः ॥ १० ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावच्च प्राप्नुयादन्नं कृताशीः स्नातको द्विजः ॥ तस्यान्नस्य चतुर्भागं हंतकारं विदुः खग॥११॥ ग्रासमात्रा भवेद्भिक्षा चतुष्कालं चतुर्गुणम् ॥ पुष्कलानि च चत्वारि हंतकारो विधीयते ॥ १२ ॥ आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ॥ चांद्रायणं चरेन्मासमिति विद्धि खगाधिप ॥ १३ ॥ आरूढपतितापत्या ब्राह्मणो वृषलेन च ॥ द्वावेतौ विद्धि चांडालौ वेदित्राग्यश्च जायते ॥ १४ ॥ ब्राह्मणी कुलटा नित्यं स्वकं त्यक्त्वा पतिं खग ॥ अन्यस्य विशते गेहे ब्राह्मणस्य खगाधिप॥१५॥ उत्पद्यते तु यस्तस्या ब्राह्मणेन महामते ॥ स चांडालो महान्प्रोक्तो महाचांडाल इत्युत॥१६॥यस्तु प्रव्रजितो भूत्वा पुनः सेवति मैथुनम् ॥ षष्टिवर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥ पंचगव्येन शुद्धिः स्यादित्याह मम देहकृत्॥१७॥अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमंत्रितम् ॥ तथैव वृषलस्यान्नं ब्राह्मणेन निमंत्रितम् ॥१८॥ ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् ॥ उभावेतावभोज्यान्नौ भुक्त्वा चांद्रायणं चरेत् ॥१९॥ उपनिक्षेपधर्मेण शूद्रान्नं च पचेद्द्विजः ॥ अभोज्यं तद्भवेदन्नं स च विप्रः पुरोहितः ॥२०॥ शूद्रान्नं शूद्रसंपर्कं शूद्रेण सह वासनम् ॥ शूद्राज्ज्ञानागमः कश्चिज्ज्वलंतमपि पातयेत् ॥२१॥ शूद्रान्नोपहता विप्रा विह्वला रतिलालसाः ॥ कुपिताः किं करिष्यंति निर्विषा इव पन्नगाः ॥ २२ ॥ हस्तदत्तास्तु ये स्नेहाल्लवणव्यंजनादयः ॥ दातारं नाधितिष्ठंति भोक्ता भुंक्ते तु किल्बिषम् ॥ २३ ॥ आयसेन तु पात्रेण यदन्नमुपदीयते ॥ भोक्ता विष्ठाशनं भुंक्ते दाता तु नरकं व्रजेत् ॥ २४ ॥ अंगुल्या दंतकाष्ठं यत्प्रत्यक्षलवणं च यत् ॥ मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणैः ॥ २५ ॥ मुखे पर्युषिते नित्यं भवत्यप्रयतो द्विजः ॥ तस्माच्छुष्कमथार्द्रं वा भक्षयेद्दंतधावनम् ॥ २६ ॥ पुष्पालंकारवस्त्राणि गंधमाल्यानुलेपनम्॥ उपवासे न दुष्यंति दंतधावनमंजनम् ॥२७॥ गृहांते वसते मूर्खो दूरे चास्य गुणान्वितः॥गुणान्विते च दातव्यं नास्ति मूर्खव्यतिक्रमः ॥ २८ ॥ ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ॥ ज्वलंतमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ २९ ॥ सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ॥ भोजनेनैव दानेन दहत्यासप्तमं कुलम् ॥ ३० ॥ ॥ अनूरुरुवाच ॥ ॥ एवमेव जगन्नाथ देवदेव जगत्पते ॥ किं तु यत्ते पुरा देव श्रुतं वाक्यं महात्मनः ॥ ३१ ॥ गदतो नारदस्यैव शृणु त्वं विबुधाधिप ॥ गदतो मे सुरश्रेष्ठ धर्म्यमर्थं सुखावहम् ॥ ३२ ॥ सत्यनिष्ठं द्विजं यस्तु शुक्लजातिं प्रियंवदम् ॥ मूर्खं पाखंडिनं वापि वृत्तिहीनमथापि वा ॥ ३३ ॥ अतिक्रम्य नरो घोरं नरकं पातयेत्खग ॥ सप्त परान्सप्त पूर्वान्पुरुषानात्मना सह ॥ ३४ ॥ तस्मान्नातिक्रमेद्राजा ब्राह्मणं प्रातिवेशिकम् ॥ संबन्धतस्तथासन्नं दौहित्रं विद्यते तथा ॥ ३५ ॥ भागिनेयं विशेषेण तथा बंधुं ग्रहाधिप ॥ नातिक्रमेन्नरस्त्वेतान्सुमूर्खानपि गोपते ॥ अतिक्रम्य महद्रौद्रं रौरवं नरकं व्रजेत् ॥ ३६ ॥ ॥ आदित्य उवाच ॥ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवमेतन्न संदेहो यथा वदसि खेचर ॥ ममाप्यवगतं वीर ब्राह्मणं न परीक्षयेत् ॥ ३७ ॥ सर्वदेवमयं विप्रं सर्वलोकमयं तथा ॥ तस्मात्संपूजयेदेनं न गुणांस्तस्य चिंतयेत् ॥ ३८ ॥ केवलं चिंतयेज्जातिं न गुणान्विनतात्मज ॥ तस्मादामंत्रयेत्पूर्वमासन्नं ब्राह्मणं बुधः ॥ ३९ ॥ यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते ॥ दूरस्थान्पूजयेन्मूढो गुणाढ्यान्नरकं व्रजेत् ॥ ४० ॥ देवकर्मविनाशेन ब्रह्मस्वहरणेन च ॥ देवद्रव्यं द्विजान्नं च ब्रह्मस्वं ब्राह्मणार्जितम् ॥ वियोन्यां क्षिपते यस्तु वियोनिमधिगच्छति ॥ ४१ ॥ मा ददस्वेति यो ब्रूयाद्गवाग्निब्राह्मणेषु वै ॥ तिर्यग्योनिशतं गत्वा चांडालेष्वभिजायते ॥ ४२ ॥ यत्तु वाचा प्रतिज्ञातं कर्मणा नोपपादितम् ॥ तदृणं धर्मसंयुक्तमिह लोके परत्र च ॥ ४३ ॥ वेदविद्याव्रतस्नाते श्रोत्रिये गृहमागते ॥ क्रीडंत्योषधयः सर्वा यास्यामः परमां गतिम् ॥ ४४ ॥ मधु मांसं सुरां सोमं लाक्षाद्यं लवणं तथा ॥ विक्रीयान्यतमं तेषां द्विजश्चांद्रायणं चरेत् ॥ ४५ ॥ गुडं तिलं तथा नीलं केशान्गोधूमकान्यवान् ॥ विक्रीय ब्राह्मणो गां च कृच्छ्रं सांतपनं चरेत् ॥ ४६ ॥ औष्ट्रमाविकदुग्धं च अन्नं मृतकसूतके ॥ चौरस्यान्नं मृतश्राद्धे भुक्त्वा चांद्रायणं चरेत् ॥ ४७ ॥ गवां शृंगोदके स्नातो महानद्याश्च संगमे ॥ समुद्रदर्शनाद्वापि शुना दष्टः शुचिर्भवेत् ॥ ४८ ॥ वेदविद्याव्रतस्नातः शुना दष्टो द्विजः खग ॥ हिरण्योदकमिश्रं तु घृतं प्राश्य विशुद्ध्यति ॥ ४९ ॥ तिष्ठन्वाप्यथ वा गच्छञ्छुना दष्टो द्विजः खग ॥ वज्रं प्राश्य शुचिः स्याद्वै यथाह भगवान्मनुः ॥ ५० ॥ व्रतिनश्चापि दष्टस्य त्रिरात्रं क्षपणं स्मृतम् ॥ सघृतं च ततो भुक्त्वा व्रतशेषं समाचरेत् ॥ ५१ ॥ ब्राह्मणी तु शुना दष्टा सोमे दृष्टे समाचरेत् ॥ यदा न दृश्यते सोमः प्रायश्चित्तं कथं भवेत् ॥ ५२ ॥ यां दिशं व्रजते सोमस्तां दिशं चावलोकयेत् ॥ सोममार्गेण सा पूर्वा पञ्चपूतेन शुध्यति ॥ ५३[1] ॥ ब्राह्मणस्य ब्रह्मद्वारे पूयशोणितसंभवे ॥ क्रिमिभिर्दश्यते यश्च निष्कृतिं तस्य वच्मि ते ॥ ५४ ॥ गवां तत्र पुरीषेण त्रिकालं स्नानमाचरेत् ॥ दधि क्षीरं घृतं पीत्वा कृमिदष्टो विशुध्यति ॥ ५५ ॥ अथ नाभ्याः प्रदष्टस्य आपादाद्विनतात्मज ॥ एतद्विनिर्दिशेत्प्राज्ञः प्रायश्चित्तं खगाधिप ॥ ५६ ॥ नाभिकण्ठांतरे वीर यदा चोत्पद्यते कृमिः ॥ षड्रात्रं तु तदा प्रोक्तं प्रायश्चित्तं मनीषिभिः ॥ ५७ ॥ यदा दशंति शिरसि कृमयो विनतात्मज ॥ कृच्छ्रं तदा चरेत्प्राज्ञः शुद्धये कश्यपात्मज ॥ ५८ ॥ मृतान्नं मधु मांसं च यस्तु भुञ्जीत ब्राह्मणः ॥ स त्रीण्यहान्युपवसेदेकाहं चोदके वसेत् ॥ ५९ ॥ ॥

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पेऽनूर्वादित्यसंवादे ब्राह्मणधर्मवर्णनं नाम चतुरशीत्युत्तरशततमोऽध्यायः ॥ १८४ ॥ ॥ छ ॥



१ दर्शनमित्यर्थः, भावे निष्ठाविधानात् । २ तयेति शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ ॥ आदित्य उवाच ॥ ॥ रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा ॥ सन्ध्ययोरुभयोर्वीर सूर्ये चैव तिरोहिते ॥१॥ अकृत्वा मातृयज्ञं तु यः श्राद्धं परिवेषयेत् ॥ तातस्य क्रोधसंयुक्तां हिंसामिच्छंति दारुणाम् ॥२॥ ॥ अनूरुरुवाच ॥ ॥मातृश्राद्धं कथं कार्यं काश्च ता मातरः स्मृताः॥ नांदीमुखाश्च पितरः कथं पूजामवाप्नुयुः ॥ ३ ॥ ॥ आदित्य उवाच ॥ ॥ हन्त ते सम्प्रवक्ष्यामि मातृश्राद्धविधिं खग ॥ शृणु त्वं खगशार्दूल गदतो मम कृत्स्नशः ॥४॥ पूर्वाह्णे भोजयेद्विप्रानष्टौ सर्वान्प्रदक्षिणान् ॥ तथान्यं नवमं विप्रं चतुरश्च खगाधिप ॥ ५ ॥ ऋजून्वै कुतपान्दत्त्वा सत्येन विधिवत्खग ॥ कृत्वा यवैस्तिलार्थं तु दधिमिश्रं क्रमेण च ॥६॥ गन्धपुष्पादिकं सर्वं कुर्याद्विप्रप्रदक्षिणम् ॥ ब्राह्मणेभ्यस्ततो दद्यान्मधुरं भोजनं खग ॥ ७ ॥ गुडमिश्रं खगश्रेष्ठ सवस्त्रमोदनं परम् ॥ रसानां मोदकांश्चैव न च तान्कटुकांस्तथा ॥ ८ ॥ एवं भुक्तेषु विप्रेषु दद्यात्पिंडान्त्समाहितः ॥ दध्यक्षतविमिश्रांस्तु बदरैश्च खगाधिप ॥ ९ ॥ कृत्वा तु मंडपं वीर चतुरस्रं प्रदक्षिणम् ॥ पूर्वाग्रांश्च कुशान्दत्त्वा पुष्पाणां प्रकरं तथा ॥ १० ॥ सव्येन पाणिना वीर विधिवत्खगसत्तम ॥ मात्रे प्रमात्रे तन्मात्रे निर्वपेत्पूर्वतोमुखः ॥ ११ ॥ पितुर्मात्रे तु तन्मात्रे निर्वपेद्विधिवत्खग ॥ वृद्धायै प्रपितामह्यै तथान्यं निर्वपेद्बुधः ॥ १२ ॥ एवमुद्दिश्य वै मातॄः षट् पिंडान्निर्वपेत्खग ॥ अष्टाशयेद्द्विजान्वीर मातृश्राद्धे खगाधिप ॥ नवमं सर्वदैवत्यं भोजयेद्विधिवत्खग ॥ १३ ॥ नांदीमुखांस्तानुद्दिश्य पितॄन्पंच द्विजोत्तमान् ॥ भोजयेद्विधिवच्छ्राद्धे वृद्धिश्राद्धे प्रदक्षिणम् ॥ १४ ॥ इत्थं श्राद्धद्वयं कुर्याद्वृद्धौ कश्यपनंदन ॥ तथान्यमपि ते वच्मि परं श्राद्धविधिं तव ॥ १५ ॥ अथैवं भोजयेच्छ्राद्धे तत्पूर्वं तु प्रवर्तयेत्॥अन्यथा तत्र लुंपंति सदेवासुरमानुषाः ॥१६॥ अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्॥यो ह्यग्निः स द्विजो वीन्द्र मंत्रदर्शिभिरुच्यते॥ ॥ १७ ॥ पूर्वं पात्रे यदन्नं च यच्चान्नमुपकल्पितम् ॥ तेनैव सह भोक्तव्यं पृथग्भावो न विद्यते ॥१८॥ द्वौ दैवेऽथर्वणौ विप्रौ प्राङ्मुखावुपवेशयेत्॥ पित्र्ये त्रीनुदगास्यांश्च वृद्धौ चाध्वर्युसंगमान् ॥ १९ ॥ त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपास्तिलाः ॥ त्रीणि चात्र प्रशंसंति शौचमक्रोधमत्वरम् ॥ २० ॥ दौहित्रं खंडमित्युक्तं ललाटाय प्रजापते ॥ तत्र शृंगस्य यत्पात्रं तद्दौहित्रमिति स्मृतम् ॥ २१ ॥ सव्यादंसात्परिभ्रष्टं नाभिदेशे व्यवस्थितम् ॥ एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत् ॥ २२ ॥ पितृदेवमनुष्याणां पूजनं भोजनं तथा ॥ नोत्तरीयं विना कार्यं कृतं स्यान्निष्फलं यतः ॥ २३ ॥ परिधानकृते स्कंधे गृहस्थो योऽर्चयेत्पितॄन् ॥ न स तत्फलमाप्नोति यथा योगपटावृतः ॥ २४ ॥ वनस्थानां खगश्रेष्ठ यतीनां च

१ पक्षिराजत्वं न केवलं गरुडस्यैव, अरुणस्यापीति । अत एव 'पूर्वोद्दिष्टानिर्दिष्टत्वात्तु प्रायश्चित्तं खगाधिप,' इति चतुरशीत्युत्तरशततमेऽध्याये चतुष्पञ्चाशत्तमे श्लोके उक्तं संगच्छते । तेन गरुड एव पक्षिराज इति न भ्रमितव्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महामते ॥ सिद्धये कर्मणां वीर योगपट्टकमुच्यते ॥ २५ ॥ हस्तौ प्रक्षाल्य गंडूषं यः पिबेदविचक्षणः ॥ स तु दैवं च पित्र्यं च आत्मानं चोपघातयेत् ॥ २६ ॥ भोजनेष्वेव तिष्ठंति स्वस्ति कुर्वंति ये द्विजाः ॥ आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥ २७ ॥ दातारो नोभिवर्धंतां वेदाः संततिरेव च॥ श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्त्विति ॥२८॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे अरुणादित्यसंवादे मातृश्राद्धविधिवर्णनं नाम पंचाशीत्युत्तरशततमोऽध्यायः ॥ १८५ ॥ छ ॥ भास्कर उवाच ॥ ॥ श्रावण्यां तु बलिः कार्यः सर्पाणां मंत्रपूर्वकः ॥ शयनारोहणे चैव कार्ये सुखमभीप्सता ॥ १ ॥ कार्यः प्रत्यवरोहस्तु मार्गशीर्ष्यां न संशयः ॥ फलं विना त्वनुष्ठानं नित्यानामिष्यते स्फुटम् ॥ २ ॥ काम्यानां सफलार्थं तु दोषप्राप्त्यर्थमेव च ॥ नैमित्तिकानां करणं त्रिविधं कर्मणां फलम् ॥ ३ ॥ फलं केचिदुपात्तस्य दुरितस्य प्रचक्षते ॥ अनुत्पत्तिं तथा चान्ये प्रत्येत्याभ्युपमंत्र्य च ॥ ४ ॥ नित्यक्रियं तथा चान्ये अनुषंगात्फलं श्रुतिः ॥ अग्न्याधेयं तथा दर्श पौर्णमासं द्वितीयकम् ॥ ५ ॥ चातुर्मास्यमग्निहोत्रं पशुबंधो निरूढकाः ॥ सौत्रामणी च संस्थाः स्युर्हविषः श्रुतिनोदिताः ॥ ६ ॥ अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः संषोडशी तथा ॥ वाजपेयातिरात्रश्च आप्तोर्यामः श्रुतौ श्रुतः ॥ ७ ॥ दया स्यात्सर्वभूतेषु अनसूयाथ मंगलम् ॥ क्षांतिर्दया त्वनायासः शौचमस्पृहता व्रतम् ॥ ८ ॥ सम्यग्युक्तास्तु संस्कारा ब्रह्मप्राप्तिनिमित्तकाः ॥ अनंतरं प्रवक्ष्यामि विप्राणां वृत्तयः शुभाः ॥ ९ ॥ ऋतामृते च विप्राणामृतं प्रमृतमेव च ॥ प्रतिग्रहवणिज्यादि श्रेयसी नोत्तरोत्तरा ॥ १० ॥ आजीविकावृत्तयस्तु इत्याद्याः संप्रवर्तिताः ॥ तासां कयापि जीवेत्तु अनुतिष्ठेद्यथाविधि ॥ ११ ॥ नित्यं शुचिः सुगंधश्च स्नानशीलः प्रियंवदः ॥ पूज्यश्च पूजयेद्देवान्कार्याणि स्वयमाचरेत् ॥ १२ ॥ नेक्षेतार्कं न नग्नां स्त्रीं न च संस्पृष्टमैथुनम् ॥ नाप्सु मूत्रं पुरीषं वा नाशुची रात्रितारकाः ॥ १३ ॥ शास्त्रोक्ता यंत्रणा या तु नानुक्तानि व्रतानि च ॥ स्वर्गार्थं साधयेत्तैश्च शक्तिमान्मनसा तथा ॥१४॥ नित्यानि केचिदिच्छंति काम्यानि च तथापरे ॥ काम्याप्रवृत्तौ संगे च प्रायश्चित्तं विधीयते ॥१५॥ व्रतानि मनसा त्विष्टसंकल्प इति मानसः ॥ अंतरानुफलं यत्तद्दपिवादाः प्रकीर्तिताः ॥१६॥ अनध्यायं स्वयं सम्यग्वर्जयेत्फलसाधनम् ॥ आत्मा शुद्धस्तथा देशो ह्यसुहारः प्रजापदः ॥ १७ ॥ अशुभानि निमित्तानि उत्पातो विकृतं तथा ॥ पर्वाणि मनसोऽशुद्धिरनध्याय इति स्मृतः ॥१८॥ अनध्यायाश्च दृष्टार्था अदृष्टार्थास्तथापरे ॥ वेदाध्ययनमेवेति त्रिधा मद्यानदर्शनम् ॥१९॥ अभक्ष्यं सर्ववर्णानां शावाशौचं खगाधिप ॥ द्रव्यशुद्धिस्तथैव स्यादन्यथा त्वसमंजसम् ॥२०॥ जातिदुष्टं क्रियादुष्टं कालदुष्टं विभूषितम्॥संसर्गाश्रयदुष्टं च सहृल्लेखं स्वभावतः ॥२१॥ लशुनं गृंजनं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चैव पलांडुं कवकानि च ॥ वार्ताकं नालिकेरं तु मूलकं जातिदुष्टकम् ॥२२॥नो भुञ्जीत क्रियादुष्टं दुष्टं च पतितैः पृथक्॥कालदुष्टं तु विज्ञेयं हानिदं चिरसंस्थितम् ॥२३॥ दधिभक्ष्यविकाराश्च मधुवर्ज्यास्तदिष्यते ॥२४॥ सुरालशुनसंस्पृष्टं पेयूषादिसमन्वितम् ॥ संसर्गदुष्टमेतद्धि शुनोच्छिष्टं खगेश्वर॥२५॥ शूद्रसक्तं खंडसक्तं ज्ञेयमाश्रयदूपितम्॥विचिकित्सा तु हृदये भक्ष्ये यस्मिन्त्सुजायते॥२६॥सहृल्लेखं तु तज्ज्ञेयं पुरीषं तु स्वभावतः ॥ रसदुष्टे विकारोऽपि रसस्येति प्रदर्शितः॥२७॥पायसं क्षीरपाकादि तस्मिन्नेव दिने तथा॥यथाशास्त्रं खगश्रेष्ठ भक्ष्याभक्ष्ये निरूपयेत् ॥२८॥ प्राणात्यये प्रोक्षितं च श्राद्धे च द्विजकाम्यया ॥ पितॄन्देवांश्चार्पयित्वा भुंजन्मांसं न दोपभाक्॥२९॥ प्रेताशुद्धिः सपिंडानां तस्मिन्नेव मृते सति॥दशाहं द्वादशाहं वा पक्षं मासं त्वशुद्धता ॥ ३० ॥ दशाहादित्रिके भागे वर्णशो न भवंति हि ॥ दशाहेन तु भोज्याः स्युः सूतकाशौचयोस्तथा ॥ ३१॥ ऊर्ध्वं दशाहादेकाहश्रवणे सति जायते ॥ संवत्सरे व्यतीते तु स्नानादेव विशुध्यति ॥ ३२ ॥ समानोदकता प्रोक्ता जन्मनाम्नोरपर्यये ॥ सपिंडाः सप्त पुरुपाः श्रुतावेतन्निदर्शनम् ॥ ३३ ॥ आ दंतजन्मनः सद्य आचूडान्नैष्ठिकी स्मृता ॥ त्रिरात्रमाव्रतादेशात्सपिंडेषु मृतेषु च ॥ ३४ ॥ तेषामपि तदेकं स्याद्वयोवस्थाप्यपेक्ष्यते ॥ समानोदकास्त्रिरात्रेण शुध्येद्वै मृत्युजन्मनोः ॥ ३५ ॥ गर्भस्रावे त्रिरात्रेण उदक्या शुध्यते तथा ॥ अनंतजन्म मरणे तच्छेषेण विशुध्यति ॥ ३६ ॥ द्विजानां त्वेवमेव स्यात्पित्रर्थं मातुरेव वा ॥ अग्निहोत्रार्थं विज्ञेयं सद्यः शौचमिति स्थितिः ॥३७॥ असपिंडे तु निर्हारात्त्रिरात्रमपि मानवः ॥ तस्यैवानुगतो ज्ञेयं सद्यः शौचं खगाधिप ॥ ३८ ॥ शुध्येद्द्विजो दशाहेन जन्महानौ द्वियोनिषु ॥ षड्भिस्त्रिभिरहेकेन क्षत्रविट्शूद्रयोनिषु ॥ ३९ ॥ उक्तशौचं यथान्यायं शारीरं तत्त्वदर्शिभिः ॥ द्रव्यशुद्धिविधानं तु यथावदभिधीयते ॥ ४० ॥ तैजसी मार्तिकी वीर वारिशुद्धिः स्मृता तथा ॥ निर्लेपक्षालने नैव स्पर्शे तु प्रोक्षणेन वै ॥ ४१ ॥ अशुद्धं नैव किंचिद्धि द्रव्यमस्तीति खेचर ॥ वचनाच्छुद्ध्य शुद्धी तु द्रव्याणामिह खेचर ॥ ४२ ॥ स्नानं शौचं च कर्तव्यं द्रव्यशौचादनंतरम् ॥ प्रातःस्नानं तु नित्यं स्याद्ग्रहणे काम्यमेव च ॥ ४३ ॥ नैमित्तिकं क्षुराशौचं तेन पापाद्विशुध्यति ॥ उक्तं तु शौचं विज्ञेयं दोषक्षयकरं खग ॥ ४४ ॥ कर्मांगं चेति विज्ञेयं षट्प्रकाराः समासतः ॥ एवमाचमनं विद्याद्विशिष्टं तु द्विजन्मनाम् ॥४५॥ तदा मृतानां तद्वत्स्यादन्येषां तु यथासुखम् ॥ कन्यानिवृत्तिं पुत्रैस्तु यथान्यायं समाचरेत् ॥ ४६ ॥ कलाशिल्पानि सर्वाणि गृह्णीयात्परितुष्टये ॥ ४७ ॥ शुश्रूषेत पतिं भार्या परितोपं यथा व्रजेत् ॥ गुरूणां परितोषश्च धर्मः स्त्रीणां सनातनः॥४८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृद्धाऽपुत्रा यदि मृता तदभावे नृपस्य तु ॥ मृतापत्याप्यगर्भा च वृद्धापत्या पतिव्रता ॥ ४९ ॥ कुर्यादनिर्वृतं भर्तुर्गते सन्निहितेपि वा ॥ एतां धर्मसमां निष्ठां भर्तृलोकमवाप्नुयात् ॥५०॥ स्त्री धर्मचारिणी साध्वी मृता दाह्या तथाग्निभिः ॥ विपरीतादर्दाह्या तु पुनर्दारक्रिया तथा ॥५१॥ स्त्रीणां नियोगो विहितो मरणाद्ब्रह्मचारकम् ॥ प्राप्तव्यश्च यथाधर्मो दृष्टादृष्टफलप्रदः ॥ ५२ ॥ तस्माद्धर्मं सदा कुर्यात्कुर्वती स्वर्गमाप्नुयात् ॥ ५३ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु शुद्धिप्रकरणवर्णनं नाम षडशीत्युत्तरशततमोऽध्यायः ॥ १८६ ॥ छ ॥ ॥ अनूरुरुवाच ॥ ॥ कानि पुण्यानि कृत्वेह स्वर्गं गच्छंति मानवाः ॥ मनुष्यलोके संभूताः स्वर्लोके गामिनः परम् ॥१॥ कर्मयज्ञस्तपोयज्ञः स्वाध्यायो ध्याननिर्मितः ॥ ज्ञानयज्ञश्च पंचैते महायज्ञाः प्रकीर्तिताः ॥ २ ॥ एतेषामेव यज्ञानामुत्तमः कतमः स्मृतः ॥ एतद्यज्ञफलानां च किं फलं का गतिर्भवेत् ॥३॥ धर्माधर्मप्रभेदाश्च कियन्तः परिकीर्तिताः ॥ तत्साधनानि कतिधा गतयश्च यथा वद ॥४॥ खग नारकिणां पुंसामागतानां पुनः क्षितौ ॥ कानि चिह्नानि जायन्ते भुक्तशेषेण कर्मणा ॥ ५ ॥ महाभवार्णवाद्घोराद्धर्माधर्माभिसंकुलात् ॥ गर्भादिदुःखफेनाढ्यान्मुच्यंते देहिनः कथम् ॥ ॥ ६ ॥ इत्युक्तो भगवान्भानुः सर्वप्रश्नार्थमादरात् ॥ प्रत्युवाच महातेजाः समासव्यासयोगतः ॥ ७ ॥ ॥ आदित्य उवाच ॥ ॥ स्वर्गापवर्गफलदं नरकार्णवतारणम् ॥ धर्मं पापहरं पुण्यं शृणु शूर प्रभाषतः ॥ ८ ॥ श्रद्धापूर्वः सदा धर्मः श्रद्धामध्यांतसंस्थितः ॥ श्रद्धानिष्ठप्रतिष्ठश्च धर्मः श्रद्धा प्रकीर्तिता ॥ ९ ॥ श्रुतिमंत्ररसाः सूक्ष्माः प्रधानपुरुषेश्वरः ॥ श्रद्धामात्रेण गृह्यंते न परेण च चक्षुषा ॥ १० ॥ कायक्लेशैर्न बहुभिर्न चैवार्थस्य राशिभिः ॥ धर्मः संप्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि ॥ ११ ॥ श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा यज्ञाहुतं तपः ॥ श्रद्धा मोक्षश्च स्वर्गश्च श्रद्धा सर्वमिदं जगत् ॥ १२ ॥ सर्वस्वं जीवितं वापि दद्यादश्रद्धया च यः ॥ नाप्नुयात्स फलं किंचित्तस्माच्छ्रद्धापरो भवेत् ॥ १३ ॥ एवं श्रद्धामयाः सर्वे मम धर्माः प्रकीर्तिताः ॥ पूज्यस्तु श्रद्धया पुंसा ध्येयः पूज्यश्च श्रद्धया ॥ १४ ॥ अधिकारस्य प्राप्त्यर्थं महासारविमुक्तिदम् ॥ अज्ञादुक्तं ससंदिग्धं वाक्यमेतन्ममाद्भुतम् ॥ १५ ॥ नानासिद्धिकरं दिव्यं लोकचित्तानुरंजनम् ॥ सुनिश्चितार्थगंभीरं वाक्यं मम मनोरमम् ॥ १६ ॥ मन्मानससमुद्रो हि द्विपदोयं विदुर्बुधाः ॥ स खपोल्केति विख्यातः सशिवं मंडलं खग ॥ १७ ॥ देवत्रयगुणातीतः सर्वज्ञः सर्ववित्प्रभुः ॥ ओमित्येकाक्षरे मंत्रे स्थितः स परमो मम ॥१८॥ यथानादिप्रवृत्तोयं घोरः संसारसागरः ॥ खपोल्कोपि तथानादिः संसारार्णवशोधनः ॥१९॥ व्याधीनां भेषजं यद्वत्प्रतिपक्षस्वभावतः ॥ मोक्षिणां मुक्तिहेतुश्च सिद्धः सर्वार्थसाधकः ॥ २० ॥ ममाभिधानमन्त्रोयमभिधेयः सदा स्मृतः ॥ अभिधानाभिधेयोहं मन्त्र





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिद्धोऽस्मि खेचर ॥ २१ ॥ वेदो मनोगमे चात्र षडक्षरमंत्रस्थितः ॥ यद्वा मुक्तोऽक्षरैकेन लोके पञ्चाक्षरः स्मृतः ॥ २२ ॥ किं तस्य बहुभि र्मन्त्रैः शास्त्रैर्वा बहुविस्तरैः ॥ यस्यों नमः खपोल्केति मन्त्रोऽयं हृदि संस्थितः ॥ २३ ॥ तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ॥ येनों नमः खपोल्केति मम वाक्यं षडक्षरम् ॥ २४ ॥ विधिवाक्यमिदं सर्वं नार्थवादं वचो मम ॥ एतत्ते वक्ष्यतेऽशेषं मम वाक्यार्थमुत्तमम् ॥ पृच्छस्वेमं प्रणम्याशु वैनतेय महामते ॥ २५ ॥ ॥ सुमन्तुरुवाच ॥ ॥ श्रुत्वा तु वचनं भानोर्वैनतेयो महाबलः ॥ सत्ताश्वतिलकं भक्त्या प्रणम्योवाच भारत ॥ २६ ॥ ॥ अनूरुरुवाच ॥ ॥ ब्रूहि मां देवशार्दूल यत्पृच्छामि महामते ॥ कीदृग्वाक्यमिदं भानोर्वाक्यार्थं ब्रूहि च प्रभो ॥ २७ ॥ ॥ ॥ सत्ताश्वतिलक उवाच ॥ ॥ विमुक्ताशेषदोषेण सर्वज्ञेन भगेन यत् ॥ प्रणीतममलं वाक्यं तत्प्रमाणं न संशयः ॥ २८ ॥ यस्मान्मार्तंड नामासौ कथ्यते च मनीषिभिः ॥ यथार्थं पुण्यमाप्नोति पतत्यश्रद्धया त्वधः ॥ २९ ॥ सौरवाक्यप्रवक्तारं सूरवत्पूजयेद्गुरुम् ॥ संसारार्णव निर्मग्नं यः समुद्धरते जनम् ॥ ३० ॥ सौरधर्माम्बुहस्तेन कस्तेन सदृशो गुरुः ॥ अज्ञानवह्निसंतप्तं निर्वापयति यः शनैः ॥ ज्ञानामृतेन वै भक्त्या न्कस्तं न प्रतिपूजयेत् ॥ ३१ ॥ नैव राज्येन महता न चैवार्थस्य राशिभिः ॥ प्राप्तमज्ञानशमनं परलोके सुखावहम् ॥ ३२ ॥ स्वर्गापवर्ग सिद्ध्यर्थं भाषितं यत्तु शोभनम् ॥ वाक्यं ते देवदेवेन तद्विज्ञेयं सुभाषितम् ॥ ३३ ॥ रागद्वेषाक्षमाक्रोधकामतृष्णानुसारिणाम् ॥ वाक्यं निरय हेतुत्वात्तद्दुर्भाषितमुच्यते ॥ ३४ ॥ संस्कृतेनापि किं तेन मृदुलालापसंगिना ॥ अविद्यारामवाक्येन संसारक्लेशहेतुना ॥ ३५ ॥ यच्छ्रुत्वा जायते पुण्यं रागादीनां च संक्षयः ॥ विरूपमपि तद्वाक्यं विज्ञेयमतिशोभनम् ॥ ३६ ॥ स्मृतयो भारतं वेदाः शास्त्राणि सुमहांति च ॥ स्वा युषः क्षपणायैव धर्मोऽर्थसमग्रन्थितः ॥ ३७ ॥ पुत्रदारादिसंसारे नराणां मूढचेतसाम् ॥ संसारविदुषां शास्त्रमनादि मुखनिर्गतम् ॥ ३८ ॥ इदं श्रेष्ठमिदं ज्ञेयं सर्वं त्वं ज्ञातुमिच्छसि ॥ अपि वर्षसहस्रायुः शास्त्रान्तं नाधिगच्छति ॥ ३९ ॥ विज्ञायाक्षरतन्मात्रं जीवितं चातिवंचनम् ॥ विहाय सर्वशास्त्राणि परलोकं समाचरेत् ॥ ४० ॥ पण्डितेनापि किं तेन समर्थेन च देहिनाम् ॥ यः पुण्यभारमुद्रोढुमशक्तः पारलौकिकम् ॥ ४१ ॥ पण्डितोऽपि स मूर्खः स्याच्छक्तियुक्तोऽप्यशक्तिकः ॥ यः सौरज्ञानमाहात्म्यमुच्चारयितुमक्षमः ॥ ४२ ॥ तस्मात्स पंडितः शक्तः स तपस्वी जितेन्द्रियः ॥ यः सौरज्ञानसद्भावमालोचयितुमुद्यतः ॥ ४३ ॥ यः प्रदद्यान्नृपः कृत्स्नां क्ष्मां धनं कांचनं तथा ॥ सर्वमन्यायतः पृच्छेन्न तस्यो पदिशेद्गुरुः ॥ ४४ ॥ यः शृणोति रवेर्धर्मं न्यायतः स च वक्ति च ॥ ततो गच्छति सुस्थानं नरकं तद्विपर्यये ॥ ४५ ॥ दत्तगोदोहसंभूतः षडक्षर

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधानतः ॥ रविः संपूजितः शीघ्रं नराणां तुल्यता भृशम् ॥ ४६ ॥ सुरासुरैर्मथ्यमानात्क्षीरोदात्सागरात्पुरा ॥ पञ्च गावः समुत्पन्नाः सर्वलोकस्य मातरः ॥ ४७ ॥ नंदा सुभद्रा सुरभी सुमना शोभनावती ॥ गावः सूर्यसमा भासा उत्पन्नाः कृतिमागताः ॥ ४८ ॥ सर्वलोकोपकारार्थं देवानां तर्पणाय च ॥ मामाश्रित्य स्थिता गावः स्नानार्थं भास्करस्य तु ॥ ४९ ॥ तासामंगानि पुण्यानि षड्रसाः खगसत्तम ॥ खगादिषु च सर्वेषु स्थिराणीत्युपधारय ॥ ५० ॥ गोमयं रोचनं मूत्रं क्षीरं दधि घृतं गवाम् ॥ षडंगानि पवित्राणि सर्वसिद्धिकराणि च ॥ ५१ ॥ गोमयादुत्थितः श्रीमान्बिल्ववृक्षोऽर्कवल्लभः ॥ तत्रास्ते पद्महस्ता श्रीर्वृक्षस्तेन च स स्मृतः ॥ ५२ ॥ पंकान्युत्पलपद्मानि पुनर्जातानि गोमयात् ॥ गोरोचनं च मंगल्यं पवित्रं सर्वकामदम् ॥ ५३ ॥ गोमूत्राद्गुग्गुलुर्जातः सुगंधिः प्रियदर्शनः ॥ आहारः सर्वदेवानां भास्करस्य विशेषतः ॥ ५४ ॥ यद्बीजं जगतः किंचित्तज्ज्ञेयं क्षीरसंभवम् ॥ दध्नः सर्वाणि जातानि मांगल्यान्यर्थसिद्धये ॥ ५५ ॥ घृतादमृतमुत्पन्नममराणामतिप्रियम् ॥ तस्माद्घृतेन पयसा दध्ना यः स्नापयेद्रविम् ॥ ५६ ॥ तदंते चोष्णतोयेन कषायैश्च निरूपयेत् ॥ स्नाप्य शीतांबुना पश्चाद्भानुं रोचनयालभेत् ॥ ५७ ॥ पूजयेद्बिल्वपत्रैश्च पद्मैर्नीलोत्पलैस्तथा ॥ अर्घ्यं दद्यात्ततः पश्चात्सवस्त्रं गुग्गुलं खग ॥ ५८ ॥ पायसं दधिभक्तं च वस्त्रं च मधुना सह ॥ निवेदयेच्च सद्भक्त्या भक्ष्याणि विविधानि च ॥ ५९ ॥ कृत्वा प्रदक्षिणं पश्चात्प्रणिपत्य क्षमापयेत् ॥ अनेन विधिना भानुं षडंगेन दिवस्पतिम् ॥ ६० ॥ इह लोके परे चैव सर्वान्कामान्स गच्छति ॥ षडंगविधिना तं चापूज्यैवं सुमना रविम् ॥ ६१ ॥ स्वर्गं नयेत्सधीमांस्तु कुलानामेकविंशतिम् ॥ स्वर्गे स्थाप्य स्वयं गच्छेज्ज्यौतिषं नाम तत्पदम् ॥ ६२ ॥ अंशेन भोजका वीर देवकार्ये नियोजिताः ॥ प्रयांति स्वामिना सार्धं श्रीमद्भानुं परं महः ॥ ६३ ॥ भुक्त्वा भोगांस्तु विपुलान्भोजको भोगसंमितः ॥ कालात्पुनरिहायातः पृथिव्यामेकराड्भवेत् ॥ ६४ ॥ पुष्पं पत्रं फलं तोयं यद्दत्तं भास्करार्चने ॥ सौरा गावश्च गच्छंति सूर्यलोकं न संशयः ॥ ६५ ॥ यः पिबेद्भोजने धेनोरदत्ताभानवे पयः ॥ स गच्छेन्नरकं घोरमकुर्वंस्तर्पणं रवेः ॥ ६६ ॥ एककालं पिबेत्क्षीरं धेनूनां भास्करस्य तु ॥ अनेन स्नापयेद्देवं क्षीरेण खगसत्तम ॥ ६७ ॥ प्रत्यूषे यद्भवेत्क्षीरं धेनूनां भास्करस्य तु ॥ स्नापयेत्तेन वै भानुं कृत्स्नेन गरुडाग्रज ॥ ६८ ॥ यस्तु लोको भजेत्सर्वं न देवाय निवेदयेत् ॥ यावन्तो रोमकूपाश्च गवां देहे खगाधिप ॥ तावद्वर्षसहस्राणि नरके पच्यते खग ॥ ६९ ॥ पूजितं पूज्यमानं वा यः कश्चिच्छृणुयाद्रविम् ॥ श्रुत्वानुमोदते यस्तु स यज्ञफलमश्नुते ॥ ७० ॥ भास्करं पूजितं दृष्ट्वा सर्वपापैः प्रमुच्यते ॥ हर्षात्प्रणम्य वै भानुं तस्य लोके महीयते ॥ ७१ ॥ पूज्यमानं रविं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्त्या यः पश्येन्मानवः खग ॥ सोऽपि यज्ञफलं कृत्स्नं प्राप्नुयान्नात्र संशयः ॥ ७२ ॥ श्रुत्वानुमोदते यस्तु पूज्यमानं दिवाकरम् ॥ तत्सर्वं फलमाप्नोति प्रसादाद्भास्करस्य तु ॥ ७३ ॥ एकजन्मानुगं दानं भक्त्या यच्च निवेदितम् ॥ जपयज्ञादियुक्तेभ्यः सहस्रभविकं स्मृतम् ॥ आभूतसंप्लवस्थायि प्रदानं जपजीविनाम् ॥ ७४ ॥ अत्यल्पमपि यद्दत्तं वाचकाय खगाधिप ॥ तन्महाप्रलयं यावद्दातुर्भोगाय कल्पते ॥ ७५ ॥ न दानमल्पं बहुधा किंचिदस्ति विजानताम् ॥ देशकालविधिश्रद्धापात्रयुक्तं तदक्षयम् ॥ ७६ ॥ पात्रे देशे च काले च विधिना श्रद्धया च यत् ॥ दत्तं हुतं कृतं चैव तदनंतफलं भवेत् ॥ ७७ ॥ तिलार्धमपि यद्वीर दीयते श्रद्धया द्विज ॥ सत्पात्रे विधिवद्भक्त्या तद्भवेत्सर्वकामिकम् ॥ ७८ ॥ यत्स्नातं ज्ञानसलिलैः शीलभस्मप्रमार्जितम् ॥ तत्पात्रं सर्वपात्रेभ्य उत्तमं परिकीर्तितम् ॥ ७९ ॥ जपो दमो यमः पुंसां त्राता संसारसागरात् ॥ अज्ञानां पापनेत्राणां तत्पात्रं परमं स्मृतम् ॥ ८० ॥ ज्ञानप्लवेन चोपेतं शास्त्रं पापमहार्णवात् ॥ अज्ञान्संतारयेन्नूनं किं शिला तारयेच्छिलाम् ॥ ८१ ॥ द्विजानां वेदविदुषां कटिसंभोगि यत्फलम् ॥ हंतकारप्रदानेन तत्फलं जपजीविने ॥ ८२ ॥ जीवो यस्यैत्य गृहे च भुङ्क्ते सत्कृतिसत्कृतः ॥ कुलमुत्तारयेत्तस्य नरकार्णवसंस्थितम् ॥ ८३ ॥ यज्ञाग्निहोमतीर्थेषु यत्फलं परिकीर्तितम् ॥ जपिनामन्नदानेन तत्समग्रं फलं लभेत् ॥ ८४ ॥ भोजिने शांतचित्ताय परिध्यानरताय च ॥ श्रद्धयान्नं सकृद्दत्त्वा सर्वपापैः प्रमुच्यते ॥ ८५ ॥ जपकाञ्छांतिसंयुक्तानादित्यार्पितचेतसः ॥ भोजयित्वा सकृद्भक्त्या सर्वान्कामानवाप्नुयात् ॥ ८६ ॥ ध्यायमानो रवेः सूक्तं भोजयेत्सततं च यः ॥ ततः साक्षादनेनैव तद्भुक्तमशनं भवेत् ॥ ८७ ॥ पितॄनुद्दिश्य यः श्राद्धे भोजयेद्भोजकं नरः ॥ स स्थानं समवाप्नोति भानवीयमसंशयः ॥ ८८ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे धेनुमाहात्म्यवर्णनं नाम सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥ छ ॥ ॥ सप्ताश्व उवाच ॥ ॥ सूर्याय सर्वपाकान्नं निवेद्याग्नौ च होमयेत् ॥ हुत्वाग्नौ प्रक्षिपेद्वीर वलिं दिक्षु समंततः ॥ १ ॥ सूर्याग्निगुरुविप्राणां सर्वपाकान्नमन्वहम् ॥ योऽनिवेद्यात्मना भुंक्ते स भुंक्ते किल्बिषं नरः ॥ २ ॥ कृषिपाल्ये च वाणिज्ये क्रोधसत्यक्षयादिभिः ॥ पुंसां पापानि वर्धंते सूनादोषैश्च पंचभिः ॥ ३ ॥ कंडनी पेषणी चुल्ली उदकुंभः प्रमार्जनी ॥ पंच सूना गृहस्थस्य तेन स्वर्गं न गच्छति ॥ ४ ॥ सूर्याग्निगुरुपूजाभिः पापैरेतैर्न लिप्यते ॥ अन्यैश्च पातकैर्घोरैस्तस्मात्संपूजयेत्सदा ॥ ५ ॥ सूर्याग्निगुरुनैवेद्यं यावत्स्यादन्नसंख्यया ॥ तावद्वर्षसहस्राणि दाता सूर्यपुरे वसेत् ॥ ६ ॥ घृतपूपयुतैः सिक्तैः पुण्यं दशगुणोत्तरम् ॥

१ नन्नपूर्वकाल्यवार्पः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवदंशगुणैर्युक्तं पुण्यं शतगुणं खग ॥ ७ ॥ षष्टिकौदननैवेद्यं सहस्रगुणितं फलम् ॥ सुगंधशालिनैवेद्यं विज्ञेयमयुतोत्तरम् ॥ ८ ॥ भक्ष्यान्नपानदानानि तत्फलानि तथातथा ॥ यद्वा तद्वा सदा देयं सूर्याग्निगुरुसाधुषु ॥ भक्ष्यं निवेद्य पूर्वोक्तमक्षयं लभते फलम् ॥ ९ ॥ एवं यः कुरुते भक्तिं देव देवे दिवाकरे ॥ स पितॄन्त्सर्वपापेभ्यः समुद्धृत्य दिवं नयेत् ॥ १० ॥ गंगास्नानमिदं पुण्यं दर्शनात्प्राप्नुयाद्रवेः ॥ सर्वतीर्थाभिषेकं च प्रणामाद्विंदते खग ॥ ११ ॥ मुच्यते सर्वपापेभ्यः प्रणम्य शिरसा रविम् ॥ शुश्रूषेत च संध्यायां सूर्यलोके महीयते ॥ १२ ॥ युगपत्पूजितास्तेन ब्रह्मविष्णुमहेश्वराः ॥ पितरः सर्वदेवाश्च भवेयुः पूजिता रवौ ॥ १३ ॥ तुष्यंति पितरस्तस्य सुकृष्टेनेव कर्षुकाः ॥ यः श्राद्धे भोजयेद्भक्त्या ब्राह्मणं जपजीविनम् ॥ १४ ॥ अपि नः स कुले कंचिदुद्धरेत्किं खगेश्वर ॥ यः संपूज्य रविं श्राद्धे भोजयेज्जपजीविनम् ॥ १५ ॥ तृप्यंति पितरस्तस्य गायंति च पितामहाः ॥ अद्य नः स कुले प्राज्ञो वाचकं भोजयिष्यति ॥ १६ ॥ पुराणविदमायांतं दृष्ट्वैव सह संस्थिताः ॥ क्रीडंत्योषधयः सर्वा यास्यामः स्वर्गमक्षयम् ॥ १७ ॥ अनुग्रहाय लोकानां श्रद्धायाश्च परीक्षणे ॥ चरंत्यतिथिरूपेण पितरो देवतास्तथा ॥ ॥ १८ ॥ तस्मादतिथिमायांतमग्रे गच्छेत्कृतांजलिः ॥ स्वागतासनपाद्यार्घ्यस्नानान्नशयनादिभिः ॥ १९ ॥ रूपान्वितं विरूपं वा मलिनं मलिनांबरम् ॥ वेलायामतिथिं प्राप्तं पंडितो न विचारयेत् ॥ २० ॥ भोजकानां शरीरेषु नित्यं सन्निहितो रविः ॥ ये भोजकास्त्यजंत्यन्ये सर्वपापेष्ववस्थिताः ॥ अधोमुखोर्द्ध्वपादास्ते पतंति नरकाग्निषु ॥ २१ ॥ कृमिभिर्भिन्नवदनास्तप्यमानाश्च वह्निना ॥ पीड्यंते चायुधैर्घोरैर्यावदिंद्राश्चतुर्दश ॥ २२ ॥ येचापवादं शृण्वंति विमूढा ब्राह्मणेषु वै ॥ ते विशेषेण पच्यंते नरकेषु मदिच्छया ॥ २३ ॥ सर्वेषामेव पात्राणां सत्पात्रं जापकः परः ॥ तस्मात्सर्वप्रयत्नेन पूजयेत्सुसमाहितः ॥ २४ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु भोजकसत्कारवर्णनं नामाष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ ॥ छ ॥ ॥ सप्ताश्वतिलक उवाच ॥ ॥ आमपात्ररसा यद्वन्नश्यंते नश्यभाजने ॥ जपोपेक्षे तथा दानं सह पात्रेण नश्यति ॥ सद्वीजमूषरे यद्वत्सम्पुप्तं निष्फलं भवेत् ॥१॥ भस्मनीव हुतं हव्यं यथा होतुश्च निष्फलम् ॥ जपेन रहिते विप्रे तथा दानं निरर्थकम् ॥२॥ यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला ॥ ब्राह्मणस्य तथा जन्म जपहीनस्य निष्फलम् ॥३॥ लोहोडुपेन प्रतरन्निमज्जत्युदके यथा ॥ दाता दाता ग्रहीता च पतत्यंधे तमस्यथ ॥४॥ कारुण्यात्सर्वभूतेषु श्रद्धया यत्प्रदीयते ॥ दानं तद्वै खग ज्ञेयं सार्वकामिकमुत्तमम् ॥ ५ ॥ दीनांधकृपणानां च बालवृद्धातुरेषु च ॥ यद्दीयते खगश्रेष्ठ तस्यानन्तफलं भवेत् ॥ ६ ॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न हि स्वार्थं समुद्दिश्य प्रतिगृह्णंति साधवः ॥ दातुरेवोपकाराय जगृहुः श्रावणादयः ॥ ७ ॥ दातुरेवोपकाराय वदत्यर्थी ददस्व मे ॥
यस्माद्दाता प्रयात्यूर्ध्वमधस्तिष्ठेत्प्रतिग्रही ॥ ८ ॥ देहीति सुवदन्नर्थी धनं बोधयतीव सः ॥ यन्मया कृतमर्थित्वं प्रगेऽदानफलं हि तत् ॥ ९ ॥
बोधयंति न याचन्ते देहीति कृपणा जनाः ॥ अवस्थेयमदानस्य यद्याचामो गृहेगृहे ॥ १० ॥ आयात्यर्थी गृहं यस्तु कस्तं न प्रतिपूजयेत् ॥
कोयमर्थी न पूज्यः स्याद्याचमानो दिनेदिने ॥ ११ ॥ यद्बलादप्यनिच्छंतं योजयंति नराश्रयान् ॥ अहन्यहनि याचंते दातुस्ते दर्शयंति हि ॥
॥ १२ ॥ एकस्तिष्ठति चाधस्तादन्यश्चोपरि तिष्ठति ॥ दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥ १३ ॥ यः प्राप्तायार्थिने दानं त्यक्त्वा पात्र
मुदीक्षते ॥ सर्वकर्मसु युक्तत्वान्न दाता पारमार्थिकः ॥१४॥ यद्यर्थिनो नरा न स्युर्दानधर्मः कथं भवेत्॥तदर्थिषु भवेद्दानं स्वागतं स्वागतं प्रियम्॥
॥ १५ ॥ पादोदकमनुव्रज्यात्स्वर्गसोपानसप्तकम् ॥ चिंताचिंतानुरूपेण कदा कस्य विनष्यति ॥ १६ ॥ ग्रासादर्धमपि ग्रासं युक्तं दातुं सदा
र्थिनाम् ॥ दानं प्रियविनिर्मुक्तं नष्टमाहुर्मनीषिणः ॥ १७ ॥ तस्मात्सत्कृत्य दातव्यमनंतफलमिच्छता ॥ प्रेत्याख्यानमपि श्रेयः प्रियानुनयपेश
लम् ॥१८॥ न तद्दानमसत्कारपारुष्यमलिनीकृतम् ॥ वरं न दत्तमर्थिभ्यः संक्रुद्धेनांतरात्मना॥१९॥ न तद्धनं न च प्रीतिर्न धर्मः प्रियवर्जितः ॥
दानप्रदाननियमयज्ञध्यानं हुतं तपः ॥ यत्नेनापि कृतं सर्वं क्रोधोऽस्य निष्फलं खग ॥ २० ॥ यः श्रद्धयार्चितं दद्यात्प्रति गृह्णाति चार्चितम् ॥
तावुभौ गच्छतः स्वर्गं नरकं तद्विपर्ययात् ॥ २१ ॥ औदार्यं स्वागतं मैत्री ह्यनुकंपा च मत्सरः ॥ पंचभिस्तु गुरौ दानं दातुर्दाने महाफलम्॥२२॥
वाराणसी कुरुक्षेत्रं प्रयागं पुष्कराणि च ॥ गंगातटं समुद्रश्च नैमिषारण्यमेव च ॥ २३ ॥ मूलस्थानं महापुण्यं पुंडीरस्वामिकं तथा ॥ कालप्रियं
खगश्रेष्ठ क्षीरिकावास एव च ॥ २४ ॥ इत्येते कीर्तिता देशाः सुरसिद्धनिषेविताः ॥ सर्वे सूर्याश्रमाः पुण्याः सर्वा नद्यः सपर्वताः ॥ गोसिद्धमुनि
वासाश्च देशाः पुण्याः प्रकीर्तिताः ॥ २५ ॥ सूर्यायतनसंस्थानां यद्यदल्पं तु दीयते ॥ तदनंतफलं ज्ञेयं वचः क्षेत्रानुभावतः ॥ २६ ॥ ग्रहणं चंद्र
सूर्याभ्यामुत्तरायणमुत्तमम् ॥ विषुवं सव्यतीपातं षडशीतिमुखं तथा ॥ २७ ॥ दिनच्छिद्राणि संक्रांतिः पुण्यं विषुपदं खग ॥ इति कालः समा
ख्यातः पुंसां पुण्यविवर्धनः ॥ २८ ॥ भक्तिभावः परा प्रीतिर्धर्मो धर्मैकभावनः ॥ प्रतिपत्तिरिति ज्ञेयं श्रद्धापर्यायपंचकम् ॥ २९ ॥ श्रद्धया विधि
वत्पात्रे प्रतिपादितमुत्तमम् ॥ तस्माच्छ्रद्धां समास्थाय देयमक्षयमिच्छता ॥ ३० ॥ यद्दानं श्रद्धया पात्रे विधिवत्प्रतिपादितम् ॥ तदनंतफलं ज्ञेय
मपि वा भारमात्रकम् ॥ ३१ ॥ आर्तेषु दीनेषु गुणान्वितेषु यः श्रद्धया स्वल्पमपि प्रदद्यात ॥ स सर्वकामान्समुपैति लोकाञ्छ्रद्धेव दानं प्रव



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दंति तज्ज्ञाः ॥ ३२ ॥ श्रद्धा दानं परं ज्ञेयं श्रद्धा एव तपः परम् ॥ श्रद्धां यज्ञमुशन्तीह श्रद्धा परमुपोषितम् ॥ ३३ ॥ अथाहिंसा क्षमा सत्यं ह्रीः श्रद्धेंद्रियसंयमः ॥ दानमिष्टं तपो ध्यानं दशकं धर्मसाधनम् ॥ ३४ ॥ हंत व्यस्तैः समस्तैर्वा सूर्यधर्मैरनुष्ठितैः ॥ सूर्यौकसां च संप्राप्तेर्गतिरेका प्रकीर्तिता ॥ ३५ ॥ यथा भूः सर्वभूतानां शांतेरतिशयः स्मृतः ॥ कुर्यात्पुण्यं महत्तस्मान्मम लोकेप्सया सुधीः ॥ ३६ ॥ परस्त्रीद्रव्यसंकल्पं यः सापेक्षं करोति च ॥ गुरुमार्तमशक्तं वा विदेशे प्रस्थितं तथा ॥ अरिभिः परिभूतं च संत्यजेच्चैव पापकृत् ॥ ३७ ॥ तद्भार्यामित्रपुत्रेषु यश्चा वज्ञां करोति च ॥ इत्येतत्पातकं ज्ञेयं गुरुनिंदासमं भवेत् ॥ ३८ ॥ ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ॥ महापातकिनस्त्वेते तत्संयोगी च पञ्चमः ॥ ३९ ॥ क्रोधाद्द्वेषाद्भयाल्लोभाद्ब्राह्मणस्य वदेत यः ॥ प्राणांतिकं महादोषं ब्रह्महा स उदाहृतः ॥ ४० ॥ ब्राह्मणं च समाहूय याचमानमकिंचनम् ॥ यन्नास्तीति च यो ब्रूयात्स चाण्डाल उदाहृतः ॥ ४१ ॥ देवद्विजगवां भूमिं पूर्वदत्तां हरेत यः ॥ प्रनष्टामपि काले तु तमाहुर्ब्रह्मघातकम् ॥ ४२ ॥ अधीत्य यो रवेर्ज्ञानं परित्यजति मंदधीः ॥ सुरापेन समं ज्ञेयं तस्य पापं च सुव्रत ॥ ४३ ॥ अग्निहोत्रपरित्यागः पंचयज्ञियकर्मणाम् ॥ मातापितृपरित्यागः कूटसाक्ष्यं सुहृद्वधः ॥ ४४ ॥ अप्रियं सूर्यभक्तानामभक्ष्यस्य च भक्ष णम् ॥ एवं निरपराधानां प्राणिनां च प्रमारणम् ॥ ४५ ॥ सर्वाधिपत्यमेतेषां नास्ति देवपुरोत्तमे ॥ आत्मलोकाधिपत्यं तु यच्छेत्सर्वजग त्पतिः ॥ ४६ ॥ केचिदत्रैव मुच्यन्ते ज्ञानयोगपरा नराः ॥ आवर्तंते पुनश्चान्ये संसारे भोगतत्पराः ॥ ४७ ॥ तस्माद्विमोक्षमन्विच्छन्भोगा सक्तिं विवर्जयेत् ॥ विरक्तः शांतचित्तात्मा सौरलोकमवाप्नुयात् ॥ ४८ ॥ यश्चाप्यसक्तहृदया जपन्तीमं प्रसंगतः ॥ तेषामपि वदत्येकः स्वानुभावा नुरूपतः ॥ ४९ ॥ तत्रार्चयन्ति ये भानुं सकृदुच्छिष्टदेहिनः ॥ तेषां पिशाचलोके तु भोगान्भानुः प्रयच्छति ॥ ५० ॥ द्विजपंति च ये भानुं क्रूराः संक्रुद्धलोचनाः ॥ रक्षोलोके रविस्तेषां महाभाग्यं प्रयच्छति ॥ ५१ ॥ त्रिरर्चयन्ति ये भानुं मद्यमांसरता नराः ॥ ऋषिलोके रविस्तेषां भोगान्दिव्यान्प्रयच्छति ॥ ५२ ॥ ये नृत्यगीतं कुर्वंति त्रिश्चतुर्धा यदृच्छया ॥ सूर्यस्याग्रे तु ते यांति गंधर्वभवनं खग ॥ ५३ ॥ लोकाः ख्यातिं समुद्दिश्य पूजयंति च गोपतिम् ॥ तेषां शक्रालये भानुः कामान्त्सर्वान्प्रयच्छति ॥ ५४ ॥ कामासक्तेन चित्तेन यः षडर्चयते रविम् ॥ प्राजापत्ये रविस्तस्य लोके भोगान्प्रयच्छति ॥ ५५ ॥ नवकृत्वोर्चयेद्यस्तु चित्रभानुं खगाधिप ॥ स याति विष्णुसालोक्यं विष्णुना सह मोदते ॥ ५६ ॥

१ 'नशः पान्तस्य' इति णत्वनिषेधः । २ 'यज्ञर्त्विग्भ्यां घखञौ' इति घः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मादपि परं स्थानं यद्भूतानां मनोहरम् ॥ अप्रमेयगुणैर्दिव्यैर्विमानैः सार्वकामिकैः ॥ ५७ ॥ असंख्यैर्वस्तुभिर्व्याप्तं गैरिकै रक्तचित्रकैः ॥ नानागृहसमाकीर्णैः सूर्यकोटिसमप्रभम् ॥ ५८ ॥ तत्स्थानं ते प्रगच्छंति अर्चयन्ति च ये द्विजान् ॥ तत्र लोके खगश्रेष्ठ वसंति विहरंति च ॥ तस्मादपि परं स्थानं ज्योतिष्कं सौरमुच्यते ॥ ५९ ॥ एवं सूर्यानुभावेन निकृष्टेनापि कर्मणा ॥ नरैः स्थानान्यवाप्यन्ते श्रद्धाभावानुरूपतः ॥ ॥६०॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु सप्ताश्वानूरुसंवादो नाम एकोननवत्यधिकशततमोऽध्यायः॥१८९॥ ॥छ॥

॥ ॥ सप्ताश्वतिलक उवाच ॥ ॥ तारारूपविमानानामिमाः संति च कोटयः ॥ यः कुर्यात्तु नमस्कारं तस्यैव च फलं भवेत् ॥ १ ॥ इत्येता गतयः प्रोक्ता महत्यः सौरधर्मिणाम् ॥ तस्मात्सौरः सदा धर्मः कर्तव्यः सुखमिच्छता ॥ २ ॥ इदानीं पापनिचयाः स्थूला नरकहेतवः ॥ ते समासेन कथ्यन्ते मनोवाक्कायसाधनैः ॥ ३ ॥ गवां मार्गे वने चाग्नेः पुरे ग्रामे समर्पणम् ॥ इत्येतानीह पापानि सुरापानसमानि च ॥ ४ ॥ वने सर्वस्य हरणं नरस्त्रीगजवाजिनाम् ॥ गोभूसमीपजातानामोषधीनां च खेचर ॥ ५ ॥ चन्दनागुरुकर्पूरकस्तूरीपट्टवाससाम् ॥ हस्तन्यासाप हरणं रुक्मस्तेयसमं स्मृतम् ॥ ६ ॥ कन्यानां वरयोग्यानामाकर्षणमसंगतः ॥ पुत्रमित्रकलत्रेषु गमनं भगिनीषु च ॥ ७ ॥ कुमारीसाहसं घोर मंत्यजस्त्रीनिषेवणम् ॥ सवर्णायाश्च गमनं गुरुतल्पसमं स्मृतम् ॥ ८ ॥ महापातकतुल्यानि पापान्युक्तानि यानि तु ॥ तानि पातकसंज्ञानि ब्रमहे चोपपातकम् ॥ ९ ॥ द्विजायार्थं परिश्रुत्य न प्रयच्छति यो द्विजं ॥ सद्भार्याणां च संत्यागः साधुबन्धुतपस्विनाम् ॥ १० ॥ गोभू हिरण्यवस्त्राणामपहारः प्रयत्नतः ॥ ईश्वरार्पितबुद्धीनां पीडनं सुमहत्कृतम् ॥ ११ ॥ यः पीडामाश्रमस्थान आचरेदल्पिकामपि ॥ तद्भूत्यु परिभूतस्य पशुधान्यधनस्य च ॥ १२ ॥ कूपधान्यपशुस्तेयमयाज्यानां च याजनम् ॥ यज्ञारामतडागानां दारापत्यस्य विक्रयः ॥ १३ ॥ तीर्थ यात्रोपवासानां व्रते च जपकर्मणि ॥ स्त्रीधनान्युपकर्षंति ये जनाः पापकर्मणा ॥ १४ ॥ अरक्षणं च नारीणां मद्यपस्त्रीनिषेवणम् ॥ ऋषीणाम प्रदानं च धान्यवृद्ध्युपसेवनम् ॥ १५ ॥ देवाग्निसाधुसाध्वीनां निन्दा गोब्राह्मणस्य च ॥ प्रत्यक्षं वा परोक्षं वा राजमाण्डलिकानपि ॥ १६ ॥ उत्सन्नपितृदेवाश्च स्वकर्मत्यागिनश्च ये ॥ दुःशीला नास्तिकाः पापाः सदसच्छून्यवादिनः ॥ १७ ॥ एवं कामे प्रवृत्ते तु वियोनौ पशुयोनिषु ॥ रजस्वलास्वयोनौ तु मैथुनं यः समाचरेत् ॥ १८ ॥ स्त्रीपुत्रमित्रसंप्रीतेरारामोच्छेदकाश्च ये ॥ जनस्याप्रियवक्तारो जनाभिप्रायभेदिनः ॥ १९ ॥

१ [illegible] । २ पञ्चम्यर्थे द्वितीया, माण्डलिकनृपाणामित्यर्थः । ३ स्त्रैतरस्यां वा योनीतरदेशे वा पुरुषगमागमाध्वनयोनौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेत्ता तडागवप्राणां संक्रमाणां रसस्य च ॥ एकपंक्तिस्थितानां च पंक्तिभेदं करोति यः ॥२०॥ इत्येतैस्तु नराः पापैरुपपातकिनः स्मृताः ॥२१॥
इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु सूर्यानूरुसंवादे नवत्यधिकशततमोऽध्यायः ॥ १९० ॥ ॥ छ ॥ ॥ सप्ता
श्वतिलक उवाच ॥ ॥ ये गोब्राह्मणसस्यानां साधूनां तु तपस्विनाम् ॥ दूषकाश्चैव वर्तंते नरा नरकगामिनः ॥ १ ॥ परिश्रमेण तप्यन्ते
येऽपरे तस्य सूचकाः ॥ परदाररतानां च कन्याया दूषकाश्च ये ॥ २ ॥ गोष्ठाग्निजलरथ्यासु तरुच्छायानगेषु च ॥ त्यजंति ये पुरीषाणि आरामा
यतनेषु च ॥ ३ ॥ मद्यपानरता नित्यं गीतवाद्यरता नराः ॥ कामक्रोधमदाविष्टा रंध्रान्वेषणतत्पराः ॥ ४ ॥ पाखण्डमतसंयुक्ता वृथा संलाप
कौतुकाः ॥ ये मार्गानुपरुंधंति परसीमां हरंति च ॥ ५ ॥ कूटशासनकर्तारः कूटकर्मकृतो नराः ॥ धनुषः शिलिपशस्त्राणां यः कर्ता
यश्च विक्रयी ॥ ६ ॥ निर्दयोतीवभृत्येषु पशूनां दमकश्च यः ॥ मिथ्या प्रवदतो वाचमाकर्णयति यः शनैः ॥ स्वामिमित्रगुरुद्रोही मायावी
चपलः शठः ॥ ७ ॥ ये भार्यापुत्रमित्राणि बालवृद्धकृशातुरान् ॥ भृत्यानतिथिबन्धूंश्च त्यजंति च बुभुक्षितान् ॥ ८ ॥ यः स्वयं पक्वमश्नाति
विप्रायान्नं न यच्छति ॥ वृथा पाकः स विज्ञेयो ब्रह्मवादिषु गर्हितः ॥ ९ ॥ नियमं स्वयमादाय ये त्यजंत्यजितेंद्रियाः ॥ प्रव्रज्यावसिता ये
च रहस्यानां तु भेदकाः ॥ १० ॥ ये ताडयंति गां मूढास्त्रासयंति मुहुर्मुहुः ॥ दुर्बलं न च पुष्णंति प्रनष्टान्नान्विषंति च ॥ ११ ॥ पीड
यंत्यतिभारेण अक्षयं वाहयंति च ॥ वृषाणां वृषणानन्ये पापिष्ठा गालयंति हि ॥ वाहयंति च गां वंध्यां ते पापिष्ठा नराधमाः ॥ १२ ॥ अनर्थवि
कलं हीनं बालवृद्धकृशानुगम् ॥ नानुकंपंति ये मूढास्ते यांति नरकं नराः ॥ १३ ॥ अजाविका माहिषिकाः सवित्रीवृषलीपतिः ॥ क्षत्रविट्शूद्रवृ
द्धाश्च स्वधर्मविहताः सदा ॥ १४ ॥ शिल्पिनः कारुका वेश्याः क्षेमकारनृपध्वजाः ॥ नर्तक्यो ज्योतिषि हताः सर्वे नरकगामिनः ॥ १५ ॥ घृत
तैलानुपानानि मधुमांसरसासवम् ॥ गुडेक्षुक्षीरशाकान्हिदधिमूलफलानि च ॥ १६ ॥ तृणानि काष्ठं पुष्पाणि बीजौषधिमनुत्तमाम् ॥ उपानच्छत्र
शकटमासनं शयनं मृदः ॥ १७ ॥ ताम्रं सीसं त्रपुं कांस्यं शंखाद्यं च जलोद्भवम् ॥ वार्क्षं वा वैणवं वापि गृहोपकरणानि च ॥१८॥ और्णकार्पा
सकौशेयभंगपट्टोद्भवानि च ॥ स्थूलसूक्ष्माणि संमूढा ये च लोका हरंति वै ॥१९॥ एवमादीनि चान्यानि द्रव्याणि विविधानि च॥ नरकेषु ध्रुवं
गच्छेद्यो हरेत पुमान्बलात् ॥ २० ॥ यद्वा तद्वा तु पारोक्ष्यमपि सर्षपमात्रकम् ॥ अपहृत्य नरो याति नरकं नात्र संशयः ॥ २१ ॥ एवमाद्यैर्नरः
पापैरुत्क्रांतः समनंतरम् ॥ शरीरयातनार्थं तत्पूर्वकायमवाप्नुयात् ॥ २२ ॥ यमलोके व्रजेदेवं शरीरेण यमाज्ञया ॥ यमदूतैर्महाघोरैर्नीयमानः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुदुःखितः ॥ २३ ॥ देवमानुपजीवानामधर्मनिरतात्मनाम् ॥ धर्मराजः स्मृतः शास्ता सुघोरैर्विविधैर्वधैः ॥ २४ ॥ विनयाभावयुक्तानां प्रमादा
त्स्वलितात्मनाम् ॥ प्रायश्चित्तैर्बहुविधैः पातकं नष्टतामियात् ॥ २५ ॥ पारदारिकचोराणामन्यायव्यवहारिणाम् ॥ शास्ता क्षितिपतिः प्रोक्तः
प्रच्छन्नानां च धर्मराट् ॥ २६ ॥ तस्मात्कृतस्य पापस्य प्रायश्चित्तं समाचरेत् ॥ नाभुक्तस्यान्यथा नाशः कल्पकोटिशतैरपि ॥ २७ ॥ यः
करोति शुभं कर्म कारयेदनुमोदयेत् ॥ कायेन मनसा वाचा स विंदेतोत्तमं सुखम् ॥२८॥ इति संक्षेपतः प्रोक्ता पापभेदात्त्रिधा गतिः ॥ तथान्या
गतयश्चित्राः कथ्यंते कर्मभेदतः ॥ २९ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे सप्ताश्वतिलकारुणसंवाद एकनव
त्यधिकशततमोऽध्यायः ॥ १९१ ॥॥ छ ॥ ॥ सप्ताश्वतिलक उवाच ॥ ॥-संत्रासजननं घोरं पापानां पापकारिणाम् ॥ गर्भस्थैर्जायमानैश्च
बालैस्तरुणमध्यमैः ॥ १ स्त्रीपुंनपुंसकैर्वृद्धैर्गंतव्यं सर्वजंतुषु ॥ शुभाशुभफलं तत्र भोक्तव्यं देहिभिस्तथा ॥ २ ॥ चित्रगुप्तादिभिः सर्वैर्धर्मस्थैः
सत्यवादिभिः ॥ प्रोक्तं वै धर्मराजस्य निकटे यच्छुभाशुभम् ॥ अवश्यं हि कृतं कर्म भोक्तव्यं तद्विचारितम् ॥ ३ ॥ तत्र ये शुभकर्माणः सौम्य
चित्ता दयान्विताः ॥ ते नरा यांति सौम्येन यथा यमनिकेतनम् ॥ ४ ॥ यः प्रदद्याद्द्विजेंद्राणामुपानत्काष्ठछत्रकम् ॥ स च धर्मेण महता सुखं
याति यमालयम् ॥ ५ ॥ सोपानत्को नरो यस्तु देवायतनमाविशेत् ॥ विशेषतो गर्भगृहं स संत्रासमुपाश्नुते ॥६॥ सोपानत्कानि दानानि तथान्नं
तु विशेषतः ॥ एवं दानविशेषेण धर्मराजपुरं नरः ॥ यस्माद्याति सुखेनैव तस्माद्धर्मं समाचरेत् ॥७॥ ये पुनः क्रूरकर्माणो नराः पापरताः खग ॥
ते घोरेण तथा यांति दक्षिणेन यमालयम् ॥ ८ ॥ षडशीतिसहस्राणि योजनानामशीति च ॥ वैवस्वतपुरं ज्ञेयं नानारूपमिति स्थितम् ॥ ९ ॥
समीपस्थमिवाभाति नराणां शुभचारिणाम् ॥ पापानामतिदूरस्थं तथा रौद्रेण गच्छताम् ॥ १० ॥ तीक्ष्णकंटकयुक्तेन शर्करानिचितेन च ॥
क्षुरधारातिनिस्त्रिंशैः पाषाणैश्चितितेन च ॥ ११ ॥ क्वचिदर्केण महता दुरंतैश्चैव खातकैः ॥ लोहशंकुभिराच्छिन्नास्तथा खड्गैः समन्विताः ॥
॥ १२ ॥ ततः पतद्भिर्विमलैः पर्वतैर्वृक्षसंकुलैः ॥ प्रेतप्राकारयुक्तेन यांति मार्गेण दुःखिताः ॥ १३ ॥ क्वचिद्विषमगर्ताभिः क्वचिल्लोष्टैः
सपिच्छलैः ॥ सुतप्तवालुकाभिश्च तथा तीक्ष्णैश्च शंकुभिः ॥ १४ ॥ अनेकशाखारचितैर्व्याप्तैर्वंशवनैः क्वचित् ॥ कष्टेन तमसः मार्ग अना
लंबे सुदारुणि ॥१५॥ अथ शृंगाटकैर्व्याप्तैः क्वचिद्दावाग्निना पुनः ॥ क्वचित्तप्तशिलाभिश्च क्वचिद्व्याप्तं हिमेन तु ॥ १६ ॥ क्वचिद्वालुकया व्याप्तमा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कंठांतं प्रवेशयेत् ॥ क्वचिदुष्णांबुना व्याप्तं क्वचिच्च कारीषाग्निना॥१७॥क्वचित्सिंहैः क्वचिद्व्याघ्रैर्दंशैः कीटैश्च दारुणैः ॥क्वचिन्महाजलौकाभिः क्वचिद्वाजगरैः पुनः ॥१८॥ मक्षिकाभिश्च रौद्राभिः क्वचित्सर्पैर्विषोल्बणैः ॥ महागजेंद्रयूनैश्च बलोन्मत्तैः प्रमाथिभिः ॥१९॥ पंथानमुल्लिखद्भिश्च तीक्ष्णशृंगैर्महावृषैः ॥ महाशृंगैश्च महिषैरुष्ट्रैर्मत्तैर्मदातुरैः॥२०॥डाकिनीभिश्च रौद्राभिर्विकरालैश्च राक्षसैः॥व्याधिभिश्च महाघोरैः पीड्यमाना व्रजंति हि ॥ ॥ २१ ॥ महापाशविमिश्रेण महाचंडेन वायुना ॥ महापाषाणवर्षेण हन्यमाना निराश्रयाः ॥ २२॥ क्वचिद्विद्युत्प्रपातेन दीर्यमाणा व्रजंति हि ॥ पतद्भिर्वज्रसंघातैरुल्कापातैश्च दारुणैः ॥ २३ ॥ प्रदीप्तांगारवर्षेण दह्यमाना व्रजंति हि ॥ महांधकारशुक्रेण पीड्यमाना व्रजंति हि ॥ २४ ॥ महामेघरवैर्घोरैर्वित्रास्यंते मुहुर्मुहुः ॥ तीक्ष्णपाषाणयुक्तेन पूर्यमाणाः समन्ततः ॥ २५ ॥ महाक्षुरांबुधाराभिः सेव्यमाना व्रजंति हि ॥ महामेघरवैर्घोरैर्वित्रास्यन्ते मुहुर्मुहुः ॥२६॥ भृशं शीतेन तीक्ष्णेन रूक्षेण मारुतेन च ॥ इत्थं मार्गेण रौद्रेण पाथेयरहितेन च ॥२७॥ निरालंबेन दुर्गेण निर्जनेन समंततः ॥ अविश्रामेण महता विगतापायदुर्धरैः ॥ २८ ॥ नीयंते देहिनः सर्वे ये मूढाः पापकारिणः ॥ इति ज्ञात्वा नरः कुर्यात्पुण्यं पापं च वर्जयेत् ॥ पुण्येन याति देवत्वं पापेन नरकं व्रजेत् ॥ २९ ॥ यैर्मनागपि देवेशो मनसा पूजितो रविः ॥ ते कदापि न पश्यंति यमस्य वदनं खग ॥ ॥ ३० ॥ किं तु पापैर्महाघोरैः किञ्चित्कालं तवाज्ञया ॥ भवंति प्रेतराजानस्ततो यांति रवेः पुरम्॥ ३१ ॥ ये पुनः सर्वभावेन भजन्ते भुवि भास्करम् ॥ न ते लिम्पंति पापेन पद्मपत्रमिवांभसा ॥ ३२ ॥ तस्मात्प्रकुर्याद्भक्तिं वै भास्करे सततं नरः ॥ श्रद्धया पूजयेद्भानुं य इच्छेद्विपुलं धनम् ॥ ॥ ३३ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे सप्ताश्वतिलकानूरुसंवादे द्विनवत्यधिकशततमोऽध्यायः ॥१९२॥ ॥छ॥ ॥ ॥ सप्ताश्वतिलक उवाच ॥ ॥ अयने विषुवे वारे संक्रांतौ ग्रहणे तथा ॥ पूजयेत्सततं भानुं सप्तम्यां तु विशेषतः ॥ १ ॥ वैनतेय निबोध त्वं विधानं सप्तमीव्रते ॥ एतद्धि परमं गुह्यं रवेराराधनं परम् ॥ २ ॥ सिद्धार्थकैस्तु प्रथमा द्वितीया चार्कसंपुटैः॥तृतीया मरिचैः कार्या चतुर्थी तिलसप्तमी ॥ ३ ॥ सप्तमी चौदनैर्वीर सप्तमी परिकीर्तिता ॥ इत्येताः सप्त सप्तम्यः कर्तव्या भूतिमिच्छता ॥ ४ ॥ तथा चानुक्रमे तासां लक्षणं कथयाम्यहम् ॥ माघे वा मार्गशीर्षे वा कार्या शुक्ला तु सप्तमी ॥ ५ ॥ आर्तस्य तु न नियमः पक्षमासकृतो भवेत् ॥ अर्धप्रहरशेषे तु कुर्याद्वै दंतधावनम् ॥ ६ ॥ पञ्चम्यां तत्र ये वृक्षाः कामितास्तान्वदाम्यहम् ॥ मधूके पुत्रलाभः स्याद्दुःखहा मार्कवो भवेत् ॥ ७ ॥ बदर्या च बृहत्या च क्षिप्रं



१ ईकारहस्व आर्षः । २ अत्रत्यः पाठः पञ्चमीषष्ठ्योः सप्तम्योः पारणानुकेस्त्रुटित इति प्रतिभाति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रोगात्प्रमुच्यते ॥ ऐश्वर्यं च भवेद्बिल्वैः खदिरेण च संचयः ॥ ८ ॥ शत्रुक्षयः कदंबेषु अर्थलाभोतिमुक्तके ॥ गुरुतां याति सर्वत्र आटरूषकसंभवैः ॥ ९ ॥ ज्ञातिप्रधानतां याति अश्वत्थो यच्छते यशः ॥ करवीरात्परिज्ञानमचलं स्यान्न संशयः ॥ १० ॥ श्रियं प्राप्नोति विपुलां शिरीषस्य निवेशने ॥ प्रियंगुं सेव्यमानस्य सौभाग्यं परमं भवेत् ॥ ११ ॥ अभीप्सितार्थसिद्ध्यर्थं सुखासीनोथ वाग्यतः ॥ कामं यथेष्टं हृदये कृत्वा समभिमंत्र्य च ॥ मंत्रेणानेन मतिमानश्नीयाद्दन्तधावनम् ॥ १२ ॥ वरं दत्त्वाभिजानासि कामदं च वनस्पते ॥ सिद्धिं प्रयच्छ मे नित्यं दंतकाष्ठ नमोऽस्तु ते ॥ १३ ॥ त्रीन्वारान्परिजप्यैवं भक्षयेद्दंतधावनम् ॥ पश्चात्प्रक्षाल्य काष्ठं तु शुचौ देशे विनिक्षिपेत् ॥ १४ ॥ ऊर्ध्वे निपतिते सिद्धिस्तथा चाभिमुखे स्थिते ॥ अतोन्यथा तु पतिते आनीय पुनरुत्सृजेत् ॥ १५ ॥ पराङ्मुखं यदि भवेत्त्रीन्वारान्दंतधावनम् ॥ असिद्धां तु विजानीयान्न ग्राह्या सा तु सप्तमी ॥ १६ ॥ ब्रह्मचारी तु तां रात्रिं स्वप्यान्मंगलसेवया ॥ बिभ्रद्वासोनुपहतं शुचिराचारसंयुतः ॥ १७ ॥ तस्यां रात्र्यां व्यतीतायां प्रातरुत्थाय वै खग ॥ प्रक्षालयेन्मुखं धीमानश्नीयाद्दन्तधावनम् ॥ १८ ॥ उपविश्य शुचिर्भूत्वा प्रणम्य शिरसा रविम् ॥ जपं यथेष्टं कृत्वा तु जुहुयाच्च हुताशने ॥ १९ ॥ ततोपराह्णसमये स्नात्वा मृद्गोमयांबुभिः ॥ विधिवन्नियमं कृत्वा मौनी शुक्लांबरः शुचिः ॥ २० ॥ पूजयित्वा विधिभक्त्या देवदेवं दिवाकरम् ॥ स्वप्याद्देवस्य पुरतो गायत्रीजपतत्परः ॥ २१ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे दन्तकाष्ठविधिवर्णनं नाम त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥ ॥ छ ॥ ॥ सप्ताश्वतिलक उवाच ॥ ॥ अतः परं प्रवक्ष्यामि यैर्यैर्यत्फलमश्नुते ॥ स्वप्ने दृष्टे तु सप्तम्यां पुरुषो नियतव्रतः ॥ १ ॥ समाप्य विधिवत्सर्वां जपहोमादिकां क्रियाम् ॥ भूमौ शय्यां समास्थाय देवदेवं विचिन्तयेत् ॥ २ ॥ हन्त सुप्तो यदि नरः पश्येत्स्वप्ने दिवाकरम् ॥ शक्रध्वजं वा चन्द्रं वा तस्य सर्वाः समृद्धयः ॥ ३ ॥ भृंगारचमरादर्शकनकाभरणानि च ॥ रुधिरस्य स्रुतिः केशपात ऐश्वर्यकारकः ॥ स्वप्ने वृक्षाधिरोहे तु क्षिप्रमैश्वर्यमाहवे ॥ ४ ॥ दोहनं महिषीसिंहीगोधेनूनां करे स्वके ॥ बन्धश्चामां राज्यलाभो नाभेः स्पर्शे तु दुर्मतिः ॥ ५ ॥ अविं हत्वा स्वयं खादेत्सिंहमंबुजमेव च ॥ स्वांगमस्थि हुताशं च सुरापानं खगाधिप ॥ ६ ॥ हैमे वा राजते वापि यो भुंक्ते पायसं नरः ॥ पात्रे तु पद्मपत्रे वा तस्यैश्वर्यं समं भवेत् ॥ ७ ॥ द्यूते च वाथ वा युद्धे विजयो हि सुखावहः ॥ गात्रस्य स्वस्य ज्वलनं शिरोबन्धश्च भूतये ॥ ८ ॥ माल्यांबराणां शुक्लानां हयानां

१ दर्शन इति शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पशुपक्षिणाम् ॥ सदा लाभं प्रशंसंति विष्ठानां चानुलेपनम् ॥ ९ ॥ हययाने भवेत्क्षिप्रं रथयाने प्रजागमः ॥ नानाशिरोबाहुता च गृहस्थां कुरुते श्रियम् ॥ १० ॥ अगम्यागमनं धन्यं वेदाध्ययनमुत्तमम् ॥ देवद्विजश्रेष्ठवीरगुरुवृद्धतपस्विनः ॥ ११ ॥ यद्वदंति नरं स्वप्ने सत्यमेवेति तद्विदुः ॥ प्रशस्तं दर्शनं चैषामाशीर्वादः खगाधिप ॥ १२ ॥ राज्यं स्यात्स्वशिरश्छेदे धनं बहुवधे भवेत् ॥ रुदिते भक्ष्यसंप्राप्ती राज्यं निगडबन्धने॥१३॥ पर्वतं तुरगं सिंहं वृषभं गजमेव हि ॥ महदैश्वर्यमाप्नोति यो विक्रम्याधिरोहति ॥ १४ ॥ आगृह्णानो ग्रहांस्तारा मरीचिं परिवर्तयन् ॥ उन्मूलयति पर्वतांश्च राजा भवति भूतले ॥ १५ ॥ देहान्निष्क्रांतिरंत्राणां सर्वेषां च खगाधिप ॥ पानं समुद्रसरितामैश्वर्यसुखकारकम् ॥ १६ ॥ बलं चांबुनिधिं वापि तीर्थपारं प्रयाति यः ॥ तस्यापत्यं भवेद्वीर अचलं च खगाधिप ॥ १७ ॥ भवत्यर्थागमः शीघ्रं कृमिर्वा यदि भक्षयेत् ॥ अंगानां च सुरूपाणां लाभो दर्शनमेव च ॥ संयोगश्चैव मांगल्यैरारोग्यं धनमेव च ॥ १८ ॥ ऐश्वर्यं राज्यलाभश्च यस्मिन्स्वप्न उदाहृतः ॥ सप्त स्यान्नात्र संदेहश्चतुर्भिः श्रुत उत्तमः ॥ १९ ॥ पंचभिः पुत्रबाहुल्यं षड्भिरायुः सुतान्धनम् ॥ सप्तभिर्विविधान्कामानष्टभिर्विविधं यशः ॥ ॥ २० ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सूर्यारुणसंवादे स्वप्नवर्णनं नाम चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥ ७ ॥ ॥ ॥ अनूरुरुवाच ॥ ॥ भगवञ्छ्रोतुमिच्छामि सप्तमीनां परं विधिम् ॥ सर्वासामनुरूपाणां कथयस्व महामुने ॥ १ ॥ ॥ सप्ताश्वतिलक उवाच ॥ ॥ शृणु वीर खगश्रेष्ठ सप्तमीनां परं विधिम् ॥ कीर्तयिष्यामि ते सर्वं यथावत्परिपृच्छते ॥ २ ॥ तुल्यं किल खगश्रेष्ठ यथाख्यातं विवस्वता ॥ शुक्लपक्षे रविदिने प्रवृत्ते चोत्तरायणे ॥ ३ ॥ पुत्रदारधनक्षेत्रे गृह्णीयात्सप्तमीव्रतम् ॥ ऋषिभिर्ज्ञानसंपन्नैः सर्वकामफलप्रदैः ॥ ४ ॥ सप्तम्यः सप्त आख्यातास्तासां नामानि मे शृणु ॥ अर्कसंपुटकैरेका द्वितीया मरिचैस्तथा ॥ ५ ॥ तृतीया निंबपत्रैश्च चतुर्थी फलसप्तमी ॥ सप्तमी कामिका नाम्ना विधिमासां निबोध मे ॥ ६ ॥ पंचम्यामेकभक्तं तु कुर्यान्नियतमानसः ॥ अल्पाहारं न कुर्वीत मैथुनं दूरतस्त्यजेत् ॥ ७ ॥ वर्जयेन्मधु मांसं च अत्यम्लं च खगाधिप ॥ प्रभाते चैव षष्ठ्यां तु एकैकपर्णसंपुटे ॥ ८ ॥ घृतशाल्योदनं कृत्वा भक्षयेत्तु विधानतः ॥ अन्यदन्नमभुंजानः सप्तम्यां भोजनं भवेत् ॥ ९ ॥ एकैकवृद्ध्याभियुक्तैर्यो वसेत्तु खगेश्वर ॥ अन्यत्र मरिचं भक्षेन्निंबपत्राण्यतः परम् ॥ १० ॥ एवं लब्धफलानीह पक्षयोरुभयोरपि ॥ अन्नाद्यै रहितो यत्नादनोदन इति स्मृतः ॥ ११ ॥ आचरेद्विधिवद्भक्त्या पूजयित्वा विभावसुम् ॥ अहोरात्रं

१ लभेतेति शेषः, एवमायुरादीनि कर्मणि लाभक्रियायामन्वितानीत्यपि बोध्यम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वायुभक्षः कुर्याद्विजयसप्तमीम् ॥ १२ ॥ एकैकं सप्त सप्तमीरेवं विधिवच्चरेत् ॥ प्रालेख्य तासां नामानि पत्रकेषु पृथक्पृथक् ॥ १३ ॥ तानि सर्वाणि नामानि विलेख्य सुसमाहितः ॥ श्वेतचंदनदिग्धांगे माल्यदामोपशोभिते ॥ १४ ॥ सप्तधान्यहिरण्याढ्ये शशिकुन्देंदुसन्निभे ॥ अश्वत्थाशोकपत्राढ्ये दध्योदनसमन्विते ॥ १५ ॥ तदर्थं पूजयेद्भक्त्या तैस्तैर्दृष्टैर्न संशयः ॥ दृष्ट्वा तु शोभनं स्वप्नं न भूयः शयनं स्वपेत् ॥ १६ ॥ प्रातश्च कीर्तयेत्स्वप्नं यथादृष्टं खगाधिप ॥ प्राज्ञभोजकविप्रेभ्यः सुहृद्भ्यश्च खगाधिप ॥ १७ ॥ ततो मध्याह्नसमये स्नातः प्रयतमानसः ॥ तं चैव देवं विधिवत्पूजयित्वा दिवाकरम् ॥ १८ ॥ सम्यक्कृतजपो मौनी नगो हुतहुताशनः ॥ निष्क्रम्य देवायतनाद्भोजकाय निवेदयेत् ॥ १९ ॥ भवेदलाभो यदि भोजकानां विप्रास्तमर्हंति पुराणविज्ञाः ॥ ये मंत्रवेदावयवेषु निश्चिता विभुं समभ्यर्च्य दिवं व्रजेयुः ॥ २० ॥ कृत्वैवं सप्तमीः सप्त नरो भक्तिसमन्वितः ॥ श्रद्दधानोपि सूर्यस्य स कथं नाप्नुयात्फलम् ॥ २१ ॥ दशानामश्वमेधानां कृतानां यत्फलं भवेत् ॥ तत्फलं सप्तमी सप्त कृत्वा भक्त्या लभेत ना ॥ २२ ॥ दुष्प्रापं नास्ति तद्वीर सप्तम्यां यन्न दृश्यते ॥ न च रोगोऽस्त्यसौ लोके य एताभिर्न शाम्यति ॥ २३ ॥ कुष्ठानि यानि रौद्राणि दुश्चिकित्स्यानि भिषग्जनैः ॥ नीयन्ते तानि सर्वाणि गरुडेनेव पन्नगाः ॥ २४ ॥ सकलविबुधमान्यं स्वप्रकाशं जनानामभिमतफलदाने दीक्षितं तं सुपूज्यम् ॥ सुतधनकुलभोगैः सौख्यपुण्यैरुपेतो व्रजति च सुतनुं कां शाश्वतां तिग्मरश्मेः ॥ २५ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे सूर्यारुणसंवादे स्वप्नवर्णनं नाम पंचनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ छ ॥ ॥ सप्ताश्वतिलक उवाच ॥ ॥ अनीत्य भुक्तं पुरुषः सप्तम्यां गरुडाग्रज ॥ मैत्रीं विदध्यात्सर्वत्र जीवहिंसां विवर्जयेत् ॥ १ ॥ सप्तम्यां न स्पृशेत्तैलं नीलं वस्त्रं न धारयेत् ॥ न शयीत स्त्रिया सार्धं न सेवेत दुरोदरम् ॥ २ ॥ न रुद्यादश्रुपातेन न वा ध्यायेत्पिशाचकान् ॥ नाकृषेच्छिरसो यूका न वृथावादमाचरेत् ॥ परस्यानिष्टकथनमतिवादं च वर्जयेत् ॥ ३ ॥ न कंचित्ताडयेज्जंतुं न विशेत् कदाचन ॥ ब्रह्महत्यामवाप्नोति विशमानो रवेर्गृहम् ॥ ४ ॥ इत्येते समयाः प्रोक्ताः सौराणां गरुडाग्रज ॥ भोजकानां विशेषेण शृणु मे भानुनानघ ॥ ५ ॥ भोजकः खगशार्दूल यो लोभाद्द्रव्यमुत्सृजेत् ॥ वृद्ध्यै तु सततं वीर स गच्छेन्नरकं ध्रुवम् ॥ ६ ॥ विशेषे चाल्पकशते कामयाने खगाधिप ॥ प्रयुज्यमानो भोजकस्तु पंचकेन शतेन वै ॥ ७ ॥ प्रायश्चित्ती भवेद्वीर न चार्हः पूजने रवेः ॥ कृत्वा सांतपनं कृच्छ्रं ततः संपूजयेद्रविम् ॥ ८ ॥ नान्यदेवप्रतिष्ठा तु कर्तव्या भोजकेन तु ॥ कृत्वा तु तां खगश्रेष्ठ

[illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रायश्चित्तीयते नरः ॥ ९ ॥ तस्मात्तु तां न कुर्याद्वै भोजकः खगसत्तम ॥ मुक्त्वा तु भास्करं देवं नान्यं देवं निवेदयेत् ॥ १० ॥ कृत्वाधिवेशं देवानां ब्रह्मादीनां खगाधिप ॥ भोजको न स्पृशेद्भानुं कुर्यात्कृच्छ्रं च शुद्धये ॥ ११ ॥ कृत्वा तु कृच्छ्रं विधिवच्छुद्धेर्हेतुं खगाधिप ॥ ततः पूजयितुं भानुमधिकारी भवेन्नरः ॥ १२ ॥ न विज्ञातं प्रदातव्यं न म्लानं न च दूषितम् ॥ न च पर्युषितं माल्यं दातव्यमृद्धिमिच्छता ॥ १३ ॥ देवमुल्लोचयेद्यस्तु स खलः पुष्पलोभतः ॥ पुष्पाणि च सुगंधीनि भोजको नेतराणि च ॥ १४ ॥ ब्रह्महत्यामवाप्नोति भोजको लोभमोहितः ॥ महारौरवमासाद्य पच्यते शाश्वतीः समाः ॥ १५ ॥ हंत ते कीर्तयिष्यामि धूपदानविधिं परम् ॥ प्रदाने देवदेवस्य येन धूपेन यत्फलम् ॥ १६ ॥ सदा चंदनधूपेन सान्निध्यं कुरुते रविः ॥ प्रदद्यान्मानसे चैव यद्यदिच्छति मानवः ॥१७॥ तथैवागुरुधूपेन वरं दद्यादभीप्सितम् ॥ आरोग्यं वा श्रियं प्रेप्सुर्नित्यदा गुग्गुलं दहेत् ॥ १८ ॥ मंगलं धूपदानेन सदा यच्छति भानुमान् ॥ आरोग्यं च श्रियं दद्यात्सौख्यं च परमं भवेत् ॥ १९ ॥ सदा कुंकुमधूपेन सौभाग्यं लभते नरः ॥ श्रीवासकस्य धूपेन वाणिज्यं सफलं भवेत् ॥ २० ॥ रसं सर्वरसोपेतं ददतोर्थागमो ध्रुवम् ॥ देवदारुं च दहतो भवत्यन्नमथाक्षयम् ॥ २१ ॥ विलेपनं कुंकुमेन सर्वकामफलप्रदम् ॥ इह लोके सुखी भूत्वा दाता स्वर्गमवाप्नुयात् ॥ २२ ॥ चंदनस्य प्रदानेन श्रियमायुश्च विंदति ॥ रक्तचंदनदानेन सर्वं दद्याद्दिवाकरः ॥ २३ ॥ अपि रोगशतैर्ग्रस्तैः क्षिप्रारोग्यमवाप्नुयात् ॥ वर्तिगंधैश्च सौगंध्यं परमं विंदते नरः ॥ २४ ॥ कस्तूरिकालेपनकैरैश्वर्यमतुलं लभेत् ॥ कर्पूरसंयुतैर्गंधैः क्ष्माधिपाधिपतिर्भवेत् ॥ २५ ॥ चतुः समेन गंधेन किं तुल्यं प्राप्नुयान्नरः ॥ देवागारं तु तन्मन्ये भक्त्या य उपलेपयेत् ॥ २६ ॥ स रोगान्मुच्यते क्षिप्रं पुरुषो भोगवान्भवेत् ॥ अष्टादशेह कुष्ठानि ये चान्ये व्याधयो नृणाम् ॥ प्रलयं यांति ते सर्वे मृदा यद्युपलेपयेत् ॥ २७ ॥ प्रलेपनानां सर्वेषां रक्तचंदनमुत्तमम् ॥ नातः परतरं किंचिद्भानोस्तुष्टिकरं परम् ॥ २८ ॥ किं तस्य न भवेल्लोको यो ह्यनेन प्रलेपयेत् ॥ सर्वकामसमृद्धोऽसौ सूर्यलोके महीयते ॥ २९ ॥ उपलिप्य रवेर्गेहं कुर्याद्वै मंडलं पुनः ॥ एकेनाथ समाप्नोति भाग्यमारोग्यमुत्तमम् ॥ ३० ॥ त्रिभिः सप्तभिरच्छिन्ना बालो वान्योपि यो नरः ॥ तेन प्रदापयेद्देवान्कुर्यात्तान्न निवारयेत् ॥ अनेन विधिना कुर्याद्यावतीः सप्त सप्तमीः ॥ ३१ ॥ एता वै सप्त सप्तम्यो यथाप्रोक्ता विवस्वता ॥ कुर्वीत यो नरो भक्त्या सर्वपापैः प्रमुच्यते ॥३२॥ अर्कसंपुटकैर्वित्तं मरि चैः प्रियसंगमम् ॥ निंबपत्रै रोगनाशं फलैः पुत्रान्यथेप्सितान् ॥ धनं धान्यं सुवर्णं च ततो दद्याद्विवस्वते ॥ ३३ ॥ जयं प्राप्नोति विपुलं कृत्वा सर्वत्र खेचर ॥ सर्वान्कामान्कामिकस्तु प्राप्नुयान्नात्र संशयः ॥ ३४ ॥ नरो वा यदि





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वा नारी यथोक्तं सप्तमीव्रतम् ॥ यः करोति खगश्रेष्ठ स याति परमं पदम् ॥ ३५ ॥ न तेषां त्रिषु लोकेषु किंचिदस्तीति दुर्लभम् ॥ ये भक्त्या लोकनाथस्य व्रतिनः संयतेन्द्रियाः ॥ ३६ ॥ सर्वयज्ञफलं तेषां यथा वेदोदितं भवेत् ॥ ब्रह्मेंद्रविष्णवस्तेन पूजिता नात्र संशयः ॥ ३७ ॥ नांधो न कुष्ठी न क्लीबो न व्यंगो न च निर्धनः ॥ कदापि च भवेत्कश्चिद्यश्चरेत्सप्तमीव्रतम् ॥ ३८ ॥ पुत्रार्थी श्रुतिसंपन्नाल्लँभेत्पुत्रांश्चिरायुषः ॥ न तेषां त्रिषु लोकेषु किंचिदस्तीति दुर्लभम् ॥ भोगार्थी लभते भोगान्व्रतेनानेन सुव्रत ॥ ३९ ॥ क्रोधात्प्रमादाल्लोभाच्च व्रतभंगो यदा भवेत् ॥ प्रायश्चित्त मिदं कृत्वा पुनरेव व्रती भवेत् ॥४०॥ सप्तैव यावत्सप्तम्यः संप्राप्ता गुरुणा खग ॥ तासु भास्करमभ्यर्च्य माल्यधूपादिभिर्नरः ॥ भोजयित्वा द्विजा न्भक्त्या प्राप्नुयात्स्वर्गमक्षयम् ॥ ४१ ॥ सप्तम्यां विप्रमुख्येभ्यो योऽन्नं दद्यात्खगेश्वर ॥ तदक्षयं भवेत्तस्य स च सूर्यगृहं व्रजेत् ॥ ४२ ॥ इति ते कीर्तितं वीर सप्तमीव्रतमुत्तमम् ॥ भूय एवाभिधास्यामि शृणु मे वदतोनघ ॥ ४३ ॥ येन व्रतप्रभावेण कामिकं फलमश्नुते ॥ सप्तमीं खगशार्दूल शुक्लां द्वादशनामिकाम् ॥ ४४ ॥ गोमूत्रगोमयाहारः पङ्घृताहार एव च ॥ अथ वा यावकाहारः शीर्णपर्णाशनोपि वा ॥४५॥ क्षीराशी चैव भक्तं वा सिक्थाहारोथ वा पुनः ॥ जलाहारोथ वा विद्वान्पूजयेत दिवाकरम् ॥ ४६ ॥ पुष्पोपहारैर्विविधैः पद्मसौगंधिकोत्पलैः ॥ नानाप्रकारैर्गंधैश्च धूपैर्गुग्गुलुचंदनैः ॥ ४७ ॥ कृशरैः पायसान्नैर्वा विविधैश्च विभूषणैः ॥ अर्चयित्वा द्विजश्रेष्ठ भक्ष्यवस्त्रादिभूषणैः ॥ ४८ ॥ सर्वपक्षफलं प्राप्य सूर्यलोकं ततो व्रजेत् ॥ तपसोंते ततो वीर कुले महति जायते ॥ ४९ ॥ यथाक्रमं प्रयत्नेन नामानि परिकीर्तयेत् ॥ माघे च फाल्गुने मासि चैत्रे च गरुडाग्रज ॥ ५० ॥ वैशाखे त्वथ ज्येष्ठे तु आषाढे श्रावणे तथा ॥ मासि भाद्रपदे वीर तथा चाश्वयुजे खग ॥ ५१ ॥ मार्गशीर्षे तथा पौषे पूजयेत्सततं रविम् ॥ विभावसुं विवस्वंतं भास्करं पक्षिसत्तम ॥ ५२ ॥ विकर्तनं पतंगं च सहस्रांशुं खगाधिप ॥ एतानि देवनामानि मासेष्वेतेषु खेचर ॥ ५३ ॥ पूजयेद्देवदेवेशं देवानामपि दुर्लभम् ॥ एवं क्रमेण तीक्ष्णांशुं नामभिः परिपूजयेत् ॥ ५४ ॥ इत्येवं ते समाख्यातं मया गुह्यमिदं खग ॥ अभक्ताय न दातव्यं नाशिष्याय कथंचन ॥ ५५ ॥ न च पापकृते वीर दातव्यं विनतात्मज ॥ व्याधेस्तु नाशनार्थाय देयं विप्राय सुव्रत ॥ ५६ ॥ दत्त्वा स्वर्गमवाप्नोति श्रुत्वा च विधिवत्खग ॥ ५७ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सौरधर्मे सप्तमीकल्पे नामपूजाविधिवर्णनं नाम षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥ छ ॥ ॥ सप्ताश्वतिलक उवाच ॥ ॥ अतः परं प्रवक्ष्यामि पुष्पधूपादिकामिकम् ॥ येन येन तु दानेन तत्तत्फलमवाप्नुयात् ॥ १ ॥ मालतीकुसुमैः पूजा भवेत्सान्निध्यकारिका ॥ आरोग्यं करवी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रैस्तु भवत्यर्थश्च शाश्वतः ॥ २ ॥ ऐश्वर्यमतुलं चैव यशश्च विपुलं तथा ॥ मल्लिकायाश्च कुसुमैर्भगवत्सम्मुखो भवेत् ॥ ३ ॥ सौभाग्यं पुंडरीकैस्तु
परमैश्वर्यमाप्नुयात् ॥ कमलोत्पलकुंदैस्तु यशो विद्या बलं भवेत् ॥ ४ ॥ नानाविधैः सुकुसुमैः क्षिप्रं रोगात्प्रमुच्यते ॥ भवत्यक्षयमन्नं च नित्यम
र्चयतो रविम् ॥ ५ ॥ मंदारकुसुमैः पूजा सर्वकुष्ठनिवारिणी ॥ बिल्वस्य पत्रकुसुमैर्महतीं श्रियमाप्नुयात् ॥ ६ ॥ अर्कस्रजा भवत्यर्कः सर्वदा वरदः
प्रभुः ॥ प्रदद्याद्रूपिणीं कन्यामर्चितो बकुलस्रजा ॥७॥ किंशुकैः पूजितो देवो न पीडयति भास्करः ॥ अगस्त्यकुसुमैः सिद्धिं सानुकूल्यं प्रयच्छति
॥ ८ ॥ स्वयं रूपवतीं दद्यात्पूजितश्चंपकस्रजा ॥ निरुद्वेगो भवेन्नित्यं पूजितः पुष्पमालया ॥ ९ ॥ अशोककुसुमैर्देवमर्चयेद्यो दिवाकरम् ॥ आम्रा
तकस्य कुसुमं निर्माल्यमिव दृश्यते ॥ १० ॥ अप्रत्यग्रं बहिर्यस्मात्तस्मात्तत्परिवर्जयेत् ॥ नवभिस्त्वचलां कीर्तिं दशभिः सुखमुत्तमम् ॥ ११ ॥
भोगानेकादशेनेह प्राप्नुयान्नात्र संशयः ॥ द्वादशेनाचलं राज्यं द्वादशाख्यमवाप्नुयात् ॥ १२ ॥ प्रथमं पूजयेद्भक्त्या भूरूपं प्रणमेत्सदा ॥ भुवर्नमो
द्वितीयं च तृतीयं स्वर्नमेन्नरः ॥ १३ ॥ महर्नमश्चतुर्थं तु पंचमं तु जनोनमः ॥ तपो नमस्तथा षष्ठं नमः सत्यं तु सप्तमम् ॥ १४ ॥ अष्टमं भूर्भुव
श्चेति नवमं खगसत्तम ॥ दशमं षडतो वीर नमोल्काय तथा परम् ॥ १५ ॥ द्वादशं तु खपोल्केति ॐ नमः पूजयेत्खग ॥ एवंमंडलकारी तु
क्रमादेवं फलं लभेत् ॥१६॥ घृतदीपप्रदानेन चक्षुष्माञ्जायते नरः ॥ कटुतैलस्य दीपेन शत्रूणां संक्षयो भवेत् ॥ मधूकानां तु तैलेन सौभाग्यं परमं
लभेत् ॥ १७ ॥ संपूज्य विधिवद्देवं पुष्पधूपादिभिर्नरः ॥ यथाशक्त्या ततः पश्चान्नैवेद्यं तु प्रकल्पयेत् ॥ १८ ॥ पुष्पाणां प्रवरा जाती धूपानां चैव
चन्दनम् ॥ गंधानां कुंकुमं श्रेष्ठं मोदकाश्च निवेदने ॥ १९ ॥ एतैस्तुष्यति देवेशः सान्निध्यं चाधिगच्छति ॥ ददाति प्रवरानिष्टान्दातुश्च स्वर्गतिं
तथा ॥ २० ॥ एवं संपूज्य विधिवत्कृत्वा चापि प्रदक्षिणाम् ॥ प्रणम्य शिरसा देवं भास्करं तिमिरापहम् ॥ आरुह्य सुविमानं स याति भानोः
सलोकताम्॥२१॥पुनः संपूज्य देवेशं जपं कुर्याद्यथेष्टकम्॥ हुताशने च जुहुयाद्विधिदृष्टेन कर्मणा ॥ एवमेकैकशः कार्याः सप्तम्यः सप्त सर्वदा॥२२॥
उदकप्रसृतिं पीत्वा क्रियते या तु सप्तमी ॥ सा ज्ञेया सुखदा वीर सदैवोदकसप्तमी ॥ २३ ॥ या काचित्सप्तमी नोक्ता तां ते वक्ष्यामि सर्वदा॥ वरा
टिका क्रमेणाप्तं यत्किंचित्प्रतिभक्षयेत् ॥ २४ ॥ अनेन देयमूल्येन यल्लब्धं तत्प्रभक्षयेत् ॥ अभक्ष्यं चापि भक्ष्यं वा नात्र कार्या विचारणा॥ २५ ॥
इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु वराटिकावर्णनं नाम सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥ छ ॥ ॥ शता
नीक उवाच ॥ ॥ किमेकं दैवतं लोके किं वाप्येकं परायणम् ॥ स्तुवन्तः कं कमर्चंतः प्राप्नुयुर्मानवाः शुभम् ॥ १ ॥ को धर्मः सर्वधर्माणां कश्च



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूज्यो मतस्तव ॥ ब्रह्मादयः कमर्चंति कश्चादिस्त्रिदिवौकसाम् ॥ २ ॥ ॥ सुमन्तुरुवाच ॥ ॥ अत्राहं ते प्रवक्ष्यामि संवादं पापनाशनम् ॥ भीष्मस्य नरशार्दूल व्यासस्य च महात्मनः ॥३॥ सुखासीनं महाव्यासं गंगाकूले द्विजोत्तम॥ तं दृष्ट्वा सुमहातेजा ज्वलंतमिव पावकम् ॥४॥ साक्षान्नारायणं देवं तेजसादित्यसन्निभम्॥प्रणम्य शिरसा वीर सर्वशास्त्रालयं परम् ॥५॥ महाभारतकर्तारं वेदार्थनिकषं परम् ॥ आचार्यं परमर्षीणां राजर्षीणां च भारत ॥६॥ कर्तारं कुरुवंशस्य दैवतं परमं मम ॥ पप्रच्छ कुरुशार्दूलो द्विजभक्त्या समन्वितः ॥७॥ देवदेवस्य महात्म्यं चित्तस्थं भास्करस्य तु ॥ स महात्मा महातेजा भीष्मः पूर्वं मुनिं तथा ॥ ८ ॥ ॥ भीष्म उवाच ॥ ॥ भगवन्द्विजशार्दूल पाराशर्य महामते ॥ ममाख्यातं त्वया सर्वं वाङ्मयं सचराचरम् ॥ ९ ॥ भास्करस्य मुनिश्रेष्ठ संशयोद्यापि वर्तते ॥ आदौ तस्य नमस्कारमन्येषां तदनंतरम् ॥ १० ॥ ब्रह्मादीनां तु रुद्राद्यैर्ब्रूहि तत्त्वेन हेतुना ॥ क एष भास्करो ब्रह्मन्कुतो जातः क उच्यते ॥ ११ ॥ कीर्तयस्व यथान्यायं कौतुकं हि परं मम ॥ कुशलो हि भवाँल्लोके तस्मात्त्वं वक्तुमर्हसि ॥ १२ ॥ ॥ व्यास उवाच ॥ ॥ अहो तव महत्कष्टं प्रमूढोसि न संशयः ॥ स्तुवंतश्च तमर्चाभिः सिद्धा ब्रह्मादयः सुराः ॥ १३ ॥ सर्वेषामेव देवानामादिरादित्य उच्यते ॥ स हंति तिमिरं सर्वं दिग्विदिक्षु व्यवस्थितम् ॥ १४ ॥ स धर्मः सर्वधर्माणां स च पूज्यतमो मतः ॥ ब्रह्मादयस्तमर्चंति स चादिस्त्रिदिवौकसाम् ॥ १५ ॥ अदितिः कश्यपसती आदित्यस्तेन चोच्यते ॥ आदिकर्ताथ वा यस्मात्तस्मादादित्य उच्यते ॥ १६ ॥ तस्मादेतज्जगत्सर्वमादित्यात्संप्रवर्तते ॥ सदेवासुरगंधर्वं सयक्षोरगराक्षसम् ॥ १७ ॥ रुद्रोपेंद्रौ तथेंद्रश्च ब्रह्मा दक्षोथ कश्यपः ॥ आदित्यदेवताः सर्वे तथान्ये देवदानवाः ॥ १८ ॥ मुखाद्भूतो विरिंचिस्तु रुद्रो वक्षस्थलात्ततः ॥ उपेंद्रो दक्षिणाद्धस्ताद्धाता वामकरात्तथा ॥ १९ ॥ वामपादतलाद्दक्षो दक्षिणात्कश्यपस्तथा ॥ इत्युत्पन्नास्तथा चान्ये देवासुरनराः खगाः ॥ तेनासौ देव आदित्यः सर्वदेवेषु पूजितः ॥२०॥ ॥ भीष्म उवाच ॥ ॥ यदीत्थं गीयते वीर दिग्विदिक्षु स भास्करः ॥ यदि तस्य प्रभावोयं पाराशर्य जगत्पतेः ॥२१॥ स किमर्थं त्रिसंध्यं तु राक्षसैः परिभूयते ॥ द्विजैः संरक्ष्यते भूयश्चक्रवद्भ्रमते पुनः ॥ राहुणा गृह्यतेऽग्राह्यस्तत्किमर्थं द्विजोत्तम ॥२२॥ ॥ व्यास उवाच ॥ ॥ पिशाचोरगरक्षांसि डाकिनीदानवांस्तथा ॥ दक्षिणाग्निर्दहेत्क्रोधात्तमाक्रामति भास्करः ॥ २३ ॥ त्रिसंध्यं तु त्रयो देवाः सान्निध्यं रविमंडले ॥ मुहूर्तस्य प्रभावोयमसाध्ये दृष्टके तथा ॥ २४ ॥ तमेकमेवमुद्दिश्य लोके धर्मः प्रवर्तते ॥ नमस्कृते स्तुते तस्मिन्सर्वे देवा नमस्कृताः ॥ २५ ॥ त्रिसन्ध्यं वसुधादेवैर्भास्करस्त्रिः प्रणम्यते ॥ राहुरादित्यबिंबस्य स्थितोधस्तान्न संशयः ॥ २६ ॥ अमृतार्थी विमानस्थो यावत्संस्रवतेऽमृतम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विमानांतरितं बिंबमादिशेद्ग्रहणं ततः ॥ २७ ॥ न कश्चिद्धर्षितुं शक्त आदित्यो दहते ध्रुवम् ॥ दिवारात्रिमुहूर्तानां ज्ञानायाक्रमते रविः॥२८॥ नादित्येन विना रात्रिर्न दिनं न च तर्पणम् ॥ नाधर्म्मो नाथ वा धर्म्मस्तेन दृष्टं चराचरम् ॥ २९ ॥ आदित्यः पाति वै सर्वमादित्यः सृजते सदा ॥ एतत्सर्वं समाख्यातं यत्पृष्टं भवता मम ॥ ३० ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे व्यासभीष्मसंवादेऽष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥ छ ॥ ॥ भीष्म उवाच ॥ ॥ स आदित्यो भवेद्येन अचिरात्तु वरप्रदः ॥ तदहं श्रोतुमिच्छामि विप्र मां ब्रूहि तत्त्वतः ॥ १ ॥ ॥ व्यास उवाच ॥ ॥ पूजया जपहोमेन ध्यानधारणया सह ॥ सकलं मण्डलं कृत्वा तद्दीक्षां समयं तथा ॥ २ ॥ लब्ध्वाराधयते यस्तु भक्त्या तद्गतमानसः ॥ तस्य भानुर्भवेद्वीर अचिरात्तु वरप्रदः ॥ ३ ॥ बलसिद्धिं महद्वीर्यं प्रतापं च स्वकायनम् ॥ धनं धान्यं सुवर्णं च रूपं सौभाग्यसंपदम् ॥ ४ ॥ आरोग्यमायुः कीर्तिं च यशः पुत्रांश्च मानद ॥ ददते नात्र संदेहो यस्य तुष्टो दिवाकरः ॥ ५ ॥ धर्ममर्थं तथा कामं विद्यां मोक्षश्रियं तथा ॥ ददते भास्करस्तुष्टो नराणां नात्र संशयः ॥ ६ ॥ सौरेण विधिना तात पूजयित्वा दिवाकरम् ॥ सर्वान्कामानवाप्नोति तथादित्यालयं नृप ॥ ७ ॥ ॥ भीष्म उवाच ॥ ॥ सौरस्नानविधिं ब्रूहि सरहस्यं महामते ॥ येन स्नातोऽमलो याति नरः पूजयितुं रविम् ॥ ८ ॥ ॥ व्यास उवाच ॥ ॥ हंत ते संप्रवक्ष्यामि स्नानं पापप्रणाशनम् ॥ शुचौ मनोरमे स्थाने संगृह्यास्त्रेण मृत्तिकाम् ॥९॥ संधिसंघो हकारस्तु टरेफोफसमन्विते ॥ अनेनास्त्रेण संगृह्य ततः स्नानं समाचरेत् ॥ १० ॥ मलस्नानं ततः पश्चाच्छेषार्धेन तु कारयेत् ॥ भागत्रयं तु सार्धं तु तृणपाषाणवर्जितम् ॥ ११ ॥ एकमस्त्रेण चालभ्य तथान्यं भास्करेण तु ॥ अंगं चैव तृतीयेन अभिमंत्र्य सकृत्सकृत् ॥ १२ ॥ जप्त्वास्त्रेण क्षिपेद्दिक्षु निर्विघ्नं तु जलं भवेत् ॥ सूर्यतीर्थे द्वितीयेन अभिमंत्र्य सकृत्सकृत् ॥ १३ ॥ गुण्डयित्वा ततः स्नायादिति तीर्थेषु मानवः ॥ तूर्यशंखनिनादेन ध्यात्वा देवं दिवाकरम् ॥ १४ ॥ स्नात्वा राजोपचारेण पुनराचम्य यत्नतः ॥ स्नानं कृत्वा ततो भीष्म मंत्रराजेन संयुतम् ॥ १५ ॥ हरेफौ बिंदुयुक्तश्च तथान्यो दीर्घया सह ॥ मात्रया रेफसंयुक्तो हकारो बिंदुना सह ॥ १६ ॥ सकारः सविसर्गस्तु मंत्रराजो यमुच्यते ॥ ततस्तु तर्पयेन्मंत्रान्सर्वांस्तांस्तु कराग्रजैः ॥ १७ ॥ पर्वणामूर्ध्वतो देवाः सव्येन मुनयस्तथा ॥ पितरश्चापसव्येन तद्बीजेन प्रतर्पयेत् ॥ १८ ॥ यद्गीतं प्रवरं लोके अक्षराणां मनीषिभिः ॥ तद्बिंदुसहितं प्रोक्तं हृद्बीजं नात्र संशयः ॥ १९ ॥ कृत्वा वामकरे हस्ताद्भ्रात्वा प्राज्ञो विधानवित् ॥ एवं स्नात्वा विधानेन संध्यां वन्देद्विधानतः ॥ २० ॥ ततो विद्वान्क्षिपेत्पश्चाद्भास्करायोदकांजलिम् ॥ जपेच्च त्र्यक्षरं मंत्रं षण्मुखं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वा यदिच्छया ॥ २१ ॥ मंत्रराजेति यः पूर्वं तवाख्यातो मया नृप ॥ पश्चात्तीर्थे तु मंत्रांस्तु संहृत्य हृदयं न्यसेत् ॥ २२ ॥ मंत्रैरात्मानमेकत्र कृत्वा ह्यर्घ्यं प्रदापयेत् ॥ रक्तचन्दनगंधैस्तु शुचिस्नातो महीतले ॥ २३ ॥ कृत्वा मण्डलकं वित्तमेकचित्तो व्यवस्थितः ॥ गृहीत्वा करवीराणि संस्थाप्य ताम्रभाजने ॥ २४ ॥ तिलतंडुलसंयुक्तं कुशगन्धोदकेन तु ॥ रक्तचन्दनधूपेन युक्तमर्घ्यं प्रसाध्य तत् ॥ २५ ॥ कृत्वा शिरसि तत्पात्रं जानुभ्यामवनिं गतः ॥ पूर्वमंत्रेण संयुक्तमर्घ्यं दद्यात्तु भानवे ॥२६॥ मुच्यते सर्वपापैस्तु यो ह्येवं विनिवेदयेत् ॥ यद्युगादिसहस्रेण व्यतीपातशतेन च ॥ २७ ॥ अयनानां सहस्रेण चन्द्रस्य ग्रहणे तथा ॥ गवां शतसहस्रेण यत्फलं ज्येष्ठपुष्करे ॥ दत्ते कुरुकुलश्रेष्ठ तदर्घ्येण फलं लभेत् ॥२८॥ दीक्षामन्त्रविहीनोऽपि भक्त्या संवत्सरेण तु ॥ फलमर्घ्येण वै वीर लभते नात्र संशयः ॥ २९ ॥ यः पुनर्दीक्षितो विद्वान्विधिनार्घ्यं निवेदयेत् ॥ नासावुत्पद्यते भूमौ स लयं याति भास्करे॥३०॥ इह जन्मनि सौभाग्यमायुरारोग्यसंपदाम् ॥ अचिराद्भवते वीर स भार्यासुखभाजनम्॥३१॥ एष स्नानविधिः प्रोक्तो मया संक्षेपतस्तव ॥ हिताय मानवेंद्राणां सर्वपापप्रणाशनः ॥३२॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु भीष्मव्याससंवाद एकोनद्विशततमोऽध्यायः ॥ १९९ ॥ ॥ छ ॥ ॥ भीष्म उवाच ॥ ॥ कथितस्ते स्नानविधिर्ब्रह्मन्वै पाप हारकः ॥ सम्यग्ब्रह्मर्चनविधिं पूजयिष्यामि येन वै ॥ १ ॥ ॥ व्यास उवाच ॥ ॥ हंत ते संप्रवक्ष्यामि विधिमादित्यपूजने ॥ विविक्ते विजय स्थाने सुप्रसन्ने शुशोभने ॥ २ ॥ पूजयेद्भास्करं मन्त्री सरलीकृतविग्रहः ॥ भद्रासनसमारूढः प्राङ्मुखः साधकोत्तमः ॥ ३ ॥ अस्त्रबीजेन मंत्रेण नरः स्वांगानि विन्यसेत् ॥ अंगुष्ठमादितः कृत्वा कनिष्ठान्तं सुविन्यसेत् ॥४॥ हृदयादीन्फडन्तांस्तान्विन्यसेत्क्रमतः सदा ॥ नेत्रपाणितले वीर न्यस्य अर्घ्यादि मंत्रवित् ॥ ५ ॥ यवर्गे यचतुर्थं तु कर्णबिंदुसमन्वितम् ॥ नेत्रबीजमिति प्रोक्तं ज्योतीरूपं न संशयः ॥६॥ पश्चात्तु त्र्यक्षरं सूर्यं कवचं विन्यसेद्बुधः ॥ कथितं तन्मया वीर मंत्रराजेति पृच्छतः ॥ ७ ॥ प्राणायामं ततः कुर्यात्प्रथमं बीजमुद्गिरन् ॥ शेषक्रमेण हुत्वायं विरजे भीष्मशक्तितः ॥ ८ ॥ त्रिभिरेव ततो घोरैरात्मशुद्धिः कृता भवेत् ॥ इति संशोध्य चात्मानं सूर्यं सर्वांतिकं न्यसेत् ॥ ९ ॥ हृदये हृदयं न्यस्य शिरः शिरसि विन्यसेत् ॥ एकविंशतिमातृकाया अक्षरं यत्प्रकीर्तितम् ॥१०॥ हृद्बीजमिति विख्यातं ब्रह्मस्थानमनौपमम् ॥ शिरसार्कस्य पूजा तु लोकेर्कः प्रतिकथ्यते ॥ ११ ॥ शिखायां तु शिखां न्यस्येच्छरीरे कवचं न्यसेत् ॥ नेत्रयोर्विन्यसेन्नेत्रं करयोरस्त्रमेव च ॥ १२ ॥ महाव्याहृतयो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजंस्तथारज्वालिनी शिखा ॥ हकारश्च रकारश्च कुकारो बिंदुना सह ॥१३॥ एतेषां समयाश्चैव कवचं परिकथ्यते ॥ नेत्रयोर्विन्यसेन्नेत्रं करयोर स्त्रमेव च ॥ १४ ॥ एवमंगानि विन्यस्य नासौ केनापि बाध्यते ॥ शत्रवो मित्रतां यांति अलाभे लाभमाप्नुयात् ॥१५॥ आत्मानं भास्करं ज्ञात्वा यथोक्तं तत्त्वदर्शिभिः ॥ ततस्तु पूजयेद्भानुं स्थंडिले विधिवत्पुनः ॥ १६ ॥ कृत्वा तु दक्षिणे पार्श्वे दिव्यपुष्पकरंडकम् ॥ कृत्वा सुशोभिते वामे ताम्रपूर्णेन वारिणा ॥ १७ ॥ अस्त्रेण क्षालितां पूर्णां शेषं मंत्रैर्जलैस्तथा ॥ अभिमंत्र्य ततः स्थाप्य कवचेनावगुंठिताम् ॥ १८ ॥ स्थंडिले चैव द्रव्याणि पूजार्थं कल्पितानि तु ॥ सर्वाणि प्रोक्षयेद्विद्वानर्घ्यपात्रं जलेन तु ॥ ततो मंत्रं जपेत्पश्चादेकचित्तेन मंत्रवित् ॥१९॥ ॥ भीष्म उवाच ॥ ॥ पुराणसहितैर्मंत्रैर्यो विधिः कथितो बुधैः ॥२०॥ स मया विदितः कृत्स्नः कथितो नैकशो द्विजैः ॥ वेदोक्तैर्विविधैर्मंत्रैर्यथा संपूज्यते रविः ॥ २१ ॥ तथा मे ब्रूहि सकलं वैदिकं विधिसत्तमम् ॥ २२ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे द्विशततमोऽध्यायः ॥२००॥छ॥ ॥ व्यास उवाच ॥ अथ त्वां कथयिष्येहं संवादं धर्मवर्द्धनम् ॥ सुरज्येष्ठस्य देवस्य केशवस्य च भारत ॥ १॥ मनोवत्यां सुरज्येष्ठं सुखासीनं चतुर्मुखम् ॥ प्रणम्य शिरसा विष्णुरिदं वचनमब्रवीत् ॥ २ ॥ ॥ विष्णुरुवाच ॥ ॥ भगवन्देवदेवेश सुरज्येष्ठ चतुर्मुख ॥ आराधनविधिं ब्रूहि भास्करस्य महात्मनः ॥ ३ ॥ कथमाराधयेद्भानुं मंडलस्थं दिवस्पतिम् ॥ ब्रूहि मेऽत्र गणं देवं येनाहं पूजये विभुम् ॥ ४ ॥ साधुसाधु महाबाहो साधु पृष्टोऽस्मि भूधर ॥ शृणु चैकमना देव भास्कराराधने विधिम् ॥५॥ खषोल्कं निर्मलं देवं पूजयित्वा विभावसुम् ॥ पूर्वे मध्ये तथाग्नेय्यां विरूपाक्षे प्रभंजने ॥ ६ ॥ क्रमेण यावदीशानीं हृदि बीजेन विन्यसेत् ॥ खषोल्कासनमेतत्तु विन्यस्तं मानवोत्तमैः ॥ ७॥ ततस्तस्योपरिष्टात्तु हृदयेन तु कंचुकम् ॥ सप्तावरणसंयुक्तमष्टपत्रं सकार्णिकम् ॥ ८ ॥ केसरालंबदेवत्वं पंचवर्णं महाद्भुतम् ॥ परीक्षाभूमिविधिवच्छास्त्रोक्तविधिना कृतम् ॥ ९ ॥ दीप्तादि पूर्वादारभ्य यावदीशानगोचरम् ॥ न्यसेच्छक्त्यष्टकं मंत्री मध्यतः सर्वतोमुखीम् ॥ १० ॥ दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ॥ अमोघा विद्युता चैव नवमी सर्वतोमुखी ॥ ११ ॥ तत आवाहयेद्भानुं स्थापयेत्कर्णिकोपरि ॥ उपस्थानं तु वै कृत्वा मंत्रेणानेन सुव्रत ॥ १२ ॥ उदुत्यं जातवेदसमिति मंत्रः प्रकीर्तितः ॥ अग्निं दूतेन मंत्रेण अनेन विश्वसुव्रत ॥१३॥ आकृष्णेन रजसा मंत्रेणानेन चार्चयेत् ॥ हंसःशुचिषदिति च मंत्रेणार्कं प्रपूजयेत् ॥ १४ ॥ अपत्येतारकं देवीदीप्तानेन प्रपूजयेत् ॥ अदृश्रमस्यकेतवः सूक्ष्मां देवीं समर्चयेत् ॥ १५ ॥ तरणिर्विश्वदर्शेति अनेन सततं जयम् ॥ प्रत्यङ्देवानां विशेति भद्रां देवीं समर्चयेत् ॥ १६ ॥ विभूतिमर्चयेन्नित्यं येनापावकचक्षसा ॥ विद्यामेषीति मंत्रेण ह्यनेन विमलां



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सदा ॥ १७ ॥ अमोघां पूजयेन्नित्यं मंत्रेणानेन सुव्रत ॥ नवमीं पूजयेद्देवीं सततं सर्वतोमुखीम् ॥ १८ ॥ मंत्रेणानेन कृष्णस्य उद्वयंतमितीह च ॥ उद्यनद्यमित्रहोमं प्रथममक्षरं व्रजेत् ॥ १९ ॥ द्वितीयं पूजयेत्कृष्णं शुक्रेषु हरिमाहवे ॥ उदगादयमादित्यो अनेनापि तृतीयकम् ॥ २० ॥ तत्सवितुर्वरेण्येति चतुर्थं परिकीर्तितम् ॥ महितोमहितोयेति पंचर्चं परिकीर्तयेत् ॥ २१ ॥ हिरण्यगर्भः समवर्तता षष्ठं बीजं प्रकीर्तितम् ॥ सविता पश्चातात्पुरस्तात्सप्तमं देवसत्तम ॥ २२ ॥ एवं बीजानि विन्यस्य आदित्यं स्थापयेद्द्विजः ॥ आदित्यं स्थापयेद्ध्याने सर्वेषां पूजयेद्बुधः ॥ २३ ॥ बाह्यतो देवशार्दूल इन्द्रादीनां समंततः ॥ रक्तवर्णं महातेजं सितपद्मोपरि स्थितम् ॥ २४ ॥ सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ॥ द्विभुजं चैकचक्रं च सौम्यं पद्मधनुष्करम् ॥ २५ ॥ वर्तुलं तेन बिंबेन मध्यस्थमतितेजसम् ॥ आदित्यस्य त्विदं रूपं सर्वलोकेषु पूजितम् ॥२६॥ ध्यात्वा संपूजयेन्नित्यं स्थंडिलं मंडलाश्रितम् ॥ २७ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु सूर्यमण्डलदेवतार्चनविधिवर्णनं नामैकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥ छ ॥ ॥ विष्णुरुवाच ॥ ॥ मण्डलस्थं सुरश्रेष्ठ विधिना येन भास्करम् ॥ पूजयेन्मानवो भक्त्या स विधिः कथ्यतां मम ॥ १ ॥ पूजयेद्विधिना येन भास्करं पद्मसंभवम् ॥ मूर्तिस्थं सर्वगं देवं पूजितं ससुरासुरैः ॥२॥ ॥ ब्रह्मोवाच ॥ साधु कृष्ण महाबाहो साधु पृष्टोऽस्मि सुव्रत ॥ शृणु चैकमनाः पूर्वं मूर्तिस्थं येन पूजयेत् ॥ ३ ॥ इषे त्वेति च मन्त्रेण उत्तमांगं सदार्चयेत् ॥ अग्निमीळेति मन्त्रेण पूजयेद्दक्षिणे करे ॥४॥ अग्न आयाहि मन्त्रेण पादौ देवस्य पूजयेत् ॥ आजिघ्रेति च मंत्रेण पूजयेत्पुष्पमालया ॥५॥ योगयोगेति मंत्रेण मुक्तपुष्पांजलिं क्षिपेत् ॥ समुद्रं गच्छ यत्प्रोक्तमनेन स्नापयेद्रविम् ॥ ६ ॥ इमं मे गंगेति यत्प्रोक्तमनेनापि च भूधर ॥ समुद्रज्येति मन्त्रेण कषायैः परिरूपयेत् ॥ ७ ॥ स्नापयेत्पयसा कृष्ण आप्यायस्वेति मन्त्रतः ॥ दधिक्राव्णेति वै दध्ना स्नापयेद्दधिवद्रविम् ॥ ८ ॥ तेजोऽसि शुक्रमिति च घृतेन स्नपनं परम् ॥ या औषधीति मंत्रेण स्नानमोषधिभिः स्मृतम् ॥ ९ ॥ उद्वर्तयेत्ततो भानुं द्विपदाभिः सुराधिप ॥ मानस्तोकेति मन्त्रेण युगपत्स्नानमाचरेत् ॥ १० ॥ विष्णोरराटमन्त्रेण स्नापयेद्गन्धवारिणा ॥ सौवर्णेन तु मंत्रेण अर्घ्यं पाद्यं निवेदयेत् ॥ ११ ॥ इदं विष्णुर्विचक्रमे मंत्रेणार्घ्यं प्रदापयेत् ॥ वेदोऽसीति हि मंत्रेण उपवीतं प्रदापयेत् ॥ १२ ॥ बृहस्पतेति मन्त्रेण दद्याद्वस्त्राणि भानवे ॥ येन श्रियं प्रकुर्वाणां पुष्पमालां प्रयोजयेत् ॥ १३ ॥ धूरसीति च मन्त्रेण धूपं दद्यात्सगुग्गुलम् ॥ समिद्धोऽजनमंत्रेण अंजनं तु प्रयच्छति ॥ १४ ॥ युञ्जानीति च मंत्रेण भानुं रोचनयार्चयेत् ॥ आरक्तकं च वै कुर्याद्दीर्घायुष्ट्वाय वै बुधः ॥ १५ ॥ सहस्रशीर्षा पुरुषो रविं सरसि पूजयेत् ॥ संभावयेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मंत्रेण पद्मनेत्रे परामृशेत् ॥ १६ ॥ विश्वतश्चक्षुरित्येवं भानोर्देहं समालभेत् ॥ श्रीश्च ते लक्ष्मीश्चेति मंत्रेणानेन पूजयेत् ॥ १७ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्म आदित्यपूजाविधिवर्णनं नाम द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ॥ छ ॥ ॥ विष्णुरुवाच ॥ व्योमपूजाविधिं ब्रूहि समासाच्चतुरानन ॥ अष्टशृंगं कथं व्योम पूजयेद्भास्करस्य तु ॥ १ ॥ ॥ ब्रह्मोवाच ॥ ॥ व्योमपूजाविधिं कृष्ण निबोध गदतो मम ॥ अष्टशृंगं यथा व्योम पूजयंति मनीषिणः ॥ २ ॥ सौवर्णं राजतं ताम्रं कृत्वा चाश्ममयं तथा ॥ अष्टशृंगं महाबाहो अनेन विधिनार्चयेत् ॥ ३ ॥ प्रथमं पूजयेद्भानुं मध्ये मंत्रेण सुव्रत ॥ महिषा वो महायेति नानापुष्पकदंबकैः ॥ ४ ॥ त्रातारमिंद्रं मंत्रेण सर्वशृंगं सदार्चयेत् ॥ उदीरतामवर इत्यथ वानेन पूजयेत् ॥ ५ ॥ आयं गौरिति मन्त्रेण नैर्ऋतं शृंगमर्चयेत् ॥ रक्षोहणं वाजिनं वा पूजयेदसुरांतकम् ॥ ६ ॥ इन्द्रसोमांतपतये ह्यथ वानेन पूजयेत् ॥ अभित्वा शूर नो नुम ऐशानं शृंगमर्चयेत् ॥ ७ ॥ एवं भानुं च परितः पूजयंति सदाच्युत ॥ येनेदं भूतमिति वै अथ वानेन पूजयेत् ॥ ८ ॥ नमोऽस्तु सर्वपापेभ्यो व्योमपीठं सदार्चयेत् ॥ ते नराः सततं कामान्प्राप्नुवंति न संशयः ॥ ९ ॥ त्वमेको रुद्राणां वसूनां पूर्वाह्णे तेन पूजयेत् ॥ तद्विष्णोः परमं पदं हंसः शुचिषदिति वै अपराह्णे सदार्चयेत् ॥ १० ॥ एवं भानुं ग्रहैः सार्धं पूजयंति सदस्पते ॥ ते सर्वान्विविधान्कामान्प्राप्नुवंति न संशयः ॥ ११ ॥ विमले वाससी दत्त्वा गुरवे सपवित्रके ॥ उपानहौ तथा कृष्ण सौवर्णमंगुलीयकम् ॥ १२ ॥ गन्धपुष्पाणि चित्राणि भक्ष्यभोज्यान्यनेकशः ॥ अनेन विधिना यस्तु सोपवासोर्चयेद्रविम् ॥ बहुपुत्रो बहुधनः स नरो भव्यवान्भवेत् ॥ १३ ॥ उत्तरे चायने यस्तु सोपवासोर्चयेद्रविम् ॥ सोश्वमेधफलं विंद्याद्बहुपुत्रश्च जायते ॥ १४ ॥ कृत्वोपवासं विषुवे यस्तु :पूजयते रविम् ॥ बहुपुत्रो बहुधनो कीर्तिमांश्चापि जायते ॥ १५ ॥ कृत्वोपवासं ग्रहणे विधिवच्चंद्रसूर्ययोः ॥ पूजयेद्भास्करं भक्त्या ब्रह्मलोकं स गच्छति ॥ १६ ॥ इति ते कथितो विष्णो भास्कराराधने विधिः ॥ यं श्रुत्वा पुरुषो भक्त्या मम लोके महीयते ॥ १७ ॥ पुनरेत्य महीं कृष्ण राजा भवति भूतले ॥ बहुपुत्रो बहुधनः समरेष्वपराजितः ॥ १८ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे भास्कराराधनविधिवर्णनं नाम त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥ ॥ छ ॥ ॥ सुमन्तुरुवाच ॥ ॥ अतः परं प्रवक्ष्यामि विधिं परमपूजितम् ॥ रत्नव्योमप्रतिष्ठायां यथा भानुं प्रपूजयेत् ॥ १ ॥ अर्चयित्वा तु प्रकृतिं गंधपुष्पाक्षतैर्विभो ॥ सहोदकेनांजलिना सहपुष्पाक्षतेन वा ॥ २ ॥ आवाहयेन्महादेवं खषोल्कं भास्करं विभुम् ॥ मन्त्रेण कुरुशार्दूल प्रत्यक्षकिरणाय वै ॥ ३ ॥ ॐ खषोल्कमावाहयामि ॐ भूर्भुवः स्वरों



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आदित्याराधने मन्त्रः ॥ ४ ॥ अभिमन्त्र्य भुवे मात्रं सावित्र्या च ऋचाविभो ॥ आपो हिष्ठेति या प्रोक्ता पृथा सूर्यस्य सर्वदा ॥ ५ ॥ यथान्यायं तु संक्षाल्य पूरयेच्चान्यतो यतः ॥ हिरण्यगर्भः समवर्ततेत्यनया क्षालयेद् बुधः ॥ ६ ॥ सविता पश्चातात्सविता ह्यनया पूरयेद्बुधः ॥ इत्येवं पूरयित्वा तु वारि पुष्पाक्षतैर्बुधः ॥ ७ ॥ पात्रमौदुम्बरं गृह्य कृत्स्नं सूर्यस्य दर्शयेत् ॥ उदुत्यं जातवेदसमनया व्योम्नि निक्षिपेत् ॥ ८ ॥ हंसः शुचिषदिति पाद्यं दद्याद्विचक्षणः ॥ निर्वापयेच्च पयसा खषोल्कं स्नापयेत्ततः ॥ ९ ॥ अग्निस्तु सप्तभिर्वीर कीर्तिं तास्ताश्च कृत्स्नशः ॥ आपो हिष्ठेति च क्रमात्तिसृभिः कुरुनंदन ॥ १० ॥ हिरण्यवर्णेति क्रमाच्चतुर्भिश्च नराधिप ॥ अभिमंत्र्योदकमृग्भिस्तिसृभि र्निक्षिपेन्नृप ॥ ११ ॥ भानोः प्रदक्षिणं कृत्वा कृणुष्वपाज इत्यपि ॥ इत्यमूषु वाजिनं गिरः प्रथमा परिकीर्तिता ॥ १२ ॥ पतिर्मिंद्रस्तवाचाम द्वितीया परिकीर्तिता ॥ पतिर्मिंद्रस्तु शुद्धो न आगहि तृतीया परिकीर्तिता ॥ १३ ॥ सिध्ये वृत्राणि [१]जिघ्ने शगंधैर्भानुं प्रपूजयेत् ॥ अस्य वाम स्येत्यनया अक्षतैः पूजयेद्रविम् ॥ १४ ॥सप्त युंजंति रथमनया पूजयेद्रविम् ॥ पुष्पैर्भरतशार्दूल सततं तमनाशनम् ॥ १५ ॥ को ददर्श प्रथम मनया धूपमादिशेत् ॥ पाकः पृच्छाम्यनया चंदनं प्रतिपादयेत् ॥ १६ ॥ उद्दीप्यस्येत्यनया दीपं दद्याद्विभावसोः ॥ अर्चित्वा कुंकुमं चैव शीर्षं क्षीरं तु मंडलम् ॥ १७ ॥ युक्ता मातासीत्यनया नैवेद्यं प्रतिपादयेत् ॥ गौरीर्मिमायेति दद्यात्तथा शुक्ले च वाससी ॥ १८ ॥ तस्याः समुद्रेत्यनया उपवीतं निवेदयेत् ॥ इति संपूज्य देवेशं ततः कुर्यात्परां स्तुतिम् ॥ १९ ॥ ऋग्भिर्वै पंचभिस्तात शृणु चैकमनाहृतः ॥ उक्षाणं पृश्निरिति च प्रथमा परिकीर्तिता ॥ २० ॥ चत्वारि वागिति भवेद्द्वितीया परिकीर्तिता ॥ इंद्रं मित्रं तृतीया तु वराधिक्ये प्रकीर्तिता ॥ २१ ॥ कृष्णं नियानं हि तथा चतुर्थी परिकीर्तिता ॥ यो रत्नवाहीत्यनया किरीटं योजयेद्रवौ ॥ २२ ॥ गतेहनामित्यनया अव्यंगं भास्करं न्यसेत् ॥ इयमददाद्रभसमृण च्युतमिति ऋगादितः ॥ २३ ॥ कृत्वा पूजां ततश्चर्ग्भिरष्टाभिरिति चाच्युत ॥ देवस्य शक्तयोऽष्टौ च पूजयेद्विधिवत्क्रमात् ॥ २४ ॥ इत्येष ते मयाख्यातः प्रतिमापूजने विधिः ॥ यः पुरोक्तो महाबाहो ब्रह्मणा विष्णवे तथा ॥२५॥ अनेन विधिना यस्तु सततं पूजयेद्रविम् ॥ स प्राप्नोत्यखि लान्कामानिह लोके परत्र च ॥२६॥ पुत्रार्थी लभते पुत्रान्धनार्थी लभते धनम् ॥ कन्यार्थी लभते कन्यां वेदार्थी वेदविद्भवेत् ॥२७॥ निष्कामः पूजयेद्यस्तु स मोक्षं प्राप्नुयान्नरः ॥ अनेन विधिनापूज्य गतः सिद्धिं स वैष्णवः ॥ २८ ॥ ब्रह्मादयस्तथा देवं पूजयित्वा विभावसुम् ॥ अनेन विधि

१ चतस्रादेशाभावश्छान्दसः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नापूज्य संतः सिद्धिं परां गताः ॥ २९ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे व्योमार्चनविधिवर्णनं नाम चतुरधिकद्विशत
तमोऽध्यायः ॥ २०४ ॥छ॥ ॥ व्यास उवाच ॥ ॥ पुनर्निबोध मे भीष्म गदतः परमं विधिम् ॥ येन पूजयते नित्यं महादेवं दिवा
करम् ॥ १ ॥ प्रभूतं निर्मलं तेज आराध्य परमं सुखम् ॥ पूर्वमंतस्तथाग्नेय्यां नैर्ऋत्यां पवनालये ॥ २ ॥ क्रमेण यावदीशानं हृदि बीजं च विन्य
सेत् ॥ भास्करासनमेतत्तु न्यस्तव्यं तत्त्वदर्शिभिः ॥ ३ ॥ उपरिष्टात्ततस्तस्य हृदयेन तु पंकजम् ॥ अष्टपत्रं केशरालं पंचवर्णं सकेशरम् ॥ ४ ॥
दीप्तादि पूर्वमारभ्य आमहादेवगोचरम् ॥ शक्त्यष्टकं न्यसेन्मंत्रैरादितः सर्वतोमुखीम् ॥ ५ ॥ अबीजैः केसराग्रेषु क्रमेणैव च पूजयेत् ॥ ततस्त्वावा
हयेद्भानुं स्थापयेत्कर्णिकोपरि ॥ ६ ॥ तस्योपहृत्य तं चान्यं वेदितव्यं खपुष्करम् ॥ तेनैवावाहनं चार्घ्यं स्थापनं चार्घमेव च ॥ ७ ॥ पाद्यमाच
मनं स्थानं वस्त्रगंधादिभूषणम् ॥ विधिना वीरपुष्पाणि नैवेद्यं धूपमेव च ॥ ८ ॥ कर्तव्यं श्रद्धया भक्त्या एवं तुष्यति भास्करः ॥ महापातकि
नोऽप्याशु लभंते चिंतितं फलम् ॥ ९ ॥ आदित्यं पूजयित्वा तु पश्चादंगानि पूजयेत् ॥ दीप्तायां हृदयं न्यस्य भवान्यां शिरसो न्यसेत् ॥ १० ॥
दिग्विदिक्षु न्यसेदस्त्रमिंद्रादि दिशोत्तरांतिकम् ॥ कर्णिकायां न्यसेन्नेत्रं स्वबीजेन तु वार्चयेत ॥११॥ पुष्पैर्गंधैश्च धूपैश्च हृदयानि क्रमेण तु ॥ पूज
यित्वा तु विधिवद्व्योमं पश्चात्तु मंत्रवित् ॥ १२ ॥ बाह्यतः पूर्वतो मंदं दक्षिणेन बुधं तथा ॥ विषाणं पश्चिमे पूज्य उत्तरेण तु भार्गवम् ॥ १३ ॥
आग्नेय्यां च कुजं पूज्य नैर्ऋत्यां भानुदेहजम् ॥ वायव्यां पूजयेत्कृष्णमैशान्यां विकचं नृप ॥ १४ ॥ इन्द्रादिलोकपालांश्च ततोऽष्टौ पूजयेद्बुधः ॥
सुगंधैर्विविधैः पुष्पैर्धूपैश्चैव मनोरमैः ॥ १५ ॥ क्रमेण पूजयेद्भानुं लोकपालैर्ग्रहैः सह ॥ मंत्रैः कुरुकुलश्रेष्ठ य इच्छेच्छ्रेय आत्मनः ॥ १६ ॥
अनेन विधिना यत्र देवः संपूज्यते रविः ॥ न चौराग्निभयं तत्र न चापि नरकाद्भयम् ॥ १७ ॥ वर्षोपलविषादिभ्यो भयं तत्र न विद्यते ॥ सुख
मारोग्यमानंदं सुभिक्षमचलां श्रियम् ॥ १८ ॥ तेजोबिंबांतमध्यस्थ आदित्यः परमार्थतः ॥ यष्टव्यः साधकैर्नित्यं न रथो न च वाजिनः ॥ १९ ॥
इत्येष विधिराख्यातो मया भीष्म तवाखिलः ॥ येन पूजयते नित्यं महादेवो दिवाकरम् ॥ २० ॥ इत्थं पूज्य विवस्वन्तं हृद्बीजेन विसर्जयेत् ॥
य एवं पूजयेद्भानुं स याति परमां गतिम् ॥ २१ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे भीष्मव्याससंवादे महादेवा
र्चनविधिवर्णनं नाम पंचाधिकद्विशततमोऽध्यायः ॥ २०५ ॥छ॥ ॥ भीष्म उवाच ॥ ॥ मंत्रोद्धारं परं ब्रूहि मुद्राशक्तिसमन्वितम् ॥ रूपवर्ण
समं चैव पौराणिकमनुत्तमम् ॥ १ ॥ ॥ व्यास उवाच ॥ ॥ शृणु भीष्म महाबाहो यथा वक्ष्यामि तेनघ ॥ पौराणिकानां मंत्राणामुद्धारं वैदिका



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हृते ॥२॥ वर्णरेफसमायुक्तं विद्रुमेनैव भूषितम् ॥ अंतस्थानां हि अंत्यं वै ब्रह्मदैवत्यमुच्यते ॥३॥ बिंदुरेफसमायुक्तं दीर्घया मात्रया तथा ॥ दीक्षाक्षरं स मुद्दिष्टं द्वितीयं विष्णुदैवतम् ॥४॥ तृतीयं तु तथा प्रोक्तं सविसर्गं जनाधिप ॥ स तृतीयो बुधैः प्रोक्तो रुद्रदैवत एव हि ॥५॥ भास्करोयं महान्साक्षान्मंत्रमूर्तिस्त्रिरक्षरः॥दुर्लभः परमो गुह्यस्त्रिदेवो देवपूजितः ॥६॥ यस्त्विदं जपते भक्त्या स याति परमां गतिम् ॥ ततश्च मुद्रां वक्ष्यामि सान्निध्यकारणं परम् ॥७॥ पद्माकारौ करौ कृत्वा मध्ये श्लिष्टे तु मध्यमे॥अंगुलिं क्षारयेत्तस्मिन्विमुद्रेति च सोच्यते ॥८॥ अनया बद्धया राजन्भास्करस्य प्रियो भवेत् ॥ महाभयेषु सर्वेषु मातृवत्परिरक्षति ॥ ९ ॥ हृदयं तस्य विज्ञेयं यदक्षरवरं स्मृतम् ॥ विद्रुमोपरि संछन्नं हृद्गतं तद्गतं सदा ॥ १० ॥ शिरस्यर्कमिति प्रोक्तं देवदेवस्य भारत ॥ महाव्याहृतयस्तिस्रस्तथारज्वालिनी शिखा ॥ ११ ॥ अष्टाक्षरा तु विज्ञेयमादित्यस्य महात्मनः ॥ यः स्मरेत्साधकस्त्वेनं नासौ केनापि बाध्यते ॥ १२ ॥ अकारेण समायुक्तं बिंदुरेफसमन्वितम् ॥ हकारमग्निदैवत्यं कवचं भास्करप्रियम् ॥ १३ ॥ एकाक्षरमिदं प्रोक्तमभेद्यं यः स्मरेदिदम् ॥ दुष्टानां चैव विघ्नानां नाशनं नात्र संशयः ॥ १४ ॥ सविसर्गो रेफ इति अस्त्रमेकाक्षरं स्मृतम् ॥ नाशयेद्दुष्टकर्माणि साधकस्य न संशयः ॥ १५ ॥ संमुखौ तौ करौ कृत्वा श्लिष्टौ तु ग्रथितांगुली ॥ कनिष्ठेनामिके योज्ये तर्जन्यौ मध्यमे तथा ॥ ॥ १६ ॥ हृच्छिरः सशिखा चर्मा मुद्रेयं व्योमसंज्ञिता ॥ मुष्टिवक्रोच्छ्रितं कुर्यात्सव्यहस्तस्य तर्जनीम् ॥१७॥ मालशब्दकृतादिस्तु मुद्रा ह्यस्त्रस्य कीर्तिता ॥ त्रासनी नाम विख्याता सर्वविघ्नभयंकरी ॥ १८ ॥ कर्णबिंदुसमायुक्तं यं चतुर्थं महामते ॥ भास्करस्य त्विदं नेत्रमग्निदैवतमुच्यते ॥ ॥ १९ ॥ स्मरः स्यात्साधकेंद्राणां दुरंतो नाशने ध्रुवम् ॥ मध्यमा तर्जनी चैव सव्यहस्तस्य चोच्छ्रितम् ॥ २० ॥ कनिष्ठानामिके कुंच्य अंगुष्ठेन ततः क्रमेत् ॥ नेत्राभ्यां स्पर्शयेदेनां नेत्रमुद्रा प्रकीर्तिता ॥ २१ ॥ गोवृषा नाम विख्याता दर्शयेद्दिव्यगोचरम् ॥ रां दीप्तारिं ततः सूक्ष्मारीं जया भीष्म उच्यते ॥ २२ ॥ उभाह्वारूं विभूतिश्च विमला रैं प्रकीर्तिता ॥ अघहा च महाबाहो विद्युता रौं प्रकीर्तिता ॥ २३ ॥ गोवृषा नाम रं सर्ववीरभद्रकरी तथा ॥ इत्येता बीजरूपास्तु कथिताश्चैव शक्तयः ॥ २४ ॥ उत्तानौ तु करौ कृत्वा सव्याकुंच्य ततोंगुलीः ॥ कुर्यादुपरि चांगुष्ठौ चालयेत पुनःपुनः ॥ २५ ॥ सर्वासां चैव शक्तीनामेता मुद्राः प्रदर्शयेत् ॥ नाम्ना च विद्युता चैव नवमी सर्वतोमुखी ॥ २६ ॥ नामान्येतानि शक्तीनां समासात्कथितानि तु ॥ सबीजानि महाबाहो मया स्नेहेन भारत ॥ २७ ॥ ग्रहाणां शृणु बीजानि रूपं च गदतो मम ॥ सर्वत्र भं तथा खं च कंजकूतुहलोद्वह ॥ २८ ॥ ॐकारा दीपिताः सर्वे नमस्कारांतयोजिताः ॥ पूजाकाले प्रयोक्तव्या जपकाले तथैव च ॥ २९ ॥ होम

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काले तु स्वाहांतं मंत्रं षट्कारसंयुतम् ॥ सर्वे बिंदुयुता भीष्म शिखा बिंदुविभूषिताः ॥ ३० ॥ सोमाद्याः केतुपर्यंता ग्रहा ह्येवं प्रकीर्तिताः ॥ एता मुद्राः प्रवक्ष्यामि सर्वसिद्धिप्रदायिकाः ॥ ३१ ॥ सुमुखौ तु करौ कृत्वा श्लिष्टौ चैव प्रसारितौ ॥ इयं मुद्रा नमस्कारे ग्रहसान्निध्यकारिका ॥ ॥ ३२ ॥ मंत्रोद्धारस्तवाख्यातो रहस्यो दुर्लभो नृप ॥ शृणुष्व रूपं देवानां ध्यानकाले ह्युपस्थिते ॥ ३३ ॥ जपावर्णं महातेजं श्वेतपद्मोपरि स्थितम् ॥ सर्वलक्षणसंपन्नं सर्वाभरणभूषितम् ॥ ३४ ॥ तथैकवक्त्रं द्विभुजं सोमपंकजकंधरम् ॥ मंडलेन च रूपं तु मध्यस्थं रक्तवाससम् ॥ ३५ ॥ मार्तंडस्य इदं रूपं शुचिः स्नातो जितेंद्रियः॥ त्रिकालं यः स्मरेद्धीम एकचित्तो व्यवस्थितः ॥ ३६ ॥ सोऽचिराद्भवते लोके वित्तेन धनदोपमः ॥ मुच्यते सर्वभोगैस्तु तेजस्वी बलवान्भवेत् ॥ ३७ ॥ हृदयं चोत्तमांगं च शिखा वै वक्रमेव च ॥ रक्तवर्णा इमे श्यामाः सर्वाभरणभूषिताः ॥ ३८॥ वरदाऽभयहस्ताश्च ध्यातव्याः साधकेन तु ॥ तडित्पुंजनिभं शस्त्रं रौद्रं चंद्रकरालिनम् ॥ ३९ ॥ विशेषः कथितो ह्येष कामरूपः स्वभावतः ॥ दीप्ता दीप्तशिखाकारा ध्यातव्या मम शक्तयः ॥ ४० ॥ श्वेतवर्णं स्मरेत्सोमं रक्तवर्णं कुजं स्मरेत् ॥ सौम्यमष्टापदाभं च [गुरुं च पीतवर्णकम् ॥ ॥ ४१ ॥ शंखक्षीरनिभं श्वेतं काणं चांजनसंनिभम् ॥ रजावर्तनिभं राहुं धूम्रं च विकचं स्मरेत् ॥ ४२ ॥ वामहस्तौ कटिन्यस्तौ दक्षिणौ चाभयप्रदौ ॥ रक्तभ्रूरक्तनेत्रास्य अर्धकायकृतांजलिः ॥ ४३ ॥ इति भानुं ग्रहैः सार्धं ये ध्यायंति नृपोत्तम ॥ लभंते ते महासिद्धिमचिरान्नात्र संशयः ॥ ॥ ४४ ॥ तवाख्यातमिदं वक्रं ग्रहाणां भीष्म कृत्स्नशः ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यंते भुवि मानवाः ॥ ४५ ॥ अनेन विधिना भीष्म सदा देवं दिवाकरम् ॥ त्रिकालं पूजयेद्भक्त्या वीर श्रद्धासमन्वितः ॥ ४६ ॥ इत्थं पूजयमानस्तु सर्वदेवं दिवाकरम् ॥ ब्रह्महत्याविनिर्मुक्तो महादेवत्वमाप्नुयात् ॥ ४७ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु सूर्यपूजामाहात्म्यवर्णनं नाम षडुत्तरद्विशततमोऽध्यायः ॥ ॥ २०६ ॥

॥ भीष्म उवाच ॥ ॥ अहो देवस्य माहात्म्यं भास्करस्य त्वयोदितम् ॥ पूजयंति सदा ह्येनं ब्रह्मविष्णुशिवादयः ॥ १ ॥ ॥ ॥ व्यास उवाच ॥ ॥ एवमेतन्न संदेहो यथा वदसि भारत ॥ नास्ति सूर्यसमो देवो नास्ति सूर्यसमा गतिः ॥ २ ॥ नास्ति सूर्यसमं ब्रह्म नास्ति सूर्यसमं हुतम् ॥ नास्ति सूर्यसमो धर्मो नास्ति सूर्यसमं धनम् ॥ ३ ॥ नास्ति सूर्यादृते कामो नास्ति सूर्यादृते पदम् ॥ नास्ति सूर्यसमो बंधुर्नास्ति सूर्यसमः सुहृत् ॥ ४ ॥ नास्ति सूर्यसमा माता नास्तिसूर्यसमो गुरुः ॥ नास्ति सूर्यसमं तीर्थं न पवित्रं ततः परम् ॥ ५ ॥ तमेकं दैवतं विद्यान्नैवाप्यर्कपरायणम् ॥ लोकानां देवतानां च पितृणां चापि भारत ॥ ६ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तमर्चंतः स्तुवंतश्च प्राप्नुवंति परां गतिम् ॥ ते प्रपन्नास्तु ये भक्त्या मुक्तास्ते भवसागरात् ॥ ७ ॥ राजा चोरा ग्रहाः सर्पा दारिद्र्यं दुःखसंपदः ॥ नैते पीडयितुं शक्ताः प्रसन्ने भास्करे सति ॥ ८ ॥ ॥ व्यास उवाच ॥ ॥ एवं तात महाबाहो देवो भास्करतत्परः ॥ स पूज्यः स नमस्कार्यः स हि ध्यातव्य एव च ॥ ९ ॥ प्रत्यक्षदेवता ह्येषा देवदेवोयमादरात् ॥ अथ किं बहुनोक्तेन यद्वक्ष्यामि निबोध मे ॥ १० ॥ पूजयेत्तनयः पापी तथादित्यदिनैरपि ॥ पूजयन्ति नरा ये वै ते यांति परमां गतिम् ॥ ११ ॥ प्राप्ते सूर्यदिने भक्त्या भानुं संपूज्य श्रद्धया ॥ नक्तं करोति पुरुषः स यात्यमरलोकताम् ॥ १२ ॥ यस्तु पूर्वं रवेर्भक्त्या पञ्चरत्नसमन्वितम् ॥ निवेदयति मंत्रेण स यात्यमरलोकताम् ॥ १३ ॥ मार्तंडप्रीतये यस्तु कुर्याच्छ्राद्धं विधानतः ॥ संक्रान्तावयने वीर सूर्यलोकं स गच्छति ॥ १४ ॥ कृत्वोपवासं षष्ठ्यां तु सप्तम्यां यस्तु मानवः ॥ करोति विधिवच्छ्राद्धं भास्करः प्रीयतामिति ॥१५॥ सर्वदोषविनिर्मुक्तः सूर्यलोके महीयते ॥ मानवो यस्तु सप्तम्यां योषिद्वापि दिवाकरम् ॥१६॥ प्रपूज्य विधिवद्भानुं सर्वान्कामानवाप्नुयात् ॥ विशेषतस्तस्य दिने ग्रहणे च नराधिप ॥ १७ ॥ इति भीष्म विजानीहि न देवो भास्करात्प्रियः ॥ आदित्यमेकं परमं देवदेवेषु पूजितम् ॥ १८ ॥ रत्नपर्वतमारुह्य यथा भुवि नराधिपाः ॥ सत्त्वानुरूपं गच्छन्ति रत्नभागानशेषतः ॥ १९ ॥ तथा भानुं समाराध्य प्राप्नुवंति नराः फलम् ॥ धनार्थी प्राप्नुयादर्थं पुत्रार्थी प्राप्नुयात्सुतम् ॥ २० ॥ मोक्षार्थी मोक्षमाप्नोति चाथ वाऽमरतां व्रजेत् ॥ अथ किं बहुनोक्तेन शृणु त्वं वचनं मम ॥ २१ ॥ ब्रह्मादयो देवगणा भानुमाराध्य भारत ॥ मनोहराणि दिव्यानि दिवि स्थानान्यवाप्नुवन् ॥ २२ ॥ अचलानि महाभागाः सर्वपापहराणि च ॥ २३ ॥ ॥ सुमन्तुरुवाच ॥ ॥ इत्युक्त्वा भगवान्व्यासस्तत्रैवांतरधीयत ॥ भीष्मोऽपि पूजयामास भक्त्या भानुं विधानतः ॥२४॥ तथा त्वमपि राजेन्द्र पूजयेमं दिवाकरम् ॥ पूजयित्वा रविं भक्त्या स्थानं यास्यसि शाश्वतम् ॥२५॥ यथा गतः स भगवान्व्यासो भीष्मश्च मानद ॥ सकृत्प्रपूज्य सप्तम्यां भक्त्या देवं दिवाकरम् ॥ २६ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे व्यासभीष्मसंवादे आदित्यपूजामाहात्म्यवर्णनं नाम सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥ ॥ छ ॥ ॥ शतानीक उवाच ॥ ॥ पुनर्मे ब्रूहि सप्तम्यां प्रीतये भास्करस्य तु ॥ उपोषितो भवतीह नरो यस्तु द्विजोत्तम ॥ १ ॥ ॥ सुमन्तुरुवाच ॥ ॥ कथिताः सप्त सप्तम्यः पुनरस्मिन्महामते ॥ बहवः कुरुशार्दूल भूयस्त्वेताः शृणुष्व मे ॥ २ ॥ स्वयं याः कथिताः पूर्वमादित्येन खगाधिप ॥ अरुणस्य महाबाहो सप्तम्यः सप्त पूजिताः ॥ ३ ॥ अर्कसंपुटकैरेका द्वितीया मरिचैस्तथा ॥ तृतीया निंबपत्रैश्च चतुर्थी फलसप्तमी ॥ ४ ॥ अनोदना पञ्चमी स्यात्षष्ठी विजय

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सप्तमी ॥ सप्तमी कामिका ज्ञेया विधिं तासां निबोध मे ॥ ५ ॥ शुक्लपक्षे रविदिने दक्षिणे चोत्तरायणे ॥ ग्रहणे सूर्यनक्षत्रे गृह्णीयात्सप्त सप्तमीः ॥ ६ ॥ स तां सु ब्रह्मचारी स्याच्छौचयुक्तो जितेन्द्रियः ॥ सूर्यार्चनरतो दांतो जपहोमपरस्तथा ॥ ७ ॥ पञ्चम्यामेव पुरुषः कुर्यान्नित्य मनात्मकम् ॥ षष्ठ्यां न मैथुनं गच्छेन्मधुमांसं च वर्जयेत् ॥ ८ ॥ अर्कसंपुटकैरेकां तथान्यां मरिचैर्नयेत् ॥ तथापरां निंबपत्रैः फलाख्यायां फलं चरेत् ॥ ९ ॥ अनोदनामन्नरहित उपासीत यथाविधि ॥ अहोरात्रं वायुभक्षः कुर्याद्विजयसप्तमीम् ॥ १० ॥ तथैकां सप्तमीं कृत्वा प्रतिमासं विचक्षणः ॥ कुर्याद्यथाविधि मुदा ततः कुर्वीत कामिकाम् ॥ ११ ॥ आसां लिखित्वा नामानि पत्रकेषु पृथक्पृथक् ॥ तानि सर्वाणि पत्राणि क्षिपेदभिनवे घटे ॥ १२ ॥ तदर्थं यो न जानाति लोकबाह्योपि वा नरः ॥ तेन ह्युद्धारयेदेकं न कुर्याच्च विचारणाम् ॥१३॥ तेनैव विधिना यस्तु प्रतिमासं च तत्तपः ॥ सप्तैव यावत्सप्तम्यो विज्ञेया सा तु कामिका ॥ १४ ॥ इत्येताः सप्त सप्तम्यः स्वयं प्रोक्ता विवस्वता ॥ कुर्वीत यो नरो भक्त्या स यात्यर्कसदो नृप ॥ १५ ॥ अर्कसंपुटकैर्वित्तमचलं सप्तपौरुषम् ॥ मरिचैः संगमः स्याद्वै प्रियैः पुत्रादिभिः सदा ॥ १६ ॥ सर्वरोगाः प्रणश्यंति निंबपत्रैर्न संशयः ॥ फलैस्तु पुत्रपौत्रांश्च दौहित्रांश्चापि पुष्कलः ॥ १७ ॥ अतो घनं धनं धान्यं सुवर्णं रजतं तथा ॥ तथा पशुर्हिरण्यं च आरोग्यं सततं नृप ॥ १८ ॥ उपोष्य विजयां शत्रून्राजञ्जयति नित्यशः ॥ साधयेत्कामदा कामान्विधिवत्समुपासिता ॥ १९ ॥ पुत्रकामो लभेत्पुत्रमर्थकामोर्थमक्षयम् ॥ विद्याकामो लभेद्विद्यां राज्यार्थी राज्यमाप्नुयात् ॥ कृत्स्नान्कामान्ददात्येषा कामदा कुरुनन्दन ॥ २० ॥ नरो वा यदि वा नारी यथोक्तं सप्तमीव्रतम् ॥ करोति नियतात्मा वै स याति परमां गतिम् ॥ २१ ॥ न तेषां त्रिषु लोकेषु किंचिदस्तीति दुर्लभम् ॥ ये भक्त्या लोकनाथस्य व्रतिनः संशितव्रताः ॥ २२ ॥ व्रतैस्तु विविधैर्वीर तपोभिर्वा सुदुष्करैः ॥ न तत्फलमवाप्नोति यज्ञैर्वा बहुदक्षिणैः ॥ २३ ॥ तीर्थाभिषेचनैर्वापि दानहोमार्चनैस्तथा ॥ यत्फलं च पूजयितुं सप्तम्यां प्राप्य मोक्षदम् ॥ मोक्षार्थी पार्थिवश्रेष्ठ यथाह भगवान्रविः ॥ २४ ॥ कृत्वादित्यदिने नक्तं भक्त्या संपूजयेद्रविम् ॥ अचलं स्थानमाप्नोति मानवः श्रद्धयान्वितः ॥ सूर्यलोके च नियतं तस्य वासो न संशयः ॥ २५ ॥ यस्तु पूजयते भक्त्या सप्तम्यां भास्करं नरः ॥ ब्रह्मेंद्ररुद्रलोकेषु तस्याप्रतिहता गतिः ॥ २६ ॥ नांधो न कुष्ठी न क्लीबो न व्यंगो न च निर्धनः ॥ कुले तस्य भवेद्वीर यश्चरेत्सप्तमीव्रतम् ॥ २७ ॥ विद्यार्थी लभते विद्यां धनार्थी धनमाप्नुयात् ॥ भार्यार्थी रूपसंपन्नां स्त्रियं पुत्रांश्च भारत ॥ २८ ॥ लोभात्प्रमादान्मोहाच्च व्रतभंगो यदा भवेत् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदा त्रिरात्रं नाश्नीयात्कुर्याद्वा केशमुंडनम् ॥२९॥ प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् ॥ सप्तैव यावत्सप्तम्यो भवंति च खगेश्वर ॥३०॥ अभ्यर्च्य सूर्यसप्तम्यां माल्यधूपादिभिर्नरः ॥ भोजयित्वा द्विजाञ्छक्त्या प्राप्नुयात्स्वर्गमक्षयम्॥३१॥सप्तम्यां विप्रमुख्येभ्यो हिरण्यं यः प्रयच्छति॥स तदक्षय्यमाप्नोति सूर्यलोकं च गच्छति ॥३२॥ इतीदं कीर्तितं वीर सप्तमीव्रतमुत्तमम् ॥ भूय एवाभिधास्यामि शृणुष्वैकमना नृप ॥३३॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे सूर्यारुणसंवादे सप्तसप्तमीव्रतवर्णनं नामाष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥छ॥ ॥ सुमन्तुरुवाच ॥ ॥ यः क्षिपेद्गोमयाहारः शुक्ला द्वादश सप्तमीः ॥ अथवा यावकाहारः शीर्णपर्णाशनोऽपि वा ॥ १ ॥ क्षीराशी चैकभक्तो वा भिक्षाहारोथ वा पुनः ॥ जलाहारोपि वा विद्वान्पूजयित्वा दिवाकरम् ॥ २ ॥ पुष्पोपहारैर्विविधैः पद्मसौगन्धिकोत्पलैः ॥ नानाप्रकारैर्गंधैश्च धूपैर्गुग्गुलुचंदनैः ॥ ३ ॥ कृष्णगंधपायसाद्यैर्विचित्रैः सुविभूषणैः ॥ अर्चयित्वा द्विजाञ्छ्रेष्ठान्हिरण्यान्नादिभिर्नरः ॥ ४ ॥ स तत्फलमवाप्नोति क्रतुभिर्भूरिदक्षिणैः ॥ यदेह तप्यते वीर प्राप्यते केवलं रवेः ॥ ५ विमानवरमारूढः सूर्यलोके महीयते ॥ ततः पुण्यक्षयाद्राजन्कुले महति जायते ॥ ६ ॥ एवं भक्त्या विवस्वंतं प्रतिमासं समाहितः ॥ पूजयेद्विधिवद्भक्त्या नामानि परिकीर्तयेत् ॥ ७ ॥ चैत्रिके मासि विष्णुश्च माधवे ह्यर्यमेति वै ॥ शुक्रे विवस्वान्मासे तु शुचौ मासे दिवाकरः ॥ ८ ॥ पर्जन्यः श्रावणे मासि नभस्ये वरुणस्तथा ॥ मार्तंडेति च विज्ञेयः कार्तिके भार्गवः पुनः ॥ ९ ॥ मार्गशीर्षेपि मित्रस्तु कीर्तितः सततं बुधैः ॥ पूषा पौषे तु वै मासे पूजनीयः प्रयत्नतः ॥ १० माघे भगेति विज्ञेयस्त्वष्टा चैवाथ फाल्गुने ॥ एवं क्रमेण नामानि कीर्तयेत्प्रीतये रवेः ॥ ११ ॥ धूपार्चनविधिमिमं सप्तम्यां सुसमाहितः ॥ यः करोति नरो भक्त्या स याति परमां गतिम् ॥ १२ ॥ ततस्ते सर्वमाख्यातं यथागुह्यतमं विभो॥नैव देयमशिष्याय नाभक्ताय कदाचन ॥१३॥ न च पापकृते देयं न देयं नास्तिकाय वा॥कृतघ्ने नास्तिके वीर न देयं क्रूरकर्मणि ॥ १४ ॥ य इदं शृणुयान्नित्यं सप्तमीव्रतमुत्तमम् ॥ पठेद्वश्चापि नियतः श्रद्धया परयान्वितः ॥ १५ ॥ इह लोके सुखं प्राप्य सूर्यलोके महीयते ॥ पुण्यक्षयादिहागत्य राजा भवति भूतले ॥ १६ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सूर्यारुणसंवादे प्रतिमाससप्तमीव्रतवर्णनं नाम नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥ ॥ सुमन्तुरुवाच ॥ ॥ इत्येष सप्तमीकल्पः समासात्कथितस्तव॥विस्तरात्ते पुनर्वच्मि शृणु चैकमना विभो ॥ १ ॥ फाल्गुनामलपक्षस्य षष्ठ्यां च समुपोषितः ॥ पूजयेद्भास्करं स्नात्वा गंधपुष्पविलेपनैः ॥२॥ अर्कपुष्पैर्महाबाहो गुग्गुलेन सुगंधिना ॥ श्वेतेन करवीरेण चंदनेन दिवाकरम् ॥३॥ गुडोदकेन नैवेद्यं निवेद्यं प्रीतये रवेः ॥ एवं पूज्य दिवा भानुं रात्रौ



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्याग्रतः स्वपेत् ॥ जपन्भौमं परं जाप्यं विनिद्रः सततं बुधः ॥ ४ ॥ ॥ शतानीक उवाच ॥ ॥ किं तत्परं भगवतः प्रियं जाप्यमनुत्तमम् ॥ ॥५॥ जप्तव्यो यत्परैर्भक्त्या भानुस्तस्याग्रतो नरैः ॥ तन्मे ब्रूहि तथा मंत्रान्धूपदीपान्विशेषतः ॥ येनाहं तं जपश्रव्यं पूजयामि दिवाकरम् ॥६॥ ॥ ॥ सुमंतुरुवाच ॥ ॥ वच्मि ते भरतश्रेष्ठ समासान्न तु विस्तरात् ॥ ७ ॥ षडक्षरेण मंत्रेण कुर्यात्सर्वं समाहितः ॥ जपं होमं तथा पूजां शतजप्तेनसर्वदा ॥ ८ ॥ सावित्र्या च जपं पूर्वं कृत्वा शतसहस्रशः॥ पश्चात्सर्वं प्रकुर्वीत जपादिकमनाकुलम् ॥९॥ ॐ भोः सावित्रि भास्कराय सहस्ररश्मिं धीमहि ॥ तेन सूर्यः प्रचोदयात् ॥ १० ॥ जप एष परः प्रोक्तः सप्तम्यां भानुना स्वयम् ॥ जप्त्वा सकृद्भवेत्पूतो मानवो नात्र संशयः ॥ ११ ॥ प्रभाते त्वथ सप्तम्यां जपन्नियतमानसः॥पूजयेद्भास्करं भक्त्या पूर्वोक्तविधिना नृप ॥१२॥ श्रद्धया भोजयेच्चापि ब्राह्मणाञ्छक्तितो नृप ॥ दिव्यान्भोगांश्च विधिवद्भक्ष्यभोज्यैरनेकशः ॥१३॥ वित्तशाठ्यं न कुर्वीत भोजकांश्च प्रभोजयेत् ॥ न भोजयेत्तथाऽसौरान्सौरान्यत्नेन भोजयेत् ॥ १४ ॥ ॥ ॥शतानीक उवाच ॥ ॥ के भोज्या के न वा भोज्या ब्राह्मणा ब्रह्मवित्तम ॥ केषु चित्तेषु सप्तम्यां देवदेवो दिवाकरः॥१५॥ ॥ सुमंतुरुवाच ॥ ॥ घटीभोज्यो भवेद्विप्रः सप्तमीं कुरुते च यः॥ सौरभिन्नेष्वभोज्यो यो यश्च भुक्तो दिवाकरे ॥१६॥ एते भोज्या द्विजा राजन्नादित्येन समासतः॥प्रोक्ताः कुरुकुलश्रेष्ठ तथाऽभोज्याञ्छृणुष्व वै ॥१७॥ सभार्यः सपतिर्यस्तु कुष्ठरोगैर्हतश्च यः॥ यश्चान्यदेवताभक्तस्तथा नक्षत्रसूचकः ॥१८॥ परापवादनिरतो यश्च देवलकस्तथा ॥ एतेऽभोज्याः सवित्रा तु स्वयं देवेन चिंतिताः ॥ १९ ॥ ॥ शतानीक उवाच ॥ ॥ ये भोज्या ब्राह्मणाः प्रोक्ता ये चाभोज्या द्विजोत्तमाः॥एतेषां लक्षणं ब्रूहि सर्वेषां वै समाहितः ॥२०॥ ॥ सुमंतुरुवाच ॥ ॥ साधु पृष्टोस्मि राजेंद्र कीर्तयाम्येष कृत्स्नशः ॥ पठतां तु त्रयीविद्यां ब्राह्मणानां कदंबकः ॥२१॥ घटेत्युक्ता तुक्ता तु साराजन्स्वयं देवेन भानुना ॥ सा घटा विद्यते यस्य स घटीत्युच्यते द्विजः ॥ २२ ॥ ब्रह्मक्षत्रविशांवीर शूद्राणां च कदंबकः ॥ शृण्वतां विधिवत्पुण्यं भक्त्या पुस्तकवाचनम् ॥ २३ ॥ इति मासे निबद्धस्य होमस्येति च भानुना ॥ कथितं कुरुशार्दूल स्वयमाकाशगामिना ॥ २४ ॥ यस्याः कर्ता भवेद्यस्तु मम स्यात्करको मतः ॥ स विप्रो राजशार्दूल सदेष्टो भास्करस्य तु ॥ २५ ॥ जयोपजीवी व्यासश्च समः स्याज्जीवकस्तथा ॥ यान्येतानि पुराणानि सेतिहासानि भारत ॥ जयेति कथितानीह स्वयं देवेन भास्वता ॥२६॥ एकं निवासयन्यस्तु ब्राह्मणं तूपजीवति ॥ जयोपजीवी स ज्ञेयो वाचकश्च तथा नृप ॥ २७ ॥ आरुणेयादिशास्त्राणि सप्ताश्वतिलकं तथा ॥ यस्तु जानाति सौराणि विप्रः सौरस्स तत्त्ववित् ॥२८॥ पूजयेत्सततं यस्तुभास्करं नृपसत्तम ॥ भोजकांश्च तथा राजन्यथा देवं दिवाकरम्॥२९॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स ज्ञेयो भास्करे भक्तो भोजनीयः प्रयत्नतः ॥ भोज्यानां लक्षणं ह्येतदभोज्यानां शृणुष्व मे ॥ ३० ॥ वृषली यस्य वै भार्या ब्राह्मणस्य विशेषतः ॥ परभार्यापतिरसौ ब्राह्मणो ब्राह्मणाधमः ॥ ३१ ॥ दैवेन निहतः कुष्ठी ब्राह्मणो ब्रह्मघातकः ॥ भोजको विंदते यस्तु न च तं पूजये तथा ॥ ३२ ॥ ज्ञेयोन्यदेवभक्तोसौ स विप्रः कुरुनंदन ॥ आदित्यं भोजकं विद्याद्व्रानोर्देहसमुद्भवम् ॥ ३३ ॥ नादित्यं पूजयेद्यस्तु स भोज्यो न कदाचन ॥ मुण्डो व्यंगधरो गौरः शंखपुष्पधरस्तथा ॥३४॥ यस्य याति गृहे राजन्भोजको मानवस्य तु ॥ तस्य यांति गृहे देवाः पितरो भास्करस्य तु ॥ ३५ ॥ रक्षोभूतपिशाचाश्च योगिन्योपि पलायिताः ॥ सकृद्भुङ्क्ते गृहे यस्य भोजको गृहधर्मिणः ॥ ३६ ॥ सप्तसंवत्सरं यावत्तृप्तो भवति भास्करः ॥ तस्मात्तान्भोजयेद्दिव्यान्भोजकान्सततं बुधः ॥ यस्तु तान्निंदते विप्रः स न भोज्यः कदाचन ॥ ३७ ॥ निजं भर्तारमुत्सृज्य स्वैरं यान्यत्र गच्छति ॥ स्वैरिणी सा तु वै प्रोक्ता पापिष्ठा कुलदूषिणी ॥ ३८ ॥ प्रच्छन्नं रोचते राजन्या नारी भवदोषतः ॥ ज्ञेया सा स्वैरिणी राजन्कुले भवति नाशिनी ॥३९॥ योऽस्यां रतो भवेद्विप्रः स ज्ञेयः स्वैरिणीरतः ॥ रंगोपजीवी कथको यश्च प्राकृतनर्तकः ॥ ४० ॥ रंगोपजीवी राजेंद्र तथा च बहुयाचकः ॥ द्वे एते नामनी राजन्कथकस्य प्रकीर्तिते ॥ कृतेनानेन यादृक्च उद्धृत्तः कुरुनंदन ॥ ४१ ॥ यःस्तुतिं गायते विप्रः प्रोच्चैस्तु जनसंसदि ॥ रंगोपजीवी प्रोक्तोयं द्वितीयः परिकीर्तितः ॥ ४२ ॥ सूचनं कथनं प्रोक्तं सर्वशास्त्रेषु भारत ॥ सूचयेद्यस्तु ऋक्षाणि स वै नक्षत्रसूचकः ॥ ४३ ॥ ॥ शतानीक उवाच ॥ ॥ अहो बत महत्कष्टं भवतो यद्विजान्प्रति ॥ वेदांगं ज्योतिःशास्त्रं तु पष्ठं प्रोक्तं मनीषिभिः ॥ ४४ ॥ षडंगो न भवेत्तेन रहितेन द्विजेन च ॥ अभोज्ये पठनात्तस्य यद्वत्स्याद्ब्राह्मणो द्विज ॥ ४५ ॥ भोज्योऽखण्डं ययौ विप्रोऽनर्थकेन त्वनर्थकम् ॥ विमृश्य कथ्यतां विप्र अत्र मे संशयो महान् ॥ ४६ ॥ ॥ सुमंतुरुवाच ॥ ॥ साधु पृष्टोस्मि भवता श्रूयतामत्र निर्णयः ॥ यस्य जीव्यमिदं ज्ञेयमंगं विप्रस्य वै भवेत् ॥ ४७ ॥ सांवत्सरेण ज्योतिषा ज्ञाननक्षत्रसूचकः ॥ न स भोज्यो भवेद्राजन्यस्येयं जीविका भवेत् ॥ ४८॥ निष्कारणं पराणां च परोक्षं दोषकीर्तनम् ॥ गुणानां च यथा गुप्तिः परिवादपरस्तु सः ॥ ४९ ॥ ब्राह्मणो यस्तु राजेंद्र वृत्त्या कर्म करोति वै ॥ देवतायतने चेह देवानां पूजनं तथा ॥ ५० ॥ आधिपत्यं भक्षणं च नैवेद्यस्य परंतप ॥ स ज्ञेयो देवलो राजन्ब्राह्मणो ब्राह्मणाधमः ॥ ५१ ॥ नाधिकारस्तु विप्राणां भौमानां देवपूजने ॥ वृत्त्या भरतशार्दूल आधिपत्ये विशेषतः ॥ ५२ ॥ यस्तु पूजयते देवीं ब्राह्मणो द्रव्यलोभतः ॥ वृत्त्यै कुरुकुलश्रेष्ठ स याति नरकं ध्रुवम् ॥ ५३ ॥ देवालयेषु सर्वेषु अग्निकार्यं च सुव्रत ॥ यः कुर्याद्द्रव्यलोभेन अधोगतिमवाप्नुयात् ॥ ५४ ॥ देवाल

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येषु सर्वेषु वर्जयित्वा शिवालयम् ॥ देवानां पूजनं राजन्नग्निकार्येषु वा विभो ॥ ५५ ॥ अधिकारः स्मृतो राजन्भोजकानां न संशयः ॥ पूजयंतस्तु ते देवान्प्राप्नुवंति परां गतिम् ॥ ५६ ॥ नैवेद्यं भुञ्जते यस्माद्भोजयंति च भास्करम् ॥ पूजयंति च देवानां दिव्यतन्त्रेण ते गताः ॥ ५७ ॥ पूजयित्वा तु वै देवान्नैवेद्यं भक्ष्य च प्रभोः ॥ यांति ते परमं स्थानं यत्र देवो दिवाकरः ॥ ५८ ॥ ब्राह्मणश्चापि तं ब्रूया त्तीक्ष्णे सति महामते ॥ एवं करिष्ये श्रेयोर्थं नात्मनस्तव वा विभो ॥ ५९ ॥ इत्यामंत्र्य ततो गच्छेत्स्वगृहं कुरुनन्दन ॥ तथा परेऽह्नि संपूज्य देवं भक्त्या दिवाकरम् ॥ ६० ॥ कृत्वा च पावकं राजन्ब्राह्मणान्भोजयेत्ततः ॥ शाल्योदनं तथा मुद्गं सुगन्धं मुद्गमेव हि ॥ ६१ ॥ अपूपा न्गुडपूपांश्च पयो दधि तथा नृप ॥ एतैस्तु तृप्तिमायाति भास्करो नरसत्तम ॥ ६२ ॥ वर्ज्यानि भरतश्रेष्ठ शृणु त्वं गदतो मम ॥ कुलत्थ कान्मसूरांश्च निष्पावादींस्तथैव च ॥ ६३ ॥ सिम्बुकं च तथान्यच्च राजमाषांस्तथैव च ॥ नैतानि भास्करे दद्याद्य इच्छेच्छ्रेय आत्मनः ॥ ६४॥ दुर्गंधं यच्च कटुकमत्यल्पं भास्करस्य तु ॥ विमिश्रांस्तंडुलांश्चापि न दद्याद्भास्कराय वै ॥ ६५ ॥ इत्थं भोज्य द्विजं राजन्प्राशयेदर्कसंपुटम् ॥ प्रणम्य शिरसा देवमुदकेन समन्वितम् ॥ ६६ ॥ गृहीत्वा केतनं यस्तु भजतेऽन्यत्र लोकतः ॥ नाश्नंति पितरस्तस्य न देवा न च मानवाः ॥ ॥ ६७ ॥ निष्क्रम्य नगराद्राजन्गत्वा पूर्वोत्तरां दिशम् ॥ नात्युच्चे नातिनीचे च शुचौ देशेऽर्कमुत्तमम् ॥ ६८ ॥ जातं दृष्ट्वा महाबाहो पूजयित्वा खगोत्तम ॥ पूर्वोत्तरगताश्चैव तस्य शाखा दिशन्नृप ॥ ६९ ॥ शाखाया अग्रतः पात्रे सुसूक्ष्मे पल्लवाश्रिते ॥ सुश्लिष्टे न पृथग्भूते संपूज्य गृहमाव्र जेत् ॥ ७० ॥ स्नातः पूज्य विवस्वंतमर्कपुष्पैः खगोत्तम ॥ ब्राह्मणान्भोजयित्वा तु अर्को मे प्रीयतामिति ॥ ७१ ॥ प्राश्य मंत्रेणार्कपुटं ततो भुंजीत वाग्यतः ॥ देवस्य पुरतो वीर त्वस्पृशन्दशनैः पुटम् ॥ ७२ ॥ ॐ अर्कसंपुट भद्रं ते भद्रं तेऽर्क सदास्तु वै ॥ ममापि कुरु भद्रं च प्रायश्चित्तप्रदो भव ॥ ७३ ॥ इमं मंत्रं जपन्राजन्स्मरन्नर्कं महामते ॥ स्थित्वा पूर्वमुखो ब्रह्म वारिणा सहितं नृप ॥ ७४ ॥ प्राश्य भुंक्ते च यो राजन्स याति परमां गतिम् ॥ दंतैरस्पृश्य हे वीर तत्पुटं चार्कसंज्ञितम् ॥ ७५ ॥ अनेन विधिना भक्त्या कर्तव्या सप्तमी सदा ॥ यावद्वर्षं महाबाहो प्रीतयेऽर्कस्य श्रद्धया ॥ ७६ ॥ यश्चेमां सप्तमीं कुर्याद्भास्करं प्रीणयन्नरः ॥ तस्याक्षयं भवेद्वित्तमचलं साप्तपौरुषम् ॥ ७७ ॥ सुवर्णं रजतं ताम्रं हिरण्यं च तथा क्षयम् ॥ कृत्वेमां सिद्धिमायातः कौथुमिः सहसा गतः ॥ ७८ ॥ कुष्ठरोगाच्च वै मुक्तो जयस्तोमो महीपतिः ॥ बृहद्बलध्वजः कोपी याज्ञवल्क्यो

१ कर्मणः शेषत्वविवक्षया षष्ठी ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽथ कृष्णजः ॥ ७९ ॥ अर्कं चैव समाराध्य ततोऽगुरुस्तेऽर्कसाम्यताम् ॥ इयं धन्यतमा पुण्या सप्तमी पापनाशिनी ॥ ८० ॥ पठतां शृण्वतां राजन्कुर्वतां च विशेषतः ॥ तस्मादेषा सदा कार्या विधिवच्छ्रेयसेऽनघ ॥ ८१ ॥ ॥ शतानीक उवाच ॥ ॥ जनकादयो यथा सिद्धिं गता भानुं प्रपूज्य च ॥ श्रुतं मया तु बहुशो न श्रुतं कौथुमिर्यथा ॥ ८२ ॥ सिद्धिं गतोऽर्कमाराध्य कुष्ठान्मुक्तश्च सुव्रत ॥ कश्चासौ कौथुमिर्विप्रः कथं कुष्ठमवाप्तवान् ॥ ८३ ॥ कथमाराधयामास भानुं देवपतिं द्विज ॥ एतन्मे विप्र निखिलं कीर्तयस्व समासतः ॥ ८४ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेषु सूर्यपूजादिवर्णनं नाम दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥ ॥छ॥ ॥ सुमंतुरुवाच ॥ ॥ साधु पृष्टोऽस्मि राजेंद्र शृणुष्व गदतो मम ॥ आसीत्पुरा महाविद्वान्ब्राह्मणः स्थानगोत्तमः ॥ १ ॥ स गतः पुत्रसहितो जनकस्याश्रमं द्विजः ॥ तत्र वादोऽभवत्तेषां विप्रैरन्यैर्नृपोत्तम ॥ २ ॥ क्रोधाविष्टेन वै तत्र हतः कौथुमिना द्विजः ॥ तेन दृष्ट्वा हतं विप्रं त्यक्तः पित्रा स कौथुमिः ॥ ३ ॥ भ्रातृभिश्च महाबाहो तथा शिष्टैश्च कृत्स्नशः ॥ प्रत्युक्तः स च सर्वैस्तु शोकदुःखसमन्वितः ॥ ४ ॥ तीर्थानि स जगामाथ दिव्यान्यायतनानि च ॥ न च मुक्तस्त्वसौ विप्रः सहसा ब्रह्महत्यया ॥ ५ ॥ अमुक्तोऽथ तया विप्रे परो व्याधिरजायत ॥ कर्णनासाविहीनस्तु पूयशोणितविस्रवः ॥ ६ ॥ पृथिवीं पर्यटन्सर्वां पुनरागात्पितुर्गृहम् ॥ दुःखोपहतचित्तस्तु पितरं वाक्यमब्रवीत् ॥ ७ ॥ पितर्गतस्तु तीर्थानि पुण्यान्यायतनानि च ॥ मुक्तोऽस्मि नानया तात क्रूरया ब्रह्महत्यया ॥ ८ ॥ कृतेऽपि हि परे तात प्रायश्चित्ते तु मेऽनघ ॥ किं करोमि क्व गच्छामि तातातीव रुजो मम ॥ ९ ॥ कृतेन कर्मणा येन अल्पायासेन मे विभो ॥ नश्येत्तु ब्रह्महत्येयं व्याधिश्चायं परंतप ॥ १० ॥ कथ्यतां मा चिरं तात कुरु निःश्रेयसं मम ॥ हिरण्यनाभो विप्रस्तु श्रुत्वा वाक्यं सुतस्य तु ॥ शोकदुःखाभिभूतस्तु वाक्यं पुत्रमुवाच ह ॥ ११ ॥ ॥ हिरण्यनाभ उवाच ॥ ॥ ज्ञातः पुत्र तव क्लेशः प्राप्तो यस्त्वटता महीम् ॥ १२ ॥ तीर्थानि च त्वया वत्स प्रायश्चित्तानि कुर्वता ॥ न चापि ब्रह्महत्या त्वां मुंचते मत्कुलोद्वह ॥ १३ ॥ उपायमेकं वक्ष्यामि येन त्वं मोक्षमाप्स्यसि ॥ अल्पायासेन वै पुत्र शृणुष्व गदतो मम ॥ १४ ॥ ॥ कौथुमिरुवाच ॥ ॥ आराधयामि कं देवं ब्रह्मादीनां कथं विभो ॥ शरीरेण विहीनोऽस्मि हेतुना सर्वकर्मणाम् ॥ १५ ॥ ॥ हिरण्यनाभ उवाच ॥ ॥ सिद्धिसंततियुक्तेन कर्मणा तुष्टिमाप्नुयुः ॥ देवैरपि सुपूज्योऽयमुपलेपनमार्जनैः ॥ १६ ॥ भानुरेको द्विजश्रेष्ठ ऊचुरेवं मनीषिणः ॥ ब्रह्मा विष्णुर्महादेवो जलेशो धनदस्तथा ॥ १७ ॥ भानुमाश्रित्य सर्वे ते मोदंते दिवि पुत्रक ॥ तस्माद्भानोः समं देवं नाहं पश्यामि कंचन ॥ १८ ॥ एवं भानुं सर्वमान्यमधुना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

खिलकामदम् ॥ पितरं मातरं तात नराणां नात्र संशयः ॥ १९ ॥ तमाराधय वै भक्त्या जपन्मंत्रमनुत्तमम् ॥ इतिहासपुराणानि शृणु श्रद्धासमन्वितः ॥ २० ॥ आराधयन्रविं भक्त्या जपन्साम महामते ॥ पुराणानि ततो लोके मोक्षं प्राप्स्यसि पुत्रक ॥ २१ ॥ ॥ कौथुमिरुवाच ॥ ॥ दिश सामानि वै तात प्रवराणि महामते ॥ ॐकारप्रवरोद्गीथं प्रस्थानं च चतुष्टयम् ॥ २२ ॥ पंचमः परिहारोत्र षष्ठमाहुस्तमद्भुतम् ॥ निधनं सप्तमं साम्नां साप्तविध्यमिति स्मृतमम् ॥२३॥ साप्तविध्यमिति प्रोक्तं हिंकारप्रणवेषु च॥अष्टमं च तव शाठ्यं नवमं वामदेविकम् ॥२४॥ ज्येष्ठं तु दशमं साम वेधसे प्रियमुत्तमम् ॥ एतेषां तात साम्नां वै कंठे जाप्यं परं मतम् ॥ जपित्वा तु अहं शक्त्या गच्छामि परमं पदम् ॥ २५ ॥ ॥ ॥ हिरण्यनाभ उवाच ॥ ॥ साधु पुत्र कुलं पूतं त्वत्पुत्रेण समेन च ॥ २६ ॥ एवं गतस्यापि हि ते जाता पुत्र विधेः स्मृतिः ॥ एवं तात न संदेहः सामान्येतानि पुत्रक ॥ २७ ॥ प्रवराणि हि साम्ना वै ब्रह्मणा कथितानि ह ॥ एषामपि परं प्रोक्तं सामद्वयमनुत्तमम् ॥ तस्मादेकं परं जाप्यं सर्वपापभयापहम् ॥२८॥ ॥ कौथुमिरुवाच ॥ ॥ कथ्यतां तात तच्छीघ्रं यत्तु सामद्वयं परम् ॥ एतेषां तात साम्नां तु नान्यज्जाप्यं च यद्भवेत् ॥२९॥ ॥ ॥ हिरण्यनाभ उवाच ॥ ॥ ज्येष्ठसामपरं पूव द्वितीयं गदतः शृणु ॥३०॥ ततः श्राव्यं तृतीयं तु जप्तव्यं मुक्तिमिच्छता ॥ ततश्च परमं प्रोक्तं स्वयं देवेन भानुना ॥ ३१ ॥ स्वयं दैवतमादिष्टं छंदसामुत्तमं व्रतम् ॥ प्रियं हिरण्यगर्भस्य प्रियं सूर्यस्य सर्वदा ॥ ३२ ॥ जपश्च विनियोगोपि लक्षणं च निबोध मे ॥ सत्येन स्वरलीनस्तु शूकरादि स्मृतं बुधैः ॥ ३३ ॥ ऋतुर्भावस्तथा धर्मो विधर्मः सत्यकृत्तथा ॥ धर्माधर्मौ तथा कार्यौ धर्मवेदनमेव च ॥ ३४ ॥ यदेभिर्गीयते शब्दै रुचिरं समयैर्द्विजैः ॥ जाप्यं तत्परमं प्रोक्तं स्वयं देवेन भानुना ॥ ३५ ॥ एतद्वै जपमानस्तु पुनरावर्तते न तु ॥ सर्वरोगविनिर्मुक्तो मुच्यते ब्रह्महत्यया ॥ ३६ ॥ एतज्जाप्यं तु संजप्य आराधय दिवाकरम् ॥ गायन्साम तव प्रोक्तं शृणु पौराणिकं सुत ॥ ३७ ॥ ज्येष्टसाम्नोऽपि ते पुत्र लक्षणं कथयामि हि ॥ आद्यायादाज्यदोहेति ज्येष्ठसाम्नोपि लक्षणम् ॥ ३८ ॥ तव श्राव्यं जपं पुत्रज्येष्ठगायै रविः सदा ॥ समाराधय शृण्वन्वै पुत्राणामिव पुत्रक ॥ एवमाराध्य देवेशं ततो दुःखं प्रहास्यसि ॥ ३९ ॥ ॥ सुमंतुरुवाच ॥ ॥ ततः श्रुत्वा पितुर्वाक्यं सामगः कौथुमिस्तथा ॥ ४० ॥ आराधयामास रविं भक्त्या श्रद्धासमन्वितः ॥ ततः श्राव्यं जपन्ब्राजंस्त्रिकाले पुरतो रवेः ॥ ४१ ॥ शृण्वतस्तु पुराणानि ब्रह्महत्या गता तदा ॥ व्याधिश्च कुरुशार्दूल फलमेतच्छ्रुतस्य वै ॥ ४२ ॥ जपता यत्फलं तेन देवं पूजयता नृप ॥ सोपि प्राप्तो रविं राजञ्छृणुष्वैकमना नृप ॥ ४३ ॥ स गतो मूर्तिमान्विप्रः प्रसादाद्भास्करस्य तु ॥ प्रविश्य मंडलं भानोः पदं यत्परमं विभोः ॥ ४४ ॥ आवर्तते न चाद्यापि





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गतोसौ परमं पदम् ॥ इति ते कथितं राजन्गतः सिद्धिं महाद्विजः ॥४५॥ उपोष्येमां भवेद्वीर सप्तमीं याति भास्करम् ॥ कौथुमिर्नरशार्दूल प्रसादाद्भास्करस्य तु ॥ ४६ ॥ जपमानस्तु वै सोपि पुराणश्रवणस्तथा ॥ इत्येषा कथिता राजन्प्रथमा सप्तमीतथा ॥ ४७ ॥ अर्कस्य पुटिका पुण्या वित्तदा या प्रिया रवेः ॥ ४८ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मेऽर्कसंपुटिकानामसप्तमीव्रतवर्णनं नामैकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥ ॥ सुमंतुरुवाच ॥ ॥ इत्येषा कथिता वीर अर्कसंपुटिका तव ॥ द्वितीया मरिचैर्या तु शृणुष्व गदतो मम ॥ १ ॥ शुक्लपक्षे तु चैत्रस्य षष्ठ्यां सम्यगुपोपितः ॥ पूजयेद्भास्करं भक्त्या सौरधर्मविधानतः ॥ २ ॥ ॥ शतानीक उवाच ॥ ॥ ब्रूहि सर्वान्मम ब्रह्मन्मंत्रान्पुण्यान्विशेषतः ॥ सूर्यादिहृदयं चापि शिरोन्यासयुतांस्तथा ॥ ३ ॥ ॥ सुमंतुरुवाच ॥ ॥ अहं ते कथयिष्यामि रहस्यं परमं विभो ॥ यदुक्तं ब्रह्मणा पूर्वं भक्त्या भानोर्महात्मनः ॥ ४ ॥ सर्वपापक्षयार्थाय तच्छृणुष्व महामते ॥ सर्वपापहरं पुण्यमादित्यं लोकपूजितम् ॥ ५ ॥ शिखादामसमायुक्तं वकारामृतमुत्तमम् ॥ ॐ वं फट् ॥ ॐ एप सूर्यः स्वयं तात मंत्रमूर्तिर्महाबलः ॥ ६ ॥ अस्यानुस्मरणान्मंत्री नित्यं मधुरभोजनः ॥ संवत्सरेण देवेशं साक्षाद्भानुं प्रपश्यति ॥ ७ ॥ व्याधिमृत्य्वोश्च निर्मुक्तः सूर्यलोकं स गच्छति ॥ सततं जपमानस्तु राजन्मंत्रविदां वरः ॥ ८ ॥ मनसा कर्मणा वाचा शापानुग्रहतोपि वा ॥ क्षीराशी मौनमाश्रित्य विविक्ते नियतेंद्रियः ॥ ९ ॥ जपित्वा द्वादशलक्षं सशरीरो दिवं व्रजेत् ॥ त्रैलोक्यं चरते राजंश्चिंतामणिरिवेच्छया ॥ १० ॥ अथेदं परमं वामं सूर्यस्य हृदयं शृणु ॥ स्मर्तव्यं शुचिना नित्यं सर्वपापभयापहम् ॥ ११ ॥ वियुक्तं चंद्रसंयुक्तमृकारेण च भारत ॥ ॐकारदीपितं चैव हृदयं परिकीर्तितम् ॥ १२ ॥ यकारबिंदुसंयुक्तं वैशाखः कथितो बुधैः ॥ यकारश्च वकारश्च मात्रा बिंदुस्तथा नृप ॥१३॥ इष्टं कवचमादिष्टमस्त्रं वक्ष्ये निबोध मे ॥ प्रणवादिं दुकारं च सानुस्वारं कटस्तथा ॥ १४ ॥ इदमस्त्रं स्मृतं राजन्नमृतं च निबोध मे ॥ बिंदुचंद्रसमायुक्तं वकारममृतं स्मृतम् ॥१५॥ ॐ ब्रह्मन्नस्त्रममृतं गायत्रीं चापि तेरोरां धेनुर्वै परिकीर्तितम्॥ यकारश्च वकारश्च रिरोवित्रमादिशेत् ॥१६॥ व्यनेत्र एतान्यंगानि सूर्यस्यामिततेजसः ॥ आदित्यं मूर्ध्नि विन्यस्य हृदये हृदयं न्यसेत्॥१७॥ सावित्रीं कंठदेशे तु अशेषं मूर्ध्नि चिंतयेत् ॥ अर्कन्यासो मयाख्यातो विद्वान्न्यासं प्रकल्पयेत् ॥१८॥ एकाक्षरस्य सूर्यस्य शृण्वर्चनविधिं परम् ॥ प्रथमं किंकिणीमुद्रां बद्ध्वा तु हृदये नृप ॥ १९ ॥ प्राणायामे च तथा परिवीरसमन्वितम् ॥ एकाक्षरं समावेत्ति आत्मशुद्ध्यर्थमादरात् ॥ २० ॥ पुनस्त्वामेव बध्यं तु वकारेणात्मना लभेत् ॥ २१ ॥ एतत्कृत्वादित्यसमो भवतीति न संशयः ॥ कृत्वा च मुद्रां प्रासादे अस्त्रं योज्य महीपते ॥ २२ ॥ प्रासादशो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भनं स्याद्वै कृत्वा तद्भरतर्षभ ॥ कवचेनार्कवाञ्छत्रं क्षालयेद्दर्घनक्रियाम् ॥ २३ ॥ ततोर्घ्यपात्रं पुष्पैश्च पूजयेद्विधिवन्नृप ॥ हृदि ना स्नापयेद्देवं ततः पूजां समाचरेत् ॥ २४ ॥ पद्ममुद्रा पुष्पगर्भा देवं शिरसि विन्यसेत् ॥ आवाहितो भवेद्देवं देवदेवो दिवाकरः ॥ २५ ॥ हृदयेनार्घ्यसंयुक्तां पूजां बध्नीत भारत ॥ हृदयेन च नैवेद्यं दातव्यं शक्तितो विभोः ॥ २६ ॥ यथाशक्ति जपं कुर्यात्सुव्रती वाग्यतेन्द्रियः ॥ अनेन विधिना राजन्सर्वकार्याणि साधयेत् ॥ २७ ॥ न क्वचित्प्रतिघातः स्यान्न चापि दुरितं भवेत् ॥ व्योममुद्रां परां बद्ध्वा कृत्वा चापि प्रदक्षिणम् ॥ २८ ॥ देवं विसर्जयेत्पश्चाद्धृदयेन महीपते ॥ २९ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे सौरार्चनविधिवर्णनं नाम द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ दृष्ट्वा तु पावकं देवं पावकस्थं दिवाकरम् ॥ अव्यात्तु सपरीवारं घुकारं परिकीर्तयेत् ॥ ॥ १ ॥ एवं कृते शोधनं स्यात्पावकस्य न संशयः ॥ पद्मगर्भे ततो वाथ हृदयाग्नौ समाक्षिपेत् ॥ २ ॥ आवाहितो भवेद्देवदेवः साक्षान्न संशयः ॥ ओंकारेणाहुतिशतं नेत्रांजनसमाधिना ॥ ३ ॥ पश्चाहुतीस्ततो दद्यादंगानां प्रीतये नृप ॥ विसर्जनं ततः कुर्याद्धृदयेन विचक्षणः ॥ ४ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरार्चनविधिवर्णनं नाम त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥ ॥ छ ॥ ॥ सुमन्तुरुवाच ॥ ॥ पद्मिनी च तथान्या तु मध्यमानामनी तथा ॥ अर्किणी ज्वालिनी चैव तेजनी च गभस्तिनी ॥ १ ॥ शंखमुद्रा च दशमी सूर्यवक्त्रा तथापरा ॥ सहस्रकिरणा चैव मुद्रा द्वादश कीर्तिताः ॥ २ ॥ दद्यादर्घ्यं तु पद्मिन्या व्योम बद्ध्वा जपेद्बुधः ॥ उदयाश्रयः समाकर्षे मध्यमा व्याधिनाशिनी ॥ ३ ॥ अर्किण्या पश्यते सूर्यं विधिस्थस्तु भवेद्यदि ॥ ज्वालिनीमुपसंगतुं बद्ध्वा सूर्यमुखो जपेत् ॥ ४ ॥ सप्ताहाद्वीक्षते सूर्यं सिध्यते च ततः स्वयम् ॥ अवतीर्य पद्मखंडं सूर्यादभिमुखो नरः ॥ ५ ॥ जपञ्छतसहस्रं हि अक्षयं लभते निधिम् ॥ शंखमुद्रादिभिरिमं सूर्यचक्रविधिं शृणु ॥ ६ ॥ अहोरात्रोषितो भूत्वा बद्ध्वा सूर्यमुखो नरः ॥ स्थितः पद्मासने राजञ्जपंश्चाप्ययुतं मनुम् ॥ ७ ॥ पश्यते तु त्र्यहात्सूर्यं भवेत्सिद्धिश्च मानसी ॥ सहस्रकिरणं बद्ध्वा नाभिमात्रजले स्थितः ॥ ८ ॥ जपेदयुतमात्रं तु भवेत्तद्गतमानसः ॥ सहस्रकिरणं देवं परं रश्मिभिरावृतम् ॥ ॥ ९ ॥ स पश्यति परं धाम भवेत्सिद्धिश्च पुष्कला ॥ शापानुग्रहकर्तासौ सर्वेषां प्राणिनां भवेत् ॥ १० ॥ सर्वतः कञ्चुकं मुक्त्वा भवेद्वै विगतज्वरः ॥ ११ ॥ परौ गुल्फौ करौ कृत्वा संलग्नौ च परस्परम् ॥ वामानामिकयाक्रम्य दक्षिणां तु कनीयसीम् ॥ १२ ॥ वामा दक्षिणया चैव दक्षिणा वामया तथा ॥ मुद्रैषा हि महापुण्या व्योममुद्रा प्रकीर्तिता ॥ १३ ॥ बद्ध्या चानया सद्यो हीयंते व्याधयो नृणाम् ॥ नानया रहितः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कंश्चित्सिद्धिं प्राप्नोति साधकः ॥ १४ ॥ सर्वत्रैवोत्तमा ह्येषा मंत्रमुष्टिरिति स्मृता ॥ सूर्यस्य हृदयं सेयमर्कमुद्रेति विश्रुता ॥ १५ ॥ बध्नीयात्सततं मन्त्रैरायुरारोग्यवृद्धये ॥ सूर्यमंडल अभ्यग्रे मन्त्री सूर्योदये स्थितः ॥ १६ ॥ स सूर्याभिमुखो भूत्वा जपेन्मंत्रं तु साधकः ॥ दिनत्रयेण वीक्षेत ध्यानी जपपरायणः ॥ १७ ॥ तं दृष्ट्वा नाश्नुते मृत्युं दुःखी न च न संशयः ॥ प्राप्नोति च परं स्थानं यत्र देवो दिवाकरः ॥ १८ ॥ उत्तानौ तु करौ कृत्वा पृष्ठलग्नौ परस्परम् ॥ बद्धा त्वंगुलयः सर्वाः सुप्रकीर्णा न संशयः ॥ १९ ॥ आक्रम्य चांगुलीमूलमंगुष्ठाभ्यां यथाक्रमम् ॥ उदया नाम मुद्रैषा बध्नीयादुदये रवेः ॥ २० ॥ द्वादशाद्वीक्षते सूर्यं दिनात्स हि न संशयः ॥ सर्वपापहरा चैव सर्वपापविनाशिनी ॥ २१ ॥ उदया च विना वामं मध्यतश्चैव तं क्षिपेत् ॥ मध्यमा नाम विख्याता मध्यसूर्ये तु चिन्तयेत् ॥ २२ ॥ मध्यमा विधिना तेन बद्धा मुद्रां तु साधकः ॥ अंगुल्योः परमंगुष्ठौ विधिना तावुभौ ग्रथेत् ॥ २३ ॥ मुद्रा सास्तमनी ह्येषा सर्वतन्त्रेश्वरी शुभा ॥ सूर्यस्यास्तमने मुद्रां बद्धा जप्तं समारभेत् ॥ २४ ॥ सहस्रं हि शतं वापि मुद्रां बद्धा जपेद्बुधः ॥ सर्वपातकसंमुक्तः सप्ताहादनुशोभनम् ॥ २५ ॥ करौ परस्परं लग्नावंगुष्ठौ चोर्ध्वसंस्थितौ ॥ उभौ चांगुष्ठकौ चोर्ध्वौ संलग्नौ मूर्ध्नि संस्थितौ ॥ २६ ॥ मुद्रा तु मालिनी चैव निर्दहेत्पापपञ्जरम् ॥ ब्रह्महत्यादि यत्पापं योजिता सा तु मूर्धनि ॥ २७ ॥ विदर्भ्यांगुलयः सर्वा ईषन्मध्यस्तथाग्रतः ॥ ऊर्ध्वस्थितौ तथांगुष्ठौ मुद्रेयं तर्जनी स्मृता ॥ २८ ॥ सर्वव्याधिहरा देवी सर्वशत्रुविनाशिनी ॥ एतां बद्धा महापुण्यां सर्वान्स्तम्भयते रिपून् ॥ २९ ॥ उभौ प्रसार्य वै हस्तौ मध्ये सार्धेन संस्थितौ ॥ शेषानाम्या ततश्चैव अंगुष्ठाग्रं तथा क्रमात् ॥ ३० ॥ मुद्रा गभस्तिनी नाम सूर्यस्य हृदयं परम् ॥ मृत्युं नाशयते ह्येषा बद्धा सूर्योदये शुभा ॥ ३१ ॥ अर्घ्यकाले तु बध्नीयादर्चयाग्निं प्रपूजयेत् ॥ जपकाले च बध्नीयान्मंत्राणां नात्र संशयः ॥ ३२ ॥ विदक्षिणकनिष्ठिक्यां तर्जनीभ्यां तथा भवेत् ॥ तर्जनीभ्यां तथांगुष्ठौ संलग्नौ तु परस्परम् ॥ जपं यः कुरुते नित्यं त्रिभिर्मासैर्विशुद्ध्यति ॥ ३३ ॥ करौ तु संपुटौ कृत्वा तर्जन्यौ द्वे च कुञ्चयेत् ॥ ३४ ॥ सहस्रकिरणा ह्येषा सर्वमुद्रेश्वरेश्वरी ॥ त्रिसंध्यमेतां बध्नीयात्साधको मंत्रमूर्धनि ॥ नाशयेत्सर्वपापानि तमोराशिमिवांशुमान् ॥ ३५ ॥ मुद्रा मुद्गकुंभेति बद्धा पश्चाच्चु मंत्रयेत् ॥ मासेन नाशयेत्कुष्ठं त्रिभिर्मासैर्न संशयः ॥ इति मुद्रांगसहितं सूर्यं पूजयते तु यः ॥ ३६ ॥ अनेन विधिना राजन्ब्रह्मा पूजयते रविम् ॥ तस्मात्त्वमपि राजेंद्र पूजयानेन भास्करम् ॥ ३७ ॥ ततः सूर्यमवाप्येह सूर्यलोकं स गच्छति ॥ अनेन विधिना यस्तु पूजयेत्सततं रविम् ॥ ३८ ॥ स याति परमं स्थानं यत्र देवो दिवाकरः ॥ इत्थं पूज्य च देवेशमनेन विधिना नृप ॥ ३९ ॥ भोजयित्वा यथाशक्ति ब्राह्मणांश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधानतः ॥ सप्तम्यां प्राशयेद्वापि मरिचं मंत्रतस्तथा ॥ ४० ॥ एकं गृहीत्वा मरिचमव्रणं च दृढं परम् ॥ सजलं प्राशयेद्राजन्मन्त्रेणानेन वा स्मृतम् ॥ ४१ ॥ यथोक्तेन विधानेन पूजयित्वा दिवाकरम् ॥ इति संप्राश्य मरिचं ततो भुंजीत वाग्यतः ॥ ४२ ॥ प्रियसंगमवाप्नोति तत्क्षणादेव नान्यथा ॥ इतीयं सप्तमी पुण्या प्रियसंगमदायिनी ॥ ४३ ॥ कुर्यादेकेन कामांस्तु वत्सरेण स गच्छति ॥ पुत्रादिभिर्नरश्रेष्ठ पुनः संगममृच्छति ॥ ४४ ॥ कुरु तस्मान्महाबाहो त्वमेव प्रियदायिनीम् ॥ उपोष्य इंद्रो विधिवत्सुरामरिचसप्तमीम् ॥ ४५ ॥ संयोगं कृतवान्वीर सह शच्या विधानतः ॥ उपोष्यैनां नलश्चापि दमयन्त्या महाबलः ॥ ४६ ॥ रामोऽगात्सीतया सार्धमुपोष्यैनां नराधिप ॥ ४७ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे मरिसप्तमीव्रतवर्णनं नाम चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥ ॥छ॥ ॥ सुमंतुरुवाच ॥ ॥ तृतीयां सप्तमीं वीर शृणुष्व गदतो मम ॥ निंबपत्रैः स्मृता यातु परमा रोगनाशिनी ॥ १ ॥ यथार्चनविधिर्वान्यो येन पूजयते रविम् ॥ देवदेवः शार्ङ्गपाणिः शंखचक्रगदाधरः ॥ २ ॥ अथार्चनविधिं वच्मि मंत्रोद्धारं निबोध मे ॥ ३ ॥ ॐ खषोल्काय नमः ॥ मूलमंत्रः ॥ ॐ विटि २ शिरः ॥ ॐ सहस्ररश्मये अस्त्रम् ॥ ॐ सहस्रकिरणाय २०० ऊर्ध्वबंधः ॥ ॐ घनाय भूतभाविने नमः इति भूतबंधः ॥ ॐ ज्वल २ प्रज्वल २ अग्निप्रकर ॥ ४ ॥ ॐ आदित्याय विद्महे विश्वभागाय धीमहि ॥ तन्नः सूर्यः प्रचोदयात् ॥ ५ ॥ गायत्रीसंकलीकरणमिदम् ॥ ॐ धर्मात्मने नमः ॥ ऐशान्याम् ॥ ॐ दक्षिणाय नमः आग्नेय्याम् ॥ ॐ वज्रपाणयेऽनंताय नमः उत्तरतः ॥ ॐ श्यामपिंगलाय नमः ऐशान्याम् ॥ ॐ अमृताय नमः आग्नेय्याम् ॥ ॐ बुधाय सोमसुताय नमो दक्षिणतः ॥ ॐ वागीश्वराय सर्वविद्याधिपतये नैर्ऋत्याम् ॥ ॐ शुक्राय महर्षये भूताय पश्चिमतः ॥ ॐ ईश्वराय सूर्यात्मने नमो वायव्याम् ॥ ॐ कृतवते नमः उत्तरतः ॥ ॐ राहवे नमः ऐशान्याम् ॥ ॐ अंतराय सूर्यात्मने नमः पूर्वतः ॥ ॐ ध्रुवाय नम ऐशान्याम् ॥ ॐ भगवते पूषन्मालिन्सकलजगत्पते सप्ताश्ववाहन भूभुज परमसिद्धिशिरसि गतं गृह्ण तेजोग्ररूप अनंतज्वाल २ ॥ आवाहनमंत्रः ॥ ॐ नमो भगवते आदित्याय सहस्रकिरणाय यथासुखं पुनरागमनाय इति ॥ ६ ॥ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे सूर्यमंत्रोद्धारवर्णनं नाम पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥ ॥ छ ॥ ॥ सुमंतुरुवाच ॥ ॥ शृणुष्वर्चाविधिं राजन्मंत्रपूतेन वारिणा ॥ प्रोक्षणीयं प्रयत्नेन किमर्थं सुसमाहितः ॥ १ ॥ हृदयादिष्वथांगेषु मंत्रं विन्यस्य मंत्रवित् ॥ आत्मानं भास्करं ध्यात्वा परिचारसमन्वितः ॥ २ ॥ कुर्यात्संमार्जनीं मुद्रां दिशां च प्रतिबोधनम् ॥ पाताले भूशोधनं चैव नभसश्च





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथा मतम् ॥ ३ ॥ अर्चनस्य प्रकारोऽयं सर्वेषामीप्सितप्रदः ॥ सर्वैरपि बुधैर्वीर पद्ममेतत्प्रकीर्तितम् ॥ ४ ॥ अष्टपत्रं लिखेत्पद्मं शुचौ देशे सकर्णिकम् ॥ आवाहनीं ततो बद्ध्वा मुद्रामावाहयेद्रविम् ॥ ५ ॥ खषोल्कं स्नापयेत्तत्र स्वरूपं लोभदायकम् ॥ स्थापयेत्स्नापयेच्चैव मंत्रै मंत्रशरीरिणम् ॥ ६ ॥ आग्नेय्यां दिशि देवस्य हृदयं स्थापयेन्नरः ॥ ऐशान्यां तु शिरः स्थाप्य नैर्ऋत्यां विन्यसेच्छिखाम् ॥ ७ ॥ पौरंदर्यां न्यसेन्नेत्रे एकाग्रहृदयस्तु सः ॥ आवाह्य चैकं कवचं वारुण्यामस्त्रमेव च ॥ ८ ॥ ऐशान्यां स्थापयेत्सोमं पौरंदर्यां तु लोहितम् ॥ आग्नेय्यां सोमतपनं याम्यां चैववृहस्पतिम् ॥ ९ ॥ नैर्ऋत्यां दानवं शुक्रं वारुण्यां च शनैश्चरम् ॥ वायव्यां च तथा केतुं कौबेर्यां राहुमेव च ॥ १० ॥ द्वितीयायां तु कक्षायां देवतेजःसमुद्भवान् ॥ स्थापयेद्द्वादशादित्यान्काश्यपेयान्महाबलान् ॥ ११ ॥ भगः सूर्योऽर्यमश्चैव मित्रो वरुण एव च ॥ सविता चैव धाता च विवस्वांश्च महाबलः ॥ १२ ॥ त्वष्टा पूषा तथा चन्द्रो द्वादशो विष्णुरुच्यते ॥ पूर्वे चेन्द्राय दक्षिणे यमाय पश्चिमे वरुणाय उत्तरे कुबेराय ऐशान्यामीश्वराय आग्नेय्यामग्निदेवतायै नैर्ऋत्यां पितृदेवेभ्यो वायव्यां वायवे ॥ जया च विजया चैव जयंती चापराजिता ॥ शेषश्च वासुकिश्चैव रेवती च विनायकः ॥ महाश्वेता महादेवी राज्ञी चैव सुवर्चला ॥ १३ ॥ तथान्यो वापि देवानां समूहस्तत्रतत्र ह ॥ तथान्यो लोकविख्यातो योगः प्रोक्तश्च दक्षिणे ॥ १४ ॥ पुरस्ताद्भासुरस्थाने स्थापनीया विजानता ॥ सिद्धिर्वृद्धिः स्मृतिर्देवी श्रीश्चैवोत्पलमालिनी ॥ १५ ॥ स्थाप्या स्वदक्षिणे पार्श्वे लोकपूज्या समंततः ॥ प्राज्ञावती क्षुधा वीर हारीता बुद्धिरेव च ॥ १६ ॥ स्थाप्य बुद्धिमती नित्यं श्रीकामैर्वा विवस्वतः ॥ ऋद्धिश्चैव विसृष्टिश्च पौर्णमासी विभावरी ॥ स्थाप्याश्च स्वोत्तरे पार्श्वे इत्येता देवशक्तयः ॥ १७ ॥ दीपश्चान्नमलंकारो वासः पुष्पाणि मन्त्रतः ॥ देयानि देवदेवाय सानुगाय समूर्तये ॥ १८ ॥ विधिनानेन सततं सदा योऽर्चयति भास्करम् ॥ संप्राप्य परमान्कामांस्ततो भानुसदो व्रजेत् ॥ १९ ॥ अनेन विधिना यस्तु भोजयेद्भास्करं नृप ॥ त्वं निंब कटुकात्मासि आदित्यनिलयस्तथा ॥ सर्वरोगहरः शान्तो भव मे प्राशनं सदा ॥ २० ॥ इत्थं प्राश्य जपेद्धीमान् देवस्य पुरतो नृप ॥ ब्राह्मणान्भोजयित्वा तु शक्त्या दत्त्वा तु दक्षिणाम् ॥ २१ ॥ भुञ्जीत वाग्यतः पश्चान्मधुरं क्षारवर्जितम् ॥ इत्येषा वर्षपर्यन्तं कर्तव्या चैव सप्तमी ॥ २२ ॥ कुर्वाणः सप्तमीमेतां सर्वरोगैः प्रमुच्यते ॥ सर्वरोगविनिर्मुक्तः सूर्यलोकं स गच्छति ॥ २३ ॥ ॥ सुमन्तुरुवाच ॥ ॥ अथ भाद्रपदे मासि सिते पक्षे महीपते ॥ कृत्वोपवासं सप्तम्यां विधिव

१ [illegible] दानवः, [illegible]

त्पूजयेद्द्विज ॥ २४ ॥ माहेश्वरेण विधिना पूजयेदत्र भास्करम् ॥ अष्टम्यां तु पुनः स्नातः पूजयित्वा दिवाकरम् ॥ २५ ॥ दद्यात्फलानि विप्रेभ्यो मार्तण्डः प्रीयतामिति ॥ खर्जूरं नालिकेरं च मातुलिङ्गफलानि च ॥ २६ ॥ देवस्य पुरतो दत्त्वा तथा चाम्रफलानि च ॥ इति ते कथितं राजन्सप्तमीफलमादितः ॥ २७ ॥ महातपो महाश्रेष्ठं भास्करस्य विशाम्पते ॥ यच्छ्रुत्वा मानवो राजन्मुच्यते ब्रह्महत्यया ॥ २८ ॥ तथेदं परमं पर्व कथितं ब्रह्मसंज्ञितम् ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यन्ते मानवा नृप ॥ २९ ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च ॥ सर्वतीर्थाभिगमने वेदाभ्यासे च यत्फलम् ॥ यत्फलं पृथिवीदाने तत्सर्वं प्राप्नुयान्नरः ॥ ३० ॥ राजसूयसहस्रस्य वाजपेयशतस्य च ॥ सहस्रशतदानस्य फलं विंदति मानवः ॥ ३१ ॥ लेखत्वं ब्राह्मणो गच्छेत्क्षत्रियो विप्रतां व्रजेत् ॥ वैश्योऽपि क्षत्रतां याति शूद्रो वैश्यत्वमेव च ॥ ३२ ॥ सूतमागधबन्द्याद्या ये चान्ये संकरोद्भवाः ॥ तेऽपि यांत्युत्तमं स्थानं पुराणश्रवणाद्विभो ॥ ३३ ॥ इतिहासपुराणाभ्यां नत्वन्यत्पावनं नृणाम् ॥ येषां श्रवणमात्रेण मुच्यते सर्वकिल्बिषैः ॥ ३४ ॥ विधिना राजशार्दूल शृण्वतां यत्फलं किल ॥ यथोक्तं नात्र संदेहः पठतां च विशांपते ॥ ३५ ॥ ॥ शतानीक उवाच ॥ ॥ भगवन्केन विधिना श्रोतव्यं भारतं नरैः ॥ चरितं रामभद्रस्य पुराणानि विशेषतः ॥ ३६ ॥ कथं तु वैष्णवा धर्माः शिवधर्मा अशेषतः ॥ सौराणां चापि विप्रेन्द्र उच्यतां श्रवणे विधिः ॥ ३७ ॥ वाचनीयं कथं चापि वाचको द्विजसत्तम ॥ लक्षणं चास्य मे ब्रूहि वाचकस्य महात्मनः ॥ ३८ ॥ स्वरूपं चास्य मे ब्रूहि खषोल्कस्य महात्मनः ॥ फलं च पूजिते किं स्याद्वाचके विधिवद्द्विज ॥ ३९ ॥ पारणेपारणे पूज्यो वाचकः श्रावकैः कथम् ॥ समाप्ते भगवन्किंकिं देयं पर्वणि वाचके ॥ ४० ॥ न च किं कार्यसिद्धं प्रत्सिद्धं पर्वणि पर्वणि ॥ ॥ सुमन्तुरुवाच ॥ ॥ सम्यक्पृष्टोऽस्मि राजेन्द्र इतिहासपुराणयोः ॥ ४१ ॥ श्रवणे तु महाबाहो श्रूयतां यन्मया पुरा ॥ पृष्टो वोचन्महातेजा विरिंचो भगवान्गुरुः ॥ ४२ ॥ हंत ते कथयाम्येष पुराणश्रवणे विधिम् ॥ इतिहासपुराणानि श्रुत्वा भक्त्या विशेषतः ॥ मुच्यते सर्वपापेभ्यो ब्रह्महत्यादिभिर्विभो ॥ ४३ ॥ सायं प्रातस्तथा रात्रौ शुचिर्भूत्वा शृणोति यः ॥ तस्य विष्णुस्तथा ब्रह्मा तुष्यते शंकरस्तथा ॥ ४४ ॥ प्रत्यूषे भगवान्ब्रह्मा दिनांते तुष्यते हरिः ॥ महादेवस्तथा रात्रौ शृण्वतां तुष्यते विभुः ॥ पारणानि दशाहेषु एके कुर्वंति तानि भोः ॥ ४५ ॥ भवेद्द्रै राजशार्दूल शृणु तेषां च यत्फलम्॥विधानं वाचकस्येह शृण्वतां च विशांपते॥४६॥शुद्धवासा गृहादेत्य स्थानं यत्समयान्वितम् ॥ प्रदक्षिणं ततो गत्वा यस्तस्मिन्देव एव हि ॥ ४७ ॥ नात्युच्चं नातिनीचं च ह्यासनं भजते ततः ॥ आसनं तस्य वै राजन्बोधकस्य सदा भवेत् ॥ ४८ ॥ वन्द



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नीयं प्रपूज्यं च श्रोतृभिः कुरुनन्दन ॥ व्यासपीठं तु तत्प्रोक्तं गुरोरासनमादिशेत् ॥ ४९ ॥ न स्थेयं श्रावकैस्तस्माद्वाचकस्यासने नृप ॥ राजासने यथा भृत्यैर्यथा पुत्रैः पितुर्नृप ॥ ५० ॥ यथा शिष्यैर्गुरोर्वीर स तेषां हि गुरुर्मतः ॥ देवार्चामग्रतः कृत्वा ब्राह्मणार्चां विशेषतः ॥ ५१ ॥ उपविश्य ततः पश्चाच्छ्रावकः शृणुयान्नृप ॥ समस्तानागतान्कृत्वा ततः पुस्तकमाददेत् ॥ ५२ ॥ प्रणम्य शिरसा तस्य पुस्तकस्य विशांपते ॥ ग्रंथिं च शिथिलां कुर्याद्वाचकः कुरुनन्दन ॥ पुनर्बध्नीत तत्सूत्रं तन्मुक्त्वा वाचयेत्क्वचित् ॥ ५३ ॥ त्रिविधं पुस्तकं विद्यात्सूत्रं वासुकिरुच्यते ॥ पत्राणि भगवान्ब्रह्मा अक्षराणि जनार्दनः ॥५४॥ शंकरश्च तथा सूत्रं पंक्तयः सर्वदेवताः ॥ पावकश्च तथा सूत्रे मध्ये भानुः समाश्रितः ॥५५॥ अग्रे स्थिता ग्रहाः सर्वे दिशो वापि तथा विभो ॥ स्मृतो मेरुः सदा शंकुश्छिद्रमाकाशमुच्यते ॥५६॥ यंत्रद्वयं काष्ठमयमधोर्ध्वं यदुदाहृतम् ॥ द्यावापृथिव्योश्च शंखस्तथा चंद्र उदाहृतः ॥ ५७ ॥ इत्थं देवमयं ह्येतत्पुस्तकं देवपूजितम् ॥ नमस्यं पूजनीयश्च गृहे स्थाप्यं विभूतये ॥ ५८ ॥ योऽस्य सूत्रं बृहत्कृत्वा प्रयच्छति नरोत्तमः ॥ स याति परमं स्थानं यत्र देवो दिवाकरः॥५९॥निरूप्य पात्रं राजेन्द्र कराभ्यां गृह्य वाचकः ॥ प्रणम्य शिरसा सर्वान्ब्रह्मादीन्व्यासमेव च ॥ वाल्मीकिं च तथा राजन्विधिं विष्णुं शिवं रविम् ॥६०॥ नमस्कारमथैषां तु पठित्वा कुरुनंदन ॥ ततोऽसौ व्याहरेद्विप्रान्वाचकः श्रद्धयान्वितः ६१॥ अलंबितमतस्तब्धमद्रुतं वीरमूर्जितम् ॥ असंसक्ताक्षरपदं रसभावसमन्वितम् ॥ ६२ ॥ सप्तस्वरसमायुक्तं कालेकाले विशांपते ॥ प्रदर्शयन्रसान्सर्वान्वाचको व्याहरेन्नृप ॥ ६३ ॥ ईदृशाद्वाचकाद्विप्राच्छ्रुत्वा श्रद्धासमन्वितः ॥ इतिहासपुराणानि रामस्य चरितं तथा ॥ ६४॥ नियमस्थः शुचिः श्रोता शृणुयात्फलमश्नुते ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चापि विशेषतः ॥ ६५ ॥ अश्वमेधमवाप्नोति सर्वान्कामानवाप्नुते ॥ रोगैश्च मुच्यते सर्वैर्महत्पुण्यं च विंदति ॥ गच्छेद्वापि परं स्थानं देवस्याद्भुतमुत्तमम् ॥६६॥ स्नातैर्गृहं समागम्य श्रोतृभिर्वाचकस्य तु ॥ प्रणम्य शिरसा विप्रं वाचकं श्रद्धया नृप ॥६७॥ आसनं च समाश्रित्य स्थातव्यं वाचकस्य तु॥संमुखं राजशार्दूल वाग्यतैः सुसमाहितैः॥६८॥वाचकेन नमस्कारे कृते व्यासस्य भूपते॥न वक्तव्यं महाबाहो श्रावकैः संशयादृते ॥६९॥ संशये सति प्रष्टव्यो वाचकः संप्रसाद्य तु ॥ यतश्च स गुरुस्तेषां धर्मतो बंधुरुच्यते॥७०॥ वाचकेनापि वक्तव्यं यत्स्यात्तेषां निबोधनम् ॥ अनुग्रहाय सर्वेषामशेषा गुरवो नृप ॥ ७१ ॥ नमस्कारादयः श्राव्याः शिवमस्त्विति वोद्यतैः ॥ वाग्यतैर्नृपशार्दूल वर्णैः सर्वैर्महीपते॥७२॥शूद्राणां पुरतो वैश्या वैश्यानां क्षत्रिणस्तथा ॥ मध्यस्थितोऽथ सर्वेषां वाचको व्याहरेन्नृप ॥ ये च संक

१ शिरसा पुस्तकं प्रणम्य तदा पुस्तकमाददयादित्यर्थः । इदंत्थं पदद्वयं पूर्वान्वायि । २ व्याङ्पूर्वस्य हरतेरिहान्यत्र च वचनमेवार्थः, अत्र प्रमाणममर एव तथा 'व्याहारउक्तिर्लपितं भाषितं वचनं वचः' इति । ३ इदं पूर्वान्वयि ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रजा राजन्नरास्ते शूद्रपृष्ठतः ॥ ७३ ॥ ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरेत् ॥ श्रुत्वान्यवर्णजाद्वाचं वाचकान्नरकं व्रजेत् ॥ ७४ ॥ इत्थं हि शृण्वतां तेषां वर्णानामनुपूर्वशः ॥ मासिमासि भवेद्राजन्पारणं कुरुनन्दन ॥ ७५ ॥ श्रेयोऽर्थमात्मनो राजन्पूजयेद्वाचकं बुधः ॥ मासि पूर्णे द्विज श्रेष्ठे दातव्यं स्वर्णमाषकम् ॥ ७६ ॥ ब्राह्मणेन महाबाहो द्वे देये क्षत्रियस्य तु ॥ वाचकाय द्विजश्रेष्ठ वैश्येनापि त्रयं तथा ॥ ७७ ॥ शूद्रेणैव च चत्वारो दातव्याः स्वर्णमाषकाः ॥ मासिमासि द्विजश्रेष्ठ श्रद्धया वाचकाय तु ॥ ७८ ॥ प्रथमे पारणे राजन्वाचकं पूज्य शक्तितः ॥ अग्निष्टो मस्य यज्ञस्य फलं विंदति मानवः ॥ ७९ ॥ कार्तिकादीन्समारभ्य यावत्कार्त्तिकमच्युत ॥ अग्निष्टोमं गोसवं च ज्योतिष्टोमं तथा नृप ॥ ८० ॥ सौत्रामणिं वाजपेयं वैष्णवं च तथा विभो ॥ माहेश्वरं तथा ब्राह्मं पुंडरीकं यजेत यः ॥ ८१ ॥ आदित्ययज्ञस्य तथा राजसूयाश्वमेधयोः ॥ फलं प्राप्नोति राजेंद्र मासैर्द्वादशभिः क्रमात् ॥ इत्थं यज्ञफलं प्राप्य याति लोकांस्तथोत्तमान् ॥ ८२ ॥ वज्रवेदिकसंपन्नं मणिरत्नविभूषितम् ॥ विमानमास्थितो राजन्मोदते शक्रमंदिरे ॥ ८३ ॥ ततश्चंद्रस्य भवने वारुणे भवने ततः ॥ शोचिष्केशगृहे गत्वा गच्छेच्चैलबिले गृहे ॥ ८४ ॥ धिषणस्य गृहं गत्वा ततश्चित्रशिखंडिनः ॥ वृद्धश्रवसमासाद्य गच्छेत्कंजजमंदिरे ॥ एवमेव नृपश्रेष्ठ नात्र कार्या विचारणा ॥ ८५ ॥ फलमेतत्स मुद्दिष्टं शृण्वतां सततं नृणाम् ॥ एतत्फलं वत्सरेण शृण्वतो विधितो नृप ॥ ८६ ॥ एतानि परिमाणानि वत्सरेण भवंति वै ॥ शृण्वतां नृपशार्दूल ददतां वाचकाय वै ॥ ८७ ॥ एकं च द्वे तथा त्रीणि चत्वारि च विशांपते ॥ देयानि वाचकायेह मासिमासि नराधिप ॥ ८८ ॥ ब्रह्मणाद्यैर्नृप श्रेष्ठ सर्ववर्णविभागशः ॥ समाप्ते पर्वणि तथा वाचकं पूजयेत्पुनः ॥८९॥ वाचकं ब्राह्मणं चैव सर्वकामैः प्रपूजयेत् ॥ गन्धमाल्यादिभिर्दिव्यैर्वा सोभिर्विविधैरपि ॥ ९० ॥ वाचकाय प्रदत्त्वा तु ततो विप्रान्प्रपूजयेत् ॥ हिरण्यं रजतं रुक्मं गाश्च कांस्योपदोहनाः ॥९१॥ दत्त्वा च वाचका येह श्रुतस्य प्राप्यते फलम् ॥ यथा सदक्षिणं चान्नं श्राद्धकाले प्रकीर्तितम् ॥ तथा श्रुतं नृपश्रेष्ठ सदक्षिणमुदाहृतम् ॥ ९२ ॥ वाचकं पूजयेद्यस्मा त्पश्चाल्लेखकपूजनम् ॥ समाप्ते पर्वणि विभो विशेषेणैव चार्चयेत् ॥ ९३ ॥ वाचकः पूजितो येन पूजितास्तेन देवताः ॥ वाचके परितुष्टे च मम प्रीतिरनुत्तमा ॥९४॥ इति वेधाः सदा प्राह देवानां पुरतः पुरा ॥ तस्मिंस्तुष्टे जगत्सर्वं तुष्टं भवति नित्यशः॥९५॥ तस्मात्प्रपूजयेद्विप्रं वाचकं नृप सत्तम ॥ न तुल्यं वाचकेनेह पात्रं दानस्य विद्यते॥९६॥तिष्ठंति यस्य शास्त्राणि जिह्वाग्रे पृथिवीपते॥दृष्टश्च गोचरस्तात कस्तेन सदृशो द्विजः९७॥

१ श्लोकद्वयमेकान्वयि । २ पुष्पस्य भवने ततः–इ० पा० । ३ ततो विष्णुगृहं व्रजेत्–इ० पा० ।





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तुल्यं विद्यते तेन भुवि पात्रं नरेषु वै ॥ तस्मादन्नं सदा पूर्वं तस्मै देयं विदुर्बुधाः ॥ श्राद्धे यस्य द्विजो भुंक्ते वाचकः श्रद्धयान्वितः ॥ भवंति पितरस्तस्य तृप्ता वर्षशतं नृप ॥९८॥ यथेह सर्वदेवानां भास्करः प्रवरः स्मृतः ॥ विस्पष्टमद्रुतं शांतं स्पष्टाक्षरपदं तथा ॥ कलस्वरसमायुक्तं रसभावसमन्वितम् ॥ ९९ ॥ बुध्यमानः सदात्यर्थं ग्रंथार्थं कृत्स्नशो नृप ॥ ब्राह्मणादिषु वर्णेषु ग्रंथार्थं वाचयेन्नृप ॥ १०० ॥ य एवं वाचयेद्राजन्स विप्रो व्यास उच्यते ॥ अतोऽन्यथा कथयिता ज्ञेयोऽसौ वक्तृनामकः ॥ १०१ ॥ इत्थंभूतो वसेद्यस्मिन्वाचको व्याससन्निभः ॥ देशेऽथ पत्तने राजन्स देशः प्रवरः स्मृतः ॥ १०२ ॥ ते धन्यास्ते महात्मानस्ते कृतार्था न संशयः ॥ वसंति यत्नतो यस्मिन्स देशः प्रवरः स्मृतः ॥ १०३ ॥ न शोभते पुरं वीर व्यासहीनं कदाचन ॥ यथार्कहीनं हि दिनं चंद्रहीना यथा निशा ॥ १०४ ॥ न राजते सरो यद्वत्पद्मिनी रहितं नृप ॥ तथा व्यासविहीनं तु राजते न पुरं क्वचित् ॥ १०५ ॥ प्रणम्य वाचकं भक्त्या यत्फलं प्राप्यते नरैः ॥ न तत्क्रतुसहस्रेण प्राप्यते कुरुनंदन ॥ १०६ ॥ यथैकतो ग्रहाः सर्वे एकतस्तु दिवाकरः ॥ तथैकतो द्विजाः सर्वे एकतस्तु स वाचकः ॥ १०७ ॥ यथा वेदसमो नास्ति आगमो भुवि कश्चन ॥ तथा व्याससमो नास्ति ब्राह्मणो भुवि कश्चन ॥ १०८ ॥ कुरुक्षेत्रसमं तीर्थं न द्वितीयं प्रचक्षते ॥ न नदी गंगया तुल्या न देवो भास्कराद्वरः ॥१०९॥ नाश्वमेधसमं पुण्यं न पापं ब्रह्महत्यया ॥ पुत्रजन्मसुखैस्तुल्यं न सुखं विद्यते यथा ॥११०॥ तथा व्याससमो विप्रो न क्वचित्प्राप्यते नृप ॥ दैवे कर्मणि पित्र्ये च पावनः परमो नृणाम् ॥ १११ ॥ नास्ति व्याससमः श्रेष्ठ इतीयं वैदिकी श्रुतिः ॥ अथ विप्रसहस्राणां विप्रोऽयं श्रेष्ठ ईरितः ॥ उपविष्टो यदा भुंक्ते व्यासो वै विप्रमण्डले ॥११२॥ श्राद्धे तात पवित्राणि कथितानि पुरा मम ॥ ब्रह्मणा राजशार्दूल शृणु तानि यथाविधि ॥११३॥ मधु पायसं कालशाकस्तिलाश्च कुतपस्तथा ॥ राजतं चापि पात्रेषु ब्राह्मणेष्वथ वाचकः ॥११४॥ दैवे कर्मणि पित्र्ये च स ज्ञेयः पंक्तिपावनः ॥ वाचकश्च यतिश्चैव तथा यश्च षडंगवित् ॥ ११५ ॥ एते सर्वे नृपश्रेष्ठ विज्ञेयाः पंक्तिपावनाः ॥ नामनी वाचकस्यैते शृणुष्वार्थमथैतयोः ॥ ११६ ॥ इतिहासपुराणानि जयंति विदितानि वै ॥ उपजीवति यस्माद्वै वाचयानो द्विजो नृप ॥ जयोपजीवी तेनासौ गतः ख्यातिं तु वाचकः ॥ ११७ ॥ विस्पष्टमद्रुतं शांतं स्पष्टाक्षरमिदं तथा ॥ कलस्वरसमायुक्तं रसभावसमन्वितम् ॥११८॥ बुध्यमानोऽथ वात्यर्थं ग्रंथार्थं कृत्स्नशो नृप ॥ ब्राह्मणादिषु वर्णेषु ग्रंथार्थं चार्पयेत्तथा ॥ ११९ ॥ य एवं वाचयेद्राजन्स विप्रो व्यास उच्यते ॥ अतोऽन्यथा वाचयिता न गच्छेद्व्यासतां क्वचित् ॥ १२० ॥ त्रिविधं वाचकं विद्यात्सदा गुणविभेदतः ॥ श्रावकं च महाबाहो त्रिविधं गुणभेदतः ॥ १२१ ॥ द्वावेतौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथ्यमानौ तु निबोध गदतो मम ॥ अभिद्रुतं तथास्पष्टं विस्तरं स्वरवर्जितम् ॥१२२॥ पदच्छेदविहीनं च तथा भावविवर्जितम् ॥ अबुध्यमानो ग्रंथार्थमभीष्टोत्साहवर्जितः ॥ १२३ ॥ईदृशं वाचयेद्यस्तु वाचकः क्ष्माधिपेश्वर ॥ क्रोधनोऽप्रियवादी च अज्ञानाद्ग्रंथदूषकः ॥ १२४ ॥ बुध्यते न च कथाच्च स ज्ञेयो वाचकाधमः ॥ विस्पष्टमद्रुतं शांतं रसभावसमन्वितम् ॥ १२५ ॥ अबुध्यमानो ग्रंथार्थं वाचयेद्यस्तु वाचकः ॥ स ज्ञेयो राजसो राजन्निदानीं सात्त्विकं शृणु ॥ १२६ ॥ विस्पष्टमद्रुतं शांतं स्पष्टाक्षरपदं तथा ॥ कलस्वरसमायुक्तं रसभावसमन्वितम् ॥१२७॥ अत्यर्थं बुध्यमानस्तु ग्रंथार्थं कृत्स्नशो नृप ॥ ब्राह्मणादिषु वर्णेषु आचार्यो विधिवन्नृप ॥ १२८ ॥ य एवं वाचयेद्राजन्स ज्ञेयः सात्त्विको बुधैः ॥ श्रद्धाभक्तिविहीनो यो लोभिष्ठः कटुको यथा ॥ १२९ ॥ हेतुवादपरो राजंस्तथासूयासमन्वितः ॥ नित्यां नैमित्तिकां काम्यामाददद्दक्षिणां नृप ॥ ॥ १३० ॥ वाचको यो महाबाहो शृणुयाद्यस्तु मानवः ॥ स ज्ञेयस्तामसो राजञ्छ्रावको मानवोऽपि सः ॥ १३१ ॥ न तस्य पुरतो वीर वाचयेत्प्राज्ञ एव हि ॥ प्रसंगाच्छृणुयाद्यस्तु श्रद्धाभक्तिविवर्जितः ॥ १३२ ॥ राजन्कौतुकपात्रं तु स ज्ञेयो राजसो भवेत् ॥ संत्यज्य सर्वकार्याणि भक्त्या श्रद्धासमन्वितः ॥ १३३ ॥ सततं पूजयेद्यस्तु वाचकं श्रद्धया मुदा ॥ नित्ये नैमित्तिके काम्ये गुरूंश्वै देवतास्तथा ॥ १३४ ॥ य एवं शृणुयाद्वीर स ज्ञेयः सात्त्विको बुधैः ॥ व्यासः पूज्यः श्रावकाणां यथा व्यासवचो नृप ॥ १३५ ॥ तस्मात्पूज्यतमो नान्यः श्रावकाणां नृपोत्तम ॥ यतः स वै गुरुस्तेषां ज्ञानदाता सदा नृप ॥१३६॥ चतुर्णामिह वर्णानां नान्यो बन्धुः प्रचक्ष्यते ॥ व्यासादृते नृपश्रेष्ठ इतीयं वैदिकी श्रुतिः ॥१३७॥ तस्मात्सर्वप्रयत्नेन पूजयेद्वाचकं सदा ॥ स गुरुः स पिता माता स बंधुः स सुहृत्तथा ॥ १३८ ॥ वाचको नृपशार्दूल विप्रादीनामशेषतः ॥ इत्थं व्यासो गुरुर्ज्ञेयः पूज्यो मान्यो द्विजातिभिः ॥ १३९ ॥ शृण्वंति ये नरा राजन्स तेषां गुरुरुच्यते ॥ पूजार्थं तस्य समयः श्रावकाणामुदाहृतः ॥ ॥ १४० ॥ ये शृण्वंति नृपश्रेष्ठ मासि मासि ददंति ते ॥ स्वर्णमाषकमेकस्मै वाचकाय पृथक्पृथक् ॥१४१॥ द्वादश्यां चामावास्यायामथ वा रविसंक्रमे ॥ सा नित्या दक्षिणा तस्यां या च श्रेयोऽर्थमात्मनः॥१४२॥ अयने विषुवे चैव चंद्रसूर्यग्रहे तथा ॥ प्राप्ते वापरपक्षे च दानं तस्मै स्वशक्तितः ॥ १४३ ॥ देयं स्याच्छ्रावकैस्तात तं मुक्त्वा नान्यतो नृप ॥ प्रथमं तस्य दातव्यं श्रेयोऽर्थं श्रावकैः सदा ॥१४४॥ अदत्त्वा तस्य येऽन्यस्मै संप्रयच्छंति श्रावकाः ॥ अवमानः कृतस्तैस्तु वाचकस्य भवेन्नृप ॥ १४५ ॥ कृत्वावमानमथ तैः प्राप्यते यत्फलं नृप ॥ ब्राह्मणाद्यैः समस्तैश्च तच्छृणुष्व वरानन ॥१४६॥ शूद्रत्वं ब्राह्मणो याति क्षत्त्रियो याति काकताम् ॥ जायते च तथा वैश्यः शूद्रश्चाण्डालतां व्रजेत् ॥१४७॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात्पूज्यो नृपश्रेष्ठ प्रथमं वाचको बुधैः ॥ आपत्काले च वृद्धौ च यतश्चासौ गुरुः स्मृतः ॥ १४८ ॥ वैशाख्यामयने वीर तृतीयायां च सुव्रत ॥ कार्त्तिक्यामथ माघ्यां च संपूज्यः प्रथमं भवेत् ॥ १४९ ॥ पर्वस्वन्येषु च विभो संपूज्यो धर्मतः स्मृतः ॥ हिरण्यं च सुवर्णं च धनं धान्यं तथैव च ॥ १५० ॥ अन्नं चापि तथा पक्वं मांसं च कुरुनंदन ॥ दातव्यं प्रथमं तस्मै श्रावकैर्नृपसत्तम ॥ १५१ ॥ वाचकस्तु यथा नित्यं सुखमास्ते नराधिप ॥ न पीड्यते यथा द्वंद्वैस्तथा कार्यं वरानन ॥ १५२ ॥ हेमंते लोमशा देयाश्छत्रं प्रावृषि सत्तम ॥ उपानहौ कालयोग्ये काले चैवानुलोमशः ॥१५३॥ इत्थं द्वंद्वविनिर्मुक्तः स येषां वाचको नृप ॥ ते धन्याः श्रावका लोके ते गताः परमं पदम् ॥ १५४ ॥ आत्मना तु कथं वीर सुखमिच्छेद्विचक्षणः ॥ विषमस्थे गुरौ राजन्यतश्च स गुरुः स्मृतः ॥ १५५ ॥ वाचकश्रावकाणां च तस्माद्द्वंद्वं विघातयेत् ॥ यत्नः कार्यः श्रावकैश्च वाचकस्य जनाधिप ॥ १५६ ॥ इत्थं पूज्यः सदा व्यासः श्रेयोऽर्थं प्रथमं नृप ॥ भर्ता पूज्यो यथा स्त्रीणां सर्वासां वै महीपते ॥ १५७ ॥ श्रावकाणां तथा राजन्वाचकः पूज्य उच्यते ॥ उपाध्यायस्तु शिष्याणां यथा भागवतो हरिः ॥ १५८ ॥ सौराणां च यथा भानुः शैवानां शंकरो यथा ॥ वाचकस्तु तथा पूज्यः श्रावकाणां नराधिप ॥ १५९ ॥ दक्षिणां ददता नित्यं श्रोतव्यं भूतिमिच्छता ॥ पूर्वोक्तमापकं तस्मै वाचकाय जनाधिप ॥ १६० ॥ यदा दातुं न शक्नोति मापकं कांचनस्य तु ॥ रजतस्य तदा देयं मापकं श्रेयसे नृप ॥ १६१ ॥ तदभावे हिरण्यं च वित्तशाठ्यविवर्जितः ॥ मृत्तिकापि हि दातव्या प्राप्नोति सत्फलं शुभम् ॥ १६२ ॥ इत्येषा दक्षिणा नित्या मासिमासि भवेन्नृप ॥ नैमित्तिका भवेद्राजन्ग्रहणादिषु पर्वसु ॥ १६३ ॥ अमले वाससी राजन्गंधमाल्यविभूषणे ॥ समाप्ते पर्वणि विभो दातव्ये भूतिमिच्छता ॥ ॥ १६४ ॥ ज्ञात्वा सर्वसमाप्तिं तु पूजयेच्छ्रावको ध्रुवम् ॥ आत्मानमपि विक्रीय य इच्छेत्सफलं श्रुतम् ॥ १६५ ॥ नैमित्तिकां च नित्यां च दक्षिणामप्रदाय च ॥ शृणोति च सदा यस्तु तस्य तन्निष्फलं श्रुतम् ॥ १६६ ॥ यथा च दक्षिणाहीनाद्यज्ञान्न फलमश्नुते ॥ तथा श्रुतं च राजेंद्र दक्षिणारहितं स्मृतम् ॥ १६७ ॥ चतुर्गुणा भवेद्राजन्या नित्या दक्षिणा विभो ॥ समाप्ते पर्वणि विभो इत्याह भगवाञ्छिवः ॥ १६८ ॥ इत्येष कथितो राजन्पुराणश्रवणे विधिः ॥ यतश्च विधिहीनं तु न कर्मफलमुच्यते ॥ १६९ ॥ स्नानं दानं जपो होमः पितृदेवाभिपूजनम् ॥ विधिपूर्वं स्मृतं ज्ञेयं यथेह कुरुनंदन ॥ १७० ॥ फलदं नृपशार्दूल पुराणश्रवणं तथा ॥ यथार्थं कथितं तुभ्यं विधिना श्रवणं मया ॥१७१॥ यथोक्तं तु यथा जीवं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथोक्तं ब्रह्मवादिना ॥ स ब्राह्मणो महाराज सर्वलोकेषु पूजितः ॥ १७२ ॥ यथाश्रुतं महाबाहो तथेदं कथितं तव ॥ भास्करस्य तु माहात्म्यं माहात्म्यं वाचकस्य तु ॥ १७३ ॥ तथा च सप्तमीकल्पः सर्वपापभयापहः ॥ अनेन विधिना यस्तु पूजयेत्सततं नरः ॥ १७४ ॥ भगलोकं समासाद्य त्रिषु लोकेषु गीयते ॥ ततोऽर्कलोकमासाद्य गच्छेच्चित्रशिखंडिनः ॥ १७५ ॥ तस्मादपि महाबाहो गच्छेल्लोकं दिवाकरम् ॥ अर्कलोके ततो यातस्ततो गोलोकमश्नुते ॥ १७६ ॥ ऋतस्य च ततो गच्छेत्कंजजस्य ततः परम् ॥ दशानां राजसूयानामग्निष्टोमशतस्य च ॥ १७७ ॥ श्रवणात्फलमाप्नोति पितामहवचो यथा ॥ १७८ ॥ इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सौरधर्मे आदित्यमाहात्म्यवाचकमाहात्म्यपुराणश्रवण विधिवर्णनं नाम षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥ ॥ पूर्वार्धः समाप्तोऽयम् ॥ ॥ छ ॥ ॥ श्रीनारायणार्पणमस्तु ॥ ॥

इति श्रीभविष्ये महापुराणे प्रथमं ब्राह्मपर्व समाप्तम् ॥ १ ॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीगणेशाय नमः ॥ ॐ नमः कमलदलनयनाभिरामाय ॥ श्रीरामचंद्राय ॥ स्वच्छं चंद्रावदातं कविकरमकरक्षोभसंजातफेनं ब्रह्मोद्भूतिप्रसू
क्तैर्व्रतनियमपरैः सेवितं विप्रमुख्यैः ॥ ॐकारालंकृतेन त्रिभुवनगुरुणा ब्रह्मणा दृष्टपूतं संभोगाभोगगम्यं जनकलुषहरं पौष्करं वः पुनातु ॥ १ ॥
जयति भुवनदीपो भास्करो लोककर्ता जयति च शितिदेहः शार्ङ्गधन्वा मुरारिः ॥ जयति च शशिमौली रुद्रनामाभिधेयो जयति सकलमौलिर्भानु
मांश्चित्रभानुः ॥ २ ॥ नमस्कृत्याप्रमेयाय देवाय ब्रह्मरूपिणे ॥ पुराणं संप्रवक्ष्यामि यदुक्तं ब्रह्मयोगिना ॥ ३ ॥ पुराणसंहितां पुण्यां पप्रच्छ रोम
हर्षणिम् ॥ वक्तुमर्हसि चास्माकं पुराणार्थविशारद ॥४॥ मुनीनां वचनं श्रुत्वा सूतः पौराणिकोत्तमः ॥ प्रणम्य मनसा प्राह गुरुं सत्यवतीसुतम् ॥५॥
॥ सूत उवाच ॥ ॥ नमस्कृत्य जगद्योनिं ब्रह्मरूपधरं हरिम् ॥ वक्ष्ये पौराणिकीं दिव्यां कथां पापप्रणाशिनीम् ॥ ६ ॥ यच्छ्रुत्वा पापक
र्माणि स गच्छेत्परमां गतिम् ॥ पुण्यं पवित्रमायुष्यमिदानीं शृणुत द्विजाः ॥ ७ ॥ भविष्यपुराणमखिलं यज्जगाद गदाधरः ॥ मध्यपर्व ह्यथो
वक्ष्ये प्रतिष्ठादिविनिर्णयम् ॥ ८ ॥ धर्मप्रशंसनं चात्र ब्राह्मणादिप्रशंसनम् ॥ आपद्धर्मस्य कथनं विद्यामाहात्म्यवर्धनम् ॥ ९ ॥ प्रतिमाकरणं
चैव स्थापनाचित्रलक्षणम् ॥ कालव्यवस्थासर्गादिप्रतिसर्गादिलक्षणम् ॥ १० ॥ पुराणलक्षणं चैव भूगोलस्य च निर्णयम् ॥ निरूपणं तिथी
नां च श्राद्धसंकल्पमन्तरम् ॥ ११ ॥ मुमूर्षोरपि यत्कर्म दानमाहात्म्यमेव च ॥ भूतं भव्यं भविष्यं च युगधर्मानुशासनम् ॥ १२ ॥ उच्चावचा
वधानं च प्रायश्चित्तादिकं च यत् ॥ षष्ट्याधिकाष्टसाहस्रनवश्लोकशतोद्भवम् ॥ १३ ॥ पंचतंत्रसमायुक्तं प्रतितंत्रे च विंशतिः ॥ पंचोत्तरं तथा
ध्यायाः पुराणेऽस्मिन्द्विजोत्तमाः ॥ १४ ॥ त्रयाणामाश्रमाणां च गृहस्थो योनिरुच्यते ॥ अन्येऽपि सूपजीवन्ति तस्माच्छ्रेष्ठो गृहाश्रमी ॥ १५ ॥
एकाश्रमं गृहस्थस्य त्रयाणां स्मृतिदर्शनम् ॥ तस्माद्गार्हस्थ्यमेवैकं विज्ञेयं धर्मशासनम् ॥ १६ ॥ परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ॥
सर्वलोकविरुद्धं च धर्ममप्याचरेन्न तु ॥१७॥ तडागस्य च सान्निध्ये तडागं परिवर्जयेत् ॥ प्रपास्थाने प्रपा वर्ज्या मठस्थाने मठं त्यजेत् ॥१८॥
धर्मात्संजायते ह्यर्थो धर्मात्कामोऽभिजायते ॥ धर्माद्देवापवर्गोऽयं तस्माद्धर्मं समाश्रयेत् ॥ १९ ॥ धर्मश्चार्थश्च कामश्च त्रिवर्गस्त्रिगुणो मतः ॥
सत्त्वं रजस्तमश्चेति तस्माद्धर्मं समाश्रयेत् ॥ २० ॥ ऊर्ध्वं गच्छंति सत्त्वस्था मध्ये तिष्ठंति राजसाः ॥ जघन्यगुणवृत्तिस्था अधो गच्छंति तामसाः
॥ २१ ॥ यस्मिन्धर्मः समायुक्तो ह्यर्थकामौ व्यवस्थितौ ॥ इह लोके सुखी भूत्वा प्रेत्यानंत्याय कल्पते ॥ २२ ॥ तस्मादर्थं च कामं च युक्त्वा

१ मकाय—इ० पा० । २ ओंकारेति शेषः । ३ मुनिदर्शनम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मं समाश्रयेत् ॥ धर्मात्संजायते कामो धर्मादर्थोऽभिजायते ॥२३॥ एवं धर्मस्य मध्येऽयं चतुर्वर्गः प्रदर्शितः ॥ एवं च धर्मकामार्थं मोक्षस्यापि च मानवः ॥ माहात्म्यं वानुतिष्ठेच्च स चानंत्याय कल्पते ॥ २४ ॥ तस्मादर्थं च कामं च मुक्त्वा धर्मं समाचरेत् ॥ धर्मात्संजायते सर्वमित्याहुर्ब्रह्मवादिनः ॥ २५ ॥ धर्मेण धार्यते सर्वं जगत्स्थावरजंगमम् ॥ अनादिनिधना शक्तिर्नैषा ब्राह्मी द्विजोत्तम ॥ २६ ॥ कर्मणा प्राप्यते धर्मोज्ञानेन च न संशयः ॥ तस्माज्ज्ञानेन सहितं कर्मयोगं समाचरेत् ॥ २७ ॥ प्रवृत्तिश्च निवृत्तिश्च द्विविधं कर्म वैदिकम् ॥ ज्ञानपूर्वा निवृत्तिः स्यात्प्रवृत्तिर्वर्ततेऽन्यथा ॥ २८ ॥ निवृत्तिं सेवमानस्तु याति तत्परमं पदम् ॥ तस्मान्निवृत्तं संसेव्यमन्यथा संसरेत्पुनः ॥ २९ ॥ शमो दमो दया दानमलोभस्त्याग एव च ॥ आर्जवं चानसूया च तीर्थानुसरणं तथा ॥ ३० ॥ सत्यं संतोष आस्तिक्यं श्रद्धा चेन्द्रियनिग्रहः ॥ देवताभ्यर्चनं पूजा ब्राह्मणानां विशेषतः ॥३१॥ अहिंसा सत्यवादित्वमपैशुन्यं सुकल्पता ॥ शौचाचारश्चानुकंपा सर्ववर्णेऽब्रवीन्मुनिः॥३२॥श्रद्धापूर्वाः स्मृता धर्माः श्रद्धामध्ये तु संस्थिताः ॥ श्रद्धानिष्ठाः प्रतिष्ठाश्च धर्माः श्रद्धैव कीर्तिताः ॥ ३३ ॥ प्राजापत्यं ब्राह्मणानां श्रुतं स्थानं क्रियावताम् ॥ स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनाम् ॥३४॥ वैश्यानाममृतं स्थानं स्वधर्ममनुवर्तताम् ॥ गांधर्वं शूद्र[1]जीवानां परिचारेण वर्तताम् ॥ ३५ ॥ अष्टाशीतिसहस्राणां मुनीनामूर्ध्वरेतसाम् ॥ स्मृतं स्थानं तु यत्स्थानं तदेव गुरुवासिनाम् ॥ ३६ ॥ सप्तर्षीणां तु यत्स्थानं श्रुतं तद्वै वनौकसाम् ॥ प्राजापत्यं गृहस्थानां स्थानमुक्तं स्वयंभुवा ॥ ३७ ॥ यतीनां यतचित्तानां तदेव वनवासिनाम् ॥ हिरण्यगर्भं यत्स्थानं तस्मान्नावर्तते पुनः ॥ ३८ ॥ योगिनाममृतं स्थानं व्योमाख्यं परमाकरम् ॥ आनंदमैश्वरं नाम सा काष्ठा परमा गतिः ॥ ३९ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे प्रथमोऽध्यायः ॥ १ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ इदानीं विस्तरं चैव विभागं रूपमैश्वरम् ॥ वक्ष्ये कल्पानुसारेण मन्वंतरशतानुगम् ॥ १ ॥ आसीत्तमोमयं सर्वमप्रज्ञातमलक्षणम् ॥ तत्र चैको महानासीद्रुद्रः परमकारणम् ॥ २ ॥ आत्मना स्वयमात्मानं सञ्चित्य भगवान्विभुः ॥ मनः संसृजते पूर्वमहंकारं च पृष्ठतः ॥ ३ ॥ अहंकारात्प्रजानाति महाभूतानि पञ्च च ॥ अष्टौ प्रकृतयः प्रोक्ता विकाराश्चैव षोडश ॥ ४ ॥ शब्दः स्पर्शश्च रूपं च रसो गंधस्तथैव च ॥ प्राणोऽपानः समानश्चोदानव्यानौ तथैव च ॥ ५ ॥ सत्त्वं रजस्तमश्चैव गुणाः प्रोक्तास्तु ते त्रयः ॥ तस्माद्भागवतो ब्रह्मा तस्माद्विष्णुरजायत ॥६॥ ब्रह्मविष्णुमोहनार्थं ततः शंभुस्तु तेजसा ॥ अशरीरो वासुदेवो ह्यनुत्पत्तिरयोनिजः ॥७॥



[1] शुभ्रजीवानाम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यामोहयित्वा तत्सर्वं तेजसाऽमोहयज्जगत् ॥ तस्मात्परतरं नास्ति तस्मात्परतरं न हि ॥ ८ ॥ ब्रह्मा विष्णुश्च द्वावेतावुद्भूतौ भगवत्सुतौ ॥ कल्पेकल्पे तु तत्सर्वं सृजतेऽसौ जनं जगत् ॥ ९ ॥ उपसंहरते चैव नानाभूतानि सर्वशः ॥ द्वासप्ततियुगान्येव मन्वन्तर इति स्मृतः ॥ १० ॥ चतुर्दश तु तान्येवं कल्प इत्यभिधीयते ॥ दिनैकं ब्रह्मणः प्रोक्तं निशि कल्पस्तथोच्यते ॥ ११ ॥ एवं मासश्च वर्षश्च तथा चाष्टशतं द्विजाः ॥ एवं बुद्धीन्द्रियस्यास्य विष्णोश्च निमिषः स्मृतः ॥ १२ ॥ ब्रह्मादिस्तंबपर्यंतं निमेषश्च ध्रुवस्य वै ॥ निमेषजीवनं सर्वं सर्वलोकचराचरम् ॥ १३ ॥ भूर्लोकोऽथ भुवर्लोकः स्वर्लोकश्च प्रकीर्तितः ॥ जनस्तपश्च सत्यं च ब्रह्मलोकश्च सप्तमः ॥ १४ ॥ पातालं वितलं तद्धि अतलं तलमेव च ॥ पञ्चमं विद्धि सुतलं सप्तमं च रसातलम् ॥ १५ ॥ एतेषु सप्त विख्याता अधःपातालवासिनः ॥ तेषामादौ च मध्ये च अंते रुद्रः प्रकीर्तितः ॥ १६ ॥ ग्रसते जायते लोकान्क्रीडार्थं तु महेश्वरः ॥ ब्रह्मलोकपरीप्सूनां गतिरूर्ध्वं प्रकीर्तिता ॥ १७ ॥ पृथिवीं चांतरिक्षं च दिशश्च विदिशस्तथा ॥ समुद्राणां गिरीणां च अधस्तिर्यक्प्रसंख्यया ॥ १८ ॥ समुद्राणां च विस्तारं प्रमाणं च ततः शृणु ॥ स्थावराणां च शैलानां देवानां च दिवौकसाम् ॥ १९ ॥ चतुष्पदानां द्विपदां तथा धर्मैकभाषिणाम् ॥ सहस्रगुणमाख्यातं स्थावराणां प्रकीर्तितम् ॥ २० ॥ सहस्रगुणशीलाश्च इत्याह भगवान्मुनिः ॥ ऋषिस्तु प्रथमं कुर्वन्प्रकृतिं नाम नामतः ॥ २१ ॥ तस्या ब्रह्मा प्रकृत्यास्तु उत्पन्नः सह विष्णुना ॥ तस्माद्बुद्ध्या प्रकुरुते सृष्टिं नैमित्तिकीं द्विजाः ॥ २२ ॥ तस्मात्स्वयंभुवो ब्रह्मा ब्राह्मणान्समकल्पयत् ॥ पादहीनान्क्षत्रियांश्च तस्माद्धीनांस्तु वैश्यकान् ॥ २३ ॥ चतुर्थपादहीनांश्च आचारेषु बहिष्कृतान् ॥ पृथिवीं चांतरिक्षं च दिशश्चैवाप्यकल्पयत् ॥ २४ ॥ लोकालोकस्य संस्था च द्वीपानामुदधेस्तथा ॥ सरितां सागराणां च तीर्थान्यायतनानि च ॥ २५ ॥ मेघस्तनितनिर्घोषरोहितेंद्रधनूंषि च ॥ उल्कानिर्घातकेतूंश्च ज्योतींष्यायतनानि च ॥ २६ ॥ उत्पन्नं तस्य देहेषु भूयः कालेन पीडयेत् ॥ २७ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ ॥ सूत उवाच ॥ ॥ ध्रुवादूर्ध्वं महर्लोकः कोटियोजनविस्तरः ॥ कल्पाभिकरणे तत्र संस्थिता द्विजपुङ्गवाः ॥ १ ॥ जनलोको महर्लोकात्तथा कोटिद्वयात्मकः ॥ सनंदनादयस्तत्र संस्थिता ब्रह्मणः सुताः ॥ २ ॥ जनलोकात्तपोलोकः कोटित्रयसमन्वितः ॥ विराजंते तु देवा वै स्थिता दाहविवर्जिताः ॥ ३ ॥ प्राजापत्याच्च भूर्लोकः कोटिषट्केन संयुतः ॥ सनत्कुमारकस्तत्र ब्रह्मलोकस्तु स स्मृतः ॥ ४ ॥ तत्र लोके गुरुर्ब्रह्मा विश्वात्मा विश्वतोमुखः ॥ आस्ते यद्योगिभिः पीत्वा योगं मृत्योः परं गतम् ॥ ५ ॥ गायंति यतयो गाथा ह्यास्तिका ब्रह्मवादिनः ॥ योगिनस्तापसाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिद्धा जापकाः परमेष्ठिनम् ॥ ६ ॥ द्वारं तु योगिनामेकं गच्छतां परमं पदम् ॥ तत्र गत्वा न शोचंति स विष्णुः स च शंकरः ॥ ७ ॥ सूर्य कोटिप्रतीकाशं पुरं तस्य दुरासदम् ॥ न मे वर्णयितुं शक्यं ज्वालामालासमाकुलम् ॥ ८ ॥ तत्र नारायणस्यापि भवनं ब्रह्मणः पुरे ॥ शेषे तस्य हरिः श्रीमान्मायासहचरः परः ॥ ९ ॥ स विष्णुर्लोककथितः पुनरावृत्तिवर्जितः ॥ प्रयांति च महात्मानो ये प्रपन्ना जनार्दनम् ॥ १० ॥ ऊर्ध्वं ब्रह्मासनात्पूर्वं परं ज्योतिर्मयं शुभम् ॥ वह्निना उपरि क्षिप्तं तत्रास्ते भगवान्भवः ॥११॥ देव्या सह महादेवश्चिन्त्यमानो मनीषिभिः ॥ योगिभिः शतसाहस्रैर्वृतैकत्वैश्च संवृतः ॥ १२ ॥ तत्र ते यांति नियता द्विजा वै ब्रह्मवादिनः ॥ महादेवपरेशानास्तापसा ब्रह्मवादिनः ॥ १३ ॥ निर्ममा निरहंकाराः कामक्रोधविवर्जिताः ॥ द्रक्ष्यंति ब्रह्मणा युक्ता रुद्रलोकः स वै स्मृतः ॥ १४ ॥ एते सप्त महलोंकाः पृथिव्यां परिकीर्तिताः ॥ महीत लादयश्चाधः पातालाः संति वै द्विजाः ॥ १५ ॥ महातलं हैमतलं सर्ववर्णोपशोभितम् ॥ प्रासादैर्विविधैः शुभ्रैर्देवतायतनैर्युतम् ॥ १६ ॥ अनंतेन समायुक्तं मुचुकुन्देन धीमता ॥ नृपेण बलिना चैव पातालं स्वर्गवासिना ॥ १७ ॥ शैलं रसातलं विप्राः शांकरं हि रसातलम् ॥ पीतं सुतल मित्युक्तं वितलं विद्रुमप्रभम् ॥ १८ ॥ सितं हि वितलं प्रोक्तं तलं चैव सितेतरम् ॥ सुवर्णेन मुनिश्रेष्ठास्तथा वासुकिना शुभम् ॥ १९ ॥ रसातल मिति ख्यातं सर्वशोभासमन्वितम् ॥ वैनतेयादिभिश्चैव कालनेमिपुरोगमैः ॥ २० ॥ शंकुकर्णेन संभिन्नं तथा नमुचिपूर्वकम् ॥ तथान्यैर्विवि धैर्नागैस्तलं चैव सुशोभनम् ॥ २१ ॥ तेषामधस्तान्नरका रौरवाद्याश्च कोटयः ॥ पापिनस्तेषु पात्यंते न तेऽवनमितुं क्षमाः ॥ २२ ॥ पाताला नामधश्चांते शेषाख्या वैष्णवी तनुः ॥ कालाग्निरुद्रयोगात्मा नारसिंहोऽपि माधवः ॥ २३ ॥ योऽनंतः पठ्यते देवो नागरूपी जनार्दनः ॥ तदाधार मिदं सर्वं सकलाग्निमुपाश्रितम् ॥ २४ ॥ तमाविश्य महायोगी कालस्तद्वदनानलः ॥ विषज्वालासमोऽनंतो जगत्संहरति स्वयम् ॥२५॥ तामसी शांभवी मूर्तिः कालात्मा परमेश्वरः॥स एव गर्भमाश्रित्य प्रकाशयति नित्यशः ॥२६॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे पाताल वर्णनंनाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ एतद्ब्रह्मांडमाख्यातं चतुर्विधमिदं महत् ॥ अतः परं प्रवक्ष्यामि भूर्लोकस्य विनिर्णयम् ॥ १ ॥ तद्द्वीपप्रधानो जंबूः प्लक्षः शाल्मल एव च ॥ कुशः क्रौंचश्च शाकश्च पुष्करश्चैव सप्तमः ॥ २ ॥ एते सप्त महाद्वीपाः समुद्रैः सप्त भिर्वृताः ॥ द्वीपाद्द्वीपो महानुक्तः सागरादपि सागरः ॥ ३ ॥ क्षीरोदेक्षुरसोदोऽथ क्षारोदश्च घृतोदकः ॥ दध्योदः क्षीरसलिलो जलोदश्चेति



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सागराः ॥ ४ ॥ पंचाशत्कोटिविस्तीर्णा समुद्रवलया स्मृता ॥ द्वीपैश्च सप्तभिर्युक्ता योजनानां समानतः ॥ ५ ॥ जंबूद्वीपः समस्तानां द्वीपानां मध्यतः शुभः ॥ तस्य मध्ये महामेरुर्विश्रुतः कनकप्रभः ॥ ६ ॥ चतुराशीतिसाहस्रयोजनैरस्य चोच्छ्रयः ॥ प्रविष्टः षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विष्कृतः ॥ ७ ॥ मूले षोडशसाहस्रं विस्तारस्तस्य सर्वतः ॥ भूप्रमुख्यश्च शैलोऽसौ कलिकात्वेन संस्थितः ॥ ८ ॥ हिमवान्हिमकूटश्च निषधस्तस्य दक्षिणे ॥ नीलः श्वेतश्च शृंगी च उत्तरे वर्षपर्वताः॥९॥लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथापरे ॥ सहस्रद्वितयं दीर्घास्तावद्विस्तारिणश्च ते ॥ ॥१०॥ भारतं दक्षिणं वर्षं ततः किंपुरुषं स्मृतम् ॥ हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विजाः ॥११॥ चंपकं चोत्तरं वर्षं तथैवाश्वहिरण्मयम् ॥ उत्तराः कुरवश्चैव यथैते भारतास्तथा ॥ १२ ॥ नवसाहस्रमेकैकमेतेषां द्विजसत्तमाः ॥ इलावृतश्च तन्मध्ये तन्ध्ये मेरुरुच्छ्रितः ॥१३॥ मेरोश्चतुर्दिशस्तत्र नवसाहस्रविष्कृतम् ॥ इलावृतं महाभागाश्चत्वारस्तत्र पर्वताः ॥१४॥ विष्कंभा रचिता मेरोर्योजनायुतमुच्छ्रिताः ॥ पूर्वेण मंदरो नाम दक्षिणे गंधमादनः ॥ १५ ॥ विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्थितः ॥ कदंबेष्वेषु नद्यश्च पिप्पलो वट एव च ॥ १६ ॥ जंबूद्वीपस्य सा जंबूर्नामहेतोर्महर्षयः ॥ महागजप्रमाणानि जंबून्यस्य फलानि च ॥ १७ ॥ पतंति भूभृतः पृष्ठे शीर्यमाणानि सर्वशः ॥ रसेन चैव प्रख्याता तस्य जंबूनदी इति ॥१८॥ सरित्तु वर्तते सापि पीयते तत्र वासिभिः॥न खेदो न च दौर्गंध्यं न जरा नेंद्रियक्षयः ॥ उत्पन्नाः स्वच्छमनसो नरास्तत्र भवन्ति वै ॥१९॥ तीरसूत्रं समं प्राप्य वायुना च विशोषितम् ॥ जांबूनदाख्यं भवति सुवर्णं सिद्धभूषणम् ॥ २० ॥ भद्राश्वः पार्श्वतो मेरोः केतुमालश्च पश्चिमे ॥ वर्षे द्वे तु मुनिश्रेष्ठास्तयोर्मध्ये इलावृतम् ॥ २१ ॥ मेरोरुपरि विप्रेंद्रा ब्रह्मणः स्थानमुत्तमम् ॥ तदूर्ध्वे वासवस्थानं तदूर्ध्वे शंकरस्य च ॥ २२ ॥ तदूर्ध्वं वैष्णवो लोको दुर्गालोकस्तदूर्ध्वतः ॥ ज्योतिर्मयं परं स्थानं निराकारं हिरण्मयम् ॥ २३ ॥ भक्तस्थानं तदूर्ध्वं च देवो हि भगवान्रविः॥ ज्योतिश्चक्रस्थितः शुद्धो निश्चलः परमेश्वरः ॥ राशिचक्रे च भ्रमति मेरोरुपरि सत्तमाः ॥ २४ ॥ बिंबपट्केंद्रिनाभौ च रथचक्रं दिवानिशम् ॥ वातरज्जुनिबंधेन ध्रुवाधारे प्रतिष्ठितम् ॥ २५ ॥ दिक्पालाद्या ग्रहास्तत्र दक्षिणादुत्तरायणम् ॥ प्रतिमासं गतः पंथा ह्रासवृद्धिदिनक्षयः ॥ २६ ॥ रविणा लंघितो मासश्चांद्रः ख्यातो मलिम्लुचः ॥ द्वादशे भगवत्सूर्ये प्रत्यहं भक्तसेवके ॥ २७ ॥ कृत्वा त्रिषु त्वहोरात्रं तारामयगतं विभुम् ॥ यामेयामे चोदयश्च देशेदेशे च शर्वरी ॥ २८ ॥ दिवा चरति यः सूर्यो रात्रौ चरति चन्द्रमाः ॥ नक्षत्राणि दिवा रात्रौ सूर्यचक्रे प्रतिष्ठितम्॥२९॥

१ उपोद्घातेन भूमिं वर्णयति ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देशान्नं चावगमनं यत्र तस्मादिवाभवत् ॥ यत्र चंद्रक्षयो भवति यत्र सूर्यः प्रवर्तते ॥ ३० ॥ रात्रिंदिवं विजानीयाज्ज्योतिश्चक्रे प्रतिष्ठितम् ॥ उदया स्तमनं नास्ति नक्षत्राणां विशेषतः ॥ ३१ ॥ यन्नक्षत्रे च यो देशः स तेषामुदयः स्मृतः ॥ तत्रास्तो जीवशुक्राणां सूर्यादीनां च सर्वशः ॥ ३२ ॥ तदा काले नियोक्तव्या भार्गवास्तादिकी क्रिया ॥ सूर्यः सोमो बुधश्चंद्रो भार्गवश्चैव शीघ्रकः ॥ ३३ ॥ दक्षिणायनमास्थाय यदा चरति रश्मि मान् ॥ तदा सर्वग्रहाणां ससूर्योधस्तात्प्रसर्पति ॥ ३४ ॥ विस्तीर्णमंडलं कृत्वा तस्योर्ध्वे चरते शशी ॥ नक्षत्रमंडलं कृत्स्नं सोमादूर्ध्वं प्रसर्पति ॥ ॥ ३५ ॥ नक्षत्रेभ्यो बुधश्चोर्ध्वं बुधादूर्ध्वं तु भार्गवः ॥ चन्द्रस्तु भार्गवादूर्ध्वं चंद्रादूर्ध्वं शनैश्चरः ॥ ३६ ॥ तस्माच्छनैश्चरादूर्ध्वं ततः सप्तर्षिमं डलम् ॥ ऋषीणां चैव सप्तानां ध्रुवश्चोर्ध्वं व्यवस्थितः ॥ ३७ ॥ कालचक्रमये चक्रे सूर्यो भवति सर्वदा ॥ राश्यर्द्धेषु गतिर्यत्र तिथीनां च तिथौ स्मृता ॥ ३८ ॥ स्तंभते चरते शीघ्रं ह्रासे चापि दिनक्षयः ॥ पादास्तं चापि शुक्रस्य महास्तं तत्र दृश्यते ॥ ३९ ॥ पादास्ते पक्षमात्रं स्यान्महास्ते याममात्रकम् ॥ चक्रे पक्षार्धमासः स्यादतिचारोऽष्टवासरान् ॥ ४० ॥ न गण्यते देशभेदे नक्षत्रेण च गण्यते ॥ बाल वृद्धस्तु शुक्रस्य देशस्थे वा गणस्य च ॥ ४१ ॥ बाल्यवार्द्धक्ये क्षत्रियस्य न गण्येते सदा बुधैः ॥ पादादूर्ध्वं महास्तस्य वैश्यस्य द्विजस त्तमाः ॥ ४२ ॥ शेषार्धं भार्गवास्तस्य शूद्राणामथ गर्हितम् ॥ अभिचारे च चक्रे च न शूद्रस्य विधीयते ॥ ४३ ॥ वर्जयेद्वासरान्सप्त इति चाथर्वणी श्रुतिः ॥ ४४ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे ज्योतिश्चक्रे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ ॥ ॥ सूत उवाच ॥ ॥ त्रयाणामेव वर्णानां जन्मतो ब्राह्मणः प्रभुः ॥ संसृष्टा ब्राह्मणाः पूर्वं तपस्तप्त्वा द्विजोत्तमाः ॥ १ ॥ हव्यानामिह कव्यानां सर्वस्यापि च गुप्तये ॥ अश्नंति च मुखेनास्य हव्यानि त्रिदिवौकसः ॥ २ ॥ कव्यानि चैव पितरः किं भूतमधिकं ततः ॥ जन्मना चोत्तमोऽयं च सर्वार्चा ब्राह्मणोऽर्हति ॥ ३ ॥ स्वकीयं ब्राह्मणो भुंक्ते विदधाति द्विजोत्तमाः ॥ त्रयाणामिह वर्णानां भावाभावाय वै द्विजः ॥ ४ ॥ भवेद्विप्रो न संदेहस्तुष्टो भावाय वै भवेत् ॥ अभावाय भवेत्क्रुद्धस्तस्मात्पूज्यः सदा हि सः ॥ ५ ॥ गर्भाधानादयश्चेह संस्कारा यस्य सत्तमाः ॥ चत्वारिंशत्तथा चाष्टौ निर्वृत्ताः शास्त्रतो द्विजाः ॥ स याति ब्रह्मणः स्थानं ब्राह्मणत्वेन संयुतः ॥ ६ ॥ संस्कारपूतः प्रथमो वेदपूतो द्विती यकः ॥ विद्यापूतस्तृतीयः स्यात्तीर्थपूतस्त्वनंतरम् ॥ ७ ॥ क्षेत्रपूतं प्रविज्ञाय विपूतं पूजयेद्द्विजाः ॥ स्वर्गापवर्गफलदमन्यथा श्रमतामियात् ॥ ॥ ८ ॥ पूतानां परमः पूतो गुरूणां परमो गुरुः ॥ सर्वसत्त्वान्वितो विप्रो निर्मितो ब्रह्मणा पुरा ॥ ९ ॥ पूजयित्वा द्विजान्देवाः स्वर्गं भुञ्जंति



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्राक्षयम् ॥ मनुष्याश्चापि देवत्वं स्वस्वं राज्यं गतेन सः ॥ १० ॥ यस्य विप्राः प्रसीदंति तस्य विष्णुः प्रसीदति ॥ तस्माद्ब्राह्मणपूजायां विष्णु स्तुष्यति तत्क्षणात् ॥ ११ ॥ यस्माद्विष्णुमुखाद्विप्रः समुद्भूतः पुरा द्विजाः ॥ वेदास्तत्रैव संजाताः सृष्टिसंहारहेतवः ॥ १२ ॥ तस्माद्विप्रमुखे वेदा श्चार्पिताः पुरुषेण हि ॥ पूजार्थं ब्रह्मलोकानां सर्वज्ञानार्थतो ध्रुवम् ॥ १३ ॥ पितृयज्ञविवाहेषु वह्निकार्येषु शांतिषु ॥ प्रशस्ता ब्राह्मणा नित्यं सर्वस्वस्त्ययनेषु च ॥ १४ ॥ देवा भुञ्जंति हव्यानि बलिं प्रेतादयोऽसुराः ॥ पितरो हव्यकव्यानि विप्रस्यैव मुखाद् ध्रुवम् ॥ १५ ॥ देवेभ्यश्च पितृभ्यश्च यो दद्याद्यज्ञकर्मसु ॥ दानं होमं बलिं चैव विना विप्रेण निष्फलम् ॥ १६ ॥ विना[1] विप्रं च यो धर्मः प्रयासफलमात्रकः ॥ भुञ्जते चासुरास्तत्र प्रेता भूताश्च राक्षसाः ॥ १७ ॥ तस्माद्ब्राह्मणमाहूय तस्य पूजां च कारयेत् ॥ काले देशे च पात्रे च लक्षकोटिगुणं भवेत् ॥ १८ ॥ श्रद्धया च द्विजं दृष्ट्वा प्रकुर्यादभिवादनम् ॥ दीर्घायुस्तस्य वाक्येन चिरंजीवी भवेन्नरः ॥ १९ ॥ अनभिवादिनां विप्रे द्वेषादश्रद्धयापि च ॥ आयुः क्षीणं भवेत्पुंसां भूमिनाशश्च दुर्गतिः ॥ २० ॥ आयुर्वृद्धिर्यशोवृद्धिर्वृद्धिर्विद्याधनस्य च ॥ पूजयित्वा द्विजश्रेष्ठान्भवेन्नास्त्यत्र संशयः ॥ ॥ २१ ॥ न विप्रपादोदककर्दमानि न वेदशास्त्रप्रतिगर्जितानि ॥ स्वाहास्वधास्वस्तिविवर्जितानि श्मशानतुल्यानि गृहाणि तानि ॥ २२ ॥ षड्विंशतिदोषमाहुर्नरा नरकभीरवः ॥ विमुच्यैव वसेत्तीर्थे ग्रामे वा पत्तने वने ॥ २३ ॥ ते स्वर्गे पितृलोके च ब्रह्मलोकेष्ववस्थिताः ॥ २४ ॥ अन्यथा न वसेद्वासस्तस्मात्स्तेयी न पालयेत् ॥ अधमो विषमश्चैव पशुश्च पिशुनस्तथा ॥ २५ ॥ पापिष्ठो नष्टकष्टौ च रुष्टो दुष्टश्च पुष्टकः ॥ हृष्टः कुण्ठश्च अन्धश्च काणश्चैव तथापरः ॥ २६ ॥ चण्डः खण्डश्च वक्ता च दत्तस्यापहरस्तथा ॥ नीचः खलश्च वाचालः कदर्यश्चपल स्तथा ॥ २७ ॥ मलीमसश्च ते दोषाः षड्विंशतिरमी मताः ॥ एतेषां चापि विप्रेन्द्राः पञ्चाशीतिर्निगद्यते ॥ २८ ॥ शृणुध्वं द्विजशार्दूलाः शास्त्रे स्मिन्ब्रुवतः क्रमात् ॥ अधमोऽत्र त्रिधा विद्याद्विषमः स्याद्द्विधोचितः ॥२९॥ पशुश्चतुर्विधश्चैव कृपणोपि हि नै द्विधा ॥ द्विधाथापि च पापिष्ठो नष्टः सप्तविधः स्मृतः ॥ ३० ॥ कष्टः स्यात्पञ्चधा ज्ञेयो रुष्टोपि स्याद्द्विधा द्विजाः ॥ दुष्टः स्यात्षड्विधो ज्ञेयः[2] पुष्टश्चैव भवेद्द्विधा ॥ ३१ ॥ हृष्टश्चाष्टविधः प्रोक्तः कुण्ठश्चैव त्रिधोदितः ॥ अन्धः काणश्च तौ द्वौ द्वौ स्याद्वे च सगुणोऽगुणः ॥ ३२ ॥ द्वौ चण्डौ चपलश्चैकावण्डचण्डौ द्विगुर्भवेत ॥ दण्डपण्डौ तथा ज्ञेयौ खलनीचौ चतुर्द्वयम ॥ ३३ ॥ वाचालश्च कदर्यश्च क्रमात्त्रिभिरुदाहृतः ॥ कदर्यश्चपलश्चैव तथा ज्ञेयो मली

१ कुत्र:-२० पा० ।

मसः ॥ ३४ ॥ द्वावेकौ चतुरश्चैव स्तेयी चैकविधो भवेत् ॥ पृथग्लक्षणमेतेषां शृणुध्वं द्विजसत्तमाः ॥ ३५ ॥ सम्यग्यस्य परिज्ञानं नरो देवत्वमाप्नुयात् ॥ उपानच्छत्रधारी च गुरुदेवाग्रतश्चरन् ॥ ३६ ॥ उच्चासनं गुरोरग्रे तीर्थयात्रां करोति यः ॥ यानमारुह्य विप्रेन्द्राः सोप्ये कत्राधमो मतः ॥ ३७ ॥ निमज्ज्य तीर्थे विधिवद्ग्राम्यधर्मेण वर्तयन् ॥ द्वितीयश्चाधमः प्रोक्तो निंदितः परिकीर्तितः ॥ ३८ ॥ वाक्चैव मधुरा श्लक्ष्णा हृदि हालाहलं विषम् ॥ वदत्यन्यत्करोत्यन्यद्द्वावेतौ विषमौ स्मृतौ ॥ ३९ ॥ मोक्षचिन्तामतिक्रम्य योऽन्यचिन्तापरिश्रमः ॥ हरिसेवा विहीनो यः स पशुर्योनितः पशुः ॥४०॥ प्रयागे विद्यमानेऽपि योऽन्यत्र स्नानमाचरेत् ॥ दृष्टं देवं परित्यज्य अदृष्टं भजते तु यः ॥४१॥ आयुष स्तु क्षयार्थाय शास्त्रेयनृपिसंमतः ॥ योगाभ्यासं ततो हित्वा तृतीयश्चाधमः पशुः ॥ ४२ ॥ बहूनि पुस्तकानीह शास्त्राणि विविधानि च ॥ तस्य सारं न जानाति स एव जंबुकः पशुः॥ ४३ ॥ बलेन च्छलछद्मेन उपायेन प्रबंधनम् ॥ सोऽपि स्यात्पिशुनः ख्यातः प्रणयाद्वा द्वितीयकः॥ ॥ ४४ ॥ मधुरान्नं प्रतिष्ठाप्य दैवे पित्र्ये च कर्मणि ॥ म्लानं चापि च तिक्तान्नं यः प्रयच्छति दुर्मतिः ॥ ४५ ॥ कृपणः स तु विज्ञेयो न स्वर्गी न च मोक्षभाक् ॥ कुदाता च मुदा हीनः सक्रोधस्तु यजेत यः ॥ ४६ ॥ स एव कृपणः ख्यातः सर्वधर्मबहिष्कृतः ॥ अदोषेण शुभत्यागी शुभ कार्योपविक्रयी ॥ ४७ ॥ पितृमातृगुरुत्यागी शौचाचारविवर्जितः ॥ पित्रोरग्रे समश्नाति स पापिष्ठतमः स्मृतः ॥ ४८ ॥ जीवत्पितृपरित्यक्तं सुतं सेवन्न वा क्वचित् ॥ द्वितीयस्तु स पापिष्ठो होमलोपी तृतीयकः ॥ ४९ ॥ साध्वाचारं च प्रच्छाद्य सेवनं चापि दर्शयेत् ॥ स नष्ट इति विज्ञेयः क्रयक्रीतं च मैथुनम् ॥ ५० ॥ जीवेद्देवलवृत्तिर्यः भार्याविपणजीवकः ॥ कन्याशुल्केन जीवेद्वा स्त्रीधनेन च वा क्वचित् ॥ ५१ ॥ षडेव नष्टाः शास्त्रे च न स्वर्गमोक्षभागिनः ॥ सदा क्रुद्धं मनो यस्य हीनं दृष्ट्वा प्रकोपवान् ॥ ५२ ॥ भ्रुकुटीकुटिलः क्रुद्धो रुष्टः पंचविधोदितः ॥ अकार्ये क्षमते नित्यं धर्मार्थे न व्यवस्थितः ॥ ५३ ॥ निद्रालुर्व्यसनासक्तो मद्यपः स्त्रीनिषेवकः ॥ दुष्टैः सह सदालापः स दुष्टः सप्तधा स्मृतः ॥ ५४ ॥ एकाकी मिष्टमश्नाति वंचकः साधुनिंदकः ॥ यथा सूकरः पुष्टः स्यात्तथा पुष्टः प्रकीर्तितः ॥ ५५ ॥ निगमागमतंत्राणि नाध्यापयति यो द्विजः॥ न शृणोति च पापात्मा स दुष्ट इति चोच्यते ॥ ५६ ॥[1] श्रुतिः स्मृतिश्च विप्राणां नयने द्वे विनिर्मिते ॥ एकेन विकलः काणो द्वाभ्यामंधः प्रकीर्तितः ॥ ५७ ॥ विवादः सोदरैः सार्द्धं पित्रोरप्रियकृद्वदेत् ॥ द्विजाधमः स विज्ञेयः स चंडः शास्त्रनिंदितः ॥५८॥ पिशुनो राजगामी च शूद्रसेवक

१ अदन्तत्वमार्षम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्व च ॥ शूद्रांगनागमो विप्रः स चंडश्च द्विजाधमः ॥५९॥ पक्वान्नं शूद्रगेहे च यो भुंक्ते सकृदेव वा ॥ पंचरात्रं शूद्रगेहे निवासी चंड उच्यते ॥ ॥ ६० ॥ अष्टकुष्ठान्वितः कुष्ठी त्रिकुष्ठी शास्त्रनिंदितः ॥ एतैः सह सदालापः स भवेत्तत्समोऽधमः ॥ ६१ ॥ कीटवद्भ्रमणं यस्य कुव्यापारी कुपंडितः ॥ अज्ञानाच्च वदेद्धर्ममग्रवृत्तिः प्रधावति ॥ ६२ ॥ अविमुक्तं परित्यज्य योऽन्यदेशे वसेच्चिरम् ॥ स द्विधा शूकरपशुर्निंदितः सिद्धसंमतः॥ ॥ ६३ ॥ कपोलेन हि संयुक्तो भ्रुकुटीकुटिलाननः ॥ नृपवद्दंडयेद्यस्तु स दंडः समुदाहृतः ॥ ६४ ॥ ब्रह्मस्वहरणं कृत्वा नृपदेवस्वमेव च ॥ धनेन तेन इतरं देवं वा ब्राह्मणानपि ॥ ६५ ॥ संतर्पयति योऽश्नाति यः प्रयच्छति वा क्वचित् ॥ स खरश्च पशुश्रेष्ठः सर्ववेदेषु निंदितः ॥ ६६ ॥ अक्षराभ्यासनिरतः पठत्येव न बुध्यते ॥ पदशास्त्रपरित्यक्तः स पशुः स्यान्न संशयः ॥ ६७ ॥ वदत्यन्यत्करोत्यन्यद्गुरुदेवाग्रतो यतः ॥ स नीच इति विज्ञेयो ह्यनाचारस्तथापरः ॥ ६८ ॥ षड्गुणालंकृतेः साधोर्दोषान्मृगयते खलः ॥ वने पुष्पफलाकीर्णे शलभः कंटकानिव ॥ ६९ ॥ दैवेन च विहीनो यः कुसंभाषां वदेत्तु यः ॥ स वाचाल इति ख्यातो यो ह्यपत्रपतायुतः ॥ ७० ॥ चांडालैः सह आलापः पक्षिणां पोषणे रतः ॥ मार्जारैश्चापि संभुंक्ते यत्कृत्यं ह्यर्कटोदितम् ॥ ७१ ॥ तृणच्छेदी लोष्टमर्दी वृथा मांसाशनश्च यः ॥ चपलः स तु विज्ञेयः परभार्यारतस्तथा ॥ ७२ ॥ स्नेहोद्वर्तनहीनो यो गंधचंदनवर्जितः ॥ नित्यक्रिया अकुर्वाणो नित्यं स च मलीमसः ॥ ७३ ॥ अन्यायेन गृहं विंदेदन्यायेन गृहान्धनम् ॥ शास्त्रादन्यद्गृहं मंत्रं स स्तेयी ब्रह्मघातकः ॥ ७४ ॥ देवपुस्तकरत्नानि मणिमुक्ताश्वमेव च ॥ गोभूमिस्वर्णहरणः स स्तेयीति निगद्यते ॥ ७५ ॥ देवोऽपि भावयेत्पञ्चधान्मानुषोऽपि न संशयः ॥ अन्योन्यभावना कार्या स स्तेयी यो न भावयेत् ॥ ७६ ॥ गुरोः प्रसादाज्जयति पित्रोश्चापि प्रसादतः ॥ करोति र्धि यथार्हं च स च स्वर्गे महीयते ॥७७॥ न पोषयति दुष्टात्मा स स्तेयी चापरः स्मृतः ॥ ७८ ॥ उपकारिजनं प्राप्य न करोति परिष्क्रियाम् ॥ स ततनरके शेते शोणिते च पतत्यधः ॥ ७९ ॥ सर्वेषां च सवर्णानां धर्मतो ब्राह्मणः प्रभुः ॥ पृथिवीपालको राजा धर्मचक्षुरुदाहृतः ॥ ८० ॥ प्रजापतेर्मुखोद्भूतो होरातंत्रे यथोदितम् ॥ तद्विदो गणनाभिज्ञा अन्यविप्राः प्रचक्षते ॥ ८१ ॥ गंगाहीनो हतो देशो विप्रहीना यथा क्रिया ॥ होराज्ञतिविहीनो यो देशोऽसौ विप्रवप्लवः ॥ ८२ ॥ अप्रदीपा यथा रात्रिरनादित्यं यथा नभः ॥ तथाऽसांवत्सरो राजा भ्रमत्यंध इवाध्वनि ॥ ८३ ॥ स्थापयेद्धर्मतो विप्रं भावयेत्कर्मवृद्धये ॥ श्मश्रुयुक्तो द्विजः पूज्यः सूर्यो विप्रस्तु श्मश्रुलः ॥ ८४ ॥ प्रत्यक्षप्रदर्शनात्पुण्यं

१ मार्जारैर्भक्षं । २ हरेदित्यपः ।

त्रिदिनं कल्पपापहम् ॥ दर्शने व्रात्यविप्रस्य सूर्यं दृष्ट्वा विशुध्यति ॥ ८५ ॥ न व्रात्यत्वं सूर्यविप्रे पूजयेद्यज्ञसिद्धये ॥ ज्योतिर्वेदस्याधिकारः सूर्यविप्रस्य द्विजाः ॥ ८६ ॥ जातिभेदाश्च चत्वारो भोजकः कथकस्तथा ॥ शिवविप्रः सूर्यविप्रश्चतुर्थः परिपठ्यते ॥ ८७ ॥ कथको मध्यम स्तेषां सूर्यविप्रस्तथोत्तमः ॥ शिवलिंगार्चनरतः शिवविप्रस्तु निंदितः ॥ ८८ ॥ सूर्यविप्रस्य विप्रस्य वैद्यस्य च नृपस्य च ॥ प्रवासयेदक्षतेन सपुत्रपशुबांधवं ॥ अवध्यः सर्वलोकेषु राजा राज्येन पालयेत् ॥ ८९ ॥ वस्त्रैर्भिर्वस्त्रगंधाद्यैर्माल्यैश्च विविधैरपि ॥ देशचक्रविदः पूज्या होराचक्रविदः पराः ॥ ९० ॥ सूर्यचक्रविदः पूज्या नावमन्येत्कथंचन ॥ सिद्धवृद्धिं च धनर्द्धिं च य इच्छेदायुषा समम् ॥ गणविप्रसमः पूज्यो दैवज्ञः समुपाहृतः ॥ ९१ ॥ जाते बाले निरूप्ये च लग्नग्रहनिरूपणम् ॥ संस्थानं सूर्यविप्रो यः सूर्यविप्रस्य सत्तमाः ॥ द्विमात्रिकां सम भ्यस्य सर्ववेदफलं लभेत् ॥ ९२ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे पंचमोऽध्यायः ॥ ५ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ चतुर्णामपि वर्णानां मान्यो बंधुः प्रचक्षते ॥ ऋते पितुर्द्विजश्रेष्ठा इतीयं नैगमी स्मृतिः ॥ १ ॥ त्रयोऽपि गुरवः श्रेष्ठास्ताभ्यां माता परो गुरुः ॥ ये सोदरा ज्येष्ठश्रेष्ठा उत्तरोत्तरतो गुरुः ॥ २ ॥ द्वादश्यां तु आमवास्यामथ वा रविसंक्रमे ॥ वासांसि दक्षिणा देया मणिमुक्ता यथारुचि ॥ ३ ॥ अयने विषुवे चैव चंद्रसूर्यग्रहे तथा ॥ प्राप्ते चापरपक्षे तु भोजयेच्चापि शक्तितः ॥ ४ ॥ पश्चात्प्रवंदयेत्पादौ मंत्रेणानेन सत्तमाः ॥ विधिवद्वंदनादेव सर्वतीर्थफलं लभेत् ॥ ५ ॥ स्वर्गापवर्गप्रदमेकमाद्यं ब्रह्मस्वरूपं पितरं नमामि ॥ यतो जगत्पश्यति चारुरूपं तं तर्पयामः सलिलैस्तिलैर्युतैः ॥ ॥ ६ ॥ पितरो जनयंतीह पितरः पालयंति च ॥ पितरो ब्रह्मरूपा हि तेभ्यो नित्यं नमोनमः ॥ ७ ॥ यस्माद्द्विजयते लोकस्तस्माद्धर्मः प्रवर्तते ॥ नमस्तुभ्यं पितः साक्षाद्ब्रह्मरूप नमोऽस्तु ते ॥ ८ ॥ या कुक्षिविवरे कृत्वा स्वयं रक्षति सर्वतः ॥ नमामि जननीं देवीं परां प्रकृतिरूपिणीम् ॥ ९ ॥ कृच्छ्रेण महता देव्या धारितोऽहं यथोदरे ॥ त्वत्प्रसादाज्जगद्दृष्टं मातर्नित्यं नमोऽस्तु ते ॥ १० ॥ पृथिव्यां यानि तीर्थानि सागरादीनि सर्वशः ॥ वसंति यत्र तां नौमि मातरं भूतिहेतवे ॥ ११ ॥ गुरुदेवप्रसादेन लब्धा विद्या यशस्करी ॥ शिवरूप नमस्तस्मै संसारार्णवसेतवे ॥ १२ ॥ वेद वेदांगशास्त्राणां तत्त्वं यत्र प्रतिष्ठितम् ॥ आधारः सर्वभूतानामग्रजन्मन्नमोऽस्तु ते ॥ १३ ॥ ब्राह्मणो जगतां तीर्थं पावनं परमं यतः ॥ भूदेव हर मे पापं विष्णुरूपिन्नमोऽस्तु ते ॥ १४ ॥ पितामहं च प्रणमेत्सर्वादौ मातरं गुरुम् ॥ मातामहं च तदनु आचार्यमथ ऋत्विजम् ॥ १५ ॥ मातृमंत्रैश्च

१ जीविकार्थं इति शेषः । २ द्वेपपष्ठी ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रथमं प्रणमेद्भक्तिभावतः ॥ यथाग्रजस्तथा ज्येष्ठः पितृव्योऽपि द्विजोत्तमाः ॥ १६ ॥ दृष्टादृष्टे च स गुरुर्गुरुर्माता तथा गुरुः ॥ दृष्टादृष्टस्तृतीयः स्यात्सूर्योऽग्निश्चंद्र एव च ॥१७॥ मंत्रदाता गुरुः स्यातस्सप्तमः परिकीर्तितः ॥ कभोजनगुरुः श्रेष्ठः स्वर्गापवर्गहेतुकः ॥१८॥ दृष्टदेवं च यो हित्वा अदृष्टं च निषेवते ॥ पापात्मा परमः सैकस्तिर्यग्योनिं च गच्छति ॥१९॥ यथा पिता ज्येष्ठपिता कनीयांश्च तथा द्विजाः ॥ ज्येष्ठो भ्राता पितृतुल्यो मान्यः सत्कारभाग्यतः ॥२०॥ आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ॥ माता स्यात्पृथिवीमूर्तिभ्रातरो मूर्तिरात्मनः ॥ २१ ॥ पिता मेरुर्वशिष्ठः स्याद्धर्ममूर्तिः सनातनः ॥ स चापि दृष्टदेवः स्यात्तदाज्ञां परिपालयेत् ॥ २२ ॥ पितामहं च पित्रग्रे हव्यकव्यैश्च तर्पयेत् ॥ स याति ब्रह्मणः स्थानं यस्मान्नावर्तते पुनः ॥ २३ ॥ तस्य पादोदकस्नानाद्गंगा नार्हति केवलम् ॥ तथावलोकनात्तस्य ज्योतिर्लिंगशतैश्च किम् ॥ २४ ॥ द्वात्रिंशत्कुंडकशिलास्पर्शने यादृशं फलम् ॥ तादृशं कोटिगुणितं पितामहप्रदक्षिणे ॥ २५ ॥ शतमातृवरिष्ठाश्च पितामह्याश्च पोषणे ॥ गुणास्तद्दर्शने विप्राः संसारे न पुनर्विशेत ॥ २६ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे गुरुगुणवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ सूत उवाच ॥ ॥ समाख्यामीह विप्रेंद्रा इतिहासं पुरातनम् ॥ श्रवणेपि च धर्मात्मञ्छ्रूयतां यन्मया पुरा ॥ १ ॥ पृष्टोवोचन्महातेजा विरिंचो भगवान्प्रभुः ॥ हंत ते कथयाम्येष पुराणश्रवणे विधिम् ॥ २ ॥ इतिहासपुराणानि श्रुत्वा भक्त्या द्विजोत्तमाः ॥ मुच्यते सर्वपापेभ्यो ब्रह्महत्याशतं च यत् ॥ ३ ॥ सायं प्रातस्तथा रात्रौ शुचिर्भूत्वा शृणोति यः ॥ तस्य विष्णुस्तथा ब्रह्मा तुष्यते शंकरस्तथा ॥ ४ ॥ प्रत्यूषे भगवान्ब्रह्मा दिनांते तुष्यते हरिः ॥ महादेवस्तथा रात्रौ शृण्वतां पठतां नृणाम् ॥५॥ शुक्लवस्त्रधरश्चैव चैलाजिनकुशोत्तरः ॥ प्रदक्षिणत्रयं कुर्याद्वा तस्मिन्देवता गुरौ ॥६॥ नात्युच्छ्रितं नातिनीचं स्वासनं भजते ततः ॥ दिक्पतिभ्यो नमस्कृत्य ॐकाराधिष्ठितानपि ॥ ७ ॥ पुस्तकं धर्मशास्त्रस्य धर्माधिष्ठानशाश्वतम् ॥ आगमानां शिवो देवस्तंत्रादीनां च शारदा ॥ ८ ॥ जामलानां गणपतिर्डामराणां शतक्रतुः ॥ नारायणो भारतस्य तथा रामायणस्य च ॥ ९ ॥ वासुदेवो भवेद्देवः सप्तानां शृणु सत्तम ॥ आदित्यो वासुदेवश्च माधवो रामकेशवौ ॥ १० ॥ वनमाली महादेवः सप्तानां सप्तपर्वसु ॥ विष्णुधर्मादिकानां च शिवो ज्ञेयः सनातनः ॥ अथ चादिपुराणस्य विरिंचिः परिकीर्तितः ॥ ११ ॥ शुद्धोदनं यवक्षीरं पायसं कृशरं तथा ॥ कृशरान्नं च वा दद्यात्क्रमाद्बलिगणं विदुः ॥ १२ ॥ शालिभक्तं सगोधूमं तिलाक्षतविमिश्रितम् ॥ गव्यं च सफलं चैव देयश्चैभ्यस्त्वयं बलिः ॥१३॥ पृथक्पृथक्चैव कांस्ये विन्यसेद्दिक्षु मध्यतः ॥ पठेच्चापि विधानेन स यागः षण्मयः परः ॥१४॥ शीतोदकं मधु क्षीरं सितेक्ष्वोश्च रसो गुडः ॥ सगर्भश्च परो ज्ञेयः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षण्मयश्चापरो बलिः ॥ १५ ॥ शालितंडुलप्रस्थं तु तदर्धं वा तदर्धकम् ॥ क्षीरेणापि च संभक्तं यवक्षीरमिदं स्मृतम् ॥ १६ ॥ क्षीरं भागाष्टकं ग्राह्यं सप्तभागेन संस्थितम् ॥ हैमंतिकं सिताख्यं च तांडुलं प्रपचेच्चरुम् ॥ १७ ॥ अशीतिपलमानेन सिद्धमासादयेत्ततः ॥ भागार्धेन ददेत्पश्चान्माक्षिकं वा सितामपि ॥ १८॥ गुडमिश्रेण यो दद्यात्संपर्को जायते क्वचित् ॥ संपृक्तं माक्षिकेणापि दद्यादिक्षुरसं बुधः ॥ गृहीत्वा याचकः शुद्धः शृणुत द्विजसत्तमाः ॥ १९ ॥ शृणुते वाधीयानो यो दद्याद्धस्ते च पुस्तकम् ॥ समुत्थाय च गृह्णीयात्प्रणम्य विनिवेदयेत् ॥ २० ॥ पूर्वस्थः श्रावको विप्रो विख्यातस्तस्यदक्षिणे ॥ पश्चिमाशासुखेनैव तर्जन्यांगुष्ठया सह ॥२१॥ प्रस्तरेणापि हस्तेन विन्यासः पंडितैः सदा ॥ इतोन्यथा न कर्तव्यः कृत्वा न्यासमथाप्नुयात् ॥२२॥ असकृद्विन्यसेद्विप्राः पावमानीं जले जपेत् ॥ वेदांतागमवेदांतविधिरेष स्मृतो बुधैः ॥२३॥ यमदिक्संमुखे श्रोता वाचकश्चोत्तरामुखः ॥ पुराणभारताख्यान एष वै कथितो विधिः ॥२४॥ वैपरीत्येन विधिना विज्ञेयो द्विजसत्तमाः ॥ रामायणे धर्मशास्त्रे हरिवंशे च सत्तमाः ॥ २५ ॥ इतोऽन्यथा यातुधानाः प्रलुंपंति फलं यतः ॥ तस्माद्विधिविधानेन शृणुयादथ वा पठेत् ॥ २६ ॥ श्रुत्वा प्रति पुण्यविप्रां योऽश्नीयान्मांसमेव तु ॥ स याति गार्दभीं योनिं यदि मैथुनिनः क्वचित् ॥ २७ ॥ यदि देवालये तीर्थे वाचयेच्छृणुयादथ ॥ यस्य देवगृहे तस्य तस्य तीर्थस्य वर्णनम् ॥२८॥ माहात्म्यश्रवणादेव गोदानस्य फलं लभेत्॥महागुरोश्च माहात्म्यं पित्रोरग्रे न च स्मरेत् ॥ पितुर्माहात्म्यं यत्पुत्रैर्वाच्यं संसदि पर्वणि ॥ २९ ॥ वासुदेवाग्रतश्चापि रुद्रमाहात्म्यवर्णनम् ॥ रुद्राग्रे वासुदेवस्य कीर्तनं पुण्यवर्धनम् ॥ ३० ॥ दुर्गाग्रे शिवसूर्यस्य वैष्णवाख्यानमेव च ॥ यः करोति विमूढात्मा गार्दभीं योनिमाविशेत् ॥ ३१ ॥ गुरोरनुज्ञया पित्रोः प्रकुर्यादभिवादनम् ॥ अनुज्ञया तथा पित्रोर्हरेः कुर्यात्प्रदक्षिणम् ॥ ३२ ॥ न विष्णुर्न च ब्रह्मा च न च रुद्रः शचीपतिः ॥ सर्ववेदेन तत्तुल्यं सर्वधर्मपरायणम् ॥ ३३ ॥ सर्वज्ञानमयं चैव सर्वज्ञेन च तत्समम् ॥ तस्माद्द्विजन्मन्पित्रोर्हि सेवनाद्ब्रह्मशाश्वतम् ॥३४॥ गुरुभ्यो वंदनं व्यर्थं पितरं यो न तर्पयेत् ॥ जीवन्न तर्पयेन्मुख्यं गंगायां मरणेपि च ॥ उभयोस्तर्पणं नास्ति जीवन्नपि न जीवति ॥ ३५ ॥ पुराणश्रवणं पुण्यं शून्यं भागवतं यदि ॥ व्यर्थं भागवतं विप्रा नारसिंहविहीनकम् ॥ ॥ ३६ ॥ आदिपर्वणि हीने तु भारताख्यं न धारयेत् ॥ विनाश्वमेधिकं विप्रा विना यज्ञाननं विना ॥ ३७ ॥ दानकर्मविहीनं च मोक्षधर्मं न धारयेत् ॥ भारतं च दिवारोहधारणादौ वरं व्रजेत् ॥ ३८ ॥ वायुपुराणमश्रुत्वा शास्त्रं च यौगिकं विना ॥ वायुहीनं देहिकुलं वृथा तस्य न धारकम् ॥ ३९ ॥ तथा वायुपुराणं यद्विहीनं श्रव्यमन्यकम् ॥ यथा सुन्दरकांडेन आरण्यं च न धारयेत् ॥ ४० ॥ लंकां विना चादिकांडं तल्लिखित्वा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न धारयेत् ॥ पाराशरं विना व्यासं याज्ञवल्क्यं विना मखम् ॥ ४१ ॥ दक्षं विना न शंखं च शंखहीनं बृहस्पतिम् ॥ वर्ह्मायं श्रवणाद्येन न च युक्तिमथापयेत् ॥ ४२ ॥ संस्थापनादेव विना न च किमपि राक्षसैः ॥ न दद्देत्प्रार्थकादिभ्यो न विक्रीयेत्कथंचन ॥ ४३ ॥ न हरेत्पुस्तकं चापि न हरेदक्षराणि पट् ॥ ब्रह्माक्षरस्य हरणाद्रौरवान्न निवर्तते ॥४४॥ आद्याक्षरस्य हरणात्ताम्रकुष्ठी भवेदिह ॥ मुखवृत्तस्य हरणाद्यावदाचंद्रतारकम् ॥ ॥४५॥ कुवले असिपत्रे च पततीह न संशयः ॥ स्वाक्षरस्य हरणे स्वमातृहरणेऽपि यत् ॥४६॥ तस्मात्पुस्तकमात्रं यो हरेन्नरकमाप्नुयात् ॥ यद्ब्रा रतं यत्पुराणं स्तोत्ररूपाणि तानि च ॥ ४७ ॥ तानि वेदागमादीनि पुस्तकेष्वपि वाचयेत् ॥ वेदानां पुस्तकं यच्च लिखित्वा तन्न वाचयेत् ॥ ॥ ४८ ॥ तथा तन्त्रोदितान्मंत्राँल्लिखित्वा तन्न वाचयेत् ॥ पुस्तकं निगमानां च मन्त्रव्याख्यानसंग्रहम् ॥ ४९ ॥ स्फुटं कृत्वा पुरः स्थाप्य यावत्कालं प्रवर्तते ॥ तावत्स नरके घोरे प्रेतत्वं जन्मजन्मनि ॥ ५० ॥ न वाचयेच्च व्याख्याता वाचकोऽपि प्रवाचयेत् ॥ पौष्करे च श्लोक पादमाश्वमेधं पदेपदे ॥ ५१ ॥ वेदार्थं वाचयेद्यस्माद्विपरीतोऽपवाचकः ॥ तावुभौ पतितौ ज्ञेयौ पावमानीशतं जपेत् ॥ ५२ ॥ आदिमध्याव साने च मन्त्रे च प्रणवं दिशेत् ॥ वलिभिर्गंधपुष्पैश्च पुस्तकं देवनिर्मितम् ॥ ५३ ॥ त्रिदेवं पुस्तकं विद्यात्सूत्रं वासुकिरुच्यते ॥ अमानकरणे दोपस्तस्मात्तच्च न हापयेत् ॥ ५४ ॥ पत्राणि भगवान्ब्रह्मा ऊर्ध्वदीर्घाणि यानि च ॥ जनार्दनश्चाक्षराणि मात्रा प्रकृतिरव्यया ॥ ५५ ॥ लिपी भंगी महेशः स्यात्तस्या मात्रा सरस्वती ॥ एकरेखा च एकात्मा पादाच्च पादविच्युतिः ॥ ५६ ॥ चतुष्पादांतरे युग्मं मध्यमोंऽते युगं युगम् ॥ विपत्करं युग्मपंक्तावयुग्मे स्वर्गसाधनम् ॥ ५७ ॥ भारते चेतिहासे च पुराणे द्विजसत्तमाः ॥ अयुग्मपंक्तौ स्वर्गः स्याद्युग्मे नरकमाविशेत् ॥ ॥ ५८ ॥ वक्तृनामाक्षरैर्युक्तं पंक्तिभेदेन सत्तमाः ॥ उपन्यस्तस्य यन्नाम तत्कलौ मात्रया सह ॥ ५९ ॥ आत्मसंशुद्धिसंशुद्धया धारयेद्धर्म संहिताम् ॥ इतोऽन्यथा भवेद्दोपस्तस्मात्तत्परिवर्जयेत् ॥ ६० ॥ रिपुः सूर्यस्तयारामो यक्षोऽनंतः सरस्वती ॥ ब्राह्मी च यक्षिणी चैव गायत्री नवमी स्मृता ॥ ६१ ॥ विष्ण्वन्ते च भवेन्मुक्तिः सूर्यांऽते पादविच्युतिः ॥ रिपुंकरं भवेत्तस्य यक्षे दुर्गतिमादिशेत् ॥ ६२ ॥ अनंते विपुला कीर्तिः सरस्वत्यां धनागमः ॥ ब्राह्म्या ब्रह्मत्वमाप्नोति यक्षिण्या यक्षमन्दिरम् ॥ ६३ ॥ मुक्तिमाप्नोति गायत्र्या इति पंक्तिफलोदयः ॥ चतुर्थी प्रतिभक्तिः स्यात्पुस्तकं धर्मनिर्मितम् ॥ ६४ ॥ ब्रह्मेन्द्रवैष्णवं शैवं शाक्तिकं च महेश्वरी ॥ ब्रह्मरूपं चेतिहासमैंद्रं रामायणात्मकम् ॥ ६५ ॥ वैष्णवं परमं दैवं यच्छैवं तल्ललाटकम् ॥ पावकोऽस्य तथा मूले मध्ये भागे शतक्रतुः ॥ ६६ ॥ अग्रे स्थिता ग्रहाः सर्वे दिशामीशास्तथा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्विजाः ॥ मेरुः सुमेरुरुद्दिष्टः संगवान्काम उच्यते ॥ ६७ ॥ द्यावापृथिव्यौ पातालं तस्यांतः समुदाहृतम् ॥ पौराणिककथायुक्तपुस्तको देवपूजितः ॥ ६८ ॥ न शस्यः पूजनीयश्च गृहे स्थाप्येत मानवः ॥ यो यस्मै शूद्रो विप्राय वृत्तिं दद्याच्च मानवः ॥ ६९ ॥ स याति ब्रह्मसदनं मणिवर्त्मादिकुट्टिमम् ॥ न शस्यः पूजनीयश्च गृहे स्थाप्येत मानवः ॥७०॥ पत्राणामग्रभागे तु वेधं कुर्यात्सुवर्तुलम् ॥ श्रवणात्तत्र मात्रेण तत्र पद्मं च वर्तुलम् ॥ ७१ ॥ संहितागमतन्त्रेषु प्रतिवेधे च संकुलम् ॥ प्रकुर्याच्चित्ततापेन ततः शक्रपुरं व्रजेत् ॥ ७२ ॥ मध्यं तस्य हरेदायुः पार्श्ववेधः शिवं हरेत् ॥ युग्मवेधे जयं दद्यादेकवेधे बलिर्भवेत् ॥७३॥ परमं प्रकृतेर्गुह्यं स्थानं देवैर्विनिर्मितम् ॥ पूरयेत्ताम्रलिंगेन अथ रैत्यमयेन वा ॥७४॥ अशक्तो विल्वकाष्ठस्य तथा श्रीपर्णिकस्य च ॥ न काष्ठस्य नवं शस्यं न लौहं योजयेत्क्वचित् ॥ ७५ ॥ प्रागारंभश्लोकशतं धर्मशास्त्रस्य वै लिखेत् ॥ संहितायां पुराणायां युग्मकल्पं तदर्धकम् ॥ ७६ ॥ ब्रह्मचर्येण विलिखेन्न मोहाद्ब्राह्मणः क्वचित् ॥ तथापि चाखिलव्यास लेखनात्संततिक्षयः ॥ ७७ ॥ अनामात्वे हेमयुतां बलाकं चित्तमेव च ॥ न लिखेत्खिलभागं च हरिवंशस्य सत्तमाः ॥ ७८ ॥ गारुडस्य च स्कान्दस्य न लिखेन्मध्यतन्त्रकम् ॥ लेखनं हरिवंशस्य व्रतस्थो नियमैर्युतः ॥ ७९ ॥ गृहस्थो न लिखेद्ग्रंथं लिखेच्च मथुरां विना ॥ लेखने पारिजातस्य मत्स्यमांसाशिनं लिखेत् ॥ ८० ॥ वाल्मीकिसंहितायाश्च लेखने च तथा क्वचित् ॥ स्तोत्रमात्रं लिखेद्विप्रा अव्रती न लिखेत्क्वचित् ॥ ८१ ॥ अब्राह्मणेन लिखितं निष्फलं परिकीर्तितम् ॥ ८२ ॥ पतितैरपि पाखंडैर्न स्त्री विलिखति क्वचित् ॥ दुर्विचारो दुष्टभार्यो दुर्मतिश्चापि लेखकः ॥ न लिखेद्धर्मशास्त्रं च पुराणं स्तोत्रसंहितम् ॥ ८३ ॥ तच्च प्राप्नुवन्कर्तव्यं सुवर्णरजतस्य च ॥ कज्जलैर्मलिनं कुर्यान्मन्त्री निर्यासमंत्रितैः ॥ ८४ ॥ जीवन्त्याश्च रसैर्युक्तैर्मणिकर्दमलोलुपैः ॥ वंगुन्यान्मुख्यायुतैर्वापि पीतयोगैरथापि वा ॥ ८५ ॥ कृष्णे वायुप्रदं विद्यात्पीते वायुक्षयो भवेत् ॥ रक्ते पुष्टिमवाप्नोति कृष्णे च संपदागमः ॥८६॥ इतिहासपुराणानां विलिखेद्यन्मुखाच्छृणु ॥ वायव्यादिमुखेनैव काष्ठवेदं च संलिखेत् ॥ ८७ ॥ पूर्वामुखे चार्थहानिरुत्तरे च मुखे श्रियः ॥ मरणं दक्षिणास्ये तु पश्चिमास्ये धनक्षयः ॥८८॥ पितृमेधे भुवः कंपे न लिखेज्जन्मवासरे ॥ अशौचे मृतके सूतावमायां रविसंक्रमे ॥ ८९ ॥ अत्र लेखाद्दरिद्रः स्यात्तथा पुत्रविनाशनम् ॥ बलधर्मं क्षयं चैव तस्माद्यत्नेन वर्जयेत् ॥ ९० ॥ पितृश्राद्धदिने लेखः कुलक्षयकरो भवेत् ॥ एकरात्रं भुवः कंपे तस्मिँल्लेखे धनक्षयः ॥९१॥ अशोचेऽपि दरिद्रः स्याज्जन्माहे चायुषः क्षयः ॥ लिपिच्छंदःपदज्ञश्च युवा धीमाञ्जितासनः ॥९२॥ द्रुतलेखी च तेजस्वी यो लेखयति लेखकः ॥ असंवलितभावेन ऊर्ध्वोर्ध्वे स्यात्समाक्षरम् ॥९३॥ लिपियुक्तः समायुक्तः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवागमलेखकः ॥ नांदीनागरकैर्वर्णैः शुद्धनागरकैरपि ॥ ९४ ॥ कामरूपाक्षरैर्वापि यावच्च संहितागणः ॥ अचेतनेन लिखितं यावत्कालं प्रवर्तते ॥ ॥ ९५ ॥ यावदक्षरसंस्थानं तावत्स्वर्गे महीयते ॥ अनुक्तो वाचयेद्यस्तु धर्मशास्त्रस्य वेतनम् ॥ ९६ ॥ लिखित्वा यस्तु पापात्मा यावदक्षर संख्यया ॥ तावत्कालं तु नरके पच्यते नात्र संशयः ॥ ९७ ॥ कुटुंबभरणार्थं तु गृह्णीयाद्वापि वेतनम् ॥ न जीवति सदुष्टात्मा धनवस्त्रफला न्वितः ॥ ९८ ॥ पतितैरंत्यजैर्म्लेच्छै रोगी कुष्ठी क्षयी तथा ॥ रोगी शिलीपदैश्चैव मूकोऽपि धर्मसंहतः ॥ ९९ ॥ एतैर्विलिखितं यच्च धारयेन्न गृहाश्रमी ॥ अनायुष्यकरं यस्मात्तस्मात्तत्परिवर्जयेत् ॥ १०० ॥ हीनांगा प्रतिमा चैव पुस्तकं मानहीनकम् ॥ न कलौ धारयेद्देह अनायुष्यकरं भवेत् ॥ १०१ ॥ द्वात्रिंशदंगुलैर्युक्तं कर्तव्यं पुस्तकोत्तमम् ॥ स वै नारायणः ख्यातो धारणाच्च कुतोऽप्यलम् ॥ १०२ ॥ चतुर्विंशांगुलं यच्च तद्वै स्वधनमुच्यते ॥ शंकरः स तु विज्ञेयो धर्मकामफलप्रदः ॥ १०३ ॥ अष्टांगुलं भवेद्यच्च तत्कनिष्ठमिहोच्यते ॥ तस्माद्ब्रह्ममयं ज्ञेयं त्रिवर्ग फलदायकम् ॥ १०४ ॥ ताडिता जलपत्रे च अथ वा चागुरुत्वचि ॥ एत्याः पत्रकृते मानं भूर्जे मानं न विद्यते ॥ १०५ ॥ द्वादशांगुलकं यच्च भूर्जतैडादिनिर्मितम् ॥ अंगुलानां प्रमाणं यत्तेनापि ज्ञानपुस्तकम् ॥ १०६ ॥ हस्तसंस्थापिते तस्य तेनायुष्यकरं भवेत् ॥ धर्मशास्त्रस्य साहस्रे धर्मशास्त्रस्य वेतनम् ॥ १०७ ॥ स्वर्गमार्गस्य गमने भारते च तदर्धकम् ॥ हरिवंशे स्वर्णमाने कृते मूल्यसहस्रके ॥ १०८ ॥ युगेयुगे पादहीनं धर्मं कुर्याद्यथारुचि ॥ प्रणम्य शिरसा सर्वान्व्यासादीन्संहिताश्रुतान् ॥ १०९ ॥ जैमिनिं च ततो व्यासं शंकरं च तथा हरिम् ॥ नमस्कारमथैषां तु आदिमध्यावसानके ॥ ११० ॥ ततः प्रवाचयेद्विप्रो धर्मशास्त्रार्थकोविदः ॥ अलक्षितमनास्तद्वद्यद्रूपं स्पष्टमुच्चरन् ॥ १११ ॥ असंयुक्ताक्षरपदं स्पष्टभागसमन्वितम् ॥ सप्तस्वरसमायुक्तं सप्तनादविभूषितम् ॥ ११२ ॥ सामगाथाः समाश्रित्य रागयुक्तांतरं पठेत् ॥ मणिवारो धनं यत्स्याद्गौरांधासंतिकस्तथा ॥ ११३ ॥ श्रीरागश्चैव हिल्लोलरागो वाजाविकस्तथा ॥ एवं प्रक्रममाणेन शृणुयाद्धर्मसंहिताः ॥ ११४ ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चापि विशेपतः ॥ अश्वमेधमवाप्नोति सर्वान्कामानवाप्नुयात् ॥ पापैः प्रमुच्यते सर्वैर्महापुण्यं च विंदति ॥ ११५ ॥ शूद्राणां पुरतो वैश्यो वैश्यानां क्षत्रियः परः ॥ क्षत्रियांते तथा विप्राः शृणुयुश्चाग्रतः सदा ॥ ११६ ॥ न शूद्रः कथयेद्धर्मांस्तपअध्यापने तथा ॥ नैहिकत्वं परत्वं च न शुभं न परां गतिम् ॥ ११७ ॥ शूद्रेणाधिगतं नास्तिविशेपाच्छब्दलक्षणम् ॥ यद्द्विजस्य कृतो दासो ब्रह्मणाऽव्यक्तयोनिना ॥ ११८ ॥ श्वशृगालखरीक्षीरमपेयं हि यथा भवेत् ॥ एवं शूद्रमुखाद्धर्मा न ग्राह्याः शब्दसंस्कृताः ॥ ११९ ॥ अमेध्यं शुध्यते तोयैः शूद्रः श्रोता हि शुध्यति ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं शूद्रोऽप्यशुचिः स्याद्यदि व्याकरणार्थवित् ॥१२०॥ यः शूद्र उद्दिशेद्धर्मं तथा चागमवैदिकम् ॥ स वै वध्यो नरेंद्रेण जिह्वां चक्रेण छेदयेत् ॥ ॥ १२१ ॥ बुध्यमानः सदा ह्यर्थं ग्रंथार्थं कृत्स्नमेव च ॥ य एवं कथयेत्सम्यक्स विप्रो व्यास उच्यते ॥ १२२ ॥ वसेत्स पत्तने ग्रामे पुण्ये देश स कीर्तितः ॥ ते धन्यास्ते कृतात्मानस्ते कृतार्था न संशयः ॥ वसंति पत्तने तस्मिन्व्याख्याता यत्र संवसेत् ॥ १२३ ॥ यथार्कहीनं दिवस चंद्रहीना यथा निशा ॥ न रराज सभा तद्वद्व्यासेन रहिता द्विजाः॥१२४॥ यद्वद्गृहे नैव शिशवो न रराज गृहं क्वचित् ॥ यथैकतो ग्रहाः सर्वे एकतस्तु दिवाकरः ॥ तथैव सोदर गेहे दृष्ट्वा पुष्करदर्शनम् ॥ १२५ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे सप्तमोऽध्यायः ॥ ७ ॥ छ ॥ ॥सूत उवाच ॥ ॥ शृणुध्वं विप्रसंघाताः पुराणं देवसंमतम् ॥ यच्छ्रुत्वा मुच्यते पापात्पुरुषो ब्रह्महत्यया ॥१॥ तृतीयं शैवमाख्यातं ततो भागवतं परम् ॥ पंचमं च तथा मात्स्यं भविष्यं षष्ठमुच्यते ॥२॥ असामर्थ्ये च मात्स्योक्तं वैष्णवं च भविष्यकम् ॥ भारते चापि पर्व च शांतिभैष्मीयकं तथा ॥ ३ ॥ पराशरमतं गृह्यं गोभिलोक्तानि यानि च ॥ कात्यायनोक्तमपरमभ्यसेन्निगमादितः ॥ ४ ॥ अंतरेणागते मर्त्ये शास्त्रं नाध्यापयेत्क्वचित् ॥ एकरात्रं गते मर्त्ये त्रिरात्रमजमेषयोः ॥ ५ ॥ मंडूके पंचरात्रं तु सर्पे रात्रिचतुष्टयम् ॥ संवत्सरं तु तुरगे गजे द्वादशवत्सरान् ॥ ६ ॥ मासमेकं खरे काके स्थानत्यागान्न कुत्रचित् ॥ केरवे वा रवे चैव अहोरात्रं प्रचक्षते ॥७॥ त्रिरात्रमपि मार्जारे नकुले मूषके खरे ॥ हंसे दिनमनध्यायं क्षुद्रजंतौ न दूषणम् ॥ ८ ॥ अध्यापयेद्गुरोः पुत्रं ज्ञानिनं धार्मिकं शुचिम् ॥ भक्तं शांतं वैष्णवं च जितक्रोधं जितेंद्रियम् ॥ ९ ॥ अध्यात्माध्यापयेदेभ्यः शठं पापहरं द्विपम् ॥ अन्यायेनैव यच्छ्रुतमभयं दांभिकं द्विपम्॥१०॥निरर्थकं मंथरं च विशुश्रूषुमयाजकम् ॥ पण्डं चैवानृजुं क्रुद्धं कृपणं व्यसनार्थिनम् ॥ ११ ॥ निंदकं चाविधिज्ञं च दूरतः परिवर्जयेत् ॥ अप्रच्छन्नतं ब्रूयात्पुत्रपौत्रादिकादृते ॥ १२ ॥ विद्यया सह मर्तव्यं न दद्याच्च पृथग्जने ॥ अतो विद्या वदत्येवं पाठयंतं द्विजोत्तमम् ॥१३॥ मा दद्याद्भक्तिहीनाय दुर्जनाय दुरात्मने ॥ अप्रमादाय विप्राय शुचये ब्रह्मचारिणे ॥ ॥ १४ ॥ सार्थकाय विधिज्ञाय साधवे देहि सत्तम ॥ दद्याद्यदि निषिद्धाय विद्याधनमनुत्तमम् ॥ १५ ॥ तयोरेकतरो गच्छेदचिरेण यमक्षयम् ॥ अन्यायेन ग्रहं विद्यामन्यं पाठयते सुखात् ॥ १६ ॥ स याति नरकं घोरं विद्यावर्ज्यः स उच्यते ॥ आध्यात्मिकं वैदिकं चालौकिकं वाथ यो वदेत् ॥१७॥ मानमादौ प्रणम्याथ ततोऽधीयीत सुव्रतः ॥ कर्मकांडं ज्योतिषस्य तद्विना न समभ्यसेत् ॥ १८ ॥ द्यूतभोगसमभ्यासाद्दरिद्रश्चाभि

१ अदन्तत्वमार्षम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जायते ॥ वादभागसमभ्यासाद्धननाशाय जायते ॥१९॥ निधिभागसमभ्यासाज्जायते नारके कुले॥ यान्यनुक्तानि शास्त्राणि माननीयानि यानि च ॥२०॥ म्लेच्छोक्तानि महिम्नानि नाभ्यसेद्दूरतस्त्यजेत् ॥ लोकानां ज्ञानवृद्ध्यर्थं यः कुर्याद्धर्मसंग्रहम् ॥ २१ ॥ प्रवर्तयित्वा स गुरुर्भवेज्ज्ञानप्रदः पिता ॥ ज्ञानदाता च लोकानां तेषु धर्मः प्रवर्तते ॥२२॥ निगमानां ज्योतिषाणां वेदानां नाटकस्य च ॥ व्याख्यानसंग्रहं कृत्वा कलौ नाशमवाप्नुयात् ॥२३॥ वेदानां धर्मशास्त्राणां पुराणानां तथैव च ॥ मीमांसाज्योतिषां चैव नाटकानां विरंचिनी॥२४॥भागावसाने कथितःपुराणाध्याय एव च ॥ पुष्पकश्च परिच्छेदः खंडश्च प्रतिखंडकः ॥२५॥ व्यवहारश्चार्थशास्त्रमश्वशास्त्रस्य चैव हि ॥ यस्य भागावसाने तु प्रयोक्तव्यः स एव हि॥ ॥२६॥ तत्संग्रहेऽपि कविना नियोक्तव्यः स एव हि॥ यस्य नाम्नोपदेशे तु प्रवर्तयति संग्रहः ॥२७॥ तत्तदक्षरसख्यानां ब्रह्मलोकान्न तच्युतिः ॥ न संग्रहस्तंत्रमंत्रे वेदमंत्रे च वर्जयेत् ॥२८॥ मोहात्कृत्वा होमधेनुं दत्त्वा शुद्धिर्भविष्यति ॥ कृत्वा चाख्यायिकाग्रंथस्वरूपान्स दिवं व्रजेत् ॥ २९ ॥ धर्मशास्त्रस्य गम्यस्य व्यवहारस्य चैव हि ॥ कलौ यः संग्रहं कुर्यात्प्रसुप्ते चैव केशवे ॥ ३० ॥ यावत्प्रवर्तते लोकस्तावत्स्वर्गे महीयते ॥ सिंहे पौषे च चैत्रे च न कुर्यात्संग्रहं क्वचित् ॥ ३१ ॥ प्रातःकाले न कुर्वीत तथा मध्यंदिने द्विजाः ॥ पक्षांते भूमिदाहे च भुवः कंपे दिनक्षये ॥ ३२ ॥ मलमासे विशेषेण सन्ध्ययोश्च विवर्जने ॥ अमेध्याक्तं च पत्रं च लिप्यक्षरविभूषितम् ॥ ३३ ॥ पूतं स्यात्तत्क्षणाद्विप्राश्चतुः पंचाक्षरेण वा ॥ नारसिंहस्य विन्यासे पूतो भवति तत्क्षणात् ॥ ३४ ॥ मायाविभवविन्यस्ते महापापकलेवरे ॥ मुहूर्तार्धेन पूतत्वं प्रभोर्याति परां गतिम् ॥ ३५ ॥ स्त्रियो वा निंदितो वापि म्लेच्छो याति परां गतिम् ॥ यो मूढो मन्यते दोषं तस्य शौचं समाचरेत् ॥ स गर्दभीं खरीं योनिं प्रविशेन्नात्र संशयः॥ ॥ ३६ ॥ एकमेवात्मकं ब्रह्म तत्प्रकृत्यात्मकं द्वयम् ॥ नवात्मको भैरवश्च दशमश्च जनार्दनः ॥ ३७ ॥ रुद्र एकादशश्चैव अर्कार्कश्चापि द्वादशः ॥ त्रयोविंशे च भूतात्मा पड्विंशे मनुरीरितः ॥ ३८ ॥ तिथ्यात्मकं पंचदशे षोडशाख्या कलापरा ॥ वातात्मकः सप्तदशो मन्त्रः समनुवर्तते ॥३९॥ अष्टादशाक्षरो मंत्रः पुराणात्मक एव च ॥ ऊनविंशश्चंद्रमाः स्याद्विंशो नारायणो वपुः ॥४०॥ ज्योतिर्मयश्चैकविंशो द्वाविंशे केशवार्चनम् ॥ नक्षत्राणि त्रयोविंशे चतुर्विंशे च तानकम् ॥ ४१ ॥ पंचविंशे च तीर्थानि षड्विंशे च त्रियंबकः ॥ अष्टाविंशे धनेशश्च ऊनविंशे सरस्वती ॥ ४२ ॥ त्रिंशद्योगे शिवः प्रोक्तः पातालमेकत्रिंशके ॥ अहोरात्रश्च द्वात्रिंशे चतुस्त्रिंशे च जाह्नवी ॥ ४३ ॥ पंचत्रिंशे तदंतः स्याच्छते पूर्णे दिवाकरः ॥ सहस्रे च शिवो ज्ञेयश्चायुते मेरुरुच्यते ॥ ४४ ॥ लक्षे ब्रह्मा तथा कोट्यां देवो नारायणः परः ॥ पुंप्रकृत्यात्मकं चान्यच्छारदालिपिमातृका ॥४५॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुद्धब्रह्ममयं नित्यं ज्ञानरूपं परं महत् ॥ यस्मिन्नव्यसनादेव शुचौ चाप्यशुचिस्थले ॥ क्षणे ब्रह्ममयं याति इत्याह भगवान्मनुः ॥ ४६ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागेऽकमाहात्म्यकथनं नामाष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ अंतर्वेदिं प्रवक्ष्यामि ब्रह्मणोक्तं युगांतरे ॥ बहिर्वेदं तथैवोक्तं शस्तंस्याद्वापरे कलौ ॥ १ ॥ ज्ञानसाध्यं तु यत्कर्म अंतर्वेदीति कथ्यते ॥ देवतास्थापनं पूजा बहिर्वेदिरुदाहृता ॥ २ ॥ प्रपापूर्तादिकं चैव ब्राह्मणानां च तोषणम् ॥ गुरुभ्यः परिचर्या च बहिर्वेदी द्विधा मता ॥ ३ ॥ अकामेन कृतं कर्म कर्म च व्यसनादिकम् ॥ अंतर्वेदी तदेवोक्तं बहिर्वेदी विपर्ययः ॥ ४ ॥ धर्मस्य कारणं राजा धर्ममेतद्भवेन्नृपः ॥ तस्मान्नृपं समाश्रित्य बहिर्वेदी ततो भवेत ॥ ५ ॥ सप्ताशीतिर्बहिर्वेदी सारमेषां तृतीयकम् ॥ देवतास्थापनं चैव प्रासादकरणं तथा ॥ ६ ॥ तडागकरणं चैव तृतीयं न चतुर्थकम् ॥ पंचमं पितृपूजा च गुरुपूजापुरःसरा ॥ ७ ॥ अधिवासः प्रतिष्ठा च देवतानामविक्रिया ॥ प्रतिमाकरणं चैव वृक्षाणामथ रोपणम् ॥ ८ ॥ त्रिविधा सा विनिर्दिष्टा उत्तमाःचाथ मध्यमा ॥ कनिष्ठा शेषकल्पश्च सर्वकार्येष्वयं विधिः ॥ ९ ॥ त्रिधा भवति सर्वत्र प्रतिष्ठादिविधिर्मतः ॥ पूजाहोमादिभिर्दानैर्मानतश्च त्रिभागतः ॥ १० ॥ त्र्यहसाध्यविधानेन अष्टाविंशतिदेवताः ॥ त्रिधा भवति सर्वत्र प्रतिष्ठादिविधिर्मतः ॥ ११ ॥ प्रत्यहं पूजयेत्तत्र जापकास्तत्र षोडश ॥ उत्तमोऽसौ विधिः कृत्स्नो ह्यश्वमेधफलप्रदः ॥ १२ ॥ चत्वारो याजकास्तत्र त्रयोविंशतिदेवताः ॥ ग्रहदिक्पालवारुण्यं पृथिवी च शिवस्तथा ॥ १३ ॥ एकाहेनैव पूजा च मध्यमः कथितो विधिः ॥ गणेशग्रहदिक्पालान्वरुणं च शिवं तथा ॥ १४ ॥ संपूज्य पूज्यते यत्र कनिष्ठोऽसौ विधिः स्मृतः ॥ एकवृक्षश्चैकरूपैः प्रतिमाक्षुद्रदेवताः ॥ १५ ॥ नलिनीदीर्घिकागर्तवापीमलप्रपादिकम् ॥ एषां संस्कारकार्येषु प्रतिमानां परिष्क्रिया ॥ १६ ॥ अग्निकार्यं ततः कृत्वा न कुर्याद्विधिविस्तरम् ॥ गणेशग्रहदिक्पालान्पूजयेदुपचारतः ॥ १७ ॥ वाप्यादेः पुष्करिण्याश्च क्षिपेद्गंगाजलं ततः ॥ उलूखलद्वयेनापि जीर्णानां तु कदाचन ॥ १८ ॥ सेतुप्रासादवापीनां प्रतिष्ठां नैव कारयेत् ॥ प्रासादः सेतवश्चैव तडागाद्यास्तथैव च ॥ १९ ॥ त्रिभिर्वर्णैः प्रतिष्ठार्हा जीर्णानां तु समुद्धृताः ॥ मुनयो मानमिच्छंति अमानं न हि दृश्यते ॥ २० ॥ तस्मान्मानं प्रवक्ष्यामि यन्मानं यादृशं फलम् ॥ षष्टिहस्तप्रमाणेन तदुक्तं वारणोदितम् ॥ २१ ॥ एकषष्टिहस्तमितं प्रासादं चोत्तमं विदुः ॥ मध्यं तदर्धं विज्ञेयं कनिष्ठं तत्परं स्मृतम् ॥ २२ ॥ अथ वा देवमानेन कर्तव्यं भूतिमिच्छता ॥ यस्तडागं नवं कृत्वा जीर्णं वा नवतां नयेत् ॥ ॥ २३ ॥ सर्वं कुलं समुद्धृत्य स्वर्गलोके महीयते ॥ वापीकूपतडागाश्च उद्यानप्रवहास्तथा ॥ २४ ॥ पुनः पुनश्च संस्कार्यो लभते मौक्तिकं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

फलम् ॥ गुणानां च प्रमाणेन प्रतिमानं विभागतः ॥ २५ ॥ द्विशतेन शतेनापि प्रासादस्यैष निश्चयः ॥ सहस्रहस्तविस्तारं दैर्घ्येणाष्टाधिकं भवेत् ॥ २६ ॥ तडागं तं विजानीयात्प्रथमं मानमीरितम् ॥ मध्यं चतुःशतेनापि प्रस्तावे दशहीनकम् ॥ २७ ॥ कनिष्ठं त्रिशतं चैव प्रस्थे स्याद्विंशहीनकम् ॥ तदर्धेन कलौ ज्ञेयं तदर्धेन तदर्धकम् ॥ २८ ॥ तडागमानं विज्ञेयं त्रिवर्गफलदायकम् ॥ अथ पुष्करिणीपक्षे द्वे शते मानमुत्तमम् ॥ २९ ॥ तडागे द्विगुणा नेमी मानार्धे गर्तमीरितम् ॥ तत्क्षेत्रं वारुणं स्थानं त्र्युदितं तद्बहिः स्मृतम् ॥ ३० ॥ चतुर्थं चैव गांधर्वं पैशाचं पंचमं विदुः ॥ यक्षस्थानमिता भागे एवं सर्वक्रमाणि हि ॥ ३१ ॥ अशीतिहस्तमानेन नलिन्या मणिरुच्यते ॥ पञ्च हीनं च प्रस्तावे एवं मानविदो विदुः ॥ ३२ ॥ षष्टिहस्तेन नलिनी प्रस्तावे तुर्यहीनकम् ॥ चतुःषष्टिहस्तमिता दीर्घिका च प्रकीर्तिता ॥ ३३ ॥ तुर्यहीनं च प्रस्तावे गर्ते मानं न विद्यते ॥ ३४ ॥ अग्नौ रोगो बंधुनाशश्च याम्यां मृत्युश्चोग्रः प्राप्यते राक्षसे च ॥ भीतिश्चोग्रा प्राप्यते वायवीये तस्मादेता वर्जनीयाः प्रयत्नात् ॥ ३५ ॥ विप्रादीनां देवतानां समाजे मेरुस्थाने यत्र तत्रैव कुर्यात् ॥ नद्यास्तीरे वर्जयेद्वा स्मशाने तडागाद्वै आश्रमादीञ्जनानाम् ॥ ३६ ॥ यदा प्रतिष्ठां न करोति मूढः प्रासादवाप्यादिषु पापचेताः ॥ भयं समाप्नोति च पापमुग्रं पदेऽहिना वै वधभागितां व्रजेत् ॥ ३७ ॥ यदा तु दीर्घासरसीतडागप्रासादकूपादिषु निर्मितानि ॥ कुर्वंति चान्यानि यदा मखानि भवंति नैवास्य फलप्रदानि ॥३८॥ यदप्रतिष्ठेषु निपानकेषु प्रासादकूपेषु वनादिकेषु ॥ प्रतिष्ठिते यत्फलमाप्नुवंति फलं तदाल्पाल्पकमाहुरस्य ॥३९॥ तस्मात्प्रतिष्ठां विधिना जलादेः कुर्याद्यथेष्टं प्रयतो मनुष्यः ॥ पुण्यार्जनेनैव धनेन काले स्ववित्तसाध्येन शुभाशयेन ॥ ४० ॥ प्रसादे मृन्मयं पुण्यं मयैतत्कथितं द्विजाः ॥ तस्मा च्चतुर्गुणं प्रोक्तं तृणकाष्ठमये तथा ॥ ४१ ॥ तृणमये शतमयं तदर्धं नववल्कले ॥ तस्माद्दशगुणं प्रोक्तं कृते दारुमये भवेत् ॥ ४२ ॥ ततो दशगुणं प्रोक्तमिष्टिकारचिते शुभे ॥ तस्माच्छतगुणं शैले सहस्रं ताम्ररौप्यके ॥ ४३ ॥ ततश्च शतसाहस्रं सौवर्णे द्विजसत्तमाः ॥ अनंतफलमाप्नोति रत्नादि रचिते तथा ॥ ४४ ॥ यदतीतं भविष्यच्च कुलानामयुतं नरः ॥ विष्णुलोकं नयत्याशु कारयित्वा हरेर्गृहम् ॥ ४५ ॥ कनिष्ठं मध्यमं श्रेष्ठं कारयित्वा हरेर्गृहम् ॥ अर्धं च वैष्णवं लोकं मोक्षं च लभते क्रमात् ॥ ४६ ॥ हस्तानां षोडशैर्यावत्प्रस्थे स्यात्करहीनकम् ॥ तृणवंशमये मानं मध्यं चार्ककरं भवेत् ॥ ४७ ॥ कनिष्ठं तारहस्तं स्यादुत्तमं पचविंशतिः ॥ सर्वोत्तमं च द्वात्रिंशच्चतुष्कोणे महाफलम् ॥ ४८ ॥ पुरद्वारं च कर्तव्यं चतु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रत्नं समं भवेत् ॥ अष्टकोणं न कर्तव्यं त्रिपुरं च कलौ युगे ॥ ४९ ॥ सुरवेश्मनि यावंतो द्विजेन्द्राः परमाणवः ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ५० ॥ कर्तुर्दशगुणं प्रोक्तमापानपरिपालकः ॥ पतितान्युद्धरेद्यस्तु स सर्वं फलमश्नुते ॥ ५१ ॥ पतितं पतमानं च तथार्द्धस्फुटितं तथा ॥ समुद्धृत्य हरेर्वेश्म द्विगुणं फलमाप्नुयात् ॥ ५२ ॥ पतितस्य तु यः कर्ता पतमानस्य रक्षिता ॥ विष्णोरधितलस्यैव मानवः स्वर्गभाग्भवेत् ॥ ५३ ॥ यः कुर्याद्विष्णुप्रासादं ज्योतिर्लिंगस्य वा क्वचित् ॥ सूर्यस्यापि विरिंचेश्च दुर्गायाः श्रीधरस्य च ॥ ५४ ॥ स्वयं स्वकुलमुद्धृत्य कल्पकोटिं वसेद्दिवि ॥ स्वर्गाद्भ्रष्टो भवेद्राजा धनी पूज्यतमोपि वा ॥ ५५ ॥ देवीलिंगेषु योनौ वा कृत्वा देवकुलं नरः ॥ स्मरत्वं प्राप्नुयाल्लोके पूजितो दिवि सर्वदा ॥ ५६ ॥ प्रावृट्काले स्थितं तोयमग्निष्टोमफलं लभेत् ॥ शरत्कालस्थितं तोयं यज्ञतोयाद्विशिष्यते ॥ ५७ ॥ निदाघकाले पानीयं यस्य तिष्ठति वापिनः ॥ स्वर्गं गच्छेत्स नरकं न कदाचिदवाप्नुयात् ॥ ५८ ॥ एकाहं तु स्थितं तोयं पृथिव्यां द्विजसत्तमाः ॥ कुलानि तारयेत्तस्य सप्त सप्त पराणि च ॥ ५९ ॥ पूर्वं पितृकुले सप्त तद्वन्मातृकुले द्विजाः ॥ चतुर्दशमिदं ज्ञेयं शतलेखं ततः शृणु ॥ ६० ॥ पितुरूर्ध्वं कुलं विंशं मातुरूर्ध्वं कुलं तथा ॥ तद्वत्परं विजानीयाद्भार्यायाः पंच एव च ॥ ६१ ॥ पंच वै मातृतश्चास्य पितुर्मातामहे कुले ॥ पंच पंच विजानीयान्मातुर्मातामहस्य च ॥ ६२ ॥ गुरोः पितृकुले पंच तस्य मातृकुले तथा ॥ आचार्यस्य कुले द्वंद्वं दशराजकुलस्य च ॥ ६३ ॥ राज्ञो मातामहकुले पंच चैव प्रकीर्तिताः ॥ एकोत्तरं शतकुलं परिसंख्यातमेव च ॥६४॥ आत्मना सह विप्रेंद्रा उद्धारः संमतः स्मृतः ॥ कुर्याद्देवार्चनं तीर्थे स्वविमुक्ते दशार्णवे ॥६५॥ समुद्धरेत्कुलशतं शृणु विंशकुलं द्विज ॥ पंच पंच च पित्रोश्च पितुर्मातामहस्य च ॥ ६६ ॥ मातुर्मातामहस्यैव जातिं द्वंद्वमुदाहृतम्॥गुरोः संतानके द्वंद्वं तद्वद्यादवसात्त्वतौ ॥६७॥ परपक्षस्य चैकं स्यादेकविंशं कुलं क्रमात्॥पानीयमेतत्सकलं त्रैलोक्यं सचराचरम्॥ ॥ ६८ ॥ पानीयेन विना वृत्तिर्लोके नास्तीति कर्हिचित्॥वारस्वस्थं पुष्पखंडं तोये पतति यावति ॥६९॥ तावत्कालं वसेत्स्वर्गे चान्ते ब्रह्मत्वमाप्नुयात् ॥ तस्मात्तोयोपरि गृहं प्रसादोपरि वर्जयेत्॥७०॥ सूर्यरश्मियुतं यद्वै तत्तोयं तु विनिंदितम्॥चंद्ररश्मिविहीनं यन्नामृतत्वाय कल्पते ॥७१॥ तस्माद्दशगुणं कुंडे तस्माद्दशगुणं ह्रदे॥देवानां स्थापनं कुर्यादविमुक्तफलं शुभम् ॥७२॥ सुस्थितं दुःस्थितं वापि शिवलिंगं न चालयेत् ॥ चालनाद्रौरवं याति न स्वर्गं न च स्वर्गभाक् ॥७३॥ उच्छन्ननगरग्रामे स्थानत्यागे च विप्लवे ॥ पुनः संसारधर्मेण स्थापयेदविचारयन् ॥७४॥ बाहुदंता

१ हे द्विजेन्द्राः सुरवेश्मनि यावन्तः परमाणवः स्युस्तावद्वर्षसहस्राणि कर्त्रा स्वर्गे पूजितो भवतीत्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिप्रतिमा विष्णोश्चान्यस्य सत्तमाः॥न चालयेत्स्थापिते च विप्रवृक्षं न चालयेत् ॥७५॥ केशवं हरिवृक्षं च मधूकं किंशुकं तथा॥ नाकाले स्थाप येज्जातु चालनाद्ब्रह्महा भवेत्॥७६॥देवालयस्य पुरतः कुर्यात्पुष्कारिणीं द्विजाः॥ब्राह्मणानां समाजे च राजद्वारे चतुष्पथे॥७७॥देवार्थे ब्राह्मणार्थे च सुखं कुर्याच्च सर्वतः ॥ पश्चिमे पुष्टिकामं तु उत्तरे सर्वकामदम् ॥ ७८ ॥ याम्ये स्वार्थं न कुर्वीत कोणे तु नरकं भवेत् ॥ मुखं प्रकल्पयेन्मध्ये केचि दुत्तरलंघनम् ॥ ७९ ॥ कुर्याद्दक्षिणपूर्वे तु अर्कहस्तप्रमाणतः ॥ तडागे तु फलाहस्तं हस्तिकं ह्रासयेत्क्रमात् ॥ ८० ॥ तृप्ये हस्तं नलिन्यादा वतो हीनं न कारयेत् ॥ गर्ततृणं कलाहस्तं तडागेऽत्र प्रचक्ष्यते ॥ ८१ ॥ हीने हीनतरं कुर्याद्धस्तमानेन ह्रासयेत् ॥ यूपस्तथा खादिर एव कार्यः श्रैपर्णिको धात्रिसमुद्भवश्च ॥ मानस्तथा षोडशहस्तसम्मितो रत्नात्सगण्डीयुगकामयोजितैः ॥ ८२ ॥ आनाहभग्ने च भवेच्च तस्य विंशां गुलो द्विगुणो मध्यगश्च ॥ मध्येंऽगुलैश्च हीनः कार्यः शुभदः सर्वदा स्यात् ॥ ८३ ॥ एवंविधश्चैव तडागयूपो मध्ये तथा षोडशहस्तसंमितः ॥ कूपे च यूपोप्यथ हस्तमात्रस्ततश्चतुर्हस्तमितः प्रकीर्तितः ॥ ८४ ॥ आरामयोगेऽप्यथ मण्डपे च कार्यश्चतुर्हस्तमितोऽथ यूपः ॥ संपूर्णमाने कथितं प्रमाणं हीने तु हीनं प्रवदंति तज्ज्ञाः ॥ हस्तद्वयं प्रापितव्यं तडागे हस्तः सार्धः पुष्करिण्यां प्ररोपः ॥८५॥ प्रादेशं वै हस्तमानं कूपयूपस्य रोपतः ॥ न कुर्याज्जलमग्नं च यूपं सर्वत्र सत्तमाः ॥ ८६ ॥ तडागे चापि आरामे स्थापयेच्च जलोपरि ॥ हस्तमर्धं तदर्धं स्यान्मानेनानेन दाप येत् ॥ वाप्यां गर्ते पुष्करिण्यां प्रकुर्याज्जलसंमितम् ॥ ८७ ॥ यावत्प्रतोलीगतरेणुसंगसंख्यागणो नो जरतामुपैति ॥ तावत्सुरेशः सुरलोकवासी प्रासादकृज्जातु न जायते हि ॥८८॥ किं वा वाच्यः पुष्करिण्या प्रभावः कर्ता यः स्याद्वारुणो ब्रह्मलोकात् ॥ यावत्कालो बाहुमात्रोद्धता स्याद्व ष्टिःप्रोक्ता न निवर्तेत्कदाचित् ॥ ८९ ॥ लक्षैकमाराममयोत्तमः स्यान्मध्यं तदर्धं च कनिष्ठमानम् ॥ तदर्धं वा प्रशस्तं तदनन्यं मुनयो वदंति ॥ विनार्जुनैर्बदरैः शैलुकैश्च हीनं कुयाच्छानलैः पातिलैश्च ॥ ९० ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे पूर्तनिर्णयो नाम नवमोऽ ध्यायः ॥ ९ ॥ ॥छ॥ ॥ सूत उवाच ॥ ॥ शोधयेत्प्रथमं भूमिं मितां कृत्वा ततो द्विजाः ॥ दशहस्तेन दण्डेन पञ्चहस्तेन वा पुनः ॥ १ ॥ वाहयेत्सदा वृषभैस्तडागार्थेऽपि भूमिकाम् ॥ देवागारस्य या भूमिः श्वेतैश्च वृषभैरपि ॥ २ ॥ या भूमिर्ग्रहयागार्थे तत्र वाहैरपि स्पृशेत् ॥ आरा मार्थे कृष्णवृषैः कूपार्थखननैरपि ॥ ३ ॥ वाहयेत्त्रिदिनं विप्राः पञ्चव्रीहींश्च वापयेत् ॥ देवपक्षे सप्तगुण आरामकरणे गुणः ॥ ४ ॥ मुद्गमापौ धान्य तिलाः श्यामाकश्चेति पञ्चमः ॥ मसूरश्च कलायश्च सप्तव्रीहिगणः स्मृतः ॥ ५ ॥ सर्षपश्च कलायश्च मुद्गो मापश्चतुर्थकः ॥ व्रीहित्रयं मापमुद्गौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्यामाको महिषो गणः ॥ ६ ॥ सुवर्णमृत्तिका ग्राह्या वर्णानामनुपूर्वशः ॥ बिल्ववृक्षैरियं कुर्याद्यूपशूनध्वजे दिने ॥७॥ अरत्निमात्रं विज्ञेयं प्रशस्तं यष्टिहस्तकम् ॥ ऊर्णासूत्रमयीं मूर्तिं कृत्वा कुर्याच्चतुष्टयम् ॥ ८ ॥ क्षीरदारुगर्तयुतं द्वादशांगुलमेव च ॥ ज्वालयेत्तिलतैलेन तथा केशरजेन वा ॥ ९ ॥ पूर्वदिक्प्रणवे सिद्धिः पश्चिमाशागतिः शुभा ॥ मरणे दक्षिणायां च हानिः स्यादुत्तरे स्थिते ॥ १० ॥ कल्पे विपत्करं विद्यात्तथा चैव च दिग्गते ॥ नारसिंहेन मनुना चाग्निं प्रज्वाल्य दापयेत् ॥ ११ ॥ मासे घटे तथा मासे कुर्याद्भूमिपरिग्रहम् ॥ सूत्रयेत्कीलयेत्पश्चान्महामाने द्विजोत्तमाः ॥ १२ ॥ ततो वास्तुबलिं दद्यात्खनित्रं परिपूजयेत् ॥ आब्रह्मन्निति मन्त्रेण खनयेन्मध्यदेशतः ॥ १३ ॥ आज्येन मधुयुक्तेन गात्रमेकं प्रलेपयेत् ॥ स्वर्णतोयैस्तथा रत्नतोयैः स्नात्वा प्रलेपयेत् ॥ १४ ॥ ईशानाभिमुखेनैव कूपपक्षे विदुर्बुधाः ॥ अकृत्वा वास्तुयागं च यस्तडागं समुत्सृजेत् ॥ १५ ॥ तस्य वैवस्वतो राजा धर्मस्यार्धं निकृन्तति ॥ प्रासादे च तथारामे महाकूपे तथैव च ॥ १६ ॥ गृहारंभे च विप्रेंद्रा दद्याद्वास्तुबलिं ततः ॥ शालैश्च खादिरैश्चैव पलाशैः केशरस्य च ॥१७॥ बिल्वस्य बकुलस्यैव कलौ यूपः प्रशस्यते ॥ शुना चक्रोदरकृतं तत्पार्श्वे तु ध्वजद्वयम् ॥ १८ ॥ सर्पाकारस्तडागे च कूपे कुम्भाकृतिर्भवेत् ॥ आरामे पद्मपुष्पाभश्छत्रकारस्तु मंडले ॥१९॥ कुर्याच्छुनाकृतिं सेतौ विष्णुगेहे गदाकृतिम् ॥ अश्वाकारं चाश्वमेधे नरमेधे नराकृतिम् ॥२०॥ गोयागे च वृषाकारं गृहयागे ध्वजाकृतिम् ॥ श्मशानगोप्रचारार्थं चैत्यवृक्षालयोत्तमाः ॥ २१ ॥ चक्राकारो लक्षहोमे कोटिहोमे हलाकृतिः ॥ नक्षत्राणि तथा मूलं शस्यते द्रुमरोपणे ॥ २२ ॥ एवं शस्योदितां भूमिं शुद्धां पूर्वप्लवान्विताम् ॥ परिगृह्य यजेदेवं वनपालं शिखिध्वजम् ॥२३॥ सोमं च नागराजानं ततो बीजं सुशोधयेत् ॥ आनयेद्धारयेत्पश्चाद्रौद्रतापेन तापयेत् ॥ ॥२४॥ दिनद्वयांतरे चैव मंत्रैश्च परिमंत्रयेत् ॥ गर्भाधानं ततः कुर्याद्विष्णुमंत्रं जपंस्त्रिधा ॥ २५ ॥ एवमस्येति मंत्रेण त्रिधा जप्त्वा विमार्जयेत् ॥ देहि मेति च मंत्रेण संप्रोक्ष्य दशवारिणा ॥२६॥ इत्यगृहीतमनुना पञ्चधा परिमंत्रितम् ॥ त्र्यंबकेनेति मंत्रेण बीजमारोपयेत्ततः ॥ २७ ॥ भार्यामृतुमतीं स्नात्वा पञ्चमेऽहनि सत्तमाः ॥ उत्संगे स्थापयित्वा च चुम्बयेन्मंत्रयेत्ततः ॥ २८ ॥ एवं वृक्षस्य संस्कारमध्येऽपि त्वनुगच्छति ॥ तेन पुत्रत्वमाप्नोति नात्र कार्या विचारणा ॥ २९ ॥ तुलस्या बीजमादाय वैष्णवर्क्षे द्विजोऽहनि ॥ खानयेदपि गोमूत्रबिंदुतोयैः प्रसेचयेत् ॥ ३० ॥ एतां तु स्वर्गमाप्नोति सितकुंभे निपातयेत् ॥ एकरात्रं परिस्थाप्य तत आरोपयेद्भुवि ॥ ३१ ॥ अविधौ कूपवाप्यादौ खनने सूयते क्वचित् ॥ कुर्वंति सहकारादिरोपणं ये नराधमाः ॥ लभंते न फलं तेषामिह चाभ्येत्यधोगतिम् ॥ ३२ ॥ नदीतीरे श्मशाने च स्वगृहस्य च दक्षिणे ॥ तुलसीरोपणं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृत्वा याति कर्ता यमालयम् ॥ ३३ ॥ पत्रपुष्पफलानां च रजोरेणुसमागमाः ॥ पोषयंति च पितरं प्रत्यहं प्रतिकर्मणि ॥ ३४ ॥ यस्तु वृक्षं प्रकुरुते छायापुष्पफलोपगम् ॥ पथि देवालये चापि पापात्तारयते पितॄन् ॥ कीर्तिश्च मानुषे लोके प्रत्यभ्येति शुभं फलम् ॥ ३५ ॥ अतीतानागताश्चातः पितॄन्स स्वर्गतो द्विजाः॥ तारयेद्वृक्षरोपी च तस्माद्वृक्षं प्ररोपयेत् ॥३६॥ अपुत्रस्य हि पुत्रत्त्वं पादपा इह कुर्वते ॥ यत्नेनापि च विप्रेंद्रा अश्वत्थारोपणं कुरु ॥ ३७ ॥ शतैः पुत्रसहस्राणामेक एव विशिष्यते ॥ कामेन रोपयेद्विप्रा एकद्वित्रिप्रसंख्यया ॥ ३८ ॥ मुक्तिहेतुः सहस्राणां लक्षकोटीनि यानि च ॥ धनी चाश्वत्थवृक्षे च अशोकः शोकनाशनः ॥३९॥ प्लक्षो भार्याप्रदश्चैव बिल्व आयुष्यदः स्मृतः ॥ धनप्रदो जंबुवृक्षो ब्रह्मदः प्लक्षवृक्षकः ॥ ४० ॥ तिंदुकात्कुलवृद्धिः स्याद्दाडिमी कामिनीप्रदः ॥ बकुलो वंजुलश्चैव पापहा बलबुद्धिदः ॥ ४१ ॥ स्वर्गप्रदा धातकी स्याद्वटो मोक्षप्रदायकः ॥ सहकारः कामप्रदो गुवाकः सिद्धिमादिशेत् ॥ ४२ ॥ सर्वशस्यं बलवले मधुके चार्जुने तथा ॥ कदंबे विपुला कीर्तिस्तिंतिडी धर्मदूपिकः ॥ ४३ ॥ जीवंत्या रोगशांतिः स्यात्केशरः शत्रुमर्दनः ॥ धनप्रदश्चैव वटो वटः श्वेतवटस्तथा ॥ ४४ ॥ पनसे मंदबुद्धिः स्यात्कलिवृक्षः श्रियं हरेत् ॥ कलिवृक्षं च शाखोट उदरावर्तकं तथा ॥ ४५ ॥ तथा च मर्कटीनीपरोपणात्संततिक्षयः ॥ शिंशपां चार्जुनं चैव जयंती हयमारकान् ॥ श्रीवृक्षं किंशुकं चैव रोपणात्स्वर्गमादिशेत् ॥ ४६ ॥ न पूर्वारोपयेज्जातु समिधं कंटकीद्रुमम् ॥ कुशं पद्मं जलजानां रोपणाद्गतिं व्रजेत् ॥ ४७ ॥ मंदारे कुलहानिः स्याच्छाल्मले शुक्रबुद्धिमान् ॥ निंबे पशुविनाशः स्याच्छत्राके कुलपांसलः ॥ ४८ ॥ उत्पन्ने कुलपातः स्यात्पशोरेव क्षयो भवेत् ॥ शत्रुवृद्धिः काकनादे बलपूगे हतश्रियः ॥ ४९ ॥ विना क्रतौ विरुद्धश्च न सिंहं द्विजसत्तमाः ॥ क्रतौ हि स्याद्विरुद्धश्च प्राप्नुयान्नरकाकृतिम् ॥ ५० ॥ सहकारसहस्राच्च वरिष्ठं धातकीद्वयम् ॥ तस्माच्चैव सहस्राद्धि पाटलैका विशिष्यते ॥ ५१ ॥ पाटलानां शतात्पश्चादेकरक्तवटो भवेत् ॥ वटानां द्विसहस्राच्च पंचकं नागकेशरम् ॥ ५२ ॥ तस्माद्वरिष्ठः श्रीवृक्षो जम्बूवृक्षः प्रशस्यते ॥ तस्माद्धिमवतो ज्ञेयः श्रीपर्णीवृक्ष उत्तमः ॥ ५३ ॥ तिंदुकस्य त्रयश्चैव जंबूवृक्षस्य पंचकम् ॥ कदंबार्जुनवृक्षस्य नारिकेरस्य च त्रयम् ॥ एवमुक्त्वा स धर्मात्मा कारयेत्कीदृशं बलम् ॥ ५४ ॥ कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ स्वर्गभोगं समश्नाति विधिवद्द्रुमरोपणे ॥ ५५ ॥ जन्मत्रयादिकं पापं विनाश्य स्वर्गमादिशेत् ॥ शतरोपी च ब्रह्मत्वं विष्णुत्वं च सहस्रके ॥ ५६ ॥ तुलसीरोपणाच्चैव आधिव्याधियुतो भवेत् ॥ वैशाखे कीर्तिमाप्नोति

१ [illegible] । २ [illegible] । ३ [illegible] ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्येष्ठे तु मरणं व्रजेत् ॥ ५७ ॥ आषाढे कीर्तिमाप्नोति श्रावणे परमां गतिम् ॥ भाद्रे धनागमश्चैव आश्विने कार्तिके क्षयः ॥ तुलसी त्रिविधा लोके कृते श्वेता प्रशस्यते ॥ ५८ ॥ किंचिच्छेदं च यः कुर्यादश्वत्थस्य वटस्य च ॥ श्रीवृक्षस्य च विप्रेंद्राः स भवेद्ब्रह्मघातकः ॥ ५९ ॥ मूलच्छेदेन विप्रेंद्राः कुलपातो भवेदनु ॥ वृक्षच्छेदी भवेन्मूक आधिव्याधिशतं भजेत् ॥ सायं प्रातश्च घर्मांते शीतकाले दिनांतरे ॥ ६० ॥ फलमाम्रकुलत्थश्च माषो मुद्गास्तिला यवाः ॥ नृत्यगीतपयःकेशफलपुष्पप्रदो भवेत् ॥ ६१ ॥ अविकाकसक्तुच्चूर्णं यवचूर्णानि यानि च ॥ गोमांसमुदकं चैव सप्तरात्रं निधापयेत् ॥ ६२ ॥ तमेकं सर्ववृक्षाणां फलपुष्पादिवृद्धिदम् ॥ रोहिमत्स्यस्य पित्तानि धान्याकं तत्र स्थापयेत् ॥ ६३ ॥ तेनोदकादिसेकश्च कृतो वै वृद्धिमादिशेत् ॥ तित्तिडीबीजमादाय इक्षुदंडेन मर्दयेत् ॥ ६४ ॥ तेनाशोके प्रसेकः स्यात्सहकारस्य वृद्धिमान् ॥ नालिकेरोदकं चैव माक्षिकैः सह सेचयेत् ॥ ६५ ॥ दोहदं सर्ववृक्षाणां पूगादीनां विशेषतः ॥ दशशिराबीजयुतादभिषेकाच्च जीवति ॥ ६६ ॥ प्राक्प्रसूतिर्गवादीनां छागादिमहिषस्य च ॥ जरायु तोयं वृक्षाग्रे स्थापयेदविचारयन् ॥ ६७ ॥ परस्य सहकारस्य फलं स्यान्नात्र संशयः ॥ मेषस्य च वितालस्य यवागूं च समाहरेत् ॥ ६८ ॥ तत्र मासैः सर्षपैश्च पूरयेन्मर्दयेत्ततः ॥ गुवाकवृक्षकं देव घर्षयेन्मर्दयेत्रिभिः ॥ ६९ ॥ मृतोऽपि जीवयेच्छीघ्रं म्रियमाणोऽपि जीवति ॥ निंबपत्रं योगपत्रं शतावरिपुनर्नवाम् ॥ ७० ॥ क्षीरिकाताम्रकैः पत्रैर्धूमं दद्याद्दिनत्रयम् ॥ सहकारस्य मूलेन कीटरोधो न जायते ॥ ७१ ॥ ततः प्राधान्यतो वक्ष्ये द्रुमाणां दोहदोऽन्यथा ॥ मत्स्योदकेन सिक्तेन आम्राणां वृद्धिरिष्यते ॥ ७२ ॥ पक्वाम्रं रुधिरं चैव दाडिमानां प्रशस्यते ॥ यवोदकं सगोमांसं केतकीनां प्रशस्यते ॥ ७३ ॥ क्षीरके बलवृद्धिः स्यात्तिंदुकः करमर्दकः ॥ मांसपूति रसामज्जा शोकताले गुवाकके ॥ ७४ ॥ सपूतिमांसं सघृतं नालिकेरस्य रोहितम् ॥ मधुयष्ट्युदकैः सेकात्सामान्यं निहितं भवेत् ॥ ७५ ॥ कपित्थबिल्वयोः सेकं गुडतोयेन सेचयेत् ॥ जातीनां मल्लिकानां च कुंदानां रंतिकस्य च ॥ ७६ ॥ गंधतोयसितकरं सर्पनिर्मोकधूपकम् ॥ कूर्ममांसमन्नरसं विडंगस्य च पुष्पकम् ॥ ७७ ॥ रथ्यावृक्षे प्रतिष्ठाप्य फलवाञ्जायते ततः ॥ वातसर्पस्य निर्मोकं तगराजगवस्य च ॥ ७८ ॥ दद्याद्धूपं धान्यमध्ये धान्यवृद्धिश्च जायते ॥ मयूरपत्रमादायच्छागरोमाणि सप्त वै ॥ ७९ ॥ एरंडतैलयोगेन दद्याद्धूपं निशागमे ॥ हिंगुकुसुमसंयोगान्मूषिकाणां परिन्यसेत् ॥ ८० ॥ करिविष्ठामृच्छविष्ठां कृत्तिकायां समाहरेत् ॥ निशातोये प्रसेकः स्यात्तत्क्षात्रमूलकं हरेत् ॥ ८१ ॥ अश्वत्थमूले दशहस्तमात्रं क्षेत्रं पवित्रं पुरुषोत्तमस्य ॥ अश्वत्थच्छायासलिलस्य मध्ये विशेषतो वै त्रिपथैव गंगा ॥ ८२ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बाहुविंशांतरे रोपेत्सहकारं स धर्मवित् ॥ कलाहस्तांतरं धात्रीं बकुलं वंजुलं तथा ॥ ८३ ॥ श्रेपर्णिकं च पुन्नागं श्रीवृक्षं द्विगुणं तरौ ॥ हस्ते शैलमये चैव उत्तमं मानमीरितम् ॥ ८४ ॥ शैलेष्टकादिरचिते चतुर्हस्ते तु संमिते ॥ वाप्यादीनां तु कूपानामेकवृक्षादिकस्य च ॥ ८५ ॥ श्रीविष्णो वृक्षपक्षे च वरुणेष्टं च कूपके ॥ गणेशं पूजयेत्कुम्भं दिक्पालांश्च विशेषतः ॥ ८६ ॥ अग्निकार्यं विना कुर्यात्प्रकुर्याच्च सतां गतिम् ॥ श्रुत्वा कृतिं विधानेन अन्येषां वा तथोद्भवम् ॥ ८७ ॥ अन्येषां चैव वृक्षे च तथा च तुलसीवने ॥ कुम्भे वनस्पतिः स्थाप्यः पूजयेद्धोमयेत्ततः॥ ८८ ॥ वृक्षान्वानेन संस्कृत्य वासोभिरभिवेष्टयेत् ॥ शुच्यमानमिदं ज्ञेयमन्येषां वा तथोद्भवम् ॥ ८९ ॥ तुलस्याः सहकारस्य ब्रह्मवृक्षस्य चैव हि ॥ अश्वत्थस्य वटस्यैव स्वर्णतामथ वेधयेत् ॥ ९० ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे दशमोऽध्यायः ॥ १० ॥ ॥छ॥ ॥ ॥ सूत उवाच ॥ ॥ अथ तंत्रविधिं वक्ष्ये पुराणेष्वपि गीयते ॥ तन्त्रे चैव प्रतिष्ठां च कुर्यात्पुण्यतमेऽहनि॥१॥शतवृक्षक्षुद्रवृक्षे दशद्वादश वृक्षके ॥ हृष्टिमात्रांतरे सेतौ कूपयागे समुत्सृजेत् ॥२॥ न कूपमुत्सृजेज्जातु वृक्षयागे कथंचन ॥ तुलसीवनयागे तु न चान्यं यागमाचरेत् ॥ ३ ॥ तडागयागे सेत्वादीन्न चारामे कदाचन ॥ न सेतुं देवयागे तु तडागं न समुत्सृजेत् ॥४॥ तंत्रे श्राद्धं पृथङ्नास्ति कर्तुर्भेदे पृथग्भवेत् ॥ शिवलिंगस्थापनायां न चान्यदेवस्थापनम् ॥५॥ स्वदेशे वर्जयेत्तं तं स्वतन्त्रेण विधीयते ॥ विपरीते कृते चापि आयुःक्षय इति स्मृतिः ॥६॥ तडागे पुष्करिण्यां वा आरामेऽपि द्विजोत्तमाः ॥ मानहीने मानपूर्णे दशहस्ते न दूषणम्॥७॥द्विसहस्राधिकं यत्र तत्प्रतिष्ठां समाचरेत्॥ दश द्वादशवृक्षे च आरामे पूर्ववद्द्विजाः ॥८॥ प्रतिष्ठां विल्ववृक्षे च अन्यथा कर्णवेधनम् ॥ कुर्याद्दोहददानं च तत्र निर्मंथनादिकम् ॥९॥ अनंतरं प्रदातव्या लाजा मूर्ध्न्यक्षतादिकम् ॥ १० ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि पूर्वभागे एकादशोऽध्यायः ॥ ११ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ प्रतिमालक्षणं वक्ष्ये यथाशास्त्रमतं द्विजाः ॥ प्रतिमां लक्षणैर्हीनां गृहीतां नैव पूजयेत् ॥ १ ॥ शैलजा दारुजा ताम्री मृद्भवा सर्वकामदा ॥ एकहस्ता द्विहस्ता वा सार्धहस्ता तथापि वा ॥ २ ॥ प्रासादमानमथवा अथवा सर्वलक्षणम् ॥ अष्टांगुलोत्सेधकं च न तु गेहेऽर्चयेत्कृती ॥ ३ ॥ देवागारस्य यद्द्वारं तस्मादष्टांगुलेन तु ॥ त्रिभागपिंडिका कार्या द्वौ भागौ प्रतिमा भवेत् ॥ ४ ॥ अंगुलं वै भवेद्वृद्धिरशीतिश्चतुरुत्तरा ॥ विस्तारमानतः कार्यं वदनं द्वादशांगुलम् ॥ ५ ॥ मुखत्रिभागे चिबुकं ललाटं नासिकां तथा ॥ कर्णौ नासिकया ग्रीवातुल्यौ वा नियतौ तु यौ ॥ ६ ॥ नयने द्व्यंगुले स्यातां त्रिभागा तारका भवेत् ॥ तृतीयतारकाभागे शुभदृष्टिं विचक्षणः ॥ ७ ॥ ललाटमस्तकग्रीवं कुर्यात्तत्सममेव तु ॥ परिणाहस्तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिरसो भवेद्द्वात्रिंशदंगुलः ॥ ८ ॥ तुल्यौ नासिकया ग्रीवा मुखेन हृदयांतरम् ॥ अथ विस्तारपंक्तिस्तु ततोऽर्धं तु कटिः सदा ॥ ९ ॥ बाहू च बाहुतुल्यौ च ऊरू जंघे च जाघनम् ॥ गुल्फावस्थस्तु पादः स्याद्द्वादितश्चतुरंगुलः ॥ षडंगुलस्तु विस्तारस्तुल्यांगुष्ठोंऽगुलत्रयम् ॥ १० ॥ प्रदेशिनी च तत्तुल्या हीना शेषान्नखानखम् ॥ चतुर्दशांगुलः पादस्यायामः परिकीर्तितः ॥ ११ ॥ एवं लक्षणसंयुक्ता सा पूज्या प्रतिमा शुभा ॥ अधरोष्ठस्तथैवोरुभ्रूललाटमनीषिकम् ॥ १२ ॥ गंडं च नियतं मूर्तौ कुर्यादंगसमुन्नतेः ॥ विशालनयनस्ताम्रपदो वायतलोचनः ॥ १३ ॥ सवितानलपत्रस्य चारुविद्याधरस्तथा ॥ वत्सप्रोक्तोऽतिमुकुटः कटकांगदहारवान् ॥ १४ ॥ अभ्यंगपदबन्धादि सामान्येनोपशोभि च ॥ सुप्रभामंडला चारु विचित्रमणिकुण्डला ॥ १५ ॥ कराभ्यां कांचनीं मालां प्रोद्वहंतीं शिरोरुहान् ॥ एवं लक्षणसंपन्नां कारयेद्द्विहितप्रदाम् ॥ १६ ॥ सुस्निग्धां वरदां सौम्यां द्वितीयाश्रमिणामिमाम् ॥ नवतालो भवेद्विष्णुर्वासुदेवस्त्रितालकः ॥ १७ ॥ नृसिंहः पञ्चतालः स्याद्धयग्रीवस्तु पंचमः ॥ नारायणश्चाष्टतालो महेशः पञ्चतालकः ॥ १८ ॥ नवताला भवेद्दुर्गा लक्ष्मीश्चैव त्रितालिका ॥ वाणीं त्रितालिकां विद्यात्सविता सप्ततालकः ॥ १९ ॥ दक्षिणे वासुदेवस्य करे चक्रं प्रतिष्ठितम् ॥ शंखो भवेच्च तदधो वामार्धे तस्य वै गदा ॥ २० ॥ तदधश्च भवेत्पद्मं श्रीवत्सेनोपशोभितम् ॥ सव्येऽर्धे तारकास्यं च त्रिनेत्रमुभयात्मकम् ॥ २१ ॥ पार्श्वे नलिनसिंहौ द्वौ सुभद्रां दक्षिणे न्यसेत् ॥ रुक्मिणीं वामभागे च तदधस्ताद्दिवींद्रकम् ॥ २२ ॥ कृतांजलिपुटस्थश्च नारदः कपिलस्तथा ॥ धर्माधर्मावुभौ पार्श्वे कर्तव्यौ स्रग्विणां वरौ ॥ २३ ॥ यदुग्रं वासुदेवस्य तथा नारायणस्य च ॥ वैपरीत्यं विजानीयान्माधवानां तथैव च ॥ २४ ॥ तीर्थे गिरौ तडागे च समीपे स्थापयेत्सुधीः ॥ नगरग्राममध्ये वा ब्राह्मणानां च संसदि ॥ २५ ॥ अविमुक्ते विशेषेण सिद्धक्षेत्रे दशार्णके ॥ त्रीण्युत्तरसहस्राणि पंचपंचोत्तराणि षट् ॥ २६ ॥ कुलानि पूर्वं विप्रेंद्राः समुद्धरति नान्यथा ॥ कलौ दारुमयः कार्यो ह्यशक्तौ मृन्मयोथ वा ॥ २७ ॥ चंदनागुरुभिः कुर्याद्बिल्वश्रीपर्णिकस्य च ॥ पद्मकाष्ठमयश्चैव वाममस्य तथैव हि ॥ २८ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ ॥ सूत उवाच ॥ ॥ अतः परं प्रवक्ष्यामि कुंडानामथ निर्णयम् ॥ तस्योद्धारं च संस्कारं शृणुध्वं द्विजसत्तमाः ॥ १ ॥ चतुरस्रं च वृत्तं च पादार्धं चार्धचंद्रकम् ॥ योन्याकारं चंद्रकं च अष्टार्धमथ पंचमम् ॥ २ ॥ सप्तार्धं च नवार्धं च कुंडं दशकमीरितम् ॥ भूमिं संशोध्य विधिवत्तुपकेशादिवर्जिताम् ॥ ३ ॥ भ्रामयेच्चोर्ध्वतस्तस्या भस्मांगाराणि यत्नतः ॥ अंकुरार्पणकं कुर्यात्सप्ताहादेव बुद्धिमान् ॥ ४ ॥ स्थानं :विमर्दितं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुर्यात्खनित्वा सेचयेज्जलैः ॥ पुष्टिहस्तोच्छ्रायमितं प्रकुर्यात्परिसूत्रयेत् ॥ ५ ॥ अर्कांगुलमितं सूत्रं चतुरस्रं प्रकल्पयेत् ॥ अष्टादशांगके क्षेत्रे न्यसेदेकं वहिस्ततः ॥ ६ ॥ मापयेत्तेन मानेन त्रिवृत्तं कुंडमुज्ज्वलम् ॥ पूर्ववद्विभजेत्क्षेत्रं भागैकं पुरतो न्यसेत् ॥ ७ ॥ वृत्तानि कालिकादीनि वहिस्त्रीणि विवर्जयेत् ॥ पद्मकुंडमिदं प्रोक्तं विलोचनमनोहरम् ॥ ८ ॥ दशधा भेदयेत्क्षेत्रे उर्ध्वाधोर्ध्वांगुलद्वयम् ॥ संपरिपातयेत्सूत्रं पाटयेत्तत्प्रमाणतः ॥ ९ ॥ पंचधा भेदिते क्षेत्रे कामं वा विभजेत्सुधीः ॥ न्यसेत्पुरस्तादेवांगं कोणार्धार्धप्रमाणतः ॥ १० ॥ योनिस्थानं प्रतिष्ठाप्य अश्वत्थस्य दलाकृति ॥ सूत्रद्वयं ततो दद्यात्कुंडं परिमितं भवेत् ॥ ११ ॥ चतुरस्रं समुद्धृत्य सूत्रं संकल्पयोगतः ॥ दिशं प्रति यथान्यायं पातयेच्च द्विजोत्तमाः ॥ १२ ॥ शृंगाटकं युग्मपुटं पडस्रं कुंडत्रयं बुधाः ॥ जलाशयारामकूपे नित्ये गृहमये यथा ॥ १३ ॥ चतुस्रं भवेत्कुंडं द्विजसंस्कारकर्मणि ॥ देवप्रतिष्ठायागे च गृहवास्तौ चतुर्थकम् ॥ १४ ॥ वसुंधरायोगभेदे· प्रपंचे वर्तमादिशेत् ॥ सोमेऽष्टौ पंकजं प्रोक्तं नरमेधाश्वमेधयोः ॥ १५ ॥ अंकुरार्पणयागे च वैष्णवे यागकर्मणि ॥ शिवदेव्योश्च जन्मादावष्टम्यां चार्धचंद्रकम् ॥ १६ ॥ मार्जारपौष्टिके वैरं रम्ये च शांतिके तथा ॥ शांतिप्रतिष्ठायागे तु शाक्तानां काम्यकर्मणि ॥ १७ ॥ पुरश्चरणकाम्येषु ज्वरादीनां विमोक्षणे ॥ एवंविधेषु कार्येषु योनिकुंडं प्रशस्यते ॥ १८ ॥ देवतातीर्थयात्रादौ महायुद्धप्रवेशने ॥ सौरे शांते पौष्टिके च पद्मपुरं कुंडमुत्तमम् ॥ १९॥ मारणोच्चाटने चैव तथा रोगोपशांतये ॥ वैष्णवानां कोटिहोमे नृपाणामतिशोचने ॥ २० ॥ अष्टास्रमब्जकुंडं च सप्तास्रं निधिसाधने ॥ राज्ञा साध्ये च पंचास्रं कन्याप्राप्तौ त्रिरस्रकम् ॥२१॥ यावन्निम्नं भवेदेव विस्तारस्तावदेव तु ॥ कुंडानुरूपतः कार्या मेखला सर्वतो बुधैः ॥ २२ ॥ अयुतादिषु होमेषु मेखलां योजयेत्सुधीः ॥ निम्नप्रमाणं चात्रापि मूले सार्धांगुलं त्यजेत ॥ २३ ॥ कोणवेदरसैर्मानं यथायोग्यमनुक्रमात् ॥ मुष्टिहस्ते समुत्सेधो सार्धांगुलपरिष्कृतः ॥ २४ ॥ अरत्निमात्रे कुंडे तु त्रिश्चैकांगुलतः क्रमात ॥ एकहस्तमिते कुंडे वेदाग्निनयनांगुलाः ॥ २५ ॥ सप्तमेखलकं युक्तं लक्षहोमे न शस्यते ॥ पंचमेखलकं वाथ लक्षकोट्यां च योजयेत ॥ २६ ॥ एकांगुलादिमानेन नेमिं संवर्धयेत्सुधीः ॥ चतुर्हस्तमिते कुंडे तावदेव गुणांगुलाः ॥ २७ ॥ वसुहस्ते भानुपंक्तियुग्महीनेऽपि ताः क्रमात् ॥ सर्वाः समा ग्रहमखे मेखलाश्च सहस्रके ॥ २८ ॥ पार्श्वतो योजयेत्तत्र मेखलास्ता यथाक्रमम् ॥ सार्धांगुल्यादिमानेन नेमिं संवर्धयेत्सुधीः ॥ २९ ॥ एकमेखलयागेन योजयेच्छक्तिभावतः ॥ होमाधिक्ये बहुफलमन्यूनं नाधिकं भवेत् ॥३०॥ कुंडस्य रूपं जानीयात्परमं प्रकृतेर्वपुः ॥ ततो होमे शतगुणं स्थंडिले स्वल्पकं फलम् ॥ ३१॥ पट्चतुर्धा गुणायामविस्तारोन्नतिशालिनी ॥ एका

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुलं तु योन्यग्रं कुर्यादीषदधोमुखम् ॥ ३२ ॥ एकैकांगुलतो योनिं कुंडशून्येषु वर्धयेत् ॥ सममध्ये मेखलायाः सपर्या या सुलक्षणा ॥ ३३ ॥ स्थापयेत्कुंडकोणेषु योनिं तां द्विजसत्तमाः ॥ कुंडानां कल्पयेन्नाभिं स्फुटमंबुजसन्निभाम् ॥ ३४ ॥ तत्तु कुंडानुरूपं वा सुव्यक्तं सुमनोहरम् ॥ योनिकुंडे योनिमब्जं कुंडे नाभिं च वर्जयेत् ॥ ३५ ॥ यावद्द्वयप्रमाणेन अर्धांगुलक्रमाद्बहिः ॥ नाभिं प्रवर्धयेदेकं कुंडानां रूपतो यथा ॥ ३६ ॥ तत्र तत्र भवेत्कुंडं बिंबशून्यं न होमयेत् ॥ शिवशक्तिसमायोगात्काम उत्पद्यते यतः ॥ ३७ ॥ अवटोपि उमादेवी बिंबः ख्यातः सदाशिवः ॥ न कुर्यादेकया हीनं मरणं च समुद्दिशेत् ॥३८॥ त्रयोदशांगुलं हित्वा वह्निहस्तमथापि वा ॥ महातीर्थे सिद्धक्षेत्रे यत्र शंभुगृहे कुले ॥ ३९ ॥ तस्य दक्षिणदिग्भागे अग्रतो मंडलं लिखेत् ॥ तत्र पूजा प्रकर्तव्या पूर्वमानेन चाश्रयेत् ॥४०॥ अर्कहस्तांतरे कुर्याच्छतो ध्वांते शतेन वा ॥ ४१ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ यस्य यज्ञस्य यन्मानं तत्तु तेनैव योजयेत् ॥ अमानेन हतो यज्ञस्तस्मान्मानं न हापयेत् ॥ १ ॥ शतार्धं प्रथमं मानं शतसाहस्रमेव च ॥ अयुतं च तथा लक्षं कोटिहोममतः परम् ॥२॥ अतः परं तु विभवे राजा वान्यो द्विजोतमाः ॥ न स सिद्धिमवाप्नोति अयागफलभाग्भवेत् ॥३॥ विपाकं कर्मणां सर्वं नरः प्राप्नोति सर्वदा ॥ शुभाशुभं ततो नित्यं प्राप्नोति मनुजः किल ॥ ४ ॥ युक्ताश्चापि ग्रहास्तत्र नित्यं शांतिकपौष्टिके ॥ तस्मात्प्रयत्नतो भक्त्या नित्यं पूजा यथाविधि ॥ ५ ॥ अद्भुते च तथा शांतिं कुर्याद्भक्तिसमन्वितः ॥ तस्माद्ग्रहाभिजनितं शुभाशुभफलं खलु ॥ ॥ ६ ॥ अद्भुतेषु च सर्वेषु अयुतं कारयेन्नरः ॥ होमं यथाभिरुचितं पौष्टिके काम्यकर्मणि ॥ ७ ॥ लक्षहोमं कोटिहोमं राजा कुर्याद्यथाविधि ॥ अन्यः शतादिकं कुर्यादयुतं विभवे सति ॥ ८ ॥ ग्रहाणां लक्षहोमस्तु कोटिहोमस्तथा कलौ ॥ निधिहोमं चाभिचारं तत्र कुर्याद्गृहाश्रमी ॥ ९ ॥ यत्र यत्र जपः कार्यो होमो वा यत्र कुत्रचित् ॥ मानं नैव च कर्तव्यं मानादौ चाष्टकं न्यसेत् ॥ १० ॥ युग्मसाध्यं न कर्तव्यं युग्मतो भयमादिशेत् ॥ लक्षे सप्ततालसंख्या कोटिहोमे च विंशतिः ॥ ११ ॥ एकत्रिंशद्दिनैर्वापि न कुर्याद्व्यत्ययं क्वचित् ॥ आरंभस्त्रिसहस्रः स्याद्द्वितीयेऽष्टसहस्रकः ॥ १२ ॥ तृतीये तु सहस्रं स्याद्ग्रहसाध्यः स्मृतो विधिः ॥ पश्चाहे च समारंभे सहस्रं जुहुयाद्बुधः ॥ १३ ॥ द्वितीयेऽह्नि द्विसाहस्रं तृतीये तु सहस्रकम् ॥ गुणसाहस्रकं तुर्ये पश्चाहे शेषमीरितम् ॥ १४ ॥ नवाहे कल्पयेल्लक्षमेकैकांगं दिने दिने ॥ पंचमे च तथा षष्ठे कुले भागद्वयाधिकम् ॥ १५ ॥ कोटिहोमे च तिथ्यंगे शतभागेन कल्पयेत् ॥ न न्यूनं नाधिकं कार्यमेतन्मानमुदाहृतम् ॥ १६ ॥ नित्यमेकं दिने दद्यात्पृथङ्गनित्यं





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न चाचरेत् ॥ स समाजे जपेन्नित्यं पञ्चतारेण स्विष्टकृत् ॥ १७ ॥ अयुते लक्षहोमे च कोटिहोमे च सर्वदा ॥ प्रथमे दिवसे कुर्याद्देवतानां च स्थापनम् ॥ १८ ॥ महोत्सवे द्वितीये तु बलिदानं तथैव च ॥ त्र्यहसाध्ये त्रिरात्रे च पूर्णं कृत्वा विसर्जयेत् ॥ १९ ॥ पञ्चाहे तु तृतीयेऽह्नि बलिदानं प्रशस्यते ॥ सप्ताहे चाष्टदिवसे नवाहे पंचमेऽहनि ॥ २० ॥ पञ्चाहे द्वादशाहे तु द्वात्रिंशत्षोडशेऽहनि ॥ इतोऽन्यथा न कुर्वीत नात्र यज्ञफलं लभेत् ॥ २१ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ कुण्डानामथ संस्कारे वक्ष्ये शास्त्रमतं यथा ॥ असंस्कृते चार्थहानिस्तस्मात्संस्कृत्य होमयेत् ॥ १ ॥ अष्टादश स्युः संस्काराः कुण्डानां तत्र दर्शिताः॥ तारेणावेक्षयेत्स्थानं कुशतोयैः प्रसेचयेत् ॥२॥ त्रिसूत्रीकरणं पश्चाद्वृत्तसूत्रं निपातयेत् ॥ वारेण कीलकं दद्यान्नारसिंहेन कुड्मलम् ॥३॥ जिह्वां प्रकल्पयेत्पश्चात्तस्मादग्निं समाहरेत् ॥ न च म्लेच्छगृहादग्निं न शूद्रनिलयात्क्वचित् ॥ ४ ॥ नदीपर्वतशालाभ्यः स्त्रीहस्तात्परिवर्जयेत् ॥ संस्कृत्य परिगृह्णीयात्त्रिधा कृत्वा समुद्धरेत् ॥ ५ ॥ तमग्निं प्रतिगृह्णीयादात्मनोऽभिमुखं यथा ॥ वह्निबीजेन मतिमाञ्छिवबीजेन प्रोक्षयेत् ॥ ६ ॥ वागीश्वरीमृतुस्नातां वागीश्वरसमागताम् ॥ ध्यात्वा समीरणं दद्यात्कामसुत्पद्यते ततः ॥ ७ ॥ कालबीजेन चैशान्यां योनावग्निं विनिक्षिपेत् ॥ पश्चाद्देवस्य देव्याश्च दद्यादाचमनीयकम् ॥ ८ ॥ पितृपिङ्गल दहदह पचयुग्मसुदीर्य च ॥ सर्वज्ञाज्ञापय स्वाहा मन्त्रोयं वह्निपूजने ॥ ९ ॥ वह्निबर्हिपि संयुक्ताः सादियांताः सबिंदवः ॥ वह्निमन्त्राः समुद्दिष्टा द्विजानां मंत्र ईरितः ॥ १० ॥ जिह्वास्तास्त्रिविधाः प्रोक्ता यज्ञदत्तेन सत्तमाः ॥ हिरण्यामाज्यहोमेषु होमयेत्संयतात्मकः ॥ ११ ॥ त्रिमध्वक्तैर्यत्र होमं कर्णिकायां च होमयेत् ॥ कनकास्यात्तु कृष्णास्याद्धिरण्या शुभ्रता तथा ॥ १२ ॥ बहुरूपातिरूपा च सात्त्विका योगकर्मसु ॥ विश्वमूर्तिस्फुलिंगिन्यौ धूम्रवर्णा मनोजवा ॥१३॥ लोहितास्यात्करालास्यात्कालीभासस्य इत्यपि॥ एताः सप्त नियुंजीत विज्ञेयाः क्रूरकर्मसु ॥१४॥ समिद्भेदेषु या जिह्वास्तास्तु तेनैव योजयेत् ॥ हिरण्यामाज्यहोमेषु होमयेत्संयतात्मकः ॥१५॥ त्रिमध्वक्तैर्यथा होमं कर्णिकायां च होमयेत् ॥ शुद्धक्षीरेण रक्तायां नैत्यिकेषु प्रभा स्मृता ॥ १६ ॥ बहुरूपा पुष्पहोमे कृष्णा चान्नेन पायसैः ॥ इक्षुहोमे पद्मरागा सुवर्णा पद्महोमके ॥१७॥ लोहिता पद्महोमे च श्वेता वै बिल्वपत्रके ॥ धूमिनी तिलहोमे च काष्ठहोमे करालिका ॥ १८ ॥ लोहितास्या पितृहोमे ततो ज्ञेया मनोजवा ॥ वैश्वानरं स्थितं होमे समिद्धोमेषु सत्तमाः ॥ १९ ॥ समानमाज्यहोमे च निषण्णं शेषवस्तुषु ॥ आस्यात्तु जुहुयाद्वह्नौ पिपर्त्ति सर्वकर्मसु ॥ २० ॥ कर्णहोमे तु वै व्याधिर्नेत्रे तद्वयमीरितम् ॥ नासिकायां मनःपीडा मस्तकेऽध्वा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न संशयः ॥ २१ ॥ गुह्ये विपत्करं चैव तस्मात्तत्र न होमयेत् ॥ साधारणमथो वक्ष्ये वह्नेर्जिह्वाश्च कीर्तिताः ॥ २२ ॥ प्रवक्ष्यामि विधिं कृत्स्नं यद्विशेषं पुनः शृणु ॥ घृताहुतौ हिरण्याख्या गगना पाणिहोमतः ॥ २३ ॥ वक्रा ख्याता महाहोमे कृष्णाभा सा क्रतौ मता ॥ सुप्रभा मोदकविधौ बहुरूपातिरूपिकाः ॥ २४ ॥ पुष्पपत्रविधौ होमे वह्नेर्जिह्वाः प्रकीर्तिताः ॥ न वा संकल्पयेत्कुण्डे शूद्राकार विभेदतः ॥ २५ ॥ इन्द्रकोष्ठं मस्तकं स्यादीशाग्नेये च मस्तके ॥ तत्काष्ठपार्श्वे द्वे नेत्रे द्वौ करौ च पदक्रमात् ॥ २६ ॥ अविशिष्टं भवेत्पुच्छं मध्ये चोदरसम्भवम् ॥ उदरे होमयेत्पुष्टिमन्नं पायसकं च यत् ॥ २७ ॥ हुत्वा व्रीहिगणं तत्र कर्णे पुष्पाहुतिं हुनेत् ॥ वामकर्णे वामनेत्रे हुनेदब्जादिकं बुधः ॥ २८ ॥ श्रवणे चैव नेत्रे च दक्षिणे चेक्षुखंडकम् ॥ वामपादे वामकरे अभिचारेषु शस्यते ॥ २९ ॥ मारणे पुष्पदेशे तु न चान्यं होमयेत्क्वचित् ॥ विपत्करं विजानीयाद्ध्वनिः सर्वविनाशकृत् ॥ ३० ॥ चन्दनागरुकर्पूरपाटलायूथिकानिभः ॥ पावकस्य सुतो गंधः समंतात्सुमहोदयः ॥ ३१ ॥ प्रदक्षिणस्त्यक्तकल्पा छत्राका शिथिला शिखा ॥ शुभदा यजमानस्य राज्यस्यापि विशेषतः ॥ ३२ ॥ छिन्नवृत्ताः शिखाः कुर्यान्मृत्युर्धनपरिक्षयः ॥ निर्वाप्यं मरणं विद्यान्महाधूमाकुलेऽपि च ॥ ३३ ॥ एवंविधेषु दोषेषु प्रायश्चित्तं समाचरेत् ॥ अष्टाविंशाहुतीस्त्यक्त्वा ब्राह्मणान्भोजयेत्ततः ॥ ३४ ॥ मूलेनाज्येन जुहुयाज्जुहुयात्पञ्चविंशतिम् ॥ महास्नानं प्रकर्तव्यं त्रिकालं हरिपूजनम् ॥ ॥ ३५ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ नित्यं नैमित्तिकं चैव यागादौ च समाप्तके ॥ होमावसाने प्रजपेदुपचारांश्च षोडश ॥ १ ॥ दद्यात्समीरणं पश्चात्पीठपूजां समाचरेत् ॥ गृहीत्वा रक्तपुष्पं च ध्यायेद्वह्निं यथाविधि ॥ २ ॥ इष्टं शक्तिस्वस्तिकाभीतिमुच्चैर्दीर्घैर्दोर्भिर्धारयन्तं वरांतम् ॥ हेमाकल्पं पद्मसंस्थं त्रिनेत्रं ध्यायेद्वह्निं बद्धमौलिं जटाभिः ॥ ॥ ३ ॥ पूर्वादिद्वारदेशेषु कामदेवं शतक्रतुम् ॥ वराहं षण्मुखं चैव गंधाद्यैः साधु पूजयेत् ॥ ४ ॥ आवाह्य स्थापयेत्पश्चादष्टौ मुद्राः प्रदर्शयेत् ॥ दत्त्वासनं स्वागतं च दद्यात्पाद्यादिकत्रयम् ॥ ५ ॥ अतः पूर्वादिपात्रेषु यावता च हुताशनम् ॥ सुवर्णवर्णममलं समिद्धं सर्वतोमुखम् ॥ ६ ॥ महोदरं महाजिह्वमाकाशत्वेन पूजयेत् ॥ तारकादीन्समाप्ते च गन्धैः पुष्पैः पृथग्विधैः ॥ ७ ॥ तत्रैव जिह्वास्त्रिविधा ध्यायेन्मंत्रपुरःसराः ॥ वक्ष्यमाणेन मंत्रेण उपचारैरनंतरम् ॥ ८ ॥ त्वमादिः सर्वभूतानां संसारार्णवतारकः ॥ परमज्योतीरूपस्त्वमासनं सफली कुरु ॥ ९ ॥ दद्यादासनमेतेन पुष्पगुच्छत्रयेण तु ॥ पुटांजलिं ततो बद्ध्वा पृच्छेत्कुशलपूर्वकम् ॥ १० ॥ वैश्वानर नमस्तेऽस्तु नमस्ते हव्यवाहन ॥ स्वागतं तु सुर



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रेष्ठ शांतिं कुरु नमोऽस्तु ते ॥ ११ ॥ नमस्ते भगवन्देव आपोनारायणात्मक ॥ सर्वलोकहितार्थाय पाद्यं च प्रतिगृह्यताम् ॥ १२ ॥ नारायणपरं धाम ज्योतीरूप सनातन ॥ गृहाणार्घ्यं मया दत्तं विश्वरूप नमोऽस्तु ते ॥ १३ ॥ जगदादित्यरूपेण प्रकाशयति यः सदा ॥ तस्मै प्रकाशरूपाय नमस्ते जातवेदसे ॥ १४ ॥ धनंजय नमस्तेऽस्तु सर्वपापप्रणाशन ॥ स्नानीयं ते मया दत्तं सर्वकामार्थसिद्धये ॥ १५ ॥ हुताशन महाबाहो देवदेव सनातन ॥ शरणं ते प्रयच्छामि देहि मे परमं पदम् ॥ १६ ॥ ज्योतिषां ज्योतीरूपस्त्वमनादिनिधनाच्युत ॥ मया दत्तमलंकारमलंकुरु नमोस्तु ते ॥ १७ ॥ देवीदेवा मुदं यांति यस्य सम्यक्समागमात् ॥ सर्वदोषोपशांत्यर्थं गन्धोऽयं प्रतिगृह्यताम् ॥ १८ ॥ त्वं विष्णुस्त्वं हि ब्रह्मा च ज्योतिषां गतिरीश्वर ॥ गृहाण पुष्पं देवेश सानुलेपं जगद्भवेत् ॥ १९ ॥ देवतानां पितॄणां च सुखमेकं सनातनम् ॥ धूपोऽयं देवदेवेश गृह्यतां मे धनंजय ॥ २० ॥ त्वमेकः सर्वभूतेषु स्थावरेषु चरेषु च ॥ परमात्मा पराकारः प्रदीपः प्रतिगृह्यताम् ॥ २१ ॥ नमोऽस्तु यज्ञपतये प्रभवे जातवेदसे ॥ सर्वलोकहितार्थाय नैवेद्यं प्रतिगृह्यताम् ॥ २२ ॥ हुताशन नमस्तुभ्यं नमस्ते रुक्मवाहन ॥ लोकनाथ नमस्तेऽस्तु नमस्ते जातवेदसे ॥ २३ ॥ इत्यनेन तु मन्त्रेण दद्याद्दिव्येऽप्यधीतकम् ॥ सर्वस्वं यज्ञसूत्रं च परमान्नं समाक्षिकम् ॥२४॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ यज्ञभेदं त्रिभेदं च वक्ष्ये शास्त्रमतं यथा ॥ यथावेदानुसारेण यथाग्रहणयोजनम् ॥ १ ॥ शतार्धे वह्निरुद्दिष्टः शतार्धे काश्यपः स्मृतः ॥ घृतप्रदीपके विष्णुस्तिलयागे वनस्पतिः ॥ २ ॥ सहस्रे ब्राह्मणो नाम अयुते हरिरुच्यते ॥ लक्षहोमे तु वह्निः स्यात्कोटिहोमे हुताशनः ॥३॥ वरुणः शांतिके ज्ञेयो मारणे ह्यरुणः स्मृतः ॥ नित्यहोमेऽनलो नाम प्रायश्चित्ते हुताशनः ॥ ४ ॥ लोहितश्चान्नयज्ञे यो ग्रहाणां प्रत्यनुक्रमात् ॥ देवप्रतिष्ठायागे तु लोहितः परिकीर्तितः ॥ ५ ॥ प्रजापतिर्वास्तुयागे मंडपे चापि पद्मके ॥ प्रपायां चैव नागाख्यो महादाने हविर्भुजः ॥६॥ गोदाने च भवेद्रुद्रः कन्यादाने तु गोऽजकः ॥ तुलापुरुषदाने च धाताग्निः परिकीर्तितः ॥ ७ ॥ वृषोत्सर्गे भवेत्सूर्योऽवसानांते रविः स्मृतः ॥ पावको वैश्वदेवे च दीक्षापक्षे जनार्दनः ॥ ८ ॥ त्रासने च भवेत्कालः क्रव्यादः शरदाहने ॥ पर्णदाहे यमो नाम ह्यस्थिदाहे शिखंडिकः ॥ ९ ॥ गर्भाधाने च मरुतः सीमंते पिंगलः स्मृतः ॥ पुंसवे त्विंद्र आख्यातः प्रशस्तो यागकर्मणि ॥ १० ॥ नामसंस्थापने चैवमुपन्यस्ते च पार्थिवः ॥ निष्क्रमे हाटकश्चैव प्राशने च शुचिस्तथा ॥ ११ ॥ षडाननश्च चूडायां व्रतादेशे समुद्भवः ॥

१ चूडाकर्मणि सभ्यः स्याद्व्रतादेशे च माधवः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वीतिहोत्रश्चोपनये समावर्ते धनंजयः ॥ १२ ॥ उदरे जठराग्निश्च समुद्रे वडवानलः ॥ शिखायां च विसुर्ज्ञेयः स्वरस्याग्निः सरीसृपः ॥ १३ ॥ अश्वाग्निर्मंथरो नाम रथाग्निर्जातवेदसः ॥ गजाग्निर्मंदरश्चैव सूर्याग्निर्विंध्यसंज्ञकः ॥ १४ ॥ तोयाग्निर्वरुणोनाम ब्राह्मणाग्निर्हविर्भुजः ॥ पर्वताग्निः क्रतुभुजो दावाग्निः सूर्य उच्यते ॥ १५ ॥ दीपाग्निः पावको नाम गृह्याग्निर्धरणीपतिः ॥ घृताग्निश्च नलो वायुः सूतिकाग्निश्च राक्षसः ॥ १६ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागेऽग्निनामवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥छ॥ ॥ सूत उवाच ॥ ॥ अथातो होमद्रव्याणां प्रमाणमभिधीयते ॥ प्रमाणे चाप्रमाणे च निष्फलं भवति ध्रुवम् ॥१॥ कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ॥ तत्समं पञ्चगव्यं च दधि दुग्धं तथा मधु ॥ २ ॥ मुष्टिमानेन पृथुका लाजाः स्युर्मुष्टिसंमिताः ॥ शर्करा मुष्टिमात्रा च शर्करातोलकं विदुः ॥ ३ ॥ त्रितोलकं गुडं विद्यादिक्षुपर्वविधिर्भवेत् ॥ एकैकं पत्रपुष्पाणि शालूकस्य त्रिमुष्टिकम् ॥४॥ एकलग्ने न जुहुयान्न पृथग्जुहुयात्कचित् ॥ सवृंतकं जपापुष्पं केशरं तत्सवृंतकम् ॥ ॥ ५ ॥ एकैकशश्च पद्मानां जलजानां तथैव च ॥ जीवंत्याः फलमानेन पिष्टकानां प्रसंख्यया ॥ ६ ॥ वसंतकं धात्रिमाने मोदकस्य प्रमाणतः ॥ एकैकशः फलानां च मातुलिंगत्रिखंडकम् ॥७॥ अष्टधा नालिकेरस्य पनसं दशधा भवेत् ॥ पञ्चबीजप्रमाणेन कूष्मांडं चाष्टधा भवेत् ॥८॥ उर्वारुकं चाष्टधा च गुडूची चतुरंगुलम् ॥ पूगमानं च मांसस्य सगुडं तत्र दृश्यते ॥९॥ अन्यत्र बदरीमानं तिंदुकं च त्रिधा कृतम् ॥ काष्ठं प्रादेशमात्रं स्याद्दूर्वायाश्च त्रिपत्रकम् ॥ १० ॥ भूर्जपत्रं च गृह्णीयाच्छमीं प्रादेशमात्रिकाम् ॥ व्रीहयो मुष्टिमात्राः स्युः शुक्तिमानेन सर्षपाः ॥ ११ ॥ मरिचाः स्युर्विमानेन मृणालं चाथ मूलकम् ॥ सप्तखंडं च वार्ताकं त्रिपुष्टं च त्रिधोदितम् ॥१२॥ चंदनागुरुकर्पूरकस्तूरीकुंकुमानि च ॥ तिंत्तिडीबीजमानेन समुद्दिष्टानि देशिकैः ॥ १३ ॥ समिदाप्लवने त्र्यंगतिलानामपि मध्यतः॥ दशकं प्लावनेनैव सहस्राणां शतं विना ॥ १४ ॥ एवं व्रीहिप्लावने च काष्ठवदिक्षुदंडकम् ॥ प्रोक्षणं मृदुपुष्पाणां लतादीनां तथैव च ॥ १५ ॥ पायसान्ने तथान्ने च मोदके पिष्टकेऽपि च ॥ शाल्यासक्तेन जुहुयाद्व्यत्यये व्यत्ययं फलम् ॥ १६ ॥ बिल्वपत्रस्य प्लवनं दंडं हित्वा च प्लावयेत् ॥ वृंतसंप्लावनादेव फलं हरति राक्षसः ॥ १७ ॥ बिल्वपत्रस्य पूर्वार्धप्राप्तमात्रेण योजयेत् ॥ पत्रत्रयं तथा होमे छिन्नेभिन्नेऽतिदूषणम् ॥ १८ ॥ न द्वित्रिप्लवनं कुर्यात्कृत्वा याति रसातलम् ॥ तस्माच्च पुत्रशिष्याद्यैर्ब्राह्मणैस्तत्त्वकोविदैः ॥ १९ ॥ पूर्वाशाभिमुखो भूत्वा पावयेच्च यथाक्रमात् ॥ न न्यूनं नाधिकं कुर्याच्छांतिपक्ष उदङ्मुखः ॥ २० ॥ पायसान्यन्यदेवेषु यत्नेन परिवर्जयेत् ॥ न चाग्नौ दापयेद्यत्नादेतेभ्यः प्रतिपादयेत् ॥२१॥ कनिष्ठांगुलिमासाद्य प्रकुर्यात्पर्वभूषणम् ॥ गुणदोरकमानेन तावद्धोमगतिर्बुधाः ॥२२॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अंगुलैर्द्वित्रिचतुरैः पत्रहोमाकृतिक्रमात् ॥ २३ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागेऽष्टादशोऽध्यायः ॥ १८ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ श्रीपर्णी शिंशपा क्षीरी विल्वः खदिर एव च ॥ स्रुवे प्रशस्तास्तरवः सिद्धिदा यागकर्मणि ॥ १ ॥ प्रतिष्ठायां प्रशस्तास्तु धात्रीख दिरकेशराः ॥ संस्कारे शशिभिन्नो च धात्री धात्रा विनिर्मिता ॥ २ ॥ संप्राशे यः स्रुवः प्रोक्तः संस्कारे यज्ञसाधने ॥ प्रतिष्ठायां तु कथितास्त दन्ये शास्त्रवेदिभिः ॥ ३ ॥ स्रुवं स्रुचमथो वक्ष्ये यदधीनश्च जायते ॥ यज्ञे न सर्वकं धार्यमक्षरेण च व्यत्ययः ॥ ४ ॥ तस्यादौ च स्रुवं वक्ष्ये यच्च मानं यदास्पदम् ॥ काष्ठं गृहीत्वा विल्वस्य रिक्तादितिथिवर्जिते ॥ ५ ॥ समुपोष्य च रचयेदामिषाणि न च स्मरेत् ॥ वर्जयेद्ग्राम्यधर्मं च निर्माणे स्रुक्स्रुवस्य वै ॥ ६ ॥ काष्ठं गृहीत्वा विभजेद्भागांस्त्रिंशत्तथा पुनः ॥ विंशत्यंगुलमानं तु कुंडवेदिसमोदरम् ॥ ७ ॥ कटाहाकारनिम्नं च स्रुवं कुर्याद्वि चक्षणः ॥ धात्रीफलसमाकारं स्वधानिम्नं सुशोभनम् ॥ ८ ॥ वेदीं शूर्पाकृतिं कुर्यात्कुंडानि परिकल्पयेत् ॥ हंसवत्त्रिगुणा वापि हस्तेनाऽनुमुखं लिखेत् ॥ ९ ॥ स्रुवं चतुर्विंशतिभिर्भागैश्च रचयेत्स्रुवम् ॥ द्विविंशं स्यात्कुंडमानमदैवे तस्य कीर्तितम् ॥ १० ॥ चतुर्भिरंगैरानाहं कर्णाद्यग्रं ततः स्रुवम् ॥ अंगद्वयेन विलिखेत्पंके मृगमदाकृतिम् ॥ ११ ॥ दंडमूलाश्रये दंडी भवेत्कंकणभूपितः ॥ सौवर्णस्य च ताम्रस्य कार्या दर्वी प्रमाणतः ॥ १२ ॥ श्रेवर्णिकोद्भवं यच्च इंदुवृक्षसमुद्भवम् ॥ क्षीरवृक्षसमुद्भूतं द्वादशांगुलसंमितम् ॥ १३ ॥ द्व्यंगुलं मंडलं तस्य दर्वी सा यज्ञसाधने ॥ चत्वारिंशत्तोलि काभिरिति ताम्रमयस्य च ॥ १४ ॥ पंचांगुलं मंडलं च अष्टहस्तं च दंडकम् ॥ अन्नादिपायसविधौ दर्वी यज्ञस्य साधने ॥ १५ ॥ दशतो लकमानेन सा च दर्वी उदाहृता ॥ आज्यसंशोधनार्थं तु सा तु ताम्रमयस्य च ॥ १६ ॥ षोडशांगुलमानेन सर्वाभावे च पैप्पलीम् ॥ आज्य स्थालीं घृतमयीं मृन्मयीं च समाश्रयेत् ॥ १७ ॥ अथ ताम्रमयी कार्या न च तां तत्र योजयेत् ॥ १८ ॥ इति श्रीभविष्ये महापुराणे मध्यम पर्वणि प्रथमभागे स्रुवदर्वीनिर्णयो नामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ अथ पूर्णविधिं वक्ष्ये यथा चंद्रार्थवेदि नाम् ॥ यस्य सम्यगनुष्ठानात्संपूर्णं स्यादिति स्थितिः ॥ १ ॥ होमपूर्तौ मोक्षकल्पः पूजांतेऽर्घ्यं विधीयते ॥ अथ तस्यामपूर्णायां हतश्रीर्यज्ञभ्रं शता ॥ २ ॥ तस्मात्सर्वप्रयत्नेन स्रुवाधो विन्यसेच्चरुम् ॥ पूर्णं दत्त्वा सवित्रेऽर्घ्यं ब्राह्मणान्भोजयेत्ततः ॥ ३ ॥ गृहं प्रविश्य च ततः कुलपूजां स माचरेत् ॥ सप्तते देहि मे पूर्णां पुनात्विति ऋचा क्रमात् ॥ ४ ॥ नियोजयेत्प्रतिष्ठायां नित्यनैमित्तिके शृणु ॥ पुनात्विति ऋचा पूर्णा प्रथमा परिकीर्तिता ॥ ५ ॥ सप्ततेति द्वितीया स्याद्देहिमेति तृतीयिका ॥ पूर्णा दर्वी चतुर्थी स्यात्कुलेवस्थाप्य देशिकः ॥ ६ ॥ उत्थाय दद्यात्पूर्णां तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नोपविश्य कदाचन ॥ कनकायां च जिह्वायां रक्तायां ग्रहयागके ॥ ७ ॥ ग्रहहोमे शतांते च पूर्णा एका विधीयते ॥ सहस्रांते युगं दद्यादयुतांते युगद्वयम् ॥ ८ ॥ सहस्रांते ददेदेकं पुष्पहोमे च सत्तमाः ॥ पूर्णां त्वेकसहस्रं तु दद्याद्यज्ञफलेप्सया ॥ ९ ॥ मृदुपुष्पाकृतौ त्वेका केवले चेक्षुहोमके शतं द्वे च शते चैव गर्भाधानान्नप्राशने ॥ १० ॥ सीमंतोन्नयने चैव प्रायश्चित्ताकृतीषु च ॥ वैश्वदेवे च नित्ये च पूर्णा त्वेका विधीयते ॥ ११ ॥ एवं स्रुचौ समौ कृत्वा उपर्युपरि विन्यसेत् ॥ यथा न व्ययते कृत्वा न कल्पयति यावता ॥ १२ ॥ ऋषिछंदादिकं श्रुत्वा प्रतिमंत्रस्य सत्तमाः ॥ अन्यथाल्पाल्पकफलं तस्मात्संन्यस्य होमयेत् ॥१३॥ सप्ततेति ब्राह्मणस्य ऋषिः कौंडिन्य ईरितः ॥ जगती च भवेच्छंदो देवताग्निः प्रकीर्तितः ॥ ॥ १४ ॥ देहि मेति च मंत्रस्य प्रजापतिर्ऋषिः स्मृतः ॥ अनुष्टुप् च भवेच्छंदो देवतास्य प्रजापतिः ॥ १५ ॥ पूर्णा दर्वीति मन्त्रस्य शतक्रतुर्ऋषिः स्मृतः ॥ छंदोनुष्टुप्समाख्यातं वह्निश्चैवात्र देवता ॥ १६ ॥ पुनात्विति च मन्त्रस्य ऋषिः स्यात्पवनः स्मृतः ॥ छंदोऽपि जगती ख्यातं देवताग्निश्च कीर्तितः ॥ १७ ॥ तुर्यपूर्णा यज्ञमध्ये नकुले द्विजसत्तमाः ॥ न चाशिषं यज्ञमध्ये अभिषेकं च तर्पणम् ॥ १८ ॥ ऋत्विक्छंदः स्पृशन्सम्यग्दक्षिणांगमथापि वा ॥ यजमानः सपत्नीको महोत्सवपुरःसरम् ॥ १९ ॥ विश्वामित्रोऽयुतं तत्र होमं कुर्याद्विचक्षणः ॥ लवली बदरी शस्तं पिचुमंदकच्छत्रकम् ॥ २० ॥ नागरंगं धातकीं च पूर्णायां च विवर्जयेत् ॥ जप्यहानिरसंख्याते होमभ्रंशश्च जायते ॥ २१ ॥ तस्मात्प्रागेव सतिलान्गणित्वा स्थापयेत्पृथक् ॥ युगपद्गणयेद्वाथ न चांगेन कदाचन ॥२२॥ धातक्याश्च फलैः संख्या कर्तव्या फलमिच्छता ॥ बदर्याश्च लवल्याश्च फलैः सर्वार्थसिद्धये ॥ २३ ॥ नागरंगफलैरेव धातक्या बकुलैः फलैः ॥ यज्ञहानिकरं यस्मात्तस्मात्तत्परिवर्जयेत् ॥ २४ ॥ कर्पूरचंदनैः कुर्याद्गोलिकां यज्ञसिद्धये ॥ गंगामृत्तिकया युक्तः शुनिकामथ वा द्विजाः ॥ २५ ॥ रक्तगुंजाफलैः संख्यां पुष्टिकामेषु योजयेत् ॥ वातार्धे च शते चैव सहस्रे च तथैव हि ॥ २६ ॥ होता स्यादयुतेनापि एकाहे वेदसंख्यया ॥ ऋणसाध्ये भवेद्धोता त्रय एव द्विजोत्तमाः ॥ २७ ॥ लक्षहोमे तु होतारः षडेव परिकीर्तिताः ॥ कोटिहोमे तु विप्राः स्युः प्रशस्ताः पंक्तिसंख्यया ॥ २८ ॥ नव पंच दशदशकं पंचविंशमथापि वा ॥ कामक्रोधविहीनाः स्युर्ऋत्विजः शांतचेतसः ॥ २९ ॥ नवग्रहमखे विप्राश्चत्वारो वेदवेदिनः ॥ अथवा ऋत्विजौ शांतौ द्वावेव परिकीर्तितौ ॥३०॥ कार्यावयुतहोमे तु न प्रसज्येत विस्तरे ॥ तद्वत्सदशधा चाष्टौ नवहोमे तु ऋत्विजः ॥ ३१ ॥ कर्तव्याः शक्तितस्तद्वच्चत्वारोऽपि विमत्सराः ॥ तमेव पूजयेद्ब्रह्मा द्वौ वात्रीन्वा यथाविधि ॥ ३२ ॥ एकमप्यर्चयेद्ब्रह्मा सहस्रे त्वेकब्राह्मणम् ॥ दक्षिणाभिः प्रयत्नेन निर्वहेदल्पवित्तवान् ॥ ३३ ॥ लक्षहोम



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तु कर्तव्यो यदा वित्तं भवेत्तदा ॥ यतः सर्वमवाप्नोति कुर्यात्कामविधानतः ॥ ३४ ॥ पूज्यते शिवलोके च वस्वादित्यमरुद्गणैः ॥ यावत्कल्पश
तान्यष्टावंते मोक्षमवाप्नुयात् ॥ ३५ ॥ अकामो यस्त्विमं कुर्याल्लक्षहोमं यथाविधि ॥ शतकाममवाप्नोति पदं चानंत्यमश्नुते ॥ ३६ ॥ पुत्रार्थी
लभते पुत्रं धनार्थी लभते धनम् ॥ भार्यार्थी लभते भार्यां कुमारी च शुभं पतिम् ॥ ३७ ॥ भ्रष्टराज्यस्तथा राज्यं श्रीकामः श्रियमाप्नुयात् ॥ यं
यं कामयते कामं सर्वं प्राप्नोति पुष्कलम् ॥ ३८ ॥ निष्कामः कुरुते यस्तु परं ब्रह्माधिगच्छति ॥ तस्माच्छतगुणः प्रोक्तः कोटिहोमः स्वयंभुवा
॥ ३९ ॥ आचार्य एव होता स्याद्ब्राह्मणानामसंभवे ॥ न योजयेदेकमेव चायुते होमकर्मणि ॥ ४० ॥ दर्भासनेऽतो न कुशे तृणे पत्रे त्वचेऽपि च॥
पाषाणे मृत्तिकायां च न च वस्त्रासने क्वचित् ॥ ४१ ॥ तत्र दारुमयं कुर्यादागमं भजते द्विजः ॥ दानं दद्याच्च होमांते पूर्णादौ
च यथा भवेत् ॥ ४२ ॥ द्विजसंस्कारकार्येषु पूर्णादौ चापि दक्षिणा ॥ मंत्रोपासनकार्येषु सोमयागाश्वमेधके ॥ ४३ ॥ ॥ इति
श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथमभागे विंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ सूत उवाच ॥ ॥ अथातो मंडलं वक्ष्ये पुराणेषु यथो
दितम् ॥ यदधीना भवेत्सिद्धिस्तस्मात्कुर्यात्समाहितः ॥ १ ॥ देवाः पद्मासनस्थाश्च भविष्यंति वसंति च ॥ विनाब्जं नार्चयेद्दे
मर्चिते यक्षिणी हरेत् ॥ २ ॥ अतो मंडलविच्छेदं यस्माद्दशगुणं भवेत् ॥ रजःसाध्ये शतगुणं केवले द्विगुणं फलम् ॥ ३ ॥ त्रिशतं वंदने साध्ये
सहस्रं च रजोऽष्टकम् ॥ रजोभिः षोडशैर्बिंबं शतंशतमनंतकम् ॥ ४ ॥ यन्त्रे मणौ शालग्रामे प्रतिमायां विशेषतः ॥ महालये महायोनौ रक्तलिंगे
च साधिकम् ॥ ५ ॥ रजोयुक्तं लिखेद्यस्तु पूजाकार्ये विभूतये ॥ करणादिफलं यस्मात्तस्मात्तत्परिवर्जयेत् ॥६॥ चतुरस्रं नवं व्यूहं क्रौंचप्राणं चतु
र्विधम् ॥ कामबीजं वज्रनाभं विघ्नराजं गजाह्वयम् ॥ ७ ॥ पारिजातं चंद्रबिंबं सूर्यकांतं च शेखरम् ॥ शतपत्रं सहस्रारं नवनाभं च सुष्टिकम् ॥
॥ ८ ॥ पंचाब्जं चैव मैनाकं कामराजं च पुष्करम् ॥ अष्टास्रं चैव श्रीबिंबं षडस्रं त्र्यस्रमेव तु ॥९॥ चत्वारिंशत्तथा पंचस्वाधिकं परिसंख्यया ॥
चतुरस्रं नवव्यूढं वैष्णवे यागकर्मणि ॥ १० ॥ प्रशस्तं चापि गोमेधे क्रौंचं प्राणं चतुर्विधम् ॥ सुभद्रं चाश्वमेधे च नरमेधे नरासनम् ॥ ११ ॥
सर्वत्र सर्वतोभद्रं चतुरस्रं सुभद्रकम् ॥ कामराजं तथा त्र्यस्रमष्टास्रं च षडस्रकम् ॥१२॥ शक्तानां कामपक्षे च पंचसिंहासनं महत् ॥ ध्यानाचले
मेरुपृष्ठं मणिमुक्ताचलेष्वपि ॥ १३ ॥ सहस्रं शतपत्रं च अन्नदाने तिलाचले ॥ हरिवल्लभं राजसूये सोमयागेषु शस्यते ॥ १४ ॥ प्रतिष्ठायां सुभद्रं च
सर्वतोभद्रमेव च ॥ जलाशयप्रतिष्ठायां विघ्नराजं प्रशस्यते ॥ १५ ॥ घटप्रस्थापने चैव गजाह्वं तुरगासनम् ॥ शतपत्रं लक्षहोमे अयुते चतुर

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रकम् ॥ १६ ॥ यस्य यज्ञस्य यद्विंबं तत्तु तेनैव योजयेत् ॥ इतोऽन्यथा भवेद्दोषो विपरीतेष्वधोगतिः ॥ १७ ॥ द्विहस्ता चतुरस्रा च वेदिका परिकीर्तिता ॥ चतुरंगुलोच्छ्रायमिता षडंगुला ह्यथापि वा ॥१८॥ षडंगुला नवव्यूहे वर्धयेद्यज्ञकोविदः ॥ एकांगुलसमुत्सेधः कर्तव्यस्सुसमाहितैः॥ ॥ १९ ॥ क्रौंचप्राणे तुर्यहस्तं मुष्टिहस्तं समुच्छ्रितम् ॥ मध्यद्वये हीनकरं कनिष्ठं त्र्यंगुलाधिकम् ॥ २० ॥ कुर्याद्द्वित्रिक्रमाद्धीनमुच्छ्राये द्विज सत्तमाः ॥ पारिजातं चंद्रबिंबं सूर्यकांतं च शेखरम् ॥ २१ ॥ ग्रहाणां पौष्टिके पक्षे बाह्यग्रामादिसाधने ॥ नियोजयेत्तत्रतत्र वेदिकाचक्रकत्र यम् ॥ २२ ॥ प्रथमे मुष्टिहस्तः स्यात्संपूर्णे शेषमानकैः ॥ नवलाभे च पंचाब्जं करत्रयमुदाहृतम् ॥ २३ ॥ शेषा चैव वरिष्ठा च लवली भित्ति वेदिका ॥ विज्ञेया द्विजशार्दूला यथाकाम्येषु योजयेत् ॥ २४ ॥ अयथाव्यत्यये दोषस्तस्माद्यत्नेन साधयेत् ॥ दशहस्ते चाष्टहस्ते अष्टहस्ते च षोडशम् ॥२५॥ मुष्टिबाहुश्च प्रादेशं वर्धयेत्षोडशांशके ॥ हस्तोत्सेधं च कर्तव्यं हीने हीनं च ह्रासयेत् ॥ २६ ॥ दर्पणाकारकं कुर्याद्यागके शांति कर्मणि ॥ हीनं कुर्यात्प्रयत्नेन वप्राकारं परिस्तवे ॥ २७ ॥ निशारणैर्गोमयैश्च वेदिकां च प्रलेपयेत् ॥ स्वर्णरत्नमयैस्तोयैरभिषिच्य कुशोदकैः ॥ ॥ २८ ॥ हीनवीर्यगवानां च पुरीषं धेनुकं तथा ॥ कपिलायाश्च यत्नेन कुंडमंडललेपने ॥ २९ ॥ वर्जयेत्सर्वयागेषु स्थंडिलेषु प्रयत्नतः ॥ विना सूत्रैः कीलके न मंडले नैव सूत्रयेत् ॥ ३० ॥ तस्मात्प्रयत्नतः कार्यं यत्सूत्रं यच्च कीलकम् ॥ अर्कहस्तमितं सूत्रं मृदु लाक्षामयं तथा ॥ ३१ ॥ पीतकार्यस्रजं चैव कीलकं स्वर्णनिर्मितम् ॥ रौप्यताम्रमयं कुर्याद्वैष्णवे यागकर्मणि ॥ ३२ ॥ गणनायके सुप्रशस्तं शैषेपामार्गमेव च ॥ ग्रहपक्षे तथेशस्य कच्छपस्य द्विजोत्तमाः ॥ ३३ ॥ षोडशे चार्कहस्ते च तत्र नेमियुतं भवेत् ॥ ३४ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि प्रथम भागे एकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ ॥ इति मध्यमपर्वणि प्रथमभागः समाप्तः ॥ १ ॥ छ ॥ ॥ ॥

॥ ॥ सूत उवाच ॥ ॥ अथोद्धारं प्रवक्ष्यामि चतुरस्रादिकस्य च ॥ अर्कांगुलमितं क्षेत्रं चतुरस्रं प्रकल्पयेत्॥१॥गुणांगुलं प्रतिदिशं वर्धयेत्सुविच क्षणः ॥ चतुरस्रं समं कुर्यादिष्टेरष्टादशांगुलम् ॥ २ ॥ द्विहस्ते चैव सूत्राग्रे त्र्यंगुलानि समंततः ॥ चतुरस्रीकृते पश्चाद्द्विहस्तमपि जायते ॥ ३ ॥ एवं षोडशहस्तांतं वर्धयेत्क्रमतः स्वयम् ॥ हस्ते विनिर्णयं विप्रा रचयेन्मंडलं सुधीः ॥ ४ ॥ द्वादशांगुलकल्पाभ्यां मधुहस्ते च मंडले ॥ द्विहस्ते हस्तमात्रं स्याद्द्विहस्तं तु चतुष्करे ॥ ५ ॥ पद्ममानं चतुर्द्धा तु वृत्तं कुर्यात्समंततः ॥ प्रथमे कर्णिका कार्य्या केशराणि द्वितीयके ॥ ६ ॥ तृतीये दल संधींश्च दलाग्राणि चतुर्थके ॥ कर्णिकां पीतवर्णेन शुक्केन पंकजं लिखेत् ॥७॥ केशरास्त्रिविधाः प्रोक्ता मूलमध्याग्रदेशतः ॥ मूले शुक्लारुणा मध्ये



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पीताश्चाग्रे प्रतिष्ठिताः ॥ ८ ॥ पात्रसंधिर्भवेच्छ्यामः कोणे रक्तेन रंजयेत् ॥ देवास्त्राणि लिखेद्वाह्ये पुरमध्ये च कोणके ॥ ९ ॥ अष्टांगुलप्रमाणं यद्यथावर्णं विनादितः ॥ शंभुर्गौरी तथा ब्रह्मा रामकृष्णेत्यनुक्रमात् ॥ १० ॥ सीमरेखांगुलोच्छ्रायं तत्तदर्धेन योजयेत् ॥ शिवविष्ण्वोर्महायागे शंभुमारभ्य दापयेत् ॥ ११ ॥ प्रतिष्ठायां च रामांतं कृष्णांतं च जलाशये ॥ दुर्गायागे च श्रीपक्षे ब्रह्मादीन्परिकल्पयेत् ॥ १२ ॥ ग्रहयागे च पीतादीन्कुर्याच्च न तदन्यथा ॥ नवव्यूहमथो वक्ष्ये पुराणमतसम्मतम् ॥ १३ ॥ सर्वं च पूर्ववत्कार्यं पंकजं सुलिखेत्सुधीः ॥ तावत्संख्याहरणयोर्वेष्टये त्प्रक्रमादपि ॥ १४ ॥ शुक्लारुणैस्तथा पीतैः पीतारुणसितैरपि ॥ पीतारुणसितैरेवं स्वभावे प्रतिभागके ॥ १५ ॥ कलायंत्रं तदंते च गुह्यपत्राग्रकेण तु ॥ पोडशैर्विंशमाने तु सलिङ्गं चाष्टपत्रके ॥१६॥ एवं मंडलमंत्राणां वर्जयेत्परमार्थतः ॥ तद्वन्मूलेषु कोणेषु केशराणि प्रकल्पयेत् ॥१७॥ दशदंडसमाकारं त्रिवर्णं प्रतिरंजितम् ॥ अरं दद्याद्दशाग्रे तु सर्वांगुलप्रमाणतः ॥ १८ ॥ पीतेनारं च सर्वत्र तन्मध्ये शोणतुंडकम् ॥ नवव्यूहमिदं प्रोक्तं धर्मकामार्थदायकम् ॥ १९ ॥ न शूद्रोमंडलं कुर्यान्न कुर्याद्ब्राह्मणब्रुवः ॥ कुर्याच्च संगमे तीर्थे देवतायतनेषु च ॥ २० ॥ लिखित्वा नार्चयेद्य स्तुअग्निकार्यविहीनकः ॥ अविद्धो जायते सोऽपि यतोजन्मनिजन्मनि ॥ २१ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे प्रथमोऽध्यायः ॥ १ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ क्रौंचमानं प्रवक्ष्यामि यथावेदार्थवादिनाम् ॥ संमतं सर्वतंत्रेषु गोपनीयं प्रयत्नतः ॥ १ ॥ आत्मनोऽरत्निमानेन द्विगुणं परिकल्पयेत् ॥ मध्ये वृद्ध्या तु तत्सूत्रं भ्रामयेत्कीलकोपरि ॥ २ ॥ चतुष्टयं न्यसेद्वृत्तं मध्यमाधमभावतः॥ कार्णिका प्रथमे वृत्ते द्वितीये त्वथ केशरम् ॥ ३ ॥ तृतीये पद्मपत्राणि चतुर्थे पोडशच्छदाः ॥ शोभोपशोभे कुर्याच्च चतुरस्रे समे शुभे ॥ ४ ॥ तद्दक्षिणाग्रं सुलिखेत्पार्श्वयोः पक्षकद्वयम् ॥ तत्र पद्मयुगं कुर्यान्मध्ये चांगुलमंतरम्॥५॥ शुक्लं पीतं तथा रक्तं कृष्णं लोहितसन्निभम् ॥ संख्यातं ताम्रपर्णं च श्यामलं चाष्टकं रजः ॥ ६ ॥ शुक्लं तंडुलचूर्णोत्थं पीतं तु निशया[1] स्मृतम् ॥ रक्तं तु निशया योगाच्छंखचूर्णादिभावितम् ॥ ७ ॥ कृष्णं पुलकादिदग्धं रक्तं पीतास्ययोगतः ॥ कुंकुमाभं पांडुरं च रक्तश्वेतैर्विनिर्मितम् ॥ ८ ॥ ताम्रवर्णं कुसुंभेन श्यामलं विल्वपत्रजम् ॥ यवगोधूमचूर्णादियोगेन तु रजः स्मृतम् ॥ ९ ॥ सर्वरेखासु विभजेच्छुक्लं मध्ये तु पीतकम् ॥ कर्णिकायां केशरेषु शुभ्रमेव निपातयेत् ॥ १० ॥ पूर्वादिक्रमयोगेन शुक्लादीनि प्रयोजयेत ॥ पत्रसंधौ तु विभजेद्रजः सेकांतरक्रमात् ॥११॥ ततः पोडशपत्रेषु पूर्वादिक्रमतो भवेत् ॥ शुक्लं पीतं तथा ताम्रं ततः संख्यातमेव च ॥१२॥

१ हरिद्रया।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्यामलं कुंकुमाभं च रक्तं शुक्लं च कृष्णकम् ॥ पीतं ताम्रं च संख्यातं श्यामं कुंकुमरक्तकम् ॥ १३॥ एवं दद्याद्द्विजः पूर्वे ईशानांतं विभावयेत् ॥
क्रौंचमूर्ध्नि भवेद्रक्तं चतुरंगुलमानतः॥१४॥ तुंडभागे भवेत्पीतं ग्रीवायां शुक्लमेव च ॥ पुच्छे विंशतिपत्राणि आदौ पंच रजःक्रमात् ॥१५॥ षडंगुले
ष्वंडभागे पीतेन परिकल्पयेत् ॥ ग्रीवायां शुक्लरजसा भावितायां विशेषतः ॥१६॥ तत्र पीतादिकं लेख्यं पूर्वोक्तं च यथा भवेत् ॥ शुक्लादिकं प्रद
द्यात्तु पात्रेष्वेकैकशः पृथक् ॥ १७ ॥ चतुरंगुलके पादे जानोरूर्ध्वे तु पीतकम् ॥ अधस्तात्तु भवेद्रक्तं तदेव चतुरंगुलम् ॥१८॥ द्व्यंगुलेन भवेच्छ्या
ममंगुलीष्वपि विन्यसेत् ॥ एवं पक्षद्वयेनापि लिखेच्छुक्लं विभावयेत् ॥ १९ ॥ पदे शुक्लं चांगुलीषु रक्तं श्यामेन भावयेत् ॥ पूर्वपश्चिमदिग्भागे
शुक्लं स्याद्द्वारदेशतः ॥२०॥ दक्षिणोत्तरतश्चैव रक्तवर्णं विनिर्दिशेत् ॥ महाक्रौंचमिदं ज्ञेयं मध्यक्रौंचमिदं शृणु ॥ २१ ॥ कनिष्ठं सर्वयज्ञेषु विधानां
सत्तमुत्तमम् ॥ अथापरं प्रवक्ष्यामि सर्वतंत्रमतं क्रमात् ॥ २२ ॥ रक्तपीतं रक्तपीतैः कुर्यात्पुच्छचतुष्टयम् ॥ पूर्वादिक्रमयोगे तु पत्रांते धरणीतले ॥
॥२३॥सुलिखेन्मूलसंलग्नं बहिष्कोणचतुष्टयम् ॥ कनिष्ठेऽष्टकुलं कुर्यात्पुच्छं कुर्याच्चतुर्विधम् ॥२४॥ त्रिवृत्तं वेष्टयेत्पश्चात्सितरक्तासितैः क्रमात् ॥
दृष्टं जन्मशतोद्भूतं पापं नाशयते ध्रुवम् ॥२५॥ पीतं वा विलिखेद्विप्रा नश्यंति सकलापदः॥अंतश्चक्रं बहिश्चक्रं क्षेत्रे च प्रतिदर्शनम् ॥२६॥ तस्य
कल्पशतोद्भूतं पापं नाशयते ध्रुवम् ॥ मयूरं वृषभं चैव सिंहं क्रौंचं च वै कपिम् ॥२७॥ प्रमादाद्वा गृहे क्षेत्रे वृक्षाग्रे चापि भो द्विजाः ॥ उत्थाय
वंदनं कुर्याद्ब्रह्महत्याशतं दहेत् ॥ २८ ॥ पोषणात्कीर्तिमाप्नोति दर्शनात्पापविच्युतिः ॥ दर्शनाद्वर्धते लक्ष्मीरायुर्वृद्धिश्च जायते ॥ २९ ॥ मयूरो
ब्रह्मणो मूर्तिर्वृषभश्च सदाशिवः॥ सिंहे च संभवेद्दुर्गा वैष्णवो विधिरुच्यते ॥३०॥ क्रौंचो नारायणो देवो व्याघ्रस्त्रिपुरसुंदरी ॥ कालिका कृष्णव्या
घ्रश्चलक्ष्मीश्चित्रकपोतकः ॥३१॥ स्नातः पश्यति प्रत्यह्नि ग्रहदोषो न जायते ॥ तस्मात्प्रयत्नतो भूत्वा धारयेत्पोषयेद्गृहे ॥ ३२ ॥ अतः परं प्रव
क्ष्यामि मंडले मंडलेष्वपि ॥ रजोद्रव्यप्रमाणं च यथोक्तं यत्नवर्जनम् ॥ ३३ ॥ तंडुलोत्थं यवोत्थं वा वर्ज्यं मकररोपणम् ॥ यद्वाल्यश्रावणे जातं
हैंगुलं गंधकं तथा ॥३४॥ हरितालं सुभद्रं च सदा विघ्नं विवर्जयेत् ॥ हैमंतिकोद्भवं यच्च सितपाषाणमेव च ॥३५॥ कांचन्याश्च प्रभेदं यच्छस्तं
शुक्लगुणं द्विजाः ॥ शेफालिवृत्तं निशया अतसीकुसुमानि च ॥३६॥ किंशुकस्य च पुष्पाणि शस्तं पीतं गुणं भवेत् ॥ नागजं गैरिकं चैव कुसुंभ
कुसुमानि च ॥३७॥ कुशीतं गुडकं चैव मंजिष्ठां पंचरंगकम् ॥ विजयापत्रकं चैव बिल्वपत्रं तथैव च॥३८॥पुनर्नवायाः पत्रं च केशरस्य बकस्य
च॥कृष्णपाषाणकं चैव कृष्णाभ्रं समयूथकम्॥३९॥नागपाषाणकं चैव पुन्नागं दग्धपंचकम् ॥ शंखचूर्णं लोहविष्ठां नागविष्ठां च वर्जयेत्॥४०॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्पूरं कुंकुमं चैव रोचनारोचनां श्रयेत् ॥ यवशालीयकैर्भिन्नं शुक्लं च कारयेत्सुधीः ॥४१॥ लाक्षां च यदि गृह्णीयात्तद्वर्जित्वा प्रदापयेत् ॥ आकाशं पृथिवीं चैव भौमं रामं तथा शनी ॥४२॥ धरणीं सदनस्थाने पञ्चधा विभजेद्बहिः ॥ पद्ममुल्लिख्य प्रथमं कर्णिकां तदनन्तरम् ॥४३॥ तर्जन्यमध्य पूर्वोत्थं विभजेद्वा समाहितः ॥ तर्जन्यंगुष्ठयोर्गैर्वा तृणमारभ्य यद्भवेत् ॥ ४४ ॥ तृणमारभ्य सामान्ये शक्तो वा मध्यमादितः ॥ राक्षसादिप्रतिष्ठायां ग्रहपक्षेऽग्निमादितः ॥ ४५ ॥ अंगुल्यग्रे च विभजेत्सर्वकामार्थसिद्धये ॥ प्रतिष्ठायां ग्रहमखे काम्येषु परिवर्जयेत् ॥ ४६ ॥ सुभद्रं मण्डलं वक्ष्ये शुभदं शुभमादिशेत् ॥ अतः सुभद्रमुद्दिष्टं स्वर्गमोक्षप्रदायकम् ॥ ४७ ॥ सार्धहस्तेन मानेन कुर्यान्मण्डलमुत्तमम् ॥ चतुर्विंशांगुलैः पूर्णं सर्वत्र हस्तमादिशेत् ॥ ४८ ॥ कर्तुर्मध्यसहस्रस्य मध्यमा मध्यपर्वणि ॥ मध्यमा दीर्घमानेन मानांगुलमिति स्मृतम् ॥ ४९ ॥ रेखाद्वयांतरं यच्च मूलरेखां न चाश्रयेत् ॥ वृद्धांगुष्ठनखद्वंद्वं मानांगुलमथापि वा ॥५०॥ मध्ये निबध्य शंकुं च मुष्टिबाहुप्रमाणतः ॥ त्रिवृत्तं कारयेन्मध्ये ज्येष्ठोत्तरकनीयसम् ॥ ५१ ॥ प्रकल्प्य कर्णिकादीनि मध्ये चाष्टदलं लिखेत् ॥ बहिश्चार्कदलं कुर्याद्वर्णानां क्रमकेण तु ॥५२॥ पंचमं श्वेतवर्णेन बहिः कुर्यात्त्रिवेष्टनम् ॥ सितपीतारुणं कुर्यात्पश्चाद्वेदांगुलांतरे ॥ ५३ ॥ वेष्टयेच्छुक्लवर्णेन मध्ये कल्पलतां लिखेत् ॥ सुभद्रं मण्डलात्पूर्वं सर्वतोभद्रकं शृणु ॥ ॥ ५४ ॥ सर्वकार्येषु यज्ञेषु सर्वकल्याणमाप्नुयात् ॥ मंडलं सर्वतोभद्रं सर्वयज्ञेषु पुष्टिदम् ॥ ५५ ॥ साधकानां हितार्थाय ईश्वरेणैव भाषितम् ॥ चतुर्विंशत्यगुलेन हस्तः प्रथमतो भवेत् ॥ ५६ ॥ कोणे सूत्रद्वयं दद्यान्मध्ये सूत्रद्वयं पुनः ॥ ततो मत्स्यान्विरचयेत्कर्णे सूत्राणि साधकः ॥५७॥ चतुः सूत्रं पातयेच्च पूर्वापरविभागतः ॥ पुनर्दद्याच्चतुःसूत्रं कर्णसूत्रं पुनर्ददेत् ॥ ५८ ॥ शतद्वयपदं यावत्पट्पंचाशाधिकं तथा ॥ पातयेच्च तथा सूत्रमेवं सप्तदशं भवेत् ॥ ५९ ॥ ऊर्ध्वपंक्त्या पदयुगं चाद्ये पदचतुष्टयम् ॥ द्वारपार्श्वे भवेद्यावद्दंतपंक्त्या पदत्रयम् ॥ ६० ॥ रेखां सर्वत्र शुक्लेन रचयेद्यज्ञियोत्तमः ॥ पङ्कजं शुक्लवर्णेन वैष्णवो यागकर्मणि ॥ ६१ ॥ शक्तियोगे भवेद्रक्तं शैवे पीतं विनिर्दिशेत् ॥ प्रतिष्ठासु च सर्वासु शुक्लमेव प्रशस्यते ॥ ६२ ॥ पीतेन कर्णिका कार्या चतुर्भागेन मानतः ॥ शुभं चकोरावस्थाने तापयित्वा विचक्षणः ॥ ६३ ॥ कर्णिकामूलमारभ्य रेखाः पोडश कल्पयेत् ॥ रेखामूले भवेच्छुक्लं मध्ये रक्तं निपातयेत् ॥ ६४ ॥ अग्रे पीतं भवेदेवं कृत्वा पंकजवेष्टनम् ॥ शुभ्रवर्णेन तद्द्यात्पीतवर्णेन सर्वतः ॥ ६५ ॥ मध्ये रक्तं भवेत्तच्च एवं पोडशकल्पयेत् ॥ कोणेषु रक्तं दद्याच्च पद्मं क्षेत्रेषु निर्दिशेत ॥ ६६ ॥ शुक्लेन पीठगात्राणि पीठकोणे

१ इडार्पः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदत्रये ॥ पीतवर्णेन रचयेद्द्विधा पंक्तिद्वये तथा ॥ ६७ ॥ शुक्लेन रचयेत्पादौ पुनः पीतादिवर्णकैः॥ चित्रं सुशोभनं कार्यं तत्र कल्पलतां न्यसेत् ॥
॥६८॥ मानं कल्पलतायास्तु व्यङ्गुलं परिकीर्तितम् ॥ द्वेद्वे शस्तं च भ्रमणं शंखावर्तक्रमात्त्रयम् ॥६९॥ ग्रंथौग्रंथौ पुष्पफले नानावर्णेन भावयेत् ॥
नानापशुगणैर्युक्तं नानापक्षिगणैर्युतम् ॥ ७० ॥ वैष्णवे गारुडं शस्तं शैवे कीशवृषं लिखेत् ॥ शाक्ते व्याघ्रं तथैशे च शरभं हरिमालिखेत् ॥७१॥
शोभां पीतेन रचयेदुपशोभां च पीतकैः ॥ कोणेषु कृष्णवर्णेन बहिः स्याद्वेष्टनत्रयम् ॥ ७२ ॥ शुक्लपीतारुणैः कार्यं मण्डलं स्यान्मनोरमम् ॥
सर्वतोभद्रमपरं सर्वसिद्धिप्रदायकम् ॥ ७३ ॥ सर्वज्ञानमयं शुद्धं धर्मकामार्थदायकम् ॥ चतुरस्रं समं कृत्वा दिग्भ्यो द्वादशधा द्विजाः ॥ ७४ ॥
पातयेत्तत्र सूत्राणि कोष्ठानां दृश्यते शतम् ॥ चतुश्चत्वारिंशदाद्यं पश्चात्पट्त्रिंशदंबुजम् ॥ ७५ ॥ कोष्ठं प्रकल्पयेत्पीठं पंक्त्या चैवात्र वीथिकाम् ॥
द्वारशोभे यथापूर्वमुपशोभं च दृश्यते ॥ ७६ ॥ अवशिष्टैः पदैः कुर्यात्सद्भिस्तंत्राणि मन्त्रवित् ॥ विदध्यात्पूर्ववच्छेषमेवं वा मण्डलं भवेत् ॥ ७७॥
पूर्वोक्तमण्डले विद्वन्धरणीसदनं बहिः ॥ मध्ये कल्पलता कार्या बहिष्कोणेषु सत्तमाः ॥ ७८ ॥ गुलालीतूर्यवर्णेन महामत्त इति स्मृतः ॥ शोभोप
शोभे शोभाग्रां कुर्याद्वैमण्डलं भवेत् ॥ ७९ ॥ एतद्धि सर्वतोभद्रं राशियुक्तमतः परम् ॥ शतपत्रं वज्रनाभं बिंबनाभं सहस्रकम् ॥ ८० ॥ गजाह्वं
च गजाकारं मध्ये तु समलङ्कृतम् ॥ चतुश्चन्द्रे चन्द्रबिम्बश्चन्द्रकांतमुदाहृतम् ॥ ८१ ॥ बहिर्द्वादशभिः सूर्यैः सूर्याक्रांतं प्रकीर्तितम् ॥ शेखरी
त्रिपुटं चैव शतपत्रं च प्रक्रमात् ॥ ८२ ॥ सहस्रमेव विप्रेन्द्राः पद्मान्ते यस्य स्वस्तिकम् ॥ स्वस्तिकं तद्भवेद्विप्राः पुष्करं वज्रसंमतम् ॥ ८३ ॥
चिन्तामणिं कुंकुमांशं खातं च हरिवल्लभम् ॥ पञ्चसिंहासनस्थं च पञ्चसिंहासनं विदुः ॥ ८४ ॥ तद्वद्वृषासनं ज्ञेयं शिखिरूपं शिखिध्वजम् ॥
नारसिंहं पद्मगर्भं कपोतास्यं तथा भवेत् ॥ ८५ ॥ गारुडं मेरुगर्भं च नीलकण्ठं नराकृतिम् ॥ शतक्रतुगजारूढं श्रीबिंबनवसूत्रकम् ॥ ८६ ॥
अष्टास्रमष्टकोणाद्यं बहिः पद्मवनं कृतम् ॥ कामद्वयेन पुटितं सहस्रं पद्मवेष्टितम् ॥ ८७ ॥ त्र्यस्रगर्भं पङ्कजं च त्र्यस्रं तत्परिकीर्तितम् ॥ अष्ट
पत्राणि वै मेरुं सुमेरुं तद्विपर्यये ॥ ८८ ॥ महामहामेरुपृष्ठं शतत्रयच्छदैर्वृतम् ॥ छिद्रव्यक्तिं प्रवक्ष्यामि यथा मानेन भो द्विजाः ॥ ८९ ॥
वसु ८ दिग् १० विंशकैश्चैव २० चत्वारिंशत् ४० शतार्धकम् ५० ॥ दंडिश्रवणसंपन्न ६० माकाशं वसुसंमितम् ॥ ९० ॥
शतविंशाधिकं चैव १२० दलानि तदनन्तरम् ॥ शुक्लरक्तं चाष्टवर्णैर्बिंबोष्ठं परिपूरयेत् ॥ ९१ ॥ शुक्लेन पङ्कजं तत्र पश्चात्कुर्यात्त्रिवेष्ट
नम् ॥ शतपत्रमथो वक्ष्ये बिम्बराजेति कथ्यते ॥ ९२ ॥ स्थंडिले कुशहस्ते च पूर्ववद्वेष्टयेत्क्रमात् ॥ वसु ८ पञ्चकला १६ पञ्चविंशकं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

२५ तन्नपत्रकात् ॥ ९२ ॥ चत्वारिंशत्ततः पश्चा ४० दष्टोत्तरशतं १०८ भवेत् ॥ शुक्कं शोणं तथा पीतं श्यामशुक्कैरनंतरम् ॥ ९४ ॥ विलोमे दलसन्धीनि शाक्ते शैवे तु षट्पुरम् ॥ वेष्टयेत्पंचवर्णेन शुक्कादीनि समंततः ॥ ९५ ॥ रक्तपीतैः समास्तीर्य कोणान्छुक्केन पूरयेत् ॥ स्थंडिले तारहस्तेन अष्टहस्तं प्रकल्पयेत् ॥ ९६ ॥ मंडलं बिंबराजस्य अष्टोत्तरदलैर्वृतम् ॥ वसुपञ्चशक्तिविंशचत्वारिंशच्छताद्धकम् ॥ ९७ ॥ त्र्यृतुपत्रं सुवृत्तं स्याद्वृत्तयुक्तं सबिल्वकम् ॥ चत्वारिंशद्वयं चैव गगनेन समावृतम् ॥ ९८ ॥ शतं विंशाधिकशतं द्विशतं विंशमुत्तमम् ॥ वेष्टनांसे च त्रिशतं प्रक्रमादथ वर्धयेत् ॥ ९९ ॥ लवल्याभमथो वक्ष्ये सार्द्धहस्तप्रमाणतः ॥ नवविंशं कल्पयेत्तु चतुःसूत्राणि पातयेत् ॥ १०० ॥ दक्षिणोत्तरतश्चैव तद्वदेव विजानीहि ॥ पीतेन रेतपुःटिता मध्ये शुक्कं विभाव्यते ॥ १०१ ॥ ग्रहपक्षेन्नपीतेन मध्ये रक्तं प्रतिष्ठितम् ॥ सर्वा रेखाश्च शुक्केन पौष्टिके पीतमादिशेत् ॥ १०२ ॥ सशांतिके न योक्तव्यं कामे रक्तं विनिर्दिशेत् ॥ मध्ये तु पङ्कजं रक्तं युग्मे सोमस्य पङ्कजम् ॥ १०३ ॥ शुक्कवर्णेन तत्कुर्यात्पीतवर्णमुदस्य च ॥ ऐशान्यां चोत्तरे भागे गुरोः पीतं तु पङ्कजम् ॥ १०४ ॥ पूर्वस्यां दिशि शुक्रस्य पङ्कजं शुभ्रवर्णकम् ॥ वारुणे तु शनैः कृष्णं नैर्ऋत्यां धूम्रवर्णकम् ॥ १०५ ॥ राहोः प्रकल्पयेत्तच्च केतोरपि नियोजयेत् ॥ वायव्यां दिशि संयोज्य पङ्कजं विलिखेत्ततः ॥ ॥ १०६ ॥ विलोमे दलसन्धीनि पूरयेत्सुविचक्षणः ॥ बहिः पञ्चरजैः कार्यं युवदुर्गविभूषितम् ॥ १०७ ॥ पूर्वपश्चिमदिग्भागे शुक्कं स्याद्द्वारदेशतः ॥ दक्षिणोत्तरदिग्भागे रक्तमेव प्रशस्यते ॥ १०८ ॥ त्रिस्थाने सममध्ये च द्वादशांगुलप्रक्रमात् ॥ द्विहस्तादावंगुलेन वर्द्धयेत्तद्विभागतः ॥ ॥ १०९ ॥ पञ्चाब्जमण्डलं ज्ञेयं चतुःस्वस्तिकभूषितम् ॥ ११० ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे द्वितीयोऽध्यायः ॥२॥

॥ सूत उवाच ॥ ॥ न कुर्याद्दक्षिणाहीनं मानहीनं न कारयेत् ॥ अमानेन हतो यज्ञस्तस्मान्मानं प्रशस्यते ॥ १ ॥ यस्य यज्ञस्य यन्मानं तत्तु तेनैव योजयेत् ॥ अमानेन कृते सर्वे व्रजेयुर्नरकं पुनः ॥ २ ॥ आचार्यहोतृब्रह्माणो विधिज्ञः सहकर्तृकः ॥ यस्य यज्ञे पापकश्च जातिहीनः प्रवेशयेत् ॥ ३ ॥ अशीतिभिर्वराटैश्च पण इत्यभिधीयते ॥ तैस्तु षोडशभिर्ज्ञेयं पुराणं सप्तभिस्तु तैः ॥ ४ ॥ राजतैश्चाष्टभिः स्वर्णं यज्ञादौ दक्षिणा स्मृता ॥ महारामे द्विसौवर्णं कूपे स्वर्णार्धमेव च ॥ ५ ॥ तुलस्यामलकीयागे सुवर्णैकं प्रचक्षते ॥ यक्षच्छोके च सौवर्णं लक्षे स्वर्णचतुष्टयम् ॥ ६ ॥ नवमे कोटिहोमे च देवतानां च स्थापने ॥ प्रासादस्य समुत्सर्गे अष्टादश सुवर्णकाः ॥ ७ ॥ तडागे पुष्करिण्यां च अर्धार्धं परिकीर्तितम् ॥ महादाने च दीक्षायां वृषोत्सर्गे च सत्तमाः ॥ ८ ॥ जीवतश्च वृषोत्सर्गे गयाश्राद्धे तथैव च ॥ अवित्तसाध्यमानेन यज्ञं कुर्यात्कलौ



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

युगे ॥ ९ ॥ दंपत्योश्च वृषोत्सर्गे मानमेकमुदाहृतम् ॥ बहुभिः क्रियमाणोपि याग एको महोत्तमैः ॥ १० ॥ राज्ञः करग्रहे चैव दीक्षायां दान कर्मणि ॥ अशीतिरत्तिकं स्वर्णं श्रवणे भारतस्य च ॥ ११ ॥ ग्रहयागे प्रतिष्ठायां सुवर्णशतरत्तिकः ॥ लक्षहोमे चायुते च कोट्यामेवं विधीयते ॥ ॥ १२ ॥ देवानां ब्राह्मणानां च दानं यस्य प्रकल्पितम् ॥ तस्यैव देयं तद्दानं सांगोपांगं सदक्षिणम् ॥ १३ ॥ नानास्य किञ्चिद्दातव्यं संगभंगो भवेद्यतः ॥ गृही तु कृत्वा यद्दानं तदा तस्य ऋणी भवेत् ॥ १४ ॥ यज्ञेषु होमे यद्द्रव्यं काष्ठमाज्यादिकं च यत् ॥ तन्नायकस्य पूजायां द्रव्यमाहुर्विनिर्मितम् ॥ १५ ॥ अनादिदेवतार्चायां पूजास्नानादिकर्मणि ॥ यस्यार्हणादिकं द्रव्यं तस्य देवस्य तद्भवेत् ॥ १६ ॥ प्रत्यक्षं दक्षिणां दद्याद्यज्ञदानव्रतादिके ॥ अदक्षिणं नैव कार्यं प्रकुर्याद्भूरिदक्षिणम् ॥ १७ ॥ अतो दत्तं पुरा दत्तं दातव्यं चैव संप्रति ॥ परस्वोदारबुद्धीनां सासा हि दक्षिणा भवेत् ॥ १८ ॥ दत्तानि विधिवत्पुंसां देवदानानि यानि हि ॥ दासीदासगवादीनि मनसा यानि कर्हि चित् ॥ १९ ॥ दातव्यान्यपि तान्येव कारयेत्परिवर्त्तनम् ॥ एकस्यानेकदानं च ददेत्कश्चित्पृथक्पृथक् ॥ २० ॥ वरणं च कदा कुर्यात्तन्त्रे कुर्याच्च दक्षिणाम् ॥ रत्नस्य दक्षिणा देया कांचनं समुदाहृतम् ॥ २१ ॥ कांचनस्य भवेद्रौप्यं रौप्ये कांचनमुद्दिशेत् ॥ भूमेर्भूमिर्द क्षिणा स्याद्वस्त्रस्य वस्त्रदक्षिणा ॥ २२ ॥ पानीयस्य तु पानीयं व्रीहीणां व्रीहिदक्षिणा ॥ गजस्य दक्षिणा छागो ह्यश्वस्य मेष ईरितः ॥ ॥२३॥ पशूनां च चतुष्पादा देवस्य देवदक्षिणा ॥ यज्ञो मानस्य षड्भागो द्विगुणः परिकीर्तितः ॥ २४ ॥ आचार्यस्यैव भागैकं यजमानः प्रदा स्यति ॥ पापकैस्तु कलत्राणां भागैकं तदनंतरम् ॥ २५ ॥ पात्राणामृत्विगादीनां भागत्रयमुदाहृतम् ॥ सर्वसत्त्वस्य भागैकं स्वल्पं चेच्छिष्टगौर वात् ॥२६॥ आचार्याद्यंशतः कश्चित्क्षीणवित्तं समाहरेत् ॥ अमूल्यं वर्गमूल्यं यद्द्रवेद्दै दक्षिणोत्तमा ॥ २७ ॥ मानाशक्तौ तु यज्ञानां यद्दे यं यज्ञसिद्धये ॥ देवता पुस्तकं रत्नं गावो धान्यं तिलास्तथा ॥२८॥ नमेरुफलपुष्पाणि देयान्येतानि सर्वतः ॥ चतुश्चक्रांकितो यस्तु सांद्रो वृत्तो जनार्दनः ॥२९॥ देवताप्रतिमाद्यं च शिरोनाभिस्तथैव च ॥ श्वेतलिंगं रत्नलिंगमिन्द्रनीलादिकं च यत् ॥३०॥ दक्षिणावर्तशंखं च हरिवंशस्तथा खिलः ॥ कपिलो नीलवृषभः सोमधान्यं तथैव च ॥ ३१ ॥ अमूल्यान्याहुरेतानि दत्त्वानन्तफलानि च ॥ स्वर्णपादो भवेन्मूल्यं शालग्रामस्य दक्षिणा ॥ ३२ ॥ क्षुद्रलिंगे स्वर्णमूल्यं पादार्धं श्रीधरेपि च ॥ अनन्तोनन्तमित्युक्तं पादार्धं बाणलिङ्गके ॥ ३३ ॥ यथा पुस्तकमात्रेण स्वर्ण पादार्धमिष्यते ॥ ज्योतिषेर्धं सुवर्णस्य रजतार्धं वृषे तथा ॥ ३४ ॥ हरिवंशे श्लोकशते स्वर्णमेकं प्रकीर्तितम् ॥ धर्मशास्त्रस्य साहस्रे रजतत्रयमीरि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तम् ॥ ३५ ॥ कपिलायां सुवर्णार्धं धेनुमात्रे पुराणकम् ॥ प्रायश्चित्तविधौ ज्ञेयं धेनुमात्रं पुराणकम् ॥ ३६ ॥ पुराणत्रितयं चान्ये वीर्यहीने द्वयं भवेत् ॥ कृष्णे वृषे षट्पुराणं श्वेते नवपुराणकम् ॥३७॥ द्वात्रिंशच्च पुराणं स्याद्वृषे नीले तथैव च ॥ नमेरोः प्रतिचक्रे च द्वादश स्वर्णरत्तिकाः ॥ ॥ ३८ ॥ मूल्यं श्रीफलमात्रेऽपि पुराणत्रितयं भवेत् ॥ पङ्क्त्यापि तुर्यकं विद्यात्कलौ पणव्यवस्थया ॥ ३९ ॥ धात्रीफलस्य प्रत्येकं भवेद्रजतमापकम् ॥ एतान्याहुः प्रशस्तानि मूलयोगे परं विदुः ॥ ४० ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे मूल्यकथने तृतीयोऽध्यायः ॥ ३ ॥छ॥ ॥ सूत उवाच ॥ ॥ पूर्णपात्रमथो वक्ष्ये यज्ञे साधारणेऽपि च ॥ कामहोमे भवेन्मुष्टिर्मुष्ट्योष्टौ तु कुञ्चिका ॥ १ ॥ एकैककुञ्चिमानेन कुर्यात्पात्राणि वै सदा ॥ पात्राणि च पृथक्कृत्वा स्थापयेद्द्वारदेशतः ॥ २ ॥ सिद्धानां खड्गधाराणां प्रत्येकस्य दिनक्रमात् ॥ तत्रैव दद्यान्नान्यत्र न कुर्याद्व्यत्ययं क्वचित् ॥ ३ ॥ कुण्डानां कुड्मलानां च वेदनं यादृशं शृणु ॥ चतुरस्रपदस्यापि रौप्यार्धं च कलौ युगे ॥ ४ ॥ द्वे रौप्ये सर्वतोभद्रे कौञ्चप्राणे चतुर्थकम् ॥ महासिंहासने पञ्च दशपात्रे तदर्धकम् ॥ ५ ॥ सहस्रारे मेरुपृष्ठे तुर्यरौप्यवृषाधिकम् ॥ वृषे गले च वृषभं शेषे रौप्यसहस्रकम् ॥ ६ ॥ चतुरस्रस्य निर्माणे स्वर्णपादः कलौ युगे ॥ महाकुण्डे तु द्विगुणं वृत्ते रौप्यं निवेदयेत् ॥ ७ ॥ पद्मकुण्डे तु वृषभमर्धचन्द्रे तु रौप्यकम् ॥ योनिकुण्डे ददेद्धेनुमष्टार्धस्वर्णमापकम् ॥ ८ ॥ षडस्रे तु तदर्धं स्याद्यागे माषद्वयं भवेत् ॥ शैवे चोद्यापने चैव प्रत्यह्ना स्वर्णमापकम् ॥ ९ ॥ दारणे हस्तमात्रं स्यात्स्वर्णकृष्णकलं भवेत् ॥ इष्टिकाकरणे चैव प्रत्यह्ना स्यात्पणद्वयम् ॥ १० ॥ खण्डे दशवराटं स्याद्वृहन्माने तु काकिणी ॥ तडागे पुष्करिण्यां च खनने प्रथमांगके ॥ ११ ॥ सप्तहस्तमिते कुण्डे निम्ने आबद्धमात्रकम् ॥ पुराणस्य च एकांशं वेतनं परिकीर्तितम् ॥ १२ ॥ वर्धयेत्पणमात्रेण निम्ने पत्रे च प्रक्रमात् ॥ बृहत्कूपस्य निर्माणे प्रत्यहं च पणद्वयम् ॥ १३ ॥ शैले ज्ञेयं काञ्चनस्य रत्तिका गृहकर्मणि॥ कोष्ठे ज्ञेयं सार्द्धपणं रंगादिरचिते पणम्॥१४॥वृक्षाणां रोपणे दद्यात्प्रत्यह्ना सार्धमापकम् ॥ सेतुबंधे च पंकिले च पणद्वयं च काकिणी ॥ १५ ॥ पणेपणे तु ताम्रस्य दद्यात्पणचतुष्टयम् ॥ घटने कांस्यसीसानां पणत्रयमुदाहृतम् ॥ १६ ॥ अथ वा दिनसंख्यानं पणैकं च सकाकिणि ॥ सुवर्णस्य पणैके तु पुराणं रत्नकुट्टिमे ॥ १७ ॥ रजते तु तदर्धं स्यात्स्फटिकस्य च दारणे ॥ दिनसंख्यापणद्वंद्वं रत्नानामथ कुड्मलम् ॥ १८ ॥ मणिवेधे मणौ ज्ञेयं काकिणी परिकीर्तिता ॥ चतुर्वराटमधिकं स्फाटिके मणिवेधने ॥ १९ ॥ कांस्यतालस्य निर्माणे धमने तु पणत्रयम् ॥ लाक्षानिर्माणके कार्ये तदर्धमपि कीर्तितम्॥२०॥ गवां च दोहने चैव वराटे तुर्यवेतनम्॥वेतने वस्त्रनिर्माणे पत्रे हस्तपणत्रयम् ॥२१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अविवस्त्रस्य निर्माणे स्यंदनं दशकाकिणी ॥ पिधानवस्त्रनिर्माणे त्रिपणं परिकीर्तितम् ॥ २२ ॥ दश काकिणी ऊर्ध्वाधस्तद्वचये पण्यवेतनम् ॥ वंशाजीवस्य प्रत्यह्ना पणस्यार्धे सकाकिणि ॥ २३ ॥ लोहकारस्य च तथा नापितस्य च वेतनम् ॥ शिरसा तस्य वपने विज्ञेया दश काकिणी ॥ २४ ॥ सश्मश्रुनखमाने तु प्रदद्यात्काकिणीद्वयम् ॥ नारीणामथ संस्कारे नखचित्रादिरञ्जने ॥ २५ ॥ सकाकिणि पणं तच्च सवित्रे च पयोधरे ॥ पणानां तुर्यकं दद्यात्सीमंतस्यालके तथा ॥ २६ ॥ पदचित्रे तु सार्द्धं स्याद्वीवाणां गुह्यधारणे ॥ धान्यानां रोपणे चैव दिनैके पणवेतनम् ॥ २७ ॥ लवणे तु तथा देया गुवाकानां च रोपणे ॥ दण्डपत्रस्य संस्कारे मरिचानां तथैव च ॥ २८ ॥ पणद्वयं वराटानामधिकं दशमेव तु ॥ हलेहले पणैकं स्यात्काकिण्यधिकमेव च ॥ २९ ॥ पणत्रयं चक्रपणे महिषाणां पणाधिकम् ॥ नराणां वाहने चैव पणैकं दश काकिणी ॥ ३० ॥ दासीनां गर्दभानां च अधिकं काकिणीद्वयात् ॥ क्षालने चापि वस्त्रस्य तैलक्षारविवर्जिते ॥ ३१ ॥ वस्त्रे प्रतिपणं दद्याद्दीर्घे प्रस्थेऽपि वर्धयेत् ॥ सद्यः प्रक्षालनेऽप्यर्धं दिनादावधिकं भवेत् ॥ ३२ ॥ श्वेतवस्त्रे भवेन्न्यूनं पदे सूक्ष्मे च वर्द्धयेत् ॥ मृत्तिकानां समुद्धारे कुद्दाले चेक्षुपीडने ॥ ३३ ॥ वेतनं पुष्पसंस्कारे सहस्रे दशकाकिणी ॥ काकिणी स्रङ्निबद्धे च द्विगुणं कण्ठमालिका ॥ ३४ ॥ अबद्धे द्व्यंगुलं यावन्मुण्डमाला प्रकीर्तिता ॥ हस्तत्रये कण्ठमाला आनाभि कमलावधि ॥ ३५ ॥ काकिणीकत्रयं चैव निर्माणे द्विजसत्तमाः ॥ मालत्याश्च तुलस्याश्च जातियूथ्योश्च सत्तमाः ॥ ३६ ॥ तदर्धार्धं मारुतेन दमने बकुलस्य च ॥ वेतनं दीपतैले च आज्यस्य परिवर्धयेत् ॥ ३७ ॥ यामेयामे रौप्यमापं स्नेहे चैव तु काकिणी ॥ सार्धांगुलप्रमाणेन वस्त्रवर्तिं विदुर्बुधाः ॥ ३८ ॥ षडंगुलेन दैर्घ्यं च न न्यूनं नाधिकं भवेत् ॥ पञ्चविंशतिभिः संख्या तंतुभिर्द्विजसत्तमाः ॥ ३९ ॥ पञ्चाङ्गुलेन मानेन कर्तव्यः सुसमाहितः ॥ हस्तोच्छ्राये प्रदद्यात्तु मुष्टिहस्ते तु मध्यमम् ॥ ४० ॥ त्रिहस्ते चतुर्हस्ते वा उत्तमं मानमीरितम् ॥ स्वर्णधारे हतो राजा रजते सर्वकामदः ॥ ४१ ॥ ताम्रे चायुःक्षयकरमायसे दुर्गतिप्रदः ॥ शस्तस्य करमर्दस्य प्रशस्तोत्तर उच्यते ॥ ४२ ॥ दीपाधारं कांस्यमयं तथारीतिमयस्य च ॥ अभावे मृन्मयस्यैव मृन्मये मानवर्जितम् ॥ ४३ ॥ दशाङ्गधूपके मूल्यं विंशके तु पणत्रयम् ॥ द्वादशकांगुलेऽप्यर्धवर्तिं धूपाय वर्तयेत् ॥ ४४ ॥ हस्ते पंचप्रमाणं च वस्त्रैः कुर्याच्च वर्तिकाम् ॥ पञ्चविंशतिभिर्वा यः स महावर्तिरुच्यते ॥४५॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे चतुर्थोऽध्यायः ॥४॥

॥ सूत उवाच ॥ अतः परं प्रवक्ष्यामि कलशानां विनिर्णयम् ॥ यस्यार्पिते च मांगल्ये यात्रासिद्धिश्च जायते ॥१॥ सप्ताङ्गं कलशे ज्ञेयं पञ्चाङ्गमथ



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वा पुनः ॥ वारिमात्रेण संपूर्णे न सा सिद्धिः प्रजायते ॥२॥ अथ वाक्षतपुष्पेषु देवमावाह्य पूजयेत् ॥ न चान्यत्र यजेद्देवान्विफलं परिकीर्तितम् ॥३॥ वटस्याश्वत्थवृक्षस्य धातकीबिल्वकस्य च ॥ पञ्चपल्लवमुद्दिष्टं विन्यसेत्कलशोपरि ॥ ४ ॥ सौवर्णा राजता वापि ताम्राद्या मृन्मयास्तथा ॥ कलशाः क्रमशः प्रोक्ता यथावित्तानुसारतः ॥ ५ ॥ अभेद्याः सुपमाः पृक्षाः सर्वे आद्याः सुपूरिताः ॥ निश्छिद्रा ऋजवश्चैव सेचनान्येककर्षकः ॥ ६ ॥ एकत्रिंशाङ्गुलं कुर्यात्कालाहे द्विगुणं शतम् ॥ मुखं चाष्टांगुलं तस्य द्व्यंगुले च वरार्थिते ॥७॥ तैजसैः कारयेन्मानं मृन्मये मानमुच्यते ॥ कलशोदकनिर्माणे अमानं नैव योजयेत् ॥ ८ ॥ कलशस्थापनं वक्ष्ये यत्र सन्निहिताः सुराः ॥ व्युत्क्रमेण प्रविन्यासे यातुधानो हरेत्किल ॥ ९ ॥ यज्ञे साधारणं वक्ष्ये यद्विधानं यथामतम् ॥ स्वस्तिकोपरि विन्यासे संपूर्णस्यार्धमानके ॥ १० ॥ चतुरस्रोत्तरं भित्त्वा चोर्ध्वाधोमानतः समम् ॥ तुर्यसूत्राणि मतिमान्पञ्च पूर्वायतनानि च ॥ ११ ॥ मार्जयेत्स्वस्तिकाकारं तुर्यमात्रं यथा भवेत् ॥ स्वस्तिकं जायते तत्र कलशानां तथासनम् ॥ १२ ॥ स्योना पृथिवीति मंत्रेण कुर्याद्भूमिपरिग्रहम् ॥ मध्यमानानिकाभ्यां च न्यस्येत्पातालसंमुखम् ॥ ऋषिर्नारायणोऽस्य स्याद्गायत्री देवता रविः ॥ १३ ॥ विनियोगः स्थापने च तथा भूमिपरिग्रहः ॥ धान्यमसीति मन्त्रेण धान्यसूक्तं परिस्तवेत् ॥ १४ ॥ अस्य मन्त्रस्य च ऋषिर्गौतमः परिकीर्तितः ॥ अनुष्टुप्च भवेच्छन्दो देवतास्य गुरुः स्मृतः ॥ १५ ॥ आजिघ्र कलशं मह्यां स्थापयेत्कलशं ततः ॥ कनिष्ठांगुष्ठकं त्यक्त्वा कुम्भाग्रे उदरेऽपि च ॥ १६ ॥ विन्यासश्चैव कर्तव्यस्त्र्यंगुले ब्रह्ममुद्रया ॥ आजिघ्रस्य च मन्त्रस्य ऋषिर्भर्ग उदाहृतः ॥ पंक्तिश्छन्दश्च उद्दिष्टो देवता विष्णुरव्ययः ॥ १७ ॥ कलशस्थापने चैव सोमयागे च योजयेत् ॥ पंचनद्येतिमन्त्रेण क्षिपेद्गङ्गाजलं ततः ॥ १८ ॥ देवता परमा त्रिष्टुब्देवता सोमभावितः ॥ विनियोगः पल्लवे च विन्यसेत्परिकीर्तितः ॥ १९ ॥ याः फलिनीति मंत्रेण प्रदद्यात्सफलाक्षतम् ॥ याः फलिनीति मंत्रस्य ऋषिः कमलसंज्ञकः ॥ त्रिष्टुप्छन्दो गणपतिर्देवता परिकीर्तिता ॥ २० ॥ वदरं नागरं चैव धात्री च पिचुमर्दकम् ॥ जीवंती पीवरं चैव फलान्येतानि वर्जयेत् ॥ २१ ॥ हिरण्यगर्भेति ऋचा पञ्चरत्नानि निक्षिपेत् ॥ ऋषिर्हिरण्यगर्भोऽस्य छन्दस्त्रिष्टुबुदाहृतम् ॥ सविता देवता चास्य रत्नन्यासेति योजयेत् ॥२२॥ अमृतीकरणं कुर्याद्दैवशुल्बनमेव च ॥ वरुणस्य त्वेति ऋषिर्वरुणांतरे योजयेत् ॥२३॥ श्रीश्च ते इति मन्त्रेण दद्यात्पुष्पं सचन्दनम् ॥ गन्धद्वारेति मंत्रेण दद्याद्गन्धं विलोडितम् ॥ २४ ॥ काण्डादिति च मन्त्रेण दद्याद्दूर्वाक्षतं पुनः ॥ व्रीहयश्चेति मन्त्रेण पञ्च व्रीहींश्च निक्षिपेत् ॥२५॥

१ छन्द इति शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तिलाश्च माषा मुद्गाश्च श्यामाकाः शालयः स्मृताः ॥ पञ्च धान्यगणः प्रोक्तः सर्वारिष्टनिषूदनः ॥ २६ ॥ इति श्रीभविष्ये महापुराणे मध्यम पर्वणि द्वितीयभागे पञ्चमोऽध्यायः॥ ५ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ अथ मासाश्रयं कर्म कर्तुं मासनिरूपणम् ॥ क्रियते तद्विधं संख्ये भवेन्मास श्चतुर्विधः ॥ १ ॥ चान्द्रः सौरः सावनश्च नाक्षत्रश्च तथापरः ॥ शुक्लप्रतिपदं प्राप्य यावद्दर्शं च ऐन्दवः ॥ २ ॥ एकराशौ रविर्यावत्स मासः सौर उच्यते ॥ त्रिंशता दिवसैर्मासः सावनः परिकीर्तितः ॥ ३ ॥ नाक्षत्रमासोऽश्विन्यादिरेवत्यन्तो हि विश्रुतः॥उदयादुदयं यस्तु सावनो दिवसो रवेः ॥ ४ ॥ तंत्रेणैकतिथेर्भागकालो दिवस ऐन्दवः ॥ राशेस्त्रिंशद्भागकालः कालस्त्वेकस्य भास्वतः ॥५॥ अहोरात्रं तु तज्ज्ञेयं सौरेऽपि भागमानतः॥ अहोरात्रं साधनस्य मुख्यवृत्त्यैव लभ्यते ॥ ६ ॥ सौरे चान्द्रे तूपगणौ त्रिंशद्भागे त्वदर्शनात् ॥ सावना दिवसा ग्राह्या ऋणीणां समये गृहे ॥ ७ ॥ अतिभागव्यवस्थायां प्रायश्चित्तक्रियासु च॥मन्त्रोपासनकार्ये च अन्नस्य प्राशने शिशोः॥८॥ करस्य ग्रहणे राज्ञो व्यवहारेषु मासु च॥यज्ञेषु दिनसं ख्यायां ग्राह्यो मासस्तुसावनः ॥९॥ सौरमासो विवाहादौ यदाद्यैः सुप्रगृह्यते ॥ यज्ञेष्वपि व्रते वापि विहिते स्नानकर्मणि ॥१०॥ चान्द्रस्तु पार्वणे ग्राह्यो वार्षिकेष्वष्टकासु च ॥ श्राद्धेषु तिथिकार्येषु तिथ्युक्तेषु व्रतेषु च ॥११॥ नाक्षत्रः सोमपादीनामार्यभागविचारणे ॥ करग्रहविधौ राज्ञां नायं सर्वजनाकृतिः ॥ १२॥ तद्वच्चैत्रादिमासोक्तं तिथ्युक्तं कर्म दृश्यते ॥ तत्तु चान्द्रेण कर्तव्यं सा हि चैत्रादिनोच्यते ॥१३॥ राजोक्तौ सावनः प्रोक्ते तिथिसंभागकर्मणि॥तत्र सौरो भवेद्वाच्यः सौरशब्दप्रवर्तनात् ॥१४॥ चित्रानक्षत्रयोगेन चैत्री सा पूर्णिमा स्मृता॥तयोपलक्षितो मासश्चैत्र इत्यभि धीयते ॥ १५ ॥ स च तिथ्यात्मको मासश्चान्द्रः श्रवणभास्करः ॥ चान्द्रश्चैत्र्यंतिको मासो मुख्यश्चैत्रादिसंज्ञकः ॥ १६॥ गौणोऽप्यसौ युगाद्या देरनुरोधेन वर्धनात् ॥ मुख्यः शुक्लादिदर्शांतो मासो लाक्षणिको मतः ॥ १७ ॥ चैत्राद्याश्चान्द्रमासा ये द्वादशापि तु योगतः ॥ पौर्णमासीयुता भिस्तु न चर्क्षत्वं न रेभिरे ॥ १८ ॥ विशाखयाद्येषु या वा तथा भाद्रपदेन वा ॥ यत्र न पूर्णिमायोगो मासः स स्याद्विनाशकः ॥ १९ ॥ योऽसौ यद्यपि चैत्रादौ नैष्ठिकोऽपि प्रलभ्यते ॥ यथा सौरेऽपि यातोऽसौ योगोऽयमतिदुर्घटः ॥ २० ॥ तथा च माससामान्ये योगेनायं भवेत्कचित् ॥ यदि वर्षसहस्रान्ते तदक्षेणैव पूर्णिमा ॥ २१ ॥ संयुक्ता लभ्यते यत्र भवेद्राज्यविनाशनम् ॥ सूर्याचन्द्रमसौ नित्यं कुर्वाते तिथिभोजनम् ॥ २२ ॥ दण्डद्वये भुक्तशेषे न भुञ्जीत कदाचन ॥ अतिक्रम्यापरां भोक्तुं तिथिं यत्र उभावपि ॥२३॥ यत्र विंशत्तिथिस्तस्मात्सञ्चितैका भवेदिति ॥ त्रिंशता चान्द्रमासौ तु चन्द्रेणैको हि वर्द्धते ॥ २४॥ स चाधिको यतो मासस्ततः स्यादधिमासकः ॥ समरात्रिं दिवं कृत्वा वैवस्वतपुरीगतिम् ॥ २५ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राशे राश्यंतरे सूर्यो यावद्गच्छति भानुमान् ॥ गच्छन्वर्धयति पूर्वं तिथयस्तास्तु संचिताः ॥ २६ ॥ वर्धंते तिथयो यावत्तुलां याति दिवाकरः ॥ तुलादिराशिषट्के तु न वर्द्धंते कदाचन ॥ २७ ॥ स्वभावात्समगत्या तु यतः संक्रमते रविः ॥ संचयमाना त्वेकैका प्रतिमासं विवर्द्धते ॥ निशास्वपि तु सौरे ता एकस्मिंस्तिस्र इत्यपि ॥ २८ ॥ संपूर्णत्रिंशत्तिथिभिर्मास्येकस्मिन्यदा भवेत् ॥ स चान्द्रो मलिनो मासः कोणपाद्यैः समीहितः ॥ २९ ॥ भुक्तोच्छिष्टा तु तन्मासादसंस्पृष्टदिवाकरः ॥ यदा संक्रमते लंघ्य तदा ज्ञेयो मलिम्लुचः ॥ ३० ॥ सार्धवर्षद्वये पूर्णे पतत्येवं निशाकरः ॥ परित्यक्ताश्च यावंत्यो व्युत्क्रमिण्यश्च याः पुनः ॥ तिथयस्ते नियोक्तव्या नरो न स्यात्स पूरणः ॥ ३१ ॥ नैर्ऋत्यांतं हितार्थाय जलकेतुर्निगच्छति ॥ निर्ममं मलिनं मासं प्रेतानां च हिताय च ॥३२॥ अतः प्रेतक्रियाः सर्वाः कार्या मलिम्लुचेऽपि च ॥ यत्कर्तव्यं न कर्तव्यं मलमासे द्विजोत्तमाः ॥३३॥ तदिदानीं प्रवक्ष्यामि कथितं च प्रसंगतः ॥ यच्छ्राद्धं प्रेतसंबंधि सपिंडीकरणावधि ॥ मलमासेऽपि तत्कार्यं विशिनष्टि सपिंडनम् ॥ ३४ ॥ यदा तु द्वादशो मासो दैवान्मलिम्लुचो भवेत् ॥ तत्रैव यत्नात्कर्तव्या क्रिया प्रेतस्य वार्षिकी ॥ ३५ ॥ मासांतरे तु पतिते तस्मिन्नेव मलिम्लुचे ॥ तदा त्रयोदशे मासि कर्तव्यं तत्सपिंडनम् ॥ ३६ ॥ वर्ज्यं मासिकया श्राद्धमेकं तस्मिंस्त्रयोदशे ॥ त्रिंशता घटिकैः श्राद्धं वर्धतेऽप्यापि संमितम् ॥ ३७ ॥ कुर्यात्पत्याब्दिकं कर्म प्रयत्नेन मलिम्लुचे ॥ नैमित्तिकं च कुर्वीत नाधिकारस्तयोर्भवेत् ॥ ३८ ॥ तीर्थस्नानमलभ्यं तत्तदाद्यं देवदर्शनम् ॥ उपवासादिकं कर्म सीमन्तोन्नयनं तथा ॥ ३९ ॥ आर्तवजं पुंसवनं पुत्रादिमुखदर्शनम् ॥ मलमासेपि कुर्वीत शुक्रे चास्तमुपागते ॥४०॥ मलमासेपि कुर्वीत नृपाणामभिषेचनम् ॥ व्रतारंभं प्रतिष्ठां च चूडाकर्म च मेखलाम्॥४१॥ मंत्रोपासां रहस्यं च महादानं सुमङ्गलम् ॥ विवाहं च गृहारंभं प्रवेशं नववेश्मनः ॥ ४२ ॥ उपग्रहं गवादीनामाश्रमांतरसंक्रमम् ॥ दीर्घमात्रासु नेज्यं वै तीर्थयात्रावसेचनम् ॥ ४३ ॥ वर्षवृद्धिवृषोत्सर्गकन्याद्विर्नयनादि च ॥ यज्ञं च कामिकं विद्वान्मलमासे विवर्जयेत् ॥४४॥ एवमस्तं गते शुक्रे वृद्धबाल्ये च संत्यजेत्॥पादास्तं च महास्तं च द्विविधं चास्तमस्य तु ॥ ४५ ॥ द्विसप्ततिर्दिनान्यस्य महास्तं पूर्वतो भवेत् ॥ पृथिव्यामेव पादास्तं भवेद्द्वादशवत्सरान् ॥ ४६ ॥ ऊनपञ्चाशदधिकं दिवसानां शतद्वयम् ॥ प्रतीच्यामुदितः काव्यो दृश्यो भवति सर्वदा ॥ ४७ ॥ एकर्क्षे गुरुणा युक्तो यावत्तिष्ठति भार्गवः ॥ मलमासवत्कर्माणि प्राहुस्त्याज्यानि सर्वशः ॥४८॥ ऋक्षभेदे त्वेकराशौ संपर्के यदि वानयोः ॥ गुरो राहोरपि तथा त्यजेद्विद्वान्न संशयः ॥ ४९ ॥ सिंहे राशौ स्थिते सूर्ये जीवे चास्तमुपागते ॥ हेयानि यानि कर्माणि निषिद्धानि मलिम्लुचे ॥ ५० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिथुनस्थे यदा भानौ मलमासः पतत्यसौ ॥ द्विराषाढ इति ख्यातो गौणे शब्दविवर्तनात् ॥ ६१ ॥ फलं चात्र मृतस्यौर्ध्वदेहिकं कर्म कुर्वता ॥ आषाढकीर्तनं कार्यमेवं वर्षांतरेऽपि च ॥ ६२ ॥ आषाढद्वयसंयुक्तपूर्णमासीद्वयं तथा ॥ कुम्भकर्कटयो राश्यो द्विराषाढस्तदा भवेत् ॥ ६३ ॥ भवेद्गौणो द्विराषाढो राशिस्तत्रैव संयुते ॥ पूर्वत्रिके तु पतिते तदेव भगवान्हरिः ॥ ६४ ॥ कर्कटे शयनं कुर्यादागमिष्यं परत्रके ॥ कर्किण्यर्के सुतहरौ शक्रपूजाश्विने भवेत् ॥ ६५ ॥ दुर्गोत्थानं तुलायां तु विष्णुर्निद्रां जहात्यसौ ॥ ६६ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे षष्ठोऽध्यायः ॥ ६ ॥छ॥ ॥ सूत उवाच ॥ ॥ दैवं वा पैतृकं कर्म कालमाश्रित्य वर्तते ॥ काले तान्येव कर्माणि फलं यच्छंति कुर्वताम् ॥ १ ॥ मुहुर्बाल्ये कर्मफलं त्रिकालेऽपि न विद्यते ॥ व्ययो वा मुख्यभावेन फलदः कर्मशालिनाम् ॥ २ ॥ कालस्तु गुणभावेन सर्वकालाश्रिता क्रिया ॥ न कालेन विना किञ्चित्रिषु लोकेषु जायते ॥ ३ ॥ अतः कालं प्रवक्ष्यामि निमित्तं कर्मणामिह ॥ काले ह्यमूर्तिर्भगवानेक एव तु यद्यपि ॥ तथाप्युपाधिभेदेन भिद्यते कालभेदिभिः ॥४॥ तिथिनक्षत्रवारादौ रात्रियोगाद्योपि ये ॥ तेऽपि कालाः पक्षमासराशिवर्षांतरेऽपि च ॥ साधनानि भवन्त्येते स्वातन्त्र्येण न कस्यचित् ॥५॥ धर्मस्य वाप्यधर्मस्य मुख्यो व्यापार एव सः ॥ तिथ्यादिकालभावेषु निषिद्धं निहितं हि तत् ॥ ६ ॥ पालयन्स्वर्गमाप्नोति हित्वा प्राप्नोत्यधोगतिम् ॥ साधयंत्यपि कर्माणि परस्परमवेक्ष्यते ॥ ॥ ७ ॥ कालभागो निःसहायो येऽपि स्युः कर्मसाधनाः ॥ तिथौ पूर्वाह्णव्यापिन्यां कुर्वीत कर्म वैदिकम् ॥ ८ ॥ एकोद्दिष्टं तु मध्याह्नव्यापिन्यां हि समाचरेत् ॥ पराह्णव्यापिनीं प्राप्य तिथिं कुर्यात्तु पार्वणम् ॥ ९ ॥ न तु पूर्वाह्णमध्याह्नपराह्णेषु यथोचितम् ॥ अप्रधाने तु कुर्वीत कर्म दैवादिकं च यत् ॥१०॥ एको हि कालः प्रातस्तु वृद्धिश्राद्धादिसाधने ॥ नापेक्षते साहाय्यं तत्तिथ्यादिविषुवादिषु ॥११॥ देवेभ्यो ब्रह्मणा दत्तः पूर्वाह्णस्तिथिभिः सह ॥ पितृभ्यो ह्यपराह्णस्तु पार्वणं तु परं विना ॥ १२ ॥ पूर्वाह्णमात्रसंप्राप्तौ ततो देवान्प्रपूजयेत् ॥ पूर्वाह्णस्पर्शमात्रेऽपि तिथिखण्डेन चार्पयेत् ॥१३॥ खर्वा दर्पा तथा हिंस्रा तिथिश्च त्रिविधा भवेत् ॥ खर्वादि लंघयेत्तुल्या दर्पा भवति वर्द्धिता ॥१४॥ हिंस्रा तु क्षयजा ज्ञेया कालभेदेन गृह्यते ॥ खर्वा दर्पा परे ग्राह्या हिंस्रा ग्राह्या तु पूर्वतः ॥ १६॥ शुक्लपक्षे परा ग्राह्या कृष्णे पूर्वा प्रशस्यते ॥ स्नानदानव्रते चैव विपयोगो निदर्शितः ॥ १७ ॥ तिथौ चोदेति सविता कालमात्रं च वा यदि ॥ अन्यापि सैव विज्ञेया तिथिस्तस्मिन्नहर्निशम् ॥ १८ ॥ यथावास्ते रविर्भाति घटिका दश वापि वा ॥ सा तिथिस्तदहोरात्रं व्यपदेश्या न चेतरा ॥१९॥ शुक्ले वा यदि वा कृष्णे खर्वा दर्पा तिथिश्च या ॥ ययास्तं सविता याति पितृकार्ये



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च सा तिथिः ॥ २० ॥ दिनद्वयेऽपि कुतपे अस्तगां तिथिमाश्रयेत् ॥ श्राद्धकालादिकं यत्र तत्र श्राद्धं विधीयते ॥ व्रते च वृद्धिगामिन्यां यत्रोदयो रवेर्भवेत् ॥२१॥ अमावास्यपार्वणे च सा तिथिः पितृपूजने ॥ अमावस्यामृतस्यैव पार्वणं यत्र कुत्रचित् ॥२२॥ अस्तगामितिथिर्यत्र सा तिथिः पितृमंदिरम्॥एकोद्दिष्टं चरेत्तत्र नोदये च कदाचन॥२३॥शुक्लपक्षे च कृष्णे च यो योगः परपूर्वयोः॥पूर्वेद्युर्वा परेद्युर्वा त्रिसंध्यव्यापिनी तिथिः॥ सा पूज्या च स्वकृत्येषु पक्षयोरुभयोरपि ॥२४॥ पूज्या हि व्यस्तं संत्यज्य पूर्वं चैकादशीयुगम् ॥ द्वितीया वह्निना युक्ता चतुर्थी पंचमीयुता ॥ ॥ २५ ॥ एता उपोष्यास्तिथयः पुण्याः स्युर्धर्मवेदिभिः ॥ एतद्व्यस्तास्तु पुण्यानि घ्नंति पूर्वकृतान्यपि ॥ २६ ॥ बाणेन विद्धा या षष्ठी मुनिविद्धा तथाष्टमी ॥ दशम्येकादशीविद्धा त्रयोदश्या चतुर्दशी ॥ २७ ॥ अमावास्या भूतविद्धा नोपोष्या मुनिनापि च ॥ हंति पुत्रकलत्राणि धनानि समुपोषिता ॥ २८ ॥ विद्धा ये नाभिनिन्द्याः स्युर्युक्तास्तेनाभिनन्दिताः ॥ व्यस्तस्य संभवे युग्मं विद्धा भवति सर्वशः ॥२९॥ तामस्तां तु तिथिं प्राप्य युग्मान्यपूज्यतामियुः ॥ युग्मानि च दिवायोगे ग्राह्याणि व्यस्तनिंदनम् ॥ ३० ॥ नक्तादिव्रतयोगे तु दिवासंवर्द्धमर्करान् ॥ रात्रियोगश्च तुर्थ्योस्तु विशिष्य परिगृह्यते ॥ ३१ ॥ रात्रियोगं विनापि स्यादेकादश्यादिकं व्रतम् ॥ नक्तं जागरणं चैव विनायोगेऽपि शस्यते ॥ ३२ ॥ एकादश्युपवासं तु द्वादशीयोगतश्चरेत् ॥ दिवायोगे तु संपूर्णां त्यजेदुभयपूर्वतः ॥ ३३ ॥ रात्रियोगे तु संपूर्णा सोपास्यैकादशी सदा ॥ सप्तमी शुक्लपक्षेऽपि पूज्या षष्ठ्या समन्विता ॥ ३४ ॥ निशि तु स्याद्यदा षष्ठी सप्तमी नवमी दिवा ॥ उपोष्य केवलां षष्ठीं तोषयेद्भास्करं नरः ॥ ३५॥ एवं त्रयोदशीं कृष्णां विधिप्राप्तां विना द्विजाः ॥ उपोष्य पार्वतीनाथं तोषयेद्यश्च केवलम् ॥३६ ॥ दिवा त्रयोदशीयुक्ता कृष्णोपोष्या चतुर्दशी ॥ परेणापि चतुर्दश्या न तु कुर्यादमातिथौ ॥३७॥ त्रिसंध्यव्यापिनीं प्राप्य यदि कुर्यादुपोषणम् ॥ पारणं तु सिनीवाल्यां चतुर्दश्यामुपोषयेत्॥३८॥ चतुर्दशीमतिक्रम्य सिनीवाल्यां तु पारणात् ॥ व्रतानि तस्य नश्यंति प्राकृतानि चतुर्दशीम ॥३९॥ सप्तमी ललिता भाद्रे शक्रोत्थानं च वारुणी ॥ पूज्याश्चैताः पराः कुर्यात्त्रिसंध्यव्यापिनीष्वपि ॥४०॥ त्रिसंध्याव्यापिनी पूर्वे परतो वर्द्धते यदि ॥ सऋक्षा ऋक्षयोगे तु ऋक्षाभावे परा युता॥४१॥ ऋक्षाभावे परा ग्राह्या त्रिसंध्यव्यापिनीष्वपि ॥ श्रावणे चाद्यपादे तु प्रशस्ता शक्रपूजने ॥४२॥ अभावे चोत्तरापाढा धनिष्ठा च विशिष्यते॥ दण्डार्धं दण्डमेकं वा तदर्धं पलमेव वा ॥४३॥ उदये संयुता ग्राह्या सा तिथिश्चोत्तमा भवेत् ॥ त्रिसंध्यव्यापिनीं हित्वा पूज्या शुक्लाष्टमी परा ॥४४॥ रविचक्रवता ग्राह्या रथे तिथ्यादेरपि च ॥ त्रिसंध्यव्यापिनी या तु पलमेकं परे दिने ॥४५॥ अपरेऽपि च सर्वत्र हलानां वाहनं त्यजेत्॥ शुक्लैकादश्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मावास्यासंक्रान्त्यां श्राद्धवासरे ॥४६॥ नराश्वगोगजादीनां वाहनात्पातकी भवेत् ॥४७॥ कर्तुर्गोमहिषादीनां गर्दभोष्ट्रखरस्य च ॥ न वाहयेद्दास दासीं वाहनेनास्ति दूषणम् ॥ ४८ ॥ बहुकालिकयज्ञे च यज्ञश्राद्धे तथैव च ॥ ग्रामांतरे न दोषः स्याद्दिवि नद्यंतरेऽपि च ॥ ४९ ॥ नित्यश्राद्धेऽ प्यम्बुघटे यच्छ्राद्धं मासिकं भवेत् ॥ तत्र गोमहिषादीनां वाहने नास्ति दूषणम् ॥ ५० ॥ कुर्यादंबुघटश्राद्धं न कालनियमं क्वचित् ॥ न चात्र नियमं कुर्यादश्मपात्रं च वर्जयेत् ॥ ५१ ॥ तैजसैर्निर्मितं कुम्भमथ वा वृक्षपत्रजम् ॥ न योजयेन्मृन्मयं च शूद्राणां मृन्मये विधिः ॥ ५२ ॥ निवेदयेच्च मासांते मृन्मयं वृक्षमूलके ॥ आस्फालयेत्परेणैव न वस्त्रं तु कथञ्चन ॥ पर्वश्राद्धे दैवलकं तथा रण्डाश्रमं त्यजेत् ॥ ५३ ॥ मातापितृ परित्यागी तैलहव्यादिविक्रयी ॥ चत्वारिंशदुत्सवानां साधानां च चरेद्यदि ॥ ५४ ॥ स्त्रिया विमुच्यते कश्चित्स तु रण्डाश्रमी मतः ॥ अष्टचत्वा रिंशदब्दं वयो यावन्न पूर्य्यते ॥ ५५ ॥ पुत्रभार्य्यावियुक्तस्य नास्ति यज्ञाधिकारिता ॥ ५६ ॥ यां तिथिं समनुप्राप्य समुदेति दिवाकरः ॥ स्नाना ध्ययनदानेषु सा तिथिः सकला स्मृता ॥ ५७ ॥ ययास्तं सविता याति कृष्णपक्षे तु सा तिथिः ॥ पितॄणां सकला ज्ञेया स्नानदानादिकर्मसु ॥ ॥ ५८ ॥ सप्तमी शुक्लपक्षे या यावदिच्छेच्च खण्डिता ॥ आद्यभागे रवेः षष्ट्यां परादौ याष्टमीयुता ॥ यद्यखण्डा भवेत्सैव तदा ज्ञेया भवात्मिका ॥ ५९ ॥ माघमासेन साप्येवं पूर्वेण रवितोषिणी ॥ मन्वंतरा परेणैव स्नानपानादिकर्मसु ॥ ६० ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे सप्तमोध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ तिथीनां प्रवरा यस्माद्ब्रह्मणा समुदाहृता ॥ प्रतिपादिता परे पूर्वे प्रतिपाद्य नवोद्यते ॥ १ ॥ कार्तिकाश्वयुजोश्चैत्रे माघे चापि विशेषतः ॥ स्नानं दानं दशगुणं शिवविष्ण्वोश्च पूजनम् ॥ २ ॥ अग्निमिष्ट्वा च कृत्वा च प्रति पद्यामिति स्मृतम् ॥ हविषा सर्वधान्यानि प्राप्नुयादीप्सितं धनम् ॥ ३ ॥ बृहस्पतौ द्वितीयायां शुक्लायां विधिपूजनम् ॥ कृत्वा नक्तं समश्नीयाल्ल भते भूतिमीप्सिताम् ॥४॥ मिथुने कर्कटे चैव गोविप्रदमनांतरम् ॥ द्वितीया यातु विप्रेंद्रास्तामुपोष्य हरिं यजेत् ॥ यामुपोष्य न वैधव्यं प्रयाति स्त्री न संशयः ॥ ५ ॥ अमूल्यशयनं मासं दंपती प्रतिपूजयेत् ॥ वासोभिर्गन्धपुष्पैश्च नानाभक्ष्यैः पृथग्विधैः ॥ ६ ॥ वैशाखे शुक्लपक्षे तु तृतीयायां तथैव च ॥ गंगातोये नरः स्नात्वा मुच्यते सर्वकिल्बिषैः ॥७॥ स्वातियुक्ततृतीयायां वैशाखे तु विशेषतः ॥ माघे तु रोहिणीयुक्ता वृषे चाश्वयुजे तथा ॥ ८ ॥ तस्यां यद्दीयते किञ्चित्तदक्षयमुदाहृतम् ॥ विशेषतो हविष्यान्नं मोदकादिसमायुतम् ॥९॥ तोयदानं विशेषेण प्रशंसंतिमनी षिणः ॥ गुडकर्पूरसंयुक्तं ब्रह्मलोके महीयते ॥ १० ॥ बुधश्रवणसंयुक्ता तृतीया यदि लभ्यते ॥ तस्यां स्नानोपवासाद्यमक्षयं परिकीर्तितम् ॥११॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चतुर्थींभरणीयोगे भवेच्चरदिनं यदा ॥ तदाभ्यर्च्य यमं देवं मुच्यते सर्वकिल्बिषैः ॥ १२ ॥ शिवा शांता सुखा चैव चतुर्थी त्रिविधास्मृता ॥ सापि भाद्रपदे शुक्ला शिवलोके सुपूजिता ॥ १३ ॥ कार्त्तिके तु भवेच्छाया तथा माघे तु कीर्त्यते ॥ तस्यां स्नानं तपो दानमुपवासो जपस्तथा ॥ भवेत्सहस्रगुणितं श्राद्धं भवति चाक्षयम् ॥ १४ ॥ गणेशे कारयेत्पूजां मोदकादिभिरादरात् ॥ चतुर्थ्यां विघ्ननाशाय सर्वकामप्रसिद्धये ॥ १५ ॥ श्रावणे मासि पञ्चम्यां शुक्लपक्षे विशेपतः ॥ स्नापयेन्नवनागांश्च गंधतोयैः सुगंधिभिः ॥ १६ ॥ तेषां कुले प्रयच्छंति अभयं प्राणरक्षणम् ॥ १७ ॥ द्वादश्योभयलेखे च गोमयेन विशेपतः ॥ पूजयेद्दधिदुग्धाद्यैः सिंदूरैरपि भक्तितः ॥ १८ ॥ सुप्ते जनार्दने कृष्णपञ्चम्यां भवनांगणे ॥ पूजयेन्मनसा देवीं वामां स्नुहीति संश्रयाम् ॥ १९ ॥ पिचुमंदस्य पत्राणि स्थापयेद्भवनोदरे ॥ पूजयित्वा नरो देवीं न सर्पभयमाप्नुयात् ॥ २० ॥ येयं भाद्रपदे षष्ठी षष्ठी च द्विजसत्तम ॥ स्नानदानादिकं तस्यां सर्वमक्षयमुच्यते ॥ २१ ॥ षष्ठ्यां फलाशनो विप्रा विशेपान्माघकार्तिके ॥ इह चामुत्र सुख्यां च लभते ख्यातिमुत्तमाम् ॥ २२ ॥ शुक्ले पक्षे च सप्तम्यां यदा संक्रमते रविः ॥ महाजया तदा स्याद्वै सप्तमी भास्करप्रिया ॥ २३ ॥ अपराजिता तु भाद्रस्य महापातकनाशिनी ॥ ललिता केवला ज्ञेया पुत्रपौत्रविवर्द्धिनी ॥ २४ ॥ शुक्ला वा यदि वा कृष्णा षष्ठी वा सप्तमी तु वा ॥ रविवारेण संयुक्ता तिथिः पुण्यतमा स्मृता ॥ २५ ॥ आश्विनस्य सिताष्टम्यामष्टादशभुजां यजेत ॥ कार्त्तिके शुक्लपक्षे वा महाविभवविस्तरैः ॥ २६ ॥ आपाढे श्रावणे मासि शुक्लाष्टम्यां च चंडिकाम् ॥ प्रातः स्नात्वार्चयेद्भक्त्या रात्रौ संस्नापयेद्द्विजाः ॥ २७ ॥ चैत्रमासि सिताष्टम्यामशोककुसुमैर्द्विजाः ॥ अर्चयेन्मृन्मयीं देवीमशोकार्थं च सर्वदा ॥ २८ ॥ सत्यष्टममुहूर्ते वा रोहिणीसहिताष्टमी ॥ श्रावणे मासि सिंहार्के क्वचित्सापि च शस्यते ॥ २९ ॥ एकादशीनां कोटीनां व्रतैश्च लभते फलम् ॥ अतो दशगुणं प्रोक्तं कृत्वैतत्फलमाप्नुयात ॥ ३० ॥ अशक्तोऽन्यक्रियां कर्तुमुपवासं तु केवलम् ॥ कृत्वा विमुच्यते पापात्सप्तकृत्यकृतां वरः ॥३१॥ न कालनियमस्तत्र न वारनियमः क्वचित् ॥ नापि नक्षत्रदोपोऽस्ति वारदोषो न गण्यते ॥ ३२ ॥ त्रिकालं पूजये द्देवं दिवा रात्रौ विशेपतः ॥ अर्धरात्रे विशेषेण पुष्पैर्नानाविधैरपि ॥३३॥ दिवा तिथेरलाभे तु न कुर्याद्विधिवद्व्रतम् ॥ रात्रिस्पर्शे यदि परं रजन्यामपि चाष्टमी ॥३४॥ सप्तमी सार्धयामं च रोहिणी वा न संस्पृशेत॥ व्रती संकल्पयेत्तत्र न च रात्रौ कदाचन॥३५॥प्रागारंभं प्रकुर्वीत अधिमात्राधिके व्रती ॥ विश्वनाथादिदेवानां दर्शनं प्राग्विवर्जयेत् ॥३६॥ यत्र तत्रोपवासी स्याद्यामाष्टकव्रतं चरेत्॥ यामार्धं तत्परं यामे पारणं विचरेद्व्रती ॥३७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्परे चाऽन्नजन्यं वा न कुर्यात्पारणं गृही ॥ ३८ ॥ नक्षत्रयोगे ग्रहणे पूजयेत्परमेश्वरम् ॥ जपहोमादिकं कुर्याद्गृही नोपवसेत्क्वचित् ॥ ३९ ॥
दिवाष्टम्यां मुहूर्ते वा प्राजापत्येन संयुतम् ॥ तथापि च दिवाकृत्यं समाप्य च व्रतं चरेत् ॥ ४० ॥ मुहूर्तांते च मासांते अष्टम्यामपि रोहिणी ॥
उपवासे च यो दोषः पूजाहोमः प्रशस्यते ॥ ४१ ॥ नवम्यां च सदा पूज्याः प्रतिमासेऽयुतं द्विजाः ॥ गृह्णीयान्नियमं चैव यथा कर्म फलप्रदम् ॥
॥ ४२ ॥ कार्तिकस्य तु मासस्य दशमी शुक्लपक्षिका ॥ तस्यां युक्ताशना विप्रा ब्रह्मलोकमवाप्नुयुः ॥ ४३ ॥ दशमी ज्येष्ठमासस्य सा चेद्दशहरा
स्मृता ॥ आश्विनस्य महापुण्या कार्तिके विजया स्मृता ॥ ४४ ॥ एकादशी व्रतपरा सर्वपापप्रणाशिनी ॥ सर्वपापविनिर्मुक्ता यथा कुर्वंति
मानवाः ॥ ४५ ॥ दशम्यामेकभक्तस्तु संयतः स्याज्जितेन्द्रियः ॥ एकादश्यामुपोष्याथ द्वादश्यां पारणं चरेत् ॥४६॥ द्वादश द्वादशीर्हन्ति तस्मा
त्तथाचरेद्बुधः ॥ पूर्वेद्युरेकादशी पूर्णा परेहनि च वर्धते ॥ ४७ ॥ न वर्धते द्वादशी तु तदा त्वेवं व्यवस्थितिः ॥ वनवासी परां कुर्यात्पूर्वां कुर्याद्गृ
हाश्रमी ॥४८॥ पूर्वैवैकादशी त्याज्या वर्धते चेत्तिथिद्वयम् ॥ एकादशी द्वादशी तु तदोपोष्या परा तिथिः ॥ ४९ ॥ यदा तु पारणायोग्या द्वादशी
नोपतिष्ठते ॥ तदा पूर्वैव संग्राह्या त्याज्या वृद्धा परेऽहनि ॥ ५० ॥ एकादशी कलायुक्ता सकला द्वादशी यदि ॥ तत्र क्रतुसमं पुण्यं त्रयो
दश्यां तु पारणम् ॥ ५१ ॥ एकादशी द्वादशी च परेऽहनि न लभ्यते ॥ नोपोष्या सा महादोषा पुत्रपौत्रधनक्षयात् ॥ ५२ ॥ एकादशी दशा
विद्धा द्वादश्यां लिप्तिका यदा ॥ द्वादशी पारणायोग्या वर्धते चापरेऽहनि ॥ तदा दिनद्वये त्याज्या पारणं च नियोगतः ॥ ५३ ॥ षोडशीग्रहणं
दृष्ट्वा द्वादशी लुप्तपारणा ॥ चण्डातिथौ व्रतं चैव हंति पुण्यं पुरा कृतम् ॥ ५४ ॥ त्रयोदश्यां यद्विहितं पारणं न तु पुण्यदम् ॥ गृहाश्रमी न
कुर्याद्वा दशमीद्वादशीक्षयात् ॥ ५५ ॥ यदि रुद्रा दशमिश्रा परेऽह्निरविसंक्रमः ॥ तथापि संपरित्यज्य द्वादश्यां समुपावसेत् ॥ ५६ ॥ वज्रालोकन
मात्रं तु दशमी संविशेद्यदि ॥ एकादशी न भोक्तव्या परा ह्येकादशी तदा ॥ ५७ ॥ तदा चेद्दशमीविद्धा समुपोष्या न दूषणम् ॥ ५८ ॥ द्वादश्या
मुपवासं तु यः करोति नरोत्तमः ॥ स याति परमं स्थानं यत्र विष्णुरनामयः ॥ ५९ ॥ उपोष्य दशमीमिश्रां मोहादेकादशीं नरः ॥ निरयं याति
स प्रेत्य धर्मसंततिसंक्षयात् ॥ ६० ॥ रविवारे शुक्रवारे संक्रान्त्यां तु दिनक्षये ॥ उपवासं प्रकुर्वीत पारणं तु विवर्जयेत् ॥ ६१ ॥ शुक्लां वा यदि
वा कृष्णां पूर्वसंकल्पितामपि ॥ एकादशीं सदा कुर्यान्न वै कृष्णेत्तरां क्वचित् ॥६२॥ नक्तेन वर्तयेत्कृष्णामिति शास्त्रविनिश्चयः ॥ मासे चैकादशी
यत्र लभ्यते शुक्लपक्षके ॥ तत्र कुर्यात्कृष्णपक्षे परा तिथिर्न गृह्यते ॥६३॥ श्रावणी द्वादशी शुक्ला चांद्रभद्रे यदा हरौ ॥ तत्रोपोष्य हृषीकेशं पूजयेद्वि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धिवन्नरः ॥ ६४ ॥ श्रावणे चाश्विने चैव लभ्यते द्वादशीदिने ॥ श्रवणेन समायुक्ता महती सा प्रकीर्तिता ॥ ६५ ॥ पुष्येण द्वादशीयुक्ता फाल्गुने विजया स्मृता ॥ कार्तिके चेत्परित्याज्या माघे तु नारकी भवेत् ॥६६॥ या भाद्रे विजया प्रोक्ता श्रवणेन समायुता॥विशेषः कथ्यते तत्र यथावद्व्रत माचरेत् ॥६७॥ एकादश्यामुत्तरतो द्वादशी च दिवान्विता ॥ निशि पूर्णा द्वादशी च श्रवणेनापि संयुता ॥६८॥ सफला द्वादशी ज्ञेया उपोष्यैषा महाफला ॥ ६९ ॥ द्वादश्यां विष्णुविद्धायां वासुदेवं प्रपूजयेत् ॥ कृष्णायां तु व्रतं कुर्याद्बहुदुःखं समाचरेत् ॥ ७० ॥ द्वादशी कामविद्धा चेन्म न्यते नाप्युपोषणम् ॥ हन्यात्पुराकृतं पुण्यं त्रयोदश्यामुपोषणम् ॥७१॥ प्रहरेप्रहरे स्नानं शर्वर्यां च विधीयते ॥ पूजनं चाग्निकार्यं च षट्सु कार्यं व्रती चरेत् ॥७२॥ एकादशीं द्वादशीं च प्राप्नोति श्रवणे यदि ॥ एकादश्यामुपोष्याथ द्वादश्यामप्युपावसेत्॥७३॥पारणं तु त्रयोदश्यां द्वादशी चेन्न लभ्यते ॥ आमिपान्नं न भुञ्जीत हविष्यान्नेन पारणम् ॥७४॥ यदा तु पारणायोग्या लभ्यते द्वादशी तदा ॥ तस्यां नातिक्रमो युक्तस्तदभावे त्रयो दशी॥७५॥ एकादशी द्वादशी च श्रवणर्क्षेण संयुता ॥ विष्णुशृंखलको नाम बुधवारे विशिष्यते ॥७६॥ दशम्यां संयतो भूत्वा प्रातरेकादशीदिने ॥ कृत्वा तु सङ्गमे स्नानं प्रहरेप्रहरे द्विजाः ॥७७॥ अनेन विधिना कृत्वा विजयायां व्रतोत्तमम् ॥ सर्वपापं क्षयं नीत्वा विष्णुलोके वसेन्नरः ॥ ७८ ॥ चतुर्युगानां दिव्यानां यावत्स्याद्विष्णुरूपधृक् ॥ तावदेव हि सर्वत्र सार्वभौमो भवेन्नरः ॥ ७९ ॥ त्रेतायां दश जन्मानि मध्यदेशेषु भो द्विजाः ॥ ततश्च भारते वर्षे वेदवेदांतसारवित् ॥ पुत्रपौत्रधनैर्युक्तो लक्षदो नृपसन्निभः ॥ ८० ॥ जायते दश जन्मानि त्रेतायां ब्राह्मणोत्तमः ॥ सपत्नीकश्च दीर्घायुर्धर्मकर्मसु पूजितः ॥ ८१ ॥ भाद्रे मासि सिते पक्षे द्वादश्यां पृथिवीपतिम् ॥ शक्रमुत्थापयेत्प्राह्णे शुभलग्ने शुभक्षणे ॥ ८२ ॥ शल्यशा ल्मलिकस्यापि सप्तपर्णीयकस्य च ॥ एषामन्यतमं वृक्षं चंपकस्यार्जुनस्य वा ॥ ८३ ॥ बृहत्कदंबवृक्षस्य द्विचत्वारिंशदंगुलैः ॥ द्वात्रिंशदंगुलैर्वापि मानद्वयमथापि वा ॥ त्रिव्यायामं च प्रथमं द्वाविंशहस्तमेव वा ॥ ८४ ॥ हस्तः षोडशवारस्य गृहस्थस्य विशिष्यते ॥ हस्तत्रयेण विप्रस्य द्वादश क्षत्रियस्य तु ॥ ८५ ॥ अष्टहस्तं तु वैश्यस्य शूद्रस्य पञ्चहस्तकम् ॥ अग्रतः श्वेतच्छत्रं स्यात्पताका च पुरेपुरे ॥ ८६ ॥ घनसारसमायुक्तां कर्पूरमंडनान्विताम् ॥ रक्तवस्त्रपरिच्छन्नां पुष्पमाल्यैरलंकृताम् ॥ ८७ ॥ मञ्चस्थां कारयेत्पूजां भक्त्या च सुदृढो नरः ॥ सप्तरात्रं चरेत्पूजा मैन्द्रमन्त्रेण मन्त्रवित् ॥ ८८ ॥ काकादीन्न स्पृशेज्जातु वैरपक्षे विशेषतः ॥ पताकाया निपाते तु राष्ट्रहानिं समादिशेत् ॥ ८९ ॥ पताके निस्सृते भग्ने महिपाणां विनाशनम् ॥ स्थूणापाते च भग्ने वा चाश्वहानिं समादिशेत् ॥ ९० ॥ तस्करश्च कुले तस्य प्रायश्चित्तं समाचरेत् ॥ तद्विष्णो



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रिति मंत्रेण शतपद्मसमन्वितम् ॥ ९१ ॥ विष्णुमुद्दिश्य जुहुयादयुतं पिप्पलस्य च ॥ ग्रहाणां च त्रिभागेन चायुतं जुहुयाद्बुधः ॥ ९२ ॥ आदित्यस्याद्भुतमिदं द्विजपाते तु भो द्विजाः ॥ कपोतपाते शुक्रस्य काकादौ भौममादिशेत् ॥ ९३ ॥ भूकंपे जायते विष्टं गुरोरद्भुतमादिशेत् ॥ कीटविद्धे कृते विप्राश्चन्द्रस्याद्भुतमादिशेत् ॥ ९४ ॥ पताके निस्सृते भग्ने राहोरद्भुतमादिशेत् ॥ ९५ ॥ शिवा रुवंति चान्द्रस्य वानरो वा स्पृशेत्क्वचित् ॥ केतोरद्भुतमुद्दिष्टं भूमिकंपे तु ते द्विजाः ॥ ९६ ॥ त्रयोदशीं सितां प्राप्य पुष्पैर्नानाविधैरपि ॥ कामदेवं समभ्यर्चेद्गन्धाद्यैः सुमनोहरैः ॥ ९७ ॥ चैत्रे मासि सिताष्टम्यां शनौ शतभिषा यदि ॥ गंगाया यदि लभ्येत सूर्यग्रहशतैः समा ॥ ९८ ॥ सेयं महावारुणीति ख्याता कृष्णत्रयोदशी ॥ अस्यां स्नानं च दानं च श्राद्धं वाक्षयमुच्यते ॥ ९९ ॥ मधुमासे सिते पक्षे दम्भभञ्जी चतुर्दशी ॥ तस्यां मदनमूले च अक्षरं काममर्चयेत् ॥ १०० ॥ स याति परमं स्थानं मदनस्य प्रभावतः ॥ जुगुप्सितवचोभिस्तु सम्यक्तुष्टो मनोभवः ॥ १०१ ॥ अनन्तस्य व्रतं वक्ष्ये सर्वपापप्रणाशनम् ॥ अनन्तं सुखमाप्नोति यः कुर्याद्भक्तिमान्नरः ॥ १०२ ॥ द्वादश्यां पूजिते शक्रे ध्वजके वास्तुयष्टिषु ॥ ततः शुक्लचतुर्दश्यामनन्तं पूजयेद्धरिम् ॥ १०३ ॥ कृत्वा दर्भमयानन्तं वारिधान्यान्वितं तथा ॥ पूजयेच्चन्दनैर्गन्धैर्नैवेद्यैर्विविधैरपि ॥ १०४ ॥ चतुर्दश फलैर्मूलैर्जलजैः कुसुमैरपि ॥ यवगोधूमशालीनां चूर्णैर्नैकतमस्य च ॥ १०५ ॥ कृत्वा पूपाह्वयं तस्मै दद्यादेकं श्रुतेक्षितम् ॥ स्वयमेकं तु भुञ्जीत दद्यात्सूत्रस्य दोरकम् ॥ १०६ ॥ चतुर्दशग्रन्थियुतं कुंकुमेन विलेपितम् ॥ चतुर्दशसूत्रमयं सूत्रं कार्पासमेव च ॥ १०७ ॥ अतः प्रेतचतुर्दश्यां भोजयित्वा तपोधनान् ॥ दानं दत्त्वा द्विजेभ्यश्च यमलोकं न गच्छति ॥ १०८ ॥ ततः प्रेतकथां श्रुत्वा शाकैर्नक्तं समाचरेत् ॥ चतुर्दशं द्वादशं वा सप्तमं वापि पञ्चमम् ॥ १०९ ॥ मानमात्रादिकं कृत्वा सर्वपापैः प्रमुच्यते ॥ ११० ॥ माघे मासि वटापायः कस्य पापं पुनीमहे ॥ स्नात्वा तत्र चतुर्दश्यां समये तारकामये ॥ १११ ॥ संभवेत्फाल्गुने मासि या च कृष्णा चतुर्दशी ॥ शिवरात्रिरिति ख्याता सा जगत्सर्वकामदा ॥ ११२ ॥ दिवा तस्या अलाभे तु रात्रियोगे व्रतं चरेत् ॥ चतुर्दशी अमाविद्धा तद्व्रतं परिवर्जयेत् ॥ ११३ ॥ तिथियोगे च शर्वर्यां संपूर्णे व्रतमाचरेत् ॥ कामविद्धा सा च पूज्या रात्रियोगे चरेद्व्रती ॥ ११४ ॥ प्रहरेप्रहरे स्नानं स्वयं स्नात्वा शिवस्य च ॥ कारयेद्विधिवद्भक्त्या होमं कुर्याद्यथाविधि ॥ ११५ ॥ अथ वक्ष्यामि चैत्रादिमासे तु पूर्णिमा यथा ॥ चित्रानक्षत्रसंयुक्तो गुरुपूर्णो विधुर्यदि ॥ महाचैत्रीति सा ज्ञेया पूर्णिमाक्षयपुण्यदा ॥ ११६ ॥ विशाखादिषु भेदेषु पूर्णचन्द्रो गुरुश्चरेत् ॥ महावैशाखिकाद्यास्तु पूर्णिमा द्वादश स्मृताः ॥ ११७ ॥ महाज्यैष्ठी



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेषोऽयं प्राजापत्ये यथा रविः ॥ गुरुपूर्णचन्द्रे ज्येष्ठायां महाज्यैष्ठीति सा स्मृता ॥ ११८ ॥ विनापि गुरुणा चन्द्रः कृत्तिका पूर्णिमा तथा ॥ तथा महाकार्त्तिकी सा तिथिः पुण्यतमा भवेत् ॥ ११९ ॥ रोहिण्यां तु स्थितश्चन्द्रः पौर्णमास्यां तु कार्त्तिके ॥ महाकार्त्तिकी तथापि स्यात्स्वर्गलोकेऽपि दुर्लभा ॥ १२० ॥ चित्रा वा यदि वा पूर्णा यदा स्यात्पूर्णिमातिथिः ॥ महाचैत्री तथापि स्यादश्वमेधफल प्रदा ॥ १२१ ॥ रविणा कृत्तिकायोगाद्रविवारे च पूर्णिमा ॥ महाचैत्री तथापि स्याद्दत्तस्याक्षयकारिका ॥ १२२ ॥ एवं गुरौ गुरोर्योगे महाचैत्री प्रकीर्तिता ॥ तत्र स्नानं च दानं च जपो नियम एव च ॥ १२३ ॥ सर्वमक्षयतां याति फलं चैवाश्वमेधिकम् ॥ पितरस्त र्पिता यांति वैष्णवं लोकमक्षयम् ॥ १२४ ॥ भरण्यां कार्त्तिके मासि यदि स्यात्पूर्णिमा तिथिः ॥ गंगाद्वारे तु महती वैशाखी पुण्यदा स्मृता ॥ १२५ ॥ शालग्रामे महाचैत्री कृतपुण्या महातिथिः ॥ गंगाद्वारे तु महती वैशाखी पुण्यदा स्मृता ॥ १२६ ॥ पुरुषोत्तमे महा ज्यैष्ठी महाषाढी तु शृंखले ॥ महाश्रावणी केदारे महापुण्यतमा मता ॥ १२७ ॥ महाभाद्री बदर्यां च कुजोऽपि स्यान्नरस्तथा ॥ महाका र्त्तिकी पुष्करे च कान्यकुब्जे तथोत्तरे ॥ १२८ ॥ महती मार्गशीर्षे स्यादयोध्यायां तथोत्तरे ॥ महापौषी पुण्यतमा महामाघी प्रयागतः ॥ ॥ १२९ ॥ महाफाल्गुनी नैमिषे च निर्दिष्टाः स्युर्महाफलाः ॥ १३० ॥ अत्र स्म विहितं कर्म शुभं वा यदि वाशुभम् ॥ सर्वमक्षयतां याति वर्द्धते चाधिकं फलम् ॥ १३१ ॥ आश्विने पौर्णमासी तु कौमुदीति प्रकीर्तिता ॥ अस्यां चन्द्रोदये लक्ष्मीं पूजयेद्विधिवन्नरः ॥ १३२ ॥ निर्व र्तयेन्न यः श्राद्धं प्रभाते पैतृकं द्विजः ॥ इन्दुक्षये मासिमासि प्रायश्चित्तीयते तु सः ॥ १३३ ॥ चन्द्राश्विने तु कृष्णायां पञ्चदश्यां यथाविधि ॥ कृत्वा स्नानादिकं कर्म सोपवासो दिनं नयेत् ॥ १३४ ॥ प्रदोषसमये लक्ष्मीं पूजयित्वा यथाविधि ॥ दीपवृक्षान्यथा वृक्षाँल्लक्ष्मीप्रीत्यै समुत्सृजेत् ॥ ॥ १३५ ॥ नदीतीरे गिरौ गोष्ठे श्मशाने वृक्षमूलतः ॥ चतुष्पथे निजागारे चत्वरे तान्निधापयेत् ॥ १३६ ॥ द्विर्भोजनममावास्यां न कर्तव्यं कदाचन ॥ शर्वर्यां च विशेषेण माघफाल्गुनयोर्नरैः ॥ १३७ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ सूत उवाच ॥ ॥ वक्ष्ये प्रवरसंतानं यथाक्रममिति द्विजाः ॥ यद्विना व्यत्ययो यस्मात्तस्माच्छास्त्रानुसारतः ॥ १ ॥ प्रवरत्रयं काश्य पस्य काश्यपाशावनैध्रुवम् ॥ पञ्चाश्वगौतमस्याद्य गौतमश्चोय एव च ॥ २ ॥ च्यवनो जामदग्न्यश्च आप्नुवायनमेव च ॥ मोकुन्यांगिरसभास्या जामदग्न्याप्नुवायनम् ॥ ३ ॥ शांडिल्यासितदैवलाः प्रवरत्रयमेव च ॥ पराशरस्य च तथा स्वयं शांबवशिष्ठकम् ॥ ४ ॥ आत्रेयमाचार्यणस्याबाल

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रवरमेव हि ॥ वात्स्यवास्यायनौ चैव उरुकंटक एव च ॥ ५ ॥ अर्थक्षीरमित्रावरुणं पञ्चमं परिकीर्तितम् ॥ औतथ्यस्य त्रयं विद्याद्वाल्मीकोऽवर मेव हि ॥ ६ ॥ औतथ्यस्य च वाशिष्ठमैन्द्रे चक्रं च क्रौञ्चायनं तथा ॥ औतथ्येति समाख्यातं माहिष्यं च्यवनं तथा ॥ ७ ॥ उरुकंटत्रयं विद्या त्कौशिकस्य त्रयं तथा ॥ यद्वालो देवराट् ख्यातः कुशिकाद्याश्च भो द्विजाः ॥८॥ विश्वामित्रो देवराट् च स्वयं चैव त्रयं मतम् ॥ घृतकौशिकस्य कुशिका विश्वामित्राघमर्षणम् ॥ ९ ॥ चण्डकौशिकस्य च तथा देवराट् देवरातकम् ॥ विश्वामित्रे तु विख्यातः सुमन्तोरेव एव हि ॥ १० ॥ तरुं कशाकटायनः स्वयमेव प्रवरत्रयम् ॥ भ्रमद्वयं जैमिनेश्च स्वयं वाशिष्ठमेव च ॥ ११ ॥ शंखमांगिरसच्यवनं शंखभस्य त्रयं मतम् ॥ वात्स्यस्य च्यवनो नाम आप्नुवायनकस्तथा ॥ १२ ॥ सावर्णस्य तु सावर्ण्यच्यवनजामदग्निभार्गवम् ॥ आप्नुवायनेति पाठीने एक एव तु सत्तमाः ॥ १३ ॥ कृष्णाजिनस्य कृष्णाजिनं विश्वामित्रस्य जैमिनम् ॥ कात्यायनस्य कात्यायनगार्ग्यायणत्रयं तथा ॥ १४ ॥ वात्स्यायनेति विख्यातं कुशिकस्य च पंचमम् ॥ असुं च विश्वामित्रं च जामदग्न्याप्नुवायनम् ॥ १५ ॥ गार्ग्यस्य गार्ग्यसासुंच तथांगिरस एव च ॥ बार्हस्पत्यभरद्वाज इति पंच प्रकीर्तितम् ॥ १६ ॥ वशिष्ठस्य च वासिष्ठं च तथांगिरस एव च ॥ मित्रावरुणसंयुक्तं तावत्तस्य प्रकीर्तितम् ॥ १७ ॥ जाह्नकर्णभवकर्णौ प्रवरौ परिकीर्तितौ ॥ उपमन्युरुपमन्योस्तथेन्द्रः सह एव च ॥ १८ ॥ तदुत्तमेति त्रितयं मित्रावरुणस्य च त्रयम् ॥ आत्रेयगौतसांगिरसप्रवरत्रय मेव हि ॥ १९ ॥ कमंडलोत्पलमित्रामित्रावरुण एव च ॥ कमंडलुश्चेति त्रितयं प्रवरत्रयमेव च ॥ २० ॥ च्यवनस्य तथा ज्ञेयमूर्वच्यवनाप्लवा यनम् ॥ अथ स कस्यांगिरसबार्हस्पत्य एव त्रयम् ॥ २१ ॥ आगस्त्यस्य अगस्तिश्च माहश्च च्यवनेति च ॥ विश्वामित्रे देवरात औतथ्येति तथैव च ॥ २२॥ ये नोक्ता ये ऽप्यविज्ञातास्ते प्रोक्ताः काश्यपाज्जगत् ॥ २३ ॥ इति श्रीभविष्ये महापुराणे मध्यम पर्वणि द्वितीयभागे नवमोऽ ध्यायः ॥ ९ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ वास्तुयागमथो वक्ष्ये बलिमण्डलपूर्वकम् ॥ अंकुरार्पणकं कृत्वा मध्ये कुर्याच्च मंडलम् ॥ १ ॥ त्रिहस्ता पिंडिका कार्या चतुरस्रा उदक्प्लवा ॥ प्रादेशमात्र उत्सेधो दर्पणांतर्निभो भवेत् ॥ २ ॥ मध्ये संमार्जयेद्विद्वान्पादान्नव यथाक्रमात् ॥ कोणे चतुष्पदं ज्ञेयं दिक्षु त्रिपदकं क्रमात् ॥ ३ ॥ पञ्चकं युग्मपादेन चतुर्दिक्षु ततः परम् ॥ कोणे चतुष्पदं स्थाप्यं चतुष्कोणे विभावयेत् ॥ ४ ॥ चतुष्कोणं बहिः कुर्यात्कोणे चापि चतुष्टयम् ॥ द्वात्रिंशच्च भवेद्वाह्ये चातश्चापि त्रयोदश ॥ ५ ॥ चत्वारिंशत्पञ्चयुता मिलित्वा वास्तुदेवताः ॥ शिखी चैवाथ पर्जन्यो जयंतः कुलिशायुधः ॥ ६ ॥ सूर्यः सत्यो वृषश्चैव आकाशं वायुरेव च ॥ पूपा च वितथश्चैव गुहान्यश्च यमस्तथा ॥७॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गन्धर्वों मृगराजस्तु मृगाः पितृगणास्तथा ॥ दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः ॥ ८ ॥ असुरः पशुपाशौ च रोगो हि मोक्ष एव च ॥ भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा ॥ ९ ॥ बहिर्द्वादश इत्येतानीशानादीन्यथाक्रमम् ॥ ईशानादिचतुष्कोणं संस्थितान्पूजयेद्बुधः ॥ १० ॥ आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च ॥ अर्यमा सविता चैव विवस्वान्विबुधाधिपः ॥ ११ ॥ मित्रोऽथ राजयक्ष्मा च सप्तमः पृथिवीधरः ॥ अष्टमस्त्वापवत्सस्तु परिधौ ब्रह्मणः स्मृतः ॥ १२ ॥ पूर्वादिषु तथा पूज्या गन्धपुष्पैः पृथग्विधैः ॥ पंचचत्वारिंशदेतच्चरक्या च चतुर्थकम् ॥ १३ ॥ मिलित्वा ऊनपञ्चाशदुत्तमा वास्तुदेवताः ॥ नान्यत्र योजयेद्विप्राः प्रासादे च विशेषतः ॥ १४ ॥ बहिः कोणे चरक्यादि चरकं च विदारिकाम् ॥ पूतनां च ततः पश्चाद्वायव्ये पापराक्षसीम् ॥ १५ ॥ स्वैःस्वैर्मंत्रैश्च गंधाद्यैः पूजयेत्कुसुमादिना ॥ यथोक्तेन बलिं दद्यात्पायसान्नेन वा पुनः ॥ १६ ॥ रेखाः सर्वत्र शुक्लेन पद्मं रक्तेन भावयेत् ॥ रञ्जयेदेव वर्णेन बहिष्पञ्चरजेन तु ॥ १७ ॥ देववर्णानथो वक्ष्ये यथावदनुवर्णिताः ॥ रक्तो गौरस्तथा शोणः सितरक्तः सितस्तथा ॥ १८ ॥ पीतः शुक्लश्च धर्मश्च पूपा रक्तः प्रकीर्तितः ॥ श्यामः शुक्लश्च कृष्णश्च पीतः शुक्लो यथाक्रमम् ॥ १९ ॥ पीतो भृंगः पुनः शुक्लः कृष्णः शुक्लस्तथैव च ॥ रक्तः शुक्लश्च शोणश्च कृष्णरक्तस्तथैव च ॥ २० ॥ धूम्रपीतो रक्तपीतः शुक्लः कृष्णश्च श्यामकः ॥ रक्तवर्णेन द्वात्रिंशद्दश वर्णाः प्रकीर्तिताः ॥ २१ ॥ शुक्लशोणं पुनः श्वेतं सिंदूराभं प्रकीर्तितम् ॥ पांडुरं कुंकुमाभं च रक्तं ज्ञेयं च पीतकम् ॥ २२ ॥ शुक्लपीतं च श्वेतं च गौरं चेत्यष्टवर्णकम् ॥ पीतं रक्तं च श्यामं च गौरं चेति चतुष्टयम् ॥ २३ ॥ धरणीमदनं वाद्ये शंभुवर्णादिप्रक्रमात् ॥ शुक्लेन रञ्जयेद्द्वारान्पुरद्वारं च मध्यमे ॥ २४ ॥ मध्येंते ऊनपञ्चाशत्सर्वं च वास्तुकर्मणि ॥ चत्वारिंशद्द्वारयुतं गृहदेवकुलेऽपि च ॥ २५ ॥ महाकूपे तथा श्वेतो अन्यत्रापि प्रशस्यते ॥ सुलिप्ते च शुचौ देशे सार्धहस्तप्रमाणतः ॥ २६ ॥ दश पूर्वायता रेखा दश चैवोत्तरायताः ॥ एकादशीपदं कुर्याद्रेखाभिः पदकेन तु ॥ २७ ॥ सर्ववास्तुविभागेन विज्ञेया नवका नव ॥ पदस्थान्पूजयेद्देवांस्त्रिशत्पञ्चाशदेव तु ॥२८॥ द्वात्रिंशद्बाह्यतः पूज्याः पूज्यागारे त्रयोदश ॥ मध्ये नव पदे ब्रह्मा तस्याप्यष्टौ समीपगाः ॥२९॥ चतुर्दिक्षु षट्पदं तु त्रिपदं तु चतुष्पदम् ॥ पदैकं तु चतुष्कोणे एष वास्तुविनिर्णयः ॥ चरक्यादि ततो हित्वा चत्वारिंशच्च पंचकम् ॥ ३० ॥ अपरं मण्डलं वक्ष्ये यथावदनुपूर्वशः ॥ नवरेखाप्रयोगेण नवकोष्ठान्प्रकल्पयेत् ॥ ३१ ॥ द्विचतुष्कोष्ठकैर्दिक्षु यजेतार्यमणं ततः ॥ विव

१ 'प्रकुत्य. नः पादसम्यसं' इति प्रकृतिपाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वंतं ततो मित्रं महीधरमतः परम् ॥ ३२ ॥ कोणेषु कोष्ठद्वंद्वेषु वाह्यादिपरिकीर्तितम् ॥ सावित्रं सवितारं च शक्रमिन्द्रं जयं पुनः ॥ ३३ ॥ रुद्रं रुद्रजयं चैव वायुं जृंभकमेव च ॥ पिलिपिच्छं च मेधावी विदारीं पूतनां तथा ॥ ३४ ॥ क्रमादीशानपर्यंतां जयंतः शक्रभास्करौ ॥ सत्योवृषां तरिक्षौ च दिशि प्राच्यामवस्थिताः ॥ ३५ ॥ अग्निः पूषा च वितथो यमश्च गृहरक्षकः ॥ गंधर्वो भृंगराजश्च मृगो दक्षिणमाश्रिताः ॥ ३६ ॥ निर्ऋतिर्दौवारिकश्च सुग्रीववरुणौ ततः ॥ पुष्पदंतस्वरौ शोषरोगौ प्रत्यग्दिशि स्थिताः ॥ ३७ ॥ प्राणवायुश्च नागश्च सोमो भल्लाट एव च ॥ मुद्गलाख्यो दित्यदिती कुबेरस्य दिशि स्थिताः ॥ ३८ ॥ मिलित्वा च त्रिपञ्चाशत्तेभ्यः पूर्वं बलिं हरेत् ॥ पिण्याकैः परमान्नैर्वा पूर्वोक्तैर्वा यथा क्रमात् ॥ ३९ ॥ रक्तमर्यमणं ध्यायेच्चतुर्भिर्बहुभिर्वृतम् ॥ श्वेताश्ववाहनं दिव्यं किरीटैः स्वैर्विभूषितम् ॥ ४० ॥ आकृष्णेनेति मन्त्रस्य स्वर्ण ऋषिर्जगतीछन्दः सवित्रर्यमप्रीतये विनियोगः ॥ ४१ ॥ विवस्वंतं पीतवर्णं पीताम्बरधरं शुभम् ॥ मेषस्थं च महाकायं देवगन्धर्वसेवितम् ॥४२॥ एतातविषंतीति मंत्रस्य कर्दम ऋषिः पंक्तिश्छन्दः कमला देवता विवस्वत्प्रीतये विनियोगः ॥ ४३ ॥ मित्रं ध्यायेच्छुक्लवर्णं श्वेतहंसोपरिस्थितम् ॥ त्रिनेत्रं त्रिभुजं चैव श्वेतांबरधरं शुभम् ॥ ४४ ॥ कयानश्चीति मंत्रस्य जयंत ऋषिर्गायत्री छन्दः शङ्करो देवता मित्रप्रीतये विनियोगः ॥ ॥४५॥ प्रीतं महीधरं ध्यायेद्वृषभोपरि संस्थिम् ॥ त्रिभुजं पद्महस्तं च व्यालयज्ञोपवीतिनम् ॥४६॥ त्र्यम्बकमिति मंत्रस्य गर्गऋषिस्त्रिष्टुप् छन्दो हरो देवता महीधरप्रीतये विनयोगः ॥ ४७ ॥ सावित्रीं श्वेतवर्णां च सर्वलक्षणसंयुताम् ॥ द्विभुजां पीतवस्त्रां च श्वेतसिंहासने स्थिताम् ॥ ४८ ॥ रक्ताम्वरधरां रक्तां रक्तमालोपशोभिताम् ॥ ४९ ॥ तद्वर्ष इति मंत्रस्य गौतम ऋषिर्विराट् छन्दः सूर्यो देवता सवितृप्रीतये विनियोगः ॥ ५० ॥ शक्रं ध्यायेत्पीतवर्णं शुक्लैरावतस्थितम् ॥ सर्वदेवैः स्तूयमानं द्विभुजं पीतवाससम् ॥५१॥ त्रातारमिति मंत्रस्य भार्गव ऋषिस्त्रिष्टुप्छन्दो नरसिंहो देवता इन्द्रजयप्रीतये विनियोगः ॥ ५२ ॥ रुद्रं ध्यायेच्छ्वेतवर्णं वृषभारूढविग्रहम् ॥ नागयज्ञोपवीतं च सर्वलक्षणसंयुतम् ॥ ५३ ॥ नमस्ते रुद्रेति मंत्रस्य गायत्री छदस्त्र्यंबको देवता रुद्रप्रीतये विनियोगः ॥ ५४ ॥ रक्तं रुद्रं जयं ध्यायेद्रक्तपद्मोपरि स्थितम् ॥ रक्तश्यामांबरधरं द्विभुजं रक्तवाससम् ॥ ५५ ॥ त्र्यंबकमिति मन्त्रस्य गायत्रीच्छन्दो महेशो देवता रुद्रजयप्रीतये विनियोगः ॥ ५६ ॥ अपि श्वेतं ततो ध्यायेद्वराभयकरं परम् ॥ सर्वलक्षणसंपन्नं श्वेतपद्मोपरि स्थितम् ॥ ५७ ॥ ईशान इति मंत्रस्य मरीचिर्ऋषिः पंक्तिश्छन्दो वायुर्देवता अपां प्रीतये विनियोगः॥ आपवत्सं पीतवर्णं मेषारूढं चतुर्भुजम् ॥५८॥ पद्मशंखधरं वामे वराभयकरं परम् ॥ ५९ ॥ वरुणस्योत्तभनमसीति मन्त्रस्य नरोत्तम ऋषिर्विराट्



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

छन्दो वरुणो देवता आवयःप्रीतये विनियोगः ॥६०॥ कोणसूत्रस्योभयतः श्वेतकोष्ठद्वये पुनः॥शर्वं ध्यायेद्रक्तवर्णं वृषभोपरि संस्थितम् ॥६१॥
द्विभुजं च त्रिनेत्रं च जटाभारोपशोभितम् ॥६२॥ माला स्वाहेति मंत्रस्य भार्गव ऋषिर्गायत्री छन्दो महादेवो देवता शर्वप्रीतये विनियोगः॥६३॥
गुहं ध्यायेत्पीतवर्णं पीतपद्मासनस्थितम् ॥ नानाभरणशोभाढ्यं कुण्डलाद्यैरलङ्कृतम् ॥ ६४ ॥ स बोध इति मन्त्रस्य अगस्तिर्ऋषिर्गायत्री छन्दो
हरो देवता गुहप्रीतये विनियोगः ॥ ६५ ॥ अर्यम्णं द्विभुजं रक्तं रक्तमाल्योपशोभितम् ॥ रक्तपद्मासनस्थं च देवगन्धर्वसेवितम् ॥ ६६ ॥ वातो
वारेति मंत्रस्य काश्यप ऋषिरनुष्टुप्छन्दो वायुर्देवता अर्यमप्रीतये विनियोगः ॥ ६७ ॥ ध्यायेच्च जम्भकं श्वेतं द्विभुजं कुटिलाननम् ॥ करालव
दनं घोरं वराहोपरि संस्थितम् ॥ ६८ ॥ कुविदोगवय इति मन्त्रस्य विश्वामित्र ऋषिर्जगती छन्दः सोमो देवता जंभकप्रीतये विनियोगः ॥६९॥
पिलपिच्छं रक्तवर्णं रक्तमाल्यैरलङ्कृतम् ॥ रक्तपद्मासनस्थं च रक्ताभरणशोभितम् ॥ ७० ॥ देवस्य हेति मन्त्रस्य पंक्तिश्छंदः शची देवता पिल
पिच्छप्रीतये विनियोगः ॥ ७१ ॥ पीतां च चरकीं ध्यायेद्रक्तमाल्यैरलंकृताम् ॥ सुचारुवदनां भव्यां गुञ्जाहारोपशोभिताम् ॥ ७२ ॥ तद्रूपं इति
मन्त्रस्य जटिल ऋषिर्बृहती छन्दो भवो देवता चरकीप्रीतये विनियोगः ॥ ७३ ॥ श्यामां विदारिकां ध्यायेत्त्रिनेत्रां च चतुर्भुजाम् ॥ नानागण
युतां देवीं पङ्कजद्वयधारिणीम ॥ ७४ ॥ श्रीश्च ते इति मन्त्रस्य वरुण ऋषिर्नृसिंहो देवता विदारिकाप्रीतये विनियोगः ॥ ७५ ॥ रक्तां च पूतनां
ध्यायेत्पङ्कजस्थां सुशोभनाम ॥ सर्वाभरणसंपन्नां सर्वालंकारशोभिताम् ॥ ७६ ॥ मयि गृह्णामीति मंत्रस्य विवस्वानृषिर्नारायणो देवता पूतनाप्री
तये विनियोगः ॥ ७७ ॥ पूर्वादिदिक्षु सर्वासु सार्धाद्यंतपदेषु च ॥ ईशानं जटिलं श्वेतं शूलहस्तं महाभुजम् ॥७८॥ त्रिनेत्रं वृषभारूढं नागहारो
पशोभितम ॥ ७९ ॥ आयुःशीर्पाण इति मंत्रस्य वामदेव ऋषिर्बृहती छन्दो धरणीधरो देवता ईशानप्रीतये विनियोगः ॥ ८० ॥ रक्तं ध्यायेच्च
पर्जन्यं द्विभुजं पीतवाससम ॥ दक्षिणे परशुं ध्यायेदोंकारं च तथापरे ॥ ८१ ॥ कयानश्चेति मन्त्रस्य धर्म ऋषिर्बृहती छन्दो भवो देवता पर्जन्य
प्रीतये विनियोगः ॥ ८२ ॥ जयंतं श्वेतं श्वेतवृपभारूढं ध्यात्वा ॥ मानस्तोकेति मन्त्रस्य शक्तयृपिस्त्रिष्टुप्छन्दः शङ्करो देवता जयंतप्रीतये विनि
योगः ॥ ८३ ॥ शुक्लं पीतं द्विभुजमैरावतस्थं वज्रधरं ध्यात्वा मूलबीजेन स्थापयेत् ॥ ८४ ॥ भास्करं रक्तं द्विभुजं रक्ताश्वस्थं ध्यात्वा मायाबी
जेन पूजयेत ॥८५॥ सत्यं च द्विभुजं श्वेतं त्रिनेत्रं पीतवाससं मन्दकुंदबीजेन पूजयेत ॥ वृपं पीतं वृपभारूढमाकाशबीजेन पूजयेत् ॥८६॥ ऋक्षं
नीलं चतुर्भुजं महिषारूढम ॥ आच्छीम इति मन्त्रस्य होता यक्ष ऋषिस्त्रिष्टुप्छन्दः शंकरो देवता ऋक्षप्रीतये विनियोगः ॥ ८७ ॥ अग्निमारभ्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूजयेत् ॥ अग्निं रक्तं सप्तजिह्वं रक्तवाससं पिङ्गाक्षं ध्यात्वा ॥ अग्निं दूतमिति मंत्रस्य भरद्वाज ऋषिस्त्रिष्टुप्छन्दः शंकरो देवता अग्निप्रीतये विनियोगः ॥ ८८ ॥ वितथं रक्तमजवाहनं द्विभुजं ध्यात्वा गायत्र्या पूजयेत् ॥ ८९ ॥ गायत्र्या विश्वामित्र ऋषिर्गायत्री छन्दः सविता देवता वितथप्रीतये विनियोगः ॥९०॥ यमं कृष्णमहिषारूढं दण्डहस्तं ध्यायेत् ॥ अच्छिय इतिमन्त्रस्य त्रिष्टुप्छन्दो भवानी देवता यमप्रीतये विनियोगः ॥९१॥ गृहे क्षेत्रं रक्तमूर्ध्वकेशं महाभुजं रक्तवाससं ध्यात्वा वह्निबीजेन पूजयेत् ॥९२॥ गन्धर्वं श्वेतं द्विभुजं पद्मासनस्थं ध्यात्वा यमबीजेन पूजयेत् ॥९३॥ भृङ्गराजं रक्तसिंहासनारूढं दिव्ययज्ञोपवीतिनं ध्यायेत् ॥ ९४ ॥ होता यस्केति मन्त्रस्य भार्गव ऋषिर्गायत्री छन्दो यशो देवता भृंगराजप्रीतये विनियोगः ॥ ९५ ॥ मृगं पीतं मृगारूढं पीतवाससं ध्यात्वा ॥ कदाचनेति मन्त्रस्य वामदेव ऋषिर्बृहती छन्दो वामदेवो देवता मृगप्रीतये विनियोगः ॥९६॥ नैर्ऋतार्द्धपदेषु च ॥ निर्ऋतिं पीतं श्वेतं पद्मासनस्थं ध्यात्वा ॥ कैदाचनेतिमन्त्रस्य पंक्तिश्छन्दः सविता देवता निर्ऋतिप्रीतये विनियोगः ॥९७॥ नैऋतार्द्धपदेषु च दौवारिकं श्वेतशरमारूढं त्रिनेत्रं सर्वाभरणभूषितं ध्यात्वा ॥ होतस्वेति मन्त्रस्य नरसिंह ऋषिर्बृहती छन्दो गणेशो देवता दौवारिकप्रीतये विनियोगः ॥ ९८ ॥ श्यामं सुग्रीवं कृष्णमेषारूढं पीतवाससं ध्यात्वा ॥ स्वादित्येति मन्त्रस्य त्रिष्टुप्छन्दो वामनो देवता सुग्रीवप्रीतये विनियोगः ॥ ९९ ॥ सुमित्रिया न इति मन्त्रस्य कन्दर्पऋषिः पङ्क्तिश्छन्दः सूर्यो देवता वरुणप्रीतये विनियोगः ॥ १०० ॥ पुष्पदंतं पीतं मेषारूढं पीतवाससं ध्यात्वा ॥ या ओषधीरिति मन्त्रस्य मन्मथ ऋषिर्जगती छन्दो वायुर्देवता पुष्पदंतप्रीतये विनियोगः ॥ १०१ ॥ असुरं कृष्णं कृष्णमाल्यैरलंकृतं कृत्वा ॥ आकृष्णेति मन्त्रस्य हिरण्यवर्ण ऋषिर्जगती छन्दः सविता देवता असुरप्रीतये विनियोगः ॥ ॥ १०२ ॥ असुरं कृष्णं नागहारान्वितं पद्मासनस्थं ध्यात्वा ॥ आब्रह्मन्निति मंत्रस्य नलिन ऋषिस्त्रिष्टुप्छन्दो भवानी देवता सोमप्रीतये विनियोगः ॥ १०३ ॥ रोगं कृष्णं नीलेन्दीवरधरं श्वेतवृषभारूढं ध्यात्वा ॥ नमस्ते रुद्र इति मन्त्रस्य नारद ऋषिः पंक्तिश्छन्दः श्रीर्देवता रोगप्रीतये विनियोगः ॥ १०४ ॥ वायुकोणादारभ्य पूजयेत् ॥ वायुं धूम्रवर्णं ध्वजहस्तं मृगारूढं ध्यात्वा ॥ देवा इति मन्त्रस्य बृहती छन्दो यमो देवता नागप्रीतये विनियोगः ॥ १०५ ॥ श्वेतं सोमं श्वेतवर्णासनस्थं ध्यात्वा भद्रबीजेन पूजयेत् ॥ ॥ १०६ ॥ रक्तं भल्लाटं पीतवाससं ध्यात्वा वह्निबीजेन पूजयेत् ॥ पीतवाससमजवाहनं हारकेयूरान्वितं वायुबीजेन मंदराद्यैः पूजयेत् ॥ ॥ १०७ ॥ रक्तां दितिं नागहारान्वितां रक्तपद्मासनस्थां ध्यात्वा ॥ मानार्थं इति मन्त्रस्येति पूजयेत् ॥ १०८ ॥ मानो त्वा इति मंत्रस्य



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भार्गव ऋषिः पङ्क्तिश्छन्दः पृथिवी देवता दितिप्रीतये विनियोगः ॥ १०९ ॥ अदितिं पीतवर्णां सिंहारूढां पीतांबरधरां ध्यात्वा ॥ हिरण्यवर्ण इति मंत्रस्य जनार्दन ऋषिर्बृहती छन्दः सोमो देवता अदितिप्रीतये विनियोगः ॥ ११० ॥ एवं यथा विधायाथ होमं कुर्याद्यथाविधि ॥ होमांते दक्षिणां दद्यात्काञ्चनं हेमसंयुतम् ॥ १११ ॥ तडागयागपक्षे तु सुवर्णं चार्धमेव वा ॥ ११२ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ अथ पूजाक्रमं वक्ष्ये पुराणस्मृतिचोदितम् ॥ उत्तरे पश्चिमे वाथ पूर्वे चापि समाचरेत् ॥ १ ॥ नदीतीरे नेमिप्रांते दशद्वादशसंख्यया ॥ मंडलं रचयेद्विप्राश्चरुकद्वयसंयुतम् ॥ २ ॥ त्रिभागं विभजेत्क्षेत्रं मध्यभागद्वयेन तु ॥ त्रिहस्तवेदिकां कुर्यात्तालोत्सेधामुदक्प्लवाम् ॥ ३ ॥ उत्तराशे दक्षिणे चारत्निहस्तांतरेऽपि च ॥ त्रिमेखलां हस्तमात्रां गुणवेदसमन्विताम् ॥ ४ ॥ मूले सार्धं च शुक्लां च मेखलां तु तथैव च ॥ चतुरंगुलिकां वेदिं मध्योन्नतां प्रकल्पयेत् ॥ ५ ॥ षट्सप्तांगुलिकां योनिं पश्चिमे मेखलोपरि ॥ विन्यसेन्नाभिसंयुक्तमेवं कुण्डं प्रकल्पयेत् ॥ ६ ॥ श्राद्धं वृद्ध्यात्मकं कुर्यात्संकल्पं मानसं चरेत् ॥ श्राद्धार्थं नैव संकल्पेत्तथा वै देवदर्शने ॥ ७ ॥ गयाश्राद्धार्थकं चाष्टतीर्थश्राद्धार्थमेव च ॥ ऐशान्यां कलशे देवं पूजयेद्गणनायकम् ॥ ८ ॥ मध्ये कुण्डे महांश्चैव विष्णुदेवं दिगीश्वरान् ॥ ब्रह्माणं चाग्निकुण्डे तु स्वैः स्वैर्मन्त्रैः प्रपूजयेत् ॥ ९ ॥ प्राणायामं विधायाथ भूतशुद्धिं समाचरेत् ॥ ध्यायेद्वाटवीशपुरुषं सर्वलक्षणसंयुतम् ॥ १० ॥ श्वेतं चतुर्भुजं शांतं कुण्डलाद्यैरलंकृतम् ॥ पुस्तकं चाक्षमालां च वराभयकरं परम् ॥ ११ ॥ पितृवैश्वानरोपेतं कुटिलभ्रूपशोभितम् ॥ करालवदनं चैव आजानुकरलंबितम् ॥ १२ ॥ मूर्धन्यग्निं समाविश्य मुखे वायुः समाहितः ॥ पृथ्वीधरोर्यमा चैव तथाप्यवनेष्टितौ ॥ १३ ॥ वक्षस्थले ऽपरां संध्यां यजेच्चैव यथाविधि ॥ नेत्रयोर्दितिपर्जन्यौ श्रोत्रे दितीज्यपुत्रकौ ॥ १४ ॥ सर्पेन्द्रावासनस्थौ च वामे दक्षं विभावयेत् ॥ सत्यसोमाग्नयस्तत्र राहोः पंच च पंच च ॥ १५ ॥ रुद्रश्च राजयक्ष्मा च वामहस्ते व्यवस्थितौ ॥ पार्श्वे तु दक्षिणे तद्वद्विरथश्च महर्क्षकः ॥ १६ ॥ उभौ ज्ञेयौ तथा जान्वोरुभौ गन्धर्वपुष्पकौ ॥ जंघयोर्भृंगसुग्रीवौ स्फिचोर्दौवारिको गणः ॥ १७ ॥ जयशक्रौ तथा मेढ्रे पदयोः पितरस्तथा ॥ एवं ध्यात्वा न्यसेत्पुष्पं सोमे नैवं विचिंतयेत् ॥ १८ ॥ मन्दरं दीर्घयुक्तेन षडङ्गानि समाचरेत् ॥ तावद्वीर्यं ततः कृत्वा प्रणवं ब्रह्मणेति च ॥ १९ ॥ वास्त्वीशाय विद्महेति तन्नो विष्णुः प्रचोदयात् ॥ अनेन स्नपनं कुर्यात्पूजाद्रव्याणि प्रोक्षयेत् ॥ २० ॥ आसनं पूजयेत्पूर्वं धर्मेणापि स्वशक्तितः ॥ आदौ तु भास्करं सूर्यं शचीनाथं गणाधिपम् ॥ २१ ॥ आधारशक्तिं पृथिवीं पूजयेत्तत्र पङ्कजम् ॥ बंदीशासनमित्युक्तं पूजयेदासनं ततः ॥ २२ ॥ सितचन्दनयु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तेन श्वेतपुष्पं प्रगृह्य च ॥ हरेर्ध्यानं ततः कुर्यात्स्थापयेन्मध्यमण्डले ॥२३॥ आवाह्य चासनं दद्यात्ततः पाद्यादिकत्रयम् ॥ मधुपर्कं ततो दद्या द्वास्तोष्पतिमथेश्वरम् ॥ २४ ॥ अस्य मन्त्रस्य च ऋषिश्छन्दो गायत्रमीरितम् ॥ देवता च भवेद्ब्रह्मा योजयेदश्वमेधकम् ॥ २५ ॥ मंदरं विजयं सोमं महादेवं च माधवम् ॥ रुद्रं हरं जयं भं च पूर्वादिदलमूलके ॥ २६ ॥ जया च विजया चैव सत्या माया शिवांबिका ॥ हासिनी कामिनी चैता दलमूलेषु भावयेत् ॥ २७ ॥ पुष्पाञ्जलित्रयं दद्याद्वास्तोष्पतय इत्यपि ॥ अर्घ्यमंत्रेण गंधाद्यैः पूजयेद्भूतिमिच्छता ॥२८॥ वास्तोष्पते भव मते इति ध्यात्वा ऋतं चेति मंत्रेण पूजयेत् ॥ ऋषिर्नारायणश्छन्दो गायत्री परिकीर्तितम् ॥ २९ ॥ सूर्यश्च देवता ख्यातः प्रीणितः कुलिशायुधः ॥ सूर्यं रक्तासनारूढं द्विभुजं रक्तवाससम् ॥ ३० ॥ रक्तपद्मद्वयधरं कुंडलाद्यैः सुशोभितम् ॥ एवं ध्यात्वा तु मतिमान्हंसं समंत्रमीश्वरम्॥३१॥हंसस्य इति मंत्रस्य ऋषिरौतथ्य ईरितः ॥ पंक्तिश्छन्दः स्वयं देवो विनियोगस्तु प्रीतये ॥३२॥ नीलोत्पलद्वयधरं सत्यं मृत्यूपरि स्थितम्॥स्वच्छश्वेतांबर धरं वरदं भक्तवत्सलम् ॥३३॥ स्वं मदास्वमिति मन्त्रेण श्वेतचन्दनपुष्पकैः ॥ पूजयेत्परया भक्त्या वस्त्रालंकारभूषणैः ॥३४॥ उद्धर्षण इति मंत्रेण कृष्णपुष्पैरथार्चयेत् ॥ सत्यव्रत ऋषिश्चास्य त्रिष्टुप्छंदोऽस्य देवता ॥ सविता चैव विज्ञेयः प्रीतये च वृषस्य च ॥३५॥ शुल्कवर्णं तथाकाशमृषिसं वैश्च संस्तुतम् ॥ घटस्थं द्विभुजं ध्यायेद्वदापद्मविधारिणम् ॥३६॥ शन्नो देवीति पठनाद्गन्धपुष्पादिभिर्यजेत् ॥ ऋषिः स्यात्कर्दमोविप्राश्छन्दो जागतिका तथा ॥ देवता च भवेच्चाग्निराकाशप्रीतये न्यसेत् ॥३७॥ ध्वजहस्तं महाबाहुं मरुद्भिश्चोपसेवितम् ॥ द्विभुजं धूम्रवर्णं च वायुं ध्यात्वा प्रपूजयेत्॥३८॥राजान इति मन्त्रेण पूजयेत्सिततंडुलैः॥ऋषिर्नारायणश्छन्दो गायत्री देवता द्विजाः॥३९॥ देवता च भवेद्वायुः प्रीतये तस्य योज येत् ॥ पूषारक्तश्च द्विभुजो रक्तपद्मासनस्थितः ॥४०॥ राजान इति च ऋचा पूजयेद्गन्धचन्दनैः॥ गोभिलोस्यऋषिः पङ्क्तिश्छन्दोऽथ जगती स्मृत म् ॥ देवता च भवेद्वायुः प्रीतये विनियोजयेत् ॥४१॥ वितथं श्यामवर्णं च चतुर्भिर्बाहुभिर्वृतम्॥ मृगाक्षपाशखड्गाङ्गशूलं च दधतं करैः ॥ मेषारूढं विशालाक्षं राजानो मह्यमीरयन् ॥ ४२ ॥ गृहक्षतं तथा शुक्लं चतुर्भिर्गर्दभैर्वृतम् ॥ शूलं दंडं च खट्वांगं दधतं वृषवाहनम् ॥ ४३ ॥ पीतवस्त्रधरं देवं जटामुकुटसंयुतम् ॥ आशुः शिशान इति मन्त्रेण पूजयेद्गन्धचन्दनैः ॥ ४४ ॥ पुष्पदंत ऋषिस्त्रिष्टुप्छन्दश्च परिकीर्तितम् ॥ ईश्वरस्य देव तायाः प्रीतये विनियोजयेत् ॥ ४५ ॥ यमं ध्यायेत्कृष्णवर्णं महिषस्थं द्विबाहुकम् ॥ दण्डपाशधरं चैव केयूराद्यैर्विभूपितम् ॥ ४६ ॥ इशानेति

१ प्रथमार्थे तृतीया ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च मन्त्रेण पूजयेत्कुसुमादिना ॥ वामदेव ऋषिः पंक्तिश्छन्दः कालोस्य देवता ॥ ४७ ॥ षडाननं च गन्धर्वं पीतं ध्यायेच्चतुर्भुजम् ॥ पीतांबरधरं चैव नानाभरणभूषितम् ॥ ४८ ॥ यद्देव इतिमन्त्रेण पूजयेत्कुसुमादिना ॥ हारीतोस्य ऋषिः प्रोक्तो जगतीछन्द ईरितम् ॥ हिरण्यगर्भो देवतास्य प्रीतये विनियोजयेत् ॥ ४९ ॥ भृङ्गराजं जटारूढं स्वच्छं पीतांबरं शुभम् ॥ चक्षुः पीतेति मन्त्रेण पूजयेद्गन्धचंदनैः ॥ ५० ॥ ऋषिश्चागस्तिरा ख्यातस्त्रिष्टुप्छन्दः प्रकीर्तितम् ॥ विश्वेदेवा देवता च भृङ्गराजस्य प्रीतये ॥ ५१ ॥ पीतं मृगं मृगारूढं जटामुकुटमंडितम् ॥ परो देवा इति मंत्रेण पूजयेद्बलिपायसैः ॥ ५२ ॥ कपिलश्च ऋषिः प्रोक्तो गायत्री छन्द ईरितम् ॥ वरुणो देवता चास्य प्रीतये विनियोजयेत् ॥ ५३ ॥ ध्यायेत्पितृ गणं शुक्लं चतुर्भिर्बाहुभिर्वृतम् ॥ पितृभ्य इति मन्त्रेण पूजयेत्कुसुमादिना ॥ ५४ ॥ शुनः शेप ऋषिश्चास्य त्रिष्टुप्छन्दश्च देवता ॥ विश्वेदेवाः समाख्याताः पितृमेधेन पूजयेत् ॥ ५५ ॥ दौवारिकं चाष्टभुजं कृष्णवर्णं विचिन्तयेत् ॥ रक्तवस्त्रः पिंगलाक्षं कृष्णव्याघ्रोपरि स्थितम् ॥ ५६ ॥ यो नः पितेति मन्त्रेण पूजयेद्भक्तितत्परः ॥ ५७ ॥ वैश्वानर ऋषिश्चास्य गायत्री छन्द ईरितम् ॥ देवता च भवेच्छक्तिर्विनियोगश्च पूजने ॥ ५८ ॥ शंखाभं चैव सुग्रीवं द्विभुजं चक्रधारिणम् ॥ हंसारूढं महाकायं बलिविज्ञानकारणम् ॥ ५९ ॥ शंखपद्मधरं चैव महिषस्थं विचिन्तयेत् ॥ स इषु हस्तेति मंत्रेण पूजयेद्रक्तभूषणैः ॥ ६० ॥ ऋषिः शंखस्तथाच्छन्दः पङ्क्तिः सोमोऽथ देवता ॥ श्वेतं जलाधिपं ध्यायेद्गन्धर्वाद्यैश्च वेष्टितम् ॥ ६१ ॥ ऋष्यासनगतं ध्यायेच्छ्वेतगन्धेन चर्चयेत् ॥ बृहस्पते परिदीया इति मंत्रेण भक्तितः ॥ ६२ ॥ त्र्यंबकोऽस्य ऋषिस्त्रिष्टुप्छन्दो देवो जलाधिपः ॥ ध्यायेच्च असुरं रक्तं करालं नरवाहनम् ॥ ६३ ॥ दशभिर्बाहुभिर्युक्तं कृष्णवस्त्रानुलेपनम् ॥ शन्नो देवीति मंत्रेण कृष्णपुष्पैः प्रपूजयेत् ॥ ६४ ॥ ऋषिर्वैश्वानरश्छन्दो विराडित्यभिधीयते ॥ वैश्वानरोत्तरो देवः प्रीतये तस्य योजयेत् ॥ ६५ ॥ शेषं षडाननं ध्यायेत्कृष्णं च मधुपिंगलम् ॥ मेषस्थं कुण्डलोपेतं नागयज्ञोपवीतिनम् ॥ उद्वर्ष इति मन्त्रेण पूजयेद्भूतिमिच्छता ॥ ६६ ॥ पापं रक्तं त्रिनेत्रं च रक्तं प्रांते विचिन्तयेत् ॥ रक्त श्मश्रुधरं चैव वरहस्तं विचिन्तयेत् ॥ ६७ ॥ सिद्धो वीरेति मंत्रेण कृष्णपुष्पैरथार्चयेत् ॥ यमं च कृकराक्षं च आकुञ्चन्मूर्धजं द्विजाः ॥ ६८ ॥ कपिलोऽस्य ऋषिश्छन्दोऽनुष्टुप् चैव प्रकीर्तितम् ॥ देवता च यशः ख्यातं प्रीतये विनियोजयेत् ॥ ६९ ॥ यमं च कृकराक्षं च क्षमाकुञ्चितमूर्ध जम् ॥ खरस्थं द्विभुजं ध्यायेदिमं मन्त्रमुदीरयेत् ॥ ७० ॥ वासुकिः स्यादृषिश्चास्य पंक्तिश्छन्दश्च देवता ॥ हिरण्यगर्भ इत्युक्तः प्रीतयेऽस्य नियोजयेत् ॥ ७१ ॥ अर्धपीतं च द्विभुजं रक्ताक्षं धूम्रमेव वा ॥ देवताभिश्च संपन्नं वातो वारेतिरेव च ॥ ७२ ॥ ऋषिर्नायुश्च गायत्री छन्दो वायुश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवता ॥ ७३ ॥ सुग्धरक्तं शंखचक्रगदापद्मधरं तथा ॥ पीतवस्त्रं पन्नगस्थं हारकेयूरमंडितम् ॥ ७४ ॥ अवसृष्टा परापत इति मन्त्रेण पूजयेत् ॥
अग्निश्चास्य ऋषिः प्रोक्तश्छन्दः सोमश्च देवता ॥ ७५ ॥ पीतं भल्लाटकं ध्यायेत्पद्मस्थं रक्तभूषणम् ॥ द्विभुजं पद्महस्तं च देवमेवं विचिन्तयेत् ॥
यन्मातुरिति मन्त्रेण पूजयेत्सिततंडुलैः ॥ ७६ ॥ जम्भकोऽस्य ऋषिश्छन्दो गायत्री समुदाहृता ॥ देवता च भवेत्कुम्भः प्रीतये विनियोगतः ॥
॥ ७७ ॥ सोमं ध्यायेच्छ्यामरूपं पद्मासनगतं परम् ॥ नानाभरणसम्पन्नं किरीटवरधारिणम् ॥ मर्माणितेतिमन्त्रेण गन्धाद्यैरपि पूजयेत् ॥ ७८ ॥
ऋषिः स्वार्थो वेदश्छन्दो जगतीत्यभिधीयते ॥ देवता च भवेत्सोमः प्रीयते विनियोजयेत् ॥ ७९ ॥ दर्पं ध्यायेत्कृष्णवर्णं कृष्णांबरधरं तथा ॥
नागयज्ञोपवीतिं च शिखिस्तंभं द्विजोत्तमाः ॥ ८० ॥ पञ्चदीशेति मन्त्रेण गन्धाद्यैः परिपूजयेत् ॥ ८१ ॥ मन्त्रश्चास्य ऋषिश्चास्य पञ्चायत
नमीरितम् ॥ पंक्तिश्छन्दस्तथा प्रोक्तं देवः पञ्चाननः स्मृतः ॥ ८२ ॥ श्यामवर्णां दितिं ध्यायेद्द्विभुजां पीतविग्रहाम् ॥ सर्वलक्षणसंपन्नां सर्वालं
कारशोभिताम् ॥ ८३ ॥ सुपर्णोऽसीति मन्त्रेण पूजयेत्पीतचन्दनैः ॥ ८४ ॥ ऋषिर्नारायणश्छन्दो जगती परिकीर्त्यते ॥ भवेद्देवो भार्गवश्च
इष्टार्थे परिपूजयेत् ॥ ८५ ॥ रक्ताभामदितिं ध्यायेत्सर्वालंकारभूषिताम् ॥ शुक्रांभारितिमन्त्रेण गन्धाद्यैरभिपूजयेत् ॥ ८६ ॥ वामदेव ऋषि
श्चास्य गन्धाद्यैरभिपूजयेत् ॥ देवः शुक्रः समाख्यातः स्तुतौ च विनियोजयेत् ॥ ८७ ॥ ईशानादिकोणगतान्पूजयेत्सुसमाहितः ॥ आपं ध्याये
च्छुक्लवर्णं कुण्डलाद्यैर्विभूषितम् ॥ ८८ ॥ इदं विष्णुरिति मन्त्रेण त्रिगन्धेन समर्चयेत् ॥ ८९ ॥ ऋषिः स्यात्कर्दमश्छन्दो विराडित्यभिधी
यते ॥ ९० ॥ देवः सोमः समाख्यातः प्रीतये विनियोजयेत् ॥ सरितं द्विभुजं रक्तं रक्तश्वेतांबरान्वितम् ॥ ९१ ॥ हरिचन्दनलिप्तांगं वरदं तं विचि
न्तयेत् ॥ पयसा शुक्र इति मन्त्रेण पूजयेत्कमलादिना ॥ ९२ ॥ नारायण ऋषिश्चास्य पंक्तिश्छन्दः प्रकीर्त्यते ॥ नारायणः स्वयं देवः प्रीतये
विनियोजयेत् ॥ ९३ ॥ जयं ध्यायेत्पीतवर्णं द्विभुजं वरहस्तकम् ॥ देवं किरीटसम्पन्नं सर्वालंकारभूषितम् ॥ ९४ ॥ दृष्ट्वा परिश्रुत इति मन्त्रेणा
नेन पूजयेत् ॥ ऋषिर्नारायणश्छन्दः पंक्तिः सोमोऽथ देवता ॥९५॥ रुद्रं ध्यायेद्रक्तवर्णं शीतांशुकृतशेखरम्॥ द्विभुजं शूलहस्तं च डमरुं च पराभ
वेत् ॥९६॥ दिवो मूर्धन्निति मन्त्रेण ऋषयः समुदाहृताः॥ ऋषिः स्यात्काश्यपश्छन्दो विराडित्यभिधीयते ॥९७॥ स्वयं देवो विनियोगः स्तुतौ
च विनियोजयेत् ॥ द्विभुजं रक्तपद्मस्य पंकजद्वयधारिणम् ॥ ९८ ॥ अस्य किरीट इति मन्त्रेण रक्तस्रक्चन्दनादिभिः ॥ पूजयेत्परया भक्त्या
ऋषिर्नील उदाहृतः ॥ त्रिष्टुप्छन्दो देवता स्याद्रुद्रोपि परिकीर्तितः ॥ ९९ ॥ सवितारं तथाध्यायेत्पद्मस्थं द्विभुजं प्रभुम् ॥ नानाभरणशोभाढ्यं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सप्ताश्वरथमंडितम् ॥ १०० ॥ यद्देवा इति मन्त्रेण गन्धाद्यैः परिपूजयेत् ॥ ऋषिरौतथ्य आख्यातः प्रीतये विनियोजयेत् ॥ १०१ ॥ ध्यायेद्रक्तं विवस्वन्तं द्विभुजं पद्मविग्रहम् ॥ अविद्या इति मन्त्रेण पूजयेद्गन्धचन्दनैः ॥ १०२ ॥ ऋषिर्गन्धः समाख्यातस्त्रिष्टुप्छन्दश्च ईरितम् ॥ देवता च भवेत्सोमः स्तुतौ च विनियोजयेत् ॥ १०३ ॥ विबुधाधिपं ततो ध्यायेत्पीतं वृषभवाहनम् ॥ चतुर्भुजं यष्टिहस्तमक्षमालैकहस्तकम् ॥ त्रिनेत्रं रक्तवस्त्रं च मुकुटाद्यैरलंकृतम् ॥ १०४ ॥ ऋषिर्हारीत इत्युक्तो जगतीच्छन्द ईरितम् ॥ देवता च भवेच्छक्तिः प्रीतये विनियोजयेत् ॥ १०५ ॥ मित्रं ध्यायेच्छुक्लवर्णं वराभयकरं परम् ॥ मेषस्थं च त्रिनेत्रं च किरीटवरमंडितम् ॥ १०६ ॥ धनाकरस्त्विति मन्त्रेण पूजयेद्दधिपायसैः॥१०७॥ ऋषिरौतथ्य इत्युक्तो जगती छन्द ईरितम् ॥ देवता च भवेद्यक्ष्मा प्रीतये विनियोजयेत् ॥१०८॥ पीतास्यं राजयक्ष्माणं करालं च विचिंतयेत् ॥ यशो रूपमिति मन्त्रेण गन्धाद्यैः परिपूजयेत् ॥ १०९ ॥ दध्यङ्ङाथर्वण ऋषिर्गायत्री छन्द ईरितम् ॥ यक्ष्मा च देवता चैव स्तुतौ च विनियोजयेत् ॥११०॥ शुक्लांबरधरं ध्यायेद्द्विभुजं शिखिवाहनम् ॥ यमं विनेति मंत्रेण पूजयेद्भक्तितत्परः॥१११॥ ऋषिः स्यान्नारदः प्रोक्तश्छन्दोनुष्टुप्प्रकीर्तितम् ॥ विवस्वान्देवता चैव क्रतौ च विनियोजयेत् ॥११२॥ एवं ध्यात्वा विवस्वंतं महाकायं महोदरम् ॥ अभिन्नरूपमंत्रेण गन्धाद्यैः परिपूजयेत् ॥ ११३ ॥ काश्यपोस्य ऋषिश्छन्दस्त्रिष्टुब्देवः शचीपतिः ॥ ११४ ॥ बहिरीशानकोणेषु देवादीन्परिपूजयेत् ॥ कूष्माण्डैर्वरणापुष्पैः शौरकैर्वा समर्चयेत् ॥ ११५ ॥ पीतां करालिकां ध्यायेच्चरकीं वरवर्णिनीम् ॥ स्वब्जस्थां द्विभुजां चैव गुञ्जाहारोपशोभिताम् ॥ ११६ ॥ पीतिन्यरूपमन्त्रेण पूजयेद्भूतिमिच्छुकः ॥ बलदेव ऋषिश्चास्य छन्दो गौरी च देवता ॥ ११७ ॥ ध्यायेद्विदारिकां रक्तां नवयौवनसंयुताम् ॥ पवित्रेण पुनीहीति मंत्रेणानेन पूजयेत् ॥ ११८ ॥ ऋषिर्गर्गः समाख्यातस्त्रिष्टुप्छन्दोस्य देवता ॥ रुद्रोऽपि च समाख्यातः स्तुतौ च विनियोजयेत् ॥ ११९ ॥ पापादिराक्षसीं ध्यायेत्सौरभेयोपरिस्थिताम् ॥ कया न इति मंत्रेण पूजयेद्गन्धचन्दनैः ॥ १२० ॥ ऋषिः सुवर्ण आख्यातः पंक्तिश्छन्दः प्रकीर्तितम् ॥ देवता च महादेव इष्टार्थे विनियोजयेत् ॥ १२१ ॥ कुण्डवेद्या अंतरे च स्थापयेद्विधिवद्बुधः ॥ पर्वताग्रमृदं चैव गजदंतमृदं तथा ॥ १२२ ॥ वल्मीके संगमे चैव राजद्वारचतुष्पथात् ॥ कुशमूलमृदं चैव यज्ञियस्य वनस्पतेः ॥ १२३ ॥ इन्द्रवल्ली तथाक्रांत अमृती त्रपुषस्य च ॥ मालती चंपकं चैव तथा उर्वारुकस्य च ॥ १२४ ॥ पारिभद्रस्य पत्रैश्च परितः परिवेष्टनम् ॥ पञ्चतुंगस्य परितो मुखे कुर्यात्फणान्वितम् ॥ १२५ ॥ श्रीफलं बीजपूरं च नालिकेरं च दाडिमम् ॥ धात्री जंबुफलं चैव अन्यथा दोषमादिशेत् ॥१२६॥ पञ्चरत्नं सुवर्णं च निक्षिपेद्वरुणं यजेत् ॥ पञ्चोप



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चारैर्विधिवद्गन्धपुष्पादिभिर्यजेत्॥१२७॥ उद्वर्तन इति मंत्रेग वरुणं च पुनर्यजेत् ॥१२८॥ अस्य मंत्रस्य च ऋषिर्विष्णुश्छन्द उदाहृतम् ॥ गायत्री देवता पाशी प्रीतये विनियोजयेत् ॥ १२९ ॥ पञ्चगंधान्विनिक्षिप्य हस्तं दत्त्वा पठेत्ततः ॥ १३० ॥ सर्वे समुद्राः सरितः सरांसि च महाह्रदाः॥ आयांतु सर्वपापघ्नाः सर्वलोकसुखावहाः ॥ १३१ ॥ गंगाद्याः सरितः सर्वास्तीर्थानि जलदाः नदाः ॥ आयांतु यजमानस्य दुरितक्षयकारकाः ॥ १३२ ॥ अघोराज्यपृक्कृता वास्तोष्पतय इत्यपि ॥ शतं वा चाष्टसंयुक्तं सहस्रं वा विशेषतः ॥ १३३ ॥ शतार्धं वा हुनेद्विप्रस्तिलैर्वा तंडुलैः सह ॥ पालाशैर्वा पिप्पलैर्वोदुम्बरैर्वा समाचरेत् ॥१३४॥ पयोदध्यादिभिर्वापि मध्वाज्यैर्वा विशिष्यते ॥ अन्येषां च व्रतेनैव एकैकामथ वाहुतिम् ॥१३५॥ अष्टाविंशति भिश्चान्यैरष्टाष्टौ पंचपंच वा ॥ १३६ ॥ चरक्यादींश्चासनैश्च पिष्टकैर्वटकेन वा ॥ रक्तपुष्पेण पत्रेण त्रिमध्वक्तेन यत्नतः ॥ १३७ ॥ वास्तोष्पते हुढं जप्त्वा यजेद्वास्तुपर्विं यदा ॥ पंचोपचारैर्विधिवत्सांगोपांगैरनंतरम् ॥१३८॥ बलिमासादयेत्पश्चाद्दद्यादेकैकशः क्रमात्॥ब्राह्मणैश्चैव दद्याच्च सदा आज्यं समाक्षिकम् ॥ १३९ ॥ शाल्यन्नं शिखिने दद्यात्तथा नीलोत्पलानि च ॥ ओदनं सोत्पलं दद्यात्पर्जन्याय विचक्षणः ॥ १४० ॥ जयाय पिष्टकं कार्यमिन्द्राय घृतमोदकः ॥ सूर्याय पिष्टकान्नं च सत्याय यवपूलिकाम् ॥१४१॥ भ्रमाय मत्स्यमांसान्नं शष्कुलीमथ पिष्टकम् ॥ वायव्ये च तथा सक्तून्पूष्णे चापूपमेव हि ॥ १४२ ॥ वितथाय कलायान्नं गृहक्षाय समाक्षिकम् ॥ पूष्णेथ कृशरान्नं च शाल्यन्नं च निवेदयेत् ॥ १४३ ॥ गन्धर्वाय कस्तूरिकान्नं कृशरं भृंगराजके ॥ मृगाय यावकान्नं च पितृभ्यो मुद्गपायसम् ॥१४४॥ दौवारिकाय कृशराननडुहे च पूपकम् ॥ पायसं पुष्पदंताय वरुणाय च पिष्टकम् ॥ १४५ ॥ असुराय मोदकांश्चैव दद्यादापिक्षये सुराम् ॥ घृतोदनं च सोमाय कृणान्नं यक्ष्मणे ददेत् ॥ १४६ ॥ रोगाय घृतलड्डूकं सपायसगुडौदनम् ॥ अक्षाय विविधान्नं च भल्लाटाय तथैव च ॥ १४७ ॥ सोमाय मधुशाल्यन्नं नागाय गुडपिष्टकम् ॥ अदित्यै चापि गोधूमं घृतपक्वं निवेदयेत् ॥ १४८ ॥ दित्यै दद्यात्तथा क्षीरं सितशर्करया सह ॥ क्षीरान्नं चैव पूष्णे च आपवत्साय वै दधि ॥ ॥ १४९ ॥ सावित्र्यै लड्डुकान्नं च सवित्रे च गुडौदनम् ॥ जयाय घृतमन्नं च मिष्टान्नं च विवस्वते ॥ १५० ॥ विरूपाय च तद्द्याद्धरिद्रान्नं तथैव च ॥ घृतौदनं च चित्राय रुद्राय घृतपायसम् ॥ १५१ ॥ मांसौदनं यक्ष्मणे च कृशरं वरुणाय च ॥ अर्यम्णे शर्करापूपं बहिर्दद्याच्चतुष्टयम् ॥ ॥ १५२ ॥ चित्रौदनं समांसं च मत्स्यान्नं गुडपिष्टकम् ॥ प्रतिदेवोपरि क्षीरं घृतक्षीरसमन्वितम् ॥ तीर्थतोयसमायुक्तं[1]सुगन्धेन समन्वितम्॥१५३॥



---

१ 'नीरक्षीराम्बुशम्बरम्' इत्यमराभिधानात्क्षीरशब्दोत्र जलपर्यायः, तेन 'घृतक्षीरसमन्वितम्' इत्युक्तेर्न विरोधः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पताका देववर्णेन दद्याद्ब्रह्मादिषु क्रमात् ॥ मंत्रं जपेत्स्वसामर्थ्यात्स्वसामर्थ्यात्स्तुतिं पठेत् ॥ १५४ ॥ पुरुषस्तवस्य सूर्य ऋषिर्जगती छन्दः ॥ सविता देवता सोमपाके स्तुतौ विनियोगः ॥ १५५ ॥ ॥ शंकर उवाच ॥ ॥ विष्णुर्जिष्णुर्विभुर्यज्ञो यज्ञियो यज्ञपालकः ॥ नारायणो नरो हंसो विष्वक्सेनो हुताशनः ॥ १५६ ॥ यज्ञेशः पुण्डरीकाक्षः कृष्णः सूर्यः सुरार्चितः ॥ आदिदेवो जगत्कर्ता मण्डलेशो महीधरः ॥ १५७ ॥ पद्मनाभो हृषीकेशो दाता दामोदरो हरिः ॥ त्रिविक्रमस्त्रिलोकेशो ब्रह्मणः प्रीतिवर्द्धनः ॥ १५८ ॥ भक्तप्रियोऽच्युतः सत्यः सत्यवाक्यो ध्रुवः शुचिः ॥ संन्यासी शास्त्रतत्त्वज्ञस्त्रिपंचाशद्गुणात्मकः ॥ १५९ ॥ विदारी विनयः शांतस्तपस्वी वैद्युतप्रभः ॥ यज्ञस्त्वं हि वषट्कारस्त्वमोंकारस्त्वमग्नयः ॥ १६० ॥ त्वं स्वधा त्वं हि स्वाहा त्वं सुधा च पुरुषोत्तमः ॥ नमो देवादिदेवाय विष्णवे शास्वताय च ॥ अनंतायाप्रमेयाय नमस्ते गरुडध्वज ॥ १६१ ॥ ब्रह्मस्तवमिमं प्रोक्तं महादेवेन भाषितम् ॥ प्रयत्नाद्यः पठेन्नित्यममृतत्वं स गच्छति ॥ १६२ ॥ ध्यायंति ये नित्यमनंतमच्युतं हृत्पद्ममध्ये स्वयमाव्यवस्थितम् ॥ उपासकानां प्रभुमेकमीश्वरं ते यांति सिद्धिं परमां तु वैष्णवीम् ॥ १६३ ॥ इति श्रीभविष्येमहापुराणे मध्यमपर्वणि द्वितीयभागे द्वादशोऽध्यायः ॥ १२ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ ततो भेर्यादिघोषेण यजमान उदङ्मुखः ॥ कनकतोयेन गन्धेन मुद्गलाग्रेण लेपयेत् ॥ १ ॥ ऐशान्यां मध्यभागे वा यजेद्वा सुसमाहितः ॥ वर्तुलाकारयेद्यस्मान्मन इच्छति संजपन् ॥ २ ॥ ऋषिः कंठोथ गायत्री छन्द इत्यभिधीयते ॥ देवता पृथिवी चैव स्तुतौ च विनियोजयेत् ॥३॥ विवरे पूजयेत्कर्म ब्रह्माणं च धराधरम् ॥ पृथिवीं गन्धपुष्पाद्यैर्नैवेद्यैर्विविधैरपि ॥ ४ ॥ अग्रतोऽष्टदलं लेख्यं स्थापयेत्कलशं ततः॥ मुखे विधाय कनकं राजतेन विनिर्मितम् ॥ ५ ॥ शुक्तिशंखसमं वापि विश्वामित्रसमुद्भवम् ॥ पूजयेत्तीर्थतोयेन गन्धपुष्पाक्षतादिना ॥६॥ विष्णुक्रांतावचाकुष्ठचन्दनेन विलोडितम् ॥ क्षीरं च मातुलिंगं च सावित्रं च सदूर्वया ॥ ७ ॥ दध्यक्षतं मधुयुतमेवमर्घ्यं च साधयेत् ॥ सितचन्दनवस्त्राद्यैः शाल्यैश्च विविधैरपि ॥ ८ ॥ अव्रणं कलशं कृत्वा पञ्चवर्णसमन्वितम् ॥ आवाहयेत्तोयनिधिं मंत्रेणानेन भक्तितः ॥ ९ ॥ आयाहि भगवन्देव तोयमूर्ते जलेश्वर ॥ हृद्वर्णार्घ्यं मया दत्तं परितोषाय ते नमः ॥ १० ॥ गृहेभ्यश्चैव सोमाय त्वष्ट्रे चैव च शूलिने ॥ इमं मे वरुणेत्यादि प्रत्येकं स्याद्धुतित्रयम् ॥ ११ ॥ ततोर्घ्यदानं विधिवत्क्षीरेण हविषा मधु ॥ यजमानः सपत्नीकः कुंभं कुक्षौ निधाय च॥१२॥हिरण्यगर्भेति मंत्रस्य भरद्वाज ऋषिः स्मृतः ॥ छन्दश्च जगती ख्यातं देवता च जलाधिपः॥१३॥ वरुणस्योक्तं

१ '[illegible]' इति पा०। २ मधुना।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भनेति मंत्रस्य जलकुंभं निवेदयेत् ॥ अस्य मंत्रस्य च ऋपिर्नारदः परिकीर्तितः ॥ विराट्छन्दश्च ईशानो देवता समुदाहृता ॥१४॥ मोचयेन्मीन युग्मं च मेषयुग्मं तथैव च ॥ संभवे पक्षियुग्मं च आडीं वा चक्रवाककम् ॥१५॥ मोचयेन्नागयुग्मं च आयुवृद्धेश्च हेतवे ॥ दिक्षु जीवंतिकां दद्याद्राक्ष सेभ्यो वलिं हरेत् ॥ १६ ॥ निर्मितं माषभक्तेन रक्तपुष्पैरलंकृतम् ॥ क्षात्रको लक्ष्मणश्चैव मणिभद्रो गणेश्वरः ॥ सबिंदुकेन हंतेन दिक्षु मध्ये यथा क्रमात् ॥ १७ ॥ ये भवा भाविनो भूता ये च तेषु मयासिनः ॥ आहरं तु बलिं तुष्ट्या प्रयच्छंतु शुभं मम ॥ १८ ॥ इत्युक्त्वा च बलिं दद्या न्नमस्कुर्यादनंतरम् ॥ दद्यात्पयस्विनीं गां च आचार्याय विशेषतः ॥ १९ ॥ अन्येपां हि हिरण्यं च गां च दद्याद्विजन्मने ॥ व्याहृतिद्वितयं चैव ततो वारुणपंचकम् ॥ २० ॥ प्राजापत्यं स्विष्टकृच्च जुहुयात्तदनंतरम् ॥ घृतैः स्विष्टकृतं नास्ति तथा रसविसारकैः ॥ २१ ॥ पद्मोत्पलैर्मातुलिंगैः पनसैर्मातुलुंगकैः ॥ मधूकैर्विश्वपुष्पैश्च तथाम्रातककाशकैः ॥ २२ ॥ अभिषेकं ततः कुर्यात्सुवास्त्विति च वै जपन् ॥ दद्यात्पूर्णां च विधिवत्सूर्या यार्घ्यं निवेदयेत् ॥ २३ ॥ पञ्चदोपं पुरस्कृत्य ब्राह्मणानुमतेन च ॥ गृहं प्रविश्य च ततो ब्राह्मणानथ भोजयेत् ॥ २४ ॥ दीनांधकृपणे चैव दद्याद्वित्तानुसारतः ॥ ज्ञातिभिः सह भुञ्जीत दधिक्षीरामिषं विना ॥ २५ ॥ न क्षीरं च कपायं च भर्जितं शाकमेव च ॥ न काण्डं च न पुष्पं च करीरं च कदाचन ॥ २६ ॥ शाल्यन्नं मूलकं चैव पनसाम्रफलनि च ॥ मस्तं मधुघृतगुडं मातुलिंगं ससैंधवम् ॥ २७ ॥ बदरं धातकिफलं कुन्द पुष्पं तथा तिलम् ॥ एतत्प्रशस्तं जानीयान्मरीचानि विशेषतः ॥ २८ ॥ त्रिरात्रमथ सप्ताहं परित्यज्यं खले ततः ॥ पञ्चांगकं ततः कुर्यात्स्थाप येन्नेति युग्मकम् ॥ २९ ॥ प्रथमा चार्कहस्तेन द्वितीया दशहस्तिका ॥ वितस्ते तु भवेच्छतं द्विगुणं तदनंतरम् ॥ ३० ॥ शतार्धं ततः पश्चात्पष्टि हस्तमनंतरम् ॥ ३१ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागेऽर्घ्यदानविधौ त्रयोदशोऽध्यायः ॥१३॥छ॥ ॥सूतउवाच॥ ॥ स्वगृह्याग्निविधिं वक्ष्ये योगभेदेषु सत्तमाः ॥ न परोक्तं विधानेन भयदं कीर्तिध्वंसनम् ॥ १ ॥ पुत्रा एव च कन्याश्च जनिष्याश्चापरे सुताः ॥ गृह्या इति समाख्याता यजमानस्य दायदाः ॥ २ ॥ तेषां संस्कारयागेषु शान्तिकर्मक्रियासु च ॥ आचार्यविहितः कल्पस्तस्माच्चक्ष इति स्मृतः ॥ ॥ ३ ॥ त्रिकुशं परिगृह्णाति ततश्च कुरुते दृढम् ॥ ऋषिर्दक्षश्च जगती छन्दो विष्णुश्च देवता ॥४॥ कश्यपस्तृप्यतामिति भूरसीति च शोधनम् ॥ ऋषिः सुवर्ण गायत्री जगती छन्द इष्यते ॥ देवता च भवेत्सूर्यः पृथिवीशोधने न्यसेत् ॥ ५ ॥ ऐशान्यादिक्रमेणैव प्रादक्षिण्येन यत्नतः ॥ यत्प वित्रेति मंत्रेण तर्जन्यंगुष्ठयोरपि ॥ ६ ॥ कुशगर्भत्रयेणापि भ्रामयेद्वलयाकृति ॥ परिसमूहनमित्युक्तं स्नपनं शृणु सत्तम ॥ ७ ॥ ईशानादेश्च



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संस्कारं कुर्यात्परिसमूहनम् ॥ प्रतिष्ठायां चरेत्यादिनैर्ऋत्यादिग्रहं मखे ॥ ८ ॥ परिसमूहनमैन्द्रस्य पर्वतोऽस्य ऋषिः स्मृतः ॥ पंक्तिश्छन्दः समु
द्दिष्टमिन्द्राणी चास्य देवता ॥ ९ ॥ गोमयं च त्रिगंधं च पंचमूर्तिकयापि च ॥ कनिष्ठं गुह्यकं त्यक्त्वा देवतार्थे न लेपयेत् ॥ १० ॥ मानस्तो
केनेति ऋचा विश्वेदेवश्च पूज्यताम् ॥ ऋषिः स्यात्काश्यपश्छन्दो विश्वेदेवः प्रकीर्तितः ॥ ११ ॥ योजयेल्लेपयेद्विद्वान्घटमाबद्ध्य सत्तमाः ॥
मध्यमातर्जनीभ्यां च कुशमारभ्य दक्षिणम् ॥ १२ ॥ चतुरस्रीकृतं क्षेत्रं हस्तमानं तथाननम् ॥ यज्वभिरिति मन्त्रेण सूर्यः प्रीणाति
सत्तमाः ॥ १३ ॥ दक्षे सार्धांगुलं त्यक्त्वा पश्चिमेन परित्यजेत् ॥ उत्तराग्रां लिखेद्रेखामन्यथाऽमंगलं भवेत् ॥ १४ ॥ आप्यायस्वेति मन्त्रस्य
धन्वंतरिऋषिः स्मृतः ॥ त्रिष्टुप्छन्दः समाख्यातं सविता चात्र देवता ॥ १५ ॥ तल्लग्नं दक्षिणे चैकं पूर्वार्द्धद्वादशाङ्गुलम् ॥ अन्यांगुलांतरं चैकं
ततः सप्तांगुलं भवेत् ॥ १६ ॥ कुशमूलेन स्वर्णेन प्रतिष्ठायां च राजते ॥ अंगुष्ठानामिकाभ्यां च संज्योतीति च संजपन् ॥ १७ ॥ संस्मरेन्मित्रा
वरुणौ ऋषिरौतथ्यसंज्ञकः ॥ पंक्तिश्छन्दः शिवो देवो रेखामथ च योजयेत् ॥ १८ ॥ तेनैवोर्द्धकरौ कुर्याद्दक्षवामे सकृत्सकृत् ॥ भास्वराय
क्षिपेदग्नौ तत ऊर्ध्वं रणं स्मृतम् ॥ १९ ॥ सदसंपदृषिः कर्णो विराडिति उदाहृतः ॥ छन्द इन्द्रो देवता च पृथिव्या देवता भवेत् ॥ २० ॥
कुशपुष्पोदकेनापि देवतीर्थेन सत्तमाः ॥ पंचगव्येन मतिमान्पञ्चरत्नोदकेन च ॥ पञ्चपल्लवतोयेन महायोगे विशेषतः ॥ २१ ॥ अथोनस्य च
मन्त्रस्य वशिष्ठः परिकीर्तितः ॥ छन्दोऽथ देवी गायत्री देवता गणनायकः ॥ २२ ॥ कीशादग्निं समादाय मे गृह्णामीति संपठन् ॥ मे गृह्णामीति
मंत्रस्य ऋषिर्गौतम ईरितः ॥ छन्दोनुष्टुप्समाख्यातं वामदेवोऽथ देवता ॥ २३ ॥ क्रव्यादग्निं परित्यज्य क्रव्यादमग्निमीरयन् ॥ मंन्त्रेणानेन मति
मान्दक्षिणस्यां विनिक्षिपेत् ॥ २४ ॥ अस्य मन्त्रस्य हारीत ऋषिः स्याच्छन्द इष्यते ॥ देवता वामदेवोऽपि दाहेपि विनियोजयेत् ॥ २५ ॥
आवाहनं ततः कुर्यात्संसरक्षेति संजपन् ॥ संसरक्षेति मंत्रस्य ऋषिर्नील उदाहृतः ॥ विराट् छन्दोऽथ विज्ञेयो देवता च शतक्रतुः ॥ २६ ॥ वैश्वा
नर इति ऋचा अग्निस्थापनमीरितम् ॥ मंत्रमाचाति प्रीणाति ऋषिः स्यात्काश्यपः स्मृतः ॥ अनुष्टुप् च भवेच्छन्दो देवता हव्यवाहनः ॥ २७ ॥
बभ्रासीति च मंत्रेण अग्निं कुर्यात्प्रदक्षिणम् ॥ ऋषिः स्वयंभूराख्यातो विराट् छन्द उदाहृतम् ॥ देवता परमात्मा च नमस्कारेण योजयेत् ॥
॥ २८ ॥ ततोग्निदक्षिणे भागे प्रागग्रकुशकुञ्जके ॥ द्विहस्ते भवतश्चैव हस्तपानासने अथ ॥ २९ ॥ ब्रह्मन्निहोपवेश्यतामिति ब्रह्माणं विनिवेशयेत् ॥
ब्रह्मयज्ञानृचा दोग्ध्री धेनुरिति त्वृचा ॥ ३० ॥ द्वाभ्यामिति च मन्त्राभ्यामिति ब्रह्मप्रवेशनम् ॥ शक्रोऽस्य त्रायतामेति शृणु ऋग्भ्यामृषीद्विजाः ॥ ३१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रजापतिर्ऋषिश्छन्दस्त्रिष्टुब्देवोऽथ शंकरः ॥ नारदश्च ऋषिश्छन्दस्त्रिष्टुब्देवः शचीपतिः ॥ ३२ ॥ अग्नेरुत्तरभागे च हस्तमानांतरेपि च ॥ प्रणीता स्थापनं कुर्यादिन एहीति संजपन् ॥ ३३ ॥ मन्त्रस्य च ऋषिश्छन्दो वामदेवः प्रकीर्तितः ॥ जगती च भवेच्छन्दो देवता च शतक्रतुः ॥ ३४ ॥ श्रीपर्णीसहकारोत्थं वरुणस्य विशेषतः ॥ षडंगुलेन विस्तारं विंशत्यंगुलकेन च ॥ ३५ ॥ दैर्घ्येण च चतुःख्यातकांगुलं च प्रमाणतः ॥ द्व्यंगुले चरकाकायामासासन्देवकर्मणि ॥ ३६ ॥ अभिचारे भवेत्कांस्यं ताम्रं स्याच्छांतिकर्मणि ॥ प्रतिष्ठायां मृन्मयं च अष्टांगुलमथापि वा ॥ ३७ ॥ द्वादशांगुलप्रस्तारं तैजसं मानवर्जितम् ॥ इमं मे वरुणेनर्चा प्रणीतामथ पूरयेत् ॥ ३८ ॥ सागरा अथ प्रीयंतामित्थमाध्यानमाचरेत् ॥ सकृदच्छिन्नदर्भेण दिग्विदिक्षु परिस्तरेत ॥ ३९ ॥ नैर्ऋते दिक्षु सीतः स्याद्वैश्वदेवे तथैव च ॥ कया नश्चित्र इत्यृचा नागः प्रीणाति सत्तमाः ॥ ४० ॥ अस्य मंत्रस्य च ऋषिर्भरद्वाज उदाहृतः ॥ छन्दोऽनुष्टुब्देवता च ईशानः परिकीर्तितः ॥ ४१ ॥ प्रयोजनादिकं द्रव्यं तत आसादयेत्क्रमात् ॥ दक्षिणादि उत्तरांतं ध्रुवास इत्यृचापि च ॥ ४२ ॥ ऋषिः स्यान्नारदश्छन्दोनुष्टुप्चैवाथ देवता ॥ शतक्रतुश्च प्रीणाति योजयेदथ सादरात् ॥ ४३ ॥ काष्ठं च पश्चिमे कुर्यात्प्रयच्छन्पश्चिमेन तु ॥ पुरतोऽन्नं पञ्चव्रीहीस्तिलाश्च शहसर्षपान् ॥ ४४ ॥ दक्षिणे चैव आपूपं भृंगराजं तथैव च ॥ फलपत्रे वामभागे पिष्टकं दधि दुग्धकम् ॥ ४५ ॥ पनसं नारिकेलं च मोदकं लड्डुकं तथा ॥ प्रणीतां च दिग्विदिक्षु स्थापयेदविचारयन् ॥ ४६ ॥ प्रणीतां न स्पृशेज्जातु होमकाले कथंचन ॥ स्नानकुंभं च भो विप्रा यावद्यागः प्रवर्तते ॥ ४७ ॥ उच्चीरकं मातुलिंगं दूर्वां धात्रीफलानि च ॥ तुलसीमालतीजाती जलजानि विशेषतः ॥ ४८ ॥ ऐशान्यां स्थापयेत्सर्वं यच्च वै कंकतीमयम् ॥ नैर्ऋत्येति विशेषोयं यच्च वैकंकती शमी ॥ ४९ ॥ यथायोगेन तत्सर्वं ग्राह्यं तत्पत्रमेव च ॥ क्षीरपाके तु क्षीरांते चरुस्थालीमथानयेत् ॥ ५० ॥ पवित्रच्छेदनकुशैश्छिंद्यात्प्रादेशिकं पुनः ॥ छित्त्वा पवित्रं प्रोक्षण्यां स्थापयेद्वलभिदाग्रकम् ॥ ५१ ॥ विष्णो रराटमंत्रेण छेदयेदग्रभागतः ॥ पायसेन काठिनेन प्रमथ्नीयात्कदाचन ॥ ५२ ॥ न रसेन न कार्ष्णेन न दृढेन कदाचन ॥ ताम्रेण भस्मना चाथ शुक्तिशंखेन वाग्यतः ॥५३॥ छेदयेत्पिञ्जुलीं चापि पवित्रमथ देशिकः॥ विष्णो रराटमंत्रस्य हारीतश्च ऋषिः स्मृतः ॥ ५४ ॥ पंक्तिश्छंदो भवेद्देवः संस्कारे विनियोजयेत् ॥ प्रणीताभाजनं गृह्य प्रोक्षणीं पूरयेत्त्रिभिः ॥ ५५ ॥ कायतीर्थेन तत्कुर्याद्देवतीर्थेन चेत्यपि ॥ वामहस्ततले पश्चात्स्थापयेत्प्रोक्षणीयकम् ॥ ५६ ॥ मध्यमामध्यमांगुष्ठ अपामार्गेण मंत्रिभिः ॥ उत्तानं तत्पवित्रं च पवित्रं तेति संजपन् ॥ ५७ ॥ ऋषिः स्याद्गौतमश्छन्दो धर्मराजोऽथ देवता ॥ अथ स्थापितद्रव्याणि प्रोक्षयेत्स्थापयेत्क्रमात् ॥ ५८ ॥ सकृद्द्रव्ये



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिभिः काष्ठैस्त्रिवारं मंत्रपुष्पकैः ॥ स्थिरस्थाने तु संप्राप्तप्रणीतायाश्च दक्षिणे ॥ ५९ ॥ प्रादेशांतरतश्चैव आज्यस्थालीमथार्पयेत् ॥ अग्रतो मण्डलं कृत्वा वह्निं विप्रे तु स्थापयेत् ॥ ६० ॥ घृतं निःसारयेत्तत्तु निरूप्याशु क्रमेण तु ॥ ईशानेति च मंत्रेण अधिश्रपणमीरितम् ॥६१॥ ऋषिर्नारायणश्छन्दः पंक्तिरीशोऽथ देवता ॥ पर्यग्निकरणं कुर्यादादराद्द्वयमप्यथ ॥ ६२ ॥ अवेक्ष्य ईशमारभ्य दक्षिणावर्तकेन तु ॥ कुलायनीति मंत्रेण ऋषिच्छन्दादिकं स्मरन् ॥ ६३ ॥ परिवेष्याज्यस्थालीं च त्रिः सकृद्वा समाहितः ॥ पितरस्तृप्यंतामिति संस्कारे मातरः स्मृताः ॥ ६४ ॥ ऋषिः स्याज्जमदग्निश्च गायत्री छन्द ईरितम् ॥ देवता च पिनाकी स्यादग्निष्टोमे च योजयेत् ॥ ६५ ॥ घृतस्य च तथा त्वं नो ब्रह्मा वै तृप्यतामिति ॥ षडंगुलं स्रुवं पश्चाद्गृहीत्वाग्नौ प्रतप्य च ॥ ६६ ॥ त्रिरात्रं तु महायोगे सकृदन्यत्र सत्तमाः ॥ संमार्जयेत्कुशेनापि मूलादग्रं तु सेचयेत् ॥ ६७ ॥ अग्रान्मूलं पुनः कुर्यात्संपूज्य च पुनः पुनः ॥ त्रिभिस्त्रिभिः प्रणीतोदे प्रोक्षयेत्तदनंतरम् ॥ ६८ ॥ स्रुवं पुनः प्रतप्याथ प्रोक्षण्युत्तरतो न्यसेत् ॥ आज्यपात्रं पुरस्कृत्य पवित्रं च समाहरेत् ॥६९॥ अंगुष्ठे द्वे अनामे तु गृह्णीयात्तत्पवित्रकम् ॥ अष्टांगुलं मध्यकृत्वो घृतं त्रिः पवनं चरेत् ॥७०॥ पाताले त्रिस्तथाकाशे अवेक्ष्याज्यं ततस्त्रिभिः ॥ प्रोक्षण्यां च तथा कुर्यादधः संप्रोक्ष्य देशिकः ॥ ७१ ॥ ततः पायसमादाय उत्थाय च समन्त्रकम् ॥ तूष्णीं दद्यात्तथा चाग्नौ सन्निवेशेन तत्त्वतः ॥ ७२ ॥ सपवित्रं दक्षकरे गृहीत्वा प्रोक्षणीयकम् ॥ अष्टांगुले मूलभागे तज्जलेन ईशादितः ॥ ७३ ॥ अग्निं पर्युक्षयेत्पश्चाद्दक्षिणावर्तकेन च ॥ पवित्रं च प्रणीतायां निधाय प्रोक्षणीयकम् ॥ ७४ ॥ संयावार्थं च भो विप्रा अग्निवत्तत्र देशिकः ॥ ध्यायेदग्निं रक्तवर्णं स्रुवहस्तं त्रिबाहुकम् ॥ ७५ ॥ कमंडलुं परे हस्ते ततो दक्षकरेण तु ॥ स्रुवं गृहीत्वा जुहुयात्तूष्णीमेव समाहितः ॥ ७६ ॥ अंते च देवतोद्देशं प्राजापत्यं समीरयन् ॥ प्रणवांतेन जुहुयात्सर्वत्र द्विजसत्तमाः ॥ ७७ ॥ वायुकोणं समारभ्य वह्निकोणान्तकेन तु ॥ अच्छिन्नेन घृतेनैव इन्द्राय तदनंतरम् ॥ ७८ ॥ अग्नीषोमात्मकं चैव जुहुयाद्राक्षसादितः ॥ ऐशानकोणपर्यंतं ततो नैमित्तिकं चरेत् ॥ ७९ ॥ पश्चात्स्विष्टं ततो दद्याद्दद्याच्च मतिभिस्तथा ॥ वारुणं पञ्चकं चैव कृत्वा पूर्णां ततो लभेत् ॥ ८० ॥ उद्वाह इति मंत्रस्य अथर्वण ऋषिः स्मृतः ॥ छंदो देवी च गायत्री देवतं चापि वारुणम् ॥ ८१ ॥ प्रकृते योजयेन्मन्त्री स्तुतौ चापि नियोजयेत् ॥ त्वन्नोग्न इति मंत्रस्य ऋषिर्वाशिष्ठसंज्ञकः ॥ छंदश्च बृहती ख्यातं तदेवाग्निः प्रकीर्तितः ॥ ८२ ॥ इडो गतमिति मन्त्रस्य ऋषिः को गुह्यसंज्ञकः ॥ छन्दश्च जगती ख्यातं देवो विष्णुः प्रकीर्तितः ॥ ८३ ॥ उद्वर्तन इति मंत्रस्य ऋषिः को नु प्रकीर्तितः ॥ छन्दो देवी च गायत्री वरुणश्चाधिदेवता ॥८४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे चतुर्दशोऽध्यायः ॥ १४ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ मखे सर्वत्र ब्राह्मणमृत्विजं वरये दथ ॥ कुशकण्डीं स्वगृह्येन कृत्वाग्निं चार्चयेत्ततः ॥ १ ॥ आघाराज्यभागौ तु महाव्याहृतयस्त्रयः ॥ सर्वं प्रायश्चित्तसंज्ञकं प्राजापत्यं च स्विष्ट कृत् ॥ २ ॥ एतन्नित्यं हि सर्वत्र होमे कर्मणि निर्दिशेत् ॥ प्राजापत्ये च इन्द्राय एतावाघारसंज्ञकौ ॥ ३ ॥ अग्नये चैव सोमाय आज्यभागौ प्रकीर्तितौ॥ भूर्भुवःस्वस्त्रयश्चैव महाव्याहृतयः स्मृताः ॥४॥ अयाश्चाग्ने इति तथा ये ते शतमनुत्तमम् ॥ सर्वप्रायश्चित्तसंज्ञा एते वै पञ्च मंत्रकाः ॥ ५ ॥ प्राजापत्याहुतिश्चैका स्विष्टकृच्चापरा स्मृता ॥ चतुर्दशैताः कृतयो होतव्या नित्यसंज्ञकाः ॥ ६ ॥ कृत्वा सकृद्देवतोद्देशं होमं पश्चात्समाचरेत् ॥ सोमपा ये च गोयामे नरमेधाश्वमेधयोः ॥ ७ ॥ अन्यत्र विपरीतेन स्वाहांतेन हुनेद्बुधः ॥ नैमित्तिकं विना नित्यं विफलं याति नान्यथा ॥ ॥ ८ ॥ नित्यं वर्ज्यं शतार्धेन वैश्वदेवे तथैव च ॥ त्र्यहसाध्यादियागेषु यन्निदेशं शृणु द्विजाः ॥ ९ ॥ एकाहे वाघाराराज्यौ कृत्वा नैमित्तिकीः कृतीः ॥ समा स्विष्टकृतं विद्यादाकृत्याद्यास्ततः परम् ॥ १० ॥ विशेषतस्त्र्यहादौ तु अघारावाज्यपूर्वकम् ॥ पश्चान्नैमित्तिकं कुर्यात्समाप्तिदिवसे प्यथ ॥ ११ ॥ आघाराराज्यपूर्वेण ततो नैमित्तिकं चरेत् ॥ स्विष्टकृद्व्याहृतिश्चैव वारुणाद्यास्तथा हि षट् ॥ १२ ॥ द्विजातिः पतितो यत्र द्वित्रिकं च चतुश्चतुः ॥ एकस्मिन्दिवसे कुर्यात्सोमयागे च शैशवे ॥ १३ ॥ द्विजातीनां विवाहे तु नैत्यिकं प्रथमं भवेत् ॥ एकस्मिन्दिवसे कुर्या दग्निकार्यं पृथक्पृथक् ॥ १४ ॥ दद्यादेकं च नित्यं च पृथङ् नित्यं न चाचरेत् ॥ द्विजातिः पतितो यत्र द्वित्रिकं च चतुश्चतुः ॥ १५ ॥ एकस्मिन्दिवसे कुर्यात्तत्रापि नैत्तिकं त्यजेत् ॥ होमे ब्रह्मा स्तुते विष्णुः स्रुवे चैव महेश्वरः ॥ १६ ॥ अजस्यानियमे चेन्द्रोऽधिश्रयणं विवस्वतः ॥ पर्यग्निकरणे चैव उद्वाहे मातरः स्मृताः ॥ १७ ॥ चन्द्रादित्यौ चोत्पवने वीक्षणे च दिशस्तथा ॥ प्रोक्षण्यां स्थापने दुर्गा इमे लक्ष्मी प्रतिष्ठिता ॥ १८ ॥ होमं कुर्याद्द्विजश्रेष्ठा विधिं कुर्यात्समाहितः॥एतेषु देवताः प्रोक्ता द्विजातीनां हिताय च॥१९॥यजेत्सुपशुबद्धेषु संस्कारे चैव पर्वणि ॥ देवताः सर्वा ज्ञातव्या एता यज्ञे समाहितैः॥२०॥ अधिदैवेन जानीयात्करवल्यां पंचफलं यतः॥तस्मात्सर्वप्रयत्नेन देवतामथ विन्यसेत् ॥२१॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे पञ्चदशोऽध्यायः ॥ १५ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ अथ वक्ष्यामि सर्वेषां देवानां ध्यानमुत्तमम् ॥ अस्य यज्ञे परिज्ञानाज्जिह्वा सम्यक्फलप्रदा ॥१॥ हिरण्यवर्णां प्रथमां वह्निजिह्वां महाद्युतिम् ॥ कनकाढ्यकरां देवीं हिरण्याख्येष्टसिद्धये ॥ २ ॥ कनकां[1]

[1] सुवर्णाभामित्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्विभुजां शुक्लां हस्ताभ्यां दर्भसंयुताम् ॥ कमंडलुं च बिभ्राणां नुमः साधकसिद्धिदाम् ॥ ३ ॥ उद्यदिन्दुनिभां रक्तां चतुर्भिर्भुजप द्मकैः ॥ शंखचक्राभयवरान्दधतीं प्रणमाम्यहम् ॥ ४ ॥ भिन्नांजनचयप्रख्यां स्वर्णकुंभं तु वामतः ॥ दक्षिणेन वरारक्तां धारयंतीं नमाम्यहम् ॥ ५ ॥ सुप्रभामण्डलाभा च कराभ्यां तत्कृताञ्जलिः ॥ पद्मासनस्था कौशेयवसना मे प्रसीदतु ॥ ६ ॥ जपाकुसुमसंकाशा बहुरूपा सखे मम ॥ शुभदा स्याद्भुजैः शुभ्रा सहस्रं दधती परान् ॥ ७ ॥ नीलोत्पलनिभे देवि वह्निवर्णपराभवे ॥ जपापुष्पधरे नित्यं सतीरूपे प्रसीद मे ॥ ८ ॥ मूलेन वीक्षयेत्स्थानं मंत्रेण खननं मतम् ॥ त्रिसूत्रीकरणं कुर्याच्चतुःसूत्रं निपातयेत् ॥ ९ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे षोडशोऽध्यायः ॥ १६ ॥ ॥ सूत उवाच ॥ ॥ प्रतिष्ठायाः पूर्वदिने कुर्याद्देवाधिवासनम् ॥ धान्यप्रतिष्ठां तस्यैव यूपं चापि यथाविधि ॥ १ ॥ रात्रौ मूलाग्रे च वटे स्थापयेद्गणनायकम् ॥ संपूज्य च विधानेन दिगीशांश्च तथा ग्रहान् ॥ २ ॥ ब्रह्माणं च तडागेषु वरुणं शान्तियागके ॥ सोमं च मंडले सूर्यं पादे विष्णुं तथैव च ॥ ३ ॥ शैवे शैवं तथा प्रोक्तं प्रपायामथ वारुणम् ॥ आरामे चैव ब्रह्माणं पाद्याद्यैरपि चार्चयेत् ॥ ४ ॥ द्रुपदादीति मन्त्रेण स्नापयेत्प्रथमं बुधः ॥ गायत्र्या च ततः पश्चाद्गन्धद्वारेति तैलकम् ॥ ५ ॥ सुनाभेति च मंत्रेण द्वाभ्यामेव विशिष्यते ॥ श्रीश्च ते इति कुसुमं फलिनीति च वै फलम् ॥ ६ ॥ कांडादिति च मंत्रेण दद्याद्दूर्वाशतं ततः ॥ सिंदोरिवेति सिंदूरं विश्वामिति च मार्जनम् ॥ ७ ॥ समिच्छेत्यञ्जनं दद्याद्धुःस्थं सुरासुरा जपन् ॥ चन्दनं यज्वभिर्जप्त्वा मानस्तोकेति चन्दनम् ॥ ८ ॥ यूपे चैव विशेषोयमुत्तराग्रं प्रविन्यसेत् ॥ अत्रैव तेन मंत्रेण स्थापयेदथ वारिणा ॥ ९ ॥ गायत्र्या प्रथमं चैव आपो हिष्ठेति वै जपन् ॥ शन्नो देवीति द्रुपदां स्नापयेत्तदनन्तरम् ॥ १० ॥ अभिमन्त्र्याथ ब्रह्मेति त्रिरात्रं मंत्रमीरयन् ॥ योगं योगदृढं जप्त्वा पवित्रं विन्यसेत्ततः ॥ ११ ॥ त्वं गन्धर्वेति मन्त्रेण तथा सुभाभ इत्यपि ॥ द्वाभ्यां तैलगंधयुतं श्रीसूक्तेनापि पुष्पकम् ॥ १२ ॥ धूरसीति च तथा धूपमास्रज्योतिर्भिर्दीपकम् ॥ अत्रुमीमहताति दद्याद्दूर्वाक्षतं ततः ॥ १३ ॥ विश्वामीति च निम्न्यंतकांडादिति तथाक्षतम् ॥ सिंदोरिवेति सिन्दूरं समिधेति तथाञ्जनम् ॥ १४ ॥ पादोऽस्येत्यथ भुक्तं स्याद्याः फलिनीति पुनः फलम् ॥ रूपं नेति दहेद्रूपं न सोचिति च पूजनम् ॥ १५ ॥ युवा सुवासेति वस्त्रं नागगन्धेति चन्दनम् ॥ ततो यमगृहाद्बाह्ये मण्डपांतरमाश्रितः ॥१६॥ सुनातीति वचो दद्यात्ततश्चावाहयेत्प्रभुम् ॥ तत्राधिवासनं कुर्याद्रक्षयेच्च सुरक्षिभिः ॥१७॥ आचार्यो यजमानश्च ऋत्विग्भोजनमाचरेत् ॥ अक्षारलवणान्यासी दधि विश्वं तिलांस्त्यजेत् ॥१८॥ आधारणं

227

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चाधिवासं वक्ष्ये तत्रानुसारतः ॥ सुनातेति वचो दद्यात्तैलं चैव शिवे त्रिभिः ॥ १९ ॥ पञ्चभिर्ब्राह्मणैः सार्धं गन्धर्वा इति विस्मरन् ॥ दद्याद्गन्धं तैलयुतं गन्धद्वारेत्यृचा पुनः ॥ २० ॥ याः फलिनीति च फलं पूगतानामवर्जनम् ॥ कौशिकीरुत्तमोसीति दद्यात्खड्गं सुतीक्ष्णकम् ॥ २१ ॥ रूपेन वेति मन्त्रेण मुद्गरं च निवेदयेत् ॥ श्रीश्च ते इति कुसुमं विश्वानीति च संपठन् ॥ २२ ॥ निर्मथनं ततः कार्यमिति साधारणो विधिः ॥ ततोधिवासकल्पे तु प्रदेशे तु समाचरेत् ॥ २३ ॥ विनाधिवासनं विप्राः प्रतिष्ठानं समाचरेत् ॥ न तत्फलमवाप्नोति विवाहे शरणं दिशेत् ॥ २४ ॥ ततः प्रयत्नतः कार्यं पूर्वाह्णे रात्रियोगतः ॥ नित्ये नैमित्तिके काम्ये कारयेत्कुण्डमण्डपम् ॥ २५ ॥ स्थंडिले हस्तमात्रेण वालुकानिर्मितेऽपि च ॥ त्रयोदशांगुले हस्ते द्विहस्ते चापि वर्द्धते ॥ २६ ॥ एकैकांगुलको विप्राः पीठे नास्ति विचारणा ॥ नवपञ्चककुण्डे च लक्षादावपि शंकया ॥ २७ ॥ ततो दशांगुले पक्षे दशांगं शृणुत द्विजाः ॥ काष्ठं पत्रं च पुष्पं च मोदकं पिष्टकं तथा ॥ २८ ॥ अन्नं च परमान्नं च ह्यवेक्ष्यं तिलमेव च ॥ एतद्वै गृहपक्षे च विष्णुपक्षे तिलादितः॥२९॥शैवे यवादितः कार्या शाक्ते पुष्पादितो भवेत् ॥ सूर्ये पक्षे पिष्टकादि गोपाले कृशरादितः ॥ ३० ॥ कृष्णे च करवीरादि श्रीफलानि च त्रैपुरे ॥ सारस्वते च श्रीवृक्षे मोक्षकामे निगद्यते ॥ ३१ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ अष्टौ होतारो द्वारपालास्तथाष्टौ अष्टौ कार्या ब्राह्मणा याजकाश्च ॥ सर्वे शुद्धा लक्षिता लक्षणाद्यैरेकः कार्यो जापकोस्मिन्महात्मा ॥ १ ॥ दिव्यैर्गन्धै गंधमाल्यैः सुवर्णैस्तैलं कार्यं ब्राह्मणाः पञ्चविंशाः ॥ आवाप्यैस्तु द्विगुणैर्वै बलीयो दिव्यैर्वस्त्रैरर्हणादक्षिणाभिः ॥ २ ॥ नार्हयित्वा यथोक्तेन कश्चित्पत्रं निवेशयेत् ॥ अंनर्हितेषु विप्रेषु न सम्यक्फलमाप्नुयात् ॥ ३ ॥ प्रतिष्ठादिषु सर्वेषु सम्यग्विप्रानथार्हयेत् ॥ कुशाद्विजं तु सर्वत्र अर्घ्यं विष्टरमात्रकम् ॥ ४ ॥ प्रदद्यादर्हणं सम्यक्पश्चात्पात्रं निवेदयेत् ॥ विनार्हणं कृते तस्मिन्नरके परिपच्यते ॥ ५ ॥ प्रत्येकं ब्राह्मणा यज्ञे वेदमन्त्रेषु पारगाः ॥ आचार्यो यदि कार्येषु वरयेद्दश गोत्रजान् ॥ ६ ॥ विशिष्टानामभावेऽपि कुर्यात्कुशमयान्द्विजान् ॥ कुशप्रतिकृतौ चापि स्वगोत्रं स्वं द्विजं विना ॥ ७ ॥ न कुर्याचरणोद्देशं तथा प्रहरसंहतिम् ॥ गोत्रादिकीर्तनांतेषु स्वनामोद्देशमीरयन् ॥ ८ ॥ तुलापुरुपदाने च तथा च हाटकाचले ॥ कन्यादाने तथोत्सर्गे कीर्तयेत्प्रवरादिकम् ॥ ९ ॥ न पात्रं प्रतिकृत्यर्थं न चालं सोदरं तथा ॥ मृतभार्य्यो ह्यभार्यश्च अपुत्रो मृतपुत्रकः ॥ १० ॥ शूद्रसंस्कारकश्चैव कृपणो गणयाजकः ॥ प्रायश्चित्तगृहीतश्च राजयाजकपैशुनौ ॥ ११ ॥ शूद्रगेह



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निवासी च शूद्रप्रेरक एव च ॥ स्वल्पकण्ठो वामनश्च वृषलीपतिरेव च ॥ १२ ॥ बन्धुद्वेषी गुरुद्वेषी भार्याद्वेपी तथैव च ॥ हीनांगश्चैव वृद्धांगो भग्नदंतश्च दांभिकः ॥ १३ ॥ प्रतिग्राही च कुनखः पारदारिक एव च ॥ श्वित्री कुष्ठी कुलोद्धूतो निद्रालुर्व्यसनार्थकः ॥१४॥ अदीक्षितः कदर्यश्च चंडरोगी गलद्व्रणः ॥ महाव्रणी च उदरी यज्ञपात्रं न कारयेत् ॥ १५ ॥ वरणांते तु पात्राणां पूजामन्त्राञ्छृणु द्विज ॥ प्रतिमन्त्रेण गन्धाद्यैरर्चयेन्मन्त्रवित्तमः ॥ १६ ॥ ब्रह्ममूर्तिस्त्वमाचार्यः संसारात्पाहि मां विभो ॥ त्वत्प्रसादाद्धरो यज्ञं प्राप्तोस्मि यन्मयेप्सितम् ॥ ॥ १७ ॥ चिरं मे शाश्वती कीर्तिर्यावल्लोकाश्चराचराः ॥ प्रसीद त्वं महेशान प्रतिष्ठाकर्मसिद्धये ॥ १८ ॥ त्वमादिः सर्वभूतानां संसारार्णव तारकः ॥ ज्ञानामृतप्रदाचार्यो यजुर्वेद नमोऽस्तु ते ॥ १९ ॥ ब्रह्मणैव समुद्धूत प्रकाशितदिगन्तर ॥ शुद्धजांबूनदप्रख्य यजुर्वेद नमोऽस्तु ते ॥ २० ॥ प्रतप्तकनकाभास भासितद्युतिभूतल ॥ मन्त्रप्रख्यानसंस्थान यजुर्वेद नमोऽस्तु ते ॥ २१ ॥ प्रफुल्लकनकाभास भास्वरासुरभूपित ॥ प्रकीर्णमन्त्रसंभारविधिज्ञ प्रणतोऽस्मि ते ॥ २२ ॥ पडंगवेदवेदज्ञ ऋत्विङ्मोक्षप्रदो भव ॥ प्रविश्य मण्डलं विप्राः स्वस्थाने स्थापये त्क्रमात् ॥ २३ ॥ वेद्याः पश्चिमभागे तु आचार्यं स्थापयेद्बुधः ॥ कुण्डस्याग्रे तु ब्रह्माणं मण्डलस्यैव पश्चिमे ॥ २४ ॥ होतारं स्थापये त्तत्र विधिज्ञमथ चोत्तरे ॥ द्वौद्वौ कृत्वा ज्ञापकौ च खड्गधारकमेव च ॥२५॥ द्वारिद्वारि प्रयत्नेन द्वारपालाननुक्रमात् ॥ वक्ष्यमाणेन मंत्रेण प्रत्ये कमथ स्थापयेत् ॥२६॥ पूजयेद्गन्धपुष्पाद्यैर्वाससो युगलेन तु ॥ यज्ञे सवितते योऽसौ पूज्यते पुरुषः सदा॥२७॥नारायणस्वरूपेण यज्ञं मे सफलं कुरु ॥ यज्ञेषु साक्षी सर्वेषु यजुर्वेदार्थतत्त्ववित् ॥ २८ ॥ ऋग्वेदार्थस्य तत्त्वज्ञ इन्द्ररूप नमोऽस्तु ते ॥ मखश्रेष्ठेषु सर्वेषु येन मंत्राः सुविस्तृताः ॥ ॥ २९ ॥ यजुर्वेदार्थतत्त्वज्ञ ब्रह्मरूप नमोऽस्तु ते ॥ मखश्रेष्ठेषु सर्वेषु एष एव विधिः स्मृतः ॥ ३० ॥ मांगल्यं कर्मणां नित्यं सर्वज्ञं ज्ञानरूपि णम् ॥ सिद्धये मम यज्ञस्य नमामि शिवरूपिणम् ॥ ३१ ॥ पालय त्वं दिशः सर्वा विदिशश्च तथा इमम् ॥ दिक्पालरूपिणं विप्रं यज्ञसिद्धौ नमा म्यहम् ॥ न संकल्पं चरेद्यागं व्रतं देवार्चनं तथा ॥ ३२ ॥ संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः ॥ संकल्पेन विना विप्रा यत्किञ्चित्कुरुते नरः ॥ ३३ ॥ फलं चाल्पाल्पकं तस्य धर्मस्यार्द्धक्षयो भवेत् ॥ तस्मात्सर्वप्रयत्नेन यागं संकल्पयेत्सुधीः ॥ ३४ ॥ कामात्परो नैव भवेन्निष्का मोऽपि न शोभनः ॥ तस्मात्काममयं धर्मं विना मोक्षं न चाचरेत् ॥ ३५ ॥ संकल्पेन विना यस्तु धर्मं चरति मानवः ॥ न तस्य फलमाप्नोति

१ विनाव शेपः ।

228

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यनैमित्तिकस्य च ॥ ३६ ॥ न कुर्यात्स्थापने चैव कुर्याद्वै मंडलांतरे ॥ गृहीत्वौदुंबरं पात्रं वारिपूर्णं गुणान्वितम् ॥ ३७ ॥ जलाशयरामकूप संकल्पे पूर्वदिङ्मुखः ॥ साधारणे चोत्तरास्यो ग्रहयज्ञे तु संमुखः ॥३८॥ महाव्रते प्रतिष्ठायां पात्रं ताम्रं हिरण्मयम् ॥ राजताश्ममयं सांगं यद्य ज्ञेषु प्रशस्यते ॥ ३९ ॥ यज्ञीयपात्रपुटकं हस्तस्थाने प्रकीर्तितम् ॥ ऐश्यान्यां निक्षिपेत्तोयं प्रतिष्ठायां च पूर्वतः ॥४०॥ आकाशे निक्षिपेद्यागे व्रते ईशेपि नित्यके ॥ पितृमेधे च गोयागे नरमेधे च दक्षिणे ॥४१॥ शुक्तिकांस्यादिहस्तैश्च ताम्ररौप्यादिभिस्तथा ॥ संकल्पो नैव कर्तव्यो मृन्मये च कदाचन ॥४२॥ प्रणवं पूर्वमुच्चार्य यजेद्यज्ञेश्वरं स्मरेत् ॥ गङ्गा चादित्यचंद्रौ च द्यौर्भूमी रात्रिवासरौ ॥४३॥ सूर्यः सोमो यमः कालो महाभूतानि पंच च ॥ एते शुभाशुभास्येह कर्मणो नव साक्षिणः ॥ ४४ ॥ इत्युच्चार्य न्यसेद्धर्मं ध्यात्वा पुष्पाञ्जलिं सृजेत् ॥ अमृतं कृत्यपात्रे च ॐ तत्सदिति निर्दिशेत् ॥ ४५ ॥ धर्मः शुभ्रवपुः सितांबरधरः कार्योर्ध्वदेशे वृषो हस्ताभ्यामभयं वरं च सततं रूपं परं यो दधत् ॥ सर्वप्राणिसुखावहः कृत धियां मोक्षैकहेतुः सदा सोयं पातु जगंति चैव सततं भूयात्सतां भूतये ॥ ४६ ॥ यज्ञसंबंधिविप्रांश्च एकाहेनैव योजयेत् ॥ हविर्द्रव्याणि यानि स्युरष्टयागांतरेपि च ॥ ४७ ॥ पुनःपुनर्नियोज्यानि ब्राह्मणा हविरग्नयः ॥ ४८ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ माघादिमासेष्वपि पट्सु कार्या योगप्रतिष्ठा ऋषिभिः प्रणीता ॥ देवादिसंस्थापनमाहुरत्र यावन्न सुप्तो मधुसूदनश्च ॥ १ ॥ वारे भृगोर्देवगुरोर्बुधस्य सोमस्य सर्वाः शुभदा भवंति ॥ लग्ने शुभस्थे शुभवीक्षिते वा कार्या प्रतिष्ठा च जलाशयानाम् ॥ २ ॥ शुद्धा द्वितीया च तथा तृतीया त्रयोदशी चापि तथैव विप्राः ॥ तथापि सप्तम्यपि पौर्णमासी दशम्यसौ चाप्यथ[1] पंचमी च ॥ ३ ॥ प्राणप्रतिष्ठा च जलाशयादेरेताः प्रशस्तास्तिथयो भवंति ॥ अप्राप्य चैतानि शुभानि यानि कार्या प्रतिष्ठा विषुवद्वये च ॥ ४ ॥ षड शीतिलोकाप्ययनद्वयेन युगादिके पुण्यदिने शुभे च ॥ कार्या तडागादिजलाशयस्य प्राच्यां प्रतिष्ठा अथ चोत्तरे वा ॥ ५ ॥ सुचारु ईषत्प्रवणे च देशे सुवर्तुलः षोडशहस्तमंडपः ॥ द्वारैश्चतुर्भिः प्रथितैरुपेतश्चतुर्मुखश्चापि भवेत्सुरेताः ॥ ६ ॥ पूर्वादिद्वारेषु चतुष्टयेषु प्लक्षादिभिस्तोरणकैः सुरेशः ॥ प्लक्षस्तथोदुंबरपिप्पलौ च न्यग्रोधकं चापि यथाक्रमेण ॥७॥ ऊर्ध्वे च हस्तानमितानि यानि विचित्रमाल्यांबरभूषितानि ॥ भूमौ यथा प्रीति च हस्तकानि भवंति चैतान्यपि तोरणानि ॥८॥ सर्वत्र यागेपि हि मंडपस्य कार्या ध्वजा दिक्षु विदिक्षु शुभ्राः ॥ दिक्पालवर्णाभपताकयुक्ता

[1] सप्तम्यर्थे प्रथमा ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मध्ये च वै नीलपताकयुक्ताः ॥ ९ ॥ ध्वजाश्च यस्मिन्दशहस्तसम्मितास्तस्मिन्पताका अपि पञ्चहस्ताः ॥ अरत्निमात्रा यदि मूलभागे पंचांगुलाग्रे विनिबद्धगूढाः ॥ १० ॥ द्वारे च तस्मिंश्च निरूपिता वा रंभा सुपुष्पा सुखशाड्वलाश्च ॥ वचाभिवृक्षोत्तरपंचहस्ताः सपंचशाखा अपि तोरणानि ॥११॥ मुंजोद्भवैर्बर्हिःसमुद्भवैर्वा सुरंजितश्चैत्रितपद्मपल्लवैः ॥ पुष्टद्वये सूत्रितं वेष्टयेच्च तथेक्षुकाण्डैरथ यागमण्डपम् ॥१२॥ वेदिस्तथा मंडममध्यभागे कार्या च कोणेस्थितुपादिहीना ॥ हस्तोच्छ्रिता रेखवती सुरेखपरिष्कृता हस्तचतुष्टयेन ॥ १३ ॥ वेद्यां परित्यज्य दशांगुलानि ऐशान्यतश्चाणि तथा पराणि ॥ कुंडाय दद्याच्चतुरस्रमेकमवस्थितं त्र्यंगुलमेखलोज्ज्वलम्॥१४॥प्रासादे च तडागे च महारामे तथैव च ॥ मंडलं सर्वतोभद्रं प्रयत्नेनैव कारयेत् ॥१५॥ कुंडं चापि प्रकुर्वीत यथाभ्यन्तरमेखलम् ॥ बहिर्योनिगतं श्वेतं निश्चित्रं समसूत्रकम् ॥१६॥ कुंडानि कुर्यान्नव कुंडपक्षे वेद्यास्तथोच्चैरविदिक्षु चैव ॥ सर्वाणि सर्वत्र च मेखलानि षडस्रपंचास्रसमेखलानि॥१७॥अष्टास्रजान्यब्जत्रिकोणकानि तथार्द्धचन्द्रं चतुरस्रकं च ॥ कुण्डस्य पूर्वोत्तरदिग्विभागे स्थाप्यो वटश्चन्दनचारुलिप्तः ॥ १८ ॥ माल्याम्बराच्छादितपूर्णपाथाः सवृत्तपत्रश्च सुवर्णगर्भः ॥ १९ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभागे एकोनविंशोऽध्यायः ॥ १९ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ गतो यागगृहादन्यन्मण्डलांतरमाश्रितः ॥ यजमानस्तथा नित्यं कर्म कृत्वा यथाविधि ॥ १ ॥ पंच देवान्नमस्कृत्य तथा यज्ञेश्वरं हरिम् ॥ संकल्पं च ततः कृत्वा ब्राह्मणानामनुज्ञया ॥ २ ॥ एतस्मिन्पुण्यदेशे तु फलं गोत्रश्च वै यमः ॥ वेदव्यासादिप्रणीतं यथाशास्त्रनिदर्शनम् ॥ ३ ॥ यथायथा स्वतन्त्रोक्तं पुण्यारण्याभिधायकम् ॥ जलाशयप्रतिष्ठायां करिष्ये विधिवद्द्विजाः ॥ ४ ॥ यथायथा च कल्पोक्तं यथाकुण्डं विधानतः ॥साधिवासं यथैवैकः पुण्यारण्यविधायकः ॥ ५ ॥ जलाशयप्रतिष्ठां च करिष्ये विधिवद्द्विजाः ॥ संकल्पमेवं कृत्वा तु वृद्धिश्राद्धं समाचरेत् ॥ ६ ॥ मातृयागं पुरस्कृत्य वृद्धिश्राद्धं समापयेत् ॥७॥ भेर्यादिघोषेण सुमंगलेन पद्मं लिखेदत्र सषोडशाक्षरम् ॥ इन्द्रादिदिक्पालवरायुधानि समुल्लिखेदेव दिशि स्थितानि ॥ ॥ ८ ॥ ब्रह्मेशान्वरयेत्सर्वानाचार्यं तु विशेषतः ॥ स्वर्णकुंडलयुग्मेन तथा ताम्रादिभाजनैः ॥ ९ ॥ नानारत्नैश्च वस्त्रैश्च आचार्यं वरयेद्बुधः ॥ हेमालंकारयुग्मैश्च वासोभिर्विविधैरपि ॥ १० ॥ यथामानं यथाशक्ति यथाभिवृणुयाद्बुधः ॥ रचिता यजमानेन ध्रुवं स्वस्त्यस्तु ते इति ॥११॥ ततः सर्वौषधीभिश्च यजमानः सपत्निकः ॥ आपोहिष्ठेतिमन्त्रेण स्नापयामासुरप्रजाः ॥ १२ ॥ यवगोधूमनीवारतिलश्यामाकशालयः ॥ प्रियंगुव्रीहयश्चाष्टौ सर्वौषधिगणः स्मृतः ॥ १३ ॥ ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥ सर्वौषध्युदकस्नातः स्नापितो वेदपुङ्गवैः ॥ १४ ॥ ब्राह्मणैरभ्य



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुज्ञातः पुरोहितपुरःसरः ॥ नानामंगलघोषेण भेरीपटहनिस्वनैः ॥ १५ ॥ यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः ॥ पश्चिमं द्वारमासाद्य प्रविशे द्यागमण्डपम् ॥ १६ ॥ चरके पूजयेद्विघ्नं गंगां च यमुनां तथा ॥ पार्श्वयोश्चार्धतो लक्ष्मीं प्रतिहारमनुक्रमात् ॥ १७ ॥ वेदिं प्रदक्षिणीकृत्य नमस्कुर्याद्यथाविधि ॥ उपविश्य ततस्तस्मिन्ब्राह्मणानुमते स्थितः ॥ १८ ॥ स्वस्ति वाच्यं ततः कृत्वा पंच देवान्प्रपूजयेत् ॥ भूतोत्सादं ततः कृत्वा विकिरान्विकिरेद्भुवि ॥ १९ ॥ अपक्रामंतु ये भूता ये चास्मिन्विघ्नकारकाः ॥ यस्मान्नो नाम्नि वर्तंते यज्ञमात्रं प्रवर्तताम् ॥ २० ॥ पूजये दासनं पश्चात्स्वकीयं पुष्पचंदनैः ॥ नमोनंतासनायेति तथा पद्मासनाय च ॥ २१ ॥ विमलासनाय च नमो नमः सारासनाय च ॥ योगासनाय च नमः पृथिव्यै नम इत्यपि ॥ २२ ॥ ततो भूमितले वामहस्तं दत्त्वा पठेन्नरः ॥ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ २३ ॥ त्वं च धारय मां नित्यं पवित्रमासनं कुरु ॥ सूर्यायार्घ्यं ततो दत्त्वा गुरुं नत्वा कृताञ्जलिः ॥ २४ ॥ देवं हृत्पद्मके नीत्वा प्राणायामत्रयं चरेत् ॥ ततोऽर्चयेद्विघ्नराजमैशान्यां च घटोपरि ॥ २५ ॥ गन्धपुष्पैस्तथा वस्त्रैर्नैवेद्यैर्विविधैरपि ॥ गणानां त्वेति मंत्रेण ब्रह्माणं तदनंतरम् ॥ २६ ॥ आब्रह्मन्निति ऋचा तद्विष्णोरिति संस्मरन् ॥ वासुदेवं ततः पश्चाद्बलिभिर्गन्धचंदनैः ॥ २७ ॥ ततो देवशरीरं तु नवमासाद्य त्रिंशतम् ॥ वेद्याश्च परितः सर्वान्स्वेस्वे स्थाने यथाक्रमम् ॥ २८ ॥ ततो राजाधिराजेन भूतशुद्धिं समाचरेत् ॥ ततो बुद्बुदमध्ये तु श्वेतपद्मासनस्थितम् ॥ २९ ॥ शुद्धस्फटिकसंकाशं शंखकुन्देन्दुसप्रभम् ॥ किरीटकुण्डलयुतं सितं पंकजधारिणम् ॥ ३० ॥ शुक्लमाल्यांबरं शुक्लं शुक्लगंधानुलेपनम् ॥ अहि तुण्डासनस्थं च पाशहस्तं महाबलम् ॥ ३१ ॥ स्तूयमानं सुरगणैः सिद्धगंधर्वसेवितम् ॥ सुचारुवदनं देवं पद्ममालोपशोभितम् ॥ ३२ ॥ राजी वलोचनं नित्यं नागलोकोपशोभितम् ॥ मकरग्राहकूर्माद्यैर्नानाजलचरैर्वृतम् ॥ ३३ ॥ जलाशयगतं देवं चिंतयेज्जलशायिनम् ॥ ततो न्यासं प्रकु र्वीत पंचांगत्वावशोभितम् ॥ ३४ ॥ अर्घ्यपात्रं ततः कृत्वा त्रिभागजलपूरितम् ॥ अष्टधा मूलमंत्रं च जप्त्वा तेनोदकेन च ॥ ३५ ॥ आसनं यागव स्तूनि प्रोक्षयेत्तेन वारिणा ॥ अरुणाय विद्महे तमोघ्नाय च धीमहि ॥ ३६ ॥ तन्नो अरुणः प्रचोदयादिति स्नानं समाचरेत् ॥ ततो गणेशमै शान्यामाग्नेय्यां गुरुपादुकाम् ॥ ३७ ॥ धर्माधर्मादिकान्सर्वान्सत्त्वादीनथ चार्चयेत् ॥ सूर्यसोमजलादीनां मण्डलानि यथाक्रमम् ॥३८॥ मध्ये शक्तिं च क्षीरोदमनंतं पृथिवीं तथा ॥ कूर्मं चाधारशक्तिं च सुमेरुं मन्दरं तथा ॥ ३९ ॥ पञ्चतत्त्वं समभ्यर्च्य सांगोपांगमनंतरम् ॥ ततः श्वेतं च कुसुमं साक्षतं योगमायया ॥ ४० ॥ गृहीत्वा पूर्ववद्देशे स्थापयेत्कलशोपरि ॥ आवाहनं ततः कृत्वा मन्त्रेणानेन मंत्रवित् ॥ ४१ ॥ एह्येहि





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवन्वरुण एष यज्ञः प्रवर्तते ॥ यज्ञभागं गृहाणेदं त्वामेवावाहयाम्यहम् ॥ ४२ ॥ एवमावाह्य लोकेशमष्टौ मुद्राः प्रदर्शयेत् ॥ गायत्र्या स्नाप यित्वा तु दद्यात्पाद्यादिकत्रयम् ॥ ४३ ॥ पुष्पाञ्जलिं ततो दत्त्वा मूलमंत्रेण देशिकः ॥ पूर्वादिपत्रमूलेषु धर्मादीन्पूजयेद्बुधः ॥ ४४ ॥ सत्त्वाद्याः पूजयेत्तत्र तेषानेव वरांगनाः ॥ ज्ञानं धर्मं च सोमं च रजः सत्त्वं तमस्तथा ॥ ४५ ॥ पूर्वादिपत्रमध्ये तु ग्रहानष्टौ प्रपूजयेत् ॥ पत्राग्रे लोकपालाना मग्न्यादीनायुधांस्तथा ॥ ४६ ॥ कर्णिकादक्षिणे पूर्वं वामे चापि शचीपतिम् ॥ पूर्वपत्रे तु ब्रह्माणं पूजयेत्सितपङ्कजैः ॥ ४७ ॥ नैर्ऋत्ये वरुण स्याथ मध्येऽनंतं प्रपूजयेत् ॥ पीठमन्त्रेषु पूर्वादिब्रह्माणं च शिवं तथा ॥ ४८ ॥ विष्णुं चापि गणेशं च पृथिवीं गंधचन्दनैः ॥ जपेन्मन्त्रं साष्ट शतं सहस्रं विजपेद्बुधः ॥ ४९ ॥ जानुभ्यामवनीं गत्वा विजयाख्यस्तवं पठेत् ॥ ईशानादिपीठकोणेषु कमलामंबिकां तथा ॥ ५० ॥ नैर्ऋत्यां विश्व कर्माणं वायव्ये तु सरस्वतीम् ॥ पूर्वादिद्वारदेशे तु मरुतं चावहादिकम् ॥ ५१ ॥ आवहं प्रवहं चैव तथैवोद्वहसंवहौ ॥ विन्यसेत्पश्चिमे द्वारि निवहं च परीवहम् ॥ ५२ ॥ विन्यसेदुत्तरद्वारि मरुतं च पराभवम् ॥ आग्नेयादिषु कोणेषु बहिष्पीठं ततो जयेत् ॥ ५३ ॥ पिशाचान्राक्षसान्भूतान्वेता लांश्च तथा क्रमात् ॥ क्षोभकः कामरूपश्च सौभद्रो मरुतस्तथा ॥ ५४ ॥ गोमुखो नन्दभद्रश्च द्विजिह्वो मलिनस्तथा ॥ हस्तिकर्णो विशालाख्यः सप्तरक्षोगणः स्मृतः ॥ ५५ ॥ भूमिदो वरदश्चैव जयंतः क्षोभकस्तथा ॥ विवस्वंतः सुदंतश्च एते भूतगणाः स्मृताः ॥ ५६ ॥ अंगदो नीलकर्णोऽसौ वसंतो यावकस्तथा ॥ घोररूपा महाकाया वेतालाश्च प्रकीर्तिताः ॥५७॥ गंधपुष्पाक्षतैर्भक्तं सर्वे देवा ग्रहादयः ॥ ध्यानवर्णानुरूपेण पूजनीयाः प्रय त्नतः ॥ ५८ ॥ ध्यायेदादित्यमारक्तं रक्तपद्मासनस्थितम् ॥ रक्तांबरधरं रक्तं रक्तमाल्यानुलेपनम् ॥ ५९ ॥ यवविद्रुमसंकाशं सिंदूरारुणसप्रभम् ॥ आकृष्णेनेति मंत्रेण स्थापयेत्कलशोपरि ॥ ६० ॥ इहागच्छेति चावाह्य पाद्यार्घ्यैश्च पृथग्विधैः ॥ गंधपुष्पादिभिर्भक्त्या पूजयेत्तं यथाविधि ॥ ६१ ॥ बलिं च लोहितं दद्यात्पायसं दधिखंडकम् ॥ घृतलिप्तं च शाल्यन्नं पताकां रक्तवर्णिकाम् ॥ ६२ ॥ श्वेतांबरधरं श्वेतं शुक्लगंधानु लेपनम् ॥ द्विभुजं वरदं देवं गदाहस्तं महाबलम् ॥ ६३ ॥ नानाभरणसंपन्नं सिद्धगंधर्वसेवितम् ॥ शुक्लपद्मासनस्थं चाश्वं दद्याच्छ्वेतभूषितम् ॥ ६४ ॥ इमं देवा इति मंत्रेण स्थापयेत्पूर्वदिग्दले ॥ सितवस्त्रैश्च पुष्पैश्च शुक्लमाल्यानुलेपनैः ॥ ६५ ॥ पायसैः श्वेतबलिभिर्दधिभक्तं निवेदयेत् ॥ धूपैः श्वेतपताकाभिर्नैवेद्यैर्विविधैरपि ॥ ६६ ॥ रक्तमाल्यांबरं देवं रक्ताभरणभूषितम् ॥ सुचारुनयनं रक्तं रक्तपद्मासनस्थितम् ॥ ६७ ॥ किरीटकुं डलधरं मेषकंटं चतुर्भुजम् ॥ वरदं यज्ञनाशं च शूलशक्तिगदाधरम् ॥ ६८ ॥ सर्वकामप्रदं देवं सिद्धगंधर्वसेवितम् ॥ चिंतयेत्परया भक्त्या मंगलं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धरणीसुतम् ॥ ६९ ॥ अग्निमीळेति मंत्रेण स्थापयेदग्निदिग्दले ॥ पूजयेद्रक्तपुष्पैश्च रक्तमाल्यानुलेपनैः ॥ ७० ॥ धूपै रक्तपताकाभिर्गुडभक्तनिवे
दनैः ॥ अतसीपुष्पसंकाशं कर्णिकारसमप्रभम् ॥ ७१ ॥ रौहिणेयं महाकायं नीलनीरजलोचनम् ॥ प्रशांतवदनं देवं पीतवस्त्रं चतुर्भुजम् ॥७२॥
खड्गचर्मधरं तद्वद्गदापरशुधारिणम् ॥ पद्मासनगतं देवं पीतपद्मासनस्थितम् ॥ ७३॥ नानाभरणसंपूर्णं मृगेन्द्रवरवाहनम् ॥ उद्बुध्यस्वेति मंत्रेण या
म्यां तु स्थापयेद्बुधम् ॥ ७४ ॥ पूजयेद्गन्धपुष्पाद्यैः पीतगंधानुलेपनैः ॥ वस्त्रैः पीतपताकाभिर्बलिभिः कृशरान्वितैः ॥ ७५ ॥ पीतवर्णं गुरुं ध्याये
त्पीतपद्मासनस्थितम् ॥ पीताभरणसंपन्नं पीतवस्त्रं चतुर्भुजम् ॥७६॥ वरदं दंडहस्तं च साक्षसूत्रकमंडलुम् ॥ पूज्यमानं सुगंधर्वैः सेन्द्रैर्देवगणैरपि
॥७७॥ बृहस्पतय इति मंत्रेण नैर्ऋत्यां दिशि संस्थितम् ॥ पीतचन्दनगंधैश्च पीतवस्त्रादिभूषणैः ॥७८॥ धूपैः पीतपताकाभिः पीतोदकनिवेदनैः॥
पूजयेत्परया भक्त्या पुरंदरपुरोहितम् ॥ ७९ ॥ ध्यायेच्छुक्रं भृगुसुतं श्वेतपद्मासनस्थितम् ॥ चतुर्भुजं महाकायं वरदं दंडधारिणम् ॥ ८० ॥ महा
बाहुं विशालाक्षं साक्षसूत्रकमंडलुम् ॥ स्तूयमानं मुनिश्रेष्ठैः सेवितं दैत्यपुङ्गवैः ॥ ८१ ॥ सिंहासनगतं देवं नीलेन्दीवरलोचनम् ॥ विलसत्पुण्डरी
कस्य मालाभिरुपशोभितम् ॥ ८२ ॥ नानादैत्येन्द्रपुत्रांश्च पाठयन्तं मुहुर्मुहुः ॥ नानाशस्त्रास्त्रचतुरं नानाशास्त्रविशारदम् ॥ ८३ ॥ एवं ध्यात्वा
भृगुश्रेष्ठं जपन्नन्नात्परिस्नुतम् ॥ मनसा भक्तियुक्तेन स्थापयेत्पश्चिमे दले ॥ ८४ ॥ सितचंदनवस्त्रैश्च धूपमाल्यानुलेपनैः ॥ धूपैः श्वेतपताकाभिः सक्तु
भिः क्षीरसंयुतैः ॥ ८५ ॥ पूजयेत्परया भक्त्या पुंडरीकाक्षतैरपि ॥ ध्यायेत्सौरिं चतुर्बाहुं शूलहस्तं वरप्रदम् ॥ ८६ ॥ इन्द्रनीलनिभं श्यामं दिव्य
बाणधनुर्धरम् ॥ इन्दीवरासनस्थं च सरोजवरसप्रभम् ॥ ८७ ॥ नीलांबरधरं नीलपद्ममालोपशोभितम् ॥ घोररूपं महाकायं छायाहृदयनन्द
नम् ॥ ८८ ॥ शन्नो देवीति मंत्रेण वायव्यां दिशि विन्यसेत् ॥ कृष्णचंदनवस्त्रैश्च कृष्णमाल्यानुलेपनैः ॥ ८९ ॥ धूपैर्नीलपताकाभिर्बलि
भिर्माषमिश्रितैः ॥ धूम्रवर्णं सदा केतुं गदाहस्तं वरप्रदम् ॥ ९० ॥ द्विभुजं भीमकायं च धूम्राक्षं धूम्रवाससम् ॥ केतुं कृण्वन्निति मन्त्रेण ऐशा
न्यां स्थापयेद्दिशि ॥ ९१ ॥ धूम्रवर्णैश्च माल्यैश्च धूम्रगंधानुलेपनैः ॥ धूम्रधूम्रपताकाभिर्बलिभिर्माषमिश्रितैः ॥ ९२ ॥ पूजयेत्परया भक्त्या
केतुं सर्वार्थसिद्धिदम् ॥ लोकपालानहं वक्ष्ये सर्वसिद्धिप्रदायकान् ॥ ९३ ॥ येषु पूजितमात्रेषु नालभ्यं विद्यते क्वचित् ॥ देवराजं ततो
ध्यायेत्पुष्पवाणचयप्रभम् ॥ द्विभुजं पीतसंकाशं नीलेन्दीवरलोचनम् ॥ ९४ ॥ रक्तोत्पलधरं तद्वत्पीतवासःसमन्वितम् ॥ चामरासक्तहस्तैश्च
कन्यारत्नैश्च शोभितम् ॥ ९५ ॥ इन्द्राणीं चिंतयेद्वामे उत्पलद्वयधारिणीम् ॥ एवं संपूजयेद्भक्त्या सुरराजं जगत्प्रभुम् ॥ त्रातारमिति



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मन्त्रेण स्थापयेत्कर्णिकोत्तरे ॥ ९६ ॥ पूजयेत्परया भक्त्या धूपगंधानुलेपनैः ॥ नानाविधोपहारैश्च पताकाभिर्ध्वजैरपि ॥ ९७ ॥ बलिं क्षीरान्वितं दद्यान्मोदकं सितशर्कराम् ॥ उत्तप्तस्वर्णसंकाशं वीतिहोत्रं चतुर्भुजम् ॥ ९८ ॥ अर्धचन्द्रसमस्थं चः अजवाहनमुत्तमम् ॥ ज्वालावितानसंरक्तं मूर्ध्नि सप्तशिखान्वितम् ॥ ९९ ॥ वरदं विभयं मालां दक्षे सूत्रं कमण्डलुम् ॥ त्रिनेत्रं रक्तनयनं जटामुकुटमंडितम् ॥ १०० ॥ नानाभरणसंपन्नं सिद्धगन्धर्वसेवितम् ॥ अग्निजिह्वेति मंत्रेण स्नापयेदग्निदिग्दले ॥ १०१ ॥ पूजयेद्रक्तपुष्पैश्च रक्तमाल्यानुलेपनैः ॥ धूपै रक्तपताकाभिर्बलिभिः पायसैरपि ॥ १०२ ॥ नीलाञ्जनचयप्रख्यं नीलसिंहासनस्थितम् ॥ महामहिषमारूढं दंडपाशधरं विभुम् ॥ १०३ ॥ करालवदनं भीमं ज्वाला घूर्णितलोचनम् ॥ घोरदंष्ट्राकरालैश्च किंकराणां गणैर्वृतम् ॥ महिषं चिंतयेद्वामे चित्रगुप्तं च दक्षिणे ॥ १०४ ॥ अच्छीयस इति मंत्रेण स्थापयेद्य मदिग्दले ॥ पूजयेत्परया भक्त्या धर्मराजं जगद्गुरुम् ॥ राक्षसेन्द्रं महाकायं कृष्णवर्णं द्विबाहुकम् ॥ १०५ ॥ नानाभरणसंपन्नं खड्गहस्तं महाबलम् ॥ वरमुक्ताविमानस्थं घोररूपं जलेश्वरम् ॥ १०६ ॥ एष त इति मंत्रेण नैर्ऋत्यां स्थापयेद्दिशि ॥ कृष्णचन्दनवस्त्रैश्च कृष्णमाल्यानुलेपनैः ॥ १०७ ॥ धूपैः कृष्णपताकाभिर्बलिभिर्माषमिश्रितैः ॥ शुद्धस्फटिकसंकाशं शंखकुन्देन्दुसप्रभम् ॥ १०८ ॥ द्विभुजं पाशहस्तं च सुन्दराङ्गं वरप्रदम् ॥ वरुणस्येति मंत्रेण स्थापयेत्पश्चिमे दले ॥ १०९ ॥ सितचन्दनधूपैश्च पताकाभिर्ध्वजैरपि ॥ ११० ॥ समीरणं कुञ्जरवर्णसन्निभं मृगाधिरूढं द्विभुजं द्विनेत्रम् ॥ ध्वजांबरं चापि दधानमेकं नीलांबरं मेघगणैर्वृतं च ॥ १११ ॥ नीलचन्दनवस्त्रैश्च नीलमाल्यानुलेपनैः ॥ पूजयेत्परया भक्त्या पताकाभिर्ध्वजैरपि ॥ ११२ ॥ धूपैर्नीलपताकाभिर्बलिभिः पायसैरपि ॥ ११३ ॥ ध्यायेद्विनेत्रं द्विभुजं धनेशं पीतांबरं वै नरवाहनं च ॥ गदाधरं भक्तवरप्रदं च आवाहयेदुत्तरपद्मपत्रे ॥ ११४ ॥ गन्धचंदनवस्त्रैश्च पीतमाल्यानुलेपनैः ॥ ११५ ॥ धूपैः पीतपताकाभिर्बलिभिः पायसैरपि ॥ ११६ ॥ स्निग्धकर्पूरसंकाशं तुषारकिरणप्रभम् ॥ त्रिशूलतुम्बुरुधरं तथाभयवरप्रदम् ॥ ११७ ॥ उत्तुंगवृषभारूढं त्रिनेत्रं भस्मभूषितम् ॥ कपालमालिनं तद्वत्खण्डेंदुकृतशेखरम् ॥ ११८ ॥ एवं ध्यात्वा महेशानं स्थापयेदीशदिग्दले ॥ ११९ ॥ पूजयेत्परया भक्त्या भक्ष्यभोज्यैरनेकशः ॥ ॥ १२० ॥ सितध्वजपताकाभिर्बलिभिः पायसादिभिः ॥ त्वमीशान इति मंत्रेण ऋषिं छन्दः समीरयन् ॥ १२१ ॥ ब्रह्माणं रक्तगौरांगं शोणपद्मसमप्रभम् ॥ राजीवलोचनं तद्वत्पद्मगर्भसमप्रभम् ॥ १२२ ॥ पद्मासनस्थितं तद्वच्छ्वेतवस्त्रं चतुर्भुजम् ॥ चतुर्मुखं सुरश्रेष्ठं मेघगम्भीरनिस्वनम् ॥ १२३ ॥ राजहंससमायुक्तं विमानवरसंस्थितम् ॥ स्रुक्स्रुवौ दक्षिणे हस्ते वामे दंडं कमण्डलुम् ॥ १२४ ॥ कुर्वाणमिव लोकांस्त्रीन्सिद्धगन्धर्व

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सेवितम् ॥ आज्यस्थालीं तथैवाग्रे कुशांश्च समिधं तथा ॥ १२५ ॥ वामपार्श्वे तु सावित्रीं दक्षिणे तु सरस्वतीम् ॥ आब्रह्मन्निति मंत्रेण स्थापयेत्पूर्व दिग्दले ॥ १२६ ॥ नानाभक्ष्योपचारैश्च पूजयेद्गंधचन्दनैः ॥ धूपैः श्वेतपताकाभिर्बलिभिश्चाज्यपायसैः ॥ १२७ ॥ अनन्तं शुक्लवर्णाभं पीतवस्त्रं चतुर्भुजम् ॥ शंखचक्रगदापद्मधारिणं जगदीश्वरम् ॥ १२८ ॥ आधारभूतं जगतां स्वर्णयज्ञोपवीतिनम् ॥ नानाभरणसम्पन्नं फणाशतसमन्वितम्॥ ॥ १२९ ॥ ॐ नमोस्त्विति मंत्रेण स्थापयेद्वरुणांतरे ॥ पूजयेद्भक्ष्यभोज्यैश्च दीपगन्धानुलेपनैः ॥ १३० ॥ धूपैः श्वेतपताकाभिर्बलिभिश्चैव निर्मितैः ॥ ततो मण्डलपूर्वे तु ब्रह्माणं पीतवाससम् ॥१३१॥ चतुर्भुजं चतुर्वक्त्रं स्रुवहस्तं वरप्रदम् ॥ बिभ्रतं च श्रुतं तद्वत्तथादंडकमण्डलू ॥१३२॥ आब्रह्मन्निति मन्त्रेण पूजयेद्गन्धचन्दनैः ॥ दक्षिणे त्र्यंबकं ध्यायेच्छूलखट्वांगधारिणम् ॥ १३३ ॥ वरदं डमरुधरं नागयज्ञोपवीतिनम् ॥ निबद्ध जूटचन्द्रार्धं शुद्धस्फटिकसन्निभम् ॥ १३४ ॥ कपालमालिनं देवं भुजंगाभरणान्वितम् ॥ त्रिनेत्रं कुन्दसंकाशं भूतप्रेतगणैर्वृतम् ॥ १३५ ॥ त्र्यंबकं चेति मन्त्रेण पूजयेन्मधुपायसैः ॥ अतसीपुष्पसंकाशं हारकेयूरभूषितम् ॥ १३६ ॥ नानाभरणसम्पन्नं पीतवस्त्रं चतुर्भुजम् ॥ दक्षिणे च गदां चक्रं वामे शंखं सपद्मकम् ॥ १३७ ॥ श्रिया दक्षिणतो वामे सरस्वत्या समन्वितम् ॥ तद्विष्णोरिति मंत्रेण स्थापयेत्पश्चिमे ततः ॥ १३८ ॥ पूजयेद्ग न्धपुष्पाद्यैः पायसेन घृतेन च ॥ गणेशं तु चतुर्बाहुं व्यालयज्ञोपवीतिनम् ॥ १३९ ॥ गजेन्द्रवदनं देवं श्वेतवस्त्रं चतुर्भुजम् ॥ परशुं लगुडं वामे दक्षिणे दंडमुत्पलम् ॥ १४० ॥ मूषकस्थं महाकायं शङ्खकुन्देंदुसप्रभम् ॥ युक्तं बुद्धिकुबुद्धिभ्यामेकदंतं भयापहम् ॥ १४१ ॥ नानाभरणसंपन्नं सर्वापत्तिविनाशनम् ॥ गणानां त्विति मन्त्रेण विन्यसेदुत्तरे ध्रुवम् ॥ १४२ ॥ उत्तप्तजांबूनदहेमसन्निभां लक्ष्मीं सरोजासनसंस्थितां शुभाम् ॥ वामे सरोजं दधतीं तथैव हस्ते च दक्षे धृतचामरां च ॥ १४३ ॥ श्रीश्च तेति च मन्त्रेण ऐशान्यां मंडलाद्बहिः ॥ स्थापयेत्पूजयेद्भक्त्या सितचन्दन पङ्कजैः ॥ १४४ ॥ मोदकं परमान्नं च यवक्षीरं निवेदयेत् ॥ १४५ ॥ ततो देवीमंबिकां दिव्यरूपां ब्रह्मेंद्राद्यैः स्तूयमानां त्रिनेत्राम् ॥ सिंहे शस्थां तप्तजांबूनदाभां चन्द्रार्द्धेनाबद्धमौलिं जटाभिः ॥ १४६ ॥ दिव्यैर्वस्त्रैर्बाहुभिः साग्रलम्बैर्दिव्यैर्माल्यैर्भूषणैः स्वैरुपेताम् ॥ ब्रह्मेंद्राद्यैर्दुर्जयां माहिषास्यं तीक्ष्णैरस्त्रैर्दानवं मर्दयंतीम् ॥ १४७ ॥ शूलं तीक्ष्णं बाणशक्ती च तीक्ष्णे खड्गं तीक्ष्णं बिभ्रतीं दक्षिणेन ॥ चापं पाशं खेटकं चांकुशं च घण्टां वामे बिभ्रतीं वै कुठारम् ॥ १४८ ॥ शिरश्छेदादर्धजातं कबन्धं खड्गं तीक्ष्णं बिभ्रतीं दैत्यराजम् ॥ नागैः पाशैर्वेष्टयित्वा समं ताच्छूलेनैनं निघ्नतीं देहमध्ये ॥ १४९ ॥ सेन्द्रैर्देवैः स्तूयमानां सुवेणीं गंधर्वाद्यैः सिद्धसंघैश्च सेव्याम् ॥ नानावस्त्रैर्भूषणैर्दीप्यमानां ध्यायेद्देवीं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विकासुज्ज्वलंतीम् ॥ १५० ॥ वस्त्रैर्माल्यैर्यक्षधूपैर्वितानैर्भक्ष्यैर्भोज्यैर्मोदकैः पायसैश्च ॥ मांसैः पिष्टैश्छागलाढ्यैरशेषैः पूज्या देवी चंडिकाऽभीष्टदा च ॥ १५१ ॥ श्यामां च पृथिवीं ध्यायेत्पंकजद्वयधारिणीम् ॥ १५२ ॥ मण्डूकस्थां द्विभुजां स्योना पृथिवीति चार्चयेत् ॥ नैर्ऋत्यां विश्वकर्माणं द्विभुजं टंकधारिणम् ॥ १५३ ॥ उत्पलं दक्षिणे हस्ते पद्मस्थं पीतवाससम् ॥ एवं ध्यात्वा ततो ब्रह्मन्निति मंत्रेण पूजयेत् ॥ १५४ ॥ स्वस्थां सरस्वतीं ध्यायेद्वरदाभयदायिनीम् ॥ पीतवस्त्रां सुमुकुटां देवगन्धर्वसेविताम् ॥ १५५ ॥ यामधा इति मन्त्रेण पूजयेत्सितचंदनैः ॥ बलिं श्वेत चरुं दद्यात्कृशरं यावकं तथा ॥ १५६ ॥ स्थापयेद्वामदिग्भागे कुंदपुष्पैः प्रपूजयेत् ॥ पूर्वादिद्वारदेशे तु पूजयेच्च मरुद्गणैः ॥ १५७ ॥ अग्न्यादिषु च कोणेषु बहिर्भूतान्समाचरेत् ॥ पिशाचा राक्षसा भूता वेतालकपिजातयः ॥ १५८ ॥ निर्णासाश्चैव ते सर्वे रौद्रा विकृतरूपिणः ॥ ततो मण्डल मध्ये तु वारुणं पूर्ववर्त्मना ॥ १५९ ॥ पूरयेत्कलशे तत्र सुवर्णादिविनिर्मितम् ॥ कूर्मं कूर्माकृतिं कुर्याच्छुद्धस्वर्णेन सत्तमाः ॥ १६० ॥ बृहत्पर्व प्रमाणेन राजतस्य च दुर्लभम् ॥ पादं पादेन मानेन अंगुलं परिमण्डलम् ॥ १६१ ॥ प्रौष्ठीमत्स्यं तथा कुर्यात्कुलीरं ताम्रनिर्मितम् ॥ तेनैकस्य विनिर्माणं व्यंगुलायामविस्तृतम् ॥ १६२ ॥ तथा मानेन मण्डूकं तां भूमिं मुनिसत्तमाः ॥ शिशुमारं च वै सम्यक्तोलकद्वयनिर्मितम् ॥ १६३ ॥ अंगुलत्रयदीर्घं च यथा तस्याकृतिर्भवेत् ॥ सितचन्दनवस्त्रैश्च पूजनीयाः समंततः ॥ १६४ ॥ यावकैश्च विशेषेण बहुमंत्रविशारदान् ॥ बह्वृचौ पूर्वमत्स्यार्थे दक्षिणे तु यजुर्विदौ ॥ १६५ ॥ सामगौ पश्चिमे चाथ उत्तरेऽथर्वणौ स्मृतौ ॥ जयध्वमिति तान्ब्रूयाद्धोतृकान्पुनरेव हि ॥ १६६ ॥ स्थापयित्वा पृथक्सूत्रे सर्पं च मातरुद्दीपमेव च ॥ पञ्चांगं शिवसूक्तं च यथा विष्णोर्हरस्य च ॥ १६७ ॥ जयाग्रतः पुरुषसूक्तमद्भ्यः संभूतमेव च ॥ आशुः शिशानमारभ्य वयं मोपांगरुद्रके ॥ १६८ ॥ यज्जाग्रतश्चाग्नेश्च विष्णोरराटमेव च ॥ समस्ताध्यायरुद्रेण शतरुद्राख्यमीरितम् ॥ ॥ १६९ ॥ ( पञ्चांगरुद्रस्य पुष्पदंत ऋषिर्गायत्री छन्दो वेदाहमेतद्बीजं श्रीश्च ते इति शक्तिर्नमस्ते रुद्र इति नायकः परमरुद्रो देवता परम स्तुतौ विनियोगः ॥ सप्तांगरुद्रस्य पुष्पदंतऋषिः पंक्तिश्छंदः ॥ त्र्यंबकमिति अंगुष्ठाभ्यां नमः ॥ त्रिपादूर्ध्वमिति तर्जनीभ्यां स्वाहा ॥ वेदाहमिति मध्यमाभ्यां वषट् ॥ अमीषां चित्रमिति अनामिकाभ्यां हुम् ॥ यवागूं सोम इति कनिष्ठिकाभ्यां वौषट् ॥ परितो धेनुमिति करतलकरपृष्ठाभ्याम् अस्त्राय फट् इति ॥ यज्जाग्रत इति हृदयाय नमः ॥ सहस्रशीर्षेति शिरसे स्वाहा ॥ अद्भ्यः संभूत इति

१ यक्षकर्दमधूपैरित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिखायै वषट् ॥ आशुः शिशान इति कवचाभ्यां हुं ॥ नमस्ते रुद्र इति नेत्रत्रयाय वौषट् ॥ रूढं ब्रह्मन्निति अस्त्राय फट् ॥ चतुर्दिक्षु छोटिकादानम् ॥ इति सर्वांगेषु ॥ ) होमे प्रवर्तमाने तु सूक्तानन्यांश्च वै जपेत् ॥ प्रजपेद्वारुणं सूक्तं तथा च पालसूक्तकम् ॥ १७० ॥ रात्रिसूक्तं च रौद्रं च पावमानं समुज्ज्वलम् ॥ जपेच्च पौरुषं सूक्तं सर्वतोवरतं पृथक् ॥ १७१ ॥ शाक्तं रौद्रं च सौम्यं च कूष्माण्डं जातवेदसम् ॥ सौरसूक्तं च यजतो दक्षिणेन यजुर्विदः ॥ १७२ ॥ वैराजं पौरुषं सूक्तं सौवर्णं रुद्रसंहिताम् ॥ शैशवं पञ्चनिरयं गायत्र्यं ज्येष्ठसाम च ॥ १७३ ॥ वामदेव्यं बृहत्साम तथा चैव रथंतरम् ॥ गोव्रतं च विकर्णं च रक्षोघ्नं पावनं स्मृतम् ॥ १७४ ॥ गायंतं ब्राह्मणा ये च पूर्वादिद्वारदेशतः ॥ अन्नात्परिस्रुत इति पञ्चपूर्वं सौरसूक्तकम् ॥ १७५ ॥ रुद्राध्यायं च पञ्चांगं रौद्र इत्यभिधीयते ॥ आप्यायस्वेति च चतुः सौम्यं सूक्तं प्रचक्षते ॥ १७६ ॥ ईशावेत्यादि स्वांगं च कौष्मांडं दशमं स्मृतम् ॥ अग्ने बृहन्निति नवसूक्तं वै जातवेदसम् ॥ १७७ ॥ षोडशं तु विभ्राड् बृहत्सौरं सूक्तं प्रकीर्तितम् ॥ सौरसूक्तं ध्रुवोसीति इषवो मंगलं स्मृतम् ॥ १७८ ॥ रात्रिसूक्तं हि यज्वाग्ने रक्षोघ्नं शैवसूक्तकम् ॥ गणानान्त्वेति पञ्च आपोहिष्ठेति च त्रयम् ॥ १७९ ॥ पवमानं तु तद्विद्धि पावमानं तु षोडश ॥ समस्तं देवयागेषु तद्रात्रौ तु तदूर्ध्वकम् ॥ तद्वार्द्धं च आरामे कूपे त्वेकऋचं जपेत् ॥ १८० ॥ स्वगृह्योक्तविधानेन प्रतिकुण्डेषु होमयेत् ॥ संस्कुर्यादीक्षणाद्यैश्च संपूज्य च परस्परम् ॥१८१॥ प्रज्वाल्याग्निं च विधिवद्धोमं कुर्यादनन्तरम् ॥ वागीश्वरं समभ्यर्च्य वागीश्वर्या समन्वितम् ॥ १८२ ॥ यस्य देवस्य यो यागः प्रतिष्ठा यस्य कस्यचित् ॥ प्रागेव तस्य जुहुयात्सहस्रं च शतं तथा ॥ १८३ ॥ तिलाज्यैः पायसैर्वाथ पत्रपुष्पाक्षतेन च ॥ ग्रहेभ्यो विधिवत्सर्वं तथेन्द्रायेश्वराय च ॥ १८४ ॥ मरुद्भ्यो लोकपालेभ्यो विधिवद्विश्वकर्मणे ॥ ऊर्जेन समिधा कुर्यादष्टाष्टौ स्वगृहेष्वपि ॥१८५॥ इन्द्रेश्वरमारुतानां तिलाज्येन घृतेन वा ॥ एकैकामाहुतिं दद्यात्स्वैःस्वैर्मंत्रैर्यथाक्रमात् ॥ १८६ ॥ दिगीशानां च प्रत्येकमष्टाष्टौ च विशेषतः ॥ विश्वकर्मन्निति मन्त्रेण कृत्वा आज्याहुतित्रयम् ॥ १८७ ॥ समित्त्रयं पलाशस्य अथवाश्वत्थसंभवम् ॥ एकैकामाहुतिं दद्यादाज्येन च विशेषतः ॥ १८८ ॥ शिवं प्रजापतिं विष्णुं दुर्गां च कमलामपि ॥ सरस्वतीं च विधिवत्पृथिव्या इति पावकैः ॥ १८९ ॥ भूतेभ्योऽप्याहुतिं दद्यादेवं मासद्वयं क्रमात् ॥ अन्येषां मधुराक्तेन तिललाजैर्यथाक्रमम् ॥ १९० ॥ विष्णुं चैवं तु वायव्ये दुर्गायाश्च तथोत्तरे ॥ कमलायाश्च ईशाने ईशानस्य सभूतकम् ॥ १९१ ॥ एक

१ इयं मुद्रा ताराकल्पे मेरुतन्त्रे चान्यत्रापि बहुषु तन्त्रेषूक्ता तत एवावधारणा कर्त्तव्या ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुण्डे तु एकस्मिन्होमं कुर्याद्यथाविधि ॥ पक्षे वै पञ्चकुण्डे तु पूर्वादीनां क्रमेण तु ॥ १९२ ॥ एककुंडे ग्रहान्कृत्वा कृत्वा बलभिदा सह ॥ दक्षिणे क्रमतश्चैवं लोकेशं च तथैव च ॥ १९३ ॥ पश्चिमे यस्य यागस्य दुर्गायाश्चोत्तरे दिशि ॥ ईशाने भूतयक्ष्मा च जुहुयादेशिकोत्तमः ॥ ॥ १९४ ॥ विष्ण्वादिदेवतानां च अग्रकुंडे विधीयते ॥ प्रथमे दिवसे कुर्याद्देवतानां च स्थापनम् ॥ द्वितीये पूजनं कुर्याद्धोमं कुर्याद्यथाविधि ॥ ॥ १९५ ॥ बलिदानं तृतीये तु चतुर्थीकं चतुर्थके ॥ नीराजनं पञ्चमे तु पञ्चाहसाध्यको विधिः ॥ त्र्यहसाध्ये तृतीये तु नवाहे त्वथ पंचमे ॥ ॥ १९६ ॥ उदङ्मुखः प्राङ्मुखो वाप्यैशान्यादिक्रमेण तु ॥ प्रादक्षिण्येन यज्ञं तु मन्त्रैः परिसमूहनम् ॥ मन्त्रपूर्वं साग्निकानां निरग्नेस्तुष्टिकेन तु ॥ १९७ ॥ त्रिकुशेन महायागे विवाहादौ द्विपत्रकम् ॥ वैश्वदेवे त्वेकपत्रमिति साधारणो विधिः ॥ १९८ ॥ दिग्विदिक्षु परिस्तीर्य महायागेषु सर्वदा ॥ दिक्षु मात्रं नित्यके च विश्वदेवे तथैव च ॥ १९९ ॥ अकृत्वा कर्म नित्यं च वृथा नैमित्तिकं भवेत् ॥ तस्मात्फलार्थैरपि तत्कृत्वा नैमित्तिकं चरेत् ॥ २०० ॥ प्रायश्चित्ते वैश्वदेवे सायंप्रातः प्रतीषु च ॥ २०१ ॥ मारणोच्चाटहोमेषु तथा संकल्पिताकृती ॥ प्रत्यवायकुले क्वापि तत्र नित्याकृतिं विना ॥ २०२ ॥ शतार्द्धं जुहुयाद्यत्र तत्र नित्यं विवर्जयेत् ॥ तूर्यहोमं ततः कृत्वा तूष्णीमेव जितेन्द्रियः ॥ २०३ ॥ प्रजपेदिन्द्रमग्निं च सोमाय च यथाक्रमम् ॥ ततस्तु समिधाहोमं व्याहृतिस्तदनन्तरम् ॥ २०४ ॥ भूर्भुवः स्वाहेति तथा त्वन्न इत्यादिपंचकम् ॥ अन्ते स्विष्टकृतं दद्याद्विधानं तस्य भोः शृणु ॥ २०५ ॥ घृताहुतिं स्विष्टकृच्च द्विजसंस्कारकर्मसु ॥ घृतैः स्विष्टकृतं दद्याद्यागादौ परिवर्जयेत् ॥ २०६ ॥ सर्वौषध्युदकस्नानं करिदंतोत्थमुष्णया ॥ रथ्यावल्मीकगोष्ठस्य तथाश्वस्य खुरस्य च ॥ २०७ ॥ त्रिगन्धं च त्रिशीतं च कुशमूलस्य मृत्तिकाः ॥ निक्षिपेत्स्नानकुम्भेषु आचार्यादींस्तु स्थापयेत् ॥ २०८ ॥ यजमानः पुरः कृत्वा दंतकाष्ठपुरःसरम् ॥ रात्रौ च भक्ष्यभोज्याद्यैः परितोष्य यवाक्षतम् ॥ २०९ ॥ कृत्वा यथोक्तकालेन पूजयेत्तैलधारया ॥ ततः प्रभाते विमले स्नानं कुर्याद्यथाविधि ॥ २१० ॥ स्नानमब्दैवतैर्मन्त्रैः सूक्तेन पुरुषेण तु ॥ वारुणेन च सूक्तेन सुरास्त्वादि यथाक्रमम् ॥ २११ ॥ सुरास्त्वामभिषिंचंतु ब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो जगन्नाथस्तथा संकर्षणः प्रभुः ॥ २१२ ॥ आखंडलोग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ २१३ ॥ ब्रह्मणा सहितः शेषो दिक्पालाः पांतु ते सदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ २१४ ॥ बुद्धिर्लज्जा वपुः शांतिस्तुष्टिः कांतिश्च मातरः ॥ एतास्त्वामभिषिंचंतु देवपत्न्यः समाहिताः ॥ २१५ ॥ आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च तर्पिताः ॥ २१६ ॥ देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मनवो देवा देवमातर एव च ॥ २१७ ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥ २१८ ॥ औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ २१९ ॥ एते त्वामभिषिंचंतु सर्वकामार्थसिद्धये ॥ स्नानं समाप्य विधिवत्स्वगणेनानुलेपयेत् ॥ २२० ॥ गवामष्टोत्तरशतं तदर्धं चाथ विंशतिम् ॥ आचार्यायाभिरूपाय प्रदद्यादभिपूजयन् ॥ २२१ ॥ ततः प्रभाते विमले जले समवतारयेत् ॥ शुद्धां च कपिलां दोग्ध्रीं घंटाचामरवर्जिताम् ॥ २२२ ॥ सामगाय ततो दद्यात्सुवर्णदक्षिणान्विताम् ॥ यूपमादाय संस्थाप्य स्नापयेद्वारुणं जपन् ॥ २२३ ॥ अच्छेवतेन मन्त्रेण गायत्र्या तदनन्तरम् ॥ रोचनाभिस्त्रिरत्नेन तथा कुंभोदकेन च ॥ २२४ ॥ पर्वताग्रमृदा तोयनागवल्मीकजातया ॥ गजदंतमृदा चैव कूलमूलतमृदा तथात ॥२२५॥ पुष्पोदकेन शंखेन तथा रत्नोदकेन च ॥ दध्यक्षतेन दुग्धेन घटेन शतधारया ॥ २२६ ॥ सुगंधेन त्रिशीतेन विलिप्य च समाहितः ॥ दापयेत्कांस्यमूलं च दद्याल्लोहमयं च वा ॥ २२७ ॥ माल्यवस्त्रैरलंकृत्य पूजयेद्गन्धचन्दनैः ॥ ईशावा इति मंत्रेण दद्यात्पुष्पाञ्जलित्रयम् ॥ २२८ ॥ पुनस्त्वादिति मंत्रेण पुनः पुष्पं समुत्सृजेत् ॥ प्रादेशमात्रविस्तारं मध्ये वृत्तं षडंगुलम् ॥ २२९ ॥ कांस्यचक्रस्य मानं तु ऊर्ध्वं यद्वादशांगुलम् ॥ तदूर्ध्वे विलिखेच्छूलं चतुरंगुलमानतः ॥ २३० ॥ अंगुष्ठहीने लोहस्य तत्र शूलं न कारयेत् ॥ ततो मंगलपूर्वे तु द्विजातीनां मतेन च ॥ २३१ ॥ समुत्सृजेच्च प्रासादं तडागं च विशेषतः ॥ चतुर्दर्भं गृहीत्वा तु ईशानाभिमुखेन तु ॥ समुत्सृजेत्ततः पश्चाद्वाक्यमेतदुदीरयेत् ॥ २३२ ॥ ओमित्यादिश्रीकृष्णद्वैपायनाभिधानवेदव्यासप्रणीतभविष्यपुराणोक्तफलप्राप्तिकामश्चतुष्कोणाद्यवच्छिन्नमत्कारितपुष्करिणीजलमेतदूर्जितं गंधपुष्पाद्यर्चितं वरुणदैवतं सर्वसत्त्वेभ्यः स्नानावगाहनार्थमहमुत्सृजे ॥ २३३ ॥ ततो वरुणसूक्तेन वरुणं नागसंयुतम् ॥ मकरं कच्छपं चैव तोयेषु परिनिक्षिपेत् ॥२३४॥ पूजयेद्वरुणं देवमर्घ्यं दद्याद्विशेषतः ॥ तेनोदकेन संस्नाप्य गजदंतोत्थमृत्स्नया ॥ २३५ ॥ श्वेताश्वसुरसंभूतं श्रीश्च तेति च संजपन् ॥ आप्यायस्वेति मंत्रेण मृदं चतुष्पथोद्भवाम् ॥ ॥ २३६ ॥ तद्विष्णोरिति मंत्रेण कुशमूलेन स्थापयेत् ॥ तीर्थतोयेन गंधेन तथा पञ्चामृतेन च ॥ २३७ ॥ गायत्र्या स्नापद्देवं रत्नतोयेन साधकः ॥ आप्यायस्वेति मंत्रेण क्षीरेण तदनंतरम् ॥ २३८ ॥ दधिक्राव्णेति दध्ना च मधुवातेति वै मधु ॥ सरस्वत्यांतेति जातीपुष्पतोयेन स्नापयेत् ॥ २३९ ॥ ( वरुणोत्तमिति मंत्रस्य नारायण ऋषिः गायत्री छंदो वरुणो देवता वरुणप्रीतये विनियोगः ॥ श्रीश्च ते इति मंत्रस्य कर्दम



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋषिः पंक्तिश्छंदः सरिद्देवता अश्वखुरमृदा स्नाने विनियोगः ॥ आप्यायस्वेति मंत्रस्य पर्वत ऋषिः उष्णिक्छन्दः सरस्वती देवता वरुणप्रीतये चतुष्पथमृदा स्नाने विनियोगः ॥ तद्विष्णोरिति मंत्रस्य मैनाक ऋषिस्त्रिष्टुप्छन्दः सरस्वती देवता वरुणप्रीतये कुशमृदा स्नाने विनियोगः ॥ कया न इति मंत्रस्य वसिष्ठ ऋषिरनुष्टुप्छन्दः सोमो देवता वरुणप्रीतये नागगंधस्नाने विनियोगः ॥ तेजोसीति मंत्रस्य गर्ग ऋषिस्त्रिष्टुप्छन्दः वासवो देवता वरुणप्रीतये विनियोगः ॥ सरस्वत्यै भैषज्येनेति मंत्रस्य वामदेव ऋषिः पंक्तिश्छंदो विष्णुर्देवता वरुणप्रीतये विनियोगः ॥ पुष्पोदकस्नाने ॥ अग्न आयाहीति मंत्रस्य जनार्दन ऋषिः जगतीछन्द ऐन्द्री देवता वरुणप्रीतये विनियोगः ॥ ) प्रक्षिपेत्पञ्च व्रीहींश्च इयञ्चेति च संपठन् ॥ पश्चान्नीराजनं कुर्यात्पञ्चघोषपुरःसरम् ॥ २४० ॥ शिरीषपुष्पसंभूतं दर्पणं कांस्यसंभवम् ॥ गोपीचन्दनसंभूतं गंगामृत्तिकयाथ वा ॥ कृष्णां गां गोमयं वापि स्वस्तिकं शंखमेव च ॥ २४१ ॥ कारयेत्पदकं वापि यवगोधूमकस्य वा ॥ उत्पन्नस्वर्गसंभूतं कलशं मापसंभवम् ॥ क्षीरसंपुष्पसंभूतं दर्पणं कांस्यसंभवम् ॥ २४२ ॥ नन्द्यावर्ते मलयजे ततो निर्मलयेत्सुधीः ॥ एकैकं प्रतिमंत्रेण प्रत्येकं तु जलोपरि ॥ २४३ ॥ ध्रुवप्रतिकृतैर्मंत्रैरष्टभिश्च यथाक्रमम् ॥ पूर्वाक्षतं माषभक्तबलिं दद्याद्विधानतः ॥ २४४ ॥ ततो नारायणसूक्तेन देवं नारायणं व्रजेत् ॥ अन्येषां चैव देवानां प्रदद्यात्रिंशतं वलिम् ॥ २४५ ॥ तत आचमनीयं च वस्त्रयुग्मं निवेदयेत् ॥ वक्ष्यमाणेन मंत्रेण क्रमेणापि विधानतः ॥ २४६ ॥ पृथक्पृथक्ततो दद्यात्तावंत्येनापि भो द्विजाः ॥ वेदसूक्तसमायुक्ते यज्ञसूत्रसमन्विते ॥ सर्ववर्णप्रदे देव वाससी ते विनिर्मिते ॥२४७॥ शरीरं ते न जानामि चेष्टां नैव च नैव च ॥ मया निवेदितान्गन्धान्प्रगृह्य च विलिप्यताम् ॥२४८॥ अष्टोत्तरशतान्दीपान्परितः स्थापयेत्क्रमात् ॥ तदर्धं वा पञ्चविंशं मंत्रेण प्रयजेत्सुधीः ॥ २४९ ॥ त्वं सूर्यचन्द्रज्योतींपि विपादस्त्वं तथैव च॥त्वमेव सर्वज्योतींपि दीपोऽयं प्रतिगृह्यताम् ॥ २५० ॥ प्रदक्षिणं ततः कुर्यात्पञ्चधा सप्तधाथ वा ॥ वक्ष्यमाणेन मंत्रेण दद्याद्धूपं दशांगकम् ॥ २५१ ॥ वनस्पतिरसो दिव्यो गंधाढ्यः सुरभिः शुचिः ॥ मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम् ॥ २५२ ॥ अलंकारैश्च गंधैश्च पीतवस्त्रैस्तथैव च ॥ दूर्वाक्षतेन माल्येन युक्तं पुष्पेण पूजयेत् ॥ दद्यात्पञ्चाञ्जलिं पश्चाद्विष्णुसूक्तं पुनर्जपेत् ॥ २५३ ॥ ततः सुशोभने स्थाने वेदीं निर्माय देशिकः ॥ वरुणं विन्यसेत्तत्र तथा पुष्करिणीमपि ॥ २५४ ॥ विवाहोक्तेन विधिना कुर्यान्निर्मंछनादिकम् ॥ गंधपुष्पं ततो दद्याद्गां च दद्यात्सदक्षिणाम् ॥२५५॥ चामरं व्यजनं छत्रं कांस्यं लोहं तथैव च ॥ कुर्यात्पुष्करिणीं रम्यां राजतीं च त्रिपादिकाम् ॥ २५६ ॥ चतुष्कोणां च सुपमां द्व्यंगुष्ठपरिमंडलाम् ॥ सुवर्णप्रतिमां कुर्याद्वालेनैकेन भो द्विजाः ॥ २५७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ वा स्वर्णपत्रे च कुंकुमेन तले लिखेत् ॥ बाणशक्तिप्रमाणेन स्वर्णपत्रं तु द्व्यंगुलम् ॥२५८॥ कारयेच्चतुरस्रं च पीठोपरि न्यसेद्बुधः ॥ नीराजनांते विप्रेंद्राः संस्मरेदमृतं तरेत् ॥ २५९ ॥ अशक्तेन तथैवैककाष्ठे वा पिप्पलच्छदे ॥ ताम्रपट्टे लिखेद्वापि अलक्तेन यथाविधि ॥२६०॥ प्राणप्रतिष्ठां कुर्यात्तु वरुणाय निवेदयेत् ॥ महं तु वत्सरं कुर्याद्वेदघोषपुरःसरम् ॥ २६१ ॥ अशोकः खदिरः शालो ह्यश्वत्थो बिल्वकस्तथा ॥ धात्री कुरुवकश्चैव बकुलो नागकेशरः ॥ २६२ ॥ एषामेव काष्ठयूपं यजमानप्रमाणकम् ॥ समादाय च संस्थाप्य वस्त्राद्यैः प्रतिगृह्य च ॥ २६३ ॥ यूपं रक्षेति मंत्रेण खनित्वा च प्रदापयेत् ॥ स्थिरो भवेति मन्त्रेण हस्तं दत्त्वा पठेत्ततः ॥ २६४ ॥ तडागस्य तथैशान्यां तथा प्रासादकस्य च ॥ प्रापयेद्दक्षिणे भागे आवासस्य च मध्यके ॥ २६५ ॥ नौकां गत्वा ततः पश्चाद्यूपमादाय वाग्यतः ॥ मध्यदेशे तडागस्य समुलंघ्य तथोत्तरम् ॥ २६६ ॥ गंतव्यं प्रकल्प्य तत्रैव आप्यायस्वेति वै ऋचा ॥ शिलायां होमयेत्तत्र हुनेन्नौकाहुतित्रयम् ॥ २६७ ॥ अंगदाय स्वाहेति भौमाय नम इत्यतः ॥ लाजाशक्तौ दधिमधौ वासने प्रतिहोमयेत् ॥ २६८ ॥ कूर्माय नम इत्युक्त्वा पृथिव्यै नम इत्युत ॥ स्वाहेत्यनंतमंत्रेण दद्यादर्घ्यमनंतरम्॥२६९॥ पञ्चरत्नेन गन्धेन शंखेनार्घ्यं प्रदापयेत् ॥ चतुरस्रं समाकीर्णं चतुर्दिक्ष्वधृतैर्जनैः ॥ २७० ॥ कल्पयेद्रोपयेत्तत्र हस्तं दत्त्वा पठेदिदम् ॥ स्थिरो भवेति मंत्रेण गंधपुष्पैः प्रपूजयेत् ॥ २७१ ॥ चक्रं सदर्पणं दद्यान्नागदंडशिरो गतः ॥ विद्युदत्र च कर्तारं ग्रहदुःखहरिप्रियम् ॥ २७२ ॥ एवं चक्रं पूजयित्वा शूलं नागांश्च पूजयेत् ॥ उच्चैर्ध्वजं ततः कृत्वा न नागेति च संपठेत् ॥ २७३ ॥ गायत्रस्वेति मंत्रेण पठेद्द्वारद्वयं ततः ॥ दिक्पालेभ्यो बलिं दद्यान्माषभक्तं गुडौदनम् ॥ २७४ ॥ रक्तपुष्पान्वितं कृत्वा प्रणिपत्य प्रसादयेत् ॥ सहस्रं वा धनं दद्याद्ब्राह्मणाय कुटुंबिने॥२७५॥ ततो भोज्यं ससर्पिश्च सहिरण्यं यथाविधि ॥ इक्षुस्वस्तीतिकां दद्याज्जले मातृश्च पूजयेत् ॥२७६॥ मंथरां वसुतां कांतां राक्षसीं च पिशाचिकाम्॥ नागिनीर्नागपुत्रांश्च मध्ये संपूजयेत्ततः ॥ २७७ ॥ पूर्णांते च पृथग्दद्याल्लाजाद्यैर्गुडमिश्रितैः ॥ इन्द्रो बलवती स्वाहा यशो बलवतामपि ॥२७८॥ बृहत्पक्षाविशेषोऽयं मध्यमे च कनीयके ॥ बृहस्पते च इन्द्राय तव देवलतामिति ॥ २७९ ॥ स्वाहेति जुहुयात्पश्चात्प्रणीतां चालयेत्ततः॥ कनिष्ठपक्षे प्रासादे तथा चैव जलाशये ॥ २८० ॥ मन्दरे तोरणस्यैव विष्वक्सेनं प्रकल्पयेत् ॥ आरामे च तथा सेतौ विशेषः पञ्चमो द्विजाः ॥२८१॥ पूजांतरेण यः कस्य जपेन्मन्त्रसहस्रकम् ॥ स्तुतिं समाप्य विधिवदिमं मंत्रमुदाहरेत् ॥ २८२ ॥ सर्वसत्त्वेभ्य उच्छिष्टमपि तज्जलमुद्धृतम् ॥ इति पठित्वा पुष्करिणीजलं हस्ते गृहीत्वा जले क्षिपेत् ॥ २८३ ॥ ततो जलमातृभ्यो नम इति जलमातॄः प्रपूजयेत् ॥ त्रैलोक्ये यानि स्थानानि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थावराणिं चराणि च ॥ २८४ ॥ तेषामाप्यायनायैतज्जलमुत्सृज्यते मया ॥ मात्रे तु कृतमेतत्ते जगदानंदकारकम् ॥ २८५ ॥ शिवाय सर्वभूतानां सदा पाहि जलाशयम् ॥ पिबंतो ह्यवगाहंतः सुखिनः सर्वजंतवः ॥ २८६ ॥ जलं विश्वोपकाराय कृतमेतन्मया सदा ॥ कीर्तिस्तिष्ठतु मे देवा श्चिराय धरणीतले ॥ २८७ ॥ त्वत्प्रसादान्महाभाग नागराज नमोऽस्तु ते ॥ येऽत्र केचिद्विपद्यंते स्वकर्मफलभोगनाः ॥ २८८ ॥ तेषां दोषैर्न लिप्येऽहं स्वंस्वं गममवाप्नुयात् ॥ नारायणो जगत्प्राणः सर्वकामप्रदायकः ॥ २८९ ॥ आपेया मातरः संतु जगतां वृक्षयोनयः ॥ अपांपते रसा यात्र यादसामीश्वर प्रभो ॥ २९० ॥ वरुणास्यासने कीर्तिं सनातन नमोस्तु ते ॥ तत्तोयं निधिवद्दद्याद्दक्षिणार्थं द्विजन्मने ॥ २९१ ॥ सुवर्णं रजतं दद्यादनड्वाहं पयस्विनीम् ॥ दद्याद्धेनुद्वयं पश्चात्कुर्याद्ब्राह्मणतर्पणम् ॥२९२॥ वह्निपूजां पुरस्कृत्य मन्त्रेण प्राशयेत्ततः ॥ पितॄणां दापयेदर्घ्यं ततो देवं प्रसादयेत् ॥ २९३ ॥ बिंबमुद्रां पद्ममुद्रां नागमुद्रां प्रदर्शयेत् ॥ वैश्वानरा इति ऋचा पूजां कृत्वा विवर्जयेत् ॥२९४॥ यस्ते प्राणाञ्जपन्पश्चात्प्र कुर्यादथ चन्दनम् ॥ प्रदक्षिणं ततः पश्चात्तडागस्य शृणु द्विजाः ॥२९५॥ ब्राह्मणान्पुरतः कृत्वा वेदघोषं समुच्चरन् ॥ महामङ्गलपूर्वेण प्रविशेद्भवनं सुधीः ॥ २९६ ॥ ततो गृहार्चनं कुर्याद्ब्राह्मणानां च भोजनम् ॥ दीनानां कृपणानां च सवित्रेऽर्घ्यं निवेदयेत् ॥२९७॥ इति श्रीभविष्यं महापुराणे मध्यमपर्वणि द्वितीयभागे विंशोऽध्यायः ॥ २० ॥ ॥ सूत उवाच ॥ ॥ सप्ताग्निष्टोमको नाम ह्युत्तमः कथितो विधिः ॥ मध्यमे मध्यमफलं कनिष्ठे तु कनिष्ठकम् ॥ १ ॥ अधुना मध्यमं वक्ष्ये विधिं शास्त्रानुसारतः ॥ यथाविभवयागेन यत्कर्तव्यं नरेण वै ॥ २ ॥ सद्योधिवासकल्पेन यूपादीनधिवास्य च ॥ पूर्वस्मिन्नेव दिवसे दैवज्ञकथिते शुभे ॥ ३ ॥ मुहूर्ते कलशं स्थाप्य संगृह्य गणनायकम् ॥ स्थापयेत्प्रथमं यूपमा पोहिष्ठेतिमन्त्रकैः ॥ ४ ॥ शन्नो देव्यास्ततः पश्चाद्गन्धद्वारेति गंधकम् ॥ श्रीसूक्तेन ततो दद्यात्पुष्पं दूर्वाक्षतं ततः ॥ ५ ॥ काण्डादिति च मन्त्रेण ततो धूपं निवेदयेत् ॥ ये गृह्णामीति च ऋचा पूजायां स्थापयेत्ततः ॥ ६ ॥ विवाहविधिना सर्वं कार्यं चैवाधिवासनम् ॥ ७ ॥ सर्वमेव प्रयुं जीत तडागादिषु पण्डितः ॥ अधिवास्य तडागादीनाचार्यादींश्च सर्वशः ॥ ८ ॥ संगृह्य गंधपुष्पाद्यैर्धूपैर्दीपैः सुशोभनैः ॥ ततः प्रभातसम ये नित्यं निर्वर्त्य शास्त्रतः ॥ ९ ॥ वृद्धिश्राद्धं ततः कुर्यान्मातृपूजापुरःसरम् ॥ अलंकृत्य यथाशक्ति आचार्यादींश्चरेद्बुधः ॥ १० ॥ शृणुयात्पश्चिमे भागे मंडपस्य समीपतः ॥ मध्यदेशे समुद्भूतं यज्ञपात्रं प्रशस्यते ॥ ११ ॥ अथ वा तत्र देशीयं गुरुं वा श्रोत्रियोद्भवम् ॥ यज्ञे प्रधानद्वितीयमृ त्विगाचार्यमेव हि ॥ १२ ॥ वैतानकल्पे संपन्नं शक्तिकल्पपरायणम् ॥ निगमज्ञानसंपन्नं यज्ञे पात्रं प्रशस्यते ॥ १३ ॥ पत्नीहीनमपुत्रं च श्याव



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दंतमदंतकम् ॥ गणानां याजकं षंढं स्वगोत्रं परिवर्जयेत् ॥ १४ ॥ अप्रधानेषु यज्ञेषु दानयज्ञेषु सत्तमाः ॥ नियोजयेत्स्वगोत्रं च होमे नास्ति विचारणा ॥ १५ ॥ कुशप्रतिकृतौ चापि ततः स्वर्गं स गच्छति ॥ धनमादौ च संशोध्य ततो यज्ञं समाचरेत् ॥ १६ ॥ अयाज्ययाजनोद्भूतं पल्लवं व्यवहारके ॥ कूटसाक्ष्येण पल्लवे स्थाप्यहारकमेव च ॥ १७ ॥ देवस्वं ब्राह्मणस्वं च लोहविक्रयणं धनम् ॥ हविर्विक्रयणं कृत्वा पुत्रभार्यादिविक्रयी ॥ १८॥ निंदितानि पुराणेषु यत्कृतं तत्र तत्फलम् ॥ यज्ञसद्मनि विप्रांश्च न श्राद्धान्भोजयेत्क्वचित् ॥ न दद्यात्तस्य दानं च यावन्नैव समापयेत् ॥ १९ ॥ ब्रह्मन्वाचा यमुख्योसि संसारात्राहि मां विभो ॥ त्वत्प्रसादाद्गुरो यज्ञे प्राप्नुयां मानसेप्सितम् ॥ २० ॥ चिरं मे शाश्वती कीर्तिर्यावल्लोकाश्चराचराः ॥ प्रसीद त्वं महेशान प्रतिष्ठाकर्मसिद्धये ॥ २१ ॥ त्वमादिः सर्वभूतानां संसारार्णवतारक ॥ ज्ञानामृतप्रदाचार्य विष्णुरूप नमोऽस्तु ते ॥ २२ ॥ ब्रह्मासनसमुद्भूतं प्रकाशितदिगंतरम् ॥ त्वं च जांबूनदप्रख्य यजुर्वेद नमोस्तु ते ॥२३॥ प्रफुल्लकमलोद्भासि भास्वरांबरभूषित ॥ प्रकीर्णशास्त्रसंभार विधिज्ञ प्रणतोस्मि ते ॥२४॥ ज्वलद्वैश्वानरप्रख्य धूमश्यामालितानन ॥ षडंगवेदतत्त्वज्ञ ऋत्विङ् मोक्षं समाचर ॥ २५ ॥ ततस्तूर्यादिघोषेण पुरस्कृत्य द्विजोत्तमान् ॥ यजमानः सपत्नीकः प्रविशेद्यागमण्डपम् ॥ २६ ॥ स्वस्थाने स्थापयेद्विप्रान्मखे धर्मैर्यथाक्रमम् ॥ पूजयेद्गन्धमाल्याद्यैर्गंधाद्यैः सुमनोहरैः ॥ २७ ॥ यज्ञे सुवितते योसौ पूज्यते पुरुषः सदा ॥ नारायणस्वरूपोसौ यज्ञं मे सफलं कुरु ॥२८॥ मखश्रेष्ठेषु सर्वेषु येन मंत्राः सुविस्तृताः ॥ यजुर्वेदार्थतत्त्वज्ञ ब्रह्मरूप नमोस्तु ते ॥२९॥ यज्ञेषु साक्षी सर्वेषु वेदवेर्थतत्त्ववित् ॥ ऋग्वेदज्ञ महाप्राज्ञ विश्वरूप नमोस्तु ते ॥ ३० ॥ मांगल्यं कर्मणां नित्यं शाश्वतं ब्रह्मरूपिणम् ॥ सिद्धये मम यज्ञस्य नमामि शिवरूपिणम् ॥ ३१ ॥ पालयंति दिशः सर्वा विदिशश्च तथा इमाः ॥ दिक्पालरूपिणं विप्रं यज्ञसिद्ध्यै नमाम्यहम् ॥ पातयेद्दक्षिणं जानु विकिरान्विकिरेत्ततः ॥ ३२ ॥ त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ॥ ब्रह्मविष्णुशिवाः सर्वे रक्षां कुर्वंतु तानि वै॥३३॥ वेद्यावेदीति मंत्रेण पठेद्वेदिं प्रणम्य च॥संपूज्य गन्धपुष्पाद्यैरिमं मंत्रमुदाहरेत् ॥ ३४ ॥ याजनं यजमानश्च श्रेयसा तत्र याजकः ॥ इदमर्घ्यमिदं पाद्यं धूपोयं प्रतिगृह्यताम् ॥ ३५ ॥ ऐशान्यां कलशे देवं संपूज्य गणनायकम् ॥ ब्रह्माणं वासुदेवं च द्वितीयकलशे यजेत् ॥३६॥ मंडलं चैव विष्णुर्वै द्वारकारूपमास्थितः ॥ तेन त्वां पूजयाम्यद्य स्वर्गप्राप्तिं कुरुष्व मे ॥ ॥ ३७ ॥ पूर्वादिदिक्षु कलशान्संस्थाप्य च त्र्यंत्रयम् ॥ अर्धपादसवर्णेन निर्मितं तारणं बुधः ॥ ३८ ॥ गंगामृत्तिकया युक्ते पल्लवे संनिवेदयेत् ॥ मंदरं कल्पयित्वा तु गोपीनां च कुलेन वा॥३९॥कलशोपरि संस्थाप्य मंदरं संप्रपूजयेत् ॥ स्योना पृथिवीति मंत्रेण गंधपुष्पैः पृथग्विधैः ॥४०॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( स्योना पृथिवीति मन्त्रस्य सुमंत ऋषिर्जगती छन्दो हरो देवता मंदरप्रीतये विनियोगः ) ॥ एवं दक्षिणदिग्भागे नवतोलकनिर्मितम् ॥ प्रादेशमात्रलोहं तु रौप्येण गंधमादनम् ॥ मृदा संघटनैः पश्चात्कदाचन ऋचा यजेत् ॥ ४१ ॥ कदाचनेति मंत्रस्य सूर्य ऋषिस्त्रिष्टुप्छन्दः सूर्यो देवता गंधमादनप्रीतये विनियोगः ॥ ) उत्तरे तोरणतोद्रेरंगुष्ठद्वयमानके ॥ तोलकद्वयमानेन यवानां पिष्टकोपरि ॥ ४२ ॥ ( आप्यायस्वेति मंत्रस्य कर्दम ऋषिर्जगती छन्दः शची देवता सुपार्श्वप्रीतये विनियोगः ॥ ) पूजयेत्पार्श्वकलशे धात्रादीन्पूर्वदिक्क्रमात् ॥ श्रीसूक्तेनैव मन्त्रेण यजेद्विजयसप्तकम् ॥ पूजयेत्परया भक्त्या गंधपुष्पाक्षतादिना ॥ ४३ ॥ अंबाअंबिकेति मंत्रस्य नलिन ऋषिर्गायत्री छन्दः शंभुर्देवता जयप्रीतये विनियोगः ॥ गायत्र्या पूजयेद्दक्षे पश्चिमं कलशद्वयम् ॥ ४४ ॥ ( गायत्र्या विश्वामित्र ऋषिः सविता देवता विजयप्रीतये विनियोगः ॥ ) भद्रं चैव सुभद्रं च प्रयतः संयजेद्बुधः ॥४५॥ (उत्तरे युग्मकलशे मनोन्ना इति मंत्रस्य अंतक ऋषिर्बृहती छंदो निर्ऋतिर्देवता भूतप्रीतये विनियोगः॥) भूतशुद्धिं ततः कृत्वा न्यासं कृत्वा विधानतः ॥ विधायार्घ्यादिकं चैव धर्मादिमंडले यजेत् ॥४६॥ मध्ये आधारशक्त्यादीन्वरुणं मध्यतो यजेत् ॥ पूर्वादिक्रमतश्चैव इन्द्रादीन्कुलदेवताः ॥४७॥ पार्श्वद्वये कर्णिकाया ब्रह्माणं चाप्यनन्तकम् ॥ स्वैःस्वैर्मन्त्रैर्यथोक्तैश्च बलिभिर्गन्धपुष्पकैः ॥ ४८ ॥ इन्द्राभिपेकमंत्रस्य वाद्यं गांधाररागकम् ॥ अग्नेस्तेजोसीति वाद्यं रागं चैव वराटकम् ॥ ४९ ॥ वनकंटकमस्यापि वाच्यं रागं तु गुर्जरम् ॥ रक्षोधिपस्य संग्रामं वैतालं वाद्यमुच्यते ॥ ५० ॥ नाटकाख्यं तथा रागं वरुणस्यापि मे शृणु ॥ वाद्यं राज्याभिषेकाख्यं रागो वसंतसंज्ञकः ॥ ५१ ॥ ईशस्य नंदिघोषाख्यं वाद्यं रागोथ कामदः ॥ सुवर्णं दुंदुभिर्वाद्यं ब्रह्मणः कथितो बुधैः ॥ ५२ ॥ रागो देवी वसंतश्च अनंतस्य निबोध मे ॥ वाद्यं गांधारताराख्यं रागश्चाङ्गारवातकः ॥ ५३ ॥ सोमे घोषे भवेद्वाद्यं जलेशस्य महात्मनः ॥ मालवाख्यो भवेद्रागः पत्राग्रेषु महानपि ॥ ५४ ॥ स्वैः स्वैर्धर्मैश्च संगृह्य दक्षिणे पृथिवीं यजेत् ॥ स्योना पृथिवीति मंत्रेण उपचारैः पृथग्विधैः ॥ ५५ ॥ मण्डपस्योत्तरे भागे महादेवं प्रपूजयेत् ॥ नमो वृक्षेभ्य इत्यादि नैवेद्यैश्च पृथग्विधैः ॥ ५६ ॥ ( महादेवं द्विभुजं डमरुशूलधरसुमासहितं ध्यात्वा ॥ नमो वृक्षेभ्य इति मन्त्रस्य ब्रह्मा ऋषिर्गायत्री छंदश्चन्द्रो देवता चन्द्रप्रीतये विनियोगः ॥ ) गंधपुष्पादिभिर्भक्त्या भूतानि परितो यजेत् ॥ ५७ ॥ वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः ॥ अस्मात्प्रयांतु मे स्थानाद्ये चान्ये विघ्नकारकाः ॥ ५८ ॥ मधुयुक्तं पायसान्नं वरुणाय निवेदयेत् ॥ पीतं चालोहितं कृष्णं शुक्लं कृष्णं च धूम्रकम् ॥ ५९ ॥ पीतं शुक्लं तथा चित्रं श्वेतमन्नं यथाक्रमम् ॥ बलयस्तु दिगीशानां ग्रहाणामपि ताञ्छृणु ॥ ६० ॥ क्षीरोदनं ग्रहेशाय शुक्लान्नं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शशिने स्मृतम् ॥ लोहितान्नं च भौमाय बुधाय क्षीरषाष्टिकम् ॥ ६१ ॥ पीतमन्नं देवगुरोः शुक्रस्य सिततंदुलम् ॥ मांसौदनं शनेर्ज्ञेयं राहोश्च कृष्ण भक्तकम् ॥ ६२ ॥ धूम्रवर्णं तु ताम्रं तु भौमस्य क्षीरषाष्टिकम् ॥ पिष्टकान्नं शिवस्योक्तं भूतानां माषभक्तकम् ॥ ६३ ॥ एवं बलिं विधायाथ अग्रे कुंभं निवेशयेत् ॥ प्रदेशद्वयचङ्कुलं नाम अष्टोत्तरसहस्रकम् ॥६४॥ बह्वंगुलकं विन्यस्य विन्यस्य कलशोपरि ॥ निशावांछितसूत्रैश्च संवेष्ट्य पिहितं तथा ॥ ६५ ॥ शरावं च पुनर्दद्याद्वर्धनीं प्रतिपूजयेत् ॥ अस्त्राय फडिति मंत्रेण ध्यात्वा देवं जलेश्वरम् ॥ ६६ ॥ सूक्तं यजेद्यथाशक्ति शतमष्टोत्तरं जपेत् ॥ कुंडेषु विन्यसेन्नागानष्टौ पूर्वादिषु क्रमात् ॥ ६७ ॥ अनंतं पूजयेत्पूर्वं मानेनांगुलमात्रकम् ॥ निर्मितं कांचनेनैव सप्तवर्तिकया सुधीः ॥ ६८ ॥ राजतं वासुकिं नागं यजेत्पत्रांतरे पुनः ॥ पादमात्रेपि चांगुष्ठमात्रं ताम्रस्य भक्ष्यकम् ॥ ६९ ॥ पंचांगुलं तोलिकया लौहं कर्कोटकं पुनः ॥ वर्तिकाभिः षोडशभिर्बृहत्पर्वप्रमाणकम् ॥ ७० ॥ शंखपालं कुशमयमर्धपादेन निर्मितम् ॥ अंगुष्ठमात्रं रक्तेन नागःतालकमात्रकम् ॥७१॥ अंगुष्ठे तोलकं पश्चात्पद्मनागं पुनर्यजेत् ॥ तोलकार्धप्रमाणेन अंगुलं परिमाणतः ॥ ७२ ॥ कुर्याच्छैलमयं सम्यग्यथावल्लक्षणान्वितम् ॥ महापद्मस्य वै तस्य पूर्वमानेन निर्मितम् ॥ ७३ ॥ ध्यात्वानंतं चतुर्बाहुं शुक्लसप्तफणान्वितम् ॥ दक्षिणोर्ध्वकरे शंखमधिचक्रं प्रतिष्ठितम् ॥ ७४ ॥ वामोर्ध्वे तु गदापद्मं मध्यस्थाने व्यवस्थितम् ॥ सर्वालंकारसंयुक्तमेवं ध्यात्वा यथाविधि ॥७५॥ सहस्रशीर्षेति मंत्रेण पूजयित्वा बलिं हरेत् ॥ लाजैश्चतिलसंमिश्रैः क्षीरयुक्तैः पृथग्विधैः ॥ ७६ ॥ चतुर्विधं तथा श्वेतं सर्वालंकारसंयुतम् ॥ स्वकीयं प्रजपेत्तत्र आप्यायस्वेति वै ऋचा ॥ ७७ ॥ पिण्याकं नागजिह्वां च तथा सर्जरसं दधि ॥ बलयस्तस्य निर्दिष्टास्तक्षकं लोहितं यजेत् ॥ ७८ ॥ पद्मं टंकं दधानं च भुजाभ्यां नागसत्तमम् ॥ मनोन्ना इति मंत्रेण आज्यं सोमो बलिं हरेत् ॥ ७९ ॥ कर्कोटकं च द्विभुजं पीतवस्त्रधरं यजेत् ॥ पञ्च नद्य इति ऋचा विष्णुक्रांता बलिर्भवेत् ॥ ८० ॥ पीतवस्त्रं च कुलिशं याजयेत्तु चतुर्भुजम् ॥ भुजाभ्यामूर्ध्वभागे तु रक्तपद्मधरं हरिम् ॥ ८१ ॥ शर्करा कुष्ठकं चैव बलिस्तस्य प्रकीर्तितः ॥द्विभुजं शंखपालं च शंखाभं शंखधारिणम् ॥ ८२ ॥ पद्मासनस्थं पद्माभ्यां हस्ताभ्यां च वरं विभुम् ॥ ध्रुवक्षितिध्रुवोसीति मंत्राभ्यां पूजयेत्पृथक् ॥ ८३ ॥ घटौदनं भृंगराजं पद्मं च वलयस्तयोः ॥ स्वगृह्योक्तेन विधिना संस्थाप्याग्निं कुशंडिकाम् ॥ ८४ ॥ कृत्वा आज्यस्य संस्कारं वारुणं श्रपयेच्चरुम् ॥ जुहुयादष्ट बिल्वानि दिगीशानां घृतेन वै ॥ ८५ ॥ एकैकामाहुतिं दद्याद्ग्रहाणां च त्रयंत्रयम् ॥ सुसमिद्भिर्घृतमधुपयोभिर्मिश्रितैः पृथक् ॥ ८६ ॥ पलाशसमिधं पश्चात्प्रतिष्ठामाहुतित्रयम् ॥ शिवस्य परमान्नेन जुहुयादष्टसंख्यया ॥ ८७ ॥ मध्वाज्यगुडमिश्रा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिर्लाजाभिर्जुहुयात्पृथक् ॥ लाजान्यथोक्तं वितरेदेकैकामाहुतिं क्रमात् ॥ ८८ ॥ स्थालीपाकस्य जुहुयादेकैकामाहुतिं पुनः ॥ वरुणं च समुद्दिश्य रुद्रं सर्वं पृथक्पृथक् ॥ ८९ ॥ वास्तोष्पतय इति मंत्रेण पञ्चगव्यो भवेत्ततः ॥ स्योनापृथिवीतिमंत्रेण व्रीहिमृत्तिकया पुनः ॥ ९० ॥ वृषान्न इति मंत्रेण कया न इति वै पुनः ॥ कुशमूलमृदा चैव चतुष्पथमृदा तथा ॥ ९१ ॥ इमा रुद्रेति मंत्रेण श्रीश्चेति ऋचा पुनः ॥ पञ्चखण्डस्य च मृदा स्नापयेत्सुसमाहितः ॥ ९२ ॥ तद्विष्णोरिति मंत्रेण तथा पुष्पोदकेन च ॥ तीर्थोदकेन कृष्णेन त्रिरक्तेन त्रिशीतकैः ॥ ९३ ॥ पञ्चरक्तेन रक्तानां मृदा कैश्च कुशोदकैः ॥ स्वर्णतोयैश्च कलशैरष्टोत्तरशतेन तु ॥ ९४ ॥ तैजसैर्मार्त्तिकैश्चापि अष्टाविंशतिभिस्तथा ॥ यथाशक्ति तु संस्थाप्य कुंकुमैश्चन्दनैरपि ॥ ९५ ॥ अन्नं लिप्य ततो मृद्भिर्दद्याच्चैव यथाक्रमम् ॥ सुरासुरेति च ऋचा वस्त्रयुग्मेन वेष्टयेत् ॥ ९६ ॥ ध्वजं च धनुनागेति गंधद्वारेति गोमयम् ॥ धूरसीति ततो धूपं होत्रे चाहुतिदीपकम् ॥ ९७ ॥ सिंधोसीति च सिंदूरं स्वभावे रक्तकं तथा ॥ मालतीकुसुमैः कृत्यैर्नागान्संस्थापयेत्ततः ॥ ९८ ॥ धाराभिः शतपुष्पाभिर्गन्धतोयादिभिस्तथा ॥ अथवाश्वत्थपत्रेषु वटपत्रेषु वा सुधीः ॥ ९९ ॥ रोचना कुंकुमैर्वापि संलिख्य तत्र पूजयेत् ॥ प्रक्षिपेत्तत्र मुक्ता हि कलशेषु विनिक्षिपेत् ॥ १०० ॥ मंडपस्योत्तरे देशे शय्यां निर्माय शोभनाम् ॥ राजतं वारुणं तस्यां पादमात्रेण निर्मिताम् ॥ १०१ ॥ अंगुष्ठमात्रं संस्थाप्य ततः पुष्करिणीमपि ॥ स्वर्णपादेन घटितां चतुरस्रां सुशोभनाम् ॥ १०२ ॥ अंगुष्ठमात्रं सम्पूज्य वरुणाय निवेदयेत् ॥ यथाशक्ति ततो गां च संभवे पञ्चविंशतिः ॥ १०३ ॥ सुवर्णं राजतं चैव धान्यं वासो वराटकम् ॥ ॥ १०४ ॥ नागयष्टिं समादाय किंचिदुत्तरगां तथा ॥ १०५ ॥ ततोक्षताय भौमाय कृत्वा चाज्याहुतित्रयम् ॥ लाजान्दधिसमायुक्तं घृतं मधु गुडं तथा ॥ १०६ ॥ क्षीरं च पिष्टकं चैव शष्कुलीगन्धपुष्पकम् ॥ पंचामृतं पञ्चरत्नं गर्भे दद्यात्समाहितः ॥ १०७ ॥ आचार्यो यजमानेन सुसन्नद्धैश्च भृत्यकैः ॥ गंगाजलेशयोर्मध्ये पंचघोषपुरःसरम् ॥ १०८ ॥ अवाप्य च ततो यष्टिं स्थिरो भवति वैरिवा ॥ ध्रुवं ध्रुवेति मंत्रेण यष्टिमामंत्रयेत्ततः ॥ १०९ ॥ यज्ञप्रियासि देवि त्वं सर्वविघ्नविनाशिनी ॥ पाहि मां सर्वपापेभ्य आत्मना त्वं स्थिरीभव ॥ ११० ॥ इत्यामंत्र्य यजेच्चैव गायत्रीं च पठेत्ततः ॥ वनस्पतेति विडवामिति मंत्रं जपेत्पुनः ॥ १११ ॥ पुनरागत्य तां वेदिं निर्मथ्य वरुणं प्रभुम् ॥ तथा पुष्करिणीं चैव वर्धनीं कलशोदरैः ॥ ११२ ॥ अनिष्टं मार्जयेन्नागानुद्धृत्य कलशं तथा ॥ पाषाणाभ्यंतरं कृत्वा गोमयैः परिलिप्य च ॥ ११३ ॥ वरुणं पुष्करिण्यां च जलमध्ये विनिक्षिपेत् ॥ नमोस्त्विवति च मन्त्रेण बलिं दद्याच्च पायसम् ॥ ११४ ॥ निर्मन्थेत्तत्र यो नागः स्थापयेत्तु यथाविधि ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रावयेत्तमिमं मंत्रमत्र संनिहितो भव ॥ ११५ ॥ अत्र स्वामी भवान्नाग रक्षणीयस्त्वया जनः ॥ गायत्रेण त्वा छंदसामीमन्त्रं संश्रावयेत्पुनः ॥ ॥ ११६ ॥ संपूज्य गंधपुष्पाद्यैः पुरतो निक्षिपेद्दिशि ॥ पिधाय नागराजानमृचाभ्यां परिसूत्रकैः ॥ ११७ ॥ सन्निरुद्धचाशु संस्थाप्य बलिं दद्या द्विधानतः ॥ लाजौदनं मनस्तस्य यज्जाग्रत ऋचा जपेत् ॥ ११८ ॥ एवं भूरिति मंत्रैः स्वैःस्वैरेव तु पृथग्विधैः ॥ स्वासु दिक्षु च संस्थाप्य पूज येच्च प्रयत्नतः ॥ ११९ ॥ पूर्वभागे पुष्करिण्यां हारिताभं सवज्रकम् ॥ हलग्रहीत मंत्रेण न्यस्य लाजाहुतिं कुले ॥ १२० ॥ त्रातारमिति मंत्रेण अग्नौ विन्यस्य मौक्तिकम् ॥ मनःशिलां प्रवालं च अग्निमीडेति संपठेत् ॥१२१॥ वैश्वानरेण मन्त्रेण पठल्लाँजाहुतिं पुनः ॥ दद्याद्ये ते शतमन्त्रेण पश्चिमे काटिकं न्यसेत् ॥१२२॥ शालिबीजेन सहितं कया न इति मंत्रकम् ॥ वरुणस्यो इति मंत्रेण दद्यादष्टादशाहुतीः ॥१२३॥ उत्तरे रोचनां कन्यां तथैव गौरसर्षपम् ॥ कुंकुमेन समायुक्तं कुविदंडमृचा पठन् ॥ १२४ ॥ विन्यस्य तेन मंत्रेण प्रदद्यादाहुतिं पुनः ॥ ऐशान्यां मंद्रकं रंगमी शावा इति संपठन् ॥ १२५ ॥ संस्थाप्याज्याहुतिं दद्यात्तमीशान ऋचा पुनः॥आसद्यैर्मंत्रसंयुक्तैर्देवं नारायणं यजेत् ॥ १२६ ॥ वरुणात्मकं ततो ध्यात्वा ततो नीराजनं पठेत् ॥ जानुभ्यामवनिं गत्वा पठेज्ज्ञानामृतं स्तवम् ॥ १२७ ॥ धर्मो वंशं ततः कुर्यादुत्सर्गांते विधीयते ॥ ततो देवीं पुनः कृत्वा दत्त्वा पुष्पाञ्जलित्रयम् ॥ १२८ ॥ सर्वसत्त्वोपकाराय समुत्सृजेत्तु वै जनम् ॥ उत्सृष्टं सर्वसत्त्वेभ्यो दृश्यते जलमूर्जितम् ॥ १२९ ॥ रमंतीं सर्वभूतानि स्नानपानावगाहनैः ॥ वरुणं च ततो देवं पुष्करिण्यां च निक्षिपेत् ॥ १३० ॥ जले वरुणमन्त्रेण मत्स्यादीन्प्रक्षिपेत्ततः ॥ पक्षिणश्च शुभांस्तत्र भेकं कूर्मं च कर्दमम् ॥१३१॥ शैवालं प्रक्षिपेच्चैव दक्षिणां तदनंतरम् ॥ सुवर्णं धान्यरत्नं च आचार्याय पृथग्ददेत्॥१३२॥ ऋत्विग्भ्यश्च पृथग्दद्याद्यथावित्तानुसारतः ॥ ब्राह्मणेभ्यो गायनेभ्यो वसुभ्यश्च पृथक्पृथक् ॥ १३३ ॥ नित्यं समाप्य विधिवद्दद्यात्पूर्णाहुतिं पुनः ॥ दद्यादर्घ्यं च सूर्याय हस्तास इति संजपन् ॥ १३४ ॥ ततः प्रदक्षिणावर्तं संवेष्ट्य क्षीरधारया ॥ प्रासादपक्षे प्रासादमारामे अथ मंडपम् ॥१३५॥ शताधिधारया शक्त्या त्रिवारं ब्राह्मणैः सह ॥ विकीर्य लाजकुसुमं व्रीहींश्चैव कपर्दकान् ॥ १३६ ॥ तूर्यघोषेण महता ततो विप्रपुरःसरम् ॥ यज मानः सपत्नीकः प्रविशेत्स्वगृहं पुनः ॥ १३७ ॥ ततो गृहार्चनं कृत्वा ब्राह्मणानथ भोजयेत् ॥ कुमारीश्च कुमारांश्च दीनान्धकृपणानपि ॥१३८॥ नारायणं ततो दद्याद्विप्रमुद्दिश्य भक्तितः ॥ १३९ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि द्वितीयभाग एकविंशोऽध्यायः॥ २१ ॥ छ॥ इति मध्यपर्वणि द्वितीयभागः समाप्तः ॥ २ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ ॥ सूत उवाच ॥ ॥ आरामादौ विशेषो यो वक्ष्यतेऽत्र मयाधुना ॥ मंडलं कारयित्वा तु चतुरस्रं समं शुभम् ॥१॥ ऐशान्यां कलशे देवं तत्र नाथं प्रपूजयेत् ॥ मध्यमे कलशे पूजा ग्रहाणां च ततः परम् ॥ २ ॥ स्वदिक्षु द्वारदेशे तु पश्चिमद्वारदेशेशयोः ॥ ब्रह्माणं चाप्यनन्तं च मध्यतो वरुणं यजेत् ॥३॥ वरुणं चोदकुम्भस्थं भूतशाखासु शोभनम् ॥ तेन चावाहयामि त्वां विभो स्वर्गाय वै भव ॥४॥ पूर्वगं मन्दरं स्थाप्य तोरणोपरि सत्तमाः ॥ विष्वक्सेनं समभ्यर्च्य अर्चनं स्वर्गसंयुतम् ॥५॥ कर्णिकायां वासुदेवं शुद्धस्फटिकसन्निभम् ॥ चतुर्भुजं शङ्खचक्रगदापद्मविभूषितम् ॥ ६ ॥ श्रीवत्सकौस्तुभोरस्कं मुकुटाद्यैरलंकृतम् ॥ दक्षिणे कमला तस्य वामे पुष्टिर्व्यवस्थितिः ॥ ७ ॥ सिद्धकिन्नरयक्षाद्यैः स्तूयमानं सुरासुरैः ॥ संपूज्य विधिवद्भक्त्या विष्णोरराट इत्यृचा ॥ ८ ॥ दले संकर्षणादींश्च विमलाद्याश्च नायिकाः ॥ संपूज्य धूपदीपाद्यैरुपहारैरनुत्तमैः ॥ ९ ॥ घृतप्रदीपो देवस्य गुग्गुलुः सरलस्तथा ॥ धूपो देवबलिः क्षीरं परमान्नं घृतप्लुतम् ॥ १० ॥ ध्यायेत्सोमं कर्णिकायां दक्षिणे पद्मसंस्थितम् ॥ शुक्लाभं द्विभुजं शान्तं केयूराद्युपशोभितम् ॥ ११ ॥ प्रशस्यं देवयक्षाणां वरदाभयहस्तकम् ॥ इमं देवा इति ऋचा उपचारैः पृथग्विधैः ॥ १२ ॥ पूजयेच्च निशानाथं घृतभक्तं निवेदयेत् ॥ इन्द्रं जयन्तमाकाशं वरुणं चाग्निमेव च ॥ १३ ॥ ईशानं तत्पुरुषं चैव वायुं पूर्वादिदिक्ष्वपि ॥ कर्णिकाया वामभागे वरदाभयहस्तकम् ॥१४॥ द्विभुजं शुक्लवर्णं च महादेवं प्रपूजयेत् ॥ त्र्यंबकेण च मंत्रेण दद्याच्च घृतपिष्टकम् ॥ १५ ॥ वासुदेवाय देवाय जुहुयादष्ट आहुतीः ॥ परमान्नेन सौम्यस्य जुहुयादष्टविंशतिम् ॥ १६ ॥ शिवाय परमान्नेन जुहुयादाहुतिद्वयम् ॥ गणेशस्य तथाज्येन ददेदेकाहुतिं बुधः ॥ ॥ १७ ॥ ब्रह्मणो वरुणस्याथ एकैकामाहुतिं तथा ॥ ग्रहाणां स्वोक्तसमिधा दिगीशानां पृथक्पृथक् ॥ १८ ॥ एकैकामाहुतिं दद्यादाज्येन च यथाक्रम् ॥ कराली धूमली श्वेता लोहिता कनकप्रभा ॥ १९ ॥ अतिरक्ता पद्मरागा वह्निजिह्वा प्रकीर्तिताः ॥ तासां मंत्राः क्रमेणैव सादिवासांतविन्दवः ॥ २० ॥ यकारस्थाश्च विज्ञेया अष्टस्वरविभूषिताः ॥ घृतमध्वाज्यसिक्ताभिर्होमयेच्च पृथक्पृथक् ॥ २१ ॥ एकैकामाहुतिं दद्याद्दत्त्वा चैव समाहितः ॥ अग्नीषोमं तथेन्द्रं च पृथिवीमन्तरिक्षकम् ॥ २२ ॥ स्थालीपाकेन जुहुयान्मधुक्षीरयवान्वितम् ॥ एकैकामाहुतिं तेषां समुद्दिश्य पृथक्पृथक् ॥ २३ ॥ यावकैर्गंधपुष्पाद्यैरर्चित्वा सपरावकम् ॥ जपस्व त्वं महाभाग श्रद्धया चैव वाग्यतः ॥ २४ ॥ जापको विधिनानेन प्रजपेत्तत्र रुद्रकम् ॥ मङ्गलं परमान्नं च सौरसूक्तं तथा जपेत् ॥ २५ ॥ ततः संमृज्य विधिना स्नापयित्वा यथाविधि ॥ यूपं गर्भे विनिक्षिप्य तत्र कुर्याद्विचक्षणः ॥२६॥ ध्वजानारोप्य प्रांतेषु दद्यात्सोमं वनस्पतिम् ॥ कोऽदादिति पठित्वा च वृक्षाणां कर्णवेधनम् ॥२७॥ सूच्या सुतीक्ष्णया कार्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्विपात्रे वामदक्षिणे ॥ नवग्रहाणां तृप्त्यर्थं यावकं लड्डुकं तथा ॥ २८ ॥ पिष्टकं च पृथग्दद्यात्कुमारीबालकेषु च ॥ निशा[1]रंजितसूत्रेण संवेष्ट्य च सचूर्णकम् ॥ २९ ॥ प्रदद्याद्दोहकं चैव वृक्षाणां विधिपूर्वकम् ॥ प्राशयेच्चैव तान्वृक्षानिमं मन्त्रमुदाहरेत् ॥ ३० ॥ वृक्षाग्रात्पतितस्यापि आरोहात्पतितस्य च॥मरणे वास्थिभङ्गे वा कर्ता पापैर्न लिप्यते ॥३१॥ धेनुं सुवर्णं धान्यं च आचार्याय प्रदक्षिणम्॥दत्त्वा च ऋत्विजे दद्यात्सुवर्णं रजतं तथा ॥ ३२ ॥ धान्यं च ब्राह्मणे दद्याद्घृतभोज्यं सशर्करम् ॥ इष्टां च दक्षिणां दद्यात्सदस्याय तथैव च ॥ ३३ ॥ अधिकलशं समानीय स्नानं कुर्याद्विधानतः ॥ कृत्वा चैवानिशं कुर्याद्दद्यात्पूर्णाहुतिं तथा ॥३४॥ सर्वौषध्युदकं प्रोक्ष्य त्रिवारं क्षीरधारया ॥ संवेष्ट्य त्रिश्चतुर्वारं ब्रह्मघोषपुरःसरम् ॥ ॥ ३५ ॥ गृहं व्रजेत्ततो विप्रैः कुर्याच्चैव गृहार्चनम् ॥ ततो विशेषं वक्ष्यामि वरा एवेदमित्यृचा ॥ ३६ ॥ बलं कामं हयग्रीवं माधवं पुरुषोत्तमम् ॥ वासुदेवं धनाध्यक्षं ततोनारायणं यजेत्॥३७॥ दधिभक्तं बलिं दद्यात्पञ्चगव्यसमुद्भवम्॥ एवं संपूज्य विधिना दक्षिणे पृथिवीं यजेत्॥३८॥शुद्धकाञ्चनवर्णाभां वराभयकरां शुभाम् ॥ मंडूकस्थां च द्विभुजां सर्वालङ्कारसुन्दरीम् ॥३९॥ स्योना पृथिवीति मन्त्रेण पूजयित्वा यथाविधि ॥ पायसं मधुसंयुक्तं बलिं दद्यात्सशर्करम् ॥ ४० ॥ वामतो विश्वकर्माणं शुद्धस्फटिकसंनिभम् ॥ शूलटंकधरं शांतं संयजेदुपचारकैः ॥ ४१ ॥ विश्वन्निति ऋचा तं च बलिं च मधु पिष्टकम् ॥ दद्याज्जपेच्च कौष्माण्डं सूक्तं पौरुषमेव च ॥४२॥ मधुपायसयुक्तेन होमानष्टौ विधाय च॥एकैकं होमयेत्पश्चात्पृथिवीहोमकर्मणि ॥४३॥ समुत्सृज्य ततः सेतुमिमं मन्त्रं पठेत्ततः ॥ पिच्छिले पतितानां च उच्छूतेनांगसंगतः ॥ ४४ ॥ प्रतिष्ठिते धर्मसेतौ धर्मो मे स्यान्न पातकम् ॥ सेतोरस्य प्रबन्धस्य श्रद्धया परया तथा ॥ ४५ ॥ ये चात्र प्राणिनः संति रक्षां कुर्वंति सेतवः ॥ वेदागमेन यत्पुण्यं यथैव हि समर्पितम् ॥ ४६ ॥ गर्तं कृत्वा पञ्चरत्नं संस्थाप्यं तदनन्तरम् ॥ संस्थाप्य च ततो यूपं संपूज्य च यथाविधि ॥ ४७ ॥ आचार्याय ततो दद्यादिष्टां च वरदक्षिणाम् ॥ पूजयेद्द्विजदांपत्यं लाजाभिः परिपूजितम् ॥ ४८ ॥ पोटिकां च ततः शय्यां दद्यादिष्टार्थसिद्धये ॥ सेतौ वृक्षस्थिता ये स्यू रोपयेत्कदलीं शुभाम् ॥ ४९ ॥ तेषां पार्श्वद्वयेप्येवमारामे च पृथक्पृथक् ॥ ५० ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ गोप्रचारं पुनर्वक्ष्ये विशेषं तत्र मे शृणु ॥ यजेद्विष्णुं सलक्ष्मीकमुपचारैः पृथग्विधैः ॥ १ ॥ उपचारैश्च ब्रह्माणं रुद्रं चैव करालिकाम् ॥ वराहं सोमसूर्यौ च महादेवं यथाक्रमम् ॥ २ ॥ होमं चैव यथा

[1] हारिद्रसूत्रेण ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विष्णोः कमलायास्त्र्यंत्रयम् ॥ आज्येन क्षेत्रपालानामन्येपां मधुमिश्रितैः ॥ ३ ॥ एकैकामाहुतिं दद्याल्लाजादिषु पृथक्पृथक् ॥ समुत्सृज्य विधानेन यूपं संस्थाप्य पूजयेत ॥ ४ ॥ त्रिहस्तमात्रं रचितं कुर्यान्नागफणान्वितम् ॥ रोपयेदेकहस्तेन गर्भे होमं प्रयोजयेत् ॥५॥ लाजासंयुक्तविधिना विश्वेपामिति मञ्जपन् ॥ नागाधिपतये तद्वदच्युताय तृतीयकम् ॥ ६ ॥ भौमायेति चतुर्थं च ततो यूपं निवेदयेत ॥ मयि गृभ्णामीति सम्पूज्य यूपं च रुद्रदैवतम ॥ ७ ॥ संपूज्य रुद्रं पञ्चांगं धान्यं वस्त्रं च दक्षिणाम् ॥ आचार्याय तथा होत्रे अन्येपामिष्टदक्षिणाम् ॥ ८ ॥ गोप्रचारे च शैलेयं यूपं हस्तद्वयान्वितम् ॥ पञ्चशीर्पान्वितं कुर्याद्धस्तमात्रं प्ररोपयेत् ॥ ९ ॥ यूपं च चैत्रवृक्षं च कुण्डलीमठपीठिकाम् ॥ संस्पृश्याचम्य वै विप्राः प्राणायामेन शुध्यति ॥ १० ॥ चतुर्हस्तप्रमाणेन शतकुण्डेन संमितम् ॥ तदर्धं च कनिष्ठेन अष्टकाष्ठाधिकं भवेत ॥ ११ ॥ भूमौ रत्नं च संस्थाप्य इमं मन्त्रमुदाहरेत् ॥ शिवलोकस्तथा गावः सर्वदेवसुपूजिताः ॥ १२ ॥ गोभ्य एपा मया भूमिः सम्प्रदत्ता शुभार्थिना ॥ एवं निवेदयेद्यस्तु गोप्रचारं समाहितः ॥ १३ ॥ स मुक्तः सर्वपापेभ्यो विष्णुलोके महीयते ॥ यावंति तृणगुल्मानि संति भूमौ शुभानि च ॥ १४ ॥ तावद्वर्पसहस्राणि स्वर्गलोके महीयते ॥ पूर्वे सीमां निबध्नीयात्कृत्वा वृक्षस्य रोपणम् ॥ १५ ॥ सेतुं कृत्वा दक्षिणतः पश्चिमेंगाररोपणम् ॥ उत्तरे खानयेत्कूपं तस्य सीमां न लंघयेत्॥१६॥ ततः सहस्रधारां च शस्येन परिपूरिताम् ॥ प्रदद्याद्वा ततो विप्राः सर्वपापैः प्रमुच्यते ॥१७॥ नगरग्रामपूर्वे वा उत्तरं पश्चिमेऽपि वा ॥ न कुर्याद्ग्निदिग्भागे दक्षिणां वा ततः शुभाम ॥ १८ ॥ गोप्रचारं खनेद्यस्तु वाहयेद्वा कथंचन ॥ कुलानि पातयत्याशु ब्रह्महत्यां च विंदति ॥ १९ ॥ स्वर्गं नयति गोचर्म सम्यग्दत्तं सदक्षिणम ॥ यावत्तृणानि तद्भूमौ सप्तसंख्यानि संख्यया ॥ २० ॥ तावत्कालं वसेत्स्वर्गे विष्णुलोकात्र तच्युतिः ॥ २१ ॥ महायागावसाने च यो न तर्पयति द्विजान् ॥ निरर्थकं तस्य कर्म प्रयासफलमात्रकम् ॥ २२ ॥ वृषोत्सर्गावसाने तु प्रदद्याद्यो मही द्विजाः ॥ न याति विप्राः प्रेतत्वं तस्माद्विप्रादमत्सराः ॥ २३ ॥ तत्र मानं पृथक्चैव शृणुतात्र समागताः ॥ अमानेन दददस्तु नरकं याति रौरवम ॥ २४ ॥ गवां शतं वृपश्चैको यत्र तिष्ठत्ययंत्रितः ॥ तद्गोचर्मेति विख्यातं दत्तं सर्वाघनाशनम ॥ २५ ॥ गोप्रचारस्य देवस्य ब्राह्मणस्य च भो द्विजाः ॥ यावत्कालावधेः सीमा अतीते नास्ति पातकम ॥ २६ ॥ मण्डपं पूजयेत्सूर्यं वासुदेवसमन्वितम् ॥ होमस्तिलगुडाभ्यां च अष्टावष्टौ पृथक्पृथक् ॥ २७ ॥ देहि मेति च मन्त्रेण विन्यसेन्मंडपोपरि ॥ यवसिद्धं ततः कृत्वा शुक्लं घटचतुष्टयम् ॥ २८ ॥ समुद्रज्येष्ठजपेत्पश्चात्पौरं सूक्तं च वैष्णवम ॥ वटपत्रे तु संलिख्य चित्रं निर्माय वा पुनः ॥ २९ ॥ दिक्पालान्संन्यसेत्तत्रासुतासु दिक्षु विचक्षणः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बद्धाञ्जलिः पठेन्मंत्रानिंद्रादीनां यथाक्रमम् ॥ ३० ॥ धर्मसंस्थापनार्थाय आत्मनो विभवाय च ॥ वज्रहस्तो महेन्द्र त्वं धर्मतस्त्रातुमर्हसि ॥३१॥ भो वह्ने मेषवाहस्त्वं चतुःश्रृंगविराजित ॥ अनाथं मण्डपं त्वं हि धर्मतस्त्रातुमर्हसि ॥ ३२ ॥ यम त्वं दक्षिणाशेश महामहिषवाहन ॥ अनाथं मण्डपं त्वं हि धर्मतस्त्रातुमर्हसि ॥ ३३ ॥ मञ्चस्थो राक्षसेन्द्रस्त्वं खड्गपाणिर्महाबलः ॥ अनाथं मण्डपं त्वं हि धर्मतस्त्रातुमर्हसि ॥ ३४ ॥ वारिराट् ध्वजहस्तोऽसि पवनो मृगवाहनः ॥ अनाथं मण्डपं त्वं हि धर्मतस्त्रातुमर्हसि ॥ ३५ ॥ धनाध्यक्षो गदाहस्तः पिंगाक्षो नरवाहनः ॥ अनाथं मण्डपं त्वं हि धर्मतस्त्रातुमर्हसि ॥ ३६ ॥ आदिदेवोसि देवानां कर्ता हर्ता महेश्वरः ॥ अनाथं मण्डपं त्वं हि धर्मतस्त्रातुमर्हसि ॥ ३७ ॥ अनंतो नागराजो यो धरामुद्धृत्य तिष्ठति ॥ अनाथं मण्डपं त्वं हि धर्मतस्त्रातुमर्हसि ॥ ३८ ॥ चतुर्णामेव वर्णानां स्थित्यर्थं मृगपक्षिणाम् ॥ प्रीतये वासुदेवस्य एवं मण्डपमुत्सृजेत् ॥ ३९ ॥ भग्ने स्तम्भे तृणे जीर्णे पुनस्तृणप्रदापने ॥ स्थापने च तथैवास्य प्रतिष्ठा स्याद्यथाक्षया ॥ ४० ॥ घातापायादिदोषेण म्रियंते यदि जन्तवः ॥ प्रतिष्ठायां कृतायां तु धर्मो मे स्यान्न पातकम् ॥ ४१ ॥ मानुषाः पशवो ये च निवसन्तीह मण्डपे ॥ स्वस्ति चास्तु सदा तेषां त्वत्प्रसादात्किल प्रभो ॥ ४२ ॥ ततस्त्रिगुणसूत्रेण सुत्रामाणेति वै ऋचा ॥ सप्तधा वेष्टयित्वा तु दक्षिणां संप्रकाश्य च ॥ ४३ ॥ उपानहौ तथा छत्रमाचार्याय निवेदयेत् ॥ मण्डपे भोजयेद्विप्रांस्तेषां दद्याद्यथेप्सितान् ॥ ॥ ४४ ॥ दीनेभ्यश्च पृथग्दद्याद्गृहं विप्रपुरःसरम् ॥ प्रविशेत्तूर्यघोषेण प्रकुर्याच्च गृहार्चनम् ॥ ४५ ॥ एवं प्रपायां विज्ञेयो विशेषो वरुणं यजेत् ॥ वासुदेवेन सहितं सांगोपांगं सदक्षिणम् ॥ ४६ ॥ स्थालीपाकविधानेन प्रकुर्याद्देशिकोत्तमः ॥ आचार्याय गृहं दद्यात्परिच्छदसमन्वितम् ॥ ४७ ॥ ऋत्विजे ताम्रपात्रं च जलपूर्णं च धान्यकम् ॥ दिक्पालान्द्वारदेशे तु कूपयागे विशेषतः ॥ ४८ ॥ ब्रह्माणं नागराजानं द्वारपालौ च पश्चिमे ॥ यजेन्मन्त्रैः पृथग्देवान्मन्त्रैरेभिर्यथाक्रमम् ॥ ४९ ॥ बलिदानं विधानेन कृत्वा दद्याद्यथाविधि ॥ पताकानामतस्तत्त्वं प्रवक्ष्यामि यथाक्रमम् ॥ ५० ॥ वज्री च धूमली कृष्णा पीता चैवाथ वारुणी ॥ शीघ्रा गौरी उमा चैव पीता शुक्ला प्रकीर्तिता ॥५१॥ कुंभेषु पूजयेद्देवान्महेशं प्रथमं बुधः ॥ ग्रहांश्च मध्यकलशे ब्रह्माणं च ततः परम् ॥ ५२ ॥ वेदिकापूर्वभागे तु उत्तरे कलशे शिवम् ॥ दक्षिणे कलशे विष्णुं कर्णिकायां जलेश्वरम् ॥ ५३ ॥ कलशे विधिवद्भक्त्या उपचारैः पृथग्विधैः ॥ संपूज्य वटपत्रे च नागान्संलिख्य नागजैः ॥ ५४ ॥ येनागास्तान्प्रवक्ष्यामि अनंतो वासुकिस्तथा ॥ तथा कर्कोटकश्चैव पद्मश्च कुलिकस्तथा ॥ पद्मश्चैव महापद्मो मन्त्रैरेभिः पृथक्पृथक् ॥ ५५ ॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुंडरीकदलाभास शुभकर्णांतलोचन ॥ फणासहस्रसंयुक्त शंखाब्जकृतलोचन ॥ ५६ ॥ अनंत नागराजेन्द्र इहागच्छ नमोऽस्तु ते ॥ सित कुंदेन्दुवर्णाभ विस्फुरद्भोगमंडल ॥ ५७ ॥ सर्वनागस्य शूरस्य कृतस्वस्तिकलांछन ॥ नागेन्द्र तक्षक श्रीमन्निहागच्छ नमोस्तु ते ॥ ५८ ॥ नवीनजलदश्याम श्रीमन्कमललोचन ॥ विषदर्पबलोन्मत्त ग्रीवायामेकशेखर ॥ ५९ ॥ शंखपाल इति ख्यात जलाधारप्रतीक्षक ॥ अध्यक्षे नागलोकानामिहागच्छ नमोऽस्तु ते ॥ ६० ॥ अतिपीत सुवर्णाभ चन्द्रार्धांकितमस्तक ॥ दीप्तभोगकृताटोप शुभलक्षणलक्षित ॥ ६१ ॥ कुलीर नागराजेंद्र सर्वसत्त्वहिते रत ॥ तिष्ठेह यज्ञसिद्ध्यर्थं कामरूप नमोस्तु ते ॥ ६२॥ यः सुवर्णेन वर्णेन पद्मपत्रायतेक्षणः ॥ पंच बिंदुकृताभोगो ग्रीवायामेकशेखरः ॥ तस्मै ते पद्मनागेन्द्र तीव्ररूप नमोऽस्तु ते ॥ ६३ ॥ नागिन्यो नागकन्याश्च तथा नागकुमारकाः ॥ सर्वे ते प्रीतमनसः पूजां गृह्णंतु मे सदा ॥ ६४ ॥ स्वगृह्योक्तेन विधिना कृत्वाग्निस्थापनं बुधः ॥ आज्यं संस्कृत्य जुहुयाद्दिगीशानां यथाक्रमम् ॥ ६५ ॥ आदित्यादिग्रहांश्चैव ब्रह्माणं कृष्णमेव च ॥ मधुपिष्टेन च शिवं वरुणं जुहुयात्ततः ॥ ६६ ॥ प्रादेशमात्रं संप्रोक्ष्य यूपं चास्य प्रमाणकम् ॥ चतुरस्रं शूलयुक्तं गणानानीय पूजयेत् ॥ ६७ ॥ कूपे निक्षिप्य तान्नागान्पञ्चरत्नं क्षिपेत्ततः ॥ सुत्रामाणेति मंत्रेण त्रिधा संवेष्टय सूत्रकैः ॥ ६८ ॥ रञ्जितैः कदलीवृक्षं वरुणाय समुत्सृजेत् ॥ त्रातारमिति मंत्रेण वस्त्रमाल्येन भूषयेत् ॥ कर्णवेधं ततः कृत्वा उत्सृजेद्वाक्यमुच्चरन् ॥ ६९ ॥ ( ॐ अद्येत्यादि सर्वभूतेभ्यः फलपुष्पपत्रच्छायावृतमुख्यनानातरुविरचितमारामं वनस्पतिदैवतं सुपूजितं वेदव्यासाद्युक्तफलावाप्तये अमुकऋषिसगोत्रः श्र्यमुकदेव शर्माहमुत्सृजे ॥) महोत्सवं ततः कुर्यात्कृत्वा बद्धाञ्जलिः पठेत् ॥ वृक्षाग्रात्पतितस्यापि आरोहात्पतितस्य वा ॥ ७० ॥ मरणे चास्थिभंगे वा कर्ता पापैर्न लिप्यते ॥ वज्रावातादिदोषेण म्रियंते तरवो यदा ॥ ७१ ॥ तद्दोशमनार्थाय तस्याप्येतत्प्रतिष्ठितम् ॥ मध्ये यूपं समारोप्य चतुष्कोणेपि यत्नतः ॥ ७२ ॥ मधुलाजाक्षतं दद्यादञ्जनं माल्यमेव च ॥ निशासूत्रेण संवेष्टय कदलीविटपं न्यसेत् ॥ ७३ ॥ वेष्टयेत्क्षीरधारां च पातयेद्घृतधारया ॥ तोयान्वितं गुच्छयुक्तं वेष्टयेत्स्वगृहं व्रजेत् ॥ ७४ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे द्वितीयोऽध्यायः ॥ ॥ २ ॥ ॥ ७ ॥ ॥ सूत उवाच ॥ ॥ क्षुद्रारामप्रतिष्ठां च वक्ष्ये वै द्विजसत्तमाः ॥ अमंडले शुभे स्थाने द्विहस्तेऽप्यथ स्थंडिले ॥ १ ॥ स्थापयेत्कलशं तत्र विष्णुं सोमं समर्चयेत् ॥ आचार्यमात्रं वरयेन्निशासूत्रैः प्रवेष्टयेत् ॥ २ ॥ वृक्षान्माल्यैरलंकृत्य भूषयेद्धूपणादिना ॥ दोहदं च ततो दद्यात्स्थापयेच्छतधारया ॥ ३ ॥ भोजयेत्पञ्च विप्रान्हि पुरतस्तं विशेषयेत् ॥ कर्णवेधं ततः कृत्वा उत्सृजेद्वाक्यपूर्वकम् ॥ ४ ॥ दद्यद्यूपं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मध्यदेशे रोपयेत्कदलीं ततः ॥ रंभाश्च रोपयेद्दिक्षु स्थालीपाकविधानतः ॥ ५ ॥ अष्टावष्टौ च जुहुयादन्येषां च घृतेन तु ॥ एकैकामाहुतिं दद्यात्स्विष्टकृत्तदनंतरम् ॥ ६ ॥ दक्षिणां च ततो दद्यात्पूर्णां दत्त्वाहुतिं व्रजेत् ॥७॥ एकादिवृक्षं वृक्षाणां विधिं वक्ष्ये द्विजोत्तमाः ॥ समुत्सृज्य ततो यूपं कर्मणा सह धर्मवित् ॥ ८ ॥ वृक्षमूले यजेद्धर्मं पृथिवीं च विशं तथा ॥ दिगीशांश्च तथा यक्षानाचार्यं तोषयेत्ततः ॥ ९ ॥ धेनुं च दक्षिणां दद्यादोहदं वृक्षपूजनम् ॥ कृत्वा सम्यग्विधानेन सवित्रेऽर्घ्यं निवेदयेत् ॥ १० ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे तृतीयोऽध्यायः ॥३॥ ॥छ॥ ॥ सूत उवाच ॥ ॥ अथाश्वत्थप्रतिष्ठायां मूले बाहुप्रमाणके ॥ स्थंडिलं कारयेत्तत्र चंदनेनोक्षितं तथा ॥१॥ पद्मं प्रकल्पयेत्तत्र सामान्यार्घ्यं विधाय च ॥ पूर्वेद्यू रात्रिसमये तद्विष्णोरिति वै ऋचा ॥२॥ स्थापयेद्द्वारिणा पूर्णं कया नेति च गन्धकम् ॥ गंधद्वारेति तैलेन श्रीश्चेति च चन्दनम् ॥ ३ ॥ दद्याद्दूर्वाक्षतं कल्पे ब्राह्मणत्रयभोजनम् ॥ कारयेत्सितसूत्रैश्च वेष्टयेच्चन्दनोक्षितैः ॥४॥ कुंभे विनायकं पूज्य ब्रह्माणं च परे घटे ॥ स्वदिक्षु दिक्पतींश्चैव वृक्षमूले नवग्रहान् ॥५॥ मंडले शिवमभ्यर्च्य पीठपूजापुरःसरम् ॥ अथ ध्यानं प्रवक्ष्यामि श्वेतं वृषभमेव च ॥ ६ ॥ द्विभुजं शूलहस्तं च सर्वाभरणसंयुतम्॥आरोपयेत्स्वसामर्थ्याद्भूतशुद्धिं समाचरेत् ॥७॥ ततोर्घ्यपात्रं कृत्वा तु पीठपूजां समाचरेत्॥गणेशं गुरुपादं च जयं भद्रं समाहितः॥८॥मध्ये आधारशक्तिं च कूर्मानंतौ सपद्मकौ॥चन्द्रसूर्याग्निकादीनां मंडलानि क्रमाद्यजेत्॥९॥पुनः पात्रांतरस्थं च गृहीत्वा कुसुमं बुधः ॥ पाणिकच्छपिकां कृत्वा ध्यायेद्वै वरुणं तथा ॥१०॥पूर्ववच्च विधानेन दद्यात्पात्रादिकं त्रयम् ॥ मधुपर्कं चासनं च पृच्छेच्च स्वागतं पुनः ॥ ११ ॥ मुद्रां प्रदर्श्य विधिवदंगपूजां समाचरेत् ॥ पूर्वादिपत्रे इन्द्रादीन्ब्रह्माणं मध्यतो यजेत् ॥ १२ ॥ अनंतं पुरतश्चैव तेषामस्त्राणि तद्बहिः ॥ मध्ये तोयाधिपं रुद्रं शांतं चैव प्रशांतकम् ॥ १३ ॥ भूस्तत्त्वं च भुवस्तत्वं स्वस्तत्त्वादि च तत्त्वकम् ॥ कामं धर्ममधर्मं च दिक्षु नारायणं शिवम् ॥ १४ ॥ ॥ नैर्ऋते च यजेद्दुर्गां पार्श्वयोश्च शतक्रतुम् ॥ विनायकं च विष्णुं च गङ्गां पृथिविषष्टिकम् ॥ १५ ॥ षोडशेनोपचारेण पूजयेच्च विशेषतः ॥ मंडलस्योत्तरे भागे नागरूपमनंतकम् ॥ १६ ॥ पंचकृष्णालकैः कुर्याद्बृहत्पर्वप्रमाणकम् ॥ आरोपयेच्चाक्षताद्यैः श्वेतचन्दनपुष्पकैः ॥ १७ ॥ पूजयेत्परया भक्त्या अग्निकार्यमथाचरेत् ॥ वरुणं जुहुयात्पूर्वं मधुना पायसेन वा ॥ १८ ॥ तिलाक्षतैर्वा आज्यैर्वा त्रिमध्वक्तैरथापि वा ॥ अष्टोत्तरशतं कुर्याद्दिगीशानां घृतेन तु ॥१९॥ एकैकामाहुतिं दद्यात्पुष्पैस्तिलघृतेन च ॥ नारायणं शिवं दुर्गां गणेशं च ग्रहान्निशि॥ ॥ २० ॥ अष्टावष्टौ च जुहुयाद्धृतैरेकाहुतिर्भवेत् ॥ ब्रह्मयुध्वानमितिमंत्रेण ब्रह्माणं पायसेन तु ॥२१॥ एकाहुतिं ततो दद्यादापोहिष्ठेति वा त्रिभिः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततो वरुणमुद्दिश्य दद्यादाज्याहुतित्रयम् ॥ २२ ॥ इमं वरुण इति वा तद्धरोमा ऋचा पुनः ॥ वरुणस्योत्तंभनमसीति येनापावक एव च ॥ २३ ॥ वातस्ययमिति पुनः पञ्चवर्णं यथाक्रमात् ॥ ततो वरुणमुद्दिश्य घृतेन च गुडैः सह ॥ २४ ॥ ततः स्विष्टकृते दद्याद्बलिं दद्यादनुक्रमात् ॥ मध्वाज्यपायसं दद्याद्वरुणाय विशेषतः ॥२५॥ यवक्षीरं दिगीशेभ्यो ह्यन्येभ्यः पायसेन तु ॥ नागाय पिष्टकं दद्याल्लाजाहोमाष्टकं पुनः॥ २६ ॥ अनंतस्योत्तरे तीरे पद्मपत्रं परिस्तरेत् ॥ अष्टाष्टापदमानेन वरुणं राजतेन तु ॥ २७ ॥ कुर्यात्पूर्वद्वयेनापि बाणरत्तिसुवर्णकैः ॥ कुर्यात्पुष्करिणीं तत्र पूर्वार्धे चतुरस्रके ॥ २८ ॥ वरुणं विन्यसेत्तत्र तथा पुष्करिणीमपि ॥ विधिवद्वाक्यपूर्वेण उत्सृजेच्च जलेशयम् ॥ २९ ॥ ॐ अद्येत्यादि विष्णुरूपाय वरुणाय श्रुतिस्मृत्याद्युक्तवेदव्यासप्रणीताग्निष्टोमफलप्राप्तये पुष्कारिणीप्रतिष्ठाकर्मणि इमां पुष्करिणीं सुवर्णराजतां स्वगृह्योदितां सालंकारां सुपूजिताममुकगोत्रः श्र्यमुकदेवशर्मा तुभ्यमहं संप्रददे ॥ इत्युत्सर्गवाक्यम् ॥ ॐ अद्येत्यादि ब्राह्मणमुख्येभ्यः ममाग्निष्टोमाद्यनेकफलप्राप्तये इमं जलाशयं वरुणदेवतं सुपूजितं चतुर्मुखसहितं चतुःसत्त्वावच्छिन्नस्नानपानाद्युपभोगाय अमुकसगोत्रः श्र्यमुकदेवशर्माहमुत्सृजे ॥ ) ततो नौकां समादाय मध्यात्किंचित्तथोत्तरे ॥ जलाशयस्य मध्यं तु ऋत्विग्घोमं चरेत्ततः ॥ ३० ॥ पूर्वावस्थायिनीं यष्टिं समारोप्य विधानतः ॥ ततो वरुणसूक्तेन वरुणं राजतोद्भवम् ॥ पुष्करिण्या समं तेन नागयष्ट्यंतरे क्षिपेत् ॥ ३१ ॥ तत्रैवानंतनागं च मंत्रमेतदुदीरयेत् ॥ पुंडरीकदलाभास शुभ्रकांतलोचन ॥ फणासहस्रसंयुक्त सुप्रतिष्ठ नमोऽस्तु ते ॥ ३२ ॥ दक्षिणां च ततो दद्यात्ततः पूर्णां विधाय च ॥ मोचयेन्मकरान्ग्राहान्मीनकूर्मांश्च लेचरान् ॥ ३३ ॥ पद्मोत्पलं च शैवालं मंत्रमेव प्रयत्नतः ॥ पुष्करिण्यां च त्रिः कुर्यात्खातं सर्वप्रदक्षिणाम् ॥ ३४ ॥ आदित्याध्यायकं जप्त्वा क्षिपेल्लाजकपर्दकान् ॥ पातयेत्क्षीरधारां च सहस्रेण शतेन च ॥ ३५ ॥ सूत्रेण वेष्टयेत्प्राज्ञो रक्तेन च चतुष्क्रमात् ॥ पथि संतोपयेद्दीनान्संतोष्य च गृहं व्रजेत् ॥ ३६ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे चतुर्थोऽध्यायः ॥ ४ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ नलिन्याश्च तथा वाप्या ह्रदस्य द्विजसत्तमाः ॥ विधिं वक्ष्ये सहाङ्गेन विधानं शृणुत द्विजाः ॥ १ ॥ स्वर्णपादेन मानेन पूर्वेद्युरधिवासयेत् ॥ आपोहिष्ठेति मन्त्रेण तथा अब्जैः शतैरपि ॥ २ ॥ स्वमण्डले शुभे स्थाने विशेत्पूर्वमुखेन तु ॥ गणेशं वरुणं चैव घटे संपूजयेच्छिवम् ॥ ३ ॥ वागीशं च तथा विष्णुं सूर्यं कुंभे समर्चयेत् ॥ पायसेनाहुतिं दद्याद्वरुणाय घृतेन च ॥ ४ ॥ एकैकामाहुतिं दद्यादन्येषां च सुवेण च ॥ बलिदानं पायसेन उत्सृजेत्तदनंतरम् ॥ ५ ॥ यूपं निवेशयेत्पश्चाद्दद्याद्धेनुं च दक्षिणाम् ॥ पूर्णां दद्यात्सवित्रेऽर्घ्यं दत्त्वा तु



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वगृहं व्रजेत् ॥ ६ ॥ आरामस्य विधिं वक्ष्ये प्रतिष्ठाविधिविस्तरम् ॥ हीनारामस्य च तथा एक वृक्षस्य च द्विजाः ॥ ७ ॥ अरण्यमध्ये पाश्चात्त्ये उत्तरे वा विशेषतः ॥ मंडपं वर्तुलं कुर्यादर्घ्यहस्तप्रमाणकम् ॥ ८ ॥ तद्दक्षिणे भवेत्कुंडं चतुरस्रं समं शुभम् ॥ चतुर्मुखं च कर्तव्यं तोरणाद्यैरलं कृतम् ॥ ९ ॥ मंदरादिकमावाह्य ततः संपूजयेत्क्रमात् ॥ विष्वक्सेनं च तत्रैव पूजयेद्गन्धचन्दनैः ॥ १० ॥ भृगुं कर्णसमारूढं सर्वभूषणभूषितम् ॥ विष्वक्सेनस्य मंत्रोयं पूजायां चैव सर्वतः ॥ ११ ॥ द्वारपालं च संपूर्णं गौर्यादीन्कलशेषु च ॥ स्वासु दिक्षु दिगीशानां बलिपुष्पाक्षतादिना ॥ १२ ॥ नैर्ऋत्यवरुणयोर्मध्ये अनंतं प्रतिपूजयेत् ॥ इन्द्रेशानयोश्च मध्ये ब्रह्माणं च प्रकल्पयेत् ॥ १३ ॥ वेदिपार्श्वे ततो गत्वा वेदिमावाह्य पूजयेत् ॥ आसनं कल्पयित्वा तु सामान्यार्घ्यं विधाय च ॥ १४ ॥ ऐशाने कलशे विद्युद्ब्रह्माणं च तथा ग्रहान् ॥ स्वैःस्वैर्मंत्रैर्गंधपुष्पैर्नैवेद्यैश्च पृथग्विधैः ॥ १५ ॥ मंडलेशं वासुदेवं सासनं च बृहस्पतिम् ॥ पूजयेत्परया भक्त्या पायसान्नं बलिं हरेत् ॥ १६ ॥ द्विभुजं वासुदेवं च शंख चक्रधरं विभुम् ॥ पद्मासनगतं ध्यायेत्पीतवस्त्रं सुशोभनम् ॥ १७ ॥ नीलोत्पलदलाभासं हरिचंदनचर्चितम् ॥ देवर्षिसिद्धसहितं कलत्रद्वय संयुतम् ॥ १८ ॥ ध्यात्वा आरोपयेदेवं बालादीनथ नायकान् ॥ विमलाद्या नायिकाश्च दिगीशांश्च यथाविधि ॥ १९ ॥ षोडशोचैः पृथग्रूपैः प्रतिपुष्पांजलिक्रमात् ॥ परितः पूजयेद्विष्णुं शिवं दुर्गां सरस्वतीम् ॥ २० ॥ शुद्धस्फटिकसंकाशं ध्यायेत्सोमं चतुर्मुखम् ॥ अश्वारूढं दिव्य रूपं पद्माक्षं धृतपुष्पकम् ॥ २१ ॥ वरदं देवगंधर्वैः सेवितं मुनिभिः स्तुतम् ॥ श्वेतं वनस्पतिं ध्यायेद्विभुजं पीतवाससम् ॥ २२ ॥ स्वरथ स्थं महाबाहुं शंखांकुशसखेटकम् ॥ विद्यां च वामतो ध्यायेत्स्वमन्त्रेण च स्थापयेत् ॥ २३ ॥ दशस्वरान्वितं तोयं स्वभावं तमसान्वितम् ॥ मंत्रोऽयं देवदेवस्य पूजायां विनियोजयेत् ॥२४॥ नीलं जयं भृंगिणं च परितश्च यथाक्रमात् ॥ ततः कुशकंडिकां कृत्वा स्थालीपाकं विधानतः॥ ॥ २५ ॥ अष्टोत्तरशतं चैव सोमाय द्वादशाहुतीः ॥ वानस्पतेस्तथाष्टौ च आज्येन्येषां विधीयताम् ॥ २६ ॥ एकैकामाहुतिं दद्यात्सप्तजिह्वामनं तरम् ॥ वास्तोष्पतय इति मंत्रेण स्थालीपाकद्वयं नयेत् ॥ २७ ॥ वनस्पतिं समुद्दिश्य ततोयमीरयेदृचम् ॥ वृक्षादीन्स्थापयेत्पूर्वं गायत्र्या प्रथमं बुधः ॥ २८ ॥ अब्जैरग्रं कांस्यवस्त्रं रत्नं दिक्षु यथाक्रमम् ॥ व्रीहयश्चेति मंत्रेण तथा च सरितश्च मे ॥ २९ ॥ मित्रत्रयश्चेति तथा पूषा च म ऋचा तथा ॥ संस्थाप्य व्रीहीन्संवाप्य तत्रैव विधिपूर्वकम् ॥ ३० ॥ क्षिपेद्गङ्गाजलं तोये सर्वौषध्युदकेन च ॥ संस्थाप्य यजमानं च सुरास्त्वा मिति मन्त्रैकैः ॥ ३१ ॥ आचार्यमात्मने तत्र संस्थितं द्विजपुंगवैः ॥ समाप्य नित्यविधिनाचार्यायाथ च दक्षिणाम् ॥ ३२ ॥ धेनुं च लोह



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पात्रं च दत्त्वा इष्टां च दक्षिणाम् ॥ ब्राह्मणेभ्यो यथाशक्ति दद्यात्पूर्णां गृहं व्रजेत् ॥ २३ ॥ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे पंचमोऽध्यायः ॥ ५ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ क्षुद्रारामप्रतिष्ठां च वक्ष्ये च द्विजसत्तम ॥ अमंडले शुभे स्थाने द्विहस्तमयस्थंडिले ॥ १ ॥ स्थापयेत्कलशं तत्र सोमं विष्णुं समर्चयेत् ॥ आचार्यमात्रं वरयेत्त्रिशासूत्रैः प्रवेष्टयेत् ॥ २ ॥ वृक्षान्माल्यैरलंकृत्य भूषयेद्भूषणादिना ॥ दोहदं च ततो दद्यात्स्थापयेच्छितधारया ॥ ३ ॥ भोजयेत्पंच विप्रांश्च पुरतोऽन्ते विशेषतः ॥ कर्णवेधं ततः कृत्वा उत्सृजेद्वाक्यपूर्वकम् ॥ ॥ ४ ॥ दद्याद्यूपं मध्यदेशे रोपयेत्कदलीं ततः ॥ रंभां च रोपयेद्दिक्षु स्थालीपाकविधानतः ॥ ५ ॥ अष्टावष्टौ च जुहुयादन्येषां च घृतेन तु ॥ एकैकामाहुतिं दद्यात्स्विष्टकृत्तदनंतरम् ॥ ६ ॥ दक्षिणां च ततो दद्यात्पूर्णां दद्याद्गृहं व्रजेत ॥ ७ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागेषष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ एकादिवरवृक्षाणां विधिं वक्ष्ये द्विजोत्तमाः ॥ वृक्षस्य पश्चिमे भागे स्थापयेत्कलशं ततः ॥ १ ॥ वृक्षं संस्थापयेत्पूर्वं सूत्रेण परिवेष्टयेत् ॥ ब्रह्माणं कलशेभ्यश्च सोमं विष्णुं वनस्पतिम् ॥ २ ॥ ततस्तिलयवैर्होमानष्टाष्टौ विधिवच्चरेत् ॥ समुत्सृज्य ततो यूपं कदल्या सह धर्मवित् ॥ ३ ॥ वृक्षमूले यजेद्धर्मं पृथिवीं च विशं तथा ॥ दिगीशांश्च तथा यक्षान्नाचार्यं तोषयेत्ततः ॥ ४ ॥ धेनुं च दक्षिणां दद्याद्दोहदं वृक्षपूजनम् ॥ कृत्वा सम्यग्विधानेन सवित्रेऽर्घ्यं निवेदयेत् ॥ ५ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे सप्तमोऽध्यायः ॥ ७ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ अथाश्वत्थप्रतिष्ठायां मूले बाहुप्रमाणकम् ॥ स्थंडिलं कारयेत्तत्र चंदनेनाङ्कितं यथा ॥ १ ॥ पद्मं प्रकल्पयेत्तत्र सामान्यार्घ्यं विधाय च ॥ पूर्वेद्यू रात्रिसमये तद्विष्णोरिति वै ऋचा ॥ २ ॥ स्थापयेद्धारिणा पूर्णं कया नेति च गंधकम् ॥ गंधद्वारेति तैलेन श्रीश्च तेति च चंदनम् ॥ ३ ॥ दद्याद्दूर्वाक्षतं कल्ये ब्राह्मणत्रयभोजनम् ॥ कारयेत्सितसूत्रैश्च वेष्टयेच्चंदनस्य च ॥ ४ ॥ कुम्भे विनायकं पूज्य ब्रह्माणं च परे घटे ॥ स्वदिक्षु दिक्पतींश्चापि वृक्षमूले नवग्रहान् ॥ ५ ॥ मंडले शिवमभ्यर्च्य पीठपूजापुरःसरम् ॥ पूर्वे चंडं प्रचंडं च दक्षिणे नंदिभृंगिणौ ॥६॥ अनंतं पश्चिमे काममुत्तरे गणनायकम् ॥ कार्तिकेयं मध्यदेश आधारशक्तिपूर्वकम् ॥७॥ अनंतं पृथिवीं चैव त्रिवृत्तं च त्रिमंडलम् ॥ अथ ध्यानं प्रवक्ष्यामि श्वेतं वृषभमेव च ॥ ८ ॥ द्विभुजं शूलहस्तं च सर्वाभरणसंयुतम् ॥ अरोपयेत्स्वतंत्रेण मूले विष्णुं समर्चयेत ॥९॥ शंकरं च तथा मध्ये अग्रे ब्रह्माणकं यजेत् ॥ बलिं च पिष्टकान्नं च दत्त्वा च श्रपयेच्चरुम् ॥१०॥ जुहुयाद्रुद्रमुद्दिश्य रुद्रसंख्याहुतिं क्रमात् ॥ अन्येषां च स्रुवेणैव होमं दद्यात्प्रयत्नतः ॥ ११ ॥ रोपयेत्कदलीवृक्षमाचार्यं परितोषयेत् ॥ कृत्वा पूर्णां पंचधारां कृत्वा चापि प्रद

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षिणाम् ॥ १२ ॥ क्षीरधारां च संपाद्य अर्घ्यं दत्त्वा गृहं व्रजेत् ॥ १३ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागेऽष्टमोऽध्यायः ॥ ॥ ८ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ वटस्थानमथो वक्ष्ये तस्य मूले तु दक्षिणे ॥ त्रिहस्तवेदिमुपरि स्थापयेत्कलशत्रयम् ॥ १ ॥ गणेशं च शिवं विष्णुं पूजयित्वा हुनेच्चरुम् ॥ रक्तसूत्रैस्त्रिगुणितैः स्वर्णमेव पुरःसरम् ॥ २ ॥ यवक्षीरबलिं दद्यादुत्सृजेद्वाक्यमुच्चरन् ॥ यूपमारोपयेत्पश्चाद्वट मूलैः समर्पयेत् ॥ ३ ॥ यक्षान्नागांश्च गंधर्वान्सिद्धांश्चैव मरुद्गणान् ॥ ४ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे नवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ वक्ष्ये बिल्वप्रतिष्ठां च पूर्वेद्युरधिवासयेत् ॥ त्र्यंबकं चेति मंत्रेण स्थापयेद्गंधवारिणा ॥ १ ॥ सुनाभेति च मंत्रेण मे गृह्णामीति चाक्षतम् ॥ कयानेति ततो धूपं वस्त्रं माल्यं निवेदयेत् ॥ २ ॥ यजेद्रुद्रं ततो देवं मध्ये दुर्गां धनेश्वरम् ॥ ततः कल्ये समुत्थाय नित्यं निर्वर्त्य शास्त्रतः ॥ ३ ॥ स्वगृहे सप्त विप्रांश्च भोजयेद्द्विजदंपती ॥ मूले हस्तद्वयं दत्त्वा वर्तुला वेदिका भवेत् ॥ ॥ ४ ॥ तत्र गैरिकयुक्तेन कुसुंभचूर्णके न वा ॥ निशारक्तेन वा कुर्यादष्टपत्रं सुशोभनम् ॥ ५ ॥ निवेष्टनं ततः कुर्याद्वृक्षस्य द्विजसत्तमाः ॥ रक्तसूत्रैर्वेष्टयेच्च पंचसप्तनवभिस्तु ॥ ६ ॥ व्रीहींश्च वापयेत्तत्र उत्तराभिमुखस्तथा ॥ शिवं विष्णुं च ब्रह्माणं पूजयेद्भूतिमिच्छता ॥ ७ ॥ शिवं च नायकं कुर्यादादित्यान्पत्रमूलके ॥ शेषं च तरुमूले तु मध्येऽनंतं शतक्रतुम् ॥ ८ ॥ वनपालं च सोमं च सूर्यं पृथ्वीमनुक्रमात् ॥ होमस्तिलाक्षतैः कार्यो बलिं दद्याद्घृतौदनैः ॥ ९ ॥ यक्षेभ्यो माषभक्तं च वायनानि च द्वादश ॥ ग्रहाणां प्रीतये दद्यात्क्षीरेणावेष्ट्य दक्षिणाम् ॥ १० ॥ कांचनं कांस्यपात्रं च तांबूलं ताम्रपात्रकम् ॥ यूपारोपं कर्णवेधं सवित्रेऽर्घ्यं निवेदयेत् ॥ ११ ॥ अथ रात्रिप्रतिष्ठां च वक्ष्ये शास्त्रानुसारतः ॥ यक्षैकवृक्षसंस्कारे न पुनर्जायते भुवि ॥ १२ ॥ पूर्वेद्युरुपवाहे तु वृक्षमूले घटं न्यसेत् ॥ विष्णुं शिवं गणेशं च पूजयित्वा तु स्थापयेत् ॥ १३ ॥ कलशान्पञ्च वा सप्त गंधतैलैरलंकृतान् ॥ दुग्धेन पंचगव्येन शंखतोयेन यत्नतः ॥१४॥ सूत्रैः संवेष्टनं कृत्वा वस्त्रमाल्यैरनंतरम् ॥ कांडादिति च मंत्रेण दद्याद्दूर्वाक्षतं ततः ॥ १५ ॥ विष्णुसूक्तेन च पुनः सिंदूरांजनचंदनम् ॥ दद्यात्फलं च दीपं च स्वयं तत्र स्वपेत्ततः ॥ १६ ॥ ततः प्रभाते विमले ब्राह्मणान्सप्त भोजयेत् ॥ पूर्ववत्कलशं कृत्वा शिवं विष्णुं गणाधिपम् ॥ १७ ॥ सोमं वनस्पतिं चैव एककुम्भे समर्च्चयेत् ॥ हुनेत्पंचाहुतीस्तत्र यूपं दद्यात्समुत्सृजेत् ॥ १८ ॥ बलिं च पायसेनैव प्रकुर्यात्कर्णवेधनम् ॥ वेष्टयेत्क्षीरतोयेन धान्यं धेनुं च दक्षिणाम् ॥१९॥ दद्यादर्घ्यं हुनेत्पूर्णं भोजयेद्द्विजदंपती ॥ २० ॥ ॥ इतिश्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे दशमोऽध्यायः ॥ १० ॥ छ ॥ ॥ सूत उवाच ॥ ॥ शत





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हस्तमितां मुष्टिं नानातरुविभूषिताम् ॥ पूगाम्रादिफलैर्युक्तं वास्तुं कृत्वा यजेत्तु यः ॥ १ ॥ षष्टिवर्षसहस्राणि स्वर्गलोके वसेच्चिरम् ॥ तद्विधानं प्रवक्ष्यामि यथाशास्त्रानुसारतः ॥ २ ॥ नित्यं निर्वर्त्य विधिवत्पंच विप्रान्समर्चयेत् ॥ भोजयेत्पूजयेद्विष्णुं प्रजापतिसमन्वितम् ॥ ३ ॥ अग्निकार्यं ततः कृत्वा दद्याद्विप्राय दक्षिणाम् ॥ ४ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभाग एकादशोऽध्यायः ॥ ११ ॥ छ ॥ ॥ ॥ सूत उवाच ॥ ॥ प्रतिष्ठां मंडपस्यैव शैलदारुमयस्य च ॥ तृणकाष्ठस्य च विभो तृणवत्तस्य च द्विजाः ॥ १ ॥ अधिवासस्य पूर्वेद्युः शुभे लग्ने घटं न्यसेत् ॥ सूर्यं सोमं तथा विष्णुं कलशे तु समर्चयेत् ॥ २ ॥ प्रोक्षयेत्कुशतोयेन आपोहिष्ठेति वै ऋचा ॥ आप्यायस्वेति गंधेन गंधद्वारेति गंधकम् ॥ ३ ॥ आकृष्णेनेति तैलेन श्रीश्च ते इति चंदनम् ॥ सिंदूरालक्तकं दद्यादंजनं पूर्वया सह ॥ ४ ॥ ततः प्रभाते विमले श्राद्धं वृद्ध्यात्मकं चरेत् ॥ दिक्पालांश्चैव विन्यस्य मंडपे शुभलक्षणे ॥ ५ ॥ मध्ये वेद्यंतरे चैव राजभिर्मंडलं लिखेत् ॥ सूर्यमावाहयेत्तत्र सोमं विष्णुं च पार्श्वयोः ॥ ६ ॥ गणेशं च ग्रहांश्चैव दिक्पालांश्च घटेऽर्चयेत् ॥ पायसं जुहुयादग्नावष्टोत्तरशतं तथा ॥ ७ ॥ आदित्यस्य तथा विष्णोः सोमस्य द्वादशाहुतीः ॥ बलिं च पायसं दद्यात्तैलं क्षीरमथापि वा ॥ ८ ॥ तत उत्सृज्य विधिवद्वाक्यमेतदुदीरयेत् ॥ जानुभ्यामवनिं गत्वा शनैरोष्ठं न चालयेत् ॥ ९ ॥ वास्तोष्पतिं च तत्रैव पूजयेद्गन्धचन्दनैः ॥ अर्घ्यं दद्याच्च विधिवद्धूतेनैवाहुतिं हुनेत् ॥ १० ॥ ( ॐ अद्येत्यादि ब्राह्मणादिसर्वसत्त्वेभ्यो विष्णुप्रीणनार्थमिमं मण्डपं सुपूजितं सूर्यदैवतं शैलेयेष्टकादिभिः सर्वसत्त्वेभ्यो रचितं श्रुतिस्मृत्युक्तफलप्राप्तिकामनया अमुकऋषिसगोत्रः श्र्यमुकदेवशर्माहमुत्सृजे ॥ ) ततः श्वेतघटं दद्यान्मंण्डपोपरि सत्तमाः ॥ त्रिगुणेन निशात्कैर्वा वेष्टयेद्वारिधारया ॥ ॥ ११ ॥ दक्षिणां विधिवद्दद्यात्सूर्यायार्घ्यं निवेदयेत् ॥ तृणवेश्मनि वै सूर्यं वासुदेवसमन्वितम् ॥ १२ ॥ घटे गणेशं वरदं वरं कृत्वा समुत्सृजेत् ॥ ऐशान्यां दापयेद्यूपं ध्वजान्दिक्षु प्रकल्पयेत् ॥ १३ ॥ मण्डपोपरि कलशं संस्थाप्य मन्त्रमुच्चरेत् ॥ प्रपायां वरुणः पूज्यो विश्वकर्मा प्रयत्नतः ॥ १४ ॥ पृथिवीं च गणेशं च पूजयित्वा हुनेद्घृतम् ॥ सर्ववर्ज्यमिदं वाक्यं ध्वजमात्रं विधीयते ॥ १५ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ चतुर्हस्तं महायूपं हस्तषोडशनिर्मितम् ॥ वक्ष्ये तं च प्रतिष्ठां च रात्रौ त्रैरात्रिकं यजेत् ॥ १ ॥ वरुणं सितकुंभे च प्रपाकूपस्य पश्चिमे ॥ गायत्र्या स्नापयेत्पूर्वमापोहिष्ठेति वै क्रमात् ॥ २ ॥ गंधद्वारेति गन्धं च अंशुना चेति तैलकम् ॥ मनोन्ना इति कुसुमं धूरसीति च धूपकम् ॥ ३ ॥ कयानेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दद्देद्वस्त्रं नैवेद्यं दीपचन्दनम् ॥ आदौ श्राद्धं न कर्तव्यं प्रतिष्ठांते विधीयते ॥ ४ ॥ दंपतीभोजनं कुर्याद्वरयेदेकब्राह्मणम् ॥ मंडपे चाष्टहस्ते च कलशं तत्र विन्यसेत् ॥ ५ ॥ पूजयेद्वरुणं देवं नारायणसमन्वितम् ॥ शिवं च पृथिवीं चैव स्वैः स्वैर्मन्त्रैर्यथाक्रमात् ॥ ६ ॥ ततः कुशकंडिकां कृत्वा स्थालीपाकविधानतः ॥ वरुणं च समभ्यर्च्य जुहुयादाहुतीर्दश ॥७॥ अन्येषां च स्रुवेणैव दद्यादेकाहुतिं क्रमात् ॥ वरुणस्योक्तवरुणं तत्त्वा यामि ततः परम् ॥ ८ ॥ वरुणस्योत्तंभनमसीति च आभ्यां देवांस्तथैव च ॥ येनापावकचक्षसा पंचमं समुदाहृतम् ॥ ९ ॥ रात्रस्य यूपमित्यादि परं च दशमस्तकम् ॥ ततः स्विष्टकृतं कृत्वा सप्तजिह्वं चरुं नयेत् ॥१०॥ इह वेत्यादिकं पंच ततः पंचाहुतिं हुनेत् ॥ शंभवे च पृथिव्यै च महा राजाय च क्रमात् ॥११॥ चरुपाकेति नैवेद्यं बलिं चैवागुरूदनम् ॥ शंकराय च रुद्राय शर्वाय पशुपतये इति च ॥ उग्राय असनायेति भवाय तद नंतरम् ॥ १२ ॥ महादेवाय च पुनरीशानायेति च क्रमात् ॥ चरुपाकेति नैवेद्यं बलिं चैवागुरूदनम् ॥ १३ ॥ वाक्यपूर्वं सृजेत्तोयं तत्र वाक्करणं शृणु ॥ १४ ॥ ( ॐ अद्येत्यादि ब्राह्मणादिसर्वसत्त्वेभ्यः अमुकगोत्रस्य मत्पितुरमुकदेवशर्मणः श्रुतिस्मृत्याद्युक्तं कूपप्रतिष्ठाजन्यफलप्राप्तये इमं सुपूजितं सच्छादितं वरुणदैवतममुकसगोत्रः अमुकदेवशर्माहमुत्सृजे ॥ ) दक्षिणां विधिवद्दद्याद्गां च दद्यात्पयस्विनीम् ॥ १५ ॥ मंडपे क्षुद्रकूपे च प्रतिष्ठां शृणुत द्विजाः ॥ गणेशं वरुणं कुंभे विधिवत्पूजयेत्सुधीः ॥ १६ ॥ वेष्टयेद्रक्तसूत्रैश्च दद्याद्यूपं समुत्सृजेत् ॥ दक्षिणां विधिवद्दद्याद्विप्रान्संपूजयेत्ततः ॥ १७ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ सूत उवाच ॥ ॥ पुष्पारामप्रतिष्ठां तु वक्ष्ये शृण्वंतु वै द्विजाः ॥ मध्ये वेदिं त्रिहस्तां च कृत्वा संस्थापयेद्घटम् ॥ १ ॥ अधिवासस्य पूर्वेद्युर्यथावद्विप्रभोजनम् ॥ कृत्वा घटे गणेशं च सूर्यं सोमं हुताशनम् ॥ २ ॥ नारायणं स्थंडिले च जुहुयान्मधुपायसम् ॥ विधिवद्यूपमारोप्य गोधूमान्सेचयेद्गुरौ ॥ ३ ॥ वेष्टयेद्रक्तसूत्रैश्च प्रदद्याच्चेति दक्षिणाम् ॥ एतद्धाराजलेनैव यवान्नं सगुडं पयः ॥ ४ ॥ ऐशान्यां यूपमारोप्य विधिवद्द्विजसत्तमाः ॥ कर्णवेधं समारोप्य स्नापयेत्कुशवारिणा ॥ ५ ॥ धान्यं यवं च गोधूमं दद्याद्विप्राय दक्षिणाम् ॥ शतधारजलेनैव वेष्टयेत्परितो द्विजाः ॥ ६ ॥ ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे चतुर्दशोऽध्यायः ॥ १४ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ ज्येष्ठाषाढे तुलस्याश्च प्रतिष्ठां विधिवच्चरेत् ॥ यजमानः शुद्धदिने एकादश्यामथापि वा ॥ १ ॥ ततो रात्रौ घटं स्थाप्य पूजयेत्परमेश्वरम् ॥ नारायणं शिवं सोमं ब्रह्माणं चेंद्रमेव च ॥ २ ॥ गायत्र्या स्नपनं कुर्यात्तथो क्तैर्मंत्रकैरपि ॥ कयानेति च गंधेन अश्रुनेति च तैलकम् ॥ ३ ॥ त्वां गंधर्वेति च पुनः पुष्पं मंडंशनेति च ॥ मानस्तोकेति कुसुमं श्रीश्चतेति



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कलौ किल ॥ ६ ॥ ममोपदेशतो विप्र सत्यनारायणं भज ॥ दारिद्र्यशोकशमनं संतापहरणं हरेः ॥ चरणं शरणं याहि मोक्षदं पद्मलोचनम्[1] ॥ ॥ ७ ॥ एवं संबोधितो विप्रो हरिणा करुणात्मना ॥ पुनः पप्रच्छ विप्रोसौ सत्यनारायणो हि कः ॥ ८ ॥ ॥ वृद्धब्राह्मण उवाच ॥ ॥ बहु रूपः सत्यसंधः सर्वव्यापी निरञ्जनः ॥ इदानीं विप्ररूपेण तव प्रत्यक्षमागतः ॥ ९ ॥ दुःखोदधिनिमग्नानां तरणिश्चरणौ हरेः ॥ कुशलाः शरणं यांति नेतरे विषयात्मिकाः ॥ १० ॥ आहृत्य पूजासंभारान्हिताय जगतां द्विज ॥ अर्चयंस्तमनुध्यायंस्त्वमेतत्प्रकटी कुरु ॥ ११ ॥ इति ब्रुवंतं विप्रोसौ ददर्श पुरुषोत्तमम् ॥ जलदश्यामलं चारुचतुर्बाहुं गदादिभिः ॥ १२ ॥ पीतांबरं नवांभोजलोचनं स्मितपूर्वकम् ॥ वनमालामधुव्रात चुंबितांघ्रिसरोरुहम् ॥ १३ ॥ निशम्य पुलकांगोसौ प्रेमपूर्णसुलोचनः ॥ स्तुवन्गद्गदया वाचा दंडवत्पतितो भुवि ॥ १४ ॥ प्रणमामि जग न्नाथं जगत्कारणकारकम् ॥ अनाथनाथं शिवदं शरण्यमनघं शुचिम् ॥ १५ ॥ अव्यक्तं व्यक्ततां यातं तापत्रयविमोचनम् ॥ १६ ॥ नमः सत्य नारायणायास्य कर्त्रे नमः शुद्धसत्त्वाय विश्वस्य भर्त्रे ॥ करालाय कालाय विश्वस्य हर्त्रे नमस्ते जगन्मङ्गलायात्ममूर्ते ॥ १७ ॥ धन्योस्म्यद्य कृती धन्यो भवोद्य सफलो मम ॥ वाङ्मनोगोचरो यस्त्वं मम प्रत्यक्षमागतः ॥ १८ ॥ दिष्टं किं वर्णयाम्याहो न जाने कस्य वा फलम् ॥ क्रियाहीनस्य मन्दस्य देहोऽयं फलवान्कृतः ॥ १९ ॥ पूजनं च प्रकर्तव्यं लोकनाथ रमापते ॥ विधिना केन कृपया तदाज्ञापय मां विभो ॥ ॥ २० ॥ हरिस्तमाह मधुरं सस्मितं विश्वमोहनः ॥ पूजायां मम विप्रेन्द्र बहु नापेक्षितं धनम् ॥ २१ ॥ अनायासेन लब्धेन श्रद्धामात्रेण मां यज ॥ ग्राहग्रस्तोजामिलो वा यथाऽभून्मुक्तसंकटः ॥ २२ ॥ विधानं शृणु विप्रेन्द्र मनसा कामयेत्फलम् ॥ पूजासंभृतसंभारः पूजां कुर्याद्यथा विधि ॥ २३ ॥ गोधूमचूर्णं पादार्द्धं सेटकादिप्रमाणतः ॥ दुग्धेन तावता युक्तं मिश्रितं शर्करादिभिः ॥ २४ ॥ तच्चूर्णं हरये दद्याद् घृतयुक्तं हरिप्रियम् ॥ गोदुग्धेनैव दधिना गोघृतेन समन्वितम् ॥ २५ ॥ गंगाजलेन मधुना युक्तं पञ्चामृतं प्रियम् ॥ पञ्चामृतेन संस्नाप्य शालग्रामोद्भवां शिलाम् ॥ ॥ २६ ॥ गन्धपुष्पादिनैवेद्यैर्वेदवादैर्मनोहरैः ॥ धूपैर्दीपैश्च नैवेद्यैस्तांबूलादिभिरर्चयेत ॥ २७ ॥ मिष्टान्नपानसन्मानैर्भक्ष्यैर्भोज्यैः फलैस्तथा ॥ ऋतुकालोद्भवैः पुष्पैः पूजयेद्भक्तितत्परः ॥ २८ ॥ ब्राह्मणैः स्वजनैश्चैव वेष्टितः[2] श्रद्धयान्वितः ॥ त्वया सार्द्धं मम कथां शृणुयात्परमादरात् ॥ ॥ २९ ॥ इतिहासं तथा राज्ञो भिल्लानां वणिजोऽस्य च ॥ कथांते प्रणमेद्भक्त्या प्रसादं विभजेत्ततः ॥ ३० ॥ लब्धं प्रसादं भुंजीत मानयन्न

१ पद्मं लोचयति बोधयतीति 'कर्मण्यण्'। पद्माधिकसुन्दरमित्यर्थः। २ उपेतमित्यर्थः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विचारयेत् ॥ द्रव्यादिभिर्न मे शांतिर्भक्त्या केवलया यथा ॥ ३१ ॥ विधीनानेन विप्रेन्द्र पूजयंति च ये नराः ॥ पुत्रपौत्रधनैर्युक्ता भुक्त्वा भोगान नुत्तमान् ॥ ३२ ॥ अन्ते सान्निध्यमासाद्य मोदन्ते ते मया सह ॥ यंयं कामयते कामं सुव्रती तंतमाप्नुयात् ॥ ३३ ॥ इत्युक्त्वान्तर्दधे विष्णु र्विप्रोपि सुखमाप्तवान् ॥ प्रणम्यागाद्यथादिष्टं मनसा कौतुकाकुलः ॥ ३४ ॥ अद्य भैक्ष्येण लभ्येन पूज्यो नारायणो मया ॥ इति निश्चित्य मनसा भिक्षार्थी नगरं गतः ॥ ३५ ॥ विना देहीति वचनं लब्ध्वा च विपुलं धनम् ॥ कौतुकायासमनसा जगाम निजमालयम् ॥ ३६॥ वृत्तांतं सर्वमाचख्यौ ब्राह्मणी सान्वमोदत ॥ सादरं द्रव्यसंभारमाहृत्य भर्तुराज्ञया ॥ ३७ ॥ आहूय बन्धुमित्राणि तथा सान्निध्यवर्तिनः ॥ सत्यनारायणं देवं यजामि स्वगणैर्वृतः ॥ ३८ ॥ भक्त्या तुतोष भगवान्सत्यनारायणः स्वयम् ॥ कामं दित्सुः प्रादुरासीत्कथांते भक्तवत्सलः ॥ ३९ ॥ वव्रे विप्रोऽभिलषितमिहामुत्र सुखप्रदम् ॥ भक्तिं परां भगवति तथा तत्संगिनां व्रतम् ॥ ४० ॥ रथं कुञ्जरं मंजुलं मन्दिरं च हयं चारु चामी करालंकृतं च ॥ धनं दासदासीगणं गां महीं च लुलायाः सदुग्धा हरे देहि दास्यम् ॥४१॥ तथास्त्विति हरिः प्राह ततश्चांतर्दधे प्रभुः ॥ विप्रोऽपिकृत कृत्योऽभूत्सर्वे लोका विसिस्मिरे ॥४२॥ प्रणम्य भुवि कायेन प्रसादं प्रापुरादरात् ॥ स्वंस्वं धाम समाजग्मुर्धन्यधन्येति वादिनः ॥ ४३ ॥ प्रचचार ततो लोके सत्यनारायणार्चनम् ॥ कामसिद्धिप्रदं मुक्तिभुक्तिदं कलुषापहम् ॥४४॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चये पञ्चविंशोऽध्यायः ॥२५॥ ॥छ॥ ॥ सूत उवाच ॥ ॥ राजासीद्धार्मिकः कश्चित्केदारमणिपूरके ॥ चन्द्रचूड इति ख्यातः प्रजापालनतत्परः ॥१॥ शांतो मधुरवाग्धीरो नारायणपरायणः॥ बभूवुः शत्रवस्तस्य म्लेच्छा विंध्यनिवासिनः ॥२॥ तस्य तैरवभंवद्युद्धमतिप्रबलदारुणैः॥भुशुंडीयुद्धनिपुणैः क्षेपणैः परिघायुधैः ॥३॥ चन्द्रचूडस्य महती सेना यमपुरे गता॥शतं रथास्तथा नागा सहस्रं तु हयास्तथा॥४॥ पत्तयः पंचसाहस्रा मृताः स्वर्गपुरं ययुः ॥ दस्यवः पंचसाहस्रा मृताः कैतवयोधिनः ॥ ५ ॥ आक्रांतः स महाभागस्तैर्म्लेच्छैर्दंभयोधिभिः ॥ त्यक्त्वा राष्ट्रं च नगरं सैकाकी वनमाययौ ॥ ६ ॥ तीर्थव्याजेन स नृपः पुरीं काशीं समागतः ॥ तत्र नारायणं देवं वंद्यं सर्वगृहेगृहे ॥ ७॥ ददर्श नगरीं चैव धनधान्यसमन्विताम् ॥ यथा द्वारावती ज्ञेया तथा सा च पुरी शुभा ॥ ८ ॥ विस्मितश्चंद्रचूडश्च दृष्ट्वाश्चर्यमनुत्तमम् ॥ सत्येन रोधितां लक्ष्मीं शीलधर्मसमन्विताम्॥ ९ ॥ दृष्ट्वा श्रुत्वा सदानंदं सत्यदेवप्रपूजकम् ॥ पतित्वा तच्चरणयोः प्रणनाम मुदा युतः ॥ १० ॥ द्विज

१ ब्राह्मणीमिति शेषः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राज नमस्तुभ्यं सदानंद महामते ॥ भ्रष्टराज्यं च मां ज्ञात्वा कृपया मां समुद्धर ॥ ११ ॥ यथा प्रसन्नो भगवाँल्लक्ष्मीकान्तो जनार्दनः ॥ तथा तद्वद यद्योग्यं व्रतं पापप्रणाशनम् ॥ १२ ॥ ॥ सदानंद उवाच ॥ ॥ दुःखशोकादिशमनं धनधान्यप्रवर्धनम् ॥ सौभाग्यसंततिकरं सर्वत्र विजयप्रदम् ॥ १३ ॥ सत्यनारायणव्रतं श्रीपतेस्तुष्टिकारकम् ॥ यस्मिन्कस्मिन्दिने भूप यजेच्चैव निशामुखे ॥ १४ ॥ तोरणादि प्रकर्तव्यं कदलीस्तंभमंडितम् ॥ पंचभिः कलशैर्युक्तं ध्वजपंचसमन्वितम् ॥१५॥ तन्मध्ये वेदिकां रम्यां कारयेत्स व्रती द्विजैः ॥ तत्र स्थाप्य शिलारूपं कृष्णं स्वर्णसमन्वितम् ॥१६॥ कुर्याद्गंधादिभिः पूजां प्रेमभक्तिसमन्वितः॥ भूमिशायी हरिं ध्यायन्सप्तरात्रं व्यतीतयेत् ॥१७॥ इति श्रुत्वा स नृपतिः काश्यां देवमपूजयत् ॥ रात्रौ प्रसन्नो भगवान्ददौ राज्ञेऽसिमुत्तमम् ॥ १८ ॥ शत्रुपक्षक्षयकरं प्राप्य खड्गं नृपोत्तमः ॥ प्रणम्य च सदानन्दं केदारमणिमाययौ ॥ १९ ॥ हत्वा दस्यून्षष्टिशतांस्तेषां लब्ध्वा महद्धनम् ॥ हरिं प्रपूजयामास नर्मदायास्तटे शुभे ॥२०॥ पौर्णमास्यां विधानेन मासिमासि नृपोत्तमः॥अपूजयत्सत्यदेवं प्रेमभक्तिसमन्वितः॥२१॥तद्व्रतस्य प्रभावेन लक्षग्रामाधिपोऽभवत्॥राज्यं कृत्वा स षष्ट्यब्दमन्ते विष्णुपुरं ययौ॥२२॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चये चन्द्रचूडोद्धारोनाम षड्विंशोऽध्यायः ॥ २६ ॥ छ ॥ ॥ ॥ सूत उवाच ॥ ॥ अथेतिहासं शृणुत यथा भिल्लाः कृतार्थिनः ॥ विचरंतो वने नित्यं निषादाः काष्ठवाहिनः ॥१॥ वनात्काष्ठानि विक्रेतुं पुरीं काशीं ययुः क्वचित्॥एकस्तृषाकुलो यातो विष्णुदासाश्रमं तदा ॥२॥ ददर्श विपुलैश्वर्यं सेवितं च द्विजैर्हरिम् ॥ जलं पीत्वा विस्मितोऽभूद्भिक्षुकस्य कुतो धनम्॥३॥यो दृष्टोऽकिंचनो विप्रो दृश्यतेऽद्य महाधनः॥इति संचिंत्य हृदये स पप्रच्छ द्विजोत्तमम्॥४॥ऐश्वर्यं ते कुतो ब्रह्मन्दुर्गतिस्ते कुतो गता ॥ आज्ञापय महाभाग श्रोतुमिच्छामि तत्त्वतः ॥ ५ ॥ ॥ सदानंद उवाच ॥ ॥ सत्यनारायणस्यांग सेवया किं न लभ्यते ॥ न किंचित्सुखमाप्नोति विना तस्यानुकंपया ॥ ६ ॥ ॥निषाद उवाच ॥ ॥ अहो किमिति माहात्म्यं सत्यनारायणार्चने ॥ विधानं सोपचारं च ह्युपदेष्टुं त्वमर्हसि ॥ ७ ॥ साधूनां समचित्तानामुपकारवतां सताम् ॥ न गोप्यं विद्यते किंचिदार्तानामार्तिनाशनम् ॥ ८ ॥ इति पृष्टो विधिं वक्तुमितिहासमथाब्रवीत् ॥ चन्द्रचूडो महीपालः केदारमणिपूरके ॥ ९ ॥ ममाश्रमं समायातः सत्यनारायणार्चने ॥ विधानं श्रोतुकामोऽसौ मामाह सादरं वचः ॥ १० ॥ मया यत्कथितं तस्मै तन्निबोध निषादज ॥ संकल्प्य मनसा कामं निष्कामो वा जनः क्वचित् ॥ ११ ॥ गोधूमचूर्णं पादार्धं सेटकाद्यैः सुचूर्णकम् ॥ संस्कृतं मधुगंधाज्यैर्नैवेद्यं विभवेऽर्पयेत् ॥ १२ ॥ पंचामृतेन संस्नाप्य चन्दनाद्यैश्च पूजयेत् ॥ पायसापूपसंयावदधिक्षीरमथो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हरेत् ॥ १३ ॥ उच्चावचैः फलैः पुष्पैर्धूपदीपैर्मनोरमैः ॥ पूजयेत्परया भक्त्या विभवे सति विस्तरैः ॥ १४ ॥ न तुष्येद्द्रव्यसंभारैर्भक्त्या :केवलया यथा ॥ भगवान्परितः पूर्णो न मानं वृणुयात्क्वचित् ॥ १५ ॥ दुर्योधनकृतां त्यक्त्वा राजपूजां जनार्दनः ॥ विदुरस्याश्रमे वासमातिथ्यं जगृहे विभुः ॥ १६ ॥ सुदाम्नस्तंडुलकणाञ्जग्ध्वा मानुष्यदुर्लभाः ॥ संपदोऽदाद्धरिः प्रीत्या भक्तिमात्रमपेक्ष्यते ॥ १७ ॥ गोपो गृध्रो वणिग्व्याधो हनुमान्सविभीषणः ॥ येऽन्ये पापात्मका दैत्या वृत्रकायाधवादयः ॥ १८ ॥ नारायणान्तिकं प्राप्य मोदंतेऽद्यापि यद्वशाः ॥ इति श्रुत्वा नरपतिः पूजासंभारमादरात् ॥ १९ ॥ कृतवान्स धनं लब्ध्वा मोदते नर्मदातटे ॥ निषाद त्वमपि प्रीत्या सत्यनारायणं भज ॥ २० ॥ इह लोके सुखं प्राप्य चान्ते सान्निध्यमाप्नुयाः ॥ कृतकृत्यो निषादोऽभूत्प्रणम्य द्विजपुंगवम् ॥ २१ ॥ स गत्वा स्वगणानाह माहात्म्यं हरिसेवने ॥ ते हृष्टमनसः सर्वे समयं चक्रुरादृताः ॥ २२ ॥ सत्यनारायणे पूजां काष्ठलब्धेन यावता ॥ वयं कुलैः करिष्यामः पुण्यवृक्षविधानतः ॥ २३ ॥ इति निश्चित्य मनसा काष्ठं विक्रीय लेभिरे ॥ चतुर्गुणं धनं हृष्टाः स्वंस्वं भवनमाययुः ॥२४॥ मुदा स्त्रीभ्यस्समाचख्युर्वृत्तांतं सर्वमादितः॥ ताः श्रुत्वा हृष्टमनसः पूजनं चक्रुरादरात् ॥२५॥ कथान्ते प्रणमन्भक्त्या प्रसादं जगृहुस्ततः ॥ स्वजातिभ्यः परेभ्यश्च ददुस्तच्चूर्णमुत्तमम् ॥ २६ ॥ पूजाप्रभावतो भिल्लाः पुत्रदारादिभिर्युताः ॥ लब्ध्वा भूमितले द्रव्यं ज्ञानचक्षुर्महोत्तमम् ॥ २७ ॥ भुक्त्वा भोगान्यथेष्टान्ते दरिद्रान्धा द्विजोत्तम ॥ जग्मुस्ते वैष्णवं धाम योगिनामपि दुर्लभम् ॥ २८ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ सूत उवाच ॥ ॥ अथ ते वर्णयिष्यामि कथां साधूपचारिताम् ॥ नृपोपदेशतः साधुः कृतार्थोऽभूद्वणिग्यथा॥ ॥ १ ॥ मणिपूरपती राजा चन्द्रचूडो महायशाः ॥ सह प्रजाभिरानर्च सत्यनारायणं प्रभुम् ॥ २ ॥ अथ रत्नपुरस्थायी साधुर्लक्षपतिर्वणिक् ॥ धनैरापूर्य तरणीः सह गच्छन्नदीतटे ॥ ३ ॥ ददर्श बहुलं लोकं नानाग्रामविलासिनम् ॥ मणिमुक्ताविरचितैर्वितानैस्समलंकृतम् ॥ ४ ॥ वेदवादांश्च शुश्राव गीतवादित्रसंगतान् ॥ रम्यं स्थानं समालोक्य कर्णधारं समादिशत् ॥ ५ ॥ विश्रामयात्र तरणीरिति पश्यामि कौतुकम् ॥ भर्त्रादिष्टस्तथा चक्रे कर्णधारः सभृत्यकैः ॥ ६ ॥ तटसीम्नः समुत्तीर्य मल्ललीलाविलासिनः ॥ कर्णधारा नगा वीरा युयुधुर्मल्ललीलया ॥ ७ ॥ स्वयमुत्तीर्य सामात्यो लोकान्पप्रच्छ सादरम् ॥ यज्ञस्थानं समालोक्य प्रशस्तं समुदो ययौ ॥८॥ किमत्र क्रियते सभ्या भवद्भिर्लोकपूजितैः ॥ सभ्या ऊचुश्च तं सर्वे सत्यनारायणो विभुः ॥ ९ ॥ पूज्यते बंधुभिः सार्धं राज्ञा लोकानुकंपिना ॥ प्राप्तं निष्कंटकं राज्यं सत्यनारायणार्चनात् ॥ ९ ॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धनार्थी लभते द्रव्यं पुत्रार्थी सुतमुत्तमम् ॥ ज्ञानार्थी लभते चक्षुर्निर्भयः स्याद्भयातुरः ॥ ११ ॥ सर्वान्कामानवाप्नोति नरः सत्यसुरार्चनात् ॥ विधानं तु ततः श्रुत्वा चैलं बद्ध्वा गलेऽसकृत् ॥ १२ ॥ दंडवत्प्रणिपत्याह कामं सभ्यानमोदयत् ॥ अनपत्योऽस्मि भगवन्वृथैश्वर्यो वृथोद्यमः ॥ १३ ॥ पुत्रं वा यदि वा कन्यां लभेयं त्वत्प्रसादतः ॥ पताकां कांचनीं कृत्वा पूजयिष्ये कृपानिधिम् ॥ १४ ॥ श्रुत्वा सभ्या अब्रुवंस्ते कामनासिद्धिरस्तु ते ॥ हरिं प्रणम्य सभ्यांश्च प्रसादं भुक्तवांस्तदा ॥ १५ ॥ जगाम स्वालयं साधुर्मनसा चिंतयन्हरिम् ॥ स्वगृहे ह्यागते तस्मिन्नार्यो मंगलपाणयः ॥ १६ ॥ मंगलानि विचित्राणि यथोचितमकारयन् ॥ विवेशांतःपुरे साधुर्महाकौतुकमंगलः ॥ १७ ॥ ऋतुस्नाता सती लीलावती पर्यचरत्पतिम् ॥ गर्भं धृतवती साध्वी समये सुषुवे तु सा ॥ १८ ॥ कन्यां कमललोलाक्षीं बांधवामोदकारिणीम् ॥ साधुः परां मुदं लेभे विततार धनं बहु ॥ १९ ॥ विप्रानाहूय वेदज्ञान्कारयामास मंगलम् ॥ लेखयित्वा जन्मपत्रीं नाम चक्रे कलावतीम् ॥ २० ॥ कलानिधिकलेवासौ ववृधे सा कलावती ॥ अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ॥ २१ ॥ दशवर्षा भवेत्कन्या ततः प्रौढा रजस्वला ॥ प्रौढां कालेन तां दृष्ट्वा विवाहार्थमचिन्तयत् ॥ २२ ॥ नगरे कांचनपुरे वणिक्छंखपतिः श्रुतः ॥ कुलीनो रूपसंपत्तिशीलौदार्यगुणान्वितः ॥ २३ ॥ वरयामास तं साधुर्दुहितुः सदृशं वरम् ॥ शुभे लग्ने बहुविधैर्मंगलैरग्निसन्निधौ ॥२४॥ वेदवादित्रनिनदैर्ददौ कन्यां यथाविधि ॥ मणिमुक्ताप्रवालानि वसनं भूषणानि च ॥ २५ ॥ महामोदमनाः साधुर्मंगलार्थं ददौ च ह ॥ प्रेम्णा निवासयामास गृहे जामातरं ततः ॥ २६ ॥ तं मेने पुत्रवत्साधुः स च तं पितृवत्सुधीः ॥ अतीते भूयसः काले सत्यनारायणार्चनम् ॥ २७ ॥ विस्मृत्य सह जामात्रा वाणिज्याय ययौ पुनः ॥ ॥ सूत उवाच ॥ ॥ अथ साधुः समादाय रत्नानि विविधानि च ॥ २८ ॥ नौकाः संस्थाप्य स ययौ देशाद्देशान्तरं प्रति ॥ नगरं नर्मदातीरे तत्र वासं चकार सः ॥२९॥ कुर्वन्क्रयं विक्रयं च चिरं तस्थौ महामनाः ॥ कर्मणा मनसा वाचा न कृतं सत्यसेवनम् ॥ ३० ॥ ततः कर्मविपाकेन तापमापाचिराद्वणिक् ॥ कस्मिंश्चिद्दिवसे रात्रौ राज्ञो गेहे तमोवृते ॥ ३१ ॥ ज्ञात्वा निद्रागतान्सर्वान्हृतं चौरैर्महाधनम् ॥ प्रभाते वाचितो राजा सूतमागधवंदिभिः ॥ ॥ ३२ ॥ प्रातःकृत्यं नृपः कृत्वा सदः संप्राविशच्च सः ॥ ततस्तत्र समायातः किंकरो राजवल्लभः ॥ ३३ ॥ उवाच स तदा वाक्यं शृणुष्व त्वं धरापते ॥ मुक्तामालाश्च बहुधा रत्नानि विविधानि च ॥ ३४ ॥ सुषुपुश्चौरा गतास्सर्वे न जानीमो वयं नृप ॥ इति विज्ञापितो राजा पुण्यश्लोकशिखामणिः ॥ ३५ ॥ उवाच क्रोधताम्राक्षो यूयं संयात मा चिरम् ॥ सचौरं द्रव्यमादाय मत्पार्श्वं त्वमुपानय ॥ ३६ ॥ नो चेद्धनिष्ये सगणा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निति दूतान्समादिशत् ॥ नृपवाक्यं समाकर्ण्य प्रजग्मुस्ते च किंकराः ॥ ३७ ॥ बहुयत्नैर्न संशोध्य द्रव्यं चौरसमन्वितम् ॥ एकीभूत्वा निशि तदा महाचिंतातुरोऽभवत् ॥ ३८ ॥ हन्ता मां सगणं राजा किं करोमि कुतः सुखम् ॥ नृपदंडाच्च मे मृत्युः प्रेतत्वाय भवेदिह ॥ ३९ ॥ नर्मदायां च मरणं शिवलोकप्रदायकम् ॥ इत्येवं संमतं कृत्वा नर्मदायास्तटं ययुः ॥ ४० ॥ विदेशिनोऽस्य वणिजो ददर्श विपुलं धनम् ॥ मुक्ताहारं गले तस्य लुंठितं वणिजोऽस्य च ॥ ४१ ॥ चौरोऽयमिति निश्चित्य तौ बबंधात्मरक्षणात् ॥ सधनं सह जामात्रा नृपान्तिकमुपानयत् ॥ ४२ ॥ प्रतिकूले हरौ तस्मिन्राज्ञापि न विचारितम् ॥ धनागारे धनं नीत्वा बध्नीत तौ सुदुर्मती ॥ ४३ ॥ कारागारे लोहमयैः शृंखलैरंगपादयोः ॥ इति राजाज्ञया दूतास्तथा चक्रुर्निबंधनम् ॥ ४४ ॥ जामात्रा सहितः साधुर्विललाप भृशं मुहुः ॥ हा पुत्र तात तातेति जामातः क्व धनं गतम् ॥ ४५ ॥ क्व स्थिता च सुता भार्या पश्य धातुर्विपर्ययम् ॥ निमग्नौ दुःखजलधौ को वां पास्यति संकटात् ॥ ४६ ॥ मया बहुतरं धातुर्विप्रियं हि पुरा कृतम् ॥ तत्कर्मणः प्रभावोऽयं न जाने कस्य वा फलम् ॥ ४७ ॥ समं श्वशुरजामात्रौ द्वादशेषु विषादिनौ ॥ ४८ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चयेऽष्टाविंशोऽध्यायः ॥ २८ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ तापत्रयहरं विष्णोश्चरितं तस्य ते शिवम् ॥ शृण्वंति सुधियो नित्यं ते वसंति हरेः पदम् ॥ ॥ १ ॥ प्रतिकूले हरौ तस्मिन्यास्यन्ति निरयान्बहून् ॥ तत्प्रिया कमला देवी चत्वारस्तस्य चात्मजाः ॥ २ ॥ धर्मो यज्ञो नृपश्चौरः सर्वे लक्ष्मीप्रियंकराः ॥ विप्रेभ्यश्चातिथिभ्यश्च यद्दानं धर्म उच्यते ॥ ३ ॥ मातृभ्यो देवताभ्यश्च स्वधा स्वाहेति वै मखः ॥ धर्मस्यैव मखस्यैव रक्षको नृपतिः स्मृतः ॥ ४ ॥ द्वयोर्हन्ता हि चोरः स ते सर्वे धर्मकिंकराः ॥ यत्र सत्यं ततो धर्मस्तत्र लक्ष्मीः स्थिरा भवेत् ॥५॥ सत्यहीनस्य तत्साधोर्धनं यत्तद्गृहे स्थितम् ॥ हृतवानवनीपालः चौरैर्भार्यातिदुःखिता ॥ ६ ॥ वासोलंकरणादीनि विक्रीय बुभुजे किल ॥ नास्ति तत्पच्यते किंचित्तदा कष्टमगाहत ॥ ७ ॥ अथैकस्मिन्दिने कन्या भोजनाच्छादनं विना ॥ गता विप्रगृहेऽपश्यत्सत्यनारायणार्चनम् ॥ ८ ॥ प्रार्थयंतं जगन्नाथं दृष्ट्वा सा प्रार्थयद्धरिम् ॥ सत्यनारायण हरे पिता भर्ता च मे गृहम् ॥९॥ आगच्छत्वर्चयिष्यामि भवंतमिति याचये ॥ तथास्तु ब्राह्मणैरुक्ता ततः सा त्वाश्रमं ययौ ॥ १० ॥ मात्रा निर्भर्त्सितेयंतं कालं कुत्र स्थिता शुभे ॥ वृत्तांतं कथयामास सत्यनारायणार्चने ॥ ११ ॥ कलौ प्रत्यक्षफलदः सर्वदा क्रियते नरैः ॥ कर्तुमिच्छाम्यहं मातरनुज्ञातुं त्वमर्हसि ॥ १२ ॥ देशमायातु जनकः स्वामी च मम कामना ॥ रात्रौ निश्चित्य



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनसा प्रभाते सा कलावती ॥ १३ ॥ शीलपालस्य गुप्तस्य गेहे प्राप्ता धनार्थिनी ॥ बंधो किंचिद्धनं देहि येन सत्यार्चनं भवेत् ॥ १४ ॥ इति श्रुत्वा शीलपालः पंचनिष्कं धनं ददौ ॥ त्वत्पितुश्च ऋणं शेषं मयीत्येव कलावति ॥ १५ ॥ इत्युक्त्वा सोऽनृणो भूत्वा गयाश्राद्धाय संययौ ॥ सुतापि तेन द्रव्येण कृतं सत्यार्चनं शुभम् ॥ १६ ॥ लीलावती सह तया भक्त्याकार्षीत्प्रपूजनम् ॥ पूजनेन विशेषेण तुष्टो नारायणोऽभवत् ॥ १७ ॥ नर्मदातीरनगरे नृपः सुष्वाप मंदिरे ॥ रात्रिशेषे सुपर्यंके निद्रां कुर्वति राजनि ॥ उवाच विप्ररूपेण बोधयञ्छ्लक्ष्णया गिरा ॥ १८ ॥ उत्तिष्ठोत्तिष्ठ राजेंद्र तौ साधू परिमोचय ॥ अपराधं विना बद्धौ नो चेच्छं न भवेत्तव ॥ १९ ॥ इत्येवं भूपतिश्चैव विप्ररूपेण बोधितः ॥ तदा ह्यन्तर्दधे विष्णु र्विनिद्रो नृपतिस्तदा ॥ २० ॥ विस्मितः सहसोत्थाय दध्यौ ब्रह्म सनातनम् ॥ सभायां मंत्रिणे राजा स्वप्नहेतुं न्यवेदयत् ॥ २१ ॥ महामन्त्री च भूपालं प्राह सत्येन भो द्विज ॥ मयापि दर्शितं स्वप्नं वृद्धविप्रेण बोधितम् ॥ अतस्तौ हि समानीय संपृच्छ विधिवन्नृप ॥ २२ ॥ आनीय साधुं पप्रच्छ सत्यमालंव्य भूपतिः ॥ कुत्रत्यौ वां कुलं किं वा वसतिः कस्य वा पुरे ॥ २३ ॥ ॥ साधुरुवाच ॥ ॥ रम्ये रत्नपुरे वासो वणिग्जातौ जनिर्मम ॥ वाणिज्यार्थं महाराज वाणिज्यं जीविकावयोः ॥ २४ ॥ मणिमुक्तादि विक्रेतुं क्रेतुं वा तव पत्तने ॥ प्राप्तौ दूतैश्च बद्धावां त्वत्समीप मुपागतौ ॥ २५ ॥ प्रतिकूले विधौ को वा दशां नाप्नोति वै पुमान् ॥ विनापराधं राजेन्द्र मणिचौरानवादयन् ॥ २६ ॥ आवां न चौरौ राजेंद्र तत्त्वतस्त्वं विचारय ॥ श्रुत्वा तन्निश्चयं ज्ञात्वा तयोर्बंधनकारणम् ॥ २७ ॥ छेदयित्वा दृढं पाशं लोमशातिमकारयत् ॥ कारयित्वा परिष्कारं भोजयामास तौ नृपः ॥ २८ ॥ नगरे पूजयामास वस्त्राभूषणवाहनैः ॥ अब्रवीत्पूजितः साधुर्भूपतिं विनयान्वितः ॥ २९ ॥ कारागारे बहुविध प्राप्तं दुःखमतः परम् ॥ आज्ञापय महाराज देशं गंतुं कृपानिधे ॥ ३० ॥ श्रुत्वा साधुवचो राजा प्राह कोशाधिकारिणम् ॥ मुद्राभिस्तरणीः सद्यः पूरयाशु मदाज्ञया ॥ ३१ ॥ जामात्रा सहितः साधुर्गीतवादित्रमंगलैः ॥ स्वदेशं चलितोऽद्यापि न चक्रे हरिसेवनम् ॥ ३२ ॥ सत्यनारायणो देवः प्रत्यक्षफलदः कलौ ॥ स एव तापसो भूत्वा चक्रे साधुविडंवनम् ॥ ३३ ॥ ॥ तापस उवाच ॥ ॥ धर्मः किं नौषु ते साधो मामनादृत्य यासि भोः ॥ प्रत्युत्तरमदात्साधुः क्षिप नौकाश्च सत्वरम् ॥ ३४ ॥ भोः स्वामिन्मे धनं नास्ति लतापत्रादिपूरितम् ॥ नौभिर्गच्छामि स्वस्थानं विरोधे नात्र किं फलम् ॥ ३५ ॥ इत्युक्तस्तापसः प्राह तथास्त्विति वचः क्षणात् ॥ धनमंतर्दधे साधोर्लतापत्रावशेषितम् ॥ ३६ ॥ धनं नौकासु नास्ती ति साधुश्चिंतातुरोऽभवत् ॥ किमिदं कस्य वा हेतोर्धनं कुत्र गतं मम ॥ ३७ ॥ वज्रपाताहत इव भृशं दुःखितमानसः ॥ क्व यास्यामि क्व तिष्ठा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मि किं करोमि धनं कुतः ॥ ३८ ॥ इति मूर्छागतः साधुर्विललाप पुनःपुनः ॥ जामात्रा बोधितः पश्चात्तापसं तं जगाम ह ॥ ३९ ॥ गले वसनमादाय प्रणनाम स तापसम् ॥ को भवानिति पप्रच्छ देवो गंधर्व ईश्वरः॥४०॥देवदेवोऽथ वा कोऽपि न जाने तव विक्रमम् ॥ आज्ञापय महाभाग तद्विडम्बनकारणम् ॥ ४१ ॥ ॥ तापस उवाच ॥ ॥ आत्मा चैवात्मनः शत्रुस्तथात्र च प्रियोऽप्रियः॥ त्यज मौढचमतिं साधो प्रवादं मा वृथा कृथाः ॥४२॥ इति विज्ञापितः साधुर्न बुबोध महाधनः ॥ पुनः स तापसः प्राह कृपया पूर्वकर्मतः॥४३॥ चंद्रचूडो यदानर्च सत्यनारायणं नृपः॥ अनपत्येन सुचिरं पुत्रकन्यार्थिना त्वया ॥ ४४ ॥ प्रार्थितं न स्मृतं ह्येव इदानीं तप्यसे वृथा ॥ सत्यनारायणो देवो विश्वव्यापी फलप्रदः ॥४५॥ तमनादृत्य दुर्बुद्धे कुतःसम्यग्भवेत्तव ॥ पुरा लब्धवरं स्मृत्वा सस्मार जगदीश्वरम् ॥ ४६ ॥ सत्यनारायणं देवं तापसं तं ददर्शह ॥ प्रणम्य भुवि कायेन परिक्रम्य पुनःपुनः ॥ तुष्टाव तापसं तत्र साधुर्गद्गदयागिरा ॥ ४७ ॥ ॥ साधुरुवाच ॥ ॥ सत्यरूपं सत्यसंधं सत्यनारायणं हरिम् ॥ यत्सत्यत्वेन जगतस्तं सत्यं त्वां नमाम्यहम् ॥ ४८ ॥ त्वन्मायामोहितात्मानो न पश्यंत्यात्मनः शुभम् ॥ दुःखांभोधौ सदा मग्ना दुःखे च सुखमानिनः ॥ ४९ ॥ मूढोहं धनगर्वेण मदांधीकृतलोचनः ॥ न जाने स्वात्मनः क्षेमं कथं पश्यामि मूढधीः ॥ ५० ॥ क्षमस्व मम दौरात्म्यं तपोधाम्ने हरे नमः॥ आज्ञापयात्मदास्यं मे येन ते चरणौ स्मरे ॥ ५१ ॥ इति स्तुत्वा लक्षमुद्राः स्थापिताः स्वपुरोधसि ॥ गत्वावासं पूजयिष्ये सत्यनारायणं प्रभुम् ॥५२॥ तुष्टो नारायणः प्राह वांछा पूर्णा भवेत्तु ते ॥ पुत्रपौत्रसमायुक्तो भुक्त्वा भोगांस्त्वनुत्तमान् ॥ अंते सांनिध्यमासाद्य मोदसे त्वं मया सह ॥५३॥ इत्युक्त्वान्तर्दधे विष्णुः साधुश्च स्वाश्रमं ययौ ॥ सप्ताहेन गृहं प्राप्तः सत्यदेवेन रक्षितः ॥ ५४ ॥ आगत्य नगराभ्याशे प्राहिणोद्धृतमाश्रमम् ॥ गृहमागत्य दूतोपि प्राह लीलावतीं प्रति ॥ ५५ ॥ जामात्रा सहितः साधुः कृतकृत्यः समागतः ॥ सत्यनारायणार्चायां स्थिता साध्वी सकन्यका ॥ ५६ ॥ पूजाभारं सुतायै सा दत्त्वा नौकांतिकं ययौ ॥ सखीगणैः परिवृता कृतकौतुकमंगला ॥ ५७ ॥ कलावती त्ववज्ञाय प्रसादं सत्वरा ययौ ॥ पातुं पतिमुखांभोजं चकोरीव दिनात्यये ॥ ५८ ॥ अवज्ञानात्प्रसादस्य नौकाशंखपतेरथ ॥ निमग्ना जलमध्ये तु जामात्रा सह तत्क्षणात् ॥ ५९ ॥ मग्नं जामातरं पश्यन्विललाप स मूर्च्छितः ॥ लीलावती तु तद्दृष्ट्वा मूर्च्छिता विललाप ह ॥ ६० ॥ ततः कलावती दृष्ट्वा पपात भुवि मूर्च्छिता ॥ रंभेव वातविहता कान्तकान्तेतिवादिनी ॥ ६१ ॥ हा नाथ प्रिय धर्मज्ञ करुणाकरकौशल ॥ त्वया विरहिता पत्या निराशा विधिना कृता ॥ पत्युरर्द्धं गतं कस्मादर्द्धांगं जीवनं कथम् ॥ ६२ ॥ ॥ सूत उवाच ॥ ॥ कलावती चारुकलासु कौशला प्रवा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लरक्तांघ्रितलातिकोमला ॥ सरोजनेत्रांबुकणान्विमुंचती मुक्तावलीभिस्तनकुड्मलांचिता ॥ ६३ ॥ हा सत्यनारायण सत्यसिंधो मग्नं हि मामुद्धर तद्वियोगे ॥ श्रुत्वार्तशब्दं भगवानुवाच वचस्तदाकाशसमुद्भवं च ॥ ६४ ॥ साधो कलावती क्षिप्रं मत्प्रसादं हि भोजयेत् ॥ तत्पश्चादिह संप्राप्य पतिं प्राप्स्यति मा शुचः ॥ ६५ ॥ इत्याकाशे वचः श्रुत्वा विस्मिता तच्चकार सा ॥ नारायणस्य कृपया पतिं प्राप्ता कलावती ॥ ६६ ॥ तत्रैव साधुः साह्लादो भक्त्या परमया युतः ॥ पूजनं लक्षमुद्राभिः सत्यदेवस्य चाकरोत् ॥ ६७ ॥ तेन व्रतप्रभावेन पुत्रपौत्रसमन्वितः ॥ भुक्त्वा भोगान्मुदा युक्तो मृतः स्वर्गपुरं ययौ ॥ ६८ ॥ इतिहासमिमं भक्त्या शृणुयाद्यो हि मानवः ॥ सोऽपि विष्णुप्रियतरः कामसिद्धिमवाप्नुयात् ॥ ६९ ॥ इति ते कथितं विप्र व्रतानामुत्तमं व्रतम् ॥ कलिकाले परं पुण्यं ब्राह्मणस्य मुखोद्भवम् ॥ ७० ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये सत्यनारायणव्रतमाहात्म्यवर्णनं नामैकोनत्रिंशोऽध्यायः ॥२९॥छ॥ ॥ ऋषय ऊचुः ॥ ॥ भगवन्गुह्यजं कर्म वृत्तं प्रोक्तं पुरातनैः ॥ व्रतानां चैव सर्वेषां श्रेष्ठं नारायणव्रतम् ॥ १ ॥ त्वन्मुखेन श्रुतं सूत तापत्रयविनाशनम् ॥ इदानीं श्रोतुमिच्छामि लिंगजं कर्म चोत्तमम् ॥ २ ॥ सर्वेषां ब्रह्मचर्याणां ब्रह्मचर्यं हि किं परम् ॥ तन्मे वद महाप्राज्ञ सर्वज्ञोऽसि मतो मम ॥ ३ ॥ ॥ सूत उवाच ॥ ॥ आसीत्पुरा कलियुगे पितृशर्मा द्विजोत्तमः ॥ वेदवेदांगतत्त्वज्ञो यमलोकभयान्वितः ॥ ४ ॥ ज्ञात्वा घोरतमं कालं कलिकालमधर्मजम् ॥ वार्धनं यमराष्ट्रस्य तदा चिंतातुरोऽभवत् ॥ ५ ॥ केनाश्रमेण वर्णेन मम श्रेयो भवेदिह ॥ कलौ संन्यासमार्गो हि दंभपाखंडखंडितः ॥ ६ ॥ वानप्रस्थः कलौ नास्ति ब्रह्मचर्यं क्वचित्क्वचित् ॥ गार्हस्थ्यं कर्म सर्वेषां कर्मणां श्रेष्ठमुच्यते ॥ ७ ॥ अतः स्त्रीसंग्रहो ग्राह्यो मया घोरे कलौ युगे ॥ यदि मे च भवेन्नारी मनोवृत्त्यनुसारिणी ॥ तर्हि मे सफलं जन्म मम श्रेयो भवेदिह ॥ ८ ॥ इत्येवं संमतं कृत्वा शिवां मंगलदायिनीम् ॥ चंदनाद्यैश्च संपूज्य तुष्टाव मनसा पराम् ॥ विश्वेश्वरीं जगन्मूर्तिं सच्चिदानंदरूपिणीम् ॥ ९ ॥ ॥ ॥ पितृशर्मोवाच ॥ ॥ नमः प्रकृत्यै सर्वायै कैवल्यायै नमोनमः ॥ त्रिगुणैक्यस्वरूपायै तुरीयायै नमोनमः ॥ १० ॥ महत्तत्त्वजनन्यै च द्वंद्वकर्त्र्यै नमोनमः ॥ ब्रह्ममातर्नमस्तुभ्यं साहंकारपितामहि ॥ ११ ॥ पृथग्गुणायै शुद्धायै नमो मातर्नमोनमः ॥ विद्यायै शुद्धसत्त्वायै लक्ष्म्यै सत्त्वरजोमयि ॥१२॥ नमो मातरविद्यायै ततः शुद्ध्यै नमोनमः ॥ काल्यै सत्त्वतमोमूर्त्यै नमो मातर्नमोनमः ॥१३॥ श्रियै शुद्धरजोमूर्त्यै नमस्त्रैलोक्यवासिनि ॥ नमो रजस्तमोमूर्त्यै दुर्गायै च नमोनमः ॥ १४ ॥ इति श्रुत्वा स्तवं देव्या प्रसादः स्थापितस्तया ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुतायां विष्णुयशसो ब्राह्मणस्य तदा स्वयम् ॥ १५ ॥ तामुद्वाह्य द्विजो देवीं नाम्ना वै ब्रह्मचारिणीम् ॥ न्यवसन्मथुरायां स कृत्वा धर्मं स्वयं हृदि ॥ १६ ॥ प्रियायै स रजोवत्यै ऋतुदानं करोति हि ॥ चत्वारश्चात्मजाश्चासंश्चतुर्वेदैक्यधारिणः ॥ १७ ॥ ऋग्यजुश्च तथा साम तुर्यश्चासीदथर्वणः ॥ ऋचश्च तनयो व्याडिर्न्यायशास्त्रविशारदः ॥ १८ ॥ यजुषस्तु सुतो जातो मीमांसो लोकविश्रुतः ॥ पाणिनिः सामनस्यैव सुतोऽभूच्छब्दपारगः ॥ १९ ॥ पुत्रो वररुचिः श्रेष्ठोऽथर्वणस्य नृपप्रियः ॥ ते गता मागधेशस्य चन्द्रगुप्तस्य वै सभाम् २० ॥ नृपस्तान्पूजयामास बहुमानपुरःसरम् ॥ अब्रवीत्तांस्ततो राजा ब्रह्मचर्यं हि किं परम् ॥ २१ ॥ व्याडिराह महाराज यः स्तुतौ तत्परः पुमान् ॥ न्यायतोऽखिलदेवानां ब्रह्मचारी हि मे मतः ॥ २२ ॥ मीमांसश्चाह भो राजन्यज्ञे यो हि पुमान्परः ॥ कर्मणा यजते देवान्रोचनादिभिरर्चयेत् ॥ २३ ॥ हवनं तर्पणं कृत्वा ब्रह्मादिकसुरान्प्रति ॥ तत्प्रसादं हि गृह्णीयाद्ब्रह्मचारी च स स्मृतः ॥ २४ ॥ श्रुत्वेदं पाणिनिश्चाह चन्द्रगुप्त शृणुष्व भोः ॥ त्रिधा स्वरैः परं ब्रह्म शुद्धशब्दमयैः परैः ॥ २५ ॥ तथैव सूत्रपाठैश्च लिंगधातुगणावृतैः ॥ यो यजेद्ब्रह्मचारी स परं ब्रह्माधिगच्छति ॥ २६ ॥ श्रुत्वा वररुचिश्चाह शृणु मागधभूपते ॥ गृहीत्वा यज्ञसूत्रं यः प्राप्तो गुरुकुले वसन् ॥ २७ ॥ दंडलोमनखाधारी भिक्षार्थी वेदतत्परः ॥ आज्ञया च गुरोर्वर्तेद्ब्रह्मचारी हि स स्मृतः ॥ २८ ॥ इति तेषां वचः श्रुत्वा पितृशर्माब्रवीदिदम् ॥ यो गृहस्थे वसन्विप्रः पितृदेवातिथिप्रियः ॥ २९ ॥ गामी पाणिगृहीतायामृतुकाले यतेंद्रियः ॥ ब्रह्मचारी हि मुख्यस्स श्रुत्वा राजाब्रवीदिदम् ॥ ३० ॥ स्वामिन्यद्भवता चोक्तं धर्मज्ञेन यशस्विना ॥ कलौ भयंकरे प्राप्ते स धर्मो हि मतो मम ॥३१॥ इत्युक्त्वा तस्य शिष्योऽभूद्गुरुवाक्यपरायणः ॥ तथान्ते मरणं प्राप्य स्वर्गलोकं नृपो ययौ ॥३२॥ पितृशर्मापि मनसा ध्यात्वा दामोदरं हरिम् ॥ हिमालयं गिरिं प्राप्य योगध्यानपरोऽभवत् ॥ ३३ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये त्रिंशोऽध्यायः ॥ ३० ॥ छ ॥ ॥ ऋषय ऊचुः ॥ ॥ भगवन्सर्वतीर्थानां दानानां किं परं स्मृतम् ॥ यत्कृत्वा च कलौ घोरे परां निर्वृतिमाप्नुयात् ॥ १ ॥ ॥ सूत उवाच ॥ ॥ सामनस्य सुतः श्रेष्ठः पाणिनिर्नाम विश्रुतः ॥ कणभुग्वरशिष्यैश्च शास्त्रज्ञैः स पराजितः ॥ २ ॥ लज्जितः पाणिनिस्तत्र गतस्तीर्थान्तरं प्रति ॥ स्नात्वा सर्वाणि तीर्थानि संतर्प्य पितृदेवताः ॥३॥ केदारमुदकं पीत्वा शिवध्यानपरोऽभवत् ॥ पर्णाशी सप्तदिवसाञ्जलभक्षस्ततोऽभवत् ॥ ४ ॥ ततो दशदिनान्ते स वायुभक्षो दशाहनि ॥ अष्टाविंशद्दिने रुद्रो वरं ब्रूहि वचोऽब्रवीत् ॥ ५ ॥ श्रुत्वामृतमयं वाक्यमस्तौद्गद्गदया गिरा ॥ सर्वेशं सर्वलिंगेशं गिरिजावल्लभं हरम् ॥ ६ ॥ ॥ पाणि





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निरुवाच ॥ ॥ नमो रुद्राय महते सर्वेशाय हितैषिणे ॥ नन्दीसंस्थाय देवाय विद्याभयकराय च ॥ ७ ॥ पापान्तकाय भर्गाय नमोनन्ताय वेधसे ॥ नमो मायाहरेशाय नमस्ते लोकशंकर ॥ ८ ॥ यदि प्रसन्नो देवेश विद्यामूलप्रदो भव ॥ परं तीर्थं हि मे देहि द्वैमातुरपितर्नमः ॥ ९ ॥ ॥ सूत उवाच ॥ ॥ इति श्रुत्वा महादेवः सूत्राणि प्रददौ मुदा ॥ सर्ववर्णमयान्येव अइउणादिशुभानि वै ॥ १० ॥ ज्ञानह्रदे सत्यजले रागद्वेषमलापहे ॥ यः प्राप्तो मानसे तीर्थे सर्वतीर्थफलं भजेत् ॥११॥ मानसं हि महत्तीर्थं ब्रह्मदर्शनकारकम् ॥ पाणिने ते ददौ विप्र कृतकृत्यो भवान्भव ॥ १२ ॥ इत्युक्त्वांतर्दधे रुद्रः पाणिनिः स्वगृहं ययौ ॥ सूत्रपाठं धातुपाठं गणपाठं तथैव च ॥ १३ ॥ लिंगसूत्रं तथा कृत्वा परं निर्वाणमाप्तवान् ॥ तस्मात्त्वं भार्गवश्रेष्ठ मानसं तीर्थमाचर ॥ १४ ॥ यतो याता स्वयं गंगा सर्वतीर्थमयी शिवा ॥ गंगातीर्थात्परं तीर्थं न भूतं न भविष्यति ॥ १५ ॥ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चय एकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ ॥ सूत उवाच ॥ ॥ तोतादर्यां द्विजः कश्चिद्बोपदेव इति श्रुतः ॥ बभूव कृष्णभक्तश्च वेदवेदांगपारगः ॥ १ ॥ गत्वा वृन्दावनं रम्यं गोपगोपीनिषेवितम् ॥ मनसा पूजयामास देवदेवं जनार्दनम् ॥ २ ॥ वर्षान्ते च हरिः साक्षाद्ददौ ज्ञानमनुत्तमम् ॥ तेन ज्ञानेन संप्राप्ता हृदि भागवती कथा ॥ ३ ॥ शुकेन वर्णिता या वै विष्णुराताय धीमते ॥ तां कथां वर्णयामास मोक्षमूर्तिं सनातनीम् ॥ ४ ॥ कथान्ते भगवान्विष्णुः प्रादुरासीज्जनार्दनः ॥ उवाच स्निग्धया वाचा वरं ब्रूहि महामते ॥ ५ ॥ ॥ बोपदेव उवाच ॥ ॥ नमस्ते भगवन्विष्णो लोकानुग्रहकारक ॥ त्वया ततमिदं विश्वं देवतिर्यङ्नरादिकम् ॥ ६ ॥ त्वन्नाम्ना नरकार्ताश्च ते कृतार्थाः कलौ युगे ॥ त्वया दत्तं भागवतं श्रीमद्व्यासेन निर्मितम् ॥ माहात्म्यं तस्य मे ब्रूहि यदि दत्तो वरस्त्वया ॥ ७ ॥ ॥ श्रीभगवानुवाच ॥ ॥ एकदा भगवान्रुद्रो भवान्या सह शंकरः ॥ ८ ॥ बौद्धराज्ये जगत्प्राप्ते दंभपाखण्डनिर्मिते ॥ दृष्ट्वा काश्यां भूमितुंगं प्रणनाम मुदा युतः ॥ जय सच्चिदानन्द विभो जगदानंदकारक ॥ ९ ॥ इति श्रुत्वा शिवा प्राह को देवोऽस्ति तवोत्तमः ॥ स होवाच महादेवि यज्ञः सप्ताहमत्र वै ॥ १० ॥ तस्माद्भूमि पवित्रत्वमिह प्राप्तं वरानने ॥ सर्वतीर्थाधिकत्वं च स्वयं ब्रह्म सनातनम् ॥ ११ ॥ इति श्रुत्वा शिवा देवी प्राप्तासीद्वृद्धकालयम् ॥ रुद्रेण सहिता तत्र भूमिशुद्धिमकारयत् ॥ १२ ॥ चण्डीशश्च गणेशश्च नंदिनो गुह एव च ॥ रक्षार्थे स्थापितास्तत्र देवदेवेन भो द्विज ॥ १३ ॥ शृणु देवि कथां रम्यां मम मानससंस्थिताम् ॥ इत्युक्त्वा ध्यानमास्थाय सप्ताहेन स्ववर्णयत् ॥ १४ ॥ अष्टाहे नेत्र उन्मील्य दृष्ट्वा निद्रागतां शिवाम् ॥ बोधया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मास भगवान्कथांते लोकशंकरः ॥ १५ ॥ कियती ते श्रुता गाथा श्रुत्वाह जगदंबिका ॥ सुधामंथनपर्यंतं चरित्रं शिवयोरितम् ॥ १६ ॥ कोट रस्थः शुकः श्रुत्वा चिरंजीवत्वमागतः ॥ पार्वत्या रक्षितोसौ वै शुकः परमसुन्दरः ॥ १७ ॥ स्थित्वा शिवस्य सदने मम ध्यानपरोऽभवत् ॥ ममा ज्ञया शुकः साक्षात्त्वदीयहृदयस्थितः ॥ १८ ॥ तेन प्राप्तं भागवतं माहात्म्यं चास्य दुर्लभम् ॥ त्वं वै गंधर्वसेनाय पित्रे विक्रमभूपतेः ॥ १९ ॥ नर्मदाकूलमासाद्य श्रावयस्वं कथां शुभाम् ॥ हरिमाहात्म्यदानं हि सर्वदानपरं स्मृतम् ॥ २० ॥ सत्पात्राय प्रदातव्यं विष्णुभक्ताय धीमते ॥ बुभुक्षितान्नदानं च तद्दानस्य समं न हि ॥ २१ ॥ इत्युक्त्वांतर्दधे देवो बोपदेवः प्रसन्नधीः ॥ २२ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥ ऋषय ऊचुः ॥ ॥ वाग्जं कर्म स्मृतं सूत वेद पाठः सनातनः ॥ बहुत्वात्सर्ववेदानां श्रोतुमिच्छामहे वयम् ॥ १ ॥ केन स्तोत्रेण वेदानां पाठस्य फलमाप्नुयात् ॥ पापानि विलयं यांति तन्मे वद विचक्षण ॥ २ ॥ ॥ सूत उवाच ॥ ॥ विक्रमादित्यराज्ये तु द्विजः कश्चिदभूद्भुवि ॥ व्याधकर्मेति विख्यातो ब्राह्मण्यां शूद्रतोऽभवत् ॥ ॥ ३ ॥ त्रिपाठिनो द्विजस्यैव भार्या नाम्ना हि कामिनी ॥ मैथुनेच्छावती नित्यं मदाघूर्णितलोचना ॥ ४ ॥ द्विजस्सप्तशतीपाठे वृत्त्यर्थी कर्हि चिद्गतः ॥ ग्रामे देवलके रम्ये बहुवैश्यनिषेविते ॥ ५ ॥ तत्र मासो गतः कालो नाययौ स स्वमंदिरम् ॥ तदा तु कामिनी दुष्टा रूपयौवनसंयुता ॥ ६ ॥ दृष्ट्वा निषादं सबलं काष्ठभारोपजीविनम् ॥ तस्मै दत्त्वा पञ्च मुद्रा बुभुजे कामपीडिता ॥ ७ ॥ तदा गर्भं दधौ सा च व्याधिवीर्येण संचि तम् ॥ पुत्रोऽभूद्दशमासांते जातकर्म पिताकरोत् ॥ ८ ॥ द्वादशाब्दे गते काले स धूर्तो वेदवर्जितः ॥ व्याधकर्मकरो नित्यं व्याधकर्मा ह्यतोभवत् ॥ ॥ ९ ॥ निष्कासितौ द्विजेनैव मातृपुत्रौ द्विजाधमौ ॥ त्रिपाठी ब्रह्मचर्यं तु कृतवान्धर्मतत्परः ॥ १० ॥ प्रत्यहं चंडिकापाठं कृत्वा विंध्यगिरौ वसन् ॥ जीवन्मुक्तोभवच्छीघ्रं जगदंबाप्रसादतः ॥ ११ ॥ निषादस्य गृहे चोभौ वने गत्वोषतुर्मुदा ॥ प्रत्यहं जारभावेन बहुद्रव्यमुपार्जितम् ॥ ॥ १२ ॥ व्याधकर्मा तु चौर्येण पितृमातृप्रियंकरः ॥ एकदा दैवयोगेन शिवामंदिरमाययौ ॥ १३ ॥ चौरवृत्तिपरो धूर्त्तः स्त्रिया भूषणमाहरत् ॥ कैश्चिज्ज्ञातः स नो धूर्तो बहुमायाविशारदः ॥ १४ ॥ कदाचित्प्राप्तवांस्तत्र द्विजवक्त्रसमुद्गतम् ॥ श्रुतमादिचरित्रं हि तेन शब्दप्रियेण वै ॥ १५ ॥ पाठपुण्यप्रभावेण धर्मबुद्धिस्ततोऽभवत् ॥ दत्त्वा चौर्यधनं सर्वं तस्मै विप्राय पाठिने ॥ १६ ॥ शिष्यत्वमगमत्तत्राक्षरमैशं जजाप ह ॥ बीजमंत्रप्रभा वेण तदंगात्पापसुल्वणम् ॥ १७ ॥ निःसृतं कृमिरूपेण बहुवर्णेन तापितम् ॥ त्रिवर्षान्ते च निष्पापो बभूव द्विजसत्तमः ॥ १८ ॥ पठित्वाक्षर





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मालां च जजापादिचरित्रकम् ॥ द्वादशाब्दमिते काले काश्यां गत्वा स तु द्विजः ॥ १९ ॥ अन्नपूर्णां महादेवीं तुष्टाव परया मुदा ॥ रोचनाद्यैश्च संपूज्यां मुनिदेवनिषेविताम् ॥ २० ॥ नित्यानंदकरी पराभयकरी सौंदर्यरत्नाकरी निर्धूताखिलपापपावनकरी काशीपुराधीश्वरी ॥ नानालोककरी महाभयहरी विश्वंभरी सुन्दरी विद्यां देहि कृपावलंबनकरी मातान्नपूर्णेश्वरी ॥ २१ ॥ स इत्यष्टोत्तरं जप्त्वा ध्यानस्तिमितलोचनः ॥ सुष्वाप तत्र मुदितः स्वप्ने प्रादुरभूच्छिवा ॥ २२ ॥ दत्त्वा तस्मै हि ऋग्विद्यां पुनरंतरधीयत ॥ उत्थाय स द्विजो धीमाँल्लब्ध्वा विद्यामनुत्तमाम् ॥ २३ ॥ विक्रमादित्यभूपस्य यज्ञाचार्यो बभूव ह ॥ यज्ञांते योगमास्थाय जगाम तु हिमालयम् ॥ २४ ॥ एतत्ते वर्णितं विप्र पुण्यमादिचरित्रकम् ॥ ब्रह्मीभूय यथा विप्रो लेभे सिद्धिमनुत्तमाम् ॥ २५ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चये प्रथमचरित्रवर्णनं नाम त्रयस्त्रिंशोध्यायः ॥ ३३ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ उज्जयिन्यां पुरा विप्र राजन्यः सर्वहिंसकः ॥ बभूव मद्यमांसाशी भीमवर्मेति विश्रुतः ॥ १ ॥ मांसलोभेन स खलः सूकरान्ग्रामकुक्कुटान् ॥ हत्वा चाभक्षयत्पापी वेश्यासंगपरायणः ॥ ॥ २ ॥ नरमांसं स क्रव्यादस्त्यक्त्वान्यान्भक्षकोऽभवत् ॥ एवं बहुगते काले भीमवर्मा महाधमः ॥ विसूच्यग्निवशं यातो ममार च युवापि सः ॥ ३ ॥ कारितश्चंडिकापाठस्तेन दुष्टेन भीरुणा ॥ तस्य पुण्यप्रभावेन नागतो नरकान्प्रति ॥ ४ ॥ पुनः क्षत्रत्वमगमन्मागधे स महीपतिः ॥ महानन्दीति विख्यातो राजनीतिपरायणः ॥ ५ ॥ जातिस्मरो बभूवासौ वेदधर्मपरायणः ॥ कात्यायनस्य शिष्योऽभून्महाशाक्तस्य धीमतः ॥ ६ ॥ तस्मै नृपाय स मुनिर्दत्त्वा मध्यचरित्रकम् ॥ सबीजं पुनरागत्य विन्ध्ये शक्तिपरोऽभवत् ॥ ७ ॥ नृपोऽपि प्रत्यहं देवीं महालक्ष्मीं सनातनीम् ॥ रोचनाद्यैश्च संपूज्य जपन्मध्यचरित्रकम् ॥ ८ ॥ पुण्यक्षेत्रत्वमगमन्महामायाप्रसादतः ॥ शूद्रभावं परित्यज्य क्षत्रभावमुपागतः ॥ ९ ॥ द्वादशाब्दांतरे प्राप्तस्तद्गुरुः शक्तितत्परः ॥ लक्षचण्डीं नृपादेव कारयामास धर्मतः ॥ १० ॥ तदा प्रादुरभूद्देवी जगदंबा सनातनी ॥ नृपाय धर्ममर्थं च कामं मोक्षं हि चाददात् ॥ ११ ॥ महानन्दी महाभागो भुक्त्वा भोगं सुरेप्सितम् ॥ अन्ते जगाम परमं लोकं देवनमस्कृतम् ॥ १२ ॥ इति ते कथिता विप्र यत्प्रोक्तं यजुषो गतिः ॥ सा वै मध्यचरित्रेण प्राप्ता शूद्रनृपेण वै ॥ १३ ॥ इत्येवं वर्णितं विप्र माहात्म्यं मुनिवर्णितम् ॥ १४ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ चित्रकूटे गिरौ रम्ये नानाधातु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विचित्रिते ॥ तत्रावसन्महाप्राज्ञ उपाध्यायः पतञ्जलिः ॥ १ ॥ वेदवेदांगतत्त्वज्ञो गीताशास्त्रपरायणः ॥ विष्णुभक्तः सत्यसन्धो भाष्यशास्त्र विशारदः ॥ २ ॥ कदाचित्स तु शुद्धात्मा गतस्तीर्थांतरं प्रति ॥ काश्यां कात्यायनेनैव तस्य वादो महानभूत् ॥ ३ ॥ वर्षान्ते च तदा विप्रो देवीभक्तेन निर्जितः ॥ लज्जितः स तु धर्मात्मा संतुष्टाव सरस्वतीम् ॥ ४ ॥ ॥ पतञ्जलिरुवाच ॥ ॥ नमो देव्यै महामूर्त्यै सर्वमूर्त्यै नमो नमः ॥ शिवायै सर्वमांगल्यै विष्णुमाये च ते नमः ॥ ५ ॥ त्वमेव श्रद्धा बुद्धिस्त्वं मेधा विद्या शिवंकरी ॥ शांतिर्वाणी त्वमेवासि नारायणि नमोनमः ॥ ६ ॥ इत्युक्ते सति विप्रे तु वागुवाचाशरीरिणी ॥ विप्रोत्तम चरित्रं मे जप चैकाग्रमानसः ॥ ७ ॥ तच्चरित्रप्रभावेण सत्यं ज्ञानमवाप्स्यसिः ॥ कात्यायनस्य विप्रस्य राजसंज्ञानमुद्धतम् ॥ मद्भक्त्या तेन संप्राप्तं पराजय पतञ्जले ॥ ८ ॥ इति श्रुत्वा वचो देव्या विन्ध्यवासिनि मन्दिरम् ॥ गत्वा तां पूजयामास तुष्टाव स्तोत्रपाठतः ॥ ९ ॥ ज्ञानं प्रसादजं विप्रः प्राप्य विष्णुपरायणम् ॥ कात्यायनं पराजित्य परां मुदमवाप ह ॥ १० ॥ ऊर्द्ध्वपुंड्रं च तिलकं तुलसीकण्ठमालिकाम् ॥ कृष्णमन्त्रं च शिवदं स्थापयित्वा गृहेगृहे ॥ ११ ॥ जनेजने तथा कृत्वा महाभाष्यमुदैरयत् ॥ चिरंजीवित्वमगमद्विष्णुमायाप्रसादतः ॥ १२ ॥ इति ते कथितो विप्र जाप्यानामुत्तमो जपः ॥ किमन्यच्छ्रोतुमिच्छंति शौनकाद्या महर्षयः ॥ १३ ॥ सर्वे भद्राणि पश्यंतु मा कश्चिद्दुःखभाग्भवेत् ॥ १४ ॥ मंगलं भगवान्विष्णुर्मंगलं गरुडध्वजः ॥ मंगलं पुंडरीकाक्षो मंगलायतनो हरिः ॥ १५ ॥ शुचिर्यो हि नरो नित्यमितिहाससमुच्चयम् ॥ शृणुयाद्धर्मकामार्थी स याति परमां गतिम् ॥ १६ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये उत्तमचरितमाहात्म्ये पंचत्रिंशोऽध्यायः ॥३५॥ समाप्तोऽयं द्वितीयःखंडः॥

॥ ॥ श्रीगणेशाय नमः ॥ ॥ ऋषयः ऊचुः ॥ ॥ भगवन्विक्रमाख्यानकालोऽयं भवतोदितः ॥ शतद्वादशमर्यादो द्वापरस्य समो भुवि ॥ ॥ १ ॥ अस्मिन्काले महाभाग लीला भगवता कृता ॥ तामेतां कथयास्मान्वै सर्वज्ञोऽस्ति भवान्सदा ॥ २ ॥ ॥ सूत उवाच ॥ ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ३ ॥ भविष्याख्ये महाकल्पे प्राप्ते वैवस्वतेन्तरे ॥ अष्टाविंशद्वापरान्ते कुरुक्षेत्रे रणोऽभवत् ॥ ४ ॥ पांडवैर्निर्जिताः सर्वे कौरवाःयुद्धदुर्मदाः ॥ अष्टादशे च दिवसे पांडवानां जयोऽभवत् ॥ ५ ॥ दिनान्ते भगवान्कृष्णो ज्ञात्वा कालस्य दुर्गतिम् ॥ शिवं तुष्टाव मनसा योगरूपं सनातनम् ॥ ६ ॥ ॥ कृष्ण उवाच ॥ ॥ नमः शांताय रुद्राय भूतेशाय कपर्दिने ॥ कालकर्त्रे जगद्धर्त्रे पापहर्त्रे नमोनमः ॥ ७ ॥ पांडवान्रक्ष भगवन्मद्भक्तान्भूतभीरुकान् ॥ इति श्रुत्वा स्तवं रुद्रो नंदियानोपरि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थितः ॥ रक्षार्थं शिबिराणां च प्राप्तवाञ्छूलहस्तधृक् ॥ ८ ॥ तदा नृपाज्ञया कृष्णः स गतो गजसाह्वयम् ॥ पांडवाः पंच निर्गत्य सरस्वत्या
स्तटेऽवसन् ॥ ९ ॥ निशीथे द्रौणिभोजौ च कृपस्तत्र समाययुः ॥ तुष्टुवुर्मनसा रुद्रं तेभ्यो मार्गं शिवोददात् ॥ १० ॥ अश्वत्थामा तु बलवा
ञ्छिवदत्तमसिं तदा ॥ गृहीत्वा स जघानाशु धृष्टद्युम्नपुरःसरान् ॥ ११ ॥ हत्वा यथेष्टमगमद्द्रौणिस्ताभ्यां समन्वितः ॥ १२ ॥ पार्षतस्यैव
सूतश्च हतशेषो भयातुरः ॥ पांडवान्वर्णयामास यथा जातो जनक्षयः ॥ १३ ॥ आगस्कृतं शिवं ज्ञात्वा भीमाद्याः क्रोधमूर्च्छिताः ॥ स्वायुधैस्ता
डयामास देवदेवं पिनाकिनम् ॥ १४ ॥ अस्त्रशस्त्राणि तेषां तु शिवदेहे समाविशन् ॥ दृष्ट्वा ते विस्मिताः सर्वे प्रजघ्नुस्तलमुष्टिभिः ॥ १५॥ ताञ्छ
शाप तदा रुद्रो यूयं कृष्णप्रपूजकाः ॥ अतोऽस्माभी रक्षिणीया वधयोग्याश्च वै भुवि ॥ १६ ॥ पुनर्जन्म कलौ प्राप्य भोक्ष्यते चापराधकम् ॥
इत्युक्त्वान्तर्दधे देवः पांडवा दुःखितास्तदा ॥ १७ ॥ हरिं शरणमाजग्मुरपराधनिवृत्तये ॥ तदा कृष्णयुताः सर्वे पांडवाः शस्त्रवर्जिताः ॥ १८ ॥
तुष्टुवुर्मनसा रुद्रं तदा प्रादुरभूच्छिवः ॥ वरं वरयत प्राह कृष्णः श्रुत्वाब्रवीदिदम् ॥ १९ ॥ शस्त्राण्यस्त्राणि यान्येव त्वदंगे क्षपितानि वै ॥
पांडवेभ्यश्च देहि त्वं शापस्यानुग्रहं कुरु ॥ २० ॥ इति श्रुत्वा शिवः प्राह कृष्णदेव नमोऽस्तु ते ॥ अपराधो न मे स्वामिन्मोहितोऽहं
तवाज्ञया ॥ २१ ॥ तद्वशेन मया स्वामिन्दत्तः शापो भयंकरः ॥ नान्यथा वचनं मे स्यादंशावतरणं भवेत् ॥ २२ ॥ वत्सराजस्य
पुत्रत्वं गमिष्यति युधिष्ठिरः ॥ बलखानिरिति ख्यातः शिरीषाख्यपुराधिपः ॥ २३ ॥ भीमो दुर्वचनाद्दुष्टो म्लेच्छयोनौ भविष्यति ॥
वीरणो नाम विख्यातः स वै वनरसाधिपः ॥ २४ ॥ अर्जुनांशश्च मद्भक्तो जनिष्यति महामतिः ॥ पुत्रः परिमलस्यैव ब्रह्मानन्द इति स्मृतः॥२५॥
कान्यकुब्जे हि नकुलो भविष्यति महाबलः॥रत्नभानुसुतो सौ वै लक्ष्मणो नाम विश्रुतः॥२६॥ सहदेवस्तु बलवाञ्जनिष्यति महामतिः॥भीष्मसिंह
सुतो जातो देवसिंह इति स्मृतः ॥२७॥ धृतराष्ट्रांश एवासौ जनिष्यत्यजमेरके ॥ पृथिवीराज इति स द्रौपदी तत्सुता स्मृता ॥२८॥ वेला नाम्ना च
विख्याता तारकः कर्ण एव हि ॥ रक्तबीजस्तथा रुद्रो भविष्यति महीतले ॥२९॥ कौरवाश्च भविष्यन्ति मायायुद्धविशारदाः॥ पांडुपक्षाश्च ते सर्वे
धर्मिणो बलशालिनः ॥३०॥ ॥ सूत उवाच ॥ ॥ इति श्रुत्वा हरिः प्राह विहस्य परमेश्वरम् ॥ मया शक्त्यवतारेण रक्षणीया हि पांडवाः ॥३१॥
महावती पुरी रम्या मायादेवीविनिर्मिता ॥ देशराजसुतस्तत्र ममांशो हि जनिष्यते ॥ ३२ ॥ देवकीजठरे जन्मोदयसिंह इति स्मृतः ॥ आल्हादो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मम धामांशो जनिष्यति गुरुर्मम ॥ ३३ ॥ हत्वाग्निवंशजान्भूपान्स्थापयिष्यामि वै कलिम् ॥ इति श्रुत्वा शिवो देवस्तत्रैवांतरधीयत ॥ ३४ ॥
इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये विक्रमाख्यानकाले प्रथमोऽध्यायः ॥ १ ॥ छ ॥
॥ ॥ सूत उवाच ॥ ॥ प्रातः काले च संप्राप्ते पांडवाः पुत्रशोकिनः ॥ प्रेतकार्याणि ते कृत्वा भीष्मान्तिकमुपाययुः ॥ १ ॥ राजधर्मान्मोक्षधर्मा न्दानधर्मान्विभागशः ॥ श्रुत्वायजन्नश्वमेधैस्त्रिभिरुत्तमकर्मभिः ॥२॥ पट्त्रिंशदब्दराज्यं हि कृत्वा स्वर्गपुरं ययुः ॥ जनिष्यन्ते तदंशा वै कलिधर्म विवृद्धये ॥ ३ ॥ ॥ व्यास उवाच ॥ ॥ इत्युक्त्वा स मुनिः सर्वान्पुनः सूतो वदिष्यति ॥ गच्छध्वं मुनयः सर्वे योगनिद्रावशो ह्यहम् ॥ चक्र तीर्थे समाधिस्थो ध्यायेऽहं त्रिगुणात्परम् ॥ ४ ॥ इति श्रुत्वा तु मुनयो नैमिषारण्यवासिनः ॥ योगसिद्धिं समास्थाय गमिष्यंत्यात्मनोन्तिके ॥ ५ ॥ द्वादशाब्दशते कालेऽतीते ते शौनकादयः ॥ ६ ॥ उत्थाय देवखाते च स्नानध्यानादिकाः क्रियाः ॥ कृत्वा सूतान्तिकं गत्वा वदिष्यंति पुनर्वचः ॥ ७ ॥ ॥ ऋषय ऊचुः ॥ ॥ विक्रमाख्यानकालोऽयं द्वापरे च शिवाज्ञया ॥ विनीतान्भगवन्भूमौ तदा तान्नृपतीन्वद ॥ ८ ॥
॥ ॥ सूत उवाच ॥ ॥ स्वर्गते विक्रमादित्ये राजानो बहुधाऽभवन् ॥ तथाष्टादश राज्यानि तेषां नामानि मे शृणु ॥ ९ ॥ पश्चिमे सिंधुन द्यंते सेतुबन्धे हि दक्षिणे ॥ उत्तरे बदरीस्थाने पूर्वे च कपिलान्तिके ॥१०॥ अष्टादशैव राष्ट्राणि तेषां मध्ये बभूविरे ॥ इंद्रप्रस्थं च पांचालं कुरु क्षेत्रं च कापिलम् ॥ ११ ॥ अन्तर्वेदी व्रजश्चैवाजमेरं मरुधन्व च ॥ गौर्जरं च महाराष्ट्रं द्राविडं च कलिंगकम् ॥ १२ ॥ आवंत्यं चोडुपं वंगं गौडं मागधमेव च ॥ कौशल्यं च तथा ज्ञेयं तेषां राजा पृथक्पृथक् ॥ १३ ॥ नानाभाषाः स्थितास्तत्र बहुधर्मप्रवर्तकाः ॥ एवमब्दशतं जातं ततस्ते वै शकादयः ॥१४॥ श्रुत्वा धर्मविनाशं च बहुवृंदैः समन्विताः ॥ केचित्तीर्त्वा सिंधुनदीमार्य्यदेशं समागताः ॥ १५ ॥ हिमपर्वतमार्गेण सिंधुमार्गेण चागमन् ॥ जित्वार्य्याँल्लुण्ठयित्वा तान्स्वदेशं पुनराययुः ॥ १६ ॥ गृहीत्वा योषितस्तेषां परं हर्षमुपाययुः ॥ एतस्मिन्नन्तरे तत्र शालिवाहनभूपतिः ॥ १७ ॥ विक्रमादित्यपौत्रश्च पितृराज्यं गृहीतवान् ॥ जित्वा शकान्दुराधर्षांश्चीनतैत्तिरिदेशजान् ॥ १८ ॥ बाह्लीकान्कामरूपांश्च रोमजान्खुरजा ञ्छठान् ॥ तेषां कोशान्गृहीत्वा च दंडयोग्यानकारयत् ॥ १९ ॥ स्थापिता तेन मर्य्यादा म्लेच्छार्याणां पृथक्पृथक् ॥ सिंधुस्थानमिति ज्ञेयं राष्ट्र मार्य्यस्य चोत्तमम् ॥२०॥ म्लेच्छस्थानं परं सिन्धोः कृतं तेन महात्मना ॥ एकदा तु शकाधीशो हिमतुंगं समाययौ ॥ २१ ॥ हूणदेशस्य मध्ये वै गिरिस्थं पुरुषं शुभम् ॥ ददर्श बलवान्राजा गौरांगं श्वेतवस्त्रकम् ॥ २२ ॥ को भवानिति तं प्राह स होवाच मुदान्वितः ॥ ईशपुत्रं च मां



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्धि कुमारीगर्भसंभवम् ॥ २३ ॥ म्लेच्छधर्मस्य वक्तारं सत्यव्रतपरायणम् ॥ इति श्रुत्वा नृपः प्राह धर्मः को भवतो मतः ॥ २४ ॥ श्रुत्वो वाच महाराज प्राप्ते सत्यस्य संक्षये ॥ निर्मर्यादे म्लेच्छदेशे मसीहोऽहं समागतः ॥ २५ ॥ ईशामसी च दस्यूनां प्रादुर्भूता भयंकरी ॥ तामहं म्लेच्छतः प्राप्य मसीहत्वमुपागतः ॥ २६ ॥ म्लेच्छेषु स्थापितो धर्मो मया तच्छृणु भूपते ॥ मानसं निर्मलं कृत्वा मलं देहे शुभाशुभम् ॥२७॥ नैगमं जपमास्थाय जपेत निर्मलं परम् ॥ न्यायेन सत्यवचसा मनसैक्येन मानवः ॥ २८ ॥ ध्यानेन पूजयेदीशं सूर्यमंडलसंस्थितम् ॥ अचलोऽयं प्रभुः साक्षात्तथा सूर्योऽचलः सदा ॥ २९ ॥ तत्त्वानां चलभूतानां कर्षणः स समंततः ॥ इति कृत्येन भूपाल मसीहा विलयं गता ॥ ३० ॥ ईशमूर्तिर्हृदि प्राप्ता नित्यशुद्धा शिवंकरी ॥ ईशामसीह इति च मम नाम प्रतिष्ठितम् ॥ ३१ ॥ इति श्रुत्वा स भूपालो नत्वा तं म्लेच्छपूजकम् ॥ स्थापयामास तं तत्र म्लेच्छस्थाने हि दारुणे ॥ ३२ ॥ स्वराज्यं प्राप्तवान्राजा हयमेधमचीकरत् ॥ राज्यं कृत्वा स षष्टयब्दं स्वर्गलोकमुपाययौ ॥ ३३ ॥ स्वर्गते नृपतौ तस्मिन्यथा चासीत्तथा शृणु ॥ ३४ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये शालिवाहनकाले द्वितीयोऽध्यायः ॥ २ ॥ छ ॥ ॥ श्रीसूत उवाच ॥ ॥ शालिवाहनवंशे च राजानो दश चाभवन् ॥ राज्यं पंचशताब्दं च कृत्वा लोकान्तरं ययुः ॥ १ ॥ मर्य्यादा क्रमतो लीना जाता भूमंडले तदा ॥ भूपति र्दशमो यो वै भोजराज इति स्मृतः ॥ दृष्ट्वा प्रक्षीणमर्य्यादां बली दिग्विजयं ययौ ॥ २ ॥ सेनया दशसाहस्र्या कालिदासेन संयुतः ॥ तथान्यै र्ब्राह्मणैः सार्द्धं सिंधुपारमुपाययौ ॥ ३ ॥ जित्वा गांधारजान्म्लेच्छान्काश्मीरान्नारवाञ्छठान् ॥ तेषां प्राप्य महाकोशं दंडयोग्यानकारयत् ॥४॥ एतस्मिन्नन्तरे म्लेच्छ आचार्य्येण समन्वितः ॥ महामद इति ख्यातः शिष्यशाखासमन्वितः ॥ ५ ॥ नृपश्चैव महादेवं मरुस्थलनिवासिनम् ॥ गंगाजलैश्च संस्नाप्य पंचगव्यसमन्वितैः ॥ चंदनादिभिरभ्यर्च्य तुष्टाव मनसा हरम् ॥ ६ ॥ ॥ भोजराज उवाच ॥ ॥ नमस्ते गिरिजानाथ मरुस्थलनिवासिने ॥ त्रिपुरासुरनाशाय बहुमायाप्रवर्त्तिने ॥ ७ ॥ म्लेच्छैर्गुप्ताय शुद्धाय सच्चिदानन्दरूपिणे ॥ त्वं मां हि किंकरं विद्धि शरणार्थमुपागतम् ॥ ८ ॥ ॥ सूत उवाच ॥ ॥ इति श्रुत्वा स्तवं देवः शब्दमाह नृपाय तम् ॥ गंतव्यं भोजराजेन महाकालेश्वरस्थले ॥ ९ ॥ म्लेच्छैस्सुदूषिता भूमिर्वाहीका नाम विश्रुता ॥ आर्य्यधर्मो हि नैवात्र वाहीके देशदारुणे ॥ १० ॥ बभूवात्र महामायी योऽसौ दग्धो मया पुरा ॥ त्रिपुरो बलिदैत्येन प्रेपितः पुनरागतः ॥ ११ ॥ अयोनिः स वरो मत्तः प्राप्तवान्दैत्यवर्द्धनः ॥ महामद इति ख्यातः पैशाचकृतितत्परः ॥ १२ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नागन्तव्यं त्वया भूप पैशाचे देशधूर्तके ॥ मत्प्रसादेन भूपाल तव शुद्धिः प्रजायते ॥ १३ ॥ इति श्रुत्वा नृपश्चैव स्वदेशान्पुनरागमत् ॥ महामदश्च तैः सार्द्धं सिंधुतीरमुपाययौ ॥ १४ ॥ उवाच भूपतिं प्रेम्णा मायामदविशारदः ॥ तव देवो महाराज मम दासत्वमागतः ॥ १५ ॥ ममोच्छिष्टं सभुंजीयाद्यथा तत्पश्य भो नृप ॥ इति श्रुत्वा तथा दृष्ट्वा परं विस्मयमागतः ॥ १६ ॥ म्लेच्छधर्मे मतिश्चासीत्तस्य भूपस्य दारुणे॥१७॥ तच्छ्रुत्वा कालिदासस्तु रुषा प्राह महामदम् ॥ माया ते निर्मिता धूर्त नृपमोहनहेतवे ॥ १८ ॥ हनिष्यामि दुराचारं वाहीकं पुरुषाधमम् ॥ इत्युक्त्वा स द्विजः श्रीमान्नवार्णजपतत्परः ॥ १९ ॥ जप्त्वा दशसहस्रं च तद्दशांशं जुहाव सः ॥ भस्म भूत्वा स मायावी म्लेच्छदेवत्वमागतः॥२०॥ भयभीतास्तु तच्छिष्या देशं वाहीकमाययुः ॥ गृहीत्वा स्वगुरोर्भस्म मदहीनत्वमागतम् ॥ २१ ॥ स्थापितं तैश्च भूमध्ये तत्रोषुर्मदतत्पराः ॥ मदहीनं पुरं जातं तेषां तीर्थं समं स्मृतम् ॥ २२ ॥ रात्रौ स देवरूपश्च बहुमायाविशारदः ॥ पैशाचं देहमास्थाय भोजराजं हि सोऽब्रवीत्॥२३॥ आर्य्यधर्म्मो हि ते राजन्सर्वधर्मोत्तमः स्मृतः ॥ ईशाज्ञया करिष्यामि पैशाचं धर्मदारुणम् ॥ २४ ॥ लिंगच्छेदी शिखाहीनः श्मश्रुधारी स दूषकः ॥ उच्चालापी सर्वभक्षी भविष्यति जनो मम ॥ २५ ॥ विना कौलं च पशवस्तेषां भक्ष्या मता मम ॥ मुसलेनैव संस्कारः कुशैरिव भविष्यति ॥ २६ ॥ तस्मान्मुसलवन्तो हि जातयो धर्मदूषकाः ॥ इति पैशाचधर्मश्च भविष्यति मया कृतः ॥ २७ ॥ इत्युक्त्वा प्रययौ देवः स राजा गेहमाययौ ॥ त्रिवर्णे स्थापिता वाणी सांस्कृती स्वर्गदायिनी ॥ २८ ॥ शूद्रेषु प्राकृती भाषा स्थापिता तेन धीमता ॥ पंचाशदब्दकालं तु राज्यं कृत्वा दिवं गतः ॥ २९ ॥ स्थापिता तेन मर्य्यादा सर्वदेवोपमानिनी ॥ आर्य्यावर्तः पुण्यभूमिर्मध्यं विंध्यहिमालयोः ॥ ३० ॥ आर्य्यवर्णाः स्थितास्तत्र विंध्यान्ते वर्णसंकराः ॥ नरा मुसलवन्तश्च स्थापिताः सिंधुपारजाः ॥ ३१ ॥ बर्बरे तुषदेशे च द्वीपे नानाविधे तथा ॥ ईशामसीहधर्म्माश्च सुरै राज्ञैव संस्थिताः ॥ ३२ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्य्याये कलियुगीयेतिहाससमुच्चये तृतीयोऽध्यायः ॥ ३ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ स्वर्गते भोजराजे तु सप्तभूपास्तदन्वये ॥ जाताश्चाल्पायुषो मन्दास्त्रिशताब्दान्तरे मृताः ॥ १ ॥ बहुभूपवती भूमिस्तेषां राज्ये बभूव ह ॥ वीरसिंहश्च यो भूपः सप्तमः संप्रकीर्तितः ॥ २ ॥ तदन्वये त्रिभूपाश्च द्विशताब्दान्तरे मृताः ॥ गंगासिंहश्च यो भूपो दशमः स प्रकीर्तितः ॥ ३ ॥ कल्पक्षेत्रे च राज्यं स्वं कृतवान्धर्मतो नृपः ॥ अन्तर्वेद्यां कान्यकुब्जे जयचन्द्रो महीपतिः ॥ ४ ॥ इंद्रप्रस्थेनंगपालस्तोमरान्वयसंभवः ॥ अन्ये च बहवो भूपा बभूवुर्ग्रामराष्ट्रपाः ॥ ५ ॥ अग्निवंशस्य विस्तारो बभूव बलवत्तरः ॥ पूर्वे तु कपिल



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थाने वाहीकान्ते तु पश्चिमे ॥ ६ ॥ उत्तरे चीनदेशान्ते सेतुबंधे तु दक्षिणे ॥ षष्टिलक्षाश्च भूपाला ग्रामपा बलवत्तराः ॥ ७ ॥ अग्निहोत्रस्य कर्तारो गोब्राह्मणहितैषिणः ॥ बभूवुर्द्वापरसमा धर्मकृत्यविशारदाः ॥८॥ द्वापराख्यसमः कालः सर्वत्र परिवर्तते ॥ गेहेगेहे स्थितं द्रव्यं धर्मश्चैव जनेजने ॥९॥ ग्रामेग्रामे स्थितो देवो देशेदेशे स्थितो मखः ॥ आर्यधर्मकरा म्लेच्छा बभूवुः सर्वतोमुखाः ॥१०॥ इति दृष्ट्वा कलिर्घोरो म्लेच्छया सह भीरुकः ॥ नीलाद्रौ प्राप्य मतिमान्हरिं शरणमाययौ ॥११॥ द्वादशाब्दमिते काले ध्यानयोगपरोऽभवत् ॥ ध्यानेन सच्चिदानंदं दृष्ट्वा कृष्णं सनातनम् ॥१२॥ तुष्टाव मनसा तत्र राधया सहितं हरिम् ॥ पुराणमजरं नित्यं वृंदावननिवासिनम् ॥१३॥ ॥ कलिरुवाच ॥ ॥ साष्टांगं दंडवत्स्वामिन्गृहाण मम चेश्वर ॥ पाहि मां शरणं प्राप्तं चरणे ते कृपानिधे ॥ १४ ॥ सर्वपापहरस्त्वं वै सर्वकालकरो हरिः ॥ भवान्गौरः सत्ययुगे त्रेतायां रक्तरूपकः ॥ ॥ १५ ॥ द्वापरे पीतरूपश्च कृष्णत्वं मम दिष्टके ॥ मत्पुत्राश्च स्मृता म्लेच्छा आर्य्यधर्मत्वमागताः ॥ १६ ॥ चतुर्गेहं च मे स्वामिन्द्यूतं मद्यं सुवर्णकम् ॥ स्त्री हास्यं चाग्निवंश्यैश्च क्षत्रियैश्च विनाशितम् ॥ १७ ॥ त्यक्तदेहस्त्यक्तकुलस्त्यक्तराष्ट्रो जनार्दन ॥ त्वत्पादांबुजमाधाय स्थितोऽहं शरणं त्वयि ॥१८॥ इति श्रुत्वा स भगवान्कृष्णः प्राह विहस्य तम् ॥ भो कले तव रक्षार्थं जनिष्येहं महावतीम् ॥१९॥ ममांशो भूमिमासाद्य क्षयिष्यति महाबलान् ॥ म्लेच्छवंशस्य भूपालान्स्थापयिष्यति भूतले ॥ २० ॥ इत्युक्त्वा भगवान्साक्षात्तत्रैवान्तरधीयत ॥ कलिस्तु म्लेच्छया सार्धं परमानंदमाप्तवान् ॥ २१ ॥ एतस्मिन्नन्तरे विप्र यथा जातं शृणुष्व तत् ॥ आभीरी वाक्सरे ग्रामे व्रतपा नाम विश्रुता ॥ २२ ॥ नवदुर्गाव्रतं श्रे[illegible] नववर्षं चकार ह ॥ प्रसन्ना चंडिका प्राह परं वरय शोभने ॥ २३ ॥ साह तां यदि मे मातर्वरो देयस्त्वयेश्वरि ॥ रामकृष्णसमौ बालौ भवेया[illegible] ममान्वये ॥ २४ ॥ तथेत्युक्त्वा तु सा देवी तत्रैवान्तरधीयत ॥ वसुमान्नाम नृपतिस्तस्या रूपेण मोहितः ॥ २५ ॥ उद्वाह्य धर्मतो भूपः स्वगे[illegible] तामवासयत् ॥ तस्यां जातौ नृपात्पुत्रौ देशराजस्तु तद्वरः ॥ २६ ॥ आवार्यो वत्सराजश्च शतहस्तिसमो बले ॥ जित्वा तौ मागधान्देशान्राज्यवंतौ बभूवतुः ॥ २७ ॥ शतयत्तः स्मृतो म्लेच्छः शूरो वनरसाधिपः ॥ तत्पुत्रो भीमसेनांशो वीरणोभूच्छिवाज्ञया ॥ २८ ॥ तालवृक्षप्रमाणेनचोर्ध्ववेगो हि तस्य वै ॥ तालनो नाम विख्यातः शतयत्तेन वै कृतः ॥ २९ ॥ ताभ्यां नृपाभ्यां तद्युद्धमभवल्लोमहर्षणम् ॥ युद्धेन हीनतां प्राप्तस्तालनो बलवत्तरः ॥ ३० ॥ तदा मैत्री कृता ताभ्यां तालनेन समन्विता ॥ जयचंद्रपरीक्षार्थे त्रयः शूराः समाययुः ॥ ३१ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चये चतुर्थोऽध्यायः ॥ ४ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ इंद्रप्रस्थेऽ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नंगपालोनपत्यश्च महीपतिः ॥ पुत्रार्थं कारयामास शैवं यज्ञं विधानतः ॥ १ ॥ कन्यके च तदा जाते शिवभागप्रसादतः ॥ चंद्रकांतिश्च ज्येष्ठा वै द्वितीया कीर्तिमालिनी ॥ २ ॥ कान्यकुब्जाधिपायैव चंद्रकान्ति पिताददत् ॥ देवपालाय शुद्धाय राष्ट्रपालान्वयाय च ॥ ३ ॥ सोमेश्वराय भूपाय चपहानिकुलाय तु ॥ अजमेराधिपायैव तथा वै कीर्तिमालिनीम् ॥ ४ ॥ जयशर्मा द्विजः कश्चित्समाधिस्थो हिमालये ॥ दृष्ट्वा भूपोत्सवं रम्यं राज्यार्थे स्वमनोऽदधत् ॥ ५ ॥ त्यक्त्वा देहं स शुद्धात्मा चंद्रकांत्याः सुतोभवत् ॥ जयचंद्र इति ख्यातो बाहुशाली जितेन्द्रियः ॥ रत्नभानुश्च संजज्ञे शूरस्तस्यानुजो बली ॥ ६ ॥ स जित्वा गौडवंगादीन्मरुदेशान्मदोत्कटान् ॥ दंड्यान्कृत्वा गृहं प्राप्य भ्रात्राज्ञातत्परोऽभवत् ॥७॥ गंगासिंहस्य भगिनी नाम्ना वीरवती शुभा ॥ रत्नभानोश्च महिषी बभूव वरवर्णिनी ॥ ८ ॥ नकुलांशस्तदा भूमौ तस्यां जातः शिवाज्ञया ॥ लक्षणो नाम बलवान्खड्गयुद्धविशारदः ॥ स सप्ताब्दान्तरे प्राप्ते पितुस्तुल्यो बभूव ह ॥ ९ ॥ त्रयश्च कीर्तिमालिन्यां पुत्रा जाता मदोत्कटाः ॥ धुंधकारश्च प्रथमस्ततः कृष्णकुमारकः ॥ पृथिवीराज एवासौ ततोनुज इति स्मृतः ॥ १० ॥ द्वादशाब्दवयः प्राप्तः सिंहखेलस्ततोऽभवत् ॥ श्रुत्वा चानंगपालश्च तस्मै राज्यं स्वयं ददौ ॥ गत्वा हिमगिरिं रम्यं योगध्यानपरोभवत् ॥ ११ ॥ मथुरायां धुंधकारोऽजमेरे च ततोनुजः ॥ राजा बभूव नीतिज्ञस्तौ सुतौ पितुराज्ञया ॥ १२ ॥ प्रद्योतश्चैव विद्योतः क्षत्रियौ चंद्रवंशजौ ॥ मंत्रिणौ तस्य भूपस्य बलवंतौ मदोत्कटौ ॥ १३ ॥ प्रद्योततनयो जातो नाम्ना परिमलो बली ॥ लक्षसेनाधिपः सो हि तेन राज्ञैव संस्कृतः ॥ १४ ॥ विद्योताद्भीष्मसिंहश्च गजसेनाधिपोऽभवत् ॥ स्वर्गतेऽनंगपाले तु भूमिराजो महीपतिः ॥ १५ ॥ दृष्ट्वा तान्विप्रियान्सर्वान्निजराज्यान्निराकरोत् ॥ प्रद्योताद्याश्च चत्वारः स्वशूरैर्द्विशतैर्युताः ॥ १६ ॥ कान्यकुब्जपुरं प्राप्य जयचंद्रमवर्णयन् ॥ जयचंद्र महीपाल त्वन्मातृष्वसृजो नृपः ॥ १७ ॥ मातामहस्य ते राज्यं प्राप्तवान्निर्भयो बली ॥ न्यायेन कथितोऽस्माभिरर्द्धराज्यं हि ते स्मृतम् ॥ १८ ॥ सर्वराज्यं कथं भुंक्षे श्रुत्वा तेन निराकृताः ॥ भवन्तं शरणं प्राप्ता यथायोग्यं तथा कुरु ॥ १९ ॥ इति श्रुत्वा महीपालो जयचंद्र उवाच तान् ॥ अश्वसैन्ये मदीये चाधिकारी ते सुतो भवेत् ॥ २० ॥ नाम्ना परिमलः शूरस्त्वं मन्मंत्री भवाधुना ॥ विद्योतश्च तथा मंत्री गजसैन्ये हि भीष्मकः ॥ २१ ॥ वृत्त्यर्थे च मया वो वै पुरी दत्ता महावती ॥ महीपतेश्च भूपस्य नगरी सा प्रियंकरी॥२२॥इति श्रुत्वा तु ते सर्वे तथा मत्वा मुमोदिरे ॥ महीपतिस्तु बलवान्दुःखात्संत्यज्य तां पुरीम्॥२३॥ कृत्वौर्वीयां पुरीमन्यां तत्र वासमकारयत् ॥ अगमा मलना चैव भगिन्यौ तस्य चोत्तमे ॥ २४ ॥ अगमा भूमिराजाय चान्या परिमलाय सा ॥ दत्ता भ्रात्रा विधानेन



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवः स्वगृहं ययौ ॥ ६८ ॥ मकरन्दस्तु संबुद्धो मदनाग्निप्रपीडितः ॥ गेहमागत्य पुष्पायाः सर्वं तस्यै न्यवेदयत् ॥ ६९ ॥ तत्स्नेहकातरं भूपं मकरंदं महाबलम् ॥ पुष्पाह श्लक्ष्णया वाचा शृणु पार्थिवसत्तम ॥ ७० ॥ महावती पुरी रम्या तत्र कृष्णागृहं शुभम् ॥ त्वद्भयाच्च गता गेहं कृष्णांशस्य च सा सखी ॥ ७१ ॥ रोदनं कुर्वती गाढं तव निन्दनतत्परा ॥ ७२ ॥ आगमिष्यति वै वीरो बलैस्सार्द्धं महाबलः ॥ अतस्त्वं सर्वसैन्यानि सज्जीभूतानि वै कुरु ॥ ७३ ॥ जितो येन महावीरः पितृव्यो लहरस्तव ॥ विवाहं कारयामास तद्बन्धोः सुतया सह ॥ ७४ ॥ इति श्रुत्वा वचो घोरं मकरन्दो महीपतिः ॥ शतघ्नीः स्थापयामास दुर्गकूटेषु दारुणाः ॥ ७५ ॥ स्वसैन्यं च समाहूय त्रिलक्षं खड्गसंयुतम् ॥ तत्रैव स्थापयामास राष्ट्ररक्षार्थमुद्यतः ॥ ७६ ॥ कृष्णांशस्तु गृहं प्राप्य बलखानिमुवाच तत् ॥ श्रुत्वा स च महावीरो भ्रातृमित्रसमन्वितः ॥ पञ्चलक्षबलैस्सार्द्धं मयूरनगरं ययौ ॥ ७७ ॥ शतघ्न्यः पञ्चसाहस्रा गजा दश सहस्रकाः ॥ एकलक्षं हयाः सर्वे शेषा ज्ञेयाः पदातयः ॥ उषित्वा पक्षमात्रं तु मार्गे पांचालके तदा ॥ ७८ ॥ मकरंदस्तु तच्छ्रुत्वा शनिभल्लकरः स्थितः ॥ सेनामाज्ञापयामास जहि शत्रून्महाबलान् ॥ ७९ ॥ श्रुत्वा पदातयो लक्षं शतघ्नीवह्निमाददन् ॥ ते तु वै सप्तसाहस्राश्चक्रुः शत्रुबलक्षयम् ॥ ८० ॥ ग्रामस्य दक्षिणद्वारे हयारूढास्तदा ययुः ॥ भुशुंडीक्षेपणीशक्तिखड्गयुद्धविशारदाः ॥ ८१ ॥ एकलक्षं हयास्सर्वे मकरंदस्य भूपतेः ॥ तयोश्चासीन्महद्युद्धं तुमुलं हयसेनयोः ॥ ८२ ॥ तदा तु पश्चिमद्वारे गजा विंशत्सहस्रकाः ॥ तथा दशसहस्रैश्च शत्रुभिः सह संययुः ॥ ८३ ॥ उष्ट्ररक्षा महावीराश्चत्वारिंशत्सहस्रकाः ॥ बलखान्यादिभिः सार्द्धं युयुधुर्दिशिचोत्तरे ॥ ८४ ॥ अहोरात्रमभूद्युद्धं तुमुलं लोमहर्षणम् ॥ ततः पराजितास्सर्वे बलखानेर्महाबलाः ॥ ८५ ॥ त्यक्त्वा युद्धं तु ते सर्वे दुद्रुवुश्च दिशो दश ॥ कृष्णांशो विंदुलारूढो बलखानिः कपोतगः ॥ ८६ ॥ मनोरथस्थितो देवश्चाह्लादस्तु गजस्थितः ॥ पूर्वादिक्रमतो द्वारि गतास्ते रणदुर्मदाः ॥ ८७ ॥ सत्सरुं खड्गमुत्सृज्य चक्रुः शत्रुमहावधम् ॥ पराजिताश्च ते शूरा मकरंदमुपाययुः ॥ ८८ ॥ वह्निपुत्रस्तुबलवान्वाजिनं च शिलामयम् ॥ शनिभल्लकरग्राही तमारुह्य रणं ययौ ॥ ८९ ॥ कृष्णांशाद्याश्च ते शूरा रुरुधुस्सर्वतोदिशम् ॥ तं च कंठे ददौ खड्गं बलखानिर्महाबलः ॥ ९० ॥ स्वभल्लं देवसिंहश्च तमंके च समाहनत् ॥ आह्लादो वक्षसि शरं कृष्णांशः खड्गमुत्तमम् ॥ ९१ ॥ शिलावाजिप्रभावेण कश्मलं न जगाम ह ॥ स दृष्ट्वा निष्फलान्वीराञ्जगर्ज भैरवं ध्वनिम् ॥ ९२ ॥ शनिभल्लेन

१ इकारलोपश्छान्दसः । २ अनुदात्तलक्षणस्यानित्यत्वाच्छान्दसत्वाद्वा परस्मैपदम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ते सर्वे बभूवुर्मूर्छिता रणे ॥ तेऽश्वाः शिलाश्ववेगेन मूर्छिताश्चाभवन्क्षणात् ॥ ९३ ॥ मकरंदस्तु बलवान्बद्ध्वा तान्युद्धदुर्मदान् ॥ प्रसन्नात्मा ययौ गेहं स्वपित्रे तान्न्यवेदयत् ॥ ९४ ॥ दृष्ट्वा पराजितान्वीरान्रूपणो भयकातरः ॥ महावतीं पुरीं प्राप्य भूपतिं समवर्णयत् ॥ ९५ ॥ ब्रह्मानंदस्तु तच्छ्रुत्वा लक्षसैन्यसमन्वितः ॥ इंदुलेन सहायेन मयूरनगरं ययौ ॥ ९६ ॥ लिखित्वा निर्मलं पत्रं तद्राज्ञे त्वरितो ददौ ॥ भूमिराजसुताकांतं विद्धि मां मनुजर्षभ ॥ ९७ ॥ कृष्णांशाय सुतां देहि नाम्ना पुष्पवतीं शुभाम् ॥ नो चेन्मत्कठिनैर्बाणैः क्षयं यास्यंति सैनिकाः ॥ ९८ ॥ निशम्येति नृपश्रेष्ठो मयूरध्वज एव सः ॥ मकरंदेन सहितो द्विलक्षबलसंयुतः ॥ अहोरात्रं कृतं युद्धं तेन सार्द्धं भयप्रदम् ॥ ९९ ॥ ब्रह्मानंदस्तु बलवान्बाणयुद्धमचीकरत् ॥ मकरंदस्य भल्लेन मूर्छितः सोऽपतद्भुवि ॥ १०० ॥ तदा स्वर्णवतीपुत्रो जयन्तः शक्रसंभवः ॥ स्वविद्यां दर्शयामास मकरंदाय धीमते ॥ १०१ ॥ वैष्णवास्त्रप्रभावेन शिलाश्वो भस्म चाभवत् ॥ ब्रह्मास्त्रेण भृगुश्रेष्ठ शनिभल्लोऽपतद्भुवि ॥१०२॥ नागपाशेन तं बद्ध्वा मकरंदं महाबलम् ॥ विवाहं कारयामास कृष्णांशस्य महात्मनः ॥१०३॥ सेनामुज्जीवयामास स्वकीयामिंदुलो बली ॥ मंगलं कारयामास मकरंदो गृहेगृहे ॥ ददौ कन्यां विधानेन बहुद्रव्यसमन्विताम् ॥१०४॥ मयूरध्वजभूपालो महास्नेहमचीकरत्॥नृपाज्ञां ते पुरस्कृत्य ययुः सार्द्धं महावतीम् ॥ ॥१०५॥इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये कृष्णांशविवाहोनामैकविंशोऽध्यायः॥२१॥

सूत उवाच ॥ महावत्यां तु संप्राप्ते कृष्णांशे बलवत्तरे ॥ मंगलं कृतवान्राजा तदा परिमलो बली ॥ १ ॥ पुष्पवत्या तया सार्द्धं गीतनृत्यविशारदः ॥ कृष्णांशः प्रत्यहं गेहे मुमोह सखिभिः सह ॥ २ ॥ हेमंतशिशिरे वीरो रहः क्रीडां करोति वै ॥ यथा शक्रोऽप्सरोभिश्च तथैव ह्युदयो बली ॥ ३ ॥ ग्राम्यधर्मं न कृतवान्सर्वस्पर्शविशारदः ॥ एकदा नृत्यक्रीडायां देवी पुष्पवती स्वयम् ॥ ४ ॥ कृष्णांशं वचनं प्राह पूर्वजन्मनि को भवान् ॥ इति श्रुत्वोदयो वीरो विहस्योवाच वै वचः ॥ ५ ॥ नृपो हं चंद्रदासश्च पूर्वजन्मनि हे प्रिये ॥ बाल्यात्प्रभृति मे दुःखं प्राप्तं दैवविनिर्मितम्॥६॥शालग्रामशिलापूजा प्रत्यहं वै मया कृता ॥ तेन पुण्यप्रभावेन सार्वभौमो बभूव ह ॥७॥ मृतेऽहनि तु संप्राप्ते शालग्रामे मनो दधौ ॥ सायुज्यं मे हरेश्चासीत्स्वयं ब्रह्मप्रसादतः॥८॥कलिना प्रार्थितो विष्णुः कालात्मा परमेश्वरः ॥ स्वदेहान्मां तु निष्कास्य भूमौ जनिमचीकरत् ॥९॥ यदा यदा हि धर्मस्य ग्लानिर्भवति वै प्रिये॥युगधर्मस्य मर्यादास्थापनाय भवाम्यहम्॥१०॥सत्ये तु मानसी पूजा देवानां तृप्तिहेतवे ॥ त्रेतायां वह्नि

१ मयूरध्वजेनेति शेषः।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूजा च यज्ञदानादिका क्रिया ॥११॥द्वापरे मूर्तिपूजा च देवानां वै प्रियंकरी ॥ कलौ तु दारुणे प्राप्ते ब्रह्मपूजनमुत्तमम्॥१२॥अहं हंसः सत्ययुगे त्रेतायां यज्ञपुरुषः ॥ हिरण्यगर्भश्च प्रिये द्वापरेऽहं सुखप्रदः ॥ शालग्रामः कलौ प्राप्ते देवानां तृप्तये ह्यहम् ॥ १३ ॥ मुनयो देवतास्सर्वास्तथा पितृगणाः प्रिये ॥ सर्वे ते तृप्तिमायांति [1]शालग्रामस्य पूजनात् ॥ १४ ॥ द्विजातिभिस्त्रिवर्णैश्च पूजनं चंदनादिकैः ॥[1]शूद्रैश्च स्नानमात्रेण भक्ति भावेन पूजनम् ॥१५॥ म्लेच्छैश्च दर्शनं पुण्यं विनयाद्भक्तिभावतः ॥ शालग्रामः स्वयं ब्रह्म सच्चिदानंदविग्रहः ॥ तस्य दर्शनमात्रेण क्षयं यास्यंति वै मलाः ॥१६॥ इति ते कथितं देवि युगमर्यादमुत्तमम् ॥ पुरा त्वं कस्य तनया सत्यं कथय मेऽचिरम्॥१७॥पुष्पवत्युवाच ॥ पूर्वजन्मनि वेश्याहं चंद्रकांतिरिति श्रुता ॥ गाननृत्यादिकं वाद्यं देवस्याग्रे मया कृतम् ॥ १८ ॥ तेन पुण्यप्रभावेण स्वर्गलोकमुपागता ॥ देवैश्च प्रार्थिता तत्र रूप यौवनशालिनी ॥ १९ ॥ ब्रह्मचर्यं न तत्याज स्वर्गलोकेऽपि वै ह्यहम् ॥ तेन पुण्यप्रभावेण चोषा बाणसुताऽभवम् ॥ अनिरुद्धः स्वयं ब्रह्म मम पाणिं गृहीतवान् ॥ २० ॥ कलिना प्रार्थितो देवो मम स्वामी स्वहेतवे ॥ अर्चावतारमासाद्य मार्कंडेयस्थलं गतः ॥ २१ ॥ स्वप्रसादस्य महिमा दर्शितस्तेन तत्र वै ॥ अत्रैव स्थितिमर्यादो दारुरूपस्य मे [2]पतेः ॥ २२ ॥ अहं तस्याज्ञया स्वामिञ्जम्बुकस्य सुताभवम् ॥ दिव्यरूपसमायुक्ता नाम्नाहं विजयैषिणी ॥ २३ ॥ कृतं ममैव मरणं त्वद्भ्रात्रा बलखानिना ॥ मकरंदस्य भगिनी भूत्वा त्वां पतिमागता ॥२४॥ तेन दोषेण त्वद्भ्राता यातनां तीव्रमागतः ॥ राज्ञ इन्नगठस्यैव गेहे गजपतेः स्वयम् ॥ इत्युक्त्वा मौनमास्थाय रेमे पत्या समं मुदा ॥ २५ ॥ होलिकासमये प्राप्ते मलना स्नेहदुःखिता ॥ सुतां चंद्रावलीं रम्यां स्वप्नांते सा ददर्श ह ॥ रुरोद निशि दुःखेन स्वसुतास्नेहकातरा ॥ २६ ॥ तदोदयो महावीरो ज्ञात्वा रोदन कारणम् ॥ शूरैश्च दशसाहस्रैस्सार्द्धं बहुधनैर्युतः ॥ एकाकी प्रययौ वीरो यत्र चंद्रावलीगृहम् ॥ २७ ॥ महीपतिस्तु तच्छत्रुर्ज्ञात्वा कारणमुत्तमम् ॥ पश्चाज्जगाम कार्यार्थी स तु दुर्योधनांशकः ॥ बलीठाठमिति ख्यातं ग्रामं यादवपालितम् ॥ २८ ॥ वीरसेनो नृपस्तत्र त्रिलक्षबलसंयुतः ॥ अष्टौ सुताश्च तस्यासन्रूपयौवनशालिनः ॥ २९ ॥ कामसेनः प्रसेनश्च महासेनस्तथैव च ॥ सुखसेनो रूपसेनो विष्वक्सेनो मधुव्रतः ॥ मधुपश्च क्रमाज्जाता यादवांशाश्च यादवाः ॥ ३० ॥ तत्र गत्वा च कृष्णांशस्सभायां नरकेसरी ॥ दंडवत्प्रणतो भूत्वा वीरसेनं महीपतिम् ॥ ३१ ॥ मल नालिखितं पत्रं दत्त्वा राज्ञे महामनाः ॥ दशभारं सुवर्णस्य पुनर्वासमचीकरत् ॥ ३२ ॥ व्यंजनानि विचित्राणि भुक्त्वा यादवसंयुतः ॥ चंद्रा

१ नपुंसकत्वमार्षम् । २ पत्युः । ३ क्रियाविशेषणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वलीं समागत्य कुशलं च न्यवेदयत् ॥ ३३ ॥ प्रेमोत्सुका च भगिनी कृष्णांशं प्राह दुःखिता॥ भवान्ध्यब्दवया वीर तदाहं च विवाहिता ॥३४॥
विंशदब्दस्ततो जातो विस्मृता पितृमातृभिः ॥ समर्थेन त्वया वीर संस्मृता भगिनी स्वयम् ॥ ३५ ॥ अद्य मे सफलं जन्म जीवितं सफलं च मे
बंधुदर्शनमात्रेण सर्वं च सफलं मम ॥ ३६ ॥ प्रसन्नात्मोदयस्तत्र भगिनीं प्राह नम्रधीः ॥ जम्बुकेन गृहं सर्वं लुण्ठितं बलशालिना ॥ ३७ ॥
तस्य दुःखेन भूपालो भयभीतो दिनेदिने ॥ महाकष्टेन विजयो जम्बुकाच्चाभयोऽभवत् ॥ ३८ ॥ महीराजस्तु बलवान्रुरोध नगरीं मम ॥ मया
विवाहितो भ्राता ब्रह्मा तत्सुतया सह ॥ ३९ ॥ पुनश्च सिंहलद्वीपे जयंतार्थे वयं गताः ॥ एवं विधानि दुःखानि बहूनि ह्यभवन्पितुः ॥ ४० ॥
अतस्त्वां प्रति सुप्रीता वयं भगिनिकिंकराः ॥ मृदुवाक्यमिति श्रुत्वा तदा चंद्रावली मुदा ॥ ४१ ॥ गेहं निवासयामास स्वकीयं प्रेमविह्वला ॥
एतस्मिन्नन्तरे धूर्तौ महीपतिरुपाययौ ॥ ४२ ॥ सभायां वीरसेनस्य राज्ञा तेनैव सत्कृतः ॥ वार्तांतरं समासाद्य तमुवाच महीपतिः ॥ ४३ ॥
निष्कासिताश्च ते सर्वे राज्ञाह्लादादयः खलाः ॥ चौरितो नृपतेः कोशो हीनजात्यैर्महाबलैः ॥४४॥ तदा तु कुंठिताः सर्वे शिरीषाख्यपुरेऽवसन् ॥
छिद्रदर्शी तु कृष्णांशो गेहं तव समागतः ॥ ४५ ॥ चंद्रावल्याश्च वै दोलां गृहीत्वा स गमिष्यति ॥ सत्यं ब्रवीमि भूपाल नान्यथा वचनं मम ॥
॥ ४६ ॥ इति श्रुत्वा वीरसेनो ज्ञात्वा तत्सत्यकारणम् ॥ कामसेनं समाहूय चंद्रावल्याः पतिं सुतम् ॥४७॥ वचनं प्राह भोः पुत्र बंधनं कुरु तस्य
वै ॥ इति श्रुत्वा कामसेनो विषमादाय दारुणम् ॥ ४८ ॥ भोजनाय ददौ तस्यै ज्ञात्वा चन्द्रावली तदा ॥ भ्रातुरंतिकमासाद्य पात्रमादाय सा
ययौ ॥ ४९ ॥ कामसेनश्च कुपितो गृहीत्वा दंडवेतसम् ॥ स्वप्रियां ताडयामास स दृष्ट्वा तं तदाकुपत् ॥ ५० ॥ गृहीत्वा भुजयोस्तं वै बंधनाय
समुद्यतः ॥ बंधनत्वं गते पुत्रे वीरसेनो महाबलः ॥ ५१ ॥ पुत्रानाज्ञापयामास तस्य बंधनहेतवे ॥ एतस्मिन्नंतरे वीरो दोलामादाय सत्वरम् ॥
॥ ५२ ॥ सेनामध्ये समागम्य महद्युद्धमचीकरत् ॥ एकतो दशसाहस्राश्चिलक्षास्तु तथैकतः ॥ अहोरात्रमभूद्युद्धं दारुणं रोमहर्षणम् ॥ ५३ ॥
हता लक्षं महाशूरा उदयेन महाबलाः ॥ शेषाः प्रदुद्रुवुस्सर्वे यादवा भयकातराः ॥ ५४ ॥ दृष्ट्वा पराजितं सैन्यं सप्त पुत्रा महाबलाः ॥ स्वान्ग
जांश्च समारुह्य कृष्णांशं रुरुधू रुषा ॥ ५५ ॥ स वीरो बिंदुलारूढो भूमौ कृत्वा गजासनान् ॥ तेषामस्त्राणि संच्छिद्य बध्नाति बलदर्पितः॥५६॥
इति श्रुत्वा वीरसेनः सूर्यभक्तिपरायणः ॥ सौरमस्त्रं समादाय तस्य सैन्यमदाहयत् ॥ तेनास्त्रेणैव कृष्णांशः सहयो मूर्च्छितो भुवि ॥ ५७ ॥
वीरसेनस्तु तं बद्ध्वा मोचयित्वा सुतान्वधूम् ॥ स्वगेहमागतस्तूर्णं नानावाद्यान्यवादयत् ॥ ५८ ॥ हतशेषास्तदा वीराः कृष्णांशस्य ययुर्दिशः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हेतुं परिमलस्याग्रे सर्वमूचुस्तदादितः ॥ ५९ ॥ महीपतिं महाधूर्तं मत्वा राजाब्रवीदिदम् ॥ गच्छ त्वं मलनापुत्र लक्षसैन्यसमन्वितः ॥ ६० ॥ बद्धा स्वभगिनीकांतं स्वबंधुं मोचयाशु वै ॥ इति श्रुत्वा च स सुतो लक्षसेनासमन्वितः ॥६१॥ शीघ्रं गत्वा च नगरीं रुरोध बलवान्रुषा ॥ युद्धीभूते वले तस्मिन्वीरसेनो नृपोत्तमः ॥ सौरमस्त्रमुपादाय दाहनार्थं समुद्यतः ॥ ६२ ॥ सज्जीभूते तदस्त्रे तु ब्रह्मानंदो महाबलः ॥ ब्रह्मास्त्रेणैव स शरं वारयामास वै रुषा ॥ ६३ ॥ दृष्ट्वा भयान्वितो भूपस्तमेव शरणं ययौ ॥ ब्रह्मानंदस्तु तं भूपं वचनं प्राह निर्भयः ॥ ६४ ॥ धूर्तवाक्येन हे भूप मद्बंधुर्बाधितस्त्वया ॥ अवध्या च सदा नारी त्वत्सुतस्तामताडयत् ॥ अतस्त्वं भगिनीयुक्तं स्वसुतं देहि मे नृप ॥ ६५॥ इति श्रुत्वा च नृपतिर्वचनं प्राह नम्रधीः ॥ मत्सुता च गृहे नास्ति कामसेनं गृहाण भोः ॥ ६६ ॥ इत्युक्त्वा वीरसेनश्च सुतं चंद्रावलीं तथा ॥ दत्त्वा तस्मै प्रसन्नात्मा तत्प्रस्थानमकारयत् ॥ ६७ ॥ ब्रह्मानन्दोऽपि बलवान्कृष्णांशेन समन्वितः ॥ सेनयाशीतिसाहस्र्या ययौ सार्द्धं महावतीम् ॥ ६८ ॥ मलना स्वसुतं दृष्ट्वा प्रेमविह्वलकंपिता ॥ स्नापयित्वाश्रुधाराभिर्द्विजातिभ्यो ददौ धनम् ॥ ६९ ॥ इति ते कथितं विप्र कृष्णांशचरितं शुभम् ॥ शृण्वतां कलिपापघ्नं कथयिष्यामि वै पुनः ॥ ७० ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चये द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ चतुर्विंशाब्दकं प्राप्ते कृष्णांशे बलशालिनि ॥ इषशुक्लदशम्यां च कृतो राज्ञा महोत्सवः ॥ १ ॥ भोजयित्वा द्विजश्रेष्ठान्दत्त्वा तेभ्यो हि दक्षिणाः ॥ स्वभृत्येभ्यस्तथा वित्तं यथायोग्यं क्रमाद्ददौ ॥ २ ॥ कार्तिक्यां शुभयुक्तायां कृष्णांशो बलसंयुतः ॥ इन्दुलेन च संयुक्तो देवसिंहेन संयुतः ॥ ३ ॥ अयुतैः स्वर्णद्रव्यैश्च शूरैर्दशसहस्रकैः ॥ ययौ बर्हिष्मतीस्थाने नानाभूपसमन्विते ॥ ४ ॥ एतस्मिन्नंतरे तत्र चित्ररेखा समागता ॥ वृता सप्तालिभिर्देवी चित्रगुप्तप्रपूजिनी ॥ ५ ॥ गंगामध्ये महारम्यं यानं मायामयं तया ॥ कृतं कौतूहलयुतं बहुसंपत्समन्वितम् ॥ ६ ॥ आगतास्तत्र राजानो नाना तद्दर्शनोत्सुकाः ॥ तदोदयो देवयुतो जयंतेन समन्वितः ॥ शतशूरैश्च सहितो दर्शनार्थमुपाययौ ॥ ७ ॥ चित्ररेखा महारम्या बाह्लीकनृपतेः सुता ॥ ददर्श सुंदरं कान्तमिंदुलं शशिवन्मुखम् ॥ येन स्वप्नांतरे रम्यं सार्द्धं भुक्तं तया सुखम् ॥ ८ ॥ तमाह्लादसुतं ज्ञात्वा साभिनंदनदेहजा ॥ कृत्वा मोहमयं जालं शुकभूतं तदेंदुलम् ॥ ९ ॥ हृत्वा स्वयंवरे रम्ये परमानन्दमाययौ ॥ पुनराहृत्य तां मायां स्वगेहाय ययौ मुदा ॥ १० ॥ कृष्णांशस्तु तदा बुद्धा न ददर्श स्वकं शिशुम् ॥ देवसिंहं बोधयित्वा पप्रच्छ क्व गतः शिशुः ॥ ११ ॥ कालज्ञो देवसिंहोऽपि मोहितश्चित्रमायया ॥ न ज्ञातस्तेन वै बालः क्व गतः केन वा हृतः ॥ १२ ॥ विस्मितं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवसिंहं च दृष्ट्वा कृष्णांशको बली ॥ रुरोदोच्चैस्तदा गाढं चित्रमायाविमोहितः ॥ १३ ॥ श्रुत्वा तु रोदनं तस्य खलस्तत्र महीपतिः ॥ ययौ शीघ्रं प्रसन्नात्मा यत्राह्लादः स्वयं स्थितः ॥ रुदित्वा तत्र वै गाढं वचनं प्राह नम्रधीः ॥ १४ ॥ उदयो नाम ते भ्राता मोहयित्वा मदेन तौ ॥ देवमि न्दुलमेवासौ हत्वा धारास्वरोपयत् ॥ १५ ॥ प्रत्यक्षं च मया दृष्टं तेन वीरेण वै कृतम् ॥ शतं स्वर्णं च मे दत्त्वा विनयेनावरोधितः ॥ १६ ॥ देवसिंहस्ततो बुद्ध्या न ज्ञातं तेन यत्कृतम् ॥ इति श्रुत्वा तु वचनं निश्चयं नाधिगच्छति ॥ १७ ॥ एतस्मिन्नंतरे प्राप्तौ तौ वीरौ रोदने रतौ ॥ तद्वियोगेन कृष्णांशः स्वदेहं त्यक्तुमुद्यतः ॥ १८ ॥ आह्लादो निश्चयं ज्ञात्वा भाषितं च महीपतेः ॥ कृष्णांशं ताडयामास वेतसैश्चर्मकर्तनैः॥१९॥ तस्य माता तथा पत्नी भगिनी प्रेमदुःखिताः ॥ आह्लादं बोधयामासुर्धूर्तमायाविमोहितम् ॥ न बोधितस्तदा वीरश्चित्रमायाविमोहितः ॥ २० ॥ तदा पुष्पवती देवी स्वपतिं भ्रातृपीडितम् ॥ दृष्ट्वा तत्र गता शीघ्रं पतिदुःखेन दुःखिता ॥२१॥ विनापराधं कृष्णांशो महानिंदामवाप्तवान् ॥ तदा वेदविदो विप्रा आह्लादं प्राहुरूर्जितम् ॥ २२ ॥ वधस्त्यागः समो ज्ञेयो योग्यं बुद्ध्या विचारय ॥ इत्युक्तः स तुरीयात्मा पुत्रशोकेन दुःखितः ॥ ॥ २३ ॥ चांडालांश्च समाहूय बद्ध्वा तं पुत्रघातिनम् ॥ दत्त्वा तेभ्यः सपत्नीकं वधं कुरुत मा चिरम् ॥ २४ ॥ अस्य नेत्रे समुत्पाट्य मां दर्श यत संयुताः ॥ इति श्रुत्वा गतास्ते वै गहनं व्याघ्रसेवितम् ॥ २५ ॥ देवसिंहस्ततो गत्वा दत्त्वा तेभ्यो महद्धनम् ॥ संप्राप्य दंपती वीरश्चांडाले भ्यो वनं ययौ ॥ २६ ॥ बलखानेस्तु या पत्नी गजमुक्ता पतिव्रता ॥ दंपती पालयामास गुह्यगेहे मुदा युता ॥ २७ ॥ चांडालास्ते तु संगत्य मृगनेत्रे च तें ददुः ॥ देवसिंहस्तदागत्य क्रोधात्मा च तमब्रवीत् ॥ धिक्त्वां पापं दुराचारं त्वया मे हिंसितः सखा ॥ २८ ॥ जीवि तस्त्वत्सुतो भूमौ तदन्वेषणहेतवे ॥ यास्यामि विविधान्राष्ट्रान्सत्यंसत्यं ब्रवीम्यहम् ॥ इत्युक्त्वा प्रययौ वीरः शिरीषाख्यपुरं शुभम् ॥ २९ ॥ गजमुक्तामनुज्ञाप्य दंपती प्राप्य निर्भयः ॥ मयूरनगरं रम्यं निशि घोरं समाययौ ॥ ३० ॥ मकरंदस्तु बलवाञ्ज्ञात्वा तत्सर्वकारणम् ॥ स्वसुः पतिं च भगिनीं स्वांते प्रेम्णा न्यवासयत् ॥ ३१ ॥ धर्ममाराधयामास यज्ञैर्नानाविधैः स्तवैः ॥ प्रसन्नो धर्मराजश्च मकरन्दमुवाच ह ॥ ३२ ॥ अभिनंदनभूपस्य सुता चित्रप्रपूजिनी ॥ नाव्यात्मजा केसरिणी तत्सखी दंभकोविदा ॥ ३३ ॥ केसरि ण्या गुरुर्ज्ञेयः कुतुको योगरूपधृक् ॥ तेन प्रसारिता माया शतयोजनमन्तरा ॥ ३४ ॥ शत्रुभिर्दुर्गमा भूमिः शत्रुपाषाणकारिणी ॥

१ मादकद्रव्येणेत्यर्थः। २ अहमिति शेषः। ३ तस्मा इत्यर्थः।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चित्रगुप्तप्रभावेण निर्भयो भूपतिः स्वयम् ॥ ३५ ॥ चित्ररेखा भूपसुता जयंतस्तु तया हृतः ॥ नररूपधरो रात्रौ शुकरूपधरो दिने ॥ इन्दुलश्च स्थितो दुःखी चित्रमायाविमोहितः ॥ ३६ ॥ कृष्णांशश्च भवान्देवः सहितः सूर्यवर्मणा ॥ मया दत्तानि यंत्राणि गृहीत्वा ते मुदा युताः ॥ चित्ररेखां समागत्य नृत्यादींस्तैः समं कुरु ॥ ३७ ॥ मोहयित्वा च तां देवीं पठित्वा तन्मतं शुभम् ॥ पुनरागच्छ वै शीघ्रं सैन्ययोगं पुनः कुरु ॥ ॥ ३८ ॥ इत्युक्त्वान्तर्दधे देवस्स राजा विस्मयान्वितः ॥ कृष्णांशं वर्णयामास यथा धर्मेण भाषितम् ॥ ३९ ॥ फाल्गुने मासि संप्राप्ते त्रयस्ते योगिरूपिणः ॥ ययुरिन्नगटं रम्यं नृत्यगीतविशारदाः ॥ ४० ॥ मृदंगांकस्तदा देवो मकरंदो विपंचिमान् ॥ नृत्यगानकरो वीरः कृष्णांशः सर्वमोहनः ॥ ४१ ॥ मोहयित्वा च नगरं तथा गजपतिं नृपम् ॥ सकुलं च ससैन्यं च तुष्टो राजाब्रवीदिदम् ॥ ४२ ॥ वांछितं ब्रूहि मे योगिन्स श्रुत्वा प्राह नम्रधीः ॥ देहि मे सूर्यवर्माणं स्वसुतं कार्यहेतवे ॥४३॥ कृत्वा कार्यमहं शीघ्रं पुनर्दास्यमि ते सुतम् ॥ विधिना निर्मितो धर्मो राजभिर्विश्वरक्षणम् ॥४४॥ इति श्रुत्वा गजपतिर्दत्त्वा तेभ्यः स्वकं सुतम् ॥ स्वराज्ञीमायया राजा गतास्ते कार्यतत्पराः ॥४५॥ पक्षमात्रेण बाह्लीकं नगरं प्रययुर्मुदा ॥ धर्मदत्तानि यंत्राणि गृहीत्वा शत्रुमंदिरम् ॥ ४६ ॥ आययुर्लास्यतत्त्वज्ञा नृपमोहनतत्पराः ॥ सर्वे च नागराः प्राप्तास्तत्र क्षत्रगणा मुदा ॥४७॥ मोहितास्तैश्च ते सर्वे गीतनृत्यविशारदैः ॥ महद्धनं ददौ तेभ्यस्तोमरान्वयसंभवाः ॥४८॥ तानादाय पुनर्भूपः स्वगेहमभिनंदनः ॥ आययौ गेहनृत्यार्थी कारयामास वै पुनः ॥४९॥ मकरंदस्तदा वीणां मृदंगं भीष्मजो वली॥मंजीरं सूर्यवर्मा च कृष्णांशो गाननृत्यकम् ॥५०॥ गृहीत्वा मोदयामासुर्नारीवृन्दा महोत्तमम् ॥ चित्ररेखा स्वयं दृष्ट्वा तेषां मोहनहेतवे ॥ ५१ ॥ मायां निर्वापयामास निष्फला साऽभवत्क्षणात् ॥ मोहिता तैश्च सा देवी तानुवाच मुदान्विता ॥ ५२ ॥ वांछितं ब्रूहि मे वीर कृष्णांशश्चाह तां वधूम् ॥ शुकं देहि च मे देहि नो चेच्छापं ददाम्यहम् ॥ ५३ ॥ इति श्रुत्वा चित्ररेखा शोकव्याकुलचेतना ॥ कृष्णांशं योगिनं प्राह सत्यं कथय को भवान् ॥ ५४ ॥ इंद्राद्या देवतास्सर्वे मया निर्मितया यया ॥ मोहिताः क्षणमात्रेण न भवान्मोहितो मया ॥५५॥ देवो नारायणो वापि धर्मो वापि शिवः स्वयम् ॥ इत्युक्तस्स तु कृष्णांशो वचनं प्राह निर्भयः ॥५६॥ उदयो नाम मे राज्ञि देवसिंहोऽयमुत्तमः ॥ मच्छ्यालो मकरंदोऽयं सूर्यवर्मा तथाविधः ॥ ५७ ॥ इन्दुलस्य वियोगेन वयं योगित्वमागताः ॥ मद्गुरुश्च तथोन्मादी संकुलस्तद्वियोगतः ॥ ५८ ॥ शुकं देहि महामाये इंदुलं देहि वा यदि ॥ इत्युक्त्वाशु रुरोदोच्चैर्हा इन्दुल महावल ॥ ५९ ॥ दर्शनं देहि मे शीघ्रं नो चेत्प्राणांस्त्यजाम्यहम् ॥ इत्येवं वादिनं वीरं चित्ररेखा महोत्तमा ॥ ६० ॥ कृत्वा लज्जां पुनः

३०९

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राह मां च पुत्रं गृहाण भोः ॥ कृत्वा नरमयं रूपं स्वकान्तं सर्वसुंदरम् ॥ ६१ ॥ पतित्वा तच्चरणयो रुरोदोच्चैश्च दंपती ॥ तथाविधौ च तौ दृष्ट्वा कृष्णांशो हर्षसंयुतः ॥ ६२ ॥ इंदुलेनैव लिखितं गृहीत्वा पत्रमुत्तमम् ॥ धर्मयंत्रप्रभावेण मयूरनगरं ययौ ॥ ६३ ॥ सूर्यवर्मा गतो गेहं मकरंदेन मानितः ॥ देवसिंहस्तु बलवान्गृहीत्वा पत्रमुत्तमम् ॥६४॥ ययौ मनोरथारूढो यत्राह्लादः शुचान्वितः ॥ को भवानिति तं प्राह महोन्मादीव दृश्यते ॥ ६५ ॥ देवसिंहं च मां विद्धि त्वपुत्रान्वेषणे रतम् ॥ पत्रं गृहाण भो वीर लिखितं त्वत्सुतेन वै ॥ ६६ ॥ इति श्रुत्वा स आह्लादश्चाह्लादं परमाप्तवान् ॥ ज्ञात्वा तत्कारणं सर्वं यथाविधि सुतो हृतः ॥६७॥ महीपतिं समाहूय वचनं प्राह नम्रधीः॥ सत्यं कथय मे भूप कृष्णांशेन हृतस्सुतः ॥ ६८ ॥ सहोवाच श्रुतं वीर कृष्णांशेन यथा हृतः ॥ इत्युक्त्वा तु विहस्याशु कार्यसिद्धिमुपागतः ॥ ६९ ॥ अह्लादः क्रोधताम्राक्षः केशानाकृष्य तं मुदा ॥ वेतसैस्ताडयामास स्वहस्तेन पुनः पुनः ॥ ७० ॥ श्रुत्वा परिमलो राजा सपत्नीकस्समागतः ॥ बहुधा मोदयामास रामांशं बहुरूपिणम् ॥ ७१ ॥ अरे धूर्त महापापिन्मद्बंधुर्घातितस्त्वया ॥ गतो यत्र मम प्राणस्सकुलं त्वां नयाम्यहम् ॥ ७२ ॥ तदा महीपतिर्दुःखी निःश्वासो मौनमास्थितः ॥ तदघं हृदि संस्थाप्य महापीडामवाप्तवान् ॥ ७३ ॥ एतस्मिन्नंतरे वीरो बलखानिः समागतः ॥ विमुच्य मातुलं धूर्तं ज्येष्ठबन्धुमसान्त्वयत् ॥ ७४ ॥ स चकार विवाहार्थमुद्योगं भ्रातृजस्य वै ॥ नेत्रसिंहो नृपः प्राप्तो लक्षसैन्यसमन्वितः ॥ ७५ ॥ तारकश्च तमायातस्सार्द्धं शूरसहस्रकैः ॥ वीरसेनः स्वयं प्राप्तः शूरैः सार्द्धं नवाऽयुतैः ॥ ७६ ॥ तालनश्च ततः प्राप्तो लक्षसैन्यसमन्वितः ॥ सूर्यवर्मा तथा प्राप्तो लक्षसैन्यसमन्वितः ॥ ७७ ॥ ब्रह्मानंदः स्वयं प्राप्तस्त्रिलक्षबलसंयुतः ॥ आह्लादश्च शुचाविष्टो लक्षसैन्यसमन्वितः ॥ ७८ ॥ हा बंधो क्व गतस्त्वं वै मां त्यक्त्वा पुरुषाधमम् ॥ इत्युक्त्वा प्रययौ वीरः शोकव्याकुलचेतनः ॥ ७९ ॥ बलखानिस्तु बलवाँल्लक्षसैन्यसमन्वितः ॥ देवसिंहेन सहितो बाह्लीकं प्रति सोगमत् ॥ ८० ॥ अहोरात्रप्रमाणेन मासैकः पथि वै गतः ॥ ज्येष्ठकृष्णस्य पंचम्यां बाह्लीकग्राममाप्तवान् ॥ व्यूहः स्वकीयसैन्यानां रचितो बलखानिना ॥ ८१ ॥ एको रथः स्थितो युद्धे तत्पश्चात्संस्थिता गजाः ॥ पञ्चाशच्च क्रमात्तेषां वाजिनश्च शतंशतम् ॥ ८२ ॥ तेषां पश्चात्क्रमाज्ज्ञेयाः पत्तयो दश संस्थिताः ॥ एका सेना च सा ज्ञेया तत्प्रमाणं ब्रवीम्यहम् ॥ ८३ ॥ एको रथो गजास्सर्वे शतार्द्धं तु हयास्तु ये ॥ सेनायां पञ्चसाहस्राः शतघ्न्यस्तु तथा स्मृताः॥ ८४ ॥ पञ्चायुतानि सेनायां सर्वे पदचराः स्मृताः ॥ एवंविधाश्च ताः सेना बलखानेश्च षोडश ॥ ८५ ॥ गजास्तु दशसाहस्रा मदमत्ताः पृथग्युः ॥ युद्धे



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽस्मिन्गणितं ह्येवं शूराः शत्रुप्रहारिणः ॥ ८६ ॥ अभिनन्दनभूपस्य म्लेच्छाः पैशाचधर्मिणः ॥ त्रिलक्षाश्च हयारूढा एकलक्षाः शतघ्निपाः ॥ ८७ ॥ एकलक्षः पदचरा भुशुण्डीपरिवायुधाः ॥ तोमरान्वयसंयुक्ताः क्षत्रियाः प्रयुतानि वै ॥ गजस्थास्तत्र संप्राप्ता यत्राह्लादमहाचमूः ॥ ८८ ॥ तयोश्चासीन्महद्युद्धं तुमुलं रोमहर्षणम् ॥ मदमत्ताश्च ते सर्वे निर्भया रणमाययुः ॥ ८९ ॥ सप्ताहोरात्रमभवद्युद्धं समरशालिनाम् ॥ वाह्लीकस्यार्द्धसेना च क्षयं नीता च तैर्नृपैः ॥ ९० ॥ एकलक्षं हताः सर्वे बलखानेश्च सैन्यपैः ॥ हाहाभूते शत्रुसैन्ये भयभीते दिशो गते ॥ हर्षिता बलखान्याद्या जय दुर्गे वचोऽब्रुवन्॥९१॥ दृष्ट्वा सैन्यविनाशं च राज्ञः सप्तकुमारकाः ॥ कौरवांशाश्च ते जग्मुर्यत्र जातो महारणः॥९२॥ महानन्दश्च नन्दश्च परानन्दोपनन्दकौ ॥ सुनन्दश्च सुरानन्दः प्रनन्दः क्रमतोभवाः[1] ॥ ९३ ॥ गजस्थास्ते महावीरास्तोमरान्वयसंभवाः ॥ सेनां जघ्नुः शरैस्तीक्ष्णैर्बलखानेर्महात्मनः ॥ ९४ ॥ भयभीताश्च ते सर्वे बलखानिमुपाययु ॥ दृष्ट्वा सैन्यं पराभूतं बलखानिस्तदा रुषा ॥ ९५ ॥ अभ्यधावत वेगेन कपोतस्थो महाबलः ॥ नंदं प्रति तथा देवः परानंदं च तालनः ॥ ९६ ॥ उपनन्दं सूर्यवर्मा सुनन्दं प्रति तारकः ॥ नेत्रसिंहः सुरानन्दं प्रनन्दं प्रति यादवः ॥ ९७ ॥ युध्यमानास्तु ते सर्वे परस्परवधैषिणः ॥ दिनार्द्धमभवद्युद्धं बहुवीरप्रणाशनम् ॥ ९८ ॥ पराजितास्तु ते पुत्रा वाह्लीकस्य महाबलाः ॥ त्यक्त्वा युद्धं ययुर्गेहं भीरुका बलखानिना ॥ ९९ ॥ दृष्ट्वा तेषां बलं घोरमभिनन्दनभूमिपः ॥ कुतुकं च समाहूय नाट्यां केसरिणीं तथा ॥ कथितं कारणं राज्ञा यथा जातः पराजयः ॥ १०० ॥ इति श्रुत्वा तु कुतुकस्तमाश्वास्य महीपतिम् ॥ स ध्यात्वा शांबरीं मायां महादेवेन निर्मिताम् ॥ तत्सैन्यं मोहयामास शिलाभूतमचेतनम् ॥ १०१ ॥ तदा केसरिणी नाट्या अष्टौ बद्ध्वा महाबलान् ॥ राज्ञः पार्श्वमुपागम्य दत्त्वा तान्गेहमाययौ[2] ॥१०२॥ वाह्लीकश्च प्रसन्नात्मा बद्ध्वा तान्निगडैर्दृढैः ॥ लुंठित्वा द्रविणं तेषां कोशमध्ये समाक्षिपत् ॥ १०३ ॥ देव्याश्च वरदानेन देवसिंहो भयातुरः ॥ महावतीं समागम्य स्वर्णवत्यै न्यवेदयत् ॥ १०४ ॥ ज्ञात्वा स्वर्णवती देवी सर्वविद्याविशारदा ॥ श्येनीं मूर्तिं समास्थाय ययौ पुष्पवतीं प्रति ॥ १०५ ॥ दृष्ट्वा तु दंपती तत्र मकरंदं गृहे स्थितौ ॥ रुदित्वा कथयामास यथा प्राप्तः पराजयः ॥ १०६ ॥ कृष्णांशस्तु तदा दुःखी मकरन्दं वचोऽब्रवीत् ॥ गच्छ वीर मया सार्द्धं मद्गुरुर्बंधनं गतः ॥ १०७ ॥ कुलक्षये महत्पापं सुप्रोक्तं पूर्वसूरिभिः ॥ निमग्नान्दुःखजलधौ समुद्धर मम प्रिय ॥ १०८ ॥ इति श्रुत्वा तु तच्चचालः शूरायुतसमन्वितः ॥ संन्यस्तवेषमास्थाय खड्ग

---

१ क्रमतो भवा येषां ते । २ धातु गतिवृद्ध्योरित्यात्मनेपदिना रूपमेतत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चर्मसमन्वितः ॥ कृष्णांशेन हयारूढो बाह्लीकं त्वरितो ययौ ॥ १०९ ॥ तदा स्वर्णवती देवी पुष्पवत्या समन्विता ॥ श्येनीरूपमुपास्थाय ययौ यत्र महारणः ॥ ११० ॥ स छित्त्वा शांबरीं मायां बोधयित्वा स्वसैनिकान् ॥ रुरोध नगरीं तस्य बाह्लीकस्य महात्मनः ॥ १११ ॥ दृष्ट्वा तान्छत्रुसंयुक्तान्कुतुकस्तु तया सह ॥ पुनश्च शांबरीं मायां प्रेषयामास तान्प्रति ॥ ११२ ॥ छित्त्वा सा सकलां मायां बद्धा तौ दैत्यसन्निभौ ॥ नगरं दाहयामास तस्य भूपस्य मायया ॥ ११३ ॥ न दाहो दाहमापन्नो न भस्मी भस्मवान्खलु ॥ स्वर्णवत्या कृतं चित्रं स्वयं देव्या च मायया ॥ ॥ ११४ ॥ तदा पुष्पवती देवी हत्वा केसरिणीं रुषा ॥ तन्मांसैस्तर्पयामास गृध्रगोमायुवायसान् ॥ ११५ ॥ कुतुकं च तथाभूतं हत्वा स्वर्णवती स्वयम् ॥ कारागारे लोहमये स्थितान्वीरानमोचयत् ॥ ११६ ॥ पुनरागम्य सा देवी तया सार्द्धं शुभानना ॥ मकरन्दः स्थितो यत्र कृष्णांशेन समन्वितः ॥ ११७ ॥ ते सर्वे विस्मिताश्चासञ्ज्ञात्वा देव्या विमोहिताः ॥ क्रोधवन्तो महावीरा युद्धाय समुपाययुः ॥ ११८ ॥ पुनश्चासीत्तयोर्युद्धं सेनयोरुभयोर्मृधे ॥ बलखानिं महानन्दो नन्दश्चाह्लादमाययौ ॥ ११९ ॥ परानंदस्तथा देवं तारकं चोपनंदनः ॥ सुनन्दो नेत्रसिंहं च सुरानंदश्च तालनम् ॥ १२० ॥ प्रनन्दो वीरसेनं च अह्लानन्दं स भूपतिः ॥ गजस्थिताश्च ते सर्वे धनुर्युद्धपरायणाः ॥ अहोरात्रमभूद्युद्धं तेषां च तुमुलं क्रमात् ॥ १२१ ॥ एतस्मिन्नन्तरे रात्रौ चित्ररेखा समागता ॥ स्वकीयान्व्याकुलीभूतांस्तादृशांश्च विलोक्य वै ॥ १२२ ॥ चित्रगुप्तं तदा ध्यात्वा चित्रमायामचीकरत् ॥ तदा तद्बांधवाश्चासन्बहुधा चाभिनंदनाः ॥ १२३ ॥ तान् दृष्ट्वा विस्मिताः सर्वे भयभीताश्च दुद्रुवुः ॥ त्यक्त्वा युद्धमयीं भूमिं शोकव्याकुलचेतनाः ॥ १२४ ॥ पंचयोजनमागत्य ततो वासमकारयन् ॥ संध्याकाले तमोभूते निरुत्साहा महाबलाः ॥ १२५॥ हा कृष्णांश महाबाहो शरणागतवत्सल ॥ इन्दुलस्ते कुमारोऽयं संहृतश्चित्ररेखया ॥ १२६ ॥ तया विमोहिता वीरा वयं ते शरणं गताः ॥ इत्युक्त्वा रोदनं चक्रुः क्व गतोऽसि महामते ॥१२७॥ तदा कोलाहलश्चासीद्रुदतां बलशालिनाम् ॥ आह्लादं गर्हयित्वा ते मूर्छिता भुवि विह्वलाः ॥ १२८ ॥ आह्लादस्तु तथा श्रुत्वा वज्रपाताहतः स्वयम् ॥ उन्मादिवत्तदा भूत्वा ताडयामास वक्षसि ॥ १२९ ॥ एतस्मिन्नंतरे योगी कृष्णांशो भगवत्कला ॥ चंद्रोदये स्वयं प्राप्तश्चाष्टम्यां भृगुवासरे ॥ १३० ॥ शूरश्च दशसाहस्रैर्मकरंदेन संयुतः ॥ तत्सेनां बोधयामास पालितां बलखानिना ॥ १३१ ॥ जित्वा तान्सर्वभूपालान्गृहीत्वा विपुलं धनम् ॥ पञ्चशब्दस्थितं बंधुं प्रत्यागत्य जगर्ज वै ॥ १३२ ॥ तस्य शब्देन शेषांशो बोधितो बलशालिना ॥ शकुनं शुभमालोक्य भुजावुत्थाप्य वीर्यवान् ॥ स्वांके निवेशयामास कृष्णांशं योगिरूपिणम् ॥ १३३ ॥ स्नापयित्वा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुधाराभिः कृष्णांशं प्रेमविह्वलः ॥ दत्त्वा द्विजातिमुख्येभ्यो वर्णयामास कारणम् ॥ १३४ ॥ कृष्णांशोऽपि प्रसन्नात्मा स्वकीयां सकलां कथाम्॥ वर्णयित्वा यथाभूतां पुनर्बाह्लीकमाययौ ॥१३५॥ चित्रविद्यां स्वयं कृत्वा पाठितां चित्ररेखया ॥ बद्धाभिनंदनं भूपं ससुतं च समंत्रिणम् ॥ विवाहं कारयामास जयंतस्य तया सह ॥ १३६ ॥ बाह्लीकस्तु प्रसन्नात्मा दत्त्वा च विपुलं धनम् ॥ स्वसुतां चित्ररेखां च जयन्ताय मुदा ददौ ॥१३७॥ शतं गजान्हयांस्तत्र सहस्राणि धनैर्युतान् ॥ शतं दासांस्तथा दासीर्जयंताय स्वयं ददौ ॥ १३८ ॥ प्रस्थानं कारयामास बलखानेर्महात्मनः ॥ श्रावणे मासि संप्राप्तास्ते सर्वे च महावतीम् ॥ १३९ ॥ स्वंस्वं गेहं ययुस्सर्वे भूपाश्चाह्लादमानिताः ॥ इति ते कथितं विप्र चरित्रं कलिनाशनम् ॥ शृण्वतां सर्वपापघ्नं कथयिष्यामि वै पुनः ॥ १४० ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये त्रयोविंशोऽध्यायः ॥ २३ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ कृष्णांशे च गृहं प्राप्ते चेन्दुले च विवाहिते ॥ महीपतिस्सदा दुःखी देहलीं प्रति चागमत् ॥ १ ॥ वृत्तांतं च नृपस्याग्रे कथयित्वा स तारकः ॥ परं विस्मयमापन्नः कृष्णांशचरितं प्रति ॥ २ ॥ एतस्मिन्नंतरे मंत्री चंद्रभट्ट उदारधीः ॥ भूमिराजं वचः प्राह शृणु पार्थिवसत्तम ॥३॥ मया चाराधिता देवी वैष्णवी विश्वकारिणी ॥ त्रिवर्षांते च तुष्टाभूद्वरदा भयहारिणी ॥४॥ तया दत्तं शुभं ज्ञानं कुमतिध्वंसकारकम् ॥ ततोऽहं ज्ञानवान्भूत्वा कृष्णांशं प्रति भूपते ॥ चरित्रं वर्णयामास तस्य कल्मषनाशनम् ॥ ५ ॥ इत्युक्त्वा स च शुद्धात्मा ग्रंथं भाषामयं शुभम् ॥ माहात्म्यं देविभक्तानां श्रावयामास वै सभाम् ॥६॥ तच्छ्रुत्वा भूमिराजस्तु विस्मितश्चाभवत्क्षणात् ॥ महीपतिस्तदा प्राह दिव्याश्वबलदर्पितः ॥ उदयो नाम बलवान्यस्यैवं वर्णिता कथा ॥७॥ चत्वारो वाजिनो दिव्या जलस्थलखगाश्च ते ॥ शीघ्रं तांश्च समाहृत्य स्वयं भूप बली भव ॥ ८ ॥ इति श्रुत्वा स नृपतिः श्रुतवाक्यविशारदम् ॥ आहूय कुंदनमलं प्रेषयामास सत्वरम् ॥ ९ ॥ महावतीं समागत्य स दूतो भूपतिं प्रति ॥ उवाच वचनं प्रेम्णा महीराजस्य भूपतेः ॥ १० ॥ वाजिनस्ते हि चत्वारो दिव्यरूपाः शुभप्रभाः ॥ दर्शनार्थे तव वधूर्वेला नाम ममात्मजा ॥ ११ ॥ तयाहूतान्हयान्भूप देहि मे विस्मयं त्यज ॥ नो चेद्वेलाग्निना सर्वे क्षयं यास्यंति सैन्यपाः ॥ १२ ॥ इति श्रुत्वा वचो घोरं स भूपो भयकातरः ॥ आह्लादादीन्समाहूय वचनं प्राह नम्रधीः ॥ हयान्स्वान्स्वान्मुदा देहि मदीयं वचनं कुरु ॥ ॥१३॥ इति श्रुत्वा स आह्लादो ध्यात्वा सर्वमयीं शिवाम् ॥ उवाच मधुरं वाक्यं शृणु भूप शिवप्रिय ॥१४॥ यत्र नः संस्थिताः प्राणास्तत्र ते वाजिनः स्थिताः ॥ न दास्यामो वयं राजन्सत्यंसत्यं न चान्यथा ॥ १५ ॥ इति श्रुत्वा वचस्तस्य राजा परिमलो बली ॥१६॥ शपथं कृतवान्घोरं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शृण्वतां बलशालिनाम् ॥ भोजनं ब्रह्ममांसस्य पानीयं गोऽसृजोपमम्॥१७॥शय्या स्वमातृसदृशी ब्रह्महत्योपमा सभा ॥ मम राष्ट्रे च युष्माभि
र्वासः पापमयो महान् ॥१८॥इति श्रुत्वा तु शपथं देवकी शोकतत्परा ॥ चकार रोदनं गाढं सगेहजनविग्रहा॥१९॥पंचविंशाब्दके प्राप्ते कृष्णांशे
योगतत्परे ॥ भाद्रशुक्लचतुर्दश्यां तद्गेहाद्धर्मतत्पराः ॥ २० ॥ निर्ययुः कान्यकुब्जं ते जयचंद्रेण पालितम् ॥ स्वर्णवत्या पुष्पवत्या सहिताश्चित्ररे
खया ॥२१॥ इन्दुलः प्रययौ शीघ्रमयुताश्वबलैस्सह ॥ करालं हयमारुह्य पंचशब्दं च तत्पिता ॥ कृष्णांशो बिंदुलारूढो देवकीमनुसंययौ ॥२२॥
त्यक्त्वा ते भूपतेर्ग्रामं सर्वसंपत्समन्वितम् ॥ पथि त्र्यहमुषित्वा ते जयचंद्रमुपाययुः ॥२३॥ नत्वा तं भूपतिं प्रेम्णा गदित्वा सर्वकारणम् ॥ उषित्वा
शीतलास्थाने पूजयामासुरम्बिकाम्॥२४॥जयचंद्रस्तु भूपालो देवसिंहेन वर्णितः॥ तेभ्यश्च न ददौ वृत्तिं भूमा परिमलाज्ञया॥२५॥कुंठितो देवसिंहस्तु
गत्वा कृष्णांशमुत्तमम्॥ उदित्वा कारणं सर्वं स श्रुत्वा रोषमादधौ ॥ २६॥ त्वरितं बिंदुलारूढो हयपंचशतावृतः॥ लुंठयामास नगरं पालितं लक्ष्मणेन
तत् ॥ २७ ॥ दृष्ट्वा तं लक्ष्मणो वीरो हस्तिनः पृष्ठमास्थितः ॥ शरेण ताडयामासकृष्णांशहृदयं दृढम् ॥२८॥ निष्फलत्वं गतो बाणो विष्णुमंत्रेण
प्रेरितः ॥ विस्मितः स तु भूपालो वाहनाद्भूमिमागतः ॥ २९ ॥ नत्वा तच्चरणौ दिव्यौ कुलिशादिभिरन्वितौ ॥ तुष्टाव दंडवद्भूत्वा लक्ष्मणो गद्गदं
गिरा ॥ ३० ॥ ॥ लक्ष्मण उवाच ॥ ॥ वैष्णवं विद्धि मां स्वामिन्विष्णुपूजनतत्परम् ॥ जानेऽहं त्वां महाबाहो कृष्णशक्त्यवतारकम् ॥३१॥
त्वदृते को हि मे बाणं निष्फलं कुरुते भुवि ॥ क्षमस्व मम दौरात्म्यं नाथ ते मायया कृतम् ॥३२॥ इत्युक्त्वा तेन सहितो जयचन्द्रं महीपतिम्॥
गत्वा तं कथयामास यथा प्राप्तः पराजयम्॥३३॥नृपस्तयोः परीक्षार्थं यौ तु छायाविमोहितौ॥गजौ कुवलयापीडौ त्यक्तवाञ्छीतलास्थले॥३४॥
तदाह्लादोदयौ वीरौ गृहीत्वा तौ स्वलीलया ॥ चक्षेपतुर्बलात्पुच्छे क्रोशमात्रं पुनःपुनः ॥ ३५ ॥ मृतौ कुवलयापीडौ दृष्ट्वा राजा भयातुरः ॥
ददौ राजगृहं ग्रामं तयोरर्थे प्रसन्नधीः ॥ ३६ ॥ इषशुक्ले तु संप्राप्ते लक्ष्मणो नाम वै बली ॥ नृपाज्ञया ययौ शीघ्रं तैश्चं दिग्विजयं प्रति ॥ ३७ ॥
सप्तलक्षबलैस्सार्द्धं तालनाद्यैश्च संयुतः ॥ वाराणसीं पुरीं प्राप्य रुरोध नगरीं तदा ॥ ३८ ॥ रुद्रवर्मा च भूपालो गौडवंशयशस्करः ॥ पंचायुतैः
स्वसैन्यैश्च सार्द्धं युद्धार्थमातवान् ॥ ३९ ॥ याममात्रेण तं जित्वा षोडशाब्दस्य वै करम् ॥ कोटिमुद्रामयं प्राप्य जयचंद्राय चार्पयत् ॥ ४० ॥
पंचकोटीश्च वै मुद्रा राजतस्य पुनर्ययौ ॥ अंग
मागधेशं पुनर्जित्वा नाम्ना विजयकारिणम् ॥ विंशत्यब्दकरं प्राप्य स्वभूपाय समर्पयत् ॥ ४१ ॥

१ गद्गदं यथा स्यात्तथा गिरा तुष्टावेत्यन्वयः । २ विनापि सहशब्दयोगं सहार्थे गम्यमाने तृतीया, 'वृद्धो यूना' इत्यादिनिर्देशात् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देशपतिं भूपं मायावर्माणमुत्तमम् ॥ ४२ ॥ सैन्यायुतयुतं जित्वा विंशत्यब्दस्य वै करम् ॥ कोटिमुद्राश्च संप्राप्य स्वभूपाय समार्पयत् ॥ ४३ ॥ वंगदेशपतिं वीरो लक्षणो वै युतश्च तैः ॥ लक्षसैन्ययुतं भूपं कालीवर्माणमुत्तमम् ॥ अहोरात्रेण तं जित्वा महायुद्धेन लक्षणः ॥ ४४ ॥ विंशत्यब्द करं प्राप्य कोटिं स्वर्णमयं तदा ॥ प्रेषयामास भूपाय जयचंद्राय वै मुदा ॥ ४५ ॥ उष्ट्रदेशं ययौ वीरः पालितं तैर्महाबलैः ॥ धोयीकविस्तत्रनृपो लक्षसैन्यसमन्वितः ॥ ४६ ॥ जगन्नाथाज्ञया प्राप्तस्तैश्च सार्द्धं रणोन्मुखे ॥ तयोश्चासीन्महद्युद्धं तुमुलं रोमहर्षणम् ॥ अहोरात्रप्रमाणेन कृष्णांशेन जितो नृपः ॥ ४७ ॥ विंशत्यब्दकरं सर्वं कोटिस्वर्णसमन्वितम् ॥ संप्राप्य प्रेषयामास कान्यकुब्जाधिपाय वै ॥ ४८ ॥ पुंड्रदेशं ययौ वीरो लक्षणो बलवत्तरः ॥ नृपं नागपतिं नाम पंचायुतबलैर्युतम् ॥ दिनमात्रेण तं जित्वा कोटिमुद्रा गृहीतवान् ॥ ४९ ॥ महेंद्रगिरिमागत्य नत्वा तं भार्गवं मुनिम् ॥ नतो निवृत्य ते सर्वे नेत्रपालपुरं ययुः ॥ ५० ॥ योगसिंहस्तदागत्य कृष्णांशं प्रति भार्गव ॥ कोटिमुद्रा ददौ तस्मै सप्तरात्रम वासयत् ॥ ५१ ॥ वीरसिंहपुरं जग्मुस्ते वीरा मदवत्तराः ॥ रुरुधुर्नगरीं सर्वा हिमतुंगोपरि स्थिताम् ॥ पालितां गोरखाख्येन योगिना भक्तकारणात् ॥ ५२ ॥ भूपानुजः प्रवीरश्च सैन्यायुतसमन्वितः ॥ कृतवान्दारुणं युद्धं लक्षणस्यैव सेनया ॥ ५३ ॥ प्रत्यहं बलवाञ्छूरो हत्वा शूरसहस्रकम् ॥ सायंकाले गृहं प्राप्य योगिनं तमपूजयत् ॥ ५४ ॥ पूजनात्स प्रसन्नात्मा सैन्यमुज्जीव्य भूपतेः ॥ दत्त्वा गजबलं तेभ्यः पुनर्योगं करोति वै ॥ ५५ ॥ सार्द्धमासो गतस्तत्र युद्ध्यतां बलशालिनाम् ॥ तदा ते तु निरुत्साहा देवसिंहं तमब्रुवन् ॥ ५६ ॥ विजयो नः कथं भूप ब्रूहि नस्तत्त्वमग्रतः॥ इति श्रुत्वा स होवाच शृणु कृष्णांश मे वचः ॥५७॥ योगिनं गोरखं नाम पराजित्य स्वनृत्यतः ॥ पुनर्युद्धं कुरु त्वं वै ततो जयमवाप्स्यसि ॥ ५८ ॥ इत्युक्तास्ते हि कृष्णाद्याः कृत्वा योगमयं वपुः ॥ स्थापयित्वा रणे सेनां पालितां लक्षणेन वै ॥ ५९ ॥ प्रातः काले ययुस्ते वै मंदिरं तस्य योगिनः ॥ कृष्णांशो नर्तकश्चासीद्वेणुवाद्यविशारदः ॥ ६० ॥ देवसिंहो मृदंगाढ्यो वीणाधारी च तालनः ॥ कांस्यधारी तदाह्लादो जगौ गीतां सनातनीम् ॥ ६१ ॥ तदर्थं हृदये कृत्वा गोरखस्सर्वयोगवान् ॥ वरं वृणुत तानाह ते तच्छ्रुत्वाऽब्रुवन्वचः ॥ ६२ ॥ नमस्यामो वयं तुभ्यं यदि देयो वरस्त्वया ॥ देहि संजीविनीं विद्यामाह्लादाय महात्मने ॥६३॥ इति श्रुत्वा हृदि ध्यात्वा तानुवाच प्रसन्नधीः ॥ विद्या संजीविनी तुभ्यं वर्षमात्रं भविष्यति ॥ तत्पश्चान्निष्फलीभूयागमिष्यति मदंतिकम् ॥६४॥ अद्यप्रभृति भो वीर मया त्यक्तमिदं जगत् ॥ यत्र भर्तृहरिः शिष्य

१ अन्ध्रामिति केचिद्वदंति, औण्ड्रमित्यन्ये, उत्कलमित्यपरे । २ शौनकसंबोधनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तत्र गत्वा शये ह्यहम् ॥ ६५ ॥ इत्युक्त्वान्तर्हितो योगी जग्मुस्ते रणमूर्द्धनि ॥ जित्वा प्रवीरसिंहं च वीरसिंहं तथैव च ॥ ६६ ॥ हत्वा तस्यायुतं सैन्यं लुण्ठयित्वा च तद्गृहम् ॥ कृत्वा दासमयं भूपं लक्षणः प्रययौ मुदा ॥ ६७ ॥ कोशलं देशमागत्य जित्वा तस्य महीपतिम् ॥ सैन्यायुतं सूर्यधरं करयोग्यमचीकरत् ॥ ६८ ॥ षोडशाब्दकरं प्राप्य मुद्राकोटचयुतं मुदा ॥ नैमिषारण्यमागम्य तत्रोषुः स्नानतत्पराः ॥ ६९ ॥ होलिकाया दिने रम्ये लक्षणो बलवत्तरः ॥ दत्त्वा दानानि विप्रेभ्यो महोत्सवमकारयत् ॥ ७० ॥ तदा वर्षं च मुनयः समाधिस्थाश्च भूपतिः ॥ यदा स लक्षणः प्राप्तो नैमिषारण्यमुत्तमम् ॥ ७१ ॥ स्नात्वा सर्वाणि तीर्थानि संतर्प्य द्विजदेवताः ॥ कान्यकुब्जपुरं जग्मुश्चैत्रकृष्णाष्टमीदिने ॥ ७२ ॥ इति ते कथितं विप्र यथा दिग्विजयोभवत् ॥ शृणु विप्र कथां रम्यां बलखानिर्यथा मृतः ॥ ७३ ॥ मार्गकृष्णस्य सप्तम्यां भूमिराजो महाबलः ॥ महीपतेश्च वाक्येन सामंतं प्राह निर्भयः ॥ ७४ ॥ मया श्रुतस्ते तनयः शारदावरदर्पितः ॥ रक्तबीजत्वमापन्नस्तं मे देहि कृपां कुरु ॥ ७५ ॥ इत्युक्तस्स तु सामन्तस्तेन राज्ञैव सत्कृतः ॥ चामुंडं नाम तनयं समाहूयाब्रवीदिदम् ॥ ७६ ॥ पुत्र त्वं नृपतेः कार्यं सदा कुरु रणप्रिय ॥ इति श्रुत्वा पितुर्वाक्यं स वै राजानमब्रवीत् ॥ ७७ ॥ देह्याज्ञां भूपते मह्यं शीघ्रं जयमवाप्स्यसि ॥ इति श्रुत्वा स होवाच बलखानिर्महाबलः ॥ ७८ ॥ मच्छिरीषवनं छित्वा गृहीत्त्वा राष्ट्रमुत्तमम् ॥ सुस्थितो निर्भयो गेहे बाहुशाली यतेंद्रियः ॥७९॥ यदि त्वं बलखानिं च जित्वा मे ह्यर्पयिष्यसि॥ हत्वा वा तस्य सकलं राष्ट्रं त्वयि भविष्यति ॥ ८० ॥ इत्युक्त्वा रक्तबीजं तं समाहूय स्वकं बलम् ॥ सप्तलक्षं ददौ तस्मै स तत्प्राप्य मुदा ययौ ॥ ॥ ८१ ॥ उषित्वा त्रिदिनं मार्गे शिरीषाख्यमुपागतः ॥ रुरोध नगरीं सर्वां बलखानेर्महात्मनः ॥ ८२ ॥ चामुंडागमनं श्रुत्वा बलखानिर्महाबलः ॥ पूजयित्वा महमायां दत्त्वा दानान्यनेकशः ॥ लक्षसैन्येन सहितः प्रययौ नगराद्बहिः ॥ ८३ ॥ तस्यानुजो महावीरस्सुखखानिर्बलैः सह ॥ हरिणीं तां समारुह्य शत्रुसैन्यमचिक्षपत् ॥ ८४ ॥ बलखानिः कपोतस्थो नाशयित्वा रिपोर्बलम् ॥ लक्षसैन्यं मुदा युक्तश्चामुंडं प्रति चागमत् ॥ ॥ ८५ ॥ तयोश्चासीन्महद्युद्धं स्वस्वसैन्यक्षयंकरम् ॥ अहोरात्रप्रमाणेन निहताः क्षत्रिया रणे ॥ ८६ ॥ प्रातःकाले तु संप्राप्ते कृत्वा स्नानादिकाः क्रियाः ॥ जग्मतुस्तौ रणे वीरौ धनुर्बाणविशारदौ ॥ ८७ ॥ रथस्थो बलखानिश्च चामुण्डो गजपृष्ठगः ॥ चक्रतुस्तुमुलं घोरं नरविस्मयकारकम् ॥ ८८ ॥बाणैर्बाणांश्च संछिद्य देवीभक्तौ च तौ मुदा ॥ अन्योन्यं वाहने हत्वा भूतलत्वमुपागतौ ॥ खड्गचर्मधरौ वीरौ युयुधाते परस्परम् ॥८९॥ यावन्तो रक्तबीजांगात्संजाता रक्तबिंदवः ॥ तावन्तः पुरुषा जाता रक्तबीजपराक्रमाः ॥ ९० ॥ तैश्च वीरैर्मदोन्मत्तैर्बलखानिस्समंततः ॥ संरु



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्धोऽभूद् भृगुश्रेष्ठ शारदां शरणं ययौ॥९१॥एतस्मिन्नंतरे वीरः सुखखानिस्ततोऽनुजः॥आग्नेयं शरमादाय रक्तबीजानदाहयत्॥९२॥ पुरा तु सुखखानिश्च हव्यैर्देवं च पावकम् ॥ पंचाब्दान्पूजयामास तदा तुष्टस्स्वयं प्रभुः ॥ ९३ ॥ पावकीयं शरं रम्यं शत्रुसंहारकारकम् ॥ ददौ तस्मै प्रसन्नात्मा तेनासावभवज्जयी ॥ ९४ ॥ बलखानिस्तु बलवान्दृष्ट्वा शत्रुविनाशनम् ॥ पराजितं च चामुंडं बद्धा गेहमुपागतम् ॥ ९५ ॥ कृत्वा नारीमयं वेषं स भीतो ब्रह्महत्यया ॥ दोलामारोप्य बलवान्प्रेषयामास शत्रवे ॥ ९६ ॥ हतशेषं पंचलक्षं सैन्यं गत्वा च देहलीम् ॥ वृत्तान्तं कथयामास यथा जातो महारणः ॥ ९७ ॥ नारीवेषं च चामुंडं स दृष्ट्वा पृथिवीपतिः ॥ क्रोधाविष्टश्च बलवान्महीपतिमुवाच ह ॥ ९८ ॥ कथं जयो मे भविता सुखखानौ च जीविते ॥ श्रुत्वा महीपतिः प्राह च्छद्मना कार्यमाकुरु ॥ ९९ ॥ ब्राह्मी माता तयोर्ज्ञेया शुद्धा सैव पतिव्रता ॥ दूतीभिः कारणं ज्ञात्वा पुनर्युद्धं कुरुष्व भोः ॥ १०० ॥ इति श्रुत्वा महीराजो दूतीस्ताश्छलकोविदाः ॥ आहूय प्रेषयामास बलखानिगृहं प्रति ॥१०१॥ ब्राह्मण्यस्तास्तदा भूत्वा बलखानिगृहं ययुः ॥ ससुतां तां प्रशस्याशु पप्रच्छुर्विनयान्विताः ॥ १०२ ॥ तव पुत्रौ महावीरौ दिष्ट्या शत्रुक्षयंकरौ ॥ तयोर्मृत्युः कथं भूयाज्जीवतां शरदां शतम् ॥ १०३ ॥ तदा ब्राह्मी वचः प्राह पावकीयः शरः शुभः ॥ सुखखानेर्जीवकरो बलखानेः पदाह्वकः ॥ १०४ ॥ इति ज्ञात्वा तु ता दूत्यः प्रययुर्देहलीं प्रति ॥ कथयित्वा नृपस्याग्रे धनं प्राप्य गृहं ययुः ॥१०५॥ महीराजस्तु तच्छ्रुत्वा महादेवमुमापतिम् ॥ पार्थिवैः पूजनं चक्रे सहस्रदिवसान्मुदा ॥१०६॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये चतुर्विंशोऽध्यायः ॥ २४ ॥छ॥ सूत उवाच ॥ षड्विंशाब्दे च कृष्णांशे यथा जातं तथा शृणु ॥ मुने बिंदुसरो नाम दक्षिणस्यां दिशि स्थितम् ॥१॥ तस्य तीरेऽवसद्ग्रामो योजनायामसंयुतः ॥ नाम्ना बिंदुगढो दुर्गो वर्णधर्मप्रवर्तकः ॥ २ ॥ तस्मिन्ग्रामेऽवसद्भूपो विष्वक्सेनान्वयोद्भवः ॥ शारदानन्दनो नाम ब्रह्मध्यानपरायणः॥३॥ब्रह्मचर्यप्रभावेण तद्वीर्य्यं शिरसि स्थितम् ॥ अतस्स कामपालाख्यः प्रथितोऽभून्महीतले॥४॥ यज्ञैः संपूजयामास सुरज्येष्ठं प्रजापतिम् ॥ यज्ञांशभुक्तमात्रेण राज्ञी गर्भमुपादधौ॥५॥ दशमासान्तरे जाता कन्या सर्वगुणालया ॥ पद्मिनी नाम विख्याता सर्वशोभासमन्विता ॥ ६ ॥ द्वादशाब्दवयःप्राप्तौ बभूव वरवर्णिनी ॥ पद्माकरो भूपसुतो महीराजपदानुगः ॥७॥ पितुराज्ञानुसारेण भूपानाहूय सत्वरम् ॥ स्वयंवरं भगिन्याश्च कारयामास वै मुदा ॥ ८ ॥ नानादेश्या ययुर्भूपा मुख्यशूरसमन्विताः ॥ सहाह्लादैश्चतुर्वीरैर्लक्षणः पितुराज्ञया ॥ ९ ॥ ययौ बिंदुगढं ग्रामं स्थितो यत्र महोत्सवः ॥ महीराजस्तु बलवान्दृष्ट्वा लक्षणमागतम् ॥ १० ॥ स्वसेनां स्थापयामास रक्षार्थं सर्वभूभुजाम् ॥ एतस्मि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्नंतरे देवी सखीभिः सह पद्मिनी ॥ ११ ॥ सर्वभूपान्विलोक्याशु लक्षणांतमुपाययौ ॥ श्यामांगं च युवानं च सर्वलक्षण लक्षितम् ॥ १२ ॥ चत्वारिंशत्तथा पंचाशन्मानाव्द्वयोवृतम् ॥ व्यूढोरस्कं दृढस्कधं निर्जरं रोगवर्जितम् ॥ १३ ॥ दृष्ट्वा तमात्मसदृशमाह्ला दाद्यैश्च रक्षितम् ॥ जयमालां ददौ तस्मै पद्मिनी लक्षणाय च ॥ १४ ॥ तदा स लक्षणो वीरो गृहीत्वा पाणिमुत्तमम् ॥ स्वरथं च समारुह्य राज्ञां मध्ये ययौ मुदा ॥ १५ ॥ पृथ्वीराजस्तथा सर्वे भूमिपा बलसंयुताः ॥ रुरुधुः सर्वतो वीरं लक्षणं बलवत्तरम् ॥ १६ ॥ तालनः सिंहिनीसंस्थो गृहीत्वा परिघं मुदा ॥ सैन्यानि योधयामास भीमसेनांशसंभवः ॥ १७ ॥ पंचशब्दगजारूढश्चाह्लादस्तोमरायुधः ॥ रिपून्विदारयामास बलभद्रां शसंभवः ॥ १८ ॥ कृष्णांशो बिन्दुलारूढो गृहीत्वा खड्गमुत्तमम् ॥ भूपतीन्बहुधा छित्त्वा महावधमकारयत् ॥ १९ ॥ देवो मनोरथारूढो भैरवं भल्लमादधौ ॥ हत्वा च बहुधा सैन्यं ननर्द च पुनःपुनः ॥ २० ॥ लक्षणो धनुरादाय वैष्णवास्त्राणि वै पुनः ॥ संधाय च जवानाशु महीराजस्य सैन्यपान् ॥ २१ ॥ याममात्रमभूद्युद्धं तेषां तैश्च समन्वितम् ॥ त्यक्त्वा युद्धं महीराजः सर्वभूपसमन्वितः ॥ २२ ॥ ययौ स देहलीग्रामे शारदानं दनस्तदा ॥ संस्थाप्य मण्डपशुभं कृत्वा वैवाहिकीः क्रियाः ॥ ददौ कन्यां विधानेन धनधान्यादिसंवृताम् ॥ २३ ॥ एतस्मिन्नन्तरे प्राप्तो महीप तिरुवाच तम् ॥ पद्माकरं भूपसुतं लक्षसैन्यसमन्वितम् ॥ २४ ॥ अहो मित्र महावीर कीदृशी ते मतिः स्थिता ॥ विष्वक्सेनान्वये त्वं वै संजातः क्षत्रियोत्तमः ॥ २५ ॥ लक्षणो धर्मरहितो वर्णसंकरसंयुतः ॥ आह्लादाद्याश्च ते शूरा आभीरमातृसंभवाः ॥ तैर्युतश्च निवासो वै संत्याज्यो धर्मको विदैः ॥ २६ ॥ इति पद्माकरः श्रुत्वा सर्वमायाविशारदः ॥ स कृत्वा शाम्बरीं मायां बद्ध्वा तानेव दुर्जयान् ॥ स्वगेहे स्थापयामास कारागारे शिलामये ॥ २७ ॥ देव्याश्च वरदानेन देवसिंहस्तदा निशि ॥ त्यक्त्वा मायां मोहमयीं कान्यकुब्जमुपाययौ ॥ २८ ॥ इंदुलाग्रे च तत्सर्वं गदित्वा तेन संयुतः ॥ प्राप्तो बिंदुगढं शीघ्रं दिव्यमायाविशारदः ॥ २९ ॥ पद्माकरस्तु तच्छ्रुत्वा कृत्वा मायां च शाम्बरीम् ॥ मोहनायोद्यतस्तत्र यथा मेघो रविं दिवि ॥ ३० ॥ इंदुलश्च तदा चापे संधाय शरमुत्तमम् ॥ कामास्त्रेण तु तन्माया भस्मीभूताभवत्क्षणात् ॥ ३१ ॥ तदा ते बोधिताः सर्वे कामास्त्रेण महाबलाः ॥ भित्त्वा लोहमयं जालं कपाटं च तथा दृढम् ॥ ३२ ॥ बहिर्भूताः समाजग्मुः शत्रुसैन्यान्यनाशयन् ॥ क्षत्रियाः पंचसाहस्रा मृता यमपुरं ययुः ॥ ३३ ॥ शारदानंदनो भूपस्तत्रागत्य विनम्य तान् ॥ स्वसुतां च ददौ तस्मै लक्षणाय महात्मने ॥ ३४ ॥ कुमारिकां स्वकीयां च बहुरोदनतत्पराम् ॥ नानाविधानि भोज्यानि प्रशस्याभरणानि च ॥ सर्वेभ्यश्च ददौ राजा सहस्रेभ्यस्तदा मुदा ॥ ३५ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स मत्वा कामपालो वै स्वगेहांत्तं न्यवासयत् ॥ आगतो लक्षणो गेहं माघकृष्णाष्टमीदिने ॥ ३६ ॥ जयचंद्रस्तु तं दृष्ट्वा लक्षणं प्रेमविह्वलः ॥ शतग्रामान्ददौ तेभ्यस्तालनादिभ्य एव च ॥३७॥ दत्त्वा ततोऽन्यदानानि गोवस्त्राभरणानि च ॥ प्रददौ ब्राह्मणेभ्यश्च स चकार महोत्सवम् ॥३८॥ ॥ ॥ सूत उवाच ॥ ॥ महीराजो वरं प्राप्तः शंकरात्पार्थिवार्चनात् ॥ संयोज्य फाल्गुने मासि सेनां शत्रुभयंकराम् ॥ ३९ ॥ सप्तलक्षैश्च सहितः शिरीषाख्यपुरं ययौ ॥ नृपाज्ञया च चांमुडो रुरोध नगरं पुनः ॥ ४० ॥ सुखखानिस्तदा क्रुद्धो लक्षसैन्यसमन्वितः ॥ नगराद्बहिरागत्य महाव धमकारयत् ॥ ४१ ॥ पावकास्त्रेण बलवान्हत्वा दशसहस्रकम् ॥ महीराजमुपागम्य वचनं प्राह निर्भयः ॥ ४२ ॥ अद्य त्वां च हनिष्यामि त्वं वा हन्ता रणे मम ॥ स्वविद्यां कुरु भूप त्वं नो चेद्यास्यसि वैशसम् ॥ ४३ ॥ इति श्रुत्वा महीराजो रौद्रास्त्रं चाप आदधे ॥ तदस्त्राच्च महावह्निः प्रादुर्भूतो भयंकरः ॥ ४४ ॥ सुखखानिस्तदाग्नेयं संदधौ तस्य शांतये ॥ रौद्राग्निना च सशरः सुखखानिर्लयं गतः ॥ ४५ ॥ तदस्त्रं शिवतूणीरे गतं कार्यं विधाय तत् ॥ बलखानिस्तु तच्छ्रुत्वा भयभीतः समागतः ॥ ४६ ॥ भ्रातुर्वैरमुपादाय जघान च रिपोर्बलम् ॥ ध्यात्वा च शारदां देवीं भूमिराजमुपागमत् ॥ ४७ ॥ भूमिराजस्तु तं दृष्ट्वा तद्बलाधिक्यमोहितः ॥ उवाच वचनं प्रेम्णा बलखाने शृणुष्व भोः ॥ ४८ ॥ क्रोशमात्रान्तरे गर्ता द्वादशैव मया कृताः ॥ रक्षिता द्वादशशतैः शूरैर्युद्धविशारदैः ॥ ४९ ॥ शूराञ्जित्वा समुल्लंघ्य गर्तान्द्वादशसम्मितान् ॥ ममार्द्धं सकलं राष्ट्रं गृहाण बलिसत्तम ॥ ५० ॥ इति श्रुत्वा प्रियं वाक्यं तद्राज्ञा सत्यभाषितम् ॥ कपोतं हयमारुह्य खड्गहस्तो वनं ययौ ॥ ५१ ॥ दृष्ट्वा गर्तान्महा वीरो हत्वा शूराञ्छतञ्छतम् ॥ ययौ स द्वादशान्गर्त्तान्बाहुशाली जितेंद्रियः ॥ ५२ ॥ चामुंडस्तु तदागत्य शूरायुतसमन्वितः ॥ रुरोध सर्वतो वीरं छद्मकारी द्विजाधमः ॥ ५३ ॥ बलखानिश्च महतीं सेनां तस्य जघान ह ॥ चामुंडं तमुपागम्य ननर्द च पुनःपुनः ॥ ५४ ॥ त्रयोदशं गुप्तगर्तं तृणैराच्छादितं मृदा ॥ विपर्यौतैर्महाभल्लैस्संरुद्धं विवरप्रभम् ॥ ५५ ॥ पतितः सकपोतश्च स वीरो दैवमोहितः ॥ अंधकारे महाघोरं गंभीरं क्रोशमात्रकम् ॥ ५६ ॥ विदीर्णस्तत्र चरणस्सपद्मो वत्सजस्य वै ॥ महाकष्टेन तद्वाजी गर्तादागत्य वै बहिः ॥ स्वपदैस्ताडयामास महीराजस्य तद्बलम् ॥ ५७ ॥ चामुंडस्तु तदागत्य बलखानेश्च वै शिरः ॥ छित्त्वा जघान तत्सैन्यं हाहाभूतं विनेश्वरम् ॥ ५८ ॥ गजमुक्ता च तच्छ्रुत्वा चितामारोप्य वै पतिम् ॥ दाहयामास चांगानि सा पत्या सह वै सती ॥ ५९ ॥ तदा ब्रह्मा स्ववध्वा च सार्द्धमागत्य तत्र वै ॥

१ वहिरिति शेषः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुखखानिं च संहूय ददाह तत्कलेवरम् ॥ ६० ॥ शून्यभूतं च नगरं भस्म कृत्वा स वै नृपः ॥ जगाम देहलीं शीघ्रं महोत्साहसमन्वितः ॥ ६१ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चये विक्रमाख्यानकाले पंचविंशोऽध्यायः ॥ २५ ॥ ७ ॥ ॥ ॥ सूत उवाच ॥ ॥ श्रावणे मासि संप्राप्ते देहलीं च महीपतिः ॥ नागोत्सवाय प्रययौ सदैव कलहप्रियः ॥ १ ॥ दृष्ट्वा नागोत्सवं तत्र गीतनृत्यसमन्वितम् ॥ महीराजं नमस्कृत्य वचनं प्राह नम्रधीः ॥ २ ॥ राजन्महावतीग्रामे कीर्तिसागरमध्यगे ॥ वामनोत्सवमत्यंतं यवव्रीहिसमन्वितः ॥ पश्य त्वं तत्र गत्वा च ममैव वचनं कुरु ॥ ३ ॥ इति श्रुत्वा महीराजो धुंधुकारेण संयुतः ॥ सप्तलक्षबलैर्युक्तश्चामुण्डेन समन्वितः ॥ प्राप्तः शिरीषविपिने तत्र वासमकारयत् ॥ ४ ॥ महीपतिस्तु नृपतिं नत्वा वै चन्द्रवंशिनम् ॥ उवाच वचनं दुःखी धूर्तो मायाविशारदः ॥ ५ ॥ राजन्प्राप्तो महीराजो युद्धार्थी त्वामुपस्थितः ॥ चन्द्रावलीं च तनयां ब्रह्मानंदं तवात्मजम् ॥ दिव्यलिंगं स संपूज्य बलात्काराद्ग्रहीष्यति ॥ ६ ॥ तस्मात्त्वं स्वबलैः सार्द्धं मया सह महामते ॥ छद्मना तं पराजित्य नगरेऽस्मिन्सुखी भव ॥ ७ ॥ इति श्रुत्वा देववशो राजा परिमलो बली ॥ चतुर्लक्षबलैस्सार्द्धं निशीथे च समागतः ॥ ८ ॥ शयितान्क्षत्रियाञ्छूरान्हत्वा पंचसहस्रकान् ॥ शतघ्नीं रोषणीं चक्रे बहुशूरविनाशिनीम् ॥ ९ ॥ तदोत्थाय महीराजः कटिमाबध्य संभ्रमात् ॥ वैरिणं परमं मत्वा महद्युद्धमचीकरत् ॥ १० ॥ युद्धयंत्योः सेनयोस्तत्र मलना पुत्रगृद्धिनी ॥ शारदामादराद्धत्वा पूजयामास भक्तितः ॥ ११ ॥ देविदेवि महादेवि सर्वदुःखविनाशिनि ॥ हर मे सकलां बाधां कृष्णांशं बोधयाशु च ॥ १२ ॥ जप्त्वायुतमिमं मंत्रं हुत्वा तर्पणमार्जने ॥ कृत्वा सुष्वाप तद्वेश्मंस्तदा तुष्टा स्वयं शिवा ॥ १३ ॥ मलने महती बाधा क्षयं यास्यति मा शुचः ॥ १४ ॥ इत्युक्त्वा शारदा देवी कृष्णांशं प्रति चागमत् ॥ पुत्र ते जननी भूमिर्महीराजेन पीडिता॥ क्षयं यास्यति शीघ्रं च तस्मात्त्वं तां समुद्धर ॥ १५ ॥ इति श्रुत्वा वचो देव्यास्स वीरो विस्मयान्वितः ॥ देवकीं प्रति संप्राप्तः कथयामास कारणम् ॥ १६ ॥ सा तु श्रुत्वा वचो घोरं स्वर्णवत्या समन्विता ॥ रुरोद भृशमुद्विग्ना विलप्य बहुधा सती ॥ १७ ॥ कृष्णांशस्तु तदा दुःखी देवसिंहमुवाच ह ॥ किं कर्तव्यं मया वीर देह्याज्ञां दारुणे भये ॥ १८ ॥ तच्छ्रुत्वा तेन सहितो लक्षणेन समन्वितः ॥ ययौ दिग्विजयार्थेन व्याजेन च महावतीम् ॥ ॥ १९ ॥ तालनो भीमसेनांशः सेनापतिरुदारधीः ॥ सप्तलक्षबलैस्सार्द्धं विनाह्लादेन संययौ ॥ २० ॥ कल्पक्षेत्रमुपागम्य योगिनस्ते तदाभवन् ॥

१ स्वं कलेवरमिति पाठस्तूत्तरग्रंथविरोधादुपेक्ष्य एव । २ वेश्मनीत्यर्थः । 'ङ्याबुत्तरपदे'—इति लोपाभावः 'नदछवि'—इति रुत्वम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सेनां निवेशयामास विपिने तत्र दारुणे ॥ २१ ॥ कृष्णांशस्तालनो देवो लक्षणो बलवत्तरः ॥ गृहीत्वा लास्यवस्तूनि युद्धभूमिमुपागमन् ॥२२॥ सप्ताहं च तयोर्युद्धं जातं मृत्युविवर्द्धनम् ॥ सप्तमेऽहनि ते वीरास्संप्राप्ता रणमूर्द्धनि ॥२३॥ तस्मिन्दिने महाभाग महद्युद्धमवर्तत ॥ २४ ॥ दृष्ट्वा पराजितं सैन्यं राजा परिमलो बली ॥ रथस्थश्चापमादाय महीराजमुपाययौ ॥ २५ ॥ यादवश्च गजारूढस्तदा चंद्रावलीपतिः ॥ धुन्धुकारं समाहूय धनुर्युद्धमचीकरत् ॥ २६ ॥ हरिनागरमारुह्य ब्रह्मानंदो महाबलः ॥ तारकं शत्रुमाहूय धनुर्युद्धं चकार ह ॥ २७ ॥ मर्दनं राजपुत्रं च रणजिद्गजसंस्थितः ॥ स्वशरैस्ताडयामास तत्सुतं च जघान ह ॥ २८ ॥ रूपणो वै सरदनं हयारूढो जगाम ह ॥ आभीरीतनयो जातो मदनो नाम वै बली ॥ नृहरं राजपुत्रं च शंखांशश्च जगाम ह ॥ २९ ॥ तेषु संग्राममेतेषु[1] चामुण्डोऽयुतसैन्यपः ॥ महीपतेश्च वचनं मत्वा नगरमाययौ ॥ ३० ॥ ददर्श नगरीं रम्यां चतुर्वर्णसमन्विताम् ॥ धनधान्ययुतां वीरो देवीभक्तिपरायणः ॥ ३१ ॥ महीपतिस्तु वै धूर्तो दुर्गद्वारि समागतः ॥ चामुंडेन युतः पापी राजगेहमुपाययौ ॥३२॥ मलना भ्रातरं दृष्ट्वा वचनं प्राह दुःखिता ॥ भाद्रकृष्णाष्टमी चाद्य यवव्रीहि[2] गृहे स्थितम् ॥३३॥ न प्राप्तं जलसंस्थाने सुपुण्ये कीर्तिसागरे ॥ महीराजो महापापी वामनोत्सवमागतः ॥३४॥ विनाह्लादं च कृष्णांशं महद्दुःखमुपागतम् ॥ इत्युक्तस्स विहस्याह ब्राह्मणोऽयं महाबली ॥ कान्यकुब्जात्समायातः कृष्णांशेन प्रयोजितः ॥३५॥ देवीदत्तश्च नाम्नाऽयं स ते कार्यं करिष्यति ॥ श्रुत्वा चंद्रावली देवी सर्वभूषणसंयुता ॥३६॥ कामाग्निपीडितं विप्रं चामुंडं च ददर्श ह॥मातरं प्रति चागम्य वचनं प्राह निर्भरम्॥३७॥धूर्तोऽयं ब्राह्मणो मातर्निश्चयं मां हरिष्यति ॥ कोऽयं वीरो न जानामि कथं यामि पतिव्रता ॥३८॥ इति श्रुत्वा वचस्तस्या लज्जितस्स महीपतिः॥चामुंडेन युतः प्राप्तो यत्र भूत्स महारणः॥३९॥एतस्मिन्नंतरे ते वै ब्रह्माद्यास्तैः पराजिताः॥त्यक्त्वा युद्धं गृहं प्राप्तास्त्रिलक्षबलसंयुताः ॥४०॥ कपाटं सुदृढं कृत्वा महाचिंतामुपाययुः ॥ महीराजस्तु बलवान्महीपत्यनुमोदितः॥४१॥प्रमदावनमागत्य षष्टिलक्षबलान्वितः॥जुगोप तत्र बलवान्माननोत्सवहेतवे॥४२॥तालनाद्याश्च,चत्वारः शिरीषाख्यपुरं ययुः॥ स्थलीभूतं च तं ग्रामं दृष्ट्वा ते विस्मयान्विताः॥ प्रययुस्ते सुखभ्रष्टा ददृशुर्हिमदं मुनिम्॥४३॥ प्रणम्योचुः शुचाविष्टा बलखानिर्गुने बली ॥ क्व गतः समरश्लाघी स च कुनागरैर्युतः ॥४४॥ श्रुत्वाह हिमदो योगी महीराजेन नाशितः ॥ छद्मना बलखानिश्च तस्येयं सुन्दरी चिता ॥४५॥ इति श्रुत्वा वचो घोरं कृष्णांशः शोकतत्परः ॥४६॥ विललाप भृशं तत्र हा बन्धो धर्मजांशक ॥ त्वदृते भूतले वासो ममातीव भयं

१ आगतेषु । २ यवाश्च व्रीहयश्चेति समाहारद्वन्द्वः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करः ॥ ४७ ॥ दर्शनं देहि मे क्षिप्रं नो चेत्प्राणांस्त्यजाम्यहम् ॥ ४८ ॥ इत्युक्तः स तु तद्भ्राता बलखानिः पिशाचगः ॥ सपत्नीकस्समायातो रोदनं कृतवान्बहु ॥ कथित्वा सर्ववृत्तान्तं यथाजातं स्ववैशसम् ॥ ४९ ॥ दिव्यं विमानमारुह्य गतो नाकं मनोरमम् ॥ युधिष्ठिरे तस्य कला बलखानेर्लयं गता ॥ ५० ॥ तदा दुःखी स कृष्णांशः कृत्वा भ्रातुस्तिलांजलिम् ॥ महावतीं समागत्य राजगेहमुपाययौ ॥ ५१ ॥ वेणुशब्देन कृष्णांशो ननर्त जनमोहनः ॥ वीणाप्रवाद्यं च जगौ तालनो योगिरूपधृक् ॥ ५२ ॥ मृदंगध्वनिना देवो लक्षणः कांस्यवाद्यकः ॥ सुस्वरं च जगौ तत्र श्रुत्वा राजा विमोहितः ॥ ५३ ॥ तदा तु मलना राज्ञी दृष्ट्वा तद्रामनोत्सवम् ॥ रुदित्वा वचनं प्राह क्व गतो मे प्रियंकरः ॥ ५४ ॥ कृष्णांशो बन्धुसहितस्त्यक्त्वा मां मन्दभागिनीम् ॥ त्वया विरहितो देशो महीराजेन लुंठितः ॥ ५५ ॥ इत्युक्तां मलनां दृष्ट्वा कृष्णांशः स्नेहकातरः ॥ वचनं प्राह नम्रात्मा देवि त्वं वचनं कुरु ॥ ५६ ॥ योगिनश्च वयं राज्ञि सर्वयुद्धविशारदाः ॥ तवेदं सकलं कार्यं कृत्वा यामो हि नैमिषम् ॥ ५७ ॥ ये यवव्रीहयश्चैव तव सद्मनि संस्थिताः ॥ गृहीत्वा योषितस्सर्वा गच्छन्तु सागरान्तिकम् ॥ वयं तु योगसैन्येन तव रक्षां च कुर्महे ॥ ५८ ॥ इति श्रुत्वा वचस्तस्य तत्सुता च पतिव्रता ॥ मातरं वचनं प्राह कृष्णांशोऽयं न नर्तकः ॥ ५९ ॥ पुण्डरीकनिभे नेत्रे श्यामांगं तस्य सुन्दरम् ॥ कृष्णांशेन विना मातः को रक्षार्थं क्षमो भुवि ॥ दुर्जयश्च महीराजः कृष्णांशेन विनिर्जितः ॥ ६० ॥ इति तद्वचनं श्रुत्वा मलना प्रेमविह्वला ॥ यवव्रीहयो निष्कास्य योषितां स्थापिताः करे ॥ ६१ ॥ जग्मुस्ता योषितस्सर्वाः कृष्णांशचरितं शुभम् ॥ लक्षणः शीघ्रमागम्य योगिवेषान्स्वसैनिकान् ॥ सज्जीकृत्य स्थितस्तत्र तालनाद्यैः सुरक्षितः ॥ ६२ ॥ कीर्तिसागरमागम्य ते वीरा बलदर्पिताः ॥ रुरुधुः सर्वतो नारीर्दोलायुतमितस्थिताः ॥ ६३ ॥ महीपतिस्तु कुलहा ज्ञात्वा कृष्णांशमागतम् ॥ चंद्रवंशिनमागम्य सपुत्रश्च रुरोद ह ॥ ६४ ॥ योगिभिस्तैर्महाराज लुंठिताः सर्वयोषितः ॥ मलना संहृता तत्र तथा चंद्रावली सुता ॥ ६५ ॥ महीराजस्य ते सैन्या योगिवेषास्समागताः ॥ तारकाय सुतां प्रादान्महीराजाय मत्स्वसाम् ॥ ६६ ॥ इति श्रुत्वा वचो घोरं ब्रह्मानन्दो महाबलः ॥ लक्षसैन्यान्वितस्तत्र ययौ रोपसमन्वितः ॥ ६७ ॥ महीराजस्तु कलही सैन्यायुतमहात्मजः ॥ रक्षितः कामसेनेन तथा रणजिता ययौ ॥ ६८ ॥ तयोश्चासीन्महद्युद्धं सेनयोरुभयोर्भुवि ॥ तालनो योगिवेषश्च ब्रह्मानंदमुपाययौ ॥ ६९ ॥ लक्षणश्चाभयं शूरं देवसिंहो महीपतिम् ॥ जित्वा बद्धा च मुदितौ काम

१ निर्लेप आर्षः । २ पुंस्त्वमार्षम् । ३ स्वसारमित्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सेनस्समागतः ॥ ७० ॥ लक्षणः कामसेनं च देवो रणजितं तदा ॥ बद्ध्वा तत्र स्थितौ वीरौ शत्रुसैन्यक्षयंकरौ ॥ ७१ ॥ एतस्मिन्नंतरे ब्रह्मा बद्ध्वा वै तालनं बली ॥ लक्षणान्तमुपागम्य धनुर्युद्धमचीकरत् ॥ ७२ ॥ लक्षणं छिन्नधन्वानं पुनर्बद्ध्वा महाबलः ॥ देवसिंहमुपागम्य मूर्छितं तं चकार ह ॥ ७३ ॥ हाहाभूते योगिसैन्ये प्रद्रुते सर्वतो दिशम् ॥ कृष्णांशो योषितस्सर्वा वचनं प्राह नम्रधीः ॥ ७४ ॥ ब्रह्मानन्दोऽयमायातो मम सैन्य क्षयंकरः ॥ तस्माद्यूयं मया सार्द्धं गच्छताशु च तं प्रति ॥ ७५ ॥ इत्युक्त्वा तास्समादाय ब्रह्मानन्दमुपाययौ ॥ तयोश्चासीन्महद्युद्धं नरनारायणांशयोः ॥ ७६ ॥ कृष्णांशस्तत्र बलवान्नभोमार्गेण तं प्रति ॥ रथस्थं च समागम्य मोहयामास सोऽसिना ॥ ७७ ॥ तदा तु मूर्छिते तस्मिन्मोचयित्वा च ता मुदा ॥ योगी सैन्यान्वितो युद्धात्पलायनपरोऽभवत् ॥ ७८ ॥ पराजिते योगिसैन्ये ब्रह्मानंदो महाबलः ॥ योषितस्ताः समादाय स्वगेहाय दधौ मनः ॥ ७९ ॥ महीराजस्तु संप्राप्तो महीपत्यनुमोदितः ॥ रुरोध सर्वतो नारीः शिवदत्तवरो बली ॥ ८० ॥ नृहरश्चाभयं शूरं मर्दनश्चैव रूपणम् ॥ मदनं वै सरदनो ब्रह्मानंदं च तारकः ॥ ८१ ॥ चामुण्डः कामसेनं च धनुर्युद्धमचीकरत् ॥ तदाभयो महावीरो धुन्वंतं नृहरं रिपुम् ॥ ८२ ॥ छित्त्वा धनुस्तमागत्य खड्गयुद्धमचीकरत् ॥ नृहरः खड्गरहितोऽभवद्युद्धपराङ्मुखः ॥ तमाह वचनं क्रुद्धोऽभयो युद्धार्थमुद्यतः ॥ ॥ ८३ ॥ भवान्वै मातृष्वस्रीयो महीराजस्य चात्मजः ॥ ८४ ॥ क्षत्रियाणां परं धर्मं कथं संहर्तुमिच्छति ॥ इति श्रुत्वा तु नृहरो गृहीत्वा परिघं रुषा ॥ ८५ ॥ जघान तं च शिरसि स हतः स्वर्गमाययौ ॥ स च वै कृतवर्मांशो विलीनः कृतवर्मणि ॥ ८६ ॥ मदनं गोपजातं च हत्वा सरदनो बली ॥ जयशब्दं चकारोच्चैर्पुनर्हत्वा रिपोर्बलम् ॥ उत्तरांशश्च स ज्ञेयो मदनश्चोत्तरे लयः ॥ ८७ ॥ रूपणश्च समागत्य मूर्छयित्वा च मर्दनम् ॥ पुनस्सरदनं प्राप्य खड्गयुद्धं चकार ह ॥ ८८ ॥ ब्रह्मानंदश्च बलवान्स बद्ध्वा तारकं रुषा ॥ महीराजान्तमागम्य धनुर्युद्धं चकार ह ॥ ८९ ॥ नृहरं रणजित्प्राप्य स्वभल्लेन तदा रुषा ॥ जघान समरश्लावी महीराजसुतं शुभम् ॥ ९० ॥ स वै दुश्शासनांशश्च मृतस्तस्मिन्समागतः ॥ ९१ ॥ निहते नृहरे बंधौ मर्दनः क्रोधतत्परः ॥ स्वशरैस्ताडयामास सात्यकेरंशमुत्तमम् ॥ ९२ ॥ छित्त्वा तान्रणजिच्छूरस्स वै परिमलोद्भवः ॥ स्वभल्लेन शिरः कायान्मर्दनस्य स चाहरत् ॥ ९३ ॥ मृतेऽस्मिन्मर्दने वीरे तदा सरदनो बली ॥ ताडयामास तं वीरं स्वभल्लेनैव वक्षसि ॥ ९४ ॥ महत्कष्टमुपागम्य रणजिन्मलनोद्भवः ॥ स्वखड्गेन शिरः कायादपाहरत वैरिणः ॥ ९५ ॥ त्रिबंधौ निहते युद्धे तारकः क्रोधमूर्छितः ॥ रथस्थश्च रथस्थं

१ समाहारे पुंस्त्वमार्षम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अशुचिश्च दितिर्देवी सुष्वाप निजमंदिरे ॥ ११ ॥ अंगुष्ठमात्रो भगवान्महेन्द्रो वज्रसंयुतः ॥ कुक्षिमध्ये समागम्य चक्रे गर्भं स सप्तधा ॥ १२ ॥ जीवभूतानतिबलान्दृष्ट्वा सप्त महारिपून् ॥ एकैकः सप्तधा तेन महेन्द्रेण तदा कृतः ॥ १३ ॥ नम्रीभूतश्च तान्दृष्ट्वा महेन्द्रस्तैः समन्वितः ॥ योनिद्वारेण चागम्य प्रणनाम तदा दितिम् ॥ १४ ॥ प्रसन्ना सा दितिर्देवान्महेन्द्राय च तान्ददौ ॥ मरुद्गणाश्च ते सर्वे विख्याताः शक्रसेवकाः ॥१५॥ स तु पूर्वभवे जातो ब्राह्मणो लोकविश्रुतः ॥ इलो नाम स वेदज्ञो यथेलो नृपतिस्तदा ॥ १६ ॥ एकदा बलवान्राजा मनुपुत्र इलः स्वयम् ॥ एकाकी हयमारुह्य मेरोर्विपिनमाययौ ॥ १७ ॥ मेरोरधः स्थितः खण्डः स्वर्णगर्भो हरिप्रियः ॥ निवासं कृतवाँस्तत्र कृत्वा राष्ट्रं महोत्तमम् ॥ ॥ १८ ॥ इलेनावृतमेवापि कृतं तत्र स्थले सुराः ॥ इलावृतमिति ख्यातः खण्डोऽभूद्विबुधप्रियः ॥ १९ ॥ भारते ये स्थिता लोका इलावृतमुपागताः ॥ मेरुर्गिरिर्वृक्षमयो विधात्रा निर्मितो हि सः ॥ २० ॥ आरोहणं नरैस्तस्मिन्कृतं स्वर्णमयं शुभम् ॥ तमारुह्य क्रमाल्लोकः स्वर्गलोकमुपागतः ॥ २१ ॥ तान्दृष्ट्वा मनुजान्प्राप्तान्सदेहान्स्वर्गमण्डले ॥ विस्मिताश्च सुरास्सर्वे महेशं शरणं ययुः ॥ २२ ॥ ज्ञात्वा स भगवान्रुद्रो भवान्या सह शंकरः ॥ इलावृतवने रम्ये स रेमे च तया सह ॥ २३ ॥ एतस्मिन्नन्तरे प्राप्तो वैवस्वतसुतो महान् ॥ इलो नाम महाप्राज्ञो मृगयार्थी सदाशिवम् ॥ २४ ॥ नग्नभूतं समालोक्य नेत्रे संमील्य संस्थितः ॥ लज्जितां गिरिजां दृष्ट्वा शशाप भगवान्हरः ॥ २५ ॥ अस्मिन्खण्डे सदा नार्यो भविष्यंति च मां विना ॥ इत्युक्ता वचनं तस्मिन्नार्यस्सर्वा बभूविरे ॥ २६ ॥ इला बभूव नृपतेः कन्या जनमनोहरा ॥ बहुकालं मेरुशृंगे महत्तपमचीकरत् ॥ २७ ॥ इलासमाधिभूतायाः सप्तविंशच्चतुर्युगम् ॥ जातं तत इला कन्या त्रेतामध्ये तु चन्द्रजम् ॥ बुधं देवं पतिं कृत्वा चंद्रवंशमजीजनत् ॥ २८ ॥ अयोध्याधिपतिः श्रीमान्यदेलावृतमागतः ॥ तस्य राज्ञी मदवती नाम्ना तुष्टाव पार्वतीम् ॥ २९ ॥ तदा प्राप्त इलो विप्रस्तस्या रूपेण मोहितः ॥ पस्पर्श तां मदवतीं राज्ञीं कामविमोहितः ॥ ३० ॥ एतस्मिन्नंतरे तत्र वागुवाचाशरीरिणी ॥ इलो नायं द्विजश्चायं तव रूपविमोहितः ॥ ३१ ॥ अनिलो नाम तत्रैव विख्यातोऽभूद्द्विजस्य वै ॥ कामाग्निपीडितो विप्रस्स तुष्टाव च पावकम् ॥ ३२ ॥ छित्त्वाछित्त्वा शिरो रम्यं तस्मै जातं पुनःपुनः ॥ दत्त्वा तुष्टाव तं देवं प्रसन्नोऽभूद्धनंजयः ॥ ३३ ॥ प्राह त्वमूनपंचाशद्भिभेदाञ्जनयिष्यसि ॥ तथाहं मित्रवान्भूत्वा तत्संख्यस्तव कामदः ॥ ३४ ॥ यथा कुबेरो भगवान्षड्विंशद्रुद्रणप्रियः ॥ तथाहमूनपंचाशद्भिभेदस्तव वै सखा ॥३५॥ इत्युक्ते वचने तस्मिन्दितिकुक्षौ द्विजोत्तमः ॥ वायुर्नाम स वै जातः पावकस्य प्रियस्सखा ॥३६॥ ॥ सूत उवाच ॥ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रुत्वा गुरोर्वाक्यं वैश्यजात्यां समुद्भवः ॥ धान्यपालस्य वै गेहे मूलगंडान्तजः सुतः ॥ पितृमातृपरित्यक्तः काश्यां विंध्यवने तदा ॥ ३७ ॥
अलिको नाम वै म्लेच्छस्तत्र स्थाने समागतः ॥ ३८ ॥ अनपत्यो वस्त्रकारी सुतं प्राप्य गृहं ययौ ॥ कबीर इति विख्यातः स पुत्रो मधुराननः ॥
॥ ३९ ॥ स सप्ताब्दवपुर्भूत्वा गोदुग्धपानतत्परः ॥ रामानंदं गुरुं मत्वा रामध्यानपरोऽभवत् ॥४०॥ स्वहस्तेनैव संस्कृत्य भोजनं हरयेऽपर्यत् ॥
तत्प्रियार्थं हरिस्साक्षात्सर्वकामप्रदोऽभवत् ॥ ४१ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ उत्तानपादतनयो ध्रुवोभूत्क्षत्रियः पुरा ॥ पितृमातृपरित्यक्तः
स बालः पंचहायनः ॥ ४२ ॥ गोवर्द्धनगिरौ प्राप्य नारदस्योपदेशतः ॥ स चक्रे भगवद्ध्यानं मासान्षट् च महाव्रती ॥ ४३ ॥ तदा प्रसन्नो
भगवान्विष्णुर्नारायणः प्रभुः ॥ खमंडले पदं तस्मै ददौ प्रीत्या नभोमयम् ॥ ४४ ॥ दृष्ट्वा तद्वदनं रम्यं मायाशक्त्या दिशो दश ॥ स्वामिनं च
ध्रुवं मत्वा भक्तिनम्रा बभूविरे ॥ ४५ ॥ ध्रुवोऽपि भगवान्साक्षात्सर्वपूज्यो बभूव ह ॥ दिक्पतिः स तु विज्ञेयो भगणानां पतिः स्वयम् ॥ ४६ ॥
नभःपतिः कालकरः शिशुमारपतिस्स वै ॥ पंचतत्त्वा[1] हि वै माया प्रकृतिस्तत्पतिः स्वयम् ॥ ४७ ॥ तस्माद्धरायां संभूतो भौमो नाम महाग्रहः ॥
जलदेव्यास्ततो जातः शुक्रो नाम महाग्रहः ॥ ४८ ॥ वह्निदेव्यां ततो जातश्चाहं तत्र महाग्रहः ॥ वासुदेव्यां ध्रुवाज्जातः केतुर्नाम महाग्रहः ॥४९॥
ग्रहभूतः स्थितस्तत्र नभोदेव्यां तदुद्भवः ॥ राहुर्नाम तथा घोरो महाग्रह उपग्रहः ॥ ५० ॥ पूर्वस्यां दिशि वै तस्माज्जातश्चैरावतो गजः ॥ आग्नेय्यां
दिशि वै तस्मात्पुंडरीको गजोऽभवत् ॥ ५१ ॥ वामनः कुमुदश्चैव पुष्पदंतः क्रमाद्गजाः ॥ सार्वभौमः सुप्रतीको नभोदिक्षु तु तत्सुताः ॥५२॥
अभ्रमुः कपिला चैव पिंगलाख्या इमाः क्रमात् ॥ ताम्रकर्णी शुभ्रदंती चांगना चांजनावती ॥५३॥ भूमिदिक्षु करिण्यश्च जातास्तस्माच्च तत्प्रियाः ॥
भगिनी च तथा माता सुता चैव स्नुषा तथा ॥ ५४ ॥ पशुयोन्युद्भवानां च नृणां ता योषितस्सदा ॥ देवयोन्युद्भवानां च नृणां पत्नी स्मृता
स्वसा ॥ ५५ ॥ मनुवंशोद्भवानां च नृणां चान्योद्भवाः स्त्रियः ॥ इति धर्मो विधात्रोक्तो मया प्रोक्तः सुरा हि वः ॥ ५६ ॥ द्विधा ध्रुवस्स विज्ञेयो
भूमेरुर्द्ध्वमधस्तथा ॥ सद्गुणः स दिवारूपो रात्रिरूपस्तमोगुणः ॥ ५७ ॥ अधोध्रुवे सदा रात्रिर्नारकास्तत्र वै स्थिताः ॥ ऊर्ध्वध्रुवे दिवा नित्यं
तपोमध्ये निशा दिवा ॥ ५८ ॥ महो जनस्तपस्सत्यं तेषु नित्यं दिनं स्मृतम् ॥ रौरवश्चांधकूपश्च तामिस्रं च तमोमयम् ॥ तेषु नित्यं स्मृता
रात्रिः कल्पमानं च कोविदैः ॥ ५९ ॥ स तु पूर्वभवे चासीद्ब्राह्मणो माधवप्रियः ॥ षष्ट्यब्दं सर्वतीर्थेषु प्रातःस्नानं चकार ह ॥ ६० ॥ तीर्थ

१ पञ्चतत्त्वा माया प्रकृतिस्तत्पतिस्स स्वयमित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुण्यात्स वै विप्रो माधवो माधवप्रियः ॥ सुनीत्यां गर्भमासाद्य ध्रुवो भूत्वा रराज ह ॥ षट्त्रिंशच्च सहस्राब्दं राज्यं कृत्वा ध्रुवोऽभवत् ॥ ६१ ॥ ॥ ॥ सूत उवाच ॥ ॥ इति श्रुत्वा गुरोर्वाक्यं स ध्रुवः पंचमो वसुः ॥ गुर्जरे देश आगम्य वैश्यजात्यां समुद्भवः ॥ नरश्रीर्नाम विख्यातो गुणवैश्यस्य वै सुतः ॥ ६२ ॥ कुसीदगुणगुप्तश्च नरश्रीः पुत्रवत्सलः ॥ त्यक्त्वा प्राणान्ययौ स्वर्गं स वैश्यतनयो ध्रुवः ॥ ६३ ॥ प्रत्यहं स हरेः क्रीडां वृन्दावनमहोत्तमे ॥ शिवप्रसादात्प्रत्यक्षां दृष्ट्वा हर्षमवाप्तवान् ॥ ६४ ॥ यस्य पुत्रविवाहे च भगवान्भक्तवत्सलः ॥ यादवैस्सह संप्राप्तस्तस्य वांछितदायकः ॥ ६५ ॥ पुरीं काशीं समागम्य नरश्रीर्भक्तराट् स्वयम् ॥ रामानन्दस्य शिष्योऽभूद्विष्णुधर्मविशारदः ॥ ६६ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ कदाचिद्भगवानत्रिर्गंगाकूलेऽनसूयया ॥ सार्द्धं तपो महत्कुर्वन्ब्रह्मध्यानपरोऽभवत् ॥ ॥ ६७ ॥ तदा ब्रह्मा हरिश्शंभुः स्वस्ववाहनमास्थिताः ॥ वरं ब्रूहीति वचनं तमाहुस्ते सनातनाः ॥ ६८ ॥ इति श्रुत्वा वचस्तेषां स्वयंभूतनयो मुनिः ॥ नैव किञ्चिद्वचः प्राह संस्थितः परमात्मनि ॥ ६९ ॥ तस्य भावं समालोक्य त्रयो देवाः सनातनाः ॥ अनसूयां तस्य पत्नीं समागम्य वचोऽब्रुवन् ॥७०॥ लिंगहस्तः स्वयं रुद्रो विष्णुस्तद्रसवर्द्धनः ॥ ब्रह्मा कामब्रह्मलोपः स्थितस्तस्या वशं गतः ॥ रतिं देहि मदाघूर्णे नो चेत्प्राणांस्त्यजाम्यहम् ॥ ७१ ॥ पतिव्रताऽनसूया च श्रुत्वा तेषां वचोऽशुभम् ॥ नैव किंचिद्वचः प्राह कोपभीता सुरान्प्रति ॥ ७२ ॥ मोहितास्तत्र ते देवा गृहीत्वा तां बलात्तदा ॥ मैथुनाय समुद्योगं चक्रुर्मायाविमोहिताः ॥ ७३ ॥ तदा क्रुद्धा सती सा वै तान्छशाप मुनिप्रिया ॥ मम पुत्रा भविष्यंति यूयं कामविमोहिताः ॥ ७४ ॥ महादेवस्य वै लिंगं ब्रह्मणोऽस्य महाशिरः ॥ चरणौ वासुदेवस्य पूजनीया नरैस्सदा ॥ भविष्यंति सुरश्रेष्ठा उपहासोऽयमुत्तमः ॥ ७५ ॥ इति श्रुत्वा वचो घोरं नमस्कृत्य मुनिप्रियाम् ॥ तुष्टुवुर्भक्तिनम्राश्च देवपाठैश्च ऋङ्मयैः ॥७६॥ अनसूया तदा प्राह भवन्तो मम पुत्रकाः ॥ भूत्वा शापं मदीयं च त्यक्त्वा तृप्तिमवाप्स्यथ ॥७७॥ इत्युक्ते वचने ब्रह्मा चंद्रमाश्च तदा ह्यभूत् ॥ दत्तात्रेयो हरिः साक्षाद्दुर्वासा भगवान्हरः ॥ तत्पापपरिहारार्थं योगवन्तो बभूविरे ॥ ७८ ॥ एतस्मिन्नंतरे देवी प्रकृतिस्सर्वधर्मिणी ॥ विधिं विष्णुं हरं चान्यं चक्रे सा गुणरूपिणी ॥ ७९ ॥ मन्वंतरमतो जातं तेषां योगं प्रकुर्वताम् ॥ दृपिताश्च त्रयो देवास्समागम्य च तान्प्रति ॥ ८० ॥ उवाच वचनं रम्यं तेषां मंगलहेतवे ॥ चन्द्रमाश्च भवेत्सोमो वसुः षष्ठः सुरप्रियः ॥ ८१ ॥ रुद्रांशश्चैव दुर्वासाः प्रत्यूषः सप्तमो वसुः ॥ दत्तात्रेयमयो योगी प्रभासश्चाष्टमो वसुः ॥ तेषां वाक्यं समाकर्ण्य वसवस्ते त्रयोऽभवन् ॥८२॥ ॥ सूत उवाच ॥ ॥ इति श्रुत्वा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुरोर्वाक्यं वसवो हर्षितास्त्रयः ॥ स्वांशेन भूतलं जग्मुः कलिशुद्धाय दारुणे ॥ दाक्षिणात्ये राजगृहे वैश्यजात्यां समुद्भवः ॥ ८३ ॥ पीपा नाम सुतः सोमः सुदेवस्य तदा ह्यभूत् ॥ कृतं राज्यपदं तेन यथा भूपेन तत्पुरे ॥ ८४ ॥ रामानन्दस्य शिष्योऽभूद्द्वारकां स समागतः ॥ हरेर्मुद्रां स्वर्णमयीं प्राप्य कृष्णात्स वै नृपः ॥ वैष्णवेभ्यो ददौ तत्र प्रेततत्त्वविनाशिनीम् ॥ ८५ ॥ प्रत्यूषश्चैव पांचाले वैश्यजात्यां समुद्भवः ॥ मार्गपालस्य तनयो नानको नाम विश्रुतः ॥ ८६ ॥ रामानन्दं समागम्य शिष्यो भूत्वा स नानकः ॥ स वै म्लेच्छान्वशीकृत्य सूक्ष्ममार्गमदर्शयत् ॥ ८७ ॥ प्रभासो वै शांतिपुरे ब्रह्मजात्यां समुद्भवः ॥ शुक्लदत्तस्य तनयो नित्यानंद इति स्मृतः ॥ इति ते वसुमाहात्म्यं मया शौनक वर्णितम् ॥ ८८ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये वसुमाहात्म्ये कबीरनरश्रीपीपानानकनित्यानन्दसमुत्पत्तिवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ इत्युक्त्वा तान्सुरान्देवो भगवान्बृहतांपतिः ॥ अश्विनौ च समालोक्य तयोर्गाथामवर्णयत् ॥ १ ॥ वैवस्वतेऽन्तरे पूर्वं विश्वकर्मा विचित्रकृत् ॥ चित्रगुप्तश्रियं दृष्ट्वा चित्रलेखाविनिर्मिताम् ॥ स्पर्द्धाभूतो महामायां तुष्टाव बहुपूजनैः ॥ २ ॥ प्रसन्ना सा तदा देवी चित्रायां तस्य योषिति ॥ स्वांशाज्जाता स्मृता संज्ञा सर्वज्ञानकरी स्वयम् ॥ ३ ॥ षोडशाब्दे वयःप्राप्ते संज्ञायास्तत्पिता सुखी ॥ विवाहार्थी सुरान्सर्वानाह्वयन्मेरुमूर्द्धनि ॥ ४ ॥ यक्षाधीशाश्च षड्विंशत्कुबेराद्यास्समागताः ॥ यादसां पतयः प्राप्ता दश तत्रैव कामुकाः ॥ ५ ॥ पावका ऊनपंचाशद्वायवश्च तथा स्मृताः ॥ ध्रुवौ द्वौ च स्वयं प्राप्तौ सोमास्तत्रैव षोडश ॥ ६ ॥ त्रयोदश च प्रत्यूषाः प्राप्ता विश्वप्ररक्षकाः ॥ षष्ट्युत्तरं च त्रिशतं प्रभासा दिनरक्षकाः ॥ ७ ॥ भवाद्याश्च तदा रुद्राः शशिमण्डलरक्षकाः ॥ आदित्याश्च स्थितास्सर्वे संज्ञायाश्च स्वयंवरे ॥ ८ ॥ दानवा विप्रचित्त्याद्याश्चतुराशीतिराययुः ॥ प्रह्लादाद्यास्तदा दैत्या वासुक्याद्याश्च पन्नगाः ॥ ९ ॥ शेषाद्याश्च तदा नागास्तार्क्ष्याद्या गरुडाः स्मृताः ॥ सर्वे स्वयंवरे प्राप्ता महान्कोलाहलो ह्यभूत् ॥ १० ॥ एतस्मिन्नंतरे देवी देवकन्यासमन्विता ॥ संज्ञा देवान्प्रति तदा प्रत्यक्षमभवद्दिवि ॥ ११ ॥ तां समालोक्य बलवान्बलिः कामविमोहितः ॥ करे गृहीत्वा प्रययौ पश्यतां सर्वधन्विनाम् ॥ १२ ॥ तदा क्रोधातुरा देवा रुरुधुर्दैत्यसत्तमम् ॥ शस्त्रास्त्रैस्तर्पयित्वा तं महद्युद्धमकारयन् ॥ १३ ॥ दानवाश्च तदा दैत्या नानावाहनसंस्थिताः ॥ देवैः सार्द्धं महद्युद्धं तुमुलं चक्रिरे मुदा ॥ १४ ॥ दानवैश्च हता देवाः सुरैर्दैत्या विनाशिताः ॥ शवभूतैरिलावर्तेऽभूदगम्या वसुंधरा ॥ १५ ॥ पक्षमात्रमभूद्युद्धं दिव्यं दानवदेवयोः ॥ पांचजन्यस्तथा धाता हयग्रीवश्च मित्रकः ॥ १६ ॥ अघासुरोऽर्यमा चैव बलः शक्रस्तथैव च ॥ बकासुरश्च वरुणः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकटः प्रांशुरेव च ॥ १७ ॥ वत्सासुरो भगश्चैव विवस्वांश्च बलिः स्वयम् ॥ प्रलंबश्च तथा पूषा गर्दभः सविता युधि ॥१८॥ विश्वकर्मा मयश्चैव कालनेमिर्हरिः स्वयम् ॥ कांक्षमाणौ च विजयं युयुधाते परस्परम् ॥ पराजिताश्च ते दैत्या युद्धं त्यक्त्वा प्रदुद्रुवुः ॥ १९ ॥ विवस्वाँश्च तदा संज्ञां गृहीत्वा रथसंस्थिताम् ॥ विश्वकर्माणमागम्य ददौ तस्मै प्रसन्नधीः ॥ २० ॥ विवस्वंतं सुरश्रेष्ठं दृष्ट्वा संज्ञा वचोऽब्रवीत् ॥ मत्पतिश्च भवान्देवो भवेत्कार्यकरस्सदा ॥ २१ ॥ त्वया जिताहं भगवन्बलेर्विप्रियकारिणः ॥ भ्रातृजाग्रहणे दोषो न भवेत्स कदाचन ॥ २२ ॥ वीरभुक्ता सदा नारी स्त्रीरत्नं मुनिभिः स्मृतम् ॥ चतुर्द्धा प्रकृतिर्देवी गुणभिन्ना गुणैकिका ॥ एका सा प्रकृतिर्माता गुणसाम्यात्सनातनी ॥ २३ ॥ सत्त्वभूता च भगिनी रजोभूता च गेहिनी ॥ तमोभूता च सा कन्या तस्यै देव्यै नमोनमः ॥ २४ ॥ बहवः पुरुषा ये वै निर्गुणाश्चैकरूपिणः ॥ चैतन्याऽज्ञानवंतश्च लोके प्रकृतिसंभवाः ॥ २५ ॥ अलोके पापजास्सर्वे देवब्रह्मसमुद्भवाः ॥ या तु ज्ञानमयी नारी वृणेद्यं पुरुषं शुभम् ॥ कोऽपि पुत्रः पिता भ्राता स च तस्याः पतिर्भवेत् ॥ २६ ॥ स्वकीयां च सुतां ब्रह्मा विष्णुदेवः स्वमातरम् ॥ भगिनीं भगवाञ्छंभुर्गृहीत्वा श्रेष्ठतामगात् ॥ २७ ॥ इति श्रुत्वा वेदमयं वाक्यं चादितिसंभवः ॥ विवस्वान्भ्रातृजां संज्ञां गृहीत्वा श्रेष्ठवानभूत् ॥ २८ ॥ सुताः कन्यास्तयोर्जाता मनुर्वैवस्वतस्तथा ॥ यमश्च यमुना चैव दिव्यतेजोभिरन्विताः ॥ २९ ॥ तदा संज्ञा सती साक्षात्तेजोभूतं पतिं स्वकम् ॥ ज्ञात्वा छायां समुत्पाद्य तपसे वनमागता ॥ ३० ॥ सावर्णिश्चमनुस्तस्यां शनिश्च तपती तथा ॥ छायायां च समुद्भूताः क्रूरदृष्ट्या विवस्वतः ॥ ३१ ॥ पुत्रभेदेन तां नारीं मत्वा मायां रुषान्वितः ॥ चकार भस्मभूतां तां विवस्वान्भगवान्रविः ॥ ३२ ॥ तदा शनिश्च सावर्णिर्विवस्वंतं रुषान्वितम् ॥ ज्ञात्वा च क्रोधताम्राक्षौ युयुधाते परस्परम् ॥ ३३ ॥ कियता चैव कालेन भग्नभूतौ विवस्वता ॥ हिमाचले गिरौ प्राप्य तेपतुः परमं तपः ॥ ३४ ॥ त्रिवर्षान्ते च सा देवी महाकाली समागता ॥ अर्चितं च वरं ताभ्यां ददौ तद्भक्तिवत्सला ॥३५॥ पुनस्तौ च समागम्य युयुधाते विवस्वता ॥ विवस्वान्भयभीतश्च त्यक्त्वा युद्धं पराभवत् ॥ ३६ ॥ तत्र स्थिता प्रिया संज्ञा वडवारूपधारिणी ॥ कुरुखंडे महारम्ये तपंती तप उल्बणम् ॥ ३७ ॥ गत्वा ददर्श भगवान्संज्ञां संबोधकारिणीम् ॥ कामातुरो हयो भूत्वा तत्र रेमे तया सह ॥ ३८ ॥ पंचवर्षान्तरे संज्ञा गर्भं तस्माद्दधौ स्वयम् ॥ तनयौ च समुद्भूतौ दिव्यरूपपराक्रमौ ॥ ३९ ॥ पितुर्दुःखं समालोक्य जग्मतू रविमण्डलम् ॥ जित्वा बंधू दुराचारौ क्रूरदृष्ट्या तदा स्वयम् ॥ ४० ॥ बद्ध्वा तौ स्वपितुः

१ वृणुयात् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पार्श्वं संप्राप्तौ वडवासुतौ ॥ दृष्ट्वा विवस्वान्भगवान्वैरिणौ समुपागतौ ॥ ४१ ॥ संपीड्य ताडयामास लोहदंडैर्भयानकैः ॥ पंगुभूतौ पुनस्त्य
क्त्वा छायापुत्रौ दिवाकरः ॥ ४२ ॥ आश्विनेयौ समालोक्य वचनं प्राह तौ मुदा ॥ जीव ईशो यथा मित्रे नरनारायणौ यथा ॥ एकनाम्ना युवां
प्रीतौ नासत्यौ च भविष्यथः ॥ ४३ ॥ सोमशक्तिरिडादेवी ज्येष्ठपत्नी भविष्यति ॥ पिंगला सूर्यशक्तिश्च लघुपत्नी भविष्यति ॥ ४४ ॥
इडापतिस्स वै नाम द्वितीयः पिंगलापतिः ॥ द्वादशस्स नृणां राशेः क्रूरदृष्टिः शनैश्चरः ॥ तस्य शान्तिकरो ज्येष्ठो भविष्यति महीतले
॥ ४५ ॥ द्वितीयश्च नृणां राशेः सावर्णिर्भ्रमकारकः ॥ तस्य शान्तिकरो भूमौ भविता पिंगलापतिः ॥ ४६ ॥ जन्मराशिस्थिता देवी तपंती ता
पकारिणी ॥ इडा च पिंगला तस्याः शान्तिकर्त्र्यौ भविष्यतः ॥ ४७ ॥ इति श्रुत्वा वचस्तस्य सुरवैद्यौ बभूवतुः ॥ सावर्णिश्च शनी राहुः केतुः
स्वर्गप्रतापनः ॥ तेषां तु परिहारार्थौ दस्रौ चाश्विनिसंभवौ ॥ ४८ ॥ सूत उवाच ॥ इति श्रुत्वा गुरोर्वाक्यं प्रसन्नौ सुरसत्तमौ ॥ स्वांशान्महीतले
जातौ शूद्रयोन्यां रवेस्सुतौ ॥ ४९ ॥ चाण्डालस्य गृहे जातश्छागहंतुरिडापतिः ॥ सधनो नाम विख्यातः पितृमातृपरायणः ॥ ५० ॥ शालि
ग्रामशिलातुल्यं छागमांसं विचिक्रिये ॥ कवीरं समुपागम्य शिष्यो भूत्वा रराज वै ॥ ५१ ॥ स तु सत्यनिधिः पूर्वं ब्रह्मणस्तप आस्थितः ॥ भय
भीतां च गां तत्र चाण्डालाय ह्यदर्शयत् ॥ राजगेहे करस्तस्मात्सधनस्य लयं गतः ॥ ५२ ॥ चर्मकारगृहे जातो द्वितीयः पिंगलापतिः ॥ मानदा
सस्य तनयो रैदास इति विश्रुतः ॥ ५३ ॥ पुरीं काशीं समागम्य कवीरं रामतत्परम् ॥ जित्वा मतविवादेन शंकराचार्यमागतः ॥ ५४ ॥
तयोर्विवादो ह्यभवदहोरात्रं मतान्तरे ॥ पराजितस्स रैदासो नत्वा तं द्विजसत्तमम् ॥ रामानन्दमुपागम्य तस्य शिष्यत्वमागतः ॥ ५५ ॥ इति ते
कथितं विप्र सुरांशाश्च यथाभवन् ॥ कलिशुद्धिकरी लीला तेषां मार्गप्रदर्शिनाम् ॥ ५६ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्यु
गखंडापरपर्याये कलियुगीयेतिहाससमुच्चये अश्विनीकुमारावतारे सधनरैदाससमुत्पत्तिवर्णनं नामाऽष्टादशोऽध्यायः ॥ १८ ॥ सूत उवाच ॥ ॥
इत्युक्त्वा भगवाञ्जीवो देवमाहात्म्यमुत्तमम् ॥ स्वमुखात्स्वांशमुत्पाद्य ब्रह्मयोनौ बभूव ह ॥ १ ॥ इष्टिका नगरी रम्या गुरुदत्तस्य वै सुतः ॥
रोपणो नाम विख्यातो ब्रह्ममार्गप्रदर्शकः ॥ २ ॥ सूत्रग्रंथमयीं मालां तिलकं जलनिर्मितम् ॥ वासुदेवेति तन्मंत्रं कलौ कृत्वा जनेजने ॥ ३ ॥
कृष्णचैतन्यमागम्य कंवलं च तदाज्ञया ॥ गृहीत्वा स्वपुरीं प्राप्य कृष्णध्यानपरोभवत् ॥ ४ ॥ अतः परं शृणु मुने चरित्रं च हरेर्मुदा ॥ यच्छ्रुत्वा
च कलौ घोरे जनो नैव भयं व्रजेत् ॥ ५ ॥ पंचाब्दे कृष्णचैतन्ये यज्ञांशे यज्ञकारिणि ॥ वंगदेशभवो विप्र ईश्वरः शारदाप्रियः ॥ ६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्तः शान्तिपुरे ग्रामे वाग्देवीवरदर्पितः ॥ सतां दिग्विजयं कृत्वा सर्वशास्त्रविशारदः ॥ ७ ॥ गंगाकूले स्तवं दिव्यं रचित्वा[1] सोऽपठद्द्विजः ॥ एतस्मिन्नंतरे तत्र यज्ञांशस्ससमुपागतः ॥ उवाच वचनं रम्यमीश्वरं स्तुतिकारिणम् ॥८॥ सुकृतं पूर्तमर्णं च श्रुतीनां सारमेव हि ॥ इत्युक्तं भवता स्तोत्रे दूषणं भूषणं वद ॥९॥ तथाह चेश्वरो धीमान्दूषणं नैव दृश्यते ॥ इत्युक्त्वा प्राह भगवान्भूषणं नैव दृश्यते ॥१०॥ सुकृतं च स्मृतं धर्मः पूर्तं चैतन्यमुच्यते ॥ अर्णं वीर्यमिति ज्ञेयं श्रुतिसारमतस्त्रयम् ॥ गंगाजले दूषणोऽयं भूषणोऽयं कलेवरे॥११ ॥ इति श्रुत्वा स वै भिक्षुर्विस्मितोऽभूच्च गीःप्रियः ॥ लज्जितं स्वजनं दृष्ट्वा शारदा सर्वमंगला ॥ विहस्येश्वरमित्याह कृष्णश्चैतन्यसंज्ञकः ॥ १२॥ इति श्रुत्वा तु तच्छिष्यः कृष्णमंत्रउपासकः ॥ बभूव वैष्णवश्रेष्ठः कृष्णचैतन्यसेवकः ॥ १३ ॥ ॥ सूत उवाच ॥ ॥ श्रीधरो नाम विख्यातो ब्राह्मणः शिवपूजकः ॥ पत्तने नगरे रम्ये तस्य सप्ताहमुत्तमम् ॥ १४ ॥ राज्ञा भागवतं तत्र कारितं सधनं बहु ॥ गृहीत्वा श्रीधरो विप्रो जगाम श्वशुरालये ॥ १५ ॥ तत्रोष्य मासमात्रं च स्वपत्न्या सह वै द्विजः ॥ स्वगेहमगमन्मार्गे चोराः सप्त तु तं प्रति ॥ शपथं रामदेवस्य कृत्वा सार्द्धमुपाययुः ॥ १६ ॥ समाप्ते विपिने रम्ये हत्वा ते श्रीधरं द्विजम् ॥ गोरथं सधनं तत्र सभार्यं जगृहुस्तदा ॥ १७ ॥ एतस्मिन्नंतरे रामः सच्चिदानंदविग्रहः ॥ सप्त तांश्च शरैर्हत्वा पुनरुज्जीव्य तं द्विजम् ॥१८॥ प्रेषयामास भगवांस्तदा वृन्दावने प्रभुः ॥ तदाप्रभृति वै विप्रः श्रीधरो वैष्णवोऽभवत् ॥ १९ ॥ सप्ताब्दे चैव यज्ञांशे गत्वा शांतिपुरीं शुभाम् ॥ ब्रह्मज्ञानमुपागम्य यज्ञांशाच्छिष्यतां गतः ॥ टीका भागवतस्यैव कृता तेन महात्मना ॥ २० ॥ ॥ ॥ सूत उवाच ॥ ॥ रामशर्मा स्थितः काश्यां शंकरार्चनतत्परः ॥ शिवरात्रे द्विजो धीमानविमुक्तेश्वरस्थले ॥ एकाकी जागरन्ध्यानी जप्त्वा पंचाक्षरं शुभम् ॥ २१ ॥ तदा प्रसन्नो भगवाञ्छंकरो लोकशंकरः ॥ वरं ब्रूहीति वचनं तमाह द्विजसत्तमम् ॥ २२ ॥ रामशर्मा शिवं नत्वा वचनं प्राह नम्रधीः ॥ भवान्यस्य समाधिस्थो ध्याने यस्य परो भवान् ॥ २३ ॥ स देवो हृदये मह्यं वसेत्तव वरात्प्रभो ॥ इत्युक्तवचने तस्मिन्विहस्याह महेश्वरः ॥ २४ ॥ एका वै प्रकृतिर्माया त्रिधा ब्रह्मस्वरूपिणी ॥ शून्यभूताव्ययस्यैव पुरुषस्यार्द्धतेजसम् ॥ गृहीत्वा लोकजननीं पुंक्लीबौ सुषुवे सुतौ ॥ २५ ॥ पुमान्नारायणः साक्षाद्गौरश्चाष्टभुजैर्युतः ॥ त्रिधा बभूव भगवान्स्वेच्छया विश्वरक्षकः ॥ २६ ॥ अर्धतेजास्स वै विष्णुर्वनमाली चतुर्भुजः ॥ क्षीरशायी स आदित्यः स्वयं सद्गुणदेवता ॥ २७ ॥ अर्धतेजा द्विधा सैव नरनारायणावृषी ॥ जिष्णुर्विष्णुः स वै

[1] रचयित्वा।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञेयो पर्वते गन्धमादने ॥ २८ ॥ क्लीबः संकर्षणः साक्षाद्ब्रह्मरूपं त्रिधाभवत् ॥ पूर्वार्द्धाद्गौरशेषश्च परार्धाद्रामलक्ष्मणौ ॥ २९ ॥ गौरशेषो द्वापरान्ते बलभद्रः स वै स्वयम् ॥ रामलक्ष्मणयोर्ध्यानं बलभद्रस्य पूजनम् ॥ सदा मया च कर्तव्यं तत्प्राप्य त्वं सुखी भव ॥ ३० ॥ इत्युक्त्वान्तर्दधे देवो रामानन्दस्य चाभवत् ॥ कृष्णचैतन्यमागम्य द्वादशाब्दवयोवृतम् ॥ ३१ ॥ शिष्यो भूत्वा स्थितस्तत्र कृष्णचैतन्यपूजकः ॥ कृतं तदाज्ञया तेनाध्यात्मरामायणं शुभम् ॥ ३२ ॥ ॥ सूत उवाच ॥ ॥ जीवानन्दस्स वै विप्रो रूपानन्दसमन्वितः ॥ श्रुत्वा चैतन्यचरितं पुरीं शांतिमयीं गतः ॥ ३३ ॥ चैतन्ये षोडशाब्दे च नत्वा तं तौ समास्थितौ ॥ ऊचतुः कृष्णचैतन्यं भवता किं मतं स्मृतम् ॥ ३४ ॥ विहस्याह स चैतन्यः शाक्तोऽहं शक्तिपूजकः ॥ शैवोऽहं वै द्विजौ नित्यं लोकार्थे शंकरव्रती ॥ वैष्णवोऽहं ध्यानपरो देवदेवस्य भक्तिमान् ॥ ३५ ॥ अहं भक्तिमदं पीत्वा पापपुंसो बलिं शुभम् ॥ शक्त्यै समर्प्य होमान्ते ज्ञानाग्नौ यज्ञतत्परः ॥ ३६ ॥ इति श्रुत्वा द्विजौ तौ तु तस्य शिष्यत्वमागतौ ॥ आचारमार्गमागम्य सर्वपूज्यौ बभूवतुः ॥ ३७ ॥ तदाज्ञयाषट्सन्दर्भं जीवानन्दश्चकार वै ॥ उवास तत्र मतिमान्कृष्णचैतन्यसेवकः ॥ ३८ ॥ रूपानन्दो गुरोराज्ञां पुरस्कृत्य महामुनिः ॥ कृष्णखंडं पुराणांगं चक्रे दशसहस्रकम् ॥ तत्रोष्य गुरुसेवाढ्यो राधाकृष्णप्रपूजकः ॥ ३९ ॥ ॥ सूत उवाच ॥ ॥ विष्णुस्वामी स वै विप्रो गतः शांतिपुरीं शुभाम् ॥ यज्ञांश ऊनविंशाब्दे नत्वा तं प्राह स द्विजः ॥ ॥ ४० ॥ को देवः सर्वदेवानां पूज्यो ब्रह्माण्डगोचरे ॥ इति श्रुत्वा स भगवानुवाच द्विजसत्तमम् ॥ ४१ ॥ सर्वपूज्यो महादेवो भक्तानुग्रहकारकः ॥ विष्णवीश्वरश्च रुद्रेशो ब्रह्मेशो भगवान्हरः ॥ ४२ ॥ विना तत्पूजकेनैव पदार्था निष्फला हि ते ॥ ये तु वै विष्णुभक्ताश्च शंकरार्चनतत्पराः ॥ ४३ ॥ शिवप्रसादात्सुलभा वैष्णवी भक्तिरुत्तमा ॥ वैष्णवः पुरुषो भूत्वा शंकरं लोकशङ्करम् ॥ ४४ ॥ कर्मभूम्यां समागम्य न पूजयति नारकः ॥ विष्णुस्वामीति तच्छ्रुत्वा शिष्यो भूत्वा च तद्गुणैः ॥ ४५ ॥ कृष्णमंत्रमुपासित्वा स बभूव शिवार्चकः ॥ ४६ ॥ वैष्णवी संहिता तेन निर्मिता च तदाज्ञया ॥ तत्रोष्य विष्णुभक्तश्च कृष्णचैतन्यपूजकः ॥ ४७ ॥ ॥ सूत उवाच ॥ ॥ मध्वाचार्यः कृष्णपरो ज्ञात्वा यज्ञांशमुत्तमम् ॥ गत्वा शांतिपुरीं रम्यां नत्वा तं प्राह स द्विजः ॥ ४८ ॥ कृष्णोऽयं भगवान्साक्षात्तदन्ये विश्वकारकाः ॥ देवा धात्रादयो ज्ञेयास्तर्हि तत्पूजनेन किम् ॥ ४९ ॥ शक्तिमार्गपरा विप्रा वृथा हिंसामयैर्मखैः ॥ अश्वमेधादिभिर्देवान्पूजयन्ति महीतले ॥ ५० ॥ इति श्रुत्वा विहस्याह

१ इदमुभयोरसम्बोधनम्। २ ल्यबभाव आर्षः।

360

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यज्ञांशश्च शचीसुतः ॥ न कृष्णो भगवान्साक्षात्तामसोऽयं च शक्तिजः ॥ ५१ ॥ चौरोऽयं सर्वभोगी च हिंसको मांसभक्षकः ॥ परस्त्रियं भजेद्यो वै स गच्छेद्यममंदिरम् ॥ ५२ ॥ चौरो यमालयं गच्छेज्जीवहंता विशेषतः ॥ एभिश्च लक्षणैर्हीनो भगवान्प्रकृतेः परः ॥ ५३ ॥ यस्य बुद्धिः स वै ब्रह्माऽहंकारो यस्य वै शिवः ॥ शब्दमात्रा गणेशश्च स्पर्शमात्रा यमः स्वयम् ॥ ५४ ॥ रूपमात्रा कुमारो वै रसमात्रा च यक्षराट् ॥ गन्धमात्रा विश्वकर्मा श्रवणं भगवाञ्छनिः ॥ ५५ ॥ यस्य त्वक्स बुधो ज्ञेयश्चक्षुस्सूर्यः सनातनः ॥ यज्जित्वा भगवाञ्छुक्रो घ्राणस्तस्याश्विनीसुतौ ॥५६॥ यन्मुखं भगवाञ्जीवो यस्य हस्तस्तु देवराट् ॥ कृष्णोऽयं तस्य चरणौ लिंगं दक्षः प्रजापतिः ॥ गुदं तद्भगवान्मृत्युस्तस्मै भगवते नमः ॥५७॥ हिंसायज्ञैश्च भगवान्स च तृप्तिमवाप्नुयात् ॥ स च यज्ञपशुर्वह्नौ ब्रह्मभूयाय कल्पते ॥ तस्य मोक्षप्रभावेन महत्पुण्यमवाप्नुयात् ॥५८॥ विधिहीनो नरः पापी हिंसायज्ञं करोति यः ॥ अंधतामिस्रनरकं तद्दोषेण वसेच्चिरम् ॥ ५९ ॥ महत्पुण्यं महत्पापं हिंसायज्ञेषु वर्तते ॥ अतस्तु भगवान्कृष्णो हिंसायज्ञं कलौ युगे ॥ ६० ॥ समाप्य कार्तिके मासि प्रतिपच्छुक्लपक्षके ॥ अन्नकूटमयं यज्ञं स्थापयामास भूतले ॥ ६१ ॥ देवराजस्तदा क्रुद्धो ह्यनुजं प्रति दुःखितः ॥ व्रजं संप्लावयामास तदा कृष्णः सनातनीम् ॥ प्रकृतिं स च तुष्टाव लोकमङ्गलहेतवे ॥ ६२॥ तदा सा प्रकृतिर्माता स्वपूर्वा दिव्यविग्रहम् ॥ राधारूपं महत्कृत्वा हृदि कृष्णस्य चागता ॥ ६३ ॥ तच्छक्त्या भगवान्कृष्णो धृत्वा गोवर्धनं गिरिम् ॥ नाम्ना गिरिधरो देवः सर्वपूज्यो बभूव ह ॥ ६४ ॥ राधाकृष्णस्स भगवान्पूर्णब्रह्म सनातनः ॥ अतः कृष्णो न भगवान्राधाकृष्णः परः प्रभुः ॥ ६५ ॥ इति श्रुत्वा वचस्तस्य मध्वाचार्यो हरिप्रियः ॥ शिष्यो भूत्वा स्थितस्तत्र कृष्णचैतन्यपूजकः ॥ ६६ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चये कृष्णचैतन्ययज्ञांशशिष्यबलभद्रविष्णुस्वामिमध्वाचार्यादिवृत्तांतवर्णनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

॥ ॥ सूत उवाच ॥ ॥ भट्टोजिस्स च शुद्धात्मा शिवभक्तिपरायणः ॥ कृष्णचैतन्यमागम्य नमस्कृत्य वचोऽब्रवीत् ॥ १ ॥ महादेवो गुरुः स वै शिव आत्मा शरीरिणाम् ॥ विष्णुर्ब्रह्मा च तदासौ तर्हि तत्पूजनेन किम् ॥ २ ॥ इति श्रुत्वा स यज्ञांशो विंशदब्दवयोवृतः ॥ विहस्याह स भट्टोजिं नायं शंभुर्महेश्वरः ॥ ३ ॥ समर्थो भगवाञ्छंभुः कर्ता किन्न शरीरिणाम् ॥ न भर्ता च विना विष्णुं संहर्तायं सदा शिवः ॥४॥ एकमूर्तिस्त्रिधा जाता ब्रह्मा विष्णुर्महेश्वरः ॥ शाक्तमार्गेण भगवान्ब्रह्मा मोक्षप्रदायकः ॥ ५ ॥ विष्णुर्वैष्णवमार्गेण जीवानां मोक्षदायकः ॥ शंभुर्वै शैवमार्गेण मोक्षदाता शरीरिणाम् ॥ ६ ॥ शाक्तः सदाश्रमो गेही यज्ञभुक्पितृदेवगः ॥ वानप्रस्थाश्रमी यो वै वैष्णवः कन्दमूलभुक् ॥ ७ ॥ यत्याश्रमः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सदा रौद्रो निर्गुणः शुद्धविग्रहः ॥ ब्रह्मचर्याश्रमस्तेषामनुगामी महाश्रमः ॥ ८ ॥ इति श्रुत्वा गुरोर्वाक्यं शिष्यो भूत्वा स वै द्विजः ॥ तृतीयांगं च वेदानां व्याचख्यौ पाणिनिकृतम् ॥ ९ ॥ तदाज्ञया च सिद्धान्तकौमुद्यास्स चकार ह ॥ तत्रोष्य दीक्षितो धीमान्कृष्णचैतन्यसेवकः ॥ ॥ १० ॥ ॥ सूत उवाच ॥ ॥ वराहमिहिरो धीमान्स च सूर्यपरायणः ॥ द्वाविंशाब्दे च यज्ञांशे तमागत्य वचोब्रवीत् ॥ ११ ॥ सूर्योऽयं भगवान्साक्षात्त्रयो देवा यतोऽभवन् ॥ प्रातर्ब्रह्मा च मध्याह्ने विष्णुःसायं सदाशिवः ॥ १२ ॥ अतो रवेः शुभा पूजा त्रिदेवयजनेन किम् ॥ इति श्रुत्वा स यज्ञांशो विहस्याह शुभं वचः ॥ १३ ॥ द्विधा बभूव प्रकृतिरपरा च परा तथा ॥ नाममात्रा तथा पुष्पमात्रा तन्मात्रिका तथा ॥ १४ ॥ शब्दमात्रा स्पर्शमात्रा रूपमात्रा रसा तथा ॥ गंधमात्रा तथा ज्ञेया परा प्रकृतिरष्टधा ॥ १५ ॥ अपरायां जीवभूता नित्यशुद्धा जगन्मयी ॥ भूमिरापोऽनलो वायुः खं मनोबुद्धिरेव च ॥ अहंकार इति ज्ञेया प्रकृतिश्चापराष्टधा ॥ १६ ॥ विष्णुर्ब्रह्मा महादेवो गणेशो यमराड् गुहः ॥कुबेरो विश्वकर्मा च परा प्रकृतिदेवता ॥ १७ ॥ सुमेरुर्वरुणो वह्निर्वायुश्चैव ध्रुवस्तथा ॥ सोमो रविस्तथा शेषोऽपरा प्रकृतिदेवता ॥ १८ ॥ अतः सोमपती रुद्रो रविः स्वामी विधिः स्वयम् ॥ शेषस्वामी हरिः साक्षात्तमस्तेभ्यो नमोनमः ॥ १९ ॥ इति श्रुत्वा तदा विप्रः शिष्यो भूत्वा च तद्गुरोः ॥ तदाज्ञया चतुर्थांगं ज्योतिःशास्त्रं चकार ह ॥ २० ॥ वराहसंहिता नाम बृहज्जातकमेव हि ॥ क्षुद्रतंत्रांस्तथान्यान्वै कृत्वा तत्र स चावसत् ॥ २१ ॥ ॥ सूत उवाच ॥ ॥ वाणीभूषण एवापि शिवभक्तिपरायणः ॥ कृष्णचैतन्यमागम्य वचः प्राह विनम्रधीः ॥ २२ ॥ विष्णुमाया जगद्धात्री सैका प्रकृतिरुत्कृता ॥ तया जातमिदं विश्वं विश्वेदेवसमुद्भवः ॥ २३ ॥ विश्वेदेवस्स पुरुषशक्तिजो बहुधाभवत् ॥ ब्रह्मा विष्णुर्हरश्चैव देवाः प्रकृतिसंभवाः ॥ अतो भगवती पूज्या तर्हि तत्पूजनेन किम् ॥ २४ ॥ इति श्रुत्वा स यज्ञांशो विहस्याह द्विजोत्तमम् ॥ न वै भगवती श्रेष्ठा जडरूपा गुणात्मिका ॥ २५ ॥ एका सा प्रकृतिर्माया रचितुर्जगतां क्षमा ॥ पुरुषस्य सहायेन योषितेव नरस्य च ॥ २६ ॥ देवीभागवते शास्त्रे प्रसिद्धेयं कथा द्विज ॥ कदाचित्प्रकृतिर्देवी स्वेच्छयेदं जगत्खलु ॥ २७ ॥ निर्मितं जडभूतं तद्बहुधा बोधितं तया ॥ न चैतन्यमभूद्विप्रा विस्मिता प्रकृतिस्तदा ॥ २८ ॥ शून्यभूतं च पुरुषं चैतन्यं समतोषयत् ॥ प्रविष्टो भगवान्देवीमायाजनितगोलके॥२९॥ स्वप्नवद्वा स्वयं जातश्चैतन्यमभवज्जगत् ॥ अतः श्रेष्ठः स भगवान्पुरुषो निर्गुणः परः ॥ ३० ॥ प्रकृत्यां स्वेच्छया जातो लिंगरूपस्तदाऽभवत् ॥ पुंल्लिंगप्रकृतौ जातः पुंल्लिंगोऽयं सनातनः॥३१॥स्त्रीलिंगप्रकृतौ जातः स्त्रीलिंगोऽयं सनातनः॥ नपुंसकप्रकृतौ जातः क्लीबरूपः स वै प्रभुः ॥३२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अव्ययप्रकृतौ जातो निर्गुणोऽयमधोक्षजः ॥ नमस्तस्मै भगवते शून्यरूपाय साक्षिणे ॥ ३३ ॥ इति श्रुत्वा तु तद्वाक्यं शिष्यो भूत्वा स वै द्विजः ॥ त्रिविंशाब्दे च यज्ञांशे तत्र वासमकारयत् ॥ ३४ ॥ छंदोग्रंथं तु वेदांगं स्वनाम्ना तेन निर्मितम् ॥ राधाकृष्णपरं नाम जप्त्वा हर्ष मवाप्तवान् ॥ ३५ ॥ ॥ सूत उवाच ॥ ॥ धन्वंतरिर्द्विजो नाम ब्रह्मभक्तिपरायणः ॥ कृष्णचैतन्यमागम्य नत्वा वचनमब्रवीत् ॥३६॥ भवांस्तु पुरुषः श्रेष्ठो नित्यशुद्धस्सनातनः ॥ जडभूता च तन्माया समर्थो भगवान्स्वयम् ॥३७॥ नित्योऽव्यक्तः परः सूक्ष्मस्तस्मात्प्रकृतिरुद्भवः ॥ अतः पूज्यस्स भगवान्प्रकृत्याः पूजनेन किम् ॥ ३८ ॥ इति श्रुत्वा विहस्याह यज्ञांशस्सर्वशास्त्रगः ॥ नायं श्रेष्ठस्स पुरुषो न क्षमः प्रकृतिं विना ॥ ॥ ३९ ॥ पुराणे चैव वाराहे प्रसिद्धेयं कथा शुभा ॥ कदाचित्पुरुषो नित्यो नाममात्रः स्वकेच्छया ॥ बभूव बहुधा तत्र यथा प्रेतस्तथा स्वयम्॥ ॥ ४० ॥ असमर्थो विरचितुं जगन्ति पुरुषः परः ॥ तुष्टाव प्रकृतिं देवीं चिरकालं सनातनीम् ॥४१॥ तदा देवी च तं प्राप्य महत्तत्वं चकार ह॥ सोऽहंकारश्च महतो जातस्तन्मात्रिकास्ततः ॥ ४२ ॥ महाभूतान्यतोऽप्यासंस्तैः संजातमिदं जगत् ॥४३॥ अतस्सनातनौ चोभौ पुरुषात्प्रकृतिः परा ॥ प्रकृतेः पुरुषश्चैव तस्मात्ताभ्यां नमोनमः ॥४४॥ इति धन्वंतरिः श्रुत्वा शिष्यो भूत्वा च तद्गुरोः ॥ तत्रोष्य चैव वेदांगं कल्पवेदं चकार ह ॥ सुश्रुतादपरे चापि शिष्या धन्वंतरेः स्मृताः ॥४५॥ ॥ सूत उवाच ॥ ॥ जयदेवस्स वै विप्रो बौद्धमार्गपरायणः॥ कृष्णचैतन्यमागम्य पञ्च विंशवयोवृतम् ॥ नत्वोवाच वचो रम्यं स च श्रेष्ठ उपापतिः ॥४६॥ यस्य नाभेरभूत्पद्मं ब्रह्मणा सह निर्गतम् ॥ अतस्स ब्रह्मसूर्नाम सामवेदेषु गीयते॥ ॥ ४७ ॥ विश्वो नारायणस्साक्षाद्यस्य केतौ समास्थितः ॥ विश्वकेतुरतो नाम न निरुद्धोऽनिरुद्धकः ॥४८॥ ब्रह्मवेला च तत्पत्नी नित्या चोपा महोत्तमा ॥ स वै लोकहितार्थाय स्वयमर्चावतारकः ॥४९॥ इति श्रुत्वा विहस्याह यज्ञांशस्तं द्विजोत्तमम् ॥ वेदोनारायणःसाक्षात्पूजनीयो नरैः सदा ॥५०॥ ततः कालस्ततः कर्म ततो धर्मः प्रवर्तते ॥ धर्मात्कामः समुद्भूतः कामपत्नी रतिः स्वयम् ॥५१॥ रत्यां कामात्समुद्भूतोऽनिरुद्धो नामदेवता ॥ उपा सा तस्य भगिनी तेन सार्द्धं समुद्भवा ॥५२॥ कालो नाम स वै कृष्णो राधा तस्य सहोदरा ॥ कर्मरूपः स वै ब्रह्मा नियतिस्तत्सहोदरा ॥५३॥ धर्मरूपो महादेवः श्रद्धा तस्य सहोदरा ॥ अनिरुद्धः कथं चेशो भवतोक्तः सनातनः ॥५४॥ त्रिधा सृष्टिश्च ब्रह्माण्डे स्थूला सूक्ष्मा च कारणा ॥ स्थूलसृष्ट्यै समुद्भूतो देवो नारायणः स्वयम् ॥ ५५ ॥ नारायणी च तच्छक्तिस्तयोर्जलसमुद्भवः ॥ जलाज्जातस्स वै शेषस्तस्योपरि समास्थितौ ॥५६॥ सुप्ते नारायणे देवे नाभेः पंकजमुत्तमम् ॥ अनंतयोजनायाममुदभूच्च ततो विधिः ॥५७॥ विधेः स्थूलमयी सृष्टि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्देवतिर्य्यङ्नरादिका ॥ सूक्ष्मसृष्ट्यै समुद्भूतः सोऽनिरुद्ध उषापतिः ॥ ५८ ॥ ततो वीर्यमयं तोयं जातं ब्रह्माण्डमस्तके ॥ वीर्याज्जातस्स वै शेषस्तस्योपरि स चास्थितः ॥ ५९ ॥ तस्य नाभेस्समुद्भूतो ब्रह्मा लोकपितामहः ॥ सूक्ष्मसृष्टिस्ततो जाता यथा स्वप्नेपि दृश्यते ॥ ६० ॥ हेतु सृष्ट्यै समुद्भूतो वेदो नारायणः स्वयम् ॥ वेदात्कालस्ततः कर्म ततो धर्मादयः स्मृताः ॥ ६१ ॥ त्वद्गुरुश्च जगन्नाथ उड्रदेशनिवासकः ॥ मया तत्रैव गन्तव्यं सशिष्येणाद्य भो द्विजाः ॥ ६२ ॥ इति श्रुत्वा तु वचनं कृष्णचैतन्यकिंकराः ॥ स्वान्स्वाञ्छिष्यान्समाहूय तत्पश्चात्प्रययुश्च ते ॥ ६३ ॥ शांकरा द्वादशगणा रामानुजमुपाययुः ॥ नामदेवादयस्तत्र गणास्सप्त समागताः ॥ ६४ ॥ रामानन्दं नमस्कृत्य संस्थितास्तस्य सेवकाः ॥ रोपणश्च तदागत्य स्वशिष्यैर्बहुभिर्वृतः ॥ ६५ ॥ कृष्णचैतन्यमागम्य नमस्कृत्य स्थितः स्वयम् ॥ जगन्नाथपुरीं ते वै प्रययुर्भक्ति तत्पराः ॥ ६६ ॥ निधयः सिद्धयस्तत्र तेषां सेवार्थमागताः ॥ सर्वे च दशसाहस्रा वैष्णवाः शैवशाक्तकैः ॥ ६७ ॥ यज्ञांशं च पुरस्कृत्य जगन्नाथपुरीं ययुः ॥ अर्चावतारो भगवाननिरुद्ध उषापतिः ॥ ६८ ॥ तदागमनमालोक्य द्विजरूपधरो मुनिः ॥ जगन्नाथः स्वयं प्राप्तो यत्र यज्ञांशकादयः ॥ ६९ ॥ यज्ञांशस्तं समालोक्य नत्वा वचनमब्रवीत् ॥ किं मतं भवता ज्ञातं कलौ प्राप्ते भयानके ॥ ७० ॥ तत्सर्वं कृपया ब्रूहि श्रोतुमिच्छामि तत्त्वतः ॥ इति श्रुत्वा तु वचनं जगन्नाथो हरिः स्वयम् ॥ उवाच वचनं रम्यं लोकमंगलहेतवे ॥ ७१ ॥ मिश्रदेशोद्भवा म्लेच्छाः काश्यपेनैव शासिताः ॥ संस्कृताः शूद्रवर्णेन ब्रह्मवर्णमुपागताः ॥ ७२ ॥ शिखासूत्रं समाधाय पठित्वा वेदमुत्तमम् ॥ यज्ञैश्च पूजयामासु र्देवदेवं शचीपतिम् ॥ ७३ ॥ दुःखितो भगवानिन्द्रः श्वेतद्वीपमुपागतः ॥ स्तुत्या मां बोधयामास देवमंगलहेतवे ॥ ७४ ॥ प्रबुद्धं मां वचः प्राह शृणु देव दयानिधे ॥ शूद्रसंस्कृतमन्नं च खादितुं न द्विजोऽर्हति ॥ ७५ ॥ तथा च शूद्रजनितैर्यज्ञैस्तृप्तिं न चाप्नुयाम् ॥ काश्यपे स्वर्गते प्राप्ते मागधे राज्ञि शासति ॥ ७६ ॥ मम शत्रुर्बलिर्दैत्यः कलिपक्षमुपागतः ॥ निस्तेजाश्च यथाऽहं स्यां तथा वै कर्तुमुद्यतः ॥ ७७ ॥ मिश्रदेशोद्भवे म्लेच्छे सांस्कृती तेन संस्कृता ॥ भाषा देवविनाशाय दैत्यानां वर्द्धनाय च ॥ ७८ ॥ आर्य्येषु प्राकृती भाषा दूपिता तेन वै कृता ॥ अतो मां रक्ष भगवन्भवंतं शरणागतम् ॥ ७९ ॥ इति श्रुत्वा तदाहं वै देवराजमुवाच ह ॥ भवन्तो द्वादशादित्या गन्तुमर्हंति भूतले ॥ ८० ॥ अहं लोकहितार्थाय जनिष्यामि कलौ युगे ॥ प्रवीणो निपुणोऽभिज्ञः कुशलश्च कृती सुखी ॥ ८१ ॥ निष्णातः शिक्षितश्चैव सर्वज्ञः सुगत



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तथा ॥ प्रवृद्धश्च तथा बुद्ध आदित्याः क्रमतो भवाः ॥ ८२ ॥ धाता मित्रोऽर्यमा शक्रो मेघः प्रांशुर्भगस्तथा ॥ विवस्वांश्च तथा पूषा सविता त्वाष्टृविष्णुकौ ॥ कीकटे देश आगत्य ते सुरा जज्ञिरे क्रमात् ॥ ८३ ॥ वेदनिन्दां पुरस्कृत्य बौद्धशास्त्रमचीकरन्[1] ॥ तेभ्यो वेदान्समादाय मुनिभ्यः प्रददुस्सुराः ॥ ८४ ॥ वेदनिंदाप्रभावेण ते सुराः कुष्ठिनोऽभवन्॥विष्णुदेवमुपागम्य तुष्टुवुर्बौद्धरूपिणम् ॥ ८५ ॥ हरिर्योगबलेनैव तेषां कुष्ठमनाशयत् ॥ तद्दोषान्नग्नभूतश्च बौद्धस्स तेजसाभवत् ॥ ८६ ॥ पूर्वार्द्धान्नेमिनाथश्च परार्द्धाद्बौद्ध एव च ॥ बौद्धराज्यविनाशाय दारुपाषाणरूपवान् ॥ ८७ ॥ अहं सिंधुतटे जातो लोकमंगलहेतवे ॥ इन्द्रद्युम्नश्च नृपतिः स्वर्गलोकादुपागतः ॥ मंदिरं रचितं तेन तत्राहं समुपागतः॥८८॥ अत्र स्थितश्च यज्ञांशप्रसादमहिमा महान् ॥ सर्ववांछितदं लोके स्थापयामास मोक्षदम् ॥ ८९ ॥ वर्णधर्मश्च नैवात्र वेदधर्मस्तथा न हि ॥ व्रतं चात्र न यज्ञांशमण्डले योजनान्तरे ॥ ९० ॥ येनोक्ता यावनी भाषा येन बौद्धो विलोकितः ॥ तस्य प्राप्तं महत्पापं स्थितोऽहं तदघापहः ॥ मां विलोक्य नरः शुद्धः कलिकाले भविष्यति ॥ ९१ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये कृष्णचैतन्यचरित्रे जगन्नाथमाहात्म्यवर्णनंनाम विंशोऽध्यायः ॥ २० ॥छ॥ ॥ सूत उवाच ॥ ॥ इति श्रुत्वा वचस्तस्य जगन्नाथस्य धीमतः ॥ कृष्णचैतन्य एवापि तमुवाच प्रसन्नधीः ॥ १ ॥ भगवन्प्राणिनां श्रेयो यदुक्तं भवता मुने ॥ विस्तरात्तत्कथां ब्रूहि यथा बौद्धसमुद्भवः ॥ २ ॥ ॥ ॥ जगन्नाथ उवाच ॥ ॥ सहस्राब्दे कलौ प्राप्ते कर्मभूम्यां च भारते ॥ कण्वो नाम मुनिश्रेष्ठस्संप्राप्तः कश्यपात्मजः ॥ ३ ॥ आर्यावती देवकन्या कण्वस्य दयिता प्रिया ॥ शक्राज्ञया च संप्राप्तौ दंपती शारदातटे ॥ ४ ॥ सरस्वतीं नदीरूपां कुरुक्षेत्रनिवासिनीम् ॥ चतुर्वेदमयैः स्तोत्रैः कण्वस्तुष्टाव नम्रधीः ॥ ५ ॥ वर्षमात्रान्तरे देवी प्रसन्ना समुपागता ॥ आर्यसृष्टिसमृद्ध्यै सा ददौ तस्मै वरं शुभम् ॥ ६ ॥ दशपुत्रास्तयोर्जाता आर्यबुद्धिकरा हि ते ॥ उपाध्यायो दीक्षितश्च पाठकः शुक्लमिश्रकौ ॥ ७ ॥ अग्निहोत्री द्विवेदी च त्रिवेदी पाण्ड एव च ॥ चतुर्वेदीति कथिता यथा नाम तथा गुणाः ॥ ८ ॥ ते वै सरस्वतीं देवीं तुष्टुवुर्नम्रकंधराः ॥ द्वादशाब्दवयोभ्यश्च तेभ्यो देवी स्वशक्तितः ॥ कृत्वा कन्या ददौ माता शारदा भक्तिवत्सला ॥९॥ उपाध्यायी दीक्षिता च पाठकी शुक्लिका क्रमात्॥ मिश्राणी च तथा ज्ञेया षष्ठी सा चग्निहोत्रिणी ॥ १० ॥ द्विवेदिनी तथा ज्ञेया चाष्टमी च त्रिवेदिनी ॥ पाण्डायनी च नवमी दशमी तुर्यवेदिनी ॥११॥ तासां च स्वपतिभ्यो वै सुताः षोडश षोडश ॥ ते तु गोत्रकरा



१ पचाद्यच् । भवेयुरित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञेयास्तेषां नामानि मे शृणु ॥१२॥ कश्यपश्च भरद्वाजो विश्वामित्रोऽथ गौतमः ॥ जमदग्निर्वशिष्ठश्च वत्सो गौतम एव च ॥१३॥ पराशरस्तथा गर्गो ऽत्रिर्भृगुश्चांगिरास्तथा ॥ शृंगी कात्यायनश्चैव याज्ञवल्क्यः क्रमात्सुताः॥ इति नाम्ना सुतास्सर्वे ज्ञेयाः षोडशषोडश ॥१४॥ सरस्वत्याज्ञया कण्वो मिश्रदेशमुपाययौ ॥ म्लेच्छान्संस्कृतमाभाष्य तदा दशसहस्रकान् ॥ वशीकृत्य स्वयं प्राप्तो ब्रह्मावर्ते महोत्तमे ॥१५॥ ते सर्वे तपसा देवीं तुष्टुवुश्च सरस्वतीम् ॥ पंचवर्षान्तरे देवी प्रादुर्भूता सरस्वती ॥ सपत्नीकाँश्च तान्म्लेच्छाञ्छूद्रवर्णाय चाकरोत् ॥ १६ ॥ कारुवृत्तिकरास्सर्वे बभूवुर्बहुपुत्रकाः ॥ द्विसहस्रास्तदा तेषां मध्ये वैश्या बभूविरे ॥ १७ ॥ तन्मध्ये चाचार्यपृथुर्नाम्ना कश्यपसेवकः ॥ तपसा स च तुष्टाव द्वादशाब्दं महामुनिम् ॥ १८ ॥ तदा प्रसन्नो भगवान्कण्वो देववराद्वरः ॥ तेषां चकार राजानं राजपुत्रपुरं ददौ ॥ १९ ॥ राजन्या नाम तत्पत्नी मागधं सुषुवे तदा ॥ तस्मै कण्वो ददौ ग्रामं पूर्वस्यां दिशि मागधम् ॥ २० ॥ स्वर्गलोकं पुनः प्राप्तः स मुनिः कश्यपात्मजः ॥ स्वर्गते काश्यपे विप्रे ते म्लेच्छाः शूद्रवर्णकाः ॥२१॥ यज्ञैस्समर्चयामासुर्देवदेवं शचीपतिम् ॥ दुःखितो भगवानिन्द्रस्सबंधुर्जगतीतले ॥२२॥ वेदानाहर्तुमिच्छन्तो ब्रह्मयोनौ बभूविरे॥ जिनो नाम द्विजः कश्चित्तत्पत्नी जयनी स्मृता ॥२३॥ कश्यपाददितेरंशाज्जातौ तौ कीकटस्थले ॥ तयोस्सकाशात्संजाता आदित्या लोकहेतवे॥ ॥२४॥ कर्मनाशानदीतीरे पुरी बोधगया स्मृता ॥ तत्रोष्य बौद्धशास्त्राढ्याश्चक्रुः शास्त्रार्थमुत्तमम् ॥२५॥ वेदाञ्छूद्रेभ्य आहृत्य विशालां प्रययुः पुरीम् ॥ समाधिस्थान्मुनीन्सर्वान्समुत्थाप्य ददुः स्वयम् ॥२६॥ गतास्सर्वे सुरास्स्वर्गे ततः प्रभृतिभूतले ॥ म्लेच्छा बभूविरे बौद्धास्तदन्ये वेदतत्पराः ॥ २७ ॥ सरस्वत्याः प्रभावेण त आर्या बहवोऽभवन् ॥ तैश्च देवपितृभ्यश्च हव्यं कव्यं समर्पितम् ॥२८॥ तृप्तिमंतः सुराश्चासंस्त आर्याणां सहस्रकाः ॥ सप्तविंशच्छते भूमौ कलौ संवत्सरे गते ॥ २९ ॥ बलिना प्रेषितो भूमौ मयः प्राप्तो महासुरः ॥ शाक्यसिंहगुरुर्गेयो बहुमायाप्रवर्तकः ॥ ३० ॥ स नाम्ना गौतमाचार्यो दैत्यपक्षविवर्द्धकः ॥ सर्वतीर्थेषु तेनैव यंत्राणि स्थापितानि वै ॥ ३१ ॥ तेषामधो गता ये तु बौद्धाश्चासन्समन्ततः ॥ शिखासूत्रविहीनाश्च बभूवुर्वर्णसंकराः ॥ ३२ ॥ दश कोट्यः स्मृता आर्या बभूवुर्बौद्धमार्गिणः ॥ पंचलक्षास्तदा शेषाः प्रययुर्गिरिमूर्द्धनि ॥ ३३ ॥ चतुर्वेदप्रभावेण राजन्या वह्निवंशजाः ॥ चत्वारिंशभवा योधास्तैश्च बौद्धास्समुज्झिताः ॥ ३४ ॥ आर्यास्तांस्ते तु संस्कृत्य विंध्याद्रेर्दक्षिणे कृतान् ॥ तत्रैव स्थापयामासुर्वर्णरूपान्समंततः ॥ आर्यावर्तः पुण्यभूमिस्तत्रस्थाः पंचलक्षकाः ॥ ३५ ॥ ॥ सूत उवाच ॥ ॥ इति श्रुत्वा वचस्तस्य यज्ञांशो भगवान्हरिः ॥ ३६ ॥ जगन्नाथस्य शिष्योभूद्वेदमार्गपरायणः ॥ शुक्लदत्तस्य तनयो नित्यानन्दो द्विजोत्त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मः ॥ ३७ ॥ जगन्नाथपदं नत्वा शिष्यो भूत्वा रराज ह ॥ तदा प्रसन्नो भगवाननिरुद्ध उपापतिः॥३८॥अभिषेकं तयोर्भाले महत्तत्वे चकार ह ॥ महत्त्वपदवी जाता तदा प्रभृतिभूतले ॥ ३९ ॥ गुरुबंधू प्रसन्नौ तौ स्वशिष्यान्प्रोचतुर्मुदा ॥ जगन्नाथस्य वदनं पद्मनाभेरुपापतेः ॥ दृष्ट्वा यश्चात्र संप्राप्य स वै स्वर्गमवाप्नुयात् ॥ ४० ॥ प्रसादं यश्च भुंजीयांत्तस्य देवस्य सादरम् ॥ कोटिजन्म भवेद्विप्रो वेदपात्रो महाधनी ॥ ४१ ॥ मार्कंडेय वटे कृष्णं दृष्ट्वा स्नात्वा महोदधौ ॥ इन्द्रद्युम्नसरस्येव पुनर्जन्म न विन्दते ॥ ४२ ॥ इमां गाथां शृणोद्यो[2] वै श्रद्धाभक्तिसमन्वितः ॥ यत्पुरीगमने पुण्यं फलं तच्छीघ्रमाप्नुयात् ॥ ४३ ॥ इति यज्ञांशवचनं श्रुत्वा स ह्यवतारकः ॥ वैष्णवैश्च तथेत्युक्त्वा तत्रैवान्तरधीयत ॥ ४४ ॥ एतस्मिन्नंतरे विप्र कलिना प्रार्थितो बलिः ॥ मयदैत्यं समाहूय वचनं प्राह दुःखितः ॥ ४५ ॥ सुकन्दरो म्लेच्छपतिः सदा मद्वर्द्धने रतः ॥ सहायं तस्य दैत्येन्द्र कुरु शीघ्रं ममाज्ञया ॥४६॥ इति श्रुत्वा बलेर्वाक्यं शतदैत्यसमन्वितः ॥ कर्मभूम्यां मयः प्राप्तः कलविद्याविद्याविशारदः ॥ ४७ ॥ म्लेच्छजातीन्नरान्दुष्टान्रेखागणितमुत्तमम् ॥ एकविंशतिमध्यायं कलवेदमशिक्षयत् ॥४८॥ तदा कलान्विता म्लेच्छाः कलाविद्याविशारदाः॥यंत्राणि कारयामासुः सप्तस्वेव पुरीषु च ॥ ४९ ॥ तदधो ये गतालोकास्ते सर्वे म्लेच्छतां गताः ॥ महत्कोलाहलं जातमार्याणां शोककारिणाम् ॥ ॥ ५० ॥ श्रुत्वा ते वैष्णवाः सर्वे कृष्णचैतन्य सेवकाः ॥ दिव्यमंत्रं गुरोश्चैव पठित्वा प्रययुः पुरीम् ॥ ५१ ॥ रामानन्दस्य शिष्यो वै चायोध्यायामुपागतः ॥ कृत्वा विलोमं तं मंत्रं वैष्णवांस्तानकारयत् ॥ ५२ ॥ भाले त्रिशूलचिह्नं च श्वेतरक्तं तदाभवत् ॥ कंठे च तुलसी माला जिह्वा राममयी कृता ॥ ५३ ॥ म्लेच्छास्ते वैष्णवाश्चासन्रामानन्दप्रभावतः ॥ संयोगिनश्च[1] ते ज्ञेया रामानन्दमते स्थिताः ॥ ५४ ॥ आर्याश्च वैष्णवा मुख्या अयोध्यायां बभूविरे ॥ निंबादित्यो गतो धीमान्सशिष्यः कांचिकां पुरीम् ॥ म्लेच्छयंत्रं राजमार्गे स्थितं तत्र ददर्श ह॥५५॥विलोमं स्वगुरोर्मंत्रं कृत्वा तत्र स चावसत् ॥ वंशपत्रसमा रेखा ललाटे कण्ठमालिका॥५६॥गोपीवल्लभमंत्रो हि मुखे तेषां रराज ह ॥ तदधो ये गता लोका वैष्णवाश्च बभूविरे ॥५७॥ म्लेच्छाः संयोगिनो ज्ञेया आर्यास्तन्मार्गवैष्णवाः ॥ विष्णुस्वामी हरिद्वारे जगाम स्वगणैर्वृतः ॥५८॥ तत्र स्थितं महायंत्रं विलोमं तच्चकार ह॥तदधो ये गता लोका आसन्सर्वे च वैष्णवाः॥५९॥ऊर्ध्वपुंड्रं द्विरेखाभं तन्मध्ये बिंदुरुत्तमः॥ललाटे च स्थितास्तेषां कण्ठे तुलसिगोलकम् ॥ ६० ॥ मुखे साधवमंत्रश्च बभूव हितदायकः ॥ मथुरायां समायातो मध्वाचार्यो हरिप्रियः ॥६१॥ राजमार्गे स्थितं यंत्रं विलोमं

१ प्रयोगो ऽयमार्षः । २ शृणुयात् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स चकार ह ॥ तदधो ये गता लोका वैष्णवास्तस्य पक्षगाः ॥६२॥ करवीरपत्रसदृशं ललाटे तिलकं शुभम् ॥ स्थितं नासार्द्धभागांते कंठे तुलसि
मालिका ॥ राधाकृष्णशुभं नाम मुखे तेषां बभूव ह ॥६३॥ शंकराचार्य एवापि शैवमार्गपरायणः ॥ रामानुजाज्ञया प्राप्तः पुरीं काशीं गणैर्युतः
॥६४॥ कृत्वा विलोमं तद्यंत्रं शैवाश्च तदधोऽभवन् ॥ त्रिपुंड्रं च स्थितं भाले कण्ठे रुद्राक्षमालिका ॥ गोविंदमंत्रश्च मुखे तेषां तत्र बभूव ह ॥६५॥
तोताद्र्यां च संप्राप्तस्तदा रामानुजः सुखी ॥ ऊर्ध्वरेखाद्वयोर्मध्ये सूक्ष्मरेखा च पीतिका ॥ ललाटे तु तथा कण्ठे माला तुलसिका शुभा ॥६६॥
उज्जयिन्यां च संप्राप्तो वराहमिहिरो गुणी ॥ तद्यंत्रं निष्फलं कृत्वा नराञ्छैवाँश्चकार ह ॥ ६७॥ चिताभस्म स्थितं भाले कण्ठे रुद्राक्षमालिका ॥
शिवेति मंगलं नाम तेषां तत्र बभूव ह ॥ ६८ ॥ कन्याकुब्जे स्वयं प्राप्तो वाणीभूषण एव हि ॥ अर्द्धचंद्राकृतिं पुंड्रं रक्तचंदनमालिका ॥
देव्याश्च निर्मलं नाम तेषां तत्र बभूव ह ॥ ६९ ॥ धन्वंतरिः प्रयागे च गत्वा तद्यंत्रमुत्तमम् ॥ विलोमं कृतवाँस्तत्र तदधो ये गता नराः ॥ ७०॥
अर्द्धं पुंड्रं स्मृतं रक्तं सबिंदु च ललाटके ॥ रक्तचंदनजा माला कंठे तेषां बभूवह ॥७१॥ भट्टोजिः स गतो धीमानुत्पलारम्यमुत्तमम् ॥ त्रिपुंड्रं च
तथा रक्तं कंठे रुद्राक्षमालिका ॥ विश्वनाथेति तन्मंत्रं तेषां तत्र बभूव ह॥७२॥ रोपणश्चैष्टिकां प्राप्तस्तद्यंत्रं चैव निष्फलम् ॥ कृत्वा जनेजने तत्र ब्रह्म
मार्गं ददर्श ह ॥७३॥ जयदेवः स्वयं प्राप्तो द्वारकां विष्णुभक्तिमान्॥तद्यंत्रं निष्फलं यातं तदधो ये गता नराः ॥७४॥ रक्तरेखा स्थिता भाले चैका
कंठे तु मालिका॥पद्माक्षा मंत्रगोविन्दस्तत्र तेषां बभूव ह॥एवं ते वैष्णवाः शैवाः शाक्तका बहुधाऽभवन्॥७५॥ निर्गुणाः शाक्तका ज्ञेयाः सगुणा वै
ष्णवाः स्मृताः॥निर्गुणाः सगुणा ये तु शैवा ज्ञेया बुधैस्तदा॥७६॥समाधिस्थास्त्रयस्त्रिंशद्देवाः पुण्या बभूविरे ॥ नित्यानन्दः शान्तिपुरे नदीहापत्तने
हरिः ॥७७॥ कबीरो मागधे देशे रैदासस्तु कालिंजरे ॥ सधनो नैमिषारण्ये समाधिस्थो बभूव ह ॥७८॥ अद्यापि संस्थितो विप्र वैष्णवानां गणो
महान्॥ यज्ञभागमहावृद्धिः संजाता मेरुमूर्द्धनि ॥७९॥ इति ते कथितं विप्र यज्ञांशचरितं शुभम् ॥ यच्छ्रुत्वा च नरा नार्यो महत्पुण्यमवाप्नुयुः ॥
मयाद्या निष्फला दैत्या बलिपार्श्वमुपागताः ॥ ८० ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चये
कृष्णचैतन्यचरित्रं नामैकविंशोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ इति श्रुत्वा बलिर्दैत्यो देवानां विजयं महत् ॥ रोपणं नाम
दैत्येंद्रं समाहूय वचोऽब्रवीत् ॥ १ ॥ सुतस्तिमिरलिंगस्य सरुपो नाम विश्रुतः ॥ त्वं हि तत्र समागम्य दैत्यकार्यं महत्कुरु ॥ २ ॥ इति श्रुत्वा
स वै दैत्यो हृदि विप्रान्तरोपणः ॥ ननाश वेदमार्गस्थान्देहलीदेशमास्थितः ॥ ३ ॥ पंचवर्षं कृतं राज्यं तत्सुतो बाबरोभवत् ॥ विंशदब्दं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतं राज्यं होमायुस्तत्सुतोऽभवत् ॥ ४ ॥ होमायुषा मदान्धेन देवताश्च निराकृताः ॥ ते सुराः कृष्णचैतन्यं नदीहोपवने स्थितम् ॥ ५ ॥ तुष्टुवुर्बहुधा तत्र श्रुत्वा क्रुद्धो हरिः स्वयम् ॥ स्वतेजसा च तद्राज्यं विघ्नभूतं चकार ह ॥ ६ ॥ तत्सैन्यजनितैर्लोकैर्होमायुश्च निराकृतः महाराष्ट्रैस्तदा तत्र शेषशाकः समास्थितः ॥ ७ ॥ देहलीनगरे रम्ये म्लेच्छो राज्यं चकार ह ॥ धर्मकार्यं कृतं तेन तद्राज्यं पंचहायनम् ॥ ८ ॥ ब्रह्मचारी मुकुंदश्च शंकराचार्यगोत्रजः ॥ प्रयागे च तपः कुर्वन्विंशच्छिष्यैर्युतः स्थितः ॥ ९ ॥ बाबरेण च धूर्तेन म्लेच्छराजेन देवताः ॥ भ्रंशिताः स तदा ज्ञात्वा वह्नौ देहं जुहाव वै ॥ १० ॥ तस्य शिष्या गता वह्नौ म्लेच्छनाशनहेतुना ॥ गोदुग्धे च स्थितं रोम पीत्वा स पयसा मुनिः ॥ ११ ॥ मुकुंदस्तस्य दोषेण म्लेच्छयोनौ बभूव ह ॥ होमायुषश्च काश्मीरे संस्थितस्यैव पुत्रकः ॥ १२ ॥ जातमात्रे सुते तस्मिन्वाशुवाचा शरीरिणी ॥ अकस्माच्च वरो जातः पुत्रोऽयं सर्वभाग्यवान् ॥ १३ ॥ पैशाचे दारुणे मार्गे न भूतो न भविष्यति ॥ अतः सोकबरो नाम होमायुस्तनयस्तव ॥ १४ ॥ श्रीधरः श्रीपतिः शंभुर्वरेण्यश्च मधुव्रती ॥ विमलो देववान्सोमो वर्द्धनो वर्तको रुचिः ॥ १५ ॥ मांधाता मानकारी च केशवो माधवो मधुः ॥ देवापिः सोमपाः शूरो मदनो यस्य शिष्यकाः ॥ १६ ॥ स मुकुन्दो द्विजः श्रीमान्दैवात्त्वद्गेहमागतः ॥ इत्याकाशवचः श्रुत्वा होमायुश्च प्रसन्नधीः ॥ १७ ॥ ददौ दानं क्षुधार्तेभ्यः प्रेम्णा पुत्रपमालयत् ॥ दशाब्दे तनये जाते देहलीदेशमागतः ॥ १८ ॥ शेषशाकं पराजित्य स च राजा बभूव ह ॥ अब्दं तेन कृतं राज्यं तत्पुत्रश्च नृपोभवत् ॥ १९ ॥ संप्राप्तेऽकबरे राज्यं सप्तशिष्याश्च तत्प्रियाः ॥ पूर्वजन्मनि ये मुख्यास्ते प्राप्ता भूपतिं प्रति ॥ २० ॥ केशवो गानसेनश्च वैजवाक्स तु माधवः ॥ म्लेच्छास्ते च स्मृतास्तत्र हरिदासो मधुस्तथा ॥ २१ ॥ मध्वाचार्यकुले जातो वैष्णवः सर्वरागवित् ॥ पूर्वजन्मनि देवापिः स च वीरबलोऽभवत् ॥ २२ ॥ ब्राह्मणः पाश्चिमात्यो वै वाग्देवीवरदर्पितः ॥ सोमपा मानसिंहश्च गौतमान्वयसंभवः ॥ २३ ॥ सेनापतिश्च नृपतेरार्यभूपशिरोमणेः ॥ सूरश्चैव द्विजो जातो दक्षिणश्चैव पंडितः ॥ २४ ॥ बिल्वमंगल एवापि नाम्ना तन्नृपतेः सखा ॥ नायिकाभेदनिपुणो वेश्यानां स च पारगः ॥ २५ ॥ मदनो ब्राह्मणो जातः पौर्वात्यः स च नर्तकः ॥ चंदलो नाम विख्यातो रहःक्रीडाविशारदः ॥२६॥ अन्यदेशे गताः शिष्यास्तेषां पूर्वास्त्रयोदश ॥ अनपस्य सुतो जातः श्रीधरः शत्रुवेदितः॥२७॥ विख्यातस्तुलसीशर्मा पुराणनिपुणः कविः ॥ नारीशिक्षां समादाय राघवानन्दमागतः ॥ २८ ॥ शिष्यो भूत्वा स्थितः काश्यां रामानन्दमते स्थितः ॥ श्रीपतिः स बभूवान्धो मध्वाचार्यमते स्थितः ॥ २९ ॥ सूरदास इति ज्ञेयः कृष्णलीलाकरः कविः ॥ शंभुर्वै चंद्रभट्टस्य कुले जातो





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हरिप्रियः ॥ ३० ॥ रामानन्दमते संस्थो भक्तकीर्तिपरायणः ॥ वरेण्यः सोऽग्रभुङ्नामा रामानंदमते स्थितः ॥ ३१ ॥ ज्ञानध्यानपरो नित्यं भाषाछंदकरः कविः ॥ मधुव्रती स वै जातो कीलको नाम विश्रुतः ॥ ३२ ॥ रामलीलाकरो धीमान्रामानन्दमते स्थितः॥ विमलश्च स वै जातः स नाम्नैव दिवाकरः ॥ ३३ ॥ सीतालीलाकरो धीमान्रामानन्दमते स्थितः ॥ देववान्केशवो जातो विष्णुस्वामिमते स्थितः ॥ ॥ ३४ ॥ कविप्रियादिरचनां कृत्वा प्रेतत्वमागतः ॥ रामज्योत्स्नामयं ग्रंथं कृत्वा स्वर्गमुपाययौ ॥ ३५ ॥ सोमो जातः स वै व्यासो निम्बादित्यमते स्थितः ॥ रहः क्रीडामयं ग्रंथं कृत्वा स्वर्गमुपाययौ ॥ ३६ ॥ वर्द्धनश्च स वै जातो नाम्ना चरणदासकः ॥ ज्ञानमालामयं कृत्वा ग्रंथं रैदासमार्गगः ॥ ३७ ॥ वर्तकः स च वै जातो रोपणस्य मते स्थितः ॥ रत्नभानुरिति ज्ञेयो भाषाकर्ता च जैमिनेः ॥ ३८ ॥ रुचिश्च रोचनो जातो मध्वाचार्यमते स्थितः ॥ नानागानमयीं लीलां कृत्वा स्वर्गमुपाययौ ॥ ३९ ॥ मांधाता भूपतिर्नाम कायस्थः स बभूव ह ॥ मध्वाचार्यो भागवतं चक्रे भाषामयं शुभम् ॥ ४० ॥ मानकारो नारिभावान्नारीदेहमुपागतः ॥ मीरानामेति विख्याता भूपतेस्तनया शुभा ॥ ४१ ॥ मा शोभा च तनौ यस्या गतिर्गजसमा किल ॥ सा मीरा च बुधैः प्रोक्ता मध्वाचार्यमते स्थिता ॥ ४२ ॥ एवं ते कथितं विप्र भाषाग्रंथप्रकारणम् ॥ प्रबंधं मंगलकरं कलिकाले भयंकरे ॥ ४३ ॥ स भूपोऽकबरो नाम कृत्वा राज्यमकंटकम् ॥ शतार्द्धेन च शिष्यैश्च वैकुण्ठभवनं ययौ ॥ ४४ ॥ सलोमा तनयस्तस्य कृतं राज्यं पितुः समम् ॥ खुर्दकस्तनयस्तस्य दशाब्दं च कृतं पदम् ॥ ४५ ॥ चत्वारस्तनयास्तस्य नवरंगो हि मध्यमः ॥ पितरं च तथा भ्रातॄञ्जित्वा राज्यमचीकरत् ॥ ४६ ॥ पूर्वजन्मनि दैत्योऽयमन्धको नाम विश्रुतः ॥ कर्मभूम्यां तदंशेन दैत्यराजाज्ञया ययौ ॥ ४७ ॥ तेनैव बहुधा मूर्तीर्भ्रंशिताश्च समंततः ॥ दृष्ट्वा देवास्तदागत्य कृष्णचैतन्यमब्रुवन् ॥ ४८ ॥ भगवन्दैत्यराजांशः स जातश्च महीपतिः ॥ भ्रंशयित्वा सुरान्वेदान्दैत्यपक्षं विवर्द्धते ॥ ४९ ॥ इति श्रुत्वा स यज्ञांशो नदीहोपवने स्थितः ॥ शशाप तं दुराचारं यथा वंशक्षयो भवेत् ॥ ५० ॥ राज्यमेकोनपंचाशत्कृतं तेन दुरात्मना ॥ सेवाजयो नाम नृपो देवपक्षविवर्द्धनः ॥ ५१ ॥ महाराष्ट्रद्विजस्तस्य युद्धविद्याविशारदः ॥ हत्वा तं च दुराचारं तत्पुत्राय च तत्पदम् ॥ ५२ ॥ दत्वा ययौ दाक्षिणात्ये देशे देवविवर्द्धनः ॥ आलोमा नामतनयः पंचाब्दं तत्पदं कृतम् ॥ ५३ ॥ तत्पश्चान्मरणं प्राप्तो विद्रधेन रुजा मुने ॥ विक्रमस्य गते राज्ये सप्तत्युत्तरकं शतम् ॥ ५४ ॥ ज्ञेयं सप्तदशं विप्र यदालोमा मृतिं गतः ॥ तालनस्य कुले जातो म्लेच्छः फलरूपो वली ॥ ५५ ॥ मुकलस्य कुलं हत्वा स्वयं राज्यं चकार ह ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दशाव्दं च कृतं राज्यं तेन भूपेन भूतले ॥ ५६ ॥ शत्रुभिर्मरणं प्राप्तो दैत्यलोकमुपागमत् ॥ महामदस्तत्तनयो विंशत्यव्दं कृतं पदम् ॥ ५७ ॥ तद्राष्ट्रे नादरो नाम दैत्यो देश उपागमत ॥ हत्वार्यांश्च सुराञ्जित्वा देशं खुरजमाययौ ॥ ५८ ॥ महामत्स्यो हि मदस्य तनयस्तत्पितुः पदम् ॥ गृहीत्वा पंचवर्षान्तं स च राज्यं चकार ह ॥ ५९ ॥ महाराष्ट्रैर्हतो दुष्टस्तालनाम्न्वयसंभवः ॥ देहलीनगरे राज्यं दशाव्दं माधवेन वै ॥ ६० ॥ कृतं तत्र तदा म्लेच्छ आलोमा राज्यमाप्तवान् ॥ तद्राष्ट्रे बहवो जाता राजानो निजदेशजाः ॥ ६१ ॥ ग्रामपा बहवो भूपा देशेदेशे बभूविरे ॥ मण्डलीकपदं तत्राक्षयं जातं महीतले ॥ ६२ ॥ त्रिंशदव्दमतो जातं ग्रामेग्रामे नृपेनृपे ॥ तदा तु सकला देवाः कृष्णचैतन्यमाययुः ॥ ६३ ॥ यज्ञांशश्च हरिः साक्षाज्ज्ञात्वा दुःखं महीतले ॥ मुहूर्तं ध्यानमागम्य देवान्वचनमब्रवीत् ॥ ६४ ॥ पुरा तु राघवो धीमाञ्जित्वा रावणराक्षसम् ॥ कपीनुज्जीवयामास सुधावर्षैस्समंततः ॥ ६५ ॥ विकटो वृजिलो जालो वरलीनो हि सिंहलः ॥ जवस्सुमात्रश्च तथा नाम्ना ते क्षुद्रवानराः ॥ ६६ ॥ रामचंद्रं वचः प्राहुर्देहि नो वांछितं प्रभो ॥ रामो दाशरथिः श्रीमाञ्ज्ञात्वा तेषां मनोरथम् ॥ ६७ ॥ देवाङ्गनोद्भवाः कन्या रावणाल्लोकरावणात् ॥ दत्त्वा तेभ्यो हरिस्साक्षाद्वचनं प्राह हर्षितः ॥ ६८ ॥ भवन्नाम्ना च ये द्वीपा जालंधरविनिर्मिताः ॥ तेषु राज्ञो भविष्यंति भवन्तो हितकारिणः ॥ ६९ ॥ नन्दिन्या गोश्च रुंडाद्वै जाता म्लेच्छा भयानकाः॥ गुरुण्डा जातयस्तेषां तास्तु तेषु सदा स्थिताः ॥७०॥ जित्वा तांश्च गुरुण्डान्वै कुरुध्वं राज्यमुत्तमम् ॥ इति श्रुत्वा हरिं नत्वा द्वीपेषु प्रययुर्मुदा ॥ ७१ ॥ विकटान्वयसंभूता गुरुण्डा वानराननाः ॥ वाणिज्यार्थमिहायाता गौरुण्डा बौद्धमार्गिणः ॥ ७२ ॥ ईशपुत्रमते संस्थास्तेषां हृदयमुत्तमम् ॥ सत्यव्रतं कामजितमक्रोधं सूर्यतत्परम् ॥ ७३ ॥ यूयं तत्रोष्य कार्यं च नृणां कुरुत मा चिरम्॥ इति श्रुत्वा तु ते देवाः कुर्युरार्चिकमादरात् ॥७४॥ नगर्य्यां कलिकातायां स्थापयामासुरुद्यताः ॥ विकटे पश्चिमे द्वीपे तत्पनी विकटावती ॥ ७५ ॥ अष्टकौशलमार्गेण राजमंत्रं चकार ह ॥ तत्पतिस्तु पुलोमार्चिः कलिकातां पुरीं स्थितः ॥ ७६ ॥ विक्रमस्य गते राज्ये शतमष्टादशं कलौ ॥ चत्वारिंशं तथाव्दं च तदा राजा बभूव ह ॥७७॥ तदन्वये सप्तनृपा गुरुण्डाश्च बभूविरे ॥ चतुष्पष्टिमितं वर्षं राज्यं कृत्वा लयं गताः ॥७८॥ गुरुण्डे चाष्टमे भूपे प्राप्ते न्यायेन शासति ॥ कलिपक्षो बलिर्दैत्यो मुरं नाम महासुरम् ॥७९॥ आरुह्य प्रेषयामास देवदेशे महोत्तमे ॥ स सुरो वार्डिलं भूपं वशीकृत्य हृदि स्थितः ॥ ८० ॥ आर्यधर्मविनाशाय तस्य बुद्धिं चकार ह ॥ मूर्तिसंस्थास्तदा देवा गत्वा यज्ञांशयोगिनम्॥८१॥ नमस्कृत्याब्रुवन्सर्वे यथा प्राप्तो मुरोऽसुरः ॥ ज्ञात्वा शशाप कृष्णांशो गुरुण्डान्बौद्धमार्गिणः ॥८२॥ क्षयं यास्यंति ते सर्वे ये मुरस्य वशं गताः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्युक्ते वचने तस्मिन्गुरुंडाः कालनोदिताः ॥ ८३ ॥ स्वसैन्यैश्च क्षयं जग्मुर्वर्षमात्रान्तरे खलाः ॥ सर्वे त्रिंशत्सहस्राश्च प्रययुर्यममंदिरे ॥ ८४ ॥ वाग्दंडैस्स च भूपालो वार्डिलो नाशमाप्तवान् ॥ गुरुण्डो नवमः प्राप्तो भेकलो नाम वीर्यवान् ॥८५॥ न्यायेन कृतवान्राज्यं द्वादशाब्दं प्रयत्नतः ॥ आर्यदेशे च तद्राज्यं बभूव न्यायशासति ॥ ८६ ॥ लार्डलो नाम विख्यातो गुरुण्डो दशमोहितः ॥ द्वात्रिंशाब्दं च तद्राज्यं कृतं तेनैव धर्मिणा ॥ ॥ ८७ ॥ लार्डले स्वर्गते प्राप्ते मकरंदकुलोद्भवाः ॥ आर्याः प्राप्तास्तदा मौना हिमतुंगनिवासिनः ॥ ८८ ॥ बभ्रुवर्णाः सूक्ष्मनसो वर्तुला दीर्घमस्तकाः ॥ एवं लक्षाश्च संप्राप्ता देहल्यां बौद्धमार्गिणः ॥ ८९ ॥ आर्जिको नाम वै राजा तेषां तत्र बभूव ह ॥ तस्य पुत्रो देवकणो गंगोत्रगिरिमूर्द्धनि ॥ ९० ॥ द्वादशाब्दं तपो घोरं तेपे राज्यविवृद्धये ॥ तदा भगवती गंगा तपसा तस्य धीमतः ॥ ९१ ॥ स्वरूपं स्वेच्छया प्राप्य ब्रह्मलोकं जगाम ह ॥ कुबेरश्च तदागत्य दत्त्वा तस्मै महत्पदम् ॥९२॥ आर्याणां मंडलीकं च तत्रैवान्तरधीयत॥ मण्डलीको देवकर्णो बभूव जनपालकः ॥ ॥ ९३ ॥ पष्टचब्दं च कृतं राज्यं तेन राज्ञा महीतले ॥ तदन्वयेऽष्ट भूपाश्च बभूवुर्देवपूजकाः ॥ ९४ ॥ द्विशताब्दं पदं कृत्वा स्वर्गलोकमुपाययुः ॥ एकादशश्च यो मौनः पन्नगारिरिति श्रुतः ॥ ९५ ॥ चत्वारिंशच्च वर्षाणि राज्यं कृत्वा प्रयत्नतः ॥ स्वर्गलोकं गतो राजा पन्नगैर्मरणं गतः ॥ ९६ ॥ एवं च मौनजातीयैः कृतं राज्यं महीतले ॥ ९७ ॥ इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये गुरुण्डमौनराज्यवर्णनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ वैक्रमे राज्यविगते चतुष्षष्ट्युत्तरं मुने ॥ द्वाविंशदब्दशतकं भूतनन्दिस्तदा नृपः ॥ १ ॥ कुबेरयक्षकान्मौनान्धनधान्यसमन्वितान् ॥ सार्द्धलक्षान्कलैर्घोरैर्जित्वा तान्युद्धकारिणः ॥ २ ॥ किलिकिलायां स्वयं राज्यं नागवंशैश्चकार ह ॥ आग्नेय्यां दिशि विख्याता पुण्डरीकेण निर्मिता ॥ ३ ॥ पुरी किलकिला नाम तत्र राजा बभूव ह ॥ पुण्डरीकादयो नागास्तस्मिन्राज्यं प्रशासति ॥४॥ गेहेगेहे जनैस्सर्वैः पूजनीया बभूविरे ॥ स्वाहा स्वधा वषट्कारो देवपूजा महीतले ॥ ५ ॥ त्यक्त्वा देवानुपागम्य संस्थिता मेरुमूर्द्धनि ॥ शक्राज्ञया कुबेरस्तु शूकधान्यं समंततः ॥ ६ ॥ यक्षैः षडंशानादाय देवेभ्यः प्रददौ प्रभुः ॥ मणिस्वर्णादिवस्तूनि मौनराज्येषु यानि वै ॥७॥ दत्तानि तानि कोशेषु पुनर्देवश्चकार ह ॥ मंडलीकं पदं तेन सत्कृतं भूतनन्दिना ॥८॥ शतार्द्धं तु ततो राजा शिशुनन्दिर्बभूव ह ॥ नागपूजां पुरस्कृत्य तिरस्कृत्य सुरान्भुवि ॥ ९ ॥ चकार राज्यं विंशाब्दं यशोनन्दिस्ततोऽनुजः ॥ भ्रात्रासनं स्वयं प्राप्तो नागपूजापरायणः ॥१०॥ पंचविंशतिवर्षाणि स च राज्यमचीकरत् ॥ ततस्तत्तनयो राजा स बभूव प्रवीरकः ॥११॥ एकादशाब्दं तद्राज्यं कर्मभूम्यां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रपौत्रैश्च विभक्तेयं वसुन्धरा ॥ ३७ ॥ आदित्या वसवो रुद्रा एकादश तथाश्विनौ ॥ उपसन्नयः समाख्याता देव वैवस्वतेंऽतरे ॥ ३८ ॥ विप्रचित्तिहिरण्याख्यौ दैत्यदानवसत्तमौ ॥ तयोर्वंशे तु बहवो दैत्यदानवसत्तमाः ॥ ३९ ॥ पञ्चाशद्गुणितकोटियोजनानां महत्तया ॥ सप्तद्वीपसमुद्रायाः प्रमाणमवनेः स्मृतम् ॥ ४० ॥ पिण्डेन च सहस्राणि सप्ततिर्जलमध्यतः ॥ गौरिवैषा सुमहती भ्राजते न च लीयते ॥ ४१ ॥ लोकालोकः परतरः पर्वतोऽग्रमहोच्छ्रयः ॥ द्वैतमर्थं स नियतो योऽसौ रविरुचामपि ॥ ४२ ॥ नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको लयः ॥ नित्यश्चतुर्थो विज्ञेयः कालो नित्यापहारकः ॥ ४३ ॥ उत्पद्यते स्वयं यस्मात्तत्तस्मिन्नेव लीयते ॥ रक्षति च परे पुंसि भूतानामेष निश्चयः ॥ ॥ ४४ ॥ यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये ॥ दृश्यंते तानि तान्येव तथा भावा युगादिषु ॥ ४५ ॥ प्रतिलीनेषु भूतेषु विबुद्धः सकलं जगत् ॥ वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥ ४६ ॥ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ॥ ते तं विना प्रपद्यंते पुनस्तेष्वेव कर्मसु ॥ ४७ ॥ भूर्दशगुणेन पयसा संवृता तच्च तेजसा ॥ तेजोऽनिलेन नभसा तद्गुणेनानिलो वृतः ॥ ४८ ॥ भूतादिना तथाकाशं भूतादिर्महतावृतः॥ महान्परिवृतस्तेन पुरुषेणाविनाशिना ॥४९॥ एवं विधानामण्डानां सहस्राणि शतानि च ॥ उत्पन्नानि विनष्टानि भावितानि महात्मना ॥ ५० ॥ वैकुण्ठकोष्ठगतमेतदशेषतायां ख्यातं[1] जगत्सुरनरोरगसिद्धनद्धम् ॥ पश्यंति शुद्धमुनयो बहिरंतरे च माया चराचरगुरोरपरैव काचित् ॥ ५१ ॥ इति श्रीभविष्ये महापुराणे उत्तरे पर्वणि ब्रह्माण्डोत्पत्तिवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ कीदृशी कृष्ण सा माया विष्णोरमिततेजसः ॥ यया व्यामोहितं यच्च जगदेतच्चराचरम् ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ येन द्वीपे पुरा विष्णुरास्ते चक्रगदाधरः ॥ वासुदेवः सगरुडः सचक्रश्च श्रिया सह ॥ २ ॥ नीलोत्पलदलश्यामः कुंडलाभ्यां विभूषितः ॥ भ्राजते मुकुटोद्द्योतकेयूरवनमालया ॥ ३ ॥ तस्य द्रष्टुमथाभ्यागान्नारदो मुनिसत्तमः ॥ प्रणम्य स्तुतिभिर्देवं प्राहेदं विस्मयान्वितः ॥ ४ ॥ संशयं परिपृच्छामि भगवन्वक्तुमर्हसि ॥ का माया कीदृशी माया किंरूपा च कुतस्तथा ॥ ५ ॥ तस्या दर्शय मे रूपं मायायाः पुरुषोत्तम ॥ या च मोहयते सर्वं त्रैलोक्यं सचराचरम् ॥ ६ ॥ आब्रह्मस्तंबपर्यंतं सदेवासुरमानुषम् ॥ वैकुंठं वासुदेवं च प्रसादं कर्तुमर्हसि ॥ ७ ॥ एवमुक्तस्तु मुनिना देवदेवो जनार्दनः ॥ प्रहस्योवाच देवर्षे न कार्यं मायया त्वया ॥ ८ ॥ भूयोऽपि मोहयामास सोमग्राहेण नारदम् ॥ नारदोपि महाराज प्रोवाचेदं पुनः



१ ध्यानम्–इ०, ध्यातम्–इ० च पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुनः ॥ ९ ॥ मायां दर्शय मे देव नान्यदस्ति प्रयोजनम् ॥ अथासौ विष्णुरुत्थाय श्वेतद्वीपं पुनर्ययौ ॥ १० ॥ अङ्गुल्यग्रेण संगृह्य नारदं मुनिपुङ्गवम् ॥ ततो मार्गगतश्चक्रे आत्मानं द्विजरूपिणम् ॥ ११ ॥ ऋग्वेदसदृशः साक्षाद्विष्णुर्ब्रह्मवदास्थितः ॥ वृद्धद्विजोत्तमवपुः संशयो नाल्पको भवत् ॥ १२ ॥ शिखी कमंडलुधृतो मृगचर्मोपवीतकः ॥ यज्ञशर्मेति संज्ञां च चक्रेऽसावात्मनः प्रभुः ॥ १३ ॥ कृत्वापि कुशतंत्वग्रपवित्रकृतलक्षणम् ॥ आययौ स महीपृष्ठं जम्बूद्वीपं चचार ह ॥ १४ ॥ वैदिशं नाम नगरं वेत्रवत्यास्तटे शुभम् ॥ तस्मिन्सदोद्यमपरो धनधान्यसमृद्धिमान् ॥ १५ ॥ गोमहिष्यजसंपूर्णं पाशुपाल्येन संस्थितः ॥ हलकर्मवृषासक्तो वैश्यजातिरनिंदितः ॥ १६ ॥ गृहकर्मणि तन्निष्ठः सीरभद्र इति स्मृतः ॥ तस्यांतिके हरिः साक्षान्नारदेन सहागतः ॥ १७ ॥ तेनाप्यासनसन्मानैः समर्थेन कृतादरौ ॥ प्रोक्तं केनाथ किं तुभ्यं साध्यमन्नं न साध्यते ॥ १८ ॥ न वास्मदीयं युष्माकं रोचतेन्नं ततो हरिः ॥ प्रहस्य प्रददौ तस्मै वरं द्विजवरो महत् ॥ १९ ॥ उन्नाम्य वक्त्रं चोवाच देवसंस्तुतया गिरा ॥ संतु ते बहवः पुत्राः क्षेत्रव्यापारबुद्धयः ॥ २० ॥ पशुपाशगृहासक्ताः शतार्द्धबलवाहनाः[1] ॥ तेषां पुत्राश्च पौत्राश्च कृषिवृद्धिप्रवर्द्धकाः ॥ २१ ॥ त्वञ्च वृत्तिशतैर्नित्यं वर्द्धस्व स्वजनावृतः ॥ इत्युक्त्वा स जगन्नाथो वासुदेवः सनारदः ॥ २२ ॥ क्षेत्रे गोस्वामिनामानं द्विजं ददृशतुश्च तौ ॥ दरिद्रं हलकर्मार्त्तं मेथ्याद्योपस्करार्दितम् ॥ २३ ॥ भागीरथ्यास्तटे रम्ये वेणिका[2]ग्रामसन्निधौ ॥ तृणगुल्मलताच्छन्नक्षेत्रे चिंताकुलो हि सः ॥ २४ ॥ ताभ्यां संप्रार्थितो विप्रो भोज्यं प्रादाच्च किंचन ॥ सकाशं तव संप्राप्तौ दूरादतिथिधर्मिणौ ॥ २५ ॥ इत्युक्तोऽसौ द्विजश्रेष्ठो हलकर्म विधाय तत् ॥ आजगाम गृहं तूर्णं ताभ्यां सह ससंभ्रमम् ॥ २६ ॥ चक्रे चैवादरं भक्त्या स्वयमासनसत्क्रियाम् ॥ पादशौचं तथाभ्यंगं कृत्वान्नं च सुसंस्कृतम् ॥ २७ ॥ सह पत्न्या सतनयो भोज्यं भुक्तिं चकार सः ॥ भुक्तभोज्यौ च शर्वर्यां सुखं सुप्तौ निशात्यये ॥ २८ ॥ प्रयातौ ददतुः श्रेष्ठं वरं तस्मै द्विजातये ॥ मा ते भवतु गोस्वामिन्कदाचिदपि कर्षणम् ॥ २९ ॥ मा धान्यं मखसंतानं मत्प्रसादाद्द्विजोत्तम ॥ इत्युक्त्वा जग्मतुस्तूर्णं पुनः पप्रच्छ नारदः ॥ ३० ॥ किमिदं वद देवेश शापरूपो वरस्त्वया ॥ भद्र गोस्वामिने दत्तः किं च वैश्ये तथाविधः ॥ ३१ ॥ इत्युक्तः प्राह देवेशः शृणु नारद मद्वचः ॥ परमार्थं प्रवक्ष्येऽहं तव संशयकर्तनम् ॥ ३२ ॥ संवत्सरेण यत्पापं मत्स्यघाती समाचरेत् ॥ तदह्नैकेन कुरुते लांगली नात्र संशयः ॥ ३३ ॥ अतोऽर्थं कृषिपाल्येन नरकं याति लांगली ॥ तदभावान्न कल्पः स्यात्तेन मोक्षो मयि ध्रुवम् ॥ ३४ ॥

१ वाहिताग्न्यादिष्विति बहुव्रीहेः परांनपातः । २ वेणिका-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मयि भुक्ते प्रसन्ने वा को विशेषोऽस्य नारद ॥ यदि स्वर्गोऽथवा मोक्षो न संपद्येत तद्वृथा ॥ ३५ ॥ इदानीं हलकालुष्यैः सीरभद्रो विचेष्टितैः ॥ बहुपापप्रसंगेन घोरं नरकमेष्यति ॥ ३६ ॥ सपुत्रपौत्रसंतानो हृतोर्थस्तद्गृहे मया ॥ न भुक्तं न च विश्रान्तं विश्रांतं द्विजवेश्मनि ॥ ३७ ॥ सोऽपि द्विजो मुनिश्रेष्ठ संसारादुत्तरिष्यति ॥ इत्येवं संवदंतौ च जग्मतुर्मार्गमुत्तमम् ॥ ३८ ॥ कान्यकुब्जस्य सामीप्ये सरः श्रेष्ठमपश्यताम् ॥ हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ॥ ३९ ॥ पद्मिनीजलकह्लाररक्तोत्पलसितोत्पलैः ॥ छादितं पद्मिनीपत्रैर्मत्स्यैः कूर्मैर्जलोद्भवैः ॥ ४० ॥ तटे रम्यैर्घनैर्वृक्षैः केतकीखण्डमंडितम् ॥ केतकीकुसुमामोदैर्लकुचैस्तटमंडितैः ॥ ४१ ॥ दात्यूहशिखिभारुण्डचकोराद्यैश्च संकुलम् ॥ कुरवैश्चातकै रम्यं केकाकुलनिनादितम् ॥ ४२ ॥ जलकुक्कुटसंगीतं हंससारसशोभितम् ॥ जीवंजीवकहारीतचकोरैरुपशोभितम् ॥ ४३ ॥ वशिष्ठस्य मुनेर्नाम्ना विख्यातं श्रीमहोदयम् ॥ अस्मिन्नद्य प्रवेष्टव्यं महाजनविवेकिनाम् ॥ ४४ ॥ स्थातव्यं पुरतस्तेषां तस्मात्स्नानं समाचरेत् ॥ इत्युक्त्वा केशवः पापं सस्नौ प्रागेव तंजलैः[1] ॥ ४५ ॥ यत्तीर्थलोके विख्यातं स्नात्वा तीरं समाश्रितः ॥ प्रहरे वासुदेवस्य नारदोऽपि मुदा युतः ॥ ४६ ॥ आचम्य सस्नौ तीर्थेन क्षणात्तीर्थमवाप्य च ॥ यावदुत्तिष्ठते तोयात्स्नात्वा ऋषिरुदारधीः ॥ ४७ ॥ तावत्स्त्रीत्वं समापन्नो नारदः केन वर्ण्यते ॥ यस्यास्तु विस्तृते नेत्रे वक्त्रं चन्द्रोपमं शुभम् ॥ ४८ ॥ स्मरपाशोपमौ कर्णौ कपोलौ कनकोज्ज्वलौ ॥ नासिका तिलसूनेन कामचापोपमे भ्रुवौ ॥ ४९ ॥ दशना हीरकैस्तुल्या विद्रुमाभः शुभाधरः ॥ मयूरस्य कलापेन तुल्यं कचनिबंधनम् ॥ ५० ॥ शंखरेखात्रयेणैव कंठदेशो विराजते ॥ माधवीलतया तुल्यौ मंजू तस्या भुजौ शुभौ ॥ ५१ ॥ युतौ रक्तोत्पलाभासौ पाणी रक्तनखांगुली ॥ पीनावतुंगतनुधृत्कठिनौ कलशोपमौ ॥ ५२ ॥ स्तनावविरलौ स्निग्धौ चक्रवाकयुगोपमौ ॥ स्वल्पकं मध्यदेशं तु मुष्टिग्राह्यमसंशयम् ॥ ५३ ॥ नाभिमंडलगांभीर्यं लावण्यं केन वर्ण्यते ॥ वलित्रयेण विकृता रोमराजिर्विराजिता ॥ ५४ ॥ नयने च पुनस्तस्या मृग्या इव सुशोभने ॥ नितंबो विंबफलको मन्मथायतनं शुभम् ॥ ५५ ॥ रंभायुग्मोपमावूरू स्मरबाणनिबंधनौ ॥ विपरीतरतायासखेदभारसहौ दृढौ ॥ ५६ ॥ नवकुन्दलतासारसरलं सनिबंधनम् ॥ जंघायुगं महाराज गूढगुल्फयुगं तथा ॥ ५७ ॥ रक्तांगुलीलतातलपनखचन्द्रकयाचितम् ॥ चरणारविंदयुगलं सरक्तं सुप्रतिष्ठितम् ॥ ५८ ॥ सैवंविधा तदा नारी सर्वलक्षणपूजिता ॥ बभूव क्षणमात्रेण जगद्व्यामोहकारिणी ॥ ५९ ॥ क्षीरोदमथनोत्तीर्णां लक्ष्मीमन्यामिवोच्छ्रिताम् ॥ दृष्ट्वाप्यदर्शनं प्राप्तो मायया मधुसू

१ तजले–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दनः ॥ ६० ॥ संप्राप्यते च सा कालसंगराहारिणी यथा ॥ आस्त एकाकिनी मुग्धा कुर्यादिगवलोकनम् ॥ ६१ ॥ अथाजगाम तं देशं नाम्ना तालध्वजो नृपः ॥ सह सैन्यैः परिवृतः पुरंदर इवामरैः ॥ ६२ ॥ गजारूढैर्हयारूढै रथारूढैर्नरोत्तमैः ॥ विमानयानयुग्मस्थैस्तथांतःपुरिकाजनैः ॥ ६३ ॥ ध्वजातपत्रकलिलैरनीकैः परिवारितः ॥ तेन सा सहसा दृष्टा नारी कमललोचना ॥ ६४ ॥ बभूव क्षणमात्रेण कंदर्पशरपीडितः ॥ केयं कस्य कुतः प्राप्ता किं देवी वाथ मानुषी ॥ ६५ ॥ अदृष्टरूपाप्सरसा काचिद्देवी समागता ॥ अहोरूपं सुरूपाया गोचरे पतितः पुमान् ॥ ६६ ॥ मुमूर्षुर्जायते मोहादनुदिग्धहतो यथा ॥ इति संचिन्त्य हृदये राजा तालध्वजोऽन्तिके ॥ ६७ ॥ उवाच नारीं मुग्धां तां शृणु मद्वचनं शुभे ॥ का त्वं कस्य कुतः प्राप्ता देशमेतं शुचिस्मिते ॥ ६८ ॥ इत्युक्ते साश्रु चार्वंगी प्राह मां विद्ध्ययोनिजाम् ॥ पित्रा मात्रा विहीनां च तथाद्यापि कुमारिकाम् ॥ ६९ ॥ निराश्रयां विदित्वैनां ततो जातः स्मरार्दितः ॥ आरोप्य हयपृष्ठे तां ततो राजागतो गृहम् ॥ ७० ॥ नीत्वा विवाहयामास शास्त्रोक्तविधिना ततः ॥ रेमे प्रासादशृंगाग्रे पर्यंके सितया तया ॥ ७१ ॥ उद्यानभव्यभूमीषु नदीनां पुलिनेषु च ॥ पर्वतानां नितंबेषु निर्झरेषु गुहासु च ॥ ७२ ॥ पद्मखंडेषु फुल्लेषु शोभितेषु सरस्सु च ॥ प्रयागादिषु तीर्थेषु नदीनामाश्रमेषु च ॥ ७३ ॥ दिव्यावसथरम्येषु वेलाकूलेषु पार्थिवः ॥ यावद्द्वादश वर्षाणि एकाहमपि भारत ॥७४॥ ततस्त्रयोदशे वर्षे तस्या गर्भोऽभवन्महान् ॥ एतस्मिन्गर्भसंपूर्णे जातं दीर्घमलाबुकम् ॥ ॥ ७५ ॥ तद्भेदाहतकुंभेषु बीजप्ररोहणान्नराः ॥ बभूवुर्द्धातुशून्या वै दिव्यदेहबलोत्कटाः ॥ ७६ ॥ पंचाशत्संख्यया जाता उपसर्गादिवर्जिताः ॥ आरूढयौवनाः सर्वे सुताः संग्रामकोविदाः ॥ ७७ ॥ तेषां पुत्राश्च पौत्राश्च बभूवुः सुरसत्तमाः ॥ युयुधुः शरसंघातैश्चक्रशूलासिपट्टिशैः ॥ ७८ ॥ हयैरन्यैर्गजैरन्यैः क्रोधांधाः कौरवा इव ॥ पांडवैः सह संग्रामे युयुधुः क्षयमंजसा ॥ ७९ ॥ सपदातिगजारोहाः सांतःपुरयुगेच्छया ॥ विनेशुरब्धिमासाद्य सिंधूनां प्रवहा इव ॥८०॥ सासिसबलविस्ताराः सदर्पाः समहोच्छ्रयाः ॥ इन्द्रलोकोपमं सर्वं कुलं नष्टं क्षणं तदा ॥८१॥ संदृश्य नारदीयैषा विनष्टं स्वकुलं रणे ॥ रुरोद स्नेहसंयुक्तै रसैः कलुषया गिरा ॥ ८२॥ हा दैव हा विधे पाप हा कृतान्त नमस्कृत ॥ दर्शयित्वा विधानं मे पुनर्नेत्रे हृते त्वया ॥ ८३ ॥ इत्युक्त्वा स्वसुरोहस्तैर्जघान भृशदुःखिता ॥ भूमौ मूर्च्छातुरा भूत्वा पुनः प्राप्ता विचेतनम् ॥८४॥ सोऽपि राजा विषण्णोऽसौ निर्विण्णः शोकसागरे ॥ भूमौ निपतितो दुःखाद्रुरोद भृशदुःखितः ॥८५॥ विषण्णो मंत्रिभिः सार्धं वृद्धशोकेन संयुतः ॥ एतस्मिन्नंतरे विष्णुराज

१ संगमाहारिणी–इ० पा० । २ सुराः–इ० पा० । ३ वि०…–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गाम द्विजैः सह ॥८६॥ द्विजवेषपरिच्छन्न उपविष्टः सुखासने ॥ ततः पुरस्सरो भूत्वा चक्रे धर्मार्थदर्शनम् ॥८७॥ किं रोदनेन बहुना युवयोः क्लेश कारिणा ॥ श्रूयतां विष्णुमायैषा स्वप्नदृष्टधनोपमा ॥८८॥ शोभने यादृशः शोकः कृतः संसारसागरे ॥ सर्वेषामेव भूतानां परिणामोयमीदृशः ॥ ॥ ८९ ॥ पुरंदरसहस्राणि चक्रवर्तिशतानि च ॥ निर्वापितानि कालेन प्रदीप इव वायुना ॥ ९० ॥ येऽपि शोषयितुं शक्ताः समुद्रं ग्राहसंकुलम्॥ कुर्युश्च करयुग्मेन चूर्णं मेरुं महीतले ॥ ९१ ॥ ऊद्धर्तुं धरणीसंज्ञां ग्रहीतुं चन्द्रभास्करौ ॥ प्रविष्टास्ते तु कालेन कृतांतवदनं तदा ॥ ९२ ॥ दुर्गं त्रिकूटः परिखाः समुद्रा रक्षांसि योधा धनदाच्च वित्तम् ॥ मंत्रश्च यस्यौशनसा प्रणीतः स रावणो दैववशाद्विपण्णः ॥ ९३ ॥ संग्रामे गजतुरगस माकुलेऽपि वादादग्नौ वा गतविवरे महोदधौ वा ॥ सर्वैर्वा सह वसतामुदीर्णकोपैर्नाभाव्यो भवति कदाचिदेव नाशः ॥ ९४ ॥ पातालमाविशतु यातु सुरेन्द्रलोकमारोहतु क्षितिधराधिपतिं सुमेरुम् ॥ मंत्रौषधिप्रहरणैश्च करोतु रक्षां यद्भावि तद्भवति नाथ विभावितोऽस्मि ॥ ९५ ॥ रोदिति कश्चिदथाश्रुधौताननगुरुतरशोकविह्वलः ॥ प्रविकटचरणवानपि नृत्यति कश्चिद्धर्मार्दिविग्रहः ॥ ९६ ॥ गायति हृदयहारि सुखनिर्भरमायतवि स्तृताऽधरोऽधिकम् ॥ सार एष रंगोदरगतनटपटहाकाम एवायम् ॥ ९७ ॥ इत्येवं धर्ममुद्दिश्य विष्णुः संसारचेष्टितम् ॥ तूष्णीं बभूवानुपदं ततस्ते द्विजपुङ्गवाः ॥ ९८ ॥ उत्तिष्ठ स्नाहि पुत्राणां प्रकुरुष्वौर्ध्वदेहिकम् ॥ मा शोकं विष्णुमायैषा विष्णुना निर्मिता स्वयम् ॥ ९९ ॥ इत्युक्ता चारुस र्वांगी स बभूवाचलः पुमान् ॥ स एष सदृशाकारो नारदस्तत्क्षणेऽभवत् ॥ १०० ॥ सोऽपि राजा ददर्शाथ तं समंत्रिपुरोहितः ॥ सांतःपुरमिदं सर्वमिन्द्रजालोपमं क्षणात् ॥ १०१ ॥ नारदं मुनिशार्दूलं जटाभारभयानकम् ॥ गौरवर्णं ज्वलंतं च ब्राह्म्या लक्ष्म्या विराजितम् ॥ १०२ ॥ शिखा कमण्डलुधरं वीणादण्डकरं तथा ॥ ब्रह्मसूत्रेण शुभ्रेण कौपीनाच्छादनेन च ॥ पादुकाभ्यां स्थितं तीरे सरसो ब्राह्मणासने ॥ १०३ ॥ संप्रगृह्य कराग्रेण जगामादर्शनं हरिः ॥ अम्बरेण सुरैः सार्द्धं तस्माद्देशाद्युधिष्ठिर ॥ १०४ ॥ श्वेतद्वीपमथासाद्य प्राह देवो मुनिं नृप ॥ देवर्षे यत्त्वया पृष्टं पूर्वं मायाकथां प्रति ॥ १०५ ॥ माया ययेदृशी माया यत्स्वरूपा यदात्मिका ॥ सा ते माया मया ब्रह्मन्वैष्णवी संप्रदर्शिता ॥ १०६ ॥ एवमुक्त्वा मुनिवरं देवदेवो जनार्दनः ॥ बभूवान्तर्हितस्सद्यो देवर्षेस्तस्य पश्यतः ॥ १०७ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे मायादर्शनं नाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ देवत्वं मानुषत्वं च तिर्यक्त्वं केन कर्मणा ॥ प्राप्नोति पुरुषः केन



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गर्भवासं सुदारुणम् ॥ १ ॥ गर्भस्थश्च किमश्नाति कथमुत्पद्यते पुनः ॥ दत्तोत्थानादिकान्दोषान्कथं तरति दुस्तरान् ॥ २ ॥ बालभावे कथं पुष्टिः स्याद्युवा केन कर्मणा ॥ कुलीनः केन भवति सुरूपः सुधनः कथम् ॥ ३ ॥ कथं दारानवाप्नोति गृहं सर्वगुणैर्युतम् ॥ पंडितः पुत्रवांस्त्यागी स्यादामयविवर्जितः ॥ ४ ॥ कथं सुखेन म्रियते कथं भुंक्ते शुभाशुभम् ॥ सर्वमेवामलमते गहनं प्रतिभाति मे ॥ ५ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शुभैर्देवत्वमाप्नोति मिश्रैर्मानुषतां व्रजेत् ॥ अशुभैः कर्मभिर्जंतुस्तिर्यग्योनिषु जायते ॥ ६ ॥ प्रमाणं श्रुतिरेवात्र धर्माधर्मविनिश्चये ॥ पापं पापेन भवति पुण्यं पुण्येन कर्मणा ॥ ७ ॥ ऋतुकाले तदा भुक्तं निर्दोषं येन संस्थितम् ॥ तदा तद्वायुना स्पृष्टं स्त्रीरक्तेनैकतां व्रजेत् ॥८॥ विसर्गकाले शुक्रस्य जीवः करणसंयुतः ॥ भृत्यः प्रविशते योनिं कर्मभिः स्वैर्नियोजितः ॥ ९ ॥ तच्छुक्ररक्तमेकस्थमेकाहात्कललं भवेत् ॥ पञ्चरात्रेण कललं बुद्बुदाकारतां व्रजेत् ॥ १० ॥ बुद्बुदं सप्तरात्रेण मांसपेशी भवेत्ततः ॥ द्विसप्ताहाद्भवेत्पेशी रक्तमांसदृढांचितः ॥ ११ ॥ बीजस्येवांकुराः पेश्याः पञ्चविंशतिरात्रतः ॥ भवंति मासमात्रेण पञ्चधा जायते पुनः ॥ १२ ॥ ग्रीवा शिरश्च स्कन्धश्च पृष्ठवंशस्तथोदरम् ॥ मासद्वयेन सर्वाणि क्रमशः संभवंति च ॥ १३ ॥ त्रिभिर्मासैः प्रजायंते सद्वव्यांकुरसंधयः ॥ मासैश्चतुर्भिरंगुल्यः प्रजायंते यथाक्रमम् ॥ १४ ॥ मुखं नासा च कर्णौ च जायन्ते पञ्चमासकैः ॥ दंतपंक्तिस्तथा गुह्यं जायंते च नखाः पुनः ॥ १५ ॥ कर्णौ च रंध्रसहितौ षण्मासाभ्यंतरेण तु ॥ पायुर्मेढ्रमुपस्थश्च नाभिश्चाप्युपजायते ॥ १६ ॥ संधयो ये च गात्रेषु मासैर्जायंति सप्तभिः ॥ अङ्गप्रत्यंगसंपूर्णः शिरः केशसमन्वितः ॥ १७ ॥ विभक्तावयवः पुष्टः पुनर्मासाष्टकेन च ॥ पंचात्मकसमायुक्तः परिपक्वः स तिष्ठति ॥ १८ ॥ मातुराहारवीर्येण षड्विधेन स तिष्ठति ॥ रसेन प्रत्यहं बालो वर्धते भरतर्षभ ॥ १९ ॥ तत्तेऽहं संप्रवक्ष्यामि यथाश्रुतमरिंदम ॥ नाभिसूत्रनिबन्धेन वर्द्धते स दिनेदिने ॥ २० ॥ ततः स्मृतिं लभे ज्जीवः संपूर्णेऽस्मिञ्छरीरके ॥ सुखं दुःखं विजानाति निद्रास्वप्नं पुरा कृतम् ॥ २१ ॥ मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ॥ नानायोनिसहस्राणि मया दृष्टानि तानि वै ॥ २२ ॥ अधुना जातमात्रोऽहं प्राप्तसंस्कार एव च ॥ एतच्छ्रेयः करिष्यामि येन गर्भे न संश्रयः ॥२३॥ गर्भस्थश्चितये देवमहं गर्भाद्विनिःसृतः ॥ अध्येष्ये चतुरो वेदान्संसारविनिवर्तकान् ॥ २४ ॥ एवं स गर्भदुःखेन महता परिपीडितः ॥ जीवः कर्मवशादास्ते मोक्षोपायं विचिंतयन् ॥ २५ ॥ यथा गिरिवराक्रांतः कश्चिद्दुःखेन तिष्ठति ॥ तथा जरायुणा देही दुःखे तिष्ठति चेष्टितः ॥ २६ ॥ पतितः

१ दत्तोत्थानादिकान्–इ० पा० । २ अंसौ पृष्ठं तथोदरम्–इ० पा० । ३ आयुः–इ० पा० । ४ तत्तच्छ्रेयः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सागरे यद्वद्दुःखैरास्ते समाकुलः ॥ गर्भोदकेन सिक्तांगस्तथास्ते व्याकुलः पुमान् ॥ २७ ॥ लोहकुंभे यथा न्यस्तः पच्यते कश्चिदग्निना ॥ तथा स पच्यते जंतुर्गर्भस्थः पीडितोदरः ॥ २८ ॥ सूचीभिरग्निवर्णाभिर्विभिन्नस्य निरंतरम् ॥ यःदुखमुपजायेत तद्गर्भेऽष्टगुणं भवेत् ॥ २९ ॥ गर्भवासात्परो वासः कष्टो नैवास्ति कुत्रचित् ॥ देहिनां दुःखवद्घाजन्सुघोरो ह्यतिसङ्कटः ॥ ३० ॥ इत्येतद्गर्भदुःखं हि प्राणिनां परिकीर्तितम् ॥ चरस्थिराणां सर्वेपात्मामगर्भानुरूपतः ॥ ३१ ॥ गर्भात्कोटिगुणं दुःखं योनियंत्रप्रपीडनात् ॥ संमूर्च्छितस्य जायेत जायमानस्य देहिनः ॥३२॥ शरवत्पीडचमानस्य यंत्रेणैव समंततः ॥ शिरसि ताडचमानस्य पापमुद्गरकेण च ॥ ३३ ॥ गर्भान्निष्क्रम्यमाणस्य प्रबलैः सूतिमारुतैः ॥ जायते सुमहद्दुःखं परित्राणमविंदतः ॥ ३४ ॥ यंत्रेण पीडिता यद्वन्निःसाराः स्युस्तिलेक्षवः ॥ तथा शरीरं निःसारं योनियंत्रप्रपीडितम् ॥३५॥ अस्थिमज्जात्वचामांसस्नायुबंधेन यंत्रितम् ॥ रक्तमांसमृदा युक्तं विण्मूत्रद्रवलेपनम् ॥ ३६ ॥ केशलोमतृणाच्छन्नं रोगायतनमातुरम् ॥ वदनैकमहद्द्वारं दंतोष्ठकविभूषितम् ॥ ३७ ॥ ओष्ठद्वयकपाटं च दन्तजिह्वार्गलान्वितम् ॥ नाडीस्वेदप्रवाहं च कफपित्तपरिप्लुतम् ॥ ३८ ॥ जराशोकसमाविष्टं कालचक्रानले स्थितम् ॥ कामक्रोधसमाक्रांतं व्यसनैश्चोपमर्दितम् ॥ ३९ ॥ भोगतृष्णातुरं मूढं रागद्वेषवशानुगम् ॥ संवर्तितांगप्रत्यंगं जरायुपरिवेष्टितम् ॥ ४० ॥ संकटेनाविविक्तेन योनिद्वारेण निर्गतम् ॥ विण्मूत्ररक्तसिक्तांगं पत्केशाच्च समुद्भवम् ॥ ४१ ॥ इति देहगृहं प्रोक्तं नित्यस्यानित्यमात्मनः ॥ अविशुद्धं विशुद्धस्य कर्मबंधविनिर्मितम् ॥ ४२ ॥ शुक्रशोणितसंयोगाद्देहः संजायते यतः ॥ नित्यं विण्मूत्रपूर्णश्च तेनायमशुचिः स्मृतः ॥ ४३ ॥ यथांतर्विष्ठया पूर्णः शुचिः स्यान्न बहिर्घटः ॥ यत्नतः शोध्यमानोऽपि देहोऽयमशुचिस्तथा ॥ ४४ ॥ संप्राप्यात्र पवित्राणि पंचगव्यहवींपि च ॥ अशुचित्वं क्षणाच्चापि किमन्यद्वस्तुविंदवः ॥ ४५ ॥ देहः संशोध्यमानोऽपि पञ्चगव्यकुशांबुभिः ॥ घृष्यमाण इवांगारो निर्मलत्वं न गच्छति ॥ ४६ ॥ स्रोतांसि यस्य सततं प्रवहंति गिरेरिव ॥ कफमूत्रपुरीषाद्यैः स देहः शुद्ध्यते कथम् ॥ ४७ ॥ सर्वाशुचिनिधानस्य शरीरस्य न विद्यते ॥ शुचिरेकः प्रदेशोऽपि विट्पूर्णः स्यंदते किल ॥ ४८ ॥ कायः सुगंधधूपाद्यैर्यत्नेनापि तु संस्कृतः ॥ न जहाति स्वकं भावं श्वपुच्छमिव नामितम् ॥ ४९ ॥ यथा जात्यैव कृष्णो हि न शुक्लः स्यादुपायतः ॥ सशोध्यमानाऽपि तथा भवेन्मूर्तिर्न निर्मला ॥ ५० ॥ जिघ्रन्नपि स्वदुर्गंधं पश्यन्नपि मलं स्वकम् ॥ न विरज्जति लोकोऽयं पीडयन्नपि नासिकाम् ॥ ५१ ॥ अहो मोहस्य माहात्म्यं येन व्यामोहितं जगत् ॥

१ तुलास्तम्भम्-इ० पा० । २ गवाक्षाष्टकभूषितम्-इ० पा० । ३ कृष्णोर्णा न शुक्ला स्यादुपायतः-इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिघ्रन्पश्यन्स्वकं दोषं कायस्य न विरज्जते ॥ ५२ ॥ एवमेतच्छरीरं हि निसर्गादशुचि ध्रुवम् ॥ त्वङ्मात्रसारं निःसारं कदलीसारसंनिभम् ॥५३॥
गर्भस्थस्य स्मृतिर्यासीत्सा जातस्य प्रणश्यति ॥ संमूर्च्छितस्य दुःखेन योनियंत्रप्रपीडनात् ॥ ५४ ॥ बाह्येन वायुना चास्य मोहसंज्ञेन देहिनः॥
स्पृष्टमात्रेण घोरेण ज्वरः समुपजायते ॥ ५५ ॥ तेन ज्वरेण महता महामोहः प्रजायते ॥ संमूढस्य स्मृतिभ्रंशः शीघ्रं संजायते पुनः ॥ ५६ ॥
स्मृतिभ्रंशात्तु तस्येह पूर्वकर्मवशेन च ॥ रतिः संजायते तूर्णं जंतोस्तत्रैव जन्मनि ॥ ५७ ॥ रक्तो मूढस्य लोकोऽयमकार्ये संप्रवर्तते ॥ न चात्मानं
विजानाति न परं विन्दते च सः ॥ ५८ ॥ न श्रूयते परं श्रेयः सति चक्षुषि नेक्षते ॥ समे पथि शनैर्गच्छन्स्खलतीव पदेपदे ॥ ५९ ॥ सत्यां
बुद्धौ न जानाति बोध्यमानो बुधैरपि ॥ संसारे क्लिश्यते तेन रागलोभवशानुगः ॥ ६० ॥ गर्भस्मृतेरभावेन शास्त्रमुक्तं महर्षिभिः ॥ तद्दुःखमथना
र्थाय स्वर्गमोक्षप्रसाधकम् ॥ ६१ ॥ ये संत्यस्मिन्परे ज्ञाने सर्वकामार्थसाधके ॥ न कुर्वंत्यात्मनः श्रेयस्तदत्र महदद्भुतम् ॥ ६२ ॥ अव्यक्तेंद्रियवृ
त्तित्वाद्बाल्ये दुःखं महत्पुनः ॥ इच्छन्नपि न शक्नोति कर्तुं वक्तुं च सत्क्रियाम् ॥ ६३ ॥ दंतोत्थाने महद्दुःखं मौलेन व्याधिना तथा ॥ बालरोगैश्च
विविधैः पीडा बालग्रहैरपि ॥ ६४ ॥ तृड्बुभुक्षापरीतांगः क्वचित्तिष्ठति रारटन् ॥ विण्मूत्रभक्षणमपि मोहाद्बालः समाचरेत् ॥ ६५ ॥
कौमारे कर्णवेधेन मातापित्रोश्च ताडनात् ॥ अक्षराध्ययनात्पुंसां दुःखं स्याद्गुरुशासनात् ॥ ६६ ॥ प्रसन्नेंद्रियवृत्तिश्च कामरागप्रपीडनात् ॥
रोगोद्धतस्य सततं कुतः सौख्यं च यौवने ॥ ६७ ॥ ईर्ष्यया च महद्दुःखं मोहाद्रक्तस्य जायते ॥ नेत्रस्य कुपितस्यैव रागो दुःखाय केवलम् ॥६८॥
न रात्रौ विंदते निद्रां कोपाग्निपरिपीडितः ॥ दिवा वापि कुतः सौख्यमर्थोपार्जनचिंतया ॥ ६९ ॥ स्त्रीष्वायासितदेहस्य ये पुंसः शुक्रबिंदवः ॥
न ते सुखाय मंतव्याः स्वेदजा इव बिंदवः ॥ ७० ॥ क्रिमिभिस्तुद्यमानस्य कुष्ठिनः कामिनस्तथा ॥ कण्डूयनाग्नितापेन यद्भवेत्स्त्रीषु तद्धि तत् ॥
॥ ७१ ॥ यादृशं विंदते सौख्यं गंडान्वयविनिर्गमे ॥ तादृशं स्त्रीषु मंतव्यं नाधिकं तासु विद्यते ॥७२॥ गंडस्य वेदना यद्वत्स्फुटितस्य निवर्तते ॥
तद्वत्स्त्रीष्वपि मंतव्यं न सौख्यं परमार्थतः ॥ ७३ ॥ विण्मूत्रस्य समुत्सर्गात्सुखं भवति यादृशम् ॥ तादृशं तेषु विज्ञेयं मूढैः कल्पितमन्यथा ॥
॥७४॥ नारीष्वशुचिभूतासु सर्वदोषाश्रयासु च ॥ नाणुमात्रकमप्येवं सुखमस्ति विचारतः ॥७५॥ सन्मानमपमानेन वियोगेन सुसंगमः ॥ यौवनं
जरया ग्रस्तं किं सौख्यमनुपद्रवम् ॥ ७६ ॥ वलीपलितखालित्यैः शिथिलीकृतविग्रहम् ॥ सर्वक्रियास्वशक्तं च जरया जर्जरीकृतम् ॥ ७७ ॥

१ विदुः—इ० पा० । २ न च दृश्यताम्—इ० पा० । ३ क्वचित्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्त्रीपुंसयोर्न्नवं रूपं तदान्योन्यं प्रियं पुरा ॥ तदेव जरया ग्रस्तमुभयोरपि न प्रियम् ॥७८॥ अपूर्ववत्स्वमात्मानं जरया परिवर्तितः ॥ यः पश्यन्नपि रज्येत कोऽन्यस्तस्मादचेतनः ॥ ७९ ॥ जराभिभूतः पुरुषः पत्नीपुत्रादिबांधवैः ॥ अशक्तत्वाद्दुराचारैर्भृत्यैश्च परिभूयते ॥ ८० ॥ धर्ममर्थं च कामं च मोक्षं च न जरी यतः ॥ शक्तः साधयितुं तस्माच्छरीरमिदमात्मनः ॥ ८१ ॥ वातपित्तकफादीनां वैषम्यं व्याधिरुच्यते ॥ तस्माद्व्याधिमयं ज्ञेयं शरीरमिदमात्मनः ॥ ८२ ॥ वाताद्यव्यतिरिक्तत्वाद्व्याधीनां पञ्जरस्य च ॥ रोगैर्नानाविधैर्यानि देहदुःखान्यनेकधा ॥ तानि च स्वात्मवेद्यानि किमन्यत्कथयाम्यहम् ॥ ८३ ॥ एकोत्तरं मृत्युशतमस्मिन्देहे प्रतिष्ठितम् ॥ तत्रैकः कालसंयुक्तः शेषाश्चागन्तवः स्मृताः ॥ ८४ ॥ ये त्विहागंतवः प्रोक्तास्ते प्रशाम्यंति भेषजैः ॥ जपहोमप्रदानैश्च कालमृत्युर्न शाम्यति ॥ ८५ ॥ यदि चापि न मृत्युः स्याद्विषमद्यादशंकितः ॥ न संति पुरुषे तस्मादपमृत्युविभीतयः ॥ ८६ ॥ विविधा व्याधयः शस्त्रं सर्पाद्याः प्राणिनस्तथा ॥ विषाणि जंगमाद्यानि मृत्योर्द्वाराणि देहिनाम् ॥ ॥ ८७ ॥ पीडितं सर्वरोगाद्यैरपि धन्वन्तरिः स्वयम् ॥ स्वस्थीकर्तुं न शक्नोति प्राप्तमृत्युं च देहिनम् ॥ ८८ ॥ नौषधं न तपो दानं न मंत्रा न च बांधवाः ॥ शक्नुवंति परित्रातुं नरं कालेन पीडितम् ॥ ८९ ॥ रसायनतपोजप्यैर्योगसिद्धैर्महात्मभिः ॥ कालमृत्युरपि प्राज्ञैस्तीर्यते नालसैर्न्नरैः ॥ ९० ॥ नास्ति मृत्युसमं दुःखं नास्ति मृत्युसमं भयम् ॥ नास्ति मृत्युसमस्त्रासः सर्वेषामेव देहिनाम् ॥ ९१ ॥ सद्भार्यापुत्रमित्राणि राज्यैश्वर्यधनानि च ॥ अवद्धानि च वैराणि मृत्युः सर्वाणि कृन्तति ॥ ९२ ॥ हे जनाः किं न पश्यध्वं सहस्रस्यापि मध्यतः ॥ जनाः शतायुषः पञ्च भवंति न भवंति च ॥ ९३ ॥ अशीतिका विपद्यन्ते केचित्सप्ततिका नराः ॥ परमायुषं स्थितं षष्टिस्तच्चैवानिश्चितं पुनः ॥ ९४ ॥ यस्य यावद्भवेदायुर्देहिनां पूर्वकर्मभिः ॥ तस्यार्द्धमायुषो रात्रिर्हरते मृत्युरूपिणी ॥ ९५ ॥ बालभावेन मोहेन वार्द्धक्ये जरया तथा ॥ वर्षाणां विंशतिर्याति धर्मकामार्थवर्जिता ॥ ९६ ॥ आगंतुकैर्भयैः पुंसां व्याधिशोकैरनेकधा ॥ भक्ष्यतेऽर्द्धं च तत्रापि यच्छेषं तच्च जीवति ॥ ९७ ॥ जीवितांते च मरणं महाघोरमवाप्नुयात् ॥ जायते जन्मकोटीषु मृतः कर्मवशात्पुनः ॥ ९८ ॥ देहभेदेन यः पुंसां वियोगः कर्मसंक्षयात् ॥ मरणं तद्विनिर्दिष्टं नान्यथा परमार्थतः ॥ ९९ ॥ महातपप्रविष्टस्य च्छिद्यमानेषु मर्मसु ॥ यद्दुःखं मरणे जंतोर्न तस्येहोपमा क्वचित् ॥ १०० ॥ हा तात मातः कांतेति रुदन्नेवं हि दुःखितः ॥ मंडूक इव सर्पेण ग्रस्यते मृत्युना जनः ॥ १०१ ॥ बांधवैः संपरिष्वक्तः प्रियैः स परिवारितः ॥

१ चातिवादाश्च–इ० पा० । २ योनिकोटीपु–इ० पा० । ३ क्रन्दन्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निःश्वसन्दीर्घमुष्णं च मुखेन परिशुष्यति ॥ १०२ ॥ क्रन्दते चैव खट्वायां परिवर्तन्मुहुर्मुहुः ॥ संमूढः क्षिपतेऽत्यर्थं हस्तपादावितस्ततः ॥१०३॥ खट्वातो कांक्षते भूमिं भूमेः खट्वां पुनर्महीम् ॥ विवशस्त्यक्तलज्जश्च मूत्रविष्ठानुलेपितः ॥ १०४ ॥ याचमानश्च सलिलं शुष्ककण्ठोष्ठतालुकः ॥ चिंतयानश्च वित्तानि कस्यैतानि मृते मयि ॥ १०५ ॥ पश्चावटान्खन्यमानः कालपाशेन कर्षितः ॥ म्रियते पश्यतामेव जनानां घुर्घुरस्वनः ॥ ॥ १०६ ॥ जीवस्तृणजलौकेव देहाद्देहं विशेत्क्रमात् ॥ संप्राप्योत्तरकालं हि देहं त्यजति पौर्वकम् ॥ १०७ ॥ मरणात्प्रार्थनादुःखमधिकं हि विवेकिनः ॥ क्षणिकं मरणाद्दुःखमनंतं प्रार्थनाकृतम् ॥ १०८ ॥ जगतां पतिरर्थित्वाद्विष्णुर्वामनतां गतः ॥ अधिकः कोऽपरस्तस्माद्यो न यास्यति लाघवम् ॥ १०९ ॥ ज्ञातं मयेदमधुना मतं भवति यद्गुरु ॥ न परं प्रार्थयेद्भूयस्तृष्णा लाघवकारणम् ॥ ११० ॥ आदौ दुःखं तथा मध्ये दुःखमंते च दारुणम् ॥ निसर्गात्सर्वभूतानामिति दुःखपरंपरा ॥ १११ ॥ वर्तमानान्यतीतानि दुःखान्येतानि यानि तु ॥ नरा न भावयं त्यज्ञा न विरज्यंति तेन ते ॥ ११२ ॥ अत्याहारान्महद्दुःखमनाहारान्महत्तमम् ॥ तुलितं जीवितं कष्टं मन्येऽप्येवं कुतः सुखम् ॥ ११३ ॥ बुभुक्षा सर्वरोगाणां व्याधिः श्रेष्ठतमः स्मृतः ॥ स चान्नौषधिलेपेन क्षणमात्रं प्रशाम्यति ॥ ११४ ॥ क्षुद्व्याधिवेदनातुल्या निःशेषबलकर्तनी ॥ तयाभिभूतो म्रियते यथान्यैर्व्याधिभिर्न हि ॥११५॥ तद्रसोपि हि कामाद्वा जिह्वाग्रे परिवर्तते ॥ तत्क्षणाद्धार्द्धकालेन कंठं प्राप्य निवर्तते ॥११६॥ इति क्षुद्व्याधितप्तानामन्नमौषधवत्स्मृतम् ॥ न तत्सुखाय मन्तव्यं परमार्थेन पंडितैः ॥ ११७ ॥ मृतोपमो यश्चेक्षेत सर्वकार्यविवर्जितः ॥ तत्रापि च कुतः सौख्यं तमसाच्छादितात्मनः ॥ ११८ ॥ प्रबोधेऽपि कुतः सौख्यं कार्यैरुपहतात्मनः ॥ कृषिगोरक्षवाणिज्यसेवाध्वादिपरिश्रमैः ॥११९॥ प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने तु बुभुक्षया ॥ तृप्ताः कामेन बाध्यन्ते जंतवोऽपि विनिद्रया ॥ १२० ॥ अर्थस्योपार्जने दुःखमर्जितस्यापि रक्षणे ॥ आये दुःखं व्यये दुःखमर्थेभ्यश्च कुतः सुखम् ॥ १२१ ॥ चौरेभ्यः सलिलादग्नेः स्वजनात्पार्थिवादपि ॥ भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ १२२ ॥ खे यातं पक्षिभिर्मांसं भक्ष्यते श्वापदैर्भुवि ॥ जले च भक्ष्यते मत्स्यैस्तथा सर्वत्र वित्तवान् ॥ १२३ ॥ विमोहयंति संपत्सु तापयंति विपत्तिषु ॥ खेदयंत्यर्जनाकाले कदा ह्यर्थाः सुखावहाः ॥ १२४ ॥ यथार्थपतिरुद्विग्नो यश्च सर्वार्थनिःस्पृहः ॥ यतश्चार्थपतिर्दुःखी सुखी सर्वार्थनिःस्पृहः ॥ १२५ ॥ शीतेन दुःखं हेमंते ग्रीष्मे तापेन दारुणम् ॥ वर्षासु वातवर्षाभ्यां कालेऽप्येवं कुतः सुखम् ॥ १२६ ॥ विवाहविस्तरे

१ मरणात्प्राक्—कर्णनासिकामुखानि हस्तेन चालयतीत्यवटखननापदेशः । २ कथम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुःखं तद्गर्भोद्वहने पुनः ॥ प्रसवेऽपत्यदोषैश्च दुःखं दुःखादिकर्मभिः ॥ १२७ ॥ दन्ताक्षिरोगैः पुत्रस्य हा कष्टं किं करोम्यहम् ॥ गावो नष्टाः कृपिर्भग्ना वृषाः क्वापि पलायिताः ॥ १२८ ॥ अमी प्राघूर्णकाः प्राप्ता भक्तच्छेदे च मे गृहे ॥ बालापत्या च मे भार्या कः करिष्यति रंधनम् ॥ ॥ १२९ ॥ प्रदानकाले कन्यायाः कीदृशश्च वरो भवेत् ॥ इति चिन्ताभिभूतानां कुतः सौख्यं कुटुंबिनाम् ॥ १३० ॥ कुटुंबचिंताकुलितस्य पुंसः श्रुतं च शीलं च गुणाश्च सर्वे ॥ अपक्वकुंभे निहिता इवापः प्रयांति देहेन समं विनाशम् ॥१३१॥ राज्येपि च महद्दुःखं संधिविग्रहचिंतया ॥ पुत्रादपि भयं यत्र तत्र सौख्यं हि कीदृशम् ॥१३२॥ सजातीयाद्भयः प्रायः सर्वेषामेव देहिनाम् ॥ एकद्रव्याभिलाषित्वाच्छुनामिव परस्परम् ॥ ॥ १३३ ॥ नाप्रधृष्यबलः कश्चिन्नृपः ख्यातोस्ति भूतले ॥ निखिलं यस्तिरस्कृत्य सुखं तिष्ठति निर्भयः ॥ १३४ ॥ आ जन्मनः प्रभृति दुःखमयं शरीरं कर्मात्मकं तव मया कथितं नरेन्द्र ॥ दानोपवासनियमैश्च कृतैस्तदेव सर्वोपभोगसुखभाग्भवतीह पुंसाम् ॥ १३५ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे संसारदोषाख्यानं नाम चतुर्थोऽध्यायः॥ ४ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अधोधः पतनं पुंसामधःकर्म प्रकीर्तितम् ॥ नरकार्णवघोरेषु यातना पापमुच्यते ॥ १ ॥ अधर्मभेदा विज्ञेयाश्चित्तवृत्तिप्रभेदतः ॥ स्थूलाः सूक्ष्माः सुसूक्ष्माश्च कोटिभेदैरनेकधा ॥ २ ॥ तत्र ये पापनिचयाः स्थूला नरकहेतवः ॥ ते समासेन कथ्यंते मनोवाक्कायसाधनाः ॥ ३ ॥ परस्त्रीष्वथ संकल्पश्चेतसानिष्टचिंतनम् ॥ अकार्याभिनिवेशश्च चतुर्धा कर्म मानसम्॥ ४ ॥ अनिबद्धप्रलापित्वमसत्यं चाप्रियं च यत् ॥ परापवादपैशुन्यं चतुर्धा कर्म वाचिकम् ॥ ५ ॥ अभक्ष्यभक्षणं हिंसा मिथ्या कामस्य सेवनम् ॥ परस्वानामुपादानं चतुर्द्धा कर्म कायिकम् ॥ ६ ॥ इत्येतद्द्वादशविधं कर्म प्रोक्तं ससाधनम् ॥ तेषां भेदं पुनर्वच्मि येषां फलमनंतकम् ॥ ७ ॥ ये द्विषंति महादेवं संसारार्णवतारणम् ॥ समस्तपातकोपेतास्ते यान्ति नरकाग्निषु ॥८॥ ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ॥ महापातकिनश्चैते तत्संसर्गी च पंचमः ॥ ९ ॥ क्रोधाद्द्वेषाद्भयाल्लोभाद्ब्राह्मणं विशसंति[2]ये ॥ प्राणांतिको महादोषो ब्रह्मघ्नास्ते प्रकीर्तिताः ॥१०॥ ब्राह्मणं च समाहूय याचमानमकिञ्चनम् ॥ पश्चान्नास्तीति तं ब्रूयात्स चैवं ब्रह्महा स्मृतः ॥ ११ ॥ यस्तु विद्याभिमानेन नित्यं जयति वै द्विजान् ॥ समासीनः सभामध्ये ब्रह्महा सोऽपि कीर्तितः॥१२॥ मिथ्यागुणैः स्वमात्मानं नयत्युत्कर्षणं बलात्॥गुरूणां च विरुद्धो यः स चैव ब्रह्महा स्मृतः॥१३॥क्षुत्तृट्संतप्तदेहानां द्विजानां भोक्तुमिच्छताम्॥समाचरति यो विघ्नं तमाहुर्ब्रह्मघातकम्॥१४॥

१ सर्वोपभोगसुभगम्–इ० पा० । २ सदा विष्णुम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पिशुनः सर्वलोकानां छिद्रान्वेषणतत्परः ॥ उद्वेगजननः क्रूरः स चैव ब्रह्महा स्मृतः ॥ १५ ॥ गवां तृष्णाभिभूतानां जलार्थमुपसर्पताम् ॥ समाचरति यो विघ्नं स चैव ब्रह्महा स्मृतः ॥ १६ ॥ परदोषमभिज्ञाय नृपकर्णे करोति यः ॥ पापीयान्पिशुनः क्षुद्रः स चैव ब्रह्महा स्मृतः ॥ १७ ॥ देवद्विजगवां भूमिं पूर्वभुक्तां हरेत्तु यः ॥ प्रनष्टामपि कालेन तमाहुर्ब्रह्मघातकम् ॥ १८ ॥ द्विजवित्तापहरणे न्यायतः समुपार्जिते ॥ ब्रह्महत्यासमं ज्ञेयं पातकं नात्र संशयः ॥ १९ ॥ अग्निहोत्रपरित्यागो यस्तु याज्ञिककर्मणाम् ॥ मातापितृपरित्यागः कूटसाक्ष्यं सुहृद्वधः ॥ २० ॥ गवां मार्गे वने चाग्निं पुरे ग्रामे च दीपयेत् ॥ इति पापानि घोराणि सुरापानसमानि तु ॥ २१ ॥ हीनस्वहरणे चापि नरस्त्रीगजवाजिनाम् ॥ गोभूरजतरत्नानामौषधीनां रजस्य च ॥ २२ ॥ चंदनागरुकर्पूरकस्तूरीखण्डवाससाम् ॥ हस्ते न्यस्यापहरणं रुक्मस्तेयसमं स्मृतम् ॥ २३ ॥ कन्यानां वरयोग्यानामदानं सदृशे वरे ॥ पुत्रमित्रकलत्रेषु गमनं भगिनीषु च ॥ २४ ॥ कुमारीसाहसं घोरमन्त्यजस्त्रीनिषेवणम् ॥ अवर्णायाश्च गमनं गुरुतल्पसमं स्मृतम् ॥ २५ ॥ महापातकतुल्यानि पापान्युक्तानि यानि तु ॥ तानि पातकसंज्ञानि तद्वदाम्युपपातकम् ॥ २६ ॥ द्विजार्थं च प्रतिज्ञाय न प्रयच्छति यः पुनः ॥ तस्मान्नरपते विघ्नतुल्यं तदुपपातकम् ॥ २७ ॥ द्विजद्रव्यापहरणं मर्यादाया व्यतिक्रमः ॥ अतिकोपश्च मानश्च दांभिकत्वं कृतघ्नता ॥ २८ ॥ अत्यंतविषयासक्तिः कार्पण्यं श्रेष्ठमत्सरः ॥ परदारापहरणं साधुकन्याविदूषणम् ॥ २९ ॥ परिवित्तिः परीवेत्ता यया च परिविद्यते ॥ तयोर्दानं च कन्यायास्तयो रेव च याजनम् ॥ ३० ॥ पुत्रमित्रकलत्राणामभावे स्वामिनस्तथा ॥ शिष्टानां चैव संन्यासः सहजानां तपस्विनाम् ॥ ३१ ॥ भंगश्च धर्मकृत्यानां सहायानां विनाशनम् ॥ पीडामाश्रमसंस्थानान्नाचरेत्त्वल्पिकामपि ॥ ३२ ॥ स्वभृत्यपरिवर्गस्य पशुधान्यधनस्य च ॥ कुप्यधान्यपशुस्तेयमयाच्यानां च याचनम् ॥ ३३ ॥ गवां क्षत्रियवैश्यानां स्त्रीशूद्राणां विशेषतः ॥ यज्ञारामतडागानां दारापत्यस्य विक्रयः ॥ तीर्थयात्रोपवासानां व्रतायतनकर्मणाम् ॥ ३४ ॥ स्त्रीधनान्युपजीवंति स्त्रीभिरत्यंतनिर्जिताः ॥ अरक्षणं च नारीणां मद्यपस्त्रीनिषेवणम् ॥ ३५ ॥ ऋणानामप्रदानं च धान्यवृद्ध्युपजीविनाम् ॥ निंदिताच्च धनादानमपण्यानां च विक्रयः ॥ ३६ ॥ विषमारणमंत्राणां प्रयोगो मूलकर्मणाम् ॥ उच्चाटनाविचारश्च गरविक्षेपणक्रिया ॥ ३७ ॥ जिह्वासमुपभोगार्थं यस्यारम्भः स्वकर्मसु ॥ मूल्येनाध्यापयेद्यश्च मूल्येनाधीयते च ये ॥ ३८ ॥ व्रात्यता व्रतसंत्यागः सर्वाहारनिषेवणम् ॥ असद्दाराभिगमनं शुष्कतर्कावलंबनम् ॥ ३९ ॥ देवाग्निसाधु

१ पायं हरणे–इ० पा० । २ चन्दनागुरुकर्पूरकस्तूरीपट्टवाससाम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साध्वीनां निंदा गोब्राह्मणस्य च ॥ प्रत्यक्षं वा परोक्षं वा राज्ञां मण्डलिकामपि ॥ दुःशीला नास्तिकाः पापाः सर्वशून्यस्य वादिनः ॥ ४० ॥ पर्वकाले दिवा चैव वियोनौ पशुयोनिषु ॥ रजस्वलानां योनौ च मैथुनं च समाचरेत् ॥४१॥ स्त्रीपुत्रमित्रसंप्रीते ग्रासान्नच्छेदकाश्च ये ॥ जनस्याप्रियवक्तारो धूर्ताः समयभेदिनः ॥४२॥ भेत्ता तडागचक्राणां संक्रमाणां रथस्य च ॥ एकपंक्तिस्थितानां च पाकभेदं करोति यः ॥४३॥ इत्येतैस्ते नराः पापैरुपपातकिनः स्मृताः ॥ युक्तास्तदूनकैः क्षुद्रैः पापैः पापतराः स्मृताः ॥ ४४ ॥ ये गोब्राह्मणकन्यानां स्वामिमित्रतपस्विनाम् ॥ अंतरं यांति कार्येषु ते नरा नारकाः स्मृताः ॥ ४५ ॥ परश्रिया ये तप्यंते ये परद्रव्यसूचकाः ॥ परव्यापारनिरताः परस्त्रीनरदूपकाः ॥ ४६ ॥ द्विजाय दुःखं यः कुर्यात्प्रकारैर्बहुभिः सदा ॥ सेवते यो द्विजः शूद्रां सुरां जिघ्रति कामतः ॥ ४७ ॥ ये पानाभिरताः क्रूरा ये च हिंसाप्रिया नराः ॥ वित्तार्थं ये च कुर्वंति दानयज्ञादिकां क्रियाम् ॥ ४८ ॥ गोष्ठाग्निजलरथ्यासु तरुच्छायामठेषु च ॥ त्यजंत्यमेध्यं पुरुषा आरामायतनेषु च ॥ ॥ ४९ ॥ मद्यपानरता नित्यं गानवाद्यरता नराः ॥ केलीकलाभुजंगाश्च रंध्रान्वेषणतत्पराः ॥ ५० ॥ वंशेषु काशकाष्ठैश्च शुभैः शंकुभिरेव वा ॥ ये मार्गान्समुपघ्नंति परस्त्रीराहरंति च ॥ ५१ ॥ कूटशासनहर्तारः कूटकर्मक्रियारताः ॥ कूटयुद्धाश्च शस्त्रेण कूटसंव्यवहारिणः ॥ ५२ ॥ धनुषां शल्यशस्त्राणां यः कर्ता यश्च विक्रयी ॥ निर्दयोऽतीव भृत्येषु पशूनां दमकश्च यः ॥ ५३ ॥ मिथ्या प्रवदतो वाक्यमाकर्णयति यः शनैः ॥ स्वामिमित्रगुरुद्रोही मायावी चपलः शठः ॥ ५४ ॥ ये भार्यापुत्रमित्राणि बालवृद्धकृशातुरान् ॥ भृत्यानतिथिबन्धूंश्च प्रबाधन्ते बुभुक्षया ॥ ५५ ॥ यः स्वयं मिष्टमश्नाति विप्रायान्यत्प्रयच्छति ॥ वृथापाकः स विज्ञेयो ब्रह्मवादिषु गर्हितः ॥ ५६ ॥ नियमान्स्वयमादाय ये त्यजंत्यजितेंद्रियाः ॥ प्रव्रज्यावासिनो ये च रहस्यानां च भेदकाः ॥ ५७ ॥ ताडयंति च वेगाद्ये शपंति च मुहुर्मुहुः ॥ दुर्बलांश्च न पुष्णंति पुनस्तान्वाहयंति च ॥ ५८ ॥ पीडयंत्यतिभारेण सक्षतान्वाहयंति च ॥ सार्द्धयामादुपरितः संयुक्तेषु च भुंजते ॥ ५९ ॥ ये भग्नक्षतरोगार्तान्स्वगोरूपान्बुभुक्षया ॥ न पालयंति यत्नेन ते गोघ्ना नारका नराः ॥ ६० ॥ वृषाणां वृषणान्येव पापिष्ठा गालयंति ये ॥ वाहयंति च गां वध्यां ते महानारकाः स्मृताः ॥ ६१ ॥ आश्रमं समनुप्राप्तं क्षुत्तृष्णाश्रमपीडितम् ॥ येऽतिथिं नाभिमन्यंते ते वै निरयगामिनः ॥ ६२ ॥ अनाथं विकलं दीनं बालं वृद्धं कृशातुरम् ॥ नानुकंपंति ये मूढास्ते यान्ति निरयार्णवम् ॥ ६३ ॥ अजाविको माहिपिकः



१ परश्रिया ये ह्यप्यन्ते–इ० पा० । २ दद्यात्–इ० पा० । ३ चाघ्राति–इ० पा० । ४ हिंसापराः–इ० पा० । ५ पंक्त्यर्थम्–इ० पा० । ६ व्रतम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सामुद्रो वृषलीपतिः ॥ शूद्रविट्क्षत्रवृत्तिश्च नारकी स्याद्द्विजाधमः ॥ ६४ ॥ शिल्पिनः कारुका वैद्या हेमकारा नटा द्विजाः ॥ कृतकौक्षेय संयुक्तास्तथान्ये नारकाः स्मृताः ॥ ६५ ॥ यश्चोदितमतिक्रम्य स्वेच्छया वा हरेत्करम् ॥ नरके तु स पच्येत यश्च दंडरुचिर्भवेत् ॥ ६६ ॥ उत्कोचकैरधिकृतैस्तस्करैश्च प्रपीड्यते ॥ यस्य राज्ञः प्रजा रुष्टा पच्यते नरकेषु सः ॥ ६७ ॥ ये द्विजाः प्रतिगृह्णंति नृपस्यान्याययवर्तिनः ॥ प्रयांति तेपि घोराणि नरकाणि न संशयः ॥६८॥ पारदारिकचौराणां यत्पापं पार्थिवस्य तत् ॥ भवेदरक्षतस्तस्माद्धोरस्तस्य प्रतिग्रहः ॥ ६९ ॥ अचौरं चौरवत्पश्येच्चोरं वाऽचौररूपवत् ॥ अविचार्य नृपस्तस्माद्घातयन्नरकं व्रजेत् ॥ ७० ॥ घृततैलान्नपानानि मधुमांससुरासवम् ॥ गुडेक्षुक्षारशाकानि दधिमूलफलानि च ॥ ७१ ॥ तृणं काष्ठं पुष्पपत्रमौषधं कांस्यभाजनम् ॥ उपानच्छत्रशकटमासनं शयनांबरम् ॥ ७२ ॥ ताम्रं सीसं त्रपुं काचं शंखाद्यं च जलोद्भवम् ॥ वार्क्षं वा वैणवाद्यं वा गृहोपस्कराणि च ॥ ७३ ॥ ऊर्णाकार्पासकौशेयभंगपट्टोद्भवानि च ॥ स्थूलसूक्ष्माणि वस्त्राणि ये च लोभाद्धरंति च ॥ ७४ ॥ एवमादीनि चान्यानि द्रव्याणि विविधानि च ॥ नरकाणि ध्रुवं यांति नरा वा नात्र संशयः ॥ ७५ ॥ यद्वा तद्वा परद्रव्यमपि सर्षपमात्रकम् ॥ अपहृत्य नरो याति नरकं नात्र संशयः ॥ ७६ ॥ एवमाद्यैर्नरः पापैरुत्क्रांतेः समनंतरम् ॥ शरीरं यातनार्थाय पूर्वाकारमवाप्नुयात् ॥ ७७ ॥ यमलोकं व्रजेत्तेन शरीरेण यमाज्ञया ॥ यमदूतैर्महाघोरैर्नीयमानः सुदुःखितः ॥ ७८ ॥ तिर्यङ्मानुषदेहानामधर्मनिरतात्मनाम् ॥ धर्मराजः स्मृतः शास्ता सुघोरैर्विविधैर्वधैः ॥ ७९ ॥ विनयाचारयुक्तानां प्रमादात्स्खलितात्मनाम् ॥ प्रायश्चित्तै गुरुः शास्ता न च तैर्दृश्यते यमः ॥ ८० ॥ पारदारिकचौराणामन्यायव्यवहारिणाम् ॥ नृपतिः शासकस्तेषां प्रच्छन्नानां च धर्मराट् ॥ ८१ ॥ तस्मात्कृतस्य पापस्य प्रायश्चित्तं समाचरेत् ॥ नाभुक्तस्यान्यथा नाशः कल्पकोटिशतैरपि ॥ ८२ ॥ यः करोति स्वयं कर्म कारयेद्वापि मोदयेत् ॥ कायेन मनसा वाचा तस्य चाधोगतिः फलम् ॥ ८३ ॥ इति संक्षेपतः प्रोक्ताः पापभेदाः ससाधनाः ॥ कथ्यंते गतयश्चित्रा नराणां पापकर्मणाम् ॥ ८४ ॥ वाक्कायचित्तजनितैर्बहुभेदभिन्नैः कृत्यैः शुभाशुभफलोदयहेतुभूतैः ॥ भास्वत्सुरेशभुवनं नरकाननेकान्संप्राप्नुवंति मनुजा मनुजेंद्रचन्द्र ॥ ८५ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि पापभेदाख्यानं नाम पञ्चमोऽध्यायः ॥ ५ ॥ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथैभिः पातकैर्यांति यमलोकं चतुर्विधैः ॥ संत्रासजननं घोरं विवशाः सर्वदेहिनः ॥ १ ॥ गर्भस्थैर्जायमानैश्च बालैस्तरुणमध्यमैः ॥ पुंस्त्री

१ मांसिदः—इ० पा० । २ मर्जित—इ० पा० । ३ सर्वजन्तवः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नपुंसकैर्वृद्धैर्ज्ञातव्यं सर्वजंतुभिः ॥ २ ॥ शुभाशुभफलं तत्र देहिनां प्रविचार्यते ॥ चित्रगुप्तादिभिः सभ्यैर्मध्यस्थैः सर्वदर्शिभिः ॥ ३ ॥ न तेऽत्र प्राणिनः संति ये न यांति यमक्षयम् ॥ अवश्यं हि कृतं कर्म भोक्तव्यं तद्विचारितम् ॥ ४ ॥ तत्र ये शुभकर्माणः सौम्यचित्ता दयान्विताः ॥ ते नरा यांति सौम्येन पथा यमनिकेतनम् ॥ ५ ॥ यः प्रदद्याद्द्विजेन्द्राणामुपानत्काष्ठपादुकाम् ॥ स वराश्वेन महता सुखं याति यमालयम् ॥ ६ ॥ छत्रदानेन गच्छंति यथा छत्रेण देहिनः ॥ दिव्यवस्त्रपरीधाना यांति वस्त्रप्रदायिनः ॥ ७ ॥ शिबिकाश्वप्रदानेन ततस्तेन सुखं व्रजेत् ॥ शय्यासनप्रदानेन सुखं यांति यमाश्रयम् ॥ ८ ॥ आरामकर्ता छायासु शीतलासु सुखं व्रजेत् ॥ यांति पुष्पकयानेन पुष्पारामप्रदायिनः ॥ ९ ॥ देवायतनकर्ता च यतीनामाश्रमस्य च ॥ अनाथमंडपानां च क्रीडन्याति गृहोत्तमैः ॥ १० ॥ देवाग्निगुरुविप्राणां मातापित्रोश्च पूजकाः ॥ पूज्यमाना नरा यांति कामिकेन पथा सुखम् ॥ ११ ॥ द्योतयंतो दिशः सर्वा यांति दीपप्रदायिनः ॥ प्रतिश्रयप्रदानेन सुखं यांति गृहं स्वयम् ॥ १२ ॥ सर्वकामसमृद्धेन पथा गच्छंति गोप्रदाः ॥ ये न पापानि कुर्वंति ते तृप्ता यांति नान्यथा ॥ १३ ॥ आर्तौषधप्रदातारः सुखं यांति निराकुलाः ॥ विश्राम्यमाणा गच्छंति गुरुशुश्रूषणे रताः ॥ १४ ॥ पादशौचप्रदानेन शीतलेन पथा व्रजेत् ॥ पादाभ्यंगं च यः कुर्यादश्वपृष्ठेन स व्रजेत् ॥ १५ ॥ हेमरत्नप्रदानेन याति दुर्गाणि निस्तरन् ॥ यानवाहनदानेन नरयानेन गच्छति ॥ १६ ॥ सर्वकामसमृद्धात्मा भूमिदानेन गच्छति ॥ अन्नपानप्रदानेन पिबन्स्वादंश्च गच्छति ॥ १७ ॥ इत्येवमादिभिर्दानैः सुखं यांति यमक्षयम् ॥ स्वर्गेपि विपुलान्भोगान्प्राप्नुवंति नरोत्तम ॥ १८ ॥ सर्वेषामेव दानानामन्नदानं परं स्मृतम् ॥ सद्यः प्रीतिकरं दिव्यं बलबुद्धिविवर्द्धनम् ॥ १९ ॥ त्रयाणामपि लोकानां जीवितं ह्युदकं स्मृतम् ॥ पवित्रममृतं दिव्यं शुद्धं सर्वरसायनम् ॥ २० ॥ अन्नं पानं च गोवस्त्रभूशय्याच्छत्रमासनम् ॥ परलोके प्रशस्तानि दानान्यष्टौ विशेषतः ॥ २१ ॥ अन्नदानं विशेषेण धर्मराजपुरे नराः ॥ यस्माद्यांति सुखेनैव तस्माद्धर्मं समाचरेत् ॥ २२ ॥ ये पुनः क्रूरकर्माणः पापा दानविवर्जिताः ॥ ते घोरेण पथा यांति दक्षिणेन यमालयम् ॥ २३ ॥ षडशीतिसहस्राणि योजनानामतीत्य यत् ॥ वैवस्वतपुरं ज्ञेयं नानारूपव्यवस्थितम् ॥ २४ ॥ समीपस्थमिवाभाति नराणां शुभकर्मणाम् ॥ पापानामतिदूरस्थं पथा रौद्रेण गच्छताम् ॥ २५ ॥ तीव्रकंटकयुक्तेन शर्करानिचितेन च ॥ क्षुरधारानिभैस्तीव्रैः पाषाणैर्निचि



१ यमक्षयं यमगृहमित्यर्थः । २ अङ्ग्यौषधप्रदातरः—इ० पा० । ३ यमालयम्—इ० पा० । ४ प्राप्नोति विविधान्नरः—इ० पा० । ५ कथितं पयः—इ० पा० । ६ सुखं चेरत्—इ० पा० । ७ गुरुकर्मणाम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन च ॥ २६ ॥ क्वचित्पंकेन महता दुरुत्तारैश्च खातकैः ॥ लोहसूचीनिभैर्दर्भैः संछन्नेन पथा क्वचित् ॥ २७ ॥ तटप्रपातविध्वंभैः पर्वतैर्वृक्षसंकुलैः ॥ प्रतप्तांगारयुक्तेन यांति मार्गेण दुःखिताः ॥ २८ ॥ क्वचिद्विषमगर्तैश्च क्वचिल्लोष्टैः सुपिच्छिलैः ॥ प्रतप्तवालुकाभिश्च तथा तीक्ष्णैश्च शंकुभिः ॥ २९ ॥ अनेकतापैर्विततैर्व्याप्तं वंशवनं क्वचित् ॥ क्वचिद्वालुकया व्याप्तं कष्टेनैव प्रवेशनम् ॥ ३० ॥ क्वचिदुष्णांबुना व्याप्तं क्वचित्कारीषवह्निना ॥ क्वचित्सिंहैर्वृकैर्व्याप्तं दंशैः कीटैश्च दारुणैः ॥ ३१ ॥ क्वचिन्महाजलौकाभिः क्वचिच्चाजगरैः पुनः ॥ मक्षिकाभिश्च रौद्राभिः क्वचित्सर्पैर्विषोल्बणैः ॥ ३२ ॥ मत्तमातंगयूथैश्च बलोन्मत्तैः प्रमाथिभिः ॥ पंथानमुल्लिखद्भिश्च तीक्ष्णशृंगैर्महावृषैः ॥ ३३ ॥ महाविषाणैर्महिषैरुष्ट्रैर्मत्तैश्च खादकैः ॥ डाकिनीभिश्च रौद्राभिर्विकरालैश्च राक्षसैः ॥ ३४ ॥ व्याधिभिश्च महाघोरैः पीड्यमाना व्रजंति च ॥ महाधूलीविमिश्रेण महाचण्डेन वायुना ॥ ३५ ॥ महापाषाणवर्षेण हन्यमाना निराश्रयाः ॥ क्वचिद्विद्युत्प्रपातेन दीर्यमाणा व्रजंति च ॥ ३६ ॥ महता बाणवर्षेण विध्यमानाश्च सर्वशः ॥ पतद्भिर्वज्रसंघातैरुल्कापातैश्च दारुणैः ॥ ३७ ॥ प्रतप्तांगारवर्षेण दह्यमाना व्रजंति च ॥ तप्तेन पांशुवर्षेण पूर्यमाणा रुदंति च ॥ ३८ ॥ महामेघरवैर्घोरैर्वित्रास्यंते मुहुर्मुहुः ॥ निशितायुधवर्षेण चूर्यमाणा नरैर्वृताः ॥ महाक्षाराम्बुधाराभिः सिच्यमाना व्रजंति च ॥ ३९ ॥ महाशीतेन मरुता तीक्ष्णेन परुषेण च ॥ समंतात्पीड्यमानास्ते शुष्यंते संकुचंति च ॥ ४० ॥ इत्थं मार्गेण रौद्रेण पाथेयविरहितेन च ॥ निरालंबेन दुर्गेण निर्जलेन समंततः ॥४१॥ अविश्रामेण महता निर्गतापाश्रयेण च ॥ तमोरूपेण कष्टेन सर्वदुःखाश्रयेण च ॥४२॥ नीयंते देहिनः सर्वे ये मूढाः पापकर्मिणः ॥ यमदूतैर्महाघोरैस्तदाज्ञाकारिभिर्बलात् ॥४३॥ एकाकिनः पराधीना मित्रबंधुविवर्जिताः ॥ शोचंतः स्वानि कर्माणि रुदंतश्च मुहुर्मुहुः ॥ ४४ ॥ प्रेतभूता विवस्त्राश्च शुष्ककण्ठोष्ठतालुकाः ॥ कृशाङ्गा भीतभीताश्च दह्यमानाः क्षुधाग्निना ॥ ४५ ॥ बद्धाः शृंखलया केचिदुत्तानाः पादयोर्नराः ॥ आकृष्यंते घृष्यमाणा यमदूतैर्बलोत्कटैः ॥ ४६ ॥ पुनश्चाधोमुखाश्चान्ये घृष्यमाणाः सुदुःखिताः ॥ केशपाशनिबद्धाश्च कृष्यंते रज्जुभिर्नराः ॥ ४७ ॥ ललाटे चांकुशैस्तीक्ष्णैर्भिन्नाः कृष्यंति देहिनः ॥ उत्ताना रटमानाश्च क्वचिदंगारवर्त्मना ॥ ४८ ॥ पाश्चाद्बाहुसबद्धाश्च जठरे च प्रपीडिताः ॥ पूरिताः शृंखलाभिश्च हस्तयोश्च प्रकीलिताः ॥ ४९ ॥ ग्रीवायामर्द्धचन्द्रेण क्षिप्यमाणा इतस्ततः ॥

१ लोहसूचीभिरत्यंतम्–इ० पा० । २ दुष्टांबुना–इ० पा० । ३ शाकिनीभिः–इ० पा० । ४ विद्युत्प्रतापेन दह्यमानाः–इ० पा० । ५ महता–इ० पा० । ६ म्रियमाणास्ते–इ० पा० । ७ पापकारिणः–इ० पा० । ८ क्षुधाग्निना–इ० पा० । ९ कृष्यमाणाः–इ० पा० । १० केशपाशनिबद्धांश्च तत्पाशैः कर्षयंति च–इ० पा० । ११ प्रपीडिताः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिश्ने च वृषणे बद्धा नीयंते चर्मरज्जुना ॥ ५० ॥ विभिन्ना उदरे चान्ये तप्तशृंखलया नराः ॥ कृष्यंते कर्णयोश्चान्ये भिन्नाश्च चिबुकोपरि ॥ ॥ ५१ ॥ छिन्नाग्रपादहस्ताश्च छिन्नकर्णौष्ठनासिकाः ॥ संछिन्नशिश्नवृषणाश्छिन्नभिन्नांगसंधयः ॥ ५२ ॥ प्रतुद्यमानाः कुंतैश्च सायकैश्च ततस्ततः ॥ भिद्यमानाः प्रधावंति क्रन्दमाना निराश्रयाः ॥ ५३ ॥ मुद्गरैर्लोहदण्डैश्च हन्यमाना मुहुर्मुहुः ॥ कशैश्च विविधैर्घोरैर्ज्वलिताग्निसमप्रभैः ॥ ५४ ॥ भिंदिपालैर्विभिद्यंते स्रवंतः पूयशोणितम् ॥ मांसे क्षताश्च कृमिभिर्नीयंते विवशा नराः ॥ ५५ ॥ याचमानाश्च सलिलमन्नं चापि बुभुक्षिताः ॥ छायां प्रार्थयमानाश्च शीतार्ता बहुवायुना ॥ ५६ ॥ दानहीनाः प्रयांत्येवं यावंतो विमुखा नराः ॥ गृहीतदानपाथेयाः सुखं यांति यमालयम् ॥ ५७ ॥ एवं पथातिकष्टेन प्राप्ता यमपुरं तदा ॥ प्रज्ञापितास्तदा दूतैर्निवेश्यंते यमाग्रतः ॥ ५८ ॥ तत्र ये शुभकर्माणस्तांश्च संमानयेद्यमः ॥ स्वागतासनदानेन पाद्यार्घेण प्रियेण च ॥ ५९ ॥ धन्या यूयं महात्मान आत्मनो हितकारिणः ॥ येन दिव्यसुखार्थाय भवद्भिः सुकृतं कृतम् ॥ ६० ॥ इदं विमानमारुह्य दिव्यस्त्रीभोगभूषितम् ॥ स्वर्गं गच्छध्वमतुलं सर्वकामसमन्वितम् ॥ ६१ ॥ ततो भुक्त्वा महाभोगानंते पुण्यस्य संक्षयात् ॥ यत्किञ्चिदल्पमशुभं पुनस्तदिह भोक्ष्यथ ॥ ६२ ॥ ते चापि धर्मराजानं नराः पुण्यानुभावतः ॥ पश्यंति सौम्यवदनं पितृभूतमिवात्मनः ॥ ६३ ॥ ये पुनः पापकर्माणस्ते पश्यंति भयानकम् ॥ पापाविशुद्धनयना विपरीतात्मबुद्धयः ॥ ६४ ॥ दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ ऊर्ध्वकेशं महाश्मश्रुप्रस्फुरदधरोत्तरम् ॥ ६५ ॥ अष्टादशभुजं क्रुद्धं नीलांजनचयोपमम् ॥ सर्वायुधोद्यतकरं ब्रह्मदण्डेन तर्जकम् ॥ ६६ ॥ महामहिषमारूढं दीप्ताग्निसमलोचनम् ॥ रक्तमाल्याम्बरधरं महामेरुमिवोच्छ्रितम् ॥ ६७ ॥ प्रलयांबुदनिर्घोषं पिबंतमिव सागरम् ॥ ग्रसंतमिव लोकानामुद्गिरंतमिवानलम् ॥ ६८ ॥ मृत्युश्च तत्समीपस्थः कालानलसमप्रभः ॥ कालश्चांजनसंकाशः कृतांतश्च भयानकः ॥ ६९ ॥ मारी चोग्रा महामारी कालरात्रिः सुदारुणा ॥ विविधा व्याधयः कष्टा नानारूपभयावहाः ॥ ७० ॥ शक्तिशूलांकुशधराः पाशचक्रासिधारिणः ॥ वज्रदण्डधरा रौद्राः क्षुद्रतूणीधनुर्धराः ॥ ७१ ॥ असंख्याता महावीर्याः क्रूराश्चाञ्जनसंप्रभाः ॥ सर्वायुधोद्यतकरा यमदूता भयानकाः ॥ ७२ ॥ अनेन परिवारेण महाघोरेण संवृतम् ॥ यमं पश्यंति पापिष्ठाश्चित्रगुप्तं च भीषणम् ॥ निर्भर्त्सयंतं चात्यन्तं यमं सदुपकारिणम् ॥७३॥ चित्रगुप्तश्च भगवान्धर्मवाक्यैः प्रबोधयन् ॥ भोभो दुष्कृतकर्माणः परद्रव्यापहारिणः ॥ गर्विता रूपवीर्येण परदारविमर्दकाः ॥७४॥

१ च पुनःपुनः—इ० पा० । २ अदनन्तमिव त्रैलोक्यम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्स्वयं क्रियते कर्म तत्स्वयं भुज्यते पुनः ॥ तत्किमात्मोपघातार्थं भवद्भिर्दुष्कृतं कृतम् ॥७५॥ इदानीं किं प्रतप्यध्वं पीड्यमानाः स्वकर्मभिः ॥ भुञ्जध्वं स्वानि कर्माणि नात्र दोषोऽस्ति कस्यचित् ॥ ७६ ॥ एते च पृथिवीपालाः संप्राप्ता मत्समीपतः ॥ स्वकीयैः कर्मभिर्घोरैदुष्प्रज्ञा बलगर्विताः ॥ ७७ ॥ भोभो नृपा दुराचाराः प्रजाविध्वंसकारिणः अल्पकालस्य राज्यस्य कृते किं दुष्कृतं कृतम् ॥ ७८ ॥ राज्यलोभेन मोहाद्वा वलादन्यायतः प्रजाः ॥ यत्पीडिताः फलं तस्य भुंजध्वमधुना नृपाः ॥ ७९ ॥ कृतं राज्यं कलत्रं च यदर्थमशुभं कृतम् ॥ तत्सर्वं संपरित्यज्य यूयमेकाकिनः स्थिताः ॥ ८० ॥ पश्याम तद्बलं तुभ्यं येन विध्वंसिताः प्रजाः ॥ यमदूतैस्ताडयमाना अधुना कीदृशं भवेत् ॥ ८१ ॥ एवंवहुविधैर्वाक्यैरुपालब्धा यमेन ते ॥ शोचंतः स्वानि कर्माणि तूष्णीं तिष्ठंति पार्थिव ॥ ८२ ॥ इति धर्मं समादिश्य नृपाणां धर्मराट् पुनः ॥ तत्पापपंकशुद्ध्यर्थमिदं वचनमब्रवीत् ॥ ८३ ॥ भोभोश्चण्ड महाचण्ड गृहीत्वा नृपतीनिमान् ॥ विशोधयध्वं पापेभ्यः क्रमेण नरकाग्निषु ॥८४॥ ततः शीघ्रं समुत्थाय नृपान्संगृह्य पादयोः ॥ भ्रामयित्वातिवेगेन विक्षिप्योर्ध्वं विगृह्य च ॥ ८५ ॥ सर्वप्राणेन महता सुतप्ते तु शिलातले ॥ आस्फालयंति तरसा वज्रेणेव महाद्रुमम् ॥ ८६ ॥ ततः स रक्तस्रोतोभिः स्रवते जर्जरीकृतः ॥ स निःसंज्ञस्तदा देही निश्चेष्टः संप्रजायते ॥ ८७ ॥ ततः स वायुना स्पृष्टः शनैरुज्जीवते पुनः ॥ ततः पापविशुद्ध्यर्थं क्षिप्यते नरकार्णवे ॥ ८८ ॥ अष्टाविंशतिरेवाधः क्षितेर्नरककोटयः॥ सप्तमस्य तलस्यांते घोरे तमसि संस्थिताः ॥ ८९ ॥ रौरवप्रभृतीनां च नरकाणां शतं स्मृतम् ॥ चत्वारिंशत्समधिक महानरकमंडलम् ॥ ९० ॥ येषु पापाः प्रपच्यंते नराः कर्मानुरूपतः ॥ यातनाभिर्विचित्राभिराकर्मप्रक्षयाद्भृशम् ॥ ९१ ॥ आ मलप्रक्षयाद्यद्वदग्नौ धास्यंति धातवः ॥ तथा पापक्षयात्पापाश्शोध्यंते नरकाग्निषु ॥ ९२ ॥ सुगाढहस्तया बाढं तप्तशृंखलया नराः ॥ महावृक्षाग्रशाखायां लंब्यंते यमकिंकरैः ॥ ९३ ॥ ततस्ते सर्पयंत्रेण क्षिप्ता दोल्यंति किंकरैः ॥ दोल्यंतश्चातिवेगेन निःसंज्ञा यांति योजनम् ॥ ९४ ॥ अंतरिक्षस्थितानां च लोहभारशतं ततः ॥ पादयोर्बध्यते तेषां यमदूतैर्महाबलैः ॥ ९५ ॥ तेन भारेण महता भृशमातार्दिता नराः ॥ ध्यायंतः स्वानि कर्माणि तूष्णीं तिष्ठंति विह्वलाः ॥ ९६ ॥ ज्वालाभिरग्निवर्णाभिर्लोहदंडैः सकंटकैः ॥ हन्यंते किंकरैर्घोरैः समंतात्पापकारिणः ॥ ९७ ॥ ततः क्षारेण दीप्तेन वह्नेरपि

१ तुभ्यं तवेत्यर्थः—षष्ठ्यर्थे चतुर्थी । २ बलात्—इ० पा० । ३ पापिष्ठान्—इ० पा० । ४ प्रगृह्य च—इ० पा० । ५ आस्फोटयन्ति—इ० पा० । ६ एषु—इ० पा० । ७ धुष्यंते स्वानि कर्माणि कुप्यते यमकिंकरैः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेषतः ॥ समंततः प्रलिप्यंते क्षतांगा जर्ज्जरीकृताः ॥ ९८ ॥ पुनर्विदार्य चांगेषु शिरसःप्रभृति क्रमात् ॥ वृन्ताकवत्प्रपच्यंते तप्ततैलकटाहके ॥ ९९ ॥ विष्ठापूर्णे ततः कूपे कृमीणां निचये ततः ॥ मेदस्त्वक्पूयपूर्णायां वाप्यां क्षिप्यंति ते पुनः ॥ १०० ॥ भक्ष्यंते क्रिमिभिस्ती क्ष्णैर्लोहतुण्डैश्च वायसैः ॥ श्वभिर्दंशैर्वृकैर्घोरैर्व्याघ्रैरप्यथ वानरैः ॥ १०१ ॥ पच्यंते मांसवच्चापि प्रदीप्तांगारराशिषु ॥ प्रोताः शूलेषु ती क्ष्णेषु नराः पापेन कर्मणा ॥ १०२ ॥ तिलपिंडैरिवाक्रम्य घोरैः कर्मभिरात्मनः ॥ तिलवत्सम्प्रपीडचन्ते चक्राख्ये नरके तथा ॥ १०३ ॥ भिद्यंते चापि तल्पेषु लोहभ्राष्ट्रेष्वनेकधा ॥ तैलपूर्णकटाहेषु सुतप्तेषु पुनःपुनः ॥ १०४ ॥ बहुशः पीडचते जिह्वा याऽसत्यप्रियवादिनी ॥ संदंशेन सुतप्तेन प्रपीडचन्ते च पादयोः ॥ १०५ ॥ मिथ्यागमप्रवक्तुश्च द्विजिह्वस्य च निर्गता ॥ जिह्वार्द्धक्रोशविस्तीर्णा हलैस्तीक्ष्णैश्च बाध्यते ॥ ॥ १०६ ॥ निर्भर्त्सयंति ये क्रूरा मातरं पितरं गुरुम् ॥ तेषां वक्ष उल्काभिर्मुखमापूर्य सेव्यते ॥१०७॥ ततः क्षारेण दीप्तेन ताम्रेण तु पुनःपुनः ॥ हतेनापूर्यतेऽत्यर्थं तप्ततैलैश्च तन्मुखम् ॥ १०८ ॥ इतस्ततः पुनर्वक्त्रं भृशमापूर्य हन्यते ॥ विष्ठाभिः कृमिभिश्चापि सुवर्णहरणैर्नरः ॥ १०९ ॥ परि ष्वजति चात्युग्रां प्रदीप्तां लोहशाल्मलीम् ॥ हन्यते पृष्ठदेशे च पुनस्तीक्ष्णैर्महाघनैः ॥ ११० ॥ दंतुरेणातिकूटेन क्रकचेन बलीयसा ॥ शिरः प्रभृति पादांतं घोरैः कर्मभिरात्मजैः ॥ खाद्यते स्वानि मांसानि पायते शोणितं स्वकम् ॥ १११ ॥ अन्नं पानं न दत्तं यैर्मूढैर्नाप्यनुमोदितम् ॥ इक्षु वत्ते प्रपीडचन्ते जर्जरीकृतमस्तकाः ॥ ११२ ॥ असितालवने घोरे च्छिद्यंते खंडखंडशः॥ सूचीभिर्भिन्नसर्वांगास्तप्तशूलप्ररोपिताः ॥ संबाध्यमाना विवशाः क्लिश्यंते न म्रियंति वै ॥ ११३ ॥ देहादुत्साद्यमांसानि भिद्यंतेऽस्थीनि मुद्गरैः ॥ हृष्टिराकृष्यते तूर्णं यमदूतैर्बलोत्कटैः ॥ ११४ ॥ निर स्तास्ते निरुच्छ्वासास्तिष्ठंति नरके ध्रुवम् ॥ उच्छ्वसंति सदा श्वासैर्वालुकावदनावृताः ॥ ११५ ॥ रौरवे रोदमानाश्च पीड्यन्ते विविधैः शरैः ॥ महा रौरवपीडाभिर्महतीभिस्तदंतिके ॥ ११६ ॥ पदोरास्ये गुदे चैव पार्श्वे चोरसि मस्तके ॥ निखन्यंते घनैस्तीक्ष्णैः सुतप्तैर्लोहशंकुभिः ॥ ११७ ॥ सुतप्तवालुकायां च प्रलुठ्यन्ते पुनःपुनः ॥ जतुपंके भृशं तप्ते क्षिप्राः क्रन्दंति विस्तरम् ॥ ११८ ॥ तेनतेनैव रूपेण हसन्ते पारदारिकम् ॥ गाढ मालिङ्गचते नारीं ज्वलंतीं लोहनिर्मिताम् ॥ ११९ ॥ पूर्वाकारं च पुरुषं प्रज्वलंतं समंततः ॥ दुश्चारिणीः स्त्रियो गाढमालिंगंति वदंति

१ द्रोण्याम्—इ० पा० । २ व्याघ्रैश्च विरुताननैः—इ० पा० । ३ दीप्तांगारप्रदीप्तिषु—इ० पा० । ४ हस्त्यमांसानि—इ० पा० । ५ अशिवमुद्गरैः—इ० पा० । ६ जलंते च—इ० पा० । ७ तदा नरम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च ॥ १२० ॥ किं प्रधावसि वेगेन ते न मोक्षोऽस्ति सांप्रतम् ॥ लंवितस्ते यथा भर्ता पापं भुंक्ष्व तथाधुना ॥ १२१ ॥ लोहकुम्भे तथा क्षिप्ताः सविधानैः शनैःशनैः ॥ मृद्वग्निनाथ पच्यंते स्वपापैरेव मानवाः ॥ १२२ ॥ कणंत्युदूखले सास्राः प्रक्षिप्यंते शिलासु च ॥ क्षिप्यंते चांधकूपेषु दश्यंते भ्रमरैर्भृशम् ॥ १२३ ॥ कृमिभिर्भिन्नसर्वांगाः शतशो जर्जरीकृताः ॥ सुतीक्ष्णक्षारकूपेषु क्षिप्यंते तदनंतरम् ॥ १२४ ॥ महाज्वाले च नरके पापाः फूत्कारयंति च ॥ इतस्ततश्च धावंति दह्यमानास्तदर्चिषा ॥ १२५ ॥ पृष्ठे चानीय जंघे द्वे विन्यस्ते स्कन्धयोः स्थिते ॥ तयोर्मध्येन चाकृष्य बाहुपृष्ठेन गाढतः ॥ वद्धाः परस्परं सर्वं सुदृढं गाढरज्जुभिः ॥ १२६ ॥ पीडयंति सुसंरब्धा भ्रमरास्तीक्ष्णलोहजाः ॥ मानिनां क्रोधिनां चैव पुरा पापस्य संशयात् ॥ १२७ ॥ पापानां नरके पुंसां घृष्यते चंदनं यथा ॥ शरीराभ्यंतरगतं तरुणानां च दारुणम् ॥ १२८ ॥ पिंडबंधः स्मृतो याम्यो महाज्वालेषु यातनाः ॥ रज्जुभिर्वेष्टितांगाश्च प्रलिप्ताः कर्दमेन च ॥ करीषरूक्षवह्नौ च पच्यंते न म्रियंति च ॥ १२९ ॥ सुतीक्ष्णक्षारतोयेन शर्करासु शिलासु च ॥ आ पापसंक्षयात्पापा घृष्यंते चंदनं यथा ॥ १३० ॥ शरीराभ्यन्तरगतैः प्रभूतैः कृमिभिर्नराः ॥ भक्ष्यंते तीक्ष्णवदनैरादेहप्रक्षयाद् भृशम् ॥ १३१ ॥ कृमीणां निचये क्षिप्ताः पूतिमांसस्य राशिषु ॥ तिष्ठन्त्युद्विग्नहृदयाः पर्वताभ्यां च पीडिताः ॥ १३२ ॥ सुतप्तवज्रलेपेन शरीरमनुलिप्यते ॥ अधोमुखोर्ध्वपादाश्च धृतास्तप्यंति वह्निषु ॥ १३३ ॥ वदनांते प्रविन्यस्तं सुतप्तायोमयं गुडम् ॥ ते खादंति पराधीना हन्यमानास्तु मुद्गरैः ॥ १३४ ॥ ये शिवायतनारामवापीकूपमठांगणात् ॥ अभिद्रवंति पापिष्ठा नरास्तत्र वसंति च ॥ १३५ ॥ व्यायामोद्वर्तनाभ्यंगस्नानमापानभोजनम् ॥ क्रीडनं मैथुनं द्यूतमाचरंति रमंति च ॥ १३६ ॥ ते वार्यैर्विविधैर्वार्गरिक्षुयन्त्रादिपीडनैः ॥ निरयाग्निषु पच्यंते यावदाचन्द्रतारकम् ॥ १३७ ॥ ये शृण्वंति गुरोर्निंदां तेषां कर्णाः प्रपूर्यंते ॥ अग्निवर्णैरयःकीलैस्तप्तताम्रादिभिर्द्रुतैः ॥ १३८ ॥ त्रपुसीसारकूटाद्यैः क्षारेण जतुना पुनः ॥ क्रमादापूर्यंते कर्णा नरकेषु च यातनाः ॥ अनुक्रमेण सर्वेषु भवंत्येताः समंततः ॥ १३९ ॥ सर्वेंद्रियाणामप्येवं क्रमात्पापेन यातनाः ॥ भवंति योगाः प्रत्येकं शरीरं तत्कृतेन च ॥ १४० ॥ स्पर्शलोभेन ये मूढाः संस्पृशंति परस्त्रियम् ॥ तेषां त्वगग्निवर्णाभिः सूचीभिः पूर्यते भृशम् ॥ १४१ ॥ ततः क्षारादिभिः सर्वैः शरीरमनुलिप्यते ॥ यातना च महाकष्टा सर्वेषु नरकेषु च ॥ १४२ ॥ गुरोः कुर्वंति भ्रुकुटिं क्रूरं चक्षुश्च ये नराः ॥ पर

१ वर्णाभि-इ० पा० । २ [illegible]-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दारांश्च पश्यंति लुब्धाः स्निग्धेन चक्षुषा ॥१४३॥ सूचीभिरग्निवर्णाभिस्तेषां नेत्रं प्रपूर्यते ॥ क्षाराद्यैश्च क्रमात्सर्वैर्देहे सर्वाश्च यातनाः ॥ १४४ ॥ देवाग्निगुरुविप्राणां येऽनिवेद्य प्रभुंजते ॥ लोहकीलशतैस्तप्तैस्तज्जिह्वास्यं प्रपूर्यते ॥ १४५ ॥ ततः क्षारेण दीप्तेन तैलताम्रादिभिः क्रमात् ॥ शरीरे च महाघोराश्चित्रा नरकयातनाः ॥१४६॥ ये शिवारामपुष्पाणि[1] लोभात्संगृह्य पाणिना ॥ जिघ्रंति मूढमनसः शिरसा धारयंति च ॥१४७॥ आपूर्यते शिरस्तेषां सुतप्तैर्लोहशंकुभिः ॥ नासिका चातिबहुशस्ततः क्षारादिभिः पुनः ॥ १४८ ॥ ये निंदंति महात्मानमाचार्यं धर्मदेशिकम् ॥ शिवभक्तांश्च ये मूढाः शिवधर्मं[2] च शाश्वतम् ॥ १४९ ॥ तेषामुरसि कंठे च जिह्वायां दंतसंधिषु ॥ तालुकोष्ठे च नासायां मूर्ध्नि सर्वांगसंधिषु ॥ १५० ॥ अग्निवर्णाः सुतप्ताश्च त्रिशिखा लोहशंकवः ॥ आखन्यंते सुबहुशः स्थानेष्वेतेषु मुद्गरैः ॥ १५१ ॥ ततः क्षारेण तप्तेन ताम्रेण त्रपुणा पुनः ॥ तप्ततैलादिभिः सर्वैरापूर्यंते समंततः ॥ १५२ ॥ क्षारताम्रादिभिर्दीप्तैर्दह्यंते बहुशः पुनः ॥ नरकेषु च सर्वेषु विचित्रा देहयातनाः ॥ १५३ ॥ भवंति बहुशः कष्टाः पाणिपादसमुद्भवाः ॥ शिवायतनपर्यंते शिवारामे च कुत्रचित्[3] ॥ १५४ ॥ समुत्सृजंति ये पापाः पुरीषं मूत्रमेव वा ॥ तेषां लिंगं सवृषणं चूर्ण्यते लोहमुद्गरैः ॥ १५५ ॥ सूचीभिरग्निवर्णाभिस्ततश्चापूर्यते पुनः ॥ लोहदण्डश्च सुमहानग्निवर्णः सकंटकः ॥ आखन्यते गुदे तेषां यावन्मूर्ध्नि विनिर्गतः[5] ॥१५६॥ ततः क्षारेण महता ताम्रेण त्रपुणा पुनः ॥ द्रुतेनापूर्यते गाढं गुदं शिश्नं हि देहिनाम् ॥१५७॥ मनः सर्वेन्द्रियाणां च यस्मादुक्तं प्रवर्त्तकम् ॥ तस्मादिन्द्रियदुःखेन जायते तत्सुदुःखितम्[4] ॥१५८॥ धने सत्यपि ये दानं न प्रयच्छंति तृष्णया ॥ अतिथिं चावमन्यंते कालप्राप्तं गृहाश्रमे ॥१५९॥ ते लोहतोरणे बद्धा हस्तपादावताडिताः ॥ विदारितांगाः शुष्यंते तिष्ठंत्यब्दशतं नराः ॥१६०॥ हस्तपादललाटेषु कीलिता लोहशंकुभिः ॥ नित्यं च नीवृतं वक्रं कीलकद्वयनाडितम् ॥ १६१ ॥ कृमिभिः प्राणिभिश्चोग्रैर्लोहदंडैश्च वायसैः ॥ उपद्रवैर्बहुविधैः सर्पैर्मुखरकैस्ततः ॥ १६२ ॥ आपीड्यंते जिह्वामूले निबध्य शृंखलाः पुनः ॥ तिष्ठंति लंबमानाश्च लोहभारप्रपीडिताः ॥१६३॥ स्निग्धे च वृषणे नद्धे लोहभारद्वयं पुनः ॥ तिष्ठते लंबमानं च बहुभारचतुर्गुणम् ॥ १६४ ॥ ततः स्वमांससमुत्कृत्य तिलमात्रप्रमाणतः ॥ भोजनं दीयंते तेषां सूच्यग्रेण सशोणितम् ॥ १६५ ॥ यदा निर्मांसतां प्राप्ताः कालेन महता पुनः ॥ ततः क्षारेण दीप्तेन वपुस्तेषां प्रलिप्यते ॥ १६६ ॥ सिच्यंते वर्षधाराभिः शोष्यंते वायुना पुनः ॥ सिच्यंते तप्ततैलेन प्रतप्तेन समंततः ॥ १६७ ॥ पश्चात्ते वह्निना भूयो दूरस्थेन शनैः शनैः ॥

१ ये देवारामपुष्पाणि–इ० पा० । २ विष्णुधर्मं च–इ० पा० । ३ देवायतनपर्यंते देवारामे च कुत्रचित्–इ० पा० । ४ भृशम्–इ० पा० । ५ निरूप्य च गुदे तेषां यावन्मूर्ध्नि विनिर्गमः–इ०पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निःशेषयातनाभिश्च पीड्यंते क्रमशः पुनः ॥ १६८ ॥ भृशं बुभुक्षया पीडा मूर्च्छयातिपिपासया ॥ अत्युष्णेनातिशीतेन पापानां समरेण च ॥ १६९ ॥ एवमादिमहाघोरा यातनाः पापकारिणः ॥ एकैके नरके चैव शतशोथ सहस्रशः ॥ १७० ॥ प्रत्येकं यातनाश्चित्राः सर्वेषु नरकेषु च ॥ कष्टं वर्षशतेनापि सोढुं सर्वैश्च नारके ॥१७१॥ एते च विविधैर्घोरैर्यात्यमानाश्च कर्मभिः ॥ म्रियन्ते नैव पापिष्ठा विविधाः पापकारिणः[1] ॥ ॥ १७२ ॥ महाघोराभिघोराख्याः कालाग्निसदृशोपमाः ॥ श्रुतैरेतैर्महारौद्रैर्म्रियन्ते मृदुचेतसः ॥ १७३ ॥ ततस्तेनात्र कथिताः पापा गच्छंति तान्स्वयम् ॥ पुत्रमित्रकलत्रार्थं यदा पुण्यं त्वपाकृतम् ॥ १७४ ॥ एकाकी दह्यते तेन न च पश्यति तानि सः ॥ आत्मना च कृतं पापं भोक्तव्यं ध्रुवमात्मना ॥ १७५ ॥ तत्किमन्योपघातार्थं मूढ पापं कृतं त्वया ॥ एवं दूतैरुपालब्धास्ते पृच्छंति ततः पुनः ॥ १७६ ॥ कियंतं केन पापेन कालमत्रायते नरः ॥ देवद्रव्यविनाशेन गुरुद्रोहादिकर्मभिः ॥ पापात्सर्वेषु पच्यंते नरकेष्वामहाक्षयात् ॥ १७७ ॥ महापातकिनश्चापि सर्वेषु नरकेष्विह ॥ आचंद्रतारकं यावत्पीड्यंते विविधैर्वधैः ॥ १७८ ॥ महापातकिनश्चान्ये नरकार्णवकोटिषु ॥ चतुर्दशसु पच्यंते कलार्धं विविधैर्वधैः ॥ १७९ ॥ उपपातकिनश्चापि तदर्धं यांति मानवाः ॥ शेषपापैस्तदर्धं तु कालं चापि तथाविधम् ॥ १८० ॥ तस्मात्पापं न कुर्वीत चंचले जीविते सति ॥ पापेन हि ध्रुवं यांति नरकेषु नराः स्वयम् ॥ १८१ ॥ यः करोति नरः पापं तस्यात्मा ध्रुवमप्रियः ॥ पापस्येह फलं दुःखं तद्भोक्तव्यमिहात्मना ॥ १८२ ॥ कथं ते पापनिरता नरा रात्रिषु[2] शेरते ॥ मरणांतरिता[3] येषां नारकी तीव्रयातना ॥ १८३ ॥ एवं क्लिष्टविशुद्धाश्च सावशेषेण कर्मणा ॥ ततः क्षितिं समासाद्य जायन्ते देहिनः पुनः ॥ स्थावरा विविधाकारास्तृणगुल्मादिभेदतः ॥ ॥ १८४ ॥ तत्रानुभूय दुःखानि जायंते कीटयोनिषु ॥ निष्क्रांताः कीटयोनिभ्यो जायन्ते पक्षिणस्ततः ॥ १८५ ॥ संक्लिष्टाः पक्षिभावेन भवंति मृगजादिषु ॥ मार्गं दुःखमतिक्रम्य जायंते पशुयोनिषु ॥ १८६ ॥ क्रमाद्गोयोनिमासाद्य जायन्ते मानवाः पुनः ॥ एवं योनिषु सर्वासु परिक्रम्य क्रमेण तु ॥ कालांतरवशाद्यांति मानुष्यमतिदुर्लभम् ॥ १८७ ॥ व्युत्क्रमेणापि मानुष्यं प्राप्यते पुण्यगोचरात् ॥ विचित्रा गतयः प्रोक्ताः कर्मणां गुरुलाघवात् ॥ १८८ ॥ मानुष्यं यः समासाद्य स्वर्गमोक्षप्रसाधकम् ॥ द्वयोर्न साधयत्येकं स मृतस्तप्यते चिरम् ॥ ॥ १८९ ॥ देवासुराणां सर्वेषां मानुष्यमतिदुर्लभम् ॥ तत्संप्राप्य कथाः कुर्यान्न गच्छेन्नरकं यथा ॥ १९० ॥ स्वर्गापवर्गलाभाय यदि नास्ति

१ अस्मादग्रे—"तत्रान्यायतनानां च विविधाः पापकारिणः"—इति पाठ एकस्मिन्पुस्तकेऽधिकः पृथक्तयोपलभ्यते । २ नारीषु—इ० पा० । ३ मरणं त्वरितं येषाम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समुद्यतः ॥ स्वर्गस्य मूलं मानुष्यं तद्यत्नादनुपालयेत् ॥ १९१ ॥ धर्ममूलेन मानुष्यं लब्ध्वा सर्वार्थसाधकम् ॥ यदि लाभे न यत्नस्ते मूलं रक्षस्व यत्नतः ॥ १९२ ॥ मनुष्यत्वे च विप्रत्वं यः संप्राप्यातिदुर्ल्लभम् ॥ न करोत्यात्मनः श्रेयः कोन्यस्तस्मादचेतनः ॥ १९३ ॥ सर्वेषामेव देशानां मध्यदेशः परः स्मृतः ॥ अतः स्वर्गश्च मोक्षश्च यशः संप्राप्यते नरैः ॥ १९४ ॥ एतस्मिन्भारते पुण्ये प्राप्य मानुष्यमध्रुवम् ॥ यः कुर्या दात्मनः श्रेयस्तेनात्मा रक्षितः स्वयम् ॥ यः कुर्यान्नात्मनः श्रेयस्तेनात्मा वंचितः स्वयम् ॥ १९५ ॥ भोगभूमिः स्मृतः स्वर्गः कर्मभूमिरियं मता ॥ इह यत्क्रियते कर्म स्वर्गे तदुपभुज्यते ॥ १९६ ॥ यावत्स्वास्थ्यं शरीरस्य तावद्धर्मं समाचर ॥ अस्वस्थश्चातियत्नेन न किञ्चित्कर्तुमुत्स हेत् ॥ १९७ ॥ अध्रुवेण शरीरेण ध्रुवं यः प्रसाधयेत् ॥ ध्रुवं तस्य परिभ्रष्टमध्रुवं नष्टमेव च ॥ १९८ ॥ आयुषः खंडखंडानि निपतंति तवा ग्रतः ॥ अहोरात्रापदेशेन किमर्थं नावबुध्यसे ॥ १९९ ॥ यदा न ज्ञायते मृत्युः कदा कस्य भविष्यति ॥ आकस्मिके हि मरणे धृतिं विंदेत कस्तदा ॥ २०० ॥ परित्यज्य यदा सर्वमेकाकी यास्यसि ध्रुवम् ॥ न ददासि तदा कस्मात्पाथेयार्थमिदं धनम् ॥ २०१ ॥ गृहीतदानपाथेया सुखं यांति महाध्वनि ॥ अन्यथा क्लिश्यते जंतुः पाथेयरहितः पथि ॥ २०२ ॥ येषां द्विजेन्द्रवाहित्री पूर्णभांडा तु गच्छति ॥ स्वर्गदेशस्य पुर तस्तेषां लाभः पदेपदे ॥ २०३॥ इति ज्ञात्वा नरः पुण्यं कुर्यात्पापं विवर्जयेत् ॥ पुण्येन याति देवत्वमपुण्यान्नरकं व्रजेत् ॥ २०४ ॥ ये मनागपि देवेशं प्रपन्नाः शरणं शिवम् ॥ तेपि घोरं न पश्यंति यमस्य वदनं नराः ॥ २०५ ॥ किं तु पापैर्महाघोरैः किञ्चित्कालं शिवाज्ञया ॥ भवंति प्रेत राजानस्ततो यांति शिवालयम् ॥ २०६ ॥ ये पुनः सर्वभावेन प्रतिपन्ना महेश्वरम् ॥ न ते लिप्यंति पापेन पद्मपत्रमिवांभसा ॥ २०७ ॥ तस्मा द्विवर्धयेद्भक्तिमीश्वरे सततं बुधः ॥ तन्माहात्म्यविचारेण भवदोषविरागतः ॥ २०८॥ पापानि पंच परमार्थतयैव पार्थ दुःखप्रदानि सुचिरं पितृ राजलोके ॥ अन्यानि यानि चिरकालभयानकानि वक्तुं न यांति किल तानि परिस्फुटानि ॥ २०९ ॥ इति श्रीभविष्ये महापुराणे उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे शुभाशुभफलनिर्देशो नाम षष्ठोऽध्यायः ॥ ६ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ यदेतत्ते समाख्यातं गंभीरं नरकार्णवम् ॥ व्रतोपवासनियमप्लवेनोत्तीर्यते सुखम् ॥ १ ॥ दुर्ल्लभं प्राप्य मानुष्यं विद्युत्पतनचञ्चलम् ॥ तथात्मानं समादध्याद्भ्रश्यते न पुनर्यथा ॥ २ ॥ दान व्रतमयी कीर्तिर्यस्य स्यादिह देहिनः ॥ परलोकेऽपि स तया ज्ञायते ज्ञातिवर्द्धनः ॥ ३ ॥ ज्ञायते नेह नामुत्र व्रतस्वाध्यायवर्जितः ॥ पुरुषः पुरु

१ अयं देशः–इ० पा० । २ हरिम्–इ० पा० । ३ परां गतिम्–इ० पा० । ४ जनो यज्ञविवर्जितः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पव्याग्र तस्माद्व्रतपरो भवेत् ॥ ४ ॥ अत्र ते कथयिष्यामि इतिहासं पुरातनम् ॥ सिद्धेन[1] सह संवादमवंत्यां ब्राह्मणस्य हि ॥ ५ ॥ योगर्द्धिसि द्ध्या संसिद्धः कश्चित्सिद्धो महीतलम् ॥ चचार विकृतं कृत्वा वपुः परमभीषणम् ॥ ६ ॥ निगीर्णदंतो लंबोष्ठः पिंगाक्षस्तनुमूर्द्धजः ॥ त्रुटितैक कर्णो दुर्वणः शीर्णवस्त्रो महोदरः ॥ ७ ॥ चिंपिटाक्षः स्फुटितपार्ज्जंघाढ्यः[2] कृशकूर्परः ॥ दिशः पश्यति संहृष्टो बभ्रामोद्भ्रांतचित्तवत् ॥ ८ ॥ मूलजालिकविप्रेण दृष्टः पृष्टश्च को भवान् ॥ कदा स्वर्गात्समायातः केन कार्येण मे वद ॥ ९ ॥ कच्चिद्दृष्टा त्वया रंभा भाभासितदिगंतरा ॥ चित्तसंमोहनकरी देवानामेकसुन्दरी ॥ १० ॥ गत्वा मद्वचनाद्वाच्या निर्वाच्या दोषदर्शिभिः ॥ आवंत्यस्त्वां कुशलिनीं पृच्छति स्म द्विजो त्तमः ॥ ११ ॥ सिद्धः प्रसिद्धं तं विप्रं प्राहेदं विस्मयान्वितः ॥ कथं त्वयाहं विज्ञातः स्वर्गादभ्यागतः स्फुटम् ॥ १२ ॥ ब्राह्मणस्त मथोवाच विज्ञातोऽसि मया यथा ॥ तथा तेऽहं प्रवक्ष्यामि क्षीणार्वौघावधारय ॥ १३ ॥ गात्रत्रयं विरूपं स्याद्द्वितीयं वा स्वरूपतः ॥ दृष्ट्वा सर्वांग वैरूप्यं विज्ञातोऽसि ततो मया ॥ १४ ॥ दुर्लंघ्या प्रकृतिः साक्षादनुभूतकरी भवेत् ॥ प्रकृतेरन्यथाभावः सर्वथा लक्ष्यते जनैः[3] ॥ १५ ॥ विप्रस्यैवं वचः श्रुत्वा जगामादर्शनं शनैः ॥ पुनः कैश्चिदहोरात्रैराजगाम स तां पुरीम् ॥ १६ ॥ मूलजालकविप्रेण पृष्टः प्राहामरावतीम् ॥ गतोऽहं पृष्टवां स्तत्र रंभां विभ्रमकारिणीम् ॥ १७ ॥ शक्रस्यावसरे वृत्ते व्रजन्त्याः स्वगृहं मया ॥ त्वत्संदेशः समाख्यातः सावदत्को न वेद्मि तम् ॥ १८ ॥ विद्यया कलया चापि पौरुषेण व्रतेन च ॥ तपसा वा पुमान्मर्त्यो दिवि विज्ञायते चिरम् ॥ १९ ॥ ब्राह्मणस्तमथोवाच मुग्धा दग्धाग्निसंभवा ॥ न भक्षया मि शकटं व्रतेनैतेन वेत्ति माम् ॥ २० ॥ तस्यैतद्वचनं श्रुत्वा स सिद्धः सुविशुद्धधीः ॥ प्रहस्यामंत्र्य तं विप्रं जगामादर्शनं पुनः ॥ २१ ॥ कदाचिच्च रता तेन स्वर्गमार्गं यदृच्छया ॥ दृष्ट्वा रंभां द्विजप्रोक्तं सर्वमेव निवेदितम् ॥ २२ ॥ ॥ रंभोवाच ॥ ॥ को न जानामि तं विप्रं शकटव्रतचारिणम् ॥ मूलजालैर्वर्तयंतं महाकालवनाश्रयम् ॥ २३ ॥ दर्शनादथ संभाषा[4]दुपकारात्सहासनात् ॥ चतुर्धा स्नेहनिर्बंधो नृणां संजायतेऽधिकः ॥ २४ ॥ न दर्शनं न संभाषा कदाचित्सह तेन मे ॥ नामश्रवणमात्रेण स्नेहः संदर्शितो[5] महान् ॥ २५ ॥ इत्येवमुक्त्वा रंभोरू रंभा जंभारिणोंतिकम् ॥ विस्मयो त्फुल्लनयना जगाम गजगामिनी ॥ २६ ॥ गत्वा निवेदयामास स्नेहव्रतविचेष्टितम् ॥ पुरतो रुद्धहृदया ब्राह्मणस्य च धीमतः ॥ २७ ॥ शक्रः प्रोवाच चार्वंगीं गीर्वाणहृदयंगमाम् ॥ किमानयामि तं विप्रं समीपं तव सुव्रतम् ॥ २८ ॥ दिव्यमाल्यांबरधरं दिव्यस्रगनुलेपनम् ॥ विमानवरमारोप्य

१ त्रिवेन—इ० पा० । २ चिंपिटाक्षः स्फुटितकार्ज्ञंडजाकृशकटिस्थाः—इत्यशुद्धः पाठः कस्मिंश्चित्पुस्तके दृश्यते । ३ सर्वथ्यांलक्ष्यते जनैः—इ० पा० । ४ संभाष्यापूज्य—इ० पा० । ५ संवर्धितः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दर्शयामास तं पुनः ॥ २९ ॥ तत्रस्थः स द्विजो भोगान्भुनक्ति सह रंभया ॥ शकटव्रतमाहात्म्यमित्येतत्ते मयोदितम् ॥ ३० ॥ राज्यश्रियं जगति सर्वजनोपभोग्यामाप्नोति शक्रशिवकेशवयोर्निवासम् ॥ नाप्राप्यमस्ति भुवने सुदृढव्रतानां तस्मात्सदा व्रतपरेण नरेण भाव्यम् ॥ ३१ ॥ इति श्रीभविष्ये महापुराणे उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे शकटव्रतमाहात्म्यकथनं नाम सप्तमोऽध्यायः ॥ ७ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ ब्रह्मेशकेशवादीनां गौर्या गणपतेस्तथा ॥ दुर्गासूर्याग्निसोमानां व्रतानि मधुसूदन ॥ १ ॥ शास्त्रांतरेषु दृष्टानि तव बुद्धिगतानि च ॥ तानि सर्वाणि मे देव वद देवकिनन्दन ॥ २ ॥ प्रतिपत्क्रमयोगेन विहिता यस्य या तिथिः ॥ देवस्य तस्यां यत्कार्यं तदशेषेण कीर्तय ॥ ३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ वसंते किंशुकाशोकशोभने प्रतिपत्तिथिः ॥ शुक्ला तस्यां प्रकुर्वीत स्नानं नियमतत्परः॥ ४ ॥ नारी नरो वा राजेन्द्र संतर्प्य पितृदेवताः ॥ नद्यास्तीरे तडागे वा गृहे वा नियतात्मवान् ॥ ५ ॥ पिष्टांतकेन विलिखेद्वत्सरं पुरुषाकृतिम् ॥ ततश्चन्दनचूर्णेन पुष्पधूपादिनार्चयेत् ॥६॥ दीपैश्चापि सनैवेद्यैः पूजयेद्वत्सरं तदा ॥ मासर्तुनामभिः पश्चान्नमस्कारांतयोजितैः ॥ पूजयेद्ब्राह्मणान्विद्वान्मंत्रैर्वेदोदितैः शुभैः ॥ ७ ॥ संवत्सरोऽसि परिवत्सरोसीडावत्सरोऽभित्सरोऽसि उपसस्ते कल्पंतामहोरात्रास्ते कल्पंतामर्धमासस्ते कल्पतां मासास्ते कल्पंतामृतवस्ते कल्पन्तां संवत्सरस्ते कल्पताम् ॥ ॥ ८ ॥ एवमभ्यर्च्य वासोभिः पश्चात्तमभिवेष्टयेत् ॥ कालोद्भवैर्मूलफलैर्नैवेद्यैर्मोदकादिभिः ॥ ९ ॥ ततस्तं प्रार्थयेत्पश्चात्पुरः स्थित्वा कृतांजलिः॥ भगवंस्त्वत्प्रसादेन वर्षं शुभदमस्तु मे ॥ १० ॥ एवमुक्त्वा यथाशक्ति दद्याद्विप्राय दक्षिणाम् ॥ ललाटपट्टे तिलकं कुर्याच्चांदनपङ्कजम् ॥११॥ ततः प्रभृत्यनुदिनं तिलकालंकृतं मुखम् ॥ धार्यं संवत्सरं यावच्छशिनेव नभस्तलम् ॥ १२ ॥ एवं नरो वा नारी वा व्रतमेतत्समाचरेत् ॥ सदैव पुरुषव्याघ्र भोगान्भुवि भुनक्त्यसौ ॥ १३ ॥ भूताः प्रेताः पिशाचाश्च दुर्वारा वैरिणो ग्रहाः ॥ निरर्थका भवंत्येते तिलकं वीक्ष्य तत्क्षणात् ॥ १४ ॥ पूर्वमासीन्महीपालो नाम्ना शत्रुंजयो जयी ॥ चित्रलेखेति तस्याभूद्भार्या चारित्रभूषणा ॥ १५ ॥ तया व्रतमिदं चैत्रे गृहीतं द्विजसन्निधौ ॥ संवत्सरं पूजयित्वा धृत्वा हृदि जनार्दनम् ॥१६॥ असूयुः क्षेप्तुकामो वा समागच्छति यः पुरः ॥ प्रयाति प्रियकृत्तस्या दृष्ट्वा मुखमधोमुखः॥१७॥सपत्नीदर्पापहरा वशीकृतमहीतला ॥ भर्तुरिष्टा प्रहृष्टा च सुखमास्ते निराकुला ॥१८॥ तावत्करेणाभिभूतो भर्ता पुत्रः सवेदनः ॥ शिरोऽत्यां नाशं प्रयातः सुहृदां दुःखदायकः ॥१९॥ धर्मराजपुरं प्राप्तुं सर्वभूतापहारकः॥ तस्मिन्क्षणे महाराज धर्मराजस्य किंकराः ॥२०॥ तस्य द्वारमनुप्राप्ताः प्रवेष्टुं गृहमञ्जसा ॥

१ दिवव्रासवयोः–इ० पा० । २ सुपिष्टकेन–इ० पा० । ३ सत्वजयो जयी–इ० पा० । ४ ध्यात्वा–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शत्रुंजयं समानेतुं कालमृत्युपुरःसराः ॥२१॥ पार्श्वस्थितां चित्रलेखां तिलकालंकृताननाम् ॥ दृष्ट्वा प्रनष्टसंकल्पाः परावृत्य गताः पुनः ॥२२॥ गतेषु तेषु स नृपः पुत्रेण सह भारत ॥ नीरुजो बुभुजे भोगान्पूर्वकर्मार्जिताञ्छुभान् ॥ २३ ॥ एतद्व्रतं महाभाग कीर्तितं ते महोदयम् ॥ शंकरेण समाख्यातं मम पूर्वं युधिष्ठिर ॥२४॥ एतत्रिलोकतिलकालकभूषणं ते ख्यातं व्रतं सकलदुःखहरं परं च ॥ इत्थं समाचरति यः स सुखं विहृत्य मर्त्यः प्रयाति पदमापदि पद्मयोनेः ॥ २५ ॥ इति श्रीभविष्ये महापुराणे उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे तिलकव्रतकथनं नामाष्टमोऽध्यायः ॥ ८ ॥ ॥छ॥

॥ श्रीकृष्ण उवाच ॥ ॥ आश्वयुच्छुक्लपक्षस्य प्रथमेऽह्नि दिनोदये ॥ अशोकं पूजयेद्वृक्षं प्ररूढशुभपल्लवम् ॥ १ ॥ विरूढैः सप्तधान्यैश्च गुणकैर्मोदकैः शुभैः ॥ फलैः कालोद्भवैर्दिव्यैर्नालिकेरैः सदाडिमैः ॥ २ ॥ पुष्पधूपादिना तद्वत्पूजयेत्तद्दिनेऽनघ ॥ अशोकं पांडवश्रेष्ठ शोकं नाप्नोति कुत्रचित् ॥ ३ ॥ पितृभ्रातृपतिश्वश्रूश्वशुराणां तथैव च ॥ अशोक शोकशमनो भव सर्वत्र नः कुले ॥ ४ ॥ इत्युच्चार्य ततो दद्यादर्घ्यं श्रद्धासमन्वितम् ॥ पताकाभिरलंकृत्य प्रच्छाद्य शुभवाससा ॥ ५ ॥ दमयन्ती यथा स्वाहा यथा वेदवती सती ॥ तथाशोकव्रतादस्माज्जायते पतिवल्लभा ॥ ॥ ६ ॥ वने व्रजंत्या सद्धर्मः सीतया संप्रदर्शितः ॥ दृष्ट्वाऽशोकं वने पार्थ पल्लवालंकृतांबरम् ॥ ७ ॥ कृत्वा समीपे भर्तारं देवरं च तिलाक्षतैः ॥ दीपालंकृतनैवेद्यधूपसूत्रफलार्चनैः ॥ ८ ॥ अर्चयित्वा ह्यर्थितोऽसौ रक्ताशोको युधिष्ठिर ॥ मैथिल्या प्राञ्जलिर्भूत्वा शृण्वतो राघवस्य च ॥ ९ ॥ चिरं जीवतु मे वृद्धः श्वशुरः कोशलेश्वरः ॥ भर्ता मे देवराश्चैव जीवंतु भरतादयः ॥ कौशल्यामपि जीवन्तीं पश्येयमिति मैथिली ॥ १० ॥ ययाचे तं महाभागा द्रुमं सत्योपयाचनम् ॥ प्रदक्षिणमुपावृत्य ततस्ते प्रययुः पुनः ॥ ११ ॥ एवमन्यापि या नारी पूजयेद्भुवि तं नगम् ॥ तिलतंडुलसंमिश्रैर्यवगोधूमसर्षपैः ॥ १२ ॥ क्षमाप्य वन्दयेन्मूलं पादपं रक्तपल्लवम् ॥ मन्त्रेणानेन कौंतेय प्रणम्य स्त्री पतिव्रता ॥ १३ ॥ महावृक्ष महाशाख मकरध्वजमन्दिर ॥ प्रार्थये त्वां महाभाग वनोपवनभूषण ॥ १४ ॥ एवमाभाष्य तं वृक्षं दत्त्वा विप्राय दक्षिणाम् ॥ सखीभिः सहिता साध्वी ततः स्वभवनं व्रजेत् ॥ १५ ॥ याः शोकनाशनमशोकतरुं तरुण्यः संपूजयंति कुसुमाक्षतधूपदीपैः ॥ ताः प्राप्य सौख्यमतुलं भुवि भर्तृजातं गौरीपदं प्रमुदिताः पुनराप्नुवंति ॥ १६ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे अशोकव्रतवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥

॥ श्रीकृष्ण उवाच ॥ ॥ ज्येष्ठे मासि सिते पक्षे प्रथमेऽह्नि दिनोदये ॥ देवोद्यानभवं हृद्यं करवीरं समर्चयेत ॥१॥

१ अङ्कुरेग–इ० पा० । २ पितृभ्रातृपतिश्वश्रूसुतानां च तथैव च–इ० पा० ।

392

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रक्त[1]तंतुपरीधानं गन्धधूपविलेपनैः ॥ विरूढैः[2] सप्तधान्यैश्च नारंगैर्बीजपूरकैः ॥ २ ॥ गुणकैर्घटकै[3]र्दिव्यैर्नालिकेरैः सुशोभनैः ॥ अभ्युक्ष्याक्षततो येन मंत्रेणैवं क्षमापयेत् ॥ ३ ॥ करवीर विषावास नमस्ते भानुवल्लभ ॥ मौलिमंडनसद्रत्न नमस्ते केशवेशयोः ॥ ४ ॥ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ॥ हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन् ॥ ५ ॥ एवं भक्त्या समभ्यर्च्य दत्त्वा विप्राय दक्षिणाम् ॥ प्रदक्षिणामथो कृत्वा ततः स्वभवनं व्रजेत् ॥ ६ ॥ एतद्व्रतं महाभाग सूर्याराधनकाम्यया ॥ अनसूयया च क्षमया सावित्र्या सत्यभामया ॥ ७ ॥ दमयन्त्या सरस्वत्या गायत्र्या गंगया तथा ॥ अन्याभिरपि नारीभिर्मर्त्यलोकेऽप्यनुष्ठितम् ॥ करवीरव्रतं पार्थ सर्वसौख्यफलप्रदम् ॥ ८ ॥ संपूज्य रत्नकुसुमांचितसर्वशाखं नीलैर्दलैस्तततनुं करवीरवृक्षम् ॥ भुक्त्वा मनोऽभिलषितान्भुवि भव्यभोगानंते प्रयाति भवनं भरताग्र्य भानोः ॥ ९ ॥ इति श्रीभविष्ये महापुराणे उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे करवीरव्रतवर्णनं नाम दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥

॥ ॥ युधिष्ठिर उवाच ॥ ॥ स्वभर्त्रा सह संबद्धमहास्नेहो यथा भवेत् ॥ कुलस्त्रीणां तदाचक्ष्व व्रतं मम सुरोत्तम ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ यमुनायास्तटे पूर्वं[4] मथुरास्ते पुरी शुभा ॥ तस्यां शत्रुघ्ननाम्नाभूद्राजा रामप्रतिष्ठितः ॥ २ ॥ तस्य भार्या कीर्तिमाला नाम्नासीत्प्रथिता भुवि ॥ तया प्रणम्य भगवान्वशिष्ठो मुनिपुंगवः ॥ ३ ॥ पृष्टः सुखं मुनिश्रेष्ठ कथं समुपजायते ॥ ब्रूहि मे तिलसम्बन्धकारणं व्रतमुत्तमम् ॥ ४ ॥ एवमुक्तस्तया ज्ञानी वशिष्ठः कीर्तिमालया ॥ ध्यात्वा मुहूर्तमाचख्यौ कोकिलाव्रतमुत्तमम् ॥ ५ ॥ ॥ श्रीवशिष्ठ उवाच ॥ ॥ आषाढपूर्णिमायां तु संध्याकाले ह्युपस्थिते ॥ संकल्पयेन्मासमेकं श्रावणे श्वःप्रभृत्यहम् ॥ ६ ॥ स्नानं करिष्ये नियता ब्रह्मचर्यस्थिता सती ॥ भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयाम् ॥ ७ ॥ इति संकल्प्य पुरुषो नारी वा ब्राह्मणांतिके ॥ प्राप्यानुज्ञां ततः प्रातः सर्वसामग्रिसंयुतः ॥ ८ ॥ पुरुषः प्रतिपत्कालाद्दन्तधावनपूर्वकम् ॥ नद्यां गत्वा तथा वाप्यां तडागे गिरिनिर्झरे ॥ ९ ॥ स्नानं कुर्याद्व्रती पार्थ सुगन्धामलकैस्तिलैः ॥ दिनाष्टकं तथा पश्चात्सर्वौषध्या पुनः पृथक् ॥ १० ॥ वचयाष्टौ पुनः पिष्ट्वा शिरोरुहविमर्दनम् ॥ स्नात्वा ध्यात्वा रविं चैव वंदित्वा च पितॄनथ ॥ ११ ॥ तर्पयित्वा[5] तिलापिष्टैः कोकिलां पक्षिरूपिणीम् ॥ कलकण्ठीं शुभैः पुष्पैः पूजयेच्चंपकोद्भवैः ॥ १२ ॥ पत्रैर्वा धूपनैवेद्यदीपालक्तकचंदनैः ॥ तिलतन्दुलदूर्वाग्रैः पूजयित्वा क्षमापयेत् ॥ नित्यं तिलव्रती भक्त्या मंत्रेणानेन पांडव ॥ १३ ॥ तिलसहे तिलसौख्ये तिलवर्णे तिलप्रिये ॥ सौभाग्यं

१ रक्तवस्त्रपरीधानम्–इ० पा० । २ विकृतैः–इ० पा० । ३ वटकैः–इ० पा० । ४ पुरा पार्थ–इ० पा० । ५ तर्पयित्वा लिखेदष्टौ कोकिलाः पक्षिरूपिणीः ॥ कलकंठीः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्रव्यपुत्रांश्च देहि मे कोकिले नमः ॥ १४ ॥ इत्युच्चार्य ततः पश्चाद्गृहमभ्येत्य संयतः ॥ कृत्वाहारं स्वपेत्पार्थ यावन्मासः समाप्नुते ॥१५॥ मासांते ताम्रपात्र्यां तु कोकिलां तिलपिष्टजाम् ॥ रत्ननेत्रां स्वर्णपक्षां ब्राह्मणाय निवेदयेत् ॥ १६ ॥ वस्त्रैर्द्धनैर्गुडैर्युक्तां श्रावण्यां कुंडलेऽथ वा ॥ श्वश्रूश्च शुरवर्गे वा दैवज्ञे वा पुरोहिते ॥ व्यासे वा संप्रदातव्या व्रतिभिः शुभकाम्यया ॥१७॥ एवं या कुरुते नारी कोकिलाव्रतमादरात् ॥ सप्त जन्मानि सौभाग्यं सा प्राप्नोति सुविस्तरम् ॥ १८ ॥ निःसापत्न्यं पतिं भव्यं सस्नेहं प्राप्य भूतले ॥ मृता गौरीपुरं याति विमानेनार्कवर्चसा ॥ १९ ॥ एतद्व्रतं वशिष्ठेन मुनिना कथितं पुरा ॥ तथा चानुष्ठितं पार्थ समस्तं कीर्तिमालया ॥ २० ॥ तस्याश्च सर्वं संपन्नं वशिष्ठवचनादिह ॥ पुत्रसौभाग्यसंमानं शत्रुघ्नस्य प्रसादजम् ॥ २१ ॥ एवं यान्यापि कौंतेय कोकिलाव्रतमादरात् ॥ करिष्यति ध्रुवं तस्याः सौभाग्यं च भविष्यति ॥२२॥ ये कोकिलां कलरवां कलकंठपीठां यच्छंति साज्यतिलपिष्टमयीं द्विजेभ्यः ॥ ते नंदनादिषु वनेषु विहृत्य कामं मर्त्ये समेत्य मधुरध्वनयो भवंति ॥ २३ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कोकिलाव्रतं नामैकादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥

॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथ पापापहं वक्ष्ये बृहद्व्रतमनुत्तमम् ॥ सुरासुरमुनीनां च दुर्लभं विधिना शृणु ॥१॥ पर्वण्याश्वयुजस्यांते पायसं घृतसंयुतम् ॥ नक्तं भुञ्जीत शुद्धात्मा ओदनं वैक्षवान्वितम् ॥ २ ॥ आचम्याथ शुचिर्भूत्वा बिल्वजं दंतधावनम् ॥ भक्षयित्वा महादेवं प्रणम्येदमुदीरयेत् ॥ ३ ॥ अहं देवव्रतमिदं कर्तुमिच्छामि शाश्वतम् ॥ तवाज्ञया महादेव यथा निर्वहते कुरु ॥४॥ इत्येवं नियमं कृत्वा यावद्वर्षाणि षोडश ॥ तिथयः प्रतिपत्पूर्वा भजिष्यामीत्यनुक्रमात् ॥ ५ ॥ ततो मार्गशिरे मासि प्रतिपद्यपरेऽहनि ॥ पृष्ट्वा गुरुं चोपवासं महादेवं स्मरन्मुहुः ॥ ६ ॥ स्नात्वा देवं समभ्यर्च्य रात्रौ प्रज्वाल्य दीपकान् ॥ यमुनां च महादेवं नत्वा पश्चान्निमंत्रयेत् ॥ ७ ॥ महादेवरतान्विप्रान्सपत्नीकान्यतव्रतान् ॥ षोडशाष्टौ तदर्धं वा एकं वा शक्त्यपेक्षया ॥ ८ ॥ आमंत्र्य स्वगृहं गत्वा महादेवं स्मरन्क्षितौ ॥ शुचिवस्त्रास्तृतायां तु निराहारो निशि स्वपेत् ॥ ९ ॥ भास्करोदयमासाद्य स्नात्वा चादाय दीपकान् ॥ नैवेद्यं स्नपनं पुष्पं धूपं गच्छेच्छिवालये ॥१०॥ अभ्यंगयित्वा देवेशं कषायैश्च विरूक्षयेत् ॥ स्नपयेत्पञ्चगव्येन पयसा तदनंतरम् ॥ ११ ॥ घृतेन मधुना दध्ना रसेन पयसा पुनः ॥ तिलांबुना ततः स्नाप्य स्नापयेदुष्णवारिणा ॥ १२ ॥ लेपयेत्सुघनं पश्चात्कर्पूरागरुचंदनैः ॥ पुष्पैः संपूज्य दातव्यं हैमं शिरसि पंकजम् ॥ १३ ॥ वस्त्रयुग्मं पताकां च पञ्चवर्णं वितानकम् ॥ धूपं दीपं च घंटाश्च दद्याद्देवस्य शक्तितः ॥१४॥ पश्चान्निवेद्य नैवेद्यं स्तुत्वा स्वभवनं व्रजेत् ॥ सुसमिद्धं ततः कृत्वा पूजयेज्जातवेदसम् ॥१५॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्रतिनश्च तथाचार्य्यं भोजयेन्मिथुनानि च ॥ हेमवस्त्रादिदानेन यथाशक्ति क्षमापयेत् ॥ १६ ॥ एवं विसृज्य तान्सर्वान्सार्द्धं बंधुजनैः स्वयम् ॥ आशयित्वा पञ्चगव्यं हृष्टो भुञ्जीत वाग्यतः ॥ १७ ॥ एवमेव विधिं कृत्वा प्रारभेताधनो धनी ॥ वित्तसामर्थ्यतश्चैव प्रतिमासं च कृत्स्नशः ॥ १८ ॥ वित्तहीनो यथा कश्चिच्छ्रद्धया च पुनःपुनः ॥ पुष्पार्चनविधानेन सर्वमेतत्समाचरेत् ॥ १९ ॥ प्रतिमाससमुपोष्यैवं प्रतिपत्कार्त्तिकावधौ ॥ पारयेत्तं हुतं पार्थ प्रारंभविधिना स्फुटम् ॥ २० ॥ द्वितीये द्वे पञ्चदश्यां कृत्वा नक्तं नराधिपः ॥ प्रतिपत्सद्वितीया चेत्तस्यामुपवसेत्सुधीः ॥ २१ ॥ द्वितीयोपवसेच्छुक्का ततः प्रभृति वत्सरम् ॥ प्रारंभविधिना चैवं द्वितीयामपि पारयेत् ॥ २२ ॥ उपवासद्वयं कृत्वा तृतीयां प्रारभेत्ततः ॥ अनेन क्रमयोगेन यावद्वर्षं समाप्यते ॥ २३ ॥ कृत्वैवं षोडशे वर्षे पूर्णमास्यां समुद्यतः ॥ पूर्ववद्देवमभ्यर्च्य कृशानुं वाभितर्प्य च ॥ २४ ॥ हेमशृंगीं रौप्यखुरां सघंटां कांस्यदोहनाम् ॥ महादेवाय गां दद्याद्दीक्षिताय द्विजाय वै ॥ २५ ॥ शिवभक्तिरतान्विप्रान्विशुद्धांश्चैव षोडश ॥ वस्त्राभरणदानैश्च शक्त्या संपूजयेद्व्रती ॥ २६ ॥ ब्राह्मणांश्च यथाशक्त्या भोजयेदपरानपि ॥ अन्येषां च क्षुधार्तानां दद्याद्दानं यथेच्छया ॥ २७ ॥ बृहत्तपोव्रतं चैव ब्रह्मघ्नाद्यघशोषणम् ॥ भूर्भुवादिषु लोकेषु भूरिभोगप्रदं नृणाम् ॥ २८ ॥ चतुर्णामपि वर्णानां स्वर्गसोपानवत्स्थितम् ॥ न कुर्याद्यो धनं प्राप्य स मुष्टो नष्टचेतनः ॥ २९ ॥ धन्यमायुःप्रदं पुण्यं रूपसौभाग्यवर्द्धनम् ॥ स्त्रीपुंसयोश्च निर्दिष्टं व्रतमेतत्पुरातनम् ॥ ३० ॥ विधवयापि कर्तव्यं भूयोऽवैधव्यहेतवे ॥ सधवयापि कर्तव्यमवियोगाय सद्व्रतम् ॥ ३१ ॥ उपोष्य प्रतिमासं तु भुंजीत ब्राह्मणैः सह ॥ एकद्वित्रिचतुर्भिर्वा स्वशक्त्या पांडुनंदन ॥ ३२ ॥ अंते चांते सुवर्णानां प्रारंभविधिनाचरेत् ॥ पुण्यसंभारमन्विच्छन्गमयित्वा शिवालयम् ॥ ३३ ॥ व्रतविघ्ने महाराज जाते दैवात्कथंचन ॥ तावत्यस्तिथयश्चान्याः समुपोष्याः समाप्तये ॥ ॥ ३४ ॥ अथ शीघ्रतरं कश्चिद्व्रतं कर्तुं समुद्यतः ॥ विधिनानेन राजेन्द्र तेन ग्राह्यं तिथिद्वयम् ॥ ३५ ॥ अंते चांते च वर्षाणां प्रारंभविधिनाचरेत् ॥ अथारब्धे व्रते कश्चिदसमाप्ते म्रियेत चेत् ॥ ३६ ॥ सोऽपि तत्फलमाप्नोति सत्यारंभप्रभावतः ॥ वाचकाः श्रावकाश्चैव व्रतस्यास्य युधिष्ठिर॥भवंति पुत्रसंश्लिष्टाः शिवध्यानानुभावतः ॥३७॥ पुण्यं बृहत्तप इदं व्रतमादराद्ये कुर्वंति षोडशसमा निरताः स्वधर्मे ॥ ते भानुमंडलमभेद्यमचिंत्यमाद्यं भित्त्वा प्रयान्ति शशिशेखरपादमूलम् ॥ ३८ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे बृहत्तपोव्रतवर्णनं नाम द्वादशोऽध्यायः ॥ १२ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ जातिस्मरत्वं देवेश दुष्प्राप्यमिति मे मतिः ॥ तदहं ज्ञातुमिच्छामि प्राप्यते केन



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्मणा ॥ १ ॥ वरप्रदानाद्देवानामृषीणां सेवनेन वा ॥ तीर्थस्नानेन वा देव तपोहोमव्रतेन वा ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ चत्वारि राजन्भद्राणि समुपोष्याणि यत्नतः ॥ तत्प्रभावाद्भवेन्नूनं राजञ्जातिस्मरो नरः ॥ ३ ॥ शुभोदयः पुरा वैश्यो बभूव यमुनातटे ॥ तेन व्रतमिदं चीर्णंमृतः कालक्रमादसौ ॥ ४ ॥ संजयस्य सुतो जातः स्वर्णष्ठीवीति विश्रुतः ॥ व्रतप्रभावाज्जातिज्ञः स च चौरैर्निपातितः ॥ ५ ॥ नारदस्य प्रभावेण पुनरुज्जीव्यतेऽप्यसौ ॥ सस्मार पूर्ववृत्तांतं सकलं व्रतधर्मतः ॥६॥ ॥ युधिष्ठिर उवाच ॥ ॥ संजयस्य कथं पुत्रः स्वर्णष्ठीवीति वा कथम् ॥ दस्युभिश्च कथं नीतो मृत्युं वै जीवितः कथम् ॥ ७ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ संजयो नाम राजासीत्कुशावत्यां नराधिप ॥ देवर्षी तस्य मित्रे च सदा नारदपर्वतौ ॥ ८॥ एकदा संजयगृहं संप्राप्तौ तौ यदृच्छया ॥ स्वगतासनदानाद्यैरुपचारैरपूजयत् ॥ ९ ॥ तेपामथोपविष्टानां पूर्ववृत्तांतभाषिणौ ॥ संजयस्य सुता प्राप्ता तरुणी पितुरंतिकम् ॥ १० ॥ पर्वतः प्राह राजानं कन्येयं वरवर्णिनी ॥ गुप्तगुल्फा संहतोरूः पीनश्रोणिपयोधरा ॥ ११ ॥ पद्मपत्रेक्षणनखा पद्मकिंजल्कसप्रभा ॥ आकुञ्चितमृदुस्निग्धैः केशैरवितततैर्घनैः ॥ १२ ॥ सविलासा गजगतिः सुनासा कोकिलस्वरा ॥ अहो रूपमहो धैर्यमहो लावण्यमुत्तमम् ॥१३॥ तिलपुष्पस्फुटा नासा रूपं संपरिलक्ष्यते ॥ कस्येयं भद्रिका भद्रा ममातिहृदयंगमा ॥ १४ ॥ एवं ब्रुवाणं तं विप्रं विस्मयोत्फुल्ललोचनम् ॥ स राजा प्राह कन्येयं दुहिता मम पर्वत ॥ १५ ॥ अथोवाच नृपं धीमान्नारदः क्षुभितेन्द्रियः ॥ राजन्निवेष्टुकामोऽहं कन्येयं मम दीयताम् ॥ १६ ईप्सितं तव दास्यामि वरं मर्त्येषु दुर्लभम् ॥ एवमुक्तो नारदेन प्रीतात्मा संजयस्तथा ॥ १७ ॥ कृताञ्जलिरुवाचेदं प्रहर्षोत्फुल्ललोचनः ॥ पुत्रो मे दीयतां क्षिप्रमक्षीणकनकाकरः ॥ १८ ॥ यस्य मूत्रं पुरीषं वा श्लेष्माणं क्षिपति क्षितौ ॥ जातरूपं हि तत्सर्वं सुवर्णं भवतु स्थिरम् ॥ १९ ॥ एवमस्त्विति तं राजन्नारदः प्रत्यभाषत ॥ सुवर्णष्ठीविनं[1] पुत्रं ददामि तव सुव्रत ॥ २० ॥ एवमुक्त्वा स तां कन्यां सालङ्कारां सुमध्यमाम् ॥ विवाहयामास तया नारदो हृष्टमानसः ॥२१॥ तत्तस्य चेष्टितं दृष्ट्वा पर्वतः क्रोधमूर्छितः ॥ उवाच नारदं रोषादीप्ताक्षः स्फुरिताधरः ॥ २२ ॥ मयेयं प्रार्थिता पूर्वं त्वया यस्माद्विवाहिता ॥ तस्मान्मया समं स्वर्गं न गंतासि कथंचन ॥ २३ ॥ दत्तस्त्वयास्य यः पुत्रो वरदानेन नारद ॥ सोऽपि चौरैरभिहतः पञ्चत्वमुपयास्यति ॥ २४ ॥ एवमुक्तः पर्वतेन नारदः प्राह दुर्मनाः ॥ न त्वं धर्मं विजानासि किञ्चिन्मूढोऽसि दुर्मते ॥ २५ ॥ सामान्यं सर्वभूतानां कन्या भवति सुव्रत ॥ न तस्या वरणे दुःखं पश्यंतीह बहुश्रुताः ॥ २६ ॥ न सेवितास्त्वया

[1] दात्र-२० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृद्धास्तेन मां शपसे रुषा ॥ पणिग्रहणमंत्राणां निष्ठा स्यात्सप्तमे पदे ॥ २७ ॥ यस्मादेतदविज्ञाय शपसे मामनागसम् ॥ तस्मात्त्वमप्यहो स्वर्गं न गंतासि मया विना ॥ २८ ॥ संजयस्य सुतः शापाद्यदि पञ्चत्वमेष्यति ॥ आनयिष्ये तथाप्येनं यमलोकान्न संशयः ॥२९॥ एवं शप्त्वा तदाऽन्योन्यं देवर्षी तावुभौ पुनः ॥ पूजितौ संजयेनाथ जग्मतुः स्वाश्रमं प्रति ॥ ३० ॥ अथास्य सप्तमे मासि जातः पुत्रो नृपस्य सः ॥ स्वर्णष्ठीवीत्ति नामास्य यथार्थमकरोत्पिता ॥ ३१ ॥ जातिस्मरः स्मरवपुः सुवर्णोत्पत्तिकारणम् ॥ सर्वभूतरुतज्ञोऽभूद्भद्रव्रतफलादिह ॥ ३२ ॥ मूत्रश्लेष्मपुरीपादि यत्किञ्चित्क्षिपति क्षितौ ॥ जायते कनकं सर्वं प्रसादान्नारदस्य च ॥३३॥ तेनासौ यजते राजा विधिवद्भूरिदक्षिणैः ॥ राजसूयादिभिर्यज्ञैर्विविधैर्ब्राह्मणैर्वृतः ॥३४॥ बभार भृत्याननिशं पुपोष स्वजनातिथीन् ॥ चकार देवतागारं सरश्चारामवाटिकाः ॥३५॥ जातस्नेहं तथा पुत्रं ररक्ष रक्षिभिर्वृतः ॥ राशयः कनकस्यास्य बभूवुर्नृपतेः सुतात्॥३६॥ अथास्य दस्यवः केचिच्छ्रुत्वा तं कनकाकरम्॥धनलोलुपया जघ्नुर्दाक्षिणात्या मदोद्धताः॥३७॥तस्मिन्विनष्टे तन्नष्टं वरदानसमुद्भवम् ॥ कनकं तदपश्यंतो जग्मुरन्योन्यतः क्षयम् ॥३८॥ पातितं दस्युभिः पुत्रं दृष्ट्वा राजा सुदुःखितः॥ विललापाकुलमतिः स मुमोह पपात च ॥३९॥ विलपंतं तु तं दृष्ट्वा नारदः प्राह संजयम् ॥ राजन्विषादं मा कार्षीः शृण्विमां भारतीं मम ॥४०॥ इत्युक्त्वा स समाचख्यौ चरितानि महौजसाम् ॥ विशिष्टानां नरेन्द्राणां यतीनां दक्षिणावताम् ॥ ४१ ॥ श्रुत्वा राजा नरेंद्राणां चरितानि महात्मनाम् ॥ विनष्टशोकः सहसा प्रकृतिस्थो बभूव सः ॥४२॥ नारदोऽपि नरेंद्रस्य मृतं पुत्रं यमालयात् ॥ आनयामास तरसा तथारूपं यथा हतम् ॥ ४३ ॥ दृष्ट्वा स्पृष्ट्वा स पुत्रं तं परितुष्टेन चेतसा ॥ व्रीडितो विस्मितश्चैव कृताञ्जलिरथाब्रवीत् ॥ ४४ ॥ किमाश्चर्यं प्रसन्नेन भवता मम नारद ॥ दत्तः पुत्रस्तथाभूतो दस्युभिर्घातितो यथा ॥ ४५ ॥ षण्मासांते पुनरसौ जीवितं सर्वमेव तत् ॥ सस्मार पूर्वं वृत्तांतं भद्राणां पारणात्किल ॥ ४६ ॥ एतत्ते सर्वमाख्यातं जातिस्मरणकारकम् ॥ व्रतं व्रताधिकं श्रेष्ठं किमन्यत्कथयामि ते ॥४७॥ ॥ श्रीकृष्ण उवाच ॥ ॥ ब्राह्मणाश्चैव शूद्राश्च कुले महति जन्म च ॥ दाता क्षमी धनी वाग्मी रूपी स्वैर्भद्रकैर्भवेत् ॥४८॥ चत्वारि राजन्भद्राणि चतुष्पादानि तानि वै ॥ तान्येव बहुविघ्नानि दुष्प्राप्यान्यकृतात्मभिः ॥ ४९ ॥ मार्गशीर्षे तु प्रथमं द्वितीयं फाल्गुने तथा ॥ ज्येष्ठे तृतीयं राजेन्द्र ख्यातं भाद्रपदेपरम् ॥ ५० ॥ फाल्गुनामलपक्षादौ त्रीन्मासांस्तु नराधिप ॥ तत्रिपुष्पमिति ख्यातं तपस्याकरणं परम् ॥ ५१ ॥ ज्येष्ठस्य शुक्लपक्षादौ त्रीन्वै मासान्युधिष्ठिर ॥ तत्रिराममिति ख्यातं सत्यशौर्यप्रदायकम् ॥ ५२ ॥ शुक्ले भाद्रपदस्यादौ त्रीन्मासान्पांडुनंदन ॥ तत्रिरंगमिति ख्यातं बहुविद्याप्रदायकम् ॥ ५३ ॥ शुक्लमार्गशिरस्यादौ



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रीन्मासांस्तु नराधिप ॥ तद्विष्णुपदमित्युक्तं सर्वधर्मप्रदायकम् ॥ ५४ ॥ समासेनैव चोक्तानि भद्राण्येतानि भारत ॥ कर्तव्यानि नरैः स्त्रीभिर्ब्रा
ह्मणानुमतेन वा ॥ ५५ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ विस्तरेणैव मे ब्रूहि देवदेव जगत्पते ॥ भद्राणां नियमाधानं प्रधाननियमांस्तथा ॥ ५६ ॥
॥ ॥ श्रीभगवानुवाच ॥ ॥ शृणु राजन्नवहितो भद्राणां विस्तरं परम् ॥ कथयिष्ये न कथितं कस्यचिद्यन्मया पुरा ॥५७॥ शुक्ले मार्गशिरस्यादौ
चत्वारस्तिथयो वराः ॥ द्वितीया च तृतीया च चतुर्थी पञ्चमी तथा ॥ ५८ ॥ एकभुक्तासनस्तिष्ठेत्प्रतिपद्यां जितेन्द्रियः ॥ प्रभाते तु द्वितीयायां
कृत्वा यत्करणीयकम् ॥ ५९ ॥ प्रहरत्रये समधिके गते स्नानं समाचरेत् ॥ मृद्गोमयं च संगृह्य मंत्रैरेभिर्विचक्षणः ॥ ६० ॥ अहं ते तु प्रदिश्यामि
मंत्राणां विधिमुत्तमम् ॥ येषां देयो न देयो वा ताञ्छृणुष्व वदामि ते ॥ ६१ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये शुचयोऽमलाः ॥ तेषां मंत्राः
प्रदेया वै न तु संकीर्णधर्मिणाम् ॥ ६२ ॥ या स्त्री भर्त्रा वियुक्तापि स्वाचारैः संयुता शुभा ॥ सा च मन्त्रान्प्रगृह्णातु सभर्त्री तदनुज्ञया ॥६३॥
स्नानं नद्यां तडागे वा वाप्यां कूपे गृहेपि वा ॥ दशोत्तरं फलं ज्ञेयमधिकं हि समन्त्रकम् ॥ ६४ ॥ मृदं मंत्रेण संगृह्य सर्वांगेषु प्रलेपयेत् ॥ त्वं
मृत्स्ने वंदिता देवैः समलैर्दैत्यघातिभिः ॥ ६५ ॥ मयापि वंदिता भक्त्या मामतो विमलं कुरु ॥ ६६ ॥ इति मृन्मंत्रः ॥ एवं जपन्मृदं दत्त्वा
स्वहस्ताग्रे समंत्रकम् ॥ जलावगाहनं कुर्यात्कुण्डमालिख्य धर्मवित् ॥ सिद्धार्थकैः कृष्णतिलैर्वचासर्वौषधीः क्रमात् ॥ ६७ ॥ त्वमादिः सर्वदे
वानां जगतां च जगन्मये ॥ भूतानां वीरुधां चैव रसानां पतये नमः ॥ ६८ ॥ गंगासागरजं तोयं पौष्करं नार्मदं तथा ॥ यामुनं सांनिहत्यं च
संनिधानमिहास्तु मे ॥ ६९ ॥ इति स्नानमंत्रः ॥ शरीरालंभनं पूर्वं कृत्वा मृद्गोमयांबुभिः॥एवं स्नात्वा समाप्लुत्य आचम्य तटमास्थितः ॥७०॥
निवस्य वाससी शुभ्रे शुचिः प्रयतमानसः ॥ देवान्पितॄन्मनुष्यांश्च तर्पयेत्सुसमाधिना ॥ ७१ ॥ एवं गृहीतनियमो गृहं गच्छेच्छुचिव्रतः ॥ उप
विश्य न संजल्पेद्यावच्चन्द्रस्य दर्शनम् ॥ ७२ ॥ स्नात्वा चैव ततो नाम तृतीयादिचतुर्दिने ॥ नमः कृष्णाच्युतानंत हृषीकेशेति च क्रमात् ॥
॥ ७३ ॥ चतुर्दिने द्वितीयादौ देवमभ्यर्चयेऽच्युतम् ॥ प्रथमेह्नि स्मृता पूजा पादयोश्चक्रपाणिनः ॥ ७४ ॥ नाभिपूजा द्वितीयेह्नि कर्तव्या
विधिवन्नरैः ॥ मुरद्विषस्तृतीयेह्नि पूजां वक्षसि विन्यसेत् ॥ ७५ ॥ चतुर्थेह्नि जगद्धातुः पूजां शिरसि कल्पयेत् ॥ पुष्पैर्विलेपनैर्धूपैरर्घ्यं दद्युर्वि
भूषणैः ॥ ७६ ॥ क्षीरैर्वैहरिनैवेद्यैर्दीपदानैश्च भक्तितः ॥ पूजयित्वा विधानेन विष्णुं विश्वेश्वरं व्रती ॥ ७७ ॥ ततो दिनावसाने तु मुहूर्ते निर्गते
सति ॥ अर्घ्यं प्रदद्यात्सोमाय भक्त्यातद्भावभावितः ॥ ७८ ॥ शशिचन्द्रशशांकेन्दुनामानि क्रमशो नरः ॥ तृतीयादिषु चन्द्रस्य संकीर्त्यार्घ्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निवेदयेत् ॥ ७९ ॥ स चार्घ्यो यादृशो देय ऋद्धिमद्भिरथेतरैः ॥ तत्ते सम्यक्प्रवक्ष्यामि युधिष्ठिर निबोध मे ॥ ८० ॥ चन्दनागुरुकर्पूरदधिदूर्वाक्षतादिभिः ॥ रत्नैः समुद्रजैश्चान्यैर्वज्रवैडूर्यमौक्तिकैः ॥ ८१ ॥ पुष्पैः फलैः स्वकालोत्थैः खर्जूरैर्नालिकेरकैः ॥ वस्त्राच्छादनगोवाजिभूमिहेमगजान्वितैः ॥ ८२ ॥ सत्त्वयुक्तस्य ऋद्धस्य राजन्नेष विधिः स्मृतः ॥ इतरस्य यथाशक्ति फलपुष्पाक्षतोदकैः ॥ ८३ ॥ लवणं गुडं घृतं तैलं पयःकुंभास्तिलैः सह ॥ अर्घेष्वेतानि शस्तानि शशिवृद्ध्या विवर्द्धयेत् ॥ ८४ ॥ प्रत्यहं वर्द्धयेदर्घ्यं शशिवृद्ध्या नरोत्तम ॥ एवमर्घः प्रदातव्यः शृणु मंत्रविधिक्रमम् ॥ ८५ ॥ नवोनवोसि मासांते जायमानः पुनःपुनः ॥ त्रिरग्निसमवेतो वै देवानाप्यायसे हविः ॥ ८६ ॥ गगनाङ्गणसद्दीप दुग्धाब्धिमथनोद्भव ॥ भाभासितदिगाभोग रमानुज नमोऽस्तु ते ॥ ८७ ॥ दत्त्वार्घ्यं द्विजराजाय तद्विप्राय निवेदयेत् ॥ निर्वर्त्यार्घ्यक्रममिमं ततो भुंजीत वाग्यतः ॥ ८८ ॥ भूमिं तु भाजनं कृत्वा पद्मपत्रसमास्तृताम् ॥ पालाशैर्मधुपत्रैर्वा सुरूपैर्वा शिलातले ॥ ८९ ॥ समालभ्य धरां देवीं मंत्रेणानेन मंत्रवित् ॥ त्वत्तले भोक्तुकामोऽहं देवि सर्वरसोद्भवे ॥ ९० ॥ मदनुग्रहाय सुस्वादं कुर्वन्नममृतोपमम् ॥ एवं जप्त्वा च भुक्त्वा च शाकं पाकं गुणोत्तरम् ॥ ९१ ॥ आचम्य खान्युपालभ्य स्मृत्वा सोमं स्वपेद्भुवि ॥ भोक्तव्यं तु द्वितीयायामक्षारलवणं हविः ॥ ९२ ॥ मुन्यन्नं तु तृतीयायां चतुर्थ्यां गोरसोत्तरम् ॥ घृताक्ताः[1] सगुणाः शस्ताः पञ्चम्यां कृशरास्सदा ९३ ॥ शस्ता भद्रेषु सर्वेषु सदा श्यामाकतण्डुलाः ॥ प्रसाधिका घृतं गव्यं वन्यं फलमयाचितम् ॥ ९४ ॥ प्रातः स्नानं ततः कृत्वा संतर्प्य पितृदेवताः॥भोजयेद्ब्राह्मणान्भक्त्या दत्तदानान्विसर्जयेत ॥९५॥ भृत्यबन्धुजनैः सार्द्धं पश्चाद्भुञ्जीत कामतः ॥ एवं भद्रेषु सर्वेषु[2] त्रिमासेषु गतेषु यः ॥९६॥ करोत्येतन्नरो भक्त्या वर्षमेकममत्सरी ॥ तस्य श्रीर्विजयश्चैव नित्यं सोमः प्रसीदति ॥९७॥ एतत्करोति या कन्या शुभं प्राप्नोति सा पतिम् ॥ दुर्भगा सुभगा साध्वी भवत्यविधवा सदा ॥ ९८ ॥ राज्यार्थी लभते राज्यं धनार्थी लभते धनम् ॥ पुत्रार्थी[3] लभते पुत्रानिति प्राह प्रभाकरः ॥ ९९ ॥ योषित्कुलाकुलविवाहमनोरमाणि शय्यान्नयानशयनासनशोभितानि ॥ भद्राण्यवाप्य धनपुत्रकलत्रजानि जातिस्मरो भवति भारत भद्रकर्ता ॥ १०० ॥ इति श्री भविष्ये महापुराण उत्तर पर्वणि श्रीकृष्णयुधिष्ठिरसंवादे भद्रोपवासव्रतनिरूपणं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ छ ॥ इति प्रतिपत्कल्पः समाप्तः ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ संत्यन्यास्तिथयः पार्थ द्वितीयाद्याः परिश्रुताः ॥ मासैश्चतु

१ भोज्याः–इ० पा० । २ प्रकाशेषु–इ० पा० । ३ अपुत्रः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिश्चत्वारः प्रावृट्छुक्लाः क्ष्मापहाः ॥ १ ॥ गोपिताश्च सदा लोके न प्रोक्ताश्च मया क्वचित् ॥ प्रकाशयामि ताः पार्थ शृणु सर्वा मया हि ताः ॥ २ ॥ एका तु श्रावणे मासि अन्या भाद्रपदे तथा ॥ अपराश्वयुजे मासि चतुर्थी कीर्तिके भवेत् ॥ ३ ॥ श्रावणे कलुषा नाम प्रोष्ठपादे च गीर्मला ॥ आश्विने प्रेतसंचारा कार्तिके च यमा स्मृता ॥४॥ ॥ युधिष्ठिर उवाच ॥ ॥ कस्मात्सा कलुषा प्रोक्ता कस्मात्सा गीर्मला मता ॥ कस्मात्सा प्रेतसंचारा कस्माद्याम्या प्रकीर्तिता ॥ ५ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पुरा वृत्रवधे वृत्ते प्राप्तराज्ये पुरंदरे ॥ ब्रह्महत्यापनोदार्थमश्वमेधे प्रवर्तिते ॥ ६ ॥ क्रोधादिन्द्रेण वज्रेण ब्रह्महत्या निषूदिता ॥ षट्खण्डा च कृता क्षिप्ता वृक्षे तोये महीतले ॥ ७ ॥ नार्यां ब्रह्महने वह्नौ संविभज्य यथाक्रमम् ॥ तत्पापं श्रावणे व्यूढं द्वितीयायां दिनोदये ॥८॥ नारीवृक्षनदीभूमिवह्निब्रह्महनेष्वथ ॥ निर्मलीकरणं जातमतोर्थं कलुषा स्मृता ॥९॥ मधुकैटभयो रक्ते पुरा मग्नेति मेदिनी ॥ अष्टांगुला पवित्रा सा नारीणां तु रजो मलम् ॥ १० ॥ नद्यः पूरमलाः सर्वा वह्नेर्धूमशिखा मलः ॥ कलुपाणि चरंत्यस्यां तेनैषा कलुपा मता ॥ ११ ॥ गीर्गिरा भारती वाणी वाचा मेधा सरस्वती ॥ गीर्मलं वहते यस्माद्द्वितीया गीर्मला मता ॥ १२ ॥ देवर्पिपितृधर्माणां निंदका नास्तिकाः शठाः ॥ तेषां सा वाग्मलव्यूढा द्वितीया तेन गीर्मला ॥ १३ ॥ अनध्यायेषु शास्त्राणि पाठयंति पठंति च ॥ शाब्दिकास्तार्किकाः श्रौतास्तेषां शब्दापशब्दजाः ॥ १४ ॥ मला व्यूढा द्वितीयायामतोर्थं गीर्मला च सा ॥१४॥ प्रेतास्तु पितरः प्रोक्तास्तेषां तस्यां तु संचरः ॥ द्वितीयायां च लोकेषु तेन सा प्रेतसंचरा ॥ १५ ॥ अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा ॥ १६ ॥ पितृपितामहप्रेतसंचरात्प्रेतसंचरा ॥ १६ ॥ पुत्रैः पौत्रैश्च दौहित्रैः स्वधामंत्रैः सुपूजिताः ॥ श्राद्धदानमखैस्तृप्ता यात्यतः प्रेतसंचराः ॥ १७ ॥ कार्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ॥ यमो यमुनया पूर्वं भोजितः स्वगृहे तदा ॥ १८ ॥ द्वितीयायां महोत्सर्गे नारकीयाश्च तर्पिताः ॥ पापेभ्यो विप्रमुक्तास्ते मुक्ताः सर्वे विबंधनाः ॥ भ्रामिता नर्तितास्तुष्टाः स्थिताः सर्वे यदृच्छया ॥१९॥ तेषां महोत्सवो वृत्तो यमराष्ट्रे सुखावहः ॥ ततो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर ॥ २० ॥ अस्यां निजगृहे पार्थ न भोक्तव्यमतो बुधैः ॥ स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ॥ २१ ॥ दानानि च प्रदेयानि भगिनीभ्यो विधानतः ॥ स्वर्णालंकारवस्त्राद्यैः पूजासत्कारभोजनैः ॥ २२ ॥ सर्वा भगिन्यः संपूज्या अभावे प्रतिपत्तिगाः ॥ पितृव्यभगिनी हस्तात्प्रथमायां युधिष्ठिर ॥ २३ ॥ मातुलस्य सुताहस्ताद्द्वितीयायां पुनर्नृप ॥

१ पद्ममाना—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पितृमातृस्वसारौ ये तृतीयायां तयोः करात् ॥ २४ ॥ भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परम् ॥ सर्वासु भगिनीहस्ताद्भोक्तव्यं बलवर्द्धनम् ॥ ॥२५॥ धन्यं यशस्यमायुष्यं धर्मकामार्थवर्द्धनम् ॥ व्याख्यातं सकलं स्नेहात्सरहस्यं मया तव ॥२६॥ यस्यां तिथौ यमुनया यमराजदेवः सम्भोजितो जगति सत्त्वरसौहृदेन ॥ तस्यां स्वसुः करतलादिह यो भुनक्ति प्राप्नोति वित्तमथ भोज्यमनुत्तमं सः ॥ २७ ॥ इति श्रीभविष्ये महापुराण उत्तर पर्वणि श्रीकृष्णयुधिष्ठिरसंवादे यमद्वितीयाव्रतमाहात्म्यं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥छ॥ ॥ युधिष्ठिर उवाच ॥ ॥ भगवन्भवता प्रोक्तं धर्मार्थादेः सुसाधनम् ॥ गार्हस्थ्यं तच्च भवति दंपत्योः प्रीयमाणयोः ॥ १ ॥ पत्नीहीनः पुमान्पत्नी भर्त्रा विरहिता तथा ॥ धर्मकामार्थसंसिद्धी न स्यातां मधुसूदन ॥ २ ॥ तद्ब्रूहि देवदेवेश विधवा स्त्री न जायते ॥ व्रतेन येन गोविंद पत्न्याऽविरहितो नरः ॥ ३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अशून्यशयनीं नाम द्वितीयां शृणु तां मम ॥ यामुपोष्य न वैधव्यं प्राप्नोति स्त्री युधिष्ठिर ॥ ४ ॥ पत्नीविमुक्तश्च नरो न कदाचित्प्रजायते ॥ शेते जगत्पतिर्विष्णुः श्रिया सार्द्धं यदा किल ॥ ५ ॥ अशून्यशयनं नाम तदा ग्राह्या च सा तिथिः ॥ उपवासेन नक्तेन तथैवायाचितेन च ॥ ६ ॥ कृष्णपक्षे द्वितीयायां श्रावणे नृपसत्तम ॥ स्नानं नद्यां तडागे वा गृहे वा नियतात्मवान् ॥ ७ ॥ कृत्वा पितॄन्मनुष्यांश्च देवान्संतर्प्य भक्तिमान् ॥ स्थंडिलं चतुरस्रं तु मृन्मयं कारयेत्ततः ॥ ८ ॥ तत्रस्थं श्रीधरं श्रीशं भक्त्याभ्यर्च्य श्रिया सह ॥ नैवेद्यपुष्पधूपाद्यैः फलैः कालोद्भवैः शुभैः ॥ ९ ॥ इममुच्चारयेन्मंत्रं प्रणम्य जगतः पतिम् ॥ श्रीवत्सधारिञ्छ्रीकांत श्रीधामञ्छ्रीपतेऽव्यय ॥ १० ॥ गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामदम् ॥ अग्नयो मा प्रणश्यंतु मा प्रणश्यन्तु देवताः ॥ पितरो मा प्रणश्यंतु मत्तो दांपत्यभेदतः ॥११॥ लक्ष्म्या वियुज्यते कृष्ण न कदाचिद्यथा भवान् ॥ तथा कलत्रसम्बन्धो देव मा मे प्रणश्यतु ॥ १२ ॥ लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा ॥ शय्या ममाप्यशून्यास्तु तथा जन्मनिजन्मनि ॥ १३ ॥ एवं प्रसाद्य पूजां च कृत्वा लक्ष्म्या हरेस्तथा ॥ चन्द्रोदये स्नानपूर्वं पञ्चगव्येन संयुतम् ॥ विप्राय दक्षिणां दद्यात्स्व शक्त्या फलसंयुताम् ॥ १४ ॥ अनेन विधिना राजन्यावन्मासचतुष्टयम् ॥ कृष्णपक्षे द्वितीयायां प्रागुक्तविधिमाचरेत् ॥ १५ ॥ कार्त्तिके चाथ संप्राप्ते शय्यां श्रीकांतसंयुताम् ॥ सोपस्करां सोदकुंभां सान्नां दद्याद्द्विजातये ॥ १६ ॥ प्रतिमासं च सोमाय अर्घ्यं दद्यात्समंत्रकम् ॥ दध्यक्षतैर्मूलफलै रत्नैः सौवर्णभाजनैः ॥ १७ ॥ गगनांगणसद्दीप दुग्धाब्धिमथनोद्भव ॥ आभासितदिगाभोग रमानुज नमोस्तु ते ॥ १८ ॥ एवं करोति यः

१ प्रयत्नात्–इ० पा० । २ अथ सौख्यम्–इ० पा० । ३ अच्युत–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्यङ्नरो मासचतुष्टयम् ॥ तस्य जन्मत्रयं यावद्गृहभङ्गो न जायते ॥ १९ ॥ अशून्यशयनश्चैव धर्मकामार्थसाधकः ॥ भवत्यव्याहतैश्वर्यः पुरुषो नात्र संशयः ॥ २० ॥ नारी च पार्थ धर्मज्ञा व्रतमेतद्यथाविधि ॥ या करोति न सा शोच्या बन्धुवर्गस्य जायते ॥ २१ ॥ वैधव्यं दुर्भगत्वं च भर्तृत्यागं च सत्तम ॥ प्राप्नोति जन्मत्रितयं न सा पांडुकुलोद्वह ॥ २२ ॥ एषा ह्यशून्यशयना नृपते द्वितीया ख्याता समस्तकलुषापहराऽद्वितीया ॥ एतां समाचरति यः पुरुषोऽथ योषित्प्राप्नोत्यसौ शयनमग्र्यमहार्हभोग्यम् ॥ २३ ॥ इति श्रीभविष्ये महापुराणे उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे अशून्यशयनव्रतमाहात्म्यं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ फाल्गुनेऽप्यसिते पक्षे तृतीयायामुपोपिता ॥ प्रातः स्थित्वा ब्रह्मचर्ये जटामुकुटशोभिता ॥ १ ॥ गोधारथगतां देवीं रुद्रध्यानपरायणाम् ॥ पूजयेद्गन्धकुसुमैर्दीपालक्तकचंदनैः ॥ केसरैर्मधुरैर्द्रव्यैः स्वर्णमाणिक्यपूजया ॥ २ ॥ ॐ भूपिका देवभूपा च भूपिका ललिता उमा ॥ तपोवनरता गौरी सौभाग्यं मे प्रयच्छतु ॥ ३ ॥ दौर्भाग्यं मे शमयतु सुप्रसन्नमनाः सदा ॥ अवैधव्यं कुले जन्म ददात्वपरजन्मनि ॥ ४ ॥ अङ्गेऽङ्गे च ममोपाङ्गे पर्वेपर्वे स्थितामृतम् ॥ सुखदृष्टिस्पर्शरसं गौरी सौभाग्यं यच्छतु ॥ ५ ॥ एवमुच्चार्य मंत्रांश्च नारीज्ञानवती सती ॥ पूजयेद्ब्राह्मणोक्तैस्तु मंत्रैर्मुखसुवासिनी ॥ ६ ॥ जीरकैः कटुहुण्डैश्च लवणैर्गुडसार्पिषा ॥ हृद्यैरार्द्रैः फलैः स्वर्णैर्मनोज्ञैः पुष्पबन्धनैः ॥ ७ ॥ कुसुमैः कुंकुमैर्गन्धैः कालेयागुरुचन्दनैः ॥ सिन्दूरेणातिरक्तेन वस्त्रैर्नानाविधैः शुभैः ॥ ८ ॥ नेत्रैरनेकदेशोत्थैः पूपकैस्तिलतण्डुलैः ॥ अशोकैश्च त्रिगुणकैर्घृतपूर्णैस्तु मोदकैः ॥ ९ ॥ इत्येवमादिनैवेद्यैः पूजयित्वा महाद्रुमम् ॥ प्रदक्षिणं ततः कृत्वा दत्त्वा विप्राय दक्षिणाम् ॥ १० ॥ एतत्करोति या पुत्री तृतीयाव्रतमुत्तमम् ॥ ततः प्राप्स्यति दुष्प्राप्यं त्रैलोक्ये श्रीधरं प्रति ॥ ११ ॥ एतद्व्रतं मया ख्यातं यास्यंति शाश्वतीः समाः ॥ व्याख्यातं कश्यपेनादौ रुक्मिण्या व्रतमुत्तमम् ॥ १२ ॥ याश्चरिष्यंति ताः सर्वा भविष्यंति निरामयाः ॥ अङ्गप्रत्यङ्गसुभगा लोकदृष्टिमनोहराः ॥ ॥ १३ ॥ स्थित्वा वर्षशतं चान्ते ततो रुद्रपुरं शुभम् ॥ यास्यंति हंसयानेन किंकिणीशब्दनादिना ॥ १४ ॥ तत्र त्वारमयिष्यंति स्वभर्तॄन्वत्सरान्बहून् ॥ दिव्यभोगभुजो हृष्टाः सिद्धचष्टकसमन्विताः ॥ १५ ॥ अर्घं महार्घमणिकुंकुमकेसराढ्यं स्रग्गंधमुग्धमुखरालिकुलोपगीतम् ॥ दत्त्वा फलाक्षतयुतं मधुपादपस्य गौरीव लोकमहिता भवतीह नारी ॥ १६ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे मधूकतृतीयाव्रतवर्णनं नाम षोडशोऽध्यायः ॥ १६ ॥ छ ॥ युधिष्ठिर उवाच ॥ मेघपालीव्रतं कृष्ण कदाचित्क्रियते नृभिः ॥ किं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुण्यं किमनुष्ठानं कीदृग्वल्ली स्मृता तु सा ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ आश्वयुक्कृष्णपक्षे तु तृतीयायां युधिष्ठिर ॥ मेघपाल्यै प्रदातव्यो भक्त्या स्त्रीभिर्नृभिस्तथा ॥ २ ॥ अर्घो विरूढैर्गोधूमैः सप्तधान्यसमन्वितैः ॥ तिलतंडुलपिंडैर्वा दातव्यो धर्मलिप्सुभिः ॥ ३ ॥ तांबूलसदृशैः पर्वै रक्ता वल्ली समंजरी ॥ वाटीषु ग्राममार्गेषु प्रोत्थिता पर्वतेऽपि च ॥४॥ मेघपाल्यां धान्यतैलगुडकुंकुमहेमनान् ॥ पदानपि च कुर्वंति जना वाणिज्यजीवनाः ॥ ५ ॥ पापं सत्यानृतं कृत्वा द्रव्यलुब्धाः फलान्विताः ॥ अर्घ्यं दत्त्वा मेघपाल्यै नाशयंति क्षणादिह ॥ ६ ॥ मानोन्मानैर्जन्म मध्ये यत्पापं कुत्रचित्कृतम् ॥ तत्सर्वं नाशमायाति व्रतेनानेन पांडव ॥ ७ ॥ मेघपाली शुभे स्थाने शुभे देशे समुत्थिता ॥ पूजनीया वर स्त्रीभिः फलैः पुष्पैस्तथाक्षतैः ॥ ८ ॥ खर्जूरैर्नालिकेरैश्च दाडिमैः करवीरकैः ॥ गंधधूपैर्दधिदीपैर्विरूढैर्धान्यसंचयैः ॥ ९ ॥ रक्तवस्त्रैः समाच्छाद्य पिष्टातकविभूषिताम् ॥ कृत्वार्घ्यः संप्रदातव्यो मंत्रेणानेन भारत ॥ १० ॥ वेदोक्तेन द्विजो विद्वांस्तच्च तस्यै निवेदयेत् ॥ इत्येवं पूजयित्वा तां मेघपालीं पुमांस्ततः ॥ ११ ॥ नारी वा पुरुषव्याघ्र प्राप्नोति परमां श्रियम् ॥ स्थित्वा वर्षशतं मर्त्ये सुखसौभाग्यगर्विते ॥ १२ ॥ विष्णुलोकमवाप्नोति देहांते यानसंस्थितः ॥ कुलानि सप्त नयति स्वर्गं स्वानि रसातलात् ॥ उद्धृत्य नात्र संदेहस्त्वया कार्यो युधिष्ठिर ॥ १३ ॥ नरकभीरुतया ददाति योऽर्घ्यं फलाद्ययुतं ननु मेघपालेः ॥ उन्मानकूटकपटानि कृतानि यानि पापानि हंति सवितेव तमः प्ररोहान् ॥ १४ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे मेघपालीतृतीयाव्रतवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ स्त्रीणां संपद्यते येन मर्त्यलोके गृहं शुभम् ॥ पतिप्रेम तथात्यंतं तन्मे ब्रूहि व्रतं शुभम् ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ एकदा पार्वतीशंभू स्थितौ मुनिसुरावृतौ ॥ कैलासशिखरे रम्ये नानाधातुविचित्रिते ॥ २ ॥ नानाद्रुमलताकीर्णे नानापुष्पोपशोभिते ॥ मुनिकिन्नरसंघुष्टे गेयनृत्यसमाकुले ॥ ३ ॥ शंकरः पार्वतीं प्राह किं त्वया सद्व्रतं कृतम् ॥ वामारूपेण मेत्यंतं प्रियासि वरवर्णिनि ॥ ४ ॥ आगच्छ जानुदेशं तु सुप्रसन्ना तथा प्रिये ॥ ब्रूहि चावितथं सर्वं त्वया पार्वति यत्कृतम् ॥ ५ ॥ इत्युक्ता प्रणता भूत्वा गौरी प्राह शिवं शुभा ॥ तृतीयायां मया चीर्णं पुरा रंभाव्रतं शुभम् ॥ ६ ॥ तेन मे त्वं मनोहारी भर्ता लब्धोसि शंकर ॥ ईश्वरी वाप्यहं स्त्रीणां तव देहार्द्धहारिणी ॥ ७ ॥ ॥ ईश्वर उवाच ॥ ॥ कीदृशं तद्व्रतं भद्रे सर्वसौख्यप्रदायकम् ॥ ब्रूहि पार्वति यत्नेन यच्चीर्णं पितुरंतिके ॥ ८ ॥ ॥ गौर्युवाच ॥ पुराहं देव तिष्ठामि कुमारी भवने पितुः ॥ हिमवद्गह्वरे रम्ये सखीगणसमावृता ॥ ९ ॥ ततोऽहं मेनया प्रोक्ता स्वपित्रा च हिमाद्रिणा ॥ पुत्रि रंभाव्रतं चार्यं वरसौभा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्यवर्धनम् ॥ १० ॥ येन प्रारब्धमात्रेण सर्वं संपत्स्यते तव ॥ सौभाग्यं स्त्रीगणैश्वर्यं महादेवीपदं तथा ॥ ११ ॥ एवं करोमि वै मातर्मम चोक्तं पुरस्त्वया ॥ मनोभिलषितं येन येन प्राप्नोमि शंकरम् ॥ १२ ॥ मेनोवाच ॥ अद्य शुक्लतृतीयायां स्नात्वा नियमतत्परा ॥ कुरु पार्श्वेषु पञ्चाग्नीञ्ज्वालमानान्हुताशनान् ॥ १३ ॥ गार्हपत्यं दक्षिणाग्निमन्यं चाहवनीयकम् ॥ पंचमं भास्करं तेज इत्येते पंच वह्नयः ॥ १४ ॥ एतेषां मध्यतो भूत्वा तिष्ठ पूर्वमुखा चिरम् ॥ चतुर्भुजां ध्यानपरां पद्मयोपरि संस्थिताम् ॥ १५ ॥ मृगाजिनच्छन्नकुचां जटावल्कलधारिणीम् ॥ सर्वाभरणसंयुक्तां देवीमभिमुखीं कुरु ॥ १६ ॥ महालक्ष्मीर्महाकाली महामाया महामतिः ॥ गङ्गा च यमुना सिंधुः शतद्रुर्नर्मदा मही ॥ १७ ॥ सरस्वती वैतरिणी सैव प्रोक्ता महासती ॥ तस्याश्च प्रेक्षणपरा भव तद्भावभासिता ॥ १८ ॥ होमं कुर्युर्यतात्मानो ब्राह्मणाः सर्वतोदिशम् ॥ देव्याः पूजा प्रकर्तव्या पुष्पधूपादिना ततः ॥१९॥ बहुप्रकारनैवेद्यं नैवेद्यं घृतपाचितम् ॥ स्थापयेत्पुरतो देव्याः पृथक्सौभाग्यमेव च ॥ २० ॥ जीरकं कटुहुंडश्चाप्यपूपान्कुसुमं तथा ॥ निपाचां पावनतरां लवणं शर्करां गुडम् ॥ २१ ॥ पुष्पमंडपिका कार्या गंधपुष्पाधिवासिता ॥ पद्मासनेन संतिष्ठेद्यावत्परिणतो रविः ॥ ततः प्रणम्य रुद्राणीं मंत्रमेतमुदीरयेत् ॥ २२ ॥ वेदेषु सर्वशास्त्रेषु दिवि भूमौ धरातले ॥ दृष्टः श्रुतश्च बहुशः शंकाविरहितः स्तवः ॥ २३ ॥ त्वं शक्तिस्त्वं स्वधा स्वाहा त्वं सावित्री सरस्वती ॥ पतिं देहि गृहं देहि वसु देहि नमोस्तु ते ॥ २४ ॥ एवं संक्षमयेद्देवीं प्रणिपत्य पुनःपुनः ॥ देहि भक्त्या गृहं रम्यं विचित्रं बहुभूमिकम् ॥ आच्छाद्यद्वारकेदारकपोतादिविभूषितम् ॥ २५ ॥ कुड्यस्तंभगवाक्षाढ्यं मणिमंडिततोरणम् ॥ पद्मरागमहानीलवज्रवैडूर्यभूषितम् ॥ २६ ॥ गृहदानविधानेन ब्राह्मणाय यशस्विने ॥ सपत्नीकाय संपूज्य सर्वोपस्करसंयुतम् ॥ २७ ॥ सुवासिनीभ्यस्तद्देयं नैवेद्यं सूर्यसंस्थितम् ॥ निर्वर्त्य विधिनानेन तत्पश्चात्क्षमयेदघम् ॥ २८ ॥ दांपत्यानि च भोज्यानि चतुर्थ्यां मधुरै रसैः ॥ इत्युक्तसुमया चीर्णं हर रंभाव्रतं परम् ॥ २९ ॥ व्रतांतेगस्त्यमुनये दत्तं गृहवरं शुभम् ॥ लोपामुद्रा प्रिया पत्नी तस्य वेश्मनि पूजिता ॥ ३० ॥ तेन धर्मेण देव त्वं भर्ता लब्धोऽसि शंकरः ॥ अर्द्धांकेऽपि स्थिता तेन याश्चारिष्यंति योषितः ॥३१॥ कौंतेय पुरुषो वापि ख्यातं रंभाव्रतं भुवि ॥ तासां पुत्रा गृहं भोगाः कुलवृद्धिर्भविष्यति ॥ ३२ ॥ स्त्रीणां चातुर्यसौभाग्यं गार्हस्थ्यं सर्वकामिकम् ॥ बालावृद्धासुमध्यानां रूपलावण्यबृंहणम् ॥ सपत्नीदर्पदलनं वशीकरणमुत्तमम् ॥ ३३ ॥ हिमवद्विंध्ययोर्मध्ये आर्यावर्ते मनोहरे ॥ उत्पत्य शोभने वासे पूर्वोत्पन्नधने कुले ॥ ३४ ॥ मृतः शक्रपुरं याति ततो विष्णुपुरं व्रजेत् ॥ ततः शिवपुरं याति व्यासस्य वचनं यथा ॥ ३५ ॥ यद्रंभया किल भयापहरं ततश्च गौर्या हिमाद्रिभवनस्थि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथापि चीर्णम् ॥ तस्या व्रतं सुविकरोति रता च धर्मे ब्रह्मेशकेशवपतिं सुखदं लभेत ॥ ३६ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे पञ्चाग्निसाधनाख्यं रंभातृतीयाव्रतं नामाष्टादशोऽध्यायः ॥ १८ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पार्थ भाद्रप मासि शुक्लपक्षे दिनोदये ॥ तृतीयायां चतुर्थ्यां च शुद्धायां प्रतिवत्सरम् ॥ १ ॥ उपवासेन गृह्णीयाद्व्रतं नाम्ना तु गोपदम् ॥ स्नात्वा नरो वा नारी वा पुष्पधूपविलेपनैः ॥ २ ॥ दध्यक्षतैश्च मालाभिः पिष्टकैर्वनमालया ॥ अभ्यंजयेद्गवां शृंगं खुरं पुच्छान्तमेव च ॥ ३ ॥ दद्याद्ग्रासाह्निकं भक्त्या तासां पूर्वापराह्णयोः ॥ अनग्निपाकं भुञ्जीत तैलक्षारविवर्जितम् ॥ ४ ॥ व्रजंतीनां गवां नित्यमायांतीनां च भारत ॥ पुरद्वारेथ वा गोष्ठे मन्त्रेणानेन मंत्रवित् ॥ अर्घ्यं प्रदद्याद्धृष्टचां वा गवां पादेषु पांडव ॥ ५ ॥ माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः ॥ प्रनुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ ६ ॥ ॥ इति गवां मंत्रः ॥ ॥ गावो मे अग्रतः सन्तु गावो मे संतु पृष्ठतः ॥ गावो मे हृदये संतु गवां मध्ये वसाम्यहम् ॥ ७ ॥ इत्थं संपूज्य दत्त्वार्घं ततो गच्छेद्गृहाश्रमम् ॥ पंचम्यां क्रोधरहितो भुञ्जीत गोरसं दधि ॥ ८ ॥ शालिपिष्टं फलं शाकं तिलमन्नं च शोभनम् ॥ भुक्तावसाने राजेन्द्र संयतस्तां निशां स्वपेत् ॥९॥ प्रभाते गोपदं दत्त्वा ब्राह्मणाय हिरण्मयम् ॥ क्षमयेच्च गवां नाथं गोविंदं गरुडध्वजम् ॥ १० ॥ अर्च्यतेऽत्र यथा गावस्तथा गोवर्धनो गिरिः ॥ प्रणम्याच्युतमुद्दिश्य शृणु यत्फलमाप्नुयात् ॥११॥ गोभक्तो गोव्रतं कृत्वा भक्त्या शक्त्या च गोष्पदम् ॥ सौभाग्यं रूपलावण्यं प्राप्नोति पृथिवीतले ॥ १२ ॥ गोतर्णकाकुलं गेहं गोकुलं च समासतः ॥ धनधान्यसमोपेतशालीक्षुरसमृद्धिमान् ॥१३॥ संतानं पूजितं लब्ध्वा ततः स्वर्गेऽमरो भवेत् ॥ दिव्यरूपधरः स्रग्वी दिव्यालंकारभूषितः ॥१४॥ गन्धर्वैर्गीतवाद्येन सेव्यमानोऽप्सरोगणैः ॥ दिव्यं युगशतं छित्त्वा ततो विष्णुपुरं व्रजेत ॥ १५ ॥ यो गोपदव्रतमिदं कुरुते त्रिरात्रं गा वै प्रपूजयति गोरसपूजनाच्च ॥ गोविंदमादिपुरुषं प्रणतः सवित्रामालोकमुत्तममुपैति गवां पवित्रम् ॥ १६ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे तृतीयाव्रते गोष्पदतृतीयाव्रतं नामैकोनविंशोऽध्यायः ॥ १९ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शुक्ले भाद्रपदस्यैव तृतीयायां समर्चयेत् ॥ सर्वधान्यैस्तां विरूढां भूतां हरितशाद्वलाम् ॥ हरकालीं देवदेवीं गौरीं शंकरवल्लभाम् ॥ १ ॥ गन्धैः पुष्पैः फलैर्धूपैर्नैवेद्यैर्मोदकादिभिः ॥ प्रीणयित्वा समाच्छाद्य पद्मरागेन भास्वता ॥ २ ॥ घण्टावाद्यादिभिर्गीतैः शुभैर्दिव्यकथानुगैः ॥ कृत्वा जागरणं

१ अर्घम्—इ० पा०।





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रात्रौ प्रभाते ह्युद्गते रवौ ॥ ३ ॥ सुवासिनीभिः सा नेया मध्ये पुण्यजलाशये ॥ तस्मिन्विसर्जयेत्पार्थ हरकालीं हरिप्रियाम् ॥४॥ ॥ युधिष्ठिर उवाच ॥ ॥ भगवन्हरकालीति का देवी प्रोच्यते भुवि ॥ आर्द्रधान्यैः स्थिता कस्मात्पूज्यते स्त्रीजनेन सा ॥ पूजिता किं ददातीह सर्वं मेब्रूहि केशव ॥ ५ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ सर्वपापहरां दिव्यां मत्तः शृणु कथामिमाम् ॥ आसीद्दक्षस्य दुहिता कालीनाम्नी तु कन्यका ॥ ६ ॥ वर्णेनापि च सा कृष्णा नवनीलोत्पलप्रभा ॥ सा च दत्ता त्र्यंबकाय महादेवाय शूलिने ॥७॥ विवाहिता विधानेन शंखतूर्यानुनादिना ॥ यत्कुर्यांदागतैर्देवैर्ब्राह्मणानां च निस्वनैः ॥ ८ ॥ निर्वर्तिते विवाहे तु तया सार्धं त्रिलोचनः ॥ क्रीडते विविधैर्भोगैर्मनसः प्रीतिवर्धनैः ॥ ९ ॥ अथ देवसमानस्तु कदाचित्स वृषध्वजः ॥ आस्थानमंडपे रम्ये आस्ते विष्णुसहायवान् ॥ १० ॥ तत्रस्थश्चाह्वयामास नर्मणा त्रिपुरांतकः ॥ कालीं नीलोत्पलश्यामां गणमातृगणावृताम् ॥ ११ ॥ एह्येहि त्वमितः कासि कृष्णांजनसमन्विते ॥ कालसुंदरि मत्पार्श्वे धवले त्वमुपाविश ॥ १२ ॥ एवमुत्क्षिप्तमनसा देवी संक्रुद्धमानसा ॥ श्वासयामास ताम्राक्षी बाष्पगद्गदया गिरा ॥ १३ ॥ रुरोद सस्वरं बाला तत्रस्था स्फुरिताधरा ॥ किं देव योगात्ताम्रा गौर्गौरी चेत्यभिधीयते ॥ १४ ॥ यस्मान्ममोपमा दत्ता कृष्णवर्णेन शंकर ॥ हरकालीति वाहूता देवर्षिगणसेविता ॥ १५ ॥ तस्माद्देहमिमं कृष्णं जुहोमि ज्वलितेऽनले ॥ इत्युक्त्वा वार्यमाणा तु हरकाली रूपान्विता ॥ १६ ॥ मुमोच हरितच्छायाकांतिं हरितशाद्वले ॥ चिक्षेप दोपं रागेण ज्वलिते हव्यवाहने ॥ १७ ॥ पुनः पर्वतराजस्य गृहे गौरी बभूव सा ॥ महादेवस्य देहार्द्धे स्थिता संपूज्यते सुरैः ॥ १८ ॥ एवं सा हरकालीति गौरीशस्य व्यवस्थिता ॥ पूजनीया महादेवी मंत्रेणानेन पांडव ॥ १९ ॥ हरकर्मसमुत्पन्ने हरकाये हरप्रिये ॥ मां त्राहीशस्य मूर्तिस्थे प्रणतास्तु नमोनमः ॥ २० ॥ इत्थं संपूज्य नैवेद्यं दद्याद्विप्राय पांडव ॥ तां च प्रातर्जले रम्ये मंत्रेणैव विसर्जयेत् ॥ २१ ॥ अर्चितासि मया भक्त्या गच्छ देवि सुरालयम् ॥ हरकाले शिवे गौरि पुनरागमनाय च ॥२२॥ एवं यः पांडवश्रेष्ठ हरकालीव्रतं चरेत् ॥ वर्षेवर्षे विधानेन नारी नरपते शुभा ॥ २३ ॥ सा यत्फलमवाप्नोति तच्छृणुष्व नराधिप ॥ मर्त्यलोके चिरं तिष्ठेत्सर्वरोगविवर्जिता ॥ २४ ॥ सर्वभोगसमायुक्ता सौभाग्यबलगर्विता ॥ पुत्रपौत्रसुहृन्मित्रनप्तृदौहित्रसंकुला ॥ २५ ॥ साग्रं वर्षशतं यावद्भोगान्भुक्त्वा महीतले ॥ ततोवसाने देहस्य शिवज्ञाना महामुने ॥ २६ ॥ चिरभद्रा महाकालनंदीश्वरविनायकाः ॥ तदाज्ञाकिंकराः सर्वे महादेवप्रसादतः ॥ २७ ॥ संपूर्णसूर्यगणसप्तविरूढशस्यां तां



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वै हिमाद्रितनयां हरकालिकाख्याम् ॥ संपूज्य जागरमनुद्धतगीतवाद्यैर्यच्छंति या इह भवंति पतिप्रियास्ताः ॥ २८ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे हरकालीतृतीयाव्रतं नाम विंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ अथ पृच्छामि भगवन्व्रतं द्वादशमासिकम् ॥ ललिताराधनं नाम मासमासक्रमेण वा ॥ १ ॥ कृष्ण उवाच ॥ शृणु पांडव यत्नेन यथा वृत्तं पुरातनम् ॥ शंकरस्य महादेव्याः संवादं कुरुसत्तम ॥ २ ॥ कैलासशिखरे रम्ये बहुपुष्पफलोपगे ॥ सहकारद्रुमच्छन्ने चंपकाशोकभूपिते ॥ ३ ॥ कदंबबकुलामोदवशीकृतमधुव्रते ॥ मयूररवसंघुष्टे राजहंसोपशोभिते ॥ ४ ॥ मृगर्क्षगजसिंहैश्च शाखामृगगणावृते ॥ गंधर्वयक्षदेवर्षिसिद्धकिन्नरपन्नगैः ॥ ५ ॥ तपस्विभिर्महाभागैः सेवमानं समंततः ॥ सुखासीनं महादेवं भूतसंघैः समावृतम् ॥ ६ ॥ अप्सरोभिः परिवृतमुमा नत्वाब्रवीदिदम् ॥ उमोवाच ॥ भगवन्देवदेवेश शूलपाणे वृषध्वज ॥ ७ ॥ कथयस्व महेशान तृतीयाव्रतमुत्तमम् ॥ सौभाग्यं लभते येन धनं पुत्रान्पशून्सुखम् ॥ ८ ॥ नारी स्वर्गं शुभं रूपमारोग्यं श्रियमुत्तमाम् ॥ एवमुक्तो दयितया भार्यया प्रीतिपूर्वकम् ॥ विहस्य शंकरः प्राह किं व्रतेन तव प्रिये ॥ ९ ॥ ये कामास्त्रिषु लोकेषु दिव्या भूम्यंतरिक्षजाः ॥ सर्वेपि तेन चायत्ता वश्यस्तेहं यतः पतिः ॥ १० ॥ उमोवाच ॥ सत्यमेतत्सुरेशान त्वयि[१] दृष्टे न दुर्लभम् ॥ किंचित्त्रिभुवनाभोगभूषणे शशिभूषणे ॥ ११ ॥ भक्त्या स्त्रियो हि मां देव प्रजपंति शुभाशुभम् ॥ विरूपाः सुलभाः काश्चिदपुत्रा बहुपुत्रकाः ॥१२॥ सुशीलास्तपसा काश्चिच्छ्वश्रुभिः पीडिता भृशम् ॥ शौचाचारसमायुक्ता न रोचन्तेथ कस्यचित् ॥ १३ ॥ एवं बहुविधैर्दुःखैः पीड्यमानास्तु दारुणैः ॥ शरणं मां प्रपन्नास्ताः कृपाविष्टा ततो ह्यहम् ॥ १४ ॥ येन ताः सुखसंभोगरूपलावण्यसंपदा ॥ पुत्रैः सौभाग्यवित्तैश्च युक्ताः स्युः सुरसत्तम ॥ तन्मे कथय तत्त्वेन व्रतानामुत्तमं व्रतम् ॥ १५ ॥ ॥ ईश्वर उवाच ॥ ॥ माघे मासि सिते पक्षे तृतीयायां यतव्रताः ॥ मुखं प्रक्षाल्य हस्तौ च पादौ चैव समाहिताः ॥ १६ ॥ उपवासस्य नियमं दंतधावनपूर्वकम् ॥ मध्याह्ने तु ततः स्नानं बिल्वैरामलकैः शुभैः ॥१७॥ स्नात्वा तीर्थजले शुभ्रे वाससी परिधाय च ॥ सुगंधैः सुमनोभिश्च प्रभूतैः कुंकुमादिभिः ॥१८॥ अर्चयंति सदा देवि त्वां भक्त्या भक्तवत्सले ॥ कर्पूराद्यैस्तथा धूपैर्नैवेद्यैः शर्करादिभिः ॥ १९ ॥ यदृच्छालाभसंपन्नैर्धूपदीपार्चनादिभिः ॥ नाम्नेशानीं[२] गृहीत्वा तु प्रतीक्षेद्घटिकां ततः ॥ २० ॥ पात्रे ताम्रमये शुद्धे जलाक्षतविमिश्रिते ॥ सहिरण्यं द्विजं कृत्वा मंत्रपूर्वं समाधिना ॥ २१ ॥ शिरसि प्रक्षिपेत्तोयं ध्यायंती मनसेप्सितम् ॥

१ च तत्वतः–इ० पा० । २ तत्र सायं गृहीत्वा तु—इ०पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मावर्तात्समायाता ब्रह्मयोनेर्विनिर्गता ॥ २२ ॥ भद्रेश्वरा ततो देवी ललिता शंकरप्रिया ॥ गंगाद्वाराद्वरं प्राप्ता गङ्गाजलपवित्रिता ॥ २३ ॥ सौभाग्यारोग्यपुत्रार्थमर्थार्थं हरवल्लभे ॥ आयाता घटिकां भद्रे प्रतीक्षस्व नमोनमः ॥ २४ ॥ दत्त्वा हिरण्यं तत्तस्मै प्राशनीयाच्चकु शोदकम् ॥ आचम्य प्रयतो भूत्वा भूमिस्था क्षपयेत्क्षपाम् ॥ २५ ॥ ध्यायमाना उमां देवीं हरिते यवसंस्तरे ॥ द्वितीयेह्नि ततः स्नात्वा तथैवाभ्यर्च्य पार्वतीम् ॥ २६ ॥ यथाशक्ति द्विजान्पूज्य ततो भुञ्जीत वाग्यता ॥ एवं तु प्रथमे मासि पूजनीयासि कालिके ॥ २७ ॥ द्वितीये पार्वती नाम तृतीये शंकरप्रिया ॥ भवान्यथ चतुर्थे त्वं स्कंदमाताथ पञ्चमे ॥ २८ ॥ दक्षस्य दुहिता षष्ठे मैनाकी सप्तमे स्मृता ॥ कात्यायन्यष्टमे मासि नवमे तु हिमाद्रिजा ॥२९॥ दशमे मासि विख्याता देवि सौभाग्यदायिनी ॥ उमा त्वेकादशे मासि गौरी तु द्वादशे परा ॥ ॥३०॥ कुशोदकं पयः सर्प्पिर्गोमूत्रं गोमय फलम् ॥ निंबपत्रं कंटकारी गवां शृंगोदकं दधि ॥३१॥ पञ्चगव्यं तथा शाकः प्राशनानि क्रमादमी ॥ मासिमासि स्थिता ह्येवमुपवासपरायणा ॥३२॥ ददाति श्रद्धयैतानि वाचके ब्राह्मणोत्तमे ॥ कुसुंभमाज्यं लवणं जीरकं गुडमेव च ॥३३॥ दत्तैरेभिः सूर्यस्था त्वं सूर्यस्था तुष्यसि प्रिये ॥ मासिमासि भवेन्मन्त्रो गकारो द्वादशाक्षरः ॥ ३४ ॥ ओङ्कारपूर्वको देवि नमस्कारांत ईरितः ॥ एभिस्त्वं पूजिता मंत्रैस्तुष्यसि व्रततः प्रिये ॥ ३५ ॥ तुष्टा त्वभीप्सितान्कामान्ददासि प्रीतिपूर्वकम् ॥ समाप्ते तु व्रते तस्मिन्ब्राह्मणं वेदपारगम् ॥ ३६ ॥ सहितं भार्ययाभ्यर्च्य गंधपुष्पादिभिः शुभैः ॥ द्विजं महेश्वरं कृत्वा उमां भार्यां तथैव च ॥ ३७ ॥ अन्नं सदक्षिणं दद्यात्तथा शुक्ले च वाससी ॥ रक्तं वासोयुगं दद्यात्त्वामुद्दिश्य हरप्रिये ॥ ३८ ॥ ब्राह्मणे श्रद्धया युक्तस्तस्यां फलमिदं शृणु ॥ दशवर्षसहस्राणि लोकान्प्राप्य परापरान् ॥ ३९ ॥ मोदते भर्तृसहिता यथेंद्रेण शची तथा ॥ मानुषत्वं पुनः प्राप्य स्वेन भर्त्रा सहैव सा ॥ ४० पुण्ये कुले श्रिया युक्ता नीरोगा सुखमश्नुते ॥ सप्त जन्मानि यावच्च नवैधव्यमवाप्नुयात् ॥४१॥ पुत्रान्भोगांस्तथा रूपं सौभाग्यारोग्यमेव च ॥ एकपत्नी तथा भर्तुः प्राणेभ्योऽप्यधिका भवेत्॥४२॥ शृणुयाद्वाच्यमानं तु भक्त्या या ललिताव्रतम् ॥ मया स्नेहेन कथितं सापि तत्फलभागिनी ॥ ४३ ॥ संपूज्य लक्षललितां ललितांगयष्टिं गंधोदकामृतवटीं शिरसि क्षिपेद्यः॥ सा स्वर्गमेत्य ललितासु ललामभूता भूपाधिपं पतिमवाप्य भुवं भुनक्ति ॥ ४४ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे ललितातृतीयाव्रतमाहात्म्यं नामैकविंशतितमोऽध्यायः ॥ २१ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ इहापि

१ जनवल्लभे—इ० पा० । २ मुदा—इ० पा० । ३ मृडानी चाष्टमे मासि—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योगमासाद्य भर्तृबंधुजनैः सह ॥ वद नारी नरश्रेष्ठ व्रजेद्येन शिवालयम् ॥ १ ॥ विधवा च परे लोके भूयोऽपि न वियुज्यते ॥ सुखसंदोहसौभाग्ययुक्ता भवति भामिनी ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ उभयाचारितं यत्नाद्भववाग्घलितामृतम् ॥ लब्ध्वा हि भवतो जन्म दक्षकोपाद्वियुक्तया ॥ ३ ॥ महासौभाग्यसंदोहं दृष्ट्वा देव्या महात्मना ॥ अरुंधत्या वशिष्ठेन पृष्टेन कथितं शृणु ॥ ४ ॥ मासि मार्गशिरे प्राप्ते चंद्रवृद्धौ शुचिस्मिता ॥ द्वितीयायां समासाद्य नक्तं भुंजीत पायसम् ॥ ५ ॥ आचम्य च शुचिर्भूत्वा दंडवच्छंकरं नमेत् ॥ मुदान्विता नमस्कृत्य विज्ञाप्य परमेश्वरम् ॥ ६ ॥ औदुम्बरमृज्जुं गृह्य भक्षयेद्दंतधावनम् ॥ उत्तराशागतं साग्रं सत्वचं निर्व्रणं शुभम् ॥ ७ ॥ द्वितीयायां परे वाह्नि गौरीं शंभुं च पूजयेत् ॥ शालिपिष्टमये कृत्वा रूपे स्त्रीपुंसयोः शुभे ॥ पात्रे संस्थाप्य संपूज्य जागरं निशि कल्पयेत् ॥ ८ ॥ विधिवत्पूजयित्वा तु शंकरं कीर्तयन्स्वपेत् ॥ प्रभाते ते गृहीत्वा तु आचार्याय निवेदयेत् ॥ ९ ॥ भोजयेन्मृष्टमन्नाद्यं शिवभक्त्या द्विजोत्तमान् ॥ दांपत्यानि च तत्रैव शक्त्या तान्यपि भोजयेत् ॥ १० ॥ प्रतिमासं प्रकुर्वीत विधिना तेन संयता ॥ कार्तिकांते ततो मासि मार्गशीर्षे समुद्यमेत् ॥ ११ ॥ नामानि च प्रवक्ष्यामि प्रतिमासं क्रमाच्छृणु ॥ पूजाजाप्यनिमित्तं च सिद्ध्यर्थं चेति तस्य च ॥ १२ ॥ एवं पौषे तु संप्राप्ते गिरिशं पार्वतीं तथा ॥ समभ्यर्च्य चतुर्थ्यां तु पंचगव्यं पिबेत्सुधीः ॥ १३ ॥ एतत्पारणमुद्दिष्टं मार्गादौ मार्गगोचरम् ॥ न चान्यत्पञ्चगव्यादि पावनं परमं स्मृतम् ॥१४॥ भवं चैव भवानीं च मासि माघे प्रपूजयेत् ॥ फाल्गुने तु महादेवमुमया सहितं मतम् ॥ १५ ॥ ललितां शंकरं देवं चैत्रे संपूजयेत्ततः ॥ स्थाणुं वैशाखमासे तु लोलनेत्रायुतं यजेत् ॥ १६ ॥ ज्येष्ठे वीरेश्वरं देवमेकवीरासमन्वितम् ॥ आषाढे पशुनाथं च शक्त्या सार्द्धं त्रिलोचनम् ॥ १७ ॥ श्रीकंठं श्रावणे देवं सुतान्वितमथार्चयेत् ॥ भीमं भाद्रपदे मासि दुर्गया सहितं यजेत् ॥ ईशानं कार्त्तिके मासि शिवादेवीयुतं यजेत् ॥ १८ ॥ जप्यध्यानार्चनायैव नामान्येतानि सुव्रत ॥ स्मृतानि विधिना राजन्व्रतसिद्धिर्भवेद् ध्रुवम् ॥१९॥ प्रतिमासं तु पुष्पाणि यानि पूजासु योजयेत् ॥ तानि क्रमात्प्रवक्ष्यामि सद्यः प्रीतिकराणि वै ॥ २० ॥ आदौ नीलोत्पलं योज्यं तदभावेऽपराण्यपि ॥ पवित्राणि सुगंधीनि योजयेद्भक्तितोऽर्चने ॥ २१ ॥ करवीरं बिल्वपत्रं किंशुकं कुब्जमल्लिका ॥ पाटलाब्जकदंबं च तगरं द्रोणमालती ॥ २२ ॥ एतान्युक्तक्रमेणैव मासेषु द्वादशस्वपि ॥ भक्त्या योज्यानि राजेन्द्र शिवयोस्तुष्टिहेतवे ॥ २३ ॥ वत्सरांते वितानं च धूपोत्क्षेपं सघंटिकम् ॥ ध्वजं दीपं वस्त्रयुगं शङ्कराय निवेदयेत्॥२४॥ स्नापयित्वा च लिम्पा च सौवर्णं मूर्ध्नि पङ्कजम् ॥ पूपयुग्मं च पुरतः शालिपिष्टमयं न्यसेत् ॥ २५ ॥ नैवेद्यं शक्तितो दत्वा नत्त्वा च विधिव



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्छिवम् ॥ कुर्यान्नीराजनं शम्भोस्ततो गच्छेत्स्वकं गृहम् ॥ २६ ॥ तत्र गत्वा त्रिकोणञ्च चतुरस्रं च कारयेत् ॥ त्रिकोणे ब्राह्मणी भोज्या चतुरस्त्रे द्विजोत्तमाः ॥ २७ ॥ व्रतिनो भोजयेत्पश्चाद्द्वादशैव द्विजोत्तमान् ॥ मिथुनानि च तावंति शक्त्या भक्त्या च पाण्डव ॥ २८ ॥ उमामहेश्वरं हैमं कारयित्वा सुशोभनम् ॥ मौक्तिकानि चतुःषष्टिस्तावंतोऽपि प्रवालकाः ॥ तावंति पुष्परागाणि ताम्रपात्रोपरि न्यसेत् ॥ २९ ॥ वस्त्रेण वेष्टयित्वा च गन्धैर्धूपैस्तथार्चयेत् ॥ एतत्संभारसंयुक्तमाचार्याय निवेदयेत् ॥ ३० ॥ व्रतिनां ब्राह्मणानां च दम्पतीनां च भारत ॥ दत्त्वा हिरण्यवासांसि क्षमयेत्प्रणिपत्य च ॥ ३१ ॥ चत्वारिंशत्तथाष्टौ च कुम्भांश्छत्रमुपानहौ ॥ सहिरण्याक्षतान्सर्वान्दद्यात्पुष्पोदकान्वितान् ॥ ॥ ३२ ॥ दीनान्धदुःखितानां च तद्दिने वा निवारितम् ॥ कल्पयेदन्नदानं चालोचयञ्छक्तिमात्मनः ॥ ३३ ॥ न्यूनाधिकं च कर्तव्यं स्ववित्तपरिमाणतः ॥ संपूरयेत्कल्पनया वित्तशाठ्यं न कारयेत् ॥३४॥ अवियोगकरं चैतद्रूपसौभाग्यवित्तदम् ॥ आयुःपुत्रप्रदं स्वर्ग्यं शिवलोकप्रदायकम् ॥ ॥ ३५ ॥ सम्यक्पुराणपतितं व्रतचर्यमेतत्तत्त्वं चराचरगुरोर्हृदयंगमायाः॥पूजां विधाय विधिवन्न वियोगमेति साध्वीस्वभर्तृसुतबन्धुजनैर्धनैश्च॥३६॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि अवियोगतृतीयाव्रतं नाम द्वाविंशतितमोऽध्यायः ॥ २२ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ केन धर्मेण नारीणां व्रतेन नियमेन च ॥ सौभाग्यं जायतेऽतीव पुत्राश्च बहवः शुभाः ॥ १ ॥ धनं धान्यं सुवर्णं च वस्त्राणि विविधानि च ॥ अवियोगं च सततं लभते पुत्रपौत्रयोः ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु पार्थ प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् ॥ यत्कृत्वा सुभगा नारी बह्वपत्या च जायते ॥ ३ ॥ धनं धान्यं हिरण्यं च दासीदासादिकं बहु ॥ उत्पद्यते गृहे येन तद्व्रतं कथयामि ते ॥ ४ ॥ उमामहेश्वरं नाम अप्सरोभिः पुरा कृतम् ॥ विद्याधरैः किन्नरैश्च ऋषिकन्याभिरेव च ॥५॥ रूपिण्या रंभया चैव सीतयाऽहल्यया तथा॥रोहिण्या दमयंत्या च तारया चानसूयया ॥ ॥६॥ एताभिश्चरितं पार्थ व्रतं सर्वव्रतोत्तमम् ॥ सौभाग्यारोग्यफलदं दारिद्र्यव्याधिनाशनम् ॥ ७ ॥ मर्त्यलोके स्त्रियो याश्च दुर्भगा रूपवर्जिताः ॥ अपुत्रा निर्धनाश्चैव सर्वभोगविवर्जिताः ॥ ८ ॥ तासां हितार्थं पार्वत्या उमामहेश्वरं व्रतम् ॥ अवतारितं पुरा पार्थ न जानंत्यधमाः स्त्रियः ॥९॥ पूर्वं मार्गशिरे मासि नारी धर्मपरायणा ॥ शुक्लपक्षे तृतीयायां सोपवासा जितेन्द्रिया ॥ १० ॥ स्नात्वा संपूज्य ललितां हरकायार्धवासिनीम् ॥ पुनः प्रभातसमये स्नानं चाकृत्रिमे जले ॥ कृत्वा देवींस्तर्पयित्वा इदं वाक्यमुदीरयेत् ॥ ११ ॥ नमो नमस्ते देवेश उमादेहार्द्धधारक ॥ महादेवि नमस्तेऽस्तु हरकायार्द्धवासिनि ॥ १२ ॥ हृदि कृत्वा शिवं देवीं जपेद्यावद्गृहं गता ॥ पूजयेद्देवमीशानं पुष्पैः कालोद्भवैस्ततः ॥ १३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वामपार्श्वे उमां देवीं दक्षिणे तु महेश्वरम् ॥ धूपं वा गुग्गुलुं वापि दहेत्पश्चात्सुभाविता ॥ नैवेद्यं तु यथाशक्ति घृतपक्कं निवेदयेत् ॥ १४ ॥ कारये द्वैश्वदेवं तु तिलाज्येन सुसंस्कृतम् ॥ पञ्चगव्यं ततः प्राश्य आत्मकायविशोधनम् ॥ १५ ॥ एवं द्वादशमासांस्तु पूजयित्वा महेश्वरम् ॥ उद्यापनं ततः कुर्यात्प्रहृष्टेनान्तरात्मना ॥ १६ ॥ शिवं रूप्यमयं कृत्वा उमां हैममयीं तथा ॥ आरूढौ वृषभे रौप्ये सर्वालंकारभूषितौ ॥ १७ ॥ चन्दनेन शिवं चर्च्य कुंकुमेन च पार्वतीम् ॥ अर्चयेत्कुसुमैः पश्चात्सुगन्धैः सुमनोहरैः ॥ १८ ॥ वेष्टयेच्छुक्लवस्त्रेण शिवं रक्तेन पार्वतीम् ॥ पश्चाद्धूपं दहेन्नारी भक्तिभावेन भाविता ॥ १९ ॥ भोजयेच्छिवभक्तांश्च ब्राह्मणान्वेदपारगान् ॥ भक्तेभ्यो दक्षिणा देया भक्त्या शाठ्यविवर्जिता ॥ २० ॥ ततः प्रदक्षिणीकृत्य इदमुच्चारयेद्बुधः ॥ उमामहेश्वरौ देवौ सर्वलोकपितामहौ ॥ व्रतेनानेन सुप्रीतौ भवेतां मम सर्वदा ॥ २१ ॥ एवमुक्त्वा जितक्रोधे ब्राह्मणे वेदपारगे ॥ व्रतं निवेदयेद्भक्त्या वाचके वा गुणान्विते ॥ २२ ॥ इदं कृत्वा व्रतं नारी महेशार्पितमानसा ॥ प्रयाति परमं स्थानं यत्र देवो महेश्वरः ॥ २३ ॥ शिवलोके वसेत्तावद्यावदिन्द्राश्चतुर्दश ॥ अप्सरोभिः परिवृता किन्नरीभिस्तथैव च ॥ २४ ॥ यदा मानुष्यमायाति जायते विमले कुले ॥ रूपयौवनसंपन्ना बहुपुत्रा पतिव्रता ॥ २५ ॥ धनधान्यसमायुक्ते सुवर्णमणिमंडिते ॥ यावज्जीवं गृहे रम्ये तिष्ठत्यव्याहतेन्द्रिया ॥ २६ ॥ वियोगं नैव सा पश्येद्भर्तृमित्रसुतादिकैः ॥ मृता शिवपुरं याति शिवगौरीप्रसादतः ॥ २७ ॥ हैमीमुमां रजतपिण्डमयं महेशं रौप्ये सुरूपवृषभे च समास्थितौ तौ ॥ सम्पूज्य रक्तसितवस्त्रयुगावगूढौ नारी भवत्यविधवा सुतसौख्ययुक्ता ॥ २८ ॥ इति श्रीभविष्ये महापुराणे उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे उमामहेश्वरव्रतं नाम त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ रंभातृतीयां वक्ष्यामि सर्वपापप्रणाशिनीम् ॥ पुत्रसौभाग्यफलदां सर्वामयनिवारिणीम् ॥ १ ॥ सर्वदुष्टहरां पुण्यां सर्वसौख्यप्रदां तथा ॥ सपत्नीदर्पदलनां तथैश्वर्यकरीं शिवाम् ॥ २ ॥ शंकरेण पुरा प्रोक्ता पार्वत्याः प्रियकाम्यया ॥ तामिमां शृणु भूपाल सर्वभूतहिताय वै ॥ ३ ॥ मार्गशीर्षे शुभे मासि तृतीयायां नराधिप ॥ शुक्लायां प्रातरुत्थाय दंतधावनपूर्वकम् ॥ उपवासस्य नियमं गृह्णीयाद्भक्तिभाविता ॥ ४ ॥ देवि संवत्सरं यावत्तृतीयायामुपोषिता ॥ प्रतिमासं करिष्यामि पारणं चापरेऽहनि ॥ तदविघ्नेन मे यातु प्रसादात्तव पार्वति ॥ ५ ॥ एवं संकल्प्य विधिवत्कौंतेय कृतनिश्चयः ॥ भक्त्या नरो वा नारी वा स्नानं कुर्यादतंद्रितः ॥६॥ नद्यां तडागे वाप्यां वा गृहे वा नियतात्मवान् ॥ पूजयेत्पार्वतीं नाम रात्रौ प्राश्य कुशोदकम् ॥ ७ ॥ प्रभाते भोजयेद्विद्वाञ्छिवभक्तान्विशेषतः ॥ हिरण्यं लवणं चैव तेषां दद्यात्तु दक्षिणाम् ॥ गौरीश्वरं यथाशक्ति भोजयेत्प्रयता सती ॥ ८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनेन विधिना राजन्यः कुर्यान्मासि पौषके ॥ गोमूत्रं प्राशयेद्रात्रौ प्रभाते भोजयेद्द्विजान् ॥ ९ ॥ हिरण्यं जीरकं चैव स्वशक्त्या दापयेत्ततः ॥ कडुहुंडं च कनकं तेभ्यो दत्त्वा विसर्जयेत् ॥ १० ॥ वाजपेयातिरात्राभ्यां फलं प्राप्नोत्यसंशयः ॥ शक्रलोके वसेत्कल्पं ततः शिवपुरं व्रजेत् ॥ ११ ॥ माघे मासि तृतीयायां सुदेवीं नाम पूजयेत् ॥ गोमयं प्राशयेद्रात्रौ ततश्चैकाकिनी स्वपेत् ॥ १२ ॥ प्रातः कुसुंभं कनकं दद्या च्छक्त्या द्विजातिषु ॥ विष्णुलोके चिरं स्थित्वा प्राप्नोति शिवसाम्यताम् ॥ १३ ॥ गौरीति फाल्गुने नाम गोक्षीरं प्राशयेन्निशि ॥ प्रभाते भोज येद्विप्राञ्छिवभक्तान्सुवासिनीः ॥ १४ ॥ कडुहुंडं सकनकं तेभ्यो दत्त्वा विसर्जयेत् ॥ वाजपेयातिरात्राभ्यां फलं प्राप्नोत्यसंशयः ॥१५॥ चैत्रे मासि विशालाक्षीं पूजयेद्भक्तितत्परा ॥ दधि प्राश्य स्वपेत्प्रातर्दद्याद्धेम सकुंकुमम् ॥ सौभाग्यं महदाप्नोति विशालाक्ष्याः प्रसादतः ॥ १६ ॥ वैशाखस्य तृतीयायां श्रीमुखीं नाम पूजयेत् ॥ घृतं च प्राशयेद्रात्रौ ततश्चैकाकिनी स्वपेत् ॥ १७ ॥ शिवभक्तान्द्विजान्प्रातर्भोजयित्वा यथेप्सितम् ॥ तांबूलं लवणं दत्त्वा प्रणिपत्य विसर्जयेत् ॥ अनेन विधिना दत्त्वा पुत्रानाप्नोति शोभनान् ॥ १८ ॥ आषाढे माधवीं नत्वा प्राश्नीयाच्च तिलोदकम् ॥ प्रभाते भोजयेद्विप्रान्दक्षिणायां गुडः स्मृतः ॥ सकांचनः शुभाँल्लोकान्प्राप्नोति हि न संशयः ॥ १९ ॥ श्रावणे तु श्रियं पूज्य पिबेद्गोशृंगजं जलम् ॥ शिवभक्तांश्च संपूज्य दद्याद्धेमफलैः सह ॥ सर्वलोकेश्वरो भूत्वा सर्वकामानवाप्नुयात् ॥ २० ॥ भाद्रे चैव तृतीयायां हरतालीति पूज येत् ॥ माहिषं च पिबेद्दुग्धं सौभाग्यमतुलं लभेत् ॥ इह लोके सुखं भुक्त्वा चांते शिवपुरं व्रजेत् ॥ २१ ॥ आश्विने तु तृतीयायां गिरिपुत्रीति पूजयेत् ॥ संप्राश्य तण्डुलजलं प्रातर्विप्रांश्च पूजयेत् ॥२२॥ दक्षिणा चापि निर्दिष्टा कनकं च सचन्दनम् ॥ सर्वयज्ञफलं प्राप्य गौरीलोके मही यते ॥ २३ ॥ पद्मोद्भवा कार्तिके च पञ्चगव्यं पिबेत्ततः ॥ रात्रौ प्रजागरं कुर्यात्प्रभाते भोजयेद्द्विजान् ॥ २४ ॥ संपत्नीकाञ्छुभाचारान्माल्यवस्त्र विभूषणैः ॥ पूजयेच्छिवभक्तांश्च कुमारीश्चव भोजयेत् ॥ २५ ॥ उमामहेश्वरं हैमं समाप्ते कारयेन्नृप ॥ यथाविभवसारेण वितानं पञ्चवर्णकम् ॥ ॥ २६ ॥ अशनं च शुभं दद्याच्छ्वेतच्छत्रं कमंडलुम् ॥ पादुकोपानहौ दिव्यैर्वस्त्रयुग्मैश्च पांडव ॥ २७ ॥ पीतयज्ञोपवीतैश्च दीपनेत्रैः समुज्ज्वलैः ॥ शंखशुक्तिसमोपेतैर्दर्पणैश्च सुशोभितैः ॥२८॥ उमामहेश्वरं स्थाप्य पूजयित्वा यथाविधि ॥ नानाविधैः सुगन्धैश्च पत्रैः पुष्पैः फलैस्तथा ॥ २९ ॥ घृतपक्वैश्च नैवेद्यैर्दीपमालाभिरेव च ॥ शर्करानालिकेरैश्च दाडिमैर्बीजपूरकैः ॥ ३० ॥ जीरकैर्लवणैश्चैव कुसुम्भैः कुंकुमैस्तथा ॥ सताम्रभाजनैर्दि व्यैर्गोदकै रससंयुतैः ॥ पूजयेद्देवदेवेशं क्षमयेत्तदनंतरम् ॥ ३१ ॥ शंखवादित्रनिर्घोषैर्वेदध्वनिसमन्वितैः ॥ एवं कृते फलं यत्स्यात्तन्न शक्यं मयो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दितुम् ॥ ३२ ॥ पूर्वोक्तफलभागी स्यात्सर्वदेवैश्च पूज्यते ॥ कल्पकोटिशतं यावत्सर्वकामानवाप्नुयात् ॥ ३३ ॥ तदंते शिवसायुज्यं प्राप्नोतीह न संशयः ॥ पुरैतद्रंभया चीर्णं तेन रंभाव्रतं स्मृतम् ॥ ३४ ॥ योऽहं सा च स्मृता गौरी या गौरी स महेश्वरः ॥ इति मत्वा महाराज शरणं व्रज पार्वतीम् ॥ ३५ ॥ एषा हिमाद्रिदुहितुर्दयिता तृतीया रंभाविधानमलभद्भुवि तत्कृतेति ॥ सत्प्राशितैरुदितनामयुतासुपोष्य प्राप्नोति वांछितफलान्य बला बहूनि ॥३६॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे रंभातृतीयाव्रतं नाम चतुर्विंशतितमोऽध्यायः ॥२४॥ ॥छ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ तथैवान्यत्प्रवक्ष्यामि सर्वकामफलप्रदम् ॥ सौभाग्यशयनं नाम यत्पुराणविदो विदुः ॥ १ ॥ पुरा दग्धेषु लोकेषु भूर्भुवःस्वर्महादिषु ॥ सौभाग्यं सर्वलोकानामेकस्थमभवत्तदा ॥ २ ॥ तच्च वैकुण्ठमासाद्य विष्णोर्वक्षस्थले स्थितम् ॥ ततः कालेन महता पुनः सर्गविधौ नृप ॥ ३ ॥ अहंकारावृते लोके प्रधानपुरुषान्विते ॥ स्पर्द्धायां च प्रवृत्तायां कमलासनकृष्णयोः ॥ ४ ॥ पिंगाकारा समुद्भूता ज्वाला वक्षस्थली तदा ॥ तयाभितप्तस्य हरेर्वक्षसस्तद्विनिःसृतम् ॥ ५ ॥ यद्वक्षस्थलमाश्रित्य विष्णोः सौभाग्यमास्थितम् ॥ रसरूपतया ताव त्प्राप्नोति वसुधातलम् ॥ ६ ॥ उत्क्षिप्तमन्तरिक्षस्थं ब्रह्मपुत्रेण धीमता ॥ दक्षेण पीतमात्रं तु रूपलावण्यकारणम् ॥ ७ ॥ बलं तेजो महज्जातं दक्षस्य परमेष्ठिनः ॥ शेषं यदपतद्भूमावष्टधा तदजायत ॥ ८ ॥ इक्षवस्तवराजं च निष्पावाजाजिधान्यकम् ॥ विकारवच्च गोक्षीरं कुसुम्भं कुंकुमं तथा ॥ लवणं चाष्टमं तत्र सौभाग्याष्टकमुच्यते ॥ ९ ॥ पीतं यद्ब्रह्मपुत्रेण योगज्ञानविदा तथा ॥ दुहितास्याभवत्तस्माद्या सतीत्यभि धीयते ॥ लोकानतीत्य लालित्याल्ललिता तेन चोच्यते ॥ १० ॥ त्रैलोक्यसुंदरीमेनामुपयेमे पिनाकधृक् ॥ त्रिविश्वसौभाग्यमयी भुक्ति मुक्तिफलप्रदा ॥ ११ ॥ आराध्य तामुमां भक्त्या स्त्री राजन्किन्न विन्दति ॥ १२ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथमाराधनं तस्या जग द्धात्र्या जनार्दन ॥ यद्विधानं च तत्सर्वं जगन्नाथ वदस्व मे ॥ १३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ वसंतमासमासाद्य तृतीयायां युधिष्ठिर ॥ शुक्लपक्षस्य पूर्वाह्णे तिलैः स्नानं समाचरेत् ॥ १४ ॥ तस्मिन्नहनि सा देवी किल विश्वात्मना सती ॥ पाणिग्रहणकैर्मन्त्रैरुद्वाह्या वरवर्णिनी ॥ १५ ॥ तया सहैव देवेशं तृतीयायामथार्चयेत् ॥ फलैर्नानाविधैर्धूपदीपनैवेद्यसंयुतैः ॥ १६ ॥ पंचगव्येनानुमासं तथा गंधोदकेन च ॥ स्नपयित्वा र्चयेद्गौरीमिन्दुशेखरसंयुताम् ॥ १७ ॥ पाटलां शंभुसहितां पादयोस्तु प्रपूजयेत् ॥ त्रियुगां शिवसंयुक्तां गुल्फयोरुभयोरपि ॥ १८ ॥ भद्रेश्वरेण

१ तुल्यतेज- ० पा० । २ घृतगव्येन-इ० पा० ।





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सहितां विजयां जानुनोर्युगे ॥ ईशानीं हरिकेशं च कट्यां संपूजयेद्बुधः ॥ १९ ॥ कोटनीं शूलिनं कुक्षौ मंगलां शर्वसंयुताम् ॥ उदरे पूजयेद्राजन्नुमां रुद्रं कुचद्वये ॥ २० ॥ अनंतां त्रिपुरघ्नं च पूजयेत्करसंपुटे ॥ कंठे भवं भवानीं च मुखे गौरीं हरं तथा ॥ २१ ॥ सर्वात्मना च सहितां ललितां मस्तकोपरि ॥ ओंकारपूर्वकैरेतैर्नमस्कारांतयोजितैः ॥ पूजयेद्भक्तिसहितो गन्धमाल्यानुलेपनैः ॥ २२ ॥ एवमभ्यर्च्य विधिवत्सौभाग्याष्टकमग्रतः ॥ स्थापयेत्स्विन्ननिष्पावान्कुसुंभं क्षरिजीरकम् ॥ २३ ॥ तवराजेक्षुलवणं कुंकुमं च तथाष्टमम् ॥ दत्तं सौभाग्यकं यस्मात्सौभाग्याष्टकमुच्यते ॥ २४ ॥ एवं निवेद्य तत्सर्वं शिवयोः प्रीयतामिति ॥ चैत्रे शृंगोदकं प्राश्य स्वप्याद्भूमावरिंदम ॥ २५ ॥ ततः प्रातः समुत्थाय कृतप्राणजयः शुचिः ॥ संपूज्य द्विजदांपत्यं माल्यवस्त्रविभूषणैः ॥ सौभाग्याष्टकसंयुक्तं सौवर्णं चरणद्वयम् ॥ २६ ॥ प्रीयतामत्र ललिता ब्राह्मणाय निवेदयेत् ॥ एवं संवत्सरं यावत्तृतीयायां सदा नृप ॥ २७ ॥ प्राशने नाममंत्रे च विशेषोऽयं निबोध मे ॥ गोशृंगोदकमाद्ये स्याद्वैशाखे गोमयं पुनः ॥ २८ ॥ ज्येष्ठे मंदारपुष्पं च बिल्वपत्रं शुचौ स्मृतम् ॥ श्रावणे दधि संप्राश्यं नभस्ये च कुशोदकम् ॥ २९ ॥ क्षीरमाश्वयुजे तद्वत्कार्तिके पृषदाज्यकम् ॥ मृगोत्तमांगे गोमूत्रं पौषे संप्राशयेद् घृतम् ॥३०॥ माघे कृष्णतिलांस्तद्वत्पञ्चगव्यं च फाल्गुने ॥ ललिता विजया भद्रा भवानी कुसुदाश्रिता ॥३१॥ वासुदेवी तथा गौरी मङ्गला कमला सती ॥ उमा च दानकाले तु प्रीयतामिति कीर्तयेत् ॥३२॥ मल्लिकाशोककमलकदंबोत्पलमालति ॥ कुब्जकं करवीरं च बाणमम्लानकुंकुमम् ॥ सिंदुवारं च मासेषु सर्वेषु क्रमशः स्मृतम् ॥ ३३ ॥ जपा कुसुंभकुसुमं मालती शतपत्रिका ॥ यथालाभं प्रदेयानि करवीरं च सर्वदा ॥ ३४ ॥ एवं संवत्सरं यावदुपोष्य विधिवन्नरः ॥ स्त्री नक्ते तु कुमारी वा शिवामभ्यर्च्य शक्तितः ॥ व्रतांते शयनं दद्यात्सर्वोपस्करसंयुतम् ॥ ३५ ॥ उमामहेश्वरं हैमं वृषभं च गवा सह ॥ स्थापयित्वा तु शयने ब्राह्मणाय निवेदयेत् ॥ ३६ ॥ अन्यान्यपि यथाशक्ति मिथुनान्यंबरादिभिः ॥ धान्यालंकरणैर्दानैरन्यैश्च धनसंचयैः ॥ वित्तशाठ्येन रहितः पूजयेद्गतविस्मयः ॥ ३७ ॥ एवं करोति यः सम्यक्सौभाग्यशयनव्रतम् ॥ सर्वान्कामानवाप्नोति पदं चानन्त्यमश्नुते ॥ ३८ ॥ सौभाग्यारोग्यरूपायुर्वस्त्रालंकारभूषणैः ॥ न वियुक्तो भवेद्राजन्वर्षायुतशतत्रयम् ॥ ३९ ॥ यस्तु द्वादश वर्षाणि सौभाग्यशयनं व्रतम् ॥ करोति सप्त चाष्टौ वा श्रीकण्ठभुवनेश्वरैः ॥ पूज्यमानो भवेत्सम्यग्यावत्कल्पायुतत्रयम् ॥ ४० ॥ नारी वा कुरुते या तु कुमारी वा नरेश्वर ॥ सापि तत्फलमाप्नोति देव्यनुग्रहलालिता ॥ ४१ ॥ शृणुयादपि

१ प्राश्य–इ० पा० । २ प्रीयतां ललिता देवी–इ० पा० । ३ वसेत्स्वर्गे–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यश्चैतत्प्रदद्यादथ वा मतिम् ॥ सोऽपि विद्याधरो भूत्वा स्वर्गलोके चिरं वसेत् ॥ ४२ ॥ इदमिह मदनेन पूर्वमिष्टं चरितमिदं शशबिंदुना व्रतं वै ॥ सुरपतिधनदेशवायुसोमैश्चरितं दं करुणेन[1] बंदिना च ॥ ४३ ॥ यानीह दत्तानि पुरा नरेंद्रैर्दानानि धर्मार्थयशस्कराणि ॥ निर्माल्यवंति प्रतिमानि तानि स नाम साधुः पुनराददानः ॥ ४४ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि सौभाग्याष्टकतृतीयाव्रतं नाम पंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ छ ॥ युधिष्ठिर उवाच ॥ सौभाग्यारोग्यफलदं विपक्षक्षयकारकम् ॥ भुक्तिमुक्तिप्रदं किञ्चिद्व्रतं ब्रूहि जनार्दन ॥ १ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ यदुमायै पुरा देव उवाचासुरसूदनः ॥ कथासु संप्रवृत्तासु ललिताराधनं प्रति ॥ २ ॥ तदिदानीं प्रवक्ष्यामि भुक्तिमुक्तिफलप्रदम् ॥ नराणामथ नारीणामाराधनमनुत्तमम् ॥ ३ ॥ शृणुष्वावहितो भूत्वा सर्वपापप्रणाशनम् ॥ नभस्ये वाथ वैशाखे पुनर्मार्गशिरेऽथ वा ॥ ४ ॥ शुक्लपक्षतृतीयायां स्नातः सद्गौरसर्षपैः ॥ गोरोचनसुगोमूत्रमुस्तागोशकृतं तथा ॥ दधिचंदनसंमिश्रं ललाटे तिलकं न्यसेत् ॥ ५ ॥ सौभाग्यारोग्यकृद्यत्स्यात्सदा च ललिताप्रियम् ॥ प्रतिपक्षं तृतीयायां बद्धा वा पीतवाससी ॥ ६ ॥ धारयेदथ वा रक्तपीतानि कुसुमानि च ॥ विधवाप्यनुरक्तानि कुमारी शुक्लवाससी ॥ ७ ॥ देव्यर्चां पंचगव्येन ततः क्षीरेण केवलम्[2] ॥ स्नपयेन्मधुना तद्वत्पुष्पगन्धोदकेन च ॥ ८ ॥ पूजयेच्छुक्लपुष्पैश्च फलैर्नानाविधैरपि ॥ धान्यकाजाजिलवणगुडक्षीरघृतादिभिः ॥ ९ ॥ शुक्लाक्षतैस्तिलैरर्च्यां ललितां यः सदार्चयेत् ॥ आपादार्चनं कुर्याद्गौर्याः सम्यक्समासतः ॥ १० ॥ वरदायै नमः पादौ तथा गुल्फौ श्रियै नमः ॥ अशोकायै नमो जंघे भवान्यै जानुनी तथा ॥ ११ ॥ ऊरू मांगल्यकारिण्यै कामदेव्यै तथा कटिम् ॥ पद्मोद्भवायै जठरमुरः कामश्रियै नमः ॥ १२ ॥ करौ सौभाग्यवासिन्यै बाहू शशिमुखश्रियै ॥ मुखं कंदर्पवासिन्यै पार्वत्यै तु स्मितं तथा ॥ १३ ॥ गौर्य्यै नमस्तथा नासां सुनेत्रायै च लोचने ॥ तुष्ट्यै ललाटफलकं कात्यायन्यै शिरस्तथा ॥ ॥ १४ ॥ नमो गौर्यै नमः सृष्ट्यै नमः कान्त्यै नमः श्रियै ॥ रंभायै ललितायै च वासुदेव्यै नमोनमः ॥ १५ ॥ एवं संपूज्य विधिवदग्रतः पद्ममालिखेत् ॥ पत्रैर्द्वादशभिर्युक्तं कुंकुमेन सकर्णिकम् ॥ १६ ॥ पूर्वेण विन्यसेद्गौरीमपर्णां च ततः परम् ॥ भवानीं दक्षिणे तद्वद्रुद्राणीं च ततः परम् ॥ १७ ॥ विन्यसेत्पश्चिमे सौम्यां ततो मदनवासिनीम् ॥ वायव्यां पाटलावासामुत्तरेण ततो ह्युमाम् ॥ १८ ॥ लक्ष्मीं स्वाहां स्वधां तुष्टिं मंगलां कुमुदां सतीम् ॥ रुद्राणीं मध्यतः स्थाप्य ललितां कर्णिकोपरि ॥ कुसुमैरक्षतैः शुभ्रैर्नमस्कारेण विन्यसेत् ॥ १९ ॥ गीतमंगलघोषं च

१ वरुणेन–इ० पा० । २ व्यक्तम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारयित्वा सुवासिनीः ॥ पूजयेद्रक्तवासोभी रक्तमाल्यानुलेपनैः ॥ २० ॥ सिंदूरं स्नानचूर्णं च तासां शिरसि पातयेत् ॥ सिंदूरं कुंकुमं स्नानमिष्टं सत्याः सदा यतः ॥ २१ ॥ नभस्ये पूजयेद्गौरीमुत्पलैरसितैस्तथा ॥ बन्धुजीवैराश्वयुजे कार्तिके शतपत्रकैः ॥ २२ ॥ कुन्दपुष्पैर्मार्गशिरे पौषे वै कुंकुमेन च ॥ माघे तु पूजयेद्देवीं सिंदुवारेण भक्तितः ॥ २३ ॥ जात्या तु फाल्गुने पूज्या पार्वती पांडुनंदन ॥ चैत्रे च मल्लिकाशोकैर्वैशाखे गंध पाटलैः ॥ २४ ॥ ज्येष्ठे कमलमंदारैराषाढे चंपकांबुजैः ॥ कदंबैरथ मालत्या श्रावणे पूजयेदुमाम् ॥ २५ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ बिल्वपत्रार्कपुष्पं च गवां शृंगोदक तथा ॥ पंचगव्यं तथा बिल्वं प्राशयेत्क्रमशः सदा ॥२६॥ एतद्भाद्रपदाद्यं तु प्राशनं समुदाहृतम् ॥ प्रतिपक्षं द्वितीयायां मया प्रोक्तं वरानने ॥ २७ ॥ ब्राह्मणं ब्राह्मणीं चैव शिवं गौरीं प्रकल्प्य च ॥ भोजयित्वार्चयेद्भक्त्या वस्त्रमाल्यानुलेपनैः ॥ पुंसे पीतांबरे दत्त्वा स्त्रियै कौसुंभवाससी ॥ २८ ॥ निष्पावाजाजिलवणमिक्षुदंडं गुणान्वितम् ॥ स्त्रियै दद्यात्फलं पुंसे सुवर्णोत्पलसंयुतम् ॥ ॥ २९ ॥ यथा न देवदेवेशस्त्वां परित्यज्य गच्छति ॥ तथा मां संपरित्यज्य पतिर्नान्यत्र गच्छतु ॥ ३० ॥ कुमुदा विमलानंता भवानी वसुधा शिवा ॥ ललिता कमला गौरी सती रंभाथ पार्वती ॥ ३१ ॥ नभस्यादिषु मासेषु प्रीयतामित्युदीरयेत् ॥ व्रतांते शयनं दद्यात्सुवर्णकमलान्वितम् ॥ ३२ ॥ मिथुनानि चतुर्विंशत्तदर्द्धं सकृदर्चयेत् ॥ अष्टावष्टावथ पुनश्चातुर्मास्ये समर्चयेत् ॥ ३३ ॥ तथोपदेष्टारमपि पूजयेद्यत्नतो गुरुम् ॥ न पूज्यते गुरुर्यत्र सर्वास्तत्राफलाः क्रियाः ॥ ३४ ॥ उक्तानंततृतीयैषा सदानंतफलप्रदा ॥ सर्वपापहरा देवी सौभाग्यारोग्य वर्धिनी ॥ ३५ ॥ न चैनां वित्तशाठ्येन कदाचिदपि लंघयेत् ॥ नरो वा यदि वा नारी वित्तशाठ्यात्पतत्यधः ॥ ३६ ॥ गर्भिणी सूतिका नक्तं कुमारी चाथ रोगयुक् ॥ यदा श्रद्धा तदान्येन क्रियमाणं तु कारयेत ॥ ३७ ॥ इमामनंतफलदां तृतीयां यः समाचरेत् ॥ कल्पकोटि शतं साग्रं शिवलोके स पूज्यते ॥ ३८ ॥ वित्तहीनोऽपि कुर्वीत वर्षत्रयमुपोषणैः ॥ पुष्पपत्रविधानेन[1] सोपि तत्फलमाप्नुयात् ॥ ३९ ॥ नारी वा कुरुते या तु कुमारी विधवा तथा ॥ साऽपि तत्फलमाप्नोति गौर्यनुग्रहभाविता ॥४०॥ इति पठति शृणोति वा य इत्थं गिरितनयाव्रतमिंदुलोकसंस्थः ॥ मतिमपि च ददाति सोऽपि देवैरमरवधूजनकिंनरैश्च पूज्यः ॥ ४१ ॥ ॥ ( इति अनंततृतीयाव्रतम् ) ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अन्यामपि प्रवक्ष्यामि तृतीयां पापनाशिनीम् ॥ रसकल्याणिनीं नाम पुरा कल्पविदो विदुः ॥४२॥ माघमासे तु संप्राप्य तृतीयां शुक्लपक्षिकीम् ॥

१ पुष्पमंत्रविधानेन-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रातर्गव्येन पयसा तिलैः स्नानं समाचरेत् ॥ ४३ ॥ स्नापयेन्मधुना देवीं तथैवेक्षुरसेन च ॥ पुनः पूजा प्रकर्तव्या जात्या वा कुंकुमेन वा ॥४४॥ दक्षिणांगानि संपूज्य ततो वामानि पूजयेत् ॥ ललितायै नमः पादौ गुल्फं तद्वदथार्चयेत् ॥ ४५ ॥ जंघे जानू तथा सत्यै तथोरुश्च श्रियै नमः ॥ मदनालसायै तु कटिं मदनायै तथोदरम् ॥४६॥ स्तनौ मदनवासिन्यै कुमुदायै च कंधरम्॥ भुजान्भुजाग्रं माधव्यै कमलायै ह्युपस्थकम् ॥४७॥ भ्रूललाटे च रुद्राण्यै शंकरायै तथालकान् ॥ मुकुटं विश्ववासिन्यै पुनःकांत्यै तथालकान् ॥४८॥ नेत्रं चक्रावधारिण्यै पुष्ट्यै च वदनं पुनः ॥ उत्कंठिन्यै नमः कंठमनंतायै तु कंधराम् ॥ ४९ ॥ रंभायै वामबाहुं च विशोकायै नमः परम् ॥ हृदयं मन्मथादित्यै पाटलायै नमोनमः ॥ ५० ॥ एवं संपूज्य विधिवद्द्विजदांपत्यमर्चयेत् ॥ भोजयित्वान्नदानेन मधुरेण विमत्सरः ॥ ५१ ॥ सलड्डुकं वारिकुंभं शुक्लांबरयुगं ततम् ॥ दत्त्वा सुवर्णकलशं गंधमाल्यैरथार्चयेत् ॥ ५२ ॥ प्रीयतामत्र कुमुदा गृह्णीयाल्लवणव्रतम् ॥ अनेन विधिना देवीं मासिमासि समर्चयेत् ॥ ५३ ॥ लवणं वर्जयेन्माघे फाल्गुने च गुडं पुनः ॥ तवराजं तथा चैत्रे वर्ज्यं च मधु माधवे ॥ ५४ ॥ पारकं ज्येष्ठमासे तु आषाढे जीरकं तथा ॥ श्रावणे वर्जयेत्क्षीरं दधि भाद्रपदे तथा ॥ ५५ ॥ घृतमश्वयुजे तद्वद्वर्जयेद्वा च मज्जिका ॥ धान्यकं मार्गशीर्षे तु पौषे वर्ज्या तु शर्करा ॥ ५६ ॥ व्रतांते करका पूर्णा एतेषां मासिमासि च ॥ दद्याद्द्विकालवेलायां भक्ष्यपात्रेण संयुतान् ॥ ५७ ॥ तंडुलान्छ्वेतवर्णांश्च संयावमधुपूरिकाः ॥ घारिका घृतपूरांश्च मंडकान्क्षीरशाककम् ॥ ५८ ॥ दध्यन्नं षड्विधं चैव भिंडयः शाकवर्तिकाः ॥ माघादौ क्रमशो दद्यादेतानि करकोपरि ॥ ५९ ॥ कुमुदा माधवी गौरी रंभा भद्रा जया शिवा ॥ उमा शची सती तद्वन्मंगला रतिलालसा ॥ ६० ॥ क्रमान्माघादि सर्वत्र प्रीयतामिति कीर्तयेत् ॥ चर्वतं पंचगव्यं च प्राशनं समुदाहृतम् ॥ ६१ ॥ उपवासी भवेन्नित्यमशक्तो दक्षिणे करे ॥ पुनर्माघे तु संप्राप्य शर्करां करकोपरि॥ ६२ ॥ कृत्वा तु कांचनीं गोधां पंचरत्नसमन्विताम् ॥ उमामंगुष्ठमात्रां च सुधासूत्रे कमंडलुम् ॥ ६३ ॥ तद्वद्गोमिथुनं सर्वं सुवर्णास्यं सितं परम् ॥ सवस्त्रभाजनं दत्त्वा भवानी प्रीयतामिति ॥ ६४ ॥ अनेन विधिना यश्च रसकल्याणिनीव्रतम् ॥ कुर्यात्स सर्वपापेभ्यस्तत्क्षणादेव मुच्यते ॥ ६५ ॥ भवार्बुदसहस्रं तु न दुःखी जायते क्वचित् ॥ अग्निष्टोमसहस्रेण यत्फलं तदवाप्नुयात् ॥ ६६ ॥ नारी वा कुरुते या तु कुमारी वा युधिष्ठिर ॥ विधवा वा वराकी वा सापि तत्फलभागिनी ॥ सौभाग्यारोग्यसंपन्ना गौरीलोके महीयते ॥ ६७ ॥ इति पठति य इत्थं यः शृणोति प्रसंगात्सकलकलुषमुक्तः पार्वतीलोक



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेति ॥ मतिमपि च नराणां यो ददाति प्रियार्थं विपुलमतिजनानां नायकः स्यादमोघम् ॥ ६८ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे रसकल्याणिनीव्रतवर्णनं नाम षड्विंशतितमोऽध्यायः ॥ २६ ॥ छ ॥ श्रीकृष्ण उवाच ॥ ॥ तंथा चान्यां प्रवक्ष्यामि तृतीयां पापनाशिनीम् ॥ लोकेषु नाम्ना विख्यातामार्द्रानंदकरीमिमाम् ॥ १ ॥ यदा शुक्लतृतीयायामाषाढर्क्षं भवेत्क्वचित् ॥ ब्रह्मर्क्षं चाथ मार्गं वा व्रतं ग्राह्यं तदा शुभम् ॥ २ ॥ दर्भगंधोदकैः स्नानं तदा सम्यक्समाचरेत् ॥ शुक्लमाल्यांबरधरः शुक्लगंधानुलेपनः ॥ ३ ॥ भवानीमर्चयेद्भक्त्या शुक्लपुष्पैः सुगंधिभिः ॥ महादेवेन सहितामुपविष्टां वरासने ॥४॥ वासुदेव्यै नमः पादौ शंकराय नमो हरेः ॥ जंघे शोकविनाशिन्यायानन्दाय नमः प्रभो॥ ॥ ५ ॥ रंभायै पूजयेदूरू शिवाय च पिनाकिनः ॥ आदित्यै च कटिं पूज्या शूलिनः शूलपाणये ॥ ६ ॥ माधव्यै च तथा नाभिमथ शंभोर्भवाय वै ॥ स्तनावानंदकारिण्यै शंकरायेंदुधारिणे ॥ ७ ॥ उत्कंठिन्यै नमः कंठं नीलकंठाय वै हरेः ॥ करावुत्पलधारिण्यै रुद्राय जगतीपतेः ॥८॥ बाहुं च परिरंभिण्यै नृत्यशीलाय वै हरेः ॥ ९ ॥ देव्या मुखं विलासिन्यै वृषेशाय पुनर्विभोः ॥ स्मितं सस्मरशीलायै विश्ववक्त्राय वै विभोः ॥ ॥ १० ॥ नेत्रं मदनवासिन्यै विश्वधाम्ने त्रिशूलिने ॥ भ्रुवौ रतिप्रियायै च तांडवेशाय वै विभोः ॥ ११ ॥ देव्यै ललाटमिंद्राण्यै हव्यवाहाय वै विभोः ॥ स्वाहायै मुकुटं देव्या विभोः पञ्चशराय वै ॥ १२ ॥ विश्वकायै विश्वमुख्यै विश्वपादकरौ शिवौ ॥ प्रसन्नवदनौ वंदे पार्वतीपरमेश्वरौ ॥ ॥ १३ ॥ एवं संपूज्य विधिवदग्रतः शिवयोः पुनः ॥ पद्मोत्पलानि च तथा नानावर्णानि कारयेत् ॥ १४ ॥ शङ्खचक्रे सकटके स्वस्तिकं वर्द्धमानकम् ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ १५ ॥ शृंगोदकं विल्वपत्रं वारि कुंभान्वितं तथा ॥ उशीरनीरं तद्वच्च यवचूर्णोदकं ततः ॥ १६ ॥ तिलोदकं च संप्राप्य स्वप्यान्मार्गशिरादिषु ॥ प्रतिपक्षद्वितीयायां प्राशनं समुदाहृतम् ॥ १७ ॥ सर्वत्र शुक्लपुष्पाणि प्रशस्तानि शिवार्चने ॥ दानकालेषु सर्वेषु मंत्रमेतमुदीरयेत् ॥ १८ ॥ गौरी मे प्रीयतां नित्यमघनाशाय मंगला ॥ सौभाग्यायास्तु ललिता भवानी सर्वसिद्धये ॥ १९ ॥ संवत्सरांते लवणं गुडकुंभं समर्जितम् ॥ चन्दनं नेत्रपट्टं च सितवस्त्रयुगान्वितम् ॥ उमामहेश्वरं हैमं तद्वदिक्षुफलैर्युतम् ॥ २० ॥ प्रस्तरावरणं शय्यां सविश्रामां निवेदयेत् ॥ सपत्नीकाय विप्राय गौरी मे प्रीयतामिति ॥ २१ ॥ आर्द्रानन्दकरी नाम तृतीयैषा सनातनी ॥ यामुपोष्य नरो याति शंभोस्तत्परमं पदम् ॥ २२ ॥ इह लोके यमानंदं प्राप्नोति धनसंचयात् ॥ आयुरारोग्यसंपन्नो न

१ रक्तपुष्पैः—इ० पा० । २ विश्वचक्राय—इ० पा० । ३ सर्वाणा—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किञ्चिच्छोकमाप्नुयात् ॥ २३ ॥ नारी वा कुरुते या तु कुमारी विधवा तथा ॥ सापि तत्फलमाप्नोति देव्यनुग्रहलालिता ॥ २४ ॥ प्रतिपक्षमुपोष्यैवं मंत्रार्चनविधानतः ॥ रुद्राणीलोकमाप्नोति पुनरावृत्तिवर्जितम् ॥ २५ ॥ य इदं शृणुयान्नित्यं श्रावयेद्वापि मानवः ॥ शक्रलोके सगंधर्वैः पूज्यतेऽब्द[1]शतत्रयम् ॥ २६ ॥ आनंददां सकलदुःखहरां तृतीयां या स्त्री करोति विधिवत्सधवाधवा च ॥ सा स्वे गृहे सुखशतान्यनुभूय भूयो गौरीपुरं सदयिता मुदिता प्रयाति ॥ २७ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे आर्द्रानन्दकरीतृतीयाव्रतं नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ चैत्रे भाद्रपदे माघे रूपसौभाग्य पुत्रदम् ॥ तृतीयात्रयमेतन्मे कृष्ण कस्मान्न कीर्तितम् ॥ १ ॥ किमहं भक्तिरहितस्त्रयीमार्गातिगो नरः ॥ सुप्रसिद्धं जगत्येतद्गोपितं केन हेतुना ॥ २ ॥ भवान्सर्वार्थानुकूलः सर्वज्ञ इति मे मतिः ॥ श्रीकृष्ण उवाच ॥ व्रतं चैतज्जगत्ख्यातं नाख्यातं तेन ते मया ॥३॥ यद्यस्ति श्रवणे बुद्धिः श्रूयतां पाण्डुनन्दन ॥ कोऽन्यः श्रोता जगत्यस्मिन्भवता सदृशो भुवि ॥ ४ ॥ जया च विजया चैव उमायाः परिचारिके ॥ आगत्य मुनिकन्याभिः पृष्टेभीष्टफलेच्छया ॥ ५ ॥ भवत्यौ सर्वदा देव्याश्चित्तवृत्तिविदौ किल ॥ केन व्रतोपचारेण कस्मिन्नहनि पार्वती ॥ पूजिता तुष्टिमभ्येति मंत्रैः कैश्च वरानने ॥ ६ ॥ तासां तद्वचनं श्रुत्वा जया प्रोवाच सादरम् ॥ श्रूयतामभिधास्यामि सर्वकामफलप्रदम् ॥ व्रतमुत्सवसंयुक्तं नरनारीमनोरमम् ॥ ७ ॥ चैत्रे सिततृतीयायां दन्तधावनपूर्वकम् ॥ उपवासस्य नियमं गृह्णीयाद्भक्तिभावितम् ॥ ८ ॥ सकुंकुमं सतांबूलं सिन्दूरं रक्तवाससी ॥ विधवा[2] सोपवासाप्यवैधव्यकरणं परम् ॥ ९ ॥ विधवा याति मार्गेण कुमारी तु यदृच्छया ॥ कुर्यादभ्यर्चनविधिं श्रूयतां मंत्रविक्रमः ॥ १० ॥ नेत्रपट्टपटीवस्त्रैर्वस्त्रमण्डपिकां शुभाम् ॥ कारयेत्कुसुमामोददिव्याभरणभूषिताम् ॥ ११ ॥ प्रवाललंबितव्रातामंतर्दिव्यवितानिकाम् ॥ विन्यस्तपूर्णकलशां सत्पीठस्थापितद्विजाम् ॥ १२ ॥ पुरतः कारयेत्कुण्डं हस्तमात्रं समेखलम् ॥ ततः स्नातानुलिप्ता च परिधाय सुवाससी ॥ १३ ॥ देवान्पितॄन्समभ्यर्च्य ततो देवीगृहं व्रजेत् ॥ नामाष्टकेन संपूज्या गौरी गोपतिवल्लभा ॥ १४ ॥ तत्कालप्रभवैः पुष्पैर्गन्धालिवकुलाकुलैः ॥ कुंकुमेन समा[3]लभ्य कर्पूरागुरुचन्दनैः ॥ १५ ॥ एवं संपूज्य विधिवत्सद्धुपेनाधिवासयेत् ॥ पार्वती ललिता गौरी गांधारी शाङ्करी शिवा ॥ उमा सती समुद्दिष्टं नामाष्टकमिदं मया ॥ १६ ॥ लड्डुकैः खण्डवेष्टैश्च गुडकैः सिंहकेसरैः ॥ सोमालकैः कोकसरैः

१ अब्दशतद्वयम्—इ० पा० । २ विभूयात्सोपवासापि—इ० पा० । ३ समालक्ष्य—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

खण्डखाद्यकरंबकैः ॥ १७ ॥ घृतपक्वैर्बहुविधैः सुपक्वफलकल्पितैः ॥ दृष्टिघ्राणहरैर्हृद्यैर्नैवेद्यैः प्रीणयेदुमाम् ॥ १८ ॥ कंटुखडं जीरकं च कुंकुमं लवणार्द्रकम् ॥ इक्षुदंडानैक्षवं च हरिद्रार्द्रान्पुरो न्यसेत् ॥ १९ ॥ नारिकेलानामलकान्मातुलुंगान्सदाडिमान् ॥ कूष्माण्डकर्कटीवृंतनारङ्गपनसादिकान् ॥ २० ॥ कालोद्भवानि चान्यानि फलानि विनिवेदयेत् ॥ गृहाद्युलूखलशिलाशूर्पान्प्रणतिभिः सह ॥ २१ ॥ नेत्रांजनशलाकाश्च नखरेचनकानि च ॥ दर्पणं वंशपात्राणि भवान्यै विनिवेदयेत् ॥ २२ ॥ शंखतूर्यनिनादेन गीतमङ्गलनिस्वनैः ॥ भक्त्या संपूजयेद्देवीं स्वशक्त्या शिववल्लभाम् ॥ २३ ॥ ततोऽस्तसमये भानोः कुमार्यः करकैर्नवैः ॥ स्नानं कुर्युर्मुदा युक्ताः सौभाग्यारोग्यवृद्धये ॥ २४ ॥ यामेयामे गते स्नानं देवीपूजनमेव च ॥ तैरेव नामभिर्होमस्तिलाज्येन प्रशस्यते ॥ २५ ॥ पद्मासनस्थिता साध्वी तेनैवार्द्रेण वाससा ॥ गौरीमुखेक्षणपरा तां रात्रिमतिवाहयेत् ॥ २६ ॥ काश्चिद्गायंति संहृष्टाः काश्चिन्नृत्यंति हर्षिताः ॥ कथयंति कथाः काश्चिद्देव्यास्तत्र महोत्सवे ॥ २७ ॥ गीततालानुसंबद्धमनुद्धतमनाकुलम् ॥ नृत्यंति स्म पुरे देव्याः काश्चिदुल्लसितभ्रुवः ॥ २८ ॥ नृत्येन हृष्यति हरो गौरी गीतेन तुष्यति ॥ सद्भावेनाथ वा सर्वे गच्छंति परमां मुदम् ॥ २९ ॥ सुवासिनीभ्यस्तांबूलं कुंकुमं कुसुमानि च ॥ प्रदेयं जागरवत्या चान्येषामपि किंचन ॥ ३० ॥ नटैर्विटैर्भटैश्चैव तथा प्रेक्षणकोत्सवैः ॥ सखिभिः सहिता रात्रिं गायन्नृत्यन्हितां नयेत् ॥ ३१ ॥ एवं प्रभातसमये स्नात्वा संपूज्य पार्वतीम् ॥ ततो वै सा समारोहद्ध्वजालंकृततोरणम् ॥ ३२ ॥ तोलयेत्सा तथासीनं गुडेन लवणेन च ॥ कुंकुमेनाथ वा शक्त्या कर्पूरागरुचंदनैः ॥ ३३ ॥ पर्वतानामपिच्छेदः केचिदिच्छंति सूरयः ॥ कुंडमंडपसंभारैर्मंत्रैस्तत्रैव शोभयेत् ॥ ३४ ॥ लवणेन सहात्मा हि तोल्यते च गुडेन वा ॥ कयापि भक्तिपरया सौभाग्यमतुलीकृतम् ॥ ३५ ॥ एवं देवीं प्रणम्यार्यां क्षमाप्य गृहमाविशेत् ॥ आमंत्र्य शास्त्रकुशलानाचारविधिपारगान् ॥ ॥ ३६ ॥ अन्नं च मधुरप्रायं भोजयित्वा सुवासिनीः ॥ स्वयं भुंजीत सहसा ज्ञातीजनबुधैः स्वकैः ॥ ३७ ॥ यच्च देव्याः पुरो दत्तं नैवेद्यादि तदिच्छया ॥ गृहं प्रतिनयेत्सर्वं विभज्याभ्रांतिमानसा ॥ ३८ ॥ ततो दद्याद्गृहस्थेभ्यः कृतकृत्या भवेत्तदा ॥ विधिर्भाद्रपदेऽप्येष सुसौन्दर्यप्रदायकः ॥ ३९ ॥ सप्तधान्यस्वरूपां च शूर्पे संपूजयेदुमाम् ॥ गोमूत्रप्राशनं ह्यत्र तेन गोमूत्रसंज्ञिता ॥ ४० ॥ माघमासतृतीयायां विशेषः श्रूयतामिति ॥ पूर्वोक्तं सकलं कृत्वा प्रभाते यवसंस्तरम् ॥ तोलयित्वा कुंदपुष्पैः पूजयेत्तत्सुतामिति ॥ ४१ ॥ एतेन कारणेनोक्ता चतुर्थी कुन्दसंज्ञया ॥ तृतीयाख्यं मयैतत्ते कथितं सर्वकारणम् ॥ जयया मुनिकन्यानां यत्पुरा समुदाहृतम् ॥ ४२ ॥ श्रीकृष्ण उवाच ॥ आसीद्विदर्भे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नगरे वेश्या सर्वांगसुंदरी ॥ तया ब्राह्मणवाक्येन सर्वमेतत्कृतं पुरा ॥ ४३ ॥ भुक्त्वा भोगान्महीपृष्ठे दत्त्वा दानं यथेप्सया ॥ ४४ ॥ कालेन समनुप्राप्ता मरणं मनुजेश्वर ॥ अचिन्त्या राजदुहिता सा बभूवातिशोभना ॥ अवंतिसुन्दरी नाम देवानामपि सुन्दरी ॥ ४५ ॥ यदि वक्रसहस्राणां सहस्रं स्यात्कथंचन ॥ तथापि निर्वर्णयितुमशक्या सा सुलोचना ॥ ४६ ॥ चैत्रतृतीयामाहात्म्यात्सा बभूव प्रभावती ॥ मातापित्रोरतिप्रेष्ठा शिष्टान्यजनवल्लभा ॥ ४७ ॥ लब्ध्वाब्धिसंभवा यद्वत्कृष्णेनाक्लिष्टकर्मणा ॥ ततः सा बुभुजे भोगान्भर्त्रा सार्द्धं मुदा सती ॥ ४८ ॥ यददाद्ब्राह्मणेभ्यः सा भूषणं कटकादिकम् ॥ तत्प्रभावेण सा लेभे सौभाग्यं किं ततः परम् ॥ ४९ ॥ पुत्रांश्च जनयामास विष्णुशक्रपराक्रमान् ॥ सर्वास्त्रशस्त्रकुशलान्वेदोक्तविधिपारगान् ॥ ५० ॥ एवं रूपं महत्प्राप्य सौभाग्यं पुत्रसंपदम् ॥ भर्त्रा सहैव मरणमंते प्राप्य पतिव्रता ॥ ५१ ॥ शक्रादिलोकपालानां भवनेषु यथाक्रमम् ॥ आक्रम्य ब्रह्मलोकं च जगाम शिवसात्मताम् ॥ ५२ ॥ एवं यान्यापि कुरुते नारी व्रतमिदं शुभम् ॥ सा रूपसौभाग्यसुतान्प्राप्य स्वर्गे महीयते ॥ ५३ ॥ न दुर्भगा कुले तस्याः काचिद्भवति कन्यका ॥ न दुर्विनीतश्च सुतो न भृत्योऽप्रियकृद्भवेत् ॥ ५४ ॥ न दारिद्र्यं गृहे तस्मिन्न व्याधिरुपजायते ॥ यत्र सा रमते साध्वी ध्मातचामीकरप्रभा ॥ ५५ अन्याश्च याश्चरिष्यंति ब्राह्मणानुमते व्रतम् ॥ संपूज्य वाचकं भक्त्या भूषणाच्छादनादिभिः ॥ ५६ ॥ ताः सर्वसुखसंपन्ना अविपन्नमनोरथाः ॥ भविष्यंति कुरुश्रेष्ठ तस्यै देवि नमोस्तु ते ॥ ५७ ॥ माघे महार्घ्यमणिमंडितपादपीठां चैत्रे विचित्रकुसुमोत्करचर्चितांगीम् ॥ शूर्पप्ररूढनवसस्यमयीं नभस्ये संपूज्य शंभुदयितां प्रभवंति नार्यः ॥ ॥ ५८ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे चैत्रभाद्रपदमाघतृतीयाव्रतवर्णनं नामाष्टविंशतितमोऽध्यायः ॥ २८ ॥ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ शुक्लपक्षतृतीयास्तु बहवः समुदाहृताः ॥ आनन्तर्यव्रतं ब्रूहि तृतीयोभयसंयुतम् ॥ १ ॥ हिताय सर्वभूतानां ललनानां विशेषतः ॥ नाम प्राशननैवेद्यैर्मासिमासि पृथक्पृथक् ॥ २ ॥ श्रीकृष्ण उवाच ॥ ॥ ब्रह्मविष्णुमहेशाद्यैर्यथोक्तं सुरसत्तमैः ॥ अपूर्वं सर्वमंत्राणामानंतर्यव्रतंशृणु ॥ ३ ॥ आदौ मार्गशिरे मासि व्रतमेतत्समाचरेत् ॥ नक्तं कुर्याद्द्वितीयायां तृतीयायामुपोषिता ॥ ४ ॥ उमां देवीं समभ्यर्च्य पुष्पगंधादिभिः क्रमात् ॥ शर्करापुत्रिकां शक्त्या प्रणिपत्य निवेदयेत् ॥ ५ ॥ संप्राश्य दधि रात्रौ च स्वप्याद्विगतमत्सरा ॥ प्रभाते विधिवद्भक्त्या मिथुनं भोजयेत्सुधीः ॥६॥ अश्वमेधमवाप्नोति समग्रं नात्र संशयः ॥ तथा कृष्णतृतीयायां सोपवासा जितेन्द्रिया ॥ ७ ॥ जपेत्कात्यायनीं नाम नालिकेरं निवेदयेत् ॥ स्वप्यात्प्राश्य पयो रात्रौ कामक्रोधविवर्जिता ॥ दांपत्यं सुभगं भोज्यं गोमेधफलमाप्नुयात् ॥ ८ ॥ पौषस्यादितृतीयायां सोप





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वासा जितेन्द्रिया ॥ गौरीं नाम तु संपूज्य लड्डुकान्विनिवेदयेत् ॥ ९ ॥ स्वप्यात्प्राश्य घृतं रात्रौ त्यक्त्वा कामं तदग्रतः॥ प्रभाते मिथुनं भोज्यं नरमेधफलं भवेत् ॥ १० ॥ एवं कृष्णतृतीयायां पार्वतीमिति पूजयेत् ॥ निवेदयान्नं शष्कुल्यो गोमयं प्राशयेन्निशि॥ दांपत्यं विविधं भोज्यमश्वमेधफलं लभेत् ॥ ११ ॥ माघस्य शुक्लपक्षे तु तृतीयायामुपोषितः ॥ सुरनायिकां च संपूज्य खण्डबिल्वं निवेदयेत् ॥ १२ ॥ ततः कुशोदकं प्राश्य स्वप्याद्भूमौ जितेन्द्रिया ॥ प्रभाते मधुरान्नेन मिथुनं भोज्य भक्तितः ॥ क्षमाप्यांते नमस्कृत्य इति स्वर्णफलं लभेत् ॥ १३ ॥ पुनरेतत्ततो माघे कृष्णपक्षे शुचिव्रता ॥ आर्यां नाम्ना प्रपूज्याथ खाद्यकानि निवेदयेत् ॥ १४ ॥ मधु प्राश्य स्वपेद्रात्रौ कामक्रोधविवर्जिता ॥ मिथुनं भोजयित्वा तु वाजपेयफलं लभेत् ॥ १५ ॥ एवं वै फाल्गुने मासि सोपवासा शुचिव्रता ॥ भद्रीं नाम प्रपूज्याथ कासारं विनिवेदयेत् ॥ १६ ॥ सुप्राश्य शर्करां चाथ स्वप्याद्रात्रौ विमत्सरा ॥ प्रभाते मिथुनं भोज्यं सौत्रामणिफलं लभेत् ॥ १७ ॥ पुनः कृष्णतृतीयायां फाल्गुनस्यैव भारत॥ विशालाक्षीं समभ्यर्च्य पूरिका विनिवेदयेत् ॥ १८ ॥ सोदकांस्तंडुलान्दत्त्वा स्वप्याद्भूमौ मनस्विनी ॥ भोजयेन्मिथुनं प्रातरग्निष्टोमफलं लभेत् ॥ १९ ॥ चैत्रस्यादितृतीयायां शुचिर्भूता जितेन्द्रिया ॥ श्रियं देवीं यजेद्भक्त्या वटकान्विनिवेदयेत् ॥ २० ॥ बिल्वपत्रं ततः प्राश्य स्वप्याद्ध्यानपरायणा ॥ प्रातरुत्थाय मद्भक्त्या मिथुनं पूजयेत्सुधीः ॥ प्रणिपत्य क्षमाप्यैवं राजसूयफलं लभेत् ॥ २१ ॥ पुनः कृष्णतृतीयायां चैत्रे सम्यगुपोषिता ॥ कालीं नाम समभ्यर्च्य पिष्टं प्राश्य स्वपेन्निशि ॥ २२ ॥ पूपकानि निवेद्याथ कुर्याद्रात्रौ प्रजागरम् ॥ मिथुनानि च संभोज्य अतिरात्रफलं भवेत् ॥ २३ ॥ एवं वैशाखमासे तु सोपवासा जितेन्द्रिया ॥ पूजयेच्चण्डिकां देवीं मधुकानि निवेदयेत् ॥ २४ ॥ श्रीखंडं चंदनं लिप्त्वा स्वप्याद्देव्यग्रतो भुवि ॥ भोजयित्वा च दांपत्यं चांद्रायणफलं लभेत् ॥ २५ ॥ तथा कृष्णतृतीयायां सोपवासा विमत्सरा ॥ पूजयेत्कालरात्रिं तु गन्धपुष्पैः सदीपकैः ॥ २६ ॥ सुराज्यं यावकं दत्त्वा तिलान्भुंजन्स्वपेन्निशि ॥ प्रभाते मिथुनं भोज्यमतिकृच्छ्रफलं लभेत् ॥ २७ ॥ ज्येष्ठे सिततृतीयायां ह्युपवासकृतां वरा ॥ शुभां देवीं समभ्यर्च्य आम्राणि विनिवेदयेत् ॥ संप्राश्यामलकं रात्रौ गौरीं ध्यात्वा सुखं स्वपेत् ॥ २८ ॥ ततः प्रातः समुत्थाय दंपती रूपशालिनौ ॥ भोजयित्वा विधानेन तीर्थयात्राफलं लभेत् ॥ २९ ॥ पुनः कृष्णतृतीयायां सोपवासा सुवासिनी ॥ स्कन्दमातेति संपूज्य इडायै विनिवेदयेत् ॥ ३० ॥ प्राशयेत्पंचगव्यञ्च स्वप्याद्देव्यग्रतस्ततः ॥ प्रभाते मिथुनं भोज्यं कन्यादानफलं लभेत् ॥ ३१ ॥ आषाढमासे संप्राप्ते पूजयेच्च यशोधनम् ॥ करंजकं च नैवेद्यं गोशृंगांभः पिबेन्निशि ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रभाते मिथुनं भोज्यं कन्यादानफलं लभेत् ॥ ३२ ॥ तथा कृष्णतृतीयायां कूष्मांडीं शक्तितो यजेत् ॥ सक्तून्गुडाज्यसंयुक्तान्पुरतो विनिवेदयेत् ॥ ३३ ॥ कुशोदकं च संप्राश्य स्वप्याद्रात्रौ जितेन्द्रिया ॥ प्रभाते मिथुनं भोज्यं गोसहस्रफलं लभेत् ॥ ३४ ॥ श्रावणे सोपवासा च चंडां घण्टां प्रपूजयेत्[1] ॥ कुल्माषास्तत्र नैवेद्यं पिबेत्पुष्पोदकं पुनः ॥ ३५ ॥ प्रभाते शक्तितो दद्याद्भोजनं मिथुनस्य तु ॥ प्राप्नोत्यभयदानस्य फलं नैवात्र संशयः ॥ ३६ ॥ तद्वत्कृष्णतृतीयायां रुद्राणीं नामभिर्यजेत् ॥ सिद्धपिंडानि दिव्यानि नैवेद्यं दापयेत्तथा ॥ ३७ ॥ पिण्याकं प्राशयित्वा तु स्वप्याद्रात्रौ विमत्सरा ॥ संपूज्य द्विजदांपत्यमिष्टापूर्तफलं लभेत् ॥ ३८ ॥ भाद्रे शुक्लतृतीयायां पूजयेत हिमाद्रिजाम्[2] ॥ गोधूमान्नं निवेद्यैव प्राशयेच्चन्दनं सितम् ॥ ३९ ॥ गन्धोदकं ततः प्राश्य सखीभिः सहिता स्वपेत् ॥ प्रभाते मिथुनं भोज्यं मार्गपालीशतं लभेत् ॥ ४० ॥ तद्वत्कृष्णतृतीयायां दुर्गां देवीं समर्चयेत् ॥ दद्यात्पिष्टफलान्दिव्यान्गुडाज्यपरिपूरितान् ॥ ४१ ॥ प्राशयित्वा तु गोमूत्रं स्वप्याच्छांतेन चेतसा ॥ प्रातस्तु मिथुनं भोज्यं सदासत्रफलं लभेत् ॥४२॥ मासि चाश्वयुजे भक्त्या देवीं नारायणीं यजेत् ॥ सोपवासा खण्डपूपान्नैवेद्यं परिकल्पयेत् ॥ ॥ ४३ ॥ प्राशयेच्चंदनं रक्तं स्वप्याच्च गतमत्सरा ॥ प्रभाते भोज्यं दांपत्यमग्निहोत्रफलं लभेत् ॥ ४४ ॥ तथा कृष्णतृतीयायां स्वस्ति नाम प्रपूजयेत् ॥ शाल्योदनं गुडोपेतं नैवेद्यं निर्वपेत्ततः ॥ ४५ ॥ कुसुंभबीजान्संप्राश्य त्यक्त्वा कामं स्वपेन्निशि ॥ संभोज्य मिथुनं प्रातर्गवाह्निकफलं लभेत् ॥ ४६ ॥ कार्तिकस्य तृतीयायां स्वाहानाम्नीं प्रपूजयेत् ॥ क्षीरं खण्डघृतोपेतं नैवेद्यं दापयेच्च ताम् ॥ ४७ ॥ स्वप्याद्रात्रौ जितक्रोधा प्राश्य कुंकुमकेशरान् ॥ प्रभाते मिथुनं भोज्यमेकभक्तफलं लभेत् ॥ ४८ ॥ तथा कृष्णतृतीयायां स्वधानाम्नीं प्रपूजयेत् ॥ मुद्गौदनं निवेद्याथ घृतं प्राश्य स्वपेन्निशि ॥४९॥ प्रातः संभोज्य मिथुनं नक्तव्रतफलं लभेत् ॥ एवं संवत्सरं कृत्वा मुक्तपापा शुचिर्भवेत् ॥५०॥ शुक्लपक्षे तृतीयायां सोपवासा निरामया ॥ विज्ञाय च द्रुतं भक्त्या उमां शास्त्रार्थबोधकैः ॥ ५१ ॥ मंडलं च ततो लिख्य नवनाभं वरप्रदम् ॥ सौवर्णं कारयेद्देवमुमया सहितं प्रभुम् ॥ ५२ ॥ ताभ्यां नेत्रेषु दातव्यं मौक्तिकं नीलमेव च ॥ प्रवालमोष्ठयोर्दद्यात्कर्णयो रत्नकुण्डले ॥ ५३ ॥ उपवीतं तु देवस्य देव्या हारं तथोरसि ॥ रक्तवस्त्रधरां देवीं सितवस्त्रं महेश्वरम् ॥ ५४ ॥ चतुःसमेन वालभ्य पुष्पैर्धूपैरथार्चयेत् ॥ मंडले पूजयित्वा च होमं कुर्यात्ततो[3] गुरोः ॥५५॥ ततोऽपराजितां नाम देवीं तत्रैव पूजयेत् ॥ मृत्स्नां संप्राशयित्वा च रात्रौ कुर्यात्प्रजागरम् ॥ ५६ ॥ गीतवाद्योत्सवैर्हृद्यैर्वीणामंगलपाठकैः ॥

१ संप्रपूजयेत्–इ० पा० । २ एवं भाद्रपदस्यादौ पूजयेत्कमलालयाम्–इ० पा० । ३ ततः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रात्रिमेवं जपेद्भक्त्या यावदुद्गच्छते रविः ॥ ५७ ॥ तूलीगंडकसंयुक्ते पर्यंकेत्यंतशोभिते ॥ उद्धृत्य मण्डलाद्देवं पर्यंकोपरि विन्यसेत् ॥ ५८ ॥ वितानध्वजमालालिकिंकिणीदर्प्पणान्वितम् ॥ पुष्पमण्डपिकाच्छन्नं धूपगुग्गुलुवासितम् ॥ ५९ ॥ तस्याग्रे भोजयेद्भक्त्या स्वशक्त्या मिथुनानि च ॥ प्रीणयेद्भक्ष्यभोज्यैश्च पक्वान्नैर्मधुरैः शुभैः ॥ ६० ॥ ततो दत्त्वाऽक्षतान्हस्ते तांबूलं विनिवेदयेत् ॥ प्रीयतां मे उमाकांतः पार्वत्या सहितः शिवः ॥ ६१ ॥ उच्छिष्टं शोधयित्वा तु पुनः प्रोक्ष्य समन्ततः ॥ रक्तवर्णां सुशीलां च सुरूपां सुपयस्विनीम् ॥ ६२ ॥ शृंगाभ्यां दत्तकनकां राजतखुरसंयुताम् ॥ कांस्यदोहनकोपेतां रक्तवस्त्रावगुंठिताम् ॥ ६३ ॥ घण्टाभरणशोभाढ्यां देवदेव्यग्रसंस्थिताम् ॥ पादुकोपानहच्छत्रभोज्यभाजनसंयुताम् ॥ त्रिधा प्रदक्षिणीकृत्य गुरोः सर्वं निवेदयेत् ॥ ६४ ॥ उमामहेश्वरं देवमवियोगं सुरार्चितम् ॥ अव्यवच्छेदभूतं च सुप्रीतं तदिहास्तु मे ॥ ६५ ॥ प्रणम्य शिरसा भूमौ क्षमस्वेति गुरुं वदेत् ॥ एवं समाप्यते देव्या आनंतर्यव्रतोद्यमम् ॥ यः प्रकुर्यात्पुमान्स्त्री वा तस्य पुण्यफलं शृणु ॥ ६६ ॥ गन्धर्वयक्षलोकांश्च विद्याधरमहोरगान् ॥ ऋषिसिद्धामरं ब्राह्मं विष्णुलोकं सनातनम् ॥६७॥ भुक्त्वा भोगानशेषांश्च एकविंशत्कुलान्वितः ॥ रत्नयाने समारूढो गुह्याप्सरससंवृतः ॥ ६८ ॥ देवविद्याधरैर्यक्षैर्वृतो याति शिवालयम् ॥ तत्र भुक्त्वा महाभोगान्स भुंक्ते शिववद्बहून् ॥ ६९ ॥ भुक्त्वा भोगान्यदा भूतः कदाचित्तपसः क्षयात् ॥ पृथिव्यां तु समागम्य भवेत्सकलभूमिपः ॥ ७० ॥ स्त्री वा समाचरेद्या तु महादेवी तु जायते ॥ आनंतर्यव्यवच्छिन्नान्भोगान्देवी उमा यथा ॥ त्रैलोक्यपतिरुद्रेण सा भुंक्ते सहिता तथा ॥७१॥ मनुर्देव्या यथामद्या शच्या शक्रो यथासुखम् ॥ नैरंतर्यं यथा सौख्यं सा भुंक्ते पतिना सह ॥ ७२ ॥ मुनेररुंधती यद्वद्विष्णोर्लक्ष्मीर्हृदि स्थिता ॥ तथा तयोर्महत्सौख्यं नैरंतर्यं हि जायते ॥ ७३ ॥ सावित्री ब्रह्मणो यद्वद्गंगा तोयनिधेर्यथा ॥ अव्यवच्छिन्नयोः प्रीतिस्तथा जन्मनिजन्मनि ॥ ७४ ॥ अथ जन्मन्यहोन्यस्मिन्व्रतमेतत्कृतं भवेत् ॥ तेनैव पतिना सार्द्धं न वियोगमुपैति सा ॥ योजनायुतसाहस्रे सुरूपा मण्डले भवेत् ॥ अर्घाढ्या सुभगा साध्वी पुत्रपौत्रैरलंकृता ॥ ७५ ॥ एतत्तेनिखिलं प्रोक्तमानंतर्यव्रतं मया ॥ भक्ताय सुविनीताय कथितव्यं न चान्यथा ॥ ७६ ॥ एषा विशेषविहिताभिहिता तृतीया यानंतरीत्यविधवाभिरुदीरि

१ सम्यक्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तोच्चैः ॥ एतामुपोष्य विधिवत्प्रतिपक्षयोगान्नैवांतरं सुतसुहृत्स्वजनैरुपैति ॥ ७७ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिर संवादे अनंतरतृतीयाव्रतवर्णनं नामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ बहुनात्र किमुक्तेन किं बह्वक्षरमालया ॥ वैशाखस्य सितामेकां तृतीयां शृणु पाण्डव ॥ १ ॥ स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ॥ यदस्यां क्रियते किञ्चित्सर्वं स्यात्तदिहाक्षयम् ॥ २ ॥ आदौ कृतयुगस्येयं युगादिस्तेन कथ्यते ॥ सर्वपापप्रशमनी सर्वसौख्यप्रदायिनी ॥ ३ ॥ शाकले नगरे कश्चिद्धर्मनामाभवद्वणिक् ॥ प्रियंवदः सत्यरतो देवब्राह्मणपूजकः ॥ ४ ॥ तेन श्रुतं वाच्यमानं तृतीया रोहिणी पुरा ॥ यदा स्याद्बुधसंयुक्ता तदा साच महाफला ॥ ५ ॥ तस्यां यदीयते किंचित्तत्सर्वं चाक्षयं भवेत् ॥ इति श्रुत्वा स गंगायां सन्तर्प्य पितृदेवताः ॥ ६ ॥ गृहमागत्य करकान्सान्नानुदकसंयुतान् ॥ अंबुपूर्णान्गृहे कुंभान्क्रमान्निःशेषतस्तदा ॥ ७ ॥ यवगोधूमचणकसक्तुदध्यौदनं तथा ॥ इक्षुक्षीरविकारांश्च सहिरण्यांश्च शक्तितः ॥ ८ ॥ शुचिः शुद्धेन मनसा ब्राह्मणेभ्यो ददौ वणिक् ॥ भार्यया वार्यमाणोपि कुटुंबासक्तचिंतया ॥ ९ ॥ तावत्स च स्थितः सत्त्वे मत्वा सर्वं विनश्वरम् ॥ धर्मार्थकामशक्तस्तु कालेन बहुना ततः ॥ १० ॥ जगाम पञ्चत्वमसौ वासुदेवं स्मरन्मुहुः ॥ ततः स क्षत्रियो जातः कुशावत्यां नरेश्वरः ॥ ११ ॥ बभूव चाक्षया तस्य समृद्धिर्धर्मनिर्जिता ॥ इयाज स महायज्ञैः समाप्तवरदक्षिणैः ॥ १२ ॥ ददौ गोभूहिरण्यादि दानान्यस्यामहर्निशम् ॥ बुभुजे कामतो भोगान्दीनार्तांस्तर्पयञ्जनान् ॥ १३ ॥ तथाप्यक्षयमेवास्य क्षयं याति न तद्धनम् ॥ श्रद्धापूर्वं तृतीयायां यद्दत्तं विभवं विना ॥ १४ ॥ एतद्व्रतं मयाख्यातं श्रूयतामत्र यो विधिः ॥ उदकुंभान्सकरकान्स्नानसर्वरसैर्युतान् ॥ १५ ॥ ग्रैष्मिकं सर्वमेवात्र सस्यदानं प्रशस्यते ॥ छत्रोपानत्प्रदानं च गोभूकांचनवाससाम् ॥ १६ ॥ यद्यदिष्टतमं चान्यत्तद्देयमविशंकया ॥ एतत्ते सर्वमाख्यातं किमन्यच्छ्रोतुमिच्छसि ॥ १७ ॥ अनाख्येयं न मे किञ्चिदस्ति स्वस्त्यस्तु तेऽनघ ॥ १८ ॥ अस्यां तिथौ क्षयमुपैति हुतं न दत्तं तेनाक्षया च मुनिभिः कथिता तृतीया ॥ उद्दिश्य यत्सुरपितॄन्क्रियते मनुष्यैस्तच्चाक्षयं भवति भारत सर्वमेव ॥ १९ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादेऽक्षय्यतृतीयाव्रतवर्णनं नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ रूपसौभाग्यसुखदं नरनारीजनप्रियम् ॥ पापापहं बहुफलं सुकरं सूपवासकम् ॥ १ ॥ ऋद्धिवृद्धिकरं स्वर्ग्यं यशस्यं सर्वकामदम् ॥ तन्मे वद व्रतं किञ्चिद्यदि तुष्टोऽसि माधव ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥

१ यादव–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शृणु पार्थ परं गुह्यं यन्मया कथितं न च ॥ पुरा तव वनस्थस्य तदद्य प्रवदाम्यहम् ॥३॥ शिवयोरतिसंहर्षाद्रक्तबिंदुश्च्युतः क्षितौ ॥ मेदिन्या स प्रयत्नेन विधृतो धृतियुक्तया ॥ ४ ॥ तस्माज्जातः कुमारोऽसौ रक्तो रक्तसमुद्भवः ॥ अंगं प्रसिद्धमेवेहांगारको वेग उच्यते ॥ ५ ॥ शिवांगाद्रभसा जातस्तेनांगारक उच्यते ॥ अगस्थोऽगारकांतिश्च अंगप्रत्यङ्गसंभवः ॥ ६ ॥ सौभाग्यारोग्यकृद्यस्मात्तस्मादंगारकः स्मृतः ॥ भक्त्या चतुर्थ्यां नक्तेन यस्तु श्रद्धासमन्वितः ॥ ७ ॥ तं पूजयति यत्नेन नारी वाऽनन्यमानसा ॥ तस्य तुष्टः प्रयच्छेत्स यत्त्वया समुदाहृतम् ॥ रूपं सौभाग्यसंपन्नं नरनारीमनोहरम् ॥ ८ ॥ युधिष्ठिर उवाच ॥ एतन्मे[1] वद देवेश अंगारकविधिं शुभम् ॥ सहोममंत्रसंस्थानं साधिवासविधानतः ॥ ९ ॥ श्रीकृष्ण उवाच ॥ पूर्वं तु कृतसंकल्पः स्नानं कृत्वा बहिर्जले ॥ स्नानार्थं मृत्तिकां मंत्रैर्गृह्णीयादंभसि स्थितः ॥१०॥ त्वं मृदे वंदिता पूर्वं कृष्णेनोद्धरताकिल॥ तेन मे दह पापौघं यन्मया पूर्वसंचितम् ॥ ११॥ इमं मंत्रं पठन्पार्थ आदित्याय प्रदर्शयेत् ॥ आदित्यरश्मिसंतप्तां गंगाजलकणोक्षिताम् ॥१२॥ तां मृदं शिरसि प्राथ्य पूर्वं दत्त्वांगसंधिषु ॥ ततः स्नानं प्रकुर्वीत मंत्रेणान्तर्जलेपुनः ॥ १३ ॥ त्वमापो योनिः सर्वेषां दैत्यदानवरक्षसाम् ॥ स्वेदजोद्भिज्जयोनीनां रसानां पतये नमः ॥१४॥ स्नातोऽहं सर्वतीर्थेषु सर्वप्रस्रवणेषु च ॥ नदीषु देवखातेषु स्नानं तेषु च मे भवेत्॥१५॥ ध्यायन्ध्वनिमिमंमंत्रं ततः स्नानं समाचरेत् ॥ ततः स्नात्वा शुचिर्भूत्वा गृहमागत्य न स्पृशेत् ॥ न जल्पेच्च न वीक्षेत क्वचित्पापिष्ठमेव हि ॥ १६ ॥ दूर्वाश्वत्थौ शमीं स्पृष्ट्वा मां च मंत्रेण मंत्रवित् ॥ दूर्वामप्यस्य मंत्रेण युतेन समुपस्थिताम् ॥१७॥ त्वं दूर्वेऽमृतजन्मासि सर्वदेवैश्च वंदिता ॥ वंदिता दह तत्सर्वं यन्मया दुष्कृतं कृतम् ॥१८॥ ( इति दूर्वामंत्रः ॥ ) पवित्राणां पवित्रं त्वं काश्यपी पठ्यसे श्रुतौ॥शमी शमय तत्पापं यन्मया दुरनुष्ठितम् ॥ १९ ॥ ( इति शमीमंत्रः ) अश्वत्थमंगं लभते मंत्रमेतं निबोध मे ॥ अक्षिस्पंदं भुजस्पंदं दुःस्वप्नं दुर्विचिंतितम् ॥ शत्रूणां च समुत्थानमश्वत्थ शमयस्व मे ॥ २० ॥ ( इत्यश्वत्थमंत्रः ) गां दद्यात्तु ततो देवीं सवत्सां सप्रदक्षिणाम् ॥ समालभ्य तु मंत्रेण मंत्रमेतमुदीरयेत् ॥ २१ ॥ सर्वदेवमये देवि दैवतैस्त्वं सुपूजिता ॥ तस्मात्स्पृशामि वंदामि वंदिता पापहा भव ॥२२॥ ( इति गोमंत्रः ) एवं मंत्रं पठन्पार्थ भक्तिभावेन भावितः ॥ प्रदक्षिणां यः कुरुते गां दृष्ट्वा वरवर्णिनीम् ॥ २३ ॥ प्रदक्षिणीकृता तेन पृथिवी नात्र संशयः ॥ एवं मौनेन चागत्य वंद्यान्वंद्य गृहं व्रजेत् ॥ २४ ॥ प्रक्षाल्य च मृदा पादौ आहिताऽग्निगृहं विशेत् ॥ होमं तत्र प्रकुर्वीत एभिर्मंत्रैः पदैर्वरैः ॥ २५ ॥ शर्वाय शर्वपुत्राय पार्वत्या गोः सुताय च ॥

[1] त्वमेव वद देवेश–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुजाय लोहितांगाय ग्रहेशांगारकाय च ॥ भूयोभूयोयमाहुत्या हुत्वाहुत्वा जुहोति वै ॥ २६ ॥ ओंकारपूर्वकैर्मंत्रैः स्वाहाकारांतयोजितैः ॥ अष्टोत्तर शतं पार्थ अर्द्धमर्धार्धमेव च ॥२७॥ एभिर्मंत्रपदैर्भक्त्या शक्त्या वा काममेव वा ॥ समिद्भिः खादिरीभिश्च घृतदुग्धैस्तिलैर्यवैः ॥२८॥ भक्ष्यैर्नाना विधैरन्यैः शक्त्या वा मंत्रविद्वशी ॥ हुत्वाहुतीस्ततः पार्थ देवं संस्थापयेत्क्षितौ ॥ २९ ॥ स्नपनं केचिदिच्छंति सगुडे ताम्रभाजने ॥ सौवर्णं रक्तवर्णं च शक्त्या दारुमयं तथा ॥ ३० ॥ कृष्णागरुमयं चैव श्रीखण्डघटितं पुनः ॥ सौवर्णपात्रे रौप्ये वा अर्च्य कुंकुमकेसरैः ॥ ३१ ॥ अन्यै रालोहितैः पार्थ पुष्पैर्वस्त्रैः फलैः शुभैः ॥ राजन्रत्नैश्च विविधैरर्थवान्भक्तितोऽर्चयेत् ॥ ३२ ॥ यावद्धि शक्यते चित्तं वित्तवान्भक्तिभावितः ॥ तावद्धि वर्धते पुण्यं दातुः शतसहस्रिकम् ॥ ३३ ॥ किञ्चित्ताम्रमये पात्रे वंशजे मृन्मयेपि वा ॥ पूजयंति नरा रक्तैः पुष्पैः कुंकुमकेशरैः ॥ ३४ ॥ ( ॐ अंगारकाय नमः शिरसि ॥ ॐकुजाय नमः वदने ॥ ॐ भौमाय नमः स्कंधयोः ॥ ॐ मंगलाय नमः बाह्वोः ॥ ॐ रक्ताय नमः उरसि ॥ ॐ लोहितांगाय नमः कट्याम् ॥ ॐ आराय नमः जंघयोः ॥ ॐ महीधराय नमः पादयोः ॥ एषाष्टपुष्पिका ॥ पुरुषाकृतिं कृतः पात्रे कुजं मंत्रैः समर्चयेत् ॥ गुग्गुलं घृतसंयुक्तं कृष्णागरुसमन्वितम् ॥ धूपं सद्रव्यजं वापि दद्यात्तत्र समाधिना ॥ ३५ ॥ होमं कुर्वीत पूर्वोक्तैर्मंत्रैर्मंगलसं ज्ञितैः ॥ एवं प्रणम्य देवेशं ब्राह्मणाय निवेदयेत् ॥३६॥ निष्पावकं भोजनं वा दद्याच्छक्त्या सदक्षिणम् ॥ वित्तशाठ्यं हि कुर्वाणो न मुख्यफलभा ग्भवेत् ॥ ३७ ॥ पश्चाद्भुञ्जीत मौनेन भूमिं कृत्वा तु भाजनम् ॥ मन्त्रेणानेन चालभ्य तन्निबोध मयोदितम् ॥ ३८ ॥ सर्वौषधिरसावासे सर्वदा सर्व दायिनि ॥ त्वत्तले भोक्तुकामोऽहं तद्भुक्तममृतं भवेत् ॥ ३९ ॥ युधिष्ठिर उवाच ॥ अंगारकेण संयुक्ता चतुर्थी नक्तभोजनैः ॥ उपोष्या कतिमात्रा सा किमेका वद यादव ॥ ४० ॥ ॥ श्रीकृष्ण उवाच ॥ चतुर्थी च चतुर्थी च यदांगारकसंयुता ॥ उपोष्या तत्रतत्रैव प्रदेयो विधिना कुजः ॥ वित्तहीनाः प्रतीक्षंते यावद्वित्तोपलंभनम् ॥४१॥ चतुर्थ्यां च चतुर्थ्यां च विधानं शृणु पाण्डव ॥ सौवर्णपात्रे कृत्वा तु अंगारकमकृत्रिमम् ॥ दश सौवर्णिकं मुख्यं दशार्द्धार्द्धमथापि वा ॥४२॥ विंशत्पलानि पात्राणि विंशत्यर्द्धपलानि च ॥ विंशत्कर्षाणि वा पार्थ अतो न्यूनं न कारयेत् ॥४३॥ प्रतिष्ठाप्य कुजं मंत्रैर्वस्त्रैः संपरिवेष्टितम् ॥ पुष्पमंडपिकां कृत्वा दिव्यां सद्धूपधूपिताम् ॥४४॥ तत्र संपूजयेद्देवं पूर्वमंत्रैर्विधानतः ॥ भक्त्या भोज्यै रनेकैश्च फलैरत्नैश्च सागरैः ॥ ४५ ॥ वस्त्रैः प्रावरणैर्यानैः शय्योपानद्वरासनैः ॥ छत्रैः पुष्पैर्गन्धवरैः शक्त्या वित्तानुसारतः ॥ ४६ ॥ ततो

१ बादरीभिः–इ० पा० । २ स्थापनम्–इ० पा० । ३ रत्नैः–इ० पा० । ४ महीनंदनाय नमः–इ० पा० । ५ तत्रस्थमर्चयेन्मंत्रैः पुष्पधूपैर्विगानतः–इ० पा० । ६ शुभैः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विप्रं परीक्षेत व्रतशौचसमन्वितम् ॥ वेदाध्ययनसंपन्नं शास्त्रज्ञं निरहंकृतिम् ॥ ४७ ॥ अंगारकविधिं यश्च सम्यग्जानाति शास्त्रतः॥ आह्वानविधि मंत्रांश्च होमार्चनविसर्जनम् ॥ ४८ ॥ संपूज्य वस्त्राभरणैस्तस्मै देयः कुजोत्तमः ॥ यथा श्रुतो यथा ज्ञातस्तथा भक्त्या ह्युपोषितः ॥ ४९ ॥ वित्तसारेण तुष्य त्वं मम भौम भवोद्भव ॥ पठन्निमं मंत्रवरं ब्राह्मणाय निवेदयेत् ॥ ब्राह्मणश्चाप्यसौ विद्वान्मंत्रमेतमुदाहरेत् ॥ ५० ॥ मंगलं प्रति गृह्णामि उभयोरस्तु मंगलम् ॥ दातृप्रतिग्राहकयोः क्षेमारोग्यं भवत्विति ॥ ५१ ॥ प्रतिग्राहकमंत्रः ॥ एवं चतुर्थे संप्राप्ते धनप्राप्तिर्न विद्यते ॥ तदा[1]मंत्रार्चनपरः पुनरेतां समाचरेत् ॥ ५२ ॥ आशरीरनिपाताद्वा यथोक्तफलभाग्भवेत् ॥ अल्पवित्तो यथा शक्त्या सर्वमेतत्समाचरेत् ॥ ॥ ५३ ॥ अंगारकेण संयुक्तां वास्त्रां तिलशराविकाम् ॥ अनेन विधिना दत्त्वा यथोक्तफलभाग्भवेत् ॥ ५४ ॥ एवं चतुर्थीं यो भक्त्या कुजयुक्ता मुपोषयेत् ॥ तस्य पुण्यफलं यच्च तन्निबोध युधिष्ठिर ॥ ५५ ॥ इह स्थित्वा चिरं कालं पुत्रपौत्रश्रिया वृतः ॥ देहावसाने दिव्यौजा दिव्यगन्धानु लेपनः ॥ ५६ ॥ दिव्यनारीगणवृतो विमानवरमास्थितः ॥ याति देवपुरं हृष्टो देवैः सहाभिनंदितः ॥ ५७ ॥ स तत्र रमते कालं देवैः सह सुरेश वत् ॥ चतुर्युगानि षट्त्रिंशत्ततः कालांतरे पुनः ॥ ५८ ॥ इह चागत्य राजासौ कुले महति जायते ॥ रूपवान्धनवान्वाग्मी दानशीलो दयापरः ॥ ॥ ५९ ॥ नारी च रूपसंपन्ना सुभगा जातिसंयुता ॥ पुत्रपौत्रैः परिवृता भर्त्रा सह रमेच्चिरम् ॥६०॥ रमित्वा सुचिरं कालं पुनः स्वर्गगतिं लभेत् ॥ एष ते कथितो राजन्सरहस्यो विधिस्तथा ॥ दुर्लभो यो मनुष्याणां देवानां भद्रमस्तु ते ॥ ६१ ॥ अंगारकेण सहिता तु सिता चतुर्थी शस्ता सुरा र्चनविधौ पितृपिण्डदाने ॥ तस्यां कुजं कुरुकुलोद्वह येऽर्चयंति भूमौ भवंति बहुमंगलभाजनास्ते ॥ ६२ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तर पर्वणि श्रीकृष्णयुधिष्ठिरसंवादे चतुर्थीव्रते अंगारकचतुर्थीव्रतवर्णनं नामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ यत्र सिद्ध्यन्ति कर्माणि प्रारब्धानि नरोत्तमैः ॥ तत्केन कारणेनैतत्पृष्टो मे ब्रूहि माधव ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ विनायकोर्थसिद्ध्यर्थं लोकस्य विनियोजितः ॥ गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥ २ ॥ तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत ॥ स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥ ३ ॥ काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ॥ अंत्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥ ४ ॥ व्रजमानस्तथात्मानं मन्यते तु गतं परैः ॥ विमना विफलारंभः ससीदत्यनिमित्ततः ॥ ५ ॥ पातकी विहीनच्छायो म्लानत्वहेतुलक्षणः ॥ करभारूढमात्मानं महिषस्वरगं

[1] यन्त्रार्चनपरः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथा ॥६॥ यातुधानाश्रितं यानं श्मशानस्यांतिकं नृप ॥ वीक्षेत कुरुशार्दूल स्वप्नांते नात्र संशयः ॥ तैलार्द्रमात्रं स्वं देहं करवीरविभूषितम् ॥७॥ तेनोपसृष्टो लभते न राज्यं राजनंदनः ॥ कुमारी न च भर्तारमपत्यं गर्भमंगना ॥ ८ ॥ आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा ॥ वणिग्लाभं न चाप्नोति कृषिं चैव कृषीवलः ॥ ९ ॥ स्नपनं तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकम् ॥ गौरसर्षपकल्केन वस्त्रेणाच्छादितस्य तु ॥ १० ॥ सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ॥ शुक्लपक्षे चतुर्थ्यां तु वारे वा धिषणस्य तु ॥ ११ ॥ पुष्ये च वीरनक्षत्रे तस्यैव पुरतो नृप ॥ भद्रासनोपविष्टस्य स्वस्तिर्वाच्या द्विजैः शुभैः ॥ १२ ॥ चत्वार ऋग्यजुः सामाथर्वणप्रवणास्ततः ॥ व्योमकेशं तु संपूज्य पार्वतीं भूमिजं तथा ॥ ॥ १३ ॥ कृष्णस्य पितरं चाथ अवतारं सितं तथा ॥ धिषणं कुंदपुत्रं च कोणं लक्ष्मीं च भारत ॥ विधुंतुदं बाहुलेयं नंदकस्य च धारिणम् ॥ ॥ १४ ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ मृत्तिकां रोचनां रत्नं गुग्गुलुं चाप्सु निक्षिपेत् ॥ १५ ॥ यदाहृतं ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ॥ चर्मण्यानडुहे रक्ते स्थाप्य भद्रासनं तथा ॥ १६ ॥ सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ॥ तेन त्वामभिषिंचामि पावमान्यः पुनंतु मे ॥ १७ ॥ ॐ भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ॥ भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ १८ ॥ यत्ते केशेषु दौर्भाग्यं सीमंते यच्च मूर्द्धनि ॥ ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नंतु सर्वदा ॥ १९ ॥ स्नातस्य सार्षपं तैलं स्रुवेणौदुंबरेण तु ॥ जुहुयान्मूर्ध्नि शकलान्सव्येन प्रतिगृह्य च ॥ २० ॥ मितश्च सम्मितश्चैव तथा शालकटंकटौ ॥ कूष्माण्डो राजपुत्रश्चेत्यंते स्वाहासमन्वितैः ॥ २१ ॥ नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः ॥ दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः ॥ २२ ॥ कृताकृतांस्तंडुलांश्चपललौदनमेव च ॥ मत्स्यान्ह्यपक्कांश्च तथा मांसमेतावदेव तु ॥ २३ ॥ पुष्पान्वितं सुगन्धं च सुरां च त्रिविधामपि ॥ मूलकं पूरिका पूपांस्तथैवोंडेरकस्रजः ॥ २४ ॥ दध्यन्नं पायसं चैव गुडवेष्टितमोदकम् ॥ विनायकस्य जननीमुपतिष्ठेत्ततोंबिकाम् ॥ दूर्वासर्षपपुष्पाणां दत्त्वार्घ्यं पूर्णमञ्जलिम् ॥ २५ ॥ रूपं देहि जयं देहि भगं भवति देहि मे ॥ पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे ॥ ॥ २६ ॥ प्रबलं कुरु मे देवि बलविख्यातिसम्भवम् ॥ शुक्लमाल्यांबरधरः शुक्लगन्धानुलेपनः ॥ भोजयेद्ब्राह्मणान्दद्याद्वस्त्रयुग्मं

१ प्रासादानुगतम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुरोरपि ॥ २७ ॥ एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ॥ कर्मणां फलमाप्नोति श्रियं प्राप्नोत्यनुत्तमाम् ॥ २८ ॥ आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा ॥ महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ॥ २९ ॥ वैनायकं विनयसत्त्ववतां नराणां स्नानं प्रशस्तमिह विघ्नविनाशकारि ॥ कुर्वंति ये विधिवदत्र भवंति तेषां कार्याण्यभीष्टफलदानि न संशयोऽत्र ॥ ३० ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे विनायकस्नपनचतुर्थीव्रतं नाम द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथाविघ्नकरं राजन्कथयामि व्रतं तव ॥ येन सम्यक्कृतेनेह न विघ्नमुपजायते ॥ १ ॥ चतुर्थ्यां फाल्गुने मासि गृहीतव्यं व्रतं त्विदम् ॥ नक्ताहारेण राजेन्द्र तिलान्नं पारणं स्मृतम् ॥ २ ॥ तदेव वह्नौ होतव्यं ब्राह्मणाय च तद्भवेत् ॥ ३ ॥ शूराय वीराय गजाननाय लंबोदरायैकरदाय चैव ॥ एवं तु संपूज्य पुनश्च होमं कुर्याद्व्रती विघ्नविनाशहेतोः ॥ ४ ॥ चातुर्मास्यां व्रतं चैव कृत्वेत्थं पञ्चमे तथा ॥ सौवर्णं गजवक्त्रं तु कृत्वा विप्राय दापयेत् ॥ ५ ॥ ताम्रपात्रैः पायसभृतैश्चतुर्भिः सहितं नृप ॥ पञ्चमेन तिलैः सार्द्धं गणेशाधिष्ठितेन च ॥ ६ ॥ . मृन्मयान्यपि पात्राणि वित्तहीनस्तु कारयेत् ॥ हेरंबं राजतं तद्वद्विधिनानेन दापयेत् ॥ इत्थं व्रतमिदं कृत्वा सर्वविघ्नैः प्रमुच्यते ॥ ७ ॥ हयमेधस्य विघ्ने तु संजाते सगरः पुरा ॥ एतदेव व्रतं चीर्त्वा पुनरश्वं प्रलब्धवान् ॥ ८ ॥ तथा रुद्रेण देवेन त्रिपुरं निघ्नता पुरा ॥ एतदेव कृतं यस्मात्त्रिपुरस्तेन घातितः ॥ ९ ॥ मया समुद्रं विशता एतदेव व्रतं कृतम् ॥ तेनाद्रिद्रुमसंयुक्ता पृथिवी पुनरुद्धृता ॥ १० ॥ अन्यैरपि महीपालैरेतदेव कृतं पुरा ॥ तपोऽर्थिभिर्यज्ञसिद्ध्यै निर्विघ्नं स्यात्परंतप ॥ ११ ॥ अनेन कृतमात्रेण सर्वविघ्नैः प्रमुच्यते ॥ मृतो रुद्रपुरं याति वराहवचनं यथा ॥ १२ ॥ विघ्नानि तस्य न भवंति गृहे कदाचिद्धर्मार्थकामसुखसिद्धिविघातकानि ॥ यः सप्तमीन्दुशकलाकृतिकां तदंतं विघ्नेशमर्चयति नक्तकृती चतुर्थ्याम् ॥ १३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे विनायकचतुर्थीव्रतं नाम त्रयस्त्रिंशतमोऽध्यायः ॥ ३३ ॥ इति चतुर्थीकल्पः समाप्तः ॥ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शांतिव्रतं प्रवक्ष्यामि शृणुष्वैकमनाधुना ॥ येन चीर्णेन शांतिः स्यात्सर्वदा गृहमेधिनाम् ॥ १ ॥ पञ्चम्यां शुक्लपक्षस्य कार्तिके मासि पार्थिव ॥ आरभ्य वर्षमेकं तु भुञ्जीयादम्लवर्जितम् ॥ २ ॥ नक्तं देवं च संपूज्य हरिं शेषोपरिस्थितम् ॥ अनंतायेति पादौ तु धृतराष्ट्राय वै कटिम् ॥ ३ ॥ उदरं तक्षकायेति उरः कर्कोटकाय च ॥ पद्माय कर्णौ संपूज्य महापद्माय दोर्युगम् ॥ ४ ॥

१ शुक्लपक्षीयाम्–इत्यर्थः । २ दंतवर्जितम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शंखपालाय वक्षस्तु कुलिकायेति वै शिरः ॥ एवं विष्णुं सर्वगतं पृथगेव प्रपूजयेत् ॥ ५ ॥ क्षीरेण स्नपनं कुर्याद्धरिमुद्दिश्य वाग्यतः ॥ तदग्रे होमयेत्क्षीरं तिलैः सह विचक्षणः ॥ ६ ॥ एवं संवत्सरस्यांते कुर्याद्ब्राह्मणभोजनम् ॥ अच्युतं कांचनं कृत्वा सुवर्णं तु विचक्षणः ॥ ७ ॥ गां सवत्सां वस्त्रयुगं कांस्यपात्रं सपायसम् ॥ हिरण्यं च यथाशक्ति ब्राह्मणायोपपादयेत् ॥ ८ ॥ एवं यः कुरुते भक्त्या व्रतमेतन्नराधिप ॥ तस्य शांतिर्भवेन्नित्यं नागानामभयंःतथा ॥ ९ ॥ शेषाहिभोगशयनस्थमयोगमूर्तिं संपूज्य यज्ञपुरुषं पतगेंद्रनाथम्॥ये पूजयंति मधुरैः सितपञ्चमीषु तेषां न नागजनितं भयमभ्युपैति ॥ १० ॥ इति श्रीभविष्ये महापुराणे उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे शांतिव्रतं नाम चतुस्त्रिंशत्तमोऽध्यायः ॥३४॥ ॥छ॥ ॥ युधिष्ठिर उवाच ॥ ॥ मधुरा भारती केन व्रतेन मधुसूदन ॥ तथैव जनसौभाग्यमतिविद्यासु कौशलम् ॥१॥ अभेदश्चापि दंपत्योस्तथा बंधुजनेन च ॥ आयुश्च विपुलं पुंसां जायते केन केशव ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ सम्यक्पृष्टस्त्वया राजञ्छृणु सारस्वतं व्रतम् ॥ यस्य संकीर्तनादेव तुष्यतीह सरस्वती ॥ ३ ॥ योऽयं भक्तः पुमान्कुर्यादेतद्व्रतमनुत्तमम् ॥ तद्वत्सरादौ संपूज्य विप्रेण तं समाचरेत् ॥ ४ ॥ अथ चादित्यवारेण ग्रहताराबलेन च ॥ पायसं भोजयित्वा च कुर्याद्ब्राह्मणवाचनम् ॥ ५ ॥ शुक्लवस्त्राणि दद्याच्च सहिरण्यानि शक्तितः ॥ गायत्रीं पूजयेद्भक्त्या शुक्लमाल्यानुलेपनैः ॥ एभिर्मंत्रपदैः पश्चात्पूर्वं कृत्वा कृताञ्जलिः ॥ ६ ॥ यथा तु देवि भगवान्ब्रह्मा लोकपितामहः॥ त्वां परित्यज्य नो तिष्ठेत्तथा भव वरप्रदा ॥ ७ ॥ वेदशास्त्राणि सर्वाणि नृत्यगीतादिकं च यत् ॥ वाहितं यत्त्वया देवि तथा मे संतु सिद्धयः ॥ ८ ॥ लक्ष्मीर्मेधा वरा रिष्टिर्गौरी तुष्टिः प्रभा मतिः ॥ एताभिः पाहि तनुभिरष्टाभिर्मां सरस्वति ॥ ९ ॥ एवं संपूज्य गायत्रीं वीणाक्षमणिधारिणीम् ॥ शुक्लपक्षेऽक्षतैर्भक्त्या सकमंडलुपुस्तकाम् ॥ १० ॥ मौनव्रतेन भुञ्जीत सायं प्रातश्च धर्मवित् ॥ पञ्चम्यां प्रतिपक्षे च पूजयित्वा सुवासिनीः ॥ ११ ॥ तिलैश्च तंडुलप्रस्थं घृतपात्रेण संयुतम् ॥ क्षीरं तथा हिरण्यं च गायत्री प्रीयतामिति ॥ १२ ॥ संध्यायां च ततो मौनं तद्व्रतं तु समाचरेत् ॥ नांतरा भोजनं कुर्याद्यावन्मासास्त्रयोदश ॥ १३ ॥ समाप्ते तु व्रते दद्याद्भोजनं शुक्लतंडुलैः ॥ पूर्णं सुवस्त्रयुग्मं च गां च विप्राय भोजनम् ॥ १४ ॥ देव्यै वितानं घंटां च सितनेत्रं पटान्वितम् ॥ चन्दनं वस्त्रयुग्मं च दध्यन्नं शिखरैर्युतम् ॥ १५ ॥ तथोपदेष्टारमपि भक्त्या संपूजयेद्गुरुम् ॥ वित्तशाठ्येन रहितो वस्त्रमाल्यानुलेपनैः ॥ १६ ॥ अनेन विधिना यस्तु कुर्यात्सारस्वतं व्रतम् ॥ विद्यावानर्थयुक्तश्च रक्तकंठश्च जायते ॥ १७ ॥ सरस्वत्याः प्रसादेन व्यासवच्च कविर्भवेत् ॥ नारी वा कुरुते या तु सापि तत्फलभागिनी ॥ ब्रह्म



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोके वसेत्तावद्यावत्कल्पायुतत्रयम् ॥ १८ ॥ सारस्वतं व्रतं यस्तु शृणुयादपि यः पठेत् ॥ विद्याधरपुरे सोऽपि वसेत्कल्पायुतत्रयम् ॥ १९ ॥ संवत्सरं व्रतवरेण सरस्वतीं ये संपूजयंति जगतो जननीं जनित्रीम् ॥ विद्यावदातहृदया मधुरस्वरास्ते रूपान्विता बहुकलाकुशला भवंति ॥ २० ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे सारस्वतव्रतनिरूपणं नाम पंचत्रिंशत्तमोऽध्यायः ॥ ३५ ॥ ॥ छ ॥ ॥

॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पंचमी दयिता राजन्नागानंदविवर्द्धनी ॥ पञ्चम्यां किल नागानां भवतीत्युत्सवो महान् ॥ १ ॥ वासुकिस्तक्षकश्चैव कालिको माणिभद्रकः ॥ धृतराष्ट्रो रैवतश्च कर्कोटकधनंजयौ ॥ एते प्रयच्छंत्यभयं प्राणिनां प्राणजीविनाम् ॥ २ ॥ पञ्चम्यां स्नपयंतीह नागान्क्षीरेण ये नराः ॥ तेषां कुले प्रयच्छंति अभयं प्राणिनां सदा ॥ ३ ॥ शप्ता नागा यदा मात्रा दह्यमाना दिवानिशम् ॥ निर्वापिता गवां क्षीरैस्ततः प्रभृति वल्लभाः ॥ ४ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ मात्रा शप्ताः कथं नागाः किमुद्दिश्य च कारणम् ॥ कथं वा तस्य शापस्य विनाशोऽभूज्जनार्दन ॥ ५ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ उच्चैःश्रवाश्वराजश्च श्वेतवर्णोऽमृतोद्भवः ॥ तं दृष्ट्वा चाब्रवीत्कद्रूर्नागानां जननी स्वसाम् ॥ ॥ ६ ॥ अश्वरत्नमिदं श्वेतं पश्यपश्यामृतोद्भवम् ॥ कृष्णांश्च वीक्ष्यसे वालान्सर्वश्वेतानुताद्य वै ॥ ७ ॥ ॥ विनतोवाच ॥ ॥ सर्वश्वेतो हयवरो नायं कृष्णो न लोहितः ॥ कथं त्वं वीक्षसे कृष्णं विनतोवाच तां स्वसाम् ॥ ८ ॥ ॥ कद्रूरुवाच ॥ ॥ वीक्षेऽहमेकनयना कृष्णबालसमन्वितम् ॥ द्विनेत्रा च त्वं विनते न पश्यसि पणं कुरु ॥ ९ ॥ ॥ विनतोवाच ॥ ॥ अहं दासी भवित्री ते कृष्णकेशे प्रदर्शिते ॥ न चेद्दर्शयसे कद्रु मम दासी भविष्यसि ॥ १० ॥ एवं ते विपणं कृत्वा गते क्रोधसमन्विते ॥ सुषुप्ते प्राज्यदोषे तु कद्रूर्जिह्ममचिंतयत् ॥ ११ ॥ आहूय पुत्रान्प्रोवाच वाला भूत्वा हयोत्तमे ॥ तिष्ठध्वं विपणो जेष्ये विनतां जयगृद्धिनीम् ॥ १२ ॥ प्रोचुस्ते जिह्मबुद्धिं तां नागाः कद्रूं विगृह्य च ॥ अधर्म एष तु महान्करिष्यामो न ते वचः ॥ अशपद्रुपिता कद्रूः पावको वः प्रधक्ष्यति ॥ १३ ॥ गते बहुतिथे काले पांडवो जनमेजयः ॥ सर्पसत्रं स कर्ता वै भूमावन्यैः सुदुष्करम् ॥ १४ ॥ तस्मिन्सत्रे च तिग्मांशुः पावको भक्षयिष्यति ॥ एवं शप्त्वा तदा कद्रूः प्रत्युवाच न किंचन ॥ १५ ॥ मात्रा शप्तस्तदा नागः कर्तव्यं नान्वपद्यत ॥ वासुकिर्दुःखसंततः पपात भुवि मूर्च्छितः ॥ १६ ॥ वासुकिं दुःखितं दृष्ट्वा ब्रह्मा प्रोवाच सांत्वयन् ॥ मा शुचो वासुकेऽत्यर्थं शृणु मद्वचनं परम् ॥ १७ ॥ यायावरकुले जातो जरत्कारुरिति द्विजः ॥ भविष्यति महातेजास्तस्मिन्काले तपोनिधिः ॥ १८ ॥

१ मन्दभाग्यत्वादालस्य आधव-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगिनीं च जरत्कारुं तस्य त्वं प्रतिदास्यसि ॥ भविता तस्य पुत्रोऽसावस्तीक इति विश्रुतः ॥ १९ ॥ स तत्सत्रं प्रवृद्धं वै नागानां भयदं महत् ॥ निषेधयिष्यति मुनिर्वाग्भिः संपूज्य पार्थिवम् ॥ २० ॥ तदियं भगिनी नाग रूपौदार्यगुणान्विता ॥ जरत्कारुर्जरत्कारोः प्रदेया ह्यविचारतः ॥ २१ ॥ यदासौ प्रार्थ्यतेऽरण्ये यत्किञ्चित्प्रवदिष्यति ॥ तत्कर्तव्यमशेषेण इच्छेच्छ्रेयस्तथात्मनः ॥ २२ ॥ पितामहवचः श्रुत्वा वासुकिः प्रणिपत्य च ॥ तथाकरोद्यथा चोक्तं यत्नं परममास्थितः ॥ २३ ॥ तच्छ्रुत्वा पन्नगाः सर्वे प्रहर्षोत्फुल्ललोचनाः ॥ पुनर्जातमिवात्मानं मेनिरे भुजगोत्तमाः ॥ २४ ॥ अप्लवे तु निमग्नानां घोरे यज्ञाग्निसागरे ॥ आस्तीकस्तत्र भविता प्लवभूतोऽभयप्रदः ॥ २५ ॥ श्रुत्वा स चाग्निराजान्मृत्विजस्तदनंतरम् ॥ निवर्तयिष्यति यागं नागानां मोहनं परम् ॥ २६ ॥ पञ्चम्यां तच्च भविता ब्रह्मा प्रोवाच लेलिहान् ॥ तस्मादियं महाराज पञ्चमी दयिता शुभा ॥ २७ ॥ नागानां हर्षजननी दत्ता वै ब्रह्मणा पुरा ॥ दत्त्वा तु भोजनं पूर्वं ब्राह्मणानां तु कामतः ॥ २८ ॥ विसृज्य नागाः प्रीयंतां ये केचित्पृथिवीतले ॥ हिमाचले ये वसन्ति येंऽतरिक्षे दिविस्थिताः ॥ ये नदीषु महानागा ये सरःस्वभिगामिनः ॥२९॥ ये वापीषु तडागेषु तेषु सर्वेषु वै नमः ॥३०॥ नागान्विप्रांश्च संपूज्य विसृज्य च यथार्थतः ॥ ततः पश्चाच्च भुञ्जीयात्सह भृत्यैर्नराधिप ॥३१॥ पूर्वं मधुरमश्नीयात्स्वेच्छया तदनंतरम् ॥ एवं नियमयुक्तस्य यत्फलं तन्निबोध मे ॥३२॥ मृतो नागपुरं याति पूज्यमानोऽप्सरोगणैः ॥ विमानवरमारूढो रमते कालमीप्सितम् ॥३३॥ इह चागत्य राजासौ सर्वराजवरो भवेत् ॥ सर्वरत्नसमृद्धश्च वाहनाढ्यश्च जायते ॥ ३४ ॥ पञ्चजन्मन्यसौ राजा द्वापरेद्वापरे भवेत् ॥ आधिव्याधिविनिर्मुक्तः पत्नीपुत्रसहायवान् ॥ तस्मात्पूज्याश्च नागांश्च घृतक्षीरादिना सदा ॥ ३५ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ दशंति यं नरं कृष्ण नागाः क्रोधसमन्विताः ॥ भवेत्किं तस्य दष्टस्य विस्तराद्ब्रूहि मां हरे ॥ ३६ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ नागदष्टो नरो राजन्प्राप्य मृत्युं व्रजत्यधः ॥ अधो गत्वा भवेत्सर्पो निर्विषो नात्र संशयः ॥ ३७ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ नागदष्टः पिता यस्य भ्राता माता सुहृत्सुतः ॥ स्वसा वा दुहिता भार्या किं कर्तव्यं वदस्व मे ॥ ३८ ॥ मोक्षाय तस्य गोविन्द दानं व्रतमुपोषितम् ॥ ब्रूहि मे यदुशार्दूल येन स्वर्गतिमाप्नुयात् ॥ ॥ ३९ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ उपोष्या पञ्चमी राजन्नागानां पुष्टिवर्द्धिनी ॥ वर्षमेकं तु राजेन्द्र विधानं शृणु यादृशम् ॥ ४० ॥ मासे भाद्रपदे या तु शुक्लपक्षे महीपते ॥ सा च पुण्यतमा प्रोक्ता ग्राह्या सद्गतिकाम्यया ॥ ४१ ॥ ज्ञेया द्वादश वर्षांते पञ्चम्यो भरतर्षभ ॥ चतुर्थ्यामेक

१ इह–इ० पा० । २ एतेन व्रतमुख्येन–इ० पा० । ३ मान्याश्च–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्तं तु तस्यां नक्तं प्रकीर्तितम् ॥ ४२ ॥ भूरिचन्द्रमयं नागमथवा कलधौतजम् ॥ कृत्वा दारुमयं चापि उताहो मृन्मयं नृप ॥ ४३ ॥ पञ्चम्या मर्चयेद्भक्त्या नागं पञ्चफणं शृणु ॥ करवीरैस्तथा पद्मैर्जातीपुष्पैः सुशोभनैः ॥ ४४ ॥ गन्धपुष्पैः सनैवेद्यैः पूज्य पन्नगसत्तमम् ॥ ब्राह्मणान्भोजयेत्पश्चाद् घृतपायसमोदकैः ॥ ४५ ॥ नारायणबलिः कार्यः सर्पदष्टस्य देहिनः ॥ दाने पिंडप्रदाने च ब्राह्मणानां च तर्पयेत् ॥ ४६ ॥ वृषोत्सर्गस्तु कर्तव्यो गते संवत्सरे नृप ॥ स्नानं कृत्वोदकं दद्यात्कृष्णोऽत्र प्रीयतामिति ॥ ४७ ॥ अनंतो वासुकिः शेषः पद्मः कम्बल एव च ॥ तथा तक्षक नागश्च नागश्चाश्वतरो नृप ॥ ४८ धृतराष्ट्रः शंखपालः कालियस्तक्षकस्तथा ॥ पिंगलश्च महानागो मासिमासि प्रकीर्तिताः ॥ वत्सरांते पारणं स्यान्महाब्राह्मणभोजनम् ॥ ४९ ॥ इतिहासविदे नागः कांचनेन कृतो नृप ॥ तथार्जुनी प्रदातव्या सवत्सा कांस्यदोहना ॥ ५० ॥ एष पारणके पार्थ विधिः प्रोक्तो विचक्षणैः ॥ कृते व्रतवरे तस्मिन्सद्गतिं यांति बान्धवाः ॥ ५१ ॥ ये दन्दशूकरदनैर्दष्टाः प्राप्ता ह्यधोगतिम् ॥ वर्षमेकं चरिष्यंति भक्त्या ये व्रतमुत्तमम् ॥ दांष्ट्रिकं मोक्ष्यते तेषां शुभं स्थानमवाप्स्यति ॥ ५२ ॥ यश्चेदं शृणुयान्नित्यं पठेद्भक्त्या समन्वितः ॥ न वै कुटुम्बे नागेभ्यो भयं भवति कुत्रचित् ॥ ५३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ तद्वद्भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः ॥ यस्त्वालिख्य नरो नागान्कृष्णवर्णादिवर्णकैः ॥ पूजयेद्गन्धपुष्पैस्तु सर्पिर्गुग्गुलुपायसैः ॥ ५४ ॥ तस्य तुष्टिं समायांति पन्नगास्तक्षकादयः ॥ आसप्तमात्कुलात्तस्य न भयं नागतो भवेत् ॥ ५५ ॥ तस्मात्सर्वप्रयत्नेन नागान्संपूजयेद्बुधः ॥ तथा चाश्वयुजे मासि पञ्चम्यां कुरुनंदन ॥ ५६ ॥ कृत्वा कुशमयान्नागानिंद्राण्या सह पूजयेत् ॥ घृतोदकाभ्यां पयसा स्नपयित्वा विशांपते ॥ ५७ ॥ गोधूमैः पयसा स्विन्नैर्भक्ष्यैश्च विविधैस्तथा ॥ यस्त्वस्यां विविधान्नागान्छुचिर्भक्त्या समन्वितः ॥ ५८ ॥ पूजयेत्कुरुशार्दूल तस्य शेषादयो नृप ॥ नागाः प्रीता भवन्तीह शांतिं प्राप्नोति शोभनाम् ॥ स शांतिलोकमासाद्य मोदते शाश्वतीः समाः ॥ ५९ ॥ इत्येतत्कथितं वीर पञ्चमीव्रतमुत्तमम् ॥ तत्रायमुच्यते मंत्रः सर्वदोषनिषेधकः ॥ ६० ॥ ( ॐ कुरुकुल्ले हुं फट् स्वाहा ) भक्तेन भक्तिसहिताः शतपञ्चमीषु ये पूजयंति भुजगान्कुसुमोपहारैः॥ तेषां गृहेष्वभयदा हि सदैव सर्पाः शश्वत्प्रमोदपरमा रुचयो भवंति ॥ ६१ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे नागपंचमीव्रतवर्णनं नाम षट्त्रिंशत्तमोऽध्यायः ॥ ३६ ॥ ॥छ॥ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथमासाद्यते लक्ष्मीर्दुर्लभा भुवनत्रये ॥ दानेन तपसा वापि व्रतेन नियमेन वा ॥ १ ॥ जपहोमनमस्कारैः

१ तथा–इ० पा० । २ मृन्मयम्–इ० पा० । ३ शंखम्–इ० पा० । ४ पठेद्वा श्रद्धयान्वितः–इ० पा० । ५ ॐ नाग कुलं हुं फट् स्वाहा–इ० पा० । ६ सुमगोपहारैः इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संस्कारैर्वा पृथग्विधैः ॥ एतद्वद यदुश्रेष्ठ सर्ववित्त्वं मतो मम ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ भृगोः ख्यात्यां समुत्पन्ना पूर्वं श्रीः श्रूयते शुभा ॥ वासुदेवाय सा दत्ता मुनिना मानवृद्धये ॥ ३ ॥ वासुदेवोऽपि तां प्राप्य पीनोन्नतपयोधराम् ॥ पद्मपत्रविशालाक्षीं पूर्णचन्द्रनिभाननाम् ॥ ४ ॥ भाभासितदिगाभोगां साक्षाद्भानोः प्रभामिव ॥ नितंबाडंबरवतीं मत्तमातंगगामिनीम् ॥ रेमे सह तया राजन्विभ्रमोद्भ्रांतचित्तया ॥ ५ ॥ सा च विष्णुं जगज्जिष्णुं पातिं त्रिजगतां पतिम् ॥ प्राप्य कृतार्थमात्मानं मेने मानयशोधना ॥ ६ ॥ हृष्टं पुष्टं जगत्सर्वमभवद्भावितं तया ॥ लक्ष्म्या निरीक्षितं चैव सानंदं हि महीतलम् ॥ ७ ॥ क्षेमं सुभिक्षमारोग्यमनाक्रन्दमनाकुलम् ॥ जगदासीदनुद्भ्रान्तं प्रशांतोपद्रवं तथा ॥ ८ ॥ दिवि देवा मुमुदिरे दानवा दैत्यमागताः ॥ विस्फारितफणाभोगा नागाश्चैव रसातले ॥ ९ ॥ हृदये ब्राह्मणैर्वह्नौ भुज्यते त्रिदिवैर्हविः ॥ चातुर्वर्ण्यमसंकीर्णं पाल्यते पार्थ पार्थिवैः ॥ १० ॥ विरोचनप्रभृतिभिर्दृष्ट्वैवं दैत्यसत्तमैः ॥ तपस्तप्तुमथारब्धमग्निमाश्रित्य संयतैः ॥ ११ ॥ सोमसंस्थाहविःसंस्थापाकसंख्यादिभिर्मखैः ॥ सदाचारैः समारब्धमिष्टं स्वेष्टाभिलाषिभिः ॥ १२ ॥ एवं धर्मप्रधानैस्तैर्वेदवादरतात्मभिः ॥ जगदासीत्समाक्रांतं विक्रमेण क्रमेण तु ॥ १३ ॥ लक्ष्मीविलासप्रभवो देवानामभवन्मदः ॥ मदाच्छीलं च शौचं च सत्यं सद्यो व्यनीनशन् ॥ १४ ॥ सत्यशौचविहीनांस्तान्देवान्संत्यज्य चञ्चलान् ॥ जगाम दानवकुलं कुलदेवानुरागतः ॥ १५ ॥ लक्ष्म्या भावितदेहैस्तैः पुनरुद्धतमानसैः ॥ व्यवहर्तुं समारब्धमन्यायेन मदोद्धतैः ॥ १६ ॥ वयं वेदा वयं यज्ञा वयं विद्या वयं जगत् ॥ ब्रह्मविष्णुशंकराद्या वयं सर्वे दिवौकसः ॥ १७ ॥ अहंकारविमूढांस्ताञ्ज्ञात्वा दानवसत्तमान् ॥ सागरं सा विवेशाथ श्रांतचित्ता भृगोः सुता ॥ १८ ॥ क्षीराब्धिमध्यगतया लक्ष्म्या क्षीणार्थसंचयम् ॥ निरानन्दगतश्रीकमभवद्भुवनत्रयम् ॥ १९ ॥ गतश्रीकमथात्मानं मत्वा शंबरसूदनः ॥ पप्रच्छांगिरसं विप्रं ब्रूहि किञ्चिद्व्रतं मम ॥ २० ॥ येन संप्राप्यते लक्ष्मीर्लब्ध्वा न चलते पुनः ॥ निश्चलापि सुहृन्मित्रैर्भोग्या भवति सा मुने ॥ २१ ॥ न सा श्रीत्यभिमन्तव्या कन्या सा पाल्यते गृहे ॥ परार्थं या सुहृन्मित्रभृत्यैर्नैवोपभुज्यते ॥ २२ ॥ शक्रस्यैतद्वचः श्रुत्वा बृहस्पतिरुदारधीः ॥ कथयामास संचिंत्य शुभं श्रीपञ्चमीव्रतम् ॥ २३ ॥ यत्पुरा कस्यचित्प्रोक्तं व्रतानामुत्तमं व्रतम् ॥ तदस्मै कथयामास सरहस्यमशेषतः ॥ २४ ॥ तच्छ्रुत्वा कर्तुमारब्धं सुरेशेन सुरैस्तथा ॥ दैत्यदानवगंधर्वैर्यक्षैः प्रक्षीणकल्मषैः ॥ २५ ॥ सिद्धैः प्रसिद्धचारितैर्विष्णुना प्रभविष्णुना ॥ ब्राह्मणैर्ब्रह्मतत्त्वज्ञैः

१ लक्ष्यायं पाल्यंत्वम्यां सदृष्टे च महीतलम्–इ० पा० । २ अनामयम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समर्थैः पार्थिवैः सह ॥ २६ ॥ कैश्चित्सात्त्विकभावेन राजसेनापरैरपि ॥ तामसेन तथा कैश्चित्कृतं व्रतमिदं तथा ॥ २७ ॥ व्रते समाप्ते भूयिष्ठे निष्ठया परया प्रभो ॥ देवानां दानवानां च युद्धमासीदथोद्धतम् ॥ २८ ॥ निर्मथ्य भुजवीर्येण सागरं सरितां पतिम् ॥ समाहरामो ह्यमृतं हिताय त्रिदिवौकसाम् ॥ २९ ॥ इत्येवं समयं कृत्वा ममंथुर्वरुणालयम् ॥ मंथानं मंदरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥ ३० ॥ मथ्यमानजलाज्जातश्चन्द्रः शीतांशुरुज्ज्वलः ॥ अनंतरं समुत्पन्ना लक्ष्मीः क्षीराब्धिमध्यतः ॥ ३१ ॥ तया विलोकिताः सर्वे दैत्यदानवसत्तमाः ॥ आलोक्य सा जगामाशु विष्णोर्वक्षःस्थलं शुभम् ॥ ३२ ॥ विधिना विष्णुना चीर्णं व्रतं तेनाब्धिसंभवा ॥ शरीरस्था बभूवास्य विभ्रमोद्भ्रांतलोचना ॥ ३३ ॥ किंच राजसभावेन शक्रेणैतत्कृतं यतः ॥ ततस्त्रिभुवनैश्वर्यं प्राप्तं तेन महर्द्धिकम् ॥ ३४ ॥ तमसावृतचित्तैस्तु संचीर्णं दैत्यदानवैः ॥ तेन तेषामथैश्वर्यं दृष्टनष्टमभूत्किल ॥३५॥ एवं सश्रीकमभवत्सदेवासुरमानुषम् ॥ जरच्च जगतां श्रेष्ठ व्रतस्यास्य प्रभावतः ॥ ३६ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथमेतद्व्रतं कृष्ण क्रियते मनुजैः कदा ॥ प्रारभ्यते पार्यते च सर्वं वद यदूत्तम ॥ ३७ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ मार्गशीर्षे सिते पक्षे पंचम्यां पतगोदये ॥ उपवासस्य नियमं कुर्यादाशु सुहृद्धृदि ॥ ३८ ॥ स्वर्णरौप्यारकूटोत्था ताम्रमृत्काष्ठजाथ वा ॥ चित्रपट्टगतां देवीं लक्ष्मीं क्ष्मापाल कारयेत् ॥ ३९ ॥ पद्महस्तां पद्मवर्णां पद्मां पद्मदलेक्षणाम् ॥ दिग्गजेन्द्रैः स्नाप्यमानां कांचनैः कलशोत्तमैः ॥ ४० ॥ ततो यामत्रये जाते निम्नगायां गृहेऽथ वा ॥ स्नानं कुर्यादसंभ्रांतं शक्रवदुपचारतः ॥ ४१ ॥ देवान्पितॄंश्च संतर्प्य ततो देवगृहं व्रजेत् ॥ तत्रस्थां पूजयेद्देवीं पुष्पैस्तत्कालसंभवैः ॥ ४२ ॥ चपलायै नमः पादौ चंचलायै च जानुनी ॥ कटिं कमलवासिन्यै नाभिं ख्यात्यै नमोनमः ॥ ४३ ॥ स्तनौ मन्मथवासिन्यै ललितायै भुजद्वयम् ॥ उत्कंठितायै कण्ठं च माधव्यै मुखमण्डलम् ॥ ४४ ॥ नमः श्रियै शिरः पूज्य दद्यान्नैवेद्यमादरात् ॥ फलानि च यथालाभं विरूढान्धान्यसंचयान् ॥ ४५ ॥ ततः सुवासिनी पूज्या कुसुमैः कुंकुमेन च ॥ भोजयेन्मधुरान्नेन प्रणिपत्य विसर्जयेत् ॥ ४६ ॥ ततस्तु तंडुलप्रस्थं घृतपात्रेण संयुतम् ॥ ब्राह्मणाय प्रदातव्यं श्रीशः संप्रीयतामिति ॥ ४७ ॥ निर्वर्त्य तदशेषेण ततो भुञ्जीत वाग्यतः ॥ मासानुमासं कर्तव्यं विधिनानेन भारत ॥ ४८ ॥ श्रीर्लक्ष्मीः कमला संपदुमा नारायणी तदा ॥ पद्मा धृतिः स्थितिः पुष्टिर्ऋद्धिः सिद्धिर्यथाक्रमम् ॥ मासानुमासं राजेन्द्र प्रीयतामिति कीर्तयेत् ॥ ४९ ॥ ततश्च द्वादशे मासि संप्राप्ते पंचमे दिने ॥ वस्त्रमंडपिकां कृत्वा पुष्पगन्धाधिवासिताम् ॥ ॥ ५० ॥ शय्यायां स्थापयेल्लक्ष्मीं सर्वोपस्करसंयुताम् ॥ मौक्तिकाष्टकसंयुक्तां नेत्रपट्टावृतस्तनीम् ॥ ५१ ॥ सप्तधान्यसमोपेतां रसधातुसमन्वि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ताम् ॥ पादुकोपानहच्छत्रभाजनासनसत्कृताम् ॥ ५२ ॥ दद्यात्संपूज्य विधिवद्ब्राह्मणाय कुटुम्बिने ॥ व्यासाय वेदविदुषे यस्य वा रोचते स्वयम् ॥ सोपस्करां सवत्सां च धेनुं दत्त्वा क्षमापयेत् ॥५३॥ क्षीराब्धिमथनोद्भूते विष्णोर्वक्षःस्थलालये ॥ सर्वकामप्रदे देवि ऋद्धिं यच्छ नमोऽस्तु ते ॥५४॥ ततः सुवासिनीः पूज्य वस्त्रैराभरणैः शुभैः ॥ भोजयित्वा स्वयं पश्चाद्भुञ्जीत सह बन्धुभिः ॥ ५५ ॥ एवं यः कुरुते पार्थ भक्त्या श्रीपञ्चमीव्रतम् ॥ तस्य श्रीर्भवने भाति कुलानामेकविंशतिः ॥ ५६ ॥ नारी वा कुरुते या तु प्राप्यानुज्ञां स्वभर्तृतः ॥ सुभगा दर्शनीया च बहुपुत्रा च जायते ॥५७॥ श्रीपञ्चमीव्रतमिदं दयितं मुरारेर्भक्त्या समाचरति पूज्यभृगोस्तनूजाम् ॥ राज्यं निजं स भुवि भव्यजनोपभोगान्भुक्त्वा प्रयाति भुवनं मधुसूदनस्य ॥५८॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे पञ्चमीव्रतकल्पे श्रीपञ्चमीव्रतनिरूपणं नाम सप्तत्रिंशत्तमोऽध्यायः ॥३७॥ इति पंचमीकल्पः समाप्तः ॥ ॥ युधिष्ठिर उवाच ॥ ॥ षष्ठीविधानमधुना कथयस्व जनार्दन ॥ सर्वव्याधिप्रशमनं सर्वकर्मफलप्रदम् ॥ ॥ १ ॥ श्रुतं मया पूज्यमानो भानुः सर्वं प्रयच्छति ॥ दिवाकराराधनं मे तस्मात्कथय केशव ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ विशोकषष्ठीमतुलां वक्ष्यामि मनुजोत्तम ॥ यामुपोष्य नरः शोकं न कदाचिदिह जायते ॥ ३ ॥ माघे कृष्णतिलैः स्नातः पञ्चम्यां शुक्लपक्षतः[1] ॥ कृताहारः कृशरया दंतधावनपूर्वकम् ॥ ४ ॥ उपवासव्रतं कृत्वा ब्रह्मचारी भवेन्निशि ॥ ततः प्रभाते चोत्थाय कृतस्नानस्ततः शुचिः ॥ ५ ॥ कृत्वा तु काञ्चनं पद्ममर्कोऽयमिति पूजयेत् ॥ करवीरेण रक्तेन रक्तवस्त्रयुगेन च ॥ ६ ॥ यथा विशोकं भवनं त्वयैवादित्यसर्वदा ॥ तथा विशोकता मे स्यात्त्वद्भक्तिर्जन्मजन्मनि ॥ ७ ॥ एवं संपूज्य षष्ठ्यां तु शक्त्या संपूजयेद्द्विजान् ॥ सुप्त्वा संप्राश्य गोमूत्रमुत्थाय कृतनिश्चयः[2] ॥ ८ ॥ संपूज्य विप्रमंत्रेण गुडपात्रसमन्वितः ॥ सुसूक्ष्मवस्त्रयुगलं ब्राह्मणाय निवेदयेत् ॥ ९ ॥ अतैललवणं भुक्त्वा सप्तम्यां मौनसंयुतः ॥ ततः पुराणश्रवणं कर्तव्यं भूतिमिच्छता ॥ १० ॥ अनेन विधिना सर्वमुभयोरपि पक्षयोः ॥ कुर्याद्यावत्पुनर्माघशुक्लपक्षस्य सप्तमी ॥ ११ ॥ व्रतांते कलशं दद्यात्सुवर्णकमलान्वितम् ॥ शय्यां सोपस्करां तद्वत्कपिलां च पयस्विनीम् ॥ १२ ॥ अनेन विधिना यस्तु वित्तशाठ्यविवर्जितः ॥ विशोकषष्ठीं कुरुते स याति परमां गतिम् ॥ १३ ॥ यावज्जन्मसहस्राणां साग्रकोटिशतं भवेत् ॥ तावन्न शोकमभ्येति रोगदौर्गत्यवर्जितः ॥ १४ ॥ यंयं प्रार्थयते कामं तंतं प्राप्नोति पुष्कलम् ॥ निष्कामं कुरुते यस्तु स परं ब्रह्म गच्छति ॥ १५ ॥ यः पठेच्छृणुयाद्वापि षष्ठीं शोकविनाशिनीम् ॥ सोपीन्द्र

[1] कृष्णपक्षतः—इ० पा० । [2] कृतनैत्यकः—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोकमाप्नोति न दुःखी जायते क्वचित् ॥ १६ ॥ ये भास्करं दिनकरं करवीरपुष्पैः संपूजयंत्यभिनमंति कृतोपवासाः ॥ ते दुःखशोकरहिताः सहिताःसुहृद्भिर्भूमौ विहृत्य रविलोकमवाप्नुवंति ॥ १७ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे विशोकषष्ठीव्रतं नामा ष्टत्रिंशत्तमोऽध्यायः ॥३८॥ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अन्यामपि प्रवक्ष्यामि पद्मषष्ठीं शुभां तथा॥ यामुपोष्य नरः पापविमुक्तः स्वर्ग भाग्भवेत् ॥ १ ॥ मार्गशीर्षे शुभे मासि पञ्चम्यां नियतव्रतः ॥ षष्ठीमुपोष्य कमलं कारयित्वा सुकाञ्चनम् ॥ २ ॥ शर्करासंयुतं दद्याद्ब्राह्मणाय कुटुंबिने ॥ रूपं च कांचनं कृत्वा फलस्यैकस्य धर्मवित् ॥ ३ ॥ दद्यात्प्रातः कृतस्नानो भानुर्मे प्रीयतामिति ॥ भक्त्या तु विप्रान्संपूज्य सप्तम्यां क्षीरभोजनम् ॥ ४ ॥ कृत्वा कुर्यात्फलत्यागं या च स्यात्कृष्णसप्तमी ॥ एतामुपोष्य विधिवदनेनैव क्रमेण तु ॥ ५ ॥ तद्वै हैमं फलं दत्त्वा सुवर्ण कमलान्वितम् ॥ शर्करापात्रसंयुक्त वस्त्रमालासमन्वितम् ॥ ६ ॥ पष्ठ्योरुभयोर्महाराज यावत्संवत्सरं ततः ॥ उपोष्य दद्यात्क्रमशः सूर्यमंत्रानुदीर येत् ॥ ७ ॥ भानुरर्को रविर्ब्रह्मा सूर्यः शुक्रो हरिः शिवः ॥ श्रीमान्विभावसुस्त्वष्टा वरुणः प्रीयतामिति ॥ ८ ॥ प्रतिमासं च सप्तम्यामेकैकं नाम कीर्तयेत् ॥ प्रतिपक्षं फलत्यागमेतत्कुर्वन्समाचरेत् ॥ ९ ॥ व्रतांते विप्रमिथुनं पूजयेद्वस्त्रभूषणैः ॥ शर्कराकलशं दद्याद्धैमपद्मफलान्वितम् ॥ १० ॥ यथा फलकरो मासस्त्वद्भक्तानां सदा रवे ॥ तथानंतफलावाप्तिरस्तु जन्मनिजन्मनि ॥११॥ इमामनंतफलदां फलषष्ठीं करोति यः ॥ स सर्वपाप निर्मुक्तः सूर्यलोके महीयते ॥१२॥ सुरापानादिकं किञ्चिद्यदत्रामुत्र वा कृतम् ॥ तत्सर्वं नाशमायाति सूर्यलोकं स गच्छति ॥१३॥ भूतान्भव्यांश्च पुरुषांस्तारयेदेकविंशतिम् ॥ शृणुयाद्यः पठेद्वापि सोपि कल्याणभाग्भवेत् ॥१४॥ हैमं फलं सकमलं कलशं सितायाः षष्ठीमुपोष्य विधिवद्द्विजपुंग वाय ॥ दद्यात्सुरासुरशिरोमणिघृष्टपादं भानुं प्रणम्य फलसिद्धिमुपैति मर्त्यः ॥१५॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणिश्रीकृष्णयुधिष्ठिरसंवादे कमलषष्ठीव्रतं नामैकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथातः संप्रवक्ष्यामि सर्वपापप्रणाशिनीम् ॥ सर्वकामप्रदां पुण्यां षष्ठीं मन्दारसंज्ञिताम् ॥ १ ॥ माघस्यामलपक्षे तु पञ्चम्यां लघुभुङ्नरः ॥ दंतकाष्ठं ततः कृत्वा षष्ठीमुपवसेद्बुधः ॥ विप्रान्संपूज्य विधिवन्मं दारं प्राशयेन्निशि ॥२॥ ततः प्रभाते चोत्थाय कृतस्नानः पुनर्द्विजान् ॥ भोजयेच्छक्तितः कृत्वा मंदारकुसुमाष्टकम् ॥३॥ सौवर्णं पुरुषं तद्वत्पद्महस्तं सुशोभनम् ॥ पद्मं कृष्णतिलैः कृत्वा ताम्रपात्रेऽष्टपत्रकम् ॥ ४ ॥ पूज्य मंदारकुसुमैर्भास्करायेति पूर्वतः ॥ नमस्कारेण तद्वच्च सूर्यायेत्यनले दले ॥ ॥५॥ दक्षिणे तद्वदर्काय तथार्यम्णे च नैर्ऋते ॥ पश्चिमे वसुधात्रे च वायव्ये चण्डभानवे ॥६॥ पूष्णे ह्युत्तरतः पूज्य आनंदायेत्यतःपरम्॥ कर्णिकायां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तु पुरुषः पूज्यः सर्वात्मनेति च ॥ ७ ॥ शुक्लवस्त्रैः समावेष्ट्य भक्ष्यैर्माल्यफलादिभिः ॥ एवमभ्यर्च्य तत्सर्वं दद्याद्वेदविदे पुनः ॥ भुंजीतातैललवणं वाग्यतः प्राङ्मुखो गृही ॥ ८ ॥ अनेन विधिना सर्वं सप्तम्यां मासिमासि च ॥ कुर्यात्संवत्सरं यावद्वित्तशाठ्यविवर्जितः ॥ ९ ॥ एतदेव व्रतांते तु निधाय कलशोपरि ॥ गोभिर्विभवतः सार्द्धं दातव्यं भूतिमिच्छता ॥ १० ॥ नमो मंदारनाथाय मंदारभवनाय च ॥ त्वं च वै तारयस्वास्मानस्मात्संसारकर्दमात् ॥ ११ ॥ अनेन विधिना यस्तु कुर्यान्मंदारकं व्रतम् ॥ विपाप्मा स सुखी मर्त्यः कल्पं च दिवि मोदते ॥ १२ ॥ इमामघौघपटलध्वांतसद्वर्तिदीपिकाम् ॥ गच्छन्प्रगृह्य संसारशर्वर्यां न स्खलेन्नरः ॥ १३ ॥ मंदारषष्ठीं विख्यातामीप्सितार्थफलप्रदाम् ॥ यः पठेच्छृणुयाद्वापि सोपि पापैः प्रमुच्यते ॥ १४ ॥ षष्ठीमुपोष्य तिलपङ्कजकर्णिकायां संपूज्य भास्करमहो सुरवृक्षपुष्पैः ॥ यत्प्राप्नुवंति पुरुषा न हि तत्कदाचिद्गोभूहिरण्यतिलदाः पदमाप्नुवन्ति ॥ १५ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे मंदारषष्ठीव्रतनिरूपणंनाम चत्वारिंशोऽध्यायः ॥ ४० ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ भद्र भाद्रपदे मासि शुक्लषष्ठ्यां युधिष्ठिर ॥ योषित्सुवेषा सुभगा सर्वलोकमनोहरा ॥ १ ॥ प्रातः स्नानं महानद्यां कृत्वा संगृह्य वालुकाम् ॥ नवे वंशमये पात्रे यायाद्गृहमतंद्रिता ॥ २ ॥ सोपवासा प्रयत्नेन देवीं तत्र प्रपूजयेत् ॥ कृत्वा वस्त्रगृहं रम्यं दीपनेत्रपटावृतम् ॥ ३ ॥ तत्र संस्थाप्य तां देवीं पुष्पैः संपूजयेन्नवैः ॥ ध्यात्वा ललितिकां गौरीं तपोवननिवासिनीम् ॥ ४ ॥ मंत्रेणानेन कुसुमैश्चंपकस्य सुशोभनैः ॥ चंपकं करवीरं च नेमालिं मालतीं तथा ॥ नीलोत्पलं केतकीं च संगृह्य तगरं तथा ॥ ५ ॥ एकैकस्याष्टशतमष्टाविंशतिरेव वा ॥ अक्षतैः कलिका ग्राह्यास्तैस्तु देवीं समर्चयेत् ॥ ६ ॥ गंगाद्वारे कुशावर्ते बिल्वके नीलपर्वते ॥ स्नात्वा कनखले तीर्थे हरं लब्धवती व्रजेत् ॥ ७ ॥ ललितेललिते देवि सौख्यसौभाग्यदायिनि ॥ या सौभाग्यसमुत्पन्ना तस्यै देव्यै नमोनमः ॥ एवमभ्यर्च्य विधिना नैवेद्यं पुरतो न्यसेत् ॥ ८ ॥ कूष्मांडैः कर्कटीवृंतैः कर्कोटैः कारवेल्लकैः ॥ वृंताकैरक्षतैरङ्कैर्दीपधूपाद्यलक्तकैः ॥ ९ ॥ सार्द्धं सगुडकैर्धूपैः सोहालककरंबकैः ॥ गुडपुष्पैः कर्णवेष्टैर्मोदकैर्मुखमोदकैः ॥ १० ॥ एवमभ्यर्च्य विधिवद्रात्रौ जागरणं ततः ॥ गीतवाद्यनटच्छत्रप्रेक्षणीयैः सुशोभनैः ॥ सखीभिः सहिता साध्वी तां रात्रीं प्रशमन्नयेत् ॥ ११ ॥ न च सम्मीलयेन्नेत्रे नारी यामचतुष्टयम् ॥ दुर्भगा दुर्गता वंध्या नेत्रसंमीलनाद्भवेत् ॥ १२ ॥ एवं जागरणं कृत्वा सप्तम्यां सरितं नयेत् ॥ गन्धपुष्पैरथाभ्यर्च्य गीतवाद्यपुरःसरम् ॥ १३ ॥ तच्च दद्याद्विजेंद्राय नैवद्यादि नरोत्तम ॥ स्नात्वा गृहमुपागम्य हुत्वा वैश्वानरं क्रमात् ॥ देवान्पितॄन्मनुष्यांश्च पूजयित्वा सुवासिनीम् ॥ १४ ॥ कुमारिका भोजनीया ब्राह्मणा दश



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पंच च ॥ भक्ष्यभोज्यैर्बहुविधैर्देया तेभ्यः सुदक्षिणा ॥ ललिता प्रीतियुक्ताऽस्तु इत्युक्त्वा तान्विसर्जयेत् ॥ १५ ॥ यः कश्चिदाचरेदेतद्भक्त्या ललितिकाव्रतम् ॥ नरो वा यदि वा नारी तस्य पुण्यफलं शृणु ॥ १६ ॥ तन्नास्ति मानुषे लोके तस्य यन्नोपपद्यते ॥ सुखसौभाग्यसंयुक्ता गौरीलोकमवाप्नुयात् ॥ १७ ॥ षष्ठ्यां जलांतरगता वरवंशपात्रे संगृह्य पूजयति या सिकताः क्रमेण ॥ नक्तं च जागरमनुद्धतगीतनृत्यैः कृत्वा ह्यसौ त्रिभुवने ललितेव भाति ॥१८॥ इति श्रीभविष्ये महापुराणे उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे ललितापष्ठीव्रतवर्णनं नामैकचत्वारिंशोऽध्यायः ॥४१॥

॥ ॥ श्रीकृष्ण उवाच ॥ ॥ येयं मार्गशिरे मासि षष्ठी भरतसत्तम ॥ पुण्या पापहरा धन्या शिवा शान्ता गृहप्रिया ॥ १ ॥ निहत्य तारकं षष्ठ्यां गुहस्तारकराजवत् ॥ रराज तेन दयिता कार्त्तिकेशस्य सा तिथिः ॥ स्नानदानादिकं कर्म तस्यामक्षयमुच्यते ॥२॥ यस्यां पश्यंति गांगेयं दक्षिणापथमाश्रितम् ॥ ब्रह्महत्यादिपापैस्ते मुच्यंते नात्र संशयः ॥ ३ ॥ तस्मादस्यां सोपवासः कुमारं स्वर्णसंभवम् ॥ राजतं वा महाराज मृन्मयं वापि कारयेत् ॥ ४ ॥ अपराह्णे ततः स्नात्वा समाचम्य यतव्रती ॥ पद्मासनस्थो गाङ्गेयं ध्यायंस्तिष्ठेत्समाधिना ॥ ५ ॥ ब्राह्मणस्तु ततो विद्वान्गृहीत्वा करकं नवम् ॥ पातयेत्तस्य शिरसि धारां वै दक्षिणामुखः ॥ ६ ॥ चन्द्रमण्डलभूतानां भवभूतिपवित्रिता ॥ गंगाकुमारधारेयं पतिता तव मस्तके ॥७॥ एवं स्नात्वा समभ्यर्च्य भास्करं भुवनाधिप ॥ पुष्पधूपादिना पश्चात्पूजयेत्कृत्तिकासुतम् ॥ ८ ॥ देव सेनापते स्कन्द कार्त्तिकेय भवोद्भव ॥ कुमार गुह गांगेय शक्तिहस्त नमोऽस्तु ते ॥ ९ ॥ एभिर्नामपदैः पूज्य नैवेद्यं विनिवेदयेत् ॥ फलानि दक्षिणान्नानि चन्दनं मलयोद्भवम् ॥ ॥१०॥पार्श्वस्थौ पूजयेच्छागकुक्कुटौ स्वामिवल्लभौ ॥ सकलापं मयूरं च प्रत्यक्षां हिमजां तथा ॥११॥ कृत्तिकाकटकं पार्श्वे संपूज्य स्कन्दवल्लभम् ॥ तेनैव नामभिर्होमः कार्यः साज्यैस्तिलैस्तथा ॥ १२ ॥ एवं निर्वर्त्य विधिवत्फलमेवं युधिष्ठिर ॥ भक्षयित्वा स्वपेद्भूमौ स्वास्तृते दर्भसंस्तरे ॥ ॥ १३ ॥ नालिकेरं मातुलुंगं नारिंगं पनसं तथा ॥ जंबीरं दाडिमं द्राक्षां ह्यन्याम्रफलानि च ॥ १४ ॥ श्रीफलामलकं तद्वत्रपुसं कदलीफलम् ॥ क्रमेण भक्षयेद्राजन्संयतो नियतव्रती ॥ अलाभे कलकालौघफलमद्यादतंद्रितः ॥ १५ ॥ प्रत्यक्षो हेमघटितश्छागो वा कुक्कुटोऽथवा ॥ प्रातर्देयो द्विजायैतत्सेनानीः प्रीयतामिति ॥ १६ ॥ सेनायां स च संभूतः क्रौञ्चारिः षण्मुखो गुहः ॥ गांगेयः कार्त्तिकेयश्च स्वामी बालग्रहाग्रणीः ॥ १७ ॥ छागप्रियश्शक्तिधरो द्वारो द्वादशमः स्मृतः ॥ प्रीयतामिति सर्वेषु क्रमान्मासेषु कीर्तयेत् ॥ १८ ॥ ब्राह्मणान्भोजयित्वादौ पश्चाद्भुञ्जीत वाग्यतः ॥ एवं संवत्सरस्यान्ते कार्त्तिके मासि शोभने ॥१९॥ कार्त्तिकेयं समभ्यर्च्य वासोभिर्भूषणैः सह ॥ गांगेयः कार्त्तिकेयश्च सकृदेवैवमाचरेत ॥२०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संवत्सरविधिं कृत्वा जपं होमपुरस्कृतम् ॥ दद्याद्विप्राय राजेन्द्र वाचकाय विशेषतः ॥२१॥ एते विप्राः स्मृता दिव्या भौमास्त्वन्ये द्विजातयः ॥ पालितेऽस्मिन्व्रते पार्थ तीर्णः स्याद्भवसागरात् ॥२२॥ एवं यः कुरुते भक्त्या नरो योषिदथापि वा ॥ स प्राप्येह शुभं कामं गच्छतीन्द्रसलोकताम् ॥ ॥२३॥ सदैव पूजनीयस्तु कार्तिकेयो महीपते ॥ कार्त्तिकेयादृते नान्यो राज्ञां पूज्यः प्रवक्ष्यते ॥२४॥ संग्रामं गच्छमानो यः पूजयेत्कृत्तिकासुतम् ॥ स सर्वं जयते वीरो यथेन्द्रो दानवान्रणे ॥२५॥ तस्मात्सर्वप्रयत्नेन पूजयेच्छंकरात्मजम् ॥ पूज्यमानस्तु सद्भक्त्या सर्वान्कामान्प्रयच्छति ॥२६॥ यस्तु षष्ठ्यां नरो नक्तं कुर्याद्भारतसत्तम ॥ सर्वपापविनिर्मुक्तो गांगेयस्य सदा व्रजेत् ॥२७॥ श्रुत्वैवं दक्षिणां मासं गत्वा श्रद्धासमन्वितः॥ पूजये देवदेवेशं स गत्वा शिवमंदिरम् ॥ २८ ॥ स्कन्दं गुहं शरवणोद्भवमादिदेवं शम्भोः सुतं सदयितं गिरिराजपुत्र्याः ॥ स्वर्गे निरर्गलसुखान्यनुभूयते न सेनापतिर्भवति राज्यधुरंधुरोऽसौ ॥ २९ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे तारकवधकार्त्तिकेयपूजाषष्ठीव्रतवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ सप्तमी च यदा देव केन कालेन पूज्यते ॥ किंफला नियमः कश्चिद्वद देवकिनन्दन ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शुक्लपक्षे तु सप्तम्यां यदादित्यदिनं भवेत् ॥ सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥ २ ॥ स्नानं दानं जपो होम उपवासस्तथैव च ॥ सर्वं विजयसप्तम्यां महापातकनाशनम् ॥ ३ ॥ प्रदक्षिणां यः कुरुते फलैः पुष्पैर्दिवाकरम् ॥ स सर्वगुणसंपन्नं पुत्रं प्राप्नोत्यनुत्तमम् ॥ ४ ॥ प्रथमा नालिकेरैस्तु द्वितीया रक्तनागरैः ॥ तृतीया मातुलुंगैश्च चतुर्थी कदलीफलैः ॥ ॥ ५ ॥ पञ्चमी वरकूष्माण्डैः षष्ठी पक्वैस्तु तैंदुकैः[1] ॥ वृन्ताकैः सप्तमी देया अष्टोत्तरशतेन च ॥ ६ ॥ मौक्तिकैः पद्मरागैश्च नीलैः कर्केतनैस्तथा ॥ गोमेदैर्वज्रवैडूर्यैः शतेनाष्टाधिकेन तु ॥ ७ ॥ अक्षोटैर्बदरैर्बिल्वैः करमर्दैः सबर्बरैः ॥ आम्राम्रातकजंबीरैर्जंबुककोंटिकाफलैः ॥८॥ पुष्पैर्धूपैः फलैः पत्रैर्मोदकैर्गुणकैः शुभैः ॥ एभिर्विजयसप्तम्यां भानोः कुर्यात्प्रदक्षिणाम् ॥ ९ ॥ अन्यैः फलैश्च काम्यैश्च ऐक्षवैर्ग्रंथिवर्जितैः ॥ रवेः प्रदक्षिणा देया फलेन फलमादिशेत् ॥ १० ॥ न विशेन्न च संजल्पेन्न च कश्चिद्वदेदपि ॥ एकचित्ततया भानुश्चिन्तनाय प्रयच्छति ॥ ११ ॥ वसोर्धारा प्रदातव्या भानोर्गव्येन सर्पिषा ॥ चन्द्रातपत्रं बध्नीयाज्जयं किंकिणिकायुतम् ॥१२॥ कुंकुमेन समालभ्य पुष्पधूपैश्च पूजयेत् ॥ शुभं निवेद्य नैवेद्यं ततः पश्चात्क्षमापयेत् ॥१३॥ भानो भास्कर मार्तण्ड चण्डरश्मे दिवाकर ॥ आरोग्यमायुर्विजयं पुत्रं देहि नमोऽस्तु ते ॥ १४ ॥ उपवासेन नक्तेन तथैवाया

1 पष्टिपक्वैस्तु तंदुलैः—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चिंतेन च ॥ कृता नियमयुक्तेन या त्वियं जयसप्तमी ॥ १५ ॥ रोगी विमुच्यते रोगाद्दरिद्रः श्रियमाप्नुयात् ॥ अपुत्रो लभते पुत्रं विद्या विद्यार्थिनो भवेत् ॥ १६ ॥ शुक्लपक्षे यदा पार्थ सादित्यसप्तमी भवेत् ॥ तदा नक्तेन मुद्गाशी क्षपयेत्सप्त सप्तमीः ॥ १७ ॥ भूमौ पलाशपत्रेषु स्नात्वा हुत्वा यथाविधि ॥ समाप्ते तु व्रते दद्यात्सौवर्णं मुद्गमिश्रितम् ॥ १८ ॥ मुद्गं श्रेष्ठाय विप्राय वाचकाय विशेषतः॥ सप्तम्यां सप्तिसंयुक्त आदित्येन नरोत्तम ॥ १९ ॥ उपोष्य विधिनानेन मन्त्रप्राशनपूजनैः ॥ षडक्षरेण मन्त्रेण सर्वं कार्यं विजानता ॥ २० ॥ अर्चनं वह्निकार्यं च शतमष्टोत्तरं नरः ॥ समाप्ते तु व्रते पश्चात्सुवर्णेन घटापितम् ॥ २१ ॥ सौवर्णं भास्करं पार्थ रुक्मपात्रगतं शुभम् ॥ रक्तांबरं च काषायं गन्धं दद्यात्सदक्षिणम् ॥ २२ ॥ मन्त्रेणानेन विप्राय कर्मसिद्ध्यै द्विजातये ॥ ॐ भास्कराय सुदेवाय नमस्तुभ्यं यशस्कर ॥ २३ ॥ ममाद्य सर्महितार्थप्रदो भव नमोनमः ॥ दानानि च प्रदेयानि गृहाणि शयनानि च ॥ २४ ॥ श्राद्धानि पितृदेवानां शाश्वतीं तृप्तिमिच्छता ॥ यात्राप्रशस्ता यातॄणां राज्ञां च जयमिच्छताम् ॥२५॥ विजयो जायतेऽवश्यं यतीनां च नृणां तदा ॥ अतोर्थं विश्रुता लोके सदा विजयसप्तमी ॥ २६॥ एवमेषा तिथिः पार्थ इह कामप्रदा नृणाम् ॥ परत्र सुखदा सौम्या सूर्यलोकप्रदायिनी ॥ २७ ॥ दाता भोगी च चतुरो दीर्घायुर्नीरुजः सुखी ॥ इहागत्य भवेद्राजा हस्त्यश्वधनरत्नवान् ॥ २८ ॥ नारी वा कुरुते या तु सापि तत्पुण्यभागिनी ॥ भवत्यत्र न संदेहः कार्यः पार्थ त्वया क्वचित् ॥ ॥ २९ ॥ स्वर्ग्या समीहितसुखार्थफलप्रदा च या मृग्यते मुनिवरैः प्रवरा तिथीनाम् ॥ सा भानुपादकमलार्चनचिंतकानां पुंसां सदैव विजया विजयं ददाति ॥३०॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे विजयसप्तमीव्रतकथनं नाम त्रिचत्वारिंशोऽध्यायः ॥४३॥

॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथान्यदपि ते वच्मि दानं श्रेयस्करं परम् ॥ आदित्यमंडलं नाम सर्वाशुभविनाशनम् ॥ १ ॥ यवचूर्णेन शुभ्रेण कुर्याद्गोधूमजेन वा ॥ सुपक्वं भानुबिंबाभं गुडगव्याज्यपूरितम् ॥ २ ॥ संपूज्य भास्करं भक्त्या तदग्रे मंडलं शुभम् ॥ रक्तचन्दनजं कुर्यात्कुंकुमं वा विशेषतः ॥ ३ ॥ मण्डलं तत्र संस्थाप्य रक्तवस्त्रैः सुपूजितम् ॥ ब्राह्मणाय प्रदातव्यं मंत्रेणानेन पांडव ॥ ४ ॥ आदित्यतेजसोत्पन्नं राजतं विधिनिर्मितम् ॥ श्रेयसे मम विप्र त्वं प्रतिगृह्णेदमुत्तमम् ॥ ५ ॥ ( इति दानमंत्रः ) कामदं धनदं धर्म्यं पुत्रदं सुखदं तव ॥ आदित्यप्रीतये दत्तं प्रतिगृह्णामि मंडलम् ॥ ६ ॥ ( इति प्रतिग्रहमंत्रः ) एवं दत्त्वा नरो राजन्सूर्यवद्दिवि राजते ॥ सर्वकामसमृद्धार्थो मंडलाधिपतिर्भवेत् ॥ ७ ॥ दातव्यं जयसप्तम्यां तदारभ्य दिनेदिने ॥ भास्करस्य महाराज शक्त्या भावेन भावितः ॥ ८ ॥ गोधूमचूर्णजनितं यवचूर्णजं वा आदित्य



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मंडलमखण्डगुडाद्यपूर्णम् ॥ कृत्वा द्विजाय विधिवत्प्रतिपादयेद्यो भूमौ भवत्यमितमंडलमंडितोऽसौ ॥ ९ ॥ इति श्रीभविष्ये महापुराण उत्तर पर्वणि श्रीकृष्णयुधिष्ठिरसंवादे आदित्यमंडलविधिवर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ यामुपोष्य नरः कामान्प्राप्नोति मनसेप्सितान् ॥ तामेकां वद मे देव सप्तमीं धनसौख्यदाम् ॥ १ ॥ श्रीकृष्ण उवाच ॥ ॥ भानोर्दिने सिते पक्षे अतीते चोत्तरायणे ॥ पुन्नामाह्वयनक्षत्रे गृह्णीयात्सप्तमीव्रतम् ॥ २ ॥ सव्रीहिकान्यवतिलान्सह माषमुद्गैर्गोधूममांसमधुमैथुनकांस्यपात्रम् ॥ अभ्यंजनांजन शिलातलचूर्णितानि षष्ठ्यां परं परिहरेदहनि प्रसिद्ध्यै ॥ ३ ॥ देवान्मुनीन्पितृगणान्सजलांजलीभिः संतर्प्य पूज्य गगनांगणहस्तभुक्तान् ॥ हुत्वानले तिलयवान्बहुशो घृताक्तान्भूमौ स्वपेद्धृदि निधाय हि तं सवित्रम् ॥ ४ ॥ यानि त्रयोदश जनैरिह वर्जितानि द्रव्याणि तानि परिहृत्य परिद्विपष्ट्या ॥ संप्राश्य शुद्धचणकानिह वर्षमेकं प्राप्नोति भारत सुखं मनसेप्सितं च ॥ ५ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्ण युधिष्ठिरसंवादे त्रयोदशवर्ज्यसप्तमीव्रतं नाम पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ छ ॥ श्रीकृष्ण उवाच ॥ ॥ लोमशो नाम विप्रर्षिर्मथुरायां गतः पुरा ॥ सोर्चितो वसुदेवेन देवक्या च युधिष्ठिर ॥ १ ॥ उपविष्टः कथाः पुण्याः कथयित्वा मनोहराः ॥ ततः कथयितुं भूयः कथामेतां प्रच क्रमे ॥२॥ कंसे हते मृताः पुत्राः पुत्रा जाताः पुनः पुनः ॥ मृतवत्सा देवकि त्वं पुत्रदुःखेन दुःखिता॥३॥यथा चन्द्रमुखी दीप्तिर्बभूव मृतपुत्रिका ॥ पश्चाचीर्णव्रता सैव बभूवाक्षतवत्सका ॥ त्वमेव देवकि तथा भविष्यसि न संशयः ॥४॥ ॥ देवक्युवाच ॥ ॥ का सा चन्द्रमुखी ब्रह्मन्बभूव बहु पुत्रिका ॥ ५ ॥ चरितं किं व्रतवरं बहुसंततिकारकम् ॥ सतां सदर्थकरणं सौभाग्यारोग्यवर्द्धनम् ॥ ६ ॥ ॥ लोमश उवाच ॥ ॥ अयोध्यायां पुरा राजा नहुषो नाम विश्रुतः ॥ तस्य राज्ञो महादेवी नाम्ना चन्द्रमुखी पुरा ॥ ७ ॥ पुरोहितस्य तस्यैव पत्न्यासीन्मानमानिका ॥ तयोरासी दृढा प्रीतिः स्पृहणीया परस्परम् ॥ ८ ॥ अथापि तेपि मित्रिण्यौ स्नानार्थं सरयूजले ॥ प्राप्ते प्राप्ताश्च तत्रैव बह्व्यश्च नगराङ्गनाः ॥ ९ ॥ स्नात्वा तु मंडलं चक्रुः स्वपतेर्व्यक्तरूपिणः ॥ लेखयित्वा शिवं शांतमुमया सह शंकरम् ॥ १० ॥ गन्धपुष्पाक्षतैर्भक्त्या पूजयित्वा यथाविधि ॥ प्रणम्य गंतुकामास्ताः पृष्टास्ताभ्यां नरस्त्रियः ॥ ११ ॥ ता ऊचुः शङ्करोऽस्माभिः पार्वत्या सह पूजितः ॥ स्वर्णसूत्रमयस्तंतुः शिवायात्मा निवे दितः ॥ १२ ॥ धारामयमिदं तावद्यावत्प्राणावधारणम् ॥ तासां तु वचनं श्रुत्वा मित्रिण्यौ तेऽपि भारत ॥ १३ ॥ तस्यैव समयं तत्र बद्ध्वा दोर्भ्यां तु दोरकैः ॥ ततस्ताः स्वगृहाञ्जग्मुः स्वसखीभिः समावृताः ॥ १४ ॥ कालेन महता यातं तस्या वै तद्व्रतं नृप ॥ चंद्रवत्याः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रमत्ताया विस्मृतः स तु दोरकः ॥ १५ ॥ मृता कैश्चिदहोरात्रैः सा बभूव प्लवङ्गमी ॥ मानी च कुक्कुटी जाता प्रायः संनिकटंचरे ॥ ॥ १६ ॥ तथैव जाते मित्रिण्यौ पूर्वजातिस्मरे तथा ॥ संभूय भूपसमयं प्राग्भूतं चक्रतुः पुनः ॥ १७ ॥ तद्दिने तत्र संप्राप्ते पुनः काले न ते मृते ॥ तत्रैव मात्रके देशे जाते गोकुलसंयुते ॥ १८ ॥ राज्ञो जाया बभूवाथ पृथ्वीनाथस्य वा पुनः ॥ ईश्वरी नाम विख्याता राज्ञी राजेंद्रवल्लभा ॥ १९ ॥ अग्निमीलां[1] द्विजस्याभूद्भार्या भूषणनामिका ॥ पुरोहितस्य कालेन कुक्कुटी बहुपुत्रिणी ॥ २० ॥ जातिस्मरा पद्महस्ता अष्टपुत्रा मृतप्रजा ॥ पुनर्निरन्तरा प्रीतिर्बभूवाथ तयोर्नृप ॥ २१ ॥ तत्रेश्वरी पुत्रमेकं प्रसूता चैव रोगिणम् ॥ नववर्षस्तु पञ्चत्वमगात्स च युधिष्ठिर ॥ २२ ॥ ततस्तां भूषणां द्रष्टुमथैषा पुत्रदुःखिता ॥ सखीभावादतिस्नेहात्सर्वपुत्रसमन्विता ॥ अमुक्ताभरणा नित्यं स्वभावेनैव भूषिता ॥ २३ ॥ तां दृष्ट्वा पुत्रिणीं भव्यां प्रजज्वालेश्वरी रुषा ॥ ततो गृहं प्रेष्य च तां सखीं वै तीव्रमत्सरा ॥ २४ ॥ चिन्तयामास सा रात्र्यां तस्याः पुत्रवधं प्रति ॥ हताहताश्च तत्पुत्रा पुनर्जीवन्त्यनामयाः ॥ २५ ॥ कदाचिदाहूय सखीं भूषणां पुरतः स्थिताम् ॥ ईश्वरी प्राह किमिदं सखि पुण्यं त्वया कृतम् ॥ २६ ॥ येन ते निहताः पुत्राः पुनर्जीवन्ति नो भयम् ॥ बहुपुत्रा जीववत्सा अमुक्ताभरणा कथम् ॥ शोभसेऽभ्यधिकं भद्रे विद्युत्सौदामिनीव हि ॥ २७ ॥ ॥ भूषणोवाच ॥ ॥ भद्रे भाद्रपदे मासि सप्तम्यां सलिलाशये ॥ स्नात्वा शिवं मंडलके लेखयित्वा सहांबिकम् ॥ २८ ॥ भक्त्या संपूज्य समयं कुर्याद्बद्ध्वा करे गुणम् ॥ यावज्जीवं मया तावच्छिवस्यात्मा निवेदितः ॥ २९ ॥ इत्येवं समयं कृत्वा ततःप्रभृति दोरकम् ॥ स्वर्णरौप्यमयं वापि करशाखासु धारयेत् ॥ ३० ॥ मंडकं वेष्टिकां दद्याच्छ्वश्रूपक्षे द्विजे तु वा ॥ स्वयं च ता न भोक्तव्या व्रतभंगभयात्सखि ॥ ३१ ॥ परितो मुद्रिका रौप्या सौवर्णी च युधिष्ठिर ॥ ताम्रपात्रोपरि स्थाप्य ब्राह्मणाय निवेदयेत् ॥ ३२ ॥ सोहालकानि कांसारं दद्याद्भुञ्जीत च स्वयम् ॥ मण्डलं सद्म वित्तं च शिवं शक्तिसमन्वितम् ॥ ३३ ॥ सम्पूज्य सखि दुष्प्राप्यं त्रैलोक्येऽपि न विद्यते ॥ तदेवं समयः पूर्वं त्वया सह मया कृतः ॥ ३४ ॥ स मया पालितो भक्त्या ततोऽहं सुस्थिता सखि ॥ त्वया स भग्नः समयो दर्पात्त्यक्तः शरीरयोः ॥ ३५ ॥ तेन सन्ततिविच्छिन्ना राज्येपि सति दुःखिता ॥ एष प्रभावः कथितो व्रतस्यास्य मया तव ॥ ३६ ॥ अर्द्धं तव प्रदास्यामि तस्य धर्मस्य सुव्रते ॥ सखीभावात्प्रतीच्छ त्वं नात्र कार्या विचारणा ॥ ३७ ॥ इत्युक्त्वा प्रतिजग्राह व्रतदानफलं ततः ॥ बभूव सुप्रजाः साध्वी

1 अग्निमाला–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मोक्षं प्राप सुरेश्वरी ॥ ३८ ॥ व्रतस्यास्य प्रभावेण सपुत्रा त्वं च देवकि ॥ भविष्यसि त्रिलोकेशं पुत्रं च जनयिष्यसि ॥ ३९ ॥ इत्येवं कथयित्वास्यै लोमशो मुनिपुंगवः ॥ जगाम नभसा पार्थ मयाऽप्येतत्तवोदितम् ॥ ४० ॥ ये चरिष्यंति मनुजा व्रतमेतद्युधिष्ठिर ॥ कुक्कवाकुप्रसङ्गाख्यं देवक्या चरितं शुभम् ॥ ४१ ॥ तेषां सन्ततिविच्छेदो न कदाचिद्भविष्यति ॥ स्त्रियश्च याश्चरिष्यंति व्रतमेतत्सुतप्रदम् ॥ मर्त्यलोके सुखं स्थित्वा यास्यंति शिवमंदिरम् ॥ ४२ ॥ यः कुक्कुटीव्रतवरं प्लवगीसमेतं चक्रे चराचरगुरुं हृदये निधाय ॥ तद्व्याकरोति कलुषौघविघातरक्षां सा स्त्री युवां भवति शोभनगीतवत्सा ॥ ४३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कुक्कुटीमर्कटीव्रतवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अत ऊर्ध्वं प्रवक्ष्यामि सप्तमीकल्पमुत्तमम् ॥ माघमासात्समारभ्य शुक्लपक्षे युधिष्ठिर ॥१॥ सप्तम्यां कुरु संकल्पमहोरात्रे व्रते नृप ॥ वरुणेत्यर्चयित्वा तु ब्रह्मकूर्चं तु कारयेत् ॥ २ ॥ अष्टम्यां भोजयेद्विप्रांस्तिलपिष्टं गुडौदनम् ॥ अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ३ ॥ सप्तम्यां फाल्गुने मासि सूर्यमित्यभिपूजयेत् ॥ वाजपेयस्य यज्ञस्य यथोक्तं लभते फलम् ॥ ४ ॥ सप्तम्यां चैत्रमासे तु वेदांशुमभिपूजयेत् ॥ उक्थाध्वरसमं पुण्यं नरः प्राप्नोति भक्तिमान् ॥ ५ ॥ वैशाखस्य तु सप्तम्यां धातारमभिपूजयेत् ॥ पशुवंध्वध्वरे पुण्यं सम्यक्प्राप्नोति मानवः ॥ ६ ॥ सप्तम्यां ज्येष्ठमासस्य इन्द्र इत्यभिपूजयेत् ॥ वाजपेयस्य यज्ञस्य फलं प्राप्नोति दुर्लभम्॥७॥ आषाढमासे सप्तम्यां पूजयित्वा दिवाकरम् ॥ बहुवर्णस्य यज्ञस्य फलं प्राप्नोति पुष्कलम् ॥ ८ ॥ सप्तम्यां श्रावणे मासि मातापिं नाम पूजयेत्॥ सौत्रामणिफलं सम्यक्प्राप्नोति पुरुषः शुभम् ॥ ९ ॥ रविं प्रौष्ठपदे मासे सप्तम्यामर्चयेच्छुचिः ॥ तुलापुरुषदानस्य फलं प्राप्नोति मानवः ॥ ॥ १० ॥ आश्वयुक्छुक्लसप्तम्यां सवितारं प्रपूज्य च ॥ गोसहस्रप्रदानस्य फलं प्राप्नोति मानवः ॥ ११ ॥ कार्तिके शुक्लसप्तम्यां दिनेशं सप्तवाहनम् ॥ योऽभ्यर्चयति पुण्यात्मा पौंडरीकं स विन्दति ॥ १२ ॥ भानुं मार्गसिते पक्षे पूजयित्वा विधानतः ॥ राजसूयस्य यज्ञस्य फलं दशगुणं भजेत् ॥ १३ ॥ भास्करं पौषमासे तु पूजयित्वा यथाविधि ॥ नरमेधस्य यज्ञस्य फलं प्राप्नोति पुष्कलम् ॥ १४ ॥ तदेव कृष्णसप्तम्यां नाम संपूजयेद्बुधः ॥ सोपवासः प्रयत्नेन वर्षमेकं युधिष्ठिर ॥ पश्चात्समाप्ते नियमे सूर्ययागं समाचरेत् ॥ १५ ॥ शुचिर्भूमौ समे देशे लेपयेद्रक्तचन्दनैः ॥ एकहस्तं द्विहस्तं वा चतुर्हस्तमथापि वा ॥ १६ ॥ सिंदूरगैरिकाभ्यां च सूर्यमण्डलमालिखेत् ॥ रक्तपुष्पैः सपद्मैश्च धूपैः कुन्दुरकादिभिः ॥ सम्पूज्य दद्यान्नैवेद्यं विचित्रं घृतपाचितम् ॥ १७ ॥ पुरतः स्थापयेत्कुम्भान्सहिरण्यान्नसंयुतान् ॥ अग्निकार्यं





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः कुर्यात्समभ्युक्ष्य हुताशनम् ॥ १८ ॥ आकृष्णेनेति मंत्रेण समिद्भिश्चार्कसंभवैः ॥ तिलैराज्यगुडोपेतैर्दद्याद्दशशताहुतीः ॥ १९ ॥ ततस्तु दक्षिणा देया ब्राह्मणानां युधिष्ठिर ॥ भोजयित्वा रक्तवस्त्रैः शुक्लान्यपि पिधापयेत् ॥ २० ॥ द्वादशात्र प्रशंसंति गावो वस्त्रान्विताः शुभाः॥ छत्रोपानद्युग्मं च एकैकाय प्रदापयेत् ॥ एवं विसृज्य तान्विप्रान्स्वयं भुञ्जीत वाग्यतः ॥ २१ ॥ य एवं कुरुते पार्थ सप्तमीव्रतमुत्तमम् ॥ नीरुजो रूपवान्वाग्ग्मी दीर्घायुश्चैव जायते ॥ २२ ॥ सप्तम्यां सोपवासस्तु भानोः पश्यंति ये मुखम् ॥ सर्वपापविनिर्मुक्ताः सूर्यलोकमवाप्नुयुः ॥ २३ ॥ व्रतमेतन्महाराज सर्वाशुभविनाशनम् ॥ सर्वदुष्टप्रशमनं शरीरारोग्यकारकम् ॥ सूर्यलोकप्रदं चांते प्राहैवं नारदो मुनिः ॥ २४ ॥ ये सप्तमीमुपवसंति सितासितां च नामाक्षरैरहिमदीधितिमर्चयंति ॥ ते सर्वरोगरहिताः सुखिनः सदैव भूत्वा रवेरनुचराः सुचिरं भवंति ॥ २५ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे उभयसप्तमीव्रतवर्णनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ भगवन्दुर्गसंसारसागरोत्तारकारकम् ॥ किंचिद्व्रतं समाचक्ष्व स्वर्गारोग्यसुखप्रदम् ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ यदा तु शुक्लसप्तम्यामादित्यस्य दिनं भवेत् ॥ तदा सा तु महापुण्या विजया तु निगद्यते ॥२॥ प्रातर्गव्येन पयसा स्नानमस्यां समाचरेत् ॥ शुक्लांबरधरः पद्ममक्षतैः परिकल्पयेत् ॥३॥ प्राङ्मुखोऽष्टदलं मध्ये तद्वच्चित्रां च कर्णिकाम् ॥ सर्वेष्वपि दलेष्वेव विन्यसेत्पूर्वतः क्रमात् ॥४॥ पूर्वेण तपनायेति मार्तण्डायेति वै नमः ॥ याम्ये दिवाकरायेति विधात्रे नैर्ऋतेन च ॥५॥ पश्चिमे वरुणायेति भास्करायेति वानिले ॥ सौम्ये च वरुणायेति रवयेत्येऽष्टमे दले ॥६॥ आदावंते च तन्मध्ये नमोऽस्तु परमात्मने ॥ मंत्रैरेवं समभ्यर्च्य नमस्कारांतदीपितैः ॥७॥ शुक्लवस्त्रफलैर्भक्ष्यैर्धूपमाल्यानुलेपनैः ॥ स्थंडिले पूजयेद्भक्त्या गुडेन लवणेन च ॥८॥ ततो व्याहृतिहोमेन विभज्य द्विजपुङ्गवान् ॥ शक्तितस्तर्पयेद्भक्त्या गुडक्षीरघृतादिभिः ॥९॥ तिलपात्रं हिरण्यं च गुरवे च निवेदयेत् ॥ एवं नियमकृत्स्नात्वा प्रातरुत्थाय मानवः ॥१०॥ कृतस्नानजपो विप्रैः सहैव घृतपायसम् ॥ भुक्त्वा च वेदविद्भिर्बैडालव्रतवर्जितैः ॥ ११ ॥ एवं संवत्सरस्यांते कृत्वैतदखिलं नृप ॥ उद्यापयेद्यथाशक्ति भास्करं संस्मरन्हृदि ॥ १२ ॥ घृतपात्रं सकरकं सोदकुम्भं निवेदयेत् ॥ वस्त्रालंकारसंयुक्तां सुवर्णास्यां पयस्विनीम् ॥ १३ ॥ एकामपि प्रदद्याद्गां वित्तहीनो विमत्सरः ॥ वित्तशाठ्यं न कुर्वीत ततो मोहात्पतत्यधः ॥ १४ ॥ अनेन विधिना यस्तु कुर्यात्कल्याणसप्तमीम् ॥ शृणुयाद्वा पठेद्वापि सोऽपि पापैः प्रमुच्यते ॥ १५ ॥ यश्चाष्टपत्रकमलोदरक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्णिकायां संपूजयेत्कुसुमधूपविलेपनाद्यैः ॥ षष्ठ्याः परेह्नि नवार्तिहरं दिनेशं कल्याणभाजनमसौ भवते हि जंतुः ॥ १६ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कल्याणसप्तमीव्रतवर्णनं नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शर्करासप्तमीं वक्ष्ये सर्वकल्मषनाशिनीम् ॥ आयुरारोग्यमैश्वर्यं ययानंतं प्रजायते ॥ १ ॥ माधवस्य सिते पक्षे सप्तम्यां श्रद्धयान्वितः ॥ प्रातः स्नात्वा तिलैः शुद्धैः शुक्लमाल्यानुलेपनैः ॥ २ ॥ स्थंडिले पद्ममालिख्य कुंकुमेन सकर्णिकम् ॥ तस्मिन्नमः सवित्रेति गन्धपुष्पं निवेदयेत् ॥३॥ स्थापयेदुदकुंभं च शर्करापात्रसंयुतम् ॥ रक्तवस्त्रैः स्वलंकृत्य शुक्लमाल्यानुलेपनैः ॥ ४ ॥ सुवर्णाश्वसमायुक्तं मंत्रेणानेन पूजयेत् ॥ विश्वेदेवमयो यस्माद्वेदवादीति पंच्यते[1] ॥ ५ ॥ त्वमेवामृतसर्वस्वमतः पाहि सनातन ॥ सौरसूक्तं जपंस्तिष्ठेत्पुराणश्रवणेन वा ॥ ६ ॥ अहोरात्रे गते पश्चादष्टम्यां कृतनित्यकः ॥ सर्वं च वेदविदुषे ब्राह्मणयोपपादयेत् ॥७॥ भोजयेच्छक्तितो विप्रान्[2] शर्कराघृतपायसैः ॥ भुञ्जीत तैललवणं स्वयमप्यथ वाग्यतः ॥ ॥ ८ ॥ अनेन विधिना सर्वं मासिमासि समाचरेत् ॥ वत्सरांते पुनर्दद्याद्ब्राह्मणाय समाहितः ॥ ९ ॥ शयनं वस्त्रसंवीतं शर्कराकलशान्वितम् ॥ सर्वोपस्करसंयुक्तं तथैकां गां पयस्विनीम् ॥ १० ॥ गृहं च शक्तितो दद्यात्समस्तोपस्करान्वितम् ॥ सहस्रेणापि निष्काणां कृत्वा दद्याच्छतेन वा ॥ ११ ॥ दशभिर्द्वित्रिभिर्निष्कैस्तदर्धेनापि भक्तितः ॥ सुवर्णाश्वः प्रदातव्यः पूर्ववन्मंत्रवाचनम् ॥ १२ ॥ वित्तशाठ्यं न कुर्वीत कुर्वन्दोपान्स मश्नुते ॥ अमृतं पिबतो वक्रात्सूर्यस्यामृतबिन्दवः॥१३॥निपेतुरेत उत्थाय शालिमुद्गेक्षवः स्मृताः ॥ शर्करा च परं तस्मादिक्षुरसोद्भवा मता॥१४॥ इष्टा रवेरतः पुण्या शर्करा हव्यकव्ययोः ॥ शर्करासप्तमी चैषा वाजिमेधफलप्रदा ॥ १५ ॥ सर्वे ह्युपशमं यांति पुनः संततिवर्द्धिनी ॥ यः कुर्यात्परया भक्त्या स परं ब्रह्म गच्छति ॥ १६ ॥ कल्पमेकं वसेत्स्वर्गे ततो याति परं पदम् ॥ १७ ॥ इदमनघ शृणोति यः स्मरेद्वा परिपठतीह सुरेश्वरस्य लोके ॥ मतिमपि च ददाति यो जनानाममरवधूजनकिन्नरैः स पूज्यः ॥ १८ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे शर्करासप्तमीव्रतवर्णनं नामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अतःपरं प्रवक्ष्यामि तद्वत्कमलसप्तमीम् ॥ यस्याः संकीर्तनादेव तुष्यतीह दिवाकरः ॥ १ ॥ वसंतेऽमलसप्तम्यां स्नातः सन्गौरसर्षपैः ॥ तिलपात्रे च सौवर्णं निधाय कमलं शुभम् ॥ २ ॥ वस्त्रयुग्मवृतं कृत्वा गंधपुष्पैरथार्चयेत् ॥ नमस्ते पद्महस्ताय नमस्ते विश्वधारिणे ॥ ३ ॥ दिवाकर नमतुभ्यं प्रभाकर

१ मुच्यते—इ० पा० । २ विप्रा इति शेषः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नमोऽस्तु ते ॥ ततो द्विकालवेलायामुदकुंभसमन्वितम् ॥ ४ ॥ विप्राय दद्यात्संपूज्य वस्त्रमाल्यविभूषणैः ॥ अहोरात्रे गते पश्चादष्टम्यां भोजये द्विजान् ॥ ५ ॥ यथाशक्त्याथ भुञ्जीत विमांसं तैलवर्जितम् ॥ अनेन विधिना शुक्लसप्तम्यां मासिमासि च ॥ ६ ॥ सर्वं समाचरेद्भक्त्या वित्तशाठ्यविवर्जितः ॥ व्रतांते शयनं दद्यात्सुवर्णकमलान्वितम् ॥७॥ गावं स दद्याच्छक्त्या तु सुवर्णाढ्यां पयस्विनीम्॥भाजनासनदीपादीन्दद्यादिष्टानुपस्करान् ॥ ८ ॥ अनेन विधिना यस्तु कुर्यात्कमलसप्तमीम् ॥ लक्ष्मीमनन्तामभ्येत्य सूर्यलोके च मोदते ॥ ९ ॥ कल्पेकल्पे तथा लोकान्सप्त गत्वा पृथक्पृथक् ॥ अप्सरोभिः परिवृतस्ततो याति पराङ्गतिम् ॥ १० ॥ यः पश्यतीदं शृणुयान्मुहूर्तं पठेच्च भक्त्या सुमतिं ददाति ॥ सोऽप्यत्र लक्ष्मीमचलामवाप्य गन्धर्वविद्याधरलोकमेति ॥ ११ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कमलासप्तमीव्रतवर्णनं नाम पंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अन्यामपि प्रवक्ष्यामि शोभनां शुभसप्तमीम् ॥ यामुपोष्य नरो रोगाच्छोकदुःखात्प्रमुच्यते ॥ १ ॥ पुण्य आश्वयुजे मासि कृतस्नानः पयः शुचिः ॥ वाचयेत ततो विप्रानारभेच्छुभसप्तमीम् ॥ २ ॥ कपिलां पूजयेद्भक्त्या गन्धमाल्यानुलेपनैः ॥ नमामि सूर्यसंभूतामशेषभुवनालयाम् ॥ ३ ॥ त्वामहं शुभकल्याणशरीरां सर्वसिद्धये ॥ अथाहृत्य तिलप्रस्थं ताम्रपात्रेण संयुतम् ॥ ४ ॥ काञ्चनं वृषभं तद्वद्वस्त्रमाल्यगुडान्वितम् ॥ दद्याद्विकालवेलायामर्यमा प्रीयतामिति ॥ ५ ॥ पञ्चगव्यं च संप्राश्य स्वप्याद्भूमौ विमत्सरः ॥ ततः प्रभाते संजाते भक्त्या संतर्पयेद्द्विजान् ॥ ६ ॥ अनेन विधिना दद्यान्मासिमासि सदा नरः ॥ वाससी वृषभं हैमं तद्वद्धेनोस्तु पूजनम् ॥ ७ ॥ संवत्सरांते शयनमिक्षुदण्डगुडान्वितम् ॥ सोपधानकविश्रामं भाजनासनसंयुतम् ॥ ८ ॥ ताम्रपात्रं तिलप्रस्थं सौवर्णवृषसंयुतम् ॥ दद्याद्वेदविदे सर्वं विश्वात्मा प्रीयतामिति ॥ ९ ॥ अनेन विधिना राजन्कुर्याद्यः शुभसप्तमीम् ॥ तस्य श्रीर्विमला कीर्तिर्भवेज्जन्मनिजन्मनि ॥ १० ॥ अप्सरोगणगन्धर्वैः पूज्यमानः सुरालये ॥ वसेद्गणाधिपो भूत्वा यावदाभूतसंप्लवम् ॥ ११ ॥ स कल्पादवतीर्णस्तु सप्तद्वीपाधिपो भवेत् ॥ ब्रह्महत्यासहस्रस्य भ्रूणहत्याशतस्य च ॥ १२ ॥ नाशङ्करोति पुण्येयं कृता वै शुभसप्तमी ॥ १३ ॥ इमां पठेद्यः शृणुयान्मुहूर्तं वीक्षेत संगादपि दीयमानम् ॥ सोऽप्यत्र संबाध्य विमुक्तदेहः प्राप्नोति विद्याधरनायकत्वम् ॥ १४ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे शुभसप्तमीव्रतनिरूपणं नामैकपंचाशत्ततोऽध्यायः ॥ ५१ ॥ छ ॥ युधिष्ठिर उवाच ॥ ॥ किमुद्वेगाद्भवेत्कृत्यम

१ अर्थम।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्ष्मीः केन हन्यते ॥ मृतवत्सादिकार्येषु दुःस्वप्ने च किमिष्यते ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पुरा कृतानि पापानि फलंत्यत्र युधिष्ठिर॥ रोगदौर्गत्यरूपेण तथैवेष्टविघातनैः ॥ २ ॥ तद्विघाताय वक्ष्यामि सदा कल्याणसप्तमीम् ॥ सप्तमीस्नपनं नाम व्याधिपीडाविनाशनम् ॥ ३ ॥ बालानां मरणं यत्र क्षीरपानं प्रशस्यते ॥ तद्वद्वृद्धातुराणां च यौवने वापि वर्तताम् ॥४॥ शान्तये तत्र वक्ष्यामि मृतवत्सादिके च यत् ॥ एतदेवा द्भुतोद्वेगचिंताविभ्रममानसम् ॥५॥ वराहकल्पे संप्राप्ते मनोर्वैवस्वतेंऽतरे॥कृते युगे महाराज हैहयो रूपवर्द्धनः ॥६॥ आसीन्नृपोत्तमः पूर्वं कृतवीर्यः प्रतापवान् ॥ स सप्तद्वीपमखिलं पालयामास भूतलम् ॥७॥ यावद्वर्षसहस्राणि सप्तसप्तति भारत॥जातमात्रं च तस्याथ शुभं पुत्रशतं किल ॥८॥ यवनस्य तु शापेन विनाशमगमत्पुरा ॥ कृतवीर्यः समाराध्य सहस्रांशुं दिवाकरम् ॥९॥ उपवासव्रतैर्दिव्यैर्वेदसूक्तैश्च भारत॥ दर्शयामास चात्मानं कृतवीर्यस्य भानुमत् ॥१०॥ कृतवीर्येण वै पृष्टः प्रोवाचेदं बृहस्पतिः ॥ अतिक्लेशेन[1] महता पुत्रस्तव नराधिप ॥११॥ भविष्यति चिरंजीवी किं तु कल्मषनाशनम् ॥ सप्तमीस्नपनं वाप्यां कुरु पापविनष्टये ॥ १२ ॥ जातस्य मृतवत्सायाः सप्तमे मासि भूपते ॥ ग्रहताराबलं लब्ध्वा कृत्वा ब्राह्मण वाचनम् ॥१३॥ बालस्य जन्मनक्षत्रं वर्जयेत्तां तिथिं बुधः ॥ सद्वृद्धातुरगाणां तु कृतं स्यादितितेषु च ॥१४॥ गोमयेनोपलिप्तायां भूमावेकाग्रचितवान् ॥ तंडुलै रक्तशालेयैर्वरुणाक्षीरसंयुतम् ॥१५॥ निर्वपेत्सूर्यमुद्राभ्यां मातृभ्योपि विधानतः ॥ कीर्तयेत्सूर्यदैवत्यं सप्तार्चिषि घृताहुतीः ॥१६॥ जुहुयाद्रुद्रसूक्तेन तद्वद्रुद्राय भारत ॥ होतव्याः समिधश्चात्र तत्र वार्कपलाशजाः ॥१७॥ यवकृष्णतिलैर्होमः कर्तव्योष्टशतं पुनः ॥ हुत्वा स्नानं च कर्तव्यं मध्ये[2] गांगेन धीमता ॥ १८ ॥ विप्रेण वेदविदुषा विधिवद्दर्भपाणिना ॥ स्थापयित्वा चतुष्कोणे चतुष्कुंभान्प्रशोभनान् ॥ १९ ॥ पञ्चमं च पुनर्मध्ये चाक्षतेन विभूषितम् ॥ स्थापयेद्दर्पणाक्रांतं सप्तर्षिणाभिमंत्रितम् ॥ २० ॥ सौरेण तीर्थतोयेन पूर्णचन्द्रमलान्वितम्[3] ॥ सर्वान्सर्वौषधियुतान्पञ्चभंग[4]जलान्वितान् ॥ २१ ॥ पंचरत्नफलैर्युक्ताञ्छाखाभिरपि वेष्टितान् ॥ गजाश्वरथ्याराजद्वार्वल्मीकाद्ध्रदगोकुलात् ॥ २२ ॥ सुशुद्धांमृदमानीय सर्वेष्वेव विनिक्षिपेत् ॥ चतुर्ष्वपि च कुंभेषु रत्नगर्भेषु मध्यमम् ॥ २३ ॥ गृहीत्वा ब्राह्मणं चात्र सौरान्मन्त्रानुदीरयेत् ॥ नारीभिः सप्तसंख्याभी रथाङ्गाङ्गाभिरत्र च ॥ २४ ॥ भोजिताभिर्यथाशक्तिमाल्यवस्त्रविभूषणैः ॥ सविप्राभिश्च कर्तव्यं मृतवत्साभिषेचनम् ॥ २५ ॥ दीर्घायुरस्तु बालोऽयं जीवपुत्रा च भाविनी ॥ आदित्यचन्द्रमासार्धं ग्रहनक्षत्रमण्डलम् ॥ २६ ॥ शक्रः सलोकपालो वै ब्रह्मा विष्णुर्महेश्वरः ॥ एते

१ अतिक्रमेण–इ० पा० । २ दक्षिणम्–इ० पा० । ३ कर्पूरसंयुतमित्यर्थः । ४ पंचभङ्गाः पंचपल्लवाः–इत्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चान्ये च वै देवाः सदा पांतु कुमारकम् ॥ २७ ॥ माशनिर्मा स हुतभुङ्मा च बालग्रहा क्वचित् ॥ पीडां कुर्वंतु बालस्य मा मातृजनकस्य वै ॥ ॥ २८ ॥ ततः शुक्लाम्बरधराः कुमारं पतिसंयुताः ॥ सप्तकं पूजयेद्भक्त्या पुष्पैर्गन्धैः फलैः शुभैः ॥ २९ ॥ काञ्चनीं च ततः कृत्वा तिलपात्रोपरि स्थिताम् ॥ प्रतिमां धर्मराजस्य गुरवे विनिवेदयेत् ॥ ३० ॥ वस्त्रकाञ्चनरत्नौघैर्भक्ष्यैः सघृतपायसैः ॥ पूजयेद्ब्राह्मणांस्तद्वद्वित्तशाठ्यं विवर्जयेत् ॥ भुक्त्वा च गुरुणा चेयमुच्चार्या मंत्रसंततिः ॥ ३१ ॥ दीर्घायुरस्तु बालोऽयं यावद्वर्षशतं सुखी ॥ यत्किञ्चिदस्य दुरितं तत्क्षिप्तं वडवामुखे ॥ ३२ ॥ ब्रह्मा रुद्रो विष्णुः स्कन्दो वायुः शक्रो हुताशनः ॥ रक्षंतु सर्वे दुष्टेभ्यो वरदा यांतु सर्वदा ॥३३॥ एवमादीनि चान्यानि वदतः पूजयेद्गुरून् ॥ शक्तितः कपिलां दत्त्वा प्रणिपत्य विसर्जयेत् ॥३४॥ चरुं च पुत्रसहिता प्रणम्य रविशंकरौ ॥ हुतशेषं तदानीयादादित्याय नमोऽस्तु ते ॥ ३५ ॥ अयमेवाद्भुतं योगो ह्यद्भुतेषु च शस्यते ॥ कर्तुर्जन्मनि वृक्षाणां देवान्त्संपूजयेत्तदा ॥ शांत्यर्थं शुक्लसप्तम्यामेतत्कुर्वन्न सीदति ॥ ३६ ॥ पुण्यं पवित्रमायुष्यं सप्तमीस्नपनं रविः ॥ कथयित्वा नरश्रेष्ठ तत्रैवांतरधीयत ॥ ३७ ॥ स चानेन विधानेन कार्तवीर्योऽर्जुनो नृपः ॥ संवत्सराणामयुतं शशास पृथिवीमिमाम् ॥३८॥ आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ॥ शंकराज्ज्ञानमिच्छेत्तु गतिमिच्छेज्जनार्दनात् ॥ ॥ ३९ ॥ एतन्महापातकनाशनं स्यादप्यक्षयं वेदविदः पठंति ॥ शृणोति यश्चैनमनन्यचेतास्तस्यापि सिद्धिं मुनयो वदंति ॥ ४० ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे स्नपनसप्तमीव्रतवर्णनं नाम द्विपंचाशत्तमोऽध्यायः ॥५२॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ अध्रुवेण शरीरेण सुपक्केनापि किं फलम् ॥ माघस्नानविहीनेन यत्त्यक्तं यदुनन्दन ॥ १ ॥ प्रातःस्नानासमर्थानां शरीरं पश्य देहिनाम् ॥ किं तेन वद कर्तव्यं माघे संसारभीरुणा ॥ २ ॥ कायक्लेशसहा नार्यो न भवंति यदूत्तम ॥ सौकुमार्यं शरीरस्य अचलत्वात्तथैव च ॥ ३ ॥ कथं च ताः सुरूपाः स्युः सुभगाः सुप्रजास्तथा ॥ सुकृतस्येह पुण्यस्य सर्वमेतत्फलं यतः ॥ ४ ॥ अल्पायासेन सुमहद्येन पुण्यमवाप्यते ॥ स्त्रीभिर्माघे मम ब्रूहि स्नानं तत्त्वं रमाधव ॥५॥ ॥ श्रीकृष्ण उवाच ॥ ॥ श्रूयतां पांडवश्रेष्ठ रहस्यमृषिभाषितम् ॥ यन्मया कस्यचिन्नोक्तमचलासप्तमीव्रतम् ॥ ॥ ६ ॥ वेश्या चेन्दुमती नाम रूपौदार्यगुणान्विता ॥ आसीत्कुरुकुलश्रेष्ठ मगधस्य विलासिनी ॥ ७ ॥ तनुमध्या सुजघना पीनोन्नतपयोधरा ॥ सम्यग्विभक्तावयवा पूर्णचन्द्रनिभानना ॥ ८ ॥ सौंदर्यं सौकुमार्यं च तस्याः कामेन गीयते ॥ यस्याः संदर्शनादेव कामः कामातुरो भवेत् ॥९॥ मूर्तिः शशधरस्येव नयनानन्दकारिणी ॥ वशीकरणविद्येव सर्वलोकमनोहरा ॥ १० ॥ एकस्मिन्दिवसे प्रातः सुमुखस्थितया तया ॥ चिंतिता

१२१

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हृदये राजन्त्संसारस्यानवस्थितिः ॥ ११ ॥ सन्निमज्य जगदिदं विषये कायसागरे ॥ जन्ममृत्युजराग्राहं न कश्चिदवबुद्ध्यते ॥ १२ ॥ अपाको भूतभाण्डानां धातृशिल्पिविनिर्मितम् ॥ स्वकर्मैधनसंवीतं पच्यते बालवह्निना ॥ १३ ॥ ये यांति दिवसाः पुंसां धर्मकामार्थवर्जिताः ॥ न ते पुनरिहायांति हरभक्ता नरा यथा ॥ १४ ॥ स्नानं दानं तपो होमः स्वाध्यायः पितृतर्पणम् ॥ यस्मिन्दिने न क्रियते वृथा स दिवसो नृणाम् ॥ ॥ १५ ॥ पुत्राणां दारगृहकसमासक्तं हि मानसम् ॥ वृकीवोरणमासाद्य मृत्युर्द्दाराय गच्छति ॥ १६ ॥ इत्येवं चिंतयित्वा तु वेश्या चेन्दुमती ततः॥ वशिष्ठस्याश्रमं पुण्यं जगाम गजगामिनी ॥ १७ ॥ वशिष्ठमृषिमासीनं प्रणम्य विनयात्ततः ॥ कृताञ्जलिपुटा भूत्वा इदं वचनमब्रवीत् ॥ १८ ॥ ॥ इन्दुमत्युवाच ॥ दशसूनासमश्चक्री दशचक्रिसमो ध्वजः ॥ दशध्वजसमा वेश्या दशवेश्यासमो नृपः ॥१९॥ मया न दत्तं न हुतं नोपवासो व्रतं कृतम् ॥ भक्त्या न पूजितः शम्भुः श्रितो[1] नैको धनी नरः ॥ २० ॥ सांप्रतं वर्तमानाया व्रतं किंचिद्द्वदस्व मे ॥ येन दुःखांबुपापौघादुत्तरामि भवा र्णवात् ॥ २१ ॥ एतदस्याः सुबहुशः श्रुत्वा धर्मं परंतपः ॥ वशिष्ठः कथयामास महाकारुणिको मुनिः ॥ २२ ॥ ॥ वशिष्ठ उवाच ॥ ॥ माघस्य सितसप्तम्यां सर्वकामफलप्रदम् ॥ तपःसौभाग्यजननं स्नानं तव वरानने ॥२३॥ कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम् ॥ रात्र्यंते चालयेथास्त्वं दत्त्वा शिरसि दीपकम् ॥ २४ ॥ माघस्य सितसप्तम्यामचलं चालितं मया ॥ जलामलानां सर्वेषां कृतं न चलनं तथा ॥ २५ ॥ वशिष्ठवचनं श्रुत्वा तस्मिन्नहनि भूपते ॥ सर्वं चकारेन्दुमती स्नानं दानं यथाविधि ॥ २६ ॥ त्र्यंहस्नानप्रभावेण[2] भुक्त्वा भोग्यान्यथेप्सितान् ॥ इन्द्रलोकेप्सरःसंघे नायिकात्वमवाप सा ॥ २७ ॥ अचलासप्तमीस्नानं कथितं च विशांपते ॥ सर्वपापप्रशमनं सुखसौभाग्यवर्द्धनम् ॥ २८ ॥ ॥ युधिष्ठिर उवाच ॥ सप्तमीस्नानमाहात्म्यं श्रुतं न च विशेषतः ॥ सांप्रतं श्रोतुमिच्छामि विधिमंत्रसमन्वितम् ॥२९॥ ॥ श्रीकृष्ण उवाच ॥ ॥ एकभक्तेन संतिष्ठेत्पष्ठ्यां संपूज्य भास्करम् ॥ सप्तम्यां तु व्रजेत्प्रातः सुगंभीरं जलाशयम् ॥ ३० ॥ सरित्संगं तडागं च देवखातमथापि वा ॥ सुखा वगाहसलिलं दुष्टसत्त्वैरदूपितम् ॥ ३१॥ पशुभिः पक्षिभिश्चैव जलजैर्मत्स्यकच्छपैः ॥ न जलं चाल्यते यावत्तावत्स्नानं समाचरेत् ॥३२॥ नमस्ते रुद्ररूपाय रसानां पतये नमः ॥ वरुणाय नमस्तेऽस्तु हरिवास नमोऽस्तु ते ॥ ३३ ॥ यावज्जन्म कृतं पापं मया जन्मसु सप्तसु ॥ तन्मे रोगं च शोकं च माकरी हंतु सप्तमी ॥ ३४ ॥ जननी सर्वभूतानां सप्तमी सप्तसप्तिके ॥ सर्वव्याधिहरे देवि नमस्ते रविमंडले ॥ ३५ ॥ जलोपरितरं दीपं

[1] श्रितः आश्रित इत्यर्थः । [2] अहो स्नानप्रभावेण—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्नात्वा संतर्प्य देवताः ॥ चंदनेन लिखेत्पद्ममष्टपत्रं सकर्णिकम् ॥३६॥ मध्ये शर्वं सपत्नीकं प्रणवेन तु पूजयेत् ॥ भानुं शक्रे दले पूज्य रविं वैश्वानरे दले॥३७॥ याम्ये विवस्वान्नैर्ऋत्ये भास्करस्येति पूजयेत् ॥ पश्चिमे सविता पूज्यः पूज्योर्को वायुना जले ॥३८॥ सौम्ये सहस्रकिरणः शेषे सर्वात्मनेति च ॥ पूज्याः प्रणवपूर्वास्तु नमस्कारांतयोजिताः ॥३९॥ पुष्पैः सुगन्धधूपैश्च वस्त्रेणाच्छाद्य भास्करम् ॥ विसर्जयेत्ततः पश्चात्स्वस्थानं गम्यतामिति ॥ ४० ॥ ताम्रपात्रे सुविस्तीर्णे मृन्मये वा युधिष्ठिर ॥ स्थापयेत्तिलचूर्णं च सघृतं सगुडं तथा ॥ ४१ ॥ काञ्चनं तालकं कृत्वा ह्यसिक्तस्तिलचूर्णकम् ॥ संस्थाप्य रक्तवस्त्रैस्तु पुष्पैर्धूपैस्तथार्चयेत् ॥ ४२ ॥ ततस्तं ब्राह्मणे दद्याद्दत्त्वा मंत्रेण तालकम् ॥ आदित्यस्य प्रसादेन प्रातःस्नानफलं भजेत् ॥ ४३ ॥ दुष्टदौर्भाग्यदुःखेभ्यो मया दत्तं तु तालकम् ॥ ततस्तत्तालकं कृत्वा ब्राह्मणायोपपादयेत् ॥ ४४ ॥ सपुत्रपशुभृत्याय मेऽर्कोयं प्रीयतामिति ॥ ततो व्रतोपदेष्टारं पूजयेद्वस्त्रगोतिलैः ॥ ४५ ॥ विप्रानन्यान्यथाशक्त्या पूजयित्वा गृहं व्रजेत् ॥ एतत्ते कथितं कार्यं रूपसौभाग्यकारकम् ॥ ४६ ॥ अचलासप्तमीस्नानं सर्वकामफलप्रदम् ॥ ४७ ॥ इति पठति य इत्थं यः शृणोति प्रसंगात्कलिकलुषहरं वै सप्तमीस्नानमेतत् ॥ मतिमपि नयनानां यो ददाति प्रसंगात्सुरभवनगतोऽसौ पूज्यते देवसंघैः ॥ ४८ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादेऽचलासप्तमीव्रतविधिवर्णनं नाम त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ बुधाष्टमीव्रतं भूयो ब्रवीमि शृणु पांडव ॥ येन चीर्णेन नरकं नरः पश्यति न क्वचित् ॥ १ ॥ पुरा कृतयुगस्यादौ इलो राजा बभूव ह ॥ बहुभृत्यसुहृन्मित्रमंत्रिभिः परिवारितः ॥ २ ॥ जगाम हिमवत्पार्श्वं महादेवेन वारितः ॥ योऽन्यः प्रविशते भूमौ सा स्त्री भवति निश्चितम् ॥ ३ ॥ स राजा मृगसंगेन प्राविशत्तदुमावने ॥ एकाकी तुरगोपेतः क्षणात्स्त्रीत्वं जगाम ह ॥ ४ ॥ सा बभ्राम वने शून्ये पीनोन्नतपयोधरा ॥ कुतोऽहमागतेत्येवं न त्वबुध्यत किंचन ॥ ५ ॥ तां ददर्श बुधः सौम्यां रूपौदार्यगुणान्विताम् ॥ अष्टम्यां बुधवारेण तस्यास्तुष्टो बुधो ग्रहः ॥ ६ ॥ दधौ गर्भं तदुदरे इलाया रूपतोपितः ॥ पुत्रमुत्पादयामास योऽसौ ख्यातः पुरूरवाः ॥ ७ ॥ चंद्रवंशकरो राजा आद्यः सर्वमहीक्षिताम् ॥ ततः प्रभृति पूज्येयमष्टमी बुधसंयुता ॥ ८ ॥ सर्वपापप्रशमनी सर्वोपद्रवनाशिनी ॥ अथान्यदपि ते वच्मि धर्मराज कथानकम् ॥ ९ ॥ आसीद्राजा विदेहानां मिथिलायां स वैरिभिः ॥ संग्रामे निहतो वीरस्तस्य भार्या दरिद्रिणी ॥ १० ॥ ऊर्मिला नाम बभ्राम महीं बालकसंयुता ॥ अवंतीविषयं प्राप्ता ब्राह्मणस्य निवेशने ॥ ११ ॥ चकारोदरपूर्त्यर्थं नित्यं कंडनपेषणे ॥ हृत्वा सा स्तोकगोधूमान्ददौ बालकयोस्तदा ॥ १२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारुण्यान्मातृवात्सल्यात्क्षुधासंपीडयमानयोः ॥ कालेन बहुना साध्वी पञ्चत्वमगमच्छुभा ॥१३॥ पुत्रस्तस्या विदेहायां गत्वा स्वपितुरासने ॥ उपविष्टः सत्त्वयोगाद्बुभुजे गामनाकुलः ॥ १४ ॥ अन्विष्य धर्मराज्ञो वै सा कन्या मिथिवंशजा ॥ विवाहिता हिता भर्तुः सा महानायिकाऽभवत् ॥ १५ ॥ श्यामला नाम चार्वंगी प्रसिद्धा श्रूयते श्रुतौ ॥ तामुवाच वरारोहां धर्मराजः स्वयं प्रियाम् ॥ १६ ॥ वहस्व सर्वव्यापारं श्यामले त्वं गृहे मम ॥ कुरु स्वजनभृत्यानां दानक्षेपं यथेप्सितम् ॥ १७ ॥ किं त्वेते पंजराः सप्त कीलकैरतियंत्रिताः ॥ कदाचिदपि नोद्घाट्यास्त्वया वैदेहनंदिनि ॥ १८ ॥ एवमस्त्विति साप्युक्त्वा निजं कर्म चकार ह ॥ कदाचिद्व्याकुलीभूते धर्मराजे विदेहजा ॥ उद्घाटयित्वा प्रथमं ददर्श जननीं स्वकाम् ॥ १९ ॥ सा पच्यमाना क्रंदंती भीषणैर्यमकिंकरैः ॥ हेलया क्षिप्यते बद्ध्वा तप्ततैले पुनःपुनः ॥ २० ॥ तथैव तालकं दत्त्वा व्रीडिता सा मनस्विनी ॥ द्वितीये पंजरे तद्वत्सा तामेवं ददर्श ह ॥ २१ ॥ सुधावल्लिप्यमानां तां शिलातलपेष्टकेन तु ॥ तृतीयपञ्जरे तद्वत्तां ददर्श स्वमातरम् ॥ क्रकचैः पाट्यते मूर्ध्नि घण्टायुक्तैः करोल्बणैः ॥ २२ ॥ चतुर्थे पञ्जरे स्थाने भीषणैर्दारुणाननैः ॥ भक्ष्यमाणां श्वापदैश्च क्रंदंतीं तां पुनःपुनः ॥ २३ ॥ पञ्चमे निहिता भूमौ कण्ठे पादेन पीडिता ॥ संदंशैर्घनघातैश्च विदीर्णा क्रियते रुषा ॥ २४ ॥ षष्ठे चेक्षुयन्त्रगतां मस्तके मुद्गराहताम् ॥ संपीडयमानामनिशं सुदृढामिक्षुखंडवत् ॥ २५ ॥ सप्तमे पञ्जरे चीर्णस्वनां पूतिकगंधिनीम् ॥ दृष्ट्वा तथा गतां तां तु मातरं दुःखकर्षिता ॥ श्यामला म्लानवदना किंचिन्नोवाच भामिनी ॥ २६ ॥ अथागतं यमं प्राह सरोषा श्यामला पतिम् ॥ किं तवापहृतं राजन्मम मात्रा सुदारुणम् ॥ येनेयं विविधैर्घातैर्बध्यते बहुधा त्वया ॥ २७ ॥ यमः प्राह प्रियां दृष्ट्वा भद्रे ह्युद्घाटितास्त्वया ॥ एते पञ्जरकाः सप्त निषिद्धा त्वं मया पुरा ॥ २८ ॥ तव मात्रा सुतस्नेहाद्गोधूमा ये हृताः किल ॥ किं न जानासि तद्भद्रे येन रुष्टा ममोपरि ॥ २९ ॥ ब्रह्मस्वं प्रणयाद्भुक्तं दहत्यासप्तमं कुलम् ॥ तदेव चौर्यरूपेण दहत्याचंद्रतारकम् ॥ ३० ॥ गोधूमास्त इमे भूताः कृमिरूपाः सुदारुणाः ॥ ये पुरा ब्राह्मणगृहे हृतास्तव कृतेऽनया ॥३१॥ ॥ श्यामलोवाच ॥ ॥ जानामि तदहं सर्वं यन्मे मात्रा कृतं पुरा ॥ तथापि त्वां समासाद्य सा च जामातरं शुभम् ॥ मुच्यते कृमिराशित्वाद्यथा तदधुना कुरु ॥ ३२ ॥ तच्छ्रुत्वा चिन्तयाविष्टश्चिरं स्थित्वा जगाद ताम् ॥ धर्मराजः सहासीनां प्रियां प्राणधनेश्वरीम् ॥ ३३ ॥ इतश्च सप्तमेऽतीते जन्मनि ब्राह्मणी शुभा ॥ आसीस्तस्मिंस्त्वया संगात्सखीनां पर्युपासिता ॥ बुधाष्टमी सुसंपूर्णा यथोक्तफलदायिनी ॥ ३४ ॥ तत्फलं यद्ददास्यस्यै सत्यं कृत्वा ममाग्रतः ॥ तेन मुच्येत ते माता नरकात्पापसंकटात् ॥ ३५ ॥ तच्छ्रुत्वा त्वरितं स्नात्वा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ददौ पुण्यं स्वकं कृतम् ॥ स्वमातुः श्यामला तुष्टा तेन मोक्षं जगाम सा ॥ ३५ ॥ ऊर्मिला रूपसंपन्ना दिव्यदेहधरा शुभा ॥ विमानवरमारूढा दिव्यमाल्यांबरावृता ॥ ३६ ॥ भर्तुः समीपे स्वर्गस्था दृश्यतेऽद्यापि सा जनैः ॥ बुधस्य पार्श्वे नभसि मिथिराजसमीपतः ॥ विस्फुरंती महा राजबुधाष्टम्याः प्रभावतः ॥ ३७ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ यद्येवं प्रवरा कृष्ण सा तिथिर्वै बुधाष्टमी ॥ तस्या एव विधिं ब्रूहि यदि तुष्टोसि मेप्रभो ॥ ३८ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु पांडव यत्नेन बुधाष्टम्या विधिं शुभम् ॥ यदायदा सिताष्टम्यां बुधवारो भवेद्यदि ॥ तदातदा च सा ग्राह्या एकभक्ताशनैर्नृभिः ॥ ३९ ॥ स्नात्वा नद्यां तु पूर्वाह्णे गृहीत्वा कलशं नवम् ॥ जलपूर्णं तु सद्रव्यं पूर्णपात्रसमन्वितम् ॥ ४० ॥ अष्ट वारान्प्रकर्तव्या विधानैस्तु पृथक्पृथक् ॥ प्रथमा मोदकैः कार्या द्वितीया फेणकैस्तथा ॥ ४१ ॥ तृतीया घृतपूपैश्च चतुर्थी वटकैर्नृप ॥ पञ्चमी शुभ्रकारैश्च षष्ठी सोहालकैस्तथा ॥४२॥ अशोकवर्तिभिः शुभ्रैः सप्तमी खंडसंयुतैः॥ अष्टमी फलपुष्पैश्च केवलाखण्डफेणिकैः ॥ एवं क्रमेण कर्तव्या सुहृत्स्वजनबांधवैः ॥४३॥ सह कृत्वा स्थितैर्भोज्यं भोक्तव्यं स्वस्थमानसैः ॥ उपोष्याणामिदं श्रेष्ठं कथयद्भिः शनैःशनैः ॥४४॥ श्रुत्वाष्टमीबुध स्यापि माहात्म्यं भोजनं त्यजेत् ॥ तावदेव न भोक्तव्यं कथा यावत्समाप्यते ॥ ४५ ॥ तथा भुक्त्वा बुधस्याग्रे आचम्य च पुनःपुनः ॥ विप्राय वेदविदुषे तं ब्रुवन्प्रतिपादयेत् ॥ ४६ ॥ साक्षतं सहिरण्यं च जातरूपमयं शुभम् ॥ अर्चितं विविधैः पुष्पैर्धूपदीपैः सुगंधिभिः ॥४७॥ पीतवस्त्रैः समाच्छन्नं बुधं सोमात्मजाकृतिम् ॥ माषकेण सुवर्णेन तदर्धार्धेन वा पुनः ॥४८॥ ॐ बुधाय नमः ॥ ॐ सोमात्मजाय नमः ॥ ॐ दुर्बुद्धिनाश नाय नमः ॥ ॐ सुबुद्धिप्रदाय नमः ॥ ॐ ताराजाताय नमः ॥ ॐ सौम्यग्रहाय नमः ॥ ॐ सर्वसौख्यप्रदाय नमः ॥ एतेपूजामन्त्राः ॥ अष्टमी तु यदा पूर्णा तदा राजर्षिसत्तम ॥ ब्राह्मणान्भोजयेदष्टौ गां दद्याच्च सवत्सिकाम् ॥४९॥ वस्त्रालंकरणैः सर्वैर्भूषणैर्विविधैरपि ॥ सपत्नीकं समभ्यर्च्य कर्णमात्रांगुलीयकैः ॥ मन्त्रेणानेन कौंतेय दद्यादेवं समाचरन् ॥ ५० ॥ बुधोऽयं प्रतिगृह्णातु द्रव्यस्थोऽयं बुधः स्वयम् ॥ दीयते बुधराजाय तुष्यतां च बुधो मम ॥ ५१ ॥ ॥ ( इति दानमंत्रः । ) ॥ ॥ बुधः सौम्यस्तारकेयो राजपुत्र इलापतिः ॥ कुमारो द्विजरा जस्य यः पुरूरवसः पिता ॥ ५२ ॥ ॥ ( इति प्रतिग्रहणमंत्रः । ) ॥ ॥ दुर्बुद्धिबाधजनितं नाशयित्वा च मे बुधः ॥ सौख्यं च सौमनस्यं च करोतु शशिनंदनः ॥ ५३ ॥ इत्युच्चार्य गृहीत्वा तु दद्यान्मंत्रपुरःसरम् ॥ सप्तजन्मनि राजेन्द्र जातो जातिस्मरो भवेत् ॥५४॥ धनधान्यसमायुक्तः पुत्रपौत्रप्रवर्द्धनः ॥ दीर्घायुर्विपुलान्भोगान्भुक्त्वा चैव महीतले ॥ ५५ ॥ ततः सुतीर्थे मरणं ध्यात्वा नारायणं विभुम् ॥ मृतोऽसौ स्वर्गमाप्नोति



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरन्दरसमो नरः ॥ ५६ ॥ वसते यावदाभूतसंप्लवम् ॥ एवमेतन्मया ख्यातं व्रतानामुत्तमं व्रतम् ॥ ५७ ॥ एषैवं च मयाख्याता गुह्या पार्थ बुधाष्टमी ॥ यां श्रुत्वा ब्रह्महा गोघ्नः सर्वपापैः प्रमुच्यते ॥ ५८ ॥ यश्चाष्टमीं बुधयुतां समवाप्य भक्त्या सम्पूजयेद्विधुसुतं कनपृष्टसंस्थम् ॥ पक्वान्नपात्रसहितैः सहिरण्यवस्त्रैः पश्येदसौ यमपुरं न कदाचिदेव ॥ ५९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे बुधाष्टमीव्रतवर्णनं नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ जन्माष्टमीव्रतं ब्रूहि विस्तरेण ममाच्युत ॥ कस्मिन्काले समुत्पन्नं किं पुण्यं को विधिः स्मृतः ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ हते कंसासुरे दुष्टे मथुरायां युधिष्ठिर ॥ देवकी मां परिष्वज्य कृत्वोत्संगे रुरोद ह ॥ २ ॥ तत्रैव रंगवाढेन मंचारूढजनोत्सवे ॥ मल्लयुद्धे पुरावृत्ते समेते कुकुराऽन्धके ॥ ३ ॥ स्वजनैर्बंधुभिः स्निग्धैः समं स्त्रीभिः समावृते ॥ वसुदेवोऽपि तत्रैव वात्सल्यात्प्ररुरोद ह ॥ ४ ॥ समाकृष्य परिष्वज्य पुत्रपुत्रेत्युवाच ह ॥ सगद्गदस्वरो दीनो बाष्पपर्याकुलेक्षणः ॥ ५ ॥ बलभद्रं च मां चैव परिष्वज्य मुदा पुनः ॥ अद्य मे सफलं जन्म जीवितं यत्सुजीवितम् ॥ ६ ॥ यद्युभाभ्यां सुपुत्राभ्यां समुद्भूतः समागमः ॥ एवं वर्षेण दांपत्ये हृष्टं पुष्टं तथा ह्यभूत् ॥ ७ ॥ प्रणिपत्य जनाः सर्वे बभूवुस्ते प्रहर्षिताः ॥ एवं महोत्सवं दृष्ट्वा मामाह सकलो जनः ॥ ८ ॥ प्रसादः क्रियतां नाथ लोकस्यास्य प्रसादतः ॥ यस्मिन्दिने जगन्नाथ देवकी त्वामजीजनत् ॥ ९ ॥ तद्दिने देहि वैकुंठं कुर्मस्तेत्र नमोनमः ॥ सम्यग्भक्तिप्रपन्नानां प्रसादं कुरु केशव ॥ १० ॥ एवमुक्ते जनौघेन वसुदेवोऽतिविस्मितः ॥ विलोक्य बलभद्रं च मां च कृत्वा रुरोद ह ॥ एवमस्त्विति लोकानां कथयस्व यथा तथा ॥११॥ ततश्च पितुरादेशात्तथा जन्माष्टमीव्रतम् ॥ मथुरायां जनौघाग्रे पार्थ सम्यक्प्रकाशितम् ॥ १२ ॥ पौरजना जन्मदिनं वर्षेवर्षे ममोदितम् ॥ पुनर्जन्माष्टमीं लोके कुर्वंतु ब्राह्मणादयः ॥ क्षत्रिया वैश्यजातीयाः शूद्रा येन्येऽपि धार्मिकाः ॥ १३ ॥ सिंहराशिगते सूर्ये गगने जलदाकुले ॥ मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्धरात्रके ॥ वृषराशिस्थिते चन्द्रे नक्षत्रे रोहिणीयुते ॥ १४ ॥ वसुदेवेन देवक्यामहं जातो जनाः स्वयम् ॥ एवमेतत्समाख्यातं लोके जन्माष्टमीव्रतम् ॥ १५ ॥ भगवत्पार्श्वतो राजन्बहुरूपं महोत्सवम् ॥ मथुरायास्ततः पश्चाल्लोके ख्यातिं गमिष्यति ॥ शांतिरस्तु सुखं चास्तु लोकाः सन्तु निरामयाः ॥ १६ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ तत्कीदृशं व्रतं देव लोकैः सर्वैरनुष्ठितम् ॥ जन्माष्टमीव्रतं नाम पवित्रं पुरुषोत्तम ॥ १७ ॥ येन त्वं तुष्टिमायासि लोकानां प्रभुरव्ययः ॥ एतन्मे भगवन्ब्रूहि प्रसादान्मधुसूदन ॥ १८ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पार्थ तद्दिवसे प्राप्ते दंतधावनपूर्वकम् ॥ उपवासस्य नियमं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गृह्णीयाद्भक्तिभावितः ॥ १९ ॥ एकेनैवोपवासेन कृतेन कुरुनंदन ॥ सर्वजन्मकृतैः पापैर्मुच्यते नात्र संशयः ॥ २० ॥ उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ॥ उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥ २१ ॥ ततः स्नात्वा च मध्याह्ने नद्यादौ विमले जले ॥ देव्याः सुशोभनं कुर्याद्देवक्याः सूतिकागृहम् ॥ २२ ॥ पद्मरागैः पत्रनेत्रैर्मंडितं चर्चितं शुभैः ॥ रम्यं तु वनमालाभी रक्षामणिविभूषितम् ॥ २३ ॥ सर्वं गोकुल वत्कार्यं गोपीजनसमाकुलम् ॥ घण्टामर्दलसङ्गीतमाङ्गल्यकलशान्वितम् ॥ २४ ॥ यवार्धं स्वस्तिका कुडचैः शंखवादित्रसंकुलम् ॥ बद्धासुरा लोहखङ्गैः प्रियच्छागसमन्वितम् ॥ २५ ॥ धान्ये विन्यस्य मुसलं रक्षितं रक्षपालकैः ॥ षष्ठ्या देव्या च संपूर्णैर्नैवेद्यैर्विविधैः कृतैः ॥ २६ ॥ एवमादि यथाशेपं कर्तव्यं सूतिकागृहम् ॥ एतन्मध्ये प्रतिष्ठाप्या सा चाप्यष्टविधा स्मृता ॥ २७ ॥ कांचनी राजती ताम्री पैत्तली मृन्मयी तथा ॥ दार्वी मणिमयी चैव कर्णिका लिखिताथ वा ॥ २८ ॥ सर्वलक्षणसम्पन्ना पर्यंकेचार्द्धसुप्तिका ॥ प्रतप्तकांचनाभासा मया सह तपस्विनी ॥ २९ ॥ प्रस्तुता च प्रसूता च तत्क्षणाच्च प्रहर्षिता ॥ मां चापि बालकं सुप्तं पर्यंके स्तनपायिनम् ॥ ३० ॥ श्रीवत्सवक्षसं पूर्णं नीलोत्पलदल च्छविम् ॥ यशोदा चापि तत्रैव प्रसूता वरकन्यकाम् ॥ ३१ ॥ तत्र देवगृहं नागा यक्षविद्याधरा नराः ॥ प्रणताः पुष्पमालाग्रव्यग्रहस्ताः सुरासुराः ॥ ३२ ॥ संचरंत इवाकाशे प्राकारैरुदितोदितैः ॥ वसुदेवोऽपि तत्रैव खड्गचर्मधरः स्थितः ॥ ३३ ॥ कश्यपो वसुदेवोयमदिति श्चापि देवकी ॥ बलभद्रः शेषनागो यशोदादित्यजायत ॥ ३४ ॥ नन्दः प्रजापतिर्दक्षो गर्गश्चापि चतुर्मुखः ॥ एषोवतारो राजेन्द्र कंसोऽयं कालनेमिजः ॥ ३५ ॥ तत्र कंसनियुक्ता ये दानवा विविधायुधाः ॥ ते च प्राहारिकाः सर्वे सुप्ता निद्राविमोहिताः ॥ ३६ ॥ गोधेनुकुञ्जराश्वा स्य दानवाः शस्त्रपाणयः ॥ नृत्यंत्यप्सरसो हृष्टा गंधर्वा गीततत्पराः ॥ ३७ ॥ लेखनीयश्च तत्रैव कालियो यमुनाह्रदे ॥ रम्यमेवं विधिं कृत्वा देवकीं नवसूतिकाम् ॥ ३८ ॥ तां पार्थ पूजयेद्भक्त्या गन्धपुष्पाक्षतैः फलैः ॥ कूष्माण्डैर्नालिकेरैश्च खर्जूरैर्दाडिमीफलैः ॥ ३९ ॥ बीजपूरैः पूग फलैर्लकुचैस्त्रपुसैस्तथा ॥ कालदेशोद्भवैर्मृष्टैः पुष्पैश्चापि युधिष्ठिर ॥ ४० ॥ ध्यात्वावतारं प्रागुक्तं मंत्रेणानेन पूजयेत् ॥ ४१ ॥ गायद्भिः किन्नराद्यैः सततपरिवृता वेणुवीणानिनादैर्भृङ्गारादर्शकुम्भप्रमरकृतकरैः सेव्यमाना मुनीन्द्रैः ॥ पर्यंके स्वास्तृते या मुदिततरमनाः पुत्रिणी सम्यगास्ते सा देवी देवमाता जयति सुवदना देवकी कांतरूपा ॥ ४२ ॥ पादावभ्यंजयंती श्रीर्देवक्याश्चरणांतिके ॥ निषण्णा पङ्कजे पूज्या नमो देव्यै च

१ पाद्यार्घ्यः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मंत्रतः ॥४३॥ ॐ देवक्यै नमः ॥ ॐ वसुदेवाय नमः ॥ ॐ बलभद्राय नमः ॥ ॐ श्रीकृष्णाय नमः ॥ ॐ सुभद्रायै नमः ॥ ॐ नन्दाय नमः॥ ॐ यशोदायै नमः ॥ ॥ एवमादीनि नामानि समुच्चार्य पृथक्पृथक् ॥ पूजयेयुर्द्विजाः सर्वे स्त्रीशूद्राणाममंत्रकम् ॥ ४४॥ विध्यंतरमपीच्छंति केचिदत्र द्विजोत्तमाः ॥ चन्द्रोदये शशाङ्काय अर्घ्यं दद्याद्धरिं स्मरेत् ॥ ४५ ॥ अनघं वामनं शौरिं वैकुंठं पुरुषोत्तमम् ॥ वासुदेवं हृषीकेशं माधवं मधुसूदनम् ॥ ४६ ॥ वाराहं पुण्डरीकाक्षं नृसिंहं ब्राह्मणप्रियम् ॥ दामोदरं पद्मनाभं केशवं गरुडध्वजम् ॥ ४७ ॥ गोविन्दमच्युतं कृष्ण मनंतमपराजितम् ॥ अधोक्षजं जगद्बीजं सर्गस्थित्यंतकारणम् ॥ ४८ ॥ अनादिनिधनं विष्णुं त्रैलोक्येशं त्रिविक्रमम् ॥ नारायणं चतुर्बाहुं शंख चक्रगदाधरम् ॥ ४९ ॥ पीतांबरधरं नित्यं वनमालाविभूषितम् ॥ श्रीवत्साङ्कं जगत्सेतुं श्रीधरं श्रीपतिं हरिम् ॥ ५० ॥ योगेश्वराय योगेशभवाय योगपतये गोविन्दाय नमोनमः ॥ ( इति स्नान मंत्रः ॥ ) यज्ञेश्वराय यज्ञसंभवाय यज्ञपतये गोविन्दाय नमोनमः ॥ ५१ ॥ इत्यनुलेपनार्घ्यार्च नधूपमंत्रः ॥ विश्वाय विश्वेश्वराय विश्वसंभवाय विश्वपतये गोविन्दाय नमोनमः ॥ ५२ ॥ ( इति नैवेद्यमंत्रः ॥ ) धर्मेश्वराय धर्मपतये धर्मसंभ वाय गोविन्दाय नमोनमः ॥ ५३ ॥ ( इति दीपासनमंत्रः ॥ ) क्षीरोदार्णवसंभूत अत्रिनेत्रसमुद्भव ॥ गृहाणार्घ्यं शशांकेन्दो रोहिण्या सहितो मम ॥ ५४ ॥ स्थंडिले स्थापयेद्देवं सचन्द्रां रोहिणीं तथा ॥ देवकीं वसुदेवं च यशोदां नन्दमेव च ॥ ५५ ॥ बलदेवं तथा पूज्य सर्वपापैः प्रमुच्यते ॥ अर्द्धरात्रे वसोर्द्धारां पातयेद्गुडसर्पिषा ॥५६॥ ततो वर्द्धापनं षष्ठीनामादिकरणं मम ॥ कर्तव्यं तत्क्षणाद्रात्रौ प्रभाते नवमीदिने ॥५७॥ यथा मम तथा कार्यो भगवत्या महोत्सवः ॥ ब्राह्मणान्भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥ ५८ ॥ हिरण्यं काञ्चनं गावो वासांसि कुसु मानि च ॥ यद्यदिष्टतमं तत्तत्कृष्णो मे प्रीयतामिति ॥ ५९ ॥ यमेवं देवकी देवी वसुदेवादजीजनत् ॥ भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः ॥ ६० ॥ सुजन्मवासुदेवाय गोब्राह्मणहिताय च ॥ शान्तिरस्तु शिवं चास्तु इत्युक्त्वा तु विसर्जयेत् ॥ ६१ ॥ एवं यः कुरुते देव्या देवक्याः सुमहोत्सवम् ॥ वर्षेवर्षे भगवतो मद्भक्तो धर्मनन्दन ॥ ६२ ॥ नरो वा यदि वा नारी यथोक्तफलमाप्नुयात् ॥ ६३ ॥ पुत्रसंतानमारोग्यं धनधान्यादिसद्गृहम् ॥ शालीक्षुयवसंपूर्णमण्डलं सुमनोहरम् ॥ ६४ ॥ तस्मिन्राष्ट्रे प्रभुर्भुंक्ते दीर्घायुर्मनसेप्सितान् ॥ परचक्रभयं नास्ति तस्मि न्राज्येऽपि पाण्डव ॥ ६५ ॥ पर्जन्यः कामवर्षी स्यादीतिभ्यो न भयं भवेत् ॥ यस्मिन्गृहे पांडुपुत्र क्रियते देवकीव्रतम् ॥ ६६ ॥ न तत्र मृत निष्क्रांतिर्न गर्भपतनं तथा ॥ न च व्याधिभयं तत्र भवेदिति मतिर्मम ॥ ६७ ॥ न वैद्यजनसंयोगो न चापि कलहो गृहे ॥ संपर्केणापि यः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कश्चित्कुर्याज्जन्माष्टमीव्रतम् ॥ विष्णुलोकमवाप्नोति सोऽपि पार्थ न संशयः ॥ ६८ ॥ जन्माष्टमी जनमनोनयनाभिरामा पापापहा सपदि नंदितनंदगोपा ॥ यो देवकीं सदयितां यजती ह तस्यां पुत्रानवाप्य समुपैति पदं स विष्णोः ॥ ६९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे जन्माष्टमीव्रतवर्णनं नाम पंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शुक्ले भाद्रपदस्यैव पक्षेऽष्टम्यां युधिष्ठिर ॥ दूर्वाष्टमीव्रतं पुण्यं यः कुर्याच्छ्रद्धयान्वितः ॥ १ ॥ न तस्य क्षयमाप्नोति संतानं सप्तपौरुषम् ॥ नंदते वर्द्धते नित्यं यथा पूर्वं तथा कुलम् ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कुत एषा समुत्पन्ना दूर्वा कस्माच्चिरायुषा ॥ कस्माच्च सा पवित्रा च लोकनाथ ब्रवीहि मे ॥ ३ ॥ ॥ श्रीकृष्ण उवाच ॥ क्षीरोदसागरे पूर्वं मथ्यमानेऽमृतार्थिना ॥ विष्णुना बाहुजंघाभ्यां यद्धृतो मन्दरो गिरिः ॥ ४ ॥ भ्रमितो वै स वेगेन रोमाण्युद्धर्पितानि वै ॥ तान्येतानि जलोर्मीभिरुत्क्षिप्तानि तदर्णवात् ॥ ५ ॥ अजायत शुभा दूर्वा रम्या हरितशाद्वला ॥ एवमेषा समुत्पन्ना दूर्वा विष्णुतनूरुहा ॥ ६ ॥ तस्याश्चोपरि विन्यस्तं मथितामृतमुत्तमम् ॥ देवदानवगन्धर्वैर्यक्षविद्याधरैस्तथा ॥ ७ ॥ तत्राप्यमृतकुंभस्य पेतुर्निष्यंदबिंदवः ॥ तैरियं स्पृष्टमात्राभूद्दूर्वा रस्याऽजराऽमरा ॥ ८ ॥ वंद्या पवित्रा देवैस्तु वंदिताभ्यर्चिता पुरा ॥ अष्टम्यां फलपुष्पैस्तु खर्जूरैर्नालिकेरकैः ॥ ९ ॥ द्राक्षाक्षोटकपित्थैश्च बर्बरैर्लकुचैस्तथा ॥ नारिंगैर्जंबुकैराम्रैर्बीजपूरैश्च दाडिमैः ॥ १० ॥ दध्यक्षतैः सुपुष्पैश्च धूपनैवेद्यदीपकैः ॥ मंत्रेणानेन राजेन्द्र शृणुष्वावहितेन च ॥ ११ ॥ त्वं दूर्वेऽमृतजन्मासि वंदिता च सुरासुरैः ॥ सौभाग्यं संततिं कृत्वा सर्वकार्यंकरी भव ॥ १२ ॥ यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले ॥ तथा ममापि संतानं देहि त्वमजरामरे ॥ १३ ॥ एवमेषा पुरा पार्थ पूजिता त्रिदशोत्तमैः ॥ तेषां पत्नीवधूभिश्च भगिनीभिस्तथैव च ॥ १४ ॥ पूजिताभ्यर्हिता वाचा गौर्या राजञ्छ्रिया तथा ॥ मर्त्यलोके वेदवत्या दमयंत्यापि सीतया ॥ १५ ॥ सुकेश्या च घृताच्या च रंभया च सुकेशया ॥ सहन्या कामकंदन्या मेनकोर्वशिकादिभिः ॥ १६ ॥ स्त्रीभिरेवार्चिता दूर्वा सौभाग्यसुखदायिनी ॥ स्नाताभिः शुचिवस्त्राभिः सखीभिः ससुहृज्जनैः ॥ १७ ॥ दत्त्वा दानानि विप्रेभ्यः फलं दत्त्वार्चयेत्प्रभोः ॥ तिलपिष्टकगोधूमसप्तधान्यानि पांडव ॥ १८ ॥ भक्षयित्वा सुहृन्मित्रसंबंधिस्वजने तथा ॥ या नार्यो विचरिष्यंति व्रतमेतत्पुरातनम् ॥ १९ ॥ दूर्वाष्टमीति विख्यातं पुण्यं संतानकारकम् ॥ ताः सर्वाः सुखसौभाग्यपुत्रपौत्रादिभिस्तथा ॥ २० ॥ मर्त्ये लोके चिरं स्थित्वा ततः स्वर्गं गताः पुनः ॥ देवैरानंदितास्तत्र भर्तृभिः सह बांधवैः ॥ २१ ॥ वसंति रममाणास्ता यावदाभूतसंप्लवम् ॥ २२ ॥ मेघावृतांबरतले हरिते वनांते या साष्टमी शुभफला सफला नभस्ये ॥ दूर्वाफलाक्षततिलैः प्रति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूज्य योषिद्दूर्वेव वृद्धिमुपयाति सुतैः सुहृद्भिः ॥ २३ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे दूर्वाष्टमीव्रतवर्णनं नाम षट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ कृष्णाष्टमीव्रतं पार्थ शृणु पापभयापहम् ॥ धर्मसंजननं लोके रुद्रप्रीतिकरं परम् ॥ १ ॥ मासि मार्गशिरे प्राप्ते दंतधावनपूर्वकम् ॥ उपवासस्य नियमं कुर्यान्नक्तस्य वा पुनः ॥ २ ॥ अशक्तशक्तभेदेन गृहान्निष्क्रम्य वाह्यतः ॥ कृष्णाष्टम्यां वर्षमेकं गुरुं पृष्ट्वा विचक्षणः ॥ ३ ॥ ब्रह्मचारी जितक्रोधः शिवार्चनजपे रतः ॥ ततोऽपराह्णसमये स्नात्वा नद्यां विशुद्धधीः ॥ ॥ ४ ॥ शिवलिङ्गं समभ्यर्च्य सुमनोभिः सुगंधिभिः ॥ गुग्गुलुं च शुभं दग्ध्वा दद्यान्नैवेद्यमुत्तमम् ॥ ५ ॥ ततो देवस्य पुरतो होमं कुर्यात्तिलैर्गुरुः ॥ मार्गशीर्षे शुभे मासि शंकरायेति पूजयेत् ॥ ६ ॥ गोमूत्रप्राशनं कृत्वा स्वप्याद्भूमौ ततो निशि ॥ अतिरात्रस्य यज्ञस्य फलमाप्नोति मानवः ॥ ७ ॥ एवं पुष्येपि संपूज्य शंभुं नाम महेश्वरम् ॥ कृष्णाष्टम्यां घृतं प्राश्य वाजपेयफलं भजेत् ॥ ८ ॥ माघे माहेश्वरं नाम कृष्णाष्टम्यां प्रपूजयेत् ॥ निशि पीत्वा गवां क्षीरं गोमेधाष्टकमाप्नुयात् ॥ ९ ॥ फाल्गुने च महादेवं संपूज्य प्राशयेत्तिलान् ॥ राजसूयस्य यज्ञस्य फलमष्टगुणं भजेत् ॥ १० ॥ चैत्रे च स्थाणुनामानं कृष्णाष्टम्यां शिवं यजेत् ॥ यवाहारोश्वमेधस्य यज्ञस्य फलमाप्नुयात् ॥ ११ ॥ वैशाखे शिवनामानमिष्ट्वा रात्रौ कुशोदकम् ॥ पीत्वा पुरुषमेधस्य फलं दशगुणं भजेत् ॥ १२ ॥ ज्येष्ठे पशुपतिं पूज्य गवां शृङ्गोदकं पिबेत् ॥ गवां लक्षप्रदानस्य नरः फलमवाप्नुयात् ॥ १३ ॥ आषाढे चोग्रनामानमिष्ट्वा संप्राश्य गोमयम् ॥ वर्षाणां नियुतं साग्रं रुद्रलोके महीयते ॥१४॥ श्रावणे शर्वनामानमिष्ट्वार्कं निशि भक्षयेत् ॥ बहुस्वर्णस्य यज्ञस्य नरः फलमवाप्नुयात् ॥ १५ ॥ मासि भाद्रपदेऽष्टम्यां त्र्यंबकं नाम पूजयेत् ॥ बिल्वपत्रं निशि प्राश्य अनन्तदीक्षाफलं भजेत् ॥ १६ ॥ भवनामाश्विने पूज्यः प्राशयेत्तंडुलोदकम् ॥ पौण्डरीकस्य यज्ञस्य फलं शतगुणं भजेत् ॥ १७ ॥ कार्तिके रुद्रनामानं संपूज्य प्राशयेद्दधि ॥ अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १८ ॥ अब्दांते भोजयेद्विप्राञ्छिवभक्तिपरायणान् ॥ पायसं मधुसंयुक्तं घृतेन समभिप्लुतम् ॥ शक्त्या हिरण्यवासांसि भक्त्या तेभ्यो निवेदयेत् ॥१९॥ सतिलाः कृष्णकलशा भक्ष्यभोज्येन संयुताः ॥ द्वादशात्र प्रदातव्याश्छत्रोपानद्युगान्विताः ॥ निवेदयति रुद्राणां गां च कृष्णां पयस्विनीम् ॥ २० ॥ वर्षमेकं चरेदेवं नैरन्तर्य्येण यो नरः ॥ कृष्णाष्टमीव्रतं भक्त्या तस्य पुण्यफलं शृणु ॥ २१ ॥ सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः ॥ मोदते भूपवन्नित्यं मर्त्यलोके शतं समाः ॥ २२ ॥ अनेन विधिना देवाः सर्वे देवत्वमागताः ॥ देवी देवीत्वमापन्ना गुहः स्कंदत्वमागतः ॥ २३ ॥ ब्रह्मा ब्रह्मत्वमापन्नो ह्यहं विष्णुत्वमागतः ॥ इन्द्रश्च देवराजत्वं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गाणपत्यं गणो गतः ॥ २४ ॥ नारी वा पुरुषो वापि कृत्वा कृष्णाष्टमीव्रतम् ॥ अखंडितं महाराज पुण्यं प्राप्नोत्यनुत्तमम् ॥ २५ ॥ सूर्यकोटिप्रतीकाशैर्विमानैः सर्वकामिकैः ॥ रुद्रकन्यासमाकीर्णैर्हंससारससंयुतैः ॥ २६ ॥ नृत्यवादित्रसंयुक्तैरुत्कृष्टध्वनिनादितैः ॥ दोधूयमानश्चमरैः स्तूयमानः सुरासुरैः ॥ २७ ॥ त्रिनेत्रः शूलपाणिश्च शिवैश्वर्यसमन्वितः ॥ आस्ते शिवपुरे तावद्यावत्कल्पेषु चाष्टकम् ॥ २८ ॥ इत्येतत्ते समाख्यातं पार्थ कृष्णाष्टमीव्रतम् ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ २९ ॥ कृष्णाष्टमीव्रतमिदं शिवभावितात्मा सत्याशनैरुदितनामयुतैरुपोष्य ॥ कृष्णान्ददाति कलशान्सतिलान्नयुक्तान्योसौ प्रयाति पदमुत्तममिन्दुमौलेः ॥ ३० ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कृष्णाष्टमीव्रतवर्णनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ ब्रह्मपुत्रो महातेजा अत्रिर्नाम महानृपिः ॥ तस्य पत्नी महाभाग अनसूया पतिव्रता ॥ १ ॥ तयोः कालेन महता जातः पुत्रो महातपाः ॥ दत्तो नाम महायोगी विष्णोरंशो महीतले ॥ २ ॥ द्वितीयो नाम लोकेस्मिन्ननघश्चेति विश्रुतः ॥ तस्य भार्या नदी नाम बभूव सहचारिणी ॥ ३ ॥ अष्टपुत्रा जीववत्सा सर्वब्राह्मगुणैर्वृता ॥ अनयोर्विष्णुरूपेण लक्ष्मीश्चैवनदी स्मृता ॥ ४ ॥ एवं तस्य सभार्यस्य योगाभ्यासरतस्य वा ॥ आजग्मुः शरणं देवाः शुंभदैत्येन पीडिताः ॥ ५ ॥ ब्रह्मलब्धप्रसादेन द्रुतं गत्वामरावतीम् ॥ संरुद्धां जंभदैत्येन दिव्यवर्षशतं नृप ॥ ६ ॥ दैत्यदानवसंयोगे पातालादेत्य भारत ॥ तस्य सैन्यमसंख्येयं दैत्यदानवराक्षसैः ॥ ७ ॥ तेन निर्णाशिता देवाः सेंद्रचंद्रमरुद्गणाः ॥ त्याजिताः स्वानि धिष्ण्यानि त्यक्त्वा जग्मुर्दिशो दश ॥ ८ ॥ अग्रतः प्रलयं यांतः सेन्द्रा देवा भयार्दिताः ॥ पृष्ठतोनुव्रजंति स्म दैत्या जंभपुरःसराः ॥ ९ ॥ युध्यंतः शरसंघातैर्गदामुसलमुद्गरैः ॥ नर्दन्तो वृषभारूढाः केचिन्महिषवाहनाः ॥ १० ॥ शरभैर्गंडकैर्व्याघ्रैर्वानरै रथसंवृताः ॥ मुञ्चन्तो यांति पापाणाञ्छतघ्नीस्तोमराञ्छरान् ॥ ११ ॥ यावद्विन्ध्यगिरिं प्राप्तास्तत्तस्याश्रममण्डलम् ॥ अनघश्चानदी चैव दांपत्यं यत्र तिष्ठति ॥ १२ ॥ तयोः समीपं संप्राप्तास्ते नराः शरणार्थिनः ॥ अनघोऽपि च तान्देवाँल्लीलयैव सवासवान् ॥ १३ ॥ अभ्यंतरे प्रविश्याथ तिष्ठध्वं विगतज्वराः ॥ तथेति नाम ते कृत्वा सर्वे तुष्टिं समास्थिताः ॥ १४ ॥ दैत्या अपि द्रुतं प्राप्ता घ्नंतः प्रहरणैररीन् ॥ इत्यूचुरुल्वणा घोरा गृह्णीध्वं ब्राह्मणीं मुनेः ॥ १५ ॥ द्रुतं द्रुमानाक्षिपध्वं पुष्पोपगफलोपगान् ॥ अथारोप्यानघं मूर्ध्नि दैत्या जग्मुस्तदाश्रमान् ॥ १६ ॥

१ वृद्धः-इ० पा० । २ पार्थ पापस्य-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्क्षणाच्चापि दैत्यानां श्रीर्बभूव शिरोगता ॥ दत्तकेनापि ते दृष्टा नष्टा ध्यानाग्निना क्षणात् ॥ निस्तेजसो बभूवुर्हि निःश्रीका मदपंडिताः ॥१७॥ देवैरपि गृहीतास्ते दैत्याश्च हरणे रणे ॥ रुदंतो निस्तनंतश्च निश्चेष्टा ब्रह्मकंटकाः ॥१८॥ ऋष्टिभिः करणैः शूलैस्त्रिशूलैः परिघैर्घनैः ॥ एवं ते प्रलयं जग्मुस्तत्प्रभावान्मुनेस्तदा ॥ १९ ॥ असुरा देवशस्त्रौघैर्जिता इन्द्रेण घातिताः ॥ देवा अपि स्वराष्ट्रेषु तस्थुः सर्वे यथा पुरा ॥ सुरैरपि मुनेस्तस्य देवर्षेर्महिमाऽभवत् ॥ २० ॥ ततः स सर्वलोकानां भवाय सततोत्थितः ॥ कर्मणा मनसा वाचा शुभान्येव समाचरत् ॥ २१ ॥ काष्ठकुडचशिलाभूत ऊर्ध्वबाहुर्महातपाः ॥ ब्रह्मोत्तरं नाम तपस्तेपे सुनियतव्रतः ॥ २२ ॥ नेत्रे ह्यनिमिषे कृत्वा भ्रुवोर्मध्ये विलोकयन् ॥ त्रीणि वर्षसहस्राणि दिव्यानीति हि नः श्रुतम् ॥ २३ ॥ तथोर्द्ध्वरेतसस्तस्य स्थितस्यानिमिषस्य हि ॥ योगाभ्यासप्रयत्नस्य माहिष्मत्याः पतिः प्रभुः ॥ २४ ॥ एकाहाद्भुतमभ्येत्य कार्तवीर्योऽर्जुनो नृपः ॥ शुश्रूषां विनयं चक्रे दिवारात्रमतंद्रितः ॥ २५ ॥ गात्रसंवाहनं पूजां मनसा चिंतितं तथा ॥ सम्पूर्णे नियमे वृत्ते दृढतुष्ट्या समन्वितः ॥ २६ ॥ तस्मै ददौ वरान्पुष्टांश्चतुरो भूरितेजसः ॥ पूर्वं बाहुसहस्रं तु स वव्रे प्रथमं वरम् ॥ २७ ॥ अधर्माद्धीयमानस्य सद्भिस्तस्मान्निवारणम् ॥ धर्मेण पृथिवीं जित्वा धर्मेणैवानुपालनम् ॥ २८ ॥ संग्रामान्सुबहूञ्जित्वा हत्वा वीरान्सहस्रशः ॥ संग्रामे युध्यमानस्य वधो मे स्याद्धरेः करात् ॥ २९ ॥ तेन दत्तेन लोकेऽस्मिन्दत्तं राज्यं महीतले ॥ कार्तवीर्याय कौंतेय योगाभ्यासः सविस्तरः ॥ चक्रवर्तिपदं चैव अष्टसिद्धिसमन्वितम् ॥ ३० ॥ तेनापि पृथिवी कृत्स्ना सप्तद्वीपा सपर्वता ॥ ससमुद्राकरवती धर्मेण विधिना जिता ॥ ३१ ॥ तस्य बाहुसहस्रं तु प्रभावात्किल धीमतः ॥ यागाद्रथो ध्वजश्चैव प्रादुर्भवति मायया ॥ ३२ ॥ दशयज्ञसहस्राणि तेषु द्वीपेषु सप्तसु ॥ निरर्गलानि वृत्तानि स्वयं वै तस्य पांडव ॥ ३३ ॥ सर्वे यज्ञा महाबाहो प्रसन्ना भूरिदक्षिणाः ॥ सर्वे काञ्चनवेदिक्याः सर्वे यूपैश्च काञ्चनैः ॥ ३४ ॥ सर्वदेवैर्महाभागैर्विमानस्थैरलंकृताः ॥ गंधर्वैरप्सरोभिश्च नित्यमेवोपशोभिताः ॥ ३५ ॥ तस्य यज्ञे जगुर्गाथां गंधर्वा नारदस्तथा ॥ चरितं राजसिंहस्य महिमानं निरीक्ष्य ते ॥ ३६ ॥ न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ॥ यज्ञैर्दानैस्तपोभिर्वा विक्रमेण श्रुतेन च ॥ ३७ ॥ द्वीपेषु सप्तसु स वै खड्गचर्मशरासनी ॥ व्यचरच्छ्येनवद्यो वै दूरादाराद्वेक्षत ॥ ३८ ॥ अनष्टद्रव्यता चास्य न शोको न च वै क्रमः ॥ प्रभावेण महीराजोरक्षद्धर्मेण च प्रजाः ॥ ३९ ॥ पञ्चाशीतिसहस्राणि वर्षाणां वै नराधिप ॥ समुद्रवसनायां स चक्रवर्ती बभूव ह ॥ ४० ॥ स एव पशुपालोभूत्क्षेत्रपालः स एव च ॥ स एव वृष्ट्यां पर्जन्यो योगित्वादर्जुनोऽभवत् ॥ ४१ ॥ स वै





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बाहुसहस्रेण ज्याघातकठिनत्वचा ॥ वाति रश्मिसहस्रेण क्षोभ्यमाणे महोदधौ ॥ ४२ ॥ स हि नागमनुष्यैस्तु माहिष्मत्यां महाद्युतिः ॥ कर्कोटाहेः सुताञ्जित्वा पुरि तत्र न्यवेशयत् ॥ ४३ ॥ स वै पत्नीं समुद्रस्य प्रावृट्कालेंबुजेक्षणाम् ॥ क्रीडते च मदोन्मत्तः प्रतिस्रोतश्चकार ह ॥ ॥ ४४ ॥ ललितं क्रीडता तेन फलनिष्पन्दमालिनी ॥ ऊर्मीभ्रुकुटिमत्येव शंकितास्येति नर्मदा ॥ ४५ ॥ तस्य बाहुसहस्रेण क्षोभ्यमाणे महोदधौ ॥ भवंत्यालीननिश्चेष्टाः पातालस्था महासुराः ॥ ४६ ॥ तूष्णींकृतो महाभाग लीनाहीनमहामतिः ॥ चकारोत्तुङ्गक्षुब्धोर्मिं दोःसहस्रेण सागरम् ॥ ४७ ॥ क्रांता निश्चलमूर्द्धानो बभूवुश्च महोरगाः ॥ सायाह्ने कदलीखण्डान्निर्घातनिहता इव ॥ जिता धनुर्धराः सर्वे सुत्यक्तैः पञ्चभिः शरैः ॥ ४८ ॥ लङ्काधिपं मोहयित्वा सबलं रावणं बलात् ॥ निर्जित्य वशमानीय माहिष्मत्यां बबंध च ॥ ४९ ॥ ततोऽभ्येत्य पुलस्त्यस्तु अर्जुनं संप्रसादयन् ॥ मुमोच रक्षः पौलस्त्यं पौलस्त्येनानुगामिना ॥ तस्य बाहुसहस्रस्य बभूव ज्यातलस्वनः ॥ ५० ॥ क्षुधितेन कदाचित्स प्रार्थितश्चित्रभानुना ॥ सप्तद्वीपां चित्रभानोः प्रादाद्भिक्षां महीमिमाम् ॥ ५१ ॥ कुंडेशयस्ततोऽद्यापि दृश्यते भगवान्हरिः ॥ निंबादित्यश्च प्रत्यक्षो जाग्रत्संस्तस्य वेश्मनि ॥ बभूव दुहितुर्हेतोः शरदोऽद्यापि तिष्ठति ॥ ५२ ॥ स एवं गुणसंयुक्तो राजाभूदर्जुनो भुवि ॥ अनघस्य प्रसादेन योगाचार्यस्य पांडव ॥ ५३ ॥ तेनेयं वरलब्धेन कार्तवीर्येण योगिना ॥ प्रवर्तिता मर्त्यलोके प्रसिद्धा ह्यनघाष्टमी ॥ ५४ ॥ अघं पापं स्मृतं लोके तच्चापि त्रिविधं भवेत् ॥ यस्मादघं नाशयति तेनासावनघा स्मृता ॥ ५५ ॥ तस्याष्टगुणमैश्वर्यं विनोदार्थं विभाव्यते ॥ अणिमा महिमा प्राप्तिः प्राकाम्ये लघिमा तथा ॥ ५६ ॥ ईशित्वं च वशित्वं च सर्वकामावसायिता ॥ इत्यष्टौ योगसिद्धस्य सिद्धयो मोक्षलक्षणाः ॥ ५७ ॥ समुत्पन्ना दत्तकस्य लोके प्रत्ययकारकाः ॥ यात्रासमाप्तौ संगृह्य यदघानि तथैव वा ॥ ५८ ॥ जगत्समस्तमनघं कुर्यादस्मादतोऽनघा ॥ मदंशो मद्गतप्राणो लोकेस्मिन्नूतको द्विजः ॥ ५९ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कीदृशं पुण्डरीकाक्ष स वै राजार्जुनो व्रतम् ॥ चक्रे वा त्रिषु लोकेषु कैर्मन्त्रैः समयैश्च कैः ॥ कस्मिन्काले तिथौ कस्यामेतन्मे वद केशव ॥ ६० ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ कृष्णाष्टम्यां मार्गशीर्षे दंपती दर्भनिर्मितौ ॥ अनघं चानघां चैव बहुपुत्रैः समन्विताम् ॥ ६१ ॥ पुरा कृतीकृतौ शांतौ भूमिभागे स्थितौ शुभौ ॥ स्नात्वैवमर्चयेत्पुष्पैः ससुगन्धैर्युधिष्ठिर ॥ ६२ ॥ ऋग्वेदोक्तऋचा विप्रो विष्णुं ध्यात्वा ममांशजम् ॥ अनघं वासुदेवेनानघां लक्ष्मीं व्रजां तनुम् ॥ प्रद्युम्नादिपुत्रवर्गं हरिवंशे यथोदितम् ॥ ६३ ॥

१ तूतकः-द० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

" ॐ अतो देवा अवंतु नो यतो विष्णुर्विचक्रमे ॥ पृथिव्याः सप्तधामभिः ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूळ्हमस्यपां सुरे ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः ॥ अतो धर्माणि धारयन् ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ॥ इंद्रस्य युज्यः सखा ॥ तद्विष्णोः परमं पदं सदा पश्यंति सूरयः ॥ दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिंधते ॥ विष्णोर्यत्परमं पदम्" ॥ लोकोद्भवैः फलैः कन्दैः शृंगारैर्बदरैः शुभैः ॥ वित्तैश्च धान्यैः पुष्पैश्च गंधधूपैः सदीपकैः ॥ ६४ ॥ यः पूजयेद्भक्तियुक्तः सर्वपापैः प्रमुच्यते ॥ ततो द्विजान्भोजयेच सुहृत्संबंधिबांधवान् ॥ ६५ ॥ व्रतावसाने गृह्णीयात्कश्चिदेको नरो व्रतम् ॥ तेषां मध्ये दृढाश्चकुरनघव्रतपारगाः ॥ ६६ ॥ इदं जीवनघातीचेत्सत्यं तु समयोषितम् ॥ वर्षमेकं ततः स्वेच्छा इदं तवानघव्रतम् ॥ ६७ ॥ तत्रोपेक्षणकं कार्यं नटनर्तकगायकैः ॥ प्रभाते तु नवम्यां तं तोयमध्ये विसर्जयेत् ॥ ६८ ॥ एवं यः कुरुते यात्रां वर्षेवर्षे च हर्षितः ॥ भक्तियुक्तः श्रद्धया च सर्वपापैः प्रमुच्यते ॥ ६९ ॥ कुटुंबं वर्द्धते तस्य यस्य विष्णुः प्रसीदति ॥ आरोग्यं सप्त जन्मानि ततो यांति परां गतिम् ॥ ७० ॥ एतामघौघशमनामनघाष्टमीं च कौंतेय संप्रति मया कथितां हिताय ॥ कुर्वंत्यनन्यमनसः स्वयशोभिवृद्ध्यै ऋद्धिं प्रयांति कृतवीर्यसुतानुरूपाम् ॥ ७१ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे अनघाष्टमीव्रतं नामाष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ छ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथान्यत्संप्रवक्ष्यामि व्रतं श्रेयस्करं परम् ॥ शिवलोकप्रदं पुण्यं विधिवन्मे निबोधताम् ॥ १ ॥ वारे सोमे सिताष्टम्यां पक्षे सोमं समर्चयेत् ॥ विधिना चन्द्रचूडालं प्राप्यमेतत्स चन्द्रकम् ॥ २ ॥ दक्षिणार्धे हरिं ध्यात्वा मध्ये तु परितः प्रभुम् ॥ पञ्चामृतादिना देवं स्थापयित्वा यतव्रती ॥ ३ ॥ चंदनेनेन्दुयुक्तेन दक्षिणार्धं विलेपयेत् ॥ हरभागं नीलरक्तं शिवस्योपरि मौक्तिकम् ॥ ४ ॥ पश्चात्पुष्पैः समभ्यर्च्य सितै रक्तैरनुत्तमैः ॥ नीराजनं पुनः कुर्यात्पंचविंशतिदीपकैः ॥ अर्थं सिद्धैः शुभैर्भक्ष्यैर्नैवेद्यं विनिवेदयेत् ॥ ५ ॥ एवंकृतोपवासस्तु प्रभाते पूर्ववच्छिवम् ॥ संपूज्याज्यं तिलैर्मिश्रं जुहुयाज्जातवेदसि ॥ ६ ॥ व्रतिनो ब्राह्मणान्पश्चाद्भोजयित्वा विधानतः ॥ मिथुनानि तु संभोज्य यथाशक्त्यनुपूजयेत् ॥ ७ ॥ आवर्त्यं पितरावर्च्य विधिना तेन सुव्रत ॥ संवत्सरांते कर्तव्यं यत्तत्सर्वं निबोध मे ॥ ८ ॥ प्रागुक्तविधिना पूज्या सितपीतयुगद्वयम् ॥ दद्याद्वितानकं चैव पताकां घटकीं तथा ॥ ९ ॥ धूपगंधारसी चापि दीपवृक्षं सुशोभनम् ॥ एवमादीनि योज्यानि पूर्ववद्भोज्यमाचरेत् ॥ १० ॥ चतुरस्रं त्रिकोणं

१ अर्घसिद्धैं–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च मण्डलं कारयेत्ततः ॥ त्रिकोणे पार्वतीं ध्यायेच्चतुरस्रे महेश्वरम् ॥ ११ ॥ संकल्प्य द्विजदांपत्यं वासोभिर्भूषणैस्तथा ॥ पूजयित्वा यथाशक्त्या कुर्यान्नीराजनं शुभैः ॥ दीपकैः पञ्चविंशद्भिर्भोजयित्वा विसर्जयेत् ॥ १२ ॥ अब्दपञ्चकमेकं वा एवं यः कुरुते नरः ॥ उभाभ्यां लोकमासाद्य पदं यास्यत्यनामयम् ॥ १३ ॥ आ देहपतनाद्यस्तु नित्यमेतत्समाचरेत् ॥ इहैव स हरिः साक्षान्नररूपो विभाव्यते ॥ १४ ॥ न स्पृशंत्यापद स्तस्य न दुःखी भवति क्वचित् ॥ ज्वरग्रहादिभिर्नैव पीड्यतेऽसौ कदाचन ॥ १५ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथ वा तेन मार्गेण तामवे हि सिताष्टमीम् ॥ संप्राप्यादित्ययोगेन प्राग्विधानेन चाभ्यसेत् ॥ १६ ॥ किंतु दक्षिणतंत्रस्थं भास्करं वार्चयेद्बुधः ॥ पद्मरागेण दिव्येन सुवर्णेन च पार्वतीम् ॥ १७ ॥ कुंकुमेन समालभ्य चन्दनेन शिवं तथा ॥ अभावे सर्वरत्नानां हेम सर्वत्र योजयेत् ॥ १८ ॥ रुद्रबीजं परं पूतं प्रियं रुद्रस्य सर्वदा ॥ रक्तमाल्यांबरधरं नैवेद्यं घृतपाचितम् ॥ १९ ॥ शेषः पूर्वविधानेन कर्तव्यो विधिविस्तरः ॥ तिथौ पूर्णे च कुर्वीत गव्येनानघ पारणम् ॥ ॥ २० ॥ एतत्प्राक्च विधायाब्दं पञ्चाब्दानेवमेव च ॥ कृत्वा सूर्यादिलोकेषु भुक्त्वा भोगान्व्रजेत्परम् ॥ २१ ॥ पतंगवत्प्रतापी स्याददीनश्च जन प्रियः ॥ अस्मिन्नोगो न बाधेत धनवान्पुत्रवान्भवेत् ॥ २२ ॥ यद्यष्टमी भवति सोमयुता कदाचिदर्केण वा कुरुकुलोद्वह तामुपोष्य ॥ पूज्यो मया सह हरं हरिणांकचिह्नं भक्त्यायुषां पदमुपेति पदं पुरारेः ॥ २३ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे सोमाष्टमीव्रतवर्णनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ समुत्पन्नेषु रत्नेषु क्षीरोदमथने पुरा ॥ दैत्यानां मोहनार्थाय योषिद्भूते जनार्दने ॥ १ ॥ बिल्वे वृक्षे क्षणं श्रांता विश्रांता कमलालया ॥ यामेवमिति वान्योन्यं युयुधुर्देवदानवाः ॥ २ ॥ जिताः सर्वे पुरा पार्थ युद्धे कृष्णेन चक्रिणा ॥ पातालं गमिता दैत्याः सश्रीकः स्वयमाययौ ॥ ३ ॥ श्रीः समावासिता यस्माच्छ्रीवृक्षस्तु ततः स्मृतः ॥ तस्माद्भाद्रपदस्यैव शुक्लपक्षे कुरूत्तम ॥ ४ ॥ नवम्यामर्चयेद्भक्त्या ईषत्सूर्योदये नगम् ॥ श्रीवृक्षं विविधैः पुष्पैरनग्निपाचितैः फलैः ॥ ५ ॥ तिलपिष्टान्नगोधूमैर्धूपगन्धस्रगंबरैः ॥ ईषद्धानुकराताम्रताम्रीकृतनभस्तले ॥ ६ ॥ मंत्रेणानेन राजेन्द्र कृत्वा ब्राह्मणभोजनम् ॥ ततो भुञ्जीत मौनेन तैलक्षारविवर्जितः ॥ अनग्निपाकं भूपात्रे दधिपुष्पफलैः शुभम् ॥ ७ ॥ एवं यः कुरुते पार्थ श्रीवृक्षस्यार्चनं नरः ॥ नारी वा दुःखशोकाभ्यां मुच्यते नात्र संशयः ॥ ८ ॥ सप्तजन्मांतरं यावत्सुखसौभाग्यसंयुता ॥ श्रीमती फलिनी धन्या मर्त्यलोके महीयते[1] ॥ ९ ॥ श्रीवृक्षमक्षतफलं

१ कि तु लक्षणीपाकया—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वसितं नवम्यां नैवेद्यपुष्पफलवस्त्रविचित्रधान्यैः ॥ पूज्यः प्रभातसमये पुरुषोत्तमेष्टः संप्राप्नुवंति पुरुषाः पुरुषेन्द्रवन्द्याम् ॥ १० ॥ ॥ इति श्रीभ ष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे श्रीवृक्षनवमीव्रतवर्णनं नाम षष्टितमोऽध्यायः ॥ ६० ॥ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ महिषासुरे विनिहते भगवत्या महासुरैः ॥ पूर्ववैरमनुस्मृत्य संग्रामा बहवः कृताः ॥ १ ॥ नानारूपधरा देवी अवतीर्य पुनःपुनः ॥ धर्मसंस्थापनार्थाय निजघ्ने दैत्यसत्तमान् ॥ २ ॥ अथ रक्तासुरो नाम महिषस्य सुतो महान् ॥ आसीत्तेन तपस्तप्तं वर्षाणां नियुतानि षट् ॥ तस्मै ददौ चतुर्वक्त्रो राज्यं त्रैलोक्यमण्डले ॥ ३ ॥ तेन लब्धं वरेणाथ मेलयित्वा दनोः सुतान् ॥ प्रारब्धं सह शक्रेण युद्धं गत्वाऽमरावतीम् ॥ ४ ॥ तद्दृष्ट्वा दानवबलं सन्नद्धात्युद्धतध्वजम् ॥ युयुधे दानवैः सार्द्धं सुरैः शक्रपुरस्सरैः ॥ ५ ॥ तत्र प्रावर्तत नदी शोणितौघतरंगिणी ॥ खड्गमत्स्यगदाग्राहवसुनंदककच्छपा ॥ वहंती पितृलोकाय सुरासुरभयानका ॥ ६ ॥ अथ रक्तासुरो रोषाद्युयुधे विबुधैः सह ॥ ते हन्यमाना विबुधा रक्ताक्षेण महारणे ॥ ७ ॥ भ्रष्टाः स्वर्गं परित्यज्य त्यक्तप्रहरणा द्रुतम् ॥ करच्छत्रां पुरीं प्राप्ता यत्रास्ते भववल्लभा ॥ ८ ॥ दुर्गा चामुण्डया सार्धं नवदुर्गासमन्विता ॥ आद्या तावन्महालक्ष्मीर्नंदा क्षेमकरी तथा ॥ ९ ॥ शिवदूती महारुण्डा भ्रामरी चन्द्रमंगला ॥ रेवती हरसिद्धिस्तु नवैताः परिकीर्तिताः ॥ एतासां ते स्तुतिं चक्रुस्त्रिदशाः प्रणताननाः ॥ १० ॥ अमरपतिमुकुटचुम्बितचरणांबुजसकलभुवनसुखजननी ॥ जयति जगदीशवंदिता सकलामलनिष्कला दुर्गा ॥ ११ ॥ विकृतनखदशनभूषणरुधिरवशाच्छुरितक्षतखड्गहस्ता ॥ जयति नरमुंडमुंडितपिशितसुराहारकृच्चण्डी ॥ १२ ॥ प्रच्छादितशिखिगणोद्गलविकटजटाबद्धचन्द्रमणिशोभा ॥ जयति दिगंबरभूषा सिद्धवटेशा महालक्ष्मीः ॥ १३ ॥ करकमलजनितशोभा पद्मासनबद्धपद्मवदना च ॥ जयति कमण्डलुहस्ता नंदा देवी नतार्तिहरा ॥ १४ ॥ दिग्वसना विकृतमुखा फेत्कारोद्दामपूरितदिशौघा ॥ जयति विकरालदेहा क्षेमंकरी रौद्रभावस्था ॥ १५ ॥ क्रोशितब्रह्मांडोदरसुरवरमुखरहुंकृतनिनादा ॥ जयति मदातिमिहस्ता शिवदूती प्रथमशिवशक्तिः ॥ १६ ॥ मुक्ताट्टहासभैरवदुःसहतरचकितसकलदिक्चक्रा ॥ जयति भुजगेन्द्रमणिशोभितकर्णा महातुण्डा ॥ १७ ॥ पटुपटहमुरजमर्दलझल्लरिझङ्कारनर्तितावयवा ॥ जयति मधुव्रतरूपा दैत्यहरी भ्रामरी देवी ॥ १८ ॥ शांता प्रशांतवदना सिंहवरा ध्यानयोगतन्निष्ठा ॥ जयति चतुर्भुजदेहा चन्द्रकला चन्द्रमण्डला देवी ॥ १९ ॥ पक्षपुटचंचुघातैः संचूर्णितविविधशत्रुसंघाता ॥ जयति शितशूलहस्ता बहुरूपा रेवती भद्रा ॥२०॥ पर्यटति जगति हृष्टा पितृवननिलयेषु योगिनीसहिता॥जयति हरसिद्धिनाम्नी हरसिद्धिर्वंदिता सिद्धैः ॥२१॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति नवदुर्गासंस्तवमनुपममार्याभिरपरराट् कृत्वा ॥ इदमूचे सह देवैस्त्राह्यस्मान्सर्वभीतिभ्यः ॥ २२ ॥ पुनःपुनः प्रणम्योचुर्भवानीं सिंहवाहिनीम् ॥ अस्माकं भयभीतानां शरण्ये शरणं भव ॥ २३ ॥ देवानां तद्वचः श्रुत्वा दत्त्वा तेभ्योऽभयं ततः ॥ सिंहारूढा विनिर्गत्य दुर्गाभिः सहिता पुरा ॥ २४ ॥ युयुधे दानवैस्सार्धं महासमरदुर्दिनम् ॥ कुमारी विंशतिभुजा घनविद्युल्लतोपमा ॥ २५ ॥ तेऽपि तत्रासुराः प्राप्ताः प्रचंडा रुद्ररूपिणः ॥ सर्वे लब्धवराः शूराः सुतप्ततपसस्तथा ॥ २६ ॥ महाग्राहपराक्रांता दुष्टमायाविनष्टये ॥ अत्राह्मण्याद्रक्तमिषा नामतश्च निजोद्यतात् ॥ २७ ॥ इन्द्रमारी असत्क्लेशः प्रलंबो नरकः सुतः ॥ कुष्टः पुलोमा शरभः शंबरो दुंदुभिः खरः ॥ २८ ॥ इल्वलो नमुचिर्भौमो वातापि र्धेनुकः कलिः ॥ मायावृतौ बलौ बन्धुर्मधुकैटभकालजित् ॥ २९ ॥ रहः पौंड्रादिदैत्येन्द्राः प्राधान्येन प्रकीर्तिताः ॥ फनगोभिर्जनाः सर्वे सन्नद्धाः स्वाग्रतो ध्वजः ॥ ३० ॥ रूपतो वर्णिताश्चैव ध्वजास्तेषां पृथक्पृथक् ॥ प्रत्यदृश्यंत राजेन्द्र ज्वलिता इव पावकाः ॥ ३१ ॥ काञ्चनाः काञ्चनापीडाः काञ्चनस्रगलंकृताः ॥ पताका विविधैर्वालैरुच्छ्रिता लक्षणान्विताः ॥ ३२ ॥ नील्यः पीताः सिता रक्ताः कृष्णास्ताः पञ्चवर्णकाः ॥ तत्र पट्टपटीसौत्राः कृतबुद्बुदकर्बुराः ॥ ३३ ॥ पताकाकान्तिरनला नर्तक्य इव शोभनाः ॥ ३४ ॥ ततो हलहलारावं चक्रुस्ते दानवोत्तमाः ॥ प्रास्फालयंत पणवभेरीझर्झरगोमुखान् ॥ न्यवादयंतानकान्ये शंखाडंबराडिंडिमान् ॥ ३५ ॥ एवं ते समयुध्यंत भवानीं दैत्यदानवाः ॥ समाजघ्नुः शरैः शूलैः परिघैः शक्तितोमरैः ॥ कर्णकैरीपणैः कुन्तैः शतघ्नीकूटमुद्गरैः ॥ ३६ ॥ आहत्य मानरोपेण जज्वलुः समरेऽधिकम् ॥ सिंहारूढाद्रुतं देवी रणमध्ये प्रधाविता ॥ ३७ ॥ आच्छिद्याच्छिद्य चिह्नानि ध्वजान्नानाविधांस्तथा ॥ बलात्कारेण दैत्यानामनाथसमरे रुपा ॥ ३८ ॥ चिह्नकानि ददौ तुष्टा देवेभ्यः शीघ्रचारिणी ॥ सुरैरपि गृहीतानि जय देवीति वादिभिः ॥३९॥ अंबिका तु भृशं तुष्टा तेषां चक्रे क्षणात्क्षयम् ॥ कालरात्री दानवानां मारीव निपपात सा ॥ जीवितानि च जग्राह दैत्यानां देवनंदिनी ॥४०॥ अथ रक्तासुरं कंठे गृहीत्वापात्य भूतले ॥ देवी जघान तीक्ष्णेन त्रिशूलेन भृशं दिवि ॥ ४१ ॥ स भिन्नहृदयः पश्चाद्भूमौ तत्र प्रपोथितः ॥ तथापि देव्या निहतः पपात च ममार च ॥ ४२ ॥ देवास्तानसुराञ्जित्वा गत्वा शत्रुपुरं जितम् ॥ ददृशुस्ते रणप्रांते लंबमानान्महाध्वजान् ॥ यात्रां चक्रुः संप्रहृष्टा नवम्यां ध्वजचिह्निताम् ॥ ४३ ॥ अतोद्यापीह भूपालैर्जयलब्धीच्छयाहृतैः ॥ उपोष्यते नरैर्भक्तैर्नारीभिश्चैव पांडव ॥ ४४ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कीदृग्विधानं तस्यास्तु नवम्या ब्रूहि मे प्रभो ॥ सरहस्यं समंत्रं च येन तुष्यति चंडिका ॥ ४५ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पौषस्य शुक्लपक्षे या नवमी संपारि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुता ॥ तस्यां स्नात्वा शुभैः पुष्पैरर्चनीया हरेः स्वसा ॥ ४६ ॥ कुमारी सुभगा देवी सिंहस्यन्दनगामिनी ॥ ध्वजान्नानाविधान्कृत्वा पुरस्तस्याश्च पूजयेत् ॥ मालतीकुसुमैर्दीपैर्गन्धधूपविलेपनैः ॥ ४७ ॥ बलिभिः पशुभिर्मेध्यैः सुरामांसासृगम्बरैः ॥ दधिचन्दनचूर्णैश्च भक्ष्यैश्चान्नपाचितैः ॥ मंत्रेणानेन कौंतेय ब्रह्मणोप्यथवा ननु ॥ ४८ ॥ भद्रां भगवतीं कृष्णां विश्वस्य जगतो हिताम् ॥ संवेशिनीं संयमनीं ग्रहनक्षत्रमालिनीम् ॥ ४९ ॥ प्रपन्नोहं शिवां रात्रीं भद्रे पारय मे व्रतम् ॥ सर्वभूतपिशाचेभ्यः सर्वसत्वसरीसृपैः ॥ देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा ॥ ५० ॥ ततश्चारोपयेद्राजा देवीनां भवने तथा ॥ भोजयेत कुमारीं च प्रणिपत्य क्षमापयेत् ॥ ५१ ॥ उपवासेन कुर्वीत एकभक्तेन वा पुनः ॥ भक्त्या भूपालपश्चास्य भक्तिस्तस्या गरीयसी ॥ ५२ ॥ एवं ये पूजयिष्यंति ध्वजैर्भगवतीं नराः ॥ तेषां दुर्गा दुर्गमार्गे चोरव्यालाग्निसंकटे ॥५३॥ रणे राजकुले गेहे युद्धमध्ये जले स्थिते ॥ रक्षां करोति सततं भवानी सर्वमंगला॥५४॥अस्यां बभूव विजयो नवम्यां पांडुनंदन ॥ भगवत्यास्तु तेनैषा नवमी सततं प्रिया ॥ ५५ ॥ धन्या पुण्या पापहरा सर्वोपद्रवनाशनी ॥ अनुष्ठेया प्रयत्नेन सर्वान्कामानभीप्सुभिः ॥५६॥ देव्यर्चनाहितमतिर्मनुजो नवम्यां हेमस्रजं ध्वजवरं स हि रोपयेद्यः ॥ भोगानवाप्य मनसोभिमतान्प्रकामं देहं विहाय समुपैति स वीरलोकम् ॥ ५७ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे ध्वजनवमीव्रतवर्णनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥ छ ॥ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ उल्काख्यां नवमीं राजन्कथयामि निबोध ताम् ॥ या काश्यपेन कथिता तारकस्यार्तिनाशिनी ॥१॥ अश्वयुक्छुक्लपक्षे या नवमी लोकविश्रुता ॥ नद्यां स्नात्वा समभ्यर्च्य पितृदेवीं यथाविधि ॥ २ ॥ पश्चात्संपूजयेद्देवीं चामुण्डां भैरवप्रियाम् ॥ पुष्पैर्धूपैस्सनैवेद्यैर्मांसमत्स्यसुरासवैः ॥ ३ ॥ पूजयित्वा स्तवं कुर्यान्मन्त्रेणानेन मानवः ॥ समारोप्याञ्जलिं मूर्ध्नि जानुभ्यामवनीं गतः ॥ ४ ॥ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ॥ द्रव्यमारोग्यविजयौ देहि देवि नमोऽस्तु ते ॥ ५ ॥ कुमारीर्भोजयेत्पश्चान्नवनीलसुकंचुकैः॥ परिधानैर्भूषणैश्च भूषयित्वा क्षमापयेत् ॥ ६ ॥ सप्त पञ्चाप्यथैकां वा चित्तवित्तानुरूपतः ॥ श्रद्धया तुष्यते देवी इति वीरानुशासनम् ॥ ७ ॥ अभ्युक्ष्य मण्डलं कृत्वा गोमयेन शुचिस्मितः ॥ दत्तासने चोपविशेत्पात्रं च पुरतो न्यसेत् ॥ ८ ॥ ततः सुसिद्धमन्नं यत्तत्सर्वं परिवेषयेत् ॥ सघृतं पायसं चापि स्थापयेत्पात्रसन्निधौ ॥ ९ ॥ तृणानि पश्चिमादाय चादाय धमनीं तथा ॥ प्रज्वालयेत्ततो भोज्यं यावज्ज्वलति पावकः ॥ १० ॥ प्रशांते भोजनं त्यक्त्वा समा



१ नवनीलकुसुमकैः-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चक्रे तु पुरुषायेति वै शिरः ॥ १०० ॥ एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ॥ विन्यस्य वस्त्रसंयुक्तं तस्योपरि ततो न्यसेत् ॥ कांचनं वासुदेवेति चक्रबाहुं सनातनम् ॥ १०१ ॥ तमभ्यर्च्य विधानेन गंधपुष्पादिभिः क्रमात् ॥ प्राग्वत्तद्ब्राह्मणे दद्याद्वेदवादिनि सुव्रते ॥ १०२ ॥ एषा ह्युपोषिता राजन्विप्रां विप्रे प्रयच्छति ॥ राज्यं च अष्टराज्यानामपुत्राणां सुतान्बहून् ॥१०३॥ मृतो विष्णुपुरे रम्ये क्रीडते कालमक्षयम् ॥१०४॥ मन्वंतराणि षट्त्रिंशत्ततः कालात्यये पुनः ॥ इह लोके भवेद्राजा सप्तजन्मनि मानवः ॥ दाता यशःक्षमायुक्तस्ततो निर्वाणमाप्नुयात् ॥ १०५ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ एवमेवं श्रावणे तु मासि संकल्प्य द्वादशीम् ॥ अर्चयेत्परमं देवं गंधपुष्पनिवेदनैः ॥ १०६ ॥ बुधाय पादौ संपूज्य श्रीधरायेति वै कटिम् ॥ पद्मोद्भवाय जठरमुरः संवत्सराय च ॥ १०७ ॥ सुग्रीवायेति वै कण्ठं भुजौ वैचित्रबाहवे ॥ प्राग्वदस्त्राणि संपूज्य ब्राह्मणाय निवेदयेत् ॥ १०८ ॥ अनेन विधिना सर्वां द्वादशीं समुपोषितः ॥ शुद्धोदनेन तस्याभूत्स्वयं पुत्रो जनार्दनः ॥ १०९ ॥ महतीं च श्रियं प्राप्य पुत्रपौत्रसमन्वितः ॥ भुक्त्वा राज्यश्रियं सोथ गतः परमिकां गतिम् ॥ ११० ॥ एष ते विधिरुद्दिष्टः श्रावणे मासि सत्तम ॥ एकैकोपोषिताप्यस्तु राज्यमेकैव यच्छति ॥ किं पुनर्द्वादशैवात्र दद्युरेन्द्रं महत्पदम् ॥ १११ ॥ तद्वद्भाद्रपदे मासि शुक्लपक्षे तु द्वादशीम् ॥ संकल्प्य विधिना देवमर्चयेत्परमेश्वरम् ॥ ११२ ॥ नमोऽस्तु कल्किने पादौ हृषीकेशाय वै कटिम् ॥ म्लेच्छप्रध्वंसनायेति जगन्मूर्ते तथोदरम् ॥ ११३ ॥ शितिकण्ठाय कण्ठं तु खड्गपाणीति वै भुजौ ॥ शंखचक्रे स्वनाम्नात्र विश्वमूर्ते तथासितः ॥ ११४ ॥ एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ॥ विन्यस्य कल्किनं देवं सौवर्णं तत्र कारयेत् ॥ ११५ ॥ सितवस्त्रयुगच्छन्नं गंधपुष्पोपशोभितम् ॥ कृत्वा प्रभाते विप्राय प्रदेयः शास्त्रवित्तमे ॥ ॥ ११६ ॥ एवं कृते भवेद्यत्तु तन्निबोध नृपोत्तम ॥ दशावतारदानेन पूजने चैव तत्फलम् ॥ ११७ ॥ पूज्यते मत्स्यरूपेण सर्वज्ञत्वमभीप्सुभिः ॥ स्ववंशभरणायाथ कूर्मरूपी तु पूज्यते ॥ ११८ ॥ भवाद्धिनिमग्नैस्तु वाराहः पूज्यते हरिः ॥ नृसिंहनवरूपेण तद्वत्पापभयान्नरः ॥ ११९ ॥ वामनं मोहनाशाय वित्तार्थे जमदग्निजम ॥ क्रूरशत्रुविनाशाय यजेद्दाशरथिं बुधः ॥ १२० ॥ बलकृष्णौ यजेद्धीमान्पुत्रकामो न संशयः ॥ रूपकामो यजेद्बुद्धं कल्किनं शत्रुघातने ॥ सर्वां दत्त्वा विधानेन पूजां प्राप्नोति वांछितम् ॥ १२१ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ तद्वदाश्वयुजे मासि शुक्लपक्षे तु द्वादशीम ॥ संकल्प्याभ्यर्चयेद्देवं पद्मनाभं सनातनम् ॥ १२२ ॥ पद्मनाभाय पादौ तु कटिं वै पद्मयोनये ॥ उदरं सर्वदेवाय पुष्कराक्षाय वा उरः ॥ अव्ययाय तथा शीर्षं प्राग्वदस्त्राणि पूजयेत् ॥ १२३ ॥ ततस्तस्याग्रतः कुंभं माल्यवस्त्रसमन्वितम् ॥ यथाशक्त्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काञ्चनेन पद्मनाभेति भूषितम् ॥ १२४ ॥ रात्रौ तु जागरं कृत्वा प्रभाते विमले ततः ॥ ब्राह्मणे तत्प्रदातव्यं संसारभयभीरुणा ॥ १२५ ॥ एवं कृते तु यत्पुण्यं तद्वक्तुं शक्यते कथम् ॥ ब्रह्महत्यादिपापानि किं तु पंचैव भारत ॥ नश्यंति कृतपुण्यस्य विष्णोर्नामानुकीर्तनात् ॥ १२६ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु राजन्महाबाहो कार्तिके मासि द्वादशीम् ॥ उपोष्य विधिना येन यथास्याः प्राप्यते फलम् ॥ १२७ ॥ प्राग्विधानेन संकल्प्य वासुदेवं प्रपूजयेत् ॥ अनुलोमेन देवेशं पूजयित्वा विचक्षणः ॥ नमो दामोदरायेति सर्वाङ्गं पूजयेद्धरिम् ॥ १२८ ॥ एवं संपूज्य विधिना तस्याश्च चतुरो घटान् ॥ स्थापयेद्रत्नगर्भांश्च सितचन्दनचर्चितान् ॥ १२९ ॥ स्रग्दामालंबितग्रीवान्सितवस्त्रैश्च गुण्ठितान् ॥ स्थगितांस्ताम्रपात्रे तु तिलपूर्णैः सकांचनैः ॥ १३० ॥ चत्वारः सागरास्ते च कथिता राजसत्तम ॥ तन्मध्ये प्राग्विधानेन सौवर्णं स्थापयेद्धरिम्॥१३१॥ योगेश्वरमंगनिधिं विरक्तं पीतवाससम् ॥ तद्वदेवं च संपूज्य जागरं तत्र कारयेत् ॥ १३२ ॥ कृत्वा तु वैष्णवं योगं यजेद्योगेश्वरं हरिम् ॥ षोडशे वै रथांगेषु रजोभिर्बहुभिः कृते ॥ १३३ ॥ एवं कृत्वा प्रभाते तु ब्राह्मणान्पञ्च भोजयेत् ॥ चत्वारः कलशा देयाश्चतुर्णां पञ्चमस्य हि ॥ १३४ ॥ योगेश्वरं च सौवर्णं दापयेत्प्रयतः शुचिः ॥ ब्राह्मणाय समं दत्तं द्विगुणं वेदवादिने ॥१३५॥ वेदवेदांगविदुषे सहस्रगुणितं भवेत् ॥ पंचमस्य रहस्यं तु ससमं चोपपादयेत् ॥१३६॥ विधानं तस्य पंचैव दत्त्वा कोटिगुणोत्तरम् ॥ इतिहासपुराणज्ञे दत्तं चैवाक्षयं भवेत् ॥ १३७ ॥ पञ्चदत्त्वा विधानेन द्वादश्यां विष्णुमर्च्य च ॥ विप्राणां भोजनं दद्याद्यथाशक्त्या सदक्षिणम् ॥ दीनानाथादिकान्सर्वान्पूजयेच्छक्तितो नृप ॥१३८॥ धरणीव्रतमेतत्तु पुरा कृत्वाप्रजापतिः ॥ प्रजां लेभे ततो मुक्तिर्ब्रह्मणा विष्णवे शुभे ॥ १३९ ॥ युवनाश्वो हि राजर्षिरनेन विधिना पुरा ॥ मान्धातारं सुतं लेभे परं ब्रह्म च शाश्वतम् ॥ १४० ॥ तथा हैहयदायादः कृतवीर्यो नराधिपः ॥ चक्रवर्तिसुतं लेभे सहस्रार्जुनमूर्जितम् ॥१४१॥ शकुंतलाप्येवमेव व्रतं चीर्त्वा नरोत्तमम् ॥ लेभे शाकुन्तलं पुत्रं दुष्यंतश्चक्रवर्तिनम् ॥ १४२ ॥ तथा पुराणराजानो वेदोक्ताश्चक्रवर्तिनः ॥ अनेन विधिना प्राप्ताश्चक्रवर्तित्वमुत्तमम् ॥ १४३ ॥ धरण्या अपि पाताले मग्नयाचरितं पुरा ॥ व्रतमेतत्ततो नाम्ना धरणीव्रतमुच्यते ॥ १४४ ॥ समाप्तेऽस्मिंस्तदा देवी हरिणा क्रोडरूपिणा ॥ उद्धृता दशनाग्रेण स्थापिता नौरिवांभसि ॥ १४५ ॥ धरणीव्रतमेतत्ते कथितं पांडुनन्दन ॥ य इदं शृणुयाद्भक्त्या यश्च कुर्यान्नरोत्तम ॥ सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ १४६ ॥ चीर्णं रसातलतले गतया धरण्या तेन प्रसिद्धिमगमद्धरणीव्रतेति ॥ सद्यः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समाचरति धर्मरतिर्द्धरित्र्यामुद्धृत्य सप्त पुरुषान्स परं प्रयाति ॥ १४७ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे धरणीव्रतं नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ किमभीष्टवियोगशोकसंघाल्लघु इह समुपोपतां व्रतं वा ॥ विभवोद्भवकारि भूतलेऽस्मिन्भवति विभो भयसूदनं च पुंसाम् ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ परिपृष्टमिदं जगत्प्रियं ते विबुधानामपि दुर्लभं महत्त्वात् ॥ तव भक्तिमतस्तथापि वक्ष्ये व्रतमिन्द्रासुरदानवेषु गुह्यम् ॥२॥ पुण्यमाश्वयुजे मासि विशोकद्वादशीव्रतम् ॥ दशम्यां लघुभुग्विद्वानारभेन्नियमेन तु ॥ ३ ॥ उदङ्मुखः प्राङ्मुखो वा दंतधावनपूर्वकम् ॥ एकादश्यां निराहारः सम्यगभ्यर्च्य केशवम् ॥ ४ ॥ विधिवत्त्वां समभ्यर्च्य भोक्ष्यामि अपरेऽहनि ॥ एवं नियमकृत्सुप्त्वा प्रातरुत्थाय मानवः ॥ ५ ॥ स्नानं सर्वौषधैः कुर्यात्पञ्चगव्यजलेन तु ॥ शुक्लमाल्यांबरस्तद्वत्पूजयेच्छ्रीशमुत्पलैः ॥ ६ ॥ विशोकाय नमः पादौ जंघे च वरदाय वै ॥ श्रीशाय जानुनी तद्वदूरू च जलशायिने ॥ ७ ॥ कंदर्पाय नमो गुह्ये माधवाय नमः कटिम् ॥ दामोदरायेत्युदरं पार्श्वे च विपुलाय वै ॥ ८ ॥ नाभिं च पद्मनाभाय हृदयं मन्मथाय वै ॥ श्रीधराय विभोर्वक्षः करौ मधुभिदे नमः ॥ ९ ॥ चक्रिणे नाम बाहुं च दक्षिणं गदिने नमः ॥ वैकुण्ठाय नमः कण्ठमास्यं यज्ञमुखाय वै ॥ १० ॥ नासामशोकनिधये वासुदेवाय चाक्षिणी ॥ ललाटं वामनायेति किरीटं विश्वरूपिणे ॥ ११ ॥ नमः सर्वात्मने तद्वच्छिर इत्यभिपूजयेत् ॥ एवं संपूज्य गोविंदं फलमाल्यानुलेपनैः ॥ १२ ॥ ततस्तस्याग्रतो भव्यं स्थंडिलं कारयेन्मृदा ॥ चतुरस्रं समंताच्चारत्निमात्रमुदग्भवम् ॥ १३ ॥ नदीवालुकया पूर्णं लक्ष्म्याकृतिं कृती न्यसेत् ॥ स्थंडिले सूर्यमारोप्य लक्ष्मीमित्यर्चयेद्बुधः ॥ १४ ॥ नमो देव्यै नमः शांत्यै नमो लक्ष्म्यै नमः श्रियै ॥ नमः पुष्टयै नमस्तुष्टयै नमो हृष्टयै नमोनमः ॥ १५ ॥ विशोका दुःखनाशाय विशोका वरदास्तु मे ॥ विशोका चास्तु संतत्यै विशोका सर्वसिद्धये ॥१६॥ ततः शुक्लांबरधरो शूर्पं संवेष्ट्य पूजयेत् ॥ भक्ष्यैर्नानाविधैस्तद्वत्सुवर्णकमलेन च ॥ १७ ॥ रजनीषु च सर्वासु पिबेद्दर्भोदकं व्रती ॥ ततस्तु नृत्यगीतादि कारयेत्सर्वरात्रकम् ॥ १८ ॥ यामत्रये व्यतीते तु सुप्त्वा स्वस्थोपमानसः ॥ अभिगम्य च विप्राणां मिथुनानि सदार्चयेत् ॥ १९ ॥ शक्तितस्त्रीणि चैकं वा वस्त्रमाल्यानुलेपनैः ॥ शयनास्थानि पूज्यानि नमोऽस्तु जलशायिने ॥ २० ॥ ततस्तु गीतवाद्याद्यै रात्रौ जागरणे कृते ॥ प्रभाते विमले स्नानं कृत्वा दांपत्यमर्चयेत् ॥ २१ ॥

१ हृष्टयै कृष्टयै नमोनमः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भोजनं च यथाशक्त्या वित्तशाठ्यविवर्जितः ॥ भुक्त्वा श्रुत्वा पुराणानि तद्दिनं त्वतिवाहयेत् ॥ २२ ॥ अनेन विधिना सर्वं मासिमासि समाचरेत् ॥ व्रतांते शयनं दद्याद्गुडधेनुसमन्वितम् ॥ सोपधानकविश्राममास्तरणं शुभम् ॥ २३ ॥ यथा न लक्ष्मीर्देवेश त्वां परित्यज्य गच्छति ॥ तथा कुरु यथायोग्यमशोकं चास्तु मे सदा ॥२४॥ यथा देवेन रहिता न लक्ष्मीर्जायते क्वचित् ॥ तथा विशोकता मेऽस्तु भक्तिरग्र्या च केशवे ॥ ॥ २५ ॥ मंत्रेणानेन ध्यात्वा तु गुडधेनुसमन्वितम् ॥ शूर्पं च लक्ष्म्या सहितं दातव्यं भूतिमिच्छता ॥ २६ ॥ उत्पातं करवीरं च बाणमम्लानकुंडलम् ॥ केसरं सिंदुवारं च मल्लिकागंधपाटलम् ॥ कादंबैः कुंकुमैर्जात्या तथान्यैरपि पूजयेत् ॥ २७ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ गुडधेनुविधानं मे त्वमाचक्ष्व जगत्पते ॥ किंरूपा केन मंत्रेण दातव्या तदिहोच्यताम् ॥२८॥ ॥ श्रीकृष्ण उवाच ॥ ॥ गुडधेनुविधानं च यद्रूपमिह यत्फलम् ॥ तदिदानीं प्रवक्ष्यामि सर्वपापप्रणाशनम् ॥ २९ ॥ कृष्णाजिनं चतुर्हस्तं प्रागेवं विन्यसेद्भुवि ॥ गोमयेनानुलिप्तायां दर्भानास्तीर्य सर्वतः ॥ ॥ ३० ॥ लब्धेन कांचनं तद्वद्वत्सं च परिकल्पयेत् ॥ प्राङ्मुखीं कल्पयेद्धेनुमुदक्पादां सवत्सिकाम् ॥ ३१ ॥ उत्तमा गुडधेनुः स्यात्सदा भारचतुष्टया ॥ वत्सं भारेण कुर्वीत द्वाभ्यां वै मध्यमा स्मृता ॥ ३२ ॥ अर्द्धभारेण वत्सः स्यात्कनिष्ठा भारकेण तु ॥ चतुर्थांशेन वत्सः स्याद्गृहवित्तानुसारतः ॥ ३३ ॥ धेनुवत्सौ कृतावेतौ सितसूक्ष्मांबरावृतौ ॥ शुक्तिकर्णाविक्षुपादौ शुक्तिमुक्ताफलेक्षणौ ॥ ३४ ॥ सितसूत्रशिरालौ तु सितकंबलकंबलौ ॥ ताम्रगल्लकपृष्ठौ तौ सितचामररोमकौ ॥ ३५ ॥ विद्रुमभ्रूयुगावेतौ नवनीतस्तनान्वितौ ॥ क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ॥ ॥३६॥ सुवर्णशृंगाभरणौ राजतखुरसंयुतौ ॥ नानाफलसमायुक्तौ घ्राणगंधकरंडकौ ॥ इत्येवं रचयित्वा तु धूपदीपैरथार्चयेत् ॥ ३७ ॥ या लक्ष्मीः सर्वभूतानां या च देवे व्यवस्थिता ॥ धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ ३८ ॥ विष्णोर्वक्षसि या लक्ष्मीः स्वाहायां च विभावसौ ॥ चंद्रार्कशक्रशक्तिर्या धेनुरूपास्तु सा श्रिये ॥ ३९ ॥ चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ॥ या लक्ष्मीर्लोकपालानां सा धेनुर्वरदास्तु मे ॥ ॥ ४० ॥ स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां पुनः ॥ सर्वपापहरे धेनो तस्माद्भूतिं प्रयच्छ मे ॥ ४१ ॥ एवमामंत्र्य तां धेनुं ब्राह्मणाय निवेदयेत् ॥ विधानमेतद्धेनूनां सर्वासामिह पठ्यते ॥ ४२ ॥ यास्तु पापविनाशिन्यः श्रूयंते दश धेनवः ॥ तासां स्वरूपं वक्ष्यामि नामानि च नराधिप ॥ ४३ ॥ प्रथमा गुडधेनुः स्याद् घृतधेनुरथापरा ॥ तिलधेनुस्तृतीया स्याच्चतुर्थी मधुधेनुका ॥ ४४ ॥ जलधेनुः पंचमी तु षष्ठी तु क्षीरसंभवा ॥ सप्तमी शर्कराधेनुर्दधिधेनुरथाष्टमी ॥ रसधेनुश्च नवमी दशमी स्यात्स्वरूपतः ॥ ४५ ॥ कुंभा स्युर्दशधेनूनामितरासां तु राशयः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुवर्णधेनुमप्यत्र केचिदिच्छंति मानवाः ॥ ४६ ॥ नवनीतेन रत्नैश्च तथाप्यन्ये महर्षयः ॥ एतदेव विधानं स्यात्त एवोपस्कराः स्मृताः ॥ ४७ ॥
मंत्रावाहनसंयुक्तां सदा पर्वणिपर्वणि ॥ यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदा ॥ ४८ ॥ गुडधेनुप्रसंगेन सर्वास्तव मयोदिताः ॥ अशेषयज्ञ
फलदाः सर्वपापहराः शुभाः ॥ ४९ ॥ व्रतानामुत्तमं यत्स्याद्विशोकद्वादशीव्रतम् ॥ तदंगत्वेन चैवैषा गुडधेनुः प्रशस्यते ॥ ५० ॥ अयने
विषुवे पुण्ये व्यतीपातेऽथ वा पुनः ॥ गुडधेन्वादयो देया उपरागादिपर्वसु ॥ ५१ ॥ विशोकद्वादशी चैषा सर्वपापहरा शुभा ॥ यामुपोष्य
नरो याति तद्विष्णोः परमं पदम् ॥ ५२ ॥ इह लोके तु सौभाग्यमायुरारोग्यमेव च ॥ वैष्णवं पदमाप्नोति मरणे सद्गतिर्भवेत् ॥ ५३ ॥
भवार्बुदसहस्राणि दश चाष्टौ च धर्मवित् ॥ न शोकदुःखदौर्गत्यं तस्य संजायते नृप ॥ ५४ ॥ नारी वा कुरुते यातु विशोकद्वादशीमि
माम् ॥ नृत्यगीतपरा नित्यं सापि तत्फलमाप्नुयात् ॥ ५५ ॥ इति पठति य इत्थं यः शृणोतीह सम्यङ् मधुपुरनरकारेरर्चनं यश्च पश्येत् ॥
मतिमपि च जनानां यो ददातीन्द्रलोके वसति स विबुधाद्यैः पूज्यमानः सदैव ॥ ५६ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि
श्रीकृष्णयुधिष्ठिरसंवादे विशोकद्वादशीव्रतं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु
भूपाल वक्ष्यामि विष्णुव्रतमनुत्तमम् ॥ विभूतिद्वादशीं नाम सर्वामरनमस्कृतम् ॥ १ ॥ कार्त्तिके वाथ वैशाखे मार्गशीर्षे च फाल्गुने ॥ आषाढे वा
दशम्यां च शुक्लायां लघुभुङ्नरः ॥ २ ॥ कृत्वा सायंतनीं संध्यां गृह्णीयान्नियमं बुधः ॥ एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ॥ ३ ॥ द्वाद
श्यां द्विजसंयुक्तः करिष्ये भोजनं विभो ॥ तदविघ्नेन मे यातु साफल्यं मधुसूदन ॥ ४ ॥ ततः प्रभात उत्थाय कृतस्नानजपः शुचिः ॥ पूजयेत्पु
ण्डरीकाक्षं शुक्लमाल्यानुलेपनैः ॥ ५ ॥ भूतिदाय नमः पादौ विशोकाय च जानुनी ॥ नमः शिवायेत्यूरू च विश्वमूर्ते नमः कटिम् ॥ ६ ॥ कंद
र्पाय नमो मेढ्रमादित्याय नमः करौ ॥ दामोदरायेत्युदरं वासुदेवाय च स्तनौ ॥ ७ ॥ माधवायेति हृदयं कंठं वैकुंठिने नमः ॥ श्रीधराय मुखं
केशान्केशवायेति पांडव ॥ ८ ॥ पृष्ठं शार्ङ्गधरायेति श्रवणौ वरदाय वै ॥ स्वनाम्ना शंखचक्रासिगदापरशुपाणये ॥ ९ ॥ सर्वात्मने शिरो राजन्नम
इत्यभिपूजयेत ॥ दशावताररूपाणि प्रतिमासं क्रमान्नृप ॥ १० ॥ दत्तात्रेयं यथा व्याससमुत्पलेन समन्वितम् ॥ दद्यादनेन विधिना पाखंडानपि
वर्जयेत ॥ ११ ॥ समाप्यैवं यथाशक्त्या द्वादश द्वादशीर्नरः ॥ संवत्सरांते लवणपर्वतेन सह प्रभो ॥ शय्यां दद्यान्मुनिश्रेष्ठ गुरवे रससंयुताम् ॥
॥ १२ ॥ ग्रामं च शक्तिमान्दद्यात्क्षेत्रं वा भवनान्वितम् ॥ गुरुं संपूज्य विधिवद्वस्त्रालंकारभूषणैः ॥ १३ ॥ अन्यानपि यथाशक्त्या भोजयित्वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्विजोत्तमान् ॥ तर्पयेद्वस्त्रगोदानैरन्यत्र धनसंचयात् ॥ १४ ॥ अल्पवित्तो यथाशक्त्या स्तोकंस्तोकं समाचरेत् ॥ यश्चातिनिःस्वः पुरुषो भक्तिमा न्माधवं प्रति ॥ पुष्पार्चनविधानेन स कुर्याद्वत्सरत्रयम् ॥ १५ ॥ अनेन विधिना यस्तु विभूतिद्वादशीव्रतम् ॥ कुर्यात्स पापनिर्मुक्तः पितॄणां तार येच्छतम् ॥ १६ ॥ जन्मनां शतसाहस्रं न शोकफलभाग्भवेत् ॥ न च व्याधिर्भवेत्तस्य न दारिद्र्यं न बन्धनम् ॥ १७ ॥ वैष्णवो वाथ शैवो वा भवेज्जन्मनिजन्मनि ॥ यावद्युगसहस्राणां शतमष्टोत्तरं भवेत् ॥ तावत्स्वर्गे वसेद्राजन्भूपतिश्च पुनर्भवेत् ॥ १८ ॥ पुरा रथंतरे कल्पे राजासीत्पु ष्पवाहनः ॥ नाम्ना लोकेषु विख्यातस्तेजसा सूर्यसन्निभः ॥ १९ ॥ तपसा तस्य तुष्टेन चतुर्वक्रेण भारत ॥ कमलं काञ्चनं दत्तं यथाकामगतिः सदा ॥ २० ॥ समस्तभृत्यसहितः सांतःपुरपरिस्थितः ॥ द्वीपानि सुरलोकं च यथेष्टं विचरत्यसौ ॥ २१ ॥ कल्पादौ सप्तमे द्वीपे तेन पुष्क रवासिनः ॥ लोके संपूजिता यस्मात्पुष्करद्वीप उच्यते ॥ २२ ॥ तदेव ब्रह्मणा दत्तं यानमस्य यतो नृप ॥ पुष्पवाहनमित्याहुस्तस्मात्तं देवदा नवाः ॥ २३ ॥ नागस्य तस्यास्य जगत्त्रयेपि ब्रह्मांबुजस्थस्य तपोऽनुभावात् ॥ पत्नी च तस्याप्रतिमा नरेन्द्र नारीसहस्रैरभितोऽभिनंद्या॥२४॥ नाम्ना च लावण्यवती बभूव या पार्वतीवेष्टतमा भवस्य ॥ तस्यात्मजानामयुतं बभूव धर्मात्मनामग्र्यधनुर्द्धराणाम् ॥ २५ ॥ तदात्मनः सर्वमवेक्ष्य राजा मुहुर्मुहुर्विस्मयमाससाद ॥ सोभ्यागतं पूज्य मुनिप्रवीरं प्रचेतसं वाचमिमां बभाषे ॥ २६ ॥ कस्माद्विभूतिरमला मम मर्त्यपूज्या जाया च सर्वविजितामरसुन्दरी या ॥ भार्या त्वनल्पतपसा वसुतोषितेन दत्तं ममांबुजगृहं परमप्रसादात् ॥ २७ ॥ यस्मिन्प्रविष्टमपि कोटिशतं नृपाणां सामात्यकुंजरनराश्वघनावृतानाम् ॥ नालक्ष्य सम्बाधतया हि बाधस्ताराग्रणैरपि सुरासुरलोकपालैः ॥ २८ ॥ तस्मात्किमन्यजननीजठरोद्भवेन धर्मादिकं कृतमशेषजनातिगं स्यात् ॥ सम्यङ्मयाथ तनयैरनया महर्षे माहात्म्यया तदखिलं कथय प्रचेतः ॥२९॥ तस्य तद्वचनं श्रुत्वा ध्यानेना वेक्ष्य चाखिलम् ॥ प्रचेतास्तमुवाचाथ शृणु भूप पुरातनम् ॥ ३० ॥ लुब्धकस्त्वं पुरा राजन्सर्वसत्त्वभयंकरः ॥ आसीदसाधुचरितः सुहृन्मित्रवि वर्जितः ॥ ३१ ॥ यतमध्यो ह्रस्वकेशः कृष्णांगो रक्तलोचनः ॥ धनुष्पाणिर्वनगतः कृतांतकसमो भवान् ॥३२॥ अभूदनावृष्टिरतीव रौद्रा कदाचि दाहारनिमित्तरोपः ॥ पद्मान्यथादाय ततो बहूनि गतं पुरं वैदिशनामधेयम् ॥ ३३ ॥ उन्मूल्य लोभाच्च पुरं समस्तं भ्रांतं त्वयाशेषमहत्तदा सीत् ॥ क्रेता न कश्चित्कमलेषु जातस्तोके भृशं क्षुत्परिपीडितश्च ॥ ३४ ॥ उपविष्टस्त्वमेकस्मिन्सभार्यो भवनांगणे ॥ अथ मंगलशब्दस्तु त्वया रात्रौ तथा श्रुतः ॥ ३५ ॥ समाप्य माघमासस्य द्वादश्यां लवणाचलम् ॥ निवेदयंती गुरवे शय्यां चोपस्करान्विताम् ॥ ३६ ॥ अलंकृत्य हृषीकेशं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सौवर्णं परमं पदम् ॥ साथ दृष्ट्वा ततस्ताभ्यामिदं चित्तेवधारितम् ॥३७॥ किमेभिः कमलैः कार्यं वरं विष्णुरलंकृतः ॥ इति भक्तिस्तदा जाता दांपत्यस्य नरेश्वर ॥ ३८ ॥ तत्प्रसंगात्समभ्यर्च्य केशवं लवणाचलम् ॥ शय्या च पुष्पप्रकरैः पूजिताभूच्च सर्वदा ॥ ३९ ॥ अथानंगवती तुष्टा तयोर्हेमशतत्रयम् ॥ प्रादाद्गृहीतं ताभ्यां च न तत्सर्वावलंबनात् ॥ ४० ॥ अनंगवती च पुनस्तयोरन्नं चतुर्विधम् ॥ आनाय्योपहृतं कृत्वा भुज्यतामिति भूपते ॥ ॥४१॥ ताभ्यां तु तदपि त्यक्तं भोज्यावः श्वो वरानने ॥ प्रसंगाच्चोपवासेन तवाद्यास्तु सुखावहः ॥ ४२ ॥ जन्मप्रभृति पापिष्ठावावां देवि दृढव्रते ॥ सत्प्रसंगाद्धनुर्मध्ये धर्मलाभस्तु चावयोः ॥ ४३ ॥ इति जागरणं ताभ्यां प्रसंगात्तदनुष्ठितम् ॥ प्रभाते च तया दत्ता शय्या सलवणाचला ॥ ४४ ॥ ग्रामश्च गुरवे भक्त्या विप्रेभ्यो द्वादशैव हि ॥ वस्त्रालंकारयुक्तांगा गावश्च कनकांचिताः ॥ ४५ ॥ भोजनं च सुहृन्मित्रदीनांधकृपणैः समम् ॥ तत्तु लुब्धकदांपत्यं पूजयित्वा विसर्जितम् ॥४६॥ भवाँस्तु लुब्धको जातः सपत्नीको नरेश्वरः ॥ पुष्पाणां प्रकरे तस्मात्केशवस्य प्रपूजनम् ॥४७॥ प्राप्तं सुदुर्लभं वीर त्वया पुष्करमन्दिरम् ॥ तस्य सर्वस्य माहात्म्यादलं न तपसा नृप ॥ ४८ ॥ यथा कामगतं दक्षं पद्मयोनिं विरिंचिना ॥ संतुष्टस्तस्य राजेन्द्र ब्रह्मरूपी जनार्दनः ॥ ४९ ॥ शय्यानंगवती वेश्या कोमदेशस्य सांप्रतम् ॥ पत्नी सपत्नी संजाता रत्या प्रीतिरिति श्रुता ॥ ५० ॥ लोकेष्वानंदजननी सकलामरपूजिता ॥ तदप्युत्सृज्य राजेन्द्र निर्वाणं समवाप्स्यसि ॥ ५१ ॥ इत्युक्त्वा स मुनिः सर्वं तत्रैवांतार्हितोभवत् ॥ राजा यथोक्तं च पुनः स चक्रे पुष्पवाहनः ॥ ५२ ॥ इमामाचरतो ब्रह्मन्नखण्डव्रतमाचरेत् ॥ यथाकथंचित्कालेन द्वादश द्वादशीर्मुने ॥ कर्तव्याः शक्तितो देया विप्रेभ्यो दक्षिणा नृप ॥ ५३ ॥ इति कलुषविदारणं जनानामिति पठति शृणोति चातिभक्त्या ॥ मतिमपि च ददाति देवलोके वसति स परःशतानि वत्सराणाम् ॥ ५४ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे विभूतिद्वादशीव्रतवर्णनं नाम पंचाशीतितमोऽध्यायः ॥ ८५ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ श्रोतुमिच्छामि भगवन्मदनद्वादशीव्रतम् ॥ सुतानेकोनपंचाशद्येन लेभे दितिः पुरा ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ तद्वशिष्ठादिभिः प्रोक्तमित्येका तिथिरुत्तमा ॥ विस्तरेण तदेवेदं मत्सकाशान्निबोधत ॥ २ ॥ चैत्रे मासे सिते पक्षे द्वादश्यां नियतव्रतः ॥ स्थापयेदव्रणं कुंभं सिततंडुलपूरितम् ॥ ३ ॥ नानाफलयुतं तद्वदिक्षुदण्डसमन्वितम् ॥ सितवस्त्रयुगच्छन्नं सितचन्दनचर्चितम् ॥ ४ ॥ नानाभक्ष्यसमोपेतं सहिरण्यं च शक्तितः ॥ ताम्रपात्रं गुडोपेतं तस्योपरि निवेदयेत ॥ ५ ॥ तस्योपरि तथा कामं कदलीदलसंस्थितम् ॥ कुर्याच्छर्करयोपेतमिति तस्य समीपतः ॥ ६ ॥ गंधं पुष्पं तथा दद्याद्गीतं वाद्यं च कारयेत् ॥ तदलाभे कथां कुर्यात्कामकेशवयो



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नरः ॥ ७ ॥ कामं नाम्ना हरेरर्चां स्नापयेद्गंधवारिणा ॥ शुक्लपुष्पाक्षततिलैरर्चयेन्मधुसूदनम् ॥ ८ ॥ कामाय पादौ संपूज्य जंघे सौभाग्यदाय च ॥ मन्मथाय तथा मेढ्रं माधवाय कटिं नमः ॥ ९ ॥ शांतोदरायेत्युदरमनंगायेत्युरो हरेः ॥ मुखं पद्ममुखायेति बाहु पञ्चशराय वै ॥ १० ॥ नमः सर्वात्मने मौलिमर्चयेदिति केशवम् ॥ ततः प्रभाते कुंभं च ब्राह्मणाय निवेदयेत् ॥ ११ ॥ ब्राह्मणान्भोजयेद्भक्त्या स्वयं च लवणादृते ॥ भक्त्याथ दक्षिणां दद्यादिमं मंत्रमुदीरयेत् ॥ १२ ॥ प्रीयतामत्र भगवान्कामरूपी जनार्दनः ॥ हृदये सर्वभूतानां यथा वेदोऽभिधीयते ॥ १३ ॥ अनेन विधिना सर्वं मासिमासि समाचरेत् ॥ फलमामलकं प्राश्य द्वादश्यां भूतले स्वपेत् ॥ १४ ॥ ततस्त्रयोदशे मासि घृतधेनुसमन्विताम् ॥ शय्यां दद्याद्द्विजेन्द्राय सर्वोपस्करसंयुताम् ॥ १५ ॥ काञ्चनं कामदेवं च शुक्लां गां च पयस्विनीम् ॥ वासोभिर्द्विजदांपत्यं पूज्य शक्त्या विभूषणैः ॥१६॥ होमः शुक्लतिलैः कार्यः कामनामानि कीर्तयेत् ॥ गव्येन सर्पिषा तत्र पायसेन च धर्मवित् ॥ १७ ॥ विप्रेभ्यो भोजनं दद्याद्वित्तशाठ्यं विवर्जयेत् ॥ इक्षुदंडान्नरो दद्यात्पुष्पमालां च शक्तितः ॥ १८ ॥ यः कुर्याद्विधिनानेन मदनद्वादशीमिमाम् ॥ सर्वपापविनिर्मुक्तः प्राप्नोति परमं पदम् ॥ १९ ॥ इह लोके वरान्पुत्रान्सौभाग्यं सुखमश्नुते ॥ कश्यपो व्रतमाहात्म्यादागत्य परया मुदा ॥ २० ॥ चकाराकर्कशां भूयो रूपलावण्यसंयुताम् ॥ वरेण च्छन्दयामास या च वव्रे वरं वरम् ॥ पुत्रं शक्रवधार्थाय समर्थममितौजसम् ॥ २१ ॥ प्रार्थयामि महाभाग्यं सर्वामरनिषूदनम् ॥ कश्यपः प्राह तां भद्रे एवमस्तु सुशोभने ॥ २२ ॥ संवत्सरशतं त्वेकं गर्भो धार्यः सुखेप्सया ॥ संध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ॥ २३ ॥ न स्थातव्यं न गंतव्यं वृक्षमूलेषु सर्वदा ॥ नोपस्करे भुवि विशेन्मुसलोलूखलादिषु ॥ २४ ॥ जलं न चावगाहेत शून्यागारं विवर्जयेत् ॥ वर्जयेत्कलहं गेहे गात्रभंगं तथैव च ॥२५॥ मुक्तकेशी न तिष्ठेत नाशुचिः स्यात्कथंचन ॥ न शयीतोन्नतशिरा न चाप्यादशिराः क्वचित् ॥ २६ ॥ न वस्त्रहीना नोद्विग्ना नार्द्रपादा न भूतले ॥ नामंगल्यां वदेद्वाचं न च हास्यपरा भवेत् ॥ २७ ॥ कुर्याच्च गुरुशुश्रूषां नित्यं मंगलतत्परा ॥ सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥ २८ ॥ कुस्त्रियो नाभिभाषेत वस्त्रवातं विवर्जयेत् ॥ मृतवत्सादिसंसर्गं परगेहं च सुंदरि ॥ २९ ॥ न शीघ्रं मार्गमाक्रामेल्लंघयेन्न महानदीम् ॥ न च बीभत्सकं किंचिन्न च वीक्षेद्भयानकम् ॥ ३० ॥ गुरुवातुलमाहारमजीर्णं न समाचरेत् ॥ संपूर्णगर्भिण्यायामं व्यायामं वा विवर्जयेत् ॥ ३१ ॥ गर्भो रक्ष्यः सदौषध्या हृदि धार्यो न मत्सरः ॥ अनेन विधिना साध्वि शोभनं पुत्रमाप्नुयात् ॥ ३२ ॥ अन्यथा गर्भपतनं स्तंभनं वा प्रवर्तते ॥ तस्मात्त्वमनया वृत्त्या गर्भेऽस्मिंश्च समाचरेः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भविष्यति शुभः पुत्रः सर्वावयवसुंदरः ॥ ३३ ॥ स्वस्त्यस्तु ते गमिष्यामि तथेत्युक्तस्तया च सः ॥ पश्यतां सर्वभूतानां तत्रैवांतर्हितोभवत् ॥ ॥ ३४ ॥ ततः सा कश्यपोक्तेन विधिना समतिष्ठत ॥ अथाप पुत्रान्पंचाशदेकोनान्पांडुनंदन ॥ ३५ ॥ एवमन्यापि या नारी मदनद्वादशीमिमाम् ॥ करोति पुत्रानाप्नोति सह भर्त्रा सुखी भवेत् ॥ ३६ ॥ एकोनमर्द्धशतमाप दितिः सुतानां येन व्रतेन बलवीर्यसमन्वितानाम् ॥ मर्त्यः समाचरति पुत्रधनाभिलाषी तत्सर्वमत्र सफलं भवतीह पुंसः ॥ ३७ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे मदनद्वादशीव्रतवर्णनं नाम षडशीतमोऽध्यायः ॥ ८६ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कांतारवनदुर्गेषु सुप्रसन्नाटवीषु च ॥ समुद्रतरणे दाने संग्रामे तस्करार्दने ॥ १ ॥ कां देवतां स्मरेत्कृष्ण परित्राणकरीमिह ॥ कथं च देवः पुरुषः परित्राणं स्मृतो जनैः ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ सर्वमंगलमागल्यां दुर्गां भगवतीमिमाम् ॥ नाप्नोति दुःखं पुरुषः संस्मरन्सर्वमङ्गलाम् ॥३॥ अलक्ष्यां लक्ष्यभूतानां संस्मरन्सर्वमंगलाम् ॥ न भयं समवाप्नोति पुरुषः पार्थ कुत्रचित् ॥ ४ ॥ यदा तां प्रतिजिज्ञासुरवंत्यामहमागतः ॥ पुरा संदीपनिः पार्थ बलेन सह भारत ॥ ५ ॥ प्राप्तविद्येन च मया प्रतिज्ञातास्य दक्षिणा ॥ दिव्यं स्तवं विदित्वा मे तेनाहं याचितः प्रभो ॥ ६ ॥ प्रभासतीर्थे पुत्रो मे गतः केनाप्यसौ हृतः ॥ तमानय महाबाहो सत्यं कुरु वचो मम ॥ ७ ॥ उपाध्यायस्य वचनाद्वैवस्वतपुरे मया ॥ प्राप्तः संदीपनेः पुत्रः समानीतः क्षणादसौ ॥ ८ ॥ दक्षिणां तामुदाहृत्य प्रस्थितौ पुनरागतौ ॥ स्थानमेतत्स्वपादांकं कृत्वावां गृहमागतौ ॥९॥ ततःप्रभृति पुत्रार्थाः पूजयंति जनाः सदा ॥ मां चैव बलभद्रं च मध्यस्थां सर्वमंगलाम् ॥ १० ॥ वामे नारायणो हंस एवमेव च के भवेत् ॥ अबाधकं योर्चयते तृतीयं कुंतिनंदन ॥ ११ ॥ त्रयोदश्यां सितपक्षे मासिमासि यतव्रतः ॥ नक्तेनैवोपवासेन एकभक्तेन वा पुनः ॥ १२ ॥ गन्धपुष्पैश्च मधुभिः सीधुभिश्च सुरासवैः ॥ मृन्मयीं कांचनीं वापि कृत्वा प्रतिकृतिं तु यः ॥ १३ ॥ यक्षगन्धर्वलिक्षेपैः पललौदनसंसृजैः ॥ योऽभ्यर्चयति राजेन्द्र सर्वपापैः प्रमुच्यते ॥ १४ ॥ नारी वा भर्तृसहिता स्वर्गलोके महीयते ॥ १५ ॥ अंबाबिके त्रिदशमेऽह्नि सिते सदैव यः पूजयेत्कुसुममांससुरोपहारैः ॥ नश्यंति तस्य भवनेष्वतिभीषणानि चौराग्निराजजनितानि भयानि सद्यः ॥ १६ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे अबाधकव्रतवर्णनं नाम सप्ताशीतमोऽध्यायः ॥ ८७ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ ब्रूहि मे यदुशार्दूल व्रतं गन्धविनाशनम् ॥ कटुतिक्ताम्लदेहोत्थदौर्भाग्यशमनं तथा ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ इमं प्रश्नं पुरा पार्थ जातूकर्ण्यो महामुनिः ॥ पृष्टो राज्ञ्या विष्णुभक्त्या कालनंदनजातया ॥ २ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथयामास संपृष्टा सूपविष्टा शृणोति सा ॥ देवी कृताञ्जलिपुटा जातूकर्ण्योवदद्व्रतम् ॥ ३ ॥ ज्येष्ठे मासि सिते पक्षे त्रयोदश्यां युधिष्ठिर ॥ स्नात्वा पुण्यनदीतोये पूजयेच्छुभदेशजम् ॥४॥ श्वेतमंदारमर्कं वा करवीरं च रक्तकम् ॥ निंबं च सूर्यदेवस्य वल्लभं दुर्लभं तथा ॥५॥ पुष्पैर्नैवेद्यधूपाद्यैर्मंत्रेणानेन पांडव ॥ निरीक्ष्य गगने सूर्यं ध्यात्वा हृदि समुच्चरेत् ॥६॥ सूर्यं श्वेतारमंदारश्वेतार्कार्कास्यसंशयम् ॥ करवीर नमस्तुभ्यं निंबवृक्ष नमोऽस्तु ते ॥ ७ ॥ इत्थं योर्कपतेर्भक्त्या वर्षेवर्षे पृथङ् नरः ॥ मूलमंत्रेण नृश्रेष्ठ नारी वा भक्तिसंयुता ॥ तस्याः शरीरदौर्गन्ध्यं दौर्भाग्यं वा अजाविकम् ॥८॥ निंबं नवार्ककरवीरलतां सुपुष्पां याः पूजयंति कुसुमाक्षतधूपदीपैः ॥ ताः सर्वकामसुखभोगसमृद्धिभाजो दौर्भाग्यदोषरहिताः सुभगा भवंति ॥९॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे मन्दारनिम्बार्ककरवीरव्रतवर्णनं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥छ॥

॥ ॥ युधिष्ठिर उवाच ॥ ॥ यमस्याराधनं ब्रूहि श्रीवत्स पुरुषोत्तम ॥ कथं न गम्यते कृष्ण नरकं नरकेसरिन् ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ द्वारवत्यां पुरा पार्थ स्नातोऽहं लवणाम्भसि ॥ दृष्टवान्मुनिमायांतं मुद्गलं नाम पार्थिव ॥ २ ॥ प्रज्वलंतमिवादित्यं तपसा द्योतितान्तरम् ॥ तं प्रणम्यार्घ्यसत्कारैः पप्रच्छाहं युधिष्ठिर ॥ ३ ॥ यमादर्शननामैतद्व्रतं जन्तुभयापहम् ॥ कथयामास सकलं मुद्गलो विस्मयान्वितः ॥ ४ ॥ ॥ मुद्गल उवाच ॥ ॥ अकस्मात्कृष्ण मूर्च्छा मे पतितोऽस्मि धरातले ॥ पश्यामि दंडपुरुषैर्मद्देहात्प्रज्वलन्निव ॥ ५ ॥ अंगुष्ठमात्रः पुरुषो बलदाकृष्य रोषितः ॥ बद्धो यमभटैर्गाढं नीयते वेदवादिभिः ॥ ६ ॥ क्षणात्सभायां पश्यामि यमं पिंगललोचनम् ॥ कृष्णावदातं रौद्रास्यं मृत्युं व्यधिशतान्वितम् ॥ ७ ॥ वातपित्तमहाश्लेष्मैर्मूर्तिमद्भिरुपासितम् ॥ कासशोफज्वरातंकस्फोटिकालूतमारिभिः ॥ ८ ॥ ज्वरगर्दभशीर्पादिभगंदरमलक्षयैः ॥ गंडमालाक्षिरोगैश्च मूत्रकृच्छ्ररहोत्रणैः ॥ ९ ॥ वेदनाभिः प्रमेहैश्च पिटकैर्गंडबुद्बुदैः ॥ विपूचिकागलग्राहदारिद्राभूततस्करैः ॥ १० ॥ इत्थं बहुविधै रौद्रैर्नानारूपभयंकरैः ॥ करालशस्त्रहस्तैश्च संग्रामैर्नरकैस्तथा ॥ ११ ॥ राक्षसैर्दानवैरुग्रैरुपविष्टैः पुरःस्थितैः ॥ धर्माधिकरणस्थैश्च चित्रगुप्तादिलेखकैः ॥ १२ ॥ सिंहैर्व्याघ्रैर्वराहैश्च तरक्षैश्चानुजंतुकैः[१] ॥ वृश्चिकैर्दंशमशकैः शिवासर्पैः सडुंडुभैः ॥ १३ ॥ गृध्रैरुलूकैर्बहुभिर्मत्कुणैर्डाकिनीग्रहैः ॥ अपस्मारस्मरोन्मादवृद्धिकारेवतीग्रहैः ॥ १४ ॥ पिशाचैर्यक्षकूष्मांडैः पाशखड्गधनुर्द्धरैः ॥ मुक्तकेशैस्त्रासकरैर्भ्रुकुटीकुटिलाननैः ॥ १५ ॥ बृहत्कायैर्नारकीयैः पापिष्ठानां नियामकैः ॥ असिपत्रवनांगारैः क्षारगर्ता

१ जानुंजंबुकैः-इ० पा०।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ण्डदायकैः ॥ १६ ॥ असिभंगामिपच्छेदरुधिरस्रावकादिभिः ॥ आस्थाने संभृतो भाति यमो मृत्यूपमोपमः ॥ २७ ॥ स आह किंकरान्सर्वा न्धर्मराजो जनार्दन ॥ किमयं मुनिरानीतो युष्माभिर्भ्रांतनामभिः ॥ १८ ॥ मुद्गलो नाम कौडिन्ये नगरे भीष्मकात्मजः॥ क्षत्रियोऽस्ति स आनेयः क्षीणायुस्त्यज्यतां मुनिः ॥ १९ ॥ इत्युक्तास्ते गतास्तस्मादायाताः पुनरेव ते ॥ ऊचुर्यमभटाः प्रह्वा धर्मराजं सविस्मयाः ॥ २० ॥ अस्माभिस्तत्र क्षीणायुर्न देही लक्षितो गतैः ॥ न जानीमो भानुसूनो कथंचिद्भ्रांतमानसाः ॥ २१ ॥ ॥ यमराज उवाच ॥ ॥ प्रायेण ते न दृश्यंते पुरुषैर्यमार्किकरैः ॥ कृता त्रयोदशी यैस्तु नरकार्तिविनाशिनी ॥ २२ ॥ उज्जयिन्यां प्रयागे वा भैरवे वाथ ये मृताः ॥ तिलान्नगोहिरण्यादि दत्तं यैश्च गवाह्निकम ॥ २३ ॥ ॥ दूत उवाच ॥ ॥ कीदृशं तद्व्रतं स्वामिन्कुंस नो भास्करात्मज ॥ किं तत्र वद कर्तव्यं पुरुषैस्तव तुष्टिदम् ॥ २४ ॥ ॥ यम उवाच ॥ ॥ पूर्वाह्णे मार्गशीर्षादौ वर्षमेकं निरन्तरम् ॥ त्रयोदश्यां सौम्यदिने सूर्यांगारकवर्जितः ॥ २५ ॥ मम नाम्ना द्विजानष्टौ पंच चैव समाह्वयेत् ॥ वेदांतगाञ्ज्ञातिशुद्धाञ्छांतचित्तान्सुशोभनान् ॥ २६ ॥ वाचकश्चापि तन्मध्ये सदा भास्करवल्लभान् ॥ दिनस्य प्रथमे यामे शुचौ देशे समास्थितान् ॥ २७ ॥ अंतर्वासोवृतान्भक्तान्सोपदिष्टदिगुन्मुखान् ॥ अभ्यंगयेच्छिरोदेशात्तिलतैलेन मर्दयेत् ॥ २८ ॥ स्नापयेद्गन्धकाषायैः सुखोष्णांबुभिरेव च ॥ पृथक्पृथक्स्नापयित्वा सर्वानेव द्विजोत्तमान् ॥ २९ ॥ शूचिर्भूत्वा तथाचांतो व्रती भक्तिपरायणः ॥ स्वयं संभृत्य शुश्रुषां तेषां कृत्वा नरोत्तम ॥ ३० ॥ प्राङ्मुखानुपविष्टांश्च त्रयोदश पृथक्पृथक् ॥ भोजयेच्छालिमुद्गाद्यं गुडपूपान्सुखोचितान् ॥ ३१ ॥ सुव्यञ्जनं सुपक्वान्नं भूयोभूयो निवेदयेत् ॥ शुचिर्भूत्वा तथाचांतो ह्यर्चयेत्तिलतंडुलैः ॥३२॥ प्रस्थमात्रैरथैकैकं ताम्रपात्रसमन्वितैः ॥ सदक्षिणैः सच्छत्रैश्च जलकुम्भैः पवित्रकैः ॥३३॥ चर्मप्रावरणैः श्रेष्ठैस्तेषां दत्त्वा विसर्जयेत् ॥ मंत्रेणानेन राजेन्द्र अर्चयेत्तान्पृथक्सुधीः ॥ ब्राह्मणान्वाचकं वापि पंक्तिभेदं न कारयेत् ॥ ३४ ॥ ॐ नमः शनैश्चरो मृत्युर्दंडहस्तो विनाशकः ॥ अभावः प्रलयः सौरिर्दुःखघ्नः शमनोऽतकः ॥ ३५ ॥ लोकपालो ह्यतिक्रूरो रौद्रो घोराननः शिवः ॥ यमः प्रसन्नमानस्को दद्यान्मेऽभयदक्षिणाम् ॥ (स्वाहा) ॥ ३६ ॥ इत्युक्त्वा संप्रयच्छेच्च देयं दत्त्वा व्रती पुनः ॥ द्विजांश्चानुव्रजंच्छ्रुतान्गृहांश्चार्चितचर्चितान् ॥ ३७ ॥ एवं यः पुरुषः कश्चित्सकृद्व्रतमिदं चरेत् ॥ स मृतोऽपि नरोमर्त्यो नायाति मम मंदिरम् ॥ ३८ ॥ अदृष्टो मम मायाभिर्विमानेनार्कमंडलम् ॥ स चायाति पुरीं विष्णोस्ततः शिवपुरं व्रजेत् ॥ ३९ ॥ कृतं चीर्णं व्रतं तेन मुद्गलेन ममोदितम् ॥

१ यमनाम्ना—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन नायात्यसौ लोके मम क्षत्रियपुङ्गवः ॥ ४० ॥ इति कालवचः श्रुत्वा तेऽपि दूता गतास्तु मे ॥ अहं पुनः समापन्नस्तूर्णं कालैर्विसर्जितः ॥ स्वशरीरं पुनः प्राप्य नीरोगः पुनरुत्थितः ॥ ४१ ॥ त्वां द्रष्टुमागतः प्रोक्तमेतद्वृत्तं मया तव ॥ इत्युक्त्वा मुद्गलो राजन्प्रयातः स्वगृहं प्रति ॥ ॥ ४२ ॥ इदं कुरुष्व कौंतेय त्वमप्यत्र महीतले ॥ ततो यास्यस्यसंदिग्धं वंचयित्वा यमं मृतः ॥ ४३ ॥ एवं येन्येऽपि पुरुषाः स्त्रियो वापि युधिष्ठिर ॥ त्रयोदश्यां त्रयोदस्यां ये चरिष्यंति भूतले ॥ ४४ ॥ एकभक्तेन नक्तेन उपवासेन वा पुनः ॥ यमदर्शनमाख्यातं गतं सर्वव्रतोत्तमम् ॥४५॥ सर्वपापविनिर्मुक्ता दिव्ययानं समाश्रिताः ॥ यास्यन्तीन्द्रपुरं हृष्टा अप्सरोगणसंवृताः ॥ ४६ ॥ दोधूयमानाश्चमरैः स्तूयमानाः सुरासुरैः ॥ गन्धर्वतूर्यनादेन च्छत्रपंक्तिविराजिताः ॥ ४७ ॥ अदृष्टो घोररूपास्यैर्यमदूतैर्युधिष्ठिर ॥ अनर्दितो व्याधिगणैरदृष्टो यमकिङ्करैः ॥ ४८ ॥ अदारितो महारौद्रैर्नानाप्रहरणोत्तमैः॥ यमदृष्टिपथान्मुक्ताः सर्वसौख्यसमन्विताः ॥४९॥ सर्वसौख्यसमायुक्ताः शिववत्सौम्यदर्शनाः ॥ स्वर्गे वसंति सुचिरं भाविताः स्वेन कर्मणा ॥ ५० ॥ स्नाप्य त्रयोदश मुनीन्घृतपायसेन संपूज्य पूज्यतिलतण्डुलवस्त्रदानैः ॥ कुर्वंति ये व्रतमिदं त्रिदशेह्नि पूताः पश्यंति ते यममुखं न कदाचिदेव ॥ ५१ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे यमदर्शनत्रयोदशीव्रतवर्णनं नामैकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ भगवन्भूतभव्येश संसारार्णवतारक ॥ व्रतं कथय किञ्चिन्मे रूपसौभाग्यदायकम् ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ किं कृतैर्बहुभिः पार्थ व्रतैरुन्मत्तचेष्टितैः ॥ कायक्लेशकरैः क्रूरैरसारैः फलसाधनैः ॥ २ ॥ वरमेकापि वरदा कृतानंगत्रयोदशी ॥ प्रसिद्धिं समनुप्राप्ता मर्त्ये कामप्रदायिनी ॥ ३ ॥ सौभाग्यारोग्यजयदा सर्वातंकनिवारिणी ॥ सर्वदुष्टोपशमनी सर्वमंगलवर्धनी ॥ ४ ॥ शृणुष्व तां महाबाहो कथयामि सविस्तरम् ॥ पुरा दग्धेन कामेन त्रिनेत्रनयनाग्निना ॥ ५ ॥ भस्मीभूतेन लोकानां संकल्पिता पुरानघ ॥ अनंगेन कथा ह्येषा तेनानंगत्रयोदशी ॥ ६ ॥ हेमंते समनुप्राप्ते मासि मार्गशिरे शुभे ॥ शुक्लपक्षे त्रयोदश्यां सोपवासो जितेन्द्रियः ॥ ७ ॥ स्नानं नद्यां तडागे च गृहे वा नियतात्मवान् ॥ कृत्वा समभ्यर्च्य विभुं विधिना शशिशेखरम् ॥८॥ धूपदीपैः सनैवेद्यैः पुष्पैः कालोद्भवैस्तथा ॥ शंभुनामान्यथोच्चार्य होमः कार्यस्तिलाक्षतैः ॥ ९ ॥ अनंगनाम्ना संपूज्य मधु प्राश्य स्वपेन्निशि ॥ नैवेद्यैर्मधुरैर्दिव्यैः सुस्वादैर्घृतपाचितैः ॥ १० ॥ धूपं सुगंधिं दद्याच्च रक्तपुष्पैस्तु पूजनम् ॥ रंभातुल्या भवेत्सा तु रूपयौवनशालिनी ॥ ११ ॥

१ यजिष्यन्ति—इ० पा० । २ मधुनामान्यथोच्चार्य—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मधुवत्स्यात्समधुरः कामरूपधरस्तथा ॥ दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥ १२ ॥ पुष्यमासस्य चैवोक्तं चंदनं प्राशयेन्निशि ॥ योगेश्वरं तु संपूज्य मालतीकुसुमैः शुभैः ॥ १३ ॥ नैवेद्यं घृतपूराश्च दमशान्तास्तु ताः स्त्रियः ॥ सौम्यशीतसुगन्धाढ्यचन्दनप्राशनोद्भवैः ॥ १४ ॥ राजसूयस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥ माघे नटेश्वरं नाम पूजयेत्पंकजेन तु ॥ १५ ॥ नैवेद्यं क्षीरखण्डाद्यैर्मौक्तिकं प्राशयेन्निशि ॥ बहुपुत्रा भवेत्सा तु धनं सौभाग्यमुत्तमम् ॥ १६ ॥ मुक्ताचूर्णनिभैर्नेत्रैर्यद्वा स्यात्तद्वदेव हि ॥ गौरीतुल्या भवेत्सा तु कोमलांगी प्रजायते ॥ १७ ॥ तप्तजांबूनदाभासो भवेद्दिव्यतनुर्महान् ॥ गोमेधस्य सहस्रस्य फलं प्राप्नोति मानवः ॥ १८ ॥ फाल्गुने मासि संपूज्य देवदेवं हरेश्वरम् ॥ कर्णिकारस्य पुष्पाणि नैवेद्ये बीजपूरकम्[1] ॥ १९ ॥ कंकोलं प्राशयेद्रात्रौ सौंदर्यमतुलं लभेत् ॥ चैत्रे सुरूपकं नाम पूजयेद्दमनेन तु ॥ २० ॥ नैवेद्यं धूपकं दद्याद् घृतखण्डविपाचितम् ॥ कर्पूरं प्राशयेद्रात्रौ सौभाग्यं महदाप्नुयात् ॥ २१ ॥ चन्द्रश्च चन्द्रकांतिश्च चन्द्रवत्यर्हरावृते ॥ नरमेधस्य यज्ञस्य फलं प्राप्नोति शोभनम् ॥ २२ ॥ वैशाखे च महारूपं पुष्पैर्नामालिकार्चनम् ॥ कारंबकैस्तु नैवेद्यं दातव्यं चातिशोभनम् ॥ २३ ॥ जातीफलं तु संप्राश्य जातिमाप्नोत्यनुत्तमाम् ॥ सफलास्तस्य सर्वाशा भवंति भुवि भारत ॥ २४ ॥ गोसहस्रफलं प्राप्य ब्रह्मलोके महीयते ॥ ज्येष्ठे मासे तु प्रद्युम्नं पूजयेन्मल्लिकासुमैः ॥ २५ ॥ नैवेद्यं खण्डवर्तिं च लवंगं प्राशयेन्निशि ॥ ज्येष्ठं पदमवाप्नोति तथा लक्ष्मीं जनार्दनात् ॥ २६ ॥ सर्वसौख्यसमोपेतः स्थित्वा भुवि शतं समाः ॥ वाजपेयस्य यज्ञस्य शतमष्टगुणोत्तरम्[2] ॥ २७ ॥ आषाढे चैव संप्राप्ते उमाभर्तारमर्चयेत् ॥ पुष्पधूपादिनैवेद्यैः प्राश्नीयाच्च तिलोदकम् ॥ २८ ॥ तिलोत्तमारूपधरा सुखी स्याच्छरदः शतम् ॥ श्रावणे उमापतिं नाम तिलपुष्पैस्तु पूजयेत् ॥ २९ ॥ नैवेद्यं लड्डुकान्दद्यात्कृष्णांश्च प्राशयेत्तिलान् ॥ पौंडरीकस्य यज्ञस्य फलं प्राप्नोत्यनाकुलम् ॥ ३० ॥ तदंते राजराजः स्याच्छत्रुपक्षक्षयंकरः ॥ सद्योजातं भाद्रपदे पूज्य कुंकुमकेशरैः ॥ ३१ ॥ नैवेद्यं सोलिकां दद्यात्प्राशयेदगुरुं निशि ॥ अगुरुं प्राशयित्वा तु गुरुर्भवति भूतले ॥ ३२ ॥ पुत्रपौत्रैः परिवृतो भुक्त्वा भोगान्मनोऽनुगान् ॥ उक्तयज्ञफलं प्राप्य विष्णुलोके महीयते ॥ ३३ ॥ त्रिदशाधिपतिमश्वयुजि पूज्य सिन्दूरकव्रजैः ॥ स्वर्णादिकं तु संप्राश्य स्वर्णवर्णः प्रजायते ॥ ३४ ॥ रूपवान्सुभगो वाग्मी भुक्त्वा भोगान्महीतले ॥ सुवर्णकोटिदानस्य फलं प्राप्नोति मानवः ॥ ३५ ॥ विश्वेश्वरं[3] कार्त्तिके तु सर्वपुष्पैस्तु पूजयेत् ॥ दमनस्य फलं प्राश्य दमनेन पुमान्भवेत् ॥ ३६ ॥ दमनोन्मादकर्ता च सर्वस्य

---

१ तु जंबीरकम्–इ० पा० । २ षड्गुणम्–इ० पा० । ३ विश्वेश्वरम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जगतः प्रभुः ॥ भवेद्भुजबलोपेतस्ततः शिवपुरं व्रजेत् ॥ ३७ ॥ एवं संवत्सरस्यांते पारितेऽस्मिन्व्रतोत्तमे ॥ यत्कर्तव्यं तदधुना श्रूयतां कुरुनंदन ॥ ३८ ॥ व्रते विघ्नो यदा च स्यादशक्त्या सूतकेन वा ॥ उपोष्यमेवोपवसेत्तदा द्रुमपुरः पुनः ॥ ३९ ॥ पूर्वोक्तमेवं निर्वर्त्य सौवर्णं कारयेच्छिवम् ॥ ताम्रपात्रे तु संस्थाप्य कलशोपरि विन्यसेत् ॥ ४० ॥ शुक्लवस्त्रेण संछाद्य पुष्पनैवेद्यपूजितम् ॥ ब्राह्मणाय प्रदातव्यं शिवभक्ताय सुव्रत ॥ ॥ ४१ ॥ शक्तिमाञ्छयनं दद्याद्गां सवत्सां पयस्विनीम् ॥ छत्रोपानत्प्रदातव्यं कलशाः सोदकास्तथा ॥ ४२ ॥ शांताश्च केचिदिच्छंति शक्त्या दद्याच्च दक्षिणाम् ॥ पञ्चामृतेन स्नानं च तस्मिन्नहनि कारयेत् ॥ ४३ ॥ देवदेवस्य राजेन्द्र पुष्पदीपान्नसंयुतम् ॥ भोजनं च यथा शक्त्या षड्रसं मधुरोत्तरम् ॥ ४४ ॥ प्रदद्याच्छिवभक्तेभ्यो विशुद्धेनांतरात्मना ॥ एवं निर्वर्त्य विधिवत्कृतकृत्यः पुमान्भवेत् ॥ ४५ ॥ नारी वा भरतश्रेष्ठ कुमारी वा यतव्रता ॥ पारिते तु व्रते पश्चात्कुर्याच्च सुमहोत्सवम् ॥ ४६ ॥ अनेन विधिना कुर्याद्यस्त्वनंगत्रयोदशीम् ॥ स राज्यं निहतामित्रं कीर्तिमायुर्यशो बलम् ॥ ४७ ॥ सौभाग्यं महदाप्नोति यावज्जन्मशतं नृप ॥ ततो निर्वाणमायाति शिवलोकं च गच्छति ॥ ४८ ॥ कामेन या किल पुरा समुपोषितासीच्छुभ्रा तिथिस्त्रिदशमी सुशुभांगहेतोः ॥ तां प्राशनैरुदितनामयुतैरुपेतां कृत्वा प्रयाति परमं पदमिंदुमौलेः ॥ ॥ ४९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वण्यंगत्रयोदशीव्रतवर्णनं नाम नवतितमोऽध्यायः ॥ ९० ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ अम्बुपूर्णतडागेषु महातोयाशयेषु च ॥ कस्यार्थं सम्प्रयच्छंति कृष्णैताः कुलयोषितः ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ मासि भाद्रपदे प्राप्ते शुक्ले भूततिथौ नृप ॥ तडागपाल्यां दातव्यं वरुणायार्घ्यमुत्तमम् ॥ २ ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैः स्त्रीभिस्तथैव च ॥ तस्मिन्दिने भक्तिनम्रैर्दद्यादर्घं युधिष्ठिर ॥ ३ ॥ पुष्पैः फलैस्तथा वस्त्रैर्दीपालक्तकचन्दनैः ॥ अनग्निपाकसिद्धान्नैस्तिलतण्डुलमिश्रकैः ॥ ४ ॥ खर्जूरैर्नालिकेरैश्च वीजपूर्णारकैस्तथा ॥ द्राक्षादाडिमपूगैश्च त्रपुसैश्चापि पूजयेत् ॥ ५ ॥ आलिख्य मण्डले देवं वरुणं वारुणीयुतम् ॥ मंत्रेणानेन राजेन्द्र पूजयेद्भक्तिभावतः ॥ ॥ ६ ॥ वरुणाय नमस्तुभ्यं नमस्ते यादसांपते ॥ अपांपते नमस्तेऽस्तु रसानांपतये नमः ॥ ७ ॥ मा क्लेदं मा च दौर्गंध्यं विरस्यं मा मुखेऽस्तु मे ॥ वरुणो वारुणीभर्ता वरदोऽस्तु सदा मम ( स्वाहा ) ॥ ८ ॥ एवं यः पूजयेद्भक्त्या वरुणं वरुणालयम् ॥ मध्याह्ने सरसि स्नात्वा नग्निपाकी व्रती नृप ॥ ९ ॥ चातुर्वर्ण्यथ वै नारी व्रतेनानेन पांडव ॥ नैवेद्यं ब्राह्मणे देयं यन्नैवेद्ये प्रकल्पितम् ॥ १० ॥ एवं यः कुरुते पार्थ पालीव्रतमुत्तमम् ॥

१ मम-इ० पा०।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्क्षणात्सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ११ ॥ संरुद्धशुद्धसलिलातिबलां विशालां पालीमुपेत्य बहुभिस्तरुभिः कृतालीम् ॥ ये पूजयंति वरुणं सहितं समुद्रैस्तेषां गृहे भवति भूतिरलब्धनाशा ॥ १२ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे पालीव्रतवर्णनं नामैकनवतितमोऽध्यायः ॥ ९१ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अस्मिन्नेव दिने पार्थ शृणु ब्रह्मसभातले ॥ देवलेन पुरा गीतं देवर्षिगणसन्निधौ ॥ १ ॥ अप्सरोगणगंधर्वैर्देवैः सर्वैः समार्चितम् ॥ संसारासारतां दृष्ट्वा तत्रस्थकदलीद्रुमे ॥ शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे नृप ॥ २ ॥ दत्तमर्घ्यं वरस्त्रीभिः फलैर्नानाविधैः शुभैः ॥ विरूढैः सप्तधान्यैश्च दीपालक्तकचन्दनैः ॥ ३ ॥ दधिदूर्वाक्षतैर्वस्त्रैर्नैवेद्यैर्घृतपाचितैः ॥ जातीफलैर्लवङ्गैश्च तथैलालवलीफलैः ॥ ४ ॥ कदलैः कन्दरभटैर्मोचा सात्र निगद्यते ॥ तस्मिन्नहनि दातव्यं स्त्रीभिः सर्वाभिरप्यलम् ॥ ५ ॥ मंत्रेणानेन चैवार्घ्यं शृणुष्व च नराधिप ॥ चित्या त्वं कन्दलदलैः कदले कामदायिनि ॥ शरीरारोग्यलावण्यं देहि देवि नमोऽस्तु ते ॥ ६ ॥ इत्थं यः पूजयेद्राजा पुरुषो भक्तिमान्नृप ॥ नारी वानग्निपाकांता चातुर्वर्ण्या युधिष्ठिर ॥ ७ ॥ तस्याः कुले न भवति क्वचिन्नारी कुलाटनी ॥ दुर्गता दुर्भगा वंध्या स्वैरिणी पापकारिणी ॥ ८ ॥ विलासिनी वा वृषली पुनर्भूः पुनरेतसी ॥ गणिका स्वैरिणी वोढा मूल्यकर्मकरी खला ॥ ९ ॥ भर्तृव्रतात्प्रचलिता न कदाचित्प्रजायते ॥ भवेत्सौभाग्यसौख्याढ्या पुत्रपौत्रैस्तथावृता ॥ आयुष्मती कीर्तिमती रमेद्वर्षशतैर्भुवि ॥ १० ॥ एकं रंभाव्रतं चीर्णं गायत्र्या स्वर्गसंस्थया ॥ तथा गौर्या च कैलास इन्द्राण्या नंदने वने ॥ ११ ॥ श्वेतद्वीपे तथा लक्ष्म्या राज्ञ्या च रविमंडले ॥ अरुन्धत्या दारुवने स्वाहया मेरुपर्वते ॥ १२ ॥ सीतादेव्या त्वयोध्यायां वेदवत्या हिमाचले ॥ भानुमत्या नागपुरे व्रतमेतदनुष्ठितम् ॥ १३ ॥ एतद्व्रतं पार्थिवेन्द्र मासि भाद्रपदे सिते ॥ या करोति न सा दुःखैः कदाचिदपि पीडयते ॥१४॥ संभिन्नकन्दकदलीं च मनोज्ञरूपां याः पूजयंति कुसुमाक्षतधूपदीपैः ॥ तासां गृहेषु न भवंति कदाचिदेव नार्यस्त्वनार्यचरिता विधवा विरूपाः ॥१५॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे रम्भाव्रतं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ चतुर्दशी महाराज हुतभुग्दयिता शुभा ॥ नष्टस्तदा हव्यवाहः पुनरस्तित्वमाप्तवान् ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथमग्निः पुरा नष्टो देवकार्येष्वुपस्थितः ॥ केनाग्नित्वं कृतं तत्र कथं हि विदितोऽनलः ॥ एतद्वदस्व देवेश सर्वं हि विदितं तव ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पुरा सुरा महाराज तारकेण पराजिताः ॥

१ समन्वितम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपृच्छन्विश्वकर्तारं तारकं को वधिष्यति ॥ ३ ॥ उवाचासौ चिरं ध्यात्वा रुद्रोमाशुक्रसम्भवः ॥ गंगास्वाहाग्नितेजोजः शिशुर्दैत्यं वधिष्यति ॥ ४ ॥ एवं श्रुत्वा गता देवा यत्र शम्भुः सहोमया ॥ प्रणम्य ते तमूचुर्हि यदुक्तं ब्रह्मणा तदा ॥ ५ ॥ प्रतिपन्नं च रुद्रेण उमया सहितेन तत् ॥ प्रयत्नमकरोत्तं च य उक्तोमरसत्तमैः ॥ ६ ॥ दिव्यं वर्षशतं साग्रं गतः कालोऽथ मैथुने ॥ न चाप्युपरमस्तत्र तयोरासीत्कथञ्चन ॥ भयं च सुमहत्तेषां देवानां समजायत ॥ ७ ॥ स रुद्रसम्भवो यो वै भविष्यति महाबलः ॥ स दैत्यान्दानवगणान्वधिष्यति न संशयः ॥ ८ ॥ केन कालेन भवति रतेर्विरतिरेतयोः ॥ एतद्विचिन्त्य प्रहितौ देवैस्तत्रानिलानलौ ॥ ९ ॥ गतौ तौ चोमया दृष्टौ समस्थौ विषमस्थया ॥ शशाप च रुषा देवी देवान्गर्भविवर्जिता ॥ १० ॥ यस्मात्तैर्जनितो विघ्नो मेऽपत्यार्थे दिवौकसाम् ॥ तस्मात्ते स्वेषु दारेषु जनयिष्यन्ति न प्रजाः ॥११॥ अथोवाच तदा देवो देवान्सर्वगणाञ्छनैः॥ अग्निर्गृह्णातु वीर्यं मे संभृतं सुचिरं हि यत् ॥१२॥ एवमुक्तोऽथ रुद्रेणनष्टोऽग्निर्देवसंकुलात् ॥ न स्वस्थो न भुविस्थो वा न सूर्यस्थो न भूतले ॥१३॥ देवा अन्वेषणे यत्नमकुर्वन्नग्निदर्शने ॥ कृमिकीटपतंगाश्च अष्टौ च त्रिदिवौकसः ॥ १४ ॥ हंसाः केकाः शुका वह्निः शीघ्रं शरवणं गताः ॥ शशापाग्निर्गजा जिह्वा द्विगुणो वा भविष्यति ॥ १५ ॥ दृष्ट्वाथ विबुधाः सर्वे पक्षिणं पक्षिणां वरम्॥जीवं जीवकनामानं भोभोः सत्यं वदस्व नः॥१६॥ कच्चिद्दृष्टस्त्वया वह्निर्वनेऽस्मिन्नटता सदा॥नाभद्रं नापि भद्रं वा किञ्चिदेव वचोऽब्रवीत् ॥१७॥ भूयोभूयस्तु पृष्टोऽपि न गामुच्चारयेच्चिरम्॥ तुष्टस्तस्याब्रवीद्वह्निर्जीवंजीव वदामि ते ॥१८॥ यस्मान्न किञ्चिदुक्तं ते तस्माच्चित्रतनूरुहाः ॥ जीव जीव पुनर्जीव यावदिच्छा तथायुषः ॥ १९ ॥ द्वितीयं ते वरं दद्मो जीवंजीवक शोभनम् ॥ व्यक्ता ते मानुषी वाचा स्पष्टार्था च भविष्यति ॥ २० ॥ कश्चिद्यदि तवाधस्थाद्बुधः स्नानं करिष्यति ॥ वंध्या वा पोडशाब्दीया क्षणाद्बालो भविष्यति ॥ २१ ॥ मासं यश्च तृतीयं नै भक्षयिष्यत्यनिंदितम् ॥ अजरः सोऽमरश्चैव सर्वकालं भविष्यति ॥ २२ ॥ इदं दत्त्वा वरांस्तस्य वह्नित्वमथ आप्तवान् ॥ विबुधा अपि तत्रैव तमदृश्यंत वंशगम् ॥ २३ ॥ ऊष्मया जातकल्माषं ज्ञात्वा संहृष्टमानसः ॥ तुष्टा वंशमथोचुस्ते देवास्त्रिभुवनेश्वराः ॥ २४ ॥ ऊष्मया कल्मषीभूय ह्यग्निर्गर्भं धरिष्यति ॥ यो गृही वैणवीं यष्टिं ब्रह्मचारी च नैष्ठिकः ॥ २५ ॥ पंडाग्निपालने पुण्यं यद्दृष्टं ब्रह्मवादिभिः ॥ वदंतं कल्मषीयष्टिस्तं प्राप्नोति द्विजोत्तमम् ॥ २६ ॥ वंशस्यानुग्रहं कृत्वा देव्याहृतिमथाब्रुवन् ॥ गृह्णीत शुक्रं भद्रस्य तव पुत्रो भविष्यति ॥ २७ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ यदाग्निर्नष्टो देवानां केनाग्नित्वं तदा कृतम् ॥ भूयोऽपि केन कालेन अग्निरग्नित्वमाप्तवान् ॥ २८ ॥ ॥ कृष्ण उवाच ॥ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शृणु राजन्प्रनष्टोऽग्नौ येनाग्नित्वं कदाचन ॥ यस्मिन्काले तिथौ यस्यां पुनरग्नित्वमाप्तवान् ॥ २९ ॥ उतथ्याङ्गिरसोः पूर्वमासीद्व्यतिकरो महान् ॥ अहं विद्यातपोभ्यां वै तव ज्यायाञ्छ्रुतेन च ॥ उतथ्येनैवमुक्तस्तु अङ्गिराः प्राह तं मुनिम् ॥३०॥ गच्छावो ब्रह्मसदनं मरीचिप्रमुखैर्द्विजैः ॥ उपेतं चान्यमुनिभिर्ब्रह्मराजर्षिसत्तमैः ॥ उतथ्यः प्राहसद्ब्रह्मनृषींस्तान्स्तब्धमानसः ॥ ३१ ॥ ज्यायान्वा कतमोस्माकमिति नः कथ्यतां स्फुटम् ॥ ३२ ॥ अथोवाच मुनिर्ब्रह्मा तावुभौ क्रुद्धमानसौ ॥ आनयध्वं द्रुतं गत्वा विबुधान्भुवनेश्वरान् ॥३३॥ ततो विवादं पश्यामि भवतां तैः समेत्य च ॥ ततस्तौ सहितौ नत्वाऽऽनिन्यतुश्च ऋषींस्तदा ॥३४॥ लोकपालान्महेंद्रादीन्सयमान्वारुणानिलान् ॥ साध्यान्मरुद्गणान्विश्वान्नृषीन्भृग्वग्निनारदान् ॥ ३५ ॥ गंधर्वान्वित्तरक्षोघ्नान्राक्षसान्दैत्यदानवान् ॥ नायातस्तत्र तिग्मांशुः सर्वे चान्ये समागताः ॥ ३६ ॥ दृष्ट्वा तु विबुधान्सर्वान्ब्रह्मा प्रोवाच तानृषीन् ॥ आनयध्वमितः सूर्यं साम्ना दंडेन वा पुनः ॥ ३७ ॥ एवमुक्तो गतस्तावदुतथ्यः सूर्यमंडलम् ॥ स गत्वा प्राह मार्तण्डं शीघ्रमेह्येव संविदम् ॥ ३८ ॥ स उतथ्यमथोवाच कथं ब्रह्मन्व्रजाम्यहम् ॥ एवमुक्त्वा गतः सूर्यो भुवने मयि निर्गते ॥ ३९ ॥ एवमुक्तो मुनिः प्रायात्सर्वदेवसमागमम् ॥ आचचक्षे च यत्प्रोक्तं भास्वता तपनं प्रति ॥ ४० ॥ उवाचाङ्गिरसं ब्रह्मा शीघ्रमेनं त्वमानय ॥ स तथोक्तो गतस्तत्र यत्रासौ तपते रविः ॥ ४१ ॥ एह्येहि भगवन्सूर्य तप्यते भवतान्वहम् ॥ एवमुक्तो गतः सूर्यो यत्र देवाः समागताः ॥ ४२ ॥ स्थित्वा मुहूर्तं प्रोवाच किं वा कार्यमुपस्थितम् ॥ पृच्छन्तमेव मार्तंडं ब्रह्मा प्रोवाच सादरम् ॥ ४३ ॥ गच्छ शीघ्रं न दहते भुवनं यावदंगिराः ॥ लब्धप्रायं तु गोलोकं वर्तते कृष्णपिंगलम् ॥ ४४ ॥ पाटलो हरितः शोणः श्वेतो वर्णः प्रणाशितः ॥ शाकद्वीपं कुशद्वीपं क्रौञ्चद्वीपं सपन्नगम् ॥ दग्धमङ्गिरसा सर्वं भूयोऽपि प्रदहिष्यति ॥४५॥ यावच्च दहते सर्वं भुवनं तपसांगिराः ॥ गच्छ तावदितः शीघ्रं स्वस्थाने तप भास्कर ॥ ४६ ॥ एवमुक्तः स विभुना स्वस्थानमधिरूढवान् ॥ विसृष्टवानंगिरसं सकाशममृताशिनाम् ॥ ४७ ॥ गत्वाङ्गिरा उवाचेदं गतः किं करवाण्यहम् ॥ देवा अंगिरसं प्राहुस्तपोराशिमकल्मषम् ॥ ४८ ॥ संप्रशस्योचुरग्नित्वं कुरु तावन्महीतले ॥ पूर्वं यथाग्निः कृतवांस्तथा त्वमपि सत्तम ॥ ४९ ॥ यावदग्निं प्रपश्यामः क्वासौ नष्टः क्व तिष्ठति ॥ एवमुक्तः सदेवैस्तु अग्नित्वं कृतवांस्तदा ॥ ५० ॥ देवैर्दृष्टो यथा ह्यग्निस्तत्ते सर्वं निवेदितम् ॥ देवकार्ये कृते तस्मिन्देवा वह्निमथाब्रुवन् ॥ ५१ ॥ अग्नेऽग्नित्वं कुरुष्व त्वमंगिरास्तु यथा पुरा ॥ एवमुक्तः सुरैर्वह्निश्चिन्तयामास दुःखितः ॥ ५२ ॥ केन मेऽपहृतं तेजः केनाग्नित्वं कृतं त्विह ॥ दृष्ट्वाथाग्निरङ्गिरसं तेजोराशिमकल्मषम् ॥ ५३ ॥ उवाच मंच मत्स्थानं वचस्तोषकरं शृणु ॥ अहं ते तनयश्रेष्ठो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भविष्ये प्रथमे शुभे ॥ ५४ ॥ बृहस्पतीति नामा वै तथान्ये बहवः सुताः ॥ एवमुक्तो मुनिस्तुष्टो बहूंश्चाजनयत्सुतान् ॥ ५५ ॥ वह्निं संजनयामास पुत्रान्पौत्रांस्तदांगिराः ॥ अवाप पुनरग्नित्वमग्निस्तस्यां तिथौ नृप ॥ ५६ ॥ सर्वमेव चतुर्दश्यां संजातं हव्यवाहनम् ॥ हव्यवाहन देवानां भूतानां गुह्यचारितम् ॥ ५७ ॥ ततोऽष्टपतिपत्वे च रुद्रेण प्रतिपादितम् ॥ पूजितेयं तिथिर्देवैर्दिविस्थैश्च नृपैरपि ॥ ५८ ॥ पैलजावालिमन्वाद्यैरन्यैश्च नहुषादिभिः ॥ विषशस्त्रहतानां च संग्रामेन्यत्र ते क्वचित् ॥ ५९ ॥ अज्ञातावृषपापैश्च व्यालैर्ये व्याप्य हिंसिताः ॥ नदीप्रवाह पतितः समुद्रे पर्वतेऽध्वनि ॥ ६० ॥ पतिताः पर्वतेभ्यश्च तोयाग्निदहने मृताः ॥ उदध्या पातिता ये च ये के चात्महनो जनाः ॥ तेषां शस्तं चतुर्दश्यां श्राद्धं स्वर्गसुखप्रदम् ॥ ६१ ॥ श्राद्धानि चैव दत्तानि दानानि सुलघून्यपि ॥ प्रसूनफलभोज्यानिउपतिष्ठंति तान्नरान् ॥ ६२ ॥ एवं तिथिरियं राजन्नाग्नेयी प्रोच्यते जनैः ॥ रौद्रीं च केचिदित्याहू रुद्रोग्निः स च पठ्यते[1] ॥ ६३ ॥ यस्यां मनोरथं यंयं समुद्दिश्य ह्युपोषति ॥ ददाति तस्य तद्वह्निः साग्रे संवत्सरे गते ॥ ६४ ॥ चतुर्दश्यां निराहारः समभ्यर्च्य त्रिलोचनम् ॥ पुष्पधूपादिनैवेद्यै रात्रौ जागरणान्नरः ॥ पञ्चगव्यं निशि प्राश्य स्वप्याद्भूमौ विमत्सरः ॥ ६५ ॥ श्यामाकमथ वा भुक्त्वा तैलक्षारविवर्जितम् ॥ होमः कृष्णतिलैः कार्यः शतमष्टोत्तरं नृप ॥ ॥ ६६ ॥ अग्नये हव्यवाहनाय सोमायांगिरसे नमः ॥ ततः प्रभाते विमले स्नाप्य पंचामृतैः शिवम् ॥ ६७ ॥ पूजयित्वा विधानेन होमं कृत्वा तथैव च ॥ उदीरयेन्मन्त्रमेतं कृत्वा शिरसि चांजलिम् ॥ ६८ ॥ नमस्त्रिमूर्तये तुभ्यं नमः सूर्याग्निरूपिणे ॥ पुत्रान्यच्छ सुखं यच्छ मोक्षं यच्छ नमोऽस्तु ते ॥ ६९ ॥ नीराजनं ततः कृत्वा पश्चाद्भुंजीत वाग्यतः ॥ एवं संवत्सरस्यांते कृत्वा सर्वं यथोदितम् ॥ ७० ॥ सौवर्णं कारयेद्देवं त्रिनेत्रं शूलपाणिनम् ॥ वृषस्कंधगतं सौम्यं सितवस्त्रयुगान्वितम् ॥ ७१ ॥ चन्दनेनानुलिप्ताङ्गं सितमाल्योपशोभितम् ॥ स्थापयित्वा ताम्रपात्रे ब्राह्मणाय निवेदयेत् ॥ सर्वकालिकमेतत्ते कथितं व्रतमुत्तमम् ॥ ७२ ॥ संवत्सरं समाप्तं हि व्रतस्य तु यदा भवेत् ॥ काले गते बहुतिथे तीर्थस्य शरणं भवेत् ॥ मृतस्य देहो दिव्यस्थो दिव्यालंकारभूषितः ॥७३॥ दिव्यनारीगणवृतो विमानवरमास्थितः॥देवदेवैः समः शंभोः क्रीडति त्रिपुरे चिरम् ॥ ॥ ७४ ॥ इह चागत्य कालांते जातः स च नृपो भवेत् ॥ दाता यज्वा धनी दक्षो ब्राह्मणो ब्राह्मणप्रियः ॥ ७५ ॥ श्रीमान्वाग्मी कृती धीमान्पुत्रपौत्रसमन्वितः ॥ पत्नीगणसमायुक्तश्चिरं भद्राणि पश्यति ॥ ७६ ॥ ये दुर्लभा भुवि सुरोरगमानवानां कामा ह्यनुत्तमगुणेन युताः सदैव ॥ ताना

[1] बुध्यते–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रवंति सितभूततिथौ सुरेशं संपूज्य सोमतिलकं विधिवन्मनुष्याः ॥ ७७ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे आँग्नेयीचतुर्दशीव्रतवर्णनं नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अनंतव्रतमस्त्यन्यत्सर्वपापहरं शिवम् ॥ सर्वकामप्रदं नृणां स्त्रीणां चैव युधिष्ठिर ॥ १ ॥ शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे शुभे ॥ तस्यांनुष्ठानमात्रेण सर्वपापैः प्रमुच्यते ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कृष्ण कोऽयं त्वयाख्यातो ह्यनंत इति विश्रुतः ॥ किं शेपनाग आहोस्विदनंतस्तक्षकः स्मृतः ॥ ३ ॥ परमात्माथ वानंत उताहो ब्रह्म उच्यते ॥ क एपोऽनंतसंज्ञो वै तथ्यं मे ब्रूहि केशव ॥ ४ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अनंत इत्यहं पार्थ मम नाम निबोधय ॥ आदित्यादिषु वारेषु यः काल उपपद्यते ॥ ५ ॥ कलाकाष्ठामुहूर्तादिदिनरात्रिशरीरवान् ॥ पक्षमासर्तुवर्षादियुगकल्पव्यवस्थया ॥ ६ ॥ योऽयं कालो मयाख्यातस्तव धर्मभृतां वर ॥ सोऽहं कालोऽवतीर्णोऽत्र भुवो भारावतारणात् ॥ ७ ॥ दानवानां विनाशाय वसुदेवकुलोद्भवम् ॥ मां विद्धयनंतं पार्थ त्वं विष्णुं जिष्णुं हरं शिवम् ॥ ८ ॥ ब्रह्माणं भास्करं शेषं सर्वव्यापिनमीश्वरम् ॥ विश्वरूपं महात्मानं सृष्टिसंहारकारकम् ॥ ९ ॥ प्रत्ययार्थं मयाख्यातं सोऽहं पार्थ न संशयः ॥ ॥ युधिष्ठिर उवाच ॥ ॥ अनन्तव्रतमाहात्म्यविधिं वद विदां वर ॥ १० ॥ किं पुण्यं किं फलं चास्य ह्यनुष्ठानवतां नृणाम् ॥ केन वादौ पुरा चीर्णं मर्त्ये केन प्रकाशितम् ॥ ११ ॥ एवं समस्तं विस्तार्य ब्रूह्यनंतव्रतं हरे ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ आसीत्पुरा कृतयुगे सुमंतो नाम वै द्विजः ॥१२॥ वशिष्ठगोत्रे चोत्पन्नः सुरूपश्च भृगोः सुताम् ॥ दीक्षां नामोपयेमे तां वेदोक्तविधिना ततः ॥१३॥ तस्याः कालेन संजाता दुहितानंतलक्षणा ॥ शीला नाम सुशीला सा वर्धते पितृसद्मनि ॥ १४ ॥ माता च तस्याः कालेन ज्वरदाहेन पीडिता ॥ विननाश नदीतीरे मृता स्वर्गपुरं ययौ॥१५॥सुमंतोपि ततोन्यां वै धर्मपुंसः सुतां पुनः ॥ उपयेमे विधानेन कर्कशां नाम नामतः॥१६॥दुःशीलां कर्कशां चंडीं नित्यं कलहकारिणीम् ॥ सापि शीला पितुर्गेहे गृहार्चनरता विभो ॥ १७ ॥ कुडयस्तंभतुलाधारदेहलीतोरणादिषु ॥ चातुर्वर्णकरं वैश्यनीलपीतसितासितैः ॥१८॥ स्वस्तिकैः शंखपद्मैश्च अर्चयन्ती पुनःपुनः ॥ पित्रा दृष्टा सुमन्तेन स्त्रीचिह्ना यौवने स्थिता ॥१९॥ कस्मै देया मया शीला विचार्यैवं सुदुःखितः ॥ पिता ददौ मुनीन्द्राय कौंडिन्याय शुभे दिने ॥ २० ॥ स्मृत्युक्तशास्त्रविधिना विवाहमकरोत्तदा ॥ निवर्त्यौद्वाहिकं सर्वं प्रोक्तवान्कर्कशां द्विजः ॥ २१ ॥ किञ्चिदायादिकं देयं जामातुः पारितोपिकम् ॥ तच्छ्रुत्वा कर्कशा क्रुद्धा प्रोद्धृत्य गृहमण्डपम्॥२२॥

१ आनंदचतुर्दशीव्रतवर्णनं नाम-इ० पा० । २ सर्वपापं प्रणश्यति-इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कपाटे सुस्थिरं कृत्वा गम्यतामित्युवाच ह ॥ भोज्यावशिष्टचूर्णेन पाथेयं च चकार सा ॥२३॥ कौंडिन्योपि विवाहेनां पथि गच्छञ्छनैःशनैः॥ शीलां सुशीलामादाय नवोढां गोरथेन हि ॥ २४ ॥ मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे ॥ ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम् ॥ ॥ २५ ॥ चतुर्दश्यामर्चयन्तं भक्त्या देवं पृथक्पृथक् ॥ उपगम्य शनैः शीला पप्रच्छ स्त्रीकदंबकम् ॥ २६ ॥ नार्यः किमेतन्मे ब्रूत किंनाम व्रतमीदृशम् ॥ ता ऊचुर्योषितः सर्वा अनन्तो नाम विश्रुतः ॥ २७ ॥ साब्रवीदहमप्येवं करिष्ये व्रतमुत्तमम् ॥ विधानं कीदृशं तत्र किं दानं कस्य पूजनम् ॥ २८ ॥ ॥ स्त्रिय ऊचुः ॥ ॥ शीले पक्वान्नप्रस्थस्य पुन्नाम्नः सुकृतस्य तु ॥ अर्द्धं विप्राय दातव्यमर्द्धमात्मनि भोजनम् ॥ २९ ॥ कर्तव्यं तु सरित्तीरे कथां श्रुत्वा हरेरिमाम् ॥ अनंतानंतमभ्यर्च्य मंडले गंधदीपकैः ॥ ३० ॥ धूपैः पुष्पैः सनैवेद्यैः पीतालक्तैश्चतुःशतैः ॥ तस्याग्रतो दृढं सूत्रं कुंकुमाक्तं सुदोरकम् ॥ ३१ ॥ चतुर्दशग्रंथियुतं वामे[1] स्त्री दक्षिणे पुमान् ॥ मंत्रेणानेन राजेन्द्र यावद्वर्षं समाप्यते ॥ ३२ ॥ अनंत संसारमहासमुद्रे मग्नान्समभ्युद्धर वासुदेव ॥ अनंतरूपे विनियोजितात्मा ह्यनंतरूपाय नमोनमस्ते ॥ ३३ ॥ अनेन दोरकं बद्ध्वा भोक्तव्यं स्वस्थमानसैः ॥ ध्यात्वा नारायणं देवमनंतं विश्वरूपिणम् ॥ ३४ ॥ भुक्त्वा चांते व्रजेद्वेश्म हीदं प्रोक्तं व्रतं तव ॥ सापि श्रुत्वा व्रतं चक्रे शीला बद्ध्वा सुदोरकम् ॥ ३५ ॥ भर्ता तस्याः समागत्य तां ददर्श महाधनाम् ॥ पाथेयशेषं विप्राय दत्त्वा भुक्त्वा तथैव च ॥ ३६ ॥ पुनर्जगाम सा हृष्टा गोरथेन स्वमाश्रमम् ॥ भर्त्रा सहैव शनकैः प्रत्यक्षं तत्क्षणादभूत् ॥ तेनानंतप्रभावेण[2] शुभगोधनसंकुलः ॥ ३७ ॥ गृहाश्रमः श्रिया युक्तो धनधान्यसमायुतः ॥ आकुलो व्याकुलो रम्यः सर्वत्रातिथिपूजनः ॥ ३८ ॥ सापि माणिक्यकाञ्चीभिर्मुक्ताहारविभूषिता ॥ दिव्यांगवस्त्रसंछन्ना सावित्रीप्रतिमाभवत् ॥ ३९ ॥ कदाचिदुपविष्टेन दृष्टं बद्धं सुदोरकम् ॥ शीलाया हस्तमूले तु साक्षेपं त्रोटितं रुषा ॥ ४० ॥ तेन कर्मविपाकेण तस्य सा श्रीः क्षयं गता ॥ गोधनं तस्करैर्नीतं गृहं चाग्निविदाहितम् ॥ ४१ ॥ यद्यदेवागतं गेहे तत्रतत्रैव नश्यति ॥ स्वजनैः कलहो मित्रैर्वचनं न जनैस्तथा ॥ ४२ ॥ अनंताक्षेपदोषेण दारिद्र्यं पतितं गृहे ॥ न कश्चिद्वदते लोकस्तेन सार्द्धं युधिष्ठिर ॥ ४३ ॥ ततो जगाम कौंडिन्यो निर्वेदाद्वनगह्वरम् ॥ मनसा ध्यायतेनंतं कदा द्रक्ष्यामि केशवम् ॥ ४४ ॥ व्रतं निरशनं गृह्य ब्रह्मचर्यं जपन्हरिम् ॥ विह्वलः प्रययौ पार्थ अरण्यं जनवर्जितम् ॥४५॥ तत्रापश्यन्महावृक्षं फलितं पुष्पितं तथा ॥ तमपृच्छत्त्वयानंतः कच्चिद्दृष्टो महाद्रुम ॥ तद्ब्रूहि सोप्युवाचेदं नानंतं वेद्म्यहं द्विज ॥ ४६ ॥ एवं निरी

[1] वामे करतले न्यसेत्-इ० पा० । [2] तेनानंतव्रतेनास्य बभौ-इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तानि हस्तमात्राणि सर्वतः ॥ हेमालंकारिणः कार्या होतारः षोडशाष्ट वा ॥ १७ ॥ अहतांबरसंवीताः स्रक्चन्दनविभूषिताः ॥ स्थापकाश्चात्र विहिता वेदवेदाङ्गपारगाः ॥ १८ ॥ इतिहासपुराणज्ञाः प्रियवाचोऽनसूयकाः ॥ मृन्मयानि च पात्राणि ताम्राणि स्रुक्स्रुवंतथा ॥ १९ ॥ व्यंजनानि च कार्याणि होमार्थं समिधस्तिलाः ॥ ग्रहयज्ञविधानेन होमः कार्यो विजानता ॥ २० ॥ वेद्याधिवासितानां च सुराणां होम इष्यते ॥ वारुणैस्तु तथा मंत्रैर्होतव्यं पुष्टिवर्द्धनम् ॥ २१ ॥ इन्द्रादिलोकपालानां पूर्वादिक्रमयोगतः ॥ बलिं दद्याच्च तल्लिङ्गैर्मन्त्रैस्सर्वार्थसिद्धये ॥ २२ ॥ द्वारेषु कलशान्दद्यात्सहिरण्यान्सपल्लवान् ॥ अश्वत्थपल्लवैः कार्याः शुभाश्चन्दनमालिकाः ॥ २३ ॥ सौवर्णं कारयेत्कूर्मं ताम्रेण मकरं तथा ॥ रजतेन तथा मत्स्यं त्रपुणा दर्दुरं तथा ॥ २४ ॥ शिशुमारजलौकाश्च रजतेनैव कारयेत् ॥ सर्वानपि यथास्थानं ताम्रपात्र्यां निधापयेत् ॥ २५ ॥ एषा प्रतिष्ठा नामेति मन्त्रेणामंत्रयेच्च तान् ॥ यूपप्रतिष्ठा कर्तव्या वेदोक्तविधिना ततः ॥ २६ ॥ कुंकुमेन समालभ्य पुष्पैर्धूपैः समर्चयेत् ॥ वस्त्रयुग्मेन संपूज्य नैवेद्यादि यथाक्रमम् ॥ २७ ॥ ततो द्विजातिप्रवरः श्रपयित्वा चरुं नवम् ॥ ततश्चाग्न्याहुतीर्दद्याद्भूर्भुवःस्वरिति क्रमात् ॥ २८ ॥ ततश्चावाहयेद्देवं वरुणं सरितां पतिम् ॥ वादित्रघोषैर्गीतैश्च गन्धमाल्यानुलेपनैः ॥ २९ ॥ श्वेतेनैव तु वस्त्रेण शिरोवेष्टं तु कारयेत् ॥ आदाय ताम्रपात्रीं तु ब्रह्मघोषपुरःसरः ॥ ३० ॥ अप्रमाणं जलं गत्वा वरुणाय निवेदयेत् ॥ त्वं वरुण इति मंत्रेण जलमध्ये प्रवाहयेत् ॥ ३१ ॥ यच्चान्यद्वृक्षबीजानि तत्सर्वं मज्जयेज्जले ॥ तारयेच्च ततो धेनुं दक्षिणाया उदग्व्रजेत् ॥ ३२ ॥ गोशिरोवेष्टनं कुर्यात्सति वस्त्रे तु बुद्धिमान् ॥ लांगूलस्याग्रमादाय अवतीर्य ततो जलम् ॥ ३३ ॥ ज्ञातिभिः सहितः कर्ता सभार्यश्चावगाहयेत् ॥ ततोऽवतीर्य सलिलाद्दत्त्वा गां ब्राह्मणाय ताम् ॥ शक्त्या च दक्षिणां दद्याद्देवं विप्रान्विसर्जयेत् ॥ ३४ ॥ सामान्यं सर्वभूतेभ्यो मया दत्तमिदं जलम् ॥ एवं जलाञ्जलिं क्षिप्त्वा पूजयेज्जलमातरः ॥ ३५ ॥ तोष्याः कर्मकराः सर्वे कुद्दालानि च पूजयेत् ॥ अवारितं तु दातव्यं मन्त्रपूर्वं दिनत्रयम् ॥ ३६ ॥ एकाहं च यथाशक्त्या वित्तशाठ्यं न कारयेत् ॥ गोसहस्रं तदर्धं वा तस्यार्धमथवापि वा ॥ ३७ ॥ शतमर्धशतं वापि पञ्चविंशतिमेव च ॥ तासामभावे गां दद्यात्सवत्सां कांस्यदोहनाम् ॥ ३८ ॥ एष राजंस्तडागस्य विधिस्ते परिकीर्तितः ॥ वापीकूपविधानं च कथयामि तथा परम् ॥ ३९ ॥ कुण्डमंडपसंभारभूषणाच्छादनादिकम् ॥ तडागविधिवत्कुर्याद्यूपगोतरणादिकम् ॥ ४० ॥ अकालमूलान्कलशान्वापीकोणेषु दापयेत् ॥ तीर्थोदकसमायुक्तान्सितचन्दनचर्चितान् ॥ ४१ ॥ सितवासोयुगच्छन्नान्समाल्यान्रत्नगर्भिणः ॥ श्रपयित्वा चरुं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र यावन्मात्रो यथाविधि ॥ ४२ ॥ चतस्र आहुतीर्दद्याद्भूर्भुवः स्वारिति क्रमात् ॥ ग्रहहोमं प्रकुर्वीत शांतिपुष्टिविवर्द्धनम् ॥ ४३ ॥ वरुणाय बलिं दद्याल्लोकपालेभ्य एव च ॥ वारुणानि च सूक्तानि पठेयुर्द्विजसत्तमाः ॥ ४४ ॥ वेदीमध्ये मंडलं च पद्ममत्र प्रशस्यते ॥ तन्मध्ये पूजयेच्छंभुं ब्रह्माणं केशवं तथा ॥ ४५ ॥ मत्स्यकमठमण्डूकान्वेद्या मध्येऽधिवासयेत् ॥ मित्रमित्रोऽसि भूतानां धनदो धनकांक्षिणाम् ॥ ४६ ॥ वैद्यो रोगाभिभूतानां शरण्यः शरणार्थिनाम् ॥ अनेनैव हि मंत्रेण वरुणाय विसर्जयेत् ॥ ४७ ॥ आदौ चावाहयेद्देवमनेनैव विशेषतः ॥ नमस्ते विश्वगुप्ताय नमो विष्णो अपांपते ॥ ४८ ॥ सान्निध्यं कुरु देवेश समुद्रे यद्वदत्र वै ॥ ततस्तु दक्षिणा देया ब्राह्मणानां नराधिप ॥ ४९ ॥ गौः स्थापकाय दातव्या भोजनं चानिवारितम् ॥ सर्वेषामेवदातव्यमेष पौराणिको विधिः ॥ ५० ॥ शराया आगतं तोयं सामुद्रं प्रथमं स्मृतम् ॥ निपाने वा तडागे वा संस्थितं तद्वदेवच्छुचि ॥ ५१ ॥ वापीकूपतडागे वा स्थितं तु प्रथमं जलम् ॥ अपेयं तु भवेत्सर्वं तज्जलं सूतिकासमम् ॥ ५२ ॥ समुद्रोऽपि हि कौंतेय देवयोनिरपांपतिः ॥ कुशाग्रेणापि रभसा न स्पृष्टव्यस्त्वसंस्कृतः ॥ ५३ ॥ अग्निश्चतेजो मृडयाथ देहे रेतोधाविष्णुरमृतस्य नाभिः ॥ एवं ब्रुवन्पांडव सत्यवाक्यं ततोवगाहेत पतिं नदीनाम् ॥ ५४ ॥ वैष्णवे मासि संप्राप्ते नक्षत्रे वारुणे तथा ॥ अर्घ्यं प्रदद्याद्भक्त्या तु तस्मिन्काले महोदधेः ॥ ५५ ॥ स्नात्वा तु विधिवन्मंत्रैः सागरे तु समाहितः ॥ फलमूलाक्षतैर्भक्ष्यैस्तथार्घ्यं संप्रकल्पयेत् ॥ ५६ ॥ अपि जन्म सहस्रं तु यत्पापं कुरुते नरः ॥ मुच्यते सर्वपापेभ्यः स्नात्वा तु लवणांभसि ॥ ५७ ॥ विधिज्ञेन तु कर्तव्यं ब्राह्मणेन यथाविधि ॥ कर्ता कारयिता चैव उभौ तु स्वर्गगामिनौ ॥ ५८ ॥ विधिं त्वेनमजानानो यः कुर्यादर्थमोहितः ॥ कर्ता कारयिता चैव उभौ नरकगामिनौ ॥ ५९ ॥ यो न कारयते शांतिं तडागाद्येषु कर्मसु ॥ तस्य तन्निष्फलं सर्वमुप्तं बीजमिवोषरे ॥ ६० ॥ सर्वरत्नमयं दिव्यं चन्द्रार्कसदृशप्रभम् ॥ विमानं तेजसा युक्तमारोहेत्पुण्यकर्मकृत् ॥ ६१ ॥ कश्चित्पिबति तत्तोयं निपानस्थं ततोऽञ्जलिम् ॥ ब्राह्मणो वा यतिर्गौर्वा येन कर्ता न सीदति ॥६२॥ उत्सृष्टे कृतकृत्यस्तु सुहृत्कुर्यान्महोत्सवम् ॥ महाभोज्यं महोत्सर्गं यजमानो दिनाष्टकम् ॥ ६३ ॥ कारकाः कर्मणो वापि सूत्रधारादयो नराः ॥ इष्टापूर्तेन धर्मेण तेऽपि स्वर्गं प्रयांति हि ॥ ६४ ॥ खन्यमाने महीभागे प्राणिनो ये क्षयं गताः ॥ चित्रे वा देवकूटार्थे ते सर्वे त्रिदिवं गताः ॥ ॥ ६५ ॥ धेनोस्तु रोमकूपाणि यावन्तीह नरोत्तम ॥ तावद्वर्षसहस्राणि वर्षकोटिशतानि च ॥ ६६ ॥ कोटिर्युगसहस्राणां स्वर्गे तिष्ठेत्तडागकृत् ॥

१ भगवद्–३० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चेत्तस्य पितरः केचिन्नरकं समुपागताः ॥ ६७ ॥ तांस्तु तारयते सर्वानात्मानं च महीपते ॥ आस्फोटयंति पितरो वल्गंति प्रपितामहाः ॥ ६८ ॥
अपि नः स कुले जातो यस्तडागं करिष्यति ॥ सर्वस्वेनापि कौंतेय भूमिष्ठमुदकं कुरु ॥६९॥ कुलानि तारयेत्सप्त यत्र गौर्वितृषीभवेत् ॥ एवं वर्ष
शतेनापि कृत्तिका विहरीवने॥७०॥ मासं चेतागृहे कोटिक्षणध्वंसिधनस्य हि ॥ तडागं देवभवनं वापीवृक्षोघनच्छदः॥७१॥चतुर्थकं फलं प्राप्तं कारितेऽ
स्मिंश्चतुष्टये ॥ यथा मातुः समाचष्टे पुत्रः शीलं स्वकैर्गुणैः॥७२॥तथा स्वादेन च जलं कर्तुः सर्वं शुभाशुभम्॥अतः शुभागतं द्रव्यं तडागादिषु लापयेत्
॥७३॥ धन्यस्य पांथाः संप्राप्य तडागं वृक्षमंडितम् ॥ पीत्वापः पादपतले विश्रमंति रमंति च ॥७४॥ मारुतोद्भूतवीच्यग्रैः करैः कमलमंडितम् ॥
अभ्यागताय सुधिया तडागार्घ्यं प्रकल्पितम् ॥ ७५ ॥ सामान्यं सर्वभूतेभ्यो येन भूमिगतं जलम् ॥ तारितं कारितं तेन सुपुत्रेण कुलद्वयम् ॥ ७६ ॥
मूर्तं स्वभावतः सिद्धमिष्टं मन्त्रप्रदर्शितम् ॥ इष्टापूर्ते कृते राजन्कृतकृत्यः पुमान्भवेत् ॥ ७७ ॥ उन्नता वा थ निम्ना वा कीर्तिर्येन प्रकाशिता ॥
तेन त्रैलोक्य चन्द्रेण जननी पार्थ पुत्रिणी ॥७८॥ त्रितयं निम्नतां नेयं त्रितयं चोन्नतिं पराम् ॥ तडागमथ यो भूमौ देव देवालयंकृती ॥७९॥
यः कारयति लोकेऽस्मिन्कीर्तिस्तस्यामला भवेत् ॥ स जीवति स एवैकः स भवेदजरामरः ॥ ८० ॥ उपेतानामपि दिवं स निबन्धविधायिनाम् ॥
आस्त एव निरातंकं तस्य कीर्तिमयं वपुः ॥ ८१ ॥ तावत्स्वर्गे स रमते यावत्कीर्तिरनश्वरा ॥ तावत्त्विलायामध्यास्ते सुकृती वैबुधं पदम् ॥ ८२ ॥
हंसास्यक्षिप्तनीलयग्रं पद्मिनीखण्डमण्डितम् ॥ पीयमानं महाग्रामैर्धन्याः पश्यंति स्वं सरः ॥ ८३ ॥ घटैरञ्जलिभिर्वक्त्रैर्यस्य वाटीपुटैर्जलम् ॥
पिबंति जंतवः सर्वे किमन्यत्तस्य वर्ण्यते॥ ८४ ॥ तडागं नगरोपांते धन्यस्य किल जायते ॥ उभयोरर्थसंसिद्धिर्दृष्टा कर्तुर्जनस्य च ॥ ८५ ॥ येषां
देवकुलं तत्तु निष्पद्येत सरस्तटे ॥ अभीष्टदेवतायुक्तं तेषां पार्थ किमुच्यते ॥ ८६ ॥ न भवंतीष्टिका यावद्द्रोणी वा भूमिसन्निभा ॥ स्वर्गे महीयते
तावत्कारको देववेश्मनः ॥ ८७ ॥ भोग्यस्थाने कृतः कूपः सुस्वादुसलिलस्तथा ॥ दृढरज्जुसमायुक्तः पुनात्यासप्तमं कुलम् ॥ ८८ ॥ यस्य
स्वादुजलं कूपे पिबंति सततं जनाः ॥ किं तेन न कृतं पुण्यं सर्वसत्त्वोपकारिणा ॥८९॥ यः प्रासादान्रचयति शुभान्देवतानां तडागे कीर्तिस्तस्य
भ्रमति विपुला वंशमार्गानुयाता ॥ दिव्यान्भोगान्भजति च सदा कारकश्चाप्रमेयान्भुक्त्वा सौख्यं पुनरपि च भवेच्चक्रवर्ती पृथिव्याम् ॥ ९० ॥
तेषां तडागानि बहूदकानि कूपाश्च यूपाश्च प्रतिश्रयाश्च ॥ अन्नप्रदानं मधुरा च वाणी यमस्य ते निर्वचनीभवंति ॥ ९१ ॥ ॥ इति श्रीभविष्ये
महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे वापीकूपतडागोत्सर्गविधिवर्णनं नाम सप्तविंशत्युत्तरशततमोऽध्यायः ॥ १२७ ॥ ॥ छ ॥ ॥

॥४८९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ युधिष्ठिर उवाच ॥ ॥ वृक्षारोपणमाहात्म्यं वद देवकिनन्दन ॥ उद्यापनविधिं चैव सरहस्यं समासतः ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ वरं भूमिरुहाः पञ्च नगकाष्ठरुहा दश ॥ पत्रैः पुष्पैः फलैर्मूलैः कुर्वंति पितृतर्पणम् ॥ २ ॥ बहुभिर्मृतकिञ्ज्ञातैः पुत्रैर्धर्मार्थवर्जितैः ॥ वरमेकं पथितरुर्यत्र विश्रमते जनः ॥३॥ प्राणिनः प्रीणयंति स्म च्छायावल्कलपल्लवैः ॥ वनच्छदाः सुतरवः पुष्पैर्देवान्फलैः पितॄन् ॥४॥ पुष्पपत्रफलच्छायामूलव ल्कलदारुभिः ॥ धन्या महीरुहा येषां विफला यांति नार्थिनः ॥ ५ ॥ पुत्राः संवत्सरस्यांते श्राद्धं कुर्वंति वा नवा ॥ प्रत्यहं पादपाः पुष्टिं श्रेयोऽर्थं जनयंति हि ॥ ६ ॥ न तत्करोत्यग्निहोत्रं सुखं यच्चोपितः सुतः ॥ यत्करोति घनच्छायः पादपः पथि रोपितः ॥ ७ ॥ सच्छाया च सपुष्पा च सफला वृक्षवाटिका ॥ कुलयोपेव भवति भर्तृलोकद्वयानुगा ॥ ८ ॥ अशोकफलावकरा तिलकालंकृतानना ॥ सर्वोपभोग देश्येव वाटिका रसिका सदा ॥ ९ ॥ सदा स तीर्थीभवति सदा दानं प्रयच्छति ॥ सदा यज्ञं स यजते यो रोपयति पादपम् ॥ ॥ १० ॥ अश्वत्थमेकं पिचुमंदमेकं न्यग्रोधमेकं दश चिञ्चिणीकान् ॥ कपित्थबिल्वामलकीत्रयं च पञ्चाम्रवापी नरकं न पश्येत् ॥ ११ ॥ पुष्पोपगंधाढ्यफलोपगन्धं यः पादपं स्पर्शयते द्विजाय ॥ स स्त्रीसमृद्धं बहुरत्नपूर्णं लभेद्धिमानप्रतिमं गृहं वै ॥ १२ ॥ प्रतिश्रयाश्रान्त समाश्रयत्वात्समीहितं तत्र फलं बुभुक्षोः ॥ अपत्यमेकं परलोकहेतोर्विमृश्यतां किं तरवो न रोपिताः ॥ १३ ॥ न खानिताः पुष्करिण्यो रोपि ता न महीरुहाः ॥ मातुर्यौवनचौरेण तेन जातेन किं कृतम् ॥ १४ ॥ छायामन्यस्य कुर्वंति तिष्ठंति स्वयमातपे ॥ फलंति च परार्थेषु न स्वार्थेषु महाद्रुमाः ॥ १५ ॥ अतः परं प्रवक्ष्यामि वृक्षस्योद्यापने विधिम् ॥ सर्वपापप्रशमनं सर्वकीर्तिविवर्द्धनम् ॥ १६ ॥ अपुत्रया पुरा पार्थ पार्वत्या मन्दराचले ॥ अशोकः शोकशमनः पुत्रत्वे परिकल्पितः ॥ १७ ॥ जातकर्मादिकास्तस्य याः क्रियाः किल बुद्धिमन् ॥ चरकात्रिपुराणोक्तास्ताः शृणुष्व युधिष्ठिर ॥ १८ ॥ ततो मूले घनदलो वल्गुच्छायांगपल्लवः ॥ शीतवातातपसहः संस्कार्यस्तरुणस्तरुः ॥ १९ ॥ स्त्रीनामकंटकीकुब्जकीटवृ श्चिककोटरः ॥ नोद्याप्यः पादपः पार्थ शिष्टानां यो न संमतः ॥ २० ॥ आलवाले सुविहिते शुभे बद्धचतुष्किके ॥ शोधयित्वा तमुद्देशं सुगुप्तं कार येत्ततः ॥ २१ ॥ सदैवोद्यापनं पार्थ पादपानां प्रशस्यते ॥ शुभेऽह्नि विप्रकथिते ग्रहनक्षत्रसंयुते ॥ २२ ॥ पताकालंकृतं वृक्षं पूर्वेद्युरधिवासयेत् ॥ रक्तवस्त्रैः समाच्छाद्य रक्तसूत्रेण वेष्टयेत् ॥२३॥ पिष्टातकेनावकिरेत्सर्वौषध्या च पादपम् ॥ स्थापयेत्पूर्णकलशांश्चतुर्दिक्षु विचक्षणः ॥ २४ ॥ पल्लवा लंकृतमुखान्सितचन्दनचर्चितान् ॥ सितवासोयुगच्छन्नान्सकलान्रत्नगर्भिणः ॥ २५ ॥ पताकालंकृताः सर्वे कार्यास्तत्सन्निधौ द्रुमाः ॥ मूलवि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्यस्तकलशा रक्तसूत्रावगुण्ठिताः ॥ २६ ॥ रक्तपीतसिताच्छादैश्चर्चिताः सुमनोहरैः ॥ कलधौतमयान्यत्र फलानि दश पंच वा ॥ २७ ॥ ताम्रपात्र्यां सबीजानि सरत्नान्यधिवासयेत् ॥ तूर्यमङ्गलघोषेण चतुर्दिक्षु क्षिपेद्बलिम् ॥ २८ ॥ इन्द्रादिलोकपालेभ्यो भूतेभ्यो मंत्रविद्गुरुः ॥ ततः प्रभाते विमले कुंडं कृत्वा समेखलम् ॥ २९ ॥ ग्रहयज्ञविधानेन शांतिकर्म समारभेत् ॥ सुवर्णालंकृतान्कृत्वा ब्राह्मणान्वेदपारगान् ॥ ३० ॥ चतुरोऽष्टौ यथाशक्त्या वासोभिरभिपूजयेत् ॥ तिलाज्येन च होमः स्यात्तुष्टिपुष्टिकरः सदा ॥ ३१ ॥ मातरं स्थापयित्वाग्रे पूजयेत्कुसुमाक्षतैः ॥ श्रपयित्वा चरुं सम्यक्पायसाद्यपरिप्लुतम् ॥ ३२ ॥ होमादौ जातकर्मादि गोदानं यावदेव तु ॥ पादपं स्नापयित्वा तु समंत्रैस्तीर्थवारिभिः ॥ ३३ ॥ जातकं नामकरणमन्नप्राशनमेव च ॥ सुवर्णसूच्या कुर्वीत कर्णवेधं विधानवित् ॥ ३४ ॥ जातरूपक्षुरेणात्र चूडाकार्या यथाक्रमम् ॥ बध्नीयान्मेखलां मौञ्जीं वासश्च परिधापयेत् ॥ ३५ ॥ यजमानस्ततः स्नातः शुक्लांबरधरः शुचिः ॥ पुष्पाञ्जलिः समभ्येत्य मंत्रमेतमुदीरयेत् ॥ ३६ ॥ ये शाखिनः शिखरिणां शिरसा विभूषा ये नन्दनादिषु वनेषु कृतप्रतिष्ठाः ॥ ये कामदाः सुरनरोरगकिन्नराणां ते मे नतस्य दुरितार्तिहरा भवंतु ॥ ३७ ॥ एतैर्द्विजैर्विधिवरप्रहुतो हुताशः पश्यत्यसावहिमदीधितिरंबरस्थः ॥ त्वं वृक्ष पुत्रपरिकल्पनया वृतोऽसि कार्यं सदैव भवता मम पुत्रकार्यम् ॥ ३८ ॥ इत्येवमुक्त्वा तं वृक्षं लालयित्वा पुनःपुनः ॥ घृतपात्रे स्ववदनं दृष्ट्वाशिषमुदीरयेत् ॥ ३९ ॥ अङ्गादङ्गात्संभवसि हृदयादभिजायसे ॥ आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ ४० ॥ ब्राह्मणानां ततो देया दक्षिणा हृष्टमानसैः ॥ स्थापकाय शुभां धेनुं दत्त्वा कुर्यान्महोत्सवम् ॥ ४१ ॥ दीनानाथजनानां च भोजनं चानिवारितम् ॥ इतरेषां प्रदातव्यं संतुष्टेन सुरासवम् ॥ ४२ ॥ ज्ञातिबन्धुजनैः सार्द्धं स्वयं भुञ्जीत कामतः ॥ प्रेष्याः कर्मकराः सर्वे पूजनीयाः स्वशक्तितः ॥ ४३ ॥ य एवं कुरुते पार्थ वृक्षाणां महदुत्सवम् ॥ सर्वकामानवाप्नोति इहलोके परत्र च ॥ ४४ ॥ पुत्रैर्विना शुभगतिर्न भवेन्नराणां दुष्पुत्रकैरिति तथोभयलोकनाशः ॥ एतद्विचार्य सुधिया परिपाल्य वृक्षान्पुत्राः पुराणविधिना परिकल्पनीयाः ॥ ४५ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे वृक्षोद्यापनविधिवर्णनं नामाष्टाविंशत्युत्तरशततमोऽध्यायः ॥ १२८ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ ये मानवास्त्रिदशमूर्तिनिकेतनानि कुर्वंति साधुजनदृष्टिमनोहराणि ॥ तेषां मृतेऽथ परमार्थमये शरीरे लोके परिभ्रमति कीर्तिमयं शरीरम् ॥ १ ॥ यः कारयेद्वारसिताभ्रगौरसुतुंगसौधधवलायतनं सुराणाम् ॥ चंद्रावदातभवने दिवि लब्धसौख्यो राज्यश्रियं स भुवि बोधयुतामुपैति ॥ २ ॥ ये कारयंति सुरसद्मसु देवतानामर्चाः सुवर्णरजतायसशैलताम्राः ॥ सामंतमौलिमणिरश्मिस



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मर्चितास्ते सिंहासनेऽङ्गदकिरीटभृतोऽवभांति ॥ ३ ॥ ये मेरुमौलिसुरसंवकृताभिषेकाः पञ्चामृतैः सुरवरानभिषेचयंति ॥ ते दिव्यकल्पमभिधार्य सुरेश्वरत्वं राज्याभिषेकमतुलं पुनराप्नुवंति ॥ ४ ॥ ये शैलराजमलयोद्भवचंदनेन सत्कुंकुमेन च सुराननुलेपयंति ॥ ते दिव्यगन्धपटवाससुगंधिदेहा नंदंति नंदनवनेषु सहाप्सरोभिः ॥ ५ ॥ गंधाढ्यजातिकमलोत्पलदिव्यपुष्पैर्देवान्नवैरनुदिनं ननु येऽर्चयंति ॥ पुष्पोत्तमैर्नरपतित्वमवाप्य तेऽपि यास्यंति कुंदधवलामचिरेण सिद्धिम् ॥ ६ ॥ आमोदिभिर्हिमतुरुष्कसुगन्धधूपैर्ये मानवाः सुरवरानपि धूपयंति ॥ कर्पूरधारनिभगन्धवराभिरामे स्वर्गे विमानवति ते भवने रमंते ॥ ७ ॥ दोधूयते कनकदंडविराजितैश्च सच्चामरैर्धवलकुण्डलसुन्दरीभिः ॥ दिव्यांबरस्रगनुलेपनभूपिताङ्गां कृत्वा सुरेशभवनांवरवस्त्रपूजाम् ॥८॥ देदीप्यते दिनकरोज्ज्वलपद्मरागरत्नप्रभाच्छुरितहेममये:विमाने ॥ दिव्यांगनापरिवृतो नयनाभिरामः प्रज्वाल्य दीपममलं भवने सुराणाम् ॥ ९ ॥ यो जागरं सुरवराभिमतो ददाति चैत्रोत्सवादिदिवसेष्वपि तूर्यनादैः ॥ वीणासुवेणुमधुरस्वरभापिणीभिः संगीयते च स कृशोदरकिन्नरीभिः ॥ १० ॥ कुर्वंति ये सदुपलेनधातुरागसंमार्जनं सुरवरायतनेऽनुरक्ताः ॥ मुक्ताकलापमपि कांचनभक्तिचित्रैर्वैडूर्यकुट्टिमतले दिवि ते वसंति ॥ ११ ॥ दद्याच्च यः परमभक्तियुतः सुराणां घण्टावितानवरचामरमातपत्रम् ॥ केयूरहारमणिकुण्डलभूपितोसौ रत्नाधिपो वसति भूतलचक्रवर्ती ॥ १२ ॥ अभ्यर्चयेत्प्रतिवचः कुसुमैर्विचित्रैर्देवाधिदेवपरिसंस्तुतपादपद्मान् ॥ भक्त्या प्रहृष्टमनसः प्रणमंति देवांस्ते भूर्भुवः स्वर्महिमाप्तफला भवंति ॥ १३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे नामैकोनत्रिंशदुत्तरशततमोऽध्यायः ॥ १२९ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ भगवन्केन तपसा व्रतेन नियमेनःवा ॥ दानेन केन वा लोके प्रोज्ज्वलत्वं प्रजायते ॥ १ ॥ अतितेजो महद्दीप्तं दीप्तांशुकिरणोज्ज्वलम्[1] ॥ शरीरं जायते येन तन्मे वक्तुमथार्हसि ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ मथुरायां पुरा पार्थ पिङ्गलो नाम तापसः ॥ आगतः स च मे पत्न्या जाम्ववत्या प्रपूजितः ॥ ३ ॥ पृष्टश्च प्रश्नमेवैतं स चावोचद्यथातथम् ॥ तयापि मे समाख्यातं तत्सर्वं ते वदाम्यहम् ॥ ४ ॥ यदायदा नृपश्रेष्ठ पुण्यकालः प्रपद्यते ॥ संक्रांतौ सूर्यग्रहणे चन्द्रपर्वणि वैधृतौ ॥ ५ ॥ उत्तरे त्वयने प्राप्ते दक्षिणे विपुवे तथा ॥ एकादश्यां शुक्लपक्षे चतुर्दश्यां दिनक्षये ॥ ६ ॥ सप्तम्यामथ वाष्टम्यां स्नात्वा व्रतपरो नरः ॥ नारी वा भूमिदेवेभ्यः प्रयच्छेत्प्रयतांगणे ॥ घृतकुंभेन दीपेन प्रज्वलंतं प्रदीपकम् ॥ ७ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ भूमिदेवा इति प्रोक्तं यत्त्वया मधुसूदन ॥

१ अतितीव्रं महद्दिव्यम्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमेतत्कौतुकं मेऽस्ति संशयं छेत्तुमर्हसि ॥ ८ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पुरा कृतयुगस्यादौ त्रिशंकुर्नाम पार्थिवः ॥ स स्वर्गं गन्तुकामोऽभूच्छरीरेण नरोत्तम ॥ ततश्चण्डालतां नीतो वशिष्ठेन महात्मना ॥ ९ ॥ त्रिशंकुः सर्वमाचख्यौ विश्वामित्राय धीमते ॥ सोऽपि मन्युवशाद्यज्ञं चकाराहूय देवताः ॥ १० ॥ न ता हविः प्रत्यगृह्णंस्ततः क्रुद्धः कुशात्मजः ॥ विश्वामित्रस्तु कोपेन चकारान्यान्सुरोत्तमान् ॥ ११ ॥ शृंगाटकान्नालिकेरान्पचनानानजौडकान् ॥ मेधारथदवार्ताकतारिकूष्माण्डकोद्रवान् ॥ १२ ॥ उष्ट्रान्मनुजदेवांश्च क्रोधान्मुनिरवासृजत् ॥ चकारान्यान्सप्तऋषीन्प्रतिमासं सुरोत्तमान् ॥ १३ ॥ ततः शक्रः समागम्य विश्वामित्रं प्रसाद्य वै ॥ सृष्टिं निवारयामास ये सृष्टास्ते तथापि च ॥ १४ ॥ मर्त्यलोके च ते सर्वे देवा देवकुलेष्वथ ॥ मंत्रैर्निबद्धाः पिण्डीषु स्थिता मूर्तिभृतो यथा ॥१५॥ ब्रह्मा विष्णुस्तथा रुद्रो ये चान्ये देवतागणाः ॥ लोकानामुपकाराय मर्त्यलोकमुपागताः ॥ १६ ॥ प्रतिमासु स्थिताः शश्वद्भोगान्भुञ्जंति शाश्वतान् ॥ वरप्रदाश्च भक्तानामिति ते गुह्यमीरितम् ॥ १७ ॥ तेभ्यः पुरस्ताद्दातव्यो दीप्यमानः प्रदीपकः ॥ सूर्याय रक्तवस्त्रेण पूर्णवर्तिं घृतैर्युताम् ॥ चतुःप्रस्थैः प्रज्वलन्तीं मंत्रेणानेन दापयेत् ॥ १८ ॥ "तद्विष्णोः परमं पदं सदा पश्यंति सूरयः ॥ दिवीव चक्षुराततम्" ॥ १९ ॥ पीतवस्त्रेण कृष्णाय श्वेतवस्त्रेण शूलिने ॥ कौसुंभवस्त्रेणाढ्येन गौरीमुद्दिश्य दापयेत् ॥२०॥ लाक्षारक्तेन दुर्गायै पूर्णवर्तिं प्रबोधयेत् ॥ नीलवस्त्रेण कामाय गणनाथाय खादिरैः ॥२१॥ नागेभ्यः कृष्णवस्त्रेण ग्रहेभ्य इषिकायुधाम् ॥ देवांगनापितृभ्यस्तु पितृवर्तिं प्रबोधयेत् ॥२२॥ विशेषं शृणु सूर्याय पूर्णवर्तिर्निगद्यते ॥ शिवायेश्वरवर्तीति भोगवर्तिर्जनार्दने ॥ २३ ॥ पद्मवर्तिर्विरिंचाय गौर्य्यै सौभाग्यवर्तिका ॥ नागेभ्यो नागवर्तीति ग्रहवर्तिर्युधिष्ठिर ॥ २४ ॥ नेत्रपट्टेन मधुना घृतेन मधुकुंडके ॥ अर्चिते चर्चिते चैव ललितायै प्रबोधयेत् ॥ २५ ॥ मंत्रेणानेन राजेन्द्र तन्निशामय वैदिकम् ॥ २६ ॥ "अग्ने त्वां काम्यया गिरा तुभ्यं ता गिरसस्तु विश्वाः ॥ सुक्षितयः पृथक्पृथक् ॥ २७ ॥ अग्ने कामाय जेगिरे अग्निप्रियेषु धामसु ॥ कामो भूतस्य भव्यस्य सम्राडेको विराजति ताभ्यां नाम स्वाहा" ॥ ॥ २८ ॥ एवमेतेन विधिना यः प्रयच्छति दीपकम् ॥ विस्तीर्णे विपुले पात्रे घृतकुम्भे नियोजितम् ॥ २९ ॥ यांति ते ब्रह्मसदनं विमानेनार्कवर्चसा ॥ तिष्ठंति द्योतमानास्ते यावदाभूतसंप्लवम् ॥ ३० ॥ सदीपे तु यथा देशे चक्षूंषि बलवन्ति हि ॥ तथा दीपस्य दातारो भवंति सफलेक्षणाः ॥ ३१ ॥ यथैवोर्ध्वं गतिर्नित्यं राजन्दीपशिखासु वै ॥ दीपदातुस्तथैवोर्ध्वं गतिर्भवति शोभना ॥ ३२ ॥ घृतेन दीपो दातव्यो राजंस्तैलेन वा पुनः ॥ वसामज्जादिभिर्देयो न तु दीपः कथञ्चन ॥ ३३ ॥ दीपस्तैलेन कर्तव्यो न तु कर्म विजानता ॥ निर्वापणं च दीपस्य हिंसनं च विगर्हि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तम् ॥ ३४ ॥ यः कुर्यात्कर्मणा तेन स्यादसौ पुष्पितेक्षणः ॥ दीपहर्ता भवत्यंधः काणो निर्वापको भवेत् ॥ ३५ ॥ पद्मसूत्रोद्भवां वर्तिं गंधतैलेन दीपिताम् ॥ विरोगः सुभगश्चैव दत्त्वा भवति मानवः ॥ ३६ ॥ प्रज्वाल्य देवदेवस्य कर्पूरेण तु दीपकम् ॥ अश्वमेधमवाप्नोति कुलं चैवसमुद्ध रेत् ॥ ३७ ॥ एतन्मयोक्तं तव दीपदानफलं समग्रं कुरुवंशचन्द्र ॥ श्रुत्वा यथावत्सततं हि देया दीपास्त्वया विप्रसुरालयेषु ॥ ३८ ॥ अत्राप्यु दाहरन्तीममितिहासं पुरातनम् ॥ दीपदानाल्ललितया यदवाप्तं पुराऽनघ ॥ ३९ ॥ आसीच्चित्ररथो नाम विदर्भेषु महीपतिः ॥ तस्य पुत्रशतं राज्ञो जज्ञे पञ्चदशोत्तरम् ॥ ४० ॥ एकैव कन्या तस्यासील्ललितानाम नामतः ॥ सर्वलक्षणसम्पन्ना रूपेणाप्रतिमा भुवि ॥ ४१ ॥ तां ददौ काशिराजाय चार्वंगीं चारुधर्मणे ॥ शतान्यन्यानि भार्याणां त्रीण्यासंश्चारुधर्मणः ॥ ४२ ॥ तासां मध्येऽग्रमहिषी ललिता साप्यथाभवत् ॥ ४३ ॥ विष्णोरा यतने सा तु सहस्रं परिदीपकान् ॥ प्रज्वालयन्त्यनुदिनं दिवारात्रमनिर्वृतम् ॥ ४४ ॥ तामिस्रमाश्वयुक्पक्षं शुक्लपक्षं च कार्त्तिकम् ॥ तस्याः प्रज्व लितो दीप उच्चस्थानकृतः शुभः ॥ ४५ ॥ तस्मिन्काले तथा नित्यं ब्राह्मणावसथे च सा ॥ व्यग्रा भवति सायाह्ने दीपप्रेषणतत्परा ॥ ४६ ॥ चतुष्पथेषु रथ्यासु देवतायतनेषु च ॥ चैत्यवृक्षेषु गोष्ठेषु पर्वतानां च मूर्द्धसु ॥ ४७ ॥ पुलिनेषु नदीनां च कूपमूलेषु पांडव ॥ तां सपत्न्योऽथ संगम्य पप्रच्छुरिदमादृताः ॥ ४८ ॥ ललिते वद भद्रं ते ललितं वचनं तथा ॥ न तथा बलिपुष्पेषु न तथा द्विजपूजने ॥ ४९ ॥ भवत्याः सुमहान्यत्नो दीपप्रज्वालने यथा ॥ तदेतत्कथयास्माकं ललिते कौतुकं परम् ॥ ५० ॥ मन्यामहे त्वयावश्यं दीपदानफलं श्रुतम् ॥ ॥ ललितोवाच ॥ ॥ नाहं मत्सरिणी भद्रा न च रागादिदूषिता ॥ ५१ ॥ एकपत्याश्रिताः साध्व्यो भवत्यो मम मानदाः ॥ अपृथग्धर्मचरणाः शृण्वन्तु गदितं मम ॥ ५२ ॥ मयैतद्दीपदानस्य यथेष्टं भुज्यते फलम् ॥ हिरण्यदयिता भार्या शैलराजसुता वरा ॥ ५३ ॥ उमादेवीति मद्रेषु देविका सा सरिद्वरा ॥ नराणामनुकम्पार्थं ब्रह्मणा ह्यवतारिता ॥ श्रुता किं भवतीभिः सा देविका पापनाशिनी ॥ ५४ ॥ तस्यां स्नात्वा सकृन्नर्यां गाणपत्यमवाप्नुयात् ॥ तस्यामथ नृसिंहाख्यं तीर्थं कल्मषनाशनम् ॥ हरिणा नृसिंहवपुषा यत्र स्नानं कृतं पुरा ॥ ५५ ॥ सौवीरराजस्य पुरा मैत्रेयोभूत्पुरोहितः ॥ तेन चायतनं विष्णोः कारितं देविकातटे ॥ ५६ ॥ अहन्यहनि शुश्रूषां पुष्पधूपानुलेपनैः ॥ दीपदा नादिभिश्चैव चक्रे तत्र स वै द्विजः ॥ ५७ ॥ कार्त्तिक्यां दीपकस्तत्र प्रदत्तस्तेन चैकदा ॥ आसीन्निर्वाणभूयिष्ठो देवार्चासु रतो निशि ॥ ५८ ॥

१ कृपया—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवतायतनेऽवात्सं तत्राहमपि मूषिका ॥ प्रदीपवर्तिहरणे कृतबुद्धिर्वरानना: ॥ ५९ ॥ गृहीताथ मया वर्तिर्वृकदंशो ररास च ॥ नष्टा चाहं ततस्तस्य मार्जारस्य भयातुरा ॥ ६० ॥ वक्त्रप्रांतेन पश्यंत्या स दीपः प्रेरितो मया ॥ जज्वाल पूर्ववद्दीप्त्या तस्मिन्नायतने पुनः ॥ ६१ ॥ मृताहं च पुनर्जाता वैदर्भे राजकन्यका ॥ जातिस्मरा महीपस्य महिषी चारुधर्मणः ॥ ६२ ॥ एष प्रभावो दीपस्य कार्त्तिके मासि शोभनः ॥ दत्तस्यायतने विष्णोर्यस्येयं व्युष्टिरुत्तमा ॥ ६३ ॥ असंकल्पितमध्यस्य प्रेरणं यन्मया कृतम् ॥ केशवे बालदीपस्य तस्येदं भुज्यते फलम् ॥ ६४ ॥ एतस्मात्कारणाद्दीपानहमेतानहर्निशम् ॥ प्रयच्छामि हरेर्गेहे जातमस्य महाफलम् ॥ ६५ ॥ एवमुक्त्वा सपत्नीः सा दीपदानपरायणा ॥ बभूव देवदेवस्य केशवस्य गृहे सदा ॥ ६६ ॥ ततः कालेन महता सह राज्ञा महात्मना ॥ विष्णुलोकमनुप्राप्ता पंचत्वं प्राप्य मानदा ॥ ६७ ॥ तं लोकमासाद्य नृपेण सार्द्धं सा राजपत्नी कमलाभनेत्रा ॥ रेमे महीपाल मुदा समेता दीपप्रदानात्सकलार्त्तिहीना ॥ ६८ ॥ दीपप्रदानमपि पुण्यतरं वदंति विप्राग्निगोसुरकुलैकगृहांगणेषु ॥ तद्दानदीप्तवपुषाथ पथोंधकारे गच्छन्नरः पतति न स्खलते कदाचित् ॥ ६९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे दीपदानविधिवर्णनं नाम त्रिंशदुत्तरशततमोऽध्यायः ॥ १३० ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ कार्त्तिक्यामथ वा माघ्यामयमेव युधिष्ठिर ॥ १ ॥ चैत्र्यामथ तृतीयायां वैशाख्यां द्वादशेऽह्नि वा ॥ खंडनीलं शंखपादं सपौंड्रं धौतपुष्पकम् ॥ २ ॥ गोभिश्चतुर्भिः सहितं सृजेच्चैव विधिं शृणु ॥ यदुवाच पुरा गर्गो गोकुलेऽनघ पांडव ॥ ३ ॥ तत्तेहं च प्रवक्ष्यामि विधिं गर्गप्रचोदितम् ॥ मातरं स्थापयित्वाग्रे पूजयेत्कुसुमाक्षतैः ॥ ४ ॥ मातृश्राद्धं ततः कुर्यात्सदाभ्युदयकारकम् ॥ अकालमूलं कलशमश्वत्थदलशोभितम् ॥ ५ ॥ तत्रविद्वान्स्थापयित्वा तु स्थापयेद्रुद्रदेवताम् ॥ सुसमिद्धं ततः कृत्वा वह्निमंत्रपुरःसरम् ॥ ६ ॥ अथैनं जुहुयात्षड्भिः पृथगाहुतिसंज्ञितैः ॥ पौष्यामंत्रैस्ततः पश्चाद्धुत्वा वह्निं यथाविधि ॥ ७ ॥ एकवर्णं द्विवर्णं वा रोहितं श्वेतमेव वा ॥ जीवद्वत्सपयस्विन्याः पुत्रं सर्वांगसुन्दरम् ॥ ८ ॥ चतस्रो वत्सतर्यश्च ताभिः सार्धमलंकृतम् ॥ तासां कर्णे जपेद्विप्रः पतिं वो बलिनं शुभम् ॥ ९ ॥ समितास्तेन सहिताः क्रीडध्वं हृष्टमानसाः ॥ ततो वामे त्रिशूलं च दक्षिणे चक्रमालिखेत् ॥ १० ॥ अंकितं शंखचक्राभ्यां वर्पितं कुसुमादिना ॥ पुष्पमालाकृतग्रीवं सितवस्त्रैश्च च्छादितम् ॥ ११ ॥ विमुंचेद्वत्सकाभिश्च नीलाभिर्बलिनं वृषम् ॥ देवालये गोकुले वा नदीनां संगमेऽथ वा ॥ १२ ॥ इत्युक्तं गर्गमुनिना विधानं वृषमोक्षणे ॥ स्वेच्छाविहारिणं दृप्तं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गर्जंतं सुन्दरं गवाम् ॥ १३ ॥ ककुद्मिनं पतिं या धन ये विमुञ्चन्ति गोवृषम् ॥ फलं च तस्य वक्ष्यामि ब्रुवतो मे निबोध तत् ॥ १४ ॥ वृषोत्सर्गे पुनात्येव दशातीतान्दशापरान् ॥ यत्किंचित्स्पृशते तोयं समुत्तीर्य जलान्महीम् ॥ १५ ॥ वृषोत्सृष्टं पितॄणां तु तदक्षयमुदाहृतम् ॥ येश्च येश्च स्पृशेत्तोयं लांगूलादिभिरंततः ॥ १६ ॥ सर्वं तदक्षयं तस्य पितॄणां नात्र संशयः ॥ शृङ्गैः खुरैर्वा यद्भूमिमुल्लिखत्यनिशं वृषः ॥ १७ ॥ मधुकुल्याः पितुस्तस्य अक्षयास्ता भवंति वै ॥ सहस्रतलमात्रेण तडागो न यथाश्रुति ॥ १८ ॥ पितॄणां या भवेत्तृप्तिस्तां वृषस्त्वतिरिच्यते ॥ यो ददाति तिलैर्मिश्रांस्तिलान्वा श्राद्धकर्मणि ॥ मधु वा नीलखंडं वा अक्षयं सर्वमेव तत् ॥ १९ ॥ एष्टव्या बहवः पुत्रायद्येकोऽपि गयां व्रजेत् ॥ यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ २० ॥ न करोति वृषोत्सर्गं सुतीर्थे वा जलाञ्जलिम् ॥ न प्रयच्छति यः पुत्रः पितुरुच्चार एव सः ॥ २१ ॥ यद्भूमिमालिखति शृङ्गखुरैः प्रहृष्टो यद्वा करोति प्रतिमल्लवृषान्निरीक्ष्य ॥ खण्डं समस्तमपि तस्य विवाहकर्तुः संतोषमावहति शक्रसभागतस्य ॥ २२ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे वृषोत्सर्गविधिवर्णनं नामैकत्रिंशदुत्तरशततमोऽध्यायः ॥ १३१ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ किमर्थं फाल्गुनस्यांते पौर्णमास्यां जनार्दन ॥ उत्सवो जायते लोके ग्रामेग्रामे पुरे पुरे ॥ १ ॥ किमर्थं शिशवस्तस्यां गेहेगेहेऽतिवादिनः ॥ होलिका दीप्यते कस्मात्फाल्गुनांते किमुच्यते ॥ २ ॥ अडाडेति च का संज्ञा शीतोष्णेति किमुच्यते ॥ को ह्यस्यां पूज्यते देवः केनेयमवतारिता ॥ किमस्यां क्रियते कृष्ण एतद्विस्तरतो वद ॥ ३ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ आसीत्कृतयुगे पार्थ रघुर्नाम नराधिपः ॥ शूरः सर्वगुणोपतः प्रियवादी बहुश्रुतः ॥ ४ ॥ स सर्वां पृथिवीं जित्वा वशीकृत्य नराधिपान् ॥ धर्मतः पालयामास प्रजाः पुत्रानिवौरसान् ॥ ५ ॥ न दुर्भिक्षं न च व्याधिर्नाकालमरणं तथा ॥ नाधर्मरुचयः पौरास्तस्मिञ्छासति पार्थिव ॥ ६ ॥ तस्यैवं शासतो राज्यं क्षात्रधर्मरतस्य वै ॥ पौराः सर्वे समागम्य पाहिपाहीत्यथाब्रुवन् ॥ ७ ॥ ॥ पौरा ऊचुः ॥ अस्माकं हि गृहे काचिड्ढौंढा नामेति राक्षसी ॥ दिवा रात्रौ समागम्य बालान्पीडयते बलात् ॥८॥ रक्षया कंडकेनापि भेषजैर्वा नराधिप ॥ मंत्रज्ञैः परमाचार्यैः सा नियंतुं न शक्यते ॥ ९ ॥ पौराणां वचनं श्रुत्वा रघुर्विस्मयमागतः ॥ विस्मयाविष्टहृदयः पुरोहितमथाब्रवीत् ॥ १० ॥ ॥ रघुरुवाच ॥ ॥ ढौंढेति राक्षसी केयं किंप्रभावा द्विजोत्तम ॥ कथमेषा नियंतव्या मया दुष्कृतकारिणी ॥ ११ ॥ रक्षणात्प्रो

१ वृषस्य–इ० पा० । २ वृषाम्–इ० पा० । ३ वर्तते–इ० पा० । ४ प्रख्याता–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्यते राजा पृथिवीपालनात्पतिः ॥ अरक्षमाणः पृथिवीं राजा भवति किल्बिषी ॥ १२ ॥ वशिष्ठ उवाच ॥ शृणु राजन्परं गुह्यं यन्नाख्यातं मया क्वचित् ॥ ढौंढा नामेति विख्याता राक्षसी मालिनः सुता ॥ १३ ॥ तया चाराधितः शंभुरुग्रेण तपसा पुरा ॥ प्रीतस्तामाह भगवान्वरं वरय सुव्रते ॥ १४ ॥ यत्ते मनोऽभिलपितं तद्दाम्यविचारितम् ॥ ढौंढा प्राह महादेवं यदि तुष्टः स्वयं मम ॥ १५ ॥ न च वध्यां सुरादीनां मनुजानां च शंकर ॥ मां कुरु त्वं त्रिलोकेश शस्त्रास्त्राणां तथैव च ॥ १६ ॥ शीतोष्णवर्षासमये दिवा रात्रौ बहिर्गृहे ॥ अभयं सर्वदा मे स्यात्त्वत्प्रसादान्महेश्वर ॥ १७ ॥ शंकर उवाच ॥ एवमस्त्वित्यथोक्त्वा तां पुनः प्रोवाच शूलभृत् ॥ उन्मत्तेभ्यः शिशुभ्यश्च भयं ते संभविष्यति ॥ ऋतावृतौ महाभागे मा व्यथां हृदये कृथाः ॥ १८ ॥ एवं दत्वा वरं तस्यै भगवान्भगनेत्रहा ॥ स्वप्ने लब्धो यथार्थार्थस्तत्रैवांतर्हितो भवत् ॥ १९ ॥ एवं लब्धवरा सा तु राक्षसी कामरूपिणी ॥ नित्यं पीडयते बालान्संस्मृत्य हरभाषितम् ॥२०॥ अडाडयेति गृह्णाति सिद्धमंत्रं कुटुंबिनी ॥ गृहेषु तेन सा लोके ह्यडाडेत्यभिधीयते ॥ २१ ॥ एतत्ते सर्वमाख्यातं ढौंढायाश्चरितं मया ॥ सांप्रतं कथयिष्यामि येनोपायेन हन्यते ॥२२॥ अद्य पञ्चदशी शुक्ला फाल्गुनस्य नराधिप ॥ शीतकालो विनिष्क्रांतः प्रातर्ग्रीष्मो भविष्यति ॥ २३ ॥ अभयप्रदानं लोकानां दीयतां पुरुषोत्तम ॥ यथाद्याशंकिता लोका रमंति च हसंति च ॥ २४ ॥ दारुजानि च खंडानि गृहीत्वा समरोत्सुकाः ॥ योधा इव विनिर्यांतु शिशवः संप्रहर्षिताः ॥ २५ ॥ संचयं शुष्ककाष्ठानामुपलानां च कारयेत् ॥ तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मन्त्रविस्तरैः ॥ २६ ॥ ततः किलकिलाशब्दैस्तालशब्दैर्मनोहरैः ॥ तमग्निं त्रिः परिक्रम्य गायंतु च हसंतु च ॥ जल्पंतु[२] स्वेच्छया लोका निःशंका यस्य यन्मतम् ॥ २७ ॥ तेन शब्देन सा पापा होमेन च निराकृता ॥ अदृष्टघातैर्डिंभानां राक्षसी क्षयमेष्यति ॥२८॥ श्रीकृष्ण उवाच ॥ तस्यर्षेर्वचनं श्रुत्वा स नृपः पांडुनंदन॥ सर्वं चकार विधिवदुक्तं तेन च धीमता ॥२९॥ गता सा राक्षसी नाशं तेन चोग्रेण[१] कर्मणा ॥ ततः प्रभृति लोकेऽस्मिन्नडाडा ख्यातिमागता॥३०॥ सर्वदुष्टापहो होमः सर्वरोगोपशांतिदः ॥ क्रियतेऽस्यां द्विजैः पार्थ तेन सा होलिका मता ॥ ३१ ॥ सर्वसारातिविश्वेयं पूर्णमासीद्युधिष्ठिर ॥ सारत्वात्फल्गुरित्येषा परमानंददायिनी ॥ ३२ ॥ अस्यां निशागमे पार्थ संरक्ष्याः शिशवो गृहे ॥ गोमयेनोपसंलिप्ते सचतुष्के गृहांगणे ॥ ३३ ॥ आकारयेच्छिशुप्रायान्खड्गव्यग्रकरान्नरान् ॥ ते काष्ठखण्डैः संस्पृश्य गीतैर्हास्यकरैः शिशून् ॥ रक्षंति तेषां दातव्यं गुडं पक्वान्नमेव च ॥३४॥ एवं ढौंढितमात्रस्य स दोषः प्रशमं

१ रौद्रेण-इ० पा० । २ वल्गन्तु-इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्रजेत् ॥ वालानां रक्षणं कार्यं तस्मात्तस्मिन्निशागमे ॥ ३५ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ प्रभाते किञ्जनैर्देव कर्तव्यं सुखमीप्सुभिः ॥ प्रवृत्ते माधवे मासि प्रतिपद्भास्करोदये ॥ ३६ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ कृत्वा चावश्यकार्याणि संतर्प्य पितृदेवताः ॥ वंदयेद्धोलिकाभूतिं सर्वदुष्टोपशांतये ॥ ३७ ॥ मंडिते चर्चिते चैव उपलिप्ते गृहाजिरे ॥ चतुष्कं कारयेच्छ्रेष्ठं वर्णकैश्चाक्षतैः शुभैः ॥ ३८ ॥ तन्मध्ये स्थापयेत्पीठं शुक्लवस्त्रोत्तरच्छदम् ॥ अग्रतः पूर्णकलशं स्थापयेत्पल्लवैर्युतम् ॥ ३९ ॥ साक्षतं सहिरण्यं च सितचन्दनचर्चितम् ॥ कलशस्याग्रतो देया उपानहवरांशुकाः॥४०॥ आसने चोपविष्टस्य ब्रह्मघोषेण भारत ॥ चर्चयेच्चन्दनं नारी अव्यंगांगा सुलक्षणा ॥ ४१ ॥ पद्मरागोत्तरपटा श्रेष्ठांशुकविभूषिता ॥ वसुधारां शिरोग्रे च दधिदूर्वाक्षतान्विताम् ॥ ४२ ॥ चर्चापयित्वा श्रीखंडमायुरारोग्यवृद्धये ॥ पश्चाच्च प्राशयेद्विद्वांश्चूतपुष्पं सचंदनम् ॥ ४३ ॥ मनोभवस्य सा पूजा ऋषिभिः संप्रदर्शिता ॥ ये पिबंति वसंतादौ चूतपुष्पं सचन्दनम् ॥ ४४ ॥ सत्यं हृदिस्थकामस्य तत्पूर्तिर्जायतेञ्जसा ॥ अनंतरं द्विजेन्द्राणां सूतमागधबंदिनाम् ॥ ४५ ॥ दद्याद्दानं यथा शक्त्या कामो मे प्रीयतामिति ॥ ततो भोजनवेलायां शृतं यत्प्राक्तनेऽहनि ॥ ४६ ॥ प्राश्नीयात्प्रथमं चान्नं ततो भुञ्जीत कामतः ॥ य एवं कुरुते पार्थ शास्त्रोक्तं फाल्गुनोत्सवम् ॥ ४७ ॥ अनायासेन सिध्यंति तस्य सर्वे मनोरथाः ॥ आधयो व्याधयश्चैव यांति नाशं न संशयः ॥४८॥ पुत्रपौत्रसमायुक्तः सुखं तिष्ठति मानवः ॥ ४९ ॥ पुण्या पवित्रा जयदा सर्वविघ्नविनाशिनी ॥ एषा ते कथिता पार्थ तिथीनामुत्तमा तिथिः ॥ ५० ॥ वृत्ते तुषारसमये सितपञ्चदश्यां प्रातर्वसन्तसमये समुपस्थिते च ॥ संप्राश्य चूतकुसुमं सह चन्दनेन सत्यं हि पार्थ पुरुषः स सुखी समास्ते ॥ ५१ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे फाल्गुनपूर्णिमोत्सववर्णनं नाम द्वात्रिंशदुत्तरशततमोऽध्यायः ॥ १३२ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ संत्यज्यालिकुलालीढकुसुमानि मृदून्यपि ॥ दमनेन कथं लोकैः पूज्यंते नाकनायकाः ॥ १ ॥ दोलांदोलनमाहात्म्यं रथयात्रामहोत्सवम् ॥ कंथयस्वामलं प्राज्ञ यादवांभोजभास्कर ॥ २ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पार्थार्थिजनसद्वृक्ष क्षांतिधाम धरापते ॥ यदेतद्भवता पृष्टं तच्छृणुष्व वदामि ते ॥ ३ ॥ पुरा सुराणामावासे मंदरे चारुकंदरे ॥ गन्धाधारी कुलालीढो जातो दमनकस्तरुः ॥ ४ ॥ तस्य गंधमनाघ्रेयमाघ्राय सुरयोषितः ॥ मदनोन्मादवशगा गायंति च हसंति च ॥५॥ ऋषयो नियमांस्त्यक्त्वा प्राद्रवंत गृहान्प्रति ॥ न वेदाध्ययने ध्याने रतिस्तेषां बभूव ह ॥६॥ अपराधाद्विघटितं यद्बभूव प्रिये परम् ॥

१ वर्द्धयेत्सदनं नारी–इ० पा० । २ वर्द्धापयित्वा–इ० पा० । ३ समस्ते–इ० पा० । ते त्वया समस्तुल्य इत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानसं मानिनीनां तु पुनर्गंधेन संधितम् ॥ ७ ॥ गंधेनाकुलितं लोकं दृष्ट्वा ब्रह्मा तमब्रवीत् ॥ शमनिर्मितया वाचा रोपात्प्रस्फुरिताधरः ॥ ८ ॥ ॥ ब्रह्मोवाच ॥ ॥ जातस्त्वं लोकदमनान्नूनं दमनको मया ॥ जगद्वा घूर्णसे कस्मात्कर्म नैतत्तवोचितम् ॥ ९ ॥ यत्संतस्त्वनुमन्यंते सर्वातिशयवर्जितम् ॥ तत्सेवेत नरः कर्म यत्रोद्वेगो न धीमताम् ॥ १० ॥ एकस्याप्यपकारं यः करोति स नराधमः ॥ बहूनामपकाराय संप्रवृत्तः किमुच्यते ॥ ११ ॥ दृष्टार्थबाधकं कर्म न कर्तव्यं कथंचन ॥ अदृष्टं प्रति संदेहः सोस्माभिरनुमीयते ॥ १२ ॥ ततः स्वयं प्रभजति दैवे पित्र्ये च कर्मणि ॥ भोगार्थे च त्रिभुवननिरादेयो भविष्यति ॥ १३ ॥ ॥ दमनक उवाच ॥ ॥ पुरुषादेवमारब्धं न क्रोधान्नार्थकारणात् ॥ स्वभाव एष मे ब्रह्मंस्त्वया सृष्टः पुरा विभो ॥ १४ ॥ या यस्य जंतोः प्रकृतिः शुभा वा यदि वेतरा ॥ स तस्यामेव रमते दुष्कृते सुकृते तथा ॥ १५ ॥ तत्स्वभावप्रवृत्तस्य यदि शापस्त्वया मम ॥ प्रदत्तः किं करोम्येतन्न कृत्यमपराध्यति ॥ १६ ॥ युक्तियुक्तं वचः श्रुत्वा दमनेन समीरितम् ॥ प्रीतात्मा पद्मजः प्राह करोमि तव सत्प्रियम् ॥ १७ ॥ वसंते सहकारोत्थमंजरीपिंजरे जने ॥ पुष्पिताशोकशोभाढ्ये वने पुंस्कोकिलाकुले ॥ १८ ॥ तस्मिन्काले सुरेशानां शिरांस्याक्रम्य लीलया ॥ स्थास्यसि त्वं दिनं चैकं यद्यस्य विहितं हितम् ॥ १९ ॥ ये त्वामारोपयिष्यंति दानमानपुरस्सराः ॥ सुराणां ते भविष्यंति सदैव सुखिनो नराः ॥ २० ॥ सर्वदैव शिवस्येष्टा पुण्या पापभयापहा ॥ प्रसिद्धिं यास्यति मधौ दमनाख्या चतुर्दशी ॥ २१ ॥ एवमुक्त्वा ययौ ब्रह्मा दमनो मंदरे गिरौ ॥ उवास वासिताशेषभुवनो गंधसम्पदा ॥ २२ ॥ दिव्ये गिरौ गिरिसुतादयिताधिवासे रत्नांशुकच्छुरितकाञ्चनभूमिभागे ॥ शापं वरं च हृदये विनिवेश्य शंभोस्तत्रास्थितो दमनको दमितांतरात्मा ॥ २३ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ धर्मराज निबोधेदमांदोलकमहोत्सवम् ॥ प्रवृत्तनरनारीकं पञ्चमोच्चारसुन्दरम् ॥२४॥ सानंदं नंदनवने आर्द्रया सहितो यथा ॥ विस्मयस्मेरनयनो बभ्रामोद्भ्रांतसौरभः ॥ २५ ॥ उन्मादयन्वने पुण्ये विद्याधरगणान्बहून् ॥ वसंततौ नृत्यमानान्सुरासुरशतार्चितः ॥ ॥ २६ ॥ संतानपारिजातोत्थां बद्ध्वा स माधवीलताम् ॥ कश्चिदांदोलनं चक्रे समालिंग्य घनस्तनीम् ॥ २७ ॥ गीतमांदोलकारूढस्तद्गायंत्यमरस्त्रियः ॥ येन चोत्पादयंति स्म मन्मथस्यापि मन्मथम् ॥ २८ ॥ तं दृष्ट्वाष्टापदनिभा भवानी प्राह शंकरम् ॥ कौतुकं मे समुत्पन्नं पश्येमाः शंकर प्रभो ॥ २९ ॥ आंदोलकं मम कृते कारयस्व स्वलंकृतम् ॥ त्वया सहांदोलयेयं यथा चैते त्रिलोचन॥३०॥ तद्गौरीवचनं रम्यं श्रुत्वा गोवृ



१ आलोचनम्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पभध्वजः ॥ सदोलां कारयामास समाहूय महासुरान् ॥३१॥ स्तंभद्वयं रोपयित्वा इष्टापूर्तमयं दृढम् ॥ सत्यं चैवोपरिततं श्रेष्ठं काष्ठमकल्पयत् ॥ ॥३२॥ वासुकिं दंडकस्थाने बद्धा तांतवसप्रभम् ॥ तत्फणामंतरापीठं कृतवान्मणिमंडितम् ॥ ३३ ॥ कृमिकार्पासकौशेयवस्त्रैः संवेष्टितं नवैः ॥ स्रग्दामालंबितप्रांतमणिमौक्तिकशेखरम् ॥३४॥ रचयित्वा विचित्रां तां दोलां चैलाजिनोत्तराम् ॥ स सिद्धां सिद्धगुरवे गौरवेण न्यवेदयत् ॥३५॥ तत्रारूढस्तु यावत्स सौम्यसोमविभूषणः ॥ मंदरं दोलयामास पार्श्वस्थैः पार्षदैः सह ॥३६॥ वामपार्श्वे तु विजया दक्षिणेन जया भवेत् ॥ चाम राक्रांतबाहू ते तेनाश्लिष्टे न्यवीजताम् ॥ ३७ ॥ आंदोलयंत्या पार्वत्या सहितं स गदाक्षरम् ॥ येन देवासुरस्त्रैणमासीदानंदनिर्भरम् ॥ ३८ ॥ जगुर्गंधर्वपतयो ननृतुश्चाप्सरोगणाः ॥ उच्छलत्तालवाद्यानि वादयंति स्म चारणाः ॥ ३९ ॥ चेलुः कुलाचलाः सर्वे चुक्षुभुः सप्त सागराः ॥ ववुर्वाताः सनिर्घाता देवे दोलां समास्थिते ॥ ४० ॥ आलोक्य व्याकुलं लोकं देवाः शक्रपुरोगमाः ॥ उपेत्य प्रणिपत्योचुः सर्वपापहरं परम् ॥ ४१ ॥ उपारमस्व भगवन्भवतः क्रीडयानया ॥ जगद्व्यापद्यते देवे चलितः सागरश्च यत् ॥ ४२ ॥ गीर्वाणगीर्भिः संहृष्टः शंकरो लोकशंकरः ॥ समुत्पपात दोलातः प्रहर्षोत्फुल्ललोचनः ॥ ४३ ॥ उवाच वचनं पार्थ सुरसार्थस्य पश्यतः ॥ सानुकंपं सुललितं विस्फुटार्थपदाक्षरम् ॥ ४४ ॥ श्रीमहादेव उवाच ॥ अद्य प्रभृति ये दोलाक्रीडां पुष्करिणीतटे ॥ वसंते कारयिष्यंति मंडिते त्रिदशांगणे ॥ ४५ ॥ नेत्रपट्टापटच्छन्नां पद्मरागविभूषिताम् ॥ आतपत्रेण संयुक्तां विन्यस्तकनकांडकाम् ॥ ४६ ॥ विचित्राभरणाभाभिराभासितदिगंतराम् ॥ तारकाशांतचित्रांगपुष्पमालामनोरमाम् ॥ ४७ ॥ मालां विद्याधराक्रांतां प्रांतरोपितदर्पणाम् ॥ छत्रचामरसंछन्नां यथा शक्त्याप्यलंकृताम् ॥ ४८ ॥ अग्निकार्यं ततः कृत्वा क्षिप्त्वा चैव दिशां वलिम् ॥ तस्यामारोपयेद्देवमिष्टहृष्टजनावृतः ॥ ४९ ॥ मूलमंत्रेण देवानां प्रोक्तं दोलाधिरोहणम् ॥ पार्श्वस्थो ब्राह्मणो विद्वान्पठेद्वा मंत्रमुत्तमम् ॥ ५० ॥ गंभीरांतरनिर्घोषैर्ललनानां च निस्वनैः ॥ स्तुतिमंगलशब्दैश्च पुष्पधूपाधिवासिताम् ॥ ५१ ॥ एतस्मिन्नन्तरे नारीं दोहनाय निकुट्टकाम् ॥ प्रवेशयेत्कुंकुमाढ्यां क्रीडावर्णप्रियैः सह ॥ ५२ ॥ सुवर्णशृंगिणा प्रोक्तं स्मितदंतांशुकर्बुरम् ॥ लगमानं जलं चांगे कस्य न स्यात्सुखप्रदम् ॥ ५३ ॥ जलसंक्लिन्नवसनो रशनादाममंडितः ॥ कम्बुग्रीवोल्लसन्सर्वो बभूव गणिकागणः ॥ ५४ ॥ कुंकुमक्षोदतांबूलपुष्पमालाकुलो जनः ॥ तां विहाय जलक्रीडां नान्यस्यां विदधे मनः ॥ ५५ ॥ पीतशीतजलाघातताडितोऽपि जनः सुखम् ॥ मन्यते नियतः कोपि

१ मणिमौक्तिकम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रभावोऽयमनंगजः ॥ ९६ ॥ एवं ये तु गमिष्यंति नरा वर्त्मतया गतम् ॥ नीरुजस्ते भविष्यंति सुखिताः शरदां शतम् ॥ ९७ ॥ पुत्रपौत्रसमायुक्ता धनधान्यसमायुताः ॥ विहृत्य सुखसंपत्तौ ततो यास्यंति मत्पुरम् ॥ ९८ ॥ प्राप्ते वसंतसमये सुरसत्तमानामान्दोलनं सुरवराननुकुर्वते ये ॥ ते प्राप्नुवंति भुवि जन्मतरोः फलानि दुःखार्णवात्कुलशतान्यपि तारयंति ॥ ९९ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे आन्दोलकविधिवर्णनं नाम त्रयस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३३ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ रथयात्राविधानं ते कथयामि युधिष्ठिर ॥ स्थिरो भूत्वा निबोधेदं त्वं हि मूर्तविदां वरः ॥ १ ॥ चैत्रे त्रिनेत्रसंभूतमलयाख्यमहागिरौ ॥ प्रवहत्पवनध्वानप्रेंखोलितलताचये ॥ २ ॥ एतस्मिन्नेव काले तु भ्रममाणो यदृच्छया ॥ नारदः शारदाकांताच्छिवलोके समाययौ ॥ ३ ॥ दृष्ट्वापूर्वं शिवं शांतं सुरेशैः सर्वतो वृतम् ॥ प्रणम्योपाविशद्विप्रः पुरतः केशवेशयोः ॥ ४ ॥ तमुपासीनमालक्ष्य भगवान्भगनेत्रहा ॥ पप्रच्छाच्छादितमनाः कुतश्चागम्यते पुनः ॥ ५ ॥ ॥ श्रीनारद उवाच ॥ ॥ शिव कामं च तं विद्धि दग्धं मा विबुधोत्तम ॥ वसंतो नाम कोऽप्येष कामस्य दयितः सखा ॥ ६ ॥ मलयानिलयुक्तेन तेन विश्वं वशीकृतम् ॥ सहकारकरीन्द्रस्थं कृत्वा कोकिलडिंडिमम् ॥ ७ ॥ घोपयामास विजयं मन्मथस्य पुरेपुरे ॥ शशांकशेखरः कोऽयं कोयं शंखगदाधरः ॥ ८ ॥ कोयं च डिम्बो वा ब्रह्मा कामस्त्रिजगतां प्रभुः ॥ प्रायः क्रीडारतिलोको वसंतवचनात्पुनः ॥ ९ ॥ ऊर्ध्वबाहुस्तु नर्नर्ति तालदत्तपदक्रमः ॥ व्यवसायं न गच्छंति ये संहृत्य वनांतरम् ॥ १० ॥ गायंतश्च परीहृष्टास्ते चाप्यायांति यांति च ॥ गोप्यसीमांतरगताः क्षेत्रस्थानस्य रक्षिणः ॥ ११ ॥ तेऽपि गायंति नृत्यंति हसंति स्मरतारकाः ॥ करस्य ताडनेऽत्यर्थं मुरजो धुर्धरायते ॥ १२ ॥ विटं पश्यंति कुलटाः प्रारब्धोचितपण्डिताः ॥ सुमनांसि सुसंगीतनृत्यवाद्यसुवादितम् ॥ १३ ॥ एवमेतत्त्रिलोकेऽस्मिन्निति व्यवसितो जनः ॥ ललल्लम्बस्तनीं दृष्ट्वा जरा योषापि नृत्यति ॥ १४ ॥ वसंतस्य प्रभावोऽयं कोऽप्यपूर्वो विजृंभते ॥ सरांस्यद्भुतपद्मानि प्रफुल्लाः पुष्पवाटिकाः ॥ १५ ॥ वृक्षाः पक्षिशताकीर्णा विजिघ्राणमुखाः सुराः ॥ विकंपवसनावालः पवनस्त्रिगुणात्मकः ॥ १६ ॥ कृतः प्रत्यक्षसुमहान्वसंतो न जगत्त्रये ॥ अवजल्पमुखा बाला वृद्धास्तु विकलद्विजाः ॥ १७ ॥ उभावपि प्रतप्येते पश्येदं कामचेष्टितम् ॥ पक्षिणां पक्षनिक्षेपैर्नव्यस्तुंगतरंगकैः ॥ १८ ॥ पादपाः पल्लवशतैर्नृत्यंते च प्रहर्षिणः ॥ एतच्छुत्वा तु वचनं नारदस्येन्दुशेखरः ॥ १९ ॥ कौतुकाकुलितः शीघ्रमारुरोह रथं स्वकम् ॥ रथेन काञ्चनांगेन पतत्त्रिवरकेतनः ॥ २० ॥ प्रययौ पुण्डरीकाक्षः शंखचक्रगदाधरः ॥ पारावतप्रती





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काशं चतुर्वेदमयं रथम् ॥ २१ ॥ आस्थाय प्रययौ हृष्टो ब्रह्मा ब्राह्मणसंस्तुतः ॥ मुनिभिश्चाप्सरोभिश्च यक्षरक्षोमहोरगैः ॥ २२ ॥ वृतो रथेन प्रययौ भास्करो वारितस्करः ॥ शैलजोरुपताकेन रथेनादित्यवर्चसा ॥ २३ ॥ कात्यायनी प्रचलिता पञ्चवक्रेण केतुना ॥ लंबोदरः करशतगृहीतकनकोत्पलः ॥ २४ ॥ प्रयातः स्वरथारूढः कृतकर्णकुलाकुलः ॥ एवं देवः परिवृतो भगवान्गोवृषध्वजः ॥ २५ ॥ रथारूढैरमूढात्मा मर्त्यलोकमवातरत् ॥ यावत्पश्यति देवेशस्तावत्सर्वं तदक्षरम् ॥ २६ ॥ नारदेन यथैवोक्तस्तावत्सर्वं. तदक्षरम् ॥ नारदेन यथैवोक्तं जगदानन्दनिर्भरम् ॥ २७ ॥ देवैः सार्द्धं पशुपतिर्यावत्पश्यति विस्मितः ॥ तावत्तस्यैव हि गणाः परंब्रह्मसमंजसम् ॥ २८ ॥ गायंति केचित्सोत्कंठं लुंठंत्यन्ये प्रहर्षिताः ॥ वादयंत्यपरे तुष्टा जहसुः केचिदुल्बणम् ॥ २९ ॥ वादयंत्यन्यथा वाद्यं गायंत्यन्येऽन्यथा गणाः ॥ अन्येऽन्यथा प्रनृत्यंति चित्रं चैत्रस्य चेष्टितम् ॥ ३० ॥ नीलोत्पलाभनयनैर्विलसत्प्रांततारकैः ॥ क्रीडारतिभिरारब्धमालापैश्च सुरैरपि ॥ ३१ ॥ सुराणां क्षोभमालक्ष्य भगवान्गोवृषध्वजः ॥ चिन्तयामास सुमहान्कार्ययोगो ह्युपस्थितः ॥ ३२ ॥ अनर्थमुत्थितं तद्वत्तद्विघाताय ये जनाः ॥ नयंते येऽतिमूर्खत्वादापदोऽभिभवंति तान् ॥ ३३ ॥ वसंतः स्वामिभक्तत्वान्मान्यपुष्पाकरं यदा ॥ उन्मादाढ्यजनो रक्ष्यः कार्यं कार्यद्वयं मम ॥ ३४ ॥ संचिंत्यैवं समानाय्य वसंतं प्राह शंकरः ॥ समानीतो मासमेकं स्थातव्यं भवता त्विह ॥ ३५ ॥ सितपक्षः सहायोऽयं सर्वभूतसुखप्रदः ॥ भवत्यतिमहानन्दो विशेषेण दिवौकसाम् ॥ ३६ ॥ यो यथा रथमारूढः समायातः समीक्षितुम् ॥ वर्षेवर्षे स तेनैव संस्थानेनागमिष्यति ॥ ३७ ॥ कारयिष्यन्ति ये मर्त्या रथयात्रामहोत्सवम् ॥ ते दिव्यभोगभोक्तारो भविष्यन्ति निरामयाः ॥ ३८ ॥ एवमाभाष्य भगवान्वसंतं च ततः सुरैः ॥ संस्तुतोऽथ नतश्चापि स्वस्थानमगमत्ततः ॥ ३९ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ रथः किमात्मकः कार्यः कार्या यात्रा कथं भवेत् ॥ आरोपयेत्कथं देवान्रथे वद जगत्पते ॥ ४० ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ सुविचित्रं चित्रतनुं श्रेष्ठकाष्ठमयं रथम् ॥ सुदृढाक्षं दृढाबंधं सुचक्ररथकूबरम् ॥ ४१ ॥ अथ वा वंशविहितं नेत्रपट्टपटावृतम् ॥ तारकाशतचित्रांशं पुष्पमालाविभूषितम् ॥ ४२ ॥ सितगोयुगसंयुक्तं पञ्चबाणपताकिनम् ॥ छत्रचामरशोभाढ्यं स्थापयेद्भवनाङ्गणे ॥ ४३ ॥ वैश्वदेवं ततः कुर्याद्ग्रहयज्ञविधानतः ॥ चतुश्चरणकैर्मंत्रैर्विप्र शान्तिकपौष्टिकैः ॥ ४४ ॥ आरोपयेद्रथे देवं मूलमंत्रेण मंत्रवित् ॥ वेदोक्तैरथपौराणैर्गंधधूपाधिवासिते ॥ ४५ ॥ रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुपारथिः ॥ अभीपूणां

१ प्रारब्धमालामुखम्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महिमानं पनायत मनुः पश्चादनुयच्छन्ति रश्मयः ॥ ४६ ॥ शंखदुदुभिनिर्घोषैः काहलानां च निःस्वनैः ॥ हस्तदीपैः प्रज्वलितैस्तालकोलाहलेन च ॥ ४७ ॥ दोषासुखेन रमितं प्रेषणीयपुरःसरम् ॥ महतोत्सवभारेण भ्रामयेत्परितो रथम् ॥ ४८ ॥ तांबूलानि रथे दद्यात्पुष्पमालायुतानि च ॥ रथवोढॄंप्रदद्यात्तु प्रेक्षकेभ्योऽप्यवारितम् ॥ ४९ ॥ यस्ययस्य गृहेऽभ्येति प्रेरितो रथिना रथः ॥ तस्यतस्य भवेत्पूज्यः पुष्पधूपाक्षतादिभिः ॥ ॥ ५० ॥ इतरोऽपि भवेत्पूज्यः संप्राप्ते गृहिणां गृहे ॥ किं पुनर्जगतां भर्ता सर्वलोकमहेश्वरः ॥ ५१ ॥ कदाचिदक्षभङ्गः स्याद्ध्वजभंगोऽथ वा भवेत्॥ भज्येत वा युगमध्ये नहनं त्रुटचते यदि ॥ ५२ ॥ ब्राह्मणांस्तत्र संपूज्य होमः कार्यो विजानता ॥ तिलैराज्येन पयसा येन संपद्यते सुखम् ॥ ॥ ५३ ॥ प्रेरणीप्रेक्षणीयैश्च भ्रामयित्वा रथोत्तमम् ॥ स्थापयेन्नगरस्यांतस्तत्र कुर्यान्महोत्सवम् ॥ ५४ ॥ दोलाग्राहैश्चक्रदोलाभ्रमैर्डमरकैस्तथा ॥ विद्याधरीणां चरितमितराभिः प्रकाश्यते ॥ ५५ ॥ एवं यः कुरुते पार्थ सुखदं तु रथोत्सवम् ॥ तथैव पूजयेत्पार्थ उपवासपरो नरः ॥ ५६ ॥ सर्वव्याधिविहीनश्च सुखी स्याच्छरदां शतम् ॥ यः कारयित्वा सौवर्णं रौप्यं वा रथमुत्तमम् ॥ ५७ ॥ वर्णकैश्चित्रितं दिव्यं दारुजं वा सुशोभनम् ॥ स्वहस्तरचितं यश्च भास्कराय निवेदयेत् ॥ ५८ ॥ स मर्त्यलोके सुचिरात्सुखानि च समश्नुते ॥ पूर्वोक्तविधिना भानुं भ्रामयित्वा रथे स्थितम् ॥ ॥ ५९ ॥ स्थापयेत्सर्वभागे तु गेयं वाद्यपुरःसरम् ॥ दक्षिणे तु दिशो भागे द्वितीयेऽह्नि नयेद्रथम् ॥ ६० ॥ तत्रापि जागरं कुर्याद्वाद्यगीतसुमंगलैः ॥ अपरायां तृतीयेऽह्नि स्थापयेद्रथमुत्तमम् ॥ ६१ ॥ प्रेक्षणीयविनोदेन तां रात्रिमतिवाहयेत् ॥ स्थापयेदुत्तरस्यां तु चतुर्थे दिवसे रथम् ॥ ॥ ६२ ॥ महायात्रां प्रकुर्वीत तत्राप्यद्भुतचेष्टितम् ॥ पंचमे दिवसे प्राप्ते नगरांतस्थितं रविम् ॥ ६३ ॥ पूजयित्वा विधानेन षष्ठेऽह्नि भवनं नयेत् ॥ रथयात्राप्रसंगेन कथिता रथसप्तमी ॥ ६४ ॥ सर्वपापहरा पुण्या किञ्चिंदन्यन्निबोध मे[1] ॥ गौरी पूज्या तृतीयायां चतुर्थ्यां विघ्ननायकः ॥ ६५ ॥ पञ्चम्यां पंकजकरां पूजयेद्वा सरस्वतीम् ॥ षष्ठ्यां शक्तिधरं स्कन्दं सप्तम्यां तु दिवाकरम् ॥ ६६ ॥ अष्टम्यां च चतुर्दश्यां सम्पूज्यः शशिशेखरः ॥ नवम्यां पूजयेच्चण्डीं चामुण्डां मुण्डमालिनीम् ॥ ६७ ॥ दशम्यामृषयः शांताः सर्वे व्यासपुरस्सराः ॥ एकादश्यां चक्रपाणिं द्वादश्यां वा समर्चयेत् ॥ ६८ ॥ त्रयोदश्यां त्रिनेत्रोत्थवह्निना शांतविग्रहम् ॥ साधारणी तु सर्वेषां पौर्णमासी तिथिः स्मृता ॥ ६९ ॥ आंदोलके मदनके रथयात्रासु चैव हि ॥ व्युत्क्रमेणापि कर्तव्या तिथीनां कार्यगौरवात् ॥ यात्रा वासंतिकी चेयं चित्तस्वास्थ्यकरी परा ॥ ७० ॥

१ किंचिदन्यन्न विद्यते–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्यक्सुधाधवलिते भवने सुराणामंतस्सुवस्त्रमणिमौक्तिकदानचित्रे ॥ तांबूलकक्रमुकवारविलासिनीभिर्यात्रां विधाय भवतीह स भारतेशः ॥ ॥ ७१ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे दमनकांदोलकरथयात्रामहोत्सववर्णनं नाम चतुस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३४ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ गौरीं विवाह्य जग्राह हरः पाशुपतं व्रतम् ॥ उमापतिः पशुपतिर्ध्यानासक्तो बभूव ह ॥ १ ॥ ब्रह्मादिभिः समामंत्र्य विबुधैः पुत्रलब्धये ॥ गौर्या मनोभिलषितपूरणाय प्रहर्षितैः ॥ २ ॥ प्रहितः क्षोभणार्थाय समर्थ इति मन्मथः ॥ ततो मारः स्मरः कामोप्याजगाम तमाश्रमम् ॥ ३ ॥ रतिप्रीतिमदोन्मादवसंतश्रीसहायवान् ॥ निधानवारुणीदर्पशृंगारैः परिवारितः ॥ ४ ॥ आम्राशोकवनोत्तंसो मालतीकृतशेखरः ॥ वीणामृदंगसंगीतकोकिलाभृंगदूतकः ॥५॥ झल्लरीवाद्यसंघुष्टभांडागारिकलेखकः ॥ पानमत्ताङ्गनारूढो हिन्दोलाश्चर्यमंत्रिमान् ॥ ६ ॥ दक्षिणानिलगंधाढ्यः कटाक्षेक्षितवर्पवान् ॥ महाराजाधिराजो वा स्मरः प्राप्तो हरांतिकम् ॥ ७ ॥ स पुष्पचापमाकृष्यमदनोन्मादनं शरम् ॥ चिक्षेप त्रिपुरघ्नाय समाधेर्भंगहेतवे ॥ ८ ॥ बुद्ध्वा तं तस्य संकल्पं रुद्रः क्रोधाज्ज्वलत्त्विषा ॥ ललाटाद्वह्निमसृजत्तृतीयनयनाद्धरः ॥ ९ ॥ कामो विलोकितस्तेन भस्मीभूतश्च तत्क्षणात् ॥ दग्धं दृष्ट्वा स्मरं शोकाद्रतिप्रीती स्थिते सदा ॥ १० ॥ करुणं विलपंत्यौ ते सर्वमन्यद्दिशं गतम् ॥ ततः शोकार्तहृदया गौरी रुद्रमुवाच ह ॥ ११ ॥ भगवन्नस्मदर्थे तं कामं निर्दग्धवानसि ॥ तेनैते पश्य नार्यौ ते कामस्य रुदितः कथम् ॥ १२ ॥ कुरु प्रसादं देवेश रतिप्रीत्यै वृषध्वज ॥ संजीवय स्मरं शंभो मूर्तिमंतं पुनः कुरु ॥ १३ ॥ तच्छ्रुत्वा तु महादेवो हृष्टः प्रोवाच पार्वतीम् ॥ उपप्लुतं जगत्सर्वं मन्मथेन शरीरिणा ॥ १४ ॥ मया दग्धस्य कामस्य पुनरागमनं कुतः ॥ किं तु ते मानयन्वाक्यं करोमि सफलं प्रिये ॥ १५ ॥ अस्मिन्वसंतसमये शुक्लपक्षे त्रयोदशी ॥ अस्यां मनोभवो देवि भविष्यति शरीरवान् ॥ १६ ॥ एतेन बीजभूतेन जगद्धिंगिष्यतेऽखिलम् ॥ एवं वरमिमं दत्त्वा मन्मथाय युधिष्ठिर ॥१७॥ जगाम हिमवच्छृंगं कैलासं पार्वतीप्रियः ॥ तदेतत्सर्वमाख्यातं स्मरस्य चरितं नृप ॥ १८ ॥ पूजाविधानमपरं कथयामि शृणुष्व तत् ॥ अस्यां स्नात्वा त्रयोदश्यामशोकाख्यं नगं लिखेत् ॥ १९ ॥ सिन्दूरजनितैरंगैरतिप्रीतिसमन्वितम् ॥ कामदेवं वसंतं च वाजिवक्त्रं झपध्वजम् ॥ २० ॥ सौवर्णं वा महाराज वार्क्षं चित्रमथापि वा ॥ लीलाविलासगमनं गर्वितं साप्सरोगणम् ॥२१॥ गन्धर्वगीतवादित्रप्रेक्षणीयसमाकुलम् ॥ नंद्यावर्तैरतिक्रीडाप्रीतिविद्याधरैर्युतम् ॥२२॥ मध्याह्ने भोजयेद्भक्त्या भक्ष्यैर्धूपैः स्रगंबरैः॥

१ ते समाख्यातम्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मंत्रेणानेन कौंतेय नरो नार्या समन्वितः ॥ २३ ॥ नमो वामाय कामाय देवदेवाय मूर्तये ॥ ब्रह्मविष्णुशिवेन्द्राणां मनःक्षोभकराय वै ॥ २४ ॥ कृत्वैवमर्चयित्वा तु देवदेवं मनोभवम् ॥ ततस्तस्याग्रतो देया मोदका मुखमोदकाः ॥ २५ ॥ नानाप्रकारान्भक्ष्यांश्च कामो मे प्रीयतामिति ॥ ततो विसर्जयेद्विप्रान्दत्त्वा युग्मं सदक्षिणम् ॥ २६ ॥ स्वपतिं पूजयेन्नारी वस्त्रमालाविभूषणैः ॥ कामोऽयमिति संचिंत्य प्रहृष्टेनांतरात्मना ॥२७॥ मन्मथायतने तस्मिन्यजमानः सुहृद्वृतः ॥ रात्रौ जागरणं कुर्यात्सुखरात्रिर्यथा भवेत् ॥ २८ ॥ कर्पूरकुंकुमक्षोदगंधतांबूलसर्जनैः ॥ नानाप्रकारैर्भक्ष्यैश्च कुर्याद्रात्रौ महोत्सवम् ॥ २९ ॥ दीपप्रज्वालनैर्नृत्यैः प्रेक्षणैः प्रेक्षणोत्सवैः ॥ एवं यः कुरुते पार्थ वर्षेवर्षे महोत्सवम् ॥ ३० ॥ वसंतसमये प्राप्ते हृष्टस्तुष्टो नृपः पुरे ॥ तस्य संवत्सरं यावल्लोको रोगैर्विमुच्यते ॥ ३१ ॥ सुभिक्षं क्षेममारोग्यं यशः श्रीः सौख्यमुत्तमम् ॥ कामवर्षी च पर्जन्यस्तस्मिन्राष्ट्रे प्रजायते ॥ ३२ ॥ तुष्यते तु भृशं देवो द्वादशार्द्धार्द्धलोचनः ॥ तथा कामश्च विष्णुश्च वसंतश्च प्रजापतिः ॥ ३३ ॥ चन्द्रसूर्यादिका सर्वे ग्रहा ब्रह्मर्षयस्तथा ॥ सर्वेऽपि तस्य तुष्यंति यक्षगंधर्वदानवाः ॥ ३४ ॥ असुरा यातुधानाश्च सुपर्णाः[1] पंतगा नगाः ॥ तुष्टाः प्रयच्छंति सुखं तस्य कर्तुर्न संशयः ॥ ३५ ॥ चैत्रोत्सवे सकललोकमनोनिवासं कामं वसंतमलयाद्रिमरुत्सहायम् ॥ रत्या सहार्च्य पुरुषः प्रवरा च योषित्सौभाग्यरूपसुतसौख्ययुता सदा स्यात् ॥ ३६ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे मदनमहोत्सववर्णनं नाम पञ्चत्रिंशदुत्तरशततमोऽध्यायः ॥ १३५ ॥ छ ॥

॥ युधिष्ठिर उवाच ॥ ॥ भूतमातेति संहृष्टे ग्रामेग्रामे पुरेपुरे ॥ गायन्नृत्यन्हसँल्लोकः सर्वतः परिधावति ॥ १ ॥ उन्मत्तवत्प्रलपति क्षितौ पतति मत्तवत् ॥ क्रुद्धवद्धावति पुरान्मत्तवत्कर्षते बहिः ॥ २ ॥ मुखांगभंगान्कुरुते लोके वातगृहीतवत् ॥ भूतवद्भस्मगात्रं तु कर्दमानवगाहते ॥ ३ ॥ किमेष शास्त्रनिर्दिष्टो मार्गः किमुत लौकिकः ॥ मुह्यते मे मनः कृष्ण त्वं तु वक्तुमिहार्हसि ॥ ४ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु पार्थ प्रवक्ष्यामि यत्ते किञ्चिन्मनोगतम् ॥ आस्तिकः श्रद्दधानश्च भवतीति मतिर्मम ॥ ५ ॥ पार्वत्या सहितः पार्थ मन्दरे चारुकन्दरे ॥ क्रीडन्नास्ते मुदा युक्तो दिव्यक्रीडनकैर्हरः ॥ ६ ॥ हंसोन्नतगतिं चारुकुम्भभ्राजिकुचद्वयम् ॥ सिञ्जत्सद्रशनां हृद्यां दृष्ट्वा गौरीं जगद्गुरुः ॥ ७ ॥ दग्धकामोऽपि च हरः संदीप्तमदनोऽभवत् ॥ निःसृतां कामयामास महार्हशयने शिवः ॥ ८ ॥ रतस्थयोस्तयोर्जातं दिव्यं वर्षशतं यदा ॥ तदा देवीसमुच्छ्रयनिरोधान्निर्गता बहिः ॥ ९ ॥

१ पन्नगाः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मूत्रोदकात्समुत्तस्थौ नारी निर्दारितोदरा ॥ कृष्णा करालवदना पिंगाक्षा मुक्तमूर्द्धजा ॥ १० ॥ कपालमालाभरणा बद्धपिंडोर्ध्वपिंडिका ॥
खट्वाङ्गकं कालधरा मुद्राङ्कितकरा शिवा ॥ ११ ॥ व्याघ्रचर्माम्बरधरा रणत्किंकिणिमेखला ॥ डमड्डमड्डमरुका फूत्कारापूरितांबरा ॥ १२ ॥
तस्याः पार्श्वानुजाश्चान्या गीतवाद्यलयानुगाः ॥ उत्तालतालमबला नृत्यंति च हसंति च ॥ १३ ॥ कपालखट्वाङ्गधरा गजचर्मावगुण्ठिताः ॥
तथैव शंकराज्जातस्तद्रूपाभरणः पुमान् ॥ १४ ॥ अनुगम्यमानो बहुभिर्भूतैरतिभयंकरैः ॥ सिंहशार्दूलवदनै रदनोल्लिखितांबरैः ॥ १५ ॥
एकीभूतः क्षणेनैव तौ भवानीभवोद्भवौ ॥ दृष्ट्वा हृष्टमना देवः प्राह देवीं सुविस्मिताम् ॥ १६ ॥ कल्याणि पश्य पश्यैतौ मत्त्वदङ्गसमुद्भवौ ॥
बीभत्साद्भुतशृंगारवरायुधविधारिणौ ॥ १७ ॥ भ्रातृभांडौ यथा देवि तद्वदेतौ मतौ मम ॥ नृनार्योरंतरं किञ्चित्सादृश्यात्प्रतिभासयेत् ॥ १८ ॥
भ्रातृभांडा भूतमाता तथैवोदकसेविका ॥ संज्ञात्रयं तयोः कृत्वा ततः प्रादाद्वरं हरः ॥ १९ ॥ भुक्त्वाहोपगतां चैतां जरत्तरुतले स्थिताम् ॥ सेव
यिष्यंति ये भक्त्या जलसंपूर्णकंडुकैः ॥ २० ॥ चन्दनेन समालभ्य पुष्पधूपैरथार्च्य ताम् ॥ भोजयेत्क्षिप्रया चैव कृशरापूपपायसैः ॥ २१ ॥
य एवं कुरुते देवि भक्तिभावेन भावितः ॥ स पुत्रपशुवृद्धिं च शरीरारोग्यमाप्नुयात् ॥ २२ ॥ न शाकिन्यो गृहे तस्य न पिशाचा न राक्षसाः ॥
पीडां कुर्वंति शिशवो यांति वृद्धिं निरामयाः ॥ २३ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कदा पूजा प्रकर्तव्या भूतमातुः सुखार्थिभिः ॥ पुरुषैः पुरुषव्या
घ्र यत्तन्मे वक्तुमर्हसि ॥ २४ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ सर्वत्रैषा भगवती बालानां हितकारिणी ॥ नामभेदैः क्रियाभेदैः कालभेदैश्च पूज्यते
॥ २५ ॥ प्रतिपत्प्रभृति ज्येष्ठे यावत्पंचदशी तिथिः ॥ तावत्पूजा प्रकर्तव्या प्रेरणैःप्रेक्षणीयकैः ॥ २६ ॥ विकर्मफलनिर्देशः पांडवानां विडंबनम् ॥
प्रदर्श्यते हास्यपरैर्नरैरद्भुतचेष्टितैः ॥ २७ ॥ विश्वास्य धनलोभेन संध्यायां निहतः पथि ॥ आरोहणं च शूलाग्रे न पश्यंतं हि पश्यति ॥ २८ ॥
दृष्टो यत्नाद्भिः संदष्टः परपाशवमर्शकः ॥ छित्त्वा स्वहस्तैर्यद्दत्तो विभुना मुख्यमोदकः ॥ २९ ॥ शीर्णसूक्ष्मेण पत्रेण बाला मालानुमोदिताः ॥
मुष्कसुग्रामसमारूढो मुखं कृत्वा च पश्चिमे ॥ ३० ॥ हे जनाः किं न पश्यध्वं स्वामिद्रोहकरं परम् ॥ करपत्रैर्विदार्यं तमुच्छलच्छोणितच्छटम् ॥ ३१ ॥
चरैः किल्बिषैः संप्राप्तः सर्वोद्वेगकरः परम् ॥ दंडप्रहाराभिहतो नीयते दंडपाशिकैः ॥ ३२ ॥ प्रेक्षकैर्लक्षितः स्तेनो रक्तलेप विमंडितः ॥ संयम्य
नीयतेयं तु मूर्खैः क्रौर्याभिलक्षणः ॥ ३३ ॥ सितकेशं सितश्मश्रु सितांबरधरं द्विजम् ॥ यष्टचेष्टानपेक्षाभिर्हन्यमानं न पश्यत ॥ ३४ ॥ शठाज्ञिप्त
व्यक्ता रंडा वृद्धा कुमार्यपि स्त्रियाः ॥ स्वस्या अमी न कुरुते मूढो भरणपोषणम् ॥ ३५ ॥ भैरवाभरणोत्ताल्या व्यालयज्ञोपवीतिनः ॥ प्रदत्ता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ताण्डवपदान्पश्यध्वं ध्वांतदीपकान् ॥ ३६ ॥ निर्वेदकोऽस्य हृदये न किंचिदपि तिष्ठति ॥ गृहीतं यदनेनेदं बालेनापि महाव्रतम् ॥ ३७ ॥ रक्तटक्काककृष्णांगं शबरं किं न पश्यत ॥ तरुकोटरांतरगतांश्छित्वा च शुकशावकान् ॥ ३८ ॥ बहुभिः कोष्ठकीकृत्य शरौघैः शकलीकृतम् ॥ विमुक्तढक्काहंकारसुप्रहारं निरीक्षत ॥ ३९ ॥ इमां कृष्णार्द्धवदनां गृहीतां सिंदुरार्चिताम् ॥ विमुक्तकेशां नृत्यंतीं पश्यध्वं योगिनीमिव ॥ ४० ॥ गंभीरतूर्यध्वनिना प्रवुद्धां वृत्ततांडवाम् ॥ एवं प्रेक्षणकं कृत्वा नयेत्वृक्षतले च ताम् ॥४१॥ एवं कृते न दारिद्र्यं न च दुःखं भवेन्नृणाम् ॥ ४२ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे भूतमातृत्सववर्णनं नाम षटत्रिंशदुत्तरशततमोऽध्यायः ॥ १३६ ॥ ॥ छ ॥ ॥

॥ श्रीकृष्ण उवाच ॥ ॥ अथातः संप्रवक्ष्यामि बलिरक्षाविधिं नृप ॥ तं शृण्वेकाग्रमनसा समासाद्गदितं मया ॥ १ ॥ पुरा देवासुरे युद्धे दानवा सुरनिर्जिताः ॥ शुक्रं बलिं पुरः कृत्वा ययुः शुक्र उवाच तम् ॥२॥ ॥ शुक्र उवाच ॥ ॥ न विषादस्त्वया कार्यः कार्याणां गतिरीदृशी ॥ दैवाद्भवंति भूतानां काले जयपराजयाः ॥ ३ ॥ संधानं सह शक्रेण क्रियतामयनद्वयम् ॥ अजेयः सर्वशत्रूणां कृतः शच्या शचीपतिः॥ ४ ॥ रक्षाबंधप्रभावेन दानवेन्द्रो जितो महान् ॥ वर्षमेकं प्रतीक्षस्व ततः श्रेयो भविष्यति ॥ ५ ॥ भार्गवेणैवमुक्तास्ते दानवा विगतज्वराः ॥ तस्थुः कालं प्रतीक्षन्तो यथोक्तं गुरुणा तथा ॥६॥ एष प्रभावो रक्षायाः कथितस्ते युधिष्ठिर ॥ जयदः सुखदश्चैव पुत्रारोग्यधनप्रदः ॥७॥ ॥ युधिष्ठिर उवाच ॥ ॥ क्रियते केन विधिना रक्षाबंधः सुरोत्तम ॥ कस्यां तिथौ कदा देव एतन्मे वक्तुमर्हसि ॥ ८ ॥ यथा यथा हि भगवान्विचित्राणि प्रभाषते ॥ तथा तथा न मे तृप्तिर्बह्वर्थाः शृण्वतः कथाः ॥ ९ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ घनावृतेऽम्बरे पार्थ शाद्वले धरणीतले ॥ संप्राप्ते श्रावणे चैव पौर्णमास्यां दिनोदये ॥ १० ॥ स्नानं कुर्वीत मतिमाञ्छ्रुतिस्मृतिविधानतः ॥ ततो देवान्पितॄंश्चैव तर्पयेत्परमांभसा ॥ ११ ॥ उपाकर्मादिवेदोक्तमृषीणां चैव तर्पणम् ॥ कुर्युश्च ब्राह्मणाः श्राद्धं देवमुद्दिश्य शक्तितः ॥ १२ ॥ शूद्राणां मंत्रसहितं स्नानं दानं च शस्यते ॥ १३ ॥ ततोपराह्णसमये रक्षापोटलिकाः शुभाः ॥ कारयेच्चाक्षतैः शस्तैः सिद्धार्थैर्हेमभूषिताः ॥ १४ ॥ वस्त्रैर्विचित्रैः कार्पासैः क्षौमैर्वा मलवर्जितैः ॥ विचित्रतरैर्ग्रथिताः स्थापयेद्भाजनोपरि ॥ १५ ॥ कार्या गृहस्य रक्षा गोमयरहितैः सुवृत्तकुड्यकैः ॥ दूर्वावर्णकसहितैः सकलदुष्कृतोपशांतये ॥ १६ ॥ उपलिप्तगृहमध्ये चतुष्कोपरि न्यसेच्छुभं पीठम् ॥ तत्रोपविशेद्राजा सामात्यः सपुरोहितः ससुहृत् ॥ १७ ॥ वेश्याजनेनसहितो मंगलशब्दैः सुहसितैश्चिह्नैः ॥ रक्षाबंधः कार्यः शांतिध्वनिना नरेन्द्रस्य ॥ १८ ॥ देवद्विजातिशस्ता सुस्त्रीरर्घ्यैः समर्चयेत्प्रथमम् ॥ तदनुपुरोधा नृपतिं रक्षां बध्नीत मंत्रेण ॥ १९ ॥ येन





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बद्धो बलीराजा दानवेन्द्रो महाबलः ॥ तेन त्वामभिबध्नामि रक्षे मा चल मा चल ॥२०॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः ॥ कर्तव्योर क्षिकाबन्धो द्विजान्संपूज्य भक्तितः ॥ २१ ॥ अनेन विधिना यस्तु रक्षिकाबंधमाचरेत् ॥ स सर्वदोषरहितः सुखी संवत्सरं भवेत् ॥ २२ ॥ यः श्रावणे स्रवति शीतजले नरेन्द्र रक्षाविधानविधिमाचरते मनुष्यः ॥ आस्ते सुखेन परमेण स सर्वमेकः पुत्रप्रपौत्रसहितः ससुहृद्वृतश्च ॥ २३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे श्रावणपूर्णिमारक्षाबन्धनविधिवर्णनं नाम सप्तत्रिंशदुत्तरशततमोऽध्यायः॥ १३७ ॥

॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पुण्या महानवम्यस्ति तिथीनां प्रवरा तिथिः ॥ सानुष्ठेया सुरैः सर्वैः प्रजापालैर्विशेषतः ॥ १ ॥ भवानु त्थापयेत्पार्थ संवत्सरसुखाय वै ॥ भूतप्रेतपिशाचानां प्रीत्यर्थं चोत्सवाय वा ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कस्मात्कालात्प्रवृत्तेयं नवमी महशब्दयुक् ॥ किमादावुपपन्नोऽस्ति भगवन्नवमीविधिः ॥ ३ ॥ यशोदागर्भसंभूतेरुत यात्रा प्रवर्तते ॥ उताहो पूर्वमेवासीत्कृतत्रेतायुगादिषु ॥४॥ यदस्यां प्राणिनः केचिन्मन्यंते घातयंति च ॥ हतानां प्राणिनां तेषां का गतिः पारलौकिकी ॥ ५ ॥ स्वयं घ्नतां घातयतामनुमोदयतां तथा ॥ एतन्मे संशयं पूर्वं वक्तुमर्हसि केशव ॥ ६ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पार्थ या परमा शक्तिरनंता लोकविश्रुता ॥ आद्या सर्वगता शुद्धा भाव गम्या मनोहरा ॥ ७ ॥ आद्याष्टमी कलाकाली द्वितीया सर्वमंगला ॥ माया कात्यायनी दुर्गा चामुंडा शंकरप्रिया ॥ ८ ॥ ध्यायंति यां योगरतां सा देवी परमेश्वरी ॥ रूपभेदैर्नामभेदैर्भवानी पूज्यते शिवा ॥ ९ ॥ अष्टम्यां तु नवम्यां तु देवदानवराक्षसैः ॥ गंधर्वैरुरगैर्यक्षैः पूज्यते किन्नरै र्नरैः ॥ १० ॥ अन्येष्वपि युगेष्वादौ सृष्टेः पूर्वं प्रदर्शिता ॥ पूज्यतेयं पुरा देवी तेभ्यः पूर्वतरैः शुभैः ॥ ११ ॥ आश्वयुक्छुक्लपक्षे च याष्टमी मूल संयुता ॥ सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा ॥ १२ ॥ कन्यागते सवितरि शुक्लपक्षेऽष्टमी तु या ॥ मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥ १३ ॥ अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम् ॥ पूजयित्वाऽऽश्विने मासि विशोको जयति द्विपः ॥ १४ ॥ संतर्जयंती हुंकारैः खड्गादिभिरहर्निशम् ॥ नवम्यां पूजिता देवी ददातिनवमं फलम् ॥ १५ ॥ सा पुण्या सा पवित्रा च सा धर्मसुखदायिनी ॥ तस्मात्सदा पूजनीया चामुंडामुंडमालिनी ॥ १६ ॥ तस्यां यद्युपयुज्यंते प्राणिनो महिषादयः ॥ सर्वे ते स्वर्गतिं यांति घ्नतां पापं न विद्यते ॥ १७ ॥ न तथा बलिदा नेन पुष्पधूपविलेपनैः ॥ यथा संतुष्यते लोके महिषैर्विंध्यवासिनी ॥ १८ ॥ उद्दिश्य दुर्गां हन्यंते विधानाद्येऽत्र जंतवः ॥ स्वर्गं ते यांति कौंतेय घातयंतोऽपि भक्तितः ॥ १९ ॥ भवानीप्राङ्गणे प्राणा येषां याता युधिष्ठिर ॥ तेषां स्वर्गे ध्रुवं वासो वरास्तेऽप्सरसां प्रियाः ॥ २० ॥ मन्वन्तरेषु



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वेषु कल्पेषु कुरुनंदन ॥ तेषु सर्वेषु चैवासीन्नवमीयं पुरार्चिता ॥ २१ ॥ प्रसिद्धानादिनिधनावर्षेवर्षे युधिष्ठिर ॥ भूयोभूयोऽवतारैश्च भवानी पूज्यते सुरैः ॥ २२ ॥ अवतीर्णा भुवि सदा नित्यं दैत्यनिबर्हिणी ॥ स्वर्गपातालमर्त्येषु करोति स्थितिपालनम् ॥ २३ ॥ पुनश्चैषा महादेवी यशोदागर्भसंभवा ॥ कंसासुरस्योत्तमाङ्गे पादं दत्त्वा गतायुषः ॥ २४ ॥ ततः प्रभृतिलोकेषु यशोदानंददायिनीम् ॥ विंध्याचले स्थापयित्वा पुनः पूजा प्रवर्तिता ॥ २५ ॥ पूर्वप्रवृद्धोऽपि पुनर्भगिन्या महिमा कृतः ॥ भुवि सर्वोपकाराय सर्वोपद्रवशांतये ॥ २६ ॥ एवं विंध्योपवासिन्या नवरात्रोपवासिनः ॥ एकरात्रेण नक्तेन स्वशक्त्याऽयाचितेन वा ॥ २७ ॥ यजनैर्याजनैर्देवाः स्थानेस्थाने पुरेपुरे ॥ गृहेगृहे भक्तिपरैर्ग्रामेग्रामे वनेवने ॥ २८ ॥ स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः ॥ वैश्यैः शूद्रैर्भक्तिचित्तैर्म्लेच्छैरन्यैश्च मानवैः ॥ २९ ॥ स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु ॥ जयाभिलाषी नृपतिः प्रतिपत्प्रभृतिक्रमात् ॥ ३० ॥ लोहाभिहारिकं कर्म कारयेद्यावदष्टमि ॥ प्रागुदक्प्रवणे देशे पताकाभिरलंकृतम् ॥ ३१ ॥ मण्डपं कारयेद्दिव्यं नवसप्तकरं वरम् ॥ आग्नेय्यां कारयेत्कुण्डं हस्तमात्रं सुशोभनम् ॥ ३२ ॥ मेखलात्रयसंयुक्तं योन्यश्वत्थदलाभया ॥ राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च ॥ ३३ ॥ आनीय मण्डपे तानि सर्वाण्येवाधिवासयेत् ॥ ततस्तु ब्राह्मणः स्नातः शुक्लांबरधरः शुचिः ॥ ३४ ॥ ॐकारपूर्वकैर्मन्त्रैस्तल्लिंगैर्जुहुयाद् घृतम् ॥ लोहनामाभवत्पूर्वं दानवस्तु महाबलः ॥ ३५ ॥ स देवैः समरे क्रुद्धैर्बहुधा शकलीकृतः ॥ तदंगसम्भवं लोहं यत्सर्वं दृश्यते क्षितौ ॥ ३६ ॥ शस्त्रास्त्रमन्त्रैर्होतव्यं पायसं घृतसंयुतम् ॥ हुतशेषं तुरंगाणां गजानामुपहारयेत् ॥ ३७ ॥ लोहाभिहारिकं कर्म तेनैतदृषिभिः स्मृतम् ॥ बद्धप्रतिशरव्यं च गजाश्वसमलंकृतम् ॥ ३८ ॥ भ्रामयेन्नगरे नित्यं नंदिघोषपुरस्सरम् ॥ प्रत्यहं नृपतिः स्नात्वा संपूज्य पितृदेवताः ॥ ३९ ॥ पूजयेद्राजचिह्नानि फलमाल्यानुलेपनैः ॥ हुतशेषं प्रदातव्यमौपनायनिके द्विजे ॥ ४० ॥ तस्याभिहरणाद्राज्ञो विजयः समुदाहृतः ॥ पूजामंत्रान्प्रवक्ष्यामि पुराणोक्तानहं तव ॥ ४१ ॥ यैः पूजिताः प्रयच्छन्ति कीर्तिमायुर्यशोबलम् ॥ यथांबुदश्छादयति शिवायेमां वसुन्धराम् ॥ ४२ ॥ तथाच्छादय राजानं विजयारोग्यवृद्धये ॥ (इति छत्रमन्त्रः) ॥ गन्धर्वकुलजातस्त्वं माभूयाः कुलदूषकः ॥ ४३ ॥ ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥ प्रभावाच्च हुताशस्य वर्द्धस्व त्वं तुरंगम ॥ ४४ ॥ तेजसा चैव सूर्यस्य मुनीनां तपसा यथा ॥ रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ॥ ४५ ॥ स्मर त्वं राजपुत्रोऽसि कौस्तुभं च मणिं स्मर ॥ यां गतिं ब्रह्महा गच्छेत्पितृहा मातृहा तथा ॥ ४६ ॥ भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥ सूर्याचन्द्रमसौ वायुः पावकश्च न यत्र वै ॥ ४७ ॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्रजेच्च तां गतिं क्षिप्रं तच्च पापं भवेत्किल ॥ विकृतिं यदि गच्छेस्त्वं युद्धेध्वनि तुरंगम ॥ रिपून्विजित्य समरे सह भर्त्रा सुखी भव ॥ ४८ ॥
॥ ॥ ( इत्यश्वमंत्रः ) ॥ ॥ शक्रकेतो महावीर्य सुपर्णस्त्वय्युपस्थितः ॥ पतत्रिराड्वैनतेयस्तथा नारायणध्वजः ॥ ४९ ॥ काश्यपेयोऽमृतो ज्ञेयो
नागारिर्विष्णुवाहनः ॥ अप्रमेयो दुराधर्षो देवशत्रुनिषूदनः ॥ ५० ॥ गरुत्मान्मारुतगतिस्त्वयि सन्निहितः स्थितः ॥ शस्त्रवर्मायुधान्योधान्रक्षा
स्मांश्च रिपून्दह ॥ ५१ ॥ ॥ ( इति ध्वजमंत्रः ) ॥ ॥ कुमुदैरावणौ पद्मः पुष्पदंतोऽथ वामनः ॥ सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ॥
॥ ५२ ॥ एतेषां पुत्रपौत्राश्च बलान्यष्टौ समाश्रिताः ॥ भद्रो मन्द्रो मृगश्चैव गजः संकीर्ण एव च ॥ वनेवने प्रसूतास्ते कारियोनिं महागजाः॥५३॥
पांतु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ॥ भर्तारं रक्ष नागेन्द्र समयं प्रतिपालयन् ॥ ५४ ॥ अवाप्नुहि जयं युद्धे गमने स्वस्ति नो व्रज ॥
श्रीस्ते सोमाद्बलं विष्णोस्तेजः सूर्याज्जवोनिलात् ॥ स्थैर्यं गिरेर्जयं रुद्राद्यशो देवात्पुरंदरात् ॥ ५५ ॥ युद्धे रक्षंतु नागास्त्वां दिशश्च सह दैवतैः ॥
अश्विनौ सह गंधर्वैः पांतु त्वां सर्वतः सदा ॥ ५६ ॥ ( इति हस्तिमंत्रः ॥ ) हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः ॥ नागकिन्नरगन्धर्वयक्ष
भूतगणाग्रहाः ॥ ५७ ॥ प्रमथाश्च सहादित्यैर्भूतेशो मातृभिः सह ॥ शक्रसेनापतिः स्कन्दो वरुणश्चाश्रितास्त्वयि ॥ ५८ ॥ प्रदहंतु रिपून्सर्वान्राजा
विजयमृच्छतु ॥ यानि प्रयुक्तान्यरिभिर्दूषणानि समंततः ॥ ५९ ॥ एतानि परशत्रूणां हतानि तव तेजसा ॥ कालनेमिवधे युद्धे युद्धे त्रिपुर
घातने ॥ ६० ॥ हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा ॥ शोभितासि तथैवाद्य शोभमानास्तु भूपतेः ॥ ६१ ॥ नीलां श्वेतामिमां दृष्ट्वा नश्यं
त्वद्य नृपारयः ॥ व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ॥ ६२ ॥ सद्यः स्वस्था भवंति स्म त्वद्वातेनापमार्जिताः ॥ ६३ ॥ पूतना रेवती
नाम्ना कालरात्रीति या स्मृता ॥ दहंत्वाशु रिपून्सर्वान्पताके त्वामुपागताः ॥ ६४ ॥ ( इति पताकामन्त्रः ॥ ) असिश्च रिपुहा खड्गस्तीक्ष्ण
कर्मा दुरासदः ॥ श्रीगर्भो विजयश्चैव धर्मधारस्तथैव च ॥ ६५ ॥ इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ॥ नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो
महेश्वरः ॥ ६६ ॥ हिरण्यं च शरीरं ते धाता देवो जनार्दनः ॥ पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥ ६७ ॥ ( इति खड्गमन्त्रः ॥ )
शर्मप्रदस्त्वं समरे वर्म सर्वांयमो ह्यसि ॥ रक्ष मां रक्षणीयोऽहं तव वर्मन्नमोऽस्तु ते ॥ ६८ ॥ ( इति वर्ममन्त्रः ॥ ) ॥ दुन्दुभे
त्वं सपत्नानां घोषाद्धृदयकम्पन ॥ भव भूमिप सैन्यानां तथा विजयवर्द्धनः ॥ ६९ ॥ यथा जीमूतघोषेण हृष्यंति वरवारणाः ॥

१ विकृतिं इ० पा० । २ व्याधूर्णिताः इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

म० पु०

॥५०० ॥

उ०प० ६

अ० १३८

तथास्तु तव शब्देन हर्षोऽस्माकं मुदावहः ॥७०॥ यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते ॥ तथा च तव शब्देन त्रस्यंत्वस्मद्विषो रणे॥७१॥ ( इति दुंदुभिमंत्रः ॥ ) सर्वायुध महामात्र सर्वदेवारिसूदन ॥ चाप मां सर्वदा रक्ष साकं सायकसत्तमैः ॥ ७२॥ ( इति चापमन्त्रः॥ ) पुण्यस्त्वं शङ्ख पुष्पाणां मङ्गलानां च मङ्गलम् ॥ विष्णुना विधृतो नित्यं मनःशांतिप्रदो भव ॥ ७३ ॥ ( इति शङ्खमन्त्रः ॥ ) शशांककरसंकाश हिम डिंडीरपांडुर ॥ प्रोत्सारयाशु दुरितं चामरामरवल्लभ ॥ ७४ ॥ ( इति चामरमंत्रः ॥ ) सर्वायुधानां प्रथमा निर्मितासि पिनाकिना ॥ शूलायुधा द्विनिष्कृष्य कृत्वा मुष्टिपरिग्रहम् ॥ ७५ ॥ चंडिकायाः प्रदत्तासि सर्वदुष्टनिबर्हिणि ॥ तथा विस्तारिता चासि देवानां प्रतिपादिता ॥ ७६ ॥ सर्व सत्त्वांगभूतासि सर्वाशुभनिवारिणि ॥ छुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोऽस्तु ते ॥ ७७ ॥ ( इतिच्छूरिकामंत्रः ॥ ) प्रोत्सारणाय दुष्टानां साधुसंग्रहणाय च ॥ ब्रह्मणा निर्मितश्चासि व्यवहारप्रसिद्धये ॥७८॥ यशो देहि सुखं देहि जयदो भव भूपतेः ॥ ताडयाशु रिपून्सर्वान्हेमदंड नमोस्तु ते ॥ ७९ ॥ ( इति कनकदण्डमन्त्रः ॥ ) विजयो जयदो जेता रिपुघाती प्रियंकरः ॥ दुःखहा धर्मदः शांतः सर्वारिष्टविनाशनः ॥८०॥ एतेऽष्टौ संनिधौ यस्मात्तव सिंहा महाबलाः॥ तेन सिंहासनेति त्वं विप्रैर्वेदेषु गीयसे ॥८१॥ त्वयि स्थितः शिवः साक्षात्त्वयि शक्रःसुरेश्वरः॥ त्वयि स्थितो हरिर्देवस्त्वदर्थं तप्यते तपः ॥ ८२ ॥ नमस्ते सर्वतो भद्र भद्रदो भव भूपतेः ॥ त्रैलोक्यजयसर्वस्व सिंहासन नमोऽस्तु ते ॥ ८३ ॥ ( इति सिंहासनमंत्रः ॥ ) लोहाभिहारिकं कर्म कृत्वेदं मंत्रपूर्वकम्॥फलनैवेद्यकुसुमैर्धूपदीपविलेपनैः ॥८४॥ अष्टम्यां धावनं कृत्वा पूर्वाह्णे स्नानमाचरेत्॥ ॥ ८५ ॥ ( अथ गद्यम् ) दुर्गां कांचनमूर्तिं रौप्यां वा पैत्तलीं वार्क्षीं चैत्रीं तार्म्रीं वाधिभवतः कृत्वा दारुविचित्रतोरणविन्यस्तां शोभने स्थाने पुरतो विन्यस्तहृष्टां विचित्रगृहमध्यगां स्नातां कुंकुमचंदनगंधैश्चतुःसमैश्चीरपट्टैश्चर्चितगात्रां देवीं कुसुमैरभ्यर्च्य तां बहुभिः पुष्यमाणकीर्तिस्तैर्द्विजनैर्जनितपरितोपैर्दिवान्वितो नरेंद्रः स्वयंप्रयच्छेत्पुरोहितैः सार्धं बिल्वपत्रेणार्चनेन मंत्रेणानेन भगवत्यै ॥ ( इति गद्यं सम्पूर्णं ) ॥ जयंती मंगला काली भद्रकाली कपालिनी ॥ दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोस्तु ते ॥ ८६ ॥ अमृतोद्भवः श्रीवृक्षो महादेवीप्रियः सदा ॥ बिल्व पत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि ॥ ८७ ॥ दुर्गा संपूजनीया च तद्दिनाद्द्रोणपुष्पया ॥ सा चाभीष्टा सुरेशान्यास्तथा रूढव्रणायुतः ॥८८॥ ततः खड्गं नमस्कृत्य शत्रूणां मानमर्दनम् ॥ इच्छेत्स्वविजयं राज्यं सुभिक्षं चात्मनो नृप ॥ ८९ ॥ पुनः पुनः प्रणम्याथ ध्यायेच्च हृदये शिवाम् ॥

१ द्विजेन्द्रैणमुशिम्यया--इ० पा० । २ प्रणम्यादौ चिन्तयते शिवां महिषमर्दिनीम् ॥ कुमारीं तोषयन्तीं च खण्डचन्द्रयुतां शुभाम्--इ० पा० ।

॥५०० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महिषघ्नीं बहुभुजां कुमारीं सिंहवाहिनीम् ॥ ९० ॥ दानवांस्तर्जयंतीं च खड्गोद्धतकरां शुभाम् ॥ घंटाक्षस्रग्धरां दुर्गां रणारंभे व्यवस्थिताम् ॥ ९१ ॥ ततो जयजयाकारैः स्तवं कुर्यादिमं ततः ॥ ९२ ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते ॥ ९३ ॥ कुंकुमेन समालब्धे चन्दनेन विलेपिते ॥ बिल्वपत्रकृतामाले दुर्गेऽहं शरणं गतः ॥९४॥ कृत्वैवमर्चां कौरव्य अष्टम्यां जागरं निशि ॥ नटनर्तनगीतैश्च कारयेत्तु महोत्सवम् ॥९५॥ एवं हृष्टैर्निशां नीत्वा प्रभाते चारुणोदये ॥ पातयेन्महिषान्मेषानग्रतो नतकन्धरान् ॥९६॥ शतं चापि शतार्धं वा तदर्द्धं वा यथेच्छया ॥ सुरासवभृतैः कुंभैस्तर्पयेत्परमेश्वरीम् ॥ ९७ ॥ कापालिकेभ्यस्तद्देयं दासीदासजनैस्तथा ॥ विभज्य सर्वं कौंतेय सुहृत्संबंधिबंधुषु ॥९८॥ ततोपराह्णसमये नवम्यां स्यंदने स्थिताम् ॥ भवानीं भ्रामयेद्राष्ट्रे स्वयं राजा ससैन्यवान् ॥९९॥ सहस्रैः पुरुषैर्वापि रथयुक्तैः सुशिक्षितैः ॥ शनैः शनैरधिकया दीप्त्या प्रज्वलदीपकैः ॥१००॥ आकृष्टखड्गैर्वीरैश्च धातुरक्तैर्गजैस्तथा ॥ नदद्भिः शंखपटहैर्नृत्यद्भिर्वार्यांवृतैः[1] ॥ अलंकृताभिर्नारीभिर्बालकैः सुविभूषितैः ॥१०१॥ भूतेभ्यस्तु बलिं दद्यान्मंत्रेणानेन सामिषम् ॥ सरक्तं सजलं सान्नं गन्धपुष्पाक्षतैर्युतम् ॥१०२॥ त्रींस्त्रीन्वारांस्त्रिशूलेन दिग्विदिक्षु क्षिपेद्बलिम् ॥ बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा ॥ १०३ ॥ मरुतोऽथाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ असुरा यातुधानाश्च मातरश्च पिशाचकाः ॥ १०४ ॥ शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥ जृंभकाः सिद्धगन्धर्वा व्याला विद्याधरा धराः[2]॥१०५॥ दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥ जगतां शांतिकर्तारो ब्रह्माद्याश्च महर्षयः ॥१०६॥ सविघ्नं मम पापं ते शाम्यंतु परिपन्थिनः॥ सौम्या भवंतु तृप्ताश्च भूताः प्रेताः सुखावहाः ॥१०७॥ इत्येवं भ्रामयेद्राष्ट्रे दुर्गां देवीं रथे स्थिताम्॥ नरयानेन वा पार्थ ततोऽविघ्नं समापयेत् ॥१०८॥ अथोत्पन्नेषु विघ्नेषु भूतशांतिं समाचरेत् ॥ येन विघ्ना न जायंते यात्रा संपूर्णतां व्रजेत्॥१०९॥ एवं ये कुर्वते यात्रां राजानोऽन्येऽपि मानवाः॥ महानवम्यां नंदायां पुत्रका हृष्टमानसाः ॥११०॥ ते सर्वे पापनिर्मुक्ता यांति भागवतीं पुरीम् ॥१११॥ न तेषां श्रावकोनाग्निर्न चौरा न विनायकाः ॥ विघ्नं कुर्वन्ति राजेन्द्र येषां तुष्टा महेश्वरी ॥ ११२ ॥ नीरुजः सुखिनो भोगभोक्तारो भयवर्जिताः॥ भवंति भक्ताः पुरुषाः भगवत्याः किमुच्यते ॥ ११३ ॥ इत्येष ते समाख्यातो दुर्गादेव्या महोत्सवः ॥ पठतां शृण्वतां चैव सर्वाशुभविनाशनः ॥ ११४ ॥ शूलाग्रभिन्नमहिषासुरपृष्ठविष्टामृत्खातखड्गरुचिरांगदबाहुदण्डाम् ॥ अभ्यर्च्य पंचवदनानुगतां नवम्यां दुर्गां सुदुर्गगहनानि तरंति

1 उत्याग्र्य—इ० पा० । 2 व्याला विद्याधरा नगाः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मर्त्याः ॥ ११९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे महानवमीव्रतवर्णनं नामाष्टत्रिंशदुत्तरशततमोऽध्यायः॥१३८॥

॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पुरा देवासुरे युद्धे ब्रह्माद्यैरमरैर्नृप ॥ विजयार्थं महेन्द्रस्य ध्वजयष्टिः प्रतिष्ठिता ॥ १ ॥ मेरोरुपरि संस्थाप्य सिद्धविद्याधरोरगैः ॥ सा देवी ह्यर्चिता नित्यं भूषणैर्भूषिता स्वकैः ॥ २ ॥ स्वच्छत्रघंटापिटकैः किंकिणीबद्धबुद्बुदैः ॥ तां दृष्ट्वा दानवा नष्टा भयादेव रणे हताः ॥ गता रसातलं दैत्या देवाश्चापि दिवि स्थिताः ॥ ३ ॥ ततः प्रभृति तां दिव्यामिंद्रयष्टिं यजंति ते ॥ देवाः सर्वे गणाः सर्वे हृष्टास्तुष्टायुधिष्ठिर ॥ ४ ॥ अतः स्वर्गं गतो राजा भूरिपुण्यवशाद्वसुः ॥ इन्द्रलोके महाभागो वसुदेवैः सुपूजितः ॥ ५ ॥ तस्मै दत्ता महेन्द्रेण वसुयष्टिः प्रगृह्यताम् ॥ पूजयित्वा महाभाग सर्वदैत्यापनुत्तये ॥ ६ ॥ अवतार्य वर्षासमये सर्वैर्नृपतिभिः सह ॥ मह्यां संपूजयामास चक्रे चेन्द्रमहं वसुः ॥ ७ ॥ महेन मघवा प्रीतो ददौ पुण्यं वसोर्वरम् ॥ ८ ॥ येषु देशेषु मनुजा भक्तिभावपुरःसराः ॥ पूजयिष्यंति वर्षान्ते मया दत्तं महाध्वजम् ॥ ९ ॥ तेषु देशेषु मुदिताः प्रजा रोगविवर्जिताः ॥ प्रभूतान्ना धर्मयुक्ता वृषमेधा महोत्सवाः ॥ १० ॥ भविष्यंति सुवेषाश्च सुभाषाश्च सुभूषणाः ॥ ११ ॥ श्रुत्वैतद्वचनं राजा वसुर्वसुमतां वरः ॥ विशेषेण ततश्चक्रे वर्षेवर्षे महोत्सवम् ॥ १२ ॥ श्रवणे स्थापयेद्यष्टिं स्नानवस्त्रैः प्रपूजिताम् ॥ दैर्घ्येण विंशतिकरां सारदारुमयीं शुभाम् ॥ १३ ॥ इन्द्रस्थाने पुरोदिष्टे इन्द्रमातृकसंज्ञके ॥ तस्मिन्यष्टिं नृपो भोक्ता स्वयं यत्नेन योजयेत् ॥ १४ ॥ वस्त्रैर्विचित्रैः संवीतां पिटिकालंकृतां तथा ॥ पिटिकानां महाराज क्रमं च कथयामि ते ॥ १५ ॥ प्रथमं लोकपालाख्यं चतुरस्रं सकर्णिकम् ॥ यमेन्द्रधनदैर्युक्तं वरुणेन समं ततः ॥ १६ ॥ वृत्तं खंडास्रकं रम्यं द्वितीयं रक्तचूर्णितम् ॥ तृतीयं श्वेतकं [1]चित्रमष्टास्रं पिटकं शुभम् ॥ १७ ॥ चतुर्थमिन्द्रगोपालवृत्तं मातृसमावृतम् ॥ पञ्चमं चाष्टकोणं तु शुक्लं धातुविचित्रितम् ॥ १८ ॥ कृष्णकर्णिकया षष्ठं वृत्तं बुद्बुदशोभितम् ॥ सप्तमं चाष्टकोणं तु शुक्लं विद्याधरैर्युतम् ॥ १९ ॥ अष्टमं पिटकं वृत्तं वरत्रासूत्रवेष्टितम् ॥ नवग्रहयुतं दीप्तं नवमं च सचंडिकम् ॥ २० ॥ ब्रह्मविष्ण्वीशसहितं दशमं शिवसंस्थितम् ॥ कृष्णमेकादशं वृत्तं यमयुक्तं युधिष्ठिर ॥ २१ ॥ छात्रं द्वादशमं शुक्लं ध्वजदीर्घं त्रयोदशम् ॥ सकुशं पुष्पस्रग्दामघंटाचामरचर्चितम् ॥ २२ ॥ बन्धयित्वा चन्द्रपादे रज्जुभिः स्थूणिकां नरैः ॥ शनैरुत्थापयेत्पार्थ हुत्वा वैश्वानरं द्विजान् ॥ २३ ॥ दक्षिणाभिश्च संपूज्य गुडपायसपूपकैः ॥ कुर्यान्महोत्सवं राजा दिनानि नव सप्त वा ॥ २४ ॥ प्रेक्षणीयैर्महादानैर्नटैर्गीतैः

१ ततः—इ० पा० । २ स्मृतम्—इ० पा० । ३ मातृसमन्वितम्—इ० पा० । ४ धातुविवर्जितम्—इ० पा० । ५ वज्रदीर्घं त्रयोदशम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथानकैः ॥ चक्रदोलाधरोत्सर्गैः कर्कटैर्मल्लयोधनैः ॥ २५ ॥ वेश्यांगनानरैर्हृष्टैर्द्यूतक्रीडामहोत्सवैः ॥ कर्पूरवस्त्रदानैश्च संमानैश्च परस्परम् ॥ २६ ॥
रात्रौ प्रजागरः कार्यो रक्षणाय प्रयत्नतः ॥ काकोलूककपोतानां येन पातो न विद्यते ॥ २७ ॥ काकाद्भवति दुर्भिक्षं कौशिकान्म्रियते नृपः ॥
कपोताच्च प्रजानाशस्ततो रक्षेत्सदोद्यतः ॥ २८ ॥ शैथिल्याद्गिरिभिच्छक्रः प्रमादान्नीयते यदि ॥ तस्मिन्देशे समुत्थानमिन्द्रकेतोर्न कारयेत् ॥
॥ २९ ॥ यावत्तु नीयते स्थानादन्यस्मादैंद्रतो ध्वजः ॥ ३० ॥ इंद्रध्वजसमुत्थानं प्रमादान्न कृतं यदि ॥ ततो द्वादशमे वर्षे कर्तव्यं नांतरे
पुनः ॥ ३१ ॥ कथंचिद्यदि विघ्नः स्याद्विपाकं मे निबोध वै ॥ छत्रभंगे च्छत्रभंगो ध्वजे राष्ट्रं विनश्यति ॥ ३२ ॥ मस्तके मन्त्रविच्छेदो मुखे
मुख्यबलक्षयः ॥ बाहुदंडे वदेत्पीडां जठरे जाठरं भयम् ॥ ३३ ॥ वरत्रायां मित्रनाशः स्थूणिकासु पदातयः ॥ क्षयं गच्छंति राजेन्द्र तस्माद्य
त्नात्पुरंदरम् ॥ ३४ ॥ उत्थाप्य पूजयेद्भक्त्या दिवारात्रमतंद्रितः ॥ प्रमादात्पतिते भग्ने गते चेन्द्रध्वजे द्विधा ॥ ३५ ॥ सौवर्णं रौप्यकं कृत्वा
पूर्णमुत्थापयेद्ध्वजम् ॥ शांतिकं पौष्टिकं कृत्वा द्विजेभ्योन्नं प्रदापयेत् ॥ ३६ ॥ त्रपुसैः कर्कटीभिश्च नालिकेरैः कपित्थकैः ॥ बीजपूरैः
सनारंगैर्भक्ष्यान्नैर्विविधैस्तथा ॥ ३७ ॥ नैवेद्यादिभिरभ्यर्च्य मंत्रेणानेन तोषयेत् ॥ वज्रहस्त सुरारिघ्न बहुनेत्र पुरंदर ॥ क्षेमार्थं
सर्वलोकस्य पूजेयं प्रतिगृह्यताम् ॥ ३८ ॥ श्रवणाद्धरणीं यावत्पूजां कृत्वा विधानतः ॥ रात्रौ विसर्जयेच्छक्रं मंत्रेणानेन पांडव ॥ ३९ ॥ सार्द्धं
सुरासुरगणैः पुरंदरशतक्रतो ॥ उपहारं गृहीत्वेनं महेन्द्रध्वज गम्यताम् ॥ ४० ॥ एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर ॥ पर्जन्यः कामवर्षी
स्यात्तस्मिन्राष्ट्रे न संशयः ॥ ४१ ॥ ईतयो न प्रवर्तंते तस्मान्मृत्युकृतं भयम् ॥ विजित्य शत्रून्समरे वशे कृत्वामहीतलम् ॥ भुक्त्वाराज्यं चिरंका
लमिन्द्रलोकेमहीयते ॥४२॥ राष्ट्रे पुरे च नगरे सुरराजकेतोर्यात्रोत्सवो नृपजनैः क्रियते समेत्य॥ दुष्टोपसर्गजनितं परचक्रजं वा तस्मिन्भयं भवति
पार्थ न किञ्चिदेव ॥ ४३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे महेन्द्रध्वजमहोत्सववर्णनं नामैकोनचत्वारिंशदुत्तरश
ततमोऽध्यायः ॥ १३९ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पुरा वामनरूपेण याचयित्वा धरामिमाम् ॥ बलियज्ञे हरिः सर्वं क्रांतवान्विक्रमैस्त्रिभिः ॥
॥ १ ॥ इन्द्राय दत्तवान्राज्यं बलिं पातालवासिनम् ॥ कृत्वा दैत्यपतेर्वासमहोरात्रं पुनर्नृप ॥ २ ॥ एकमेव हि भोगार्थं बलिराज्यंतिचिह्नितम् ॥
रहस्यं तदेतत्ते कथयामि नरोत्तम ॥ ३ ॥ कार्त्तिके कृष्णपक्षस्य पञ्चदश्यां निशागमे ॥ यथेष्टचेष्टा दैत्यानां राज्यं तेषां महीतले ॥ ४ ॥ ॥ युधि

१ चक्राद्यैः–इ० पा० । १ कृत्वा दैत्यपतेर्दत्तमहोरात्रं पर्व नृप–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्ठिर उवाच ॥ ॥ निश्शेषेण हृषीकेश कौमुदीं ब्रूहि मे प्रभो ॥ किमर्थं दीयते दानं तस्यां का देवता भवेत् ॥ ५ ॥ किंस्वित्तस्यै भवेद्देयं केभ्यो देयं जनार्दन ॥ प्रहर्षः कोऽत्र निर्दिष्टः क्रीडा कात्र प्रकीर्तिता ॥ ६ ॥ श्रीकृष्ण उवाच ॥ ॥ कार्त्तिके कृष्णपक्षे च चतुर्दश्यां दिनोदये ॥ अवश्यमेव कर्तव्यं स्नानं नरकभीरुभिः ॥ ७ ॥ अपामार्गपल्लवान्वा भ्रामयेन्मस्तकोपरि ॥ सीतालोष्टसमायुक्तसकंटकदलान्वितान् ॥ ८ ॥ हर पापमपामार्ग भ्राम्यमाणं पुनःपुनः ॥ आपदं किल्बिषं चापि ममापहर सर्वशः ॥ अपामार्ग नमस्तेस्तु शरीरं मम शोधय ॥ ९ ॥ ( इत्यपमार्गभ्रमण मन्त्रः ) ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः ॥ यमाय धर्मराजाय मृत्यवे चांतकाय च ॥ वैवस्वताय कालाय सर्वभूतक्षयाय च ॥१०॥ नरकाय प्रदातव्यो दीपः संपूज्य देवताः ॥ ततः प्रदोपसमये दीपान्दद्यान्मनोरमान् ॥ ११ ॥ ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च ॥ कूटागारेषु चैत्येषु सभासु च नदीषु च ॥ १२ ॥ प्राकारोद्यानवापीषु प्रतोलीनिष्कुटेषु च ॥ सिद्धार्हद्बुद्धचामुंडाभैरवायतनेषु च ॥ मंदुरासु विविक्तासु हस्तिशालासु चैव हि ॥ १३ ॥ एवं प्रभातसमयेऽमावास्यायां नराधिप ॥ स्नात्वा देवान्पितॄन्भक्त्या संपूज्याथ प्रणम्य च ॥ १४ ॥ कृत्वा तु पार्वणं श्राद्धं दधिक्षीरघृतादिभिः ॥ भोज्यैर्नानाविधैर्विप्रान्भोजयित्वा क्षमाप्य च ॥ १५ ॥ ततोऽपराह्णसमये घोषयेन्नगरे नृपः ॥ अद्य राज्यं वलेर्लोका यथेष्टं मोद्यतामिति ॥ १६ ॥ लोकश्चापि परे हृष्येत्सुधाधवलिताजिरे ॥ वृक्षचन्दनमालाढ्यैश्चर्चिते च गृहेगृहे ॥ १७ ॥ द्यूतपानरतोद्दृप्तनरनारीमनोहरे ॥ नृत्यवादित्रसंघुष्टे सम्प्रज्वलितदीपके ॥ १८ ॥ अन्योन्यप्रीतिसंहृष्टदत्तलाभेन वै जने ॥ तांबूलहृष्टवदने कुङ्कुमक्षोदचर्चिते ॥ १९ ॥ दुकूलपट्टनेपथ्ये स्वर्णमाणिक्यभूषिते ॥ अद्भुतोद्भटशृंगारप्रदर्शितकुतूहले ॥ २० ॥ युवतीजनसंकीर्णवस्त्रोज्वलविहारिणि ॥ दीपमालाकुले रम्ये विध्वस्तध्वांतसञ्चये ॥ प्रदोषे दोषरहिते शस्तदोषागमे शुभे ॥ २१ ॥ शशिपूर्णमुखाभिश्च कन्याभिः क्षिप्ततण्डुलम् ॥ नीराजनं प्रकर्तव्यं वृक्षशाखासु दीपकैः ॥ २२ ॥ भ्राम्यमाणो नतो मूर्ध्नि मनुजानां जनाधिपः ॥ वृक्षशाखांतदीपानां निरस्तादर्शनाद्व्रजेत् ॥ नीराजनं तु तेनेह प्रोच्यते विजयप्रदम् ॥ २३ ॥ तस्माज्जनेन कर्तव्यं रक्षोदोषभयापहम् ॥ यात्राविहारसञ्चारे जयजीवेति वादिना ॥ २४ ॥ क्षुद्रोपसर्गरहिते राजचौरभयोज्झिते ॥ मित्रस्वजनसम्बन्धिसुहृत्प्रेमातुरंजिते ॥ २५ ॥ ततोऽर्द्धरात्रसमये स्वयं राजा व्रजेत्पुरम् ॥ अवलोकयितुं रम्यं पद्भ्यामेव शनैःशनैः ॥ २६ ॥ महता तूर्यघोषेण ज्वलद्भिर्हस्तदीपकैः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतशोभां पुरीं पश्येत्कृतरक्षां स्वकैर्नरैः ॥ २७ ॥ तं दृष्ट्वा महदाश्चर्यमृद्धिं चैवात्मनः शुभाम् ॥ बलिराज्यप्रमोदं च ततः स्वगृहमाव्रजेत् ॥ २८ ॥
एवं गते निशार्धे तु जने निद्रार्द्धलोचने ॥ तावन्नगरनारीभिः शूर्पडिंडिमवादनैः ॥ निष्काम्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहांगणात् ॥ २९ ॥
ततः प्रबुद्धे सकले जने जातमहोत्सवे ॥ माल्यदीपकहस्ते च स्नेहनिर्भरलोचने ॥ ३० ॥ वेश्या विलासिनी सार्धं स्वस्ति मंगलकारिणी ॥
गृहाद्गृहं व्रजन्ती च पादाभ्यंगप्रदायिनी ॥ ३१ ॥ पिष्टकोद्वर्तनपरे गुरुशुश्रूषणाकुले ॥ द्विजाभिवादनपरे सुखराज्याभिवीक्षणे ॥ ३२ ॥
सुवासिनीभ्यो दाने च दीयमाने यदृच्छया ॥ यथाप्रभातसमये राजार्हमानयेज्जनम् ॥ ३३ ॥ सद्भावेनैव सन्तोष्या देवाः सत्पुरुषा द्विजाः ॥
इतरे चान्नपानेन वाक्प्रदानेन पंडिताः ॥ ३४ ॥ वस्त्रैस्तांबूलदानैश्च पुष्पकर्पूरकुंकुमैः ॥ भक्ष्यैरुच्चावचैर्भोज्यैरन्तःपुरविलासिनीः ॥ ३५ ॥ ग्रामै
र्विषयदानैश्च सामंतनृपतीन्धनैः ॥ पदातीनङ्गसंलग्नान्ग्रैवेयकटकैः स्वकान् ॥ ३६ ॥ स्वयं राजा तोषयेत्स जनान्भृत्यान्पृथक्पृथक् ॥
यथार्हं तोषयित्वा तु ततो मल्लनटान्भटान् ॥३७॥ वृषभान्महिषांश्चैव युध्यमानान्परैः सह ॥ गजानश्वांश्च योधांश्च पदातीन्समलंकृतान् ॥३८॥
मंचारूढः स्वयं पश्येन्नटनर्तकचारणान् ॥ कुद्धापयेदानयेच्च गोमहिष्यादिकं ततः ॥ ३९ ॥ दिष्ट्या कार्यं पयोज्योतिरुक्तिप्रत्युक्तिका वदेत् ॥
ततोपराह्णसमये पूर्वस्यां दिशि भारत ॥ ४० ॥ मार्गपालीं प्रबध्नीयात्तुंगस्तंभेऽथ पादपे ॥ कुशकाशमयीं दिव्यां संभवे बहुभिर्वृताम् ॥ ४१ ॥
पूजयित्वा गजान्वाजीन्सार्धं यामत्रये गते ॥ गावो वृषाः समहिषा मंडिता घंटिकोत्कटाः ॥ ४२ ॥ कृते होमे द्विजेन्द्रैस्तु गृह्णीयान्मार्गपालि
काम् ॥ राष्ट्रभोज्येन धाराभिः सहस्रेण शतेन वा ॥४३॥ स्वशक्त्यपेक्षया वापि गृह्णीयाद्ग्रामभोजनैः ॥ मातुः कुलं पितृकुलमात्मानं सहबंधुभिः
॥ ४४॥ संतारयेत्स सकलं मार्गपालीं ददाति यः ॥ नीराजनं च तत्रैव कार्यं राज्ञे जयप्रदम् ॥४५॥ मार्गपालीतलेनेत्थं हया गावो गजा वृषाः ॥
राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः ॥ ४६ ॥ मार्गपालीं समुल्लंघ्य नीरुजः स्यात्सुखी सदा ॥ कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः ॥
॥ ४७ ॥ पूजां कुर्यान्नरः साक्षाद्भूमौ मंडलके कृते ॥ बलिमालिख्य दैत्येन्द्रं वर्णकैः पंचरंगकैः ॥ ४८ ॥ सर्वाभरणसंपूर्णं विंध्यावल्या सहासि
तम् ॥ कूष्मांडबाणजंघोरुमुरदानवसंवृतम् ॥ ४९ ॥ संपूर्णहृष्टवदनं किरीटोत्कटकुण्डलम् ॥ द्विभुजं दैत्यराजानं कारयित्वा नृपः स्वयम्॥५०॥
गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत् ॥ भ्रातृमंत्रिजनैः सार्द्धं संतुष्टो बंदिभिः स्तुतः ॥ ५१ ॥ कमलैः कुमुदैः पुष्पैः कह्लारै रक्तको

१ प्रभाम्–इ० पा० । २ प्रयत्नात्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्पलैः ॥ गन्धधूपान्ननैवेद्यैरक्षतैर्गुडपूपकैः ॥५२॥ मद्यमांससुरालेह्यदीपवर्त्युपहारकैः ॥ मंत्रेणानेन राजेन्द्र समंत्री सपुरोहितः ॥ ५३ ॥ बलिराज नमस्तुभ्यं विरोचनसुत प्रभो ॥ भविष्येन्द्रसुराराते पूजेयं प्रतिगृह्यताम् ॥ ५४ ॥ एवं पूजां नृपः कृत्वा रात्रौ जागरणं ततः ॥ कारयेत्प्रेक्षणीयादि नटक्षत्रकथानकैः ॥ ५५ ॥ लोकश्चापि गृहस्यांते शय्यायां शुक्लतंडुलैः ॥ संस्थाप्य बलिराजानं फलैः पुष्पैश्च पूजयेत् ॥ ५६ ॥ बलिमुद्दिश्य दीयंते दानानि कुरुनन्दन ॥ यानि तान्यक्षयाण्याहुर्मयैवं संप्रदर्शितम् ॥ ५७ ॥ यदस्यां दीयते दानं स्वल्पं वा यदि वा बहु ॥ तदक्षयं भवे त्सर्वं विष्णोः प्रीतिकरं परम् ॥ ५८ ॥ विष्णुना वसुधा लब्धा प्रीतेन बलये पुनः ॥ उपकारकरो दत्तश्चासुराणां महोत्सवः ॥ ५९ ॥ ततः प्रभृति राजेन्द्र प्रवृत्ता कौमुदी पुनः ॥ सर्वोपद्रवविद्रावि सर्वविघ्नविनाशिनी ॥६०॥ लोकशोकहरी काम्या धनपुष्टिसुखावहा ॥ कुशब्देन मही ज्ञेया मुदी हर्षे ततः परम् ॥ ६१ ॥ धातुज्ञैर्नैगमज्ञैश्च तेनैषा कौमुदी स्मृता ॥ कौ मोदन्ते जना यस्यां नानाभावैः परस्पराः ॥ ६२ ॥ हृष्टास्तुष्टाः सुखा यत्तास्तेनैषा कौमुदी स्मृता ॥ कुमुदानि बलेर्यस्माद्दीयन्तेऽस्यां युधिष्ठिर ॥ ६३ ॥ अर्थार्थं पार्थ भूमौ च तेनैषा कौमुदी स्मृता ॥ एकमेव महोरात्रं वर्षे वर्षे विशांपते ॥ ६४ ॥ दत्तं दानवराजस्य आदर्शमिव भूतले ॥ यः करोति नृपो राष्ट्रे तस्य व्याधिभयं कुतः ॥ ६५ ॥ कुत ईति भयं तत्र नास्ति मृत्युकृतं भयम् ॥ सुभिक्षं क्षेममारोग्यं सर्वसम्पद उत्तमाः ॥ ६६ ॥ नीरुजश्च जनाः सर्वे सर्वोपद्रववर्जिताः ॥ कौमुदीकरणाद्रा जन्भवतीह महीतले ॥ ६७ ॥ यो यादृशेन भावेन तिष्ठत्यस्यां युधिष्ठिर ॥ हर्षदैन्यादिरूपेण तस्य वर्षं प्रयाति हि ॥ ६८ ॥ रुदिते रोदिति वर्षं हृष्टो वर्षं प्रहृष्यति ॥ भुक्तौ भोक्ता भवेद्वर्षं स्वस्थः स्वस्थो भवेदिति ॥ ६९ ॥ तस्मात्प्रहृष्टैस्तुष्टैश्च कर्तव्या कौमुदी नरैः ॥ वैष्णवी दानवी चेयं तिथिः पैत्री युधिष्ठिर ॥ ७० ॥ उपशमितमेघनादं प्रज्वलितदशाननं रमितरामम् ॥ रामायणमिव सुभगं दीपदिनं हरतु वो दुरितम् ॥ ७१ ॥ कूष्माण्डादानरम्यं कुवलयखण्डैश्च धातुकाभद्रम् ॥ शरदिव हरिगतनिद्रं दीपदिनं हरतु वो दुरितम् ॥७२॥ दीपोत्सवे जनितसर्वजनप्रमोदां कुर्वंति ये सुमनसो बलिराजपूजाम् ॥ दानोपभोगसुखवृद्धिशताकुलानां हर्षेण वर्षमिह पार्थिव याति तेषाम् ॥७३॥ इति श्रीभविष्ये महापुराण उत्तरप र्वणि श्रीकृष्णयुधिष्ठिरसंवादे दीपालिकोत्सववर्णनं नाम चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४० ॥छ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथयस्व महा भाग सर्वज्ञो ह्यसि यादव ॥ सर्वकामाप्तये कृत्यं कथं शांतिकपौष्टिकम् ॥१॥ ॥ श्रीकृष्ण उवाच ॥ ॥ श्रीकामः शान्तिकामो वा ग्रहयज्ञं समा रभेत् ॥ दृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन्पुनः ॥ २ ॥ सर्वशास्त्राण्यनुक्रम्य संक्षिप्य ग्रन्थविस्तरम् ॥ ग्रहशांतिं प्रवक्ष्यामि पुराणश्रुतिभाषि





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ताम् ॥३॥ पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम् ॥ ग्रहान्ग्रहाधिदेवांश्च स्थाप्य होमं समारभेत् ॥ ४ ॥ ग्रहयज्ञस्त्रिधा प्रोक्तः पुराणश्रुतिको विदैः ॥ प्रथमोऽयुतहोमः स्याल्लक्षहोमस्ततः परम् ॥ ५ ॥ तृतीयः कोटिहोमस्तु सर्वकामफलप्रदः ॥ अयुतेनाहुतीनां च नवग्रहमखः स्मृतः ॥६॥ तस्य तावद्विधिं वक्ष्ये पुराणश्रुतिभाषितम् ॥ गर्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृताम् ॥ ७ ॥ कुर्याद्विधानतो वेदिं वितस्त्युच्छ्रयसंयुताम् ॥ संस्थापनाय देवानां चतुरस्रामुदक्प्लवाम् ॥ ८ ॥ अग्निप्रणयनं कृत्वा तस्यामावाहयेत्सुरान् ॥ देवानां तत्र संस्थाप्या विंशतिर्द्वादशाधिका ॥ ९ ॥ सूर्यः सोमो महीपुत्रो बुधो जीवः सितोर्कजः ॥ राहुः केतुरिति प्रोक्ता ग्रहा लोकहितावहाः ॥ १० ॥ ताम्रकात्स्फटिकाद्रक्तचन्दनात्स्वर्णजावुभौ ॥ रजतादायसाच्चैव ग्रहाः कार्याः क्रमादमी ॥ ११ ॥ मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु ॥ उत्तरेण गुरुं विद्याद्बुधं पूर्वोत्तरेण तु ॥ १२ ॥ पूर्वेण भार्गवं विद्यात्सोमं दक्षिणपूर्वके ॥ पश्चिमोत्तरतः केतुं स्थापयेच्छुक्लतंडुलैः ॥ १३ ॥ राजामात्यान्महाराज तंडुलैः स्थापयेदथ ॥ भास्करस्येश्वरं विद्यादुमां च शशिनस्तथा ॥ १४ ॥ स्कन्दमङ्गारकस्यापि बुधस्य च तथा हरिम् ॥ ब्रह्माणं च गुरोर्विद्याच्छुक्रस्यापि शचीपतिम् ॥ ॥ १५ ॥ शनैश्चरस्य तु यमं राहोः कालं तथैव च ॥ केतोस्तु चित्रगुप्तं तु सर्वेषामेव देवताः ॥ १६ ॥ अग्निरापः क्षितिर्विष्णुरिन्द्रः सौवर्णदेवताः ॥ प्रजापतिश्च सूर्यश्च ब्रह्मा प्रत्यधिदेवताः ॥१७॥ विनायकं तथा दुर्गां वायुमाकाशमेव च ॥ सावित्रीं च तथा लक्ष्मीमुमां च सहभर्तृकाम् ॥ ॥ १८ ॥ आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ ॥ संस्मरेद्रक्तमादित्यमंगारकसमन्वितम् ॥ १९ ॥ सोमशुक्रौ यथाश्वेतौ बुधजीवौ च पिङ्गलौ ॥ मंदराहू तथा कृष्णौ धूम्रं केतुगुणं विदुः ॥ २० ॥ ग्रहवर्णानि देयानि वासांसि कुसुमानि च ॥ गंधाश्च बलयश्चैव धूपा गुग्गुलपूर्वकाः ॥ ॥ २१ ॥ गुडौदनं रवेर्दद्यात्सोमाय घृतपायसम् ॥ अंगारकाय संयावं बुधाय क्षीरषष्टिकम् ॥ २२ ॥ दध्यन्नं गुरवे दद्याच्छुक्राय तु घृतौदनम् ॥ शनैश्चराय कृशरं मेषमांसं तु राहवे ॥ २३ ॥ चित्रौदनं केतवे च सर्वान्भक्ष्यैरथार्चयेत् ॥ प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषितम् ॥ २४ ॥ चूतपल्लवसंपन्नं फलवस्त्रयुगान्वितम् ॥ पञ्चरत्नसमायुक्तं पञ्चभंगयुतं तथा ॥ २५ ॥ स्थापयेदव्रणं कुंभं वरुणं तत्र विन्यसेत् ॥ गंगाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ॥ २६ ॥ गजाश्वरथ्यावल्मीकात्संगमाद्ध्रदगोकुलात् ॥ मृदमानीय राजेन्द्र सर्वौषधिजलान्विताम् ॥ २७ ॥ स्नानार्थं विन्यसेत्तत्र यजमानस्य धर्मवित् ॥ सर्वे समुद्राः सरितः सरः प्रस्रवणानि च ॥ २८ ॥ आयांतु यजमानस्य दुरितक्षयकारकाः ॥ एवमावाहयित्वा तान्सर्वान्नृपतिसत्तम ॥ २९ ॥ होमं समारभेत्सर्पिर्यवव्रीहितिलादिना ॥ अर्कः पलाशखदिरौ ह्यपामार्गोऽथ पिप्पलः ॥ ३० ॥ उदुंबर

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शमीदूर्वाकुशाश्च समिधः क्रमात् ॥ एकैकस्य चाष्टशतमष्टाविंशति वा पुनः ॥ ३१ ॥ होतव्या मधुसर्प्पिर्भ्यां दध्ना वा पायसेन वा ॥ प्रादेशमात्रा ऋजवो विशाखा विफलाः शुभाः ॥ ३२ ॥ कल्प्यंते समिधः प्राज्ञैः सर्वकर्मसु सर्वदा ॥ देवानामपि सर्वेषामुपांशुपरमार्थवित् ॥ ३३ ॥ स्वेन स्वेनैव मंत्रेण होतव्याः समिधः पृथक् ॥ आकृष्णेन इमं देवा अग्निर्मूर्द्धा दिवः क्रमात् ॥ ३४ ॥ उद्बुध्यस्वेति बोध्यश्च यथासंख्यमुदाहृताः ॥ बृहस्पते अतियदस्तथैवान्नात्परिस्रुतः ॥ ३५ ॥ शन्नोदेवीति च कया केतुं कृण्वन्निती‌ति च ॥ होतव्यं यद्वदाज्यं चरुं भक्ष्याणि वा पुनः ॥ ३६ ॥ मंत्रैर्दशाहुतीर्दत्त्वा होमो व्याहृतिभिस्ततः ॥ उदङ्मुखाः प्राङ्मुखाश्च कुर्युर्ब्राह्मणपुंगवाः ॥ ३७ ॥ मंत्रवंतस्तु कर्तव्याश्चरवः प्रतिदैवतम् ॥ अपो राजेति रुद्रस्य बलिहोमं समारभेत् ॥ ३८ ॥ आपो हिष्ठेत्युमायास्तु श्येनेति स्वामिनस्तथा ॥ विष्णोरिदं विष्णुरिति स्वमिच्छेति स्वयंभुवः ॥ ॥ ३९ ॥ इन्द्रादिदेवतानां तु इन्द्राय जुहुयात्पुनः ॥ नवा यमस्यायं गौश्चेत्येवं होमः प्रकीर्तितः ॥ ४० ॥ कालस्य ब्रह्मजज्ञानमिति मंत्रः प्रशस्यते ॥ चित्रगुप्तस्य वा जात पौराणिकाविदुर्बुधाः ॥ ४१ ॥ "अग्निं दूतंवृणीमहे" इति वह्नेरुदाहृतः ॥ इंद्रं यमं वरुणमित्ययं मंत्रः प्रकीर्तितः ॥ ॥ ४२ ॥ भूमेः पृथिव्यंतारिक्षमिति वेदेषु पठ्यते ॥ "सहस्रशीर्षा पुरुष" इति विष्णोरुदाहृतः ॥ ४३ ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ब्रह्मणा सहितः शेषो दिक्पालाः पांतु ते सदा ॥ ४४ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधाः पुष्टिः श्रद्धा क्रिया मतिः ॥ बुद्धिर्लज्जा शांतिपुष्टी कांतिस्तुष्टिश्च मातरः ॥४५॥ एतास्त्वामभिषिंचंतु धर्मपत्न्यः समागताः ॥ आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥४६॥ ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च तर्पिताः ॥ देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ ४७ ॥ ऋषयो मनवो गावो देवमातर एव च ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ ॥ ४८ ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥ औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ४९ ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ एते त्वामभिषिंचंतु सर्वकामार्थसिद्धये ॥ ५० ॥ ततः शुक्लांबरधरः शुक्लगन्धानुलेपनः ॥ सर्वगन्धसमायुक्तः स्नातः श्रद्धासमन्वितः ॥५१॥ यजमानः सपत्नीकान्सिद्धिदांस्तान्समाहितान् ॥ दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः ॥ ५२ ॥ सूर्याय कपिलां धेनुं दद्याच्छंखं तथेन्दवे ॥ रक्तं धुरंधरं दद्याद्भौमाय ककुदाधिकम् ॥ ५३ ॥ बुधाय जातरूपं च गुरवे पीतवाससी ॥ श्वेताश्वं दैत्यगुरवे कृष्णांगामर्कसूनवे ॥ ५४ ॥ आयसं राहवे दद्यात्केतवे च्छागमुत्तमम् ॥ सुवर्णेन समा कार्या यजमानेन दक्षिणा ॥५५॥ सर्वेषामथवा दद्याद्गुरुर्वा येन तुष्यति ॥ सुमंत्रेण प्रदातव्याः सर्वाः सर्वार्थदक्षिणाः ॥ ५६ ॥ कपिले सर्वदेवानां पूजनीयासि रोहिणी ॥ तीर्थदेवमयी यस्मादतः शांतिं प्रयच्छ मे ॥ ५७ ॥ पुण्यस्त्वं शंख



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुण्यानां मङ्गलानां च मंगलम् ॥ विष्णुना विधृतो नित्यमतः शांतिं प्रयच्छ मे ॥ ५८ ॥ धर्म त्वं वृषरूपेण जगदानन्दकारकः ॥ अष्टमूर्तेरधिष्ठानमतः शांतिं प्रयच्छ मे ॥ ५९ ॥ हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शांतिं प्रयच्छ मे ॥ ६० ॥ पीतवस्त्रयुगं दद्याद्वासुदेवस्य वल्लभम् ॥ प्रदानात्तस्य मे विष्णुरतः शांतिं प्रयच्छतु ॥ ६१ ॥ कपिलस्त्वश्वरूपेण यस्मादमृतसम्भवः ॥ चन्द्रार्कवाहनो नित्यमतः शांतिं प्रयच्छ मे ॥ ६२ ॥ यस्मात्त्वं पृथिवी सर्वा धेनो वै कृष्णसंज्ञिता ॥ सर्वपापहरा नित्यमतः शांतिं प्रयच्छ मे ॥ ६३ ॥ यस्मादायस कर्माणि तवाधीनानि सर्वदा ॥ लांगलान्यायुधादीनि तस्माच्छांतिं प्रयच्छ मे ॥ ६४ ॥ यस्मात्त्वं छाग यज्ञानामंगत्वेन व्यवस्थितः ॥ योनिर्विभावसोर्नित्यमतः शांतिं प्रयच्छ मे ॥ ६५ ॥ गवामंगेषु तिष्ठंति भुवनानि चतुर्दश ॥ यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ ॥ ६६ ॥ यस्मादशून्यं शयनं केशवस्य शिवस्य च ॥ शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥ ६७ ॥ यथा रत्नेषु सर्वेषु सर्वे देवा व्यवस्थिताः ॥ तथा शांतिं प्रयच्छंतु रत्नदानेन मे सुराः ॥ ६८ ॥ यथा भूमिप्रदानस्य कलां नार्हंति षोडशीम् ॥ दानान्यन्यानि मे शांतिं भूमिदानाद्भवत्यपि ॥ ६९ ॥ एवं संपूजयेद्भक्त्या वित्तशाठ्यविवर्जितः ॥ वस्त्रकाञ्चनरत्नौघैर्माल्यगंधानुलेपनैः ॥ ७० ॥ ग्रहस्वरूपमतुलं कथ्यमानं निबोध मे ॥ भक्तिभावप्रपन्नस्य कथ्यमानं विराजते ॥ पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ॥ सप्ताश्वः सप्तरज्जुश्च द्विभुजः स्यात्सदा रविः ॥ ॥ ७१ ॥ श्वेतः श्वेतांबरधरो दशाश्वः श्वेतभूषणः ॥ गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी ॥ ७२ ॥ रक्तमाल्यांबरधरः कर्णिकारसमद्युतिः ॥ खड्गचर्मगदापाणिर्विधेयो भूमिनंदनः ॥ ७३ ॥ पीतमाल्यांबरधरः पीतगंधानुलेपनः ॥ कांचने च रथे दिव्ये शोभमानो बुधः सदा ॥ ७४ ॥ देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ ॥ दंडिनौ वरदौ कार्यौ साक्षसूत्रकमंडलू ॥ ७५ ॥ इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः ॥ बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा ॥ ७६ ॥ शार्दूलवदनः खड्गी वर्मी शूली वरप्रदः ॥ नीलसिंहासनस्थश्च राहुरत्र प्रशस्यते ॥ ७७ ॥ धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः ॥ गृध्रासनरता नित्यं केतवः स्युर्वरप्रदाः ॥ ७८ ॥ सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः ॥ स्वांगुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं तदा ॥ ७९ ॥ ग्रहस्वरूपमेतत्ते व्याख्यातं पांडुनन्दन ॥ एतज्ज्ञात्वा प्रयत्नेन पूजा कार्या विचक्षणैः ॥ ८० ॥ विधिना ग्रहपूजां योनेन त्वारभते नरः ॥ सर्वान्कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥ ८१ ॥ यस्तु पीडाकरो नित्यं माल्यवित्तस्य वा ग्रहः ॥ तं तु यत्नेन संपूज्य शेषानप्यर्चयेद्बुधः ॥ ८२ ॥ ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः ॥ पूजिताः पूजयंत्येते निर्दहंत्यवमानिताः ॥ ८३ ॥ तस्मान्न दक्षिणाहीनं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्तव्यं भूतिमिच्छता ॥ संपूर्णायां दक्षिणायां यस्मादेकोऽपि तुष्यति ॥ ८४ ॥ सदैवाऽयुतहोमोऽयं नवग्रहमखः स्मृतः ॥ ८५ ॥ विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ॥ निर्विघ्नार्थं महाराज तथोद्वेगाद्भुतेषु च ॥ ८६ ॥ कथितोऽयुतहोमोऽयं लक्षहोममतः शृणु ॥ सर्वकामाप्तये यस्माल्लक्षहोमं विदुर्बुधाः ॥ ८७ ॥ पितृणां वल्लभो यस्माद्भुक्तिमुक्तिफलप्रदः ॥ ग्रहताराबलं लब्ध्वा कृत्वा ब्राह्मणवाचनम् ॥ ८८ ॥ गृहस्योत्तरपूर्वेण मण्डपं कारयेद्बुधः ॥ रुद्रायतनभूमौ वा चतुरस्रमुदङ्मुखम् ॥ ८९ ॥ दशहस्तमथाष्टौ वा हस्तान्कुर्याद्विधानतः ॥ प्रागुदक्प्रवणां भूमिं कारयेद्यत्नतो नरः ॥ ९० ॥ प्रागुत्तरं समासाद्य प्रदेशं मंडपस्य तु ॥ शोभनं कारयेत्कुण्डं यथावल्लक्षणान्वितम् ॥ ९१ ॥ मानहीनं चाप्रशस्तमनेकभयदं भवेत् ॥ यस्मात्तस्मात्सुसंपूर्णं शांतिकुंडं विधीयते ॥ ९२ ॥ अस्माद्दशगुणः प्रोक्तो लक्षहोमे स्वयंभुवा ॥ आहुतिभिः प्रयत्नेन दक्षिणाभिस्तथैव च ॥ ९३ ॥ द्विहस्तविस्तृतं तद्वच्चतुर्हस्तायतं पुनः ॥ लक्षहोमे भवेत्कुण्डं योनिवक्त्रं त्रिमेखलम् ॥ ९४ ॥ संस्थापनाय देवानां वप्रत्रयसमावृतम् ॥ द्व्यंगुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः ॥ ९५ ॥ अंगुलोच्छ्रयसंयुक्तं वप्रद्वयमथोपरि ॥ त्र्यङ्गुलस्तत्र विस्तारः सर्वेषां कथ्यते बुधैः ॥ ९६ ॥ दशांगुलोच्छ्रिता भित्तिः स्थंडिलस्य तथोपरि ॥ तस्मिन्नावाहयेद्देवान्पूर्ववत्पुष्पतण्डुलैः ॥ ९७ ॥ आदित्याभिमुखाः सर्वाः स्थाप्याः प्रत्यधिदेवताः ॥ स्थापनीया मुनिश्रेष्ठा नांतरेण पराङ्मुखाः ॥ ९८ ॥ गरुत्मानधिकस्तत्र संपूज्यः श्रियमिच्छता ॥ समपीनशरीरस्तु वाहनं परमेष्ठिनः ॥९९॥ विषपापहरो नित्यमतः शांतिं प्रयच्छ मे ॥ पूर्ववत्कुंभमामंत्र्य तद्वद्धोमं समाचरेत् ॥१००॥ सहस्राणां शतं हुत्वा समित्संख्यादिकं पुनः ॥ औदुम्बरीमथार्द्रां च वक्रकोटरवर्जिताम् ॥ १०१ ॥ बाहुमात्रां स्रुचं कृत्वा ततः स्तंभद्वयोपरि ॥ घृतधारां तथा सम्यगग्नेरुपरि पातयेत् ॥१०२॥ पाठयेत्सूक्तमाग्नेयं वैष्णवं रौद्रमैंदवम् ॥ महावैश्वानरं साम ज्येष्ठसाम च पाठयेत् ॥१०३॥ स्नानं तु यजमानस्य पूर्ववन्मन्त्रवाचनम् ॥ दातव्या यजमानेन पूर्ववद्दक्षिणा पृथक् ॥ १०४ ॥ कामक्रोधविहीनेन ऋत्विग्भ्यः शांतचेतसः ॥ नवग्रहमखे विप्राश्चत्वारो वेदवेदिनः ॥ १०५ ॥ अथ वा ऋत्विजौ शांतौ द्वावेव त्वतिकोविदौ ॥ कार्यावयुतहोमे तु न प्रसज्येत विस्तरे ॥ १०६ ॥ तद्वच्च दश चाष्टौ वा लक्षहोमेऽपि ऋत्विजः॥ कर्तव्याः शक्तितस्तद्वच्चत्वारो वा विमत्सराः ॥१०७॥ नवग्रहमखे सर्वं लक्षहोमे दशोत्तरम् ॥ दद्याच्च पांडवश्रेष्ठ भूषणान्यपि शक्तितः ॥ १०८ ॥ शयनानि च वस्त्राणि हैमानि कटकानि च ॥ कर्णांगुलीपवित्राणि भक्तिमान्प्रतिपादयेत् ॥१०९॥

१ आत्रयेत्–इ० पा० । २ शक्तिमान्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न कुर्याद्दक्षिणाहीनं वित्तशाठ्येन मानवः ॥ अददल्लोभमोहाभ्यां कुलक्षयमवाप्नुयात् ॥ ११० ॥ अन्नदानं यथा शक्त्या दातव्यं भूतिमिच्छता ॥ अन्नहीनं व्रतं यस्माद्दुर्भिक्षफलदं भवेत् ॥ १११ ॥ राष्ट्रं हन्यादंगहीनो मंत्रहीनस्तु ऋत्विजः ॥ अदक्षिणो यजमानं नास्ति यज्ञसमो रिपुः ॥ ११२ ॥ न चाप्यल्पधनः कुर्याल्लक्षहोमं नरः क्वचित् ॥ तस्मात्पीडाकरो नित्यं य एव भवति ग्रहः ॥ ११३ ॥ तमेव पूजयेद्भक्त्या द्वौ वा त्रीन्वा यथाविधि ॥ एकमप्यर्चयेद्भक्त्या ब्राह्मणं वेद पारगम् ॥ ११४ ॥ दक्षिणाभिः प्रयत्नेन बहून्वा बहुवित्तवान् ॥ लक्षहोमस्तु कर्तव्यो यदि वित्तं गृहे गृहे ॥ ११५ ॥ यतः सर्वानवाप्नोति कुर्वन्कामान्विधानतः ॥ पूज्यते शिवलोके च वस्वादित्यमरुद्गणैः ॥ ११६ ॥ यावत्कल्पशतान्यष्टावथ मोक्षमवाप्नुयात्॥सकामो यस्त्विमं कुर्याल्लक्षहोमं यथाविधि ॥११७॥ स तं काममवाप्नोति पदं चानंत्यमश्नुते॥ पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥११८॥ भार्यार्थी शोभनां भार्यां कुमारी च शुभं पतिम् ॥ भ्रष्टराज्यस्तथा राज्यं श्रीकामः श्रियमाप्नुयात् ॥ ११९ ॥ यं यं प्रार्थयते कामं तं तमाप्नोति पुष्कलम् ॥ निष्कामः कुरुते यस्तु परं ब्रह्म स गच्छति ॥ १२० ॥ शांतिं नवग्रहमयीं दुरितोपशांतिं राजन्करोति बहुना विधिवद्द्विजेन्द्रैः ॥ क्षेमं सुभिक्षमतुलं कुलवृद्धिसंपत्तत्रास्ति यत्र कुरुते बत लक्षहोमम् ॥१२१॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे नवग्रहलक्षहोमविधिवर्णनं नामैकचत्वारिंशदुत्तरशततमोऽध्यायः॥१४१॥ ॥छ॥ श्रीकृष्ण उवाच ॥ ॥ राजा संवरणः पूर्वं प्रतिष्ठाने पुरोत्तमे ॥ बभूव स महाभागः शास्त्रार्थकुशलो वली ॥१॥ ब्रह्मण्यः पितृभक्तश्च देवब्राह्मणपूजकः ॥ तस्याथ कुर्वतो राज्यं सम्यक्पालयतः प्रजाः ॥२॥ आजगाम महायोगी सनको ब्रह्मणः सुतः॥दत्त्वा तस्यासनं राजा प्रणम्य शिरसा तथा ॥३॥ पूजयित्वार्घ्यपाद्याद्यैरात्मानं विनिवेद्य च ॥ इतिहासपुराणोक्ताश्चकार विविधाः कथाः ॥४॥ राजर्षीणां पुराणां च चरितानि यथार्थवित् ॥ ततः कथांतरे राजा कार्यं मनसि संस्थितम् ॥५॥ हिताय पृथिवीशानां जगतश्चात्मनस्तथा ॥ पप्रच्छ विनयोपेतो योगाचार्यं महामतिः ॥ ६ ॥ ॥ संवरण उवाच ॥ ॥ भगवन्महदुत्पातसंभवे भूप्रकंपने ॥ निर्घाते पांशुवर्षे च गृहभंगे तथैव च ॥ ७ ॥ जन्मनक्षत्रपीडासु अनावृष्टिभयेषु च ॥ ज्वरेषु ग्रहपीडासु दुर्भिक्षे राष्ट्रविग्रहे ॥ ॥ ८ ॥ व्याधीनां संभवे जाते शरीरे चातिपीडिते ॥ क्लेशे महति चोत्पन्ने किंकर्तव्यं नरोत्तमैः ॥ ९ ॥ स्वर्गस्य साधनं यच्च कीर्तिदं धनदं तथा ॥ प्रब्रूहि मे द्विजश्रेष्ठ तथारोग्यप्रदं नृणाम् ॥ १० ॥ ॥ सनत्कुमार उवाच ॥ ॥ शृणुराजन्प्रवक्ष्यामि शांतिकर्म

१ भवति ग्रहपूजने–इ० पा० । २ दयाधर्मपरो नित्यं क्षमावान्बहुवित्तवान्–इ० पा० । ३ पातकं समवाप्नोति यत्कुर्वन्नविधानतः–इ० पा० । ४ राजविप्लवे–इ० पा० । ५ नृपोत्तमैः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ह्यनुत्तमम् ॥ कोटिहोमाख्यमतुलं सर्वकामफलप्रदम् ॥ ११ ॥ ब्रह्महत्यादिपापानि येन नश्यंति तत्क्षणात् ॥ उत्पाताः प्रशमं यांति महत्संपद्यते सुखम् ॥ १२ ॥ विधानं तस्य वक्ष्यामि शृणुष्वैकमना भव ॥ देवागारे नदीतीरे वने वा भवनेऽपि वा ॥ १३ ॥ पर्वते वापि कुर्वीत य इच्छेत्क्षेममात्मनः ॥ शुभनक्षत्रयोगे च वारे पूर्वगुणान्विते ॥ १४ ॥ यजमानस्यानुकूल्ये कोटिहोमं समाचरेत् ॥ पूजयित्वा प्रयत्नेन ब्राह्मणं वेदपारगम् ॥ १५ ॥ वस्त्रैर्विभूषणैश्चैव गंधमाल्यानुलेपनैः ॥ प्रणम्य विधिवत्तस्मै आत्मानं विनिवेदयेत् ॥ १६ ॥ त्वं नो गतिः पिता माता त्वं गतिस्त्वं परायणः ॥ त्वत्प्रसादेन विप्रर्षे सर्वं मे स्यान्मनोगतम् ॥ १७ ॥ आपद्विमोक्षाय च मे कुरु यज्ञमनुत्तमम् ॥ कोटिहोमार्थमतुलं शांत्यर्थं सार्वकामिकम् ॥ १८ ॥ पुरोहितस्ततः प्राज्ञः शुक्लांबरधरः शुचिः ॥ ब्राह्मणैर्वेदसंवृत्तैः पुण्यैर्युक्तः समाहितैः ॥ १९ ॥ भूमिभागे समे शुद्धे प्रागुदक्प्रवणे तथा ॥ पुण्याहं वाचयेत्पूर्वं कृत्वा विप्रान्सुपूजितान् ॥ २० ॥ ततस्तु महितैर्विप्रैः सूत्रयेन्मण्डपं शुभम् ॥ उत्तमं शतहस्तं तु तदर्धेन तु मध्यमम् ॥ जघन्यं तु तदर्द्धेन शक्तिकालाद्यपेक्षया ॥२१॥ मध्ये तु मण्डपस्यापि कुंडं कुर्याद्विचक्षणः ॥ अष्टहस्तप्रमाणेन आयामेन तथैव च ॥ २२ ॥ मेखलात्रितयं तस्य द्वादशांगुलविस्तृतम् ॥ तत्प्रमाणां तथा योनिं कुर्वीत सुसमाहितः ॥ २३ ॥ कुंडस्य पूर्वभागे तु वेदिं कुर्याद्विचक्षणः ॥ चतुर्हस्तां समां चैव हस्तमात्रोच्छ्रितः नृप ॥ २४ ॥ स्थानं तत्सर्वभूतानां कुर्याद्यत्नेन बुद्धिमान् ॥ २५ ॥ उद्लिप्य ततो भूमिं मंडपस्य समीपतः ॥ विन्यसेत्कलशांस्तत्र जलपूर्णांश्चतुर्दश ॥ २६ ॥ अश्वत्थप्लक्षचूताद्यैः पल्लवैरुपशोभितान् ॥ वितानमुपरिष्टाच्च मंडपस्य प्रकल्पयेत् ॥ २७ ॥ स्थापयेद्दिक्षु सर्वासु तोरणानि विचक्षणः ॥ एवं संभृतसंभारैः पुरोधाः सुसमाहितः ॥ २८ ॥ पुण्याहजयघोषेण होमकर्म समारभेत् ॥ स्थापयित्वा सुरान्वेद्यां वक्ष्यमाणानरिंदम ॥ २९ ॥ ब्राह्मणं पूर्वभागे तु मध्ये देवं जनार्दनम् ॥ पश्चिमे तु तथा रुद्रं वसूनुत्तरतस्तथा ॥ ३० ॥ ऐशान्यां च ग्रहान्सर्वानाग्नेय्यां मरुतस्तथा ॥ वायुं सौम्यां तथैशान्यां लोकपालान्क्रमेण तु ॥ ३१ ॥ एवं संस्थाप्य विबुधान्यथास्थानं नृपोत्तम ॥ पूजयेद्विधिवद्वस्त्रगन्धमाल्यानुलेपनैः ॥ ३२ ॥ वेदोक्तमंत्रैस्तल्लिङ्गैः पुराणोक्तैः पृथक्पृथक् ॥ ॥ आदित्या वसवो रुद्रा लोकपालास्तथा ग्रहाः ॥ ३३ ॥ ब्रह्मा जनार्दनश्चैव शूलपाणिर्भगाक्षिहा ॥ अत्र संनिहिताः सर्वे भवंतु



१ देवागारे च भवने तीर्थे वा शिवसंनिधौ–इ० पा० । २ समारभेत्–इ० पा० । ३ सर्वतः पुण्यैः संयुक्तः सुसमाहितैः–इ० पा० । ४ प्रहितैः–इ०पा० । ५ चतुर्हस्तप्रमाणेन–इ० पाठस्त्वशुद्धः । कुण्डसिद्धिग्रन्थे–"कक्षुद्विर्वा कोट्यां नृपकरमपि प्राहुरपरे"–इत्युक्तेः कोटिहोमेऽष्टकरपरिमितकुण्डस्योदितत्वात् । ६ सर्वदेवानाम्–इ० पा० । ७ समाचरेत्–इ० पा० । ८ महेश्वरः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुखभागिनः ॥ ३४ ॥ पूजां गृह्णंतु सर्वेत्र मया भक्त्योपपादिताम् ॥ कुर्वंतु च शुभं सर्वे यज्ञकर्म समाहिताः ॥ ३५ ॥ एवं संपूजयित्वा तान्देवा न्यत्नेन शुद्धधीः॥ नैवेद्यैर्विविधैर्भक्ष्यैः फलैः पत्रैस्तथैव च ॥ ३६ ॥ ततस्तु तैर्द्विजैः सार्द्धं कुंडस्य विधिपूर्वकम् ॥ कुर्यात्संस्कारकरणं यथोक्तं वेद चिन्तकैः ॥ ३७ ॥ ततः समाह्वयेद्वह्निं नाम्ना ख्यातं घृतार्चिषम् ॥ नियोजयेद्विजांस्तत्र शतसंख्यान्नृपोत्तम ॥ अलाभे तु बहूनां च यथालाभं नियोजयेत् ॥ ३८ ॥ विद्यावृद्धान्वयोवृद्धान्गृहस्थान्संयतेन्द्रियान्॥ स्वकर्मनियताञ्ज्ञानशीलाञ्छान्तान्द्विजोत्तमान् ॥ ३९ ॥ चिंतयेत्तत्र देवेशं पंचास्यं नृप पावकम् ॥ मुखानि तस्य चत्वारि सप्त जिह्वाश्च पार्थिव ॥ ४० ॥ एकजिह्वमथैकं तु तत्स्मृतं सर्वकामदम् ॥ धूमायमानेन वृथा होतव्यं ज्वलिते नले ॥ ४१ ॥ ऋग्भिः पूर्वामुखैर्होमो यजुर्भिश्चोत्तरामुखैः॥ सामभिः पश्चिमे कार्योऽथर्वभिर्दक्षिणामुखैः ॥ ४२ ॥ आघारावाज्य भागौ तु पूर्वं हुत्वा विचक्षणः ॥ परितोथ परिस्तीर्णे कल्पिते च तथासने ॥ ४३ ॥ ब्रह्माणं पूर्वमप्येतत्सर्वं पश्चात्समाचरेत् ॥ होमो व्याहृति भिश्चैव सर्वस्तत्र विधीयते ॥ ४४ ॥ प्रणवादिभिस्तल्लिंगैः स्वाहाकारांतयोजितैः॥ जुहुयात्सर्वदेवानां वेद्यां ये चोपकल्पिताः ॥४५॥ एवं प्रकल्पये द्यज्ञं कोटिहोमाख्यमुत्तमम् ॥ तिलाः कृष्णा घृताभ्यक्ताः किञ्चिद्यवसमन्विताः ॥ ४६ ॥ होतव्याः कोटिहोमे तु समिधश्च पलाशजाः ॥ पूर्णे पूर्णे सहस्रे तु दद्यात्पूर्णाहुतिं शुभाम् ॥ पश्चमे तन्मुखे राजन्सर्वकामार्थसिद्धये ॥४७॥ पूर्णाहुत्यः समाख्याताः कोटिहोमे नराधिप ॥ सहस्राणि नृपश्रेष्ठ दश शास्त्रविशारदैः ॥ ४८ ॥ प्रारंभदिनमारभ्य ब्राह्मणैर्ब्रह्मवादिभिः ॥ भाव्यं सयजमानैस्तु अथवा सपुरोहितैः ॥ ४९ ॥ क्रोधलोभा दयो दोषा वर्जनीयाः प्रयत्नतः ॥ यजमानेन राजेन्द्र सर्वान्कामानभीप्सता ॥ ५० ॥ ॥ संवरण उवाच ॥ ॥ बहुत्वात्कर्मणो ब्रह्मन्कोटि होमः सुदुष्करः ॥ कालेन महता चैव शक्यः प्राप्तुं कथंचन ॥ ५१ ॥ नियमाद्ब्रह्मचर्याद्वा दुष्करो हीति मे मतिः ॥ निरोधोऽत्र ब्राह्मणानां भूशय्यादिषु दुष्करः ॥५२॥ कार्याद्गुरुतया यस्मात्पर्वकालाद्यपेक्षया ॥ एतद्विज्ञायते ब्रह्मन्यदि शास्त्रेषु कथ्यते ॥ कोटिहोमस्य संक्षेपं वद मे ब्रह्म संभव ॥ ५३ ॥ ॥ सनत्कुमार उवाच ॥ ॥ शताननो दशमुखो द्विमुखैकमुखस्तथा ॥ चतुर्विधो महाराज कोटिहोमो विधीयते ॥ ५४ ॥ कार्यस्य गुरुतां ज्ञात्वा नैवं कुर्यादपर्वणि ॥ यथा संक्षेपतः कार्यः कोटिहोमस्तथा शृणु ॥ ५५ ॥ कृत्वा कुंडशतं दिव्यं यथोक्तं हस्त संमितम् ॥ एकैकस्मिंस्ततः कुंडे शतं विप्रान्नियोजयेत् ॥ ५६ ॥ सद्यःपक्षे तु विप्राणां सहस्रं परिकीर्तितम् ॥ एकस्थानप्रणीतेग्नौ सर्वतः

१ चैव मुखोर्भनः—इ० पा० । २ प्रज्वालयेत्—इ० पा० । ३ कृत्वा—इ० पा० । ४ ब्रह्मचारिभिः—इ० पा० । ५ नैष्कर्म्यमथ कर्मणः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिभाविते ॥ ५७ ॥ होमं कुर्युर्द्विजाः सर्वे कुण्डे कुण्डे यथोदितम् ॥ यथा कुंडबहुत्वेऽपि राजसूये महाक्रतौ ॥ ५८ ॥ न च वह्निबहुत्वं स्यात्तत्र यज्ञे विधीयते ॥ तथा कुंडशतेऽप्यत्र घृतार्चिषि वितानिते ॥ ५९ ॥ एक एव भवेद्यज्ञः कोटिहोमो न संशयः ॥ एवं यत्क्रियते क्षिप्रं व्याकुलैः कार्यगौरवात् ॥ शताननः सविज्ञेयः कोटिहोमो न संशयः ॥ ६० ॥ स्वल्पैरहोभिः कार्यः स्याद्वर्षाकालादिकेऽपिवा ॥ तदा दशगुणः कार्यः कोटिहोमो विजानता ॥ ६१ ॥ विप्राणां द्वे शते तत्र सुविभज्य[1] नियोजयेत् ॥ तेऽपि विज्ञानशीलाः स्युर्व्रतवंतो जिते न्द्रियाः ॥ ६२ ॥ भूप कुंडद्वयं कृत्वा विभज्य च विभावसुम् ॥ होमं कुर्युर्द्विजा भूयः संस्कृत्य विधिपूर्वकम् ॥ ६३ ॥ शतं तत्र नियोज्यं स्याद्वि प्राणां प्रविभज्य वै ॥ मासे वाथ द्विमासे वा यथाकाले ह्युपस्थिते ॥ ६४ ॥ एवं च द्विमुखं कार्यः कोटिहोमो विचक्षणैः ॥ ६५ ॥ यदा तु स्वेच्छया यज्ञं यजमानः समापयेत् ॥ कालेन बहुधा राजंस्तदा चैकमुखो भवेत् ॥ ६६ ॥ एककुंडस्थितो वह्निरेकचित्तैः समाहितैः ॥ यथालाभ स्थितैर्विप्रैर्ज्ञानशीलैर्विचक्षणैः ॥६७॥ न संख्यानियमश्चात्र ब्राह्मणानां नरोत्तम ॥ न कालनियमश्चैव स्वेच्छायज्ञः स उच्यते ॥ ६८ ॥ आवृत्त्या सर्वकामस्य चातुर्मास्यानुकर्मवत् ॥ तदप्रसक्तौ कर्तव्यो यज्ञोऽयं सार्वकालिकः ॥ ६९ ॥ अयमेकमुखो राजन्कालेन बहुना भवेत् ॥ बहुविघ्नश्च कालेन तस्मात्संक्षेपमाचरेत् ॥ ७० ॥ यतो हि चित्तवित्ताद्यमायुश्चैवास्थिरं सदा ॥ अतः संक्षेपतः कार्यं धर्मकार्यं प्रशस्यते ॥ ७१ ॥ ततः समाप्ते यज्ञे तु कारयेत्सुमहोत्सवम् ॥ शंखतूर्यनिनादेन ब्रह्मघोषस्वनेन च ॥ ७२ ॥ ततस्तु दीक्षयेद्विप्रान्होतॄंश्च श्रद्धयान्वितः ॥ निष्कैश्च कंकणैश्चैव कुण्डलैर्विविधैर्नृप ॥ ७३ ॥ गोशतं चैव दातव्यमश्वानां च शतं तदा ॥ सहस्रं च सुवर्णस्य सर्वेषामपि दापयेत् ॥ ७४ ॥ ग्रामैर्गजै रथैरश्वैः पूजयेच्च पुरोहितम् ॥ दीनान्धकृपणान्सर्वान्वस्त्राद्यैश्चापि पूजयेत् ॥ ७५ ॥ ततश्चावभृथं स्नायात्तैर्घटैः पूर्वकल्पितैः ॥ लक्षहोमोक्तमंत्रेण सदा विजयकारिणा ॥ ७६ ॥ एवं समापयेद्यस्तु कोटिहोममखं शुभम् ॥ तस्यारोग्यं वित्तपुत्रराष्ट्रवृद्धिस्तथैव च ॥ ७७ ॥ सर्वपापक्षयश्चैव जायते नृपसत्तम ॥ अनावृष्टिभयं चैव उत्पातभयमेव च ॥ ७८ ॥ दुर्भिक्षं ग्रहपीडा च प्रशमं याति भूतले ॥ एतत्पुण्यं पापहरं सर्वकामफलप्रदम् ॥ सनत्कुमारमुनिना पार्थिवाय निवेदितम् ॥ ७९ ॥ सर्वोपसर्गशमनं भवने वने वा ये कारयन्ति मनुजा नृपकोटिहोमम् ॥ भोगानवाप्य मनसो

[1] सुविभाज्यविनियोजयेत्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिमतान्प्रकामं ते यांति शक्रसदनं सुविशुद्धसत्त्वाः ॥ ८० ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कोटिहोम विधिवर्णनं नाम द्विचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४२ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ महाशांतिं प्रवक्ष्यामि महादेवेन भाषिताम् ॥ पार्थिवानां हितार्थाय महादुस्तरतारिणीम् ॥ १ ॥ नृपाभिषेके सा कार्या यात्राकाले नृपस्य तु ॥ दुःस्वप्ने दुर्निमित्ते च ग्रहवैगुण्यसंभवे ॥ ॥ २ ॥ विद्युदुल्कानिपाते च जन्मर्क्षे ग्रहदैवते ॥ केतूदयेऽथ संजाते निर्घाते क्षितिकम्पने ॥ ३ ॥ प्रसूतौ मूलगण्डान्ते यमलस्य तु संभवे ॥ छत्राणां च ध्वजानां च स्वस्थानात्पतने भुवि ॥ काकोलूककपोतानां प्रवेशे वेश्मनस्तथा ॥ ४ ॥ क्रूरग्रहाणां वक्रत्वे जन्मादिषु विशेषतः ॥ जन्मनि द्वादशे चैव चतुर्थे वाष्टमे तथा ॥ ५ ॥ यदा स्युर्गुरुमन्दाऽऽराः सूर्यश्चैव विशेषतः ॥ युद्धे ग्रहाणां सर्वेषां सूर्यशीतांशुकीलके ॥ ६ ॥ वस्त्रायुधगवाश्वेषु मणिकेशविनाशने ॥ यद्यग्रे परिदृश्येत रात्राविंद्रधनुस्तथा ॥ ७ ॥ वेश्मनश्च तुलाभंगे गर्भेष्वश्वतरीषु च ॥ रवीन्द्वोरुपरागेषु महाशांतिः प्रशस्यते ॥ ८ ॥ सर्वाणि दुर्निमित्तानि प्रशमं यान्ति सर्वथा ॥ तां कुर्युर्ब्राह्मणाः पंच कुलशीलसमन्विताः ॥ ९ ॥ चतुर्वेदास्त्रिवेदाश्च द्विवेदाश्चापि पांडव ॥ आथर्वणा विशेषेण बह्वृचा यजुसंयुताः ॥ १० ॥ शुचयः श्रुतसंपन्ना जपहोमपरायणाः ॥ कृच्छ्रपाराकनक्ताद्यैः कृतकाय विशोधनाः ॥ ११ ॥ पूर्वमाराध्य मंत्रैस्तु प्रारभेत क्रियां ततः ॥ दशद्वादशहस्तं वा मंडपं कारयेच्छुभम् ॥ १२ ॥ तन्मध्ये वेदिकां कुर्याच्च तुर्हस्त प्रमाणतः ॥ आग्नेय्यां कारयेत्कुंडं हस्तमात्रं सुशोभनम् ॥ १३ ॥ मेखलात्रयसंयुक्तं योन्या चापि विभूषितम् ॥ बद्धचन्दनमालं च तोरणालंकृतं तथा ॥ १४ ॥ गोमयेनोपलिप्ते च मंडपे तु द्विजातयः ॥ शुक्लाम्बरधराः स्नाताः शुक्लमाल्यानुलेपनाः ॥ १५ ॥ ततश्च पञ्च कलशांस्तस्यां वेद्यां नियोजयेत् ॥ आग्नेयादिषु कोणेषु पञ्चमं मध्यतस्तथा ॥ १६ ॥ अष्टास्त्रालंकृते पद्मे चूतपल्लवशोभिते ॥ ब्रह्मकूर्चविधानेन पंचगव्यं तु कारयेत् ॥ १७ ॥ औषधीः पञ्चरत्नानि रोचनां चन्दनं तथा ॥ सिद्धार्थकाञ्छमीदूर्वाः कुशान्व्रीहियवांस्तथा ॥ १८ ॥ अपामार्गं फलवतीं न्यग्रोधोदुंबरौ तथा ॥ प्लक्षाश्वत्थकपित्थांश्च प्रियंगुचूतपल्लवान् ॥ १९ ॥ हस्तिदंतमृदं चैव कोणकुम्भेषु निक्षिपेत् ॥ पुण्यतीर्थोदकान्नं च धान्यं गव्यं च मध्यमे ॥ २० ॥ कूर्चं वाचमितीदं च वह्निकुम्भाभिमन्त्रणम् ॥ आशुः शिशानोमन्त्रेण मन्त्रणं वायुगोचरे ॥ ॥ २१ ॥ ईशावास्यं चतुर्थस्य कुम्भस्य चाभिमंत्रणम् ॥ मध्यमे जपितव्यास्तु रुद्रकुम्भे भवोद्भवाः ॥२२॥ गंधपुष्पाक्षतैर्वस्त्रैर्नैवेद्यैर्घृतपाचितैः॥

१ चामराणां च–इ० पा० । २ सूर्यस्य–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

फलैश्च नारिकेलाद्यैर्दीपकैः कुंभपूजनम् ॥ २३ ॥ स्वस्तिवाचनकं चैव कारयेत्तदनंतरम् ॥ क्रमेणानेन शनकैरग्निकार्यं प्रयोजयेत् ॥ २४ ॥ अग्निं दूतमिति ह्यग्निं पूर्वमेव निधापयेत् ॥ हिरण्यगर्भः समिति ब्रह्मासननियोजनम् ॥ २५ ॥ कपोतसुप्रणीतेन मंत्रेण विनिशेपयेत् ॥ कृत्वा चावरणं वह्नेराज्यसंस्कारमेव च ॥ २६ ॥ अथ चासादयेद्द्रव्यं यथावत्सप्रयोजनम् ॥ ततःपुरुषसूक्तेन पायसश्रपणं भवेत् ॥ २७ ॥ अभिघार्याथ संसिद्धं तथा संस्थापयेद्भुवि ॥ अष्टादशप्रमाणेध्मान्दद्यादथ शमीमयान् ॥ २८ ॥ पालाशीः समिधः सप्त तथा सप्तेति दापयेत् ॥ आघारावाज्यभागौ तु हुत्वा पूर्वक्रमेण तु ॥ २९ ॥ जुहुयादाहुतीः सप्त जातवेदस इत्यृचा ॥ स्थालीपाकस्य जुहुयात्पुनर्वै जातवेदसा ॥ ३० ॥ तरत्समंदीसूक्तेन चतस्रो जुहुयात्ततः ॥ यमायेति च सप्तान्याः स्वाहांता जुहुयात्ततः ॥ ३१ ॥ इदं विष्णुस्ततः सप्त जुहुयादाहुतीर्नृप ॥ नक्षत्रेभ्यस्ततः स्वाहा सप्तविंशदथाहुतीः ॥ ३२ ॥ यत्कर्मणेति जुहुयात्ततः स्विष्टकृतं पुनः ॥ ग्रहहोमस्ततः कार्यस्तिलैराज्यपरिप्लुतैः ॥ ३३ ॥ प्रायश्चित्तं ततो हुत्वा होमकर्म समापयेत् ॥ ततस्तु तूर्यनिर्घोषैःकाहलाशंखनिःस्वनैः ॥ ३४ ॥ यजमानस्य कर्तव्यो ह्यभिषेको द्विजोत्तमैः ॥ काश्मर्यवृक्षसंभूते भद्रे भद्रासने स्थितम् ॥ ३५ ॥ वेदिमध्यगतं कृत्वा दुर्निमित्तप्रशांतये ॥ पंचभिःकलशैः पूर्णैर्मंत्रैरेभिर्यथाक्रमम् ॥ ३६ ॥ सहस्राक्षेण प्रथमं ततश्चैव शतायुषा ॥ सजोपसा च इन्द्रेति विश्वानीत्यृग्भिरेव च ॥ ३७ ॥ ऋतमस्त्विति च ततः स्नापयेयुः समाहिताः ॥ ततो दिशां बलिं दद्याद्विचित्रान्नसमायुतम् ॥ ३८ ॥ नमोस्तु सर्वभूतेभ्य इति मन्त्रमुदाहरन् ॥ स्नातस्य ब्राह्मणाः सर्वे पठेयुःशांतिमुत्तमाम् ॥ ३९ ॥ शांतितोयेन धारां च पातयित्वा समंततः ॥ पुण्याहवाचनं कृत्वा शांतिकर्म समापयेत् ॥ ४० ॥ क्षितिं हिरण्यं वासांसि शयनान्यासनानि च ॥ विप्रेभ्यो दक्षिणां दद्याद्यथा शक्त्या विमत्सरः ॥ ४१ ॥ दीनानाथविशिष्टेभ्यः श्रोत्रियेभ्यश्च दापयेत् ॥ भोजनं शोभनं दत्त्वा ततः सर्वं प्रसिद्ध्यति ॥ ४२ ॥ आयुश्च लभते दीर्घं शत्रून्विजयते क्षणात् ॥ दुर्गाणि चास्य सिद्ध्यन्ति पुत्रांश्च लभते शुभान् ॥ ४३ ॥ यथाशस्त्रप्रहाराणां कवचं वारणं भवेत् ॥ तथा दैवोपघातानां शान्तिर्भवति वारणम् ॥ ४४ ॥ अहिंसकस्य दांतस्य धर्मार्जितधनस्य च ॥ दयादाक्षिण्ययुक्तस्य सर्वे सानुग्रहा ग्रहाः ॥ ४५ ॥ अर्थान्समर्थयतिवर्द्धयते च धर्मं कामं प्रसाधयति तस्य पिनष्टि पापम् ॥ यः कारयेत्सकलदोषहरीं समर्थां शांतिं प्रशांतहृदयः पुरुषः सदैव ॥ ४६ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे महाशांतिविधिवर्णनं नाम त्रिचत्वारिंशदुत्तरशततमोऽध्यायः ॥१४३॥

१ येन यत्सप्रयोजनम्-इ० पा० । २ पुनः-इ० पा० । ३ शुभैर्जलैः-इ० पा० । ४ समाहिताः-इ० पा० । ५ दद्याच्चैव युधिष्ठिर-इ० पा० । ६ दयामाणिक्ययुक्तस्य—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ ॥ युधिष्ठिर उवाच ॥ ॥ शांतिं कथय देवेश गणनाथस्य मे विभो ॥ यां कृत्वा सर्वदुर्गाणि तरते मानवोऽखिलः ॥ १ ॥ ॥
॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शांतिं वक्ष्यामि राजेन्द्र गणनाथप्रियां पराम् ॥ यस्या आचरणेनैव सर्वारिष्टक्षयो भवेत् ॥ २ ॥ विनायकं कर्मविघ्नसिद्ध्यर्थं विनिवोधत ॥ स्वप्नेऽवगाहतेऽत्यर्थं जलं मुंडांश्च पश्यति ॥ ३ ॥ काषायवाससश्चैव क्रव्यादानधिरोहति ॥ अपमूर्धैः शवै रुद्रैः सहैकत्र च तिष्ठति ॥ ४ ॥ व्रजन्नपि तथात्मानं मन्यतेनुगतं परैः ॥ विमना विफलारंभः संसीदत्यनिमित्ततः ॥ ५ ॥ तेनोपसृष्टो लभते न राज्यं राजनंदनः ॥ कुमारी न च भर्तारमपत्यं गर्भिणी तथा ॥ ६ ॥ आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्यापनं तथा ॥ वणिग्लाभं न चाप्नोति न कृषिं च कृषीवलः ॥ ७ ॥ स्नपनं तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकम् ॥ गौरसर्षपकल्केन साज्येनोत्सादितस्य तु ॥ ८ ॥ सुगन्धकुंकुमालिप्तशरीरशिरसस्तथा ॥ भद्रासनोपविष्टस्य स्वस्ति वाच्य द्विजाञ्छुभान् ॥ ९ ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ मृत्तिकां रोचनां गंधान्गुग्गुलं चाप्सु निक्षिपेत् ॥ १० ॥ यदा हृता ह्येकवर्णैर्मनुभिः कलशैर्ह्रदात् ॥ चर्मण्यानडुहे रक्ते स्थाप्य भद्रासनं तथा ॥ ॥११॥ सहस्राक्षं शतधारमृषिणा वचनं कृतम् ॥ ते नत्वामभिषिंचामि पावमान्यः पुनंतु ते ॥१२॥ भगं ते वरुणो राजा भगं सूर्यो बृहस्पति :॥ भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ १३ ॥ यत्ते केशेषु दौर्भाग्यं सीमंते यच्च मूर्द्धनि ॥ ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु ते सदा ॥ १४ ॥ स्नातस्य सार्षपं तैलं स्रुवेणौदुम्बरेण च ॥ जुहुयान्मूर्द्धनि कुशान्सव्येन परिगृह्य च ॥ १५ ॥ मितश्च संमितश्चैव तथा सालकटंकटौ ॥ कूष्मांडो राजपुत्रश्च अंते स्वाहासमन्वितैः ॥ १६ ॥ नामभिर्वलिमंत्रैश्च नमस्कारसमन्वितैः ॥ दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वशः ॥ १७ ॥ कृताकृतांस्तंडुलांश्च पललौदनमेव च ॥ मत्स्यान्पक्कांस्तथैवामान्मांसमेतावदेवतु ॥ १८ ॥ पुष्पं चित्रं सुगन्धं च सुरां च त्रिविधामपि ॥ मूलकं पूरिकापूपं तथैवोंडेरकस्रजम् ॥ १९ ॥ दूर्वां सर्वप्रपुष्पाणां दत्त्वार्घ्यं पूर्णमंडलाम् ॥ विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम् ॥ २० ॥ रूपं देहि यशो देहि भगं भवति देहि मे ॥ पुत्रान्देहि धनं देहि सर्वकामांश्चदेहि मे ॥ २१ ॥ ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः ॥ भोजयेद्ब्राह्मणान्दद्याद्वस्त्रयुग्मं गुरोरपि ॥ २२ ॥ एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ॥ कर्मणां फलमाप्नोति श्रियमाप्नोति चोत्तमाम् ॥ २३ ॥ आदित्यस्य तथा पूजां तिलकं स्वामिनस्तथा ॥ महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ॥ २४ ॥ श्वेतार्कस्य तु यो मूले महागणपतिः कृतः ॥ सर्वलक्षणसंपूर्णः सोऽपि सिद्धिकरः स्मृतः ॥ २५ ॥ संजप्यते शुचौ देशे विघ्नं नात्र हि देहिनः ॥ परमं पूजयेन्नित्यं गन्धमाल्यस्रगादिभिः ॥ २६ ॥ क्षीण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भाग्योऽपि पुरुषः पूजितश्च नरेश्वरः ॥ सर्वसिद्धिमवाप्नोति ज़यी भवति सर्वदा ॥ २७ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्ण
युधिष्ठिरसंवादे गणनाथशांतिवर्णनं नाम चतुश्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४४ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अग्निहोत्रे सुखा
सीनं गर्गः पृच्छति कौशिकम् ॥ बंधने संनिरोधेंग व्याधीनां संप्रपीडने ॥ १ ॥ कथं मोक्षो भवेत्तस्य साध्यासाध्यं ब्रवीहि मे ॥ गर्गेण कौशिकः
पृष्ट इदं वचनमब्रवीत् ॥२॥ आधाने जन्मनक्षत्रे नैधनप्रत्ययेषु च ॥ व्याधिरुत्पद्यते यस्य क्लेशाय मरणाय च ॥३॥ कृत्तिकासु यदा कश्चिद्व्याधिं
संप्रतिपद्यते ॥ नवरात्रं भवेत्पीडा त्रिरात्रं रोहिणीषु च ॥४॥ मृगशीर्षे पञ्चरात्रमार्द्रा प्राणवियोजिनी ॥ पुनर्वसौ च पुष्ये च सप्तरात्रं विधीयते ॥
॥ ५ ॥ नवरात्रं तथाश्लेषा श्मशानांतं मघासु च ॥ द्वौ मासौ फाल्गुनी चैव उत्तरासु त्रिपक्षकम् ॥ ६ ॥ हस्ते च तनु दृश्येत चित्रायां त्वर्द्धमास
कम् ॥७॥ मासद्वयं तथा स्वातौ विशाखा विंशतिर्दिनाः ॥ मैत्रे चैव दशाहं तु ज्येष्ठा चैवार्द्धमासिका ॥८॥ मूलेन जायते मोक्षश्चाषाढासु त्रिपञ्च
कम् ॥ उत्तरादिनविंशत्या द्वौ मासौ श्रवणेन तु ॥ ९ ॥ धनिष्ठायामर्द्धमासं वारुणे तु दशाहकैः ॥ नव भाद्रपदाऋक्ष उत्तरासु त्रिपंचकम् ॥ १० ॥
रेवती दशरात्रं तु अहोरात्रं तथाश्विनी ॥ प्राणैर्वियोजयेन्नित्यं गर्ग नास्त्यत्र संशयः ॥ ११ ॥ कौशिकेन समादिष्टो नक्षत्रव्याधिसंभवः ॥ दैव
ज्ञेनापि ज्ञातव्यं नक्षत्रमथ जन्मना ॥ १२ ॥ क्षीरवृक्षस्य समिधो जुहुयादश्वदैवते ॥ तिलान्मधुप्लुतान्याम्ये यवमेवाग्निदैवते ॥ १३ ॥ प्राजा
पत्ये तु जुहुयाद्वोग्यबीजकरं वकम् ॥ सौम्ये प्रियंगवो रौद्रे सर्प्पिर्मांससमन्वितम् ॥ १४ ॥ आदित्ये च प्रयत्नेन घृताक्ताः सिततंडुलाः ॥
पयसा सर्पिषा साकं बृहस्पत्यधिदैवते ॥ १५ ॥ ग्राम्योपधैर्वटपत्रैः सर्पिः सर्पाधिदैवते ॥ होमः प्रोक्तः प्रियंगूनां नक्षत्रे यामदैवते ॥ १६ ॥ सा
वित्रे दधिहोमोत्र त्वाष्ट्रे चित्रौदनं हविः ॥ १७ ॥ यवान्सहाज्येन हुनेद्रौद्रेऽग्नौ तु पयोदनम् ॥ मैत्रेणाथ तु मंत्रेण मैत्रे कटकमिश्रितम् ॥ १८ ॥
नैर्ऋत्ये तिलहोमः स्यादव्यक्ते च हुताशने ॥ अब्दैवत्ये शालिबीजैर्वैश्वदेवं तु कारयेत् ॥ १९ ॥ रक्ताश्चतंडुलाश्चैव होतव्या विष्णुदैवते ॥ वा
रुणे पारिजातानां पुष्पाणां होम इष्यते ॥ २० ॥ अजैकपादे नक्षत्रे प्राजापत्ये न तत्समम् ॥ आहिर्बुध्न्ये तु नक्षत्रे वैश्वदेवं तु कारयेत् ॥ २१ ॥
रक्ताश्च तण्डुलाश्चैव होतव्या विष्णुदैवते ॥ पौषे फलान्यखंडानि जुहुयादष्टोत्तरं शतम् ॥ २२ ॥ सावित्री होममेकं तु ब्रह्माभिहितवान्पुरा ॥
सर्वज्वरप्रशमनं सद्यो ज्वरहरं परम् ॥ २३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे नक्षत्रहोमविधिवर्णनं नाम पंच
चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४५ ॥ ॥ छ ॥ ॥ श्रीवसिष्ठ उवाच ॥ ॥ अथान्यदपि ते वच्मि व्रतं राजन्महाफलम् ॥ अपराधशतं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येन क्षयं याति शृणुष्व तत् ॥ १ ॥ ॥ इक्ष्वाकुरुवाच ॥ ॥ किं व्रतं तन्ममाचक्ष्व कोऽपराधस्तु तं वद ॥ कः पूज्यते च वै तस्मिन्कदा वा क्रियते नरैः ॥ २ ॥ ॥ श्रीवसिष्ठ उवाच ॥ शृणु राजन्महाबाहो अपराधशतव्रतम् ॥ येनानुष्ठितमात्रेण काममोक्षौ लभेत ना ॥ ३ ॥ प्रायश्चित्तान्यशेषाणि सर्वपापापनुत्तये ॥ कृतान्यप्यकृतानि स्युरिति होवाच पद्मजः ॥ ४ ॥ पापं गुरुतरं चापि दह्यते तूलराशिवत् ॥ अपराधशतं राजञ्छृणुष्व गदतो मम ॥ ५ ॥ न करोति नरो मोहाद्व्रतमेतद्दिने दिने ॥ अनाश्रमित्वं प्रथमोऽनग्निता व्रतहीनता ॥ ६ ॥ अदातृत्वमशौचं च निर्दयत्वं स्पृहालुता ॥ अक्षांतिर्जनपीडा च मायित्वमप्यमंगलम् ॥ ७ ॥ क्षतव्रतत्वं नास्तिक्यं वेदनिंदा कठोरता ॥ असत्यता हिंसकत्वं स्तैन्यमिन्द्रियविप्लवः ॥ ८ ॥ मनसोऽनिग्रहश्चैव क्रोध ईर्ष्याथ मत्सरः ॥ दंभः शाठ्यं च धौर्त्यं च कटुकोक्तिः प्रमादता ॥ ९ ॥ भार्यामातृसुतादीनां त्यागश्चापूज्य पूजनम् ॥ श्राद्धहानिर्जपत्यागः पंचयज्ञविवर्जनम् ॥ १० ॥ संध्यातर्पणहोमानां हानिरग्नेः प्रणाशनम् ॥ अनृतौ मैथुनं पार्थ पर्वण्यपि च मैथुनम् ॥ ११ ॥ पैशुन्यं परदारेषु दानं वेश्याभिगामिता ॥ अपात्रदानं चाल्पं च मूलिकाकुलिभक्षणम् ॥ १२ ॥ अंत्यजागमनं मातृत्यागः पितृविवर्जनम् ॥ पित्रोरभक्तिर्वादश्च पुराणस्मृतिवर्जनम् ॥ १३ ॥ अभक्ष्यभोजनं चापि पतिद्रोहोऽविचारता ॥ कृषिकर्मक्रियावाहं भार्यासंग्रहकारिता ॥ १४ ॥ इंद्रियाजयमायित्वं विद्याविस्मरणं तथा ॥ शास्त्रत्याग ऋणं चित्रकर्म चानंगधावनम् ॥ १५ ॥ भार्यापुत्रसुतादीनां विक्रयः पशुमैथुनम् ॥ इन्धनार्थं द्रुमच्छेदो बिले वार्यादिपूरणम् ॥ १६ ॥ तडागागमने वृत्तं विद्याविक्रयकारिता ॥ वृत्तिलोपो महीपाल याचकत्वं कुमित्रता ॥ १७ ॥ स्त्रीवधो गोवधश्चैव पौरोहित्यं सुहृद्वधः ॥ भ्रूणहत्या परान्नं च शूद्रान्नस्य निषेवणम् ॥ १८ ॥ शूद्रस्य चाग्निकर्मत्वमविधित्वं कुपुत्रता ॥ विद्वद्वचो याचकत्वं हि वाचाटत्वं प्रतिग्रहः ॥ १९ ॥ श्रौतसंस्कारहीनत्वमार्तत्राणविवर्जनम् ॥ ब्रह्महत्यासुरापानं रुक्मस्तैन्यमतः परम् ॥ २० ॥ गुरुदाराभिगामित्वं संयोगश्चापि तैः सह ॥ अपराधशतं त्वेतत्कथितं ते मयानघ ॥ २१ ॥ अन्येऽपि विविधाः संति प्रोक्ताः प्राधान्यतस्त्वमी ॥ यदि वक्त्रसहस्राणि वक्त्रे जिह्वाशतानि च ॥ २२ ॥ तथाप्येते न शक्यंते वक्तुं यस्मादनंतकाः ॥ अपराधसहस्राणि लक्षकोटिशतानि च ॥ २३ ॥ नश्यंति तत्क्षणान्नूनं सत्येशस्यानुपूजनात् ॥ पूज्यते भगवानत्र व्रतकृत्ये पराजिते ॥ २४ ॥ ध्वजे सत्ये स्थितश्चायं लक्ष्म्या सह जगत्पतिः ॥ वामदेवस्ततः पूर्वं नृसिंहो दक्षिणे स्थितः ॥ २५ ॥ कपिलः पश्चिमास्येतु वाराहश्चोत्तरे स्थितः ॥ ऊर्ध्ववक्त्रोऽच्युतो ज्ञेय एतद्वै ब्रह्मपंचकम् ॥ २६ ॥ तं सत्येशं स्थितं राजन्पूजयेच्च सदैव हि ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षीरोदयार्धचन्द्रस्थपद्मकर्णिकसंस्थितम् ॥ २७ ॥ पद्मकौमोदकीशंखचक्रायुधविधारणम् ॥ वामे चाधस्तथा दक्षे ऊर्ध्वे पश्चादधो नृप ॥ २८ ॥ पादाधस्ताद्विनिष्क्रांता गंगा पूता सदा नृभिः ॥ शक्त्यष्टकं तथा चान्यत्तन्नामानि च मे शृणु ॥ २९ ॥ जया च विजया चैव जयंती पापनाशिनी ॥ उन्मीलनी वंजुली च त्रिस्पृशाथ विवर्द्धना ॥३०॥ एताभिः शक्तिभिर्युक्तं लोकदिक्पालवर्जितम् ॥ शुक्लांबरधरं सौम्यं प्रहृष्टवदनं शिवम् ॥ ॥ ३१ ॥ सर्वाभरणशोभाढ्यं भुक्तिमुक्तिप्रदं हरिम् ॥ पूजयेच्च प्रयत्नेन विधिना येन तं शृणु ॥ ३२ ॥ मार्गशीर्षादिमासेषु द्वादशस्वपि सर्वदा ॥ द्वादश्यामप्यमायां वा अष्टम्यां च सितासिते ॥ ३३ ॥ कृतोपवासः शुद्धात्मा कुर्याद्व्रतमतंद्रितः ॥ पक्षयोरुभयोरेवं पूजयेऽहं जनार्दनम् ॥ ३४ ॥ एवं तु नियमं कृत्वा दंतधावनपूर्वकम् ॥ गच्छेत्ततस्तडागे वा पुष्करिण्यां गृहेऽपि वा ॥ ३५ ॥ स्नात्वा तु नैत्यकं कर्म कृत्वा नैमित्तिकं ततः ॥ कुर्यात्सर्वं प्रयत्नेन यथावदनुपूर्वशः ॥ ३६ ॥ सौवर्णं कारयेद्देवं पूर्वोक्तं सत्यरूपिणम् ॥ शक्त्यष्टकयुतं लक्ष्म्या युक्तं पद्मासनस्थया ॥ ३७ ॥ सुवर्णपलमानेन कार्यमेतत्सविस्तरम् ॥ दुग्धकुंभोपरिष्टात्तु स्वर्णपद्मं प्रकल्पयेत् ॥ ३८ ॥ तत्कर्णिकागतं देवं शक्तिवृन्दसमन्वितम् ॥ पूजयेद्विधिवत्पश्चाद्गुरुमंत्रप्रचोदितः ॥ ३९ ॥ शुद्धशुक्लाम्बरधरो मंत्रसंभारसंस्थितः ॥ देवक्षीरसमुद्रेऽस्मिन्वृत्ते चन्द्रे च पुष्करे ॥ तत्र त्वं सत्यया सार्द्धं सत्येश भव सन्निधौ ॥ ४० ॥ ॐ क्षीरसागरकल्लोले त्राहि पापनिषूदन ॥ अनेन भूतभव्येन दत्तेन जलबिन्दुना ॥ ४१ ॥ हरस्व सर्वं दुरितं मम नाथ जनार्दन ॥ वस्त्रदानेन शुभ्रेण सत्येश कुरु मे शुभम् ॥ ४२ ॥ यज्ञे योगे तथा सांख्ये पवित्रस्त्वं सदोच्यसे ॥ यज्ञोपवीतदानेन कुरु मां सर्वपावनम् ॥ ४३ ॥ विलिप्तं कर्मणा सर्वं सत्यं सत्यं न केनचित् ॥ मम चन्दनलिप्तांगः सर्वलेपापहो भव ॥ ४४ ॥ सत्यनाथ नमस्तुभ्यं मूर्तामूर्तस्वरूपिणे ॥ वासुदेव नृसिंहाख्य कपिलादिव्यभूधर ॥ ४५ ॥ वाराहाच्युत यज्ञेश लक्ष्मीकांत नृपेश्वर ॥ पशुं पुत्रं च मे देहि पापशत्रो निरंजन ॥ ४६ ॥ संकर्षण महावीर्य सर्वेशामितविक्रम ॥ अनिरुद्धेन्द्र गोविन्द धृतचक्र नमोऽस्तु ते ॥ ४७ ॥ ( इति पूजामंत्रः ) कृष्णकृष्ण प्रभो रामराम कृष्ण विभो हरे ॥ त्राहि मां सर्वदुःखेभ्यो रमया सह माधव ॥ ४८ ॥ पूजा चेयं मया दत्ता पितामहजगद्गुरो ॥ गृहाण जगदीशान नारायण नमोऽस्तु ते ॥ ४९ ॥ धनं गुप्तं महीपाल सर्वपापापनुत्तये ॥ एकस्यैवतु विप्रस्य यावद्वर्षं समर्पयेत् ॥ ५० ॥ दानं दद्यान्महाराज ह्यशक्तौ तदभावतः ॥ पक्षेपक्षे प्रकर्तव्यं व्रतमेतन्महत्तरम् ॥ ५१ ॥ संवत्सरे ततः पूर्णे कुर्यादुद्यापनं बुधः ॥ पूर्ववत्पूजयेद्देवं बहुसंभारविस्तरैः ॥ ५२ ॥ अनुज्ञां प्रार्थयेद्विप्रान्पापध्वंसो ममास्तु वै ॥ पापध्वंसोऽस्तु सततं तत्रेति च द्विजो वदेत् ॥ ५३ ॥ ततः सर्वं ब्राह्मणाय समर्प्य





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च क्षमापयेत् ॥ अस्मिन्व्रते कृते राजन्भवेद्बहुफलोदयः ॥ ५४ ॥ यत्फलं सर्ववेदेषु सर्वतीर्थेषु यत्फलम् ॥ तत्फलं कोटिगुणितं व्रतस्यास्य निषेवणात् ॥ ५५ ॥ इह लोके धनं धान्यं पुत्रमित्रसुखादिकम् ॥ प्राप्नोति पुरुषः सम्यग्विद्यारोग्यकलायुधम् ॥ ५६ ॥ धर्ममर्थं च कामं च मोक्षं च नृपसत्तम ॥ लभते नात्र संदेहो ब्रह्मणो वचनं यथा ॥ ५७ ॥ यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ॥ यः कुर्यात्पुनरेतद्धि सोऽनन्तफलभाग्भवेत् ॥ ५८ ॥ अशक्तस्तु तथा शक्तो वित्तशाठ्यविवर्जितः ॥ व्रतं कुर्वन्नरो भक्त्या लभते शाश्वतं पदम् ॥ ५९ ॥ कृते वै क्रियमाणे तु कर्ता फलमवाप्नुयात् ॥ अपराधशताघौघं व्रतेनानेन नाशयेत् ॥ ६० ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे अपराधशतव्रतवर्णनं नाम षट्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४६ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ श्वेतद्वीपे सुखासीनं देवदेवं जगत्प्रभुम् ॥ वासुदेवं जगन्नाथं स्थितिसंयमकारकम् ॥ १ ॥ परावराणां स्रष्टारं पुराणं परमव्ययम् ॥ आदिदेवं जगन्नाथं जगतः कारणात्मकम् ॥ २ ॥ प्रणिपत्य महादेवं चराचरगुरुं हरिम् ॥ लक्ष्मीः प्रोवाच राजेन्द्र पादसंवाहने स्थिता ॥ ३ ॥ भगवन्देवदेवेश भक्तानामनुकम्पक ॥ प्रष्टव्यं किंचिदिच्छामि प्रष्टुं प्रश्नविदां वर ॥ ४ ॥ प्रकुरुष्व महाभाग दयां कृत्वा ममोपरि ॥ व्रतं किंचित्कथय मे रूपसौभाग्यदायकम् ॥ ५ ॥ उत्तमं सर्ववर्णानां व्रतानामपि चोत्तमम् ॥ कृतेन येन देवेश सर्वतीर्थफलं भवेत् ॥ ६ ॥ ॥ विष्णुरुवाच ॥ ॥ गृहस्थश्चाश्रमाणां च वर्णानां ब्राह्मणो यथा ॥ यथा नदीषु सर्वासु जाह्नवी लोकविश्रुता ॥ ७ ॥ ह्रदानामुदधिः श्रेष्ठो देवानां विष्णुरुत्तमः ॥ स्त्रीणां देवी यथा लक्ष्मीस्तथेदं व्रतमुत्तमम् ॥ ८ ॥ न गङ्गा न कुरुक्षेत्रं न काशी न च पुष्करम् ॥ पावनानि महाभागे यथेदं व्रतमुत्तमम् ॥ ९ ॥ गौर्या देव्या कृतं पूर्वं शंकरेण महात्मना ॥ रामेण सीतया सार्द्धं राज्यं प्राप्य कृतं पुरा ॥ १० ॥ दमयन्तीवियोगेन नलेन तु तथा कृतम् ॥ कृष्णया सहितैः पार्थ पांडवैर्वनवासिभिः ॥ ११ ॥ कृतमेतद्व्रतं भद्रं स्वर्गमोक्षप्रदायकम् ॥ रंभया मेनया वापि पौलोम्या सत्यभामया ॥ १२ ॥ शांडिल्या चाप्यरुन्धत्या उर्वश्या देवदत्तया ॥ कृतं व्रतमिदं भद्रं सौभाग्यसुखकाम्यया ॥ १३ ॥ पाताले नागकन्याभिः कृतमेतत्सुशोभनम् ॥ गायत्र्या च सरस्वत्या सावित्र्या ब्रह्मभार्यया ॥ १४ ॥ अन्याभिः सर्वनारीभिः सर्वकामफलेप्सुभिः ॥ तस्मात्तेऽहं प्रवक्ष्यामि सर्वपापप्रणाशनम् ॥ १५ ॥ वसुप्रीतिकरं रम्यं व्रतानां परमं शृणु ॥ ब्रह्महा मुच्यते पापात्सुरापो वसुहारकः ॥ १६ ॥ गुरुभार्याभिगामी च ह्येतेषां संगमी च यः ॥ मानकूटं तुलाकूटं कन्यावृत्तिर्गवां व्रती ॥ १७ ॥ अगम्यागमनो यस्तु मांसाशी वृषलीपतिः ॥ कुण्डाग्निभोजी यस्तु स्याद्भिदर्ता तथैव च ॥ १८ ॥ एभिः सर्वैर्म



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हापापैर्मुच्यते नात्र संशयः ॥ एभिः स्यान्नरनारीभिः कर्तव्यं व्रतमुत्तमम् ॥१९॥ अतस्तेऽहं विधिं वक्ष्ये विधानमवधारय ॥ काञ्चनाख्या पुरीनाम व्रतं त्रैलोक्यविश्रुतम् ॥ २० ॥ यः करोति नरो देवि नारी वा भक्तिसंयुता ॥ तस्य पुत्राश्च पौत्राश्च जायते विपुलं धनम् ॥ २१ ॥ तस्मिन्मासे च कर्तव्यं व्रतमेतच्च सुन्दरि ॥ तस्मिन्मासे च कर्तव्या काञ्चनाख्या पुरी शुभा ॥ २२ ॥ शुक्लकृष्णतृतीयायामेकादश्यां च पूर्णिमा ॥ संक्रांतिर्वा महाभागे कुहूर्वा चाष्टमी तिथिः ॥ २३ ॥ पर्वस्वन्येषु सर्वेषु दातव्या काञ्चनी पुरी ॥ व्रती स्नात्वा तु पूर्वाह्णे नद्यादौ विमले जले ॥ २४ ॥ मृत्तिकालंभनं कार्यं मंत्रेणानेन सुव्रते ॥ उद्धृतासि यथापूर्वं विष्णुना क्रोडरूपिणा ॥२५॥ लोकानामुपकारार्थं वन्दनात्सिद्धिकामदा ॥ तस्मात्त्वं वंदिता पापं हर मेऽनेकजन्मजम् ॥ २६ ॥ ( इति मृत्तिकामंत्रः ॥ ) ॥ आपस्तु विश्वयोनिर्हि विष्णुना निर्मिताः स्वयम् ॥ सान्निध्यं तीर्थसहितं कर्तव्यं मम सांप्रतम् ॥ २७ ॥ ( इत्यम्मंत्रः ॥ ) ॥ अनेन विधिना स्नात्वा यजमानः समाहितः ॥ गृहमागम्य शुद्धात्मा नालपन्पिशुनांस्त्वरात् ॥ २८ ॥ पाखंडिनो विकर्मस्थान्धूर्तांश्च कितवाञ्छठान् ॥ प्रक्षाल्य पाणिवदनं कुर्यात्त्वाचमनं ततः ॥ २९ ॥ उपवासस्य नियमं कुर्यान्नक्तस्य वा पुनः ॥ शंखप्रवरमादाय हेमयुक्तं जलैर्भृतम् ॥ ३० ॥ द्वादशाक्षरमंत्रेण तज्जलं चाभिमंत्रयेत् ॥ पिबेत्तोऽयं गृहे गत्वा हरिरित्यक्षरं जपेत् ॥ ३१ ॥ शमीवृक्षमया वेदी चतुःस्तंभसमन्विता ॥ चतुर्हस्तप्रमाणेन कार्य्या चैव सुशोभना ॥ ३२ ॥ वस्त्रेणावेष्टिताः स्तम्भावितानवरमण्डिताः ॥ पुष्पमालान्विताः कार्या दिव्यधूपाधिवासिताः ॥ ३३ ॥ मध्ये तु मंडलं कार्यं पद्माख्यं वर्णकैः शुभैः ॥ येन दृष्टेन देवेशि सर्वपापक्षयो भवेत् ॥ मंडलस्य तु मध्ये वै भद्रपीठं सुशोभनम् ॥ ३४ ॥ आसनं तत्र विन्यस्य कोमलं वस्त्रवेष्टितम् ॥ तस्योपरि न्यसेद्देवं लक्ष्म्या युक्तं जनार्दनम् ॥ ३५ ॥ अग्रे तु कलशः कार्यो जलपूर्णः सुशोभनः ॥ क्षीरसागरनाम्ना स कल्पितव्यः प्रयत्नतः ॥ ३६ ॥ पञ्चरत्नसमायुक्तं वस्त्रेणावेष्टयेद्घनम् ॥ कुम्भं प्रपूर्णमुदकैस्तस्योपरि न्यसेद्बुधः ॥ ३७ ॥ तस्योपरिष्टात्संस्थाप्य कांचनाख्यां पुरीं शुभाम् ॥ चतुष्पला ह्युत्तमा स्याद्द्विपला मध्यमा स्मृता ॥ ३८ ॥ सामान्यैकपला कार्या कलशैस्तु समन्विता ॥ मोदकान्स्थापयेद्दिव्यान्समंतात्सुंदराकृतीन् ॥ ३९ ॥ तदग्रे कदलीस्तम्भैस्तोरणं परिकल्पयेत् ॥ चातुश्चरणिकांस्तत्र विप्रानावाह्य सुंदरि ॥ ४० ॥ प्रतिष्ठां कारयेत्तस्य वेदमन्त्रैः सुशोभनैः ॥ तस्या मध्ये न्यसेद्विष्णुं हैमं लक्ष्म्या समन्वितम् ॥ ४१ ॥ नेत्रे रत्नमये कार्ये दशना वज्रभूषिताः ॥ मुक्ताफलमयं तस्य भूषणं परिकल्पयेत् ॥ ४२ ॥ अंगं स्वर्णमयं कार्यं शंखचक्रगदायुधम् ॥ पञ्चामृतेन देवेशं स्नाप्य नारायणं विभुम् ॥ ४३ ॥ तमेव गंधपुष्पाद्यैर्मंत्रमुच्चार्य पूजयेत् ॥ ब्राह्मणो



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैदिकैर्मन्त्रैः पूजयेन्मधुसूदनम् ॥ ४४ ॥ शेषा वर्णाः पुराणोक्तैस्ताञ्छृणुष्व मम प्रिये ॥ वासुदेवाय पादौ तु गुल्फौ संकर्षणाय च ॥ ४५ ॥ त्रैलोक्यजनकायेति जानुनी पूजयेद्धरेः ॥ त्रैलोक्यनाथाय गुह्ये ज्ञानमयाय वै कटिम् ॥ ४६ ॥ दामोदरायेत्युदरं हृदयं विश्वरूपिणे ॥ नित्यं हि पूजयेद्देवि उरः श्रीवत्सधारिणे ॥ ४७ ॥ कण्ठं कौस्तुभनाथाय आस्यं यज्ञमुखाय च ॥ दैत्यांतकारिणे बाहू स्वैर्नामैरायुधानि च ॥ ४८ ॥ शिरः सर्वात्मने देवि देवदेवस्य पूजयेत् ॥ श्रियं प्रपूजयेद्देवीं देव्या मंत्रैः पृथग्विधैः ॥ ४९ ॥ इन्द्रादिलोकपालानां पूजा कार्या यथाक्रमम् ॥ नवग्रहाणां होमश्च कर्तव्यो विघ्ननाशनः ॥५०॥ पूजा गणपतेः कार्या तथा होमो विधानतः ॥ अग्रे नैवेद्यमतुलं दापयेद्घृतपाचितम् ॥ ५१ ॥ पायसं घृतपूरांश्च मोदकान्पूरिकास्तथा ॥ सोहालिकादिनैवेद्यं फेणिकाः शर्करास्तथा ॥ ५२ ॥ देशकालोद्भवान्येव फलानि विनिवेदयेत् ॥ दीपान्दश दिशो दद्यात्पार्थिवान्रक्तवर्तिकान् ॥५३॥ एतेन तु विशालाक्षि मूलमन्त्रेण दापयेत् ॥ पुष्पमालान्वितान्कृत्वा चंदनेन विभूपितान् ॥५४॥ अभिमंत्र्य प्रयत्नेन विष्णुस्तवकवाचकैः ॥ सहस्रशीर्षादिभिर्मंत्रैर्जपद्भिर्ब्राह्मणोत्तमैः ॥ ५५ ॥ पोडशाथ सपत्नीकान्पूजयेच्च यथाविधि ॥ भूपयेच्च शुभैर्वस्त्रैस्तथालंकारणादिभिः ॥ ५६ ॥ विष्णुं मत्वा द्विजः पूज्यो लक्ष्मीं मत्वा च ब्राह्मणीम् ॥ छत्रं चोपानहौ चैव अंगुल्याभरणं तथा ॥५७॥ फलानि सप्त धान्यानि भोजनं च यदीप्सितम् ॥ दातव्यं च सभार्याय कृष्णो मे प्रीयतामिति ॥ ५८ ॥ शय्यां सोपस्करां चैव वस्त्रेणाच्छाद्य यत्नतः ॥ तथा प्रकल्पयेद्वित्तशक्त्या च सुंदरी यथा ॥ ५९ ॥ व्रते पूर्णे च गौर्देया सर्वोपस्करसंयुता ॥ पुरीं घटापयेत्पूर्वं वस्त्रेणाच्छाद्य यत्नतः ॥ यथा कुर्यात्प्रयासेन यथा कर्ता न पश्यति ॥ ६० ॥ दीपांस्तु दीपितांस्तत्र आनयेद्यज्ञमण्डपम् ॥ श्वेतवस्त्रेण नेत्रे तु यजमानस्य च प्रिये॥६१॥ श्रुतवाञ्छास्त्रवित्प्राज्ञः कृतसर्वाघसंक्षयः ॥ आबध्य नेत्रे सुप्राज्ञ आचार्यस्तमिदं वदेत् ॥६२॥ सर्वकामप्रदां पश्य कांचनाख्यां पुरीमिमाम्॥ वरवस्त्रयुतां रम्यां दुःखदौर्भाग्यनाशिनीम् ॥ ६३ ॥ एवमुक्तो महाभाग पटमुन्मुच्य नेत्रयोः ॥ पुष्पाञ्जलिं गुरौ क्षिप्त्वा स पश्येत्तां पुरीं शुभाम्॥६४॥ दृष्ट्वा तां नगरीं देवि यजमानः समाहितः ॥ सौवर्णं पात्रमादाय रौप्यं ताम्रमथापि वा ॥ ६५ ॥ अथ वा शंखमादाय पात्रालाभे तु सुन्दरि ॥ पञ्चरत्नं क्षिपेत्पात्रे जलं गाङ्गं तथा फलम् ॥ ६६ ॥ सिद्धार्थमक्षताः पूर्वं रोचना दधि वा पुनः ॥ ततश्चार्घ्यं प्रदातव्यं कृष्णाय प्रभविष्णवे ॥ ६७ ॥ लक्ष्मीनारायणौ देवौ सर्वकामफलप्रदौ ॥ रुक्मपुर्याः प्रदानेन यच्छेतां वांछितं मम ॥ ६८ ॥ नारायण हृपीकेश ज्ञानज्ञेय निरंजन॥

---

१ आर्द्रमेतत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्ष्मीकांत जगन्नाथ गृहाणार्घ्यं नमोस्तु ते॥६९॥ (इत्यर्घमंत्रः)॥ एवमर्घ्यं ततो दत्त्वा विष्णवे प्रभविष्णवे॥देव्यास्त्वर्घ्यं प्रदातव्यं भक्तियुक्ते न चेतसा॥७०॥जानुभ्यामवनिं गत्वा मंत्रमेतमुदीरयेत्॥ ब्रह्मणा पूजिता देवी विष्णुना शंकरेण च ॥७१॥ पार्वत्या पूजिता लक्ष्मीः स्कंदवैश्रवणेन च॥मया च पूजिता देवि धर्मस्य विजिगीषया ॥७२॥ सौभाग्यं देहि मे पुत्रान्धनं पौत्रांश्च पूजितान्॥ गृहाणार्घ्यं मया दत्तं देवि सौख्यं प्रयच्छमे ॥७३॥ य एवं पुरतो दत्त्वा पूर्वोक्तविधिना तव॥ रात्रौ जागरणं कुर्याद्भक्तियुक्तेन चेतसा ॥७४॥ गीतनृत्यविनोदेन उपाख्यानैश्चवैष्णवैः॥ येन केन विनोदेन निद्रा नैव प्रजायते ॥७५॥ उन्निद्रो जागृयाद्यस्तु शतयज्ञफलं लभेत्॥ प्रभाते विमले स्नात्वा संपूज्य पितृदेवताः ॥७६॥ ब्राह्मणांश्च सपत्नीकान्परिधाप्यानुभोजयेत्॥ दक्षिणाश्च यथाशक्त्या प्रदाय च क्षमापयेत्॥ ७७ ॥ दीनांधबधिरान्पंगून्सर्वांस्तान्परितोषयेत्॥ पश्चात्पारणकं कार्यमुपवासी भवेद्यदि ॥ ७८ ॥ मधुरं पयसा भुक्तं सुहृद्भिर्बांधवैः सह ॥ एवमेतद्व्रतं कार्यमेकादश्यां शुचिस्मिते ॥ ७९ ॥ शुक्लायामथ कृष्णायां तृतीयायां तथा तिथौ॥संक्रांतिवासरे वापि व्यतीपाते च वैधृतौ ॥८०॥ यदा वा जायते वित्तं चित्तं च वरवर्णिनि ॥ गौरानीय प्रदातव्या कृष्णो मे प्रीयतामिति ॥ ८१ ॥ एवं कृते च यत्पुण्यं तन्न शक्यं निवेदितुम्॥ अपि वर्षसहस्रेण कुललक्षशतैरपि ॥ ८२ ॥ कल्पकोटिसहस्राणि कल्पकोटिशतानि च॥ब्रह्मलोकं समासाद्य ब्रह्मणा प्रतिमोद्यते ॥ ८३ ॥ ब्रह्मलोकाद्रुद्रलोकं तत्परं विष्णुसंनिधौ ॥ इन्द्रादिलोकपालानां व्रती लोकमवाप्नुयात्॥ ८४ ॥ ततो भुक्त्वा शुचिः श्रीमान्भोगांस्त्रैलोक्यसुंदरि ॥ चक्रवर्ती भवेद्भूमौ ब्रह्मण्यो वैष्णवस्तथा ॥८५॥ य इदं शृणुयान्नित्यं वाच्यमानं समंततः ॥ कुलसप्तकमुद्धृत्य वैष्णवं लोकमाप्नुयात्॥८६॥ त्वयाकांचनपुर्याख्यं व्रतमेतत्कृतं पुरा ॥ तेन पुण्येन लब्धोऽहं भर्ता त्रैलोक्यपूजितः ॥ ८७ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीलक्ष्मीविष्णुसंवादे कांचनपुरीव्रतवर्णनं नामसप्तचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४७ ॥ छ ॥ (अथ कन्यादानम्) ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ ब्रह्मदेयां तु यः कन्यामलंकृत्य प्रयच्छति ॥ सप्तपूर्वान्भविष्यांश्च स्वकुले सप्त मानवान्॥१॥ तेन कन्याप्रदानेन स तारयत्यसंशयम्॥ लोकानाप्नोति च तथा दक्षस्यैव प्रजापतेः॥२॥प्राजापत्येन विधिना आत्मानं च समुद्धरेत्॥महत्पुण्यमवाप्नोति स्वर्गलोकं च गच्छति ॥३॥ भूगवाश्वप्रदानानि गजदानं तथैव च॥ दत्त्वा तु वर्णहीनाय घोरे तमसि मज्जति ॥४॥ बहुवर्षसहस्राणि पुरीषं काकमश्नुते॥शुल्केन दत्त्वा कन्यां च घोरं नरकमाप्नुयात् ॥५॥ बहून्यब्दसहस्राणि तथा अशुचिभुङ्नरः॥ सवर्णां च सवर्णेभ्यो दद्यात्कन्यां यथाविधि ॥६॥ दत्त्वा चाधिकवर्णाय द्विगुणं निर्गुणं तथा ॥ द्विजपुत्रमनाथं वा संस्कुर्याद्यश्च कर्मभिः ॥७॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चूडोपनयाद्येश्च सोऽश्वमेधफलं लभेत् ॥ अनाथां कन्यकां दत्त्वा नाकलोके महीयते ॥ ८ ॥ कन्यया सह दत्तं च सुवर्णं वह्निमूलकम् ॥ सकलं द्विगुणं तस्य फलमुक्तं पुरातनैः ॥ ९ ॥ कन्यादानादवाप्नोति दक्षलोकं नरोत्तम ॥ विष्णुपूजासमं पुण्यं तत्कन्यापूजया भवेत् ॥ १० ॥ विमानमारुह्य मनोभिरामं सुराङ्गनागीतविलासहृद्यम् ॥ प्राप्नोति लोकं त्रिदशोत्तमानां कन्याप्रदानान्न विचारणेति ॥ ११ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कन्याप्रदानवर्णनं नामाष्टचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४८ ॥ ॥ छ ॥ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ ब्राह्मणा दैवतं भूमौ ब्राह्मणा दिवि दैवतम् ॥ ब्राह्मणेभ्यः परं नास्ति नास्ति भूतं जगत्त्रये ॥ १ ॥ अदेवं दैवतं कुर्युः कुर्युर्दैवमदैवतम् ॥ ब्राह्मणा हि महाभागाः पूज्यंते सततं द्विजाः ॥२॥ ब्राह्मणेभ्यः समुत्पन्ना देवाः पूर्वमिति स्मृतिः ॥ ब्राह्मणेभ्यो जगत्सर्वं तस्मात्पूज्यतमा द्विजाः ॥ ३ ॥ येषामश्नंति वक्त्रेण देवताः पितरस्तथा ॥ ऋषयश्च तथा नागाः किं भूतमधिकंततः ॥ ४ ॥ यदेव मनुजो भक्त्या ब्राह्मणेभ्यः प्रयच्छति ॥ तदेवाप्नोति धर्मज्ञ बहुजन्मनि जन्मनि ॥ ५ ॥ तालवृंतानिलेनैव श्रांतसंवाहनेन च ॥ उत्सादनेन गात्राणां तथा व्यंजनकर्मणा ॥ ६ ॥ पादशौचप्रदानेन पादयोः सेचनेन च ॥ परिचर्यं यथा काममेकेनैव द्विजोत्तम ॥ ७ ॥ अनिच्छापि समाप्नोति स्वर्गलोकं च शाश्वतम् ॥ ब्राह्मणानां शुभं कृत्वा नाकलोके महीयते ॥ ८ ॥ यद्ब्राह्मणास्तुष्टिमन्तो वदंति प्रत्यक्षदेवेषु परोक्षदेवाः ॥ तद्वै शुभं तस्य नरस्य नूनं भवेदतस्तान्सततं निषेवेत् ॥ ९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे ब्राह्मणशुश्रूषाविधिवर्णनं नामैकोनपचाशदुत्तरशततमोऽध्यायः ॥ १४९ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ युष्मद्वाक्यामृतमिदं ह्यहंशृण्वञ्जनार्दन ॥ न तृप्तिमधिगच्छामि जातं कौतूहलं हि मे ॥ १ ॥ गोपतिः किल गोविन्दस्त्रिषु लोकेषु विश्रुतः ॥ गोवृषस्य प्रदानेन त्रैलोक्यमभिनंदति ॥ २ ॥ तस्माद्गोवृषकल्पस्य विधानं कथयाच्युत ॥ ३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ वृषदानफलं पुण्यं शृणुष्व कथयामि ते ॥ पवित्रं पावनं चैव सर्वदानोत्तमं तथा ॥ ४ ॥ दशधेनुसमोनड्वानेकश्चैव धुरंधरः ॥ दशधेनुप्रदानाद्धि स एवैको विशिष्यते ॥ ५ ॥ वोढा च चारुपृष्ठांगो ह्यरोगः पांडुनंदन ॥ युवा भद्रः सुशीलश्च सर्वदोषविवर्जितः ॥ ६ ॥ धुरंधरः स्थापयते एक एव कुलं महत् ॥ त्राता भवति संसारान्नात्र कार्या विचारणा ॥ ७ ॥ अलंकृत्य वृषं शांतं पुण्येह्नि समुपस्थिते ॥ रौप्यलाङ्गूलसंयुक्तं ब्राह्मणाय निवेदयेत् ॥ ८ ॥ मंत्रेणानेन राजेन्द्र तं शृणुष्व वदामि ते ॥ धर्मस्त्वं वृषरूपेण जगदानंदकारक ॥ ९ ॥ अष्टमूर्तेरधिष्ठानमतः पाहि सनातन ॥ दत्त्वैवं दक्षिणायुक्तं प्रणिपत्य विसर्जयेत् ॥ १० ॥ सप्तजन्मकृतं पापं वाङ्मनः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कायकर्मजम् ॥ तत्सर्वं विलयं याति गोदानसुकृतेन च ॥ ११ ॥ यानं वृषभसंयुक्तं दीप्यमानं सुशोभितम् ॥ आरुह्य कामगं दिव्यं स्वर्लोक मधिरोहति ॥ १२ ॥ यावंति तस्य रोमाणि गोवृषस्य महीपते ॥ तावद्वर्षसहस्राणि गवां लोके महीयते ॥ १३ ॥ गोलोकादवतीर्णस्तु इहलोके द्विजोत्तमः ॥ यज्ञयाजी महातेजाः सर्वब्राह्मणपूजितः ॥ १४ ॥ तवोक्तं वै महाराज कस्य देयो वृषोत्तमः ॥ तदप्यहं ते वक्ष्यामि पात्रं त्राणपदं नृणाम् ॥ १५ ॥ येषां सदा वै श्रुतिपूर्णकर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः ॥ प्रतिग्रहे संकुचिता गृहस्थास्ते ब्राह्मणास्तारयितुं समर्थाः ॥१६॥ गात्रे दृढं भारसहं सुपुष्टं सुशृङ्गिणं सर्वगुणोपपन्नम् ॥ दत्त्वर्षभं गोदशकेन तुल्यं सत्यं भवंति भुवि तत्फलभागिनस्ते ॥ १७ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादेवृषदानविधिवर्णनं नाम पंचाशदुत्तरशततमोऽध्यायः ॥ १५० ॥ ॥ छ ॥ ॥ ( अथ विविधदानानि ) ॥ ॥ युधिष्ठिर उवाच ॥ ॥ श्रुतः पुराणविषयस्त्वत्प्रसादान्मयाच्युत ॥ संसारासारतां ज्ञात्वा श्रुतश्च व्रतविस्तरः ॥ १ ॥ भूयश्च श्रोतुमिच्छामि दानमाहात्म्यमुत्तमम् ॥ किं दीयते कदा कृष्ण केनोपायेन शंस मे ॥ २ ॥ नहि दानात्परतरमन्यदस्तीति मे मतिः ॥ धनं धनवतां किञ्चिदहार्यं राजतस्करैः ॥ ३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अनिश्चितं निधानं यदप्रयुक्तं च वर्द्धते ॥ अनीतं याति चाध्वानं धनं विप्रकरार्पितम् ॥ ४ ॥ किं कायेन सुपुष्टेन बलिना चिरजीविना ॥ यन्नसत्त्वोपकाराय तज्जीवितमनर्थकम् ॥ ५ ॥ ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किंन दीयते ॥ इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥ ६ ॥ एकस्मिन्नप्यतिक्रांते दिने दानविवर्जिते ॥ दस्युभिर्मुषितश्चैव दिवारात्रौ च शोचति ॥ ७ ॥ यस्य त्रिवर्गशून्यानि दिनान्यायांति यांति च ॥ सलोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ८ ॥ येन दत्तं न च हुतं न तीर्थे मरणं कृतम् ॥ हिरण्यमन्नमुदकं ब्राह्मणेभ्यो न चार्पितम् ॥ ९ ॥ दीना निरशना रूक्षाः कपालाङ्कितपाणयः ॥ ते दृश्यंते महाराज जायमानाः पुनः पुनः ॥ १० ॥ आयासशतलब्धस्य प्राणेभ्योपि गरीयसः ॥ गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ ११ ॥ नोपभोगैः क्षयं यांति न प्रदानैः समृद्धयः ॥ पूर्वार्जितानामन्यत्र सुकृतानां परिक्षयात् ॥ १२ ॥ अदृष्टपरतत्त्वोपि पात्रेभ्यो विसृजेद्धनम् ॥ यस्मान्मृतस्य तन्नास्ति तस्मात्सांशयिकं वरम् ॥ १३ ॥ दानानि बहुरूपाणि कथयामि तवानघ ॥ व्यासवाल्मीकिमन्वाद्यैः कथितानि पुरा मम ॥ १४ ॥ किञ्चिद्व्रतं यत्क्रियते पूज्यते च त्रिलोचनः ॥ दीयते यच्च विप्रेभ्य एतज्जन्मतरोः फलम् ॥ १५ ॥ ॥ युधिष्ठिर उवाच ॥ ॥

१ युक्तमाक्रन्दितुं चिरम्–इ० पा० । २ त्रिवर्गशून्यस्य–इ० पा० । ३ धनस्योत्पत्तिकरणे–इ० पा० । ४ दानमेव प्रकर्तव्यम्–इ० पा० । ५ हुतम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्राह्मणप्रीणनार्थाय केशवस्य शिवस्य च ॥ यानि दानानि देयानि तान्याचक्ष्व यदूत्तम ॥१६॥ येन चैव विधानेन दानं पुण्यसुखावहम् ॥ ऐहि कामुष्मिकावाप्तिं करोति नहि हन्यते ॥ १७ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ॥ आसप्तमं पुनंत्येते दोहवाहनवेदनैः ॥ १८ ॥ गोदानमादौ वक्ष्यामि प्रत्यक्षक्रमयोगतः ॥ येनै चैव विधानेन अन्यूनाधिकविस्तरम् ॥ १९ ॥ ॥ युधिष्ठिर उवाच ॥ देयाः किंलक्षणा गावः काश्च राजन्विवर्जिताः ॥ कीदृशाय प्रदातव्या न देयाः कीदृशाय वै ॥२०॥ ॥ श्रीकृष्ण उवाच ॥ ॥ तरुणी रूपसंपन्ना सुशीला च पयस्विनी ॥ न्यायार्जिता सवत्सा च प्रदेया श्रोत्रियाय गौः ॥ २१ ॥ वृद्धा सरोगा हीनांगी वंध्या दुष्टा मृतप्रजा ॥ दूरस्थाऽन्यायलब्धा च देया गौर्न कथंचन ॥ २२ ॥ सा दत्तैव हरेत्पापं श्रोत्रियायाहिताग्नये ॥ अतिथिप्रियाय दांताय धेनुं दद्याद्गुणाधिके ॥२३॥ अकुलीनाय मूर्खाय लुब्धाय पिशुनाय च ॥ हव्यकव्यव्यपेताय न देया गौः कथंचन ॥ २४ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पुण्यं दिनमथासाद्य स्नात्वातर्प्य पितॄंस्तथा ॥ घृतक्षीराभिषेकं च कृत्वा विष्णोः शिवस्य च ॥ २५ ॥ समभ्यर्च्य यथान्यायं पुष्पादिभिरनुक्रमात् ॥ उदङ्मुखीं प्राङ्मुखीं वा गृष्टिं कृत्वा पयस्विनीम् ॥ २६ ॥ सवत्सां वस्त्रसंवीतां सितयज्ञोपवीतिनीम् ॥ स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहनकान्विताम् ॥ २७ ॥ शक्तितो दक्षिणायुक्तां ब्राह्मणाय निवेदयेत् ॥ पुच्छे कृष्णाजिनं देयं गां पुच्छे करिणं करे ॥ २८ ॥ अश्वं सदा सुकर्गे वा दासीं शिरसि दापयेत् ॥ गावो ममाग्रतः संतु गावो मे संतु पृष्ठतः ॥ २९ ॥ गावो मे हृदये संतु गवां मध्ये वसाम्यहम् ॥ प्रदक्षिणां ततः कृत्वा धेनुं द्विजवराय ताम् ॥ ३० ॥ इमां च प्रतिगृह्णीष्व धेनुर्दत्ता मया तव ॥ एवमुच्चार्य तं विप्रं देवेशं परिकल्पयेत् ॥ ३१ ॥ अनुव्रजेच्च गच्छंतं पदान्यष्टौ नराधिप ॥ अनेन विधिना धेनुं यो विप्राय प्रयच्छति ॥ ३२ ॥ सर्वकामसमृद्धात्मा स्वर्गलोकं स गच्छति ॥ सप्त पूर्वान्सप्त परानात्मानं चैव मानवः ॥३३॥ सप्त जन्मकृतात्पापान्मोचयत्यवनीपते॥पदे पदेऽश्वमेधस्य गोशतस्य च मानवः ॥३४॥ फलमाप्नोति राजेन्द्र दक्षायैवं जगौ हरिः ॥ सर्वकामप्रदा सा स्यात्सर्वकालेषु पार्थिव ॥३५॥ भवत्यसौ पापहरा यावदिंद्राश्चतुर्दश ॥ सर्वेषामेव पापानां कृतानामपि जानता ॥३६॥ प्रायश्चित्तमिदं प्रोक्तमनुतापोपबृंहितम् ॥ सर्वेषामेव दानानामेकंजन्मानुगं फलम् ॥ ३७ ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः ॥ लोकाः कामगमाः प्राप्ता दत्त्वैतद्विधिना नृप ॥ ३८ ॥ गोभ्योधिकं जगति नापरमस्तिकिञ्चिद्दानं पवित्रमिति शास्त्रविदो वदंति ॥ तत्संपदः सुरसदश्च

१ पुंसः–इ० पा० । २ तेन–इ० पा० । ३ अग्रे गच्छेन गच्छन्तम्–इ० पा० । ४ जन्म चतुर्दश–इ० पा० । ५ देवानामेतज्जन्मांतरं फलम्–इ० पा० । ६ कामदुघाः–इ० पा० । ७ पुण्यम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समीहमानैर्देयाः सदैव विधिना द्विजपुंगवाय ॥ ३९ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे प्रत्यक्षधेनुदानव्रतविधिवर्णनं नामैकपंचाशदुत्तरशततमोऽध्यायः ॥ १५१ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथातः संप्रवक्ष्यामि धेनूनां कल्पना नृप ॥ विशेषविधिना याश्च देयाः कामानभीप्सुभिः ॥ १ ॥ कामं यद्दीयते दानं समग्रं तत्सुखावहम् ॥ असमग्रं तु दोषाय भवतीह परत्र च ॥ २ ॥ तस्मान्न दक्षिणाहीनं विधानविकलं तथा ॥ देयं दानं महाराज समग्रफलकाम्यया ॥ ३ ॥ अन्यथा दीयमानं तदहंकाराय केवलम् ॥ प्रत्यक्षं चार्थहानिः स्यान्न वा तत्फलदं भवेत् ॥ ४ ॥ तिलधेनुं प्रवक्ष्यामि शृणु पार्थिवसत्तम ॥ वाराहेण पुरा प्रोक्तां महापातकनाशिनीम् ॥ ५ ॥ यां दत्त्वा ब्रह्महा गोघ्नः पितृहा गुरुतल्पगः ॥ अगारदाही गरदः सर्वपापरतोपि वा ॥ ६ ॥ महापातकयुक्तश्च संयुक्तश्चोपपातकैः ॥ मुच्यते ह्यखिलैः पापैः स्वर्गलोकं च गच्छति ॥ ७ ॥ अनुलिप्ते महीपृष्ठे कृष्णाजिनसमावृते ॥ धेनुं तिलमयीं कृत्वा दर्भानास्तीर्य सर्वतः ॥ ८ ॥ तिलाः श्वेतास्तिलाः कृष्णास्तिला गोमूत्रवर्णकाः ॥ तिलानां च विचित्राणां धेनुं सर्वां च कारयेत् ॥ ९ ॥ द्रोणस्य वत्सकं कुर्याच्चतुराढकिकां च गाम् ॥ स्वर्णशृंगीं रौप्यखुरां गन्धवर्णवतीं तथा ॥ १० ॥ कार्या शर्करया जिह्वा गुडेनास्यं च कम्बलः ॥ इक्षुपादां ताम्रपृष्ठीं शुक्तिमुक्ताफलेक्षणाम् ॥ ११ ॥ प्रशस्तपत्रश्रवणां फलदंतवतीं शुभाम् ॥ स्रग्दामपुच्छां कुर्वीत नवनीतस्तनान्विताम् ॥ १२ ॥ सितवस्त्रशिरालम्बां सितसर्षपरोमिकाम् ॥ फलैर्मनोहरैरन्यैर्मणिमुक्ताफलान्विताम् ॥ १३ ॥ ईदृक्संस्थानसम्पन्नां कृत्वा श्रद्धासमन्वितः ॥ कांस्योपदोहनां दद्यात्पर्वकाले समागते ॥ १४ ॥ या लक्ष्मीः सर्वभूतानां या वै देवेष्ववस्थिता ॥ धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ १५ ॥ ततः प्रदक्षिणां कृत्वा पूजयित्वा प्रणम्य च ॥ सदक्षिणा मया तुभ्यं दत्तेत्युक्त्वा विसर्जयेत् ॥ १६ ॥ अनेन विधिना दत्त्वा तिलधेनुं नराधिप ॥ सर्वपापविनिर्मुक्तो परं ब्रह्माधिगच्छति ॥ १७ ॥ यश्च गृह्णाति विधिवद्दीयमानां प्रमोदते ॥ दीयमानां प्रशंसंति ये च संहृष्टमानसाः ॥ १८ ॥ तेपि दोषविनिर्मुक्ता ब्रह्मलोकं व्रजंति ते ॥ प्रशांताय सुशीलाय वेदव्रतरताय च ॥ १९ ॥ धेनुं तिलमयीं दत्त्वा न शोचति कृताकृते ॥ त्रिरात्रं यस्तिलाहारस्तिलधेनुप्रदो भवेत् ॥ २० ॥ एकाहमथ वा राजन्न युंच्छेदन्तरात्मना ॥ दानाद्विशुद्धिः

१ सर्वपापकरोऽपि वा–इ० पा० । २ सः–इ० पा० । ३ वस्त्राजिनसमावृते–इ० पा० । ४ गोमूत्रसंभवाः–इ० पा० । ५ शुचिमुक्ताफलेक्षणाम्–इ० पा० । ६ पर्वकालं समीक्ष्य च–इ० पा० । ७ अशोपशोकनिर्मुक्ताः प्रयान्ति परमां गतिम्–इ० पा० । ८ वेदव्रतधराय च–इ० पा० । ९ न युच्छेन्न प्रमाद्येदित्यर्थः । 'युच्छ' प्रमादे धातुः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पापस्य तस्य पुण्यवतो नृप ॥ २१ ॥ चान्द्रायणादभ्यधिकं कथितं तिलभक्षणम् ॥ बालत्वे चैव यत्पापं यौवने वार्द्धके तथा ॥ २२ ॥ वाचा कृतं तु मनसा कर्मणा यच्च संचितम् ॥ उदकष्ठीवने चैव नग्नस्नानेन यद्भवेत् ॥ २३ ॥ मुशलेनोद्यते नापि लंबिते ब्राह्मणे तथा ॥ वृषलीगमने चैव गुरुदाराभिगामिनि ॥ २४ ॥ सुरापानेन यत्पापमभक्ष्यस्य च भक्षणात् ॥ तत्सर्वं विलयं याति तिलधेनुप्रदायिनाम् ॥ २५ ॥ यममार्गे महाघोरे नदी वैतरणी स्मृता ॥ वालुकायाः स्थलं चैव पच्यंते यत्र पापिनः ॥ २६ ॥ यत्र लोहमुखाः काका यत्र श्वानो भयावहाः ॥ निकृत्य पापिनां मांसं भक्षयंति बुभुक्षिताः ॥ २७ ॥ असिपत्रवनं चैव लोहकंटकशाल्मलीम् ॥ एतान्सर्वानतिक्रम्य ततो यमपुरं व्रजेत् ॥ २८ ॥ विमाने कांचने दिव्ये मणिरत्नविभूषिते ॥ तत्रारुह्य नरश्रेष्ठो गच्छते परमाङ्गतिम् ॥ २९ ॥ गुणहीने न दातव्या न दातव्या धनेश्वरे ॥ कुण्डे गोले च लुब्धे च न च देया कदापि सा ॥ ३० ॥ एका एकस्य दातव्या मुनिभिः कथितं पुरा ॥ अरण्ये नैमिषे पार्थ नारदेन निवेदितम् ॥ ३१ ॥ तत्तेहं संप्रवक्ष्यामि सम्यक्फलसहस्रदम् ॥ इदं पुण्यं पवित्रं च माङ्गल्यं कीर्तिवर्धनम् ॥ ३२ ॥ विप्राणां श्रावयेच्छ्राद्धे अनन्तफलमश्नुते ॥ बहुभ्यो न प्रदेयानि गोर्गृहं शयनं स्त्रियः ॥ ३३ ॥ विभज्यमानान्येतानि दातारं पातयंत्यधः ॥ सा तु विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥ ३४ ॥ अस्या दानप्रभावेन विमानं सर्वकामिकम् ॥ समारुह्य नरो याति यत्र देवो हरिः स्वयम् ॥ ३५ ॥ एषा चैव प्रदातव्या प्रयतेनान्तरात्मना ॥ पौर्णमास्यां च माघस्य कार्तिक्यां चैव भारत ॥ ३६ ॥ चन्द्रसूर्योपरागे तु विषुवे अयने तथा ॥ षडशीतिमुखे चैव व्यतीपाते तु सर्वदा ॥ ३७ ॥ वैशाख्यां मार्गशीर्ष्यां वा गजच्छायासु चैव हि ॥ एषा ते कथिता पार्थ तिलधेनुर्मयानघ ॥ ३८ ॥ यावंति धेनो रोमणि गात्रेषु नृपपुङ्गव ॥ तावद्वर्षसहस्राणि तदा स्वर्गे महीयते ॥ ३९ ॥ यश्च गृह्णाति विधिवद्दीयमानां च पश्यति ॥ अनुमोदयते चैव ते सर्वे स्वर्गगामिनः ॥ ४० ॥ धेनुं धनाधिपतयो मगधोद्भवेन मानेन ये तिलमयीं चतुराढकेन ॥ कृत्वा यथोक्तरचनां कृतचारुवत्सां यच्छंति ते भुवि भवंति विमुक्तपापाः ॥४१॥ प्रतिगृह्णामि देवि त्वां कुटुंबभरणाय च ॥ कामं देया दयास्मभ्यं धेनो त्वं सर्वदा ह्यसि ॥ ४२ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे तिलधेनुदानव्रतविधिवर्णनं नाम द्विपंचाशदुत्तरशततमोऽध्यायः ॥ १५२ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया ॥ देवदेवो हृषीकेशः पूजितः सर्वभावनः ॥ १ ॥ जलकुंभं नरव्याघ्र स्थापयित्वा सुपूजितम् ॥ रत्नगर्भं तु तं कृत्वा ग्राम्यैर्धान्यै समन्वि

१ सर्वदाः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तम् ॥ २ ॥ सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम् ॥ कुंष्ठमांसीपुरोशीरवालकामलकीयुतम्¹ ॥ ३ ॥ प्रियङ्गुपत्रसहितं सितयज्ञोपवीतिनम् ॥ सोपानत्कं च सच्छत्रं दर्भविष्टरसंस्थितम् ॥ ४ ॥ चतुर्भिः संयुतं रौप्यं तिलपात्रैश्चतुर्दिशम् ॥ स्थगितं दधिपात्रेण घृतक्षौद्रवता मुखम् ॥ ॥ ५ ॥ सवत्सां च प्रतिष्ठाप्य गोमयेनोपशोभिताम् ॥ स्रग्दामपुच्छीं कुर्वीत ताम्रदोहनकान्विताम् ॥ ६ ॥ ततः समभ्यर्च्य विभुं वासुदेवं सनातनम् ॥ पुष्पधूपोपहारैश्च यथाविभवमात्मनः ॥ ७ ॥ संकल्प्य जलधेनुं च कुंभं तमभिमंत्र्य च ॥ विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ॥ सोमशक्रार्कशक्तिर्या धेनुरूपेण सास्तु मे ॥ ८ ॥ एवमामंत्र्य विधिवत्सफलां वत्सकान्विताम् ॥ भक्त्या संपूज्य गोविंदं जलशायिनमच्युतम् ॥ ९ ॥ सितवस्त्रधरः²शांतो वीतरागो विमत्सरः ॥ दद्याद्विप्राय राजेन्द्र प्रीत्यर्थं जलशायिनः ॥ १० ॥ शेषपर्यंकशयनः श्रीमाञ्छार्ङ्गविभूषितः ॥ जलशायी जगद्योनिः प्रीयतां मम केशवः ॥ ११ ॥ इत्युच्चार्य जगन्नाथं विप्राय प्रतिपाद्य ताम् ॥ तद्दिनं गोव्रतस्तिष्ठेच्छ्रद्धया परया युतः ॥ १२ ॥ अनेन विधिना दत्त्वा जलधेनुं जनाधिप ॥ सर्वभोगानवाप्नोति ये दिव्या ये च मानुषाः ॥ १३ ॥ शरीरारोग्यमतुलं प्रशमः सर्वकालिकः ॥ नृणां भवंति दत्तायां सर्वे कामा न संशयः ॥ १४ ॥ अत्रापि श्रूयते भूप मुद्गलेन महात्मना ॥ जातिस्मरेण यद्गीतमिहाभ्येत्य पुराकिल ॥ १५ ॥ स मुद्गलः पुरा विप्रो यमलोकगतो मुनिः ॥ ददर्श यातनानेकाः पापकर्मकृतां नृणाम् ॥ १६ ॥ दीप्ताग्नितीक्ष्णयन्त्रस्थाः क्वाथतैलमयास्तथा ॥ उष्णक्षारनदीपाता भैरवाः पुरुषर्षभ ॥ १७ ॥ व्रणक्षारनिपातोथ कुम्भीपाकमहालयाः ॥ ता दृष्ट्वा यातना विप्रश्चकार परमां कृपाम् ॥ १८ ॥ आह्लादं ते तदा जग्मुः पापास्तदनुकंपया ॥ तं दृष्ट्वा नारकाः केचित्स्थित्वा तदवलोकिनः ॥ १९ ॥ तदवस्थं विलोक्याथ मुनिर्नारकमण्डलम् ॥ धर्मराजं स पप्रच्छ तेषां प्रशमकारणम् ॥ २० ॥ तस्मै चाचष्ट राजेन्द्र तदा वैवस्वतो यमः ॥ आह्लादहेतुमधिकं नारकाणां नरोत्तम ॥ २१ ॥ दानानुभावात्सर्वेषां नारकाणां द्विजोत्तम ॥ संप्रवृत्तोऽयमाह्लादः कारणं तच्छृणुष्व मे ॥ २२ ॥ त्वयाभ्यर्च्य जगन्नाथं सर्वेशं जलशायिनम् ॥ जलधेनुः पुरा दत्ता विधिवद्द्विजपुङ्गव ॥ २३ ॥ तस्मात्वज्जन्मनोऽतीते तृतीये द्विजजन्मनि ॥ तस्य दानस्य ते व्युष्टिरियमाह्लाददायिनी³ ॥ २४ ॥ ये त्वां पश्यंति शृण्वंति ये च ध्यायंति मानवाः ॥ शृणोषि यांश्च विप्रेन्द्र यांश्च ध्यायसि पश्यसि ॥२५॥ निवृत्तिः परमा तेषां सर्वाह्लादप्रदायिनी ॥ सद्यो भवति माऽत्र त्वं द्विजाते कुरु विस्मयम् ॥ २६ ॥ आह्लादहेतुजननं

१ कुष्ठमांसीपुरोशीरनालकंबिल्वसंयुतम्—इ० पा० । २ सितवस्त्रेण संवीतो वीतरागः—इ०, सितवस्त्रेण संवीतम्—इ० पा० । ३ व्युष्टिः फलमित्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नास्तिविप्रेन्द्र तादृशम् ॥ जलधेनुर्यथा नृणां जन्मान्येकोनविंशतिम् ॥२७॥ न दोषो न ज्वरो नार्तिर्न क्लमो द्विज जायते ॥ अपि जन्मसहस्रेऽपि जलधेनुप्रदायिनाम् ॥ २८ ॥ स त्वं गच्छ गृहीत्वार्धमस्मतो द्विजसत्तम ॥ येषां समाश्रयः कृष्णे न नियम्या हि ते मया ॥ २९ ॥ कृष्णस्तु पूजितो यैस्तु ये कृष्णार्थमुपोषिताः ॥ यैश्च नित्यं स्मृतः कृष्णो न ते मद्विषयोपगाः ॥ ३० ॥ नमः कृष्णाच्युतानंत वासुदेवेत्युदीरितम् ॥ यैर्भावभावितैर्विप्र न ते मद्विषयोपगाः ॥३१॥ दानं ददद्भिर्यैरुक्तमच्युतः प्रीयतामिति ॥ श्रद्धापुरःसरैर्विप्र न ते मद्विषयोपगाः ॥ ३२ ॥ स एव नाथः सर्वस्य तन्नियोगकरा वयम् ॥ जनसंयमनश्चाहमस्मत्संयमनो हरिः ॥ ३३ ॥ इत्थं निशम्य वचनं यमस्य वदतोऽखिलम् ॥ ऊचुस्ते नारकाः सर्वे वह्निशस्त्रार्कभीरवः ॥३४॥ नमः कृष्णाय हरये विष्णवे जिष्णवे नमः ॥ हृषीकेशाय केशाय जगद्धात्रेऽच्युताय च ॥ ३५ ॥ नमः पङ्कजनेत्राय नमः पङ्कजनाभये ॥ जनार्दनाय श्रीशाय श्रीभर्त्रे पीतवाससे ॥ ३६ ॥ गोविंदाय नमो नित्यं नमश्चोदधिशायिने ॥ नमः कमलनेत्राय नृसिंहाय निनादिने ॥ ३७ ॥ शार्ङ्गिणे शितखड्गाय शंखचक्रगदाभृते ॥ नमो वामनरूपाय क्रांतलोकत्रयाय च ॥ ३८ ॥ वराहरूपाय तथा नमो यज्ञाङ्गधारिणे ॥ व्याप्ताशेषदिगंतायानंताय परमात्मने ॥३९॥ वासुदेव नमस्तुभ्यं नमः कैटभसूदिने ॥ केशवाय नमो राम नमस्तेस्तु महीधर ॥४०॥ नमोऽस्तु वासुदेवाय ह्येवमुच्चारिते च तैः ॥ शस्त्राणि कुंठतां जग्मुरनलश्चापि शीतताम् ॥ ४१ ॥ समभज्यंत वस्त्राणि समुत्पेतुरयोमुखाः ॥ संशुष्काः क्षारसरितः पतितः शाल्मलिद्रुमः ॥ ४२ ॥ प्रकाशस्तमसो जज्ञे नरकाद्भ्रातृभिः सह ॥ ववौ च युंजन्पवनोऽप्यसिपत्रवने ततः ॥ ४३ ॥ निरुत्साहा जडधियो बभूवुर्यमकिंकराः ॥ जातागङ्गाम्बुवाहिन्यःपूयशोणितनिम्नगाः ॥४४॥ दिव्यः सुगंधिः पवनो मनःप्रीतिकरस्तथा ॥ वेणुवीणास्वनयुताः शब्दाश्चान्समनोरमाः ॥ ४५ ॥ तं तादृशमथालक्ष्य तदा वैवस्वतो यमः ॥ क्षीणपापत्रयांस्तांस्तु पाद्यार्घ्यैः समपूजयत् ॥ ४६ ॥ पूजयित्वा च तानाह कृष्णाय स कृतांजलिः ॥ समाहितमतिर्भूत्वा धर्मराजो नरेश्वर ॥ ४७ ॥ विष्णो देव जगद्धातर्जनार्दन जगत्पते ॥ प्रणामं येऽपि कुर्वन्ति तेषामपि नमोनमः ॥ ४८ ॥ अच्युतायाप्रमेयाय मायावामनरूपिणे ॥ प्रणामं येऽपि कुर्वन्ति तेषामपि नमो नमः ॥ ४९ ॥ नमस्ते वासुदेवाय धीमते पुण्यकीर्तये ॥ प्रणामं ये च कुर्वंति तेषामपि नमो नमः ॥ ५० ॥ तस्य यज्ञवराहस्य विष्णोरमिततेजसः ॥ ५१ ॥ एवं स्तुत्वा हृषीकेशं धर्मराजस्य पश्यतः ॥ विमानवरमारुह्य नारकास्त्रिदिवं ययुः ॥ ५२ ॥ मुद्गलोऽपि महाबुद्धिर्दृष्ट्वैतदखिलं नृप ॥ जातिस्मरो

१ यैः कृष्णार्थमुपोषितम्–इ० पा०। २ यस्तु–इ० पा०। ३ उदकशायिने–इ० पा०। ४ शांताय–इ० पा०। ५ व्याप्तिनमस्तेऽस्तु महीभृते–इ० पा०। ६ शीतलः–इ० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवद्विप्रः कण्वगोत्रे महामुनिः ॥५३॥ संस्मृत्य यमवाक्यानि विष्णोर्माहात्म्यमेव च॥जलधेनोस्तु माहात्म्यं संस्मृत्येदमगायत ॥५४॥ अहोसुदुस्तरा विष्णोर्मायेयमतिगह्वरी ॥ यया मोहितचित्तस्तु न वेत्ति परमेश्वरम् ॥५५॥ जीवो गच्छति कीटत्वं यूकामत्कुणयोनिताम् ॥ तस्माद्द्रुमलतादीनां योनिं तस्माच्च पक्षिणाम् ॥ ५६ ॥ ततश्च पशुतां प्राप्य नरत्वमभिवांछति ॥ ततो मनुष्यतां प्राप्य नरो योनिं कृतात्मनाम् ॥ तां प्राप्य च श्रियं परां नरो मायाविमोहितः ॥५७॥ दुस्तरापि सुसाध्या सा माया कृष्णस्य मोहिनी ॥ विद्यते सा मनोन्यस्ता मुधैव मधुसूदने ॥५८॥ अवाप्यैवं च गार्हस्थ्यमवाप्यैवं च तत्परम् ॥ छिनत्ति वैष्णवीं मायां केशवार्पितमानसः ॥ ५९ ॥ अविरोधेन विषयान्भुञ्जन्विष्णुं समाश्रयेत् ॥ मुक्त्वा नरस्तरत्येनां विष्णोर्मायां सुदुस्तराम् ॥ ६० ॥ ईदृग्बहुफला भक्तिः सर्वधातरि केशवे ॥ मायया तस्य देवस्य तां न कुर्वंति मोहिताः ॥ ॥ ६१ ॥ मुधैवोक्तं सुधापानं मुधा तद्धि विचेष्टितम् ॥ मुधैव जन्म तन्नष्टं यत्र नाराधितो हरिः ॥ ६२ ॥ आराधितो हि यः पुंसामैहिकामुष्मिकं फलम् ॥ ददाति भगवान्देवः कस्तं न प्रतिपूजयेत् ॥ ६३ ॥ संवत्सरास्तथा मासा विफला दिवसाश्च ते ॥ नराणां विषयांधानां यैस्तु नाराधितो हरिः ॥ ६४ ॥ यो न वित्तर्द्धिविभवैर्न वासोभिर्न भूषणैः ॥ तुष्यते हृदयेनैव कस्तमीशं न पूजयेत् ॥ ६५ ॥ जलधेनोस्तु माहात्म्यं निशम्येदृग्विधं नराः ॥ नात्र यच्छंति तेषां वै विवेकः कुत्र तिष्ठति ॥ ६६ ॥ कर्मभूमौ हि मानुष्यं जन्मनामयुतैरपि ॥ स्वर्गापवर्गफलदं कदाचित्प्राप्यते नरैः ॥ ६७ ॥ संप्राप्य च न यैर्विष्णुस्तोषितो जलधेनुना ॥ ते जना भ्रष्टजन्मानो वंचितास्तस्य मायया ॥ ६८ ॥ ऊर्ध्वबाहुर्विरौम्येष दृष्टलोकद्वयोऽस्मि भोः ॥ आराधयध्वं गोविन्दं जलधेनुं प्रयच्छत ॥ ६९ ॥ दुःसहो नारको वह्निरविषह्या च यातना ॥ ज्ञातं मयैतदालंब्य कृष्णं भवति निश्चलः ॥ ७० ॥ आदेशिको देशिको हि यममार्गे सुदुस्तरे ॥ विचिन्त्य तत्सत्यमेतन्मनः कृष्णे निवेश्यताम् ॥ ७१ ॥ इष्टेन किं क्रतुशतेन सुदुष्करेण क्लेशाधिकेन सुकृतैर्नियमैर्व्रतैश्च ॥ दत्ता द्विजाय पितृराजगृहं गतस्य ह्येकाऽपि गौर्जलमयी सुखमातनोति ॥७२॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे जलधेनुदानव्रतविधिवर्णनं नाम त्रिपंचाशदुत्तरशततमोऽध्यायः ॥ १५३ ॥ छ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ घृतधेनुं प्रवक्ष्यामि तां शृणुष्व नरोत्तम ॥ दीयते येन विधिना यादृग्रूपां च कारयेत् ॥ १ ॥ गव्यस्य सर्पिषः कुम्भान्गंधमाल्यविभूषितान् ॥ कांस्योपदोहसंयुक्तान्सितवस्त्रावगुण्ठितान् ॥ २ ॥ इक्षुयष्टिमयाः पादाः खुरा रौप्यमयास्तथा ॥ सौवर्णे चाक्षिणी कार्ये

१ तत्रैव—इ० पा० । २ गव्यस्य सर्पिषः कुम्भं गन्धमाल्यविभूषितम् । कांस्योपधानसंयुक्तं सितवस्त्रावगुंठितम्—इ० पा० । ३ कुर्यात्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शृंगे चागुरुकाष्ठके ॥ ३ ॥ सप्तधान्यमये पार्श्वे पटोर्णेन च कम्बलम् ॥ कुर्यात्तुरुष्ककर्पूरैर्घ्राणं फलमयान्स्तनान् ॥ ४ ॥ तद्वच्छर्करया जिह्वां गुडक्षीरमयं सुखम् ॥ क्षौमसूत्रेण लांगूलं रोमाणि सितसर्षपैः ॥ ५ ॥ ताम्रपात्रमयं पृष्ठं कुर्याच्छ्रद्धासमन्वितः ॥ ईदृग्रूपां तु संकल्प्य घृतधेनुं नराधिप ॥ ६ ॥ तद्वत्कल्पनया धेनोर्वत्सं च परिकल्पयेत् ॥ मंत्रेणानेन राजेन्द्र तां समभ्यर्च्य बुद्धिमान् ॥ ७ ॥ आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम् ॥ आज्यं सुराणामाहारः सर्वमाज्ये प्रतिष्ठितम् ॥ ८ ॥ त्वं चैवाज्यमयी देवि कल्पितासि मया किल ॥ सर्वपापापनोदाय सुखाय भव भामिनि ॥ ९ ॥ तं च विप्रं महाभाग मनसैव घृतार्चिषा ॥ कल्पयित्वा ततस्तस्मै प्रयतः प्रतिपादयेत् ॥ १० ॥ दक्षिणासहिता धेनुः कल्पिताज्यमयी शुभा ॥ एतां ममोपकाराय गृहाण त्वं द्विजोत्तम ॥११॥ इत्युदाहृत्य विप्राय तां गां तु प्रतिपादयेत् ॥ दत्त्वैकरात्रं स्थित्वा च घृताहारो यतव्रतः ॥ १२ ॥ अनेन च विधानेन[1] नवनीतमयी शुभा ॥ दातव्या नृपते धेनुर्न्यूनाधिकविवर्जिता[2] ॥ १३ ॥ शृणु पार्थ महाबाहो[3] प्रदानफलमुत्तमम् ॥ घृतक्षीरमहानद्यो यत्र पायसकर्दमाः ॥ १४ ॥ घृतधेनुप्रदा यांति तत्र कामैः सुपूरिताः[4] ॥ पितुरूर्ध्वं च ये सप्त पुरुषास्तस्य येऽप्यधः ॥ १५ ॥ तांस्तेषु नृप लोकेषु स नयत्यस्तकल्मषान्[5] ॥ सकामानामियं व्युष्टिः कथिता नृपसत्तम ॥ १६ ॥ निष्किल्बिषं पदं यांति निष्कामा घृतधेनुदाः ॥ घृतमग्निर्घृतं सोमस्तन्मयाः सर्वदेवताः ॥ १७ ॥ घृतं प्रयच्छतां भीता भवंत्यखिलदेवताः ॥ १८ ॥ मायाजलं सुतकलत्रमहोर्मिमालं लोभोग्रनक्रविषमं बहुपुण्यभाजः ॥ लग्ना निमग्नवपुषो घृतधेनुपुच्छे संसारसागरमपारमहो तरंति ॥ १९ ॥ ॥ इति श्रीभविष्ये महापुराणे उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे घृतधेनुदानव्रतविधिवर्णनं नाम चतुष्पंचाशदुत्तरशततमोऽध्यायः ॥ १५४ ॥ ॥ छ ॥ ॥ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कृष्णकृष्ण महाबाहो सर्वशास्त्रविशारद ॥ कथयस्वेह दानानामुत्तमं यत्प्रकीर्तितम् ॥ १ ॥ येन दत्तेन दानानि सर्वाण्येव भवंत्युत ॥ सर्वकामसमृद्धिश्च सर्वपापक्षयो भवेत् ॥ २ ॥ प्रायश्चित्तविशुद्धिश्च तन्मे कथय सुव्रत ॥ श्रीकृष्ण उवाच ॥ शृणु राजन्प्रवक्ष्यामि दानानामुत्तमोत्तमम् ॥ ३ ॥ ख्यातं लवणधेन्वाख्यं सर्वकामप्रदं नृणाम् ॥ यां दत्त्वा ब्रह्महा गोघ्नः पितृहा गुरुतल्पगः ॥ ॥ ४ ॥ विश्वासघाती क्रूरात्मा सर्वपापरतोऽपि वा ॥ मुच्यते नात्र संदेहः शिवलोकं स गच्छति ॥ ५ ॥ सुभगो धनसंपन्नो दीर्घायुरपराजितः ॥ जायते पुरुषो लोके सर्वकामसमन्वितः ॥ ६ ॥ विधिं वक्ष्यामि राजेन्द्र लवणस्येह कल्पनम् ॥ गोमयेनोपलिप्तेन दर्भसंस्तरसंस्थितम् ॥ ७ ॥

१ शुभे–इ० पा० । २ अतुल्यऽधिकवर्जिताम्–इ० पा० । ३ महाभाग–इ० पा० । ४ प्रपूजिताः–इ०, प्रपूरिताः–इ० च पा० । ५ अपकल्मषम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आविकं चर्म विन्यस्य पूर्वाशाभिमुखं स्थितम् ॥ वस्त्रेणाच्छादितं कृत्वा धेनुं कुर्वीत बुद्धिमान् ॥ ८ ॥ आढकेनैव कुर्वीत बहुवित्तोऽल्पवित्त वान् ॥ स्वर्णशृङ्गीं रौप्यखुरामिक्षुपादां फलस्तनीम्[1] ॥ ९ ॥ कार्या शर्करया जिह्वा गन्धघ्राणवती तथा ॥ समुद्रोदरजे शुक्ती कर्णौ तस्याः प्रकल्प येत् ॥ १० ॥ कंबलं पट्टसूत्रेण ग्रीवायां घण्टिकां तथा ॥ शृंगे चन्दनकाष्ठाभ्यां मौक्तिके चाक्षिणी उभे ॥ ११ ॥ कपोलौ सक्तुपिण्डाभ्यां यवा नास्ये प्रदापयेत् ॥ तिलान्पार्श्वे प्रकुर्वीत गोधूमाश्चैव भक्तितः ॥१२॥ एवं वै सप्तधान्यानि यथालाभं प्रकल्पयेत् ॥ पृष्ठे वै ताम्रपात्रं तु अपाने गुड पिंडिकाम् ॥१३॥ लांगूले कंबलं दद्याद्द्राक्षां[2] क्षीरप्रदेशतः ॥ योनिप्रदेशे च मधु सर्ववस्तुफलान्वितम् ॥१४॥ एवं सम्यक्परिस्थाप्य रसरस्यमयीं च गाम् ॥ स्थापयेद्वत्समेकं च चतुर्भागेन मानवः ॥ १५ ॥ एवं धेनुं समभ्यर्च्य माल्यवस्त्रविभूषणैः ॥ स्नात्वा देवार्चनं कृत्वा ब्राह्मणानभिपूज्य च ॥ कृत्वा प्रदक्षिणां गां तु पुत्रभार्यासमन्वितः ॥ १६ ॥ ब्राह्मणाय सुशीलाय वृत्तयुक्ताय वै नृप ॥ दद्यात्पर्वसु सर्वेषु मन्त्रपूर्वं सुभक्तितः॥१७॥ लवणे वै रसाः सर्वे लवणे सर्वदेवताः ॥ सर्वदेवमये देवि लवणाख्ये नमोऽस्तु ते ॥ १८ ॥ एवमुच्चार्य मंत्रां ते विप्राय प्रतिपादयेत् ॥ सम्यक्प्रद क्षिणां कृत्वा दक्षिणासहितां नृप ॥ १९ ॥ प्रदक्षिणा मही तेन कृता भवति भारत ॥ सर्वदानानि दत्तानि सर्वक्रतुफलानि च ॥ २० ॥ सर्वे रसाः सर्वमन्न सर्वं च सचराचरम् ॥ सौभाग्यं परमाबुद्धिरारोग्यं सर्वसंपदः ॥ २१ ॥ भवति दत्त्वा नृणां तु रसधेनुं न संशयः ॥ स्वर्गे च नियता वासो यावदाभूतसंप्लवम् ॥ २२ ॥ पर्णोर्णकंबलगलां लवणाढकेन कृत्वा फलस्तनवतीमपि लावणाख्याम् ॥ दत्त्वा द्विजाय विधिवद्रसधेनुमेनां लोकं गवां सकलसौख्ययुतो विशेत्सः ॥ २३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे लवणधेनुदानव्रतविधिवर्णनं नाम पंचपंचाशदुत्तरशततमोऽध्यायः ॥ १५५ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अतः परं प्रवक्ष्यामि राजन्काञ्चनधेनुकाम् ॥ यां दत्त्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ १ ॥ सुरापो ब्रह्महा गोघ्नो भीरुर्भग्नव्रतोऽपि वा ॥ गुरुघाती स्वसृगामी परदाररतश्च यः ॥ २ ॥ मुच्यते पातकैः सर्वैर्दत्त्वा काञ्चनधेनुकाम् ॥ संशुद्धस्य सुवर्णस्य पंचाशत्पलिकां शुभाम् ॥ ३ ॥ अर्द्धेन[3] वा प्रकुर्वीत शक्त्या वा नृपसत्तम ॥ उखां पश्चि मभागे तु दृष्टकुक्षिपयोधराम् ॥ ४ ॥ विभक्ताङ्गीं सुजघनां सुमनोहरकर्णिकाम् ॥ सर्वरत्नविचित्राङ्गीं कारयेत्कपिलां शुभाम् ॥ ५ ॥ चतुर्थेन तु भागेन वत्सं तस्याः प्रकल्पयेत् ॥ रौप्यघंटां च दत्त्वा तु कौशेयपरिवारिताम् ॥ ६ ॥ ताम्रशृंगीं तथा कुर्याद्वैडूर्यमयकंबलाम् ॥ मुक्ताफलमये

१ घृतस्तनीम्–इ० पा० । २ रसं क्षारप्रदेशतः–इ० पा० । ३ तदर्धेन–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection, Digitized by eGangotri

नेत्रे वैद्रुमी रसना तथा ॥ ७ ॥ कृष्णाजिने गुडप्रस्थं तत्रस्थां कारयेच्छुभाम् ॥ कुंभाष्टकसमोपेतां नाना फलसमन्विताम् ॥ ८ ॥ तथाष्टादश धान्यातपत्रोपानद्युगान्विताम् ॥ भाजनं वसनं चैव ताम्रदोहनकं तथा ॥ ९ ॥ दीपकान्नादिलवणशर्कराधान्यकान्विताम् ॥ प्रदद्याद्ब्राह्मणं पूज्य वस्त्राभरणैः शुभैः ॥ १० ॥ स्नातः प्रदक्षिणीकृत्य धेनुं सर्वाङ्गसंयुताम् ॥ गुडधेनूक्तमंत्रैश्च आवाह्य प्रतिपूज्य च ॥ ११ ॥ त्वं[1] सर्वदेवगणमन्दिरभूषणासि विश्वेश्वरत्रिपथगोदधिपर्वतानाम् ॥ श्रद्धाम्बुतीक्ष्णशकलीकृतपातकौघः प्राप्नोति निर्वृतिमतीव परां नमामि ॥१२॥ लोके यथेप्सितफलार्थविधायिनीं त्वामासाद्य को हि भयभाग्यवतीह मर्त्यः ॥ संसारदुःखशमनाय यतस्त्वकामास्त्वां कामधेनुमिति वेदविदो वदंति ॥ १३ ॥ एवमामन्त्र्य तां धेनुं विप्राय प्रतिपादयेत् ॥ सदक्षिणोपस्करां च प्रणिपत्य क्षमापयेत् ॥ १४ ॥ दानकाले तु ये देवास्ती र्थानि मनवस्तथा ॥ शरीरे निवसंत्यस्यास्ताञ्छृणुष्व नराधिप ॥ १५ ॥ नेत्रयोः सूर्यशशिनौ जिह्वायां तु सरस्वती ॥ दंतेषु मरुतो देवाः कर्णयोश्च तथाश्विनौ ॥ १६ ॥ शृंगाग्रगौ सदा चास्या देवौ रुद्रपितामहौ ॥ गंधर्वाप्सरसश्चैव ककुद्देशं प्रतिष्ठिताः ॥ कुक्षौ समुद्राश्च त्वागे योनौ त्रिपथगामिनी ॥ १७ ॥ ऋषयो रोमकूपेषु अपाने वसुधा स्थिता ॥ अन्त्रेषु नागा विज्ञेयाः पर्वताश्चास्थिषु[2] स्थिताः ॥ ॥ १८ ॥ धर्मकामार्थ मोक्षास्तु पादेषु परिसंस्थिताः ॥ हुंकारे च चतुर्वेदाः कंठे रुद्राः प्रतिष्ठिताः ॥ १९ ॥ पृष्ठभागे स्थितो मेरुर्विष्णुः सर्वशरीरगः ॥ एवं सर्वमयी देवी पावनी विश्वरूपिणी ॥ २० ॥ काञ्चनेन कृता धेनुः सर्वदेवमयी स्मृता ॥ यो दद्या त्तादृशीं धेनुं सर्वदानप्रदो हि सः ॥ २१ ॥ कर्मभूमौ हि मर्त्यानां दानमेतत्सुदुर्लभम् ॥ तस्माद्देयमिदं शक्त्या सर्वकल्मषनाशनम् ॥२२॥ पावनं तारणं चैव कीर्तिदं शांतिदं तथा ॥ वर्षकोटिशतं साग्रं स्वर्गलोके गतोनरः ॥ २३ ॥ नारी वा पूज्यते देवैर्विमानवरमास्थिता ॥ गंधर्वैर्गीयमान स्तु पुष्पैर्मालाविभूषितैः ॥ २४ ॥ सर्वाभरणसंपन्नः सर्वद्वंद्वविवर्जितः ॥ स्वर्गे स्थित्वा चिरं कालं ततो मर्त्येभिजायते ॥ २५ ॥ आधि व्याधि विनिर्मुक्तो रूपवान्प्रियदर्शनः ॥ एवं नरो वा नारी वा दत्त्वा दानमिदं भुवि ॥ सर्वान्कामानवाप्नोति जायमानः पुनः पुनः ॥ २६ ॥ आमन्त्र्य

१ त्वं सर्वदेवगणमन्दिरभूषणा–इ०, त्वं सर्वदेवगणमन्दिरशोभितासि–इ० च पा०। २ अस्थिसंधिषु–इ० पा०। ३ पुच्छे कद्रो व्यवस्थितः–इ० पा०। ४ विश्वधारिणी–इ० पा०। ५ भक्त्या–इ० पा०।
६ सर्वसंधिविवर्जितः–इ० पा०। 'नाना गन्धक आमोदे त्वं गंधवाससौः' इति विदलः।

CC-0. Mumukshu Bhawan Varaṇasi Collection. Digitized by eGangotri

साधुकुलशीलगुणान्विताय विप्राय यः कनकधेनुमिमां प्रदद्यात् ॥ प्राप्नोति सिद्धमुनिकिन्नरदेवजुष्टं कन्याशतैः परिवृतं पदमिन्दुमौलेः ॥२७॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे सुवर्णधेनुदानव्रतविधिवर्णनं नाम षट्पंचाशदुत्तरशततमोऽध्यायः ॥ १५६ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथातः संप्रवक्ष्यामि दानमन्यत्सुदुर्लभम् ॥ रत्नधेन्विति विख्यातं गोलोकफलदं नृणाम् ॥ १ ॥ पुण्यं दिनमथासाद्य गोमयेनोपलेपनम् ॥ कृत्वा भूमौ महाराज तत्र धेनुं प्रकल्पयेत् ॥ २ ॥ धेनुं रत्नमयीं कुर्यात्तत्तत्संकल्पपूर्विकाम् ॥ स्थापयेत्पद्मरागाणामेकाशीतिं मुखे बुधः ॥ ३ ॥ पुष्परागशतं धेनोः पादयोः परिकल्पयेत् ॥ ललाटे हेमतिलकं मुक्ताफलशतं दृशोः ॥ ४ ॥ भ्रूयुगे विद्रुमशतं शुक्ती कर्णद्वये स्मृते ॥ काञ्चनानि च शृङ्गाणि शिरोवज्रशतात्मकम् ॥ ५ ॥ ग्रीवायां नेत्रपुटके गोमेदकशतं तथा ॥ इन्द्रनीलशतं पृष्ठे वैदूर्यशतं पार्श्वके ॥ ६ ॥ स्फाटिकैरुदरं कार्यं सौगन्धिकशतं कटौ ॥ खुरा हेममयाः कार्याः पुच्छं मुक्तावलीमयम् ॥ ७ ॥ सूर्यकान्तेन्दुकान्तौ च घ्राणे कर्पूरचन्दनैः ॥ कुंकुमेन च रोमाणि रौप्यं नाभिं च कारयेत् ॥ ८ ॥ गारुत्मतशतं तद्वदपाने परिकल्पयेत् ॥ तथान्यानि च रत्नानि स्थापयेत्सर्वसंधिषु ॥ ९ ॥ कुर्याच्छर्करया जिह्वां गोमयं च गुडात्मकम् ॥ गोमूत्रमाज्येन तथा दधिदुग्धस्वरूपतः ॥ १० ॥ पुच्छाग्रे चामरं दद्यात्स्तनयोस्ताम्रदोहनम् ॥ कारयेदेवमेवं तु चतुर्थांशेन वत्सकम् ॥ ११ ॥ नानाफलानि पार्श्वेषु कृत्वा पूजां प्रयत्नतः ॥ गुडधेनुवदावाह्य इदं चोदाहरेत्ततः ॥ १२ ॥ त्वां सर्वदेवगणवासमिति स्तुवंति रुद्रेन्द्रचन्द्रकमलासनवासुदेवाः[१] ॥ तस्मात्समस्तभुवनत्रयदेहयुक्ता मां पाहि देवि भवसागरमग्नमाशु[२] ॥ १३ ॥ एवमामन्त्र्य तां धेनुं विप्राय प्रतिपादयेत् ॥ संपूज्य वस्त्राभरणैर्विधिज्ञं वेदपारगम् ॥ १४ ॥ ततश्च दक्षिणां दत्त्वा प्रणिपत्य क्षमापयेत् ॥ एवं यः कुरुते पार्थ तस्य पुण्यफलं शृणु ॥ १५ ॥ कल्पकोटिशतं साग्रं शिवलोके सुखं वसेत्[३] ॥ ततः काले बहुतिथे राजराजो भवेदिह ॥ १६ ॥ सर्वकामसमृद्धश्च शत्रुपक्षक्षयंकरः ॥ १७ ॥ इति सकलविधिज्ञो रत्नधेनुप्रदानं वितरति स विमानं प्राप्य देदीप्यमानम् ॥ सकलकलुषमुक्तो बंधुभिः पुत्रपौत्रैः स हि मदनसरूपः स्थानमभ्येति शंभोः ॥ १८ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे रत्नधेनुदानव्रतविधि वर्णनं नाम सप्तपंचाशदुत्तरशततमोऽध्यायः ॥ १५७ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ प्रसूयमाना दातव्या धेनुर्ब्राह्मणपुङ्गवे ॥ विधिना केन धर्मज्ञ[४] दाने तस्याश्च किं फलम् ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ प्रसूयमानातिपुण्यैः प्राप्यते गौर्नृपोत्तम ॥ प्राप्तु

१ त्वां सर्वदेवगणधामनिधिं विरिंचिरुद्रेन्द्रविष्णुकमलासनवासुदेवाः—इ० पा० । २ भवसागरपीड्यमानम्—इ० पा० । ३ सुखी भवेत्—इ० पा० । ४ कर्मज्ञ—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वंति नराः केचित्पुण्यसंभारविस्तराः ॥ २ ॥ यावत्पादौ योनिगतौ शिरश्चैव प्रदृश्यते ॥ तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुंचति ॥ ३ ॥
गौर्यावद्द्विमुखी चैव यदा भवति भारत ॥ तदासौ पृथिवी ज्ञेया सशैलवनकानना ॥ ४ ॥ दत्त्वोभयमुखीं राजन्यत्पुण्यं प्राप्यते नृभिः ॥ न तद्व
र्णयितुं याति मुखेनैकेन केनचित् ॥ ५ ॥ किमिष्टैर्बहुभिर्यज्ञैर्दानैर्दत्तैश्च सत्तम ॥ प्रसूयमानां गामेकां देहि किं बहुना तव ॥ ६ ॥ एकैव पाति
नरकात्सुखमेकैव कारयेत् ॥ एकापि द्विमुखी दत्ता गौर्गौर्भवति भारत ॥ ७ ॥ स्वर्णशृंगीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम्[1] ॥ कांस्योपदोहनां
राजन्नलंकृत्य द्विजोत्तमे ॥ प्रसूयमानां गां दत्त्वा महत्पुण्यफलं लभेत् ॥ ८ ॥ यावंति धेनुरोमाणि वत्सस्यापि नराधिप ॥ तावद्वर्षसहस्राणि
स्वर्गलोके महीयते ॥ ९ ॥ पितॄन्पितामहांश्चैव तथैव प्रपितामहान् ॥ समुद्धरत्यसंदिग्धं नरकाद्भूरिदक्षिणः ॥ १० ॥ घृतक्षीरवहा नद्यो
दधिपायसकर्दमाः ॥ तत्र ते यांति यत्रास्ति द्रुमश्चेप्सितकामदः ॥ ११ ॥ यो ददाति सुवर्णेन बहुना सह भाविनीम् ॥ गोलोकः सुलभस्तस्य
ब्रह्मलोकश्च पार्थिव ॥ १२ ॥ न देया दुर्बला राजन्धेनुर्नैवाल्पदक्षिणा ॥ काम्योऽयं विधिरुद्दिष्टः फलदो विधिना कृतः ॥ १३ ॥
स्त्रियश्च तं चंद्रसमानवक्त्राः प्रतप्तजांबूनदतुल्यवर्णाः ॥ महानितंबास्तनुवृत्तमध्याः सेवंत्यजस्रं नलिनाभनेत्राः ॥ १४ ॥ इति श्रीभविष्ये
महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवाद उभयमुखीगोदानव्रतविधिवर्णनं नामाष्टपंचाशदुत्तरशततमोऽध्यायः ॥ १५८ ॥ ॥ छ ॥ ॥
॥ ॥ युधिष्ठिर उवाच ॥ ॥ गोसहस्रविधानं च कथयस्व जनार्दन ॥ कस्मिन्काले प्रदातव्यं कथं देयं च तद्भवेत् ॥ १ ॥ ॥ श्रीकृष्ण
उवाच ॥ ॥ गावः पवित्रा लोकानां गाव एव परायणम् ॥ ब्रह्मणा सृजता लोकान्वृत्तिहेतोः प्रजेश्वर ॥ गावः प्रथमतः सृष्टास्त्रैलोक्य
हितकाम्यया ॥ २ ॥ यासां मूत्रपुरीषेण देवतायतनान्यपि ॥ शुचीनि समजायंत किंभूतमधिकं ततः ॥ ३ ॥ मूलं यज्ञस्य काम्य
स्य सर्वदेवमयाः शुभाः ॥ गोमये वसते लक्ष्मीः पर्याप्तं तन्निदर्शनम् ॥ ४ ॥ ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् ॥ एकत्र
मंत्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति ॥ ५ ॥ यासां पुत्रैर्धृता लोका धारिताः सर्वदेवताः ॥ तासां दानविधानं च शृणु तत्पृथिवीपते ॥ ६ ॥
एकाऽपि गौर्गुणोपेता कृत्स्नं तारयते कुलम् ॥ सुरूपा शीलसंपन्ना युवतिः सुपयस्विनी ॥ ७ ॥ सुवत्सा सुदुहा चैव पापरोगविवर्जिता ॥ विधि
वत्तादृशा दत्ता कृत्स्नं तारयते कुलम् ॥ ८ ॥ किं पुनर्दश यो दद्याच्छतं वा विधिपूर्वकम् ॥ सहस्रं तु पुनर्दद्यात्तस्य वै किमिहोच्यते ॥ ९ ॥

१ रत्नलांगूलभूषिताम् इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोसहस्रं पुरा दत्तं नहुषेण महीभृता ॥ स गतो ब्रह्मणः स्थानं ययातिश्च महामतिः ॥ १० ॥ गंगातीरे महद्दत्तमदित्या पुत्रकाम्यया ॥ लेभे पुत्रं त्रिलोकेशं नारायणमकल्मषम् ॥ ११ ॥ श्रूयंते पितृभिर्गीता गाथास्ताः शृणु भूपते ॥ १२ ॥ यदि कश्चित्कुलेऽस्माकं गोसहस्रं प्रदापयेत् ॥ यास्यामः परमां सिद्धिं कारितां पुण्यकर्मणा ॥ १३ ॥ दुहिता वा कुले काचिद्गोसहस्रप्रदायिनी ॥ सोपानः सुगतिर्दत्तो भविष्यति न संशयः ॥ ॥ १४ ॥ अतः परं प्रवक्ष्यामि यज्ञं वै सर्वकामिकम् ॥ गोसहस्रं तदा दद्याच्छास्त्रोक्तविधिवन्नरः ॥ १५ ॥ तीर्थे गोष्ठे गृहे वापि मंडपं कारयेच्छुभम् ॥ दशद्वादशहस्तं वा चतुर्वक्त्रं सतोरणम् ॥ १६ ॥ तन्मध्ये कारयेद्वेदिं चतुर्हस्तामनूपमाम् ॥ हस्तमात्रप्रमाणेन हस्तेन समलंकृताम् ॥१७॥ पूर्वोत्तरेऽथदिग्भागे ग्रहवेदिं प्रकल्पयेत् ॥ ग्रहयज्ञविधानेन ग्रहांस्तत्र क्रमाद्यजेत् ॥ १८ ॥ ब्रह्मा विष्णुश्च रुद्रश्च पूज्याः प्रथममेव हि ॥ ऋत्विजः परिकर्तव्या षोडशाष्टौ च शोभनाः ॥ १९ ॥ चत्वारो वा महाराज उपाध्यायश्च पंचमः ॥ सर्वाभरणसंपन्नाः कर्णवेष्टांगुलीयकैः ॥ २० ॥ शोभिताश्छत्रसंपन्नास्ताम्रपात्रद्वयान्विताः ॥ ग्रहयज्ञोक्तविधिना होमं हव्यं समाचरेत् ॥ २१ ॥ वेद्याः पूर्वोत्तरे भागे शिवकुंडं नियोजयेत् ॥ कुंभद्वयं च द्वारेषु पंचरत्नं सपल्लवम् ॥ २२ ॥ कार्यं कुरुकुलश्रेष्ठ ततो होमं समारभेत् ॥ लोकपालबलिं दद्यात्तुलापुरुषदानवत् ॥ २३ ॥ गोसहस्राद्विनिष्कृष्य सवत्सं दशकं गवाम् ॥ गोसहस्राद्बहिष्कुर्याद्वस्त्रमाल्यविभूषणम् ॥ अंतः प्रवेश्य दशकं वस्त्रैर्माल्यैश्च पूजयेत् ॥ २४ ॥ सुवर्णघंटिकायुक्तं ताम्रदोहनकान्वितम् ॥ सुवर्णतिलकोपेतं खुरै रौप्यैरलंकृतैः ॥ हेमरत्नमयैः शृंगैश्चामरैश्चोपशोभितम् ॥ २५ ॥ मुनयः केचिदिच्छन्ति कांचनं नंदिकेश्वरम् ॥ लवणद्रोणशिखरे भक्त्या तमपि कारयेत् ॥ २६ ॥ एका प्रत्यक्षऋषभे केषांचिद्दानमिष्यते ॥ ग्रहान्सुरांश्च संपूज्य माल्यवस्त्रफलाक्षतैः ॥ २७ ॥ पताकाभिरलंकृत्य देवतायतनानि च ॥ गोशतेऽपि दशांशेन सर्वमेतत्प्रकल्पयेत् ॥ २८ ॥ यदि सर्वा न विद्यन्ते गावः सर्वगुणोत्तमाः॥ दशकं पूज्य यत्नेन इतरः परिकल्पयेत् ॥ २९ ॥ पुष्पकालमथो वाद्यगीतमंगलनिस्वनैः ॥ सर्वौषध्युदकस्नातः स्नापितो द्विजपुंगवैः ॥ इममुच्चारयेन्मंत्रं गृहीतकुसुमांजलिः ॥ ३० ॥ नमो वो विश्वमूर्तिभ्यो विश्वमातृभ्य एव च ॥ लोकाधिवासिनीभ्यस्तु रोहिणीभ्यो नमो नमः ॥ ३१ ॥ गवामंगेषु तिष्ठन्ति भुवनान्येकविंशतिः ॥ ब्रह्मादयस्तथा देवा रोहिण्यः पांतु मातरः ॥ ३२ ॥ गावो ममाग्रतः संतु गावो मे संतु पृष्ठतः ॥ गावो मे सर्वतः संतु गवां मध्ये वसाम्यहम् ॥ ३३ ॥ यस्मात्त्वं वृषरूपेण धर्मश्चैव सनानतः ॥ अष्टमूर्तेरधिष्ठानमतः पाहि सनातनः ॥ ॥३४॥ इत्यामन्त्र्य ततो दद्याद्गुरवे नंदिकेश्वरम् ॥ सर्वोपस्करणोपेतं गोयुतं च विशेषतः ॥ ३५ ॥ गवां शतमथैकैकं तदर्धं चापि विंशतिः ॥ दश



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पञ्चशतं दद्याद्बहुभ्यस्तदनुज्ञया ॥ ३६ ॥ नैका बहुभ्यो दातव्या दाता दोषकरो भवेत् ॥ बह्वयस्त्वेकस्य दातव्याः श्रीमदारोग्यवृद्धये ॥ ३७ ॥ पयोव्रतस्ततस्तिष्ठेदेकाहं गोसहस्रदः ॥ तथैव ब्रह्मचारी स्याद्य इच्छेद्विपुलां श्रियम् ॥ ३८ ॥ न देया दुर्बला धेनुर्नाल्पक्षीरा न रोगिणी ॥ न जीर्णा जीर्णवस्त्रा वा नापत्यगतचेतना ॥ ३९ ॥ अनेन विधिना यस्तु गोसहस्रप्रदो भवेत् ॥ सर्वपापविनिर्मुक्तः सिद्धचारणसेवितः ॥ ॥ ४० ॥ विमानेनार्कवर्णेन किंकिणीजालमालिना ॥ सर्वेषां लोकपालानां लोके संपूज्यते सुरैः ॥ ४१ ॥ सप्तावरान्सप्त परान्सप्त चैव परावरान् ॥ पुरुषानुद्धरेद्दत्त्वा गोसहस्रं विधानतः ॥ ४२ ॥ स्वर्गलोकाच्च्युतो वाथ नारी वा सत्परायणा॥ ॥ सप्त जन्मानि राज्ञी स्यात्स्तूयमाना पुनःपुनः ॥ ४३ ॥ न त्वेवेदं दानमात्रं प्रशस्तं पात्रं कालो गोविशेषो विधिश्च ॥ तस्मादेताः सर्वभूषासमेताः पात्रे काले क्षीरवत्यो विधानात् ॥ ४४ ॥ एकापि गौर्बहुगुणा गुणिने प्रदत्ता दातुः कुलं त्रिपुरुषं विधिवत्पुनाति ॥ यः श्रद्धया वितरतीह गवां सहस्रं शक्यं फलं न नृपतेऽस्य मयाभिधातुम् ॥ ४५ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे गोसहस्रप्रदानविधिव्रतवर्णनं नामैकोनषष्ट्युत्तरशततमोऽध्यायः ॥ १५९ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ युष्मद्वाक्यामृतमिदं शृण्वानोहं जनार्दन ॥ न तृप्तिमधिगच्छामि जातं कौतूहलं हि मे ॥ १ ॥ गोपतिः किल गोविन्दस्त्रिषु लोकेषु विश्रुतः ॥ गोवृषस्य प्रदानेन त्रैलोक्यमभिनंदति ॥ २ ॥ तद्गोवृषभदानस्य फलं मे कथयाच्युत ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ वृषदानफलं पुण्यं शृणुष्व कथयामि ते ॥ ३ ॥ पवित्रं पावनं चैव सर्वदानोत्तमोत्तमम् ॥ दशधेनुसमोऽनड्वानेकश्चैकधुरंधरः ॥ दशधेनुप्रदानाद्धि स एवैको विशिष्यते ॥ ४ ॥ यो हृष्टश्चातिपुष्टांगो ह्यरोगः पांडुनन्दन ॥ युवा भद्रः सुशीलश्च सर्वदोषविवर्जितः ॥ ५ ॥ धुरंधरः स्थापयते एक एव कुलं महत् ॥ त्राता भवति संसारे नात्र कार्या विचारणा ॥६॥ :अलंकृत्य वृषं शांतं पुण्यकाल उपस्थिते ॥ रौप्यलांगूलसंयुक्तं ब्राह्मणाय निवेदयेत् ॥ ७ ॥ मंत्रेणानेन राजेन्द्र तं शृणुष्व वदामि ते ॥ ८ ॥ धर्मस्त्वं वृषरूपेण जगदानन्दकारकः ॥ अष्टमूर्तेरधिष्ठानमतः पाहि सनातन ॥ ९ ॥ दत्त्वैवं दक्षिणायुक्तं प्रणिपत्य विसर्जयेत् ॥ सप्तजन्मकृतं पापं वाङ्मनः कायकर्मणाम् ॥ तत्सर्वं विलयं याति गोदानसुकृतेन च ॥ १० ॥ यानं वृषभसंयुक्तं दीप्यमानं सुशोभनम् ॥ आरुह्य कामगं दिव्यं स्वर्लोकमधिरोहति ॥ ११ ॥ यावंति तस्य रोमाणि गोवृषस्य महीपते ॥ तावद्वर्षसहस्राणि गवां लोके महीयते ॥१२॥ गोलोकादवतीर्णस्तु इह लोके द्विजो भवेत् ॥

१ दिव्यम्–इ० पा० । २ अरोगः–इ० पा० । ३ ततः–इ० पा० । ४ सुशोभितम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यज्ञयाजी महातेजाः सर्वब्राह्मणपूजितः ॥ १३ ॥ यथोक्तं ते महाराज कस्य देयो वृषोत्तमः ॥ तदहं ते प्रवक्ष्यामि पात्रं ज्ञाणपदं नृणाम् ॥ १४ ॥ ये क्षांतदांताः श्रुतिपूर्णकर्णा जितेंद्रियाः प्राणिवधान्निवृत्ताः ॥ प्रतिग्रहे संकुचिता गृहस्थास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ १५ ॥ ऊर्जस्विनं भरसहं दृढकंधरं च यच्छंति ये वृषमशेषगुणोपपन्नम् ॥ दत्तेन यद्भवति गोदशकेन पुण्यं सत्यं भवंति भुवि तत्फलभागिनस्ते ॥ १६ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे वृषभदानव्रतवर्णनं नाम षष्ट्युत्तरशततमोऽध्यायः ॥ १६० ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कपिलादानमाहात्म्यं कथयस्व जगत्पते ॥ पुण्यं यत्सर्वदानानां सर्वपातकनाशनम् ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ तत्तेऽहं संप्रवक्ष्यामि विनताश्वेन यत्पुरा ॥ कथितं कपिलादानं तच्छृणुष्व महामते ॥ २ ॥ ॥ विनताश्व उवाच ॥ ॥ अतः परं महाराजो भयमुख्याः समासतः ॥ विधानं यद्वराहेण धरण्यै कथितं पुरा ॥ ३ ॥ तदहं संप्रवक्ष्यामि नवपुण्यफलं च यत् ॥ ॥ धरण्युवाच ॥ ॥ यत्त्वया कपिला नाम पूर्वमुत्पादिता प्रभो ॥ ४ ॥ होमधेनुः सदा पुण्या धेनुर्यज्ञावतारभूः ॥ सा कथं ब्राह्मणेभ्यो हि देया कस्मिन्दिनेऽपि च ॥ ॥ ५ ॥ कीदृशाय च विप्राय दातव्या पुण्यलक्षणा ॥ कति वा कपिलाः प्रोक्ताः स्वयमेव स्वयंभुवा ॥ ६ ॥ तासां प्रयत्नाद्दानेन किं पुण्यं स्याच्च माधव ॥ एतदिच्छाम्यहं श्रोतुं विस्तरान्मधुसूदन ॥ ७ ॥ ॥ वराह उवाच ॥ ॥ शृणुष्व भद्रे तत्त्वेन पवित्रं पापनाशनम् ॥ कृत्वा यत्सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ८ ॥ कपिला अग्निहोत्रार्थं यज्ञार्थे च वरानने ॥ उद्धृत्य सर्वतेजांसि ब्रह्मणा निर्मिता पुरा ॥ ९ ॥ पवित्राणां पवित्रं च मङ्गलानां च मंगलम् ॥ पुण्यानां परमं पुण्यं कपिला च वरानने ॥ १० ॥ तपसस्तप एवाग्र्यं व्रतानामुत्तमं व्रतं ॥ दानानामुत्तमं दानं विधिना ह्येतदक्षयम् ॥ ११ ॥ पृथिव्यां यानि तीर्थानि गुह्यान्यायतनानि च ॥ पवित्राणि च पुण्यानि सर्वलोके वसुन्धरे ॥ १२ ॥ होतव्यान्यग्निहोत्राणि सायं प्रातर्द्विजातिभिः ॥ कपिलाया घृतेनेह दध्ना क्षीरेण वा पुनः ॥ १३ ॥ यजंते येऽग्निहोत्राणि अन्नैश्च विविधैः सदा ॥ पूजयन्त्यतिथींश्चैव परां भक्तिमुपागताः ॥ १४ ॥ तेषां त्वादित्यवर्णैश्च विमानैर्जायते गतिः ॥ सूर्यमण्डलमध्ये च ब्रह्मणा निर्मिता पुरा ॥ १५ ॥ कपिलायाः शिरो ग्रीवां सर्वे तीर्थानि भामिनि ॥ पितामहनियोगाच्च निवसंति हि नित्यशः ॥ १६ ॥ प्रातरुत्थाय यो मर्त्यः कपिलागलमस्तकात् ॥ च्युतं तु भक्त्या पानीयं शिरसा धारयेन्नरः ॥ १७ ॥ स तेन पुण्येनोपेतस्तत्क्षणाद्धतकिल्बिषः ॥ त्रिंशद्वर्षकृतं पापं दहत्य



१ तदप्यहं ते वक्ष्यामि—इ० पा० । २ दृढबन्धनम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्निरिवेन्धनम् ॥ १८ ॥ कल्य उत्थाय यो मर्त्यः कुर्यात्तासां प्रदक्षिणम् ॥ प्रदक्षिणीकृता तेन पृथिवी स्याद्वसुन्धरे ॥ १९ ॥ प्रदक्षिणायां चैकायां कृतायां च वसुन्धरे ॥ दशवर्षकृतं पापं नश्यते नात्र संशयः ॥ २० ॥ कपिलायास्तु मूत्रेण स्नायाद्वै यः शुचिव्रतः ॥ स गङ्गाद्येषु तीर्थेषु स्नातो भवति मानवः ॥ २१ ॥ येन स्नानेन चैकेन भवमुक्तो भवेन्नरः ॥ यावज्जीवकृतात्पापात्तत्क्षणादेव मुच्यते ॥ २२ ॥ गोसहस्रं च यो दद्यादेकां वा कपिलां नरः ॥ सममेतत्पुरा प्राह ब्रह्मलोके पितामहः ॥ २३ ॥ यश्चैकां कपिलां हन्यान्नरो रज्जुकरो यदि ॥ गोसहस्रं हतं तेन भवतीह न संशयः ॥ २४ ॥ गवां स्थितिं कल्पयेत घृतं गव्यं न दूषयेत् ॥ यावद्धि वर्द्धते गव्यं तावत्पापैस्तु पूयते ॥ २५ ॥ गवां कंडूयनं श्रेष्टं तथा च प्रतिपालनम् ॥ तुल्यं गोघृतदानस्य भयरोगादिपालनम् ॥ २६ ॥ तृणादिभक्षणार्थं च गवां दद्याद्वरादिकम् ॥ स्वर्गवासफलं दिव्यं लभते मानवोत्तमः ॥ २७ ॥ दशेह कपिलाः प्रोक्ताः स्वयमेव स्वयंभुवा ॥ यो दद्याच्छ्रोत्रियस्यैव स्वर्गं गत्वा स मानवः ॥ ॥ २८ ॥ विमानैर्विविधैर्दिव्यैर्दिव्यकन्याभिरर्चितः ॥ सेव्यमानस्तु गंधर्वैर्दीप्यमाना यथाग्नयः ॥ २९ ॥ सुवर्णकपिला पूर्वा द्वितीया गौरपिङ्गला ॥ आशा चैव तृतीया स्यादग्निज्वाला चतुर्थिका ॥ ३० ॥ पंचमी जुहुवर्णा स्यात्षष्ठी तु घृतपिङ्गला ॥ सप्तमी श्वेतपिङ्गा स्यादष्टमी क्षीरपिङ्गला ॥ ३१ ॥ नवमी पाटला ज्ञेया दशमी पुष्पपिङ्गला ॥ एता दश समाख्याताः कपिलाश्च वसुंधरे ॥ ३२ ॥ सर्वा ह्येता महाभागा स्तारयंति न संशयः ॥ संगमेषु प्रशस्ताश्च सर्वपापप्रणाशनाः ॥ ३३ ॥ एवमेतास्तु कपिलाः पापघ्न्यश्च वसुन्धरे ॥ आशा चैव तु या प्रोक्ता अग्निगर्भानलप्रभा ॥३४॥ अग्निज्वालोज्ज्वलैः शृंगैः प्रदीप्तांगारलोचना ॥ अग्निपुष्पा अग्निलोमा तथान्या चानलप्रभा ॥३५॥ तामाग्नेय्यां सदा दद्याद्ब्राह्मणायेतरैः सदा ॥ गृहीत्वा कपिलां शूद्रः कामतस्तत्पयः पिबेत् ॥३६॥ पतितश्च भवेन्नित्यं चंडालसदृशः पुमान् ॥ तस्मान्न प्रतिगृह्णीयाच्छबलां गां कथंचन ॥३७॥ द्वारांते परिहर्तव्या कपिला गौर्द्विजेतरैः ॥ लोकेषु ते मूढतमाः कपिलाक्षीरभोजनाः ॥३८॥ असंभाष्याश्च पतिताः शूद्रास्ते पापकर्मिणः ॥ पिबंति यावत्कपिलां तावत्तेषां पितामहाः ॥ अमेध्यं भुञ्जतेऽतस्तां नोपजीवेद्द्विजेतरः ॥ ३९ ॥ तासां घृतं च क्षीरं वा नवनीतमथापि वा ॥ उपजीवंति ये शूद्रास्ते प्रयांति यमालयम् ॥४०॥ कपिलाजीविनः शूद्राः सर्वे गच्छंति रौरवम् ॥ रौरवे भुञ्जते दुःखं वर्षकोटिशतोपिताः ॥४१॥ ततो विमुक्ताः कालेन जायंते श्वानयोनिषु ॥ श्वानयोनेर्विमुक्तास्ते विष्ठायां कृमियोनिगाः ॥४२॥ विष्ठास्वेव च पापिष्ठा दुर्गं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धेषु च नित्यशः॥ भूयोऽपि जायमानास्ते तत्रोत्तारो न विद्यते ॥४३॥ ब्राह्मणश्चैव यो देवि कुर्यात्तेषांप्रतिग्रहम्[1] ॥ ततः प्रभृत्यमेध्यायां पितरस्तस्य शेरते ॥ ४४ ॥ तं विप्रं नानुभाषेत नचाप्येकासने विशेत् ॥ स नित्यं वर्जनीयो वै दूरात्तु ब्राह्मणाधमः ॥४५॥ यस्तेन सह भाषेत प्रायश्चित्ती भवे द्विजः॥ एकस्य गोप्रदानस्य सहस्रांशो न पूर्यते ॥४६॥ किमन्यैर्बहुभिर्दानैः कोटिसंख्यातविस्तरैः॥४७॥ श्रोत्रियाय दरिद्राय सुवृत्तायाहिताग्नये ॥ दत्त्वैकां कपिलां धेनुं सर्वपापैः प्रमुच्यते ॥४८॥ मासे प्रसविनीं धेनुं दानार्थी प्रतिपालयेत् ॥ आत्मार्थे न प्रपाल्या हि सदा नरकभीरुभिः ॥४९॥ कपिलाऽर्धप्रसूता च दातव्या हि द्विजन्मने ॥ जायमानस्य वत्सस्य मुखं योन्यां प्रदृश्यते ॥ ५० ॥ तावत्सा पृथिवी ज्ञेया यावद्गर्भं न मुंचति ॥ ॥ ५१ ॥ धेनोर्यावंति रोमाणि सवत्साया वसुन्धरे ॥ भूम्यां तु पांसवो यावद्यावन्नक्षत्रतारकाः ॥ ५२ ॥ तावद्वर्षसहस्राणि ब्रह्मेशादिभिरर्चितः॥ ब्रह्मलोके निवसति यश्चैककपिलाप्रदः ॥ ५३ ॥ सुवर्णशृङ्गीं यः कृत्वा खुरैरौप्यैःसमर्चिताम् ॥ ब्राह्मणस्य करे दत्त्वा सुवर्णं रौप्यमेव च ॥ ५४ ॥ कपिलायास्तदा पुत्रं ब्राह्मणस्य करे न्यसेत् ॥ उदकं च करे दत्त्वा वाचयेत स्वशक्तितः॥ ५५ ॥ सुवर्णैस्तु चतुर्भिश्च त्रिभिर्द्वाभ्यामथापि वा ॥ एकहीना न दातव्या यदीच्छेच्छुभमात्मनः ॥ ५६ ॥ स समुद्रवनोपेता सशैलवनकानना ॥ रत्नपूर्णा भवेद्दत्ता पृथिवी नात्र संशयः ॥ ५७ ॥ पृथिवीदानतुल्येन दानेनैतेन वै नरः ॥ तारितो याति पितृभिर्वैष्णवं यत्पदं परम् ॥ ५८ ॥ ब्रह्मस्वहरणो गोघ्नो भ्रूणहा ब्रह्मघातकः ॥ पापकृ च्चोभयमुखीं दद्यात्सत्कनकान्विताम् ॥ तद्दिनं च पयोभोजी संयतश्चातिवाहयेत् ॥ ५९ ॥ गोमयेनोपलिप्याथ मण्डलं विधिपूर्वकम् ॥ स्वशाखो क्तेन मंत्रेण होमयेत्तु विचक्षणः ॥ ६० ॥ व्याहृत्या होमयेत्पूर्वं पंचवारुणकं तथा ॥ इरावती धेनुमती देवस्य त्वेति वा पुनः ॥ ६१ ॥ स्योना पृथिवि मंत्रेण गौर्वत्ससहिता नवा ॥ निकामफलदा धेनुः सा स्यात्सुरभिनंदिनी ॥ ६२ ॥ या ते सरस्वती देवी विष्णुना च तथा मही ॥ गौर्गोविष्णुपदं चोक्त्वा शांतिकर्मणि वाचयेत् ॥ ६३ ॥ यावद्वत्सस्य द्वौ पादौ शिरश्चैव प्रदृश्यते ॥ तावद्वै पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ तस्मिन्काले प्रदातव्या ब्राह्मणाय वसुंधरे ॥ ६४ ॥ सुवर्णशृंगीं रौप्यखुरां कांस्यदोहां सताम्रकाम् ॥ सवस्त्रघंटाभरणां गंधपुष्पैरलंकृताम् ॥ वस्त्राक्षतैः समभ्यर्च्य ब्राह्मणाय समर्पयेत् ॥ ६५ ॥ सुवर्णस्य सहस्रेण तदर्धेनापि भामिनि ॥ तस्याप्यर्धेन शक्त्याऽथ तस्याप्यर्द्धेन वा पुनः ॥ ॥ ६६ ॥ यथा शक्त्या प्रदातव्या वित्तशाठ्यविवर्जितैः ॥ करे दत्त्वा सुवर्णं च अथवा रूप्यमेव च ॥ ६७ ॥ गृहाणेमां महाधेनुं भव भ्राता ममाशु

[1] शूद्राणां गोव्यतिरिक्तधान्यद्रव्यादिप्रतिग्रहमित्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वे ॥ सर्वं पापक्षयं कृत्वा सदा स्वस्तिकरो भव ॥६८॥ इरावती धेनुमती जाह्नवी तदनन्तरम् ॥ प्रतिदास्यामि ते धेनुं कुटुम्बार्थे विशेषतः ॥६९॥ भवतात्स्वस्ति मे नित्यं सुखं चानुत्तमं तथा ॥ दत्ता तु पृथिवी देवी त्वयेयं प्रतिगृह्यताम् ॥७०॥ कोऽदादिति च वै मंत्रो जपितव्यो द्विजेन च ॥ विसृज्य ब्राह्मणं सोऽपि तां धेनुं स्वगृहं नयेत् ॥ ७१ ॥ एवं प्रसूयमानां गां यो ददाति वसुन्धरे ॥ सा समुद्रवनोपेता सशैलवनकानना ॥ रत्नपूर्णा भवेद्दत्ता पृथिवी नात्र संशयः ॥ ७२ ॥ प्रतप्तजांबूनदतुल्यवर्णां महानितंबां तनुवृत्तमध्याम् ॥ अर्द्धप्रसूतां द्विमुखीं सुशीलां सेवन्त्यजस्रं कपिलां हि देवाः ॥ ७३ ॥ प्रातरुत्थाय यो भक्त्या धेनुकल्पं नरो भुवि ॥ जितेन्द्रियः शुचिर्भूत्वा पठेद्भक्त्या समन्वितः ॥ ७४ ॥ त्रिकालं पठते यस्तु पापं वर्षशतोद्भवम ॥ नश्यत्येकक्षणादेव वायुना पांसवो यथा ॥ ७५ ॥ श्राद्धकाले पठेद्यस्तु इदं पावनमुत्तमम् ॥ तस्यान्नं संस्कृतं तद्धि पितरोऽश्नंति धीमतः ॥ ७६ ॥ अमावास्यां च यो विद्वान्द्विजानामग्रतः पठेत् ॥ पितरस्तस्य तुष्यंति वर्षाणां शतमेव च ॥ ७७ ॥ यश्चैतच्छृणुयात्पुण्यं तद्गतेनांतरात्मना ॥ संवत्सरकृतात्पापात्तत्क्षणादेव मुच्यते ॥ ७८ ॥ इदं रहस्यं राजेन्द्र वराहमुखनिर्गतम् ॥ धरण्यै कथितं पूर्वं सर्वपापप्रणाशनम ॥ ७९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कपिलादानमाहात्म्यवर्णनं नामैकषष्ट्युत्तरशततमोऽध्यायः ॥ १६१ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ महिषीदानमाहात्म्यं कथयामि युधिष्ठिर ॥ पुण्यं पापविनाशं च आयुष्यं सर्वकामदम ॥ १ ॥ चन्द्रसूर्यग्रहे पुण्ये कार्त्तिक्यामयने तथा ॥ शुक्लपक्षे चतुर्दश्यां सूर्यसंक्रांतिवासरे ॥ २ ॥ यदा वा जायते चित्तं वित्तं च कुरुनन्दन ॥ तदैव देया महिषी संसारभयभीरुणा ॥ ३ ॥ सुपयोधरशोभाढ्या सुशृंगी सुखुरा तथा ॥ प्रथमप्रसूता तरुणी सुशीला दोषवर्जिता ॥ ४ ॥ सुवर्णशृङ्गतिलका घंटाभरणभूषिता ॥ रक्तवस्त्रावृता रम्या कांस्यदोहनकान्विता ॥ ५ ॥ पिण्याकपिटिकोपेता सहिरण्या च शक्तितः ॥ सप्तधान्ययुता देया ब्राह्मणे वेदपारगे ॥ ६ ॥ पुराणपाठके तद्वज्ज्योतिःशास्त्रविदे तथा ॥ देया न वेदरहिते न च कुव्रतिने क्वचित् ॥ ७ ॥ द्रव्यैरेभिः समायुक्तां पुण्येऽह्नि विधिपूर्वकम् ॥ दद्यान्मंत्रेण राजेन्द्र पुराणपठितेन तु ॥ ८ ॥ इन्द्रादिलोकपालानां या राजमहिषी शुभा ॥ महिषीदानमाहात्म्यात्सास्तु मे सर्वकामदा ॥ ९ ॥ धर्मराजस्य साहाय्ये यस्याः पुत्रः प्रतिष्ठितः ॥ महिषासुरस्य जननी या सास्तु वरदा मम ॥१०॥ ( इति दानमंत्रः ) दद्यात्प्रदक्षिणीकृत्य ब्राह्मणे तां पयस्विनीम् ॥ प्रतिग्रहः स्मृतस्तस्याः पृष्ठदेशे स्वयंभुवा ॥ ११ ॥ एवं दत्त्वा विधानेन ब्राह्मण

१ पुण्यं पवित्रमायुष्यं सर्वकामफलप्रदम्–इ० पा० । २ च–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्य गृहं नयेत् ॥ वस्त्रैराभरणैः पूज्य भक्त्या च कुरुनन्दन ॥ १२ ॥ संपादिता मया तुभ्यं संतुष्टो मे भव द्विज ॥ १३ ॥ अनेन विधिना दत्त्वा महिषीं द्विजपुङ्गवे ॥ सर्वान्कामानवाप्नोति इह लोके परत्र च ॥ १४ ॥ या सा ददाति महिषीं सा राजमहिषी भवेत् ॥ महाराजः पुमा त्राजन्व्यासस्य वचनं यथा ॥ १५ ॥ यज्ञयाजी भवेद्विप्रः क्षत्रियो विजयी भवेत् ॥ भवेद्वैश्यस्तु धनवाञ्छूद्रः सर्वार्थसंयुतः ॥ १६ ॥ तस्मान्नरेण दातव्या महिषी विभवे सति ॥ पुत्रपौत्रप्रपौत्रार्थमात्मनः शुभमिच्छता ॥ १७ ॥ दशधेनुसमां राजन्महिषीं नारदोऽब्रवीत् ॥ विंशतिगोसमां व्यासः सर्वदानोत्तमं रविः ॥ १८ ॥ सगरेण ककुत्स्थेन धुंधुमारेण गाधिना ॥ दत्ताः संपूज्य विप्रेभ्यो महिष्यः सर्वकामदाः ॥ १९ ॥ महिषी दानमाहात्म्यं यः शृणोति सदा नरः ॥ स सर्वपापनिर्मुक्तः शिवलोके महीयते ॥ २० ॥ दुग्धाधिकां हि महिषीं जलमेघवर्णां संपुष्टपट्टकवतीं जंघनाभिरामाम् ॥ दत्त्वा सुवर्णतिलकां द्विजपुंगवाय लोकद्वयं विजयते किमु तत्र चित्रम् ॥ २१ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे महिषीदानव्रतविधिवर्णनं नाम द्विषष्ट्युत्तरशततमोऽध्यायः ॥ १६२ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु पार्थ परं दानं सर्वकिल्बिषनाशनम् ॥ यद्दत्त्वा त्रिविधं पापं सद्यो विलयमृच्छति ॥ १ ॥ सुवर्णरोमां सौवर्णीं प्रत्यक्षां वा सुशोभनाम् ॥ सुवर्णतिलकोपेतां सर्वालंकारभूषिताम् ॥ २ ॥ कौशेयपरिधानां च दिव्यचंदनभूषिताम् ॥ दिव्यपुष्पोपहारां च सर्वधातुरसैर्युताम् ॥ सप्तधान्यसमायुक्तां फलपुष्पवतीं तथा ॥ ३ ॥ शतेन कारयेत्तां च सुवर्णस्य प्रयत्नतः ॥ यथा शक्त्याथ वा कुर्याद्वित्तशाठ्यं न कारयेत ॥ ४ ॥ अयने विषुवे चैव ग्रहणे शशिसूर्ययोः ॥ दुःस्वप्नेदर्शने चैव जन्मर्क्षे पितृसंक्षये ॥ ५ ॥ यदा वा जायते वित्तं चित्तं श्रद्धासमन्वितम् ॥ तदेव दानकालः स्याद्यतोऽनित्यं हि जीवितम् ॥ ६ ॥ दद्यात्तीर्थे गृहे वापि यत्र वा रमते मनः ॥ ७ ॥ तत्र संस्थाप्य देवेशमुमया सह शंकरम् ॥ ब्रह्माणं सह गायत्र्या सश्रीकं श्रीधरं तथा ॥ ८ ॥ रत्या सह तथानंगं लोकपालान्ग्रहानपि ॥ संपूज्य च विधानेन गंधपुष्पनिवेदनैः ॥ ९ ॥ तदग्रे कारयेद्धोमं तिलाज्येन महीपते ॥ अलंकृत्य द्विजं शांतं वासोभिः प्रतिपूज्य च ॥ १० ॥ तल्लिङ्गमंत्रैर्होमश्च कर्तव्यो ज्वलितेऽनले ॥ ततस्तां तिलकुंभस्थां लवणान्तमुपस्थिताम् ॥ ११ ॥ पूजयित्वा विधानेन मन्त्रमेतमुदीरयेत ॥

१ नु वद्धपुत्रवान्–इ० पा० । २ नयनाभिरामाम्–इ० पा० । ३ दुःस्वप्ने पुत्रजनने–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रोमत्वङ्मांसमज्जाद्यैः सर्वोपकरणैः सदा ॥ जगतः संप्रवृद्धासि त्वामतः प्रार्थये स्थिताम् ॥ १२ ॥ वाङ्मनःकायजनितं यत्किञ्चिन्मम दुष्कृतम् ॥ तत्सर्वं विलयं यातु तव दानात्प्रसेवितम् ॥ १३ ॥ एवमुच्चार्य तां दद्याद्ब्राह्मणाय कुटुंबिने ॥ नाभिभाषेत तं दत्त्वा मुखं च नावलोकयेत् ॥ ॥ १४ ॥ दुष्टप्रतिग्रहहतो विप्रो भवति पातकी ॥ १५ ॥ नो दद्याद्दक्षिणाहीनां दातव्या सा विधानतः ॥ दक्षिणाविधिना हीना दुःखशोकावहा भवेत् ॥ १६ ॥ पुरा दत्तमिदं दानं गौर्या शंकरकाम्यया ॥ तेन शंभुः पतिर्लब्धः सर्वदेवनमस्कृतः ॥ १७ ॥ इन्द्राण्या स्वर्णरोमाणां शतं दत्तं विधानतः ॥ सर्वदेवपतिं प्राप्य पतिं साद्यापि मोदते ॥ १८ ॥ नलेन दत्तमेतद्धि राज्यं कृत्वा दिवं गतः ॥ रुक्मिण्याहं पतिर्लब्धः सौभाग्यम तुलं तथा ॥ १९ ॥ दानस्यास्य प्रभावेण पुत्रा बहुबलान्विताः ॥ अपुत्रो लभते पुत्रमधनो लभते धनम् ॥२०॥ दत्त्वा दानं शुभां कांतिं विपुलां च तथा श्रियम् ॥ य इमं शृणुयान्नित्यं दानकल्पमनुत्तमम् ॥ अहोरात्रकृतात्पापान्मुच्यते नात्र संशयः ॥ २१ ॥ मेषी विशेषकलुषापहरातिशस्ता दाने सदैव रसधातुयुता सधान्या ॥ तामादरेण कुरुनन्दन देहि दत्त्वा येनास्तपापतिमिरः सवितेव भासि ॥ २२ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादेऽविदानव्रतविधिवर्णनं नाम त्रिषष्ट्युत्तरशततमोऽध्यायः ॥ १६३ ॥ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ भूमिदानमतो वक्ष्ये सर्वपापप्रणाशनम् ॥ ये प्रयच्छंति विप्रेभ्यो भूमिदानं सदक्षिणम् ॥ १ ॥ श्रोत्रियाय दरिद्राय अग्निहोत्ररताय च ॥ स सर्वकामतृप्तात्मा सर्वरत्नैर्विभूषितः ॥ २ ॥ सर्वपापविनिर्मुक्तो दीप्यमानो रविर्यथा ॥ बालसूर्यप्रभाभासैर्वादित्रध्वजशोभितैः ॥३॥ विमानैर्भास्वरैर्दिव्यैर्विष्णुलोकं स गच्छति ॥ ४ ॥ तत्र दिव्यांगनाभिश्च सेव्यमानो यथासुखम् ॥ कामगः कामरूपी च क्रीडंत्यानंदमक्षयम् ॥ ५ ॥ यावद्धारयते लोकान्भूरंकुरसमुद्भवा ॥ तावद्भूमिप्रदः कामं विष्णुलोके महीयते ॥ ६ ॥ नहि भूमिप्रदानाद्वै दानमन्यद्विशिष्यते ॥ दिशो दशानुगृह्णाति हर्ता ता दश हंति च ॥ ७ ॥ दानान्यन्यानि क्षीयंते कालेन पुरुषर्षभ ॥ भूमिप्रदानपुण्यस्य क्षयो नैवोपपद्यते ॥ ८ ॥ सर्वपापानि क्षीयंते कालयोगक्रमेण तु ॥ भूमिहर्तुश्च राजेंद्र दुःखस्यांतो न विद्यते ॥ ९ ॥ ब्राह्मणाय सुशीलाय भूमिं दत्त्वा तु यो नरः ॥ न हि तामुपजीवेद्यः स महत्पुण्यमाप्नुयात् ॥ १० ॥ हलकृष्टां महीं कृत्वा सबीजां सस्यमालिनीम् ॥ यावत्सूर्यकृतालोकस्तावत्स्वर्गे महीयते ॥ ११ ॥ धनं धान्यं

१ संप्रवृद्धासि–इ० पा० । २ किल्बिषी–इ० पा० । ३ दक्षग्रहस्य.–इ० पा० । ४ विधानतः–इ० पाठो युक्तः । ५ यावद्धारयते लोको भूमिं कुरुकुलोद्वह–इ० पा० । ६ गुरुघ्नं तु–इ० पा० । ७ फलम्–इ० पा० । ८ फालकृष्टाम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिरण्यं च रत्नान्याभरणानि च ॥ सर्वदानानि राजेंद्र ददाति वसुधां ददत् ॥ १२ ॥ सागरान्सरितः शैलान्समानि विषमाणि च ॥ सर्वगंधर सान्स्नेहान्ददाति वसुधां ददत् ॥ १३ ॥ ओषधीः क्षीरसंपन्ना नानापुष्पफलोपगाः ॥ कमलोत्पलखंडांश्च ददाति वसुधां ददत् ॥ १४ ॥ अग्नि ष्टोमादिभिर्यज्ञैर्ये यजंति सदक्षिणैः ॥ प्राप्नुवंति च तत्पुण्यं भूमिदानाद्यदाप्यते ॥ १५ ॥ श्रोत्रियाय महीं दत्त्वा ये हरंति न मानवाः ॥ तावत्तेषां भवेत्स्वर्गो यावल्लोकाः प्रतिष्ठिताः ॥ १६ ॥ सस्यपूर्णां महीं यस्तु श्रोत्रियाय प्रयच्छति ॥ पितरस्तस्य तुष्यंति यावदाभूतसंप्लवम् ॥ १७ ॥ यत्किंचित्कुरुते पापं पुरुषो वृत्तिकर्शितः ॥ अपि गोचर्ममात्रेण भूमिदानेन शुध्यति ॥ १८ ॥ सुवर्णानां सहस्रेण यत्पुण्यं समुदाहृतम् ॥ भूमि गोचर्ममात्रेण तत्फलं प्राप्नुयान्नरः ॥ १९ ॥ कपिलानां सहस्रेभ्यो यद्दत्तेऽन्नं नरोत्तम ॥ भूमिगोचर्ममात्रेण तत्फलं लभते नरः ॥ २० ॥ मध्य मस्य मनुष्यस्य व्यासेन परिसंख्यया ॥ त्रिंशद्दंडांश्च गोचर्म दत्त्वा स्वर्गे महीयते ॥ २१ ॥ बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ॥ यस्य यस्य यदा भूमिस्तस्यतस्य तदा फलम् ॥ २२ ॥ किंकरा मृत्युदंडाश्च असिपत्रवनादयः ॥ घोराश्च वारुणाः पाशा नोपसर्पंति भूमिदम् ॥ २३ ॥ निरया रौरवाद्याश्च कुंभीपाकः सुदुःसहः ॥ तथा च यातनाः कष्टा नोपसर्पंति भूमिदम् ॥ २४ ॥ चित्रगुप्तश्च कालश्च कृतांतो मृत्युरेव च ॥ यमश्चापि स्वयं राजा संपूजयति भूमिदम् ॥ २५ ॥ रुद्रः प्रजापतिः शक्रो देवासुरगणास्तथा ॥ अहं च परमप्रीत्या पूजयामीह भूमिदम् ॥ २६ ॥ षट्कर्मकृत्सुवृत्ताय कृशाय च प्रियार्थिने ॥ भूमिर्देया नरव्याघ्र सन्निधिश्चाक्षयो भवेत् ॥ २७ ॥ सीदमानकुटुंबाय श्रोत्रियायाहिताग्नये ॥ वृत्त स्थाय दरिद्राय भूमिर्देया नरेश्वर ॥ २८ ॥ यथा जनित्री क्षीरेण पुत्रं संवर्द्धयेत्सदा ॥ तथा भूमिप्रदं भूमिः सर्वकामैस्तु तर्पति ॥ २९ ॥ यथा गौर्भरते वत्सं क्षीरेण क्षीरमुत्सृजेत् ॥ तथा सर्वरसोपेता भूमिर्भरति भूमिदम् ॥ ३० ॥ यथा बीजानि रोहंति जलसिक्तानि भूतले ॥ तथा कामाः प्ररोहंति भूमिदस्य दिनेदिने ॥ ३१ ॥ यथोदयन्सहस्रांशुस्तमः सर्वं व्यपोहति ॥ तथा भूमिप्रदानं तु सर्वपापं व्यपोहति ॥ ३२ ॥ पर दत्तां तु यो भूमिमुपहिंसेत्कदाचन ॥ स बद्धो वारुणैः पाशैः क्षिप्यते पूयशोणिते ॥ ३३ ॥ स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ॥ स नरो नरके घोरे क्लिश्यत्याप्रलयांतिकम् ॥ ३४ ॥ रुदतां वृत्तिनाशेन ये पतंत्यश्रुबिंदवः ॥ तावद्वर्षसहस्राणि नरके पच्यते तु सः ॥ ३५ ॥ ब्राह्मणानां हृते क्षेत्रे हर्तुस्त्रिपुरुषं कुलम् ॥ दत्त्वा भूमिं तु विप्राय उपहिंसेद्यदा पुनः ॥ अधोमुखश्च दुष्टात्मा कुंभीपाके स पच्यते ॥३६॥ दिव्यवर्षसहस्रांते

१ नगान्पुष्पफलोपगान्–इ० पा० । २ न हिंसंति–इ० पा० । ३ लभते हि यः–इ० पा० । ४ शुक्रः–इ० पा० । ५ वृत्तिलोपेन–इ० पा० । ६ हरेत्क्षेत्रं हन्यात्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुंभीपाकादिभिः सृतः ॥ इह लोके भवेच्छा वै सप्त जन्मानि पार्थिव॥३७॥स्वदत्तां परदत्तां वा यत्नाद्रक्षेद्युधिष्ठिर ॥ महीं महीभृतां श्रेष्ठदानाच्छ्रे योनुपालनम् ॥ ३८ ॥ तोयहीनेष्वरण्येषु शुष्ककोटरवासिनः ॥ कृष्णाहयोभिजायंते नरा ब्रह्मस्वहारिणः ॥३९॥ एवं दत्त्वा महीं राजन्प्रहृष्टेनांतरात्मना ॥ सर्वान्कामानवाप्नोति मनसा चिंतितान्नरः ॥ ४० ॥ भूमिदानात्परं नास्ति सुखं वामुष्मिकं महत् ॥ न चापि भूमिहरणादन्यत्पातकमुच्यते ॥ ४१ ॥ यच्छंति ये द्विजवराय महीं सुकृष्टां ते यांति शक्रसदनं सुविशुद्धदेहाः ॥ ये लोपयंत्यतिबलादर्थं कामलोभात्ते रौरवातिगहनान्न समुत्तरंति ॥ ४२ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे भूमिदानमाहात्म्यवर्णनंनाम चतुःषष्ट्युत्तरशततमोऽध्यायः ॥ १६४ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ भूमिदानं क्षत्रियाणां नान्येषामुपपद्यते ॥ ते ह्युपार्जयितुं शक्ता दातुं पालयितुं यथा ॥ १ ॥ भूमिदानसमं किंचिदन्यत्कथय यादव ॥ संप्राप्तवित्तैर्यच्छक्यं संसारभयभीरुभिः ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ सौवर्णीं विधिवत्कृत्वा साद्रिद्रुमवतीं शुभाम् ॥ महीं प्रयच्छ विप्राणां तत्तुल्या सा निगद्यते ॥ ३ ॥ शृणुष्वैकमना भूत्वा महादानं नरोत्तम ॥ सविधानं प्रवक्ष्यामि फलं यत्नेन यद्भवेत् ॥ ४ ॥ चंद्रसूर्योपरागे च जन्मर्क्षे विषुवे तथा ॥ युगादिषु च दातव्यमयने च विधानतः ॥ ५ ॥ अन्येष्वपि च कालेषु प्रशस्ते धनसंचये ॥ पापक्षयाय दातव्यं यशोऽर्थे वा नरैर्भुवि ॥ ६ ॥ हेम्नः पलशतेनोक्ता तदर्धेनापि शक्तितः ॥ कुर्यात्पंचपलादूर्ध्वमसमर्थोऽपि भक्तिमान् ॥ ७ ॥ कारयेत्पृथिवीं हैमीं जंबुद्वीपानुकारिणीम् ॥ मर्यादापर्वतवतीं मध्ये मेरुसमन्विताम् ॥ ८ ॥ लोकपालाष्टकोपेतां ब्रह्मविश्वेशसंयुताम् ॥ नानापर्वतपूर्णां च रत्नाभरणभूषिताम् ॥ ९ ॥ सर्वसस्यविचित्रांगीं सर्वगंधाधिवासिताम् ॥ ईदृशीं तु महीं कृत्वा कारयेन्मंडपं ततः ॥ १० ॥ दशद्वादशहस्तं च चतुर्वक्त्रं सतोरणम् ॥ मध्ये च वेदिकां कुर्याच्चतुर्हस्तां प्रमाणतः ॥ ॥११॥ ऐशान्यां सुरसंस्थानमाग्नेय्यां कुंडमेव च ॥ पताकाभिरलंकृत्य देवतायतनान्यथ ॥ १२ ॥ लोकपाला ग्रहाश्चैव पूज्या माल्यविलेपनैः ॥ होमं कुर्युर्द्विजाः शांताश्चातुश्चरणिकाः शुभाः ॥ १३ ॥ सालंकाराः सवस्त्राश्च माल्यचंदनभूषिताः ॥ अग्निसंस्थापनं तत्र कृत्वा पूर्वं ततो महीम् ॥ १४ ॥ आनयेयुर्द्विजा राजन्ब्रह्मघोषपुरःसरम् ॥ शंखतूर्यनिनादैश्च गेयमंगलनिस्वनैः ॥ १५ ॥ तिलैः प्रच्छादितां वेदिं कृत्वा तत्राभि

१ भवजन्म पुनर्पुनः-इ० पा० । २ मना-इ० पा० । ३ सुकृष्टां-इ० सुमृष्टां-इ० च पा० । ४ अपि-इ० पा० । ५ तथा-इ० पा० । ६ दानम्-इ० पा० । ७ दर्श च-इ० पा० । ८ वा-इ० पा० । ९ वर्णिकाः-इ० पा० । १० वा-इ० पा० । ११ चतुर्हस्ताम् ।

वासयेत् ॥ अथाष्टादशधान्यानि रसांश्च लवणादिकान् ॥ १६ ॥ तथाष्टौ पूर्णकलशान्समंतात्स्थापयेच्छुभान् ॥ वितानकं च कौशेयं फलानि विविधानि च ॥ १७ ॥ अंशुकानि विचित्राणि श्रीखंडशकलानि च ॥ इत्येवं रचयित्वा तामधिवासनपूर्वकम् ॥ १८ ॥ ततो होमावसानेषु निष्पन्ने सर्वशांतिके ॥ शुक्लमाल्यांबरधरो यजमानः स्वयं ततः ॥ १९ ॥ कृत्वा प्रदक्षिणं पृथ्वीं गृहीत्वा कुसुमांजलिम् ॥ पुण्यकालमथासाद्य मंत्रानेतानुदीरयेत् ॥ २० ॥ नमस्ते सर्वदेवानां त्वमेव भवनं यतः ॥ धात्री त्वमसि भूतानामतः पाहि वसुंधरे ॥ २१ ॥ वसु धारयसे यस्मात्सर्वसौख्यप्रदायकम् ॥ वसुंधरा ततो जाता तस्मात्पाहि भयादलम् ॥ २२ ॥ चतुर्मुखोऽपि नो गच्छेद्यस्मादंतं तवाचले ॥ अनंतायै नमस्तुभ्यं पाहि संसारकर्दमात् ॥ २३ ॥ त्वमेव लक्ष्मीर्गोविंदे शिवे गौरीति संस्थिता ॥ गायत्री ब्रह्मणः पार्श्वे ज्योत्स्ना चंद्रे रवौ प्रभा ॥ २४ ॥ बुद्धिर्बृहस्पतौ ख्याता मेधा मुनिषु संस्थिता ॥ विश्वं प्राप्य स्थिता यस्मात्ततो विश्वंभरा मता ॥ २५ ॥ धृतिः क्षितिः क्षमा क्षोणी पृथिवी वसुधा मही ॥ एताभिर्मूर्तिभिः पाहि देवि संसारसागरात् ॥ २६ ॥ एवमुच्चार्य तां देवीं ब्राह्मणेभ्यो निवेदयेत् ॥ धरार्द्धं वा चतुर्भागं गुरवे प्रतिपादयेत् ॥ २७ ॥ अनेन विधिना यस्तु दद्याद्देवीं धरां बुधः ॥ पुण्यकाले च संप्राप्ते स पदं याति वैष्णवम् ॥ ॥ २८ ॥ यदि कर्तुं न शक्नोति पुण्येह्नि बहुविस्तरम् ॥ संस्थाप्य शोभने स्थाने महीमेव प्रदापयेत् ॥ २९ ॥ विमानेनार्कवर्णेन किंकिणीजालमालिना ॥ नारायणपुरं गत्वा कल्पत्रयमथावसेत् ॥ ३० ॥ क्षीणपुण्य इहाभ्येत्य राजा भवति धार्मिकः ॥ विजयी शत्रुदमनो बहुभृत्यपरिच्छदः ॥ ३१ ॥ शतकोट्यधिपः शूरश्चक्रवर्ती महाबलः ॥ सप्त जन्मानि दानस्य माहात्म्याद्राज्यमाप्नुयात् ॥ ३२ ॥ द्वीपाविकर्पविषमां विधिवद्विधाय हैमीं महीं सुरमहीमिव विन्ध्यमध्याम् ॥ लोकेशशंभुशिवकेशवसंयुतां च प्रायच्छ पार्थ तव किं बहुनोदितेन ॥ ३३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे पृथिवीदानविधिवर्णनं नाम पंचषष्ट्युत्तरशततमोऽध्यायः ॥ १६५ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अतः परं प्रवक्ष्यामि दानमत्यद्भुतं तव ॥ येन दत्तेन राजेन्द्र सर्वदानप्रदो भवेत् ॥ १ ॥ सर्वपापप्रशमनं सर्वसौख्यप्रदायकम् ॥ प्रयुक्तं हलपंक्त्या च सर्वदानफलप्रदम् ॥ २ ॥ पंक्तिर्दशहला प्रोक्ता हलं स्याच्च चतुर्गवम् ॥ सारदारुमयान्याहुर्हलानि दश पंडिताः ॥३॥ सौवर्णपट्टसंनद्धर

१ श्रीखण्डशकटानि च–इ० पा० । २ उदाहरेत्–इ० पा० । ३ तस्मात्–इ० पा० । ४ संसारसागरात्–इ० पा० । ५ संधार्य–इ० पा० । ६ पुण्येश्च–इ० पा० । ७ बहुवित्तपरिच्छदः–इ०, बहुवृत्तपरिच्छदः–इ० च पा० । ८ शतकोशाधिपः–इ० पा० । ९ परम्–इ० पा० । १० सारदारुमयान्कृत्वा हलान्दश विचक्षणः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्नवंति शुभानि च ॥ यूनश्च बलिनो भव्यान्व्यंगहीनान्स्वलंकृतान् ॥ ४ ॥ वस्त्रकांचनपुष्पैश्च चंदनैर्दिग्धमस्तकान् ॥ अभग्नान्योजयेत्तेषु लांगलेषु वृषाञ्छुभान् ॥ ५ ॥ योक्त्राणि युगलग्नानि सवृषाणि च कारयेत् ॥ प्रतोदकीलकाबंधसर्वोपकरणान्विताम् ॥ ६ ॥ एवं विधहलैः कुर्यात्संयुक्तां हलपंक्तिकाम् ॥ कर्कटं खेटकं चापि ग्रामं वा सस्यमालिनम् ॥ ७ ॥ निवर्तनशतं वापि तदर्द्धं वा प्रकल्पयेत् ॥ एवंविधां पर्वकाले दद्यात्प्रयतमानसः ॥ ८ ॥ कार्तिक्यां चाथ वैशाख्यामुत्तरे वाऽयने तथा ॥ जन्मर्क्षे ग्रहणे वापि विषुवे वा प्रदापयेत् ॥ ९ ॥ ब्राह्मणान्वेदसंपन्नान्व्यंगहीनानलंकृतान् ॥ श्रोत्रियांश्च विनीतांश्च हलसंख्यान्निमंत्रयेत् ॥ १० ॥ दशहस्तप्रमाणेन मंडपं कारयेद्बुधः ॥ पूर्वे द्विकुंडमेकं वा हस्तमात्रं सुशोभनम् ॥ ११ ॥ तत्र व्याहृतिभिर्होमं कुर्युस्ते द्विजसत्तमाः ॥ पर्जन्यादित्यरुद्रेभ्यः पायसेन यजेद्बुधः ॥ १२ ॥ पालाश्यः समिधस्तत्र ह्याज्यं कृष्णास्तिलास्तथा ॥ अधिवास्य च तां पंक्तिं धान्यमध्यगतां शुभाम् ॥ १३ ॥ ततः सर्वसमीपे तु स्नातः शुक्लांबरः शुचिः ॥ हलपंक्तिं योजयित्वा यजमानः समाहितः ॥ १४ ॥ तूर्यशंखनिनादैश्च ब्रह्मघोषैः सुपुष्कलैः ॥ इममुच्चारयेन्मंत्रं गृहीतकुसुमांजलिः ॥ १५ ॥ यस्माद्देवगणाः सर्वे हले तिष्ठंति सर्वदा ॥ वृषस्कंधे संनिहितास्तस्माद्भक्तिः शिवेस्तु मे ॥ १६ ॥ यस्माच्च भूमिदानस्य कलां नार्हंति षोडशीम् ॥ दानान्यन्यानि मे भक्तिर्धर्मे चास्तु दृढा सदा ॥ १७ ॥ एवमुक्ते ततः पंक्तिं प्रेरयेयुर्द्विजोत्तमाः ॥ बीजानि सर्वरत्नानि सुवर्णं रजतं तथा ॥ १८ ॥ स्वयं पश्चाद्धले लग्नो विप्रहस्तेषु निर्वपेत ॥ यायान्निवर्तनं यावत्ततस्तु विरमेद्बुधः ॥ १९ ॥ प्रदक्षिणं ततः कृत्वा विप्राणां प्रतिपाद्य च ॥ सदक्षिणां विधानेन प्रणिपत्य विसर्जयेत् ॥ २० ॥ अनेन विधिना यस्तु दानमेतत्प्रयच्छति ॥ एकविंशत्कुलोपेतः स्वर्गलोके महीयते ॥ २१ ॥ सप्तजन्मसु दारिद्र्यंदौर्भाग्यं व्याधयस्तथा ॥ न पश्यति च भूमेस्तु तथैवाधिपतिर्भवेत् ॥ २२ ॥ दृष्ट्वा तद्दीयमानं तु दानमेतद्युधिष्ठिर ॥ आजन्मनः कृतात्पापान्मुच्यते नात्र संशयः ॥२३॥ दानमेतत्प्रदत्तं हि दिलीपेन ययातिना ॥ शिविना निमिना चैव भरतेन च धीमता ॥ २४ ॥ तेऽद्यापि दिवि मोदंते दानस्यास्य प्रभावतः ॥ तस्मात्सर्वप्रयत्नेन दानमेतन्नृपोत्तम ॥ २५ ॥ दातव्यं भक्तियुक्तेन स्त्रिया वा पुरुषेण वा ॥ यदि पंक्तिर्न विद्येत पंच वा चतुरोऽथ वा ॥ २६ ॥ एकमप्युक्तविधिना हलं देयं विचक्षणैः ॥ २७ ॥ ये संति लांगलमुखोत्थरजोविकारा यावंति तद्गतधुरंधर रोमकाणि ॥ तावंति शंकरपुरे त्रियुगानि तिष्ठेत्पंक्तिप्रदानमिह यत्कुरुते मनुष्यः ॥ २८ ॥ युक्तां वृषैरतिबलैर्हलपंक्तिमेतां पुण्येह्नि भक्तिसहितान्द्विज

१ युगलग्नानि–इ० पा० । २ स्वलंकृतान्–इ० पा० । ३ कारयेत्कुण्डम्–इ० पा० । ४ धनमध्यगतां शुभाम्–इ० पा० । ५ कृषिदानस्य–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुंगवेभ्यः ॥ यच्छंति ये सुकृतिनो वसुधासमेतां ते भूभुजो भुवमुपेत्य भवंति भव्याः ॥ २९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्ण युधिष्ठिरसंवादे हलपंक्तिदानविधिवर्णनं नाम षट्षष्ट्युत्तरशततमोऽध्यायः॥१६६॥ ॥छ॥ ॥ युधिष्ठिर उवाच ॥ ॥ तन्मे कथय देवेश येन दत्तेन मानवः॥बहुपुत्रो बहुधनो बहुभृत्यश्च जायते ॥१॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पुरा भारत वंशेस्मिन्राजासीद्धव्यवाहनः॥ पितृपैतामहं तेन प्राप्तं राज्य मकंटकम् ॥२॥ न तस्य राज्ये विध्वंसो न वैरिजनितं भयम् ॥ शरीरोत्थमहाव्याधिर्नैवांतरदायकः ॥३॥ तस्यैवं कुर्वतो राज्यं पूर्वकर्मार्जिताशु भात् ॥ नास्ति भृत्यो भारसहः सर्वराज्यधुरंधरः ॥४॥ न पुत्रः प्रियकृत्कश्चिन्न मंत्री मधुराक्षरः ॥ न मित्रं कार्यकरणे समर्थो न सुहृत्तथा ॥ ५ ॥ न भोज्यसमये प्राप्ते भोजनं सार्वकामिकम् ॥ न पूगफलसंयुक्तं तांबूलं वसनं नच ॥ ६ ॥ न धनं जनसंबन्धकारको रत्नसंचयः ॥ तस्यैवं कुर्वतो राज्यमव्याहतमचेष्टितम् ॥ ७ ॥ अथैकस्मिन्दिने विप्रः पिप्पलादोऽतिविश्रुतः ॥ आजगाम महायोगी राज्ञः पार्श्वं महाद्युतिः ॥ ८ ॥ तमागतं मुनिं दृष्ट्वा राजपत्नी शुभावती ॥ पाद्यार्घ्यासनदानेन सर्वथा तमपूजयत् ॥ ९ ॥ ततः कथां ते कस्मिंश्चित्तमुवाच शुभावती ॥ भगवन्राज्यमेतन्नः सर्वबाधाविवर्जितम् ॥ १० ॥ कस्मान्नभृत्याः पुत्रा वा मंत्रिमित्रादिकं द्विज ॥ भोगावाप्तिर्न च तथा सर्वलोकातिशायिनी ॥ ११ ॥ ॥ पिप्प लाद उवाच ॥ ॥ यद्येन पूर्वविहितं तदसौ प्राप्नुते फलम् ॥ कर्मभूमिरियं राज्ञि नातः शोचितुमर्हसि ॥ १२ ॥ न तत्कुर्वंति राजानो न दायाद न शत्रवः ॥ न बांधवा न मित्राणि यद्येन न पुरा कृतम् ॥ १३ ॥ तस्माद्भवद्भिर्यद्दत्तं प्राप्तं तद्राज्यमुत्तमम् ॥ भृत्यमित्रादिसंबंधो न दत्तः प्राप्यते कुतः ॥ १४ ॥ ॥ शुभावत्युवाच ॥ ॥ इदानीमेव विप्रर्षे कस्मात्तन्नोपदिश्यते ॥ येन मे बहवः पुत्रा धनं भृत्या भवंति वै ॥ १५ ॥ मंत्रो वा सिद्धयोगो वा व्रतं दानमुपोषितम् ॥ कथयस्वामलमते येन संपद्यते सुखम् ॥ १६ ॥ ततः स कथयामास पिप्पलादो द्विजोत्तमः ॥ आपाकाख्यं महादानं सर्वसंपत्प्रदायकम् ॥ १७ ॥ श्रद्धया कुरुशार्दूल नारी वाप्यथ वा पुमान् ॥ येन दत्तेन भाग्यानां बहूनां भाजनं भवेत् ॥ १८ ॥ तच्छ्रुत्वा स ददौ राजाऽऽपाकाख्यं दानमुत्तमम् ॥ लेभे पुत्रान्पशून्भृत्यान्मंत्रिमित्रसुहृज्जनान्॥ १९ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ आपाकाख्यं महादानं कथयामि युधिष्ठिर ॥ दत्तेन येन कामानां पुमान्भवति भाजनम् ॥ २० ॥ ग्रहताराबलं लब्ध्वा भार्गवं पूजयेच्छुभम् ॥

१ भुवि भवंति समेत्य भव्याः–इ० पा० । २ तांबूलसेवनम्–इ० पा० । ३ तथा–इ० पा० । ४ अव्याहतविचेष्टितम्–इ० पा० । ५ राज्ञोसशी–इ० पा० । ६ हि–इ० पा० । ७ अस्मै–इ० पा० । ८ भानुमत्युवाच–इ० पा० । ९ मुने–इ० पा० । १० कुलालमित्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वासोभिर्भूषणैश्चैव पुष्पैरगरुचंदनैः ॥ २१ ॥ कुर्यात्तथैव सम्मानं यथा तुष्टोऽभिजायते ॥ कुरुष्व त्वं मे भांडानि गुरूणि च लघूनि च ॥ २२ ॥ मणिकादीनि शुभ्राणि स्थाल्यश्च सुमनोहराः ॥ घटकाः करकाश्चैव गलंत्यः कुंडलानि च ॥ २३ ॥ शरावादीनि पात्राणि भांडमुच्चावचं बहु ॥ संपादय महाभाग विश्वकर्मा त्वमेव हि ॥ २४ ॥ भार्गवोऽपि प्रयत्नेन नानाभांडान्वितं शुभम् ॥ आपाकं कल्पयेद्दिव्यं विधिदृष्टेन कर्मणा ॥२५॥ महस्रमेकं भांडानां स्थापयित्वा विचक्षणः ॥ संध्याकाले ज्वलित्वा तु दद्याचापि हुताशनम् ॥ २६ ॥ रात्रौ जागरणं कुर्याद्गीतमङ्गलनिस्वनैः ॥ ततः प्रभाते विमले ज्ञात्वा निर्वापितं शनैः ॥ २७ ॥ रक्तवस्त्रैः समाच्छाद्य पुष्पमालाभिरर्चयेत् ॥ यजमानस्ततः स्नात्वा शुक्लांबरधरः शुचिः ॥ ॥ २८ ॥ हेमरौप्याणि भांडानि ताम्रलोहमयानि च ॥ परितः स्थापयित्वा च स्वशक्त्या तानि षोडश ॥ २९ ॥ पूजयित्वा प्रयत्नेन कृत्वा चारु प्रदक्षिणाम् ॥ ब्राह्मणान्पूजयित्वा च भार्गवं पूज्य यत्नतः ॥ ३० ॥ नार्यश्चाविधवास्तत्र समानीय प्रपूज्य च ॥ प्रदक्षिणं ततः कृत्वा मंत्रेणानेन पूजयेत् ॥ ३१ ॥ आपाकब्रह्मरूपोसि भांडानीमानि जंतवः ॥ प्रदानात्ते प्रजापुष्टिः स्वर्गश्चास्तु ममाक्षयः ॥ ३२ ॥ भांडरूपाणि यान्यत्र कल्पितानि मया किल ॥ भूत्वा सत्पात्ररूपाणि उपतिष्ठंतु तानि मे ॥ ३३ ॥ इति दानमंत्रः ॥ या च यद्भांडमादत्ते तस्यैतद्दापयेत्ततः ॥ स्वेच्छया चैव गृह्णातु न निवार्यास्तु काश्चन ॥ ३४ ॥ अनेन विधिना यस्तु दानमेतत्प्रयच्छति ॥ विश्वकर्मा भवेत्तुष्टस्तस्य जन्मत्रयं नृप ॥ ३५ ॥ नारी च दत्त्वा सौभाग्यमतुलं प्रतिपद्यते ॥ गृहं सर्वगुणोपेतं भृत्यमित्रजनैर्वृतम् ॥ ३६ ॥ अवियोगं सदा भर्त्रा रूपं चानुत्तमं लभेत् ॥ भूदानमेतन्निर्दिष्टं प्रकारेण तवानघ ॥ भिद्यते बहुभिर्भेदैर्भूमिरेषा नरेश्वर ॥ ३७ ॥ निष्पाद्य भांडनिचयोच्चतरं प्रयत्नादापाकदानमिह या कुरुते वरस्त्री ॥ सा पुत्रपौत्रपशुवृद्धिसुखानि भुक्त्वा प्रेत्य स्वभर्तृसहिता सुखिनी सदास्ते ॥ ३८ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवाद आपाकदानविधिवर्णनं नाम सप्तषष्ट्युत्तरशततमोऽध्यायः ॥ १६७ ॥ ॥ छ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ सर्वशास्त्रार्थतत्त्वज्ञ ज्ञानविज्ञानपारग ॥ गृहदानस्य माहात्म्यं विधिं वद विदांवर ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ न गार्हस्थ्यात्परो धर्मो नास्ति दानं गृहात्परम् ॥ नानृतादधिकं पापं न पूज्यो ब्राह्मणात्परः ॥ २ ॥ धनधान्यसमायुक्तं कलत्रापत्यसंकुलम् ॥ ३ ॥

१ ज्वलित्वा तु-इ०, ज्वलित्वा तु-इ० च पा०। २ मंत्रैः-इ० पा०। ३ समामाय-इ० पा०। ४ तेजआपुष्टिः-इ० पा०। ५ तथा सदा-इ० पा०। ६ सर्वगुणोपेतं भृत्यमित्रजनैर्वृतम्। ७ अवियोगं च भर्तुर्वा रूपं चानुत्तमं लभे-इ० पा०। ८ नह निर्विंशः-इ० पा०। ९ न गार्ह्यी-इ० पा०। १० विधिविदांवर-इ० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोगजाश्वगणाकीर्णं गृहं स्वर्गाद्विशिष्यते ॥ यथामातरमाश्रित्य सर्वे जीवंति जंतवः ॥ ४ ॥ एवं गृहस्थमाश्रित्य वर्तयंतीतराश्रमाः ॥ धर्मश्चार्थश्च कामश्च मित्राणि प्रथितं यशः ॥ ५ ॥ प्राप्तकामैर्नरैः पार्थ सदा सेव्यो गृहाश्रमः ॥ न गृहेण विना धर्मो नार्थकामौ सुखं न च ॥ ६ ॥ न लोक पंक्तिर्न यशः प्राप्यते त्रिदशैरपि ॥ न तत्स्वर्गे नापवर्गे नतत्केनोपमीयते ॥ ७ ॥ प्रसार्य पादौ यद्रात्रौ स्वगृहे स्वपतां सुखम् ॥ दिनानि नास्य गण्यंते नैनमाहुर्महाशनम् ॥ ८ ॥ अपि शाकं पचानस्य स्वगृहे परमं सुखम् ॥ इति मत्वा महाराज कारयित्वा सुशोभनम् ॥ ९ ॥ भवनं ब्राह्मणे देयं भव्यभूतिमभीप्सता ॥ कारयित्वा दृढस्तंभं शुभपक्केष्टकामयम् ॥ १० ॥ शुभं कमठपृष्ठाभं भाभासितदिगंतरम् ॥ सुधानुलिप्तं गुप्तं च सुख शालाविराजितम् ॥ ११ ॥ दद्यादनंतफलदं शैववैष्णवयोगिनाम् ॥ प्रतिश्रये तु विस्तीर्णे कारिते सजले घने ॥ १२ ॥ दीनानाथजलार्थाय कृतं किं नकृतं भवेत् ॥ कारयित्वा गृहान्पश्चाद्दद्विप्रद्वार्कसंख्यया ॥ १३ ॥ कुड्यस्तंभगवाक्षाढ्यान्विचित्रान्बहुभूमिकान् ॥ सप्राकारप्रतोलीकान्कपाटार्गलयंत्रितान् ॥ १४ ॥ सुधाधवलितान्रम्यान्विस्तीर्णांगणवाटिकान् ॥ प्रवेशनिर्गमयुतान्समासन्नजलाशयान् ॥ १५ ॥ लोहोपस्करसंपूर्णांस्ताम्रोपस्करसंयुतान् ॥ स्वर्णोपस्करशोभाढ्यान्रौप्योपस्करसंकुलान् ॥ १६ ॥ रत्नोपस्करसंयुक्तान्कांस्योपस्करमंडितान् ॥ आरकूटत्रपुसीसदानोपस्करवर्जितान् ॥ १७ ॥ वंशोपस्करसकीर्णान्काष्ठोपस्कर बृंहितान् ॥ मृन्मयोपस्कराकीर्णान्वस्त्रोपकरणान्वितान् ॥ १८ ॥ धर्मोपस्करसंभारशणवल्कलराजितान् ॥ राजितांस्तृणपापाणैः सर्वोपस्करभूषितान् ॥ १९ ॥ सप्तधातुमयं भांडं यत्तद्रत्नसमुद्भवम् ॥ चर्मकाष्ठमहाभांडं नववस्तुमयं तथा ॥ २० ॥ गोमहिष्यश्ववृषभप्रेष्यवेश्यागणान्वितान् ॥ क्षेत्रारामजलासन्नान्काम्यान्हर्म्यवराञ्छुभान् ॥ २१ ॥ संपूर्णान्सर्वधान्यैस्तु घृततैलगुडादिभिः ॥ तिलतंडुलशालीक्षुमुद्गगोधूमसर्षपैः ॥ २२ ॥ निष्पावाढक्यचणककुलत्थाणुमसूरकैः ॥ कंगुमापयवाद्यैर्व्याञ्छाकवृंताकपूरितान् ॥ २३ ॥ लवणार्द्रकखर्जूरद्राक्षाजीरकधान्यकैः ॥ हिंगुकुंकुमकर्पूरस्नानद्रव्यैः सचंदनैः ॥ २४ ॥ धूपोपस्करपर्युततूलीगण्डोपधानकैः ॥ चुंल्लीच्छेदनमंथानभद्रासनकगुच्छकैः ॥ २५ ॥ पिठरोलूखलस्थालीशूर्पदर्पणपत्रकैः ॥ मुशलासिक्तपाणीषुदंडकोदंडमुद्गरैः ॥ २६ ॥

१ आसाद्य—इ० पा० । २ वर्तयन्ते तथाश्रमाः—इ० पा० । ३ गृहाश्रमी—इ० पा० । ४ गृहं सुब्राह्मणे—इ० पा० । ५ भार्या भूमिमभीप्सिता—इ० पा० । ६ पक्वेष्टकामयं नवम्—इ० पा० । ७ दानं तत्फलदम्—इ० पा० । ८ रौप्योपस्करमंडितान्—इ० पा० । ९ वंशोपस्करसंपूर्णान्काष्ठोपस्करसंहितान्—इ० पा० । १० धर्मोपस्करसंयुक्तान्—इ० पा० । ११ सुवर्णोपस्करान्वितान्—इ० पा० । १२ चर्मकाष्ठमहीभारं दत्त वस्त्रमयं तथा—इ० पा० । १३ सप्तधान्यैस्तु—इ० पा० । १४ चुल्लीच्छेदनमन्थनभद्रासनकुकुच्छकैः—इ० पा० । १५ पिठरोलूखलस्थालीशूर्पदर्पणपत्रगैः—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गृहाटवाटकादर्वीदृपल्लोपुष्कहस्तकैः ॥ चात्रकांशुकलोहादिदीतमंथनिकादिभिः ॥२७॥ कंडणी पेषणी चुल्ली उदकुम्भी प्रमार्जनी ॥ मंजूषाकोष्ठका संदीकंबलैस्तंतुरांकवैः ॥ २८ ॥ इत्येवमादिभिः पूर्णान्गृहान्दद्याद्द्विजातिषु ॥ कर्तुश्चंद्रबलोपेते स्थिरनक्षत्रसंयुते ॥ २९ ॥ शुभेऽह्नि विप्रकथिते दानकालः प्रशस्यते ॥ एवं संभृतसंभारो यजमानः स्वयं द्विजान् ॥ ३० ॥ कुलशीलसमायुक्तान्गृहसंख्यान्निमंत्रयेत् ॥ अधीतवेदाञ्छास्त्रज्ञान्पुराणस्मृतिपारगान् ॥ ३१ ॥ गृहस्थधर्मनिरताञ्छांतान्दांताञ्जितेंद्रियान् ॥ अलंकृत्य सपत्नीकान्वासोभिरथ पूजयेत् ॥ ३२ ॥ सुगंधिस्रग्धरान्कृत्वा शांतिकर्मणि योजयेत् ॥ गृहांगणे कारयित्वा कुंडमेकं समेखलम् ॥ ३३ ॥ ग्रहयज्ञः प्रकर्तव्यस्तुष्टिपुष्टिकरः सदा ॥ राक्षोघ्नानि च सूक्तानि पठेयुर्ब्राह्मणास्ततः ॥ ३४ ॥ वास्तुपूजा प्रकर्तव्या दिक्षु भूतबलिं क्षिपेत् ॥ ततः पुण्याहघोषेण ब्राह्मणांस्तेषु वेश्मसु ॥ ३५॥ प्रवेशयित्वा शय्यासु सभार्यानुपवेशयेत् ॥ यजमानस्ततः प्राज्ञः शुक्लांबरधरः शुचिः ॥ ३६ ॥ यद्यस्य विहितं पूर्वं तत्तस्य प्रतिपादयेत् ॥ इदं गृहं गृहाण त्वं सर्वोपस्करसंयुतम् ॥ ३७ ॥ तव विप्र प्रसादेन ममास्त्वभिमतं फलम् ॥ एवमेकैकशो दत्त्वा प्रणिपत्य क्षमापयेत् ॥ ३८ ॥ स्वस्तीति ब्राह्मणैर्वाच्यं कोदादिति च पूजितैः ॥ गृहोपकरणैस्तुल्या दक्षिणा भवनं विना ॥ ३९ ॥ उपदेष्टारमापृच्छेत्तन्मूलत्वान्महर्षयः ॥ स्वयं तान्पूजयित्वा तु ततः स्वभवनं व्रजेत् ॥ ४० ॥ दद्यादनेन विधिना गृहमेकं बहूनपि ॥ न संख्यानियमः कार्यः शक्तिरत्र नियामिका ॥ ४१ ॥ शीतवातातपहरं दत्त्वा तृणकुटीरकम् ॥ इष्टान्कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥ ४२ ॥ किं पुनर्बहुनोक्तेन सर्वोपस्करभूषिताम् ॥ अत्यंतसुखलुब्धेन दत्त्वा ब्रह्मपुरीं प्रियाम् ॥ ४३ ॥ गोभूहिरण्यदानानि यमाः सनियमास्तथा ॥ गृहदानस्य कौंतेय कलां नार्हंति षोडशीम् ॥ ४४ ॥ यः कारयेत्सुदृढहर्म्यवतीं महार्हां सत्सेवितां द्विजपुरीं सुजनोपभोग्याम् ॥ दिव्याप्सरोभिरभिनंदितचित्तवृत्तिः प्राप्नोत्यसावनवमं पदमिंदुमौलेः ॥ ४५ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे गृहदानविधिवर्णनं नामाष्टषष्ट्युत्तरशततमोऽध्यायः ॥ १६८ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अन्नदानस्य माहात्म्यं कथयामि तवानघ ॥ यत्प्रोक्तमृषिभिः पूर्वं तदिहैकमनाः शृणु ॥ १ ॥ ददस्वान्नं ददस्वान्नं ददस्वान्नं युधिष्ठिर ॥ सद्यस्तुष्टिकरं लोके किं दत्तेन परेण ते ॥२॥ रामेण दशरथिना वनस्थेन निजानुजः ॥ निर्वेदाद्यत्पुरा प्रोक्तस्तदहं प्रब्रवीमि ते ॥ ३ ॥ पृथिव्यामन्नपूर्णायां वयमन्नस्य कांक्षिणः ॥ सौमित्रे नूनमस्माभिर्न ब्राह्म

१ स्वस्तीति ब्राह्मणैर्वाच्यम्–इ० पा० । २ दद्यात्–इ० पा० । ३ महार्हान्–इ० पा० । ४ अपरेण–इ० पा० । ५ तवापि कथयामि ते–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णमुखे हुतम् ॥ ४ ॥ यदुच्यते कर्मबीजं तस्यावश्यं फलं नरैः ॥ प्राप्यते लक्ष्मणास्माभिर्नान्नं विप्रमुखे हुतम् ॥ ५ ॥ यन्न प्राप्यं तदप्राप्यं विद्यया पौरुषेण वा ॥ सत्यो लोकप्रवादोऽयं नादत्तमुपतिष्ठति ॥ ६ ॥ भक्षोपयोगादन्नस्य दानं श्रेयस्करं परम् ॥ ७ ॥ प्रकारांतरभोज्यानि दानान्यन्यानि भारत ॥ अन्नमेव परं दानं सत्यवाक्यं परं पदम् ॥ ८ ॥ बुद्धिश्चार्थात्परो लोभः सन्तोषः परमं सुखम् ॥ स्नातानामनुलिप्तानां भूषितानां च भूषणैः ॥ ९ ॥ न सुखं न च सन्तोषो भवेदन्नादृते नृणाम् ॥ श्वेतो नाम महीपालः सार्वभौमोऽभवत्पुरा ॥ १० ॥ तेनेष्टं बहुभिर्यज्ञैः संग्रामा बहवो जिताः ॥ दानानि च प्रदत्तानि धर्मतः पालिता मही ॥ ११ ॥ भुक्ता भोगाः सुविपुलाः शत्रूणां मूर्धनि स्थितम् ॥ वानप्रस्थेन विधिना त्यक्ता राजश्रियं नृप ॥ १२ ॥ स्वर्गं जगाम भुक्त्वा तु पूज्यमानो मरुद्गणैः ॥ विमानमर्कप्रतिमं प्रतिपेदे मुदा युतः ॥ १३ ॥ तत्रास्ते रममाणोऽसौ साकं विद्याधरैः सुखम् ॥ प्रसिद्धैः स्तूयते सिद्धैः सेव्यतेऽप्सरसां गणैः ॥ १४ ॥ गंधर्वैर्गीयते हृष्टैः शक्रेणाप्यनुगम्यते ॥ दिव्यमाल्यांबरधरो दिव्याभरणभूषितः ॥ १५ ॥ स च नित्यं विताना्ग्यादवतीर्य महीतलम् ॥ स्वमांसान्यत्ति कौंतेय पूर्वं त्यक्ता कलेवरम् ॥ १६ ॥ तच्छरीरं तथैवास्ते रक्षितं पूर्वकर्मभिः ॥ स कदाचित्सुरेशानं ब्रह्माणं समुपस्थितः ॥ १७ ॥ प्रणम्य प्रांजलिर्भूत्वा निर्वेदादिदमब्रवीत् ॥ भगवंस्त्वत्प्रसादेन प्राप्तं स्वर्गसुखं मया ॥ १८ ॥ सर्वेषामपि संपूज्यः सुराणां सुरपुंगव ॥ किं तु क्षुद्बाधतेऽत्यर्थं स्वर्गस्थस्यापि मे प्रभो ॥ १९ ॥ यया मांसान्यहं स्वस्य भक्ष्ययाम्यशनं विना ॥ ॥ ब्रह्मोवाच ॥ ॥ श्वेताभिजनसंपन्न श्वेत शृणु वचो मम ॥ २० ॥ त्वयाधीतं हुतं दत्तं गुरवः परितोषिताः ॥ नाशनं भवता दत्तं यद्द्विजेभ्यो नराधिप ॥ २१ ॥ अनन्नदानस्य फलं त्वयेदमुपभुज्यते ॥ तद्यन्नदानतो नान्यच्छरीरारोग्यकारकम् ॥ ॥ २२ ॥ नान्यदन्नादृते पुंसां किञ्चित्सञ्जीवनौषधम् ॥ महीं गत्वा महाराज कुरुष्व वचनं मम ॥ २३ ॥ तपः स्वाध्यायसंपन्ने शास्त्रज्ञे संजितेन्द्रिये ॥ येन संपद्यते तृप्तिरक्षया क्ष्मापते तव ॥ २४ ॥ विरिंचेर्वचनाद्गत्वा त्वरायुक्तो महीतलम् ॥ अगस्त्यं भोजयामास भक्त्या भरतसत्तम ॥ ॥ २५ ॥ भोजयित्वा ततः प्रादाद्दक्षिणां क्षीणकल्मषः ॥ एकावलिं स्वकात्कण्ठात्समुत्तार्य समुज्ज्वलाम् ॥ २६ ॥ ततो दुन्दुभिघोषेण पूजितः सुरसत्तमैः ॥ श्वेतस्तृप्तो गतः स्वर्गं दत्त्वान्नं दक्षिणायुतम् ॥ २७ ॥ पौलस्त्ये निहते पश्चाद्देवदानवसंकटे ॥ रामायैकावलिं प्रादादगस्त्यः परया मुदा ॥ २८ ॥ एतदन्नस्य माहात्म्यं कथयाम्यपरं च ते ॥ नचान्नादपरं किञ्चित्सत्यं तव मयोदितम् ॥ २९ ॥ अन्नं वै प्राणिनां प्राणा अन्न



१ श्रेयःफलम्–इ० पा०। २ नानाविधानि–इ० पा०। ३ संग्रामात्–इ० पा०। ४ अनुगीयते–इ० पा०। ५ जायते–इ० पा०। ६ प्राणिनः–इ० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मोजो वलं सुखम् ॥ एतस्मात्कारणात्सद्भिरन्नदः प्राणदः स्मृतः ॥ ३० ॥ सुदूरादाशया यस्य गृहं प्राप्ता बुभुक्षिताः ॥ तृप्ताः प्रतिनिवर्तंते कोऽन्य स्तत्सदृशः पुमान् ॥३१॥ दीक्षितः कपिला सत्री राजा भिक्षुर्महोदधिः ॥ दृष्टमात्रा पुनंत्येते तस्मात्पश्यंति नित्यशः ॥ ३२ ॥ एकस्याप्यतिथे रन्नं यः प्रदातुमशक्तिमान् ॥ तस्याऽऽरम्भैः परिक्लेशैर्वसतः किं फलं गृहे ॥ ३३ ॥ शक्यते दुष्करेऽप्यर्थे चिररात्राय जीवितुम् ॥ नत्वाहारविही नेन शक्यं वर्तयितुं चिरम् ॥ ३४ ॥ भुक्त्वा गृहे गृहस्थस्य मैथुनं यश्च सेवते ॥ यस्यान्नं तस्य ते पुत्रा इति प्राहुर्मनीषिणः ॥ ३५ ॥ दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ॥ यो यस्यान्नं समश्नाति स तस्याश्नाति दुष्कृतम् ॥ ३६ ॥ वनस्पतिगते सोमे परान्नं यस्तु भुंजति ॥ तस्य मासकृतं पुण्यं दातारमुपगच्छति ॥ ३७ ॥ कस्मान्न दीयते नित्यं कस्मादन्नं न दीयते ॥ यस्येदृशी फलावाप्तिः कथिता पूर्वसूरिभिः ॥ ३८ ॥ भिक्षां वा पुष्कलां वापि हंतकारं द्विजातये ॥ भोजनं वा यथालाभमदत्त्वाश्नाति किल्बिषम् ॥ ३९ ॥ येनायुतं सहस्रं वा भोजितं स्याद्विजन्म नाम् ॥ तेन ब्रह्मगृहासन्नं नूनं बद्धं कुटीरकम् ॥ ४० ॥ वाराणस्यां पुरा पार्थ वणिगापणजीवनः ॥ धनेश्वर इति ख्यातो देवब्राह्मणपूजकः ॥ ४१ ॥ तस्यापणैकदेशे तु मुक्त्वांडं पांडुरच्छवि ॥ ससर्प सर्पस्तद्देशाद्वणिग्दृष्ट्वा विशंकितः ॥ ४२ ॥ तदंडं वणिजा तेन दृष्टं कारुण्यबुद्धिना ॥ ततः प्रभृत्यनुदिनं ररक्ष च पुपोष च ॥ ४३ ॥ निर्जगाम दिनैः कैश्चिद्भित्त्वाडं सर्पपोतकः ॥ तं वणिक्क्षीरपानाद्यैरुपचारैरवर्धयत् ॥ ४४ ॥ लिलिहे घृतभांडानि जिघ्रे च गंधसंचयान् ॥ लुलोठ पांसुप्रकरे चचार वारिमध्यगः ॥ ४५ ॥ वणिजा रक्ष्यमाणः स स्नेहाच्चाहरहः पुनः ॥ जगाम सुमहान्कालोऽभवदेष भयंकरः ॥ ४६ ॥ अथैकस्मिन्दिने गंगां गतः स्नातुं त्रिलोकगाम् ॥ वणिगापणे पण्यविदं स्थापयित्वा सुतं मतम् ॥ ४७ ॥ व्यवंहर्तु समारब्धं वणिक्पुत्रेण धीमता ॥ ददाति प्रतिगृह्णाति घृततैलयवेक्षवम् ॥ ४८ ॥ व्यवहाराकुलतया पादयोरंतरेण सः ॥ सर्पश्चचाल चापल्याद्वणिग्विक्षेपमभ्यगात् ॥ ४९ ॥ जानन्नपि तद्वृत्तांतं निदाने नियतेर्वशात् ॥ त्रासात्संतर्जयामास बलेन पदचारिणम् ॥ ॥ ५० ॥ स महीतः समुत्थाय मूर्द्धानमवरुह्य च ॥ उवाच दारुणतरं वचनं पन्नगाधमः ॥ ५१ ॥ शरणागतं पोषितं च तव पित्रा प्रियंकरम् ॥ कस्मान्मां हंसि दुष्टात्मन्कथं जीवन्विमोक्ष्यसे ॥ ५२ ॥ अनंतरं कलकलः संजातो रोदतां नृणाम् ॥ धनेश्वरसुतो दष्टः सर्पेणापि भृशाकुलः ॥ ॥ ५३ ॥ अच्युतानंत गोविंद कृष्णकृष्णेत्युदीरयन् ॥ धनेश्वरोप्यनुप्राप्तः प्रोवाचाकुलया गिरा ॥ ५४ ॥ किं कृतं मम पुत्रेण तव पन्नग विप्रि

१ व्यवहारः समारब्धः–इ० पा० । २ फलेन फलभोजिनम्–इ० पा० । ३ अभिगच्छति–इ० पा० । ४ दारुणतमं स्वामिनम्–इ० पा० । ५ रोषणः–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यम् ॥ यदयं भवता मूर्ध्नि स्वभोगेनाभिवेष्टितः ॥ ५५ ॥ मूर्खं मित्रं सुसंबंधं हीनजातिजनो हि यः ॥ यः करोत्यबुधोंगारान्स स्वहस्तेन[1] कर्षति ॥ ॥ ५६ ॥ तमुवाच च सर्पोऽसौ बाष्पगद्गदया गिरा ॥ निरपराधो भवतः पुत्रेणाहं समाहतः ॥ ५७ ॥ तदहं पश्यतस्तेऽद्य दशाम्येनं नराधिप ॥ यथा न भूयो भूतानां भवेदस्मात्क्वचिद्भयम् ॥ ५८ ॥ ॥ धनेश्वर उवाच ॥ ॥ उपकारं व्रतं भक्त्या स्नेहपाशो न यस्य च ॥ सतां मार्गमनाक्रम्य प्रयातः केन वार्यते ॥ ५९ ॥ क्षणमात्रं प्रतीक्षस्व यावदेव शिशुर्मम ॥ और्ध्वदेहिककर्माणि करोति स्वयमात्मनः ॥ ६० ॥ एवमुक्त्वा गृहं गत्वा यतीनां ब्रह्मचारिणाम् ॥ सहस्रं भोजयामास घृतपायसभोजनैः ॥ ६१ ॥ समुत्थाय ततः सर्वे ब्राह्मणा हृष्टमानसाः ॥ वणिक्पुत्रस्योत्तमांगे चिक्षिपुः कुसुमाक्षतान् ॥ ६२ ॥ वणिक्पुत्र चिरं जीव नश्यंतु तव शत्रवः ॥ अभीष्टफलसंसिद्धिरस्तु ते ब्राह्मणाज्ञया ॥ ६३ ॥ ततः स[3] दुष्टप्रकृतिर्विप्रवाग्वज्रताडितः ॥ पन्नगो नगसंकाशः पपात च ममार च ॥ ६४ ॥ विपन्नं पन्नगं दृष्ट्वा त्रस्तचक्षुर्धनेश्वरः ॥ आः किमेतदिति प्रोच्य विषादमगमत्परम् ॥ ६५ ॥ पोषितोऽयं मया बालः पालितो लालितस्तथा ॥ ममापचारात्[4]पंचत्वमापन्नः पवनाशनः ॥ ६६ ॥ उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ॥ अपकारिषु यः साधुः स साधुः सद्भिरिष्यते ॥ ६७ ॥ इत्येवमवधार्यासौ[5] दुःखसंतप्तमानसः ॥ बुभुजे नाकुलतया न च सुष्वाप तां निशाम् ॥ ६८ ॥ ततः प्रभाते गंगायां स्नात्वा संतर्प्य देवताः ॥ सहस्रं भोजयामास पुनरेव द्विजन्मनाम् ॥ ६९ ॥ तैर्भुक्तैरिष्टसंसिद्धैर्ब्राह्मणैरनुमोदितः ॥ वणिक्प्राह ममाभीष्टं संजीवत्वेष पन्नगः ॥ ७० ॥ ततो द्विजवरोन्मुक्तैरंबुभिः परिषिंचितः ॥ उदतिष्ठदहीनांगः सहसा हि महाकुलः ॥ ॥ ७१ ॥ प्रहर्षमतुलं लेभे दृष्ट्वा तं पुरतः स्थितम् ॥ प्रत्यग्रावयवं दृष्ट्वा सृक्किणीपरिलेलिहम्[6] ॥ ७२ ॥ साधुवादो महाञ्जातः प्रशशंसुर्धनेश्वरम् ॥ पुरीनिवासिनः सर्वे विस्मयोत्फुल्ललोचनाः ॥७३॥ सहस्रभोज्यमाहात्म्यं कथितं ते युधिष्ठिर ॥ सम्यक्छ्रद्धाप्रयुक्तस्य किमन्यत्कथयामि ते ॥७५॥ यच्छंति येऽनुदिवसं द्विजपुंगवानामन्नं विशुद्धमनसो भृशमागतानाम् ॥ मर्त्ये विहृत्य सुचिरं ससुहृज्जनास्ते प्रेत्य प्रयांति[7] भवनं मुदिता मुरारेः॥७७॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे अन्नदानमाहात्म्यवर्णनं[8] नामैकोनसप्तत्युत्तरशततमोऽध्यायः ॥ १६९ ॥ छ ॥

॥ युधिष्ठिर उवाच ॥ ॥ अन्नदानप्रसंगेन ममापि स्मृतिमागतम् ॥ ततोऽहं संप्रवक्ष्यामि श्रुतं दृष्टं च यन्मया ॥ १ ॥ अक्षद्यूतेन भगवन्धनं



१ न्वहस्तेनापि कर्षति–इ० पा० । २ दत्त्वा–इ० पा० । ३ सुहृत्प्रकृतिः–इ० पा० । ४ अपकारात्—इ० पा० । ५ संप्रधार्य–इ० पा० । ६ किंकिणीपरिलेलिहम्—इ० पा० । ७ प्रेत्येह–इ० पा० । ८ सदाव्रतवर्णनंनाम–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राज्यं च नो हृतम् ॥ आहूय निष्कृतिप्राज्ञैः कितवैरक्षकोविदैः ॥२॥ वनं प्रस्थापिताः सर्वे वल्कलाजिनवाससः ॥ द्रौपद्या सहिताः कृष्ण कर्णदुर्योधनादिभिः ॥ ३ ॥ ज्ञात्वा वनगतानस्मान्ब्राह्मणाः संजितेंद्रियाः ॥ द्रष्टुमभ्याययुः सर्वे पौराश्चाप्यनुजग्मिरे ॥ ४ ॥ अस्मान्स्नेहात्क्लिश्यमानान्दृष्ट्वा ब्राह्मणसत्तमाः ॥ पौरान्कर्मकरांश्चैव निर्वेदादिदमब्रुवन् ॥ ५ ॥ जीवतो यस्य जीवंति विप्रा मित्राणि बांधवाः ॥ जीवनं तस्य सफलमात्मार्थे को न जीवति ॥ ६ ॥ अभ्यागतं सुहृद्वर्गं कुटुंबमपहाय च ॥ जीवन्नपि मृतः पापः केवलं स्वोदरंभरिः ॥ ७ ॥ इत्येवमवधार्याहं तानृषीन्पुनरब्रुवम् ॥ भवंतः सर्व एवात्र त्रिकालज्ञा महर्षयः ॥ ८ ॥ समागता मत्प्रियार्थं ज्ञानविज्ञानपारगाः ॥ ब्रूत कंचिदुपायं मे भवंतोभिजनं प्रति ॥ ॥ ९ ॥ भवद्भिः सहिताः सर्वे भृत्यैर्भ्रातृभिरेवच ॥ निर्गच्छेयं वने शून्ये द्वादशेमाः समा यथा ॥१०॥ मांमुवाचाथ मैत्रेयः शृणु कौंतेय मद्वचः ॥ पूर्ववृत्तं प्रवक्ष्यामि दृष्टं दिव्येन चक्षुषा ॥ ११ ॥ आसीत्तपोवने काचिद्ब्राह्मणी ब्रह्मचारिणी ॥ दुर्भगा दुर्गता दुःखादाराधयति सा द्विजान् ॥ ॥ १२ ॥ शौचेन तुष्टा मुनयः प्रश्रयेण दमेन च ॥ प्रोचुर्वद विशालाक्षि किं कुर्मस्तव सुव्रते ॥ १३ ॥ सा तानुवाच किं तन्मे व्रतं दानमथापि वा ॥ कथयध्वं भवेयं वै येन श्रीसुखभागिनी ॥ १४ ॥ आधारभूता भूतानां बह्वपत्या पतिप्रिया ॥ स्पृहणीया त्रिजगतां त्रिवर्गफलभागिनी ॥ ॥ १५ ॥ वसिष्ठस्तामुवाचाथ शृणुष्व कथयामि ते ॥ दानं मानकरं पुंसां सर्वकामप्रदायकम् ॥ १६ ॥ कृत्वा ताम्रमयीं स्थालीं पलानां पञ्चभिः शतैः ॥ अशक्तस्तु तदर्द्धेन चतुर्थांशेन वा पुनः ॥ १७ ॥ सर्वशक्तिविहीनस्तु मृन्मयीमपि कारयेत् ॥ सुगंभीरोदरदरीदृढदण्डकुटुंबकाम् ॥ ॥ १८ ॥ मुद्गतंदुलनिष्पन्नसुस्विन्नक्षिप्रपूरिताम् ॥ उपदंशोदकयुतां घृतपात्रसमन्विताम् ॥ १९ ॥ धौतपार्श्वां धौतकर्णां चर्चितां चन्दनेन च ॥ स्थाप्य मंडलके वस्त्रैः पुष्पधूपैरथार्चयेत् ॥२०॥ आदित्येऽहनि संक्रांतौ चतुर्दश्यष्टमीषु वा ॥ एकादश्यां तृतीयायां विप्राय प्रतिपादयेत् ॥ २१ ॥ ज्वलज्ज्वलनपार्श्वस्थैस्तंडुलैः सजलैरपि ॥ न भवेद्भोज्यसंसिद्धिर्भूतानां पिठरीं विना ॥ २२ ॥ त्वं सिद्धिः सिद्धिकामानां त्वं पुष्टिः पुष्टिमिच्छताम् ॥ अतस्त्वां प्रणमाम्याशु सत्यं कुरु वचो मम ॥ २३ ॥ ज्ञातिबंधुसुहृद्वर्गे विप्रे प्रेष्यजने तथा ॥ अभुक्तवति नाश्नीयात्तथा भव वरप्रदा ॥ ॥२४॥ इत्युच्चार्य प्रदातव्या हंडिका द्विजपुंगवे ॥ तुष्टिपुष्टिप्रदा पुंसां सर्वान्कामानभीप्सता ॥ २५ ॥ वसिष्ठवचनं श्रुत्वा सा चकार तथैव तु ॥

१ सफलं जीवितं तस्य–इ० पा० । २ भोजनम्–इ० पा० । ३ निर्दंदेयम्–इ०, निगूंढ्यम्–इ० पा० । ४ अत्र–"मैत्रेय उवाच–शृणु कौंतेय मद्वाक्यमवधानेन यत्नतः"–इति पाठो दृश्यते–स च मूलस्थपाठेनैव गतार्थः । ५ दुर्गतिग्रस्ता देवताचंनतत्परा–इ० पा० । ६ पुरा दृष्टं व्रतं दानमथापि वा–इ० पा० । ७ मानप्रदम्–इ० पा० । ८ वाऽपि–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रादात्स्थालीं ब्राह्मणाय बहूनां बहुदक्षिणाम् ॥ २६ ॥ सा चैषा द्रौपदी पार्थ भवद्भार्याऽभवत्प्रिया ॥ तेन दानप्रभावेण भविताऽशून्यपाणिका ॥ ॥ २७ ॥ एषा सती शची स्वाहा सावित्री भूररुंधती ॥ श्रीरेषा यत्र वसति न किंचित्तत्र दुर्लभम् ॥ २८ ॥ अनया या भृता स्थाली तया सर्व मिदं जगत् ॥ भोजयिष्यसि कौंतेय किमतो ब्राह्मणा अमी ॥ २९ ॥ मैत्रेयात्तदुपश्रुत्य तत्र संहृष्टमानसः ॥ पूर्वं भोजितवानस्मि बहुविप्रजना न्वने ॥ ३० ॥ अन्नदानप्रसंगेन स्थालीदानमिदं मया ॥ कथितं पुण्डरीकाक्ष क्षंतव्यमनसूयया ॥ ३१ ॥ स्थालीं विशालवदनां च सतंडुलां च यच्छंति ये मधुरशुल्बमयीं द्विजेभ्यः ॥ तेषां सुहृत्स्वजनविप्रजनेन भोज्यं संभुज्यमानमपि कृष्ण न याति नाशम् ॥३२॥ इति श्रीभविष्ये महा पुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे स्थालीदानविधिवर्णनं नामसप्तत्युत्तरशततमोऽध्यायः ॥ १७० ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ दासीदानमहं तेऽद्य प्रवक्ष्याम्यरिसूदन ॥ भक्त्या स्नेहाच्च भवतो यन्नोक्तं केनचित्क्वचित् ॥ १ ॥ चतुर्णामाश्रमाणां हि गृहस्थः श्रेष्ठ उच्यते ॥ गृहस्थाच्च गृहं श्रेष्ठं गृहाच्छ्रेष्ठा वराः स्त्रियः ॥ २ ॥ पूर्णेंदुबिंबवदनाः पीनोन्नतपयोधराः ॥ तद्गृहं यत्र दृश्यंते योषितः शीलमंडनाः ॥ ३ ॥ जामयो यत्र पूज्यंते रमन्ते तत्र देवताः ॥ यत्रैतास्तु न पूज्यंते विनंक्ष्यत्याशु तद्गृहम् ॥ ४ ॥ जामयो यानि गेहानि शपंत्यप्रतिपूजिताः ॥ तानि कृत्याहतानीव सद्यो यांति पराभवम् ॥ ५ ॥ अमृतस्येव कुण्डानि सुखानामिवराशयः ॥ रतेरिव निधानानि योषितः केन निर्मिताः ॥ ॥ ६ ॥ श्यामा मंथरगामिन्यः पीनोन्नतपयोधराः ॥ महिष्यो वरनार्यश्च न भवंति गृहेगृहे ॥ ७ ॥ अहिरण्यमदासीकमल्पान्नाज्यमगोरसम् ॥ गृहं कृपणवृत्तीनां नरकस्यापरो विधिः ॥ ८ ॥ अदण्डपाशिकं ग्राममदासीकं च यद्गृहम् ॥ अनाज्यं भोजनं यच्च वृथा तदिति मे मतिः ॥९॥ विभवाभ रणा दास्यो यद्गृहं समुपासते॥ तत्रास्ते पंकजकरा लक्ष्मीः क्षीरोदवासिनी ॥१०॥ न यत्रास्ति गृहे शौचं न सुखं व्यवहारजम्॥ यत्र वा नास्तिदा स्येका तत्सदैवानवस्थितम् ॥११॥ यत्र कर्मकरी नास्ति सर्वकर्मकरी सदा ॥ न तच्छतं किंकराणां करोति शुभतामपि ॥१२॥ यदेका कुरुते दासी गृहस्थेन भृता हि सा ॥ बहुलोकाकुलो ग्रामो दासीदासाकुलं गृहम् ॥१३॥ बुद्धिर्धर्माकुला यस्य तस्य चेतः किमाकुलम्॥ यत्र भार्यागृहे दक्षा दास्य कर्मण्यनुव्रताः ॥१४॥ भृत्याः सदोद्यमपरास्त्रिवर्गस्तत्र दृश्यते॥यद्यदिष्टतमं लोकेतत्तद्देयमिति श्रुतिः ॥१५॥ एतद्विचार्य हृदये देया दासी द्विजातये॥ स्थिरनक्षत्रसंयुक्ते सोमे सौम्यग्रहान्विते ॥१६॥ दानकालं प्रशंसंति संतः पर्वणि वा पुनः॥ अलंकृत्य यथाशक्त्यावासोभिर्भूषणैस्तथा॥१७॥ ब्राह्म

१ मैत्रेयादुपश्रुत्याहमेतद्वृत्तान्तमुत्तमम् ॥ सर्वान्भोजितवानस्मि–इ० पा० । २ हिमांशुबिम्बवदनाः–इ० पा० । ३ तिष्ठति–इ० पा० । ४ शोभने शशलांछने–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णाय प्रदातव्या मंत्रेणानेन कौरव ॥ इयं दासी मया तुभ्यं भगवन्प्रतिपादिता ॥ १८ ॥ कर्मोपयोज्या भोज्या वा यथेष्टं भद्रमस्तु ते ॥ दत्त्वा क्षमापयेत्पश्चाद्ब्राह्मणं कांचनेन तम् ॥१९॥ अनुव्रज्य गृहद्वारं यावत्पश्चाद्विसर्जयेत् ॥ अनेन विधिना दद्यादंकयित्वा सुरालये॥२०॥ मखे चापि महाराज प्रसिद्धे वा प्रतिश्रये ॥ सर्वकर्मकरीं दत्त्वा तरुणीं रूपशालिनीम् ॥२१॥ प्राप्यते यत्फलं पुंभिः पार्थ तत्केन वर्ण्यते ॥ २२ ॥ दासीं समीक्ष्य बहुशो गृहकर्मदक्षां यो ब्राह्मणाय कुलशीलवते ददाति ॥ विद्याधराधिपशतैरपि पूजितोऽसौ लोकं त्रिलोकरमयाप्सरसां प्रयाति ॥ २३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे दासीदानविधिवर्णनं नामैकसप्तत्युत्तरशततमोऽध्यायः ॥ १७१ ॥ छ॥ ॥ युधिष्ठिर उवाच ॥ ॥ प्रपादानस्य माहात्म्यं वद देवकिनंदन ॥ कथं देया कदा देया दाने तस्याश्च किं फलम् ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अतीते फाल्गुने मासि प्राप्ते चैत्रे महोत्सवे ॥ पुण्येऽह्नि विप्रकथिते ग्रहचंद्रबलान्विते ॥ २ ॥ मंडपं कारयेद्विद्वान्घनच्छायं मनोरमम् ॥ पुरस्य मध्ये पथि वा कांतारे तोयवर्जिते ॥ ३ ॥ देवतायतने वापि चैत्यवृक्षतलेऽपि वा ॥ सुशीतलं च रम्यं च विचित्रासनसंयुतम् ॥ ४ ॥ कारयेन्मंडपं भव्यं शीतवातसहं दृढम् ॥ तन्मध्ये स्थापयेद्भक्त्या मणीन्कुंभांश्च शोभनान् ॥ ५ ॥ अकालमूलान्करकान्वस्त्रैरावेष्टितानथ ॥ ब्राह्मणः शीलसंपन्नो वृत्तिं दत्त्वा यथोचिताम् ॥ ६ ॥ प्रपापालः प्रकर्तव्यो बहुपुत्रपरिच्छदः ॥ पानीयपानेनाश्रांतान्यः कारयति मानवान् ॥७॥ एवंविधां प्रपां कृत्वा शुभेऽह्नि विधिपूर्वकम् ॥ यथा शक्त्या नरश्रेष्ठ प्रारंभे भोजयेद्द्विजान् ॥ ८ ॥ ततश्चोत्सर्जयेद्विप्रान्मंत्रेणानेन मानवः ॥ प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता ॥ ९॥ अस्याः प्रदानात्पितरस्तृप्यंतु च पितामहाः ॥ अनिवार्यं ततो देयं जलं मासचतुष्टयम् ॥ १० ॥ त्रिपक्षं वा महाराज जीवानां जीवनं परम् ॥ गंधाढ्यं सुरसं शीतं शोभने भाजने स्थितम् ॥ ११ ॥ प्रदद्यादप्रतिहतं मुखं चानवलोकयन् ॥ प्रत्यहं कारयेत्तस्यां शक्तितो द्विजभोजनम् ॥ १२ ॥ अनेन विधिना यस्तु ग्रीष्मोष्मशोपनाशनम् ॥ पानीयमुत्तमं दद्यात्तस्य पुण्यफलं शृणु ॥ १३ ॥ सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलम् ॥ तत्पुण्यफलमाप्नोति सर्वदेवैः सुपूजितः ॥ १४ ॥ पूर्णचंद्रप्रतीकाशं विमानं सोधिरुह्य च ॥ याति देवेन्द्रनगरे पूज्यमानोऽप्सरोगणैः ॥ १५ ॥ विंशत्कोट्यो हि वर्षाणां यक्षगन्धर्वसेवितः ॥ पुण्यक्षयादिहागत्य चतुर्वेदी द्विजो भवेत् ॥ १६ ॥ ततः परं

१ गौरिव-इ० पा० । २ अद्भुते-इ० पा० । ३ कल्याः-इ० पा० । ४ अथ ना-इ, तथा-इ० पा० । ५ शीतवातमहम्-इति पाठे शीतवाताभ्यां मह उत्सवो यस्मिंस्तमित्यर्थः । ६ भृतिम्-इ० पा० । ७ नु कर्तव्यः-इ० पा० । ८ प्रतिपादने-इ०, प्रतिपादनम्-इ० च पा० । ९ प्रतिपादयेत्-इ० पा० । १० जीविनाम्-इ० पा० । ११ वा न विलोकयेत्-इ० पा० । १२ स्वर्णकुंभप्रतीकाशम्-इ०पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदं याति पुनरावृत्तिदुर्लभम् ॥ प्रपादानासमर्थेन विशेषाद्धर्ममीप्सता ॥ १७ ॥ प्रत्यहं धर्मघटकः कर्पटावेष्टिताननः ॥ ब्राह्मणस्य गृहे नेयः शीतामलजलः शुचिः ॥ १८ ॥ तस्यैवोद्यापनं कार्यं मासिमासि नरोत्तम ॥ मंडकावेष्टिकाभिश्च पक्कान्नैः सार्वकामिकैः ॥ १९ ॥ उद्दिश्य शंकरं विष्णुं ब्रह्माणं कुरुनन्दन ॥ सलिलं प्रोक्षयित्वा तु मंत्रेणानेन मानवः ॥ २० ॥ एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ॥ अस्य प्रदानात्सफला मम संतु मनोरथाः ॥ २१ ॥ ( इति धर्मघटदानमंत्रः ) अनेन विधिना यस्तु धर्मकुंभं प्रयच्छति ॥ प्रपादानफलं सोऽपि प्राप्नोतीह न संशयः ॥ २२ ॥ धर्मकुंभप्रदानेऽपि यद्यशक्तः पुमान्भवेत् ॥ तेनाश्वत्थतरोर्मूलं सेच्यं नित्यं जितात्मना ॥ २३ ॥ अश्वत्थरूपी भगवान्प्रीयतां मे जनार्दनः ॥ इत्युच्चार्य नमस्कृत्य प्रत्यहं पापनाशनम् ॥२४॥ यः करोति तरोर्मूले सेकं मासचतुष्टयम् ॥ सोपि तत्फलमाप्नोति श्रुतिरेषा सनातनी ॥२५॥ सुस्वादुशीतसलिला क्लमनाशिनी च प्रांते पुरस्य पथि पांथसमाजभूमौ ॥ यस्य प्रपा भवति सर्वजनोपभोग्या धर्मोत्तरः स खलु जीवति जीवलोके ॥२६॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे प्रपादानविधिवर्णनं नाम द्विसप्तत्युत्तरशततमोऽध्यायः॥ ॥१७२॥ युधिष्ठिर उवाच ॥ ॥ अग्नीष्टिका कथं देया शिशिरे शीतभीरुभिः ॥ सर्वसत्त्वोपकाराय करुणीकृतमानसैः॥१॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अग्नीष्टिकामहं पार्थ कथयामि निबोध ताम् ॥ यथा येन विधानेन सर्वसत्वसुखप्रदाम् ॥ २ ॥ आदौ मार्गशिरे मासि शोभने दिवसे शुभाम् ॥ अग्नीष्टिकां कारयित्वा सुखासनवतीं शुभाम् ॥ ३ ॥ देवांगणे पथे गेहे विस्तीर्णे चत्वरेथ वा ॥ उभयोः संध्ययोः कृत्वा संशुष्कं काष्ठसंचयम् ॥ ४ ॥ ततः प्रज्वालयेदग्निं हुत्वा व्याहृतिभिः क्रमात् ॥ अनेन विधिना हुत्वा प्रत्यहं ज्वालयेत्ततः ॥ ५ ॥ यदि कश्चित्क्षुधार्थी स्याद्भोज्यं तस्मै प्रकल्पयेत् ॥ सुखासीनो जनस्तत्र विशीतो विज्वरस्तथा ॥ ६ ॥ यः करोति कथाः पार्थ न ताः शक्या मयोदितुम् ॥ राजवार्ता जनवार्ता यदिकश्चिन्निजेच्छया ॥ ७ ॥ वदेल्लोकः सुखासीनो न केनापि निवार्यते ॥ अनेन विधिना यस्तु दद्यादग्नीष्टिकां नरः ॥ ८ ॥ तस्य पुण्यफलं राजन्कथ्यमानं निबोध मे ॥ विमाने चार्कसंकाशे समारूढो महाधने ॥ ९ ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ हर्षितोऽत्यंतसुखितो ब्रह्मलोके महीयते ॥ १० ॥ इह लोकेवतीर्णश्च चतुर्वेदो द्विजो भवेत् ॥ नीरुजः सत्रयाजी च अग्निवत्तेजसान्वितः ॥ ११ ॥ चैत्येसुरांगणसभावसथे



१ ब्रह्मघटः-इ० पा० । २ मासचतुष्टयम्-इ० पा० । ३ कारयेत्तु-इ० पा० । ४ दद्याम्-इ० पा० । ५ तस्य-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुभव्यां येऽग्नीष्टिकां प्रचुरकाष्ठवतीं प्रदद्युः ॥ हेमंतशैशिरऋतौ सुखदा जनानां कायाग्निदीपनमलं पुनराप्नुवंति ॥ १२ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे अग्नीष्टिकादानविधिवर्णनं नाम त्रिसप्तत्युत्तरशततमोऽध्यायः ॥१७३॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ बहुप्रदानं गोदानं त्वत्तो विद्वञ्छ्रुतं मया ॥ भूमिदानस्य माहात्म्यं विधिश्चैवावधारितः ॥ १ ॥ सांप्रतं यदुशार्दूल विद्यादानस्य यो विधिः ॥ तमहं श्रोतुमिच्छामि कथयस्व जनार्दन ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ विद्यादानविधिं वक्ष्ये याथातथ्येन तेऽधुना ॥ यथादेयं फलं यच्च दत्तेन कुरुनंदन ॥ ३ ॥ शुभेऽह्नि विप्रकथिते गोमयेन सुशोभनम् ॥ कारयेन्मंडलं दिव्यं चतुरस्रं समंततः ॥ ४ ॥ पुष्पप्रकरसंछन्नं स्वस्तिकादिविभूषितम् ॥ पुस्तकं तत्र संस्थाप्य गंधपुष्पैः समर्चयेत् ॥ ५ ॥ सौवर्णी लेखनी कार्या रौप्यं च मषिभाजनम् ॥ लेखकं पूजयित्वा तु आरंभं कारयेत्सुधीः ॥ ६ ॥ विनीतश्चाप्रमत्तश्च ततः प्रभृति लेखकः ॥ मात्रानुस्वारसंयुक्तं पदच्छेदसमन्वितम् ॥ ७ ॥ समानि समशीर्षाणि वर्तुलानि घनानि च ॥ लेखयेदक्षराणीह तद्गतेनांतरात्मना ॥ ८ ॥ निष्पादयित्वा तच्छास्त्रं शैवं वाप्यथ वैष्णवम् ॥ निष्पादिते ततः पूज्यो लेखको वस्त्रभूषणैः ॥ ९ ॥ संपूजयित्वा तच्छास्त्रं देयं गुणवते तदा ॥ शास्त्रसद्भावविदुषे वाचके च प्रियंवदे ॥ १० ॥ वस्त्रयुग्मेन संवीतं पुस्तकं प्रतिपादयेत् ॥ सामन्यं सर्वलोकानां स्थापयेदथ वा मठे ॥ ११ ॥ अनेन विधिना दत्त्वा यत्फलं प्राप्नुयान्नरः ॥ तदहं ते प्रवक्ष्यामि युधिष्ठिर निबोध तत् ॥ १२ ॥ यत्पुण्यं तीर्थयात्रायां यत्पुण्यं यज्वनां तथा ॥ तत्पुण्यं कोटिगुणितं विद्यादानाल्लभेन्नरः ॥ १३ ॥ कपिलानां सहस्रेण सम्यग्दत्तेन यत्फलम् ॥ तत्फलं समवाप्नोति पुस्तकस्य प्रदायकः ॥ १४ ॥ पुराणं भारतं वापि रामायणमथापि वा ॥ दत्त्वा यत्फलमाप्नोति पार्थ तत्केन वर्ण्यते ॥ १५ ॥ प्रातरुत्थाय यः शिष्यानध्यापयति यत्नतः ॥ वेदं शास्त्रं नृत्यगीतं कस्तेन सदृशः कृती ॥ १६ ॥ उपाध्यायस्य यो वृत्तिं दत्त्वाऽध्यापयते जनः ॥ किं न दत्तं भवेत्तेन धर्मकामार्थदर्शिना ॥ १७ ॥ छात्राणां भोजनाभ्यंगं वस्त्रं भिक्षामथापि वा ॥ दत्त्वा प्राप्नोति पुरुषः सर्वकामान्न संशयः ॥ १८ ॥ विवेको जीवितं दीर्घं धर्मकामार्थसंपदः ॥ सर्वं तेन भवेद्दत्तं छात्राणां पोषणे कृते ॥ १९ ॥ शास्त्रं शस्त्रकलाशिल्पं यो यदिच्छेदुपार्जितुम् ॥ तस्योपकारकरणे पार्थ कार्यं सदा मनः ॥ २० ॥ वाजपेयसहस्रस्य सम्यगिष्टस्य यत्फलम् ॥ तत्फलं

१ मण्डपम्–इ० पा० । २ विप्रमाकारयेत्–इ० पा० । ३ पदचन्धसमन्वितम्–इ० पा० । ४ सदा–इ० पा० । ५ यज्ञयाजिनाम्–इ० पा० । ६ पुस्तकैकप्रदायकः–इ० पा० । ७ पंक्तिः–इ० पा० । ८ जनम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समवाप्नोति विद्यादानान्न संशयः ॥ २१ ॥ शिवालये विष्णुगृहे सूर्यस्य भवनेऽथ वा ॥ यः कारयति धर्मात्मा सदा पुस्तकवाचनम् ॥ २२ ॥ गोभूहिरण्यवासांसि शयनान्यासनानि च ॥ प्रत्यहं तेन दत्तानि भवंति भरतर्षभ ॥ २३ ॥ धर्माधर्मं न जानाति विद्यया रहितः पुमान् ॥ तस्मात्सदैव धर्मात्मा विद्यादानरतो भवेत् ॥ २४ ॥ त्रैलोक्यं चतुरो वर्णाश्चत्वारश्चाश्रमाः पृथक् ॥ ब्रह्माद्या देवताः सर्वा विद्यादाने प्रतिष्ठिताः ॥ २५ ॥ चतुर्युगानि राजेंद्र एकसप्ततिसंख्यया ॥ कल्पं विष्णुपुरे तिष्ठेत्पूज्यमानः सुरोत्तमैः ॥ २६ ॥ क्षितिं वोपेत्य कालांते राजा भवति धार्मिकः ॥ हस्त्यश्वरथदानाढ्यो दाता भोक्ता विमत्सरी ॥ २७ रूपसौभाग्यसंपन्नो दीर्घायुर्नीरुजो भवेत् ॥ पुत्रैः पौत्रैः परिवृतो जीवेच्च शरदां शतम् ॥ २८ ॥ दानं विशेषफलदं जगतीह नान्याद्विद्यां विहाय वदनाब्जकृताधिवासाम् ॥ गोभूहिरण्यगजवाजिरथादिसर्वं तां यच्छतां किमिह पार्थ भवेन्न दत्तम् ॥ २९ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे विद्यादानविधिवर्णनं नाम चतुःसप्तत्युत्तरशततमोऽध्यायः ॥ १७४ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पुरा प्रियव्रतो राजा पुत्रः स्वायंभुवस्य तु ॥ पालयामास वसुधां प्रजापतिरिवापरः ॥ १ ॥ त्रिंशद्वर्षसहस्राणि पालयित्वा महीमिमाम् ॥ सप्तद्वीपान्विभज्यासौ पुत्रेभ्यः प्रददौ विभुः ॥ २ ॥ राज्ये निक्षिप्य तनयान्सप्तद्वीपेषु सप्त सः ॥ विषयानुपसंहृत्य जगाम तपसे वनम् ॥ ३ ॥ तपोवनगतं श्रुत्वा राजानं परमद्युतिम् ॥ समाजग्मुर्महात्मान ऋषयस्तं दिदृक्षवः ॥ ४ ॥ तानागतानृषीन्दृष्ट्वा तपोनिर्धूतकल्मषान् ॥ पूजयामास मेधावी विधिदृष्टेन कर्मणा ॥ ५ ॥ पाद्यार्घ्याचमनीयेन प्रियप्रश्नोत्तरेण च ॥ अथ तेषूपविष्टेषु ब्राह्मणेषु महात्मसु ॥ ६ ॥ आजगाम महातेजाः पुलस्त्यो ब्रह्मणः सुतः ॥ दीप्यमानो महातेजा द्वितीय इव भास्करः ॥ ७ ॥ तं दृष्ट्वा मुनयः सर्वे स च राजा महारथः ॥ उत्तस्थुर्विस्मिताः सर्वे प्रोत्फुल्लनयनास्ततः ॥ ८ ॥ कृत्वा तु संविदं तेन यथायोग्यं विधानतः ॥ विष्टरं च ददुस्तस्मै पाद्यार्घ्याचमनादिकम् ॥ ९ ॥ ततस्तु मुनयः सर्वे समासीना यथासुखम् ॥ चक्रुः कथा मुदायुक्ता वेदोक्तविविधाश्रयाः ॥ १० ॥ ततः कथांते कस्मिंश्चिन्मुनयस्ते सराजकाः ॥ पप्रच्छुर्ब्रह्मतनयं लोकानां हितकाम्यया ॥ ११ ॥ ॥ ऋषय ऊचुः ॥ ॥ भगवन्केन दानेन व्रतेन नियमेन वा ॥ प्राप्यते सद्गतिः पुंभिः स्त्रीभिश्च मुनिसत्तम ॥ १२ ॥

१ पुरुषर्षभ--इ० पा० । २ विद्याविरहितः--इ० पा० । ३ सुरैर्नरैः--इ० पा० । ४ वाऽऽपत्य--इ० पा० । ५ शरदः--इ० पा० । ६ भवति--इ० पा० । ७ गोभूहिरण्यतिलवस्त्रगजाश्वमध्ये विद्याप्रदां किमिह पार्थ भवेन्न वेद--इ० पा० । ८ तद्दिदृक्षया--इ० पा० । ९ पावकः--इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इच्छामः श्रोतुमेतत्ते राजा चायं यतव्रतः ॥ ॥ पुलस्त्य उवाच ॥ ॥ शृणुध्वं मुनयः सर्वे रहस्यं पापनाशनम् ॥ १३ ॥ उत्तमं सर्व दानानां समवायं वदामि वः ॥ यद्दत्त्वा ब्रह्महा गोघ्नः पितृघ्नो गुरुतल्पगः ॥ १४ ॥ कृतघ्नः कूटसाक्षी च मुच्यते पातकान्नरः ॥ सद्यो दिव्य तनुश्चैव जायते स्त्री तथैव च ॥ १५ ॥ कृच्छ्रचांद्रायणाद्यैश्च तुलापुरुषसंज्ञितैः ॥ व्रतैश्च पाचयेद्देहमाकांक्षन्ब्रह्मणः पदम् ॥ १६ ॥ कृच्छ्रचांद्रा यणादीनि व्रतानि मुनिसत्तमाः ॥ ब्राह्मणानां वनस्थानां भिक्षो रंडाजनस्य च ॥ १७ ॥ कायक्लेशेन सिध्यंति गृहस्थेषु न तानि वै ॥ महाध नाश्च ये लोका राजानो रत्नभागिनः ॥ १८ ॥ न तेषां कृच्छ्रसाध्योऽपि क्वचिद्धर्मः प्रशस्यते ॥ यदेतद्द्रविणं नाम प्राणाश्चैते बहिश्चराः ॥ १९ ॥ तस्माद्बहिश्चरैः प्राणैरात्मा योज्यः सदा बुधैः ॥ द्रव्याणामुत्तमं लोके कांचनं सार्वकामिकम् ॥ २० ॥ अपत्यं सुरमुख्यस्य ज्येष्ठं चैव विभा वसोः ॥ तेन सार्द्धं य आत्मानं तोलयेत्प्रयतो बुधैः ॥ २१ ॥ विधूय सर्वपापानि सद्यो दिव्यतनुर्भवेत् ॥ एतत्पुलस्त्यमुनिना ऋषीणां पार्थि वस्य च ॥ २२ ॥ समाख्यातं नृपश्रेष्ठ तेभ्यश्च तन्मया श्रुतम् ॥ ॥ युधिष्ठिर उवाच ॥ ॥ तुलापुरुषदानस्य विधानं परमेश्वर ॥ २३ ॥ कथ यस्व महाभाग मम भक्तानुकंपया ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणुष्वावहितो राजन्विधानं गदतो मम ॥ २४ ॥ तुलापुरुषसंज्ञस्य दान स्येह नृपोत्तम ॥ व्यतीपातेऽयने चैव कार्तिक्यां विषुवे तथा ॥ २५ ॥ चन्द्रसूर्यग्रहे यद्वा माघ्यां वा नृपसत्तम ॥ जन्मर्क्षे ग्रहपीडासु तथा दुःस्व प्रदर्शने ॥ २६ ॥ यदा वा जायते वित्तं तदा देयमिदं भवेत् ॥ अनित्यं जीवितं यस्माद्वपुश्चातीवचञ्चलम् ॥ २७ ॥ केशेषु च गृहीतः सन्मृत्युना धर्ममाचरेत् ॥ तस्माद्यदेव जायेत श्रद्धा दानं प्रति प्रभो ॥ २८ ॥ तदैव दानकालः स्यात्कारणं हि यतो मम ॥ तीर्थे वायतने गोष्ठेष्वथ वा भव नांगणे ॥ मण्डपं कारयेद्विद्वांश्चतुर्भद्राननं बुधः ॥ २९ ॥ आर्द्रशाखान्वितं दिव्यं प्रागुदक्प्रवणं दृढम् ॥ षोडशारत्निमात्रं च पताकाभिरलंकृ तम् ॥ ३० ॥ तन्मध्ये कारयेद्वेदिं हस्तमात्रोच्छ्रितां शुभाम् ॥ चतुरस्रां समंताच्च सप्तहस्तां सुशोभनाम् ॥ ३१ ॥ तस्या मध्ये तुलां दिव्यां स्थाप येद्विधिपूर्वकम् ॥ हस्तद्वयं च निखनेच्चतुर्हस्तोच्छ्रितां बुधः ॥ ३२ ॥ स्तंभद्वयं महाराज स्थापयेत्सुदृढं नवम् ॥ चंदनः खदिरो बिल्वः शाकश्चैवेंगुद स्तथा ॥ ३३ ॥ तिंदुको देवदारुश्च श्रीपर्णश्चाष्टमः स्मृतः ॥ ३४ ॥ इत्यष्टौ वृक्षजातीयाः स्तंभास्ते परिकीर्तिताः ॥ अन्यश्चापि भवेद्वृक्षः सारज्ञो याज्ञिक

१ श्रोतुकामानम्-इ० पा०। २ चापरम्-इ० पा०। ३ यजमानोऽपि रत्नभाक्-इ० पा०। ४ आत्मा योज्यः सदा बुधैः-इ०, प्राणैरात्मा सदा बुधैः इ० च पा०। ५ तनु-इ०, तद्व-इ० पा०। ६ पुण्यो नम-इ० पा०। ७ भक्त्या-इ० पा०। ८ तुलापुरुषदानस्य उत्तमस्य-इ० पा०। ९ नाथ-इ० पा०। १० धीमन्-इ० पा०। ११ चतुर्भिद्वारवनम्-इ० पा०। १२ हस्तमात्रोच्छ्रयाम्-इ० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तथा ॥३५॥ सुनिश्चलं ततः कृत्वा तिर्यक्काष्ठमथोपरि ॥ न्यसेत्तद्वृक्षजातीयं चतुर्हस्तं प्रमाणतः ॥३६॥ समानजातिं तु तुलां तन्मध्ये योजयेद्दृढम् ॥ पण्णवत्यंगुला दिव्या समग्रा लोहपाशिका ॥ ३७ ॥ कृष्णलोहमयौ तस्यां कर्णौ चापि प्रकल्पयेत् ॥ तुलापुरुषसंज्ञस्तु मध्ये कार्यः पुमान्भवेत् ॥ ३८ ॥ एवंविधां तुलां कृत्वा नानारत्नैर्विभूषिताम् ॥ चंदनेनानुलिप्तांगीं वस्त्रालंकारविग्रहाम् ॥ ३९ ॥ स्तंभौ च वस्त्रसंयुक्तौ पुष्पमालावलंबिनौ ॥ चंदनेनानुलिप्तांगौ नानारत्नैरलंकृतौ ॥ ४० ॥ कुण्डानि चात्र चत्वारि योनियुक्तानि कारयेत् ॥ हस्तमात्रप्रमाणानि मेखलात्रयवंति च ॥ ४१ ॥ पूर्वोत्तरे हस्तमिता वेदिः कार्या सुशोभना ॥ लोकपालग्रहाणां च पूजा तत्र विधीयते ॥ ४२ ॥ अर्चोर्चनं च तत्रैव विरिंच्यच्युतयोर्नृप ॥ शंकरस्य भवेत्कार्यं माल्यवस्त्रफलाक्षतैः ॥ ४३ ॥ तोरणानि च कार्याणि क्षीरवृक्षोद्भवानि च ॥ चतुर्द्वारेषु संस्थाप्याः कुम्भाः स्रक्पल्लवाननाः ॥ ४४ ॥ पंचरत्नसमायुक्ताः सप्तधान्योपरिस्थिताः ॥ ऋग्वेदपाठकौ द्वौ च पूर्वकुण्डे नियोजयेत् ॥ ४५ ॥ यजुर्वेदविदौ याम्ये पश्चिमे सामवेदिनौ ॥ अथर्वणावुत्तरतो नवमो धर्मदेशकः ॥४६॥ अत्रैव केचिदिच्छंति ऋषयः षोडशर्त्विजः ॥ ताम्रपात्रद्वयं देयमेकैकस्मै तथासनम् ॥ ॥४७॥ होमद्रव्याणि सर्वाणि तिलाज्यं समिधस्तथा ॥ स्रुवाः स्रुचश्च शस्त्राणि विष्टरः कुसुमानि च ॥४८॥ लोकपालाः सुवर्णास्तु पताकाःपरितः शुभाः ॥ महाध्वजं च बध्नीयात्पंचवर्णं वितानकम् ॥ ४९ ॥ एतत्सर्वं समाहृत्य पुण्येऽहनि विचक्षणः ॥ वर्द्धकिर्ब्राह्मणैः सार्द्धं सर्वशिल्पविशारदः ॥ ५० ॥ संपूर्णं यजमानाय दर्शयेद्यज्ञमंडपम् ॥ यजमानस्ततः प्राज्ञः शुक्लांबरधरः शुचिः ॥ ५१ ॥ शंखतूर्यनिनादेन वेदध्वनिरवेण च ॥ प्रक्षिपेल्लोकपालानामेभिर्मंत्रैः शुभैर्बलिम् ॥ ५२ ॥ एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश ॥ संवीज्यमानोप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥ ५३ ॥ ( ॐ इन्द्राय नमः ) ॥ एह्येहि सर्वामरहव्यवाह मुनिप्रवीरैरभिहृष्टमानसः ॥ तेजोवता लोकगणेनं सार्द्धं ममाध्वरं रक्ष कवे नमस्ते ॥५४॥ ( ॐ अग्नये नमः ॥ ) एह्येहि वैवस्वतधर्मराज सर्वामरैरर्चितदिव्यमूर्ते ॥ शुभाशुभानंदकृतामधीशरक्षाध्वरं मे भगवन्नमस्ते ॥५५॥ ( ॐ यमाय नमः ) ॥ एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसंघैः ॥ ममाध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥ ५६ ॥ ( ॐ निर्ऋतये नमः ॥ ) एह्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरोभिः ॥ विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान्भगवन्नमस्ते ॥ ५७ ॥

१ दिर्व्या०इ० पा० । २ हस्तमात्रा—इ० पुस्तकद्वये पा० । ३ अर्घार्चनम्—इ० पा० । ४ दिव्यानि—इ० पा० । ५ यज्ञमण्डलम्—इ० पा० । ६ अप्रमेय—इ० पा० । ७ सदाप्सरोभिः—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( ॐ वरुणाय नमः ॥ एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सह सिद्धसंघैः ॥ प्राणाधिपः कालकवैः सहायो गृहाण पूजां भगवन्नमस्ते ॥ ५८ ॥
( ॐ वायवेय नमः ) एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् ॥ सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥ ५९ ॥
( ॐ सोमाय नमः ॥ ) एह्येहि विश्वेश्वर विश्वमूर्ते त्रिशूलखट्वाङ्गधरेण सार्द्धम् ॥ लोकेन भूतेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥ ६० ॥
( ईशानाय नमः ॥ ) एह्येहि पातालधराधरेन्द्र नागांगनाकिन्नरगीयमान ॥ यक्षोरगेन्द्रामरलोकसंघैरनंत रक्षाध्वरमस्मदीयम् ॥६१॥ ( ॐ अनंताय नमः ) एह्येहि विश्वाधिपते मुनींद्र लोकेश सार्द्धं पितृदेवताभिः ॥ विशाध्वरांतः सततं शिवाय पितामहस्त्वं सततं नमस्ते ॥ ६२ ॥
( ॐ ब्रह्मणे नमः ) त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ॥ ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वंतु तानि मे ॥ ६३ ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मनवो गावो देवमातर एव च ॥६४॥ सर्वे ममाध्वरे रक्षां प्रकुर्वंतु मुदान्विताः ॥ इत्यावाह्य सुरान्दद्यादृत्विग्भ्यः कण्ठभूषणम् ॥ ६५ ॥ कुंडलानि च हैमानि सूत्राणि कटकानि च ॥ तथांगुलिपवित्राणि वासांसि कुसुमानि च ॥ ६६ ॥ द्विगुणं गुरवे दद्याद्भूषणाच्छादनादिकम् ॥ आघारावाज्यभागौ तु पूर्वं हुत्वा विचक्षणः ॥ ६७ ॥ प्रणवादिस्वनाम्ना च स्वाहांतो होम उच्यते ॥ होमः सुराणां कर्तव्यो ये चैवात्र प्रतिष्ठिताः ॥ ६८ ॥ ग्रहाणां लोकपालानां शिवकेशवयोस्तथा ॥ वनस्पतिभ्यो ब्रह्मणे होमः कार्यो यथेच्छया ॥ ६९ ॥ ततो मंगलशब्देन स्थापितो वेदमंगलैः ॥ त्रिःप्रदक्षिणमावृत्य गृहीतकुसुमांजलिः ॥ ७० ॥ शुक्लमाल्यांबरो भूत्वा तां तुलामभिमंत्रयेत् ॥ नमस्ते सर्वदेवानां शक्तिस्त्वं सत्यमास्थिता ॥ ७१ ॥ साक्षिभूता जगद्धात्रि निर्मिता विश्वयोनिना ॥ एकतः सर्वसत्यानि तथानृतशतानि च ॥ ७२ ॥ धर्माधर्मभृतां मध्ये स्थापितासि जगद्धिते ॥ त्वं तुले सर्वभूतानां प्रमाणमिह कीर्तिता ॥ ७३ ॥ मां तोलयंती संसारादुद्धरात्र नमोस्तुते ॥ योऽसौ तत्त्वाधिपो देवः पुरुषः पंचविंशकः ॥ ७४ ॥ स एकोऽधिष्ठितो देवि त्वयि तस्मान्नमो नमः ॥ नमो नमस्ते गोविंद तुलापुरुषसंज्ञक ॥ ७५ ॥ त्वं हरे तारयस्वास्मानस्मात्संसारसागरात् ॥ पुण्यकालमथासाद्य कृत्वैवमधिवासनम् ॥ ७६ ॥ प्रणम्य परया भक्त्या तां तुलामारुहेद्बुधः ॥

१ कालकवैः सहायः–इ० पा० । २ एह्येहि यज्ञेश्वर शूलपाणे ईशान भावाधिपर प्रवीर ॥ वृषाधिरूढः सगणः सहायो ममाध्वरं पाहि नमोनमस्ते–इ० पा० । अत्रापि 'यज्ञेश्वर' इत्यस्य स्थाने पुस्तकांतरे 'भूतेश्वर' इति पाठ उपलभ्यते । ३ रक्षोनगेंद्रामरलोकसार्द्धम्—इ० पा० । ४ लोकेन–इ० पा० । ५ सर्वे मरवाश्च मे–इ० पा० । ६ द्विजोत्तमः–इ० पा० । ७ देवमंगलैः–इ०, वेदपुण्यैः–इ० न पा० । ८ शुक्लमाल्यधरो भूत्वा–इ० पा० । ९ सत्यम्–इ० पा० । १० सर्वसत्वानि–इ० पा० । ११ धर्माधर्मकृताम्–इ० पा० । १२ सर्वदेवानाम्–इ० पा० । १३ संसारकर्दमात्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स सङ्गचर्मकवची सर्वाभरणभूषितः ॥ ७७ ॥ धर्मराजमथादाय[1] हैमसूर्येण संयुतम् ॥ कराभ्यां बद्धमुष्टिभ्यामास्ते पश्यन्हरेर्मुखम् ॥ ७८ ॥ वामे यमं तथा गृह्य दक्षिणे च रविं तथा ॥ ततोऽपरे तुलाभागे न्यसेयुर्द्विजपुंगवाः ॥ साम्यादभ्यधिकं यावत्कांचनं चातिनिर्मलम् ॥ ७९ ॥ पुष्टिकामस्तु कुर्वीत भूमिसंस्थं नरेश्वर ॥ क्षणमात्रं ततः स्थित्वा पुनरेतदुदीरयेत् ॥ ८० ॥ नमस्ते सर्वभूतानां साक्षिभूते सनातने ॥ पितामहेन देवि त्वं निर्मिता परमेष्ठिना ॥ ८१ ॥ त्वयोद्धृतं[2] जगत्सर्वं सहस्थावरजंगमम् ॥ सर्वभूतात्मभूतस्थे नमस्ते विश्वधारिणि ॥ ८२ ॥ ततोऽवतीर्य गुरवे सर्वमर्द्धं निवेदयेत् ॥ ऋत्विग्भ्योऽपरमर्द्धं च दद्यादुदकपूर्वकम् ॥ ८३ ॥ प्राप्य तेषामनुज्ञां वा तथान्येभ्योऽपि दापयेत् ॥ दीनानाथविशिष्टादीन्पूजयेद्ब्राह्मणैः सह ॥ ८४ ॥ न चिरं धारयेद्गेहे हैमसंप्रोक्षितं बुधः[3] ॥ तिष्ठद्भयावहं यस्मात्कष्टंव्याधिकरं[4] भवेत् ॥ ८५ ॥ शीघ्रं परस्वीकरणाच्छ्रियं प्राप्नोत्यनुत्तमाम् ॥ अनेनैव विधानेन केचिद्रौप्यमयं तथा ॥ ८६ ॥ कर्पूरेण तथेच्छंति केचिद्ब्राह्मणपुंगवाः तथासिततृतीयायां नार्यः सौभाग्यवर्धिताः[5] ॥ ८७ ॥ कुंकुमेन प्रयच्छंति लवणेन गुडेन च ॥ तत्र मंत्रा न होमो वा एवमेव प्रदापयेत् ॥ ८८ ॥ विधिनानेन यो दद्याद्दानमेतत्समाहितः ॥ तस्य पुण्यफलं राजञ्छृणुष्व गदतो मम ॥ ८९ ॥ विमानवरमास्थाय नारी वा पुरुषोऽपि वा ॥ अप्सरोगणसंकीर्णं गंधर्वनगरोपमम् ॥ ९० ॥ नानावृक्षाकुलं रम्यं नानागंधाधिवासितम् ॥ अनेकरत्नविद्धांगं[6] मुक्तादामावलंबितम् ॥ ९१ ॥ शयनासनसंकीर्णं पताकाभिरलंकृतम् ॥ घंटाशतरवोद्घुष्टं चामरव्यजनान्वितम् ॥ ९२ ॥ सर्वर्तुसुखदं[7] रम्यं सर्वदुःखविवर्जितम् ॥ इत्थं विमानमारुह्य गच्छेत्सूर्यसलोकताम् ॥ ९३ ॥ मित्वा[8] तत्र राजेंद्र कल्पमेकं निरामयः[9] ॥ विष्णुलोके तथा कल्पं शिवलोके[10] तथैव च ॥ ९४ ॥ विश्वेषां चैव देवानां देवराज पुरे तथा ॥ पुरे च[11] धर्मराजस्य वरुणस्य तथैव च ॥ ९५ ॥ धनदस्य पुरे स्थित्वा कल्पकोटिशतं नरः ॥ पुनर्मानुपमभ्येत्य[12] राजा भवति धार्मिकः ॥ ९६ ॥ यज्वादानपतिर्धीमाञ्छत्रुपक्षक्षयंकरः[13] ॥ यश्चैतच्छृणुयाद्भक्त्या महादानानुकीर्तनम् ॥ ९७ ॥ सोऽपि मुच्येत पापेन त्रिविधेन न संशयः ॥ ९८ ॥ ब्रह्मेशकेशवपरोऽस्ति न पूजनीयो नैवाश्वमेधसदृशः क्रतुरस्ति कश्चित् ॥ गंगासमं त्रिभुवनेऽपि न तीर्थमस्ति दानं तुला

१ समादाय—इ० पा० । २ धृतम्—इ० पा० । ३ समस्तं प्रोक्षितं बुधः—इ० पा० । ४ क्षोभव्याधिकरं भवेत्—इ०पा० । ५ सौभाग्यदर्शिताः—इ० पा० । ६ अनेकरत्नवद्धांगम्—इ० पा० । ७ सर्वदासुखदम्—इ० पा० । ८ गमित्वा—इ० पा० । ९ निरामयम्—इ० पा० । १० वसूनां भवनेऽप्यथ—इ० पा० । ११ वै—इ० पा० । १२ अप्येत्य—इ० पा० । १३ यज्ञदानपतिर्धीमान्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरुषतुल्यमिहास्ति नान्यत् ॥ ९९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे तुलापुरुषदानविधिवर्णनं नाम पंचसप्तत्यु त्तरशततमोऽध्यायः ॥ १७५ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ भगवन्सर्वभूतेश सर्वभूतनमस्कृत ॥ अनुग्रहाय लोकानां कथयस्व ममापरम् ॥ १ ॥ त्वत्तुल्यो जायते येन आयुषा यशसा श्रिया ॥ तन्मे कथय देवेश दानं व्रतमथापि वा ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु राजन्प्रवक्ष्यामि तव लोकहितेच्छया ॥ येनोपायेन जायंते मत्तुल्या मानवा भुवि ॥ ३ ॥ न व्रतैर्नोपवासैश्च न तीर्थगमनैरपि ॥ महापथादिमरणैर्न यज्ञैर्न श्रुतेन च ॥ ४ ॥ प्राप्यते मम लोकोऽयं दुष्प्राप्यस्त्रिदशैरपि ॥ पार्थस्नेहान्महाभाग प्रवक्ष्यामि हितं तव ॥ ५ ॥ गोब्राह्मणार्थे मरणं प्राप्तं येन सुमेधसा ॥ प्रयागेऽनशनं वापि पूजितो वाथ शंकरः ॥ ६ ॥ प्रयाति ब्रह्मसालोक्यं श्रुतिरेषा सनातनी ॥ येन मत्समतां याति तत्ते वक्ष्याम्यतः परम् ॥ ७ ॥ दानं हिरण्यगर्भाख्यं कथ्यमानं निबोध मे ॥ अग्नेरपत्यं प्रथमं सुवर्णमिह पठ्यते ॥ ८ ॥ पवित्रं सर्वभूतानां पावनं परमं महत् ॥ पर्यायनाम तस्योक्तं हिरण्यं सार्वलौकिकम् ॥ ९ ॥ तदपां गर्भमाविश्य पुनर्जातं तु भूतले ॥ यश्च तद्ब्राह्मणे दद्यान्मत्तुल्यो जायते हि सः ॥ १० ॥ ॥ युधिष्ठिर उवाच ॥ ॥ विधानं तस्य देवेश कथयस्व सनातन ॥ यत्प्रमाणं यथाचैतद्दातव्यं परमेश्वर ॥ ११ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ पर्वकाले प्रदातव्यं दानमेतन्महामते ॥ अयने विषुवे चैव ग्रहणे शशिसूर्ययोः ॥ १२ ॥ व्यतीपातेऽथ कार्तिक्यां जन्मर्क्षे वा नरोत्तम ॥ दुःस्वप्नदर्शने चैव ग्रहपीडासु चैवहि ॥ १३ ॥ प्रयागे नैमिषे चैव कुरुक्षेत्रे तथार्बुदे ॥ गंगायां यमुनायां च सिंधुसागरसंगमे ॥ १४ ॥ पुण्यनद्यश्च दानेऽस्मिन्प्रशस्ताः स्युर्न संशयः ॥ यत्र वा रोचते राजन्गृहे देवकुलेऽथवा ॥ १५ ॥ आरामे वा तडागे वा शुचौ देशे विधानतः ॥ तत्र भूशोधनं कुर्यात्प्रागुदक्प्रवणं शुभम् ॥ १६ ॥ हस्ताद्दशकर्तव्यं मंडपं तु सुशोभनम् ॥ स्तंभैर्मनोहरैर्युक्तमार्द्रशाखाभिरन्वितम् ॥ १७ ॥ तन्मध्ये वेदिकां कुर्यात्पंचहस्तामलंकृताम् ॥ वितानमुपरि दद्याच्च पुष्पमालावलंबिनम् ॥ १८ ॥ हिरण्यगर्भं तन्मध्ये प्रथमेऽहनि कल्पयेत् ॥ तस्य प्रमाणं वक्ष्यामि रूपं वै स्थंडिलोद्भवम् ॥ १९ ॥

१ इति श्रीभविष्ये [illegible] । २ सर्वभूतेश सर्वभूतनमस्कृत— [illegible] । ३ [illegible] । ४ [illegible] । ५ [illegible] । ६ महापथादिमरणैः [illegible] । ७ [illegible] । ८ [illegible] । ९ [illegible] । १० [illegible] । ११ [illegible] । १२ सार्वकालिकम्— [illegible] । १३ [illegible] । १४ [illegible] ।

शिल्पिनं पूजयेत्पूर्वं वासोभिर्भूषणैस्तथा ॥ ब्राह्मणान्वाचयेत्पश्चात्ततः कर्मसमारभेत् ॥ २० ॥ सुवर्णेन सुशुद्धेन शक्तितः कारयेद्ध्रुवः ॥ अंगुलानि चतुःषष्टिर्दैर्घ्यं च परिकीर्तितम् ॥ २१ ॥ त्रिभागहीनं वदने मूले तस्यार्द्धविस्तरम् ॥ वर्तुलं कर्णिकाकारं चारुग्रंथिविवर्जितम् ॥ २२ ॥ पिधानमुपरिष्टाच्च कर्तव्यं चांगुलाधिकम् ॥ अस्त्राणि दश कुर्वीत नालं सूर्यं च कांचनम् ॥ २३ ॥ दात्रं सपट्टिकं चैव सर्वोपस्करणान्वितम् ॥ सूचीक्षुरश्च हैमानि तत्सर्वं परिकल्पयेत् ॥ २४ ॥ पार्श्वतः स्थापयेत्तस्य हेमदंडकमंडलू ॥ छत्रिकापादुकायुग्मं वज्रवैडूर्यमंडितम् ॥ २५ ॥ एवं लक्षणसंयुक्तं कृत्वा गर्भं विचक्षणः ॥ ब्रह्मघोषेण महता शंखतूर्यरवेण च ॥ २६ ॥ हस्तिना शकटेनाथ राजन्ब्रह्मरथेन वा ॥ आनयेन्मंडपं कृत्वा प्रदक्षिणमतंद्रितः ॥ २७ ॥ तिलद्रोणोपरिगतं वेदीमध्येऽधिवासयेत् ॥ समालभ्य पुनः सर्वं कुंकुमेन सुगंधिना ॥ २८ ॥ कौशेयवाससी शुभ्रे ततस्तं परिधापयेत् ॥ समंतात्पुष्पमालाभिः पूजयेद्भक्तितः सुधीः ॥२९॥ धूपैः सुधूपितं कृत्वा मंत्रमेतमुदीरयेत् ॥ भूर्लोकप्रमुखालोकास्तव गर्भे व्यवस्थिताः ॥ ३० ॥ ब्रह्मादयस्तथा देवा नमस्ते भुवनोद्भव ॥ नमस्ते भुवनाधार नमस्ते भुवनेश्वर ॥ ३१ ॥ नमो हिरण्यगर्भाय गर्भे यस्य पितामहः ॥ एवं संपूजयित्वा तु तां रात्रिमधिवासयेत् ॥ ३२ ॥ वेद्याश्चतुर्दिशं चैव कुंडानि परिकल्पयेत् ॥ चत्वारि चतुरस्राणि तेषु होमो विधीयते ॥ ३३ ॥ चतुश्चारणिकास्तत्र ब्राह्मणा मंत्रपारगाः ॥ होमं कुर्युर्जितात्मानो मौनिनः सर्व एवते ॥३४॥ सर्वाभरणसंपन्नाः सर्वे चाहतवाससः ॥ ताम्रपात्रद्वयोपेता गंधपुष्पादिपूजिताः ॥ ३५ ॥ वेद्याः पूर्वोत्तरे भागे ग्रहवेदिं प्रकल्पयेत् ॥ तत्र ग्रहांल्लोकपालान्ब्रह्मविष्णुमहेश्वरान् ॥ ३६ ॥ पूजयेत्स्वर्णघटितान्पुष्पधूपविलेपनैः ॥ पताकाभिरलंकृत्य मंडपं तोरणैस्तथा ॥ ३७ ॥ कुंभद्वयं च द्वारेषु स्थापयेद्रत्नसंयुतम् ॥ तुलापुरुषमंत्रैश्च लोकपालबलिं क्षिपेत् ॥ ३८ ॥ पालाश्यः समिधस्तत्र प्रशस्ता होमकर्मणि ॥ चरुश्चैवेन्द्रदैवत्यस्तिला गव्यं घृतं तथा ॥३९॥ स्वलिंगैर्होमयेत्पूर्वं मंत्रैर्व्याहृतिभिः पुमान् ॥ अयुते द्वे च होमस्य संख्यामाहुर्मनीषिणः ॥ ४० ॥ यजमानस्ततः स्नात्वा शुक्लांबरधरः शुचिः ॥ भक्त्या हिरण्यगर्भं च पर्वकाले समर्चयेत् ॥ ४१ ॥ नमो हिरण्यगर्भाय विश्वगर्भाय वै नमः ॥ चराचरस्य जगतो गृहभूताय ते नमः ॥ ४२ ॥ मात्राहं जनितः पूर्वं मर्त्यधर्मासुरोत्तम ॥ त्वद्गर्भसंभवादद्य दिव्यदेहो भवाम्यहम् ॥ ४३ ॥ इत्युच्चार्य स्वयंभक्त्या कृत्वा चैव प्रदक्षिणाम् ॥ क्षीरा



---

१ वज्रम्–इ० पा०। २ नुसिद्धेन–इ० पा०। ३ परिकल्पयेत्–इ० पा०। ४ ह्यंगुलाधिकम्–इ०, द्व्यंगुलाधिकम्–इ० च पा०। ५ अन्त्राणि–इ० पा०। ६ सर्वोपकरणानि च–इ० पा०। ७ संपूजितं राजन्–इ० पा०। ८ समस्तभुवनेश्वर–इ० पा०। ९ रात्रौ तमधिवासयेत्–इ० पा०। १० यतात्मानः–इ० पा०। ११ पुष्पवस्त्रानुलेपनैः–इ० पा०। १२ यज्ञकर्मणि–इ० पा०। १३ ब्रह्मगर्भाय–इ० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्यदधिसंपूर्णं तद्गर्भं प्रविशेद्बुधः ॥ ४४ ॥ सौवर्णं धर्मराजं तु सव्ये कृत्वा करे ततः ॥ भास्करं दक्षिणे चैव मुष्टिं बद्ध्वा प्रयत्नतः ॥ ४५ ॥ जान्वोरंतरतश्चैव शिरः कृत्वा समाहितः ॥ उछ्वासपंचकं तिष्ठेच्चेतसा चिंतयञ्छिवम् ॥ ४६ ॥ गर्भाधानं पुंसवनंसीमंतोन्नयनं तथा ॥ कुर्युर्हिरण्यगर्भस्य ततस्ते द्विजपुंगवाः ॥ ४७ ॥ जातकर्मादिकाः कुर्युः क्रियाः षोडश चापराः ॥ तत उत्थाय निःसृत्य पुनः कुर्यात्प्रदक्षिणाम् ॥ ४८ ॥ तावन्मुखं न पश्येत कस्यचिन्नृपसत्तम ॥ सौवर्णां पृथिवी यावन्नद्दष्टा स्पष्टचक्षुषा ॥ ४९ ॥ ततः स्नानं प्रकुर्वीत ब्रह्मघोषपुरःसरम् ॥ अष्टौ द्विजाः सुवर्णांगा सौवर्णैः कलशैः शुभैः ॥ ५० ॥ रौप्यैरौदुंबरैर्वापि मृण्मयैर्वा सुशोभनैः ॥ दध्यक्षतविचित्रांगैराम्रपल्लवशोभितैः ॥ ५१ ॥ पुष्पैर्गन्धप्रितर्घ्यैर्व्रणैः कलशैर्दृढैः ॥ चतुष्कमध्ये संस्थाप्य पीठमव्रणमुत्तमम् ॥ ५२ ॥ तत्र स्थाप्य महाभाग यजमानं द्विजोत्तमाः ॥ देवस्य त्वेति मंत्रेण कुर्युरस्याभिषेचनम् ॥ ५३ ॥ अद्य जातस्येतेऽगांनि अभिषेक्ष्यामहे वयम् ॥ दिव्येनानेन वपुषा चिरंजीवंसुखी भव ॥ ५४ ॥ एवं कृताभिषेकस्तु यजमानः समाहितः ॥ दद्याद्धिरण्यगर्भं तं सोदकेनैव पाणिना ॥ ५५ ॥ तान्संपूज्य च भावेन बहुभ्यो वा तदाज्ञया ॥ यज्ञोपकरणं सर्वं गुरवे विनिवेदयेत ॥ ५६ ॥ पादुकोपानहौ चैव च्छत्रचामरभाजनम् ॥ अन्येषां चैव विप्राणां ये च तत्र सभासदः ॥ ५७ ॥ तेषां चैव प्रदातव्यं दानं चात्र विशेषतः ॥ दीनांधकृपणानां च दातव्यं सार्वकामिकम् ॥ ५८ ॥ अन्नसत्रं च कर्तव्यं यावद्दानपरिग्रहः ॥ अनेन विधिना यस्तु दानमेतत्प्रयच्छति ॥ ५९ ॥ स कुलं तारयेत्सर्वं देवलोकं स गच्छति ॥ विमानवरमारुह्य पञ्चयोजनविस्तृतम् ॥ ६० ॥ वापीकूपतडागाद्यैर्जलस्थानैरलंकृतम् ॥ उद्यानशतसंस्थानं पद्माकरनिषेवितम् ॥ ६१ ॥ प्रासादशतसंकीर्णं वरस्त्रीशतसेवितम् ॥ वीणावेणुमृदंगानां शब्दैरापूरितं महत् ॥ ६२ ॥ भूमयो यत्र राजेन्द्र दिव्या मणिमयाः शुभाः ॥ वेदिकाभिर्विचित्राभिः शोभितं भास्करप्रभम् ॥ ६३ ॥ धृतं स्तम्भसहस्रेण सुकृतं विश्वकर्मणा ॥ पताकाभिर्विचित्राभिर्ध्वजैश्च समलंकृतम् ॥ ६४ ॥ तदारुह्य विमानाग्र्यं विद्याधरगणैर्युतम् ॥ स याति लोकं शक्रस्य शक्रेण सह मोदते ॥ ६५ ॥ मन्वन्तरशतं जातं कर्मभूमौ प्रजायते ॥ जंबूद्वीपमशेषं तु भुंक्ते दिव्यपराक्रमः ॥ ६६ ॥ धार्मिकः सत्यशीलश्च ब्रह्मण्यो गुरुवत्सलः ॥ दश जन्मान्यसौ राजा जायते रोगवर्जितः ॥ ६७ ॥ यस्त्विदं शृणुयाद्भक्त्या रहस्यं पापनाशनम् ॥ सोऽपि वर्षशतं साग्रं सुरलोके महीं

१ [illegible] । २ [illegible] । ३ [illegible] । ४ [illegible] । ५ [illegible] । ६ [illegible] ।
७ [illegible] । ८ [illegible] । ९ [illegible] ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यते ॥ ६८ ॥ गर्भं हिरण्यरचितं विधिवत्प्रविश्य संस्कारसंस्कृततनुः पुनरेवतस्मात् ॥ निःसृत्य तद्द्विजवराय निवेद्य भक्त्या मार्तण्डवद्दिवि विराजति दिव्यदेहः ॥ ६९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे हिरण्यगर्भदानविधिवर्णनं नाम षट्सप्तत्युत्तरशततमोऽध्यायः ॥ १७६ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अगस्त्येन पुरा गीतो दानानां विधिरुत्तमः ॥ शृणु त्वं राजशार्दूल कथ्यमानं मयाधुना ॥ १ ॥ येन दत्तेन राजेन्द्र सर्वं पापं व्यपोहति ॥ मानसं वाचिकं वापि कायिकं च सुदुस्तरम् ॥ २ ॥ मंगल्यं मंगलं पुण्यं सर्वदानेषु चोत्तमम् ॥ धन्यं यशस्यमायुष्यं परलोकभयापहम् ॥ ब्रह्मांडं कांचनं कृत्वा सर्वलक्षणसंयुतम् ॥ ३ ॥ देवासुरमनुष्यैश्च गन्धर्वोरगराक्षसैः ॥ संयुक्तं च नदीभिश्च समुद्रैः पर्वतैस्तथा ॥ विमानशतकोटीभिर्भूषितं चाप्सरोवरैः ॥ ४ ॥ दिग्गजाष्टकसंयुक्तं मध्यस्थितचतुर्मुखम् ॥ शिवाच्युतार्कशिखरसुमालक्ष्मीसमन्वितम् ॥ ५ ॥ तस्यांगे कल्पयेद्राजन्भुवनानि चतुर्दश ॥ वितस्तेरंगुलशतं यावदायामविस्तरम् ॥ ६ ॥ कुर्याद्विंशत्पलादूर्ध्वमासहस्राच्च भक्तितः ॥ शकलद्वयसंयुक्तं पुटाकारं सुसंहितम् ॥ ७ ॥ शिल्पिना विहितं यस्माद्ब्रह्मांडं सर्वकामदम् ॥ अयने विषुवे चैव चंद्रादित्यग्रहे तथा ॥ ८ ॥ अन्येष्वपि तु कालेषु श्रद्धावित्तसमन्वितः ॥ पुष्पमंडपिकां कृत्वा तत्र संस्थापयेद्बुधः ॥ ९ ॥ तिलद्रोणोपरिगतं कुंकुमक्षोदचर्चितम् ॥ वासो युग्मेन संछाद्य पुष्पगन्धाधिवासितम् ॥ १० ॥ तस्य दिक्षु च सर्वासु पूर्णकुम्भांश्च विन्यसेत् ॥ अष्टादशैव धान्यानि द्रोणमात्राण्यथाहरेत् ॥ ११ ॥ गृहे वा मंडपे वापि स्थापयेत्तद्विचक्षणः ॥ पादुकोपानहच्छत्रभाजनासनदर्पणैः ॥ १२ ॥ संयुक्तं कारयेत्तत्र पयस्विन्या तथैव च ॥ कारयेत्कुण्डमेकं तु हस्तमात्रं विधानतः ॥ १३ ॥ चतुश्चारणिकास्तत्र होमं कुर्युर्द्विजोत्तमाः ॥ सर्वाभरणसम्पन्नाः सुस्नाताहतवाससः ॥ १४ ॥ प्रचरेयुर्द्विजास्तत्र उपाध्यायसमन्विताः ॥ तथा पुरोहितश्चैव राज्ञा षष्ठो विधीयते ॥ १५ ॥ इतरेषां तु पञ्चैव कुर्युर्यज्ञमतंद्रिताः ॥ ग्रहयज्ञविधानेन ग्रहाणां यज्ञ इष्यते ॥ १६ ॥ ब्रह्मविष्णुशिवानां च तन्नाम्नां जुहुयात्तिलान् ॥ अयुतं होमयेत्पश्चान्महाव्याहृतिभिर्नृप ॥ १७ ॥ रुद्रजापस्तु कर्तव्यस्तस्यैवानंतरं द्विजैः ॥ ततः सर्वसमाप्तौ तु स्नात्वा शुक्लांबरः शुचिः ॥ १८ ॥ ब्रह्मांडं पूजयेद्भक्त्या गृहीतकुसुमांजलिः ॥ नमो जगत्प्रतिष्ठाय विश्वधाम्ने नमोऽस्तु ते ॥ १९ ॥ वाङ्मयांतनिमग्नाय ब्रह्मांड शुभकृद्भव ॥ ब्रह्मांडोदरवर्तीनि यानि सत्त्वानि कानिचित् ॥ २० ॥ तानि सर्वाणि मे तुष्टिं प्रयच्छंत्वतुलां सदा ॥ ब्रह्मा

१ निर्गत्य—इ० पा० । २ परलोकभयावहम्–इ० पाठे परलोकः शत्रुजनो बोध्यः । ३ चाप्सरोवरैः–इ०पा० । ४ उच्यते–इ० पा० । ५ तत्राज्यम्–इ०पा० । ६ महाव्याधिहृतिर्भवेत्–इ०पा० । ७ आत्मना–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विष्णुश्च रुद्रश्च लोकपालास्तथा ग्रहाः ॥ २१ ॥ नक्षत्राणि तथा नागा ऋषयो मरुतस्तथा ॥ सर्वे भवंतु संतुष्टाः[1] सप्तजन्मांतराणि मे ॥ २२ ॥
इत्युच्चार्य ततो दद्याद्ब्रह्मांडं सर्वकामदम् ॥ सदक्षिणं च तं कृत्वा वसु संपादयेद्द्विजान्[2] ॥२३॥ अनेन विधिना दत्त्वा यत्पुण्यं स्यान्नरोत्तम ॥ तत्तेऽहं
संप्रवक्ष्यामि शृणुष्व गदतो मम[3] ॥ २४ ॥ आसीदादियुगे राजा सुद्युम्नो नाम भारत[4] ॥ नागायुतबलः श्रीमान्बहुभृत्यपरिच्छदः ॥ २५ ॥
त्रिंशद्वर्षसहस्राणि[5] कृत्वा राज्यमकंटकम् ॥ ततः संस्थाप्य तनयं राजा राज्ये वनं ययौ ॥ २६ ॥ प्रविश्य च वनं घोरं तपस्तीव्रं चचार ह ॥
अध्यात्मगतितत्त्वज्ञः कर्मकांडं विसृज्य च ॥ २७ ॥ कालेन महता राजा दिष्टांतमगमत्पुरा ॥ दिव्यं विमानमारुह्य नाना वाद्यरवाकुलम्[6] ॥२८॥
अतीत्य शक्रलोकादीन्ब्रह्मलोकमितो गतः ॥ तस्यासनं दिदेशाथ ब्रह्मासुरगणैर्वृतः ॥ २९ ॥ दिव्यं कनकचित्रांगं रत्नालंकृतविग्रहम् ॥ एवं लोक
वरे तस्मिन्नममाणो[7] नृपोत्तम ॥ ३० ॥ आस्ते चानुदिनं सोऽथ दिव्यभोगविवर्जितः ॥ वसतस्तस्य राज्ञस्तु शरीरं परितप्यते ॥ ३१ ॥ बुभुक्षया
नरश्रेष्ठ तथात्यंतपिपासया ॥ स पीड्यमानो ब्रह्माणं कृतांजलिरभाषत ॥ ३२ ॥ भगवन्ब्रह्मलोकोऽयं सर्वदोषविवर्जितः ॥ अत्र स्थितं च मां
देव क्षुत्तृष्णा च प्रबाधते ॥ ३३ ॥ केन कर्म विपाकेन क्षुधा मे नापसर्पति ॥ ब्रह्मलोके गतस्यापि संशयं छेत्तुमर्हसि ॥३४॥ ॥ ब्रह्मोवाच[8] ॥ ॥
त्वया हि कुर्वता राज्यं पुष्टान्यंगानि पार्थिव ॥ नैव दत्तं तु बहुलमात्मवादरतेन वै ॥ ३५ ॥ दानं बंधात्मकं मत्वा तस्माद्दत्तं त्वया न हि ॥
ज्ञानाद्ब्रह्मपदं प्राप्तमदानात्क्षुत्प्रबाधते ॥ ३६ ॥ ॥ राजोवाच ॥ ॥ भगवंस्तृपापनुत्तिः स्यात्कथं मे परमेश्वर ॥ उपदेशप्रदानेन प्रसादं कर्तु
मर्हसि ॥ ३७ ॥ ॥ ब्रह्मोवाच ॥ ॥ भूयो गत्वा महीं राजन्ब्रह्मांडं सार्वकामिकम् ॥ प्रयच्छ द्विजमुख्यानां[9] तेन तृप्तिमवाप्स्यसि ॥ ३८ ॥
इत्युक्तः सम्यगागत्य मर्त्यलोकं महीपतिः ॥ ब्रह्मांडं तु विधानेन ब्राह्मणेभ्यः प्रदत्तवान् ॥ ३९ ॥ स जगाम पुनः स्वर्गं लेभे तृप्तिं च शाश्वतीम् ॥
एतत्ते सर्वमाख्यातं महादानस्य यत्फलम् ॥ ४० ॥ ब्रह्मांडं यः प्रयच्छेत तेन दत्तं चराचरम् ॥ सप्तावरान्सप्त परान्सप्त चैव परावरान् ॥ ४१ ॥
तारयेत्कुलजान्दत्त्वा भविष्यांश्च न संशयः ॥ मन्वंतराणि षट्त्रिंशद्ब्रह्मलोके[10] महीयते ॥ ४२ ॥ पुनर्मानुष्यमभ्येत्य[11] धार्मिको जायते कुले ॥
न दारिद्र्यं न च व्याधिं वियोगं नैव[12] पश्यति ॥ ४३ ॥ नारी वा पुरुषो वापि दानस्यास्य प्रभावतः ॥ यश्चैतच्छृणुयाद्भक्त्या भक्तानां श्रावयेच्च

१ सुप्रीताः–इ० पा० । २ दिक्संख्यान्वाचयेद्द्विजान्–इ० पा० । ३ वदतो मम–इ० पा० । ४ प्रद्युम्नो नाम वीर्यवान्–इ० पा० । ५ विंशद्वर्षसहस्राणि–इ० पा० । ६ विद्याधराकुलम्–इ० पा० । ७ मद–इ० पा० । ८ कृष्ण उवाच–इ०, विष्णुरुवाच–इ० पा० । ९ द्विजमुख्याय–इ० पा० । १० ब्रह्मलोकात्–इ०पा० । ११ आसाद्य–इ० पा० । १२ न वै निपत्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यः ॥ ४४ ॥ सोऽपि सद्गतिमाप्नोति किं पुनर्यः प्रयच्छति ॥ ४५ ॥ ब्रह्मांडखंडयुगलं सकुलाचलं च दिग्भागसागरसरोवरसिद्धजुष्टम् ॥ दिक्सं ख्यया गुणवतां द्विजसत्तमानां दत्त्वा पुमान्पदमुपैति पितामहस्य ॥ ४६ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे ब्रह्मांड दानविधिवर्णनं नाम सप्तसप्तत्युत्तरशततमोऽध्यायः ॥ १७७ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ भगवाञ्छंकरः पूर्वं कृतोद्वाहोमया[1] सह ॥ रममाणस्तया सार्द्धं बहुवर्षगणान्स्थितः ॥ १ ॥ ततः सुरगणाः सर्वे परं त्रासमुपागताः ॥ तयोरपत्यस्य भयात्तमेव शरणं गताः ॥ २ ॥ वैश्वानरमुखा देवा महादेवं[2] त्रिलोचनम् ॥ प्रसन्नश्चाभवत्तेषां विबुधानां त्रिलोचनः ॥ ३ ॥ ॥ ईश्वर उवाच ॥ ॥ किं भीतास्त्रिदशाः सर्वे कं वरं च ददामि वः ॥ मयि प्रसन्ने विबुधा दुर्लभं हि न किंचन ॥ ४ ॥ ॥ देवा ऊचुः ॥ ॥ भगवंस्तव संयोगात्पार्वत्या सह शंकर ॥ मोघो भवतु देवेश भीताः स्म तनयस्य ते ॥५ ॥ अनपत्यश्च देवेश भव भूतपते सदा ॥ अशक्ताः स्म वयं सर्वे भवदोजो विधारणे ॥ ६ ॥ ॥ श्रीभ गवानुवाच ॥ ॥ अतः प्रभृत्यहं देवा ऊर्ध्वरेता व्यवस्थितः ॥ स्थाणुवच्च स्थितश्चास्मि नाम चैतद्भविष्यति ॥ ७ ॥ ततः क्रुद्धा उमा तेषां देवा नां वाक्यमब्रवीत् ॥ वितथं पुत्रजं सौख्यं भवद्भिर्मे कृतं सुराः ॥ ८ ॥ यस्मात्तस्माद्भवंतोऽपि न पुत्राञ्जनयिष्यथ ॥ ततः प्रभृति वै देवाः प्रसूयंते[3] न भूपते ॥ ९ ॥ दत्त्वा शापं ततो देवी देवानामाह शंकरम् ॥ पुत्रजन्म मया प्राप्तं न तावज्जगतः पते ॥ १० ॥ अपुत्रस्य गतिर्नास्ति इतीयं श्रूयते श्रुतिः ॥ तदादिश महाभाग लोकद्वयहितं प्रभो ॥ ११ ॥ ॥ भगवानुवाच ॥ ॥ अपुत्रः पुरुषो यश्च नारी वा पर्वतात्मजे ॥ सौवर्ण स्तेन दातव्यः कल्पवृक्षो गुणान्वितः ॥ १२ ॥ कृत्रिमं वापि गृह्णीयाद्वृक्षं वा स्थावरादिकम् ॥ जातपुत्रोऽथ वा पुत्रः पुत्रत्वे परिकल्पयेत् ॥१३॥ तेन पुत्रवतां लोका देवि तस्य न संशयः ॥ कल्पवृक्षस्तु कर्तव्यः शुद्धकांचनसंभवः ॥ १४ ॥ बहुशाखः सुवर्णांगोप्यनेककुसुमान्वितः ॥ महास्कं धस्वरूपश्च रत्नालंकृतविग्रहः ॥ १५ ॥ फलानि तस्य दिव्यानि सौवर्णानि प्रकल्पयेत् ॥ कुर्याद्विंशत्पलादूर्द्ध्वं शक्त्या वा नृप सत्तम ॥ १६ ॥ दानमेतत्प्रदातव्यं राजतं चैवमुत्तमम् ॥ प्रवालांकुरसंछन्नं मुक्तादामावलंबितम् ॥ १७ ॥ चतुष्कोणेषु कुर्वीत चतुरः कांचनद्रुमान् ॥ सुवर्णस्य प्रमाणं च कथयामि वरानने ॥ १८ ॥ सहस्रेण तदर्द्धेन तस्याप्यर्द्धेन वा पुनः ॥ नद्यास्तीरे गृहे वापि[4] देवतायतने तथा ॥ १९ ॥ प्रागुदक्प्रवणे देशे मंडपं तत्र कारयेत् ॥ दशहस्तप्रमाणेन दशहस्ताश्च वेदिकाः ॥ २० ॥ हस्तमात्रप्रमाणेन कुंडमेकं सुशोभनम् ॥

१ संधिरार्षः कृतोद्वाहः उमया सहेति पदच्छेदः । यद्वा—कृतोद्वाहया उमया सहेति योजनानुसंधेया । २ देवदेवम्—इ० पा० । ३ प्रजाम्—इ० पा० । ४ पार्थ—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आग्नेय्यां कारयेद्राजन्मेखलासुपलेपनम् ॥ २१ ॥ तत्र वै ब्राह्मणा योज्या ऋग्यजुःसामपाठकाः ॥ उपदेष्टा च तत्रैव तृतीयः पंचमोऽथ वा ॥ ॥ २२ ॥ सर्वाभरणसंपन्नास्ताम्रपत्रद्वयान्विताः ॥ अनुलिप्ताश्चंदनेन वस्त्रमाल्यादिभूषिताः ॥ २३ ॥ गुडप्रस्थोपरिष्टाच्च स्थापयेत्कल्पपादपम् ॥ ब्रह्मविष्णुशिवोपेतं पंचशाखं सभास्करम् ॥ २४ ॥ कामदेवमधस्ताच्च संकलत्रं प्रयोजयेत् ॥ संतानं सह गायत्र्या पूर्वतो लवणोपरि ॥ २५ ॥ मंदारं दक्षिणे पार्श्वे श्रिया सह तथा घृते ॥ पश्चिमे पारिजातं तु उमया सह पादपम् ॥ २६ ॥ सुरभीसंयुतं तद्वत्तिलेषु हरिचंदनम् ॥ कौशेयवस्त्रसंयुक्तानिक्षुमाल्यफलान्वितान् ॥ २७ ॥ तथाष्टौ पूर्णकलशान्समंतात्परिकल्पयेत् ॥ अग्निप्रणयनं कृत्वा अधिवास्य च पादपान् ॥ २८ ॥ धान्यानि चैव सर्वाणि समंतात्परिकल्पयेत् ॥ नाना भक्ष्याणि नैवेद्यं सर्वं तत्र नियोजयेत् ॥ २९ ॥ दीपमाला विचित्राश्च ज्वालयेत समंततः ॥ मंत्रेण योजयित्वा ता मयोक्तेन वरानने ॥ ३० ॥ कामदस्त्वं हि देवानां कामवृक्षस्ततः स्मृतः ॥ मया संपूजितो भक्त्या पूरयस्व मनोरथान् ॥ ॥ ३१ ॥ एवं संपूज्य विधिना जागरं तत्र कारयेत् ॥ शंखवादित्रनिर्घोषैर्वेदध्वनिविमिश्रितैः ॥ ३२ ॥ होमं च ब्राह्मणाः कुर्युर्मद्गतेनांतरात्मना ॥ आघारावाज्यभागौ तु पूर्वं हुत्वा विचक्षणः ॥ ३३ ॥ तल्लिंगैः स्थापितान्देवान्होमेनाप्याययेत्ततः ॥ महाव्याहृतिभिश्चैव होमं कुर्युस्ततः परम् ॥ ॥ ३४ ॥ अयुतेन भवेत्सिद्धिर्यज्ञस्य वरवर्णिनि ॥ ततः प्रभाते चोत्थाय स्नात्वा शुक्लांबरः शुचिः ॥ ३५ ॥ दद्यात्पर्वसमीपे तु कल्पवृक्षं सदक्षिणम् ॥ त्रिःप्रदक्षिणमावृत्य मंत्रमेतमुदीरयेत् ॥ ३६ ॥ नमस्ते कल्पवृक्षाय विततार्थप्रदाय च ॥ विश्वंभराय देवाय नमस्ते विश्वमूर्तये ॥ ॥ ३७ ॥ यस्मात्त्वमेव विश्वात्मा ब्रह्मस्थाणुदिवाकराः ॥ मूर्तामूर्तपरं बीजमतः पाहि सनातन ॥३८॥ एवमामन्त्र्य तं दद्या गुरवे कल्पपादपम् ॥ चतुर्भ्यश्चापि ऋत्विग्भ्यः सामंतादीन्प्रकल्पयेत् ॥ ३९ ॥ अनेन विधिना यस्तु दानमेतत्प्रयच्छति ॥ तस्य पुण्यफलं देवि शृणुष्व गदतो मम ॥ ॥ ४० ॥ विमानवरमारुह्य सूर्यतेजःसमप्रभम् ॥ अप्सरोगणसंकीर्णं किंकिणीजालमालितम् ॥ ४१ ॥ याति लोकं सुरेशस्य सर्वबाधाविवर्जितम् ॥ पुनः कर्मक्षितावेत्य जायते श्रोत्रिये कुले ॥ ४२ ॥ यज्वा शूरोऽपि विद्वांश्च नरो भवति धार्मिकः ॥ पुनरंते प्राप्नुयाद्वै लोकं देवस्य शार्ङ्गिणः ॥ ४३ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कल्पवृक्षदानविधिवर्णनं नामाष्टसप्तत्युत्तरशततमोऽध्यायः ॥ १७८ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ भगवन्सर्वभूतेश सर्वलोकनमस्कृत ॥ अनुग्रहाय लोकानां कथयस्व ममापरम् ॥ १ ॥

१ ऋग्यजुः सामपाठकाः—इ० पा० । २ द्वितीयः—इ० पा० । ३ संकल्पेन—इ० पा० । ४ घृते—इ० पा० । ५ किंकिणीजालमंडितम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निष्पापो जायते येन आयुषा यशसा श्रिया ॥ तन्मे कथय देवेश दानं व्रतमथापि वा ॥ २ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु राजन्प्रवक्ष्यामि तव लोकहितेप्सया ॥ येनोपायेन जायंते सभाग्या मानवा भुवि ॥ ३ ॥ न व्रतैर्नोपवासैश्च न तीर्थगमनैरपि ॥ महापथादिमरणैर्न यज्ञैर्न श्रुतेन च ॥ ४ ॥ प्राप्यते मम लोकोऽयं दुष्प्राप्यस्त्रिदशैरपि ॥ पार्थ स्नेहान्महाभाग प्रवक्ष्यामि हितं तव ॥ ५ ॥ वक्ष्ये कल्पलतादानं शोभनं विधिपूर्वकम् ॥ सर्वं पूर्वविधानं च तत्र तन्त्रे प्रकल्पयेत् ॥ ६ ॥ दिक्पालेभ्यो बलिं तत्र क्षिपेद्वै विधिपूर्वकम् ॥ आधारावाज्यभागौ तु पूर्वं हुत्वा विचक्षणः ॥ ७ ॥ ततो ग्रहमखं कुर्याद्धोमं व्याहृतिभिस्ततः ॥ अयुतेनैव होमस्य समाप्तिरिह कथ्यते ॥ ८ ॥ ततः सर्वसमीपे तु स्नातः शुक्लांबरः शुचिः ॥ पुष्पधूपैरथाभ्यर्च्य वासोभिः सफलाक्षतैः ॥ ततः प्रदक्षिणीकृत्य मंत्रानेतानुदीरयेत् ॥ ९ ॥ नमो नमः पापविनाशिनीभ्यो ब्रह्मांडलोकेश्वरपालनीभ्यः ॥ आशाशताधिक्यफलप्रदाभ्यो दिग्भ्यस्तथा कल्पलतावधूभ्यः ॥ १० ॥ या यस्य शक्तिः परमा प्रदिष्टा वेदे पुराणे सुरसत्तमस्य ॥ तां पूजयामीह परेण साम्ना सा मे शुभं यच्छतु तां नतोऽस्मि ॥ ११ ॥ एवमुच्चार्य ताः सर्वा ब्राह्मणेभ्यो निवेदयेत् ॥ दशाशाः परया भक्त्या तास्ताः संकल्प्य चेतसि ॥ १२ ॥ ततः क्षमापयेद्विप्रान्प्रणिपत्य सदक्षिणान् ॥ अनेन विधिना यस्तु दानमेतत्प्रयच्छति ॥ १३ ॥ तस्य पुण्यफलं राजन्कथ्यमानं निबोध मे ॥ इह लोके स विजयी धनवान्पुत्रवान्भवेत् ॥ १४ ॥ मृतो लोकाधिपपुरे प्रतिमन्वंतरं वसेत् ॥ महाशक्तिवृतः पश्चादेत्यं राजन्रसातलम् ॥ १५ ॥ जितसर्वमहीपालश्चक्रवर्ती भवेद्भुवि ॥ या च नारी महाराज दानमेतत्प्रयच्छति॥१६॥ सा चक्रवर्तिनं पुत्रं सूते शक्तिसमन्वितम् ॥ यश्च पश्येद्दीयमानं दत्तं यश्चानुमोदते ॥ १७ ॥ शृणोति वाच्यमानं च सोपि प्रेत्य विमुच्यते॥१८॥ याः शक्रवह्नियमनैर्ऋतपाशहस्ता वातेंदुराजशिवकेशवशंभुशक्त्यः ॥ ता वै प्रपूज्य दशकल्पलता द्विजेभ्यो देहि त्रिलोकविजये यदि तेऽस्ति बुद्धिः ॥ १९ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कल्पलतादानविधिवर्णनं नामैकोनाशीत्युत्तरशततमोऽध्यायः ॥ १७९ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ भगवन्क्षत्रियैः शूरैः स्ववीर्योपात्तसंचयैः ॥ कानि दानानि देयानि पवित्राणि शुभानि च ॥ १ ॥ अन्यैर्वा पुरुषैः कृष्ण अधर्मभयभीरुभिः ॥ ग्रहपीडाभिसंतप्तैर्दुःस्वप्नाद्युपतापितैः ॥ २ ॥ इह लोके परे चैव विहितं सर्वकामदम् ॥ विशेषविहितं दानं कथयस्व महामते ॥ ३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शृणु भूपाल भद्रं ते दानधर्ममनुत्तमम् ॥ विशेषेण महीपानां हिताय



१ तावत्—इ० पा० । २ मुख्यफलम्—इ० पा० । ३ सुरलोके वसत्यसौ ॥ पश्चादेव महाराज चक्रवर्ती धराधिपः—इ० पा० । ४ अनुमोदयेत्—इ० पा० । ५ पापैः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च न संशयः ॥ ४ ॥ दानानि बहुरूपाणि नानाशास्त्रोदितानि च ॥ गोदानादीनि राजेन्द्र प्रधानानि न संशयः ॥ ५ ॥ किं तु प्रधानमेकं ते दानं वक्ष्यामि भारत ॥ वैरोचनाय यत्सर्वं शुक्रः प्रोवाच भारत ॥ ६ ॥ ॥ शुक्र उवाच ॥ ॥ शृणु दैत्यपते दानं सर्वपापप्रणाशनम् ॥ आधयो व्याधयश्चैव ग्रहपीडाः सुदारुणाः ॥ ७ ॥ येन दत्तेन नश्यंति पुण्यमाप्नोति चोत्तमम् ॥ कार्त्तिक्यामयने चैव ग्रहणे शशिसूर्ययोः ॥ ॥ ८ ॥ दानमेतत्प्रदातव्यं विषुवे सूर्यसंक्रमे ॥ पुण्यं दिनमथासाद्य जितक्रोधो जितेंद्रियः ॥ ९ ॥ संस्थाप्य दारुजं दिव्यं हेमपट्टैरलंकृतम् ॥ रथं सुचक्राक्षधरं युगयोक्त्रसमन्वितम् ॥ १० ॥ सुवर्णध्वजसंयुक्तं सितासितपताकिनम् ॥ पुष्पप्रकरसंकीर्णे प्रागुदक्प्रवणे शुभे ॥ ११ ॥ नद्यास्तीरेऽथ वा गोष्ठे विचित्रे वा गृहांगणे ॥ रथस्य पूर्वभागे तु कृत्वा वेदीमनुत्तमाम् ॥ १२ ॥ पुराणवेदविद्यावान्विनयाचारसंयुतः ॥ तस्यां संस्थापयेद्देवान्ब्रह्मादीन्कथयामि ते ॥ १३ ॥ मध्ये ब्रह्मा प्रतिष्ठाप्यः पूजयेत्प्रणवेन तम् ॥ विष्णुरुत्तरतः स्थाप्यः पौरुषेण तमर्चयेत् ॥ १४ ॥ सूक्तेन रुद्रं रौद्रेण दक्षिणस्यां समर्चयेत् ॥ ग्रहान्सूर्यमुखांश्चैव विधिवत्पूजयेत्तथा ॥ पुष्पैर्गंधैः फलैर्भक्ष्यैर्दीपमालाभिरेव च ॥ १५ ॥ पूजयेद्गंधकुसुमैः श्वेतवस्त्रैः सचंदनैः ॥ शंखभेरीमृदंगानां शब्दैः सर्वत्रगामिभिः ॥ १६ ॥ ब्रह्मघोषविमिश्रैश्च कारयेत महोत्सवम् ॥ कुंडं कृत्वा विधानेन हस्तमात्रप्रमाणतः ॥ १७ ॥ आग्नेय्यां दिशि राजेंद्र ब्राह्मणांस्तत्र पूजयेत् ॥ चतुश्चारणिकान्विप्रान्पूजितान्ब्रह्मभूषणैः ॥ १८ ॥ चतुरोऽष्टौ महाराज गुरुरेकोऽथवा भवेत् ॥ होमोपकरणं सर्वं मेलयित्वा तिलान्घृतम् ॥ १९ ॥ अग्निकार्यं ततः कुर्याद्यथावद्विधिपूर्वकम् ॥ आघारावाज्यभागौ तु हुत्वा प्राग्वच्च तौ ततः ॥ २० ॥ विष्णवे शितिकण्ठाय मंत्रैः पूर्वोदितैः शुभैः ॥ ग्रहयज्ञोदितैश्चैवं ग्रहाणां होम इष्यते ॥ २१ ॥ एवं यज्ञविधिं कृत्वा यजमानो द्विजैः सह ॥ योजयेत रथे दांतौ गजौ लक्षणसंयुतौ ॥ २२ ॥ विचित्रतनुसंवीतौ शुभकक्षौ सुघंटिकौ ॥ हेमपट्टैः सुतिलकैः शोभितौ शंखचामरैः ॥ २३ ॥ दिव्यमुक्तापरिच्छन्नौ दिव्यांकुशसमन्वितौ ॥ महामात्रान्वितौ चैव सर्वाभरणभूषितौ ॥ २४ ॥ एवं विधिं ततः कृत्वा रथं तं सगजं नरः ॥ आरोपयेत्ततस्तस्मिन्ब्राह्मणं शंसितव्रतम् ॥ २५ ॥ भूषितं कण्ठकटकैः कर्णवेष्टांगुलीयकैः ॥ आगुप्तचोलकच्छत्रवस्त्रायुधसमन्वितम् ॥ २६ ॥ बद्धतूणिं धनुष्पाणिं बहुचर्मविभूषितम् ॥ खड्गधेनुकया नद्धं हारालंकृतविग्रहम् ॥ २७ ॥ यजमानस्ततः प्राज्ञः शुक्लांबरधरः शुचिः ॥ रथं प्रदक्षिणीकृत्य गृहीतकुसुमांजलिः ॥ २८ ॥ इममुच्चारयेन्मन्त्रं सर्वपापप्रणाशनम् ॥ कुमुदैरावणौ पद्मः पुष्पदंतोऽथ

१ च-इ० पा० । २ भार्गव--इ० पा० । ३ सितासितसिताकिनम्-इ० पा० । ४ नद्यास्तीर्थे गवां गोष्ठे-इ० पा० । ५ सर्वैः-इ० पा० । ६ दिव्यांशुकसमन्वितौ-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वामनः ॥ सुप्रतीकोंजनः सार्वभौमोऽष्टौ देवयोनयः ॥ २९ ॥ तेषां वंशप्रसूतौ तु बलरूपसमन्वितौ ॥ तद्युक्तरथदानेन मम स्यातां वरप्रदौ ॥३०॥ रथोऽयं यज्ञपुरुषो ब्राह्मणोत्र शिवः स्वयम् ॥ ममेभरथदानेन प्रीयेतां शिवकेशवौ ॥३१॥ इत्युच्चार्य महाभाग पूजयित्वा पुनःपुनः ॥ आरोपयेत्तत स्तस्मिन्ब्राह्मणं शंसितव्रतम् ॥३२॥ स्वदारनिरतं शांतं वेदवेदांगपारगम् ॥ पश्चात्स्यभिमतं चैव अव्यंगं व्याधिवर्जितम् ॥ ३३ ॥ पुनः प्रदक्षिणी कृत्य रथस्थं द्विजसत्तमम् ॥ आद्वारमनुगच्छेच्च प्रणिपत्य गृहं विशेत् ॥ ३४ ॥ ततो यज्ञावसाने तु दीनांधादीञ्जडान्कृशान् ॥ पूजयेद्विविधैर्दानैर्व स्त्रगोदानभोजनैः ॥३५॥ अनेनैव विधानेन संकल्प्य रथमुत्तमम्॥ कुण्डमंडपसंभारभूषणाच्छादनादिकम् ॥३६॥ तदेव होमद्रव्यं च होममंत्रास्त एव हि ॥ विशेषोऽश्वरथे राजन्कथ्यमानो निबोध्यताम् ॥३७॥ हयौ लक्षणसंयुक्तौ खलीनालंकृताननौ ॥ विचित्रवस्तुसंवीतौ कण्ठाभरणभूषितौ॥ ॥ ३८ ॥ सुप्रग्रहयुतौ योज्यौ दाता तस्मिन्रथोत्तमे ॥ तं प्रदक्षिणमावृत्त्यमंत्रमेतमुदीरयेत् ॥ ३९ ॥ नमोस्तु ते वेदतुरंगमाय त्रयीमयाय त्रिगुणात्मकाय ॥ सुदुर्गमार्गे सुखपानपात्रे नमोऽस्तु ते वाजिधराय नित्यम् ॥ ४० ॥ रथोऽयं सविता साक्षाद्वेदाश्चामी तुरंगमाः ॥ अरुणो ब्राह्मणश्चायं प्रयच्छंतु सुखं मम ॥ ४१ ॥ इत्युच्चार्य ततस्तस्मिन्रथे ब्राह्मणसत्तमम् ॥ आरोपयेद्गृहाद्वारं यावदेतमनुव्रजेत् ॥ ४२ ॥ अनेन विधिना यस्तु दद्याद्वाजिरथं बुधः ॥ तस्माद्वाहरथं राज्यं तस्य पुण्यफलं शृणु ॥ ४३ ॥ सर्वपापविनिर्मुक्तः सर्वामयविवर्जितः ॥ मन्वंतरशतं यावत्सर्व भोगसमन्वितः ॥ ४४ ॥ अप्सरोगणसंकीर्णे विमाने सूर्यवर्चसे ॥ दिव्यभोगान्वितः श्रीमान्कामचारी वसेद्दिवि ॥ ४५ ॥ पुण्यक्षयादिहाभ्येत्य राजा भवति धार्मिकः ॥ पुत्रपौत्रान्वितश्चैव चिरंजीवी प्रियातिथिः ॥४६॥ गजेनैकेन निर्दिष्टः कश्चिद्गजरथो नृप ॥ एकेनाश्वेनाश्वरथः कथ्यते वेदवादिभिः ॥ ४७ ॥ दानमंत्रास्त एवोक्ताः फलं तत्र निगद्यते ॥ ४८ ॥ यच्छंति ये रथवरं सुधुराक्षचक्रं विक्रांतवारणयुतं तुरगान्वितं वा ॥ सोपस्करं कनकपट्टविचित्रितांगं ते स्यंदनेन सुरराजपुरं प्रयांति ॥ ४९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे गजरथाश्वरथदानविधिवर्णनं नामाशीत्युत्तरशततमोऽध्यायः ॥१८०॥ ॥छ॥ ॥ युधिष्ठिर उवाच ॥ ॥ दानान्यन्यानि मे कृष्ण कथयस्व यदूत्तम ॥ मंगल्यानि पवित्राणि सर्वपापहराणि च ॥ १ ॥ संसारसागरोत्तारहेतुभूतोऽसि माधव ॥ धर्माधर्मपरिज्ञाने त्वदन्यो नेह कश्चन ॥२॥ ॥ श्रीकृष्ण उवाच ॥ ॥ दानानि बहुरूपाणि कथितानि मया तव ॥ पुनरेव प्रवक्ष्यामि यद्यस्ति तव कौतुकम् ॥ ३ ॥ कथितानि मया तुभ्यं कथयि



१ महाभागे इति संदिग्धः संवादः । २ विचित्रवस्त्रसंवीती–इ० पा० । ३ कल्पचारी–इ० पा० । ४ परः–इ० पा० । ५ श्रीमान्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्यामि यानि च ॥ महतार्थेन सिध्यंति प्रयच्छंति महत्फलम् ॥ ४ ॥ काम्यो दानविधिः पार्थ क्रियमाणः प्रयत्नतः ॥ फलाय मुनिभिः प्रोक्तो विपरीतो भयाय च ॥ ५ ॥ ज्ञेयं निष्कशतं सर्वदानेषु विधिरुत्तमः ॥ मध्यमस्तु तदर्द्धेन तदर्द्धेनावरः स्मृतः ॥ ६ ॥ एवं वृक्षरथेंद्राणां धेनोः कृष्णाजिनस्य च ॥ अशक्तस्यापि कृष्णोऽयं पंचसौवर्णिको विधिः ॥ ७ ॥ अतोऽप्यूनेन यो दद्यान्महादानं नराधिप ॥ प्रतिगृह्णाति वा तस्य दुःखशोकावहं भवेत् ॥ ८ ॥ आदौ तावत्प्रवक्ष्यामि कालाख्यं पुरुषं तव ॥ सप्तसागरदानं च महाभूतघटन्तथा ॥ ९ ॥ अर्घ्यप्रदानमत्रोक्त मात्मप्रतिकृतिस्तथा ॥ सुवर्णाश्वः स्मृतः षष्ठः सुवर्णाश्वरथोऽपरः ॥ १० ॥ सर्वदानोत्तमं राजन्कृष्णाजिनमथाष्टमम् ॥ विश्वचक्रं च नवमं हैमो गजरथस्तथा ॥ ११ ॥ एतत्ते दानदशकं वेद्मि पार्थिवसत्तम ॥ देहि दापय सद्बुद्धिं दाने नृपनरोत्तम ॥ १२ ॥ दानाद्दते नोपकारो विद्यते धनिनोऽपरः ॥ दीयमानो हि नापैति भूय एवाभिवर्धते ॥ १३ ॥ कूप उल्लिख्यमानोऽपि भवत्येव बहूदकः ॥ पुण्यं दिनमथासाद्य भूमिभागे समे शुभे ॥ १४ ॥ चतुर्थ्यां वा चतुर्दश्यां विष्ट्यां वा पांडुनंदन ॥ पुमान्कृष्णतिलैः कार्यो रौप्यदंतः सुवर्णदृक् ॥ १५ ॥ खड्गोद्यतकरो दीर्णो जपाकुसुमकुंडलः ॥ रक्तांबरधरः स्रग्वी शंखमालाविभूषितः ॥ १६ ॥ तीक्ष्णासिपत्रधनुषा विस्फारितकटीतटः ॥ उपानद्युगयुक्तो हि कृष्णकंबलपार्श्वगः ॥ १७ ॥ गृहीतमांसपिंडश्च वामे करतले तथा ॥ एवं विधं नरं कृत्वा गृहीतकुसुमांजलिः ॥ १८ ॥ संपूज्य गंधकुसुमैर्नैवेद्यं विनिवेद्य च ॥ तिलाज्यं जुहुयात्तत्र त्र्यंबकेति च मंत्रतः ॥ १९ ॥ स्वगृह्योक्तविधानेन शतमष्टोत्तरं यजेत् ॥ यजमानः प्रसन्नात्मा इमं मंत्रमुदीरयेत् ॥ २० ॥ सर्वं कलयसे यस्मात्कालस्त्वं तेन भण्यसे ॥ ब्रह्मविष्णुशिवादीनां त्वमसाध्योऽसि सुव्रत ॥ २१ ॥ पूजितस्त्वं मया भक्त्या प्रार्थितश्च तथा सुखम् ॥ यदुच्यते तव विभो तत्कुरुष्व नमोनमः ॥ २२ ॥ एवं संपूजयित्वा तं ब्राह्मणाय निवेदयेत् ॥ ब्रह्माणं प्रथमं पूज्य वासोभिर्भूषणैस्तथा ॥ २३ ॥ दक्षिणां शक्तितो दद्यात्प्रणिपत्य विसर्जयेत् ॥ अनेन विधिना यस्तु दानमेतत्प्रयच्छति ॥ २४ ॥ नापमृत्युभयं तस्य न च व्याधिकृतं भयम् ॥ भवत्यव्याहतैश्वर्यः सर्वबाधाविवर्जितः ॥ २५ ॥ देहांते सूर्यभवनं भित्त्वा याति परं पदम् ॥ पुण्यक्षयादिहाभ्येत्य राजा भवति धार्मिकः ॥ संतत्या च श्रिया युक्तः पुत्रपौत्रसमन्वितः ॥ २६ ॥ संपूज्य कालपुरुषं विधिवद्द्विजाय दत्त्वा शुभाशुभफलोदयहेतुभूतः ॥

१ यथार्थेनः—इ० पा० । २ कृष्णोऽयम्—इ० पा० । ३ पुरुषोत्तमम्—इ० पा० । ४ गंडपः—इ० पा० । ५ कृपाणम्—इ० पा० । ६ इद वचनमब्रवीत्—इ० पा० । ७ सकालनियमे यस्मात्कालस्त्वं तेन भण्यसे—इ० पा० । ८ प्राप्तिनश्च—इ० पा० । ९ यथा—इ० पा० । १० नु—इ० पा० । ११ ब्राह्मणम्—इ० पा० । १२ दत्त्वा—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रोगांतरे सकलदोषमये च देही नो वध्यभावमुपगच्छति तत्प्रभावात् ॥ २७ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कालपुरुषदानविधिवर्णनं नामैकाशीत्युत्तरशततमोऽध्यायः ॥ १८१ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथातः संप्रवक्ष्यामि पार्थदानमनुत्तमम् ॥ सप्तसागरकं नाम सर्वपापप्रणाशनम् ॥ १ ॥ पुण्यं दिनमथासाद्य युगादिग्रहणादिकम् ॥ कारयेत्सप्तकुण्डानि कांचनानि विचक्षणः ॥ २ ॥ प्रादेशमात्राणितथारत्निमात्राणि वा पुनः ॥ कुर्यात्सप्तशतादूर्ध्वमासहस्राच्च शक्तितः ॥ ३ ॥ संस्थाप्यानि च सर्वाणि कृष्णाजिनतिलोपरि ॥ प्रथमं पूरयेत्कुडं लवणेन विचक्षणः ॥ ४ ॥ द्वितीयं पयसा तद्वत्तृतीयं सर्पिषा पुनः ॥ चतुर्थं तु गुडेनैव दध्ना पंचममेव च ॥ ५ ॥ षष्ठं शर्करया तद्वत्सप्तमं तीर्थवारिणा ॥ स्थापयेल्लवणस्यांते ब्रह्माणं कांचनं शुभम् ॥ ६ ॥ केशवं क्षीरमध्ये तु घृतमध्ये महेश्वरम् ॥ भास्करं गुडमध्ये तु दधिमध्ये सुराधिपम् ॥ ७ ॥ शर्करायां न्यसेल्लक्ष्मीं जलमध्ये तु पार्वतीम् ॥ सर्वेषु सर्वरत्नानि धान्यानि च समंततः ॥ ८ ॥ स्थापयेत्पुरुषश्रेष्ठ यथालाभं यथासुखम् ॥ ततः पर्वसमीपे तु स्नातः शुक्लांबरो गृही ॥ ९ ॥ त्रिःप्रदक्षिणमावृत्य मंत्रानेतानुदीरयेत् ॥ नमो वः सर्वसिंधूनामाधारेभ्यः सनातनाः ॥ १० ॥ जंतूनां प्राणदेभ्यश्च समुद्रेभ्यो नमोनमः ॥ पूर्णाः सर्वे भवंतो वै क्षारक्षीरघृतैक्षवैः ॥ ११ ॥ दध्ना शर्करया तद्वत्तीर्थवारिभिरेव च ॥ तस्मादघौघविध्वंसं कुरुध्वं मम मानदाः ॥ १२ ॥ अलक्ष्मीः प्रशमं यातु लक्ष्मीश्चास्तु गृहे मम ॥ एवमुच्चार्य तान्दद्याद्ब्राह्मणेभ्यो युधिष्ठिर ॥ १३ ॥ एकमेवमथाभ्यर्च्य पुष्पवस्त्रविलेपनैः ॥ बहूनामेतदुद्दिष्टं दानमेकस्य वा पुनः ॥ १४ ॥ देयं वा सर्व सामान्यं क्रियाविप्रानुरूपतः ॥ दानं सप्तसमुद्राख्यं यः प्रयच्छति पार्थिव ॥ १५ ॥ तस्य गृहान्न चलति लक्ष्मीर्यावत्कुलाष्टकम् ॥ पूज्यमानः सुरगणैः सिद्धविद्याधरोरगैः ॥ १६ ॥ देवलोकान्न च्यवते सप्तमन्वंतराण्यसौ ॥ ततश्च वेदसंस्कारात्परं ब्रह्माधिगच्छति ॥ १७ ॥ इति ददाति रसामरसंयुताञ्छुचिरविस्मयदानिह सागरान् ॥ अनलकांचनरत्नमयानसौ पदमुपैति हरे रमया वृतम् ॥ ॥ १८ ॥ दानं प्रधानतरमेतदतीव विप्रे प्रोक्तं युधिष्ठिर समाधिधिया विचिंत्य ॥ हैमान्विधाय जलधीन्वितर स्वशक्त्या प्राप्नोषि येन सरसानि समीहितानि ॥ १९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे सप्तसागरदानविधिवर्णनं नाम द्व्यशीत्युत्तरशततमोऽध्यायः ॥ १८२ ॥ ॥छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथातः संप्रवक्ष्यामि दानमन्यत्तवोत्तमम् ॥ महाभूतघटं नाम महापातकनाशनम् ॥ १ ॥

१ सर्वदानम्–इ० पा० । २ प्रमाणा–इ० पा० । ३ देयानि–इ० पा० । ४ सर्वेसमीपेतु–इ० पा० । ५ एतदिष्टं वै दानमेतदुदीरयेत्–इ० पा० । ६ अमरान्वृतम्–इ० पा० । ७ नरोत्तम–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुण्यां तिथिं समासाद्य स्वनुलिप्ते गृहांगणे ॥ कारयेत्कांचनं कुंभं महारत्नान्वितं पुनः ॥ २ ॥ प्रादेशादंगुलशतं यावत्कुर्यात्प्रमाणतः ॥ शक्त्या पंचपलादूर्ध्वमाशताच्च नरोत्तम ॥ ३ ॥ क्षीराज्यपूरितं कृत्वा कल्पवृक्षसमन्वितम् ॥ पद्मासनगतास्तत्र ब्रह्मविष्णुमहेश्वराः ॥ ४ ॥ लोकपाला महेन्द्राश्च स्ववाहनसमास्थिताः ॥ ऋग्वेदः साक्षसूत्रश्च यजुर्वेदः सपंकजः ॥ ५ ॥ वीणाधारी सामवेदो ह्यथर्वा स्रक्स्रुभान्वितः ॥ पुराणवेदो वरदः साक्षसूत्रकमंडलुः ॥ ६ ॥ सप्तधान्यानि पुरतः स्थापयेच्छक्तितो बुधः ॥ पादुकोपानहश्छत्रं चामराण्यासनायुधान् ॥ ७ ॥ एवं प्रकल्प्य विधिवन्महाभूतघटं नरः ॥ गुडसारोपरिगतं माल्यवस्त्रैरथार्चयेत् ॥ ८ ॥ अथ पर्वसमीपे तु स्नात्वा नियतमानसः ॥ त्रिः प्रदक्षिणमावृत्य मंत्रमेत मुदीरयेत् ॥ ९ ॥ यस्मान्न किंचिदप्यस्ति महाभूतैर्विना कृतम् ॥ महाभूतमयश्चायं तस्माच्छांतिं ददातु मे ॥ १० ॥ अत्र सन्निहिता देवाः स्था पिता विश्वकर्मणा ॥ ते मे शांतिं प्रयच्छंतु भक्तिभावेन पूजिताः ॥ ११ ॥ इत्येवं पूजयित्वा तु महाभूतघटं नरः ॥ ब्राह्मणं पूजयित्वा तु भूषणा च्छादनादिभिः ॥ १२ ॥ महाभूतघटं दद्यात्पर्वकाले यतव्रतः ॥ पुनः प्रदक्षिणीकृत्य ब्राह्मणं तं क्षमापयेत् ॥ १३ ॥ अनेन विधिना यश्च दान मेतत्प्रयच्छति ॥ एकविंशत्कुलोपेतः शिवलोके प्रयात्यसौ ॥ १४ ॥ पुण्यक्षयादिहाभ्येत्य राजा भवति धार्मिकः ॥ अजेयः शत्रुसंघातैर्महाबल पराक्रमः ॥ १५ ॥ क्षत्रधर्मरतो विद्वान्देवब्राह्मणपूजकः ॥१६॥ अष्टापदोत्तमघटं विमलं विधाय ब्रह्मेशकेशवयुतं सहलोकपालैः ॥ क्षीराज्यपूर्णवि वरं प्रणिपत्य भक्त्या विप्राय देहि तव दानशतैः किमन्यैः ॥१७॥ इति श्रीभविष्यमहापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे महाभूतघटदान विधिवर्णनं नाम त्र्यशीत्युत्तरशततमोऽध्यायः ॥ १८३ ॥ ॥छ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ शय्यादानं प्रवक्ष्यामि तव पांडुकुलोद्वह ॥ यद्दत्त्वा सुखभागी स्यादिह लोके परत्र च ॥ १ ॥ शय्यादानं प्रयच्छंति सर्वदैव द्विजोत्तमाः ॥ अनित्यं जीवितं यस्मात्कोऽन्यः पश्चात्प्रदा स्यति ॥ २ ॥ तावत्सबंधुः सपिता यावज्जीवति भारत ॥ मृतो मृत इति ज्ञात्वा क्षणात्स्नेहो निवर्तते ॥ ३ ॥ तस्मात्स्वयं प्रदातव्यं शय्याभोज्यजलादिकम् ॥ आत्मैव ह्यात्मनो बन्धुरिति संचिन्त्य चेतसि ॥ ४ ॥ आत्मैव यो हि नात्मानं दानभोगैः समर्चयेत् ॥ कोऽन्यो हिततरस्तस्मात्कः पश्चात्पूजयिष्यति ॥ ५ ॥ तस्माच्छय्यां समासाद्य सारदारुमयीं दृढाम् ॥ दंतपत्रचितां रम्यां हिमपट्टैरलंकृताम् ॥ ६ ॥

१ त्रिंशम्–इ० पा० । २ प्रयत्नतः–इ० पा० । ३ ब्रह्मेन्द्रकेशवयुतम्–इ० पा० । ४ पांडुकुलोद्भव–इ० पा० । ५ सर्वभागी–इ०, सुखभोगी–इ० च पा० । ६ द्विजोत्तम–इ० पा० । ७ दान कोऽन्यः प्रदास्यति–इ० पा० । ८ यस्मात्तस्मात्प्रदातव्यं शय्याभोज्यजलादिकम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हंसतूलीप्रतिच्छन्नां सुभगांसोपधानिकाम् ॥ प्रच्छादनपटीयुक्तां गंधधूपाधिवासिताम् ॥ ७ ॥ तस्यां संस्थापयेद्धैमं हरिं लक्ष्मीसमन्वितम् ॥ उच्छीर्षके धृतं चैव कलशं परिकल्पयेत् ॥ ८ ॥ विज्ञेयं पांडव सदा सनिद्राकलपकं बुधैः ॥ तांबूलं कुंकुमक्षोदकर्पूरागरुचंदनम् ॥ ९ ॥ दीपकोपानहच्छत्रचामरासनभोजनम् ॥ पार्श्वेषु स्थापयेच्छक्त्या सप्तधान्यानि चैव हि ॥ १० ॥ शयनस्थस्य भवति यदन्यदुपकारकम् ॥ भृंगारकाद्यपुष्पाणि पंचवर्णवितानकम् ॥ ११ ॥ शय्यामेवंविधां कृत्वा ब्राह्मणायोपदापयेत् ॥ सपत्नीकाय संपूज्य पुण्येऽह्नि विधिपूर्वकम् ॥ १२ ॥ नमस्ते सर्वदेवेश शय्यादानं कृतं मया ॥ देहि तस्माच्छांतिफलं नमस्ते पुरुषोत्तम ॥ १३ ॥ यथा न कृष्ण शयनं शून्यं सागरजातया ॥ शय्या ममाप्यशून्यास्तु तथा जन्मनिजन्मनि ॥ १४ ॥ दत्त्वैवं तल्पममलं प्रणिपत्य विसर्जयेत् ॥ एकादशाहेऽपि तथा विधिरेप प्रकीर्तितः ॥ १५ ॥ ददाति यदि धर्मार्थं मानवो बांधवे मृते ॥ विशेषं चात्र राजेंद्र कथ्यमानं निबोध मे[1] ॥ १६ ॥ तेनोपभुक्तं यद्वस्तु किंचित्पूर्वं गृहे सता ॥ तद्गात्रलग्नं च तथा वस्त्रवाहनभाजनम् ॥ १७ ॥ यैदिष्टं च तथास्यासीत्तत्सर्वं[2] परिकल्पयेत् ॥ स एव पुरुषो हैमस्तस्यांतं स्थापयेत्तथा ॥ १८ ॥ पूजयित्वा प्रदातव्यो मृतशय्या यथोदिता ॥ स्वर्गे पुरंदरगृहे सूर्यपुत्रालयेथ वा ॥ १९ ॥ सुखं वसत्यसौ जंतुः शय्यादानप्रभावतः ॥ पीडयंति न तं याम्याः पुरुषा भीषणाननाः ॥ २० ॥ न घर्मेण न शीतेन बाध्यते स नरः क्वचित् ॥ अपि पापसमायुक्तः स्वर्गलोके महीयते ॥ २१ ॥ विमानवरमारूढः सेव्यमानोप्सरोगणैः ॥ आभूतसंप्लवं यावत्तिष्ठेत्पातकवर्जितः ॥ २२ ॥ शय्याप्रदानममलं तव पांडुपुत्र संकीर्तितं सकलसौख्यांनिधानमेतत्[3] ॥ तयो ददाति विधिवत्स्वयमेव नाके तल्पे विकल्परहितः स विभाति सत्यम् ॥ २३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे शय्यादानविधिवर्णनं नाम चतुरशीत्युत्तरशततमोऽध्यायः ॥ १८४ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ आत्मप्रतिकृतिर्नाम यथोक्तं कस्यचित्पुरा ॥ ततोऽहं संप्रवक्ष्यामि दानं मानविवर्धनम् ॥ १ ॥ दानकालः सदा तस्य मुनिभिः परिकीर्तितः ॥ पुण्यैःपुण्यदिनं पार्थ प्राप्यते जीवितैर्न च ॥ २ ॥ लोहजां प्रकृतिं भव्यां कारयित्वात्मनो नृप ॥ अभीष्टवाहनगतामिष्टालंकारसंयुताम् ॥ ३ ॥ अभीष्टलोकसहितां सर्वोपस्करसंयुताम् ॥ ततः पट्टपटीवस्त्रैश्छादितां रत्नभूषिताम् ॥ ४ ॥ कुंकुमेनानुलिप्तांगीं कर्पूरागुरुवासिताम् ॥ स्त्री चेद्दाति शयने शयितां कारयेत्स्वयम् ॥ ५ ॥ यद्यदिष्टतमं किंचित्तत्सर्वं पार्श्वतो न्यसेत् ॥ उपकारकरं स्त्रीणां स्वशरीरे च यद्भवेत् ॥ ६ ॥ तत्सर्वं

१ निशामय—इ० पा० । २ यद्यदिष्टं च तयासीत्—इ० पा० । ३ सकलसौख्यनिधानभूतम्—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थापयेत्पार्श्वे स्वयं संचिंत्य चेतसि ॥ एतत्सर्वं मेलयित्वा स्वेस्वे स्थाने निधाय च ॥ ७ ॥ पूजयित्वा लोकपालान्ग्रहान्देवीं विनायकम् ॥ तत शुक्लांबरः स्नात्वा गृहीतकुसुमांजलिः ॥ ८ ॥ इममुच्चारयेन्मंत्रं विप्रस्य पुरतो बुधः ॥ आत्मनः प्रतिमा चेयं सर्वोपकरणैर्युता ॥ ९ ॥ सर्वरत्नसमायुक्ता तव विप्र निवेदिता ॥ आत्मा शंभुः शिवः शौरिः शक्रः सुरगणैर्वृतः ॥ १० ॥ तस्मादात्मप्रदानेन ममात्मा सुप्रसीदतु ॥ इत्युच्चार्य ततो दद्याद्ब्राह्मणाय युधिष्ठिर ॥ ११ ॥ ब्राह्मणश्चापि गृह्णीयात्कोदादिति च कीर्तयन् ॥ ततः प्रदक्षिणीकृत्य प्रणिपत्य विसर्जयेत् ॥ १२ ॥ विधिनानेन राजेन्द्र दानमेतत्प्रयच्छति ॥ यः पुमानथ वा नारी शृणुयत्फलमाप्नुयात् ॥ १३ ॥ साग्रं वर्षशतं दिव्यं स्वर्गलोके सुरैर्वृतः ॥ अभीष्टफलदानेन ह्यभीष्टफलभाग्भवेत् ॥ १४ ॥ यत्रैवोत्पद्यते जंतुः प्राप्ते कर्मक्षये पुनः ॥ तत्रैव सर्वकामानां फलभाग्भवते नृपः ॥ १५ ॥ इष्टबंधुजनैः सार्द्धं न वियोगं कदाचन ॥ प्राप्नोति पुरुषो राजन्स्वर्गे चानंत्यमश्नुते ॥ १६ ॥ यश्चात्मनः प्रतिकृतिं वरवाहनस्थां हैमीं विधाय धनधान्यसमाकुलां च ॥ सोपस्करं द्विजवराय ददाति भक्त्या चंद्रार्कवत्स दिवि भाति हि राजराजः ॥ १७ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवाद आत्मप्रतिकृतिदानविधिवर्णनं नाम पञ्चाशीत्युत्तरशततमोऽध्यायः ॥ १८५ ॥ ॥ छ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ सांप्रतं संप्रवक्ष्यामि हिरण्याश्वविधिं परम् ॥ यस्य प्रसादात्पुरुषः शाश्वतं फलमश्नुते ॥ १ ॥ पुण्यं दिनमथासाद्य पात्रं वापि गुणाधिकम् ॥ शक्तितस्त्रिपलादूर्ध्वमाशताच्च नरोत्तम ॥ २ ॥ खलीनालंकृतमुखं कारयेद्धेमवाजिनम् ॥ सुखरं सोन्नतस्कंधं दृढजानुं सवालधिम् ॥ ३ ॥ स्थापयेद्वेदिमध्ये तु कृष्णाजिनतिलोपरि ॥ कौशेयवस्त्रसंवीतं कुंकुमेन विलेपितम् ॥ ४ ॥ संपूज्य कुसुमैः श्वेतैश्चणकान्विनिवेद्य च ॥ ततः पर्वसमीपे तु गृहीतकुसुमांजलिः ॥ ५ ॥ इममुच्चारयेन्मंत्रं पुराणोक्तं यतव्रतः ॥ नमस्ते सर्वदेवेश वेदाहरणलंपट ॥ ६ ॥ वाजिरूपेण मामस्मात्पाहि संसारसागरात् ॥ त्वमेव सप्तधा भूत्वा छंदोरूपेण भास्करम् ॥ ७ ॥ यस्माद्धारयसे लोकानतः पाहि सनातन ॥ एवमुच्चार्य तं राजन्विप्राय प्रतिपादयेत् ॥ ८ ॥ प्रदक्षिणं ततः कृत्वा प्रणिपत्य विसर्जयेत् ॥ अनेन विधिना राजन्हिरण्याश्वमलंकृतम् ॥ ९ ॥ दत्त्वा पापक्षयाद्भानोर्लोकमाप्नोति शाश्वतम् ॥ तस्मिन्नहनि भुंजीत तैलक्षारविवर्जितम् ॥ १० ॥ पुराणश्रवणं तद्वत्कारयेद्द्विज

१ बुधैः–इ० पा० । २ सर्वसंपत्समायुक्ता–इ० पा० । ३ त्वया जितं जगत्सर्वं त्वन्मुखकीर्तिता मही ॥ वाजिरूप नमस्तुभ्यं पाहि संसारसागरात्–इ० पा० । ४ वर्तसे–इ० पा० । ५ भावयसे–इ० पा० । ६ अर्थ्यति–इ० पा० । ७ राजन्कारयेच्छिवनात्मगा–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नादतु ॥ ११ ॥ इत्थं हिरण्याश्वविधिं करोति यः सुपुण्यमासाद्य दिनं नरेंद्र ॥ विमुक्तपापः स पुरं मुरारेः प्राप्नोति सिद्धैरभिपूजितं[1] यत् ॥ १२ ॥ इति पठति य इत्थं हैमवाजिप्रदानं सकलकलुषमुक्तः सोऽश्वयुक्तेन भूपः ॥ कनकमयविमानेनार्कलोकं प्रयातस्त्रिदशपतिवधूभिः पूज्यते हर्म्यभोगैः ॥ १३ ॥ यो वा शृणोति पुरुषोऽप्यथ वा स्मरेद्वा हैमाश्वदानमभिनंदति दीयमानम् ॥ सोऽपि प्रयाति हतकल्मषशुद्धदेहः स्थानं पुरंदरमहेश्वरलोकजुष्टम् ॥ १४ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे हिरण्याश्वदानविधिवर्णनं नाम षडशीत्युत्तरशततमोऽध्यायः ॥ १८६ ॥ छ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथातः संप्रवक्ष्यामि तव पांडुकुलोद्वह ॥ पुण्यं हेमरथं नाम महापातकनाशनम् ॥ १ ॥ पुण्येऽह्नि विप्रकथिते स्वनुलिप्ते गृहांगणे ॥ कृष्णाजिनतिलान्कृत्वा कांचनं स्थापयेद्रथम् ॥ २ ॥ चतुरस्रं महाभाग चतुश्चक्रं सकूबरम् ॥ ब्रह्माणमग्रतः कृत्वा गृहीतप्रग्रहं शुभम् ॥ ३ ॥ इंद्रनीलेन कुंभेन ध्वजरूपेण संयुतम् ॥ लोकपालाष्टकोपेतं पद्मरागदलान्वितम् ॥ ४ ॥ चत्वारः पूर्णकलशा धान्यान्यष्टादशैव तु ॥ कौशेयवस्त्रसंवीतमुपरिष्टाद्वितानकम् ॥ ५ ॥ मध्ये तु फलसंयुक्तं पुरुषेण समन्वितम् ॥ योगयुक्तः पुमान्कार्यस्तं च तत्राधिवासयेत् ॥ ६ ॥ एवंविधं पूजयित्वा माल्यगंधानुलेपनैः ॥ चक्ररक्षावुभौ तस्य कार्यौ विश्वकुमारकौ ॥ ७ ॥ पुण्यं कालं ततः प्राप्य स्नातः संपूज्य देवताः ॥ त्रिःप्रदक्षिणमावृत्य गृहीतकुसुमांजलिः ॥ ८ ॥ शुक्लमाल्यांबरधर इमं मंत्रमुदीरयेत् ॥ ९ ॥ नमोनमः पापविनाशनाय विश्वात्मने देवतुरंगमाय[2] ॥ धाम्नामधीशाय भवाभवाय रथस्य दानान्मम देहि शांतिम् ॥ १० ॥ वस्वष्टकादित्यमरुद्गणानां त्वमेव धाता परमं निधानम् ॥ यतस्ततो मे हृदयं प्रयातु धर्मैकतानत्वमघौघनाशात् ॥ ११ ॥ इति तुरगरथप्रदानमेतद्भवभयसूदनमत्र यः करोति ॥ सकलुषपटलैर्विमुक्तदेहः परममुपैति पदं पिनाकपाणेः ॥ १२ ॥ देदीप्यमानवपुषा च जितप्रभावमाक्रम्य मंडलमखंडलचंडभानोः[3] ॥ सिद्धांगनानयनयुग्मनिपीयमानवक्रांबुजेऽबुजभवेन चिरं सहास्ते ॥ १३ ॥ इति पठति शृणोति वा य एतत्कनकतुरंगरथप्रदानमस्मिन् ॥ न स नरकपुरं व्रजेत्कदाचिन्नरकरिपोर्भवनं प्रयाति भूयः ॥ १४ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे हिरण्याश्वरथदानविधिवर्णनं नाम सप्ताशीत्युत्तरशततमोऽध्यायः ॥ १८७ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कृष्णाजिनप्रदानस्य विधिकालं ममानघ ॥ ब्राह्मणं च समाचक्ष्व तत्र मे संशयो महान् ॥ १ ॥ श्रीकृष्ण उवाच ॥ ॥ युगादिषूपरागेषु संक्रांतौ दिनसंक्षये ॥ माघ्यां वा ग्रहपीडासु दुःस्वप्नाद्भुतद[4]

---

१ अग्निपूजितात्मा–इ० पा० । २ वेदतुरंगमाय–इ० पा० । ३ अखंडलदंडभानोः–इ०, अखंडलतुल्यभानोः–इ० पा० । ४ दुःखदुःस्वप्नदर्शने–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्शने ॥ २ ॥ देयमेतन्महादानं द्रव्यमात्रागमे तथा ॥ आहिताग्निर्द्विजो यश्च वेदवेदांगपारगः ॥ ३ ॥ पुराणाभिरतो दक्षो देयं तस्मै च पार्थिव ॥ यथा येन विधानेन तन्मे निगदतः शृणु ॥ ४ ॥ गोमयेनोपलिप्ते तु शुचौ देशे नराधिप ॥ आदावेव समास्तीर्य शोभितं वस्त्रमाविकम् ॥ ५ ॥ कर्तव्यं रुक्मशृंगं तद्रौप्यदंतं तथैव च ॥ मुक्तादाम्ना तु लांगूलं तिलच्छन्नं तथैव च ॥ ६ ॥ तिलैः कृत्वा शिरो राजन्वाससाच्छादयेद्बुधः ॥ सुवर्णेनाभितः कुर्यादलंकुर्याद्विशेषतः ॥ ७ ॥ पुष्पैर्गंधैः फलैश्चैव नैवेद्येन च पूजयेत् ॥ रत्नैरेवं यथा शक्त्या तस्य दिक्षु च विन्यसेत् ॥ ॥ ८ ॥ कांस्यपात्राणि चत्वारि तेषु दद्याद्यथाक्रमम् ॥ घृतं क्षीरं दधि क्षौद्रमेवं दत्त्वा यथाविधि ॥ ९ ॥ ततः सर्वसमीपे तु मंत्रमेत मुदीरयेत् ॥ कृष्णः कृष्णमलो देव कृष्णाजिनवरस्तथा ॥ १० ॥ त्वद्दानापास्तपापस्य प्रीयतां मे नमोनमः ॥ त्रयस्त्रिंशत्सुराणां च आधारे त्वं व्यवस्थितः ॥ ११ ॥ कृष्णोऽसि मूर्तिमान्साक्षात्कृष्णाजिन नमोऽस्तु ते ॥ एवं प्रदक्षिणीकृत्य प्रणिपत्य पुनः पुनः ॥ १२ ॥ तत्प्रतिग्राहकं विप्रं वेदवेदांगपारगम् ॥ स्नातं वस्त्रयुगाच्छन्नं स्वशक्त्या वाप्यलंकृतम् ॥ १३ ॥ प्रतिग्रहश्च तस्योक्तः पुच्छदेशे स्वयंभुवा ॥ प्रतिग्रहप्रदग्धस्य विप्रस्य च स भारत ॥ १४ ॥ न पश्येद्वदनं पश्चान्न चैनमभिभाषयेत् ॥ अनेन विधिना दत्त्वा यथावत्कृष्ण मार्गणम् ॥ १५ ॥ समग्रं भूमिदानस्य फलं प्राप्नोति मानवः ॥ कृष्णाजिनतिलान्कृत्वा हिरण्यं मधुसर्पिषी ॥ १६ ॥ ये प्रयच्छंति विप्राय न ते शोच्या भवंति वै ॥ सर्वाँल्लोकांश्चरंत्येव कामचारा वियद्गताः ॥ १७ ॥ आभूतसंप्लवं यावत्स्वर्गं प्राप्ता न संशयः ॥ कृष्णाजिनसमं दानं न चास्ति भुवनत्रये ॥ १८ ॥ प्रतिग्रहोपि पापीयानिति वेदविदो विदुः ॥ अवस्थात्रितये यच्च त्रिधा यत्समुपार्जितम् ॥ १९ ॥ तत्सर्वं नाशमायाति दत्त्वा कृष्णाजिनं क्षणात् ॥ २० ॥ कृष्णेक्षणं कृष्णमृगस्य चर्म दत्त्वा द्विजेंद्राय समाहितात्मा ॥ यथोक्तमेतन्मरणं न शोचेत्प्राप्नोत्यभीष्टं मनसः फलं यत् ॥ २१ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कृष्णाजिनदानविधिव्रतवर्णनं नामाष्टाशीत्युत्तरशततमोऽध्यायः ॥ १८८ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ कथयिष्ये महाराज हेमहस्तिरथं तव ॥ यस्य प्रदानाद्भवनं वैष्णवं याति मानवः ॥ १ ॥ पर्वकालं समासाद्य संक्रांतौ ग्रहणेऽपि वा ॥ कुर्यादेवरथाकारं रथं मणिविभूषितम् ॥ २ ॥ वलभीभिर्विचित्राभिश्चतुश्चक्रसमन्वितम् ॥ चतुर्भिर्हेममातंगैर्युक्तं हेमविभूषितम् ॥ ३ ॥ ध्वजे च गरुडं कुर्यात्कूबराग्रे विनायकम् ॥ लोकपालाष्टकोपेतं ब्रह्मार्कशिवसंयुतम् ॥ ४ ॥

१ पुच्छाग्रम्—इ० पा० । २ वस्त्रपरिच्छदम्—इ० पा० । ३ ते च स्वर्गगमानुयुः—इ० पा० । ४ प्रसादात्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मध्ये नारायणोपेतं लक्ष्मीपुष्टिसमन्वितम् ॥ कृष्णाजिनतिलद्रोणं कृत्वा तं स्थापयेद्रथम् ॥ ५ ॥ नानाफलसमायुक्तमुपरिष्टाद्वितानकम् ॥ कौशेयवस्त्रसंवीतमम्लानकुसुमार्चितम् ॥ ६ ॥ कुर्यात्पंचपलादूर्ध्वमाशताच्च नरोत्तम ॥ ततः स्नात्वा समभ्यर्च्य पितॄन्देवान्यथाविधि ॥ ७ ॥ त्रिःप्रदक्षिणमावृत्य गृहीतकुसुमांजलिः ॥ इममुच्चारयेन्मंत्रं सर्वसौख्यप्रदायकम् ॥ ८ ॥ नमोनमः शंकरपद्मजार्कलोकेशविद्याधरवासुदेवैः ॥ त्वं सेव्यसे वेदपुराणयज्ञैस्तेजो हि नः स्यंदन पाहि तस्मात् ॥ ९ ॥ यत्तत्पदं परमगुह्यतमं पुराणमानंदहेतुगणरूपविमुक्तबन्धाः ॥ योगैकमानसदृशो मुनयः समाधौ पश्यंति तत्त्वमसि नाथ रथेति रूढः ॥ १० ॥ यस्मात्त्वमेव भवसागरसंप्लुतानामानंदभांडचितमध्यगपानपात्रम् ॥ तस्मादघौघशमनेन कुरु प्रसादं चामीकरेभरथ माधव संप्रदानात् ॥ ११ ॥ इत्थं प्रणम्य कनकेभरथप्रदानं यः कारयेत्सकलपापविमुक्तदेहः ॥ विद्याधरामरमुनींद्रगणाभिजुष्टं प्राप्नोत्यसौ पदमतींद्रियमिंदुमौलेः ॥ १२ ॥ कृतदुरितवितानातुष्टिसद्वह्निपालव्यतिकरकृतदेहोद्वेगभानोऽपि बंधून् ॥ नयति च पितृपौत्रात्रौरवादप्यशेषात्कृतगजरथदानः शाश्वतं सद्म विष्णोः ॥ १३ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे हेमहस्तिरथदानविधिवर्णनं नामैकोननवत्युत्तरशततमोऽध्यायः ॥ १८९ ॥ छ ॥

॥ श्रीकृष्ण उवाच ॥

॥ पुनरेव प्रवक्ष्यामि दानमत्यद्भुतं तव ॥ विश्वचक्रमिति ख्यातं सर्वपापविनाशनम् ॥ १ ॥ तपनीयस्य शुद्धस्य विशुद्धात्माथ कारयेत् ॥ श्रेष्ठं पलसहस्रेण तदर्द्धेन तु मध्यमम् ॥ ॥२॥ तस्याप्यर्द्धं कनिष्ठं स्याद्विश्वचक्रमुदाहृतम् ॥ तथा विंशत्पलादूर्ध्वमशक्तोऽपि निवेदयेत् ॥ ३ ॥ षोडशारं ततश्चक्रं भ्रमन्नेम्यष्टकावृतम् ॥ नाभिपद्मे स्थितं विष्णुं योगारूढं चतुर्भुजम् ॥ ४ ॥ शंखचक्रेऽस्य पार्श्वस्थे देव्यष्टकसमावृतम् ॥ द्वितीयावरणे तद्वत्पूर्वतो जलशायिनम् ॥ ५ ॥ अत्रिर्भृगुर्वशिष्ठश्च ब्रह्मा कश्यप एव च ॥ मत्स्यः कूर्मो वराहश्च नारसिंहोथ वामनः ॥६॥ रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ॥ तृतीयावरणे गौरी मनुभिर्वसुभिर्युता ॥ ७ ॥ चतुर्थे द्वादशादित्या वेदाश्चत्वार एव च ॥ पञ्चमे पञ्च भूतानि रुद्राश्चैकादशैव तु ॥८॥ लोकपालाष्टकं षष्ठे दिङ्मातंगास्तथैव च ॥ सप्तमेऽस्त्राणि सर्वाणि मंगलानि च कारयेत् ॥ ९ ॥ अन्तरांतरतो देवान्विन्यसेदष्टमे पुनः ॥ दशहस्तं ततः कृत्वा पताकातोरणान्वितम् ॥ १० ॥ मंडपं कुण्डमेकं च कारयेद्वस्त्रसंयुतम् ॥ चतुर्हस्ता भवेद्वेदी मध्ये तस्यास्ततो न्यसेत् ॥ ११ ॥ कृष्णाजिनोपरिगतं विश्वचक्रं विधानतः ॥ तथाष्टादशधान्यानि रसाश्च लवणादयः ॥ १२ ॥ पूर्णकुम्भाष्टकं तद्वद्वस्त्रमाल्यविभूषितम् ॥ फलानि दापयेत्पार्श्वे पञ्चवर्ण

१ गृहीत्वा कुसुमांजलिम्–इ० पा० । २ शंकरलोकपाललोकेशविद्याधरवासुदेवैः–इ० पा० । ३ पुण्यतमं मुरारेः–इ० पा० । ४ मूढः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वितानकम् ॥ १३ ॥ अधिवास्य ततश्चक्रं पश्चाद्धोमं समाचरेत् ॥ चातुश्चरणिकांस्तत्र ब्राह्मणांश्चतुरोथ वा ॥१४॥ होमं कुर्युर्जितात्मानो वस्त्राभरणभूषिताः ॥ होमद्रव्यसमोपेताः स्रुक्स्रुवैस्ताम्रभाजनैः ॥ १५ ॥ चक्रप्रतिष्ठितानां तु सुराणां होम इष्यते ॥ तल्लिंगैर्जुहुयान्मंत्रैः सर्वोपद्रवशांतये ॥ १६ ॥ ततो मंगलशब्देन स्नातः शुक्लांबरो गृही ॥ होमाधिवासनांते तु गृहीतकुसुमांजलिः ॥ १७ ॥ इममुच्चारयन्मंत्रं कृत्वा त्रिः प्रदक्षिणम् ॥ नमो विश्वंभरायेति विश्वचक्रात्मने नमः ॥ परमानंदरूपी त्वं पाहि नः पापकर्दमात् ॥ १८ ॥ तेजोमयमिदं यस्मात्सदा पश्यंति सूरयः ॥ हृदि तत्र गुणातीतं विश्वचक्रं नमाम्यहम् ॥ १९ ॥ वासुदेवे स्थितं चक्रं तस्य मध्ये तु माधवः ॥ अन्योन्याधाररूपेण प्रणमामि स्थिताविह ॥ ॥ २० ॥ विश्वचक्रमिदं यस्मात्सर्वपापहरं हरेः ॥ आयुधं चाधिवासश्च तस्माच्छान्तिं ददातु मे ॥ २१ ॥ इत्यामंत्र्य च यो दद्याद्विश्वचक्रं विमत्सरः ॥ विमुक्तः सर्वपापेभ्यो विष्णुलोके महीयते ॥ २२ ॥ वैकुण्ठलोकमासाद्य चतुर्बाहुनरावृतम् ॥ सेव्यतेऽप्सरसां संघैस्तिष्ठेत्कल्पशतत्रयम् ॥ २३ ॥ प्रणमेद्वाथ यः कृत्वा विश्वचक्रं दिनेदिने ॥ तस्यायुर्वर्द्धते दीर्घं लक्ष्मीस्तु विपुला भवेत् ॥ २४ ॥ तस्माच्चक्रं सदा कार्यं धार्यं च स्वगृहे नरैः ॥ कांचनं वाथ रौप्यं वा तदभावेऽथ ताम्रजम्[2] ॥ २५ ॥ इति सकलजगत्सुराधिवासं वितरति यस्तपनीयषोडशारम् ॥ हरिभुवनगतः स सिद्धसंघैश्चिरमधिगम्य नमस्यतेऽप्सरोभिः ॥ २६ ॥ अथ सुदर्शनतां प्रयाति शत्रोर्मदनसुदर्शनतां च कामिनीभ्यः ॥ स सुदर्शनकेशवानुरूपः कनकसुदर्शनदानदग्धपापः ॥ २७ ॥ कृतगुरुदुरितोऽपि षोडशारप्रवितरणात्प्रवराकृतिर्मुरारेः॥ अभिभवति भवोद्भवानि भित्त्वा भवमभितो भवने भवानि भूयः ॥ २८ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे विश्वचक्रदानविधिवर्णनं नाम नवत्युत्तरशततमोऽध्यायः ॥१९०॥ ॥छ॥ ॥ युधिष्ठिर उवाच ॥ ॥ प्रतिष्ठा शाश्वती केन दानेन मधुसूदन ॥ इह लोके परे चैव कीर्तिरत्यद्भुता तथा ॥१॥ सद्गतिं च तथा यांति सर्वे पितृपितामहाः ॥ संततिश्चाक्षया लोके विभवश्चापि पुष्कलः ॥२॥ स्थापनात्सर्वदेवानां कथं स्याद्यदुनंदन ॥ तदाचक्ष्व महाभाग दानेन नियमेन वा ॥ ३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ साधु पृष्टं त्वया राजँल्लोकानामुपकारकम् ॥ शृणुष्वैकमना भूत्वा गुह्यं परममुत्तमम् ॥ ॥४॥ भुवनानां समासेन प्रतिष्ठां कथयामि ते ॥ देवासुरास्तथा नागा गंधर्वा यक्षराक्षसाः ॥५॥ प्रेताः पिशाचा भूताश्च स्थापिताः स्युर्न संशयः॥ कारकस्यानुकूले तु मुहूर्ते विजये शुभे ॥६॥ पुण्ये तिथौ शिवक्षेत्रे दिने सौम्यग्रहान्विते ॥ सप्त हस्तं पटं कृत्वा चतुरस्रं सुसंहतम् ॥७॥ अभिन्नांगं

१ नित्यम्-इ० पा० । २ ताम्रकम्—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृढं शुद्धं शुद्धस्फटिकवर्चसम् ॥ तस्मिन्सर्वाणि राजेंद्र भुवनानि च लेखयेत् ॥ ८ ॥ चातुर्वर्ण्यकमानीय विचित्रं चित्रकर्मणि ॥ युवानं व्याधि रहितं भव्यं चित्रकरं शुभम् ॥ ९ ॥ संपूजयित्वा यत्नेन दिव्यवासोविभूषणैः ॥ तस्मिन्कर्मणि युंजीत पठ्यमानैर्द्विजोत्तमैः ॥ १० ॥ शंखभेरीनि नादैश्च गीतमंगलनिस्वनैः ॥ पुण्याहजयघोषैश्च ब्राह्मणान्पूजयेत्ततः ॥ ११ ॥ आचार्यमपि संपूज्यवासोभिर्भूषणैस्तथा ॥ प्रारंभं कारयेद्राजन्पटे तस्मिन्यथोदितम् ॥ १२ ॥ मध्ये च लेखयेद्राजञ्जम्बूद्वीपं सविस्तरम् ॥ तस्य मध्ये स्थितो मेरुर्मेरोरुपरि देवताः ॥१३॥ दिशासु लोकपालानां पुरोऽष्टौ सुरसंयुताः ॥ सप्तद्वीपवती पृथ्वी सप्त चैव कुलाचलाः ॥ १४ ॥ सागराः सप्त चात्रैव नद्यो ह्रदाः सरांसि च ॥ पातालाः सप्त चात्रैव सप्त स्वर्गविभूतयः ॥ १५ ॥ ब्रह्मविष्णुशिवादीनां भुवनानि यथाक्रमम् ॥ ध्रुवमार्गस्तथादित्यो ग्रहतारागणैर्युतः ॥ १६ ॥ देवदानवगन्धर्वा यक्ष राक्षसपन्नगाः ॥ ऋषयो मुनयो गावो देवमातर एव च ॥१७॥ सुपर्णाद्याश्च विहगा नागाश्चैरावतादयः ॥ दिग्गजाष्टकमत्रैव लेखयेन्मदमंडितम् ॥ ॥ १८ ॥ एवंविधं पटं राजन्कारयित्वा सुशोभनम् ॥ दशोत्तरेण पयसा एतत्सर्वसमावृतम् ॥ १९ ॥ तत्तेजसा वृतं भूयो महतोग्रेण सर्वतः ॥ तेजस्तद्वायुना वायुराकाशेन समावृतः ॥ २० ॥ भूतादिना तथाकाशं भूतादिर्महता तथा ॥ अव्यक्तेन महांश्चैव व्याप्तो वै शुद्धिलक्षणः ॥ २१ ॥ अव्यक्तं तमसा व्याप्तं तमश्च रजसा तथा ॥ रजः सत्त्वेन संव्याप्तं त्रिधा प्रकृतिरुच्यते ॥ २२ ॥ एवमावरणोपेतं ब्रह्मांडमखिलं नृप ॥ पुरुषेणावृतं सर्वं सबाह्याभ्यंतरं तथा ॥ २३ ॥ एतत्सर्वं पटस्थं तु कृत्वा चित्रमयं सुधीः ॥ कार्तिक्यामयने चैव विषुवे ग्रहणेऽपि वा ॥ २४ ॥ पूजयेद्येन विधिना तत्समासेन मे शृणु ॥ पुरतो मंडपं तस्य विचित्रं कारयेद्बुधः ॥ २५ ॥ तत्र कुण्डानि चत्वारि चतुरस्राणि कारयेत् ॥ द्वौद्वौ नियोजयेत्तेषु ब्राह्मणौ वेदपारगौ ॥ २६ ॥ यज्ञोपकरणोपेतौ वस्त्राभरणभूषितौ ॥ होमं कुर्युर्जितात्मानो मौनिनः सर्व एव ते ॥ २७ ॥ पटे स्थितानां देवानां मंत्रैरोंकारपूर्वकैः ॥ यजमानस्ततः स्नातः सर्वालंकारभूषितः ॥ २८ ॥ आचा र्येणसमं कुर्यात्पूजामग्रे पटस्य तु ॥ पुष्पैर्वस्त्रैः समभ्यर्च्य मंत्रमेतमुदीरयेत् ॥ २९ ॥ ब्रह्मांडोदरवर्तीनि भुवनानि चतुर्दश ॥ तानि संनिहितान्यत्र पूजितानि भवंतु मे ॥ ३० ॥ ब्रह्मा विष्णुस्तथा रुद्रो ह्यादित्या वसवस्तथा ॥ पूजिताः सुप्रतिष्ठाश्च भवंतु सततं मम ॥ ३१ ॥ एवं पटं तं संपूज्य कृत्वा चैव प्रदक्षिणम् ॥ भक्ष्यान्नानाविधांश्चैव नैवेद्यं तत्र दापयेत् ॥ ३२ ॥ शंखतूर्यनिनादैश्च जागरं कारयेत्ततः ॥ ब्रह्मघोषै

१ सूत्रं शंखस्फटिकवर्चसम्–इ० पा० । २ पूज्य यत्नतः—इ० पा० । ३ सुविस्तरम्–इ० पा० । ४ मेरोः–इ० पा० । ५ मम सर्वदा–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्विचित्रैश्च गीतमंगलनिस्वनैः ॥ ३३ ॥ पुनः प्रभाते विमले स्नात्वा शुचिरलंकृतः ॥ पूर्वोक्तविधिनानेन पुनः संपूज्य तं पटम् ॥ ३४ ॥ ऋत्विक्पूजां ततः कृत्वा गोशतेन विचक्षणः ॥ अथवा गोयुगं[1] दद्यादेकैकस्यात्यलंकृतम् ॥ ३५ ॥ उपानहौ तथा छत्रं गृहोपकरणानि च ॥ यद्यदिष्टतमं किंचित्सर्वं दद्याद्विचक्षणः ॥ ३६ ॥ ततः प्रकल्पयेद्यानं नागयुक्तमलंकृतम् ॥ अलाभे वाजिसंयुक्तं पताकाध्वजशालिनम् ॥३७॥ सहस्रं दक्षिणां दत्त्वा ततस्त्वारोपयेत्पटम्[2] ॥ ब्राह्मणं वा रथेनाथ नयेद्देवालयं बुधः ॥ ३८ ॥ तत्रस्थं स्थापयेन्नीत्वा गन्धैः पुष्पैश्च धूपयेत् ॥ तत्रापि दद्यान्नैवेद्यं कुर्याच्चापि महोत्सवम् ॥ ३९ ॥ यस्मिन्नायतने तस्य प्रतिष्ठा क्रियते नृप ॥ पूजा तत्रापि महती कर्तव्या भूतिमिच्छता ॥ ४० ॥ चंद्रातपत्रं घण्टां च ध्वजाद्यं दापयेत्सुधीः ॥ यथाशक्त्या च राजेन्द्र गुरुं गौरवयंत्रितः ॥ ४१ ॥ अभ्यर्च्य दक्षिणाभिश्च ब्राह्मणांश्च विसर्जयेत् ॥ दीनांधकृपणानां च भोजनं चाप्यवारितम् ॥ ४२ ॥ तस्मिन्नहनि दातव्यं मित्रस्वजनबंधुषु ॥ अनेन विधिना यस्तु श्रद्दधानो जितेन्द्रियः ॥ ॥ ४३ ॥ कुर्यान्नरो वा नारी वा प्रतिष्ठां सार्वलौकिकीम् ॥ स्थापितं तु भवेत्तेन त्रैलोक्यं सचराचरम् ॥ ४४ ॥ कुलं च तारितं तेन सत्पुत्रेण युधिष्ठिर ॥ यावच्च देवतागारे पटस्तिष्ठति पूजितः ॥ ४५ ॥ तावदस्याक्षया[3] कीर्तिस्त्रैलोक्ये संप्रसर्पति[4] ॥ दानेन कीर्तिर्यवंति मर्त्यलोकेषु गीयते ॥ ४६ ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ गन्धर्वैर्गीयमानस्तु अप्सरोगणसेवितः ॥ ४७ ॥ वसेद्धृष्टमनाः स्वर्गे यावदिंद्राश्चतुर्दश ॥ पुण्यक्षयादिहाभ्येत्य राजा भवति धार्मिकः ॥ ४८ ॥ पुत्रपौत्रान्वितः श्रीमान्दीर्घायुरतिधार्मिकः ॥ दश जन्मानि राजेन्द्र जायमानः पुनः पुनः ॥ ४९ ॥ श्रूयते च पुरा राजा रजिर्नाम महाबलः ॥ चक्रवर्ती दृढमतिर्जितारिर्विजितेंद्रियः ॥ ५० ॥ मही येन पुरा दत्ता देवराजस्य संगरे ॥ जित्वा दैत्यबलं सर्वं दत्तवांस्त्रिदिवं पुनः ॥ ५१ ॥ महेन्द्राय महाभाग सर्वं निहतकंटकम् ॥ स कदाचित्सभामध्ये यावदास्ते महीपतिः ॥ ५२ ॥ तावत्तत्राजगामाथ पुलस्त्यो ब्रह्मणः सुतः ॥ शिष्यैः परिवृतः श्रीमान्वेदवेदांगपारगैः ॥ ५३ ॥ दत्तार्घस्तु तदा तेन उपविष्टो वरासने ॥ शुशुभे परया लक्ष्म्या पितामह इवापरः ॥ ५४ ॥ अथ तं पूजयित्वाग्रे मधुपर्केण पार्थिवः ॥ पप्रच्छ विनयोपेतः कथामात्मोद्भवां नृपः ॥ ५५ ॥ भगवन्केन दानेन तपसा नियमेन वा ॥ श्रीरियं मम धर्मज्ञ तेजश्चाव्याहतं भुवि ॥ ५६ ॥ बलं पुष्टिं धनं धान्यं पुत्रपौत्रं तथोत्तमम् ॥ एतन्मे सर्वमाचक्ष्व सर्वज्ञोऽसि द्विजोत्तम ॥ ५७ ॥ ॥ पुलस्त्य उवाच ॥ ॥ शृणु राजन्कथामेतामात्मीयां सुमनोहराम् ॥ कथ्य

१ गोयुतम्-इ० पा० । २ संस्थापयेत्पटम्-इ० पा० । ३ तस्य-इ० पा० । ४ प्रतिसर्पति-इ० पा० । ५ वर्षसहस्राणीत्यग्रिमेणाप्यत्राप्याहृतेनान्वयः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानां मया सम्यक्सप्तमे तव जन्मनि ॥ ५८ ॥ कथेयमभिनिर्वृत्ता शृणुष्वैश्वर्यवर्द्धिनीम् ॥ आसीस्त्वं वैश्यजातीयो वाराणस्यां नरोत्तम ॥
॥ ५९ ॥ बहुभृत्यपरीवारो धनधान्यसमन्वितः ॥ धार्मिकः सत्यनिरतो वणिग्धर्मरतः सदा ॥ ६० ॥ तत्र त्वया श्रुता धर्मा धर्माख्यानगतेन वै ॥
दानाश्रया बहुविधा व्रतानि विविधानि च ॥ ६१ ॥ प्रसंगेन कदाचिच्च प्रतिष्ठा भौवनी त्वया ॥ श्रुता राजेन्द्र विधिवत्कृता च बहुपुण्यदा ॥
॥ ६२ ॥ फलेन तेन जातोऽसि सप्त जन्मानि भूपतिः ॥ कीर्तिस्ते प्रथिता लोके बलं चापि महत्तव ॥ ६३ ॥ अपराण्यपि[१] जन्मानि सप्त राजा
भविष्यसि ॥ पश्चाद्योगिकुले भूत्वा निर्वाणं समवाप्स्यसि ॥ ६४ ॥ एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ नारी वा पुरुषो वापि प्रतिष्ठां
भौवनीं तु यः ॥ ६५ ॥ प्रकरोति विधानेन कृतकृत्यो भवेद्बुधः ॥ इत्युक्त्वा स मुनिस्तत्र राजानं शंसितव्रतः ॥६६॥ ययावदर्शनं तत्र सूर्यवैश्वान
रोपमः ॥ ६७ ॥ धर्मं विवर्द्धयति कीर्तिशतानि धत्ते कामं प्रसाधयति पापमपाकरोति ॥ ख्याता मयेयमधुना तव दाननिष्ठातन्नास्तियन्नकुरुतेभु
वनप्रतिष्ठा ॥६८॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे भुवनप्रतिष्ठावर्णनं नामैकनवत्युत्तरशततमोऽध्यायः ॥ १९१ ॥
॥ ॥ युधिष्ठिर उवाच ॥ ॥ श्रुतो दानविधिः सर्वः प्रसादात्ते रमाधव ॥ नक्षत्रदानस्येदानीं दानकल्पं प्रचक्ष्व मे ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥
अत्राप्युदाहरंतीममितिहासं पुरातनम् ॥ देवक्याश्चैव संवादं देवर्षेर्नारदस्य च ॥ २ ॥ द्वारकामनुसंप्राप्तं नारदं देवदर्शनम् ॥ पप्रच्छेदं तथा[२]
प्रश्नं देवकी धर्मदर्शिनी ॥ ३ ॥ तस्याः संपृच्छमानाया देवर्षिर्नारदस्ततः ॥ आचष्ट विधिवत्सर्वं यत्तच्छृणु विशांपते ॥ ४ ॥ नक्षत्रयोगं वक्ष्या
मि सर्वपातकनाशनम् ॥ कृत्तिकासु महाभाग पायसेन ससर्पिषा ॥ ५ ॥ संतर्प्य ब्राह्मणान्साधूँल्लोकान्प्राप्नोत्यनुत्तमान् ॥ रोहिण्यां पांडवश्रेष्ठ
मांसैरन्नेन सर्पिषा ॥ ६ ॥ संतर्प्य ब्राह्मणान्साधूँल्लोकान्प्राप्नोत्यनुत्तमान् ॥ पयोऽन्नदानं दातव्यमानृण्यार्थं द्विजातये ॥ ७ ॥ दोग्ध्रीं सवत्सां तु
नरो नक्षत्रे सोमदैवते[३] ॥ दत्त्वा दिव्यविमानस्थः स्वर्गं प्राप्नोत्यनुत्तमम् ॥ ८ ॥ आर्द्रायां कृशरां दत्त्वा तिलमिश्रां समाहितः ॥ नरस्तरति दुर्गा
णि सर्वाण्येव नरोत्तम ॥ ९ ॥ पूपान्पुनर्वसौ दत्त्वा घृतपूर्णान्सुपाचितान् ॥ यशस्वी रूपसंपन्नः सज्जनो जायते कुले ॥ १० ॥ पुष्ये तु कांचनं
दत्त्वा कृतं वाकृतमेव वा ॥ अनालोकेषु लोकेषु सोमवत्स विराजते ॥११॥ आश्लेषासु तथारौप्यं यः सुरूपं प्रयच्छति ॥ सर्वभयविनिर्मुक्तः शास्त्र
वानभिजायते ॥ १२ ॥ मघासु तिलपूर्णानि वर्धमानानि मानवः ॥ प्रदाय पशुमांश्चैव पुत्रवांश्च प्रजायते ॥१३॥ फाल्गुनीपूर्वसमये[४] वडवां द्विज

१ भुवि–इ० पा० । २ तथा–इ० पा० । ३ मृगशीर्षे–इत्यर्थः । ४ शर्कराम्–इ० पा० । ५ ब्रह्मण्यः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुंगवे ॥ दत्त्वा पुण्यकृतांल्लोकान्प्राप्नोति सुरसेवितान् ॥ १४ ॥ उत्तराफाल्गुनीयोगे दत्त्वा सौवर्णपंकजम् ॥ सूर्यलोकमवाप्नोति सर्वबाधाविवर्जितः ॥ १५ ॥ हस्ते तु हस्तिनं दत्त्वा कांचनं शक्तितः कृतम् ॥ यात्यसौ शक्रसदनं वरवारणधूर्गतः ॥ १६ ॥ चित्रासु वृषभं दत्त्वा पुण्यानां पुण्यमुत्तमम् ॥ चरत्यप्सरसां लोके मोदते नंदने वने ॥ १७ ॥ स्वातीषु च धनं दत्त्वा यदभीष्टमिहात्मनः ॥ प्राप्नोति च शुभांल्लोकानिह लोके महद्यशः ॥ १८ ॥ विशाखासु महाराज धुरंधरविभूषितम् ॥ सोपस्करं च शकटं सधान्यं वस्त्रसंवृतम् ॥ १९ ॥ दत्त्वा प्रीणाति स पितुः प्रेत्य चानन्त्यमश्नुते ॥ न च दुर्गाण्यवाप्नोति रौरवादीनि मानवः ॥ २० ॥ दत्त्वा यथेष्टं विप्रेभ्यो गतिमिष्टां स गच्छति ॥ कम्बलान्यनुराधर्क्षे दत्त्वा प्रावरणानि च ॥ २१ ॥ स्वर्गे वर्षशतं साग्रमास्ते सुरगणैर्वृतः ॥ कालशाकं च विप्रेभ्यो दत्त्वा मर्त्यः समूलकम् ॥ २२ ॥ ज्येष्ठानुज्येष्ठतामेति गतिमिष्टां च गच्छति ॥ मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः ॥ २३ ॥ पितॄन्प्रीणयते सर्वान्गतिं प्राप्नोत्यनुत्तमाम् ॥ अथ पूर्वास्वषाढासु दधिपात्राणि मानवः ॥ २४ ॥ कुलवृत्तोपसम्पन्ने ब्राह्मणे वेदपारगे ॥ प्रदाय जायते प्रेत्य कुले च बहुभोगवान् ॥ २५ ॥ पुत्रपौत्रैः परिवृतः पशुमान्धनवांस्तथा ॥ उदमंथं ससर्पिष्कं प्रभूतमधुफाणितम् ॥ २६ ॥ दत्त्वोत्तरास्वषाढासु सर्वान्कामानवाप्नुयात् ॥ दुग्धं त्वभिजितो भागे दत्त्वा घृतमधुप्लुतम् ॥ २७ ॥ धर्मनित्यो मनीषिभ्यः स्वर्गे वसति पुण्यभाक् ॥ श्रवणे पुस्तकं श्रेष्ठं प्रददातीह यो नरः ॥ २८ ॥ स्वेच्छया याति यानेन सर्वांल्लोकानसंशयः ॥ गोयुगं च धनिष्ठासु दत्त्वा विप्राय मानवः ॥ २९ ॥ सर्वत्र मानमाप्नोति यत्र यत्रेह जायते ॥ तथा शतभिषायोगे दत्त्वा सागरु चंदनम् ॥ ३० ॥ प्राप्नोत्यप्सरसां लोके प्रेत्य गंधांश्च शोभनान् ॥ पूर्वभाद्रपदायोगे राजमाषान्प्रदापयेत् ॥ ३१ ॥ सर्वभक्षफलोपेतः स वै प्रेत्य सुखी भवेत् ॥ रत्नमुत्तरयोगे तु सुवस्त्रं यः प्रयच्छति ॥३२॥ पितॄन्प्रीणाति सकलान्प्रेत्यचानंत्यमश्नुते ॥ कांस्योपदोहनां धेनुं रेवत्यां यः प्रयच्छति ॥ ३३ ॥ स प्रेत्य कामानादाय दातारमुपगच्छति ॥ रथमश्वसमायुक्तं दत्त्वाश्विन्यां नरोत्तम ॥ ३४ ॥ हस्त्यश्वरथसंपूर्णे वर्चस्वी जायते कुले ॥ भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै ॥ ३५ ॥ गावः प्रभूताः प्राप्नोति नरः प्रेत्य यशस्तथा ॥ इत्येष दक्षिणोद्देशः प्रोक्तो नक्षत्रयोगतः ॥ ३६ ॥ देवक्यै नारदेनैव मया च कथितस्तव ॥ सर्वपापप्रशमनः सर्वोपद्रवनाशनः ॥ ३७ ॥ न चात्र कालनियमो नक्षत्रप्रक्रमस्तथा ॥ वित्तं श्रद्धा च राजेन्द्र कारणं चात्र कथ्यते ॥ ३८ ॥ यद्यच्च ते भगवता कमलोद्भवस्य पुत्रेण दानमुदितं प्रसमीक्ष्य वेदान् ॥

१ विन्दति—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तंद्यो ददाति विभवे सति साधुवृत्ते किं तेन पार्थ न कृतं भवतीह लोके ॥ ३९ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे नक्षत्रदानविधिवर्णनंनाम द्विनवत्युत्तरशततमोऽध्यायः ॥ १९२ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ तिथिदानमिदानीं ते कथयामि युधिष्ठिर ॥ सर्वपापप्रशमनं सर्वविघ्नविनाशनम् ॥१॥ मानसं वाचिकं चापि कर्मजं यदघं भवेत् ॥ सर्वं प्रशममायाति दानेनानेन पांडव ॥२॥ श्रावणे कार्त्तिके चैत्रे वैशाखे फाल्गुने तथा ॥ सितपक्षात्प्रभृत्येव दातव्यं पुण्यवर्द्धनम् ॥ ३ ॥ वित्तं श्रद्धासहायश्च पात्रप्राप्तिस्तथैव च ॥ दानकालः सदैवेह कथितस्तत्त्वदर्शिभिः ॥ ४ ॥ तीर्थे देवालये गोष्ठे गृहे वानियतात्मवान् ॥ यंद्ददाति नरश्रेष्ठस्तदानंत्याय कल्पते ॥५॥ प्रतिपत्सु द्विजान्पूज्यान्पूजयित्वा प्रजापतिम्॥सौवर्णमरविन्दं च कारयित्वाष्टपत्रकम् ॥ ६ ॥ कृत्वा चौदुम्बरे पात्रे सुगन्धघृतपूरिते ॥ पुष्पैर्धूपैः पूजयित्वा विप्राय प्रतिपादयेत् ॥७॥ अनेन विधिना दत्त्वा कमलं कमलालयम् ॥ ईप्सितांल्लभते कामान्निष्कामो ब्रह्मसात्म्यताम् ॥८॥ वह्निं पूज्य द्वितीयायां भूर्भुवःस्वरिति क्रमात् ॥ तिलाज्येन शतं हुत्वा दत्त्वा पूर्णाहुतिं ततः ॥९॥ वैश्वानरं तु सौवर्णं स्थापयेत्ताम्रभाजने ॥ गुडाज्यपूरिते राजंस्तोयपूर्णघटोपरि ॥१०॥ पूजयित्वा वस्त्रमाल्यैर्भक्ष्यभोज्यैरनेकधा ॥ ततस्तं ब्राह्मणे दद्याद्वह्निर्मे प्रीयतामिति ॥११॥ यावज्जीवकृतात्पापान्मुच्यते नात्र संशयः ॥ मृतो वह्निपुरं याति प्राहेदं नारदो मुनिः ॥१२॥ तृतीयायां महाराज राधां स्वर्णमयीं शुभाम् ॥ स्थापयित्वा ताम्रपात्रे लवणोपरि विन्यसेत् ॥१३॥ जीरकं कटुकं चैव गुडं पार्श्वेषु दापयेत् ॥ रक्तवस्त्रयुगच्छन्नां कुंकुमेन विभूषिताम् ॥ १४ ॥ पुष्पधूपैः सनैवेद्यैः पूजयित्वा द्विजातये ॥ दत्त्वा यत्फलमाप्नोति पार्थ तत्केन वर्ण्यते ॥ १५ ॥ प्रासादा यत्र सौवर्णा नद्यः पायसकर्दमाः॥ गन्धर्वाप्सरसो यत्र तत्र ते यांति मानवाः ॥१६॥ स्वर्गादिहैत्य संसारे सुरूपः सुभगो भवेत् ॥ दाता भोक्ता बहुधनः पुत्रपौत्रसमन्वितः ॥ १७ ॥ नारी वा तंद्गुणैर्युक्ता भवतीह न संशयः ॥ चतुर्थ्यां वारणं हैमं पलार्द्धार्द्धं सुशोभनम् ॥ १८ ॥ कारयित्वांकुशयुतं तिलद्रोणोपरि न्यसेत् ॥ वस्त्रैः पुष्पैः पूजयित्वा नैवेद्यं विनिवेद्य च ॥ १९ ॥ ततस्तु ब्राह्मणे दद्याद्गणेशः प्रीयतामिति ॥ कार्यारंभेषु सर्वेषु तस्य विघ्नं न जायते ॥ २० ॥ वारणाः सप्त जन्मानि भवंति मदविह्वलाः ॥ वारणेन्द्रसमारूढस्त्रैलोक्यविजयी भवेत् ॥ २१ ॥ पंचम्यां पन्नगं चैव स्वर्णेनैकेन कारयेत् ॥ क्षीराज्यपत्रमध्यस्थं पूजयित्वा प्रदापयेत् ॥ २२ ॥ द्विजं

१ सर्वः–इ० पा० । २ मासे–इ० पा० । ३ चायतने–इ० पा० । ४ नियतात्मना–इ० पा० । ५ यो ददाति नरश्रेष्ठ दानं च न्यायकल्पितम्–इ० पा० । ६ ब्रह्म शाश्वतम्–इ० पा० । ७ बहुशो युक्ता–इ० पा० । ८ पलार्द्धार्द्धम्–इ० पा० । ९ पूज्य विप्राय दापयेत्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संपूज्य वासोभिः प्रणिपत्य क्षमापयेत् ॥ इह लोके परे चैव दानमेतत्सुखावहम् ॥ २३ ॥ नागोपद्रवविद्रावि सर्वदुष्टनिबर्हणम् ॥ प्रायश्चित्तं तथा प्रोक्तं नागदष्टस्य शंभुना ॥ २४ ॥ षष्ठ्यां शक्तिसमोपेतं कुमारं शिखिवाहनम् ॥ कारयित्वा यथाशक्त्या हेममालाविभूषितम् ॥ २५ ॥ तंडुले नाथ शिखरे वासोभिः पूज्य शक्तितः ॥ षष्ठ्यां स्कंदं यथाशक्ति कृत्वा स्कंदं हिरण्मयम् ॥ २६ ॥ पूजयित्वा गंधपुष्पधूपैर्नैवेद्यतस्तथा ॥ नमस्कृत्य ततो दद्याद्ब्राह्मणाय कुटुंबिने ॥ २७ ॥ इह भूतिं परां प्राप्य प्रेत्य स्वर्गे महीयते ॥ शूद्रो ब्राह्मणतामेति ब्राह्मणो ब्रह्मलोकताम् ॥ २८ ॥ सप्तम्यां भास्करं पूज्य ब्राह्मणानश्वमुत्तमम् ॥ दद्यादलंकृतग्रीवं सपर्याणं सदक्षिणम् ॥ २९ ॥ सूर्यलोकमवाप्नोति सूर्येण सह मोदते ॥ गंधर्वास्तु पिमायांति दत्तेऽश्वे समलंकृते ॥ ३० ॥ अष्टम्यां वृषभं श्वेतमव्यंगांगं धुरंधरम् ॥ सितवस्त्रयुगच्छन्नं घंटाभरणभूषितम् ॥ ३१ ॥ दद्यात्प्रणम्य विप्राय प्रीयतां वृषभध्वजः ॥ प्रदक्षिणं ततः कृत्वा आद्वारांतमनुव्रजेत् ॥ ३२ ॥ दानेनानेन नृपते शिवलोको न दुर्लभः ॥ वृषस्कंधे प्रतिष्ठंति भुवनानि चतुर्दश ॥ ३३ ॥ तस्माद्वृषभदानेन दत्ता भवति भारती ॥ नवम्यां कांचनं सिंहं कारयित्वा स्वशक्तितः ॥ ३४ ॥ मुक्ताफलाष्टकयुतं नीलवस्त्रावगुण्ठितम् ॥ दद्याद्देवीमनुस्मृत्य दुष्टदैत्यनिबर्हणीम् ॥ ३५ ॥ द्विजातिप्रवरायेत्थं सर्वान्कामान्समश्नुते ॥ कांतारवनदुर्गेषु चौरव्यालाकुले पथि ॥ ३६ ॥ हिंसकास्तं न हिंसंति दानस्यास्य प्रभावतः ॥ मृतो देवीपुरं याति पूज्यमानः सुरासुरैः ॥ ३७ ॥ पुण्यक्षयादिहाभ्येत्य राजा भवति धार्मिकः ॥ दशम्यां नृपशार्दूल दशाशाः स्वर्णनिर्मिताः ॥ ३८ ॥ लवणे च गुडे क्षीरे निष्पावेषु तिलेषु च ॥ गव्यत्रये तंडुलेषु माषाणामुपरि स्थिताः ॥ ३९ ॥ संपूज्य वस्त्रपुष्पाद्यैर्द्विजाय प्रतिपादयेत् ॥ अनेन विधिना यस्तु पुमान्स्त्री वाथ वा पुनः ॥ ४० ॥ निर्वापयति राजेंद्र तस्य पुण्यफलं शृणु ॥ इह लोके भूपतिः स्यात्प्रेत्य स्वर्गे महीयते ॥४१॥ सकलास्तस्य सर्वाशा याः काश्चिन्मनसेच्छिताः ॥ ततः स्वर्गादिहाभ्येत्य कुले महति जायते ॥ ४२ ॥ एकादश्यां गरुत्मंतं कारयित्वा हिरण्मयम् ॥ यथाशक्त्या ताम्रपात्रे घृतस्योपरि पूजितम् ॥ ४३ ॥ पंचागव्यभिरते विप्रे पुराणज्ञे विशेषतः ॥ दत्त्वा किं बहुनोक्तेन विष्णुलोके महीयते ॥ ४४ ॥ गां वृषं महिषीं हेम सप्तधान्यान्यजाविकम् ॥ वडवां गुडरसान्सर्वांस्तथा बहुफलद्रुमान् ॥ ४५ ॥ पुष्पाणि च विचित्राणि गंधांश्चोच्चावचान्बहून् ॥ यथाशक्त्या मेलयित्वा वस्त्रैराच्छादयेन्नवैः ॥ ४६ ॥ द्वादश्यां द्वादशैतानि ब्राह्मणेभ्यो निवेदयेत् ॥ एकस्य वा महाराज यत्फलं तन्निशामय ॥ ४७ ॥ इह कीर्तिं परां प्राप्य भुक्त्वा भोगा

१ चौरव्यालाकुले पथि–इ० पा० । २ पूजितम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्यथेप्सितान् ॥ ततो विष्णुपुरं याति सेव्यमानोऽप्सरोगणैः ॥ ४८ ॥ कर्मक्षयादिहाभ्येत्य राजा भवति धार्मिकः ॥ यज्ञयाजी दानपतिर्जीवेच्च शरदां शतम् ॥ ४९ ॥ स्नापयेद्ब्राह्मणांश्चात्र त्रयोदश्यां त्रयोदश ॥ तानाच्छाद्य नवैर्वस्त्रैर्गंधपुष्पैरथार्चयेत् ॥ ॥ ५० ॥ भोजयीत सुमिष्टान्नं दक्षिणां विनिवेदयेत् ॥ यथाशक्त्या हेमखण्डान्धर्मात्मा प्रीयतामिति ॥ ५१ ॥ धर्मराजाय कालाय चित्रगुप्ताय दंडिने ॥ मृत्यवे क्षयरूपाय अंतकाय यमाय च ॥ ५२ ॥ प्रेतनाथाय रौद्राय तथा वैवस्वताय च ॥ महिषस्थाय देवाय नामानीह त्रयोदश ॥ ५३ ॥ उच्चार्य श्रद्धया युक्तः प्रणिपत्य विसर्जयेत् ॥ यः करोति महाराज पूजामेतां मनोरमाम् ॥५४॥ यमाय स सुखं मर्त्ये स्थित्वा व्याधिविवर्जितः ॥ यममार्गं गतः पश्चाद्दुःखं नाप्नोत्यसौ पुमान् ॥ ५५ ॥ न पश्यति प्रेतसुखं पितृलोकं स गच्छति ॥ पुण्यक्षयादिहाभ्येत्य ससुखी नीरुजो भवेत् ॥ ५६ ॥ महिषं सुशुभं कुंभं चतुर्दश्यां पयोभृतम् ॥ तं कर्षकेण संयुक्तं हेम्नः सद्वस्त्रसंयुतम् ॥ ५७ ॥ घंटाभरणशोभाढ्यं वृषभेण समन्वितम् ॥ यो दद्याच्छिवभक्ताय ब्राह्मणाय कुटुंबिने ॥ ५८ ॥ वृषं दत्त्वा नरश्रेष्ठ शिवलोके महीयते ॥ तत्र स्थित्वा चिरं कालं क्रमादेत्य महीतलम् ॥ ५९ ॥ आरोग्यधनसंयुक्ते कुले महति जायते ॥ सर्वकामसमृद्ध्यर्थं यावज्जन्मशतत्रयम् ॥ ॥ ६० ॥ पौर्णमास्या वृषोत्सर्गं कारयित्वा विधानतः ॥ चंद्रं रजतनिष्पन्नं फलेनैकेन शोभनम् ॥ ६१ ॥ पूजयेद्गंधकुसुमैर्नैवेद्यं विनिवेद्य च ॥ दद्याद्विप्राय संकल्प्य वासोलंकारभूषणैः ॥ ६२ ॥ मंत्रेणानेन राजेन्द्र तन्निबोध यथोदितम् ॥ क्षीरोदार्णवसंभूतत्रैलोक्यांगणदीपक ॥ ६३ ॥ उमापतेः शिरोरत्नशिवं यच्छ नमोनमः ॥ दानेनानेन नृपते भ्राजते चंद्रवद्दिवि ॥ ६४ ॥ अप्सरोभिः परिवृतो यावदाभूतसंप्लवम् ॥६५॥ दानान्यमूनि विधिवत्प्रयतिक्रमेण यच्छंति ये द्विजवराय विशुद्धसत्त्वाः ॥ ते ब्रह्मविष्णुभुवनेषु सुखं विहृत्य यांत्येकतां सह शिवेन न संशयो मे ॥ ६६ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे तिथिदानवर्णनं नाम त्रिनवत्युत्तरशततमोऽध्यायः ॥ १९३ ॥ छ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ आदिवाराहदानं ते कथयामि युधिष्ठिर ॥ धरण्यै यत्पुरा प्रोक्तं वराहवपुषा मया ॥ १ ॥ पुण्यं पवित्रमायुष्यं सर्वदानोत्तमोत्तमम् ॥ महापापादिदोषघ्नं पूजितं धर्मसत्तमैः ॥ २ ॥ देयं संक्रमणे भानोर्ग्रहणे द्वादशीष्वथ ॥ यज्ञोत्सवविवाहेषु दुःस्वप्नाद्भुतदर्शने ॥ ३ ॥ यदा च जायते वित्तं चित्तं श्रद्धासमन्वितम् ॥ तदैवदानकालः स्याद्ध्रुवं जीवितं यतः ॥ ४ ॥ कुरुक्षेत्रादितीर्थेषु गंगाद्यासु नदीषु च ॥ पुरेषु च

१ आवाह्य–इ० पा० । २ मनुजः–इ० पा० । ३ संयुक्तम्–इ० पा० । ४ कुशरेषु–इ० पा० ।





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पवित्रेषु अरण्येषु वनेषु च ॥ ५ ॥ गोष्ठे देवालये वापि रथे वा स्वगृहांगणे ॥ देयं पुराणविधिना ब्राह्मणाय कुटुंबिने ॥ ६ ॥ कुशैरास्तीर्य तां पार्थ प्रणवाक्षरमंत्रितैः ॥ उपरिष्टात्तिलैस्तेषां वराहं परिकल्पयेत् ॥ ७ ॥ द्रोणैश्चतुर्भिः संपूर्णं तदर्धेनाथ वा पुनः ॥ आढकेनाथ कुर्वीत वित्तशाठ्यं न कारयेत् ॥ ८ ॥ सुवर्णेन मुखं कार्यं भुजौ चक्रगदान्वितौ ॥ राजतीं कारयेदंष्ट्रां पद्मरागविभूषिताम् ॥ ९ ॥ शंखं च स्थापयेत्पार्श्वे वनमालां हिरण्मयीम् ॥ पुष्पैर्वा कारयेद्विद्वान्पादौ रूप्यमयौ तथा ॥ १० ॥ दंष्ट्राग्रलग्नवसुधां सौवर्णीं कारयेच्छुभाम् ॥ सर्वधान्यरसोपेतां वस्त्रालंकृतविग्रहाम् ॥ ११ ॥ प्रच्छाद्य वस्त्रैर्देवेशं वराहं सर्वकामदम् ॥ रोमराजिं कुशैः कृत्वा गंधपुष्पैरथार्चयेत् ॥ १२ ॥ नवग्रहमखः कार्यो होमश्चात्र तिलैः स्मृतः ॥ एवं संस्थाप्य विधिवत्ततः स्तोत्रमुदीरयेत् ॥ १३ ॥ वराहेश प्रदुष्टानि सर्वपापफलानि च ॥ मर्द मर्द महादंष्ट्र भास्वत्कनककुंडल ॥ १४ ॥ शंखचक्रासिहस्ताय हिरण्याक्षांतकाय च ॥ दंष्ट्रोद्धृतधराभृते त्रयीमूर्तिमते नमः ॥ १५ ॥ इत्युच्चार्य नमस्कृत्य प्रदक्षिणमनुव्रजेत् ॥ ततस्तं ब्राह्मणे दद्याद्वस्त्रालंकारभूपितम् ॥ १६ ॥ प्रग्रिहस्तु तस्योक्तः पादयोः परमर्षिभिः ॥ अनेन विधिना दत्त्वा प्रणिपत्य क्षमापयेत् ॥ १७ ॥ एवं दत्त्वा महीनाथ वराहं सर्वकामदम् ॥ यत्फलं समवाप्नोति पार्थ तत्केन वर्ण्यते ॥ १८ ॥ सर्वदानेषु यत्पुण्यं सर्वक्रतुषु यत्फलम् ॥ तत्फलं समवाप्नोति दत्त्वा देवं जनार्दनम् ॥ १९ ॥ यथा शक्त्या समुद्धृता वराहेण वसुंधरा ॥ यथा कुलं समुद्धृत्य विष्णुलोके महीयते ॥ २० ॥ ब्राह्मणक्षत्रियविशां स्त्रीणां शूद्रजनस्य च ॥ एतत्साधारणं दानं शैववैष्णवयोगिनाम् ॥ २१ ॥ विप्राय वेदविदुषे नृवराहरूपं दत्त्वा तिलामलसुवर्णमयं सवस्त्रम् ॥ उद्धृत्य पूर्वपुरुषान्सकलत्रमित्रः प्राप्नोति सिद्धभुवनं सुरसिद्धजुष्टम् ॥ २२ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे वराहदानविधिवर्णनं नाम चतुर्नवत्युत्तरशततमोऽध्यायः ॥ १९४ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ भगवञ्छ्रोतुमिच्छामि दानमाहात्म्यमुत्तमम् ॥ यदक्षयं परे लोके देवर्षिगणपूजितम् ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ रुद्रेण यत्पुरा प्रोक्तं नारदाय महात्मने ॥ मत्स्येन मनवे तद्वत्तच्छृणुष्व कुरूद्वह ॥ २ ॥ मेरोः प्रदानं वक्ष्यामि दशधा पुनरेव ते ॥ यत्प्रदातोत्तराँल्लोकान्प्राप्नोति सुरपूजितान् ॥ ३ ॥ पुराणेषु च वेदेषु यज्ञेष्वध्ययनेषु च ॥ नतत्फलमधीतेषु कृतेष्विह यदश्नुते ॥ ४ ॥ तस्माद्विधानं वक्ष्यामि पर्वतानामनुक्रमात् ॥ प्रथमो धान्यशैलः स्याद्द्वितीयो लवणाचलः ॥ ५ ॥ गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पञ्चमस्तिलशैलः स्यात्षष्ठः कार्पासपर्वतः ॥ ६ ॥ सप्तमो घृतशैलश्च रसशैलस्तथाष्टमः ॥ राजतो नवमस्तद्वद्दशमः शर्कराचलः ॥ ॥ ७ ॥ वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः ॥ अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ॥ ८ ॥ शुक्लपक्षे तृतीयायामुपरागे शशिक्षये ॥ विवाहोत्सवयज्ञे वा द्वादश्यामथ वा पुनः ॥ ९ ॥ शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे वा प्रधानतः ॥ धान्यशैलादयो देया यथाशास्त्रं विजानता ॥ १० ॥ तीर्थे वायतने वापि गोष्ठे वा संगमेऽपि वा ॥ मंडपं कारयेद्भक्त्या चतुरस्रमुदङ्मुखम् ॥ ११ ॥ प्रागुदक्प्रवणं तत्र प्राङ्मुखं वा विधानतः ॥ गोमयेनानुलिप्तायां भूमावास्तीर्य वा कुशान् ॥ १२ ॥ तन्मध्ये पर्वतं कुर्याद्विष्कम्भपर्वतान्वितम् ॥ धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः ॥ १३ ॥ मध्यमः पंचशतिकः कनिष्ठः स्यात्त्रिभिः शतैः ॥ १४ ॥ मेरुर्महाव्रीहिमयस्तु मध्यसुवर्णवृक्षत्रयसंयुतः स्यात् ॥ संपूर्णमुक्ताफलवज्रयुक्तो याम्ये तु गोमेदकपुष्परागैः ॥१५॥ यः स्याच्च गारुत्मतनीलरत्नैः सौम्येन वैडूर्यसरोजरागैः ॥ श्रीखंडखण्डैरभितः प्रवाललतान्वितः शुद्धशिलातलः स्यात् ॥१६॥ ब्रह्माथ विष्णुर्भगवान्पुरारिर्दिवाकरोऽप्यत्र हिरण्मयः स्यात् ॥ तथैकदेशोद्धतकन्धरस्तु घृतोदकप्रस्रवणाश्च दिक्षु ॥ १७ ॥ शुक्लांवरोऽन्यश्च सुराचलः स्यात्पूर्वेण कृष्णानि च दक्षिणेन ॥ वासांसि पश्चादथ केसराणि रक्तानि चैवोत्तरतो दलानि ॥ १८ ॥ रौप्यामहेंद्रप्रमुखास्तथाष्टौ संस्थापयेल्लोकपतीन्क्रमेण ॥ नानाफलाली च समंततः स्यान्मनोरमामाल्यविलेपनाढ्या ॥ १९ ॥ वितानकश्चोपरि पञ्चवर्णमम्लानपुष्पाभरणं सितं वा ॥ इत्थं निवेश्यामरशैलमग्र्युन्मनास्तु विष्कम्भगणान्क्रमेण ॥ २० ॥ तुरीयभागेन चतुर्दिशं च संस्थापयेत्पुष्पविलेपनाढ्यान् ॥ पूर्वेण मन्दरमनेकफलोपयुक्तं यत्रोल्लसत्कनकभद्रकदंबचिह्नम् ॥ २१ ॥ कामेन कांचनमयेन विराजमानमाकारयेत्कुसुमवस्त्रविलेपनाढ्यम् ॥ क्षीरारुणोदसरसाथ तथा वनेन रौप्येण शक्तिघटितेन विराजमानम् ॥२२॥ याम्येन गंधमदनोत्र निवेशनीयो गोधूमसंचयमयः कलधौतजो वा ॥ हैमेन पक्षिपतिना धृतमानसेन तेनाद्यमेव सकलं किलसंयुतः स्यात् ॥ २३ ॥ पश्चात्तिलाचलमनेकसुगन्धपुष्पसौवर्णपिप्पलहिरण्मयहंसयुक्तम् ॥ आकारयेद्रजतपुष्पवनेन तद्वद्वस्त्रान्वितं दधिशतोदसरस्तथाग्रे ॥ २४ ॥ संस्थाप्य तं विपुलशैलमथोत्तरेण शैलं सुपार्श्वमपि मापमयं सुवप्रम् ॥ पुष्पैश्च हेमवटपादपशेपरत्नमाकारयेत्कनकधेनुविराजमानम् ॥ २५ ॥ माक्षीकभद्रकरसावचयेन तद्वद्रौप्येण भास्वररसैश्च युतं विधाय ॥ होमश्चतुर्भिरथ वेदपुराणविद्भिर्दान्तैरनिंद्य वरिताकृतिभिर्द्विजेन्द्रैः ॥ २६ ॥ पूर्वेण हस्तमुखमत्र विधाय कुंडं कार्यं

१ रत्नशैलः—इ० पा० । २ विधानतः—इ० पा० । ३ तु—इ० पा० । ४ पश्चाग—इ० पा० । ५ पार्श्वात्—इ० पा० । ६ सुवक्त्रम् इ०, सुविप्रम्—इ० च पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तिलैरथ घृतेन समित्कुशैश्च ॥ रात्रौ च जागरमनुद्धतगीततूर्यैरावाहनं च कथयामि शिलोच्चयानाम् ॥ २७ ॥ त्वं सर्वदेवगणधामनिधे च विघ्न
मस्मद्गृहेष्वमरपर्वतनाशयाशु ॥ क्षेमं विधत्स्व कुरु शांतिमनुत्तमां नः संपूजितः परमभक्तिमतः प्रदेहि ॥ २८ ॥ त्वमेव भगवानीशो ब्रह्मा
विष्णुर्दिवाकरः ॥ मूर्तामूर्तपरं बीजमतः पाहि सनातन ॥ २९ ॥ यस्मात्त्वं लोकपालानां विश्वमूर्तेश्च मंदिरम् ॥ केशवार्कवसूनां च तस्मा
च्छांतिं प्रयच्छ मे ॥ ३० ॥ यस्मादशून्यममरैर्गंधर्वैश्च शिरस्तव ॥ तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ॥ ३१ ॥ एवमभ्यर्च्य तं मेरुं
मन्दरं चापि पूजयेत् ॥ यस्माच्चैत्ररथेनाथ भद्राश्ववर्षेण च ॥ ३२ ॥ शोभसे मन्दरक्षिप्रमतस्तुष्टिकरो भव ॥ यस्माच्चूडामणिर्जंबूद्वीपे त्वं गन्ध
मादनः ॥ ३३ ॥ गन्धर्वैरप्सरोभिश्च गीयमानं यशोऽस्तु मे ॥ यस्मात्त्वं केतुमालेन वैभ्राजेन वनेन च ॥ ३४ ॥ हिरण्मयपाषाणस्तस्मा
च्छांतिं प्रयच्छ मे ॥ उत्तरैः कुरुभिर्यस्मात्सावित्रेण वनेन च ॥ ३५ ॥ सुपार्श्व राजसे नित्यमतः श्रीरक्षयास्तु मे ॥ एवमामंत्र्य तान्सर्वान्प्रभाते
विमले पुनः ॥ ३६ ॥ स्नात्वा तु गुरवे दद्यान्मध्यमं पर्वतोत्तमम् ॥ शेषांश्च पंच तान्दद्यादृत्विग्भ्यः क्रमशो नृप ॥ ३७ ॥ गावो देयाश्चतुर्विंश
दथवा दश भारत ॥ शक्तितः सप्त वाष्टौ वा एवं दद्यादशक्तिमान् ॥ ३८ ॥ एकापि गुरवे देया कपिला सुपयस्विनी ॥ पर्वतानामशेषाणामेष
एव विधिः स्मृतः ॥ ३९ ॥ त एव पूजने मंत्रास्त एवोपस्करे तथा ॥ ग्रहाणां लोकपालानां ब्रह्मादीनामग्नेः सह ॥ ४० ॥
स्वमंत्रेणैव सर्वेषु होमः शैलेषु शस्यते ॥ उपवासी भवेन्नित्यमशक्तो नक्तमिष्यते ॥ ४१ ॥ विधानं सर्वशैलानां क्रमशः शृणु भारत ॥ दान
कालेषु ये मन्त्राः पर्वतेषु च यत्फलम् ॥ ४२ ॥ अन्नं ब्रह्म यतः प्रोक्तमन्ने प्राणाः प्रतिष्ठिताः ॥ अन्नाद्भवंति भूतानि जगदन्नेन वर्द्धते ॥ ४३ ॥ अन्न
मेव यतो लक्ष्मीरन्नमेव जनार्दनः ॥ धान्यपर्वतरूपेण पाहि तस्मान्नगोत्तम ॥ ४४ ॥ अनेन विधिना यस्तु दद्याद्धान्यमयं गिरिम् ॥ मन्वन्तर
शतं साग्रं देवलोके महीयते ॥ ४५ ॥ अप्सरोगणगंधर्वैराकीर्णेन विराजता ॥ विमानेन दिवः पृष्ठे स याति ऋषिसेवितः ॥ ४६ ॥ पुण्यक्षये राज
राज्यमाप्नोतीह न संशयः ॥ ४७ ॥ धान्याचलं कनकवृक्षविराजमानं विष्कंभपर्वतयुतं सुरसिद्धजुष्टम् ॥ यच्छंति ये सुमतयः प्रणिपत्य विप्रांस्ते
प्राप्नुवंति परमेष्ठिपदाब्जयुग्मम् ॥ ४८ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे धान्यपर्वतदानविधिवर्णनं नाम
पंचनवत्युत्तरशततमोऽध्यायः॥ ॥ १९५ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथातः संप्रवक्ष्यामि लवणाचलमुत्तमम् ॥ यत्प्रदानान्नरो

१ तं-८० पा० । २ तं-३० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोकमाप्नोति शिवसंयुतम् ॥१॥ उत्तमः षोडशद्रोणः कर्तव्यो लवणाचलः॥ मध्यमः स्यात्तदर्धेन तदर्द्धेनाधमः स्मृतः ॥२॥ वित्तहीनो यथाशक्त्या द्रोणादर्धं तु कारयेत् ॥ चतुर्थांशेन विषयान्पर्वतान्कारयेत्पृथक् ॥३॥ विधानं पूर्ववत्कुर्याद्ब्रह्मादीनां च सर्वदा ॥ तद्वद्धेमतरून्सर्वांल्लोकपालनिवेशनम् ॥४॥ शिरांसि कामदेवादींस्तद्वत्तत्र निवेशयेत् ॥ कुर्याज्जागरमत्रापि दानमंत्रान्निबोध मे ॥५॥ सौभाग्यरससंभूतो यतोऽयं लवणोरसः ॥ दानात्म कत्वेन च मां पाहि पापान्नगोत्तम ॥ ६ ॥ तस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना ॥ प्रियं च शिवयोर्नित्यं तस्माच्छांतिप्रदोभव ॥७॥ विष्णुदेह समुद्भूतं यस्मादारोग्यवर्धनम् ॥ यस्मात्पर्वतरूपेण पाहि संसारसागरात् ॥ ८ ॥ अनेन विधिना यस्तु दद्याल्लवणपर्वतम् ॥ उमालोके वसेत्कल्पं ततो याति परां गतिम् ॥ ९ ॥ पुण्यक्षयादिहाभ्येत्य राजा भवति धार्मिकः ॥ पुत्रपौत्रैः परिवृतो जीवेच्च शरदां शतम् ॥ १० ॥ कुर्वंति ये लवण पर्वतसंप्रदानं संप्राप्नुवंति दिवि ते सुमहद्विमानम् ॥ तत्राप्सरोगणसुरासुरसेव्यमानास्तिष्ठंति हृष्टमनसो दिवि वृद्धमानाः ॥ ११ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे लवणपर्वतदानविधिवर्णनं नाम षण्णवत्युत्तरशततमोऽध्यायः ॥ १९६ ॥ छ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अतः परं प्रवक्ष्यामि गुडपर्वतमुत्तमम् ॥ यत्प्रदानान्नरः स्वर्गं प्राप्नोति सुरपूजितम् ॥ १ ॥ उत्तमो दशभिर्भारैः मध्यमः पंचभिस्तथा ॥ त्रिभिर्भारैः कनिष्ठः स्यात्तदर्द्धेनाल्पको मतः ॥ २ ॥ तद्वदामंत्रणं पूजां हेमवृक्षसुरार्चनम् ॥ विष्कंभपर्वतांस्तत्र सरांसि वनदेवताः ॥ ३ ॥ होमं जागरणं तद्वल्लोकपालाधिवासनम् ॥ धान्यपर्वतवत्कुर्यादिमं मंत्रमुदीरयेत् ॥ ४ ॥ यथा देवेषु विश्वात्मा प्रवरो यं जनार्दनः ॥ सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥ ५ ॥ प्रणवः सर्वमंत्राणां नारीणां पार्वती यथा ॥ तथा रसानां प्रवरः सदा चेक्षुरसो मतः ॥ ६ ॥ मम तस्मात्परां लक्ष्मीं प्रयच्छ गुडपर्वत ॥ सुरासुराणां सर्वेषां नागयक्षर्क्षयंत्रिणाम् ॥ ७ ॥ विनाशश्चापि पार्वत्यास्तस्मान्मां पाहि सर्वदा ॥ अनेन विधिना यस्तु दद्याद्गुडमयं गिरिम् ॥ ८ ॥ संपूज्यमानो गंधर्वैर्गौरीलोके महीयते ॥ पुनः कल्पशतांते तु सप्तद्वीपाधि पो भवेत् ॥ ९ ॥ आयुरारोग्यसंपन्नः शत्रुभिश्चापराजितः ॥ आसीद्राज्ञी महाभागा सुलभा नाम सुव्रता ॥ १० ॥ मरुत्तस्य प्रिया भार्या रूप यौवनशालिनी ॥ तस्य भार्या शतान्यासन्सप्त राज्ञो महात्मनः ॥ ११ ॥ ता दास्य इव वाक्यानि कुर्युस्तस्याः सदैव हि ॥ मुखावलोकनकरो राजा तस्य च सा प्रिया ॥ १२ ॥ अथ कालेन महता दुर्वासा ऋषिसत्तमः ॥ आजगाम तदभ्याशं भ्रममाणो यदृच्छया ॥ १३ ॥ तस्याथ



१ सर्वदाः—इ० पा० । २ अष्टशतीभारैः—इ० पा० । ३ नरोत्तमः—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्क्रियां कृत्वा दत्त्वा चार्घं यथाविधि ॥ पप्रच्छ सुलभा विप्रं दुर्वाससमकल्मषम् ॥ १४ ॥ ॥ सुलभोवाच ॥ ॥ केन पुण्येन भगवन्मम राजा प्रियंकरः ॥ मुखावलोकनपरो वशे तिष्ठति सर्वदा ॥ १५ ॥ ॥ सपत्न्यश्च मम ब्रह्मन्सदा प्रियहिते रताः ॥ एतदाचक्ष्व भगवन्परं कौतूहलं मम ॥१६॥ ॥ दुर्वासा उवाच ॥ ॥ शृणुष्वावहिता सुभ्रूरात्मवृत्तं पुरातनम् ॥ जानामि सर्वं सुभगे तव वृत्तमशेषतः ॥ १७ ॥ त्वमासीर्वैश्यमहिषी गिरिव्रजपुरे पुरा ॥ धार्मिका सत्यशीला च पतिव्रतपरायणा ॥ १८ ॥ तत्र श्रुतस्त्वया वत्से ब्राह्मणानां समीपतः ॥ पुरा दानविधिः कृत्स्नः स्थितया पतिसंनिधौ ॥ १९ ॥ विशेषतस्तत्र विप्रैः कथितो गुडपर्वतः ॥ दत्तश्चापि त्वया पुत्रि संभृत्य विधिवत्तदा ॥ २० ॥ तस्य दानस्य माहात्म्यात्त्वया भुक्तं वरानने ॥ राज्यं जन्मानि चत्वारि निःसपत्नमनाकुलम् ॥ २१ ॥ अन्यानि सप्त जन्मानि तव राज्यं भविष्यति ॥ सौभाग्यमतुलं चैव रूपमारोग्यमेव च ॥ २२ ॥ भूतं चैवमवश्यं च गुडपर्वतदानजम् ॥ कथा तव वरारोहे यास्ये त्वं भव पुत्रिणी ॥ २३ ॥ तस्माद्दयमिदं दानं फलमुत्तममिच्छता ॥ गतिं च शाश्वतीं लेभे सौभाग्यं रूपमेव च ॥ २४ ॥ दानमेतत्प्रशंसंति स्त्रीणां राजन्विशेषतः ॥ पूर्वोक्तं त्र फलं प्राप्य कृतकृत्योऽभिजायते ॥ २५ ॥ कृष्णेष्टसुंदरदरीस्रवणाकुलेन गंधर्वसिद्धवनिताशतसेवितेन ॥ दत्तेन भारत विधानवता सदैव गौरी प्रसादमुपयाति गुडाचलेन ॥ २६ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे गुडाचलदानविधिवर्णनं नाम सप्तनवत्युत्तरशततमोऽध्यायः ॥ १९७ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथ पापहरं वक्ष्ये सुवर्णाचलमुत्तमम् ॥ यस्य प्रसादाद्भवनं वैरिंच्यं याति मानवः ॥ १ ॥ उत्तमः पलसाहस्रो मध्यमः पञ्चभिः शतैः ॥ तदर्द्धेनावरस्तद्वदल्पवित्तोऽपि शक्तितः ॥ ॥ २ ॥ दद्यादेकपलादूर्ध्वं यथाशक्त्या विचक्षणः ॥ धान्यपर्वतवत्सर्वं विदध्यान्नृपसत्तम ॥ ३ ॥ विष्कंभशैलांस्तद्वच्च कृत्वा मंत्रमुदीरयेत् ॥ नमस्ते ब्रह्मबीजाय ब्रह्मगर्भाय वै नमः ॥ ४ ॥ यस्मादनंतफलदस्तस्मात्पाहि शिलोच्चय ॥ यस्मादग्नेरपत्यं त्वं यस्मात्पुल्व जगत्पतेः ॥ ५ ॥ हेमपर्वतरूपेण तस्मात्पाहि नगोत्तम ॥ अनेन विधिना यस्तु दद्यात्कनकपर्वतम् ॥ ६ ॥ स याति परमं स्थानं यत्र देवो महेश्वरः ॥ तत्र वर्षशतं तिष्ठेत्ततो याति परां गतिम् ॥ ७ ॥ हेमाचलात्परं दानं नचान्यद्विद्यते क्वचित् ॥ ८ ॥ हैमं महींद्रमणिशृंगशतैरुपेतं लोकाधिपाष्टकयुतं सहितं

१ दिवसानि:—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुनीन्द्रैः ॥ यः शक्तिमान्वितरतीह गणेशलोके कल्पं कुमारवदसौ कुरुपुंगवाऽऽस्ते ॥ ९ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्ण युधिष्ठिरसंवादे हेमाचलदानविधिवर्णनं नामाष्टनवत्युत्तरशततमोऽध्यायः ॥ १९८ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अतः परं प्रवक्ष्यामि तिलशैलं विधानतः ॥ यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम् ॥ १ ॥ तिलाः पवित्रमतुलं पवित्राणां च पावनम् ॥ विष्णुदेहसमुद्भूतास्त स्मादुत्तमतां गताः ॥ २ ॥ मधुकैटभनामानावास्तां दितिसुतौ पुरा ॥ मधुना सह तत्राभूद्युद्धं विष्णोरनारतम् ॥ ३ ॥ सहस्रं किल वर्षाणां न व्यजीवत दानवः ॥ तत्र स्वेदो महानासीत्क्रुद्धस्याथ गदाभृतः ॥ ४ ॥ पतितश्च धरापृष्ठे कणशो लवशस्तथा ॥ समुत्तस्थुस्तिला माषाः कुशाश्च कुरुनंदन ॥ ५ ॥ हतश्च हरिणा युद्धे स मधुर्बलिनां वरः ॥ मेदसा तस्य वसुधा रंजिता सकला तदा ॥ ६ ॥ मेदिनीति ततः संज्ञामवापाचल धारिणी ॥ हतेऽथ दैत्यप्रवरे देवास्तोषं परं ययुः ॥ ७ ॥ स्तुतिभिश्च परं स्तुत्वा ऊचुस्त्रिदशपुंगवम् ॥ ॥ देवा ऊचुः ॥ ॥ त्वया धृतं जग द्देव त्वया सृष्टं तथैव च ॥ ८ ॥ त्वयीश लीयते सर्वं त्वय्यैव मधुसूदन ॥ तस्मात्त्वदंगतो जातास्तिलाः संतु जगद्धिताः ॥ ९ ॥ पालयंतु च देवेश हव्यकव्यानि सर्वदा ॥ दैवे पित्र्ये च सततं नियोज्यास्तत्परैर्नरैः ॥ १० ॥ नहि दैत्याः पिशाचा वा विघ्नं कुर्वंति भारत ॥ तिला यत्रो पयुज्यंते एतच्छीघ्रं विधीयताम् ॥ ११ ॥ श्रुत्वा सुराणां तद्वाक्यं विष्णुस्तानिदमब्रवीत् ॥ तिला भवन्तु रक्षार्थं त्रयाणां जगतामपि ॥ १२ ॥ शुक्लपक्षे तु देवानां संप्रदद्यात्तिलोदकम् ॥ कृष्णपक्षे पितॄणां च स्नात्वा श्रद्धासमन्वितः ॥ १३ ॥ तिलैः सप्ताष्टभिर्वापि समर्पितजलांजलिः ॥ तस्य देवाः सपितरस्तृप्ता यच्छंति शोभनम् ॥ १४ ॥ श्वकाकोपहतं यच्च पतितादिभिरेव च ॥ तिलैरभ्युक्षितं सर्वं पवित्रं स्यान्नसंशयः ॥ १५ ॥ एतैर्भूतैस्तिलैर्यस्तु कृत्वा पर्वतमुत्तमम् ॥ प्रदद्याद्द्विजमुख्याय दानं तस्याक्षयं भवेत् ॥ १६ ॥ उत्तमो दशभिर्द्रोणैर्मध्यमः पंचभिर्मतः ॥ त्रिभिः कनिष्ठो राजेन्द्र तिलशैलः प्रकीर्तितः ॥ १७ ॥ पूर्ववच्चापरं सर्वं विष्कंभपर्वतादिकम् ॥ दानमन्त्रं प्रवक्ष्यामि यथावन्नृपसत्तम ॥ १८ ॥ यस्मा न्मधुवधे विष्णोर्देहस्वेदसमुद्भवाः ॥ तिलाः कुशाश्च माषाश्च तस्माच्छं नो भवंत्विह ॥ १९ ॥ हव्ये कव्ये च यस्माच्च तिलैरेवाभिमंत्रणम् ॥ भवादुद्धर शैलेंद्र तिलाचलनमोऽस्तु ते ॥ २० ॥ इत्यामंत्र्य च यो दद्यात्तिलाचलमनुत्तमम् ॥ स वैष्णवं पदं याति पुनरावृत्तिदुर्ल



१ अथापरम्—इ० पा० । २ पावनाः—इ० पा० । ३ त्रिदशपुंगवाः—इ० पा० । ४ भगवतः—इ० पा० । ५ शुद्धिसमन्वितः—इ० पा० । ६ च नरोत्तम—इ० पा० । ७ काले विष्णोर्देहसमुद्भवाः—इ० पा० । ८ मुद्गाश्च—इ० पा० । ९ अभिरक्षणं:—इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भम् ॥ २१ ॥ दीर्घायुष्ट्वमवाप्नोति इह लोके परत्र च ॥ पितृभिर्देवगन्धर्वैः पूज्यमानो दिवं व्रजेत् ॥ २२ ॥ पुण्यक्षयादिहाभ्येत्य राजा भवति धार्मिकः ॥ नारी वा तस्य पत्नी स्याद्रूपसौभाग्यसंयुता ॥ २३ ॥ दक्षा कुलोद्भवा चैव पुत्रपौत्रसमन्विता ॥ विधानमिद माकर्ण्य विधिनां श्रद्धयान्वितः ॥ २४ ॥ कपिलादानपुण्यस्य समं फलमवाप्नुयात् ॥ २५ ॥ दानं तिलाचलसमं यदि चान्यदस्ति तद्दृत शास्त्रनिचयं प्रविचार्य बुद्ध्या ॥ यैर्वर्जिता पितृक्रिया न च होमकर्म तेषां प्रदानमिह किं न करोति शर्म ॥ २६ ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे तिलाचलदानविधिवर्णनं नामैकोनद्विशततमोऽध्यायः ॥ १९९ ॥ ॥छ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अतः परं प्रवक्ष्यामि कार्पासाचलमुत्तमम् ॥ परमं सर्वदानानां प्रियं सर्वदिवौकसाम् ॥ १ ॥ देशकालौ समासाद्य धनं श्रद्धां च यत्नतः ॥ देयमेतन्महादानं कुलोद्धरणहेतवे ॥ २ ॥ पूर्वोक्तेन विधानेन कृत्वा सर्वमशेषतः ॥ पर्वतं कल्पयेत्तत्र कार्पासेन त्रिधा नतः ॥ ३ ॥ विंशद्भारस्तु कर्तव्य उत्तमः पर्वतो बुधैः ॥ दशभिर्मध्यमः प्रोक्तो जघन्यः पंचभिर्मतः ॥ ४ ॥ भारेणाल्पधनो दद्याद्वित्तशाठ्यविवर्जितः ॥ धान्यपर्वतवत्सर्वमासाद्य नृपपुंगव ॥ ५ ॥ तद्वज्जागरणं कुर्यात्तद्वच्चैवाधिवासनम् ॥ प्रभातायां तु शर्वर्यामिमं मन्त्रमुदीरयेत् ॥ ६ ॥ त्वमेवावरणंयस्माल्लोकानामिह सर्वदा ॥ कार्पासाचलनस्तस्मादघौघध्वंसनो भव ॥ ७ ॥ इति कार्पासशैलेन्द्रं यो दद्यात्पर्वसंनिधौ ॥ रुद्रलोके वसेत्कल्पं ततो राजा भवेदिह ॥ ८ ॥ रूपवान्सुभगो वाग्मी श्रीमानतुलविक्रमः ॥ पञ्चजन्मानि नारी वा जायते नात्र संशयः ॥ ९ ॥ कार्पासपर्वतमयो जगदेकबंधुर्यस्मात्रतेन रहितो वरवस्त्रयोगः ॥ तस्मादघौघशमनाय सुखाय नित्यं देयो नरेण नरनाथविमत्सरेण ॥ १० ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे कार्पासाचलदानविधिवर्णनं नाम द्विशततमोऽध्यायः ॥ २०० ॥ ॥छ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथातः संप्रवक्ष्यामि घृताचलमनुत्तमम् ॥ तेजोऽमृतमयं दिव्यं महापातकनाशनम् ॥ १ ॥ पंचाशद्घृतकुम्भानामुत्तमःस्याद्घृताचलः ॥ मध्यमस्तु तदर्धेन तदर्द्धेनावरः स्मृतः ॥ २ ॥ अल्पवित्तस्तु कुर्वीत यथा शक्त्या विधानतः ॥ विष्कंभपर्वतांस्तद्वच्चतुर्भागेन कल्पयेत् ॥ ३ ॥ शालेयतंडुलानां च कुंभांश्च परिविन्यसेत् ॥ कारयेत्संहतानुच्चान्यथा शोभं विधानतः ॥ ४ ॥ वेष्टयेच्छुक्लवासोभिरिक्षुदंडफलादिकैः ॥ धान्यपर्वतवच्छेषं विधानमिह पठ्यते ॥ ५ ॥ अधिवासनपूर्वं च तद्वद्धोमंसुरार्चनम् ॥ प्रभातायां तु शर्वर्यां गुरवे विनि

१ आगत्य–इ० पा० । २ इह सौभाग्यसंयुता–इ० पा० । ३ निशाः–इ० पा० । ४ प्रियं सर्वदिवौकसाम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदयेत् ॥६॥ विष्कंभपर्वतांस्तद्वदृत्विग्भ्यः शांतमानसः ॥ मंत्रेणानेन कौंतेय तच्छृणुष्व वदामि ते ॥७॥ संयोगादूघृतमुत्पन्नं यस्मादमृततेजसे ॥ तस्मादूघृताचलश्चास्मात्प्रीयतां मम शंकरः ॥ ८ ॥ तस्मात्तेजोमयं ब्रह्म घृते नित्यं व्यवस्थितम् ॥ घृतपर्वतरूपेण तस्मान्नः पाहि भूधर ॥ ९ ॥ अनेन विधिना दद्याद्घृताचलमनुत्तमम् ॥ महापातकयुक्तोऽपि लोकमायाति शांकरम् ॥ १० ॥ हंससारससंयुक्ते किंकिणीजालमालिते ॥ विमाने अप्सरोभिश्च सिद्धविद्याधरैर्वृतः ॥ ११ ॥ विहरेत्पितृभिः सार्द्धं यावदाभूतसंप्लवम् ॥ १२ ॥ आज्याचलं प्रचलकुंडलसुन्दरीभिः संसेव्यमानमिह ये वितरंति मर्त्याः ॥ स्वर्गं सुरेंद्रभवनं भवसंनिधिं वा स्नेहानुबंधमचलं भवतीति सर्वम् ॥ १३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे घृताचलदानविधिवर्णनं नामैकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥ ॥ छ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ अथातः संप्रवक्ष्यामि रत्नाचलमनुत्तमम् ॥ यत्प्रदानान्नरो याति लोकान्सप्तर्षिसेवितान् ॥ १ ॥ मुक्ताफलसहस्रेण पर्वतः स्यादनुत्तमः ॥ मध्यमः पञ्चशतिकस्त्रिशतेनावरः स्मृतः ॥ २ ॥ अल्पवित्तस्तु कुर्वीत मुक्ताफलशतेन च ॥ चतुर्थांशेन विष्कंभपर्वताः स्युः समंततः ॥ ३ ॥ पूर्वेणवज्रगोमेदैर्दक्षिणेनेंद्रनीलकैः ॥ पुष्परागयुतः कार्यो विद्वद्भिर्गंधमादनः ॥ ४ ॥ वैडूर्यविद्रुमैः पश्चात्सावित्रो विपुलाचलः ॥ पद्मरागं ससौवर्णमुत्तरेणापि विन्यसेत् ॥ ५ ॥ धान्यपर्वतवच्छेषमत्रापि परिकल्पयेत् ॥ तद्वदावाहनं कृत्वा वृक्षान्देवांश्च कांचनाम् ॥ ६ ॥ पूजयेत्पुष्पनैवेद्यैः प्रभाते तु विसर्जनम् ॥ पूर्ववद्गुरुऋत्विग्भ्यां इमान्मंत्रानुदीरयेत् ॥७॥ यथा देवगणाः सर्वे सर्वरत्नेष्ववस्थिताः ॥ त्वं च रत्नमयो नित्यमतः पाहि महाचल ॥ ८ ॥ यस्माद्रत्नप्रदानेन तुष्टिमेति जनार्दनः ॥ पूजारत्नप्रदानेन तस्मान्नः पाहि सर्वदा ॥ ९ ॥ अनेन विधिना यस्तु दद्याद्रत्नमयं गिरिम् ॥ स याति वैष्णवं लोकममरेश्वरपूजितम् ॥ १० ॥ यावत्कल्पशतं साग्रमुषित्वेह नराधिप ॥ रूपारोग्यगुणोपेतः सप्तद्वीपाधिपो भवेत् ॥ ॥ ११ ॥ ब्रह्महत्यादिकं किंचिदत्र चामुत्र वा कृतम् ॥ तत्सर्वं नाशमायाति गिरिर्वज्रहतो यथा ॥ १२ ॥ मुक्तामयं कनकविद्रुमभक्तिचित्रं चंचन्महामणिमरीचिचयोपपन्नम् ॥ रत्नाचलं द्विजवराय निवेदयित्वा भास्वत्प्रभामभिभवेत्सुरलोकलोके ॥ १३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे रत्नाचलदानविधिवर्णनं नाम द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥

१ शृणुष्वाद्य वदामि ते—इ० पा० । २ ब्रह्मपातकयुक्तोऽपि—इ० पा० । ३ अन्नादिः—इ० पा० । ४ पुष्पगंधाद्यैः—इ०, पुष्पधूपाद्यैः—इ० च पा० । ५ तुष्टिं प्रकुरुते हरिः—इ० पा० । ६ रूपारोग्यकुलोपेतः—इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतः परं प्रवक्ष्यामि रौप्याचलमनुत्तमम् ॥ यत्प्रदानान्नरो याति सोमलोकं नरोत्तम ॥ १ ॥ सहस्रेण पलानां तु उत्तमो रजताचलः ॥ पंचभिर्म
ध्यमः प्रोक्तस्तदर्द्धेनावरः स्मृतः॥२॥अशक्तो विंशतेरूर्ध्वं कारयेद्भक्तितः सदा ॥ विष्कंभपर्वतांस्तद्वत्तुरीयांशेन कल्पयेत् ॥३॥ पूर्ववद्राजतान्कुर्या
न्मंदरादीन्विधानतः ॥ कलधौतमयांस्तद्वल्लोकेशान्कारयेन्नृप ॥४॥ ब्रह्मविष्णुशिवादींश्च नितंबोऽत्र हिरण्मयः ॥ राजतं स्याद्यदन्येषां सर्वं तदिह
कांचनम् ॥ ५ ॥ शेषं च पूर्ववत्कृत्वा होमजागरणादिकम् ॥ दद्यात्तद्वत्प्रभाते तु गुरवे रौप्यपर्वतम् ॥ ६ ॥ विष्कंभशैलानृत्विग्भ्यः पूजयेच्च विभू
षणैः ॥ इमं मंत्रं पठन्दद्याद्दर्भपाणिर्विमत्सरः ॥ ७ ॥ पितॄणां वल्लभं यस्माच्छर्मदं शंकरस्य च ॥ रजतं पाहि तस्मान्नो घोरात्संसारसागरात् ॥८॥
इत्थं निवेश्य यो दद्याद्रजताचलमुत्तमम् ॥ गवामयुतदानस्य फलं प्राप्नोति मानवः ॥ ९ ॥ सोमलोके सगंधर्वकिंनराप्सरसां गणैः ॥ पूज्यमानो
वसेद्विद्वान्यावदाभूतसंप्लवम् ॥ १० ॥ राजेश राजतगिरिं कनकोपलालीच्छन्नं प्रसन्नसलिलैः सहितं सरोभिः ॥ यच्छंति ये सुकृतिनो विरजो वि
शोकं गच्छंति ते गतमला नृप सोमलोकम् ॥११॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे रौप्याचलदानविधिवर्णनं
नाम त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥ ॥ छ ॥ श्रीकृष्ण उवाच ॥ ॥ अथातः संप्रवक्ष्यामि शर्कराचलमुत्तमम् ॥ यस्य प्रदानाद्विष्णव
र्करुद्रास्तुष्यंति सर्वदा ॥ १ ॥ अष्टभिः शर्कराभारैरुत्तमः स्यान्महाचलः ॥ चतुर्भिर्मध्यमः प्रोक्तो भाराभ्यामधमः स्मृतः ॥ २ ॥ भारेणैवार्द्ध
भारेण कुर्याद्यश्चाल्पवित्तवान् ॥ विष्कंभपर्वतान्कुर्यात्तुरीयांशेन मानवः ॥ ३ ॥ धान्यपर्वतवत्सर्वमासाद्य रससंयुतम् ॥ मेरोरुपरितस्तद्वत्स्थाप्य
हेमतरुत्रयम् ॥ ४ ॥ मंदारः पारिजातश्च तृतीयः कल्पपादपः॥एतद्वृक्षत्रयं मूर्ध्नि सर्वेष्वपि निधापयेत् ॥५॥ हरिचंदनसंतानौ पूर्वपश्चिमभागयोः ॥
निवेश्यौ सर्वशैलेषु विशेषाच्छर्कराचले ॥ ६ ॥ मंदरे कामदेवं तु कदंबस्य तले न्यसेत् ॥ जंबूवृक्षतले कार्यो गरुन्मान्गंधमादने ॥७॥ प्राङ्मुखो
हेममूर्तिश्च हंसः स्याद्विपुलाचले ॥ हेमी श्रेयोर्थिभिः कार्या सुरभिर्दक्षिणामुखी ॥ ८ ॥ धान्यपर्वतवत्सर्वमावाहनमखादिकम् ॥ कृत्वाथ गुरवे
दद्यान्मध्यमं पर्वतोत्तमम् ॥ ९ ॥ ऋत्विग्भ्यश्चतुरः शैलानिमान्मंत्रानुदीरयेत् ॥ सौभाग्यामृतसारोऽयं परमः शर्करायुतः ॥ १० ॥ यस्मादानं
दकारी त्वं भव शैलेंद्र सर्वदा ॥ अमृतं पिबतां ये तु निष्पेतुर्भुवि शीकराः ॥ ११ ॥ देवानां तत्समुत्थोऽसि पाहि नः शर्कराचल ॥ मनोभवधनु
र्मध्यादुद्भूता शर्करा यतः ॥ १२ ॥ तन्मयोऽसि महाशैल पाहि संसारसागरात् ॥ यो दद्याच्छर्कराशैलमनेन विधिना नरः ॥ १३ ॥ सर्वपाप

१ तु—इ० पा० । २ नागेश–इ० पा० । ३ शर्करादीलम्–इ० पा० । ४ पुष्पोत्तम–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विनिर्मुक्तः सं याति शिवमंदिरम् ॥ चंद्रादिसार्चिसंकाशमधिरुह्यानुजीविभिः ॥ १४ ॥ सहैव यानमातिष्ठेत्स तु विष्णुपदे दिवि ॥ ततः कल्प शतांते तु सप्तद्वीपाधिपो भवेत् ॥ १५ ॥ आयुरारोग्यसंपन्नो यावज्जन्मायुतत्रयम् ॥ भोजनं शक्तितो दद्यात्सर्वशैलेष्वमत्सरः ॥ स्वयं त्रा क्षार लवणमश्नीयात्तदनुज्ञया ॥ १६ ॥ पर्व.तोपस्करं सर्वं प्रापयेद्ब्राह्मणालयम् ॥ आसीत्पुरा ब्रह्मकल्पे धर्ममूर्तिर्नराधिपः ॥ १७ ॥ सुहृच्छक्रस्य निहता येन दैत्याः सहस्रशः ॥ सोमसूर्यादयो यस्य तेजसा विगतप्रभाः ॥ १८ ॥ भवंति शतशो येन राजानोऽपि पराजिताः ॥ यथेच्छारूप धारी च मनुष्योऽप्यपवारितः ॥ १९ ॥ तस्य भानुमती नाम भार्या त्रैलोक्यसुंदरी ॥ लक्ष्मीरिव च रूपेण निर्जितामरसुंदरी ॥ २० ॥ राज्ञस्त स्याग्रमहिषी प्राणेभ्योऽपि गरीयसी ॥ दशनारीसहस्राणां मध्ये श्रीरिव राजते ॥ २१ ॥ नृपकोटिसहस्रेण न कदाचित्प्रमुच्यते ॥ स कदाचि त्स्थानगतं पप्रच्छ स्वं पुरोहितम् ॥ २२ ॥ विस्मयाविष्टहृदयो वसिष्ठमृषिसत्तमम् ॥ भगवन्केन धर्मेण मम लक्ष्मीरनुत्तमा ॥ २३ ॥ कस्माच्च विपुलं तेजो मच्छरीरे सदोत्तमम् ॥ २४ ॥ ॥ वशिष्ठ उवाच ॥ पुरा लीलावती नाम वेश्या शिवपरायणा ॥ तया दत्तश्चतुर्दश्यां गुरवे लवणा चलः ॥ २५ ॥ हेमवृक्षामरैः सार्द्धं यथावद्विधिपूर्वकः ॥ शूद्रः सुवर्णकारस्तु नाम्ना शौंडोभवत्तदा ॥ २६ ॥ भृत्यो लीलावतीगेहे तेन हैमा विनिर्मिताः ॥ तरवोऽमरमुख्याश्च श्रद्धायुक्तेन पार्थिव ॥ २७ ॥ अतिरूपेण संपन्नान्घटयित्वा ततो हृदि ॥ धर्मकार्यमतिं ज्ञात्वा नागृहीत कथंचन ॥ २८ ॥ उज्ज्वालितास्तु तत्पत्न्या सौवर्णामरपादपाः ॥ लीलावती गृहे पार्श्वे परिचर्या च पार्थिव ॥ २९ ॥ कृतं ताभ्यां प्रहर्षेण द्विजशुश्रूषणादिकम् ॥ सा तु लीलावती वेश्या कालेन महता नृप ॥ ३० ॥ सर्वपापविनिर्मुक्ता जगाम शिवमंदिरम् ॥ योऽसौ सुवर्णकारश्च दरिद्रोऽप्यति सत्त्ववान् ॥ ३१ ॥ न मूल्यमादाद्वेश्यातः स भवानिह सांप्रतम् ॥ सप्तद्वीपपतिर्जातः सूर्यायुतसमप्रभः ॥ ३२ ॥ यया सुवर्ण रचितास्तरवो हेमदेवताः ॥ सम्यगुज्ज्वलिताः पत्नी सेयं भानुमती तव ॥ ३३ ॥ उज्ज्वालनादुज्ज्वलरूपमस्याः सुजातमस्मिन्भुवना धिपत्यम् ॥ तस्मात्कृतं तत्परिकर्म रात्रावनुद्धताभ्यां लवणाचलस्य ॥ ३४ ॥ तस्माच्चलोकेष्वपराजितस्त्वमारोग्यसौभाग्ययुता च लक्ष्मीः ॥ तस्मात्त्वमप्यत्र विधानपूर्वं धान्याचलादीन्दशधा कुरुष्व ॥ ३५ ॥ तथेति सम्पूज्य च धर्ममूर्तिं वचो वशिष्ठस्य ददौ स सर्वान् ॥ धान्या चलादीन्क्रमशः पुरारेर्लोकं जगामामरपूज्यमानः ॥ ३६ ॥ यश्चाधनः पश्यति दीयमानं मेरोः प्रदानमिह धर्मपरो मनुष्यः ॥ शृणोति

१ प्रयाति–इ० पा० । २ पुरोधसम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्त्या परयाऽप्रमादी विकल्मषः सोऽपि दिवं प्रयाति ॥ ३७ ॥ दुःस्वप्नं प्रशममुपैति पठ्यमाने शैलेन्द्रे भवभयभेदने नराणाम् ॥ यः कुर्यात्कि सु नृपपुंगवेह सम्यक्छांतात्मा हरिहरपुरमेति जंतुः ॥ ३८ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे शर्कराचलदानविधि वर्णनं नाम चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ प्रतिपत्क्रमयोगेन तिथीनां विस्तरः श्रुतः ॥ सरहस्यः समंत्रश्च प्रारंभोद्यापनैः सह ॥ १ ॥ नवग्रहमखात्सर्वं होमकर्मावधारितम् ॥ स्नानक्रमश्च विदितो विज्ञाताश्चोत्सवा मया ॥ २ ॥ दान धर्मस्त्वशेषेण श्रुतः सर्वार्थदर्शितः ॥ तडागोत्सर्जनविधिर्विदितः पादपोत्सवः ॥ ३ ॥ एवं गतं मम मनो मुह्यते मधुसूदन ॥ व्रतं कथयता कृष्ण तास्ताः संश्रित्य देवताः ॥ ४ ॥ देवानां देवकीपुत्र नानात्वं संप्रदर्शितम् ॥ तिथिक्रमान्कथयता पूजामन्त्रोधिवासनम् ॥ ५ ॥ व्यासाद्यैर्मुनिभिः सर्वैर्ध्यानयोगपरायणैः ॥ एक एवात्र निर्दिष्टो देवः सर्वगतोऽव्ययः ॥ ६ ॥ वर्णाश्रमाचारधर्मैः कस्मान्नात्र प्रदर्शितः ॥ एते महर्षयस्तुष्टाः श्रोतु कामा भवद्वचः ॥ ७ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ व्रतदानैकलेशोयं कथितस्तव पार्थिव ॥ विशेषतश्च शक्नोति वक्तुं यदि सरस्वती ॥ ८ ॥ सर्वस्तरति दुर्गाणि सर्वो भद्राणि पश्यति ॥ वर्णाश्रमाणां सामान्य इति धर्मः प्रकीर्तितः ॥ ९ ॥ कथितोऽयं व्रतत्वोहो देवानुद्दिश्य यो मया ॥ परमार्थः स एवोक्तो देवस्तमुपधारय ॥ १० ॥ यो ब्रह्मा स हरिः प्रोक्तो यो हरिः स महेश्वरः ॥ महेश्वरः स्मृतः सूर्यः सूर्यः पावक उच्यते ॥ ॥ ११ ॥ पावकः कार्तिकेयोसौ कार्तिकेयो विनायकः ॥ गौरी लक्ष्मीश्च सावित्री शक्तिभेदाः प्रकीर्तिताः ॥ १२ ॥ देवं देवीं समुद्दिश्य यः करोति व्रतं नरः ॥ न भेदस्तत्र मंतव्यः शिवशक्तिमयं जगत् ॥ १३ ॥ बहुप्रकारा वसुधा भेदाः साम्यनिलांभसाम् ॥ परमार्थतश्चिंत्यमानो न भेदः प्रतिभासते ॥ १४ ॥ कश्चिद्देवं समाश्रित्य करोति किमपि व्रतम् ॥ त्रयीधर्मानुगं पार्थ एकं तत्रापि कारणम् ॥ १५ ॥ यश्चैव ते मया ख्यातो व्रतदानविधिः परः ॥ सफलः स तु विज्ञेयः सदाचारवतां सताम् ॥ १६ ॥ आचारहीनं न पुनंति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः ॥ छंदांस्येनं मृत्युकाले त्यजंति नीडं शकुन्ता इव जातपक्षाः ॥ १७ ॥ कपालस्थं यथा तोयं श्वदृतौ वा यथा पयः ॥ दुष्टं स्यात्स्थानदोषेण वृत्तहीने तथा शुभम् ॥ १८ ॥ वृत्तं यत्नेन संरक्षेद्वित्तमेति प्रयाति च ॥ अक्षीणो वित्ततो हीनो वृत्ततस्तु हतो हतः ॥ १९ ॥ एवमाचारधर्मस्य मूलं राजन्कुलस्य च ॥ आचाराद्धि च्युतो जंतुर्नकुलीनो न धार्मिकः ॥ २० ॥ किं कुलेनोपदिष्टेन विपुलेन दुरात्मनाम् ॥ कृमयः किं न जायंते कुसु

१ पूर्वम्--इ० पा० । २ क्रमयता--इ० पा० । ३ विष्णुः--इ० पा० । ४ धर्माः सनातनाः--इ० पा० । ५ धन्तव्यः--इ० पा० । ६ वृत्ततस्तु मनोहरः--इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेषु सुगंधिषु ॥ २१ ॥ हीनजातिप्रसूतोपि शौचाचारसमन्वितः ॥ सर्वधर्मार्थकुशलः सकुलीनः सतां वरः ॥ २२ ॥ न कुलं कुलमित्याहुराचारः कुलमुच्यते ॥ आचारकुशलो राजन्निह चामुत्र नंदते ॥ २३ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ सदाचारमहं कृष्ण श्रोतुमिच्छामि शाश्वतम् ॥ सर्वधर्ममयः कोऽत्र सदाचारः प्रकीर्तितः ॥ २४ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ आचारप्रभवो धर्मः संतश्चाचारलक्षणाः ॥ साधूनां च यथा वृत्तं स सदाचार उच्यते ॥ २५ ॥ तस्मात्कुर्यादिहाचारं य इच्छेद्गतिमात्मनः ॥ अपि पापशरीरस्य आचारो हंत्यलक्षणम् ॥ २६ ॥ अदृष्टमश्रुतं वेदं पुरुषं धर्मचारिणम् ॥ स्वानि कर्माणि कुर्वाणं तं जनं कुरुते प्रियम् ॥ २७ ॥ ये नास्तिका नैष्ठिकाश्च गुरुशास्त्रातिलंघिनः ॥ अधर्मज्ञा दुराचारास्ते भवंति गतायुषः ॥ २८ ॥ सर्वलक्षणहीनोपि यः सदाचारवान्नरः ॥ श्रद्दधानोनसूयश्च सर्वान्कामानवाप्नुयात् ॥ २९ ॥ ब्राह्मे मुहूर्ते बुध्येत धर्मार्थावनुचिन्तयेत् ॥ ब्राह्मणानलगो सूर्यान्नेमेहेत कदाचन ॥ ३० ॥ उदङ्मुखो दिवारात्रावुत्सर्गं दक्षिणामुखः ॥ उत्थायाचम्य तिष्ठेत पूर्वां संध्यां समाहितः ॥ ३१ ॥ एवमेवोत्तरां संध्यां सम्मुपासीत वाग्यतः ॥ नेक्षेतादित्यमुद्यन्तं नास्तं यांतं कदाचन ॥ ३२ ॥ ऋषयो दीर्घतपसा दीर्घमायुरवाप्नुयुः ॥ उपासते येन पूर्वां द्विजाः संध्यां न पश्चिमाम् ॥ ३३ ॥ सर्वांस्तान्धार्मिको राजा शूद्रकर्मणि योजयेत् ॥ आवाधासु यथाकामं कुर्यान्मूत्रपुरीषयोः ॥ ३४ ॥ शिरसा प्रावृतेनैव समास्तीर्य तृणैर्महीम् ॥ ग्रामावसथतीर्थानां क्षेत्राणां चैव वर्त्मनि ॥ ३५ ॥ न मूत्रमधितिष्ठेत न कृष्टे न च गोव्रजे ॥ अन्तर्जलादावसथाद्वल्मीकान्मूषकस्थलात् ॥ ३६ ॥ कृतशौचावशिष्टाश्च वर्जयेत्पञ्च वै मृदः ॥ देवार्चनादिकार्याणि तथा गुर्वभिवादनम् ॥ ३७ ॥ कुर्वीत सम्यगाचम्य तद्वदन्नभुजि क्रियाम् ॥ अफेनशब्दगंधाभिरद्भिरच्छाभिरादरात् ॥ ॥ ३८ ॥ आचामेत्प्रयतः सम्यक्प्राङ्मुखो दङ्मुखोऽपि वा ॥ त्रिवर्गसाधनं यच्च सदा कार्यं विपश्चिता ॥ ३९ ॥ तत्सांनिध्ये गृहस्थस्य सिद्धिरत्र परत्र च ॥ पादेन कार्यं पारत्र्यं पादं कुर्याच्च संचये ॥ ४० ॥ अर्धेनाहारचरणनित्यनैमित्तिकांतकम् ॥ अर्थस्योपार्जने यत्नः सदा कार्यो विपश्चितैः ॥ ४१ ॥ तत्संसिद्धौ हि सिद्ध्यन्ति धर्मकामादयो नृप ॥ केशप्रसाधनादर्शदर्शनं दंतधावनम् ॥ ४२ ॥ पूर्वाह्ण एव कार्याणि देवतानां च पूजनम् ॥ दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ॥ ४३ ॥ उच्छिष्टोत्सर्जनं दूरात्सदा कार्यं हितैषिणा ॥ लोष्ठमर्दी तृणच्छेदी नखखादी च यो नरः ॥ ४४ ॥ नित्योच्छिष्टः संकरकृन्नेहायुर्विंदते महत् ॥ नग्नां परस्त्रियं नेक्षेन्नपश्येदात्मनः शकृत् ॥ ४५ ॥ उदक्यादर्शनस्पर्शं कुर्यात्संभाषणं

१ शताद्वरः–इ० पा० । २ श्रेय आत्मनः–इ० पा० । ३ अशरीरस्य धर्मस्य आचारो हंत्यलक्षणम्–इ० पा० । ४ कर्तव्यं गृहमेधिना–इ० पा० । ५ कर्मकर्मादयः–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न च ॥ नाप्सु मूत्रं पुरीषं वा मैथुनं वा समांचरेत् ॥ ४६ ॥ नाधितिष्ठेच्छकृन्मूत्रे केशभस्मकपालिकान् ॥ तुषांगारास्थिशीर्णानि रज्जुवस्त्रादिकानि च ॥ ४७ ॥ धारिणो न नमेद्विद्वान्नासनं चापि दापयेत् ॥ ब्राह्मणान्प्रणमेद्विद्वानासनं चापि दापयेत् ॥ ४८ ॥ कृतांजलिरुपासीत गच्छंतं पृष्ठतोन्वियात् ॥ न चासीतासने भिन्ने भिन्नं कांस्यं च वर्जयेत् ॥ ४९ ॥ नामुक्तकेशैर्भोक्तव्यं न नग्नः स्नानमाचरेत् ॥ स्वप्तव्यं नैव नग्नेन न चोच्छिष्टस्तु संविशेत् ॥ ५० ॥ उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः ॥ केशग्रहान्प्रहारांश्च शिरस्येतानि वर्जयेत् ॥ ५१ ॥ नान्यत्र पुत्रशिष्याभ्यां शिफया ताडनं स्मृतम् ॥ न पाणिभ्यां संहताभ्यां कंडूयेदात्मनः शिरः ॥ ५२ ॥ न चाभीक्ष्णं शिरःस्नानं कार्यं निष्कारणं नरैः ॥ अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥ ५३ ॥ न भुक्तोत्तरकालं च न गम्भीरजलाशये ॥ शिरःस्नानं तु तैलेन नांगं किंचिदुपस्पृशेत् ॥ ॥ ५४ ॥ तिलपिष्टं च नाश्नीयात्तथास्यायुर्न हीयते ॥ दुष्कृतं न गुरोर्ब्रूयात्क्रुद्धं चैनं प्रसादयेत् ॥५५॥ परीवादं न शृणुयादन्येषामपि जल्पताम् ॥ सदानुपहतस्तिष्ठेत्प्रशस्ताश्च तथौषधीः ॥ ५६ ॥ गारुडानि च रत्नानि बिभृयात्प्रयतो नरः ॥ सुस्निग्धामलकेशश्च सुगन्धिश्चारुवेषधृक् ॥५७॥ सिताः सुमनसो हृद्या बिभृयाच्च नरः सदा ॥ किंचित्परस्वं न हरेन्नाल्पमप्यप्रियं वदेत् ॥५८॥ प्रियं च नानृतं ब्रूयान्नान्यदोषानुदीरयेत् ॥ नान्याश्रितं तथा वैरं रोचयेत्पुरुषेश्वरः ॥५९॥ न दुष्टयानमारोहेत्कूलच्छायां न संश्रयेत् ॥ विद्विष्टपतितोन्मत्तबहुवैरादिसंकरैः ॥६०॥ बंधकीबंधकीभर्तृक्षुद्रानृतकथैः सह ॥ तथातिव्ययशीलैश्च परिवादरतैः शठैः ॥६१॥ बुधो मैत्रीं न कुर्वीत नैकः पंथानमाश्रयेत् ॥ नावगाहेज्जलौघस्य वेगमग्रे नरेश्वर ॥६२॥ प्रदीप्तं वेश्म न विशेन्नारोहेच्छिखरं तरोः ॥ न कुर्याच्छवं चैव शवगन्धो हि सोमजः ॥ ६३ ॥ न कुर्याद्दन्तसंघर्षं न कुर्याच्चलनासिकाम् ॥ नासंस्पृष्टमुखो ब्रूयाच्छ्वासकासौ च वर्जयेत् ॥ ६४ ॥ नोच्चैर्हसेत्सशब्दं च न मुञ्चेत्पवनं बुधः ॥ नखान्न वादयेच्छिद्यान्न नखैश्च महीं लिखेत् ॥ ॥ ६५ ॥ न श्मश्रु भक्षयेच्चैव न लोष्ठानि च मर्दयेत् ॥ पादेन नाक्रमेत्पादं न पूज्याभिमुखं नयेत् ॥६६॥ नोच्चासने समासीत गुरोरग्रे कदाचन ॥ तस्मात्सदाचारपरो भवेत्कामचरो न हि ॥ ६७ ॥ लोकद्वये शुभं प्रेप्सुः प्रेत्य स्वर्गे महीयते ॥ चतुष्पथं चैत्यतरुं श्मशानोपवनानि च ॥ ६८ ॥ दुष्टस्त्रीसंनिकर्षं च वर्जयेन्निशि सर्वदा ॥ ग्रीष्मवर्षासु चच्छत्री मौनी रात्रौ वनेषु च ॥ ६९ ॥ केशास्थिकण्टकामेध्यबलिभस्मतुषांस्तथा ॥ स्नानार्द्रां धरणीं चैव दूरतः परिवर्जयेत् ॥७०॥ पंथा देयो ब्राह्मणेभ्यो राजभ्यः स्त्रीभ्य एव च ॥ विद्याधिकस्य गुर्विण्या भारार्तस्य महीयसः ॥७१॥

१ समारभेत्–इ० पा० । २ न संहताभ्यां हस्ताभ्यां कंडूयादात्मनः शिरः–इ० पा० । ३ सनादं च–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मूकांधबधिराणां च मत्तस्योन्मत्तकस्य च ॥ उपानद्वस्त्रमाल्यं च धृतमन्यैर्न धारयेत् ॥ ७२ ॥ न हीदृशमनायुष्यं लोके किञ्चन विद्यते ॥ यादृशं पुरुषस्येह परदारोपसेवनम् ॥७३॥ न चेर्ष्या स्त्रीषु कर्तव्या दारा रक्ष्याः प्रयत्नतः ॥ अनायुष्या भवेदीर्ष्या तस्मात्तां परिवर्जयेत् ॥ ७४ ॥ मूर्खोन्मत्तव्यसनिनो विरूपान्मानिनस्तथा ॥ हीनांगानधिकांगांश्च विद्याहीनांश्च नाक्षिपेत् ॥ ७५ ॥ पानीयस्य क्रिया नक्तं तथैव दधिसक्तवः ॥ वर्जनीया महाराज निशीथे भोजनक्रियाः ॥ ७६ ॥ नोर्ध्वजानुश्चिरं तिष्ठेन्न रहस्यपरो भवेत् ॥ तद्वन्नोपविशेत्प्राज्ञः पादेनाक्रम्य वासनम् ॥७७॥ न चातिरक्तवासाः स्याच्चित्रासितधरोऽपि वा ॥ न च कुर्याद्विपर्यासं वाससो न विभूषणे ॥ ७८ ॥ स्त्रीं कृशां नावजानीयाद्दीर्घमायुर्जिजीविषुः ॥ ब्राह्मणं क्षत्रियं सर्वं सर्वे ह्याशीविषोपमाः ॥७९॥ हन्यादाशीविषः क्रुद्धो यावत्स्पृशति दंष्ट्रया ॥ क्षत्रियोऽपि दहेत्क्रुद्धो यावत्पश्यति तेजसा॥८०॥ ब्राह्मणः सकुलं हन्याद्ध्याने नावेक्षितेन च ॥ नातिकल्यं नातिसायं न च मध्यं दिने तथा॥८१॥ नाज्ञातैः सह गंतव्यं नैकेन बहुभिः सह ॥ नारुंतुदः स्यान्न परोक्षवादी न सही नतः ॥ ८२ ॥ रोहते चाग्निना दग्धं वनं परशुना हतम् ॥ वचो दुरुक्तबीभत्सं न संरोहति चाशतम् ॥ ८३ ॥ नास्तिक्यं वेदनिंदां च देवतानां च कुत्सनम् ॥ द्वेषस्तंभादिमानस्य क्लैब्यं च परिवर्जयेत् ॥ ८४ ॥ न ब्राह्मणं परिवदेन्न नक्षत्राणि दर्शयेत् ॥ तिथिं पक्षस्य न ब्रूयाद्यथास्यायुर्न रिष्यते ॥ ८५ ॥ तेजो निष्ठीव्य वासश्च परिधायाचमेद्बुधः ॥ जितामित्रो नृपो यश्च बलवान्कर्मतत्परः ॥८६॥ तत्र नित्यं वसेत्प्राज्ञः कृतकृत्यः पतौ सुखम् ॥ पौराः सुसंहता यत्र सततन्यायवर्तिनः ॥ ८७ ॥ यत्र स्त्रियोऽमत्सारिण्यस्तत्र वासः सुखोदयः ॥ यस्मिन्कृषीवला राष्ट्रे प्रायशो नातिभाषिणः ॥ ८८ ॥ यत्रौषधान्यशेषाणि वसेत्तत्र विचक्षणः ॥ तत्र राजन्न वस्तव्यं यत्रैतत्त्रितयं सदा ॥ ८९ ॥ जिगीषुः पूर्ववैरं च जनश्च विरतोत्सवः ॥ तत्र राजन्न वस्तव्यं यत्र नास्ति चतुष्टयम् ॥ ९० ॥ ऋणप्रदाता वैद्यश्च श्रोत्रियः सजला नदी ॥ अवलोक्यो न चादर्शो मलिनो बुद्धिमत्तरैः ॥ ९१ ॥ न च रात्रौ महाराज दीर्घराज्यमभीप्सता ॥ हेमकारगृहे चान्नमश्नीयान्न च विश्वसेत्॥ ९२ ॥ न च मित्रं प्रकुर्वीत हेमकारं कदाचन ॥ भिन्नभांडं च खट्वां च कुक्कुरं कुक्कुटं तथा ॥९३॥ अप्रशस्तानि चत्वारि ये च वृक्षाः सकंटकाः ॥ भिन्नभांडे कलिः प्रायः खट्वायां चेह निश्चयः ॥ ९४ ॥ नाश्नंति पितरस्तस्य यत्र कुक्कुरकुक्कुटौ ॥ वृक्षमूले पिशाचानां सर्वेषामेव संस्थितिः ॥ ९५ ॥ अतस्तेषां तले भुंजन्नश्नुते पूयशोणितम् ॥ असंस्कृतान्नभुङ्मूत्रं बालादिप्रभवं स्वयम् ॥ ९६ ॥ सुवासिनीं गुर्विणीं च वृद्धां बालातुरांस्तथा ॥ भोजयेत्संस्कृतान्नेन प्रथमं चरमं गृही ॥ ९७ ॥ अघं स केवलं भुंक्ते बद्धगोवाहनादिकम् ॥ ·यो भुंक्ते च वहिर्ज्येष्ठप्रेक्षतामप्रदाय च ॥ ९८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैश्वदेवं ततः कुर्याद्यावदाहुतयः क्रमात् ॥ प्रथमां ब्रह्मणे दद्यात्प्रजानां पतये ततः ॥ ९९ ॥ तृतीयां चैव गुह्येभ्यः कश्यपाय तथा पराम् ॥ तत
श्चानुमते दद्याद्दत्त्वा गृहबलिं ततः ॥ १०० ॥ पूर्वाख्यातं मया यत्ते नित्यकर्मक्रियाविधौ ॥ दद्यादथ धरित्रीणां दद्यात्तु मणिकत्रयम् ॥ १०१ ॥
प्राच्यादिक्रमयोगेन इंद्रादीनां बलिं क्षिपेत् ॥ ब्रह्मणे चान्तरिक्षाय सूर्याय च यथाक्रमम् ॥१०२॥ विश्वेभ्यश्चैवदेवेभ्यो विश्वभूतेभ्य एव च ॥ कृत्वा
पसव्यं वायव्यं यक्ष्मैतत्ते निवेदयेत् ॥१०३॥ ततश्चाग्रं समुद्धृत्य हंतकारोकपलिपतम् ॥ यथाविधि यथान्यायं ब्राह्मणायोपपादयेत् ॥१०४॥ दत्त्वा
विधिभ्यो देवेभ्यो गुरुभ्यः सुश्रुताय च ॥ पुण्यगंधांबरधरो माल्यधारी नरेश्वर ॥ १०५ ॥ नैकवस्त्रधरोऽश्नीयान्नार्द्रपादो महीपते ॥ विशुद्धव
दनः प्रीतो भुंजीत न विदिङ्मुखः ॥ १०६ ॥ प्राङ्मुखोदङ्मुखो वापि न चैवान्यमना नरः ॥ कुत्सितेन हतं चैव जुगुप्सावदसंस्कृतम् ॥१०७॥
दत्त्वा तु भुंक्ते शिष्टेभ्यःक्षुधितेभ्यस्तथा गृही ॥ प्रशस्तशुद्धपात्रेषु भुञ्जीताकुपितो नृप ॥ १०८ ॥ नासंदीसंस्थिते पात्रे नादेशे च नरेश्वर ॥ ना
काले नातिसंकीर्णे दत्त्वाग्रं च नरो मही ॥ १०९ ॥ अश्नीयात्तन्मयो भूत्वा पूर्वं तु मधुरं रसम् ॥ लवणोम्लौततः पश्चात्कटुतीक्ष्णादिकं ततः ॥
॥ ११० ॥ मार्दवं पुरुषोश्नन्वै मध्ये च कठिनाशनम् ॥ अंते पुनर्द्रवाशी च नरो रोगेण मुच्यते ॥१११॥ दिवाधानासु वसति रात्रौ च दधिस
क्तुषु ॥ अलक्ष्मीः कोविदारेषु सर्वदेव कृतालया ॥ ११२ ॥ अनिंद्यं भक्षयेन्नित्यं वाग्यतोऽन्नमकुत्सयन् ॥ भुक्त्वा सम्यग्यथाचम्य प्राङ्मुखोदङ्
मुखोऽपि वा ॥ ११३ ॥ यथावत्पुनराचामेत्पाणी प्रक्षाल्य यत्नतः ॥ अभीष्टदेवतानां च कुर्वीत स्मरणं नरः ॥ ११४ ॥ प्राणापानसमानानामुदा
नव्यानयोस्तथा ॥ अन्नं पुष्टिकरं चास्तु ममाद्याव्याहतं सुखम् ॥ ११५ ॥ अगस्तिरग्निर्वडवानलश्च भुक्तं प्रपान्नं जरयत्वशेषम् ॥ सुखं च मे तत्प
रिणामसंभवं यच्छत्वरोगं खलु वासुदेवः ॥ ११६ ॥ इत्युच्चार्य स्वहस्तेन परिमार्ज्य तथोदरम् ॥ अनायासप्रदायीति कुर्यात्कर्माण्यतंद्रितः॥११७॥
संध्यायां पथिकः कश्चित्समागच्छति भारत ॥ पादशौचासनैः प्रह्वः स्वागतोक्त्या च पूजयेत् ॥ ११८ ॥ ततश्चान्नप्रदानेन शयनेन च पार्थिव ॥
दिवा तिथौ च विमुखो यदेकं पातकं भवेत् ॥११९॥ तदेवाष्टगुणं पुंसां सूर्ये हंसमुखे गते ॥ गच्छेच्छय्यामस्फुटितामपि दारुमयीं नृप ॥ १२० ॥
नाविशालां न वा भग्नां नासमां मलिनां न च ॥ न च जंतुमयीं शय्यां समातिष्ठेदनापदि ॥ १२१ ॥ प्राच्यां दिशि शिरः शस्तं याम्यायामपि
भूपते ॥ सदैव स्वपतां पुंसां विपरीतं तु रोगदम् ॥ १२२ ॥ ऋतावुपगमः शस्तः सपत्न्यां ह्यवनीपते ॥ पुण्यर्क्षे च शुभे काले पुत्रा युग्मासु रात्रिषु
॥ १२३ ॥ न चास्नातां स्त्रियं गच्छेद्गर्भिणीं न रजस्वलाम् ॥ नानिष्टां वै न कुपितां नाशस्तां न च रोगिणीम् ॥ १२४ ॥ नादक्षिणां नान्यकामां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाकामां नान्ययोषितम् ॥ सुक्षामामत्यभुक्तां च स्वयं चैभिर्गुणैर्युतः ॥१२५॥ स्नातः सुगन्धधृग्धृष्टो न श्रांतः क्षुधितोऽपि वा ॥ सकामः सानु रागश्च व्यवायं पुरुषो व्रजेत् ॥ १२६ ॥ चतुर्दश्यां तथाष्टम्यां पंचदश्यां च पर्वसु ॥ तैलाभ्यंगं तथा भोगान्योषितश्च विवर्जयेत् ॥ १२७ ॥ क्षुर कर्मणि चांते च स्त्रीसंभोगे च भारत ॥ स्नायीत चैलवान्प्रातः कटभूमिसुपेत्य च ॥ १२८ ॥ गुरोः पतिव्रतानां च तथा यज्ञतपस्विनाम् ॥ परि वादं न कुर्वीत परिहासेऽपि भारत ॥ १२९ ॥ युगपज्जलमग्निं च बिभृयान्न विचक्षणः ॥ गुरुं देवान्प्रति तथा न च पादौ प्रसारयेत् ॥ १३० ॥ नाचक्षीत धयंतीं गां जलं नांजलिना पिबेत् ॥ वातातपौ न सेवेत अनुतापं च वर्जयेत् ॥१३१॥ दासं शपेन्न वै क्रुद्धः सर्वबन्धूनमत्सरी ॥ भीता श्वासनकृत्साधुः स्वर्गस्तस्याव्ययं फलम् ॥ १३२ ॥ नोर्ध्वं तु पत्तनद्वारं निरीक्ष्य पर्यटेन्नरः॥ युगमात्रं महीपृष्ठे नरो गच्छेद्विलोकयन् ॥ १३३ ॥ शेषाहे त्वपि शेषांश्च वश्यात्मा यो निरस्यति ॥ तस्य धर्मार्थकामानां हानिर्नाल्पापि जायते ॥ १३४ ॥ वृथा मांसं न खादेत पृष्ठमांसं तथैव च ॥ आक्रोशं च विवादं च पैशुन्यं च विवर्जयेत् ॥ १३५ ॥ संयावं कृशरं मांसं शष्कुलीपायसं तथा ॥ आत्मार्थे न प्रकर्तव्यं देवतानां प्रकल्पयेत् ॥ ॥ १३६ ॥ अजाश्च नावकर्षेत ता बहिर्धारयंति च ॥ रक्तमाल्यं न धार्यं स्याच्छुक्लं धार्यं तु पंडितैः ॥ १३७ ॥ वर्जयित्वात्र कमलं तथा कुव लयं विभो ॥ रक्तं शिरसि धार्यं च तथा पानेयमित्यपि ॥ १३८ ॥ कांचनीयापि या माला सा न दुष्यति कर्हिचित् ॥ अन्यदेव भवेद्वासः शय नीये नरोत्तम ॥ १३९ ॥ अन्यदर्चासु देवानामन्यद्धार्यं सभासु च ॥ पिप्पलं च वटं चैव शीर्णश्लेष्मांतकं तथा ॥ १४० ॥ उदुंबरं न खादेत भवार्थी पुरुषोत्तमः ॥ पतितैश्च कथांते च च्छेदनं च विवर्जयेत् ॥ १४१ ॥ पतितः स्यान्नरो राजन्पतितैस्तु सहाचरन् ॥ वृद्धो ज्ञातिस्तथा मित्रं दरिद्रो यो भवेदिह ॥ १४२ ॥ गृहे वा संस्थापितास्ते गृहवृद्धिमभीप्सता ॥ गृहे पारावता धन्याः शुकाश्च सहसारिकाः॥ १४३ ॥ भवंत्येते तथा पापास्तथा वै तिलपायिकाः ॥ आजोक्षा चंदनं वीणा आदर्शो मधुसर्पिषी ॥ १४४ ॥ जलाग्नी चैव बिभृयाद्गृहे नित्यमिति स्थितिः॥ धनुर्वेदे च सततं यत्नः कार्यो नराधिप ॥ १४५ ॥ हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव हि ॥ यत्नवान्भव राजेन्द्र नयवान्सुखमेधते ॥ १४६ ॥ प्रजापालन युक्तश्च न क्षांतिं लभते नृप ॥ यज्ञशास्त्रं च विज्ञाय शब्दशास्त्रं च भारत ॥ १४७ ॥ गांधर्वशास्त्रं विज्ञेयं कला ज्ञेयाश्च भारत ॥ पुराणमिति हासं च तथाख्यानानि यानि च ॥ १४८ ॥ एष ते लक्षणोद्देश आचारस्य प्रकीर्तितः ॥ शेषाश्च वेद्या वृद्धेभ्यः प्रत्याहार्या नराधिप ॥ १४९ ॥



१ कष्टभूमिम्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आचारो भूतिजनन आचारः कीर्तिवर्धनः ॥ आचाराद्वर्धते ह्यायुराचारो हंत्यलक्षणम् ॥ १५० ॥ आगमानां हि सर्वेषामाचारः श्रेष्ठ उच्यते ॥ आचारः परमो धर्म आचाराद्वर्धते धनम् ॥ १५१ ॥ पुण्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ॥ सर्ववर्णानुकंपार्थं मयैतत्समुदाहृतम् ॥ ॥ १५२ ॥ आचार एव नरपुंगव सेव्यमानो धर्मार्थकामफलदो भवतीह पुंसाम् ॥ तस्मात्सदैव विदुषावहितेन राजञ्छास्त्रोदितो ह्यनुदिनं परिपालनीयः ॥ १५३ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे सदाचारधर्मवर्णनं नाम पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ दीर्घायुरारोग्यकुलादिवृद्धियुक्तः पुमान्येन गुणान्वितः स्यात् ॥ मुहुर्मुहुर्जन्मनि येन सम्यग्व्रतं मम ब्रूहि तदिंदुमौलेः ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ ॥ त्वया पृष्टमिदं सम्यगमुत्राक्षयकारकम् ॥ रहस्यं ते प्रवक्ष्यामि यत्पुराणविदो विदुः ॥ २ ॥ रोहिणीचन्द्रशयनं नाम व्रतमिहोत्तमम् ॥ तस्मिन्नारायणस्यार्चामर्चयेदिंदुनामभिः ॥ ३ ॥ यदा सोमदिनयुक्ता भवेत्पंचदशी क्वचित् ॥ अथ वा ब्रह्मनक्षत्रं पौर्णमास्यां प्रजायते ॥ ४ ॥ तदा स्नानं नरः कुर्यात्पंचगव्यं च सर्षपैः ॥ आप्यायस्वेति च जपेद्विद्वानष्टशतं पुनः ॥ ॥ ५ ॥ शूद्रोऽपि परया भक्त्या पाखंडालापवर्जितः ॥ सोमाय वरदायाथ विष्णवे च नमोनमः ॥ ६ ॥ कृतजप्यः स्वभवनमागत्य मधुसूदनम् ॥ पूजयेत्फलपुष्पैश्च सोमनामानि कीर्तयेत् ॥ ७ ॥ सोमाय शांताय नमोऽस्तु पादावनंतनाम्ने ह्यनुजानु जंघे ॥ ऊरुद्वयं चापि वृकोदराय संपूजयेन्मेढ्रमनंगवाहवे ॥ ८ ॥ नमोनमः कामसुखप्रदाय कटिः शशांकस्य समर्चनीया ॥ तथोदरं चाप्यमृतोदराय नाभिः सुपूज्या विधिलोचनाय ॥ ९ ॥ नमोऽस्तु चन्द्राय मुखं प्रपूज्य हस्तौ द्विजानामधिपाय पूज्या ॥ आस्यं नमश्चंद्रमसेभिपूज्यमोष्ठौ कुमुत्खंडवनप्रियाय ॥ १० ॥ नासा च नाथाय वनौषधीनां ह्यानंन्ददायाथ पुनर्भ्रुवोश्च ॥ नेत्रद्वयं नीलकुमुत्प्रियाय चेंदीवरश्यामकराय चोरः ॥ ११ ॥ नमः समस्ताध्वरवंदिताय कर्णद्वयं दैत्यनिषूदनाय ॥ ललाटमिंदोरुदधिप्रियाय केशाः सुषुम्णाधिपतेः प्रपूज्याः ॥ १२ ॥ शिरः शशांकाय नमोऽसुरारेर्विश्वेश्वरायेति नमः किरीटम् ॥ पद्मप्रिये रोहिणि नाम लक्ष्मि सौभाग्यसौख्यामृततारकाये ॥ १३ ॥ देवीं च संपूज्य सुगन्धधूपैर्नैवेद्यपुष्पादिभिरिंदुपत्नीम्॥प्रपूज्य भूमौ पुनरुत्थितेन स्नात्वा च विप्राय हविष्ययुक्तः ॥१४॥ देयः प्रभाते स हिरण्यवारिकुंभो मनःपापविनाशनाय॥ संप्राश्य गोमूत्रममांसमन्नमक्षारमष्टावथ विंशतिं च ॥ १५ ॥ ग्रासान्पयः सर्पिषुतानुपोष्य भुक्त्वेतिहासं शृणुयान्मुहूर्तम् ॥ कदंबनीलोत्पलकेतकानि जातीसरोजं शतपत्रिका च ॥१६॥ अम्लानकुब्जानथ सिंदुवारपुष्पं पुनर्नारद मल्लिकायाः॥शुक्लं च विष्णोः करवीरपुष्पं श्रीचंपकं चंद्रमसश्च देयम्॥१७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रावणादिषु मासेषु क्रमादेतानि सर्वदा ॥ यस्मिन्मासे व्रतादिः स्यात्पुष्पैरभ्यर्चयेद्धरिम् ॥ १८ ॥ एकसंवत्सरं यावदुपोष्य विधिवन्नरः ॥ व्रतांते शयनं दद्यादर्पणोपस्करान्वितम् ॥ १९ ॥ रोहिणीचंद्रमिथुनं कारयित्वा तु कांचनम् ॥ चंद्रः षडंगुलः कार्यो रोहिणी चतुरंगुला ॥ २० ॥ मुक्ताफलाष्टकयुतं सितनेत्रपटावृतम् ॥ क्षीरकुंभोपरि पुनः कांस्यपात्राक्षतान्वितम् ॥ २१ ॥ दद्यान्मंत्रेण पूर्वाह्णे शालीक्षुफलसंयुतम् ॥ श्वेतामथ सुवर्णास्यां रौप्यखुरसमन्विताम् ॥ २२ ॥ सवस्त्रभाजनां धेनुं तथा शंखं च शोभनम् ॥ भूषणैर्द्विजदांपत्यमलंकृत्य गुणान्वितम् ॥ २३ ॥ चंद्रोऽयं द्विजरूपेण सभार्य इति कल्पयेत् ॥ यथा न रोहिणी कृष्ण शयनं त्यज्य गच्छति ॥ २४ ॥ सोमरूपस्य ते तद्वन्ममाभेदोऽस्तु मूर्तिभिः ॥ यथा त्वमेव सर्वेषां परमानंदमुक्तिदः ॥ २५ ॥ भुक्तिर्मुक्तिस्तथा भक्तिस्त्वयि यज्ञेऽस्तु मे दृढा ॥ इति संसारभीतस्य मुक्तिकामस्य चानघ ॥ २६ ॥ रूपारोग्यायुपामेतद्विधायकमनुत्तमम् ॥ इदमेव पितॄणां च सर्वदा वल्लभं मुने ॥ २७ ॥ त्रैलोक्याधिपतिर्भूत्वा शतकल्पशतत्रयम् ॥ चंद्रलोकमवाप्नोति पुनरावृत्तिदुर्लभम् ॥ २८ ॥ नारी वा रोहिणी चंद्रशयनं वा समाचरेत् ॥ साऽपि तत्फलमाप्नोति पुनरावृत्तिदुर्लभम् ॥ २९ ॥ इति पठति शृणोति वा य इत्थं मधुमथनार्चनमिंदुकीर्तनेन ॥ मतिमपि च ददाति सोऽपि शौरेर्भवनगतः परिपूज्यतेऽमरौघैः ॥ ३० ॥ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे नारदमहेश्वरसंवादे रोहिणीचंद्रशयनव्रतविधिवर्णनं नाम षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥ छ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ व्रतं दानमथो राजंस्तव धर्माः प्रकाशिताः ॥ धर्ममूलं यतश्चेदं तस्माद्धर्मपरो भव ॥ १ ॥ जानताऽपि मया पार्थ कामार्थौ न प्रकाशितौ ॥ यतः स्वयं प्रवृत्तोत्र लोकः किमनुवर्ण्यते ॥ २ ॥ कामिनो वर्णयन्कामाँल्लोभं लुब्धस्य वर्णयन् ॥ नरः किं फलमाप्नोति कूपेऽधमिव पातयन् ॥ ३ ॥ भविष्योत्तरमेतत्ते कथितं पांडुनंदन ॥ सदाचारवतां पुंसां व्रतदानसमुच्चयः ॥४॥ यद्दृष्टमितिहासेषु पुराणेषु च भारत ॥ वेदवेदांगसंबद्धं तत्सर्वमिह दर्शितम् ॥५॥ लोकवेदविरुद्धं यत्कथ्यते मनुजोत्तम ॥ न तत्रास्था प्रकर्तव्या विप्रलापो हि स स्मृतः ॥ ६ ॥ अतिस्नेहेन भवतो ममैतत्संमुदाहृतम् ॥ ऋषीणां पुरतः पार्थ कुंठा भवति भारती ॥ ७ ॥ नैतत्प्रकाशनीयं हि दांभिकाय शठाय वा ॥ नास्तिकायान्यमनसे कुतर्कोपहताय च ॥ ८ ॥ साधु वृत्ताय दांताय सत्यार्जवरताय च ॥ एतदाख्यायमानं हि शुभांमुत्पादयेद्रतिम् ॥९॥ सामान्यमेतत्सुरसत्तमानां वर्णाश्रमाणां च नरेंद्रचन्द्र ॥ ख्यातं भविष्योत्तरनामधेयं मया पुराणं तव सौहृदेन ॥१०॥

१ वंद्य–इ० पा० । २ मया विनार्थं तत्रैव–इ० पा० । ३ वेदवेदांतसंबद्धम्–इ० पा० । ४ संप्रदार्शितम्–इ० पा० । ५ कुकर्मविहिताय च–इ० पा० । ६ परामुत्पादयेद्रतिम्–इ० पा० ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मः स्वयं पार्थ भवानिह त्वं धर्मार्थविद्दृष्टपरावरश्च ॥ पृष्टोऽस्म्यतो यममह च वच्मि श्रद्धेयमेतत्सुतरां जनस्य ॥ ११ ॥ यास्याम्यहं द्वारवतीं पुनश्च यज्ञं समेष्यामि महोत्सवे च ॥ कालस्य सव हि वशे विदित्वा नैवानुतापो भवतात्र कार्यः ॥ १२ ॥ इत्युक्तवान्यातुकामः प्रहृष्टः संपूजितः पांडुसुतैर्महात्मा ॥ पृष्ट्वा सुहृज्ज्ञातिजनं हि सर्वं जगाम विप्रान्प्रणिपत्य कृष्णः ॥ १३ ॥ यद्याज्ञवल्क्यमुनिना भगवान्वशिष्ठः पृष्टः किलोत्तरमुवाच बहुप्रकारम् ॥ कृष्णेन पांडुतनयस्य च यत्प्रदिष्टं व्यासेन तत्कृतमहो मुनिपुंगवेन ॥ १४ ॥ जयति पराशरसूनुः सत्यवतीहृदयनंदनो व्यासः ॥ यस्यास्यकमलगलित वाङ्मधुपुण्यं जगत्पिबति ॥१५॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे समाप्तिवर्णनं श्रीकृष्णस्य द्वारकां प्रति गमनवर्णनं नाम सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥ ॥ ॥ छ ॥ ॥ ( अथ वृत्तांताः ॥ ) व्यासानुगमनं पूर्वं ब्रह्मांडस्य समुद्भवः ॥ माया च वैष्णवी यस्मात्संसारे दोपकीर्तनम् ॥ १ ॥ पापभेदस्ततस्तस्माच्छुभाशुभविनिर्णयः ॥ शंकटव्रतमाहात्म्यं तिलकव्रतकीर्तनम ॥ २ ॥ अशोककरवीराख्यं व्रतं तस्माच्च कोकिलम् ॥ बृहत्तपोव्रतं नाम रुद्रोपोषणमेव च ॥ ३ ॥ द्वितीयाव्रतमाहात्म्यमशून्यशयनं तथा ॥ कामाख्या तु तृतीया च मेघपालीव्रतं तथा ॥ ४ ॥ पंचाग्निसाधना रम्या तृतीयाव्रतमुत्तमम् ॥ त्रिरात्रं गोष्पदं नाम हरकालीव्रतं तथा ॥ ५ ॥ ललिताख्या तृतीया च योगाख्या च तथापरा ॥ उमामहेश्वरं नाम तथा रंभातृतीयकम् ॥ ६ ॥ सौभाग्याख्या तृतीया च आर्द्रानंदकरी तथा ॥ चैत्रे भाद्रपदे माघे तृतीयाव्रतमुच्यते ॥ ७ ॥ अनंतरी तृतीया च गणशांतिव्रतं तथा ॥ सारस्वतव्रतं नाम पंचमीव्रतमुच्यते ॥ ८ ॥ तथा श्रीपंचमी नाम षष्ठी शोकप्रणाशिनी ॥ फलषष्ठी च मंदारषष्ठीव्रतमथोच्यते ॥ ९ ॥ ललिताव्रतषष्ठी च षष्ठी कार्तिकसंज्ञिता ॥ महत्तपः सप्तमी च विभूपा सप्तमी तथा ॥ १० ॥ आदित्यमंडपविधिस्त्रयोदशीति सप्तमी ॥ कुक्कवाकुप्लवङ्गा च तथैवाभयसप्तमी ॥ ११ ॥ कल्याणसप्तमी नाम शर्करासप्तमीव्रतम् ॥ सप्तमी कमलाख्या च तथान्या शुभसप्तमी ॥ १२ ॥ स्नपनव्रतसप्तम्यौ तथैवाचलसप्तमी ॥ बुधाष्टमीव्रतं नाम तथा जन्माष्टमीव्रतम् ॥ १३ ॥ दूर्वाकृष्णाष्टमी प्रोक्ता अनघाव्रतमष्टमी ॥ अष्टम्यर्काष्टमी चाथ श्रीवृक्षनवमीव्रतम् ॥ ॥ १४ ॥ ध्वजाख्या नवमी चैव उल्काख्या नवमी तथा ॥ दशावतारव्रतकं तथाशादशमीव्रतम् ॥ १५ ॥ रोहिणींद्रहरिशंभुब्रह्मसूर्यावियोगकम् ॥

१ भविष्यम्–इ० पा० । २ अथवृत्तान्ताः–इति–पुस्तकद्वये पाठः । ३ शंकटव्रतमाहात्म्यम्–इ० पा० । ४ अनंगं शयनं तथा–इ० पा० । ५ मेघपाली व्रतं तथा–इ० पा० । ६ [illegible]–इ० पा० । ७ कल्याणसप्तमी–इ० पा० । ८ नामल्याख्या च–इ० पा० । ९ अनघाव्रतम्–इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गो॑त्सद्वादशी नाम व्रतमुक्तं ततः परम् ॥ १६ ॥ नीराजनद्वादशी च भीष्मपंचकमेव च ॥ मल्लिकाख्या द्वादशी च भीमा द्वादशिकोत्तमा ॥ ॥ १७ ॥ श्रवणद्वादशी नाम संप्राप्तिद्वादशीव्रतम् ॥ गोविन्दद्वादशी नाम व्रतमुक्तं ततः परम् ॥१८॥ अखंडद्वादशी नाम तिलद्वादश्यतः परम् ॥ सुकृतद्वादशी नाम धरणीव्रतमेव च ॥ १९ ॥ विशोकद्वादशी नाम विभूतिद्वादशीव्रतम् ॥ पुष्यर्क्षद्वादशी चैव द्वादशी श्रवणर्क्षगा ॥ २० ॥ अनंगद्वादशी चैव अङ्कपादव्रतं तथा ॥ निम्बार्ककरवीराथ यमा दर्शत्रयोदशी ॥ अनंगद्वादशी चापि पालिरम्भाव्रते तथा ॥ २१ ॥ चतुर्दशीव्रतं प्रोक्तं ततोऽनन्तचतुर्दशी ॥ श्रावणीव्रतनक्तं च चतुर्दश्यष्टमीदिने ॥ २२ ॥ व्रतं शिवचतुर्दश्यां फलत्यागचतुर्दशी ॥ वैशाखी कार्तिकी माघीव्रत मेतदनंतरन् ॥ २३ ॥ कार्तिक्यां कृत्तिकायोगे कृत्तिकाव्रतमीरितम् ॥ फाल्गुने पूर्णिमायां तु व्रतं पूर्णमनोरथम् ॥ २४ ॥ अशोकपूर्णिमा नाम अनंतव्रतमेव च ॥ व्रतं हि सांभरायिण्यं नक्षत्रपुरुषव्रतम् ॥ २५ ॥ शिवनक्षत्रपुरुषं संपूर्णं येन मुच्यते ॥ कामदानव्रतं नाम वृन्ताकविधिरेव च ॥ २६ ॥ आदित्यस्य दिने नक्तं संक्रात्युद्यापने फलम् ॥ भद्राव्रतमगस्त्यार्घो नवचन्द्रार्कमेव च ॥ २७ ॥ अर्घः शुक्रबृहस्पत्योः पंचाशीति व्रतानि च ॥ माघस्नानं नित्यस्नानं रुद्रस्नानविधिस्तथा ॥ २८ ॥ चंद्रार्कग्रहणे स्नानं विधिश्चान्नाशने तथा ॥ वापीकूपतडागानामुत्सर्गो वृक्षयाजनम् ॥ २९ ॥ देवपूजादीपदानवृषोत्सर्गविधिस्तथा ॥ फाल्गुन्युत्सवकं नाम तथान्यः सदनोत्सवः ॥ ३० ॥ भूतमाता च श्रावण्यां रक्षा बंधविधिस्तथा ॥ विधिस्तथा नवम्यास्तु तथा चन्द्रमहोत्सवः ॥ ३१ ॥ दीपालिकायां तु होमो लक्षहोमविधिस्तथा ॥ कोटिहोमो महाशीतिर्ग णनाथस्य शांतिका ॥ ३२ ॥ तथा नक्षत्रहोमोथ गोदानविधिरेव च ॥ गुडधेनुघृतधेनुतिलधेनुव्रतं तथा ॥ ३३ ॥ जलधेनुविधिः प्रोक्तो लवण स्य तथा परा ॥ धेनुः कार्या समं ज्ञात्वा नवनीतस्य चापरा ॥ सुवर्णधेनुश्च तथा देवकार्यं चिकीर्षुभिः ॥ ३४ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे संक्षिप्तानुक्रमणिकाकथनं नामाष्टोत्तरद्विशततमोऽध्यायः ॥ २०८ ॥ ॥ छ ॥ ॥ ॥

इति चतुर्थमुत्तरपर्व ॥ ४ ॥

## समाप्तोऽयं भविष्यपुराणग्रन्थः ।



१ श्रावणीव्रतनक्तं च-इ० पा० । २ भद्राव्रतम्-इ० पा० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणालये मुद्रितम् ।

संवत् १९६७ शके १८३२.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सानन्दं धन्यवादः ।

अद्य वयं सानन्दं कृतज्ञतया तेभ्यो महाशयेभ्यो धन्यवादानाशास्महे, यैः परमोदारचरित्रैः स्वसंगृहीतप्राचीनपुस्तकालयेभ्य एतस्य श्रीमद्भविष्यमहापुराणस्य प्रतिपुस्तकानि मुद्रणार्थं साहाय्यकरणाय संप्रेषितानि । तेषां प्राचीनहस्तलिखितपुस्तकानां साहाय्येनास्माभिः श्रीमद्भविष्यपुराणं शोधयित्वा स्वकीये "श्रीवेंकटेश्वर" मुद्रणालये मुद्रयित्वा सकलविद्वज्जनानां पुरतः प्रकाशितम् । स एष तेषां महाशयानामेव महानुपकार इति यावन्तस्तेषामुपकाराः स्मर्तव्यास्ते तदीयोपकरणतो न्यूना एवेति ताञ्जगदुपकारकान्मन्यामहे । अथ येषां प्राचीनपुस्तकालयादस्य पुराणस्यादर्शपुस्तकानि लब्धानि तेषां नामान्यत्र प्रस्तूयन्ते—

१ श्रीमन्तमहाराजभोरसंस्थानाधीश्वराणां पंतसचिवशंकरायाभिधानां पुस्तकालयादेकं पुस्तकं समागतम्.

२ बन्हाणपुरनिवासिवेदशास्त्रसंपन्नगोपालकृष्णशास्त्रिसंवत्सरेत्येतेषां सकाशादेकं पुस्तकं समागतम्.

३ मुम्बईस्थश्रीमद्वल्लभसंप्रदायाचार्यवर्यगोस्वामि 'श्रीविट्ठलेशमहाराजतनयश्रीपुरुषोत्तमलाल'महाराजानां पुस्तकालयादेकं पुस्तकं समागतम्.

४ औरंगाबादनगरनिवासिनां बृहज्ज्योतिषार्णवकर्तॄणां पण्डितवर्याणां 'श्रीहरिकृष्णवेंकटराम' इत्येतेषां पुस्तकालयादेकं पुस्तकं समागतम्.

५ नाशिकक्षेत्रस्थानां टकलेत्युपनामकानां वे० शा० सं० 'नानाशास्त्रिणां' पुस्तकालयादेकं पुस्तकं समागतम्.

६ अलीबागविषयांतर्गतनागांवग्रामस्थानां वे० शा० सं० 'दिनकरशास्त्रिपुराणिक' इत्येतेभ्य एकं पुस्तकं समागतम्.

७ नाशिकक्षेत्रनिवासिनां वे० शा० सं० 'धोंडशास्त्रिटकले' इत्येतेभ्य एकं पुस्तकं समागतम्.

८ अवधमण्डलान्तर्गतोन्नामप्रदेशान्तर्गततियरिनिवासिताल्लुकदार 'श्रीमच्छ्रीकेशवसिंहजी' संगृहीतपुस्तकालयादेकं पुस्तकं समागतम्.

अन्यान्यपि खण्डितानि द्वित्राणि पुस्तकानि पूर्वमस्माकं परिश्रमेण लब्धान्यासन् ।

अस्तु । उपर्युक्तमहाशयैः स्वकीयपुस्तकालयाद्भविष्यपुराणप्रतिपुस्तकानि केवलं जगदुपकारबुद्ध्या मुद्रणसाहाय्यायास्माकं सविधे प्रेषितानि तेषामस्माकं, वाचकानां चोपरि महान्त उपकाराः सन्तीति नूनं मुद्रणार्थं पुस्तकसाहाय्यदातारो धन्या एवेति शतशो मन्यामहे ।

अस्य पुस्तकस्य प्रथमप्रतिपुस्तकोपार्जनप्रयत्नेन धंकुरव्वासि वे० शा० सं० 'उद्धवाचार्य ऐनापुरे' इत्येतेषां साहाय्यमासीद्- अतस्तेषां बहूनुपकारान् स्मृत्वा विरम्यते ।

विद्वज्जनगुणग्राही—खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" मुद्रणालयाध्यक्षः—खेतवाड़ी—मुम्बई.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जाहि- गत.

# विक्रेयपुस्तकानि-( महापुराणग्रन्थाः । )

| नाम | की. रु. आ. |
|---|---|
| पद्मपुराण-संपूर्ण ५५००० ग्रन्थ छः खण्डोंमें शुद्धतापूर्वक, कईएक व्रतादिमाहात्म्य, तीर्थमाहात्म्य, शिवविष्णु महिमा, रुद्राक्ष तुलसी माहात्म्यादि सृष्टिखण्ड, भूमिखण्ड, स्वर्गखण्ड, ब्रह्मखंड पाताल-खण्ड, उत्तरखण्ड क्रियायोगखण्डमें सांगोपांग वर्णन है ।यह ग्रन्थ वैष्णवोंके अत्यन्त उपयोगी है ... ... ... | १५-० |
| श्रीमद्भागवत-श्रीधरीटीका और टिप्पणीसह. ग्लेज कागज ... | १०-० |
| श्रीमद्भागवत-भावार्थदीपिकाप्रकाश टीका-यह टीका श्रीधरी टीका-पर बहुतही उत्तम लगाती है । ग्रन्थ संख्याः१२५००० सवालक्ष है. औरभी कई टीकाओंका सार इसमें आगया है ... ... | २१-० |
| श्रीमद्भागवत एकादशस्कन्धः-श्रीधरीटीकया सन्दर्भ-विश्वनाथी-दीपिकादीपनादिपर्यायोपेतवंशीधरीयतद्भावार्थदीपिकाप्रकाशटीकया चोपेतः ... ... ... ... ... | २-८ |
| श्रीमद्भागवत-सचूर्णिका मोटे अक्षर उत्तम कागज सप्ताह बांचनेवा-लोंको परमोपयोगी है ... ... ग्लेज ... ... | ७-० |
| " तथा देशी कागज ... ... ... ... | ६-० |

| नाम | की. रु. आ. |
|---|---|
| श्रीमद्भागवत-नवीन सुबोधिनीटीका समेत पढनेवालों व सप्ताह बाँचनेवालोंको परमोपयोगी है. इसमें प्रत्येक श्लोकके अन्वय और अन्वयानुसार पर्यायशब्द होनेसे यह ग्रंथ नवीन साधारण विद्या-र्थियोंसे वृद्ध महापंडितोंतक सर्व सज्जन विद्वज्जनोंको परमादरणीय हुआ है. श्रीभगवद्भक्तोंको सरल सुबोधव्याख्या सहित श्रीमद्भागवत संग्रह करनेकी इच्छा केवल इस सुबोधिनीटीकासमेत श्रीमद्भागव-तसेही पूर्ण हो सकती है. अवश्य इस ग्रंथको संग्रह करके विद्या-र्थियोंको पढाओ. सप्ताह बाँचो और तत्त्वज्ञानको संपादन करके अनायाससे मुक्ति फलका लाभ लेओ. इससे सरल और सुबोध-व्याख्या अन्यत्र कहीं हुई नहीं है. मूल्य बहुतही अल्प रखा है | १२-० |
| श्रीमद्भागवत-मूल ( गुटका ) रेशमी जिल्द बँधीहुई नित्यपाठकर-नेयोग्य ... ... ... ... ... | १-८ |
| श्रीमद्भागवत-भाषाटीका माहात्म्य और शंकासमाधानसह अत्युत्तम जिसमें ५०० दृष्टांत कथाके सिवाय हैं, नई छपी है ग्लेज कागज | १२-० |
| " तथा देशी कागज .... .... .... .... | ११-० |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| नाम | की. रु. आ. |
|---|---|
| श्रीमद्भागवत–मूलश्लोक और आनन्दाम्बुनिधि पद्यभाषाटीकासमेत ( रीवाँधीश महाराज रघुराजसिंहदेवजूकृत ) ... ... | १५–० |
| श्रीमद्भागवत–दशमस्कन्ध मात्र भाषाटीका दृष्टान्त सहित ... | ४–० |
| श्रीमद्भागवताद्यपद्यव्याख्याशतक–( जन्माद्यस्य श्लोकके सौअर्थ) | २–० |
| भागवतलीला कल्पद्रुम–श्रीमद्भागवतके सब चरित्र ( जन्माद्यस्य इस श्लोकसे ) ... ... ... ... | १–४ |
| दशमस्कन्ध–श्रीधरीटीकासमेत ... ... ... | ३–० |
| श्रीमद्भागवतमाहात्म्य–सटीक संस्कृत ... ... ... | ०–१० |
| श्रीमद्भागवत–भाषाटीकासह भक्तिमाहात्म्य और गोकर्णोत्पत्ति विप्रमोक्ष भागवत श्रवण विधि इत्यादि है ... ... ... | [illegible]–२ |
| नारदपुराण–सम्पूर्ण इस ग्रन्थमें पुराण वर्णन आश्रमादि धर्म गंगामाहात्म्य धर्माख्यान धर्मकथन धर्मशास्त्र निर्देश वामनावतार वर्णन बृहदुपाख्यान कृष्णमंत्रवर्णन अष्टादशपुराणसार पुराण महिमादि पूर्वभागमें है. उत्तरभागमें एकादशी द्वादश्यादिव्रत मोहिनीदर्शन मातृसन्मान कार्तिकमाहात्म्य माघमाहात्म्य गंगामाहात्म्य गयामाहात्म्य काशीमाहात्म्य पुरुषोत्तममाहात्म्य प्रयागमाहात्म्य कुरुक्षेत्रमाहात्म्य हरिद्वारमाहात्म्य बद्रीमाहात्म्य कामाक्षिमाहात्म्य प्रभासक्षेत्रमाहात्म्य पुष्करमाहात्म्य गौतमाश्रममाहात्म्य गोकर्णमाहात्म्य सेतुमाहात्म्य नर्मदातीर्थमाहात्म्य अवंतिकामाहात्म्य मथुरामाहात्म्य वृन्दावनमाहात्म्य इत्यादि २४००० मूल मात्र है | ७–० |
| शिवपुराण–बडा–२४०००मूलमात्र–इसमें विद्येश्वर संहिता २००० रुद्रसंहिता १०५३० शतरुद्रसंहिता २१६० कोटिरुद्रसंहिता २२४० उमासंहिता १८४० कैलाससंहिता १२४० और वायवीयसंहिता ४००० है. बहुत परिश्रमसे यह अलभ्यग्रंथ मिला है. और बहुत विद्वानोंकी संमतिसे शुद्धकर छापागया है. मूल मात्र ... | ७–० |
| शिवपुराण–उपरोक्त पं० ज्वालाप्रसाद मिश्रकृत भाषाटीकासमेत ... | १६–० |
| शिवपुराणमाहात्म्य–मूल ... ... ... ... | ०–३ |
| ब्रह्मपुराण–संपूर्ण मूल संस्कृत... ... ... ... | ५–० |
| ब्रह्मांडपुराण–संपूर्ण ... ... ... ... | ५–० |
| आदिपुराणमूल–सम्पूर्णपुराणोंका सार यह आदिपुराण व्यासदेवने २९ अध्यायोंमें वर्णन कियाहै । इसमें सूत और शौनकमुनिके समागमके समय शौनकने सन्ध्याकालका तथा कलियुगके दोषोंका ऐसा विचित्र रूप दर्शायाहै कि पढते २ मन मुग्ध होजाताहै । कृष्णभगवान्के जन्मसे लेकर उनकी अनेक लीला रामवतारकी चर्चा | |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जाहि-

| नाम | कौ. रु. आ. |
|---|---|
| तथा वैष्णवोंकी उपयोगी अनेक चित्ताकर्षक कथा इसमें लिखी-हुईहैं। .... .... .... .... .... | ०–१२ |
| अग्निपुराण–इसमें शास्त्रकलाओंका संक्षेप वर्णन सर्वदेवताओंकी प्रतिष्ठा लक्षकोटि आदि होम शिल्पशास्त्र, राजधर्म, राजनीति युद्ध-रचना भारतसार, रामायणसार, ईश्वरावतार, सर्वतिथिवारनक्षत्रादि व्रत पट्प्रयोग, गन्धर्ववेद, भरतशास्त्र, काव्य नाटकभेद, स्त्रीशिक्षा रत्नादिपरीक्षा, वेदशास्त्रादि बहुतसे विषयोंका अपूर्व वर्णन है .... | ४–० |
| ब्रह्मवैवर्त्तपुराण–संपूर्ण चारोंखण्ड–जिसमें कृष्णजन्मखण्ड, प्रकृति-खण्ड, गणेशखण्ड, और ब्रह्मखण्ड इसमें श्रीकृष्णजीके अपूर्व चारित्र कथास्तोत्रादि और नारदादिकी उत्पत्ति गंगोपाख्यान सावित्र्यु-पाख्यान लक्ष्मीकी उत्पत्ति मनसादेवीउपाख्यानादि वर्णित हैं. | ७–० |
| ब्रह्मवैवर्त्तपुराण–प्रकृतिखण्ड गणेशखण्ड और ब्रह्मखण्ड .... | ३॥–० |
| ब्रह्मवैवर्त्तपुराण–कृष्णजन्मखण्ड श्रीकृष्णचारित्र अपूर्व वर्णित है.... | ३॥–० |
| मार्कंडेयपुराण–सप्तशती शान्तनवीटीकासह इसमें मार्कंडेय और जैमिनिका सत्संग और संवाद अप्सराओंपर दुर्वासामुनिका शाप | |

| नाम | कौ. रु. आ. |
|---|---|
| कंकके मारेजानेपर विद्युतरूप राक्षसका माराजाना। पक्षियोंके जन्म और चरित्र और देवीजीका महात्म्य संयुक्त है .... | ४–० |
| मार्कंडेयपुराण–पं० कन्हैयालाल मिश्रकृत भाषाटीकासमेत .... | ६–० |
| मत्स्यपुराण–जगतकी रचनाकेहेतु और मत्स्यावतार धारण करनेका कारण प्रलय होनेका कालपूर्वक वर्णन ब्रह्माके चारमुख होनेका कारण और दानवगन्धर्वकी उत्पत्ति सूर्यवंश चंद्रवंशका वर्णन इत्यादि अपूर्व कथाहैं ... ... .... ... | ५–० |
| वायुपुराण–इसमें अनेक विषय संयुक्त देवादि सृष्टिवर्णन मन्वन्तरादि चतुर्युगाख्यान पृथुवंशकीर्तन श्राद्धक्रिया वर्णन और गयामाहात्म्यादि बहुतसे विषय हैं .... .... .... .... | ५–० |
| वाराहपुराण–धर्म अर्थ काम मोक्षादि सिद्धहोनेके लिये इतिहास संयुक्त कथाओंका वर्णन है .... .... .... | ४–० |
| ब्रह्मोत्तरखण्ड मूल–स्कंदपुराणोक्त, शिवभक्तका अपूर्व इतिहास और शिव कवचादि हैं .... .... .... .... | ०–१० |

रात.

संपूर्ण पुस्तकोंका "बड़ासूचीपत्र" अलग है मंगाकर देखिये.

पुस्तकोंके मिलनेका ठिकाना–खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम्-यन्त्रालय, खेतवाडी–बंबई.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रीखानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनयगोविन्दशास्त्रिविरचिता भविष्यमहापुराणविषयानुक्रमणिका सम्पूर्णा ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# प्रस्तावना ।

अद्य समस्तविद्वज्जनानां पुरतोऽभिनवानन्दवृत्तान्तं निवेदयितुं समुत्सुकं चेतः । संसारसारपारावारपारीणश्रीमद्व्यासमहर्षिणा निःशेषजीवजातजीवातुभूतसद्धर्मप्रबोधैकहेतवे गम्भीरवेदसागरं निजमतिमन्थानेन विनिर्मथ्य विनिर्मितानि सभारतमहोपाख्यानानि सब्रह्मसूत्राणि किलाष्टादश महापुराणानीति सर्वतो विश्रुतमेव महानुभावानाम् । तत्रायं विशेषः—इमानि किलाष्टादश महापुराणानि क्वचित्क्वचित्पुस्तकरूपेण सन्ति क्वचित्क्वचित्तानि पुस्तकान्यप्यपूर्णानि खण्डितानि जीर्णपत्रतया हस्तेऽपि दुर्धार्याणि कीटोपद्रष्टानि मूषकचर्वितान्युपलभ्यन्ते । अहह ! कैयमस्माकं धर्मपुस्तकानां शोच्यावस्था, येषामाधारेण वयं धर्मकर्माण्याचर्य परमं पदमारोढुमाशास्महे, तान्यस्माकं धर्मपुस्तकानि चरमामवस्थां प्रयातुं बद्धकटीनीति महदब्रह्मण्यम् ! ! !

अस्मिन्विषये भूयोभूयो विद्वज्जनैः प्रेरितोऽहं सर्वाणि महापुराणानि मुद्रयित्वा प्रकाशयितुं बद्धपरिकरतयोत्सुकोऽस्मि । कृतसंकल्पानुसारेण भूयांसं द्रव्यव्ययमारचय्यानेकदेशस्थितविद्वज्जनमहाशयसंग्रहालयेभ्यो बहुप्रतिकानि प्राचीनपुराणपुस्तकान्यानीय सहायकशास्त्रिमण्डलसहकृतसंशोधकशास्त्रिजनद्वारा सम्यक्संशोध्य प्रतिपुस्तकोपलब्धभिन्नभिन्नपाठभेदनिवेशनपुरःसरटिप्पणीप्रदानेन परिष्कार्य च सुन्दरसीसकाक्षरैः पुष्टचिक्कणपत्रेषु मया स्वकीये " श्रीवेङ्कटेश्वर " मुद्रणालये मुद्रयित्वा प्रकाशयितुमारब्धानि । तत्र च सर्वविद्वज्जननयनचकोरचन्द्रायमाणं सर्वतो विश्रुतमपि प्रायः प्रत्यक्षपदव्यामनुपलभ्यमानं भूत–वर्तमान–भविष्यत्कथानां प्रत्यक्षकल्पद्रुमवदतिस्पृहणीयकथानुसन्धानं भविष्यमहापुराणं मुद्रयितुं समुत्सुकेन मयाऽस्य महापुराणस्याष्ट प्रतिपुस्तकानि महता प्रयासेन देशदेशान्तरस्थितमहाराज–महाशय–विद्वज्जनानां संगृहीतप्राचीनपुस्तकालयसंग्रहेभ्यः संपाद्य खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनयगोविन्दशास्त्रिणां समीपे दत्तानि, तैश्च प्रतिपुस्तकमेकैकं शास्त्रिणं पाठभेदाद्यवबोधनार्थं नियोज्य स्वयं संशोध्य पुस्तकान्तरोपलब्धपाठभेदान्स्थलविशेषावश्यकार्थयोजनां च टिप्पण्यां विनिवेश्य साधु सुपरिष्कृत्य मुद्रणार्थं समानीयत । तदेतन्मया संप्रति सुन्दराक्षरैः पुष्टचिक्कणपत्रेषु स्वकीये " श्रीवेङ्कटेश्वर " स्टीम्–मुद्रणालये मुद्रयित्वा प्रकाशितम् ।

अस्मिन्भविष्यमहापुराणे ब्रह्माण्डोत्पत्त्यादिविषयाः पुराणान्तरवदेव यथावस्थितपुराणलक्षणोपक्रान्ताः सन्तीति सर्वथा सम्मान्यमेव विदुषाम् । परं त्वितरपुराणापेक्षयास्मिन्महापुराणे प्रतिसर्गाख्ये पर्वणि भविष्यत्कथानां यदनुसंधानं दरीदृश्यते तत्सर्वथा श्रीमद्व्यासमहर्षीणां सत्यंसत्यं त्रिकालदर्शित्वं ख्यापयतीति महत्कौतुककरं विचारवताम् । यतः–धर्मराजराज्यसमयादारभ्याद्ययावद्भूतानां नानादेशनानावंशप्रसूतानामार्यदेशभूपालानां चरित्राणि तथा म्लेच्छ–यूरोपियन–रशियन–चीन–सिंहलादिप्रसूतानां भूपालानां चरित्राणि पातशाहादिपदानि च यथेतिहासमस्मिन्पुराणे दृश्यन्ते । किञ्चतः परं भविष्यतां भविष्यभूपालानां वंश–वंश्यपुरुषचरित्र–धर्म–धर्मान्तरादिकथानुसन्धानं यावत्कलियुगावसानसत्ययुगारम्भपर्यन्तं कल्किप्रतापान्तं सुवर्णितं दरीदृश्यते । नानाविधधर्मार्थकाममोक्षसाधकव्रतदानादिमाहात्म्यानि चात्र पुराण सुवर्णितानि सान्ति । एतादृशं सुव्यवस्थितं सकलपरमार्थसाधनैकधुरीणमेतद्भविष्यमहापुराणं श्रमेण संगृह्य–मदीयं महापुराणमुद्रणप्रकाशनसाफल्यं प्रपुष्णन्तु विद्वांस इत्यभ्यर्थये ॥

: संप्रति च द्वितीयावृत्तौ भूयोऽपि शास्त्रिमण्डलद्वारा संशोध्य पदच्छेदाऽऽवश्यकटिप्पण्यादि निवेशनपुरस्सरं संस्कार्य सुव्यवस्थया प्रकाश्यते । तदेतद्ग्रहणपारायणादिना कृतार्थयन्तु महानुभावा मामिति भृशमभ्यर्थयते ।

सकलविद्वज्जनकृपाभिलाषी–

क्षेमराज–श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" मुद्रणालयेशः, मुम्बई.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ भविष्यमहापुराणविषयानुक्रमणिका।







CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति प्रथमं ब्राह्मपर्व समाप्तम् ॥ १ ॥

## अथ द्वितीयं मध्यमपर्व ॥ २ ॥

### प्रथमभागः ॥ १ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( इति तृतीयभागः ॥ ३ ॥ )

इति मध्यमपर्वस्थविषयानुक्रमणिका ॥ ३ ॥

## अथ प्रतिसर्गपर्वस्थविषयानुक्रमणिका ॥ ३ ॥

( प्रथमः खण्डः ॥ १ ॥ )



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अथोत्तरपर्वस्थविषयानुक्रमणिका ॥ ४ ॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रीखानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनयगोविन्दशास्त्रिविरचिता भविष्यमहापुराणविषयानुक्रमणिका सम्पूर्णा ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

